अरुन्धत्येकभर्तॄणां प्रजापतिवचो यथा ।
पर्यायनामभिर्दिव्यैरिन्द्राणी चेति विश्रुता ।
त्वया व्याप्तमिदं सर्वं जगत्स्थावरजंगमम् ॥ [ 45 ]
संग्रामेषु च सर्वेषु अग्निप्रज्वलितेषु च ।
नदीतीरेषु घोरेषु कान्तारेषु भयेषु च ॥
प्रवासे राजबन्धे च शत्रूणां च प्रमर्दने ।
प्राणात्ययेषु सर्वेषु त्वं हि रक्षा न संशयः ॥
त्वयि मे हृदयं देवि त्वयि बुद्धिर्मनस्त्वयि । [ 50 ]
रक्ष मां सर्वपापेभ्यः प्रसादं च करिष्यसि ॥
इमं देव्याः स्तवं दिव्यमितिहाससमन्वितम् ।
यः पठेत्प्रातरुत्थाय शुचिः प्रयतमानसः ॥
त्रिभिश्च काङ्क्षितं मासैः फलं वै संप्रयच्छति ।
षड्भिर्मासैर्वरिष्ठं तु वरमेकं प्रयच्छति ॥ [ 55 ]
अर्चिता नवभिर्मासैर्दिव्यं चक्षुः प्रयच्छति ।
संवत्सरेण सिद्धिं तु यथाकामं प्रयच्छति ।
सत्यं च ब्रह्मचर्यं च द्वैपायनवचो यथा ॥

No 9

After 51. 12, $D_6$ T G $M_4$ G(ed.) ins. ·

अतिप्रसक्तौ क्रीडायां कृष्णसंकर्षणौ मुहुः ।
कांचिद्वेश्मनि निर्गत्य नवनीतं च गृह्णतः ॥
संक्षोभ्य तक्रं बहुशो दारकौ दारकैः सह ।
अन्वभूतां ततो राजन्घटांश्च परिजघ्नतुः ॥
दधि पीत्वा तु देवेशौ तान्घटांश्च पिपेषतुः । [ 5 ]
शिक्यं च परिजग्राह कृष्णो दारकवेषवान् ॥
भित्त्वा छित्त्वा च गोविन्दः पपौ क्षीराणि सर्वशः ।

as above ). $_{3\ 5}$ ऽब्रुवन् ( for विदु· ) $T_{3\ 4}$ पौराणी मुनयोऽब्रुवन् ( for $^{b}$ ) —( L 43 ) $K_4$ च साध्वीनां , $T_1$ $M_4$ [ए]व मातॄणां , $T_2$ $G_{1\ 4\ 5}$ [ए]कमातॄणां , $G_3$ तु मातॄणां ( for [ए]कभर्तॄणां ) — $K_2$ $V_2$ B Ds $D_4$ subst for line 43 $\tilde{N}_2$ ins after 44

2** भेदो विवादशीलानां त्वमिन्द्राणीति विश्रुता ।

—( L 44 ) $T_{3\ 4}$ पर्यायैर् , Bom and Poona eds G(ed) यथार्थ- ( for पर्याय- ) —( L 45 ) $\tilde{N}_3$ $V_1$ सर्वमिदं ( by transp ) —( L 46 ) $V_3$ Ds $D_2$ वह्नि- ( for अग्नि- ) $G_1$ -प्रज्वलनेषु ( for °लितेषु ) $B_{1\ 3}$ $D_4$ वह्निप्रज्वलिते ( $D_4$ °लने ) तथा ( for $^{b}$ ). —( L 47 ) K $\tilde{N}$ $V_{2\ 3}$ $B_{2\ 3}$ Dn $D_{1-6}$ चौरेषु , $V_1$ चोरे वा , $B_2$ ( marg ) Ds सर्वेषु , $T_{3\ 4}$ शैलेषु , $G_3$ पूर्वेषु ( for घोरेषु ) $\tilde{N}_2$ वनेषूपवनेषु च , $B_{1\ 2}$ ( marg as above ). $_3$ Ds $D_4$ वनेषु च गुहासु च , $D_5$ भयेषु च रिपुष्वपि , $T_{3.\ 4}$ गुहासु च वनेषु च ( for $^{b}$ ) —( L 48 ) $T_1$ $M_4$ प्रवेशे ( for प्रवासे ) $D_2$ -बन्धे वा , $D_3$ -बन्धेषु ( for -बन्धे च ) —( L 49 ) $K_3$ प्राणत्यागेषु सर्वेषु ( for $^{a}$ ) $K_2$ रक्षा नात्र , $G_2$ $M_4$ रक्षा न च ( for हि रक्षा न ) —( L 50 ) $K_{1\ 3\ 4}$ $\tilde{N}_{1\ 2.\ 3}$ ( marg as above ) $V_{2\ 3}$ Dn $D_{1-6}$ $T_{1\ 2\ 4}$ G $M_4$ चित्तं ( for बुद्धिर् ) —( L 51 ) $K_4$ कुरुष्व हि ( for करिष्यसि ) $K_{1\ 2}$ B Ds $D_{2-5}$ $T_{3\ 4}$ प्रसादं कर्तुमर्हसि ( for $^{b}$ ). — $T_1$ om lines 52–57 $G_2$ om line 52 Before line 52, $T_3$ ins वैशंपायनः —( L 52 ) $K_1$ $\tilde{N}_1$ $D_{2\ 5}$ चैव स्तवं , $B_2$ तु सस्तवं , $D_3$ स्तवं स्वयं , $D_4$ च वैष्णवं ( for देव्याः स्तवं ) $B_{1\ 3}$ Ds पुण्यम् ( for दिव्यम् ) $K_2$ $D_{1\ 6}$ $T_2$ $G_{4\ 5}$ -प्रकल्पितम् ; $V_3$ -प्रकीर्तितम् ( for -समन्वितम् ) $K_{1\ 3\ 4}$ $\tilde{N}_{1.\ 2}$ $V_2$ Dn $D_{2\ 3}$ $T_3$ $G_1$ इति व्या( $V_2$ वेदव्या )सप्रकल्पि( $K_3$ $\tilde{N}_2$ °कीर्ति )तम् , $Ds_2$ इतिहासं पुरा( marg सना )तनम् , $D_{4\ 5}$ पुण्यं व्यासप्रकीर्ति° , $G_3$ $M_4$ इतिहासं प्रकल्पितम् ( for $^{b}$ ) —( L 53 ) $D_3$ स्वयं ( for शुचि ) $K_2$ संयत- ( for प्र° ). $D_5$ प्रयत· शुचिमानस ( for $^{b}$ ) — $V_3$ $D_6$ $T_2$ $G_{1\ 2\ 4\ 5}$ $M_4$ om line 54 —( L 54 ) $K_1$ $\tilde{N}_3$ $V_{1\ 2}$ Dn $D_{2\ 3\ 5}$ त्रिभिर्मासै. काङ्क्षितं तु , $K_3$ $D_1$ काङ्क्षितं स त्रिभिर्मासै. , $K_4$ $\tilde{N}_1$ त्रिभिर्मासैश्च काङ्क्षितं , $T_{3\ 4}$ $G_3$ त्रिभिर्मासैर्वरिष्ठं तु ( for $^{a}$ ) $T_{3\ 4}$ $G_3$ वरमेकं ( for फलं वै सं- ) — $K_4$ $D_3$ $G_3$ om ( hapl. ) lines 55–57 , $\tilde{N}_3$ om ( hapl ) line 55 $D_5$ reads line 55 on marg — For line 55, $B_3$ Ds $T_{3\ 4}$ subst

3** षण्मासान्पठते यस्तु काङ्क्षितं च लभेत स ।

[ $T_{3\ 4}$ षण्मास ( for °सान् ) $T_{3\ 4}$ काङ्क्षित लभते नर ( $T_4$ च स ) ( for $^{b}$ ). ]

— $K_3$ om ( hapl ) line 56 —( L 56 ) $D_{2\ 4}$ $G_4$ तु त्रिभिर् , $T_4$ दशभिर् ( for नव° ) $T_3$ यः पठेद्दशभिर्मासैर् , $G_2$ अर्चिता त्वं च षण्मासैर् ( for $^{a}$ ) — $D_6$ $T_2$ $G_{1\ 2\ 4\ 5}$ $M_4$ om ( hapl ) line 57 , $D_4$ reads it on marg —( L 58 ) $K_{1\ 3\ 4}$ $\tilde{N}_{1\ 3}$ V Dn $D_{1-3\ 5}$ $T_1$ सत्यं ( $K_{3\ 4}$ °त्वं ) ब्रह्म च दैवं ( $T_1$ दिव्यं ) च ( for $^{a}$ ).

9

$G_2$ om line 1 $M_4$ om line 2 —( L 2 ) $D_6$ om $2^{b}$. $T_{3\ 4}$ प्रज( $T_4$ च ज )ह्नतु ( for च गृह्णत ) —( L 3 ) $T_4$ तत्र ( for तक्र ). —( L 4 ) G( ed ) अनुभूतास् ( for अन्वभूतां ) —( L 5 ) $D_6$ घटांश्चापि ( for तान्घटाश्च ) $M_4$ घटांश्च परिजघ्नतु ( for $^{b}$ ) —( L 7 ) $T_1$ $G_3$ हृत्वा , $T_4$ छित्त्वा , $G_2$ हित्वा , $G_5$

तच्छिष्टं चैव देवेशः क्षितौ च समवाक्षिपत् ॥
पायसं च समानीय गृहादन्यत्र विक्षिपन् ।
दारकेभ्यस्तदा कृष्णो ददौ स्वं च समाचरन् ॥ [ 10 ]
शिक्याच्च घटमादाय दध्नां दारकसत्तमः ।
निर्भिद्याच्छिद्य भूमौ तु निष्पिपेष स केशवः ॥
दारकौ तौ तु सहसा वत्सानां च परंतप ।
दाम्नां विमोचनं कृत्वा वत्सान्धेनूरपायताम् ।
प्रतिवेश्म तदा तौ तु व्यसनं पर्यकुर्वताम् ॥ [ 15 ]
अतिप्रसक्तौ तौ दृष्ट्वा सर्वव्रजविचारिणौ ।
न च शक्तो वारयितुं नन्दगोपः सुदुर्मदौ ॥
ततस्तु दारकैः सार्धं कृष्णश्चक्षुश्च तद्गतम् ।
एकस्य तु तदा कृष्णो दारकस्य महीपते ।
प्रच्छाद्य तरसान्यं तु दारकं प्रत्युवाच ह ॥ [ 20 ]
गच्छ वत्स यथान्यत्र तथा दृष्टैश्च दारकैः ।
यदि दृष्टस्त्वमन्यैस्तु जितो दण्डधरो मम ।
इत्युक्त्वा बलभद्रं तु तं द्रष्टुं प्रैषयद्बली ॥
स गत्वा बलभद्रस्तु गृहीत्वा दारकं बलात् ।
केशवाय ददौ तं तु त्वं जितः केशवोऽब्रवीत् ॥ [ 25 ]
कीलकं च समानीय विक्षिप्य भुवि गूहितम् ।
आहूय दारकान्सर्वानिदमाह जगत्पतिः ॥
शक्तश्चेद्भवतां कश्चित्कीलं गृह्णातु पश्यतः ।
मम पार्श्वगतो भूत्वा दण्डो देयश्च तस्य ह ॥
तच्छ्रुत्वा दारकाः सर्वे तं द्रष्टुं यत्नमास्थिताः । [ 30 ]
नाशक्नुवंश्च ते सर्वे जितांस्तानब्रवीदिति ॥
एवमाद्यानि गोविन्दो बालक्रीडनकानि वै ।
चकार मतिमान्कृष्णो दारकैः सह गोकुले ॥

## No 9A

$D_6$ T G $M_4$ G( ed )cont. $M_{1-3}$ ins. after 51.12 ·

कश्चिद्वेश्मनि सगम्य शिक्यस्थान्पयसो घटान् ।
आदाय युगपत्सर्वान्पयः पीत्वा मुदा भृशम् ।
अभिहत्य ततः सर्वान्निष्पिपेष हसन्बहिः ॥
आच्छिद्य शिक्यमन्यत्र ततो दध्नो घटान्क्षिपन् ।
यथाकामं ततः पीत्वा दारकेभ्यस्ततो ददौ ॥ [ 5 ]
अथ वेगान्मुदा कृष्णः कश्चिदन्यत्र वेश्मनि ।

$M_4$ हत्वा ( for भित्त्वा ) $T_2$ भित्त्वा ( for छित्त्वा ) —( L 8 ) $T_4$ देव- ( for चैव ) $T_1$ गोविन्दः ( for देवेश ) $G_4$ तदुच्छिष्टं च देवेशः ( for ${}^{a}$ ) —( L 9 ) $T_3$ समाधाय ( for °नीय ) $T_{1\ 3\ 4}$ $M_4$ दारकः ( for विक्षिपन् ) —( L 10 ) $T_3$ प्रददौ तं घटं क्षिपन् ( for ${}^{b}$ ) —( L 11 ) $T_4$ शिक्यस्थ- ( for शिक्याच्च ) —( L 12 ) $T_4$ निर्भिद्याभिद्य भूम्या तु ( for ${}^{a}$ ) —( L 13 ) $D_6$ $T_2$ $G_{1\ 4}$ $M_4$ परंतपौ ( for °प ) —( L 14 ) $D_6$ $T_{1\ 2}$ G $M_4$ विलोलनं ( for विमोचन ) $T_2$ $G_2$ वत्सान्धेनोरनीयताम्, $T_{3\ 4}$ °नुमनीयत, $G_1$ °न्वोपनीयताम् ( for ${}^{b}$ ) —( L 15 ) $G_2$ व्यसनं पर्यवर्तताम् ( for ${}^{b}$ ) —( L. 16 ) $G_2$ -समाहितौ ( for विचारिणौ ) $T_4$ सर्वे व्रजविचारिण ( for ${}^{b}$ ) —( L 17 ) $T_{3\ 4}$ [अ]शक्नुवद् ( for च शक्तो ) $D_6$ $T_{1\ 2}$ सुदुर्दमौ, $T_4$ च दुर्मदौ ( for सुदु° ) —( L 18 ) $M_4$ मत्तस् ( for ततस् ) $T_1$ स बालकै. ( for तु दारकै ) $T_{3.\ 4}$ तर्जितम्, $M_4$ तद्गतौ ( for °तम् ) —( L 20 ) $D_6$ $G_2$ गन्तुं; $G_1$ तं तु ( for [अ]न्य तु ) $T_{3\ 4}$ प्रत्यभाषत ( for प्रत्युवाच ह ). —( L. 21 ) $T_2$ तत्र, $G_1$ तस्य ( for [अ]न्यत्र ) $G_1$ तु ( for च ) —( L 22 ) $D_6$ $G_2$ करो ( for -धरो ) $T_{3\ 4}$ क्षितौ दण्डकरो मम ( for ${}^{b}$ ). —( L 23 ) $T_1$ तं ( for तु ) $T_{3.\ 4}$ गुप्त्वा तत्र बलाद्धरि ( for ${}^{b}$ ) —( L 24 ) $T_4$ कृत्वा ( for गत्वा ) $T_2$ $G_1$ दारं स्वजगृहे बलात् ( for ${}^{b}$ ). —( L. 25 ) $T_2$ $G_1$ त्वरितः ( for त्वं जित. ) —( L 26 ) $T_3$ तत. कृष्णो, $T_4$ तदा कृष्ण ( for समानीय ) $T_4$ गोपितम् ( for गृहितम् ) $T_3$ निक्षिप्य भुजगोपितम् ( for ${}^{b}$ ) —( L. 27 ) $G_3$ जगद्गुरुः ( for °त्पतिः ) —( L 28 ) $T_2$ शक्तिश्चेद् ( for शक्त° ). $T_3$ पश्यतु ( for °त. ) $T_4$ कील कृष्णा तु पश्यतु ( for ${}^{b}$ ) —( L. 29 ) $T_2$ $G_1$ पार्श्वं ( for पार्श्व- ) $T_2$ दण्डा देयाश्च ( for दण्डो देयश्च ) — $T_4$ om ( hapl ) lines $30^{b}$–$31^{a}$ —( L. 32 ) $T_3$ $G_2$ एवमादीनि गोविन्दो ( for ${}^{a}$ ).

### 9 A

( L 1 ) $D_6$ $T_{2.\ 3}$ $G_{1\ 2\ 4\ 5}$ $M_4$ निर्गत्य; $T_1$ $M_{2.\ 3}$ संगत्य; $T_4$ संवेश्य ( for संगम्य ) —( L 2 ) $T_4$ सर्वं ( for सर्वान् ). $T_3$ हृतम् ( for भृशम् ) —( L 3 ) $D_6$ $T_{2\ 4}$ G अभिगम्य; $T_3$ °प्राश्य, $M_4$ °पत्य ( for °हत्य ) $T_{1\ 3\ 4}$ $G_{3-5}$ सर्वं ( for सर्वान् ) $M_4$ हरि. ( for बहि ) —( L 4 ) $T_4$ आक्षिप्य, $G_1$ आभिद्य ( for आच्छिद्य ) $M_4$ दधि- ( for दध्नो ) $G_2$ ततो दुग्धान्घटान्क्षिपेत् ( for ${}^{b}$ ) —( L 5 ) $T_3$ दधि कृत्स्नं; $T_4$ यथा कृत्स्नं ( for यथाकामं ). —( L 6 ) $M_3$ मुहुः ( for मुदा ).

गुप्तान्घटानुपादाय त्वरितोऽथ बभञ्ज ह ॥
कचिद्घृतघटान्पूर्णान्बहूनादाय वेश्मनि ।
व्यभजद्दारकेभ्यस्तु भक्षयंश्च स्वयं ददौ ॥
अन्यतो वेश्मनः शिक्यान्घटांस्तक्रस्य पूरयन् । [ 10 ]
आदायाधूय बहुधा तस्मिन्नेव मुहुः क्षिपन् ।
व्यहसद्विविधं हासं ननर्त च स दारकः ॥
तक्रेषु च पयः क्षिप्य तक्रं च पयसि क्षिपन् ।
पयो जलेषु संयोज्य घृतमग्नौ जुहाव च ॥
एवं तौ सततं तत्र चक्रतुर्वेश्मसंगरम् ॥ [ 15 ]
अथ वत्सान्मुहुर्बद्धान्दामभिः कीलकेषु वै ।
भित्त्वा छित्त्वा च दामानि वत्सान्वेनुष्वनीयताम् ॥
दामान्याच्छिद्य सर्वत्र वत्सान्दिक्षु प्रकालयन् ।
आकृष्य दारकान्केशैरन्योन्यं समबन्धत ॥
निरुध्यमानो गोपीभिः स चक्रे वै मुहुर्मुहुः । [ 20 ]
सर्पिषा पयसा चैव दध्ना तक्रेण शून्यकम् ॥
प्रायेण गोव्रजं चक्रे पूर्वजेन सहायवान् ।
पश्यन्तीनां च गोपीनां कृष्णो नित्यं स संभ्रमम् ॥
पिबन्पयश्च विविधं चक्रे चैवं स वैशसम् ॥
क्रन्दन्त्योऽथ मुहुर्गोप्यो यशोदानिकटं ययुः । [ 25 ]
कृष्णस्य चेष्टितं सर्वं यशोदायै न्यवेदयन् ॥
मम कुम्भ्यो दश हताः पुत्रेणानेन दुर्मते ।
न च शिष्टं पयस्तक्रं घृतं वा दधि लेशकम् ।
किमद्य क्रियते मूढे जीविका मम नश्यति ॥

अन्याः ।

पञ्चाशन्मम कुम्भीनां शिक्यादादाय ते सुतः । [ 30 ]
घृतस्य पूर्णान्सुश्लिष्टान्पश्यन्त्या मम हन्ति ह ॥

अपराः ।

अन्तर्वेश्मन्यशून्यांश्च कुम्भान्सर्वान्घृतेन वै ।
ताञ्शून्यान्कारयामास न च शिष्टं घृतं मम ॥
अतिक्रुद्धा तथान्याह केशानारुज्य सर्वशः ।
पञ्चत्रिंशद्घटान्कृष्णो घृतेन पयसा समम् । [ 35 ]
आधूयोत्क्षिप्य चाविध्य निष्पिपेष च भूतले ॥

---

— (L 9) $M_{1-3}$ बभञ्ज (for व्यभजद्). $T_{3\ 4}$ व्यभक्षयन्दारकेभ्यो (for $^{a}$) $D_{6}$ T G $M_{4}$ भक्षयन्स्वयमाबभौ (for $^{b}$) — (L. 10) $T_{3}$ अन्यत्र (for अन्यतो) $D_{6}$ $T_{1\ 2\ 4}$ $G_{1\ 3-5}$ M पूरकान् (for °यन्). — (L. 11) $T_{2}$ आधूय (for आदाय) $T_{1\ 3\ 4}$ आदाय (for आधूय) $G_{2}$ बहु (for मुहु) — $T_{1\ 3}$ om (hapl) lines 12-13 — (L 12) $M_{3}$ जहास (for व्यहसद्) $G_{4}$ $M_{4}$ विविधान्नादान् (for °ध हासं) $G_{2}$ ननाद (for ननर्त) — (L 14) $G_{1}$ जहार (for जुहाव) $T_{3}$ सः (for च) — After line 14, $T_{1}$ G(ed) read 52 1–3 and $M_{4}$ 52. $1^{a}$–$3^{b}$ (all with the ref) repeating the same in its proper place — (L 15) $T_{2.4}$ G वसन्तौ (for एवं तौ) $M_{1}$ G(ed) संकरम् (for -संगरम्) — After line 15, $M_{3}$ ins

1** गावः पुष्टा नीरुजाश्च वत्सलाः कामदोहनाः ।
आगम्य हर्षितास्तौ तु पुच्छादिष्ववलम्बताम् ॥
पुच्छगोमूत्रसुस्नातौ शृङ्गकर्णावलम्बिनौ ।
वत्सानारोहमाणौ च तत्पाने फेनवो शिशू (sic) ॥

— (L 16) $M_{3}$ बध्वा (for बद्धान्) G(ed) दाम्ना वै (for दामभिः) — (L 17) $T_{1}$ $G_{2}$ $M_{1\ 4}$ हित्वा ; $G_{3}$ $M_{2}$ छित्त्वा (for भित्त्वा) $M_{1\ 2}$ भित्त्वा (for छित्त्वा) $D_{6}$ $T_{1\ 3\ 4}$ $G_{2\ 3\ 5}$ [अ]नीयत (for °ताम्). — (L 18) $G_{1}$ [आ]भिद्य (for [आ]च्छिद्य). $G_{4}$ सर्वान् (for वत्सान्) $T_{3.4}$ $M_{4}$ प्रचार($T_{4}$ °ल)यन् (for प्रकालयन्) — (L 19) $T_{3.4}$ प्रकृष्य (for आ°) $T_{1\ 4}$ G(ed) अन्योन्यं समबध्यत, $T_{2}$ $G_{1}$ °न्यं संबबन्ध ह, $T_{3}$ $M_{4}$ °न्यं समभिद्य($M_{4}$ °बध्न)ताम् (for $^{b}$) — (L 20) $T_{3\ 4}$ निबद्धो ($T_{4}$ °रुध्य) गोपिभिश्चैव (for $^{a}$) $T_{3\ 4}$ $M_{1-3}$ चक्रे चैव ($M_{1}$ °वं) (for स चक्रे वै) — (L 23) $T_{2}$ $G_{1}$ $M_{1\ 4}$ सभ्रम (for °मम्) — $M_{1}$ om line 24. — (L 24) $M_{4}$ बहुधा (for विविधं) $M_{2\ 3}$ पश्यन्सोऽप्यपिबत्तासां (for $^{a}$) $T_{1\ 2}$ $G_{1\ 3\ 5}$ $M_{4}$ शैशवम् (for वैशसम्) — (L 27) $D_{6}$ $M_{3}$ कुम्भा (for कुम्भ्यो). — (L 28) $T_{3}$ क्रियार्थं वै, $T_{4}$ पयस्तत्र (for °स्तक्रं). — (L 29) $T_{1}$ अन्यत्, $T_{3\ 4}$ अत्र (for अद्य) $D_{6}$ T G $M_{4}$ जीवितं (for जीविका) — $T_{2\ 4}$ $G_{1}$ om the ref — (L. 30) $D_{6}$ $G_{2\ 4}$ $M_{3}$ कुम्भानां (for कुम्भीनां) $T_{3\ 4}$ पञ्च वै मम कुम्भानां (for $^{a}$) — $D_{6}$ $T_{1\ 2\ 4}$ G $M_{1\ 3.4}$ om the ref. — (L 32) $D_{6}$ $T_{1\ 2\ 4}$ G $M_{4}$ पूर्णांश्च ; $T_{3}$ शिक्याच्च (for [अ]शून्यांश्च) $D_{6}$ दधि-, $T_{1\ 2\ 4}$ $M_{1\ 3}$ कुर्वन्, $M_{4}$ कुम्भान् (for सर्वान्) $T_{3}$ कुम्भानादाय सर्वतः (for $^{b}$) — (L 33) $D_{6}$ $T_{1\ 2\ 4}$ G शून्यांस्तु, $M_{4}$ तान्पूर्णान् (for ताञ्शून्यान्) $D_{6}$ T G $M_{3\ 4}$ दृष्टं (for शिष्टं) — (L 34) $T_{3}$ $M_{1-3}$ अभि- (for अति-) $D_{6}$ [अ]प्यन्या, $T_{1}$ साह, $T_{2\ 3}$ G $M_{4}$ चान्या ; $T_{4}$ [अ]न्यां सा (for [अ]न्याह) $D_{6}$ $T_{1\ 2}$ G $M_{3.4}$

न किंचिद्व्यञ्जनं मूढे मम वेश्मनि विद्यते ।
गावश्च वत्सकैः पीताः कृष्णेनानेन मोक्षितैः ॥

अन्या ।

पायसं बहु पक्वं मे भद्रे जग्धमनेन वै ।
दध्योदनं भृशं दत्तं दारकेभ्यो रसान्वितम् ॥ [ 40 ]
अपूपा बहवो जग्धा भर्त्रर्थे रक्षिता मया ।
सक्तवो बहवः पीताः संस्कृताः शर्करादिभिः ॥
किं गृहेण च मे कार्यं किं घोषैः किं गवादिभिः ।
एषा यास्यामि दुर्मेधे मूढे दुष्पुत्रसूयिनि ॥

अन्या ।

धेनवो मम नष्टाः स्युर्वत्सैः सार्धं दशाद्य वै । [ 45 ]
अनेन कालिता मूढे तव पुत्रेण दुर्हृदा ॥
भक्षितं नवनीतं मे वल्मीकप्रतिमं नवम् ।
जीविका मम नष्टाभूदेषा यास्यामि देशकम् ॥
एवमत्यन्ततो गोप्यो विनेदुर्विस्वरं भृशम् ।
का गतिर्वद भद्रेति गोप्यः सर्वास्तदाब्रुवन् ॥ [ 50 ]
अथ ताभ्यो यथानष्टं यशोदा दत्तवत्यलम् ।
समाश्वास्य ततः सर्वाः स्वं स्वं वेश्म व्यकालयत् ॥

No. 10

After 53. 7, $D_6$ S G(ed.) ins ·

प्रागेव वसुदेवस्तु नन्दगोपेन वारितः ।
वृन्दावननिवासस्ते परिहर्तव्य इत्यपि ॥
स पुत्रगुरुतां पश्यन्वनं चासुरसेवितम् ।
विममर्शाथ बुद्ध्यैव नन्दगोपो महामतिः ॥
बहुसंपदमालोक्य गवां वृन्दावने वने । [ 5 ]
गोपाः प्रवेष्टुमिच्छन्ति प्रलम्बस्तत्र चासुरः ॥
नान्यद्वनं च पश्यामि समीपे संपदा युतम् ।
किं नु कर्तव्यमिति मे पुत्रयोश्च हितं भवेत् ॥
एवं विचारयन्तं तं नारदोऽभ्यागमन्मिथः ।
ब्रह्मणा चोदितो विप्र इन्द्रेण च महात्मना ॥ [ 10 ]
यदृच्छया महायोगी नित्यं लोकहिते रतः ।
ववन्दे नन्दगोपस्तु तस्य वै चरणौ मुनेः ॥
तमाह सस्मितं विप्रः संभ्रमाकुलमानसम् ।
ज्ञात्वा त्वयि मनोदुःखं प्रणयात्तेऽहमागतः ॥
इदं रहस्यं देवानां नाख्यातव्यं कदाचन । [ 15 ]
अस्मिन्काले महाप्राज्ञ काले ज्ञास्यति वै भवान् ॥
यत्त्वां वक्ष्यामि घोषेश तत्त्वं ज्ञास्यसि वै विभो ।

---

आधूय, $T_3$ आदाय ( for आरुज्य ) $T_4$ शिशूनादाय सर्वत· ( for [b] ) —( L 35 ) $D_6$ -विंशद् ( for त्रिं° ) $G_2$ मम ( for समम् ) —( L 36 ) $T_2$ $G_{1\,4\,5}$ तान्विध्य, $M_4$ चाहत्य ( for चाविध्य ) $T_3$ आदायोत्क्षिप्य तान्विध्य ( for [a] ). $D_6$ $T_{1\,3\,4}$ $G_{1\,4\,5}$ M भुवस्तले ( for च भूतले ) —( L 37 ) $T_4$ भाजनं ( for व्यञ्जनं ) —( L 38 ) $T_{3\,4}$ वत्सेन ( for कृष्णेन ) $T_{1\,2}$ $G_{1\,3-5}$ $M_4$ मोक्षिता ; $G_2$ मोचिता ( for मोक्षितै. ) — $T_{3\,4}$ $G_2$ om the ref. — ( L. 41 ) $T_{3\,4}$ पुन ( for मया ) — $M_4$ om ( hapl ) line 43 —( L 43 ) $D_6$ $T_{2\,4}$ G गृहेषु ( for गृहेण ) —( L 44 ) $T_{3.\,4}$ दुर्बुद्धे ( for दुर्मेधे ) $D_6$ पश्य ( for मूढे ) — $T_4$ G( ed ) om the ref. —( L 45 ) $D_6$ दशाष्ट वै, $T_{3\,4}$ दशापरा. ( for दशाद्य वै ) — ( L 46 ) $T_4$ [आ]कुलिता, $G_1$ कलिता, G( ed ) कारिता ( for कालिता ) — $G_2$ om line 49 —( L 49 ) $D_6$ $T_2$ $G_{1\,3-5}$ $M_4$ अन्यास्तदा ( for अत्यन्ततो ). $T_1$ एवमत्यन्तघोषेण ( for [a] ) $T_{1\,3}$ विषेदुर् ( for विनेदुर् ) $T_1$ G(ed) विस्तरं, $T_4$ वत्सरं, $M_4$ विस्वरा ( for °रं ) — $M_{1-3}$ om line 50. — ( L 50 ) $T_4$ तौ ( for का ) $T_1$ $M_4$ कुत्र ; $T_{3.\,4}$ वत्स ( for भद्र ) —( L 52 ) $T_3$ तदाश्वास्य ( for समाश्वास्य ) $T_3$ अनुनीय गृहं ययौ ( for [b] )

10

( L 2 ) $T_{3\,4}$ $G_{3-5}$ वृन्दावने ( for °वन- ) — ( L 3 ) $D_6$ $T_{1-3}$ G $M_4$ स्व- ( for स ) $T_4$ -महिमां ( for -गुरुतां ). — ( L 5 ) $D_6$ T G $M_4$ -संपातम् ( for -संपदम् ). $D_6$ $G_2$ गोपा वृन्दावनं वनम् ( for [b] ) — After line 5, $M_4$ repeats 53 $7^{ab}$ —( L 6 ) $D_6$ S ( except $M_{1-3}$ ) प्रवेष्टुं भृशमिच्छन्ति ( for [a] ). — ( L 7 ) $T_3$ पशूनां च ( for च पश्यामि ). $D_6$ $T_2$ $G_{1\,3\,4}$ चासन्नं, $T_1$ $M_4$ यद्वनं, $T_4$ $G_1$ प्रसन्नं, G( ed ) ह्यासन्नं ( for समीपे ) $T_3$ समग्रयवसान्वितम्, $G_2$ चासन्नं श्वापदायुतम् ( for [b] ). — ( L 8 ) $T_1$ च सुखं ; $T_4$ स्वस्ति वै ( for च हितं ). — ( L 9 ) $D_6$ $T_2$ G $M_4$ पथि ; $T_3$ भुवि ( for मिथ· ). — $M_{1-3}$ om line 10. —( L 10 ) $T_{3\,4}$ राजन् ( for विप्र ) — ( L 11 ) $T_{3.\,4}$ -हितंकरः ( for -हिते रतः ) — $T_4$ om. lines 13–14. —( L. 13 ) $T_2$ $G_1$ विस्मितं ( for

न केवलौ तव सुतौ देवौ मानुषतां गतौ ।
रामकृष्णाविमौ जातौ दैत्यमूलहराविति ॥
आसुरं पक्षमुद्धर्तुं जायमानं जनार्दनम् । [ 20 ]
दैत्यः शकटवेषेण ज्ञात्वा त्वामाश्रितोऽसुरः ।
शकटस्य त्वधः सुप्तं निहन्तुं निश्चितं शिशुम् ॥
रक्षाहीनं युवाभ्यां च वियुक्तं वीक्ष्य दानवः ।
लब्धरन्ध्रश्च निष्पेष्टुं तत्क्षणाच्छिशुना हतः ॥
ताडितो वामपादेन विपर्यस्तो ममार ह । [ 25 ]
प्रबुद्धस्य तु बालस्य तन्मुहूर्तं विजृम्भतः ॥
तस्यामेव निशायां च पूतनां नाम राक्षसीम् ।
पाययन्ती विषपयः सस्तन्यं प्राणमाहरत् ॥
पुनरर्जुनभूतौ तौ दैत्यौ तच्छिद्रदर्शिनौ ।
हन्तुकामौ तदा बालः स्वयमेव जघान ह ॥ [ 30 ]
नानारूपधरान्दैत्यानेवं हन्ता तवात्मजः ।
भयस्थानं न ते गोप विश वृन्दावनं वनम् ॥
तत्रापि सुमहत्कार्यं कर्ता कृष्णोऽयमीदृशम् ।
प्रत्यक्षं तव चैतानि कर्माणीह कृतानि च ॥
हनिष्यति प्रलम्बं च रामः परबलार्दनः । [ 35 ]
कृष्णश्चासुरसंघातं न भीस्त्वामुपसर्पतु ॥
इत्युक्त्वा नन्दगोपं तु कृष्णं तुष्टाव नारदः ।
नमस्तुभ्यं जगद्धात्रे विश्वकर्त्रे नमो नमः ॥
कृष्णाय बलरूपाय बहुरूपाय ते नमः ।
नीलजीमूतवर्णाय गोपवेणुप्रवादिने ॥ [ 40 ]
नमस्ते देवकीमातर्नमस्ते यादवेश्वर ।
नमस्ते देवदेवेश नमो मायाविधायिने ।
त्रैलोक्यस्थितिसंहारसृष्टिकर्त्रे नमो नमः ॥
विश वृन्दावनं देव विहर त्वं यथासुखम् ।
तत्र दैत्यान्महावीर्याञ्जहि यत्नपरो भव ॥ [ 45 ]
इत्युक्त्वा नारदे याते नन्दगोपो महामतिः ।
व्यपेतभयसंत्रासः पुत्रयोर्मुदमावहत् ॥

11

After adhy 53, $D_{3.6}$ S ins

वैशंपायन उवाच ।

तौ तु वृन्दावनं प्राप्तौ वसुदेवसुतावुभौ ।
चेरतुर्वत्सयूथानि चारयन्तौ स्वरूपिणौ ॥

---

स° ) $M_{1\ 2}$ -चेतसम् ( for -मान° ) — $T_{3\ 4}$ $M_{1-3}$ om line 16 — ( L 16 ) $T_1$ तदा ( for काले ) — $T_1$ $G_2$ om line 17 — ( L 18 ) $T_{3.4}$ $M_{1\ 2}$ दिव्यौ, $M_3$ दिव्य- ( for देवौ ) $G_4$ मानुष्यतां ( for °षतां ) — ( L 19 ) $D_6$ एतौ ( for जातौ ) $T_3$ इव ( for इति ) — ( L 20 ) $M_4$ बलम् ( for पक्षम् ) G( ed ) उत्क्रन्तु ( for उद्धर्तुं ) — ( L 21 ) $D_6$ $T_{3\ 4}$ रूपेण ( for -वेषेण ) $M_{1-3}$ सुर· ( for ऽसुर· ) — ( L 22 ) G( ed ) निश्चित. ( for °तं ) $D_6$ सुतम् ( for शिशुम् ) $T_3$ निहन्तुं निश्चितः शिशुः ( for $^b$ ) — For line 23, $M_{1-3}$ subst

1** युवाभ्यामथ निर्मुक्तं वीक्ष्य दामोदरं तदा ।

— ( L 24 ) $D_6$ S ( except $T_4$ $M_{1-3}$ ) तत्क्षणं ( for °णाच् ) — $M_{1-3}$ om line 26 — ( L 26 ) G( ed ) प्रवृद्धस्य ( for प्रबु° ) $T_1$ प्रबुद्ध· स तु बालस्तु , $M_4$ प्रलम्ब. स तु बालश्च ( for $^a$ ). $T_1$ $M_4$ तं मुहूर्तं व्यजृम्भत ( for $^b$ ) — ( L 27 ) $D_6$ पूतना नाम राक्षसी ( for $^b$ ) — ( L 28 ) $D_6$ पाययन्ती ( for °यन्तीं ) $T_3$ पाययन्ती विषं स्तन्यं ( for $^a$ ) $D_6$ स्तन्यं प्राणमथाहरत् , $T_1$ $M_4$ सम प्राणैरपा° , $T_3$ तस्या प्राणमपा° ( for $^b$ ) — ( L 29 ) $T_{2\ 3}$ G $M_4$ द्वौ ( for तौ ) — ( L 30 ) $D_6$ $T_{1\ 2.4}$ G $M_4$ तदा बालं ; $T_3$ तथा बालं ( for तदा बालः ) — ( L 31 ) $T_4$ अयं ( for एवं ) G( ed ) हन्तुं ( for हन्ता ) $G_2$ जनार्दन ( for तवात्मजः ) — ( L 32 ) $M_4$ ततो ( for न ते ) $T_{3\ 4}$ नन्दगोप भय त्यज्य ( for $^a$ ) — ( L 33 ) $T_3$ ईश्वरः ( for ईदृशम् ) — $T_{3\ 4}$ $M_{1-3}$ om line 34 — ( L 36 ) $D_6$ -संघातान् ( for °तं ) $T_4$ निर्भीस्त्वम् , $G_2$ मा भीस्त्वाम् ( for न भी° ) $T_{3\ 4}$ -सर्प च ( for सर्पतु ) — Before line 37, $T_1$ $G_2$ ins वैशंपायनः Before line 38, $M_{1\ 2}$ ins नारद· — $T_{2-4}$ om ( hapl ) lines 39–43 $D_6$ om ( hapl ) line 39 — ( L 39 ) $T_1$ $G_2$ $M_{3\ 4}$ बाल- ( for बल- ) $M_2$ नमः कृष्णाय कृष्णाय ( for $^a$ ) $M_2$ बाल- ( for बहु- ) — ( L 40 ) $M_4$ -वर्हाय ( for -वर्णाय ) — ( L 41 ) $D_6$ $G_2$ -पुत्र ( for -मातर् ) — ( L 43 ) $D_6$ $T_1$ $G_{2-5}$ हरे ( for नमः ) — ( L. 44 ) $D_6$ $T_{1\ 2\ 4}$ G $M_4$ विहरस्व ( for °र त्वं ) — ( L 45 ) $T_2$ हरे ( for भव ) — Before line 46, $T_{1\ 4}$ $G_3$ ins वैशंपायन — ( L 46 ) $T_1$ महाद्युति , $T_{3\ 4}$ विशां पते ( for महामतिः ) — ( L 47 ) $G_2$ उद्वहन् ( for आवहत् )

11

Some Mss om the ref $D_3$ $T_3$ $M_{1-3}$ om lines 1–2 — ( L 1 ) $G_{3\ 5}$ प्राप्त ( for प्राप्तौ ) $G_3$ नन्दगोप- ( for

प्रविश्य च महारण्यं तदा वृन्दावनं वनम् ।
रेमिरे सुचिरं कालं यथेष्टं सहकेशवाः ॥
गावश्च क्षीरसंपन्ना महिष्यश्च सुनिर्वृताः । [ 5 ]
तस्मिन्काले तदा चेरुः सवत्साश्च यथासुखम् ॥
अथ त्रयोदशे वर्षे वर्धमाने च केशवे ।
संप्राप्तो घर्मसमयः कृष्णे वृन्दावने स्थिते ॥
गते च भास्करे काष्ठामुत्तरां तीक्ष्णदीधितौ ।
मरीच्यो दिक्षु सर्वासु प्रसृतास्तीक्ष्णवर्चसः । [ 10 ]
लोभयन्त्यो मृगाञ्शश्वत्तीक्ष्णरश्मौ दिवाकरे ॥
दावदग्धविभिन्नेभ्यः कीचकेभ्यो विनिर्गताः ।
सप्तार्चिषो गिरिं दग्धमुदभूवन्नितस्ततः ॥
रुरवस्तरक्षवश्चैव दग्धदेहा दवानलैः ।
कुञ्जरा घर्घररवा घर्मकालविलोलिताः । [ 15 ]
घर्मवातसमाक्रान्ता विनेदुर्विस्वरं रवम् ॥
कृष्णलाः पाकनिर्भिन्ना वनवायुविदारिताः ।
पेतुश्च सर्वतः पृथ्वी रक्तपाता इवाद्रिषु ॥
रेणवो बहुला भूमेर्नेत्रमार्गविरोधिनः ।
तमांसीव हि गोपानां दृष्टिं पिदधिरे मुहुः ॥ [ 20 ]
गोपाश्च घर्मसंतप्ता मध्यं याते दिवाकरे ।
वनेषु द्रुममूलेषु गाश्च संकाल्य तस्थिरे ॥
गोप्यः कुम्भीः समादाय नीरैः पूर्णाः समन्ततः ।
उष्णरश्मिकरैस्तप्ताश्छायामाश्रित्य तस्थिरे ।
वस्त्रैर्जलार्द्रैः सततं वाहयन्त्यः कुचान्पृथून् ॥ [ 25 ]
जलबिन्दून्दृतिगताञ्शीतलानमलान्मुहुः ।
आदाय पथि गोपाला आस्यशोषं निरासिरे ॥
मृणालैर्देहजं रूक्षं नीडस्थाश्च विहंगमाः ।
अत्युष्णघर्घररवाः शुष्कपर्णनिवासिनः ।
विनेदुर्भृशसंतप्ता दावरूक्षैः समाहताः ॥ [ 30 ]
पुष्पैर्वैभीतकैर्भिन्ना जनप्राणहरैः समम ।
किंपाकफलगन्धाढ्याः कालयन्तो मृगद्विजान् ॥

---

वसुदेव- ). — ( L 2 ) $D_6$ $G_2$ रूपाणि ( for -यूथानि ) $T_1$ धारयन्तौ ( for चा° ). $D_6$ $T_{2\ 4}$ $G_{1\ 3\ 4}$ सु- ( for स्व- ) — ( L 4 ) $T_1$ रेमाते ( for रेमिरे ) $D_3$ गोपा ( for काल ) $T_3$ रेमिरे तत्र गोपाला, $T_4$ °रे सदृशा गोपा ( for $^a$ ). — ( L 5 ) $D_6$ सपूर्णा ( for सपन्ना ) — ( L 6 ) $D_3$ $T_4$ सदा, $T_1$ यथा ( for तदा ) $D_6$ च तथा, $T_1$ बहुश ( for च यथा- ) $D_3$ सवत्सबहुला सुखम्, $T_{3\ 4}$ सवत्सा ( $T_4$ °वैं ता ) विपिने भृशम् ( for $^b$ ). — $M_{1.\ 2}$ subst for line 6 $M_3$ ins after line 5.

1** चचार च यदा कृष्णस्तदा वृन्दावने वने ।

— ( L. 8 ) $M_3$ वृन्दावन- ( for °ने ). — ( L 9 ) $T_4$ लेखागतं ( sic ) ( for च भास्करे ) $M_3$ तिग्म-, $M_4$ उष्ण ( for तीक्ष्ण- ) — ( L 10 ) $M_4$ विस्रब्धा ( for सर्वासु ) $G_5$ प्रहृतास्, $M_3$ प्रस्नु° ( for प्रसृ° ) $D_3$ ज्वाल-; $T_{3.\ 4}$ क्षुष्ण- ( for तीक्ष्ण- ). — ( L. 11 ) $T_2$ $G_1$ लोभयन्तो, $T_3$ शोभयन्त्यो ( for लोभ° ) $T_1$ $M_4$ शीघ्रं, $G_2$ शीघ्रांस् ( for शश्वत् ) $D_3$ बाधयन्त्यो मृगान्सर्वांस्, $T_4$ लोडयन्ति मृगा शश्वत् ( for $^a$ ) — ( L 12 ) $T_{3\ 4}$ देवगन्धर्वभिन्नेभ्य ( for $^a$ ) $D_6$ $T_2$ G $M_{1\ 2\ 4}$ विनिसृता ( for विनिर्गताः ) — ( L. 13 ) $G_5$ $M_4$ सुतार्चिषोर् ( for सप्तार्चिषो ). $T_{3\ 4}$ गिरेर्दैवाम्, $M_1$ गिरीन्दग्धुम्; $M_3$ गिरिं देहम् ( for गिरिं दग्धम् ) $D_3$ सप्तार्चिश्च गिरिद्रोण्याम्, $D_6$ $T_2$ $G_{1\ 2}$ °र्चिषोर्गिरिं दग्धुम् ( for $^a$ ) — ( L 14 ) $14^a$ hypermetric $G_1$ तरक्षुश्, $M_{1-3}$ तरवश् ( for तरक्षवश् ) $D_3$ अभवंस्तरवश्चैव, $D_6$ $G_{2-5}$ $M_4$ रुरवश्च तरक्षु( $D_6$ $G_2$ °क्षा )श्च, $T_{3\ 4}$ रु( $T_4$ त )रवस्तत्र सचेरुर् ( for $^a$ ). $T_{1,\ 4}$ $G_{3-5}$ $M_4$ दवानिलै. ( for °नलैः ).

— ( L 15 ) $D_3$ कुरङ्गा, T G $M_3$ करञ्जा, $M_1$ करञ्ज्यो, $M_2$ कळम्यो ( for कुञ्जरा ) $D_6$ करञ्जा दीर्घरभवो ( sic ) ( for $^a$ ). $T_2$ घर्मजालैर्, $G_1$ °जाल, $G_2$ $M_4$ °काले ( for °काल- ). — ( L 16 ) $T_1$ स्वनम्, $T_2$ $G_{1\ 4}$ मुहु, $G_3$ $M_4$ रवान्, $G_5$ भृशम् ( for रवम् ) — $T_2$ $G_1$ om ( hapl ) lines 17–20 — ( L 17 ) $D_6$ उपलाः पाकविभिन्ना, $T_{3\ 4}$ उपलाश्च विनिर्भिन्ना ( for $^a$ ). $T_3$ वने ( for वन- ). $G_2$ -विचारिता ( for -विदा° ). — ( L 18 ) $D_6$ $G_{2-5}$ $M_4$ पर्वता ( for सर्वत ) $D_3$ वृक्षा ( for पृथ्वी ) $D_3$ प्रस्थपाता, $D_6$ रक्ततारा, $T_4$ रत्नपाता, $G_2$ रत्नतारा, $G_{3-5}$ $M_4$ रत्नधारा ( for रक्तपाता ) — ( L. 19 ) $G_3$ बहुधा ( for °ला ) $G_{2-5}$ भुतेर् ( for भूमेर् ) — ( L. 20 ) $D_3$ समासाद्य, $G_2$ तमांस्यपि ( for °सीव ). $D_3$ ग्यदधिरे; $G_2$ $M_{1-3}$ नि° ( for पि° ). — ( L 21 ) $D_3$ अस्त ( for मध्यं ). $D_{3.\ 6}$ T G $M_{3\ 4}$ प्राप्ते ( for याते ) — $G_2$ om line 22. — ( L 22 ) $D_6$ $T_{2-4}$ $G_{1\ 3-5}$ दिनस्य; $T_1$ $M_4$ दीनाश्च ( for वनेषु ) $M_{1\ 2}$ -नीळेषु, $M_3$ -नीलेषु ( for -मूलेषु ) $D_3$ दत्तेष्वास्पदकीलेषु ( for $^a$ ) $D_6$ $M_{1-3}$ गाव ( for गाश्च ) — ( L. 23 ) $D_3$ $T_{3\ 4}$ कुम्भान् ( for कुम्भी ) $D_3$ नरा सर्वे, $D_6$ $T_3$ नीरैः पूर्णान् ( for नीरै पूर्णा ) — ( L 25 ) $M_1$ पत्रैर् ( for वस्त्रैर् ) $T_1$ $M_4$ वासयन्त्य. ( for वाह° ) $D_6$ बहून्, $T_4$ दृढान् ( for पृथून् ) — $D_3$ om lines 26–32 — ( L 26 ) $D_6$ $T_1$ हृदि गताञ्, $T_2$ उदग°, $T_{3.\ 4}$ G $M_4$ हृदग° ( for दृति° ) — ( L. 27 ) $D_6$ गोपानाम्, $G_1$ °ल, $G_2$ °लम् ( for °ला ) $D_6$ आस्यशोभां ( for °शोषं ). — ( L 28 ) $D_6$ कुक्षिं ( for रूक्षं ). $T_3$ मृणाळं देहज कुक्षिं ( for $^a$ ) $D_6$ नलस्थाश्च, $T_2$ $G_{1\ 4\ 5}$ नाळ°; $T_{3.\ 4}$ नीडाश्चैव ( for नीडस्थाश्च ) — ( L. 29 ) $T_1$ $G_{2-5}$ M अत्युष्णा

इतः कचित्ततः सद्यस्ततोऽन्यत्र ततः पुनः ।
वाता ववुर्महावेगाः कालयन्तो रजो दिशः ॥
आग्नेयं तेज एवैतत्प्रसृतं माधवस्य ह । [ 35 ]
वर्धमाने महाघर्मे जगतः शोपहेतुके ॥
केशवे जगतां पाले स्थिते वृन्दावने वने ।
व्याधिर्गोपकुले तत्र बभूव तुमुलो महान् ॥
व्याधयो विविधाकारा गोषु गोपालकेषु च ।
प्रादुर्बभूवुर्बहवो घर्मकाल उपस्थिते ॥ [ 40 ]
महिषाश्च भृशं तप्ता ज्वरातीसारमूर्छिताः ।
सहसा प्रपतन्ति स्म वज्रभिन्ना नगा इव ॥
स्तब्धलोमाक्षिपक्ष्माणो लम्बकर्णशिरोधराः ।
स्रवदक्षिमुखघ्राणा दन्तैः कटकटायितैः ॥
अपूर्ववर्णाः पशवो नेच्छन्तो यवसं तृणम् । [ 45 ]
अभीक्ष्णं चपलाङ्गाश्च परिनिम्नाक्षिमण्डलाः ॥
क्रन्दमानाश्च तिष्ठन्ति शयिताश्च सहस्रशः ।
भूमौ परिपतन्ति स्म स्रंसयन्तः शकृन्त्यपि ॥
एवंविधैरहोभिश्च पञ्चषैश्च दिनैरभूत् ।
महिषाणां गवां चापि दारुणं मृत्युसंशयम् ॥ [ 50 ]
अपूर्वमेवं सहसा गोपालानामभूद्भयम् ।
पालयाने तु गोविन्दे गोपालैः सह गोगणम् ॥
सवत्सानां गवामेवं व्याधयश्च पृथग्विधाः ।
अप्रज्ञाताः प्रदृश्यन्ते वृद्धगोपालपण्डितैः ॥
मन्त्रैश्च भेषजैर्मुख्यैर्भिषजः शास्त्रयुक्तिभिः । [ 55 ]
यतमानाश्च गोपाला न शेकुस्तान्निवारितुम् ॥
कृत्वा चाङ्गेषु दहनं सिरावेधांश्च तद्विदः ।
कुर्वाणा बहुधा यत्नं न व्याधीन्प्रतिचक्रिरे ॥
ततो विषण्णमभवद्गोपालानां तदा कुलम् ।
सवृद्धबालं सस्त्रीकं व्याक्रोशद्व्याधिना स्वयम् ॥ [ 60 ]

---

(for °ष्ण-) $T_2$ $G_1$ अत्युष्णा बर्बररवाः, $T_{3\ 4}$ °ष्णा घर्मसंतप्ता (for $^a$) —(L 30) $G_1$ समाहिता, $G_2$ समन्ततः, $M_4$ समाहतै (for °हता.) —(L 31) $D_6$ च भीतकैर्, $G_2$ विभी° (for वैभी°) $T_4$ $G_4$ $M_{1\ 2}$ प्राणहरा., $M_3$ -घ्राणहराः (for -प्राणहरैः) —(L 32) $G_1$ किपाका (for किंपाक-) $T_4$ corrupt for $^a$ $D_6$ $G_2$ मृगान्द्विजान्, $T_4$ रजो दिशः (for मृगद्विजान्) — $T_5$ om line 33 —(L 33) $G_3$ तमः (for तत) $D_3$ हठात्कृतास्तथा सद्यस् (for $^a$). $D_6$ $T_1$ $M_4$ पुन.; $G_3$ तमः (for ततः) —(L 34) $G_4$ महावेगात् (for °वेगाः) $M_4$ तोलयन्तो (for का°) $D_3$ $G_2$ दिशो दश, $T_1$ रजो दिशि (for रजो दिशः). —(L 35) $D_3$ आग्नेयतेजसा चैतत् (for $^a$) $D_3$ प्रतप्तं; $T_{3\ 4}$ $G_{2\ 5}$ प्रसूतं, $G_1$ प्रसृष्टं, $M_4$ प्रस्रुतं (for प्रसृत) —(L 36) $G_2$ जगतां (for °त) -कारके (for -हेतुके) —(L 37) $D_{3\ 6}$ $T_{1\ 2}$ G $M_4$ मूले; $T_{3.\ 4}$ नाथे (for पाले) —(L 38) $D_3$ आधिर् (for व्याधिर्). —(L 39) $D_{3\ 6}$ T G $M_4$ गोषु गोपालकादिषु (for $^b$) —(L 40) $D_3$ -भाव (for काल) —(L 41) $M_{1-3}$ भृशस- (for च भृशं) $D_3$ खरवातैश्च मूर्छिताः (for $^b$) —(L 42) $M_3$ सह ता (for सहसा) —(L 43) $D_3$ श्वास्वासां वस्तथा गावो (for $^a$). $D_3$ $T_4$ बद्ध- (for लम्ब-) —(L 44) $T_3$ $G_{3-5}$ $M_4$ स्रवदक्षिण- (for स्रवदक्षि-) $T_1$ -मुखा घूर्णा (for -मुखघ्राणा) $M_3$ प्रक्षीणमुखवर्ष्माणो (for $^a$) — $T_{3\ 4}$ om. $44^b$–$45^a$ $G_3$ $M_{1-3}$ दन्तै. कटकटायिन ($G_3$ °न्विता.) (for $^b$) — For line 44, $D_3$ subst

2** प्रास्रपन्प्रश्रितमुखा घ्राणदन्तैः प्रसारितै ।

—(L 45) $D_5$ नङ्क्ष्यन्ति (for नेच्छन्तो) $T_{3\ 4}$ नेच्छन्ति पशवस्तृणम् (for $^b$) —(L 46) $D_6$ $M_{1-3}$ अभीक्ष्ण- (for °क्ष्णं). $D_3$ $T_3$ चञ्चलाङ्गाश् (for चप°) $D_6$ -म्लानाक्षि- (for निम्नाक्षि-) $D_5$ पतन्ति स्म महीतले (for $^b$) —(L 48) $T_4$ $M_{1-3}$ -पतन्त्यश्च (for °न्ति स्म) $M_{1\ 2}$ ससृजन्त्य, $M_3$ स्रंस्यन्त्यश्च, $M_4$ ह्रासयन्त्य (for स्रस°) $D_3$ सस्रवन्त्य शकृद्भुवि, $G_5$ संस्रवन्त. पतन्त्यपि (for $^b$) — $M_{1-3}$ om line 49 —(L 49) $T_3$ अनेकैश् (for अहोभिश्) $T_1$ पञ्चकैश्च, $T_2$ $G_1$ पञ्चाष्टैश्च, $G_4$ $M_4$ पञ्चषष्ठैर् (for °षैश्च) $D_3$ पञ्चभिः सप्तभिस्त्वभूत् (for $^b$) —(L 50) $D_3$ $T_4$ गवा चैव, $T_3$ मृगाणा च (for गवां चापि) $D_6$ सश्रयम् (for -संश°) $T_1$ $M_4$ दारुणो मृत्युसंशय (for $^b$) —(L 51) $M_4$ अपूर्ववेषं सहसा (for $^a$) —(L 52) $D_3$ पालयत्येव गोविन्दे, $G_4$ °यामास गोविन्दो (for $^a$) —(L 53) $D_2$ सवनाना गवा मेने (for $^a$). $T_3$ व्याधिरूपा, $T_4$ व्याधिमाप (for व्याधयश्च) $T_2$ $G_1$ पृथक्पृथक् (for °ग्विधा) $D_2$ व्याधिरूपं पृथग्विधम् (for $^b$) —(L 54) $T_{3\ 4}$ -मण्डलै. (for -पण्डितै) —(L 55) $G_4$ भिषग्भिर् (for भेषजैर्) $D_3$ $T_1$ $G_{2\ 5}$ $M_{1-3}$ -युक्तितः (for °भिः) —(L 56) $T_3$ शेकुस्तान्न निवारितुम्, $T_4$ शेकुस्तं विनि°, $G_2$ न शेकुस्तन्निवर्तितुम् (for $^b$) —(L 57) $T_4$ श्रुत्वा (for कृत्वा) $M_{1\ 3}$ गोषु (for [अ]ङ्गेषु) $D_3$ तथा चाक्षेषु दहनं (for $^a$) $D_3$ शिरोवेधं (for सिरावेधांश्) $T_{3\ 4}$ सिराभेदांस्तु तद्विद., $G_4$ °भेदाश्च तद्विधा (for $^b$) — After line 58, $T_1$ reads lines $67^a$–$69^a$, repeating the same in its proper place $M_{1-3}$ om lines 59–66. $T_3$ reads lines

भृशमार्तमभूत्रस्तं संनिपातज्वरार्दितम् ।
सर्वमर्मातिगतया महावेदनया युतम् ॥
पीडिताः पिटकाभिश्च ग्रथिताः सर्वतस्तनुम् ।
सिरास्थिमांसं निर्भिद्य प्रादुर्भूतैः सवेदनैः ॥
निष्क्रियाभिस्तथान्याभिर्व्याधिभिर्भृशपीडिताः । [ 65 ]
विपन्ना वृद्धगोपालाः सगोयूथास्त्ववापतन् ॥
गोपालाश्च तथान्ये च ये च तद्वनवासिनः ।
सर्वे परिपतन्ति स्म पिबन्तो यमुनाजलम् ॥
यमुनातीरजेनाशु स्पृष्टाः सर्वे च वायुना ।
व्याधिरूपैर्बहुविधैर्भृशमार्तास्तदाभवन् ॥ [ 70 ]
सरीसृपाश्च व्याला ये मृगाः सर्वे च पक्षिणः ।
प्राणिनो विविधाकारा यामुनं वनमाश्रिताः ॥
ते सर्वे मृतसंकल्पा मृताश्चैव सहस्रशः ।
गोपालाः सह गोभिश्च परिपेतुर्दिशो दश ॥
सर्वे संघूर्णनयना निश्चेष्टा मूर्छिता भृशम् । [ 75 ]
पेतुर्वनचरा राजञ्जीवन्तोऽपि मृता यथा ॥
अपानमूत्रद्वारेभ्यो मुखनासाक्षिकर्णतः ।
शोणितं लोमकूपेभ्यो जन्तवः ससृजुर्बहु ॥
सर्वेषां प्राणिनामन्तः समन्तात्सव्रणैर्मुखैः ।
अशक्यमम्बु वाहर्तुं किं पुनर्भोजनादिकम् ॥ [ 80 ]
दन्ताश्च विप्रशीर्यन्ते केषांचिन्न च भाषणम् ।
रसनोद्गीर्यते कण्ठैः समन्तात्सव्रणैरपि ॥
दुर्गन्धं दुःसहं तत्र प्रादुरासीद्विशेषतः ।
सर्वेषु समवायेषु दुष्प्रेक्ष्यं च समन्ततः ॥
आक्रोशबहुलं चासीत्सर्वतो यमुनातटे । [ 85 ]
नरगोमृगयूथानामार्तानां सर्वतोदिशम् ॥

---

59–66 followed by the repetition of lines 67–68 after 3**, T4 repeats lines 59–60 after the same — (L 59) D3 ततो विषण्णमनसा, T3 4 (second time) तत्राविष्टं समभवद् (for [a]) — (L 60) D6 T1 3 4 (second time) G2 व्याकुलं (for व्याक्रोशद्) D3 व्याकुलं व्याधिना कृतम् (for [b]) — (L 61) T1 श्रमार्तमभवत्रस्त (for [a]) D6 -ज्वरार्पितम् (for °र्दितम्) D3 सनिपात इवार्पितम् (for [b]) — (L 62) D3 -मर्माभि-, D6 T4 -धर्माति-, T3 मर्माधि-, M4 -मर्मास्थि- (for °ति-) D6 T1 2 4 G M4 युता (for युतम्) — (L 63) D6 फलकाभैश्, T1 पिडिकाभिश्, T4 पिटकाद्यैश्, G1 3–5 M4 पिळ (G1 °ळि) काभिश्, G2 पिङ्गळाभैश् (for पिटकाभिश्) D3 पीडिकापीठरैश्चैव (for [a]) D6 G2 ग्रथितैः (for °ताः) D3 ग्रथितैः सर्वतस्तत, T3 प्राणैश्च ग्रथितैस्तनुम्, T4 व्रणैश्च ग्रथिते तनुम् (for [b]) — (L 64) G2 शिरोस्थि- (for सिरास्थि-) T1 4 G3–5 M4 -मांसान् (for -मासं) D6 T3 शिरोस्थिमासान्निर्भिद्य (for [a]) G5 सु- (for स-) — (L 65) D3 [आ]शाभिर् (for [अ]न्या°) T2 -दुःखिता (for पीडिता) — (L 66) D3 वृत्तेन (for विपन्ना) D6 T1 G2 अवापतन्; G3 स्वथा° (for स्त्ववा°) D3 स्वर्गे देवा इवाभवन्, T3 4 स्वर्गाकृष्टा इवाभवन् (for [b]) — (L 67) T1 (both times) 3 (first time) 4 चान्ये (by transp.) T1 (both times) 3 (first time) 4 ते सर्वे वनवासिन (for [b]) — T4 M3 ins. after line 69; T3 after line 70; M1 2 after line 86

3** तदा गोपगणान्सर्वान्स व्याधिः समपद्यत ॥
ज्वरिता केचिदापेतुरपरे यक्ष्मिणोऽभवन् ।
अन्येऽतिसारसंयुक्ता यमुनावायुवीजिता ॥
एवं बहुविधाकारा व्याधयो गोषु विष्ठिता ।
केचिन्मृता समापेतुर्मरिष्यन्तस्तथापरे ॥ [ 5 ]

[ (L 1) T3 ततो (for तदा) M1–3 ततो गोपगण सर्व (for [a]) — (L 2) T3 अपरे यक्ष्मणा वृता (for [b]) — (L 3) T4 M3 -जीविता (for -वीजिता) — (L 4) T3 -विधाधारैर् (for °कारा). T3 व्याधिभिर्भृशपीडिता (for [b]) ]

— M1 2 om. line 70 M3 om. lines 70–86 — (L 71) D6 T2 3 G M4 च (for ये) — (L 72) T1 G3 यमुना- (for यामुनं) — (L 73) D3 मृत्यु- (for मृत-) T3 भूताश् (for मृताश्) T2 G1 सर्वे (for चैव) — (L 74) D3 गोपाला पादशोफाश्च, T4 M1 2 °लैः सह गोप्य (T4 °पै) श्च (for [a]) D3 T3 4 सहस्रश (for दिशो दश), — (L 75) G2 4 स्म (for सं-) — (L 76) D6 T1 2 G M4 वने (for वन-) D3 T3 4 सेदुर्वनेचरा राजन् (for [a]) T1 यथा मृताः (by transp.), G2 (also as above) मृता इव. — (L 77) G3 -नासिक- (for -नासाक्षि) — (L 78) M4 सुस्रुवुर् (for ससृजुर्) — (L 79) D6 T1 2 G M4 अङ्गात् (for अन्तः) — D3 T3 4 om. line 80 — (L 80) M1 2 किं पुनर्भोजनं परम् (for [b]) — (L 81) T3 प्रति-, G1 [अ]पि प्र- (for विप्र) G2 M4 -शीर्यन्त (for °न्ते) D3 वमतां रुधिरं दन्तैर्; T1 2 दन्ताश्च पर्य (T2 प्रव्य) शीर्यन्त; T4 °श्च प्रतिशीर्यन्ति (for [a]). T G3 भक्षणम् (for भाष°) D3 नाभूत्किंचन भाषणम्, T1 केषांचन न भा° (for [b]) — M1 2 om. line 82 — (L 82) T4 रसनोत्साद्यते कण्ठैः (for [a]) D3 सदन्तैः (for समन्तात्) — (L 83) D3 दुर्गन्धा दुष्प्रभास्तत्र; M1 2 °न्धो दुःसहस्तत्र (for [a]) D3 T3 प्रादुरासन् (for °सीद्).

नाहारं भुञ्जते गावो नौषधं न च खादनम् ।
श्वासमात्रं व्रजं सर्वं शयितं गोगणैः सह ॥
एवं गते व्रजे तस्मिञ्श्वासमात्रे स्थिते नृप ।
अथ कृष्णश्च रामश्च कैश्चिद्गोपैः सहापरैः । [ 90 ]
पृथगन्यत्र संवासमादावेवाभ्यरोचताम् ॥
बालोऽपि बुद्ध्या सचिन्त्य कृष्णः कमललोचनः ।
इदमत्रेतिकर्तव्यमिति निश्चितवान्प्रभुः ॥
क्रोशमात्रमतिक्रम्य पर्वतेनान्तरीकृतः ।
परःशतैः स्वसखिभिर्नीरोगः समपद्यत ॥ [ 95 ]
मृच्छिलाशर्करावृक्षतृणकाष्ठलतागुणैः ।
भुवः संस्थानमालोक्य खानयामास मेदिनीम् ॥
उत्पाद्य सलिलं कृष्णः स्वयूथ्यैः सह गोगणैः ।
तज्जलं स पिबन्कृष्णो नीरोगः समपद्यत ॥
तद्दृष्ट्वान्ये च गोपालाः शक्त्याल्पतरया युताः । [ 100 ]
प्रयाणमनुतिष्ठन्ति तेषां कृष्णोऽभवद्गतिः ॥
नन्दगोपो यशोदा च पुत्रौ दृष्ट्वा निराकुलौ ।
भृशमार्तियुतौ चास्तामन्तःप्रीतियुतावपि ॥
बन्धुवर्गोऽपि सुमहान्नन्दगोपस्य चाभवत् ।
तमवेक्ष्य भृशं तप्तो नाभवत्कृष्णसंनिधौ ॥ [ 105 ]
अनेन बन्धुवर्गेण सह मे गोधनेन च ।
स्त्रियेयं चाहमप्यत्रेत्येवं मतिरजायत ॥
अथ कृष्णश्च रामश्च ज्वरितौ पितरौ तदा ।
श्रुत्वैव परमोद्विग्नौ व्यथितौ किल तौ स्थितौ ॥
बन्धुवर्गं च सकलं गोधनं च तथागतम् । [ 110 ]
दृष्ट्वा परमसंत्राससमागतौ बलकेशवौ ॥

Colophon

— $M_{1\ 2}$ om line 84 — ( L 85 ) $T_1$ आक्रोशशब्दबहुलं; $M_{1\ 2}$ °शो बहुलश्चासीत् ( for ᵃ ) — ( L 86 ) $T_1$ नादेन ( for नरगो- ) $M_2$ वृष ( for -मृग- ) $D_3$ -नारीणाम् ( for -यूथानाम् ) $D_3$ $T_{1\ 3\ 4}$ $M_{1\ 2}$ आर्तानां पक्षिणामपि ( for ᵇ ) — ( L 87 ) $D_{3\ 6}$ $T_{1\ 2}$ G $M_{3\ 4}$ नापो ( for गावो ) $T_{3\ 4}$ नादातुमपि भोक्तु वै ( $T_4$ वा भोक्तुं ); $M_3$ नाहारं भजते नापो ( for ᵃ ) $T_2$ $G_{3\ 5}$ औषधं ( for नौ° ) $D_6$ च न ( by transp ) $D_3$ भाषणम्, $G_1$ पोषणम्, $G_4$ वेदनम् ( for खादनम् ) $T_{3\ 4}$ नौषध न रसायनम् ( for ᵇ ) — ( L 88 ) $D_3$ व्रजे सर्वे, $T_2$ $G_1$ व्रजा सर्वे ( for व्रजं सर्वं ) $D_3$ $T_2$ $G_1$ शा( $D_3$ श )यिता, $T_3$ $M_3$ शयितुं ( for °तं ). — $M_2$ om line 89 — ( L 89 ) $T_{2-4}$ $G_5$ व्रजे गते ( by transp ) $D_6$ मास- ( for श्वास- ) $D_3$ -मात्रान्वये, $M_4$ -मात्रं गते ( for -मात्रे स्थिते ) — ( L 90 ) $D_6$ तैश्च ( for कैश्चिद् ) $M_2$ तथा ( for सह ) $D_3$ स्वकीयैर्गोपकैः सह, $T_{3\ 4}$ बहुभि( $T_4$ स्ववीयैं )र्गोधनैः सह, $M_1$ पर्वतेनान्तरीकृतम् ( for ᵇ ) — ( L 91 ) $D_6$ $T_{2\ 4}$ $G_5$ $M_4$ प्ररोचताम्; $G_2$ व्यरो°; $G_3$ प्रचोदिता ( for [अ]भ्यरोचताम् ). — ( L 92 ) $T_4$ संचक्रे ( for संचिन्त्य ) — ( L. 93 ) $D_3$ [ ए ]व ( for [इ]ति- ) $G_1$ विभु. ( for प्रभु ) — ( L 94 ) $D_3$ [अ]न्तरं कृतम्; $M_2$ °रीकृतम् ( for °रीकृत· ) — $T_2$ $G_1$ om line 95 — ( L 95 ) $D_3$ परं श्रेय·, $M_3$ परं शतैः ( for पर शतै. ) $T_{1\ 3\ 4}$ $G_{2\ 3\ 5}$ च ( for स्व ) $D_6$ विरोग ( for नी° ) — $G_{2-4}$ om ( hapl ) lines 96–99 — ( L 96 ) $D_3$ $M_{1-3}$ मृत्तिका- ( for मृच्छिला- ) $T_3$ $G_2$ -लतागणैः, $T_4$ $G_1$ -लताङ्कुरै ( for -लतागुणै ) — ( L 97 ) $D_{3\ 6}$ $T_4$ $G_{1\ 2}$ भुव संस्थानसंधिज्ञ ( for ᵃ ) $D_3$ चिन्तयामास मेदिनीम् ( for ᵇ ) — ( L 98 ) $D_3$ उत्पाद्यमखिलं कृष्ण·; $D_6$ °द्य ललितं कृष्णं ( for ᵃ ). $G_2$ स ( for स्व ). — ( L 99 ) $D_3$ पिबन्नपो बहिस्थानान्, $D_6$ $T_2$ $G_{1\ 2\ 5}$ पिबन्नद्भिश्चान्यत्र, $T_{1\ 3\ 4}$ $M_4$ पिबन्नद्न्बहि पान ( $T_1$ °हिश्चान्नं ) ( for ᵃ ) $T_4$ विरोग ( for नी° ) — ( L 100 ) $T_3$ ते ( for [अ]न्ये ) $T_4$ भक्त्या ( for शक्त्या ) $G_4$ [अ]न्यतरया ( for [अ]ल्प° ) $G_1$ शक्त्याल्पतरया युतम् ( for ᵇ ) — ( L 101 ) $D_{3\ 6}$ S ( except $M_{1\ 2}$ ) प्रयत्नम् ( for प्रयाणम् ) $T_1$ गति प्रभु ( for ऽभवद्गति ) — ( L 102 ) $D_3$ दृष्ट्वा पुत्रौ ( by transp ), $T_{3\ 4}$ दृष्ट्वा दृष्ट्वा $T_2$ $G_1$ पुत्रं दृष्ट्वा निराकुलम् ( for ᵇ ) — ( L 103 ) $D_3$ -पराव्, $T_4$ -युतौ वा, $G_4$ $M_4$ -युताव् ( for -युतौ च ) $D_6$ भृशमार्तियुतो वास्ति ( for ᵃ ) $T_2$ तत प्रीति- ( for अन्त-प्रीति- ) — ( L 105 ) $T_1$ समवेक्ष्य ( for त° ) $D_6$ तप्ता, $M_2$ ( *inf lin* as abve ) त्रस्तो ( for तप्तो ) $D_3$ तेनैव सह संतप्तो; $M_4$ समवेक्ष्य भृश त्रस्तो ( for ᵃ ) $D_3$ हि ( for न ) $M_3$ -संनिधे ( for °धौ ) — ( L 106 ) $D_3$ सह गोपैर्, $D_6$ सहसा गो, $G_1$ संगमो गो- ( for सह मे गो- ) — ( L 107 ) $D_6$ $T_{3\ 4}$ $G_{2-5}$ $M_1$ स्त्रियेयम्, $T_2$ $G_1$ त्रायेयम् ( for स्त्रियेयं च ) $D_3$ स्त्रिये त्वहमपि वने ( for ᵃ ) $D_{3\ 6}$ एवं ( for [इ]त्येवं ) — ( L 108 ) $D_6$ $T_{1\ 2}$ G तत ( for अथ ) $D_3$ व्यथितौ, $D_6$ T G $M_4$ ज्वरातौ ( for ज्वरितौ ) — ( L 109 ) $T_3$ दृष्ट्वा ( for श्रुत्वा ) $T_1$ $G_2$ किल स, $M_4$ तु व्यव- ( for किल तौ ) $D_3$ $T_{3\ 4}$ व्यथितौ तौ बभूवतु ( for ᵇ ) — $M_{1-3}$ om lines 110–111 — ( L 110 ) $T_3$ नन्द च ( for सकलं ) $D_3$ यथा यथा, $T_4$ तथाविधम् ( for °गतम् ) $T_3$ यशोदां च तथाविधम् ( for ᵇ ) — ( L 111 ) $T_1$ -संतापम्, $T_2$ $G_{1\ 3-5}$ -सत्रासौ ( $G_{1\ 3}$ °सा ) ( for °सम् ) $T_2$ $G_{1\ 3\ 5}$ व्याकुलौ ( for आगतौ ) $D_4$ $T_{1\ 3\ 4}$ राम- ( for बल- ) $G_4$ व्याकुलौ कृष्णकेशवौ ( for ᵇ ). — Colophon om in $T_4$ — *Mention of Khila* $D_3$.

वैशंपायन उवाच ।
अथ तस्यामवस्थायां गोपालानां वयोतिगः ।
विदेहादागतः कश्चित्तस्मिन्कोलाहले किल ॥
स बन्धुवर्गं संप्रेक्ष्य गोधनं च तथागतम् ।
प्रोवाचामृतसंकल्पं वाक्यं विद्वान्सभागतः ॥ [ 115 ]
वयं पशून्समाश्रित्य जीवामो विगतज्वराः ।
पशूनां च पतिर्देवः सर्वथा वृषभध्वजः ॥
तस्यार्चनविधिं शीघ्रं कुरुध्वं गोवृषस्य च ।
येन शान्तिमवाप्स्यामो न मन्त्रौषधपौष्टिकैः ॥
ब्राह्मणाञ्श्रुतसंपन्नान्समाहूय यथाविधि । [ 120 ]
अस्मिन्संनिहिते स्थाने सम्यगर्चाम शंकरम् ॥
इत्युक्ताः कुलवृद्धेन ते गोपाः कृष्णमाश्रिताः ।
तथा चक्रुर्द्विजेन्द्रांश्च समाहूयार्चनाविदः ॥
उपहारैर्नमस्कारैरर्चनाभिरनेकधा ।
सुप्रीतमनसो विप्रास्तथा चक्रुर्यथाक्रमम् ॥ [ 125 ]
हविर्भिः पायसैश्चापि घृतेन पयसाम्बुना ।
संतर्पयन्तो विश्वेशं हुत्वा चाग्नौ वृषध्वजम् ।
देवी स्कन्दगणांश्चैव गोवृषं नन्दिकेश्वरम् ।
विनायकं च संपूज्य स्तुतिभिश्चास्तुवन्हरम् ॥
मन्त्रैर्माहेश्वरैरेवं शान्तिमङ्गलयुक्तिभिः । [ 130 ]
पूजयन्ति स्म विप्रेन्द्रास्तद्भक्ता भक्तवत्सलम् ॥
पुष्पैर्गन्धैश्च धूपैश्च दीपैश्चैव समन्ततः ।
पृथक्पृथक्समर्चन्ति ब्राह्मणा वेदपारगाः ॥
अर्चा मूर्ध्नि कृतास्तिस्रः सप्तरात्रं च संततम् ।
पृथग्गोघृतधारास्तु यथाविध्युपपादिताः ॥ [ 135 ]
तेष्वेवाहःसु विप्रेन्द्राः संहिताध्ययने रताः ।
त्रिभिर्वेदैस्तथा चक्रुर्महादेवप्रसक्तये ॥
गानैश्च केचिद्गायन्ति शंकरं वृषभध्वजम् ।
नृत्यन्ति च विशेषेण रुद्रप्रीत्यर्थमुद्यताः ॥
भ्रूक्षेपैरक्षविक्षेपैर्मुखान्नयनसूचकैः । [ 140 ]
हस्तविन्यासयोगैश्च पादघातैश्च भागतः ॥
नृत्तं कुर्वत्सु विप्रेषु शिवस्य प्रमुखे तदा ।

---

— *Adhy name* $D_3$ व्याधिकथनम्, $D_6$ $G_{2, 3}$ व्याध्युपद्रव, $T_2$ $G_1$ व्याध्युपद्रवकथनम् — *Adhy no.* $D_3$ 65, $T_1$ $G_{3, 5}$ $M_4$ 60, $T_2$ $G_1$ 59, $T_3$ 66, $G_{2, 4}$ 57, $M_{1-3}$ 56.

$T_4$ om the ref — (L. 112) T $G_{1, 3-5}$ $M_4$ वयोधिक (for °तिगः) — (L 113) $D_6$ विदेशाद् (for °हाद्) $T_{3, 4}$ सति (for किल) — (L 114) $T_{3, 4}$ तथाविधम् (for तथागतम्) — (L 115) $T_3$ प्राह चामृतकल्पं तद् (for [a]) $T_1$ सभां गतः, $T_{3, 4}$ $G_4$ $M_4$ समागतः (for सभा°) — (L 118) $M_{1, 2}$ [अ]र्चना- (for °न-) $D_6$ $T_{2, 3}$ G $M_4$ वृषभस्य (for गोवृषस्य) — (L 119) $D_{3, 6}$ $T_{2-4}$ G $M_4$ तेन (for येन) $M_4$ -मूलिकैः (for -पौष्टिकैः). $D_3$ न च मन्त्रौषधादिभि, $D_6$ $T_{1, 3, 4}$ $G_{2-5}$ $M_{1, 2}$ न मन्त्रौषधिपुष्टिकै ($T_3$ °भिः), $M_4$ समन्त्रौषधपुष्टिकै (for [b]) —(L 120) $T_1$ वृद्ध-; $T_4$ वृत्त- (for श्रुत-). $D_3$ ब्राह्मणं श्रुतसंपन्नं (for [a]) — (L 121) $D_3$ $G_2$ $M_3$ यस्मिन्, $T_{3, 4}$ त° (for अ°) $G_1$ सनिहित- (for °ते). $D_3$ सम्यगायाति शंकर (for [b]). —(L 122) $G_1$ इत्युक्त्वा (for °क्ता) $D_3$ [ए]ते गोपा; $T_4$ गोपाला (for ते गोपा). $T_2$ $G_1$ $M_4$ ते गोपाः कृष्णसश्रि($M_4$ °पालि)ता (for [b]) — (L 123) $T_{3, 4}$ [अ]र्थकोविदान् (for [अ]र्चनाविदः) $D_3$ समाहूताश्च तद्विदः (for [b]) — (L 124) $D_6$ T $G_{1, 2, 4, 5}$ $M_4$ उपवासैर्, $G_3$ °स्कारैर् (for °हारैर्) $D_3$ सपर्याभिर् (for अर्चनाभिर्) — (L 125) $G_3$ सं- (for सु-). $T_{3, 4}$ यथासुखम् (for °क्रमम्) — (L 126) $D_3$ [ए]व (for [अ]पि). $T_2$ $G_1$ मधुना (for पयसा). $G_5$ घृतेन पयसां पुनः (for [b]). — (L 127) $D_3$ $T_3$ $M_3$ सततं घो($T_3$ तो)षयन्तौ वै; $T_1$ तर्पयन्तोऽपि विश्वेशं, $T_4$ संतोषयन्तो वि° (for [a]) $T_{3, 4}$ [अ]ग्निं (for [अ]ग्नौ) $D_6$ $T_{1, 2}$ G $M_4$ हुत्वा चाग्निं ($M_4$ °त्वाग्निं च) विभावसुम् (for [b]) — $G_4$ om lines 128–131 — (L 128) $T_4$ दिवि (for देवी) $D_3$ $T_{1-3}$ $G_{1, 3, 5}$ M स्कन्दं (for स्कन्द) $T_1$ [अ]पि (for [ए]व) — (L 129) $T_3$ विधिभिश् (for स्तुति°) $D_6$ संस्तुवन् (for चास्तु°). $D_3$ विधिभिश्चाशु वै हरम्, $T_4$ स्तुतिभिश्चावने हरिम् (for [b]) — (L. 130) $D_3$ देवं (for एवं) $G_2$ मन्त्रैर्महेश्वरेणैव (for [a]). $D_6$ -पुष्टिभि, $M_4$ -सूक्तिभि (for युक्तिभि). — (L 131) $T_{3, 4}$ विप्रेन्द्रास् (for °न्द्रास्) — $T_{3, 4}$ $M_4$ om (hapl) lines 131[b]–136[b]. $T_2$ $G_{1, 3, 5}$ तं भक्त्या (for तद्भक्ता) $M_3$ वत्सला. (for °लम्) — (L 132) $D_3$ स- (for the first च) — (L 133) $D_3$ स्मार्चयन्ति (for समर्चन्ति) — (L 134) $D_{3, 6}$ $T_{1, 2}$ G स्थितास् (for कृतास्) — $D_3$ $M_3$ om line 135 — (L 135) $M_{1, 2}$ व्रतगोघृतधाराश्च (for [a]) $G_3$ तथा (for यथा-). — (L. 136) $T_{3, 4}$ रतान् (for रताः) — (L 137) $D_3$ -प्रशान्तये, $D_6$ -प्रसत्तये, $T_1$ $M_4$ -प्रसादनम् (for -प्रसक्तये). — (L. 138) $M_4$ गानेन (for गानैश्च). $T_3$ गानैश्च गाययन्ति स्म (for [a]). $D_3$ ब्राह्मणा वेदपारगाः (for [b]). — (L 139) $M_{1-3}$ प्रनृ-

सप्तमेऽहनि मध्याह्ने प्रोद्भूतं महदद्भुतम् ॥
तेषामेको द्विजेन्द्रस्तु वेदवेदाङ्गपारगः ।
उन्मत्त इव संजज्ञे साट्टहासः पुनः पुनः ॥ [ 145 ]
दिव्यं नृत्तं समालेभे दिव्यं गेयं तथैव च ।
माहेश्वरेण भूतेन समाविष्टो विमोहितः ॥
विस्मिताः सर्व एवासंस्तस्मिन्सदसि ये स्थिताः ।
स च वै दिव्यनृत्तान्ते देवावेशी वचोऽब्रवीत् ॥
अस्मिन्मुहूर्ते कैलासादागतः परमेष्ठिनः । [ 150 ]
शासनं समुपादाय मूर्ध्ना सर्वजगद्गुरोः ॥
वर्तमानं पशूनां च गोपालानां च संकटम् ।
वने निवसतां ज्ञात्वा प्राणिनां च महद्भयम् ॥
युष्मदर्चाविशेषाच्च सौष्ठवाच्चेह कर्मणः ।
वचो गोवृषभक्त्या च पशूनां पतिरब्रवीत् ॥ [ 155 ]
शङ्कुकर्णाशु गत्वा त्वं यमुनातीरवासिनाम् ।
आर्तानां ब्रूहि मद्वाक्यं समाविश्य द्विजोत्तमम् ॥
सर्वप्राणिषु सर्वत्र द्वापरान्ते महासुरः ।
मनुष्यलोके भोगार्थं दृष्ट्वा बन्धूननेकशः ॥
जातः कालः कलिर्नाम विरोचनसुतो बली । [ 160 ]
अनुजातो बलेः पूर्वमसुरेन्द्रो महाबलः ॥
विषवृक्षः कपित्थोऽभूत्कालिन्द्या दक्षिणे तटे ।
प्रभूतस्कन्धविटपः खगमैरनुपासितः ॥
परिवारास्तमाश्रित्य बहुभृत्यास्तदाश्रयाः ।
विषकण्टकिनो वृक्षा लता वल्ल्यश्च जज्ञिरे ॥ [ 165 ]
तस्य भार्याः सपक्षाश्च सहस्रतनयास्तथा ।
गोभूता वत्सभूताश्च चरन्ति यमुनातटे ॥
निर्गोपा वनगावस्ता दर्पयुक्ताः सवत्सकाः ।
विषवृक्षस्य च फलमुपयुञ्जन्ति निर्वृताः ॥
स च द्वादशवर्षान्ते वृक्षः पुष्पफलाकुलः । [ 170 ]
तदा भवन्ति रोगाश्च तद्गन्धरसमूर्छिताः ॥
स तु पुष्पितमात्रेण भवेत्फलयुतो द्रुमः ।
विसृजन्कटुकं गन्धं व्याधीनामाकरं मुहुः ॥
पुरा तद्वनमुत्सृज्य जीवन्ति प्राणिनो भयात् ।

---

त्यन्ति ( for नृत्यन्ति च ) D3 उद्गता , D6 T3 4 G2 4 M1-3 उद्धृता: ( for उद्यता ) G1 तत्र प्रीत्यर्थमुद्धृता ( for $^{b}$ ) — D3 T3 4 M1-3 om ( hapl ) lines 140-141 —( L 140 ) D6 भज-, T2 G2 4 आक्षि ( for अक्ष ) —( L 141 ) T1 2 G1 2 4 M4 भागश· ( for °त: ) D6 पादपादैश्च भागश. ( for $^{b}$ ) —( L 142 ) T3 नृत्यं ( for नृत्तं ) —( L 143 ) D3 T3 4 प्रभूतं ( for प्रोद्भूतं ). D6 प्रादुर्भूतमहद्भुतम् ( sic ) ( for $^{b}$ ) —( L 144 ) G2 द्विजश्रेष्ठो ( for द्विजेन्द्रस्तु ) —( L 145 ) T4 सान्द्रहास· ( for साट्ट° ) —( L 146 ) T1-3 G1 3-5 दिव्य- ( for दिव्य ). D6 वृत्तं ( for नृत्तं ) D3 दिव्यनृत्तं समारब्धं ( for $^{a}$ ) D3 दिनशेषे ; T2-4 G1 3-5 M4 दिव्यगेयं , M3 दिव्यं गानं ( for दिव्यं गेयं ) —( L 147 ) D3 6 G2 ऽभि- , T1 2 G1 3-5 M4 हि ; T3 ऽपि ( for वि ) —( L 148 ) D3 एतस्मिन् , G1 एवासुस् ( for °सस् ) D3 आसन्माहेश्वरे तथा ( for $^{b}$ ) —( L. 149 ) D6 -वृत्तान्ते ( for -नृ° ) D3 देवदेव- , T3 देवादेशी , G2 देवश्रेश , M1-3 दैवावेशी ( for दे° ) —( L 150 ) T3 तस्मिन् ( for अ° ) —( L 151 ) T3 4 शासनं समुपस्थाय ( for $^{a}$ ) D3 नत्वा , G2 शर्व- ( for सर्व- ) T3 मूर्धन्यस्यक्ष स शूलिन· ( for $^{b}$ ) —( L 152 ) D6 सु- ( for the first च ) —( L 154 ) T3 कर्मणाम् ( for °ण ) —( L 155 ) D3 वाचो , T2 G1 वाचा ( for वचो ) G2 -व्रज- ( for -वृष- ) —( L 156 ) D3 -वासिनः ( for °नाम् ) —( L 157 ) D3 सर्वे च ( for आर्तानां ). T3 समादिश्य ( for °विश्य ) —( L 158 ) D6 संभूत्वा , T1 2 G1 3-5 संभूता ( for सर्वत्र ) D6 T1 2 4 G1 3-5 M4 महासुरा , M1-3 °सुरान् ( for °सुर ) —( L 159 ) T1 G3-5 भागार्थं ( for भो° ) G2 मनुष्यलोकरक्षार्थं ( for $^{a}$ ) —( L 160 ) T4 क्षान्त. , M4 जातान् ( for जात. ) D3 काले ( for काल ) D3 G2 बलिः ( for बली ). —( L 161 ) T4 अनुज्ञातो , G2 दनो पुत्रो ( for अनुजातो ). —( L 162 ) D6 G1 वृष ( for विष- ) G5 -वृक्षे ( for वृक्षः ) D3 6 T1 2 4 G1 2 4 5 M कालिन्द्यां ( for °न्द्या ) —( L 163 ) T3 4 G M4 प्रसूत- ( for प्रभूत- ) D3 खगैरप्यनुपासित ; T3 खगमैरनुनादित ( for $^{b}$ ) —( L 164 ) D3 T4 परिवारं समाश्रित्य ( for $^{a}$ ) G4 तदाश्रिता· ( for °श्रया· ) —( L 166 ) D6 T2 G1-3 5 तु सप्तासन् ; G4 तु ता आसन् ( for सपक्षाश्च ) T1 सप्त भार्यास्तु तस्यासन् ( for $^{a}$ ) T3 4 तयो ( for तथा ) — D6 om line 167 , T4 reads it twice M4 om ( hapl ) line 167$^{b}$-171$^{a}$ —( L 168 ) D6 T G1 3-5 निर्गोपा वनगा गावो ( D6 वत्सा ) ( for $^{a}$ ) T3 4 दर्शयन्त्य ( for दर्पयुक्ता ) — For line 168, D3 subst

4** निर्गोपाश्च तथा गावः सवत्सा सर्वतो वने ।

—( L 169 ) G2 फलानि ( for फलम् ) T3 ये नराः ( for निर्वृता ) —( L 170 ) D3 ते ( for स ) D3 वृक्षा ( for वृक्ष ). T1 -समाकुलः , T3 4 G1 3-5 -लता° ( for -फला° ) —( L. 171 ) T1 2 4 G3-5 M1-3 तथा , T3 तेषां ( for तदा ). — T2 G1 om lines 172-175 —( L. 172 ) T3 -मात्रे भो

स कायगतमूर्धा वै मुसलेनावपोथितः ।
पपात दरदो भूमौ दारितार्ध इवाचलः ॥
रामेण निहते तस्मिन्दरदे राजसत्तमे ।
जरासंधस्य राज्ञस्तु रामेणासीत्समागमः ॥ [ 890 ]
महेन्द्रस्येव वृत्रेण दारुणो लोमहर्षणः ॥
गदे गृहीत्वा विक्रान्तावन्योन्यमभिधावताम् ।
कम्पयन्तौ भुवं वीरौ तावुद्यतमहागदौ ।
ददृशाते महात्मानौ गिरी सशिखराविव ॥
व्युपारमन्त युद्धानि प्रेक्ष्य तौ पुरुषर्षभौ । [ 895 ]
संरब्धाविव धावन्तौ गदायुद्धेषु विश्रुतौ ॥
तावुभौ परमाचार्यौ लोके ख्यातौ महाबलौ ।
मत्ताविव महानागावन्योन्यं समधावताम् ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
यक्षाश्चाप्सरसश्चैव समाजग्मुः सहस्रशः ॥ [ 900 ]
तद्देवयक्षगन्धर्वमहर्षिभिरलंकृतम् ।
शुशुभेऽभ्यधिकं राजन्नभो ज्योतिर्गणैरिव ॥
अभिदुद्राव रामं तु जरासंधो नराधिपः ।
सव्यं मण्डलमाश्रित्य बलदेवस्तु दक्षिणम् ॥
तावन्योन्यं प्रजह्राते गदायुद्धविशारदौ । [ 905 ]
दन्ताभ्यामिव मातङ्गौ नादयन्तौ दिशो दश ॥
गदानिपातो रामस्य शुश्रुवेऽशनिनिस्वनः ।
जरासंधस्य चरणे पर्वतस्येव दीर्यतः ॥
न स्म कम्पयते रामं जरासंधकरच्युता ।
गदा गदाभृतां श्रेष्ठं विन्ध्यं गिरिमिवानिलः ॥ [ 910 ]
रामस्य तु गदावेगं राजा स मगधेश्वरः ।
सेहे धैर्येण महता शिक्षया च व्यपोहयत् ॥
ततोऽन्तरिक्षे वागासीत्सुस्वरा लोकसाक्षिणी ।
न त्वया राम वध्योऽयमलं खेदेन मानद ॥
विहितोऽस्य मया मृत्युस्तस्मात्साधु व्युपारम । [ 915 ]
अचिरेणैव कालेन प्राणांस्त्यक्ष्यति मागधः ॥
जरासंधस्तु तच्छ्रुत्वा विमनाः समपद्यत ।
न प्राहरत्ततस्तस्मै पुनरेव हलायुधः ॥
दीर्घकालं महाराज निजघ्नुरितरेतरम् ॥
पराजिते त्वपक्रान्ते जरासंधे महीपतौ । [ 920 ]

-मस्तिष्को ( for -मूर्धा वै ) $T_1$ $G_{2\ 3}$ $M_4$ रुधिरेण प( $T_1$ °रौघप )-रिप्लुतः ( for $^b$ ) —( L 888 ) $G_{2\ 3}$ वेगाद् ( for भूमौ ) $\tilde{N}_2$ $V_3$ $T_1$ $G_{2, 3}$ $M_4$ वज्राहत ( for दारितार्ध ) — $\tilde{N}_1$ om lines 890–891 $T_1$ $G_3$ om lines 890–921 $G_2$ $M_4$ om lines 890–920 —( L 892 ) $\tilde{N}_3$ $V_1$ इव ( for अभि- ). $K_3$ Ds $D_{1\ 2}$ $T_4$ -धावत. ( for °ताम् ) $B_3$ $D_6$ अन्योन्यमभ्यधावताम्, $T_2$ $G_{1\ 5}$ °न्यं चाभ्य( $G_1$ °भि )-धावताम् ( for $^b$ ) —( L 893 ) $\tilde{N}_2$ तु च, $T_2$ महीं, $G_1$ महा- ( for भुवं ) $T_2$ $G_4$ उद्येतां; $G_5$ युध्येतां ( for उद्यत- ). $T_3$ -महारथौ ( for °गदौ ) —( L. 894 ) $D_2$ महावीरौ ( for °त्मानौ ) K $V_{1\ 3}$ $B_3$ Ds $D_{1-6}$ $T_2$ गिरीश- ( for गिरी स- ) —( L 895 ) $\tilde{N}_3$ $V_{1\ 2}$ $B_{2, 3}$ $D_{3-5}$ प्रेक्षतां, $Ds_2$ $D_1$ प्रेक्षन्तौ ( for प्रेक्ष्य तौ ) $V_3$ प्रेक्षन्तौ भरतर्षभौ, $T_2$ $G_{1\ 4\ 5}$ प्रेक्ष्य तौ पुरुषोत्तमौ ( for $^b$ ) —( L 896 ) $K_3$ $D_3$ $T_1$ $G_5$ अभि- ( for इव ) $K_4$ -युद्धेन, $V_3$ -युद्धे स्म ( for -युद्धेषु ) —( L 897 ) $\tilde{N}_1$ $D_5$ उभौ तौ ( by transp ) $G_4$ तावुभौ परमोद्योगौ ( for $^a$ ) —( L 898 ) $\tilde{N}_1$ $D_5$ गजौ युद्धे ( for महानागाव् ) $D_3$ $T_{3, 4}$ अभि- ( for सम ). $D_5$ व्याघ्राविव बलोत्कटौ ( for $^b$ ) —( L 900 ) $\tilde{N}_1$ समागताश्चाप्सरसः, $T_2$ $G_{4, 5}$ यक्षरक्षोप्सराश्चैव, $G_1$ यक्षराजाप्सरश्चैव ( for $^a$ ) —( L 901 ) $V_3$ अभिष्टुतम् ( for अलंकृतम् ) —( L 902 ) $\tilde{N}_1$ दिव्यं ( for नभो ) —( L 903 ) $\tilde{N}_2$ महीपति ( for नराधिप. ) —( L 904 ) $\tilde{N}_1$ आवृत्य ( for आश्रित्य ) —( L 905 ) $K_4$ प्रजघ्नाते, $G_1$ विजह्राते ( for प्र° ) $\tilde{N}_1$ तौ प्रजह्रतुरन्योन्यं ( for $^a$ ) —( L 907 ) $D_4$ शुशुभे ( for शुश्रुवे ) —( L 910 ) $K_{1\ 3\ 4}$ Dn $D_{1\ 2\ 5}$ $T_2$ $G_{1\ 5}$ [अ]चलम्, $K_2$ $D_3$ $T_4$ [अ]-नलः, $\tilde{N}_1$ $V_3$ [अ]चलः ( for [अ]निल ) —( L 911 ) $K_1$ $\tilde{N}_{1\ 2}$ Ds धैर्यात्स, $V_3$ स राजा ( by transp ) —( L. 912 ) $D_3$ स ह, $T_3$ स हि ( for सेहे ) $K_1$ $\tilde{N}_{2\ 3}$ $V_{2\ 3}$ $B_1$ $D_{3\ 4\ 6}$ $T_{3\ 4}$ व्यपोथयत् ( for °हयत् ) $T_2$ $G_1$ गदां तस्य तु स्तम्भयन्, $G_5$ स रामो विस्मितोऽभवत् ( for $^b$ ) — After line 912, $V_2$ reads lines 7–10 of 936*, while $D_5$ reads 936*. —( L 914 ) $K_2$ $\tilde{N}_{2\ 3}$ ( marg as above ) $V_{2\ 3}$ $B_{1\ 3}$ Ds $D_6$ मागधे ( for मानद ) —( L 915 ) $V_{1\ 3}$ साधो; $D_3$ युद्धाद् ( for साधु ). —( L 917 ) $T_2$ $G_1$ तच्छ्रुत्वा तु जरासंधो, $G_4$ एवं श्रुत्वा ततो रामो ( for $^a$ ) $T_4$ विमना प्रत्यपद्यत ( for $^b$ ) —( L 918 ) $G_5$ त्वस्मै ( for तस्मै ). — After line 918, Dn Bom Poona eds ins

101** तौ व्युपारमतां युद्धाद्वृष्णयस्ते च पार्थिवाः ।

— $\tilde{N}_1$ $D_3$ om line 919 —( L 919 ) $B_2$ $Dn_1$ $G_4$ -काले ( for कालं ) $\tilde{N}_3$ $V_{1, 2}$ B $D_{4\ 6}$ निघ्नताम्, $T_2$ निघ्नतुर् ( for

विविक्तमभवत्सैन्यं परावृत्तमहारथम् ॥
ते नृपाश्चोदितैर्नागैः स्यन्दनैस्तुरगैस्तथा ।
दुद्रुवुर्भीतमनसो व्याघ्राघ्राता मृगा इव ॥
तन्नरेन्द्रैः परित्यक्तं भग्नदर्पैर्महारथैः ।
घोरं क्रव्यादबहुलं रौद्रमायोधनं बभौ ॥ [ 925 ]
द्रवत्सु रथमुख्येषु चेदिराजो महाद्युतिः ।
स्मृत्वा यादवसंबन्धं कृष्णमेवान्ववर्तत ॥
वृतः करूपसैन्येन चेदिसैन्येन चानघ ।
संबन्धकामो गोविन्दमिदमेवाह चेदिराट् ॥
अहं पितृष्वसुर्भर्ता तव यादवनन्दन । [ 930 ]
सबलस्त्वामुपावृत्तस्त्वं हि मे दयितः प्रभो ॥
उक्तश्चैप मया राजा जरासंधोऽल्पचेतनः ।

---

निजघ्नुर्). Ñ2 V3 निजघ्नाते परस्परम्, T3 4 जघ्नतुस्तौ परस्परम् (for $^{b}$) — After line 919, D6 ins. 102** — (L. 921) K3 D2 विभ्रान्तम्, D1 निष्क्रान्तम्, G5 M4 विषण्णम् (for विविक्तम्) T2 G1 3 -रथद्विपम् (for महारथम्). — T3 G2 5 M4 G(ed) ins after line 921 D6 after line 919

102** जरासंधं जघानाशु गदया विष्णुरव्ययः ।
पुनराहत्य राजानं मुष्टिना च समाहनत् ।
तलेनाहत्य तरसा गदया स पुन पुन. ॥
विसंज्ञोऽपि जरासंधो गदामुत्सृज्य वीर्यवान् ।
उपारमत्तदा युद्धाच्चापं सशरमेव च ॥ [5]
पदातिश्चाभवद्राजा भीतस्त्वरितविक्रमः ।
अन्तर्धानं जगामाशु शत्रौ पश्यति युध्यत. ॥

[ T3 om lines 1–6. — (L 2) G(ed) आगत्य (for आहत्य) — (L 3) D6 G2 M4 सहसा (for तरसा). G(ed) मुष्टिनापि समाहत्य तरसा गदया पुन — (L 4) M4 ऽभूज् (for ऽपि). G2 विसञ्ज पतितो भूमौ जरापुत्र प्रतापवान् — (L 5) M4 युद्ध (for युद्धाच्) D6 विवनु स महारथ (for $^{b}$) — (L 6) M4 आह्वाद् (for चाभवद्) — (L 7) G(ed) ययौ (for शत्रौ) D6 T3 G2 M4 वासुदेवस्य पश्यत (for $^{b}$) ]

— G2 om lines 922–925 — (L 922) G5 M4 अश्वैः (for नागै) Ñ1 2 V3 वाजिभिस्, T2 G1 तु गजैस् (for तुरगैस्) M4 रथै प्रजवितैस्तथा (for $^{b}$) — (L 923) K2 Ds1 D4 भ्रान्त (for भीत-) K4 व्याघ्रात्रस्ता, Ñ1 व्याघ्रभीता; D2 T4 व्याघ्राद्भीता (for °घ्राता) T2 G1 4 गजा (for मृगा). D3 व्याघ्रभीतमिव त्वरन् (for $^{b}$) — T3 om lines 924–925 — (L 924) G1 छिन्न (for भग्न-) — (L 925) Ñ1 क्रव्यादघोरबहुलं, M4 निवृत्तरङ्गप्रतिम (for $^{a}$) Ñ1 रामायायोधनं गतौ (for $^{b}$) — After line 925, D6 T2, 3 G1 2 4 5 M4 G(ed.) ins

103** पाञ्चजन्यं तदा विष्णुर्दध्मौ शत्रुभयंकरम् ॥
देवदेवेन वीरेण चक्रिणा शार्ङ्गधन्विना ।
आध्मातोऽथ महाशङ्खः पूरयामास रोदसी ॥
ततो देवा सगन्धर्वा विद्याधरमहोरगाः ।
तेन शब्देन सतुष्टा सिंहनादं प्रचक्रिरे ॥ [ 5 ]
तेन सर्वे नृपतयो भीता राजन्दिशो गता ।
पुनश्च भगवान्विष्णु शङ्खराजं समाश्वसत् ॥
ततो युद्धं महाविष्णुर्जित्वा यदुकुलोद्वह· ।
गोमन्तेऽथ महाशैले किंचित्काल विशश्रमे ।
पूर्वजेन तदा कृष्ण श्रान्तेन युधि भारत ॥ [ 10 ]

Colophon

[ (L 1) T3 दध्मौ शङ्खमनुत्तमम् (for $^{b}$) — (L 3) T2 G1 आदध्मुर् (for आध्मातो) — (L 4) G4 सिद्धाश्च परमर्षयः (for $^{b}$) — (L 6) G(ed) भीताः कृष्ण च दुद्रुवु (for $^{b}$) — T3 om line 7 — (L 7) D6 -राव, T2 G1 -नादं (for -राज) G2 5 M4 समास्वनत् (for °श्वसत्). — (L. 8) G(ed) एव जित्वा (for ततो युद्ध) T3 G2 M4 ततो विष्णुर्महायुद्धे (for $^{a}$). — (L 9) G(ed) किंचिद्विश्रम्य तावुभौ (for $^{b}$) — (L 10) T2 G1 4 सहजातेन भारत (for $^{b}$). — Colophon om in D6 T2 G1 2 4 5 — *Adhy. name:* M4 जरासधपलायनम् — *Adhy no* T3 100, M2 102.]

— Before line 926, T1 3 G2 3 M1–3 ins वैशंपायनः. — (L 926) G2 3 M राज- (for रथ-) T3 G2 M4 महीपति (for महाद्युति) — (L 927) G2 श्रुत्वा (for स्मृत्वा). K3 [आ]ह चेदिराट्, G2 3 5 M [अ]भ्यवर्तत (for [अ]न्व°). — T1 G3 M1–3 ins after line 927. T2 G1, 5 cont. after 103**

104** जरासंधे गते राज्ञि कृष्णाद्भीते रणोत्सवात् ।
[ T2 G1 5 राजन् (for राज्ञि) ]

— K3 om lines 928–929. G5 om line 928. — (L. 928) K2 कारूषसैन्येन महता (hypermetric) (for $^{a}$). — (L 929) Ñ1 सबन्धकामुकः कृष्णम्; T1 G2 3 5 M2, 4 °मुकुटं कृष्णस्, M1 3 °मुकुटः श्रीमान् (for $^{a}$) K1 V1 B D3, 6 एवमाह स (K1 च), Ñ1 इदमाहाथ, T1 G2 3, 5 M4 इदं प्रोवाच; T2 4 G1 4 इदमाह स (for इदमेवाह) M1, 3 कृष्णं वचनमब्रवित् (for $^{b}$) — (L 931) Ñ1 V3 उपायातस् (for °वृत्तस्) G3 हृदयं (for दयित). — After line 931, T1, 2 G M ins.

105** दमघोषोऽस्मि भद्रं ते सहायोऽहमनुव्रत ।
[ T2 G1 असौ क्षेममनुव्रत (for $^{b}$).]

— (L. 933) Ñ3 V1 T1, 3 G2, 4, 5 M -मूर्धनि; V3 D3

कृष्णाद्विरम दुर्बुद्धे विग्रहाद्रणकर्मणि ॥
तदेष स परित्यक्तो मम वाक्यस्य दूषकः ।
भग्नो युद्धे जरासंधस्त्वया द्रवति सानुगः ॥ [ 935 ]
निर्वैरो नैष संयाति स्वपुरं पृथिवीपतिः ।
त्वय्येव भूयोऽप्यपरं दर्शयिष्यति किल्बिषम् ॥
तदिमां संत्यजाशु त्वं मही हतनराकुलाम् ।
क्रव्यादगणसकीर्णां सेवितव्याममानुषैः ॥
करवीरपुरं कृष्ण गच्छामः सबलानुगाः । [ 940 ]
सृगालं वासुदेवं वै द्रक्ष्यामस्तत्र पार्थिवम् ॥
इमौ रथवरोदग्रौ युवयोः कारितौ मया ।
योजितौ शीघ्रतुरगैः खड्गचक्राक्षकूबरौ ॥
शीघ्रमारुह भद्रं ते बलदेवसहायवान् ।
त्वरामः करवीरस्थं द्रष्टुं तं वसुधाधिपम् ॥ [ 945 ]
पितृष्वसुः पतेर्वाक्यं श्रुत्वा चेदिपतेस्तदा ।
वाक्यं हृष्टमनाः कृष्णो जगाद जगतो गुरुः ॥
अहो स्वयुद्धाभिरतौ देशकालजितौ त्वया ।
बान्धवप्रतिरूपेण संसिक्तौ वचनाम्बुना ॥
देशकालविशिष्टस्य हितस्य मधुरस्य च । [ 950 ]
वाक्यस्य दुर्लभा लोके वक्तारश्चेदिसत्तम ॥
चेदिनाथ सनाथौ स्वः संवृत्तौ तव दर्शनात् ।

---

-कर्मण. ( for °णि ) — ( L 934 ) $D_5$ $T_1$ तदैव ( for तदेष ) $K_{2-4}$ $\tilde{N}_{2\ 3}$ V B Dn Ds $D_{1-4\ 6}$ $T_{2-4}$ $G_{1\ 4\ 5}$ ऽद्य ( for स ) — ( L 935 ) $K_1$ $V_1$ $B_3$ $D_3$ युधि , $G_{2\ 3}$ M मृधे ( for युद्धे ) $G_3$ M संप्रति ( for द्रवति ). — After line 936, $V_2$ $B_2$ ins

106** विभोर्वैरविनिर्बन्धे विग्रहे रणमूर्धनि ।

— After line 937, $D_6$ $T_3$ $G_{2\ 3\ 5}$ M ins

107** अतीव रुष्टो वार्ष्णेय गत सबलवाहनः ।

[ $D_6$ दुष्टो ( for रुष्टो ). $G_5$ सह ( for -बल- ) ]

— ( L 938 ) $D_3$ -नरद्विपाम् ( for -नराकुलाम् ) — ( L. 939 ) $D_5$ $G_5$ -संपूर्णा , $M_{1-3}$ संपन्ना ( for सकीर्णां ) $T_2$ $G_1$ क्रव्यादाननसंकीर्णा ( for [a] ) $D_6$ $T_1$ $G_{1-3\ 5}$ M सेविता व्यालमानुषैः ( for [b] ) — After line 939, $T_{1\ 2}$ G M ins

108** पिशाचाश्चात्र दृश्यन्ते राक्षसा पिशिताशना ।
डाकिन्योऽत्र प्रनृत्यन्ति पीत्वा शोणितसंप्लवम् ॥

[ ( L 2 ) $G_2$ क्रीडन्ति ( for डाकिन्यो ) ]

— ( L. 940 ) $K_2$ $\tilde{N}_3$ ( marg as above ) $B_3$ वीर ( for कृष्ण ) — ( L 941 ) $\tilde{N}_{1,\ 2}$ $V_3$ $T_1$ $G_{2\ 3}$ $M_4$ तत्र द्रक्ष्याम पार्थिवम् ( for [b] ) — ( L 942 ) $V_3$ $D_6$ वरावग्र्यौ , $T_1$ $G_{2\ 3,\ 5}$ M -वरौ कृष्ण ( for -वरोदग्रौ ) $\tilde{N}_1$ $D_{1,\ 2\ 5}$ कारणे , $V_3$ कल्पितौ ( for कारितौ ). — ( L 943 ) $K_3$ Ñ $V_{1\ 3}$ $B_{2\ 3}$ $D_{4-6}$ $T_{1,\ 2}$ $G_{1\ 4,\ 5}$ -तुरगौ ( for °गै. ). $K_{1\ 4}$ $D_2$ सज्ज- ; $\tilde{N}_{2\ 3}$ $V_1$ युक्त- , $V_2$ स्वक्ष- , $V_3$ $D_5$ स्वर्ण- , $D_6$ $T_2$ $G_{1\ 4}$ सम- ( for खड्ग- ) $D_3$ सज्जसक्ताक्षकूबरौ , $T_1$ $G_{2\ 3\ 5}$ M सुचक्रौ स्वक्षकूबरौ ( for [b] ) — ( L 944 ) $T_2$ $G_1$ आरुह्य , $G_{2\ 5}$ M आरोह ( for आरुह ) $T_1$ $G_{2\ 3}$ M रौहिणेय- ( for बलदेव- ) $\tilde{N}_{1\ 2}$ $V_3$ रामेण सह केशव ( for [b] ). — ( L 945 ) $K_{1\ 4}$ $D_{2\ 3}$ प्रयाम ; $\tilde{N}_1$ $T_2$ $G_1$ त्वरया , $D_4$ व्रजामः ( for त्वरामः ). $T_1$ $G_{2,\ 3,\ 5}$ M तं द्रष्टुं ( by transp ) — After line 945, $V_3$ ins. :

109** यादवं स्वबलोदग्रं महाकाया महाबला ।
तिष्ठन्तु नृपशार्दूला सुप्रमत्ता महाबला. ॥
समग्रहययुक्तेन स्यन्दनेन विराजता ।
चक्रोद्यतकर शौरिर्गदापाणिरदृश्यत ॥
आस्तामतर्जिता सर्वे जरासंधवशानुगाः । [ 5 ]
एकस्य सर्वराजान कृतवैरा जनाधिपा ॥
तेऽस्माक दुष्टमनस शङ्कितानि मनांसि न ॥
मधुरां च स्थलीप्रायां प्रहरेयुर्नराधिपा ॥
तद्गच्छ रामसहित सहायै सह संगत· ।
रक्षेमां मथुरा वीर यादवानां कुलारणीम् ॥ [ 10 ]

— Before line 946, some Mss ins वैशंपायनः. — ( L. 946 ) K $\tilde{N}_{2\ 3}$ V B Dn Ds $D_{2\ 4-6}$ $T_{3,\ 4}$ $G_4$ $M_4$ पितृष्वसृ- ( for °सु· ) $\tilde{N}_1$ तदा वाक्यं , $T_1$ $G_5$ पत्युरेतत् , $M_{1-3}$ पतेरेतत् ( for पतेर्वाक्यं ) $G_{2\ 3}$ पितृष्वसृपतेरेतत् ( for [a] ). — ( L 947 ) $\tilde{N}_1$ $T_1$ $G_{3\ 5}$ $M_2$ हृष्टतर , $M_1$ प्रियतरं ( for हृष्टमना ) $G_2$ वाग्मी हृष्टतर. कृष्णो , $M_3$ वाक्यं प्रियकरं विष्णो ( for [a] ) $K_2$ $\tilde{N}_1$ जग्राह , $D_1$ जगदे ( for जगाद ). $M_{1-3}$ जगतां ( for °तो ) $D_3$ जगाम जगतां गुरु ( for [b] ) — ( L 948 ) $K_3$ $V_3$ Dn Ds $T_{3\ 4}$ अहो युद्धाभिसंतप्तौ , $T_1$ $G_3$ $M_4$ अहोऽसियुद्धाभिरतौ , $M_1$ आवामयुद्धेन रणे ; $M_3$ अहो सुयुद्धावसरे ( for [a] ) K $\tilde{N}_{2\ 3}$ V B D $T_{2-4}$ $G_{1\ 4}$ देशकालोचितौ ( $D_1$ $T_2$ $G_{1\ 4}$ °तं ) त्वया , $T_1$ $G_{2\ 3}$ $M_4$ °लौ जितौ त्वया ; $M_{1-3}$ °ले जि( $M_3$ स्थि )तौ त्वया ( for [b] ). — ( L 949 ) $K_2$ $T_2$ $G_5$ -प्रीति- ( for -प्रति- ) $\tilde{N}_1$ पूर्णेन ( for -रूपेण ) $G_2$ संसिक्तौ चन्दनाम्बुना ( for [b] ) — ( L 950 ) $T_1$ $G_{2,\ 3\ 5}$ $M_{2\ 4}$ -निविष्टस्य ( for -विशि° ) $Ds_1$ देशस्य ( for हितस्य ) — ( L 951 ) $M_3$ [अ]सुलभा ( for दुर्लभा ) $T_1$ $G_{2\ 3\ 5}$ M -पुंगव ( for -सत्तम ) $\tilde{N}_1$ वक्तारश्चैव दंशिता· ( for [b] ) — ( L 952 ) $K_{1\ 2}$ $\tilde{N}_{2\ 3}$ V $B_{1\ 3}$ $D_{3\ 5\ 6}$ $T_{2\ 3}$ $G_4$ चेदिराज , $M_{1-3}$ दमघोष ( for चेदिनाथ ) $G_4$ om ( hapl ) lines 952[b]–955[a]. $\tilde{N}_2$ शासनात् ( for दर्शनात् ) — ( L 953 ) $K_2$ $\tilde{N}_{1\ 3}$ $V_1$ $B_3$

नावयोः किंचिदप्राप्यं ययोस्त्वं बन्धुरीदृशः ॥
जरासंधस्य निधनं ये चान्ये तत्समा नृपाः ।
पर्याप्तौ त्वत्सनाथौ स्वः कर्तुं चेदिकुलोद्वह ॥ [ 955 ]
यदूनां प्रथमो बन्धुस्त्वं हि सर्वमहीक्षिताम् ।
अतःप्रभृति संग्रामान्द्रक्ष्यसे चेदिसत्तम ॥
चक्रमौसलमित्येवं संग्रामं रणवृत्तयः ।
कथयिष्यन्ति लोकेऽस्मिन्ये धरिष्यन्ति पार्थिवाः ॥
तद्गच्छाम महावीर करवीरं पुरोत्तमम् । [ 960 ]
त्वयोद्दिष्टेन मार्गेण चेदिराज शिवाय वै ॥
ते स्यन्दनगताः सर्वे पवनोत्पातिभिर्हयैः ।
भेजिरे दीर्घमध्वानं मूर्तिमन्त इवाग्नयः ॥
ते त्रिरात्रोषिताः प्राप्ताः करवीरं पुरोत्तमम् ।
शिवाय च शिवे देशे निविष्टास्त्रिदशोपमाः ॥ [ 965 ]

Colophon.

वैशंपायन उवाच ।
तानागतान्विदित्वाथ सृगालो युद्धदुर्मदः ।
पुरस्य धर्षणं मत्वा निर्जगामेन्द्रविक्रमः ॥
रथेनादित्यवर्णेन भास्वता रणगामिना ।
आयुधप्रतिपूर्णेन नेमिनिर्घोषहासिना ॥
मन्दराचलकल्पेन चित्राभरणभूषिणा । [ 970 ]

---

D6 न नौ ( Ñ1 वां ) किंचिदसंप्राप्यं , T1 G2 3 5 आवयोः किं न संप्राप्यं , T2 आवयोः किंस्विदप्राप्यं ( for ᵃ ) K2 Ñ3 V1 D6 यत्र , M1-3 यत्रौ ( for ययोस् ) —( L 954 ) M1-3 अन्येषां च महीभृताम् ( for ᵇ ) —( L 955 ) T1 G2 3 M पर्याप्तौ ( M1-3 °प्तं ) निधनं तेषां ( for ᵃ ) — After line 955, T1 3 G2 3 5 M ins

110** युद्धमप्रतिमं विद्धि प्रवृत्तं नौ रणे नृपैः ।
मया तेन महाराज जरासंधेन वै तदा ।
संग्रामः सुमहान्वृत्तः प्रत्यक्षं तव चेदिप ॥

[ T3 om line 1 —( L 1 ) G2, 3 परै ( for नृपै ) —( L 2 ) G2 3 M धीमता ( for वै तदा ) ]

— M1-3 om line 956 —( L 956 ) Ñ1 T1 G2 3 M4 युद्धाना प्रथमो बिन्दुर् ( Ñ1 विप्र ); D3 यदूनां प्रथमं चक्षुस् ( for ᵃ ) D5 त्वं हि लोके , T1 G2 3 M4 अयं लोके ( for त्वं हि सर्व- ) —( L 957 ) K1 2 D3 G2 4 M1-3 संग्रामं ( for °मान् ) B2 T1 G2 3 5 M -पुंगव ( for -सत्तम ) —( L 958 ) K2 3 B1 T2-4 G1, 2 M3 चक्रं , Ñ2 3 V1 3 B2 चाक्र- , V2 T1 G3 चाक्रं ( for चक्र- ) G4 चक्रमौसलसंग्रामं ( for ᵃ ) G4 दृश्यन्ते ( for संग्रामं ). —( L 959 ) K3 कथयन्ति स्म केऽप्यस्मिन् ( for ᵃ ) D5 भविष्यन्ति ; M चरि° ( for धरि° ) Ñ1 भूमिपाः ( for पार्थिवा ) V3 योधयिष्यन्ति पार्थिवा ( for ᵇ ). — After line 959, K Ñ2 3 V B D T2-4 G1 4 5 ins

111** राज्ञां पराजयं युद्धे गोमन्तेऽचलसत्तमे ।
श्रवणाद्धारणाच्चास्य स्वर्गलोकं व्रजन्ति वै ॥

—( L 960 ) K Ñ2 3 V B D T2-4 G2 4 5 महाराज , T1 M2 °भाग , M1 3 °बाहो ( for °वीर ) D2 करवीरं सुरोत्तम ( for ᵇ ) —( L 961 ) M1 3 दिष्टेन ( for [उ]द्दिष्टेन ) K1 D3 जयाय ( for शिवाय ) — Before line 962, G2 ins. वैशंपायनः . —( L 963 ) G2 3 M4 [अ]नलाः ( for [अ]ग्नय ) —( L 964 ) T1 G2, 3 M द्वि- ( for त्रि- ). Ñ1 सर्वे ( for प्राप्ता ) — After line 965, G2 ins 112**

COLOPHON — *Mention of the Epic* K3 — *Mention of Khila* K3 4 Ñ3 V B D5 D1 2 — *Sub-parvan* · T3 आश्चर्यपर्व — *Adhy name* K Ñ1 3 V1, 3 B Dn D3 D2-6 करवीरपुराभिगमनम् , Ñ2 करवीरपुरम् , V2 D1 जरासंधपराजये करवीरपुराभिगमनम् ; G2 M2, 4 करवीरप्रवेश · — *Adhy no* K3 97 , Ñ3 V1 B2 100 , V2 G1 101 ; V3 T2 G4 99 , Dn Ds2 98 , D3 T3 105 , D4 97 , T1 G2 3 M 103 , T4 90 , G5 102 — *Śloka no.* Dn D4 98 , Ds2 104 , D3 94 , T2 154 ; G1 129.

T3 om the ref D6 T1-3 G1 3-5 M ins after the ref.: G2 after line 965

112** प्रातः प्रविश्य तद्वारि द्वाःस्थं वचनमब्रवीत् ।
केशवोऽथ महाबाहुर्वेदयास्मान्नराधिपे ॥
वसुदेवसुतौ वीरौ चेदिराजेन संगतौ ।
द्वाःस्थोऽप्यथ तथेत्युक्त्वा तस्मै सर्वं न्यवेदयत् ॥

[ ( L 1 ) M3 तत ( for प्रात ) —( L 2 ) T1 G3 M निवेदय नराधिपम् ( for ᵇ ) —( L. 3 ) D6 T2 M1-3 चेदिना सह सगतौ ( for ᵇ ). —( L 4 ) T3 G1 2 4. 5 M4 [उ]क्तौ ( for [उ]क्त्वा ). ]

—( L 966 ) T1 तदा श्रुत्वा , G2 विजिज्ञाय ( for विदित्वाथ ) —( L 967 ) K1 T2 मर्षणं ( for ध° ) D1 कृत्वा ; D5 श्रुत्वा ( for मत्वा ). —( L 968 ) Ñ1 -शोभिना ( for -गामिना ) T1-3 G1 3-5 M भास्वरेणाशुगामिना ( for ᵇ ) — K3 om. ( hapl ) lines 969-973 T2 G1, 4 om. ( ? hapl. ) line 969. —( L 969 ) T1 3 G3 5 M आयुधोत्तमपूर्णेन ( for ᵃ ). D5 -कारिणा , T3 -शोभिना , G2 -भासिना ( for -हासिना ). T1 G3 5 M नेमिघोषेण भासिना ( G3 M4 शोभिना , M2 भास्वता ) ( for ᵇ ). —( L 970 ) K4 शोभिना ( for भूषिणा ). — K2 om ( hapl. ) lines 971-975. D1 om. ( hapl ) line 971. —( L. 971 ) Ñ1 अनन्त- ; Dn Ds2 G2 अक्षयैः ( for °दय- ).

अक्षय्यसायकैस्तूणैः पूर्णेनार्णवघोषिणा ॥
हर्यश्वेनाशुगतिनासक्तेन शिखरेष्वपि ।
हेमकूबरगर्भेण दृढाक्षेणाभिशोभिना ॥
वन्धुरेण सुदीप्तेन पतत्रिवरगामिना ।
खे गतेनेव शक्रस्य हर्यश्वेन रथाद्रिणा ॥ [ 975 ]
सावित्रे नियमे पूर्णे यं ददौ सविता स्वयम् ।
आदित्यरश्मिभिरिव रश्मिभिर्यो निगृह्यते ॥
तेन स्यन्दनमुख्येन द्विषत्स्यन्दनघातिना ।
स सृगालोऽभ्ययात्कृष्णं शलभः पावकं यथा ॥
चापपाणिः सुतीक्ष्णेषुः कवची हेममालिकः । [ 980 ]
सितप्रावरणोष्णीषः पावकाकारलोचनः ॥
मुहुर्मुहुर्ज्याचपलं विक्षिपन्दुःसहं धनुः ।
निर्वमन्रोषजं वायुं सानलज्वालमण्डलम् ॥
भाभिर्भूषणपङ्क्तीनां दीप्तो मेरुरिवाचलः ।
रथस्थ इव शैलेन्द्रः सृगालः प्रत्यदृश्यत ॥ [ 985 ]
तस्यारसितशब्देन रथनेमिस्वनेन च ।
गुरुत्वेन च नाम्यन्ती चचालोर्वी यथा पुरा ॥
तमापतन्तं श्रीमन्तं मूर्तिमन्तमिवानलम् ।
सृगालं लोकपालाभं दृष्ट्वा कृष्णो न विव्यथे ॥
सृगालश्चापि संरब्धः तं रथं साधु चोदितम् । [ 990 ]
समीपे वासुदेवस्य युयुत्सुः प्रत्यदृश्यत ॥
वासुदेवं स्थितं दृष्ट्वा सृगालो युद्धलालसः ।
अभिदुद्राव वेगेन मेघराशिरिवाचलम् ।
वासुदेवः स्मितं कृत्वा प्रतियुद्धाय तस्थिवान् ॥
तद्युद्धमभवत्ताभ्यां समरे घोरदर्शनम् । [ 995 ]
उभाभ्यामिव मत्ताभ्यां कुञ्जराभ्यां यथा वने ॥

---

Ñ1 2 3 (marg) V1 D6 तीक्ष्णैः, T1 2 G1 3-5 M3 4 पूर्णैः (for तूणैः) —T2 G1 4 M1, 3 om line 972 —(L 973) T1 -युक्तेन (for -गर्भेण) K1 -शालिना, T2 G1 -भोगिना, T4 -लोभिना (for -शो°) —(L 974) K3 V2 Dn1 D3 6 T2 स-, V3 त्रि- (for सु-) V1 D1 सुवर्णरेणुदीप्तेन (for ᵃ) D2 पथ (for वर-) V1 B D6 G2 -रंहसा, T2 G1 4 -वाजिना (for -गामिना) —(L 975) M1-3 स्पर्धमानेन तं रथम् (for ᵇ) —(L 976) Ñ1 यो दत्तः; Ñ2 V3 B1 प्रददौ, Ñ3 (marg) संददौ, V1 स ददौ (for यं ददौ). K2 रथम् (for स्वयम्) T1 G5 M1-3 यो दत्तो रविणा स्वयम् (for ᵇ) —(L 977) Ñ1 आदित्योऽस्मीति रश्मीभी (for ᵃ). D5 विराजते (for निगृह्यते). —(L 978) D3 -रूपिणा, T1 -भूतिना (for -भातिना). —(L 979) Ñ1 पावक शलभं यथा (for ᵇ). —(L 980) G3 M4 सुयुक्तेषु (for सुतीक्ष्णेषु) Ñ1 -मालिवान्, Ds2 T4 °नः, D1 °ना, D3 °कम्, T1 G3 5 M -भूषण (for मालिकः) —After line 980, D6 T1-3 G1 3-5 M ins

113** रथी खड्गी शरी चापि निषङ्गी कुण्डली बली ।
गदी हारी तनुत्राणी करत्राणी किरीटवान् ॥
[(L 2) T1 तलत्राणी (for कर°)]

—(981) M1-3 सातपावरणोऽर्काभ (for ᵃ). K1 (*sup lin*) B3 पावकारक्त(B3 °नत)लोचन (for ᵇ) —(L 982) K3 4 D4 5 -वलयं, T1 2 G M -प्रवरं (for -चपलं) V1 °चिक्षेप, T4 विक्षतं (for विक्षिपन्) T2 G4 M1 3 दुःसहं विक्षिपन्धनु (for ᵇ) —(L. 983) K2 नाशयन् (for रोषजं) K1 वारि (for वायुं) Ñ3 V1 -कुण्डलम् (for -म°) —(L. 984) Ñ1 अद्य (for भाभिर्). G5 -भक्तीनां (for -पङ्क्तीनां) —(L 986) T4 रोषित (for [आ]रसित-) Ñ1 2 V3 -नादेन (for -शब्देन) D1 6 (marg) T1 2 G1 3-5 M तस्योत्कृष्टनिनादेन, D3 रथस्य तस्य शब्देन (for ᵃ) —(L 987) V1 D1 3 लास्यन्ती (for नाम्यन्ती) T1 G2 3 M गौरवेण च ताम्यन्ती (for ᵃ) K3 Dn Ds T2 G1 भयातुरा, T3 4 G5 M यथातुरा, G4 ससागरा (for यथा पुरा). T1 G3 M1-3 ननादोर्वी यथातुरा —(L 988) K1 2 Ñ2 3 V B D2 (*sup lin*) 3-6 T4 G2 इवाचलम्, Ñ1 यथाचलम्, D6 (marg.) T1-3 G1 3-5 M इवान्तकम् (for °नलम्). —(L 989) G2 -पालं च (for -पालाभं) Ñ1 न विव्यथत केशवः, T1 G3 M विव्यथे न तु केशवः, G2 स दृष्ट्वा च न विव्यथे (for ᵇ) —After line 989, T1-3 G1, 3-5 M ins

114** चेदिराजबलौ चापि किंचिद्विव्यथतुस्तदा ।

—(L 990) V1 शृगालश्चाशु संक्रुद्ध (for ᵃ). K Ñ2, 3 V B D T2-4 G1 2 4 5 स्यन्दनेनाशुगामिना (for ᵇ) —(L 991) G3 M युयुत्सु सम(M2 प्रत्य)चोदयत् (for ᵇ). —(L 992) T1 2 G1 M1-3 -दुर्मद (for -लालस) —Ñ1 om line 993 —(L 993) Ñ2 V3 [अ]निलः (for [अ]चलम्) —(L 994) M3 om lines 994ᵇ-996ᵇ Ñ1 प्रिय- (for प्रति-) M4 वीर्यवान् (for तस्थि°) Ñ2 V3 प्रतियोद्धुमुपस्थितः (for ᵇ) —After line 994, V3 B1 ins

115** स तस्य विस्मयं दृष्ट्वा प्रतियोद्धुमुपस्थित ।

—(L 995) T1 3 G3 M2 उभाभ्यां वासुदेवाभ्यां; M1 तयोस्तद्युद्धमभवत् (for ᵃ) D3 om (hapl.) lines 995ᵇ-996ᵃ. G4 reads 995ᵇ-996ᵃ (transposed) twice. T1, 3

सृगालस्त्वब्रवीत्कृष्णं समरे समुपस्थितम् ।
युद्धरागेण तेजस्वी मोहाचलितगौरवः ॥
गोमन्ते युद्धमार्गेण यत्त्वया कृष्ण चेष्टितम् ।
अनायकानां मूढानां नृपाणां दुर्बले बले ॥ [1000]
स मे सुविदितः कृष्ण क्षत्रियाणां पराजयः ।
कृपणानामसत्त्वानामबुधानां रणोत्सवे ॥

---

$G_3$ $M_{2\ 4}$ तद्युद्धमभवत्तदा (for $^{b}$) — (L 996) $M_2$ महा- (for यथा) $M_1$ उभयो साधुदृष्टत्वाद्गजयोरिव कानने — After line 996, $D_6$ $T_{1-3}$ $G_{1\ 3-5}$ M ins

116** ततः शरसहस्रेण वासुदेवो जघान ह ॥
वासुदेवं महात्मानं विव्याध पुनरष्टभि ।
वासुदेवस्त्रिसप्तत्या सृगालं युद्धदुर्मदम् ॥
वृष्णिवीरोऽथ राजेन्द्र वासुदेवं महाद्युतिम् ।
सृगालाभं सृगालं च जघान नवभि शरै ॥ [5]
ततः पञ्चशता विष्णु सृगालोऽथ जघान ह ।
सृगालं पञ्चविंशत्या वासुदेव समाहनत् ॥
सृगालो वासुदेवोऽथ वासुदेवं समाहनत् ।
बाणै पञ्चाशता राजन्बलदेवस्य पश्यत ॥
वासुदेवौ महाराज विश्रुतौ च धनुर्धरौ । [10]
युयुधाते महावीरौ परस्परवधैषिणौ ॥
वायव्यं वारुण चैव सृगालोऽथ समाददे ।
आग्नेयमथ पार्जन्यं वासुदेव समाददे ॥
तैरस्त्रैस्तौ तु राजेन्द्र वासुदेवौ रणोत्सुकौ ।
युयुधाते रुषा युक्तौ संदष्टोष्ठौ तदा रणे ॥ [15]
अस्त्राणि तानि राजेन्द्र समाहत्य परस्परम् ।
भूमिमापेदिरे तानि निष्फलानि ततोऽभवन् ॥
माहेश्वरं सृगालस्तु रौद्र चैव जनार्दन ।
गोमायुरथ याम्यं तु कालमस्त्रं जनार्दन ॥
ते शस्त्रे निष्फले राजन्भूमिं जग्मतुरातुरे । [20]
क्षुरप्रेण सृगालस्तु छेत्तुमैच्छत्तु शार्ङ्गिणः ।
ज्यां जातरोषो धनुषा तस्य देवस्य पश्यत ॥
तज्ज्ञात्वा भगवान्विष्णुर्धनुश्चिच्छेद सायकै ।
विसृज्य सशरं चापं पुनरन्यत्समाददे ॥
तच्चापि भगवान्विष्णुश्चिच्छेद च ननाद च । [25]
पुनरन्यत्समादत्ते चापं भारसहं नृप ॥
तेन चापेन गोविन्दं जघान निशितैः शरैः ।
नवत्या च पुनर्विष्णुर्नवभिश्च पुनर्नृपः ॥
अशीत्या च पुनर्देवं समाजघ्ने पर शतै ।
शराणामथ लक्षाणां समाजघ्ने हरिं रुषा ॥ [30]
तत क्रुद्धोऽथ भगवांश्चिच्छेद धनुरुत्तमम् ।
सारथिं चास्य हत्वा तु जघान प्राष्टिसारथिम् ॥
सिंहनादं ततश्चक्रे विष्णुरूर्जितविक्रमः ॥
तत सृगालो विक्रान्तश्चाप भारसहं महत् ।
आदाय निशितं बाणं सज्जं कृत्वा धनुस्तदा । [35]

[(L 1) $M_3$ तयो (for तत). $G_5$ वासुदेवं (for °वो) — (L 3) $T_3$ वासुदेव, $M_1$ पुनश्चैव (for वासुदेवस्). $T_1$ $G_3$ M सृगालो युद्धदुर्मद (for $^{b}$) — $G_4$ om lines 4–5 — (L. 4) $T_3$ om lines $4^{b}$–$5^{a}$ $D_6$ महामति, $G_5$ °द्युति (for °द्युतिम्). $T_2$ $G_1$ वासुदेवो महामति (for $^{b}$) — (L 5) $D_6$ सृगालं वीर-प्रवर, $T_2$ $G_1$ °ल कालवद्वीरो (for $^{a}$) — (L 6) $T_2$ $G_1$ पञ्चशरैर् (for पञ्चशता) $T_3$ नि- (for ऽथ) — (L 7) $G_3$ जघान ह (for समाहनत्) — $T_2$ $G_{1\ 4}$ om (hapl) line 8 — (L 8) $T_3$ $M_4$ जघान ह (for समाहनत्) — (L 11) $T_1$ $G_3$ M महाराज (for °वीरौ) — (L 12) $T_{1\ 3}$ $G_3$ $M_4$ ऽस्त्र (for ऽथ) — (L 14) $T_3$ $M_4$ तदा देवौ (for तु राजेन्द्र) $T_2$ $G_1$ रणोत्सवौ (for °त्सुकौ) — (L. 15) $D_6$ $T_2$ $G_{1\ 4}$ युध्येते रोषसयुक्तौ (for $^{a}$) $T_{2\ 3}$ संदष्टोष्ठपुटौ च तौ ($T_3$ तदा), $G_1$ °ष्टौष्ठपुटच्छदौ (for $^{b}$). — (L. 20) $T_1$ $G_3$ $M_{1-3}$ अस्त्रे (for शस्त्रे) $T_{1\ 3}$ $M_{1-3}$ उर्वीं जग्मतुरातुरौ ($T_3$ °र्हवे) (for $^{b}$). — (L 21) $D_6$ $T_2$ इच्छति (for ऐच्छत्तु) $T_1$ छेत्तुमैच्छज्जनार्दनम्; $M_{1-3}$ °च्च शार्ङ्गिणम् (for $^{b}$) — (L 22) $D_6$ $T_2$ $G_{1\ 4}$ ज्यामेव तु स चापस्य (for $^{a}$) — (L 25) $T_1$ $M_{1\ 3}$ देवश् (for विष्णुश्) — (L 26) $T_1$ $G_3$ $M_{1-3}$ समाधत्त (for °दत्ते) $T_2$ $G_{1\ 4.\ 5}$ महत्; $T_3$ $M_4$ नृप. (for नृप) $D_6$ चापं भरतसत्तम (for $^{b}$) — (L 30) $M_{2.\ 4}$ लक्षेण (for लक्षाणा) $D_6$ हरिं तदा, $T_2$ $G_{1.\ 4}$ समन्ततः (for हरिं रुषा) — (L 31) $T_1$ $G_3$ $M_{1-3}$ बिभेद (for चिच्छेद) — (L 32) $D_6$ $T_2$ $G_{1\ 4}$ सारथिं चापि तं हत्वा (for $^{a}$) $D_6$ जघानाश्वान्स तस्य च, $T_{1\ 3}$ $G_3$ $M_4$ °न तुरगास्तथा (for $^{b}$). — (L 34) $T_1$ $G_3$ M खड्ग च निशितं तथा (for $^{b}$).]
— (L 997) $D_1$ समभि-; $G_3$ समव- (for समुप-). $T_2$ $G_1$ -स्थिते (for -स्थितम्) $M_{1-3}$ समरे समरैषिणा (for $^{b}$) — (L. 998) $\tilde{N}_1$ $D_2$ (*sup lin.*) मदाच् (for मोहाच्) $T_1$ $G_5$ -विक्रमः (for -गौरव). — After line 998, $T_{1\ 2}$ $G_{1.\ 3\ 4}$ $M_{1-3}$ ins..

117** रुधिराक्षो महारौद्र संदष्टौष्ठपुटस्तथा ।

[$G_3$ रुधिराक्तो (for °क्षो). $T_2$ $G_{1.\ 4}$ महावीर्यः (for °रौद्रः).]
— Before line 999, $\tilde{N}_2$ $V_{1.\ 3}$ ins. शृगाल उवाच. — (L 999) $T_1$ $G_{3-5}$ रुरु- (for युद्ध-). $K_2$ $V_1$ $B_{1.\ 3}$ $D_{4\ 6}$ $G_2$ -मार्गे वै (for -मार्गेण) $K_1$ न चाहमुक्तमार्गेण; $M_{1-3}$ गोमन्ते रुरुमार्गे च (for $^{a}$) $T_4$ युद्ध- (for कृष्ण). $T_2$ $G_{1.\ 4}$ चोदितम् (for चेष्टि°). $G_3$ त्वया कृष्ण विचेष्टितम् (for $^{b}$) — (L 1000) K $\tilde{N}_3$ $V_{1\ 2}$ B D T $G_{1\ 2\ 4}$ $M_4$ मूर्खाणां (for मूढानां) $G_5$ दुर्लभे (for दुर्बले). — (L 1001) $\tilde{N}_2$ $V_3$ मयैष, $V_2$ स च मे (for स मे सु). — (L 1002) $D_3$ अबुद्धीनां (for असत्त्वानाम्) $V_1$ $B_3$ $D_6$ अबुद्धीनां, $V_2$ अयुद्धानां, $D_3$ निर्जितानां $T_3$ $G_4$ अबद्धानां

तिष्ठेदानीं यथाकामं स्थितोऽहं पार्थिवे पदे ।
क यास्यसि मया रुद्धो रणेष्वपरिनिष्ठितः ॥
न चाहमेकं सबलो युक्तस्त्वां योद्धुमाहवे । [ 1005 ]
अहमेकस्त्वमप्येको द्वौ युध्याव रणे स्थितौ ॥
किं जनेन निरस्तेन त्वं चाहं च रणे स्थितः ।
धर्मयुद्धेन निधनं व्रजत्वेकतरो रणे ॥
लोकेऽस्मिन्वासुदेवोऽहं भविष्यामि हते त्वयि ।
हते मयि त्वमेको वा वासुदेवो भविष्यसि ॥ [ 1010 ]
सृगालस्य वचः श्रुत्वा वासुदेवः क्षमापरः ।
इष्टतः प्रहरस्वेति तमुक्त्वा चक्रमाददे ॥
ततः सायकजालानि सृगालः क्रोधमूर्छितः ।
चिक्षेप कृष्णे घोराणि युद्धाय लघुविक्रमः ॥
शस्त्राणि यानि चान्यानि मुसलाद्यानि संयुगे । [ 1015 ]
पातयामास गोविन्दे स सृगालः प्रतापवान् ॥
सृगालप्रहितैरस्त्रैः पावकज्वालमालिभिः ।
निर्दयाभिहतः कृष्णः स्थितो गिरिरिवाचलः ॥
सोऽस्त्रप्रहाराभिहतः किंचिद्रोषसमीरितः ।
चक्रमुद्यम्य गोविन्दः सृगालोरसि पातयत् ॥ [ 1020 ]
तं रथस्थं प्रमाणस्थं सृगालं युद्धदुर्मदम् ।
जघान समरे चक्रं जातदर्पं महाबलम् ।
ततः सुदर्शनं चक्रं पुनरायाद्गुरोः करम् ॥
चक्रेणोरसि निर्भिन्नः स गतासुर्गतोत्सवः ।

---

( for अबुधानां ). —( L 1003 ) $T_{4}$ मया , $M_{1}$ $_{2}$ ( *inf lin* ) $_{3}$ रणे ( for यथा ) $V_{3}$ कुले ( for पदे ) —After line 1003, $T_{1}$ $G_{3}$ M ins

118** मृगव्यालो महाव्यालं न मर्षयति सागरे ।
[ $M_{2}$ सगरे ( for सा° ).

—( L 1004 ) $M_{1}$ $_{3}$ त्वं , $M_{2}$ न ( for क ) $T_{4}$ रणे ( for मया ) $T_{1}$ $G_{3}$ $M_{1}$ $_{2}$ ( *inf lin* ) $_{3}$ $_{4}$ रणे रणविदां वर ( $M_{1-3}$ वधम् ) ( for $^{b}$ ) — ( L 1005 ) $T_{2}$ $M_{2}$ एक ( for एकं ). $T_{3}$ $_{4}$ समरे ( for सबलो ) $D_{3}$ न चाहमेकेन बलैर् , $T_{1}$ $G_{3}$ M न चाहं स्व-बलैर्युक्तस् ( for $^{a}$ ) $K_{2}$ नेच्छे त्वां ; $M_{1}$ $_{3}$ त्वा तथा , $M_{2}$ युक्तं त्वा ( for युक्तस्त्वां ) $T_{3}$ $_{4}$ उत्सहे ( for आहवे ) $\tilde{N}_{1}$ योद्धु कृष्ण समुत्सहे , $T_{1}$ $G_{3}$ $M_{4}$ त्वा तथा योद्धुमुत्सहे ( for $^{b}$ ) — ( L 1006 ) $D_{2}$ युध्यावो द्वौ , $D_{3}$ युद्धाय च ( for द्वौ युध्याव ) $T_{1}$ M धृतौ , $G_{3}$ श्रुतौ ( for स्थितौ ) —( L 1007 ) $B_{3}$ निविष्टेन ( for निरस्तेन ) $V_{3}$ जनेन किं निरस्त्रेण ( for $^{a}$ ) $B_{3}$ न त्व वाहं ( for त्वं चाहं च ) $\tilde{N}_{2}$ $V_{3}$ $Ds_{2}$ $D_{1, 3-5}$ $T_{3}$ $G_{3, 5}$ M स्थितौ ( for स्थित. ) — $\tilde{N}_{1}$ om line 1008 — ( L 1008 ) $M_{1-3}$ युद्धेऽस्मिन् ( for निधनं ). $K_{2}$ $\tilde{N}_{2}$ $_{3}$ $V_{1}$ $_{3}$ $B_{3}$ $D_{6}$ $G_{2}$ प्रयातु , $T_{1}$ $M_{4}$ भजतु , $M_{1-3}$ पततु ( for व्रजतु ). — ( L 1009 ) $D_{1}$ रणे ( for लोके ) $D_{6}$ मृते ( for हते ) — ( L 1010 ) $T_{1}$ त्वमेको वासुदेवोऽसौ भविष्यसि हते मयि . — ( L 1011 ) $D_{5}$ क्षमायुत. ( for °पर ) —( L 1012 ) $K_{2}$ इष्टं ते, $\tilde{N}_{1}$ $B_{1}$ Dn $T_{1}$ $G_{2}$ ईर्ष्यन्तं ; $D_{1}$ $_{2}$ ईर्ष्यात , $D_{3}$ दुष्ट त्वं , $D_{5}$ इष्टं न , $M_{1-3}$ इच्छत: ( for इष्टत ) $T_{3}$ $_{4}$ इत प्रहर तिष्ठेति ( for $^{a}$ ). $\tilde{N}_{1}$ शस्त्रम् ( for चक्रम् ) — ( L. 1013 ) $\tilde{N}_{2}$ $V_{3}$ $T_{1}$ $G_{3}$ M सृगाल कालसंनिभ. ( for $^{b}$ ) — For line 1014, $T_{1}$ $G_{3}$ M subst :

119** चिक्षेपोरसि कृष्णस्य युद्धसंधानकोविद. ।

— ( L 1015 ) $\tilde{N}_{2}$ $V_{3}$ $T_{1}$ $G_{3}$ $M_{1-3}$ अस्त्राणि ( for श° ). $\tilde{N}_{1}$ दीप्तिमन्ति महान्ति च , $\tilde{N}_{2}$ $V_{3}$ $G_{3}$ M मुसलान्यायुधानि च , $T_{1}$ °न्यायसानि च ( for $^{b}$ ) — ( L 1016 ) $\tilde{N}_{1}$ कृष्णाय , $M_{1}$ $_{3}$ समरे ( for गोविन्दे ) $K_{2}$ ह्यस्त्राणि च , $K_{4}$ $\tilde{N}_{2}$ $V_{3}$ $D_{2}$ $_{3}$ सृगाल स ( by transp ) $T_{1}$ $G_{3}$ $M_{4}$ सृगाल: समरे जि( $G_{3}$ $M_{4}$ स्थि )त , $G_{5}$ $M_{1-3}$ सृगाल. समरोर्जित ( for $^{b}$ ) — ( L 1017 ) $\tilde{N}_{1}$ -प्रेरितैर् ( for -प्रहितैर् ) — ( L 1018 ) $M_{3}$ तस्थौ ( for स्थितो ) $G_{3}$ [अ]पर ( for [अ]चल ) — ( L 1019 ) $\tilde{N}_{1}$ शतैरस्त्रैरभिहत ( for $^{a}$ ) $K_{1}$ $_{2}$ $\tilde{N}_{2}$ $_{3}$ ( marg as above ) $V_{2}$ $_{3}$ B $D_{3-5}$ $T_{1}$ $_{3}$ $_{4}$ $G_{2}$ $_{3}$ $_{4}$ -समन्वित ( for -समीरित ) — ( L 1020 ) After line 1020$^{a}$, $D_{6}$ $T_{1, 2}$ $G_{1}$ $_{3-5}$ M ins

120** सृगालं वाक्यमब्रवीत् ॥
यदि शक्नोषि राजेन्द्र वहैतच्चक्रमुद्यतम् ।
किमनेन प्रलापेन द्रक्ष्यसे मत्पराक्रमम् ॥
छेत्स्यामि ते शिर कायाच्चक्रेणानेन राजक ।
इत्युक्त्वा रोषताम्राक्ष

[ ( L 2 ) $D_{6}$ $T_{2}$ $G_{4}$ $_{5}$ $M_{4}$ उत्तमम् ( for उद्यतम् ) — ( L. 3 ) $M_{1-3}$ द्रक्ष्यसे यममद्य वै ( for $^{b}$ ) — ( L 4 ) $D_{6}$ $T_{2}$ $G_{1}$ $_{4}$ $_{5}$ $M_{4}$ छेत्स्यामि शिरस काय ; $M_{1-3}$ °मि सशिर कायं ( for $^{a}$ ) ]

$K_{2}$ $\tilde{N}_{3}$ $V_{1}$ $_{2}$ B Ds $D_{4-6}$ $T_{2}$ $G_{1}$ $_{2}$ $_{4}$ चाक्षिपत् ( for पातयत् ) $K_{1}$ $_{3}$ $_{4}$ $D_{1}$ $_{2}$ सृगालस्योपरि क्षिपत् , $D_{3}$ °लमभिचिक्षिपे , $T_{3}$ °लं वाक्यमब्रवीत् ( for $^{b}$ ) — $G_{3}$ M om line 1022 — ( L 1022 ) $D_{1}$ $_{5}$ कृष्णो , $D_{2}$ विष्णुर् , $T_{2}$ $G_{1, 2}$ $_{5}$ चैकं ( for चक्रं ) $K_{4}$ जघान सोऽथ चक्रेण ( for $^{a}$ ) $T_{3}$ $_{4}$ शृगालं त ( for जातदर्पं ). — After line 1022, $\tilde{N}_{2}$ $V_{2}$ $_{3}$ $Ds_{2}$ $D_{2}$ ( marg ) ins. .

121** निहत्य समरे शूरं सृगालं युद्धकामुकम् ।
[ $D_{2}$ -दुर्मदम् ( for -कामुकम् ) ]

पपात क्षतजस्रावी सृगालोऽद्रिरिवाहतः ॥ [ 1025 ]
निशम्य तं निपतितं वज्रपातादिवाचलम् ।
तस्य सैन्यान्यपययुर्विमनांसि हते नृपे ॥
ते स्म पश्यन्ति पतितं धरण्यां धरणीपतिम् ।
चक्रनिर्दारितोरस्कं भिन्नशृङ्गमिवाचलम् ॥
विलपन्ति स्म ते सर्वे सचिवाः सप्रजा भृशम् । [ 1030 ]
साश्रुपातेक्षणा दीनाः शोकस्य वशमागताः ॥
तेषां रुदितशब्देन पौराणां विस्वरैः स्वरैः ।
महिष्यस्तस्य निष्पेतुः सपुत्रा रुदिताननाः ॥
तास्तं निपतितं दृष्ट्वा श्लाघ्यं भूमिपतिं पतिम् ।
स्तनानारुज्य करजैर्भृशार्ताः पर्यदेवयन् ॥ [ 1035 ]
उरांस्युदरसिजांश्चैव शिरोजानाकुलान्यपि ।
निर्दयं ताडयन्त्यस्ता विस्वरं रुरुदुः स्त्रियः ॥
तस्योरसि सुदुःखार्ता मृदिताः क्लिन्नलोचनाः ।
पेतुरूर्ध्वभुजाः सर्वाः कृत्तमूला लता इव ॥
तासां बाष्पाम्बुपूर्णानि नेत्राणि नृपयोषिताम् । [ 1040 ]

---

— (L 1023) M हत्वा (for ततः) K4 D1 T1 3 4 हरेः (for गुरो॰) D3 करे (for करम्) — (L 1024) T2 भिन्नस्य (for निर्भिन्न॰) D1 निर्गतासुर् (for स ग॰) K2 रणोत्सवे (for गतोत्सवः) T1 G3 M गतासुर्गतसत्त्ववान् (for $^b$) — (L 1025) D1 [अ]पर, T1 [अ]ग्रत (for [आ]हत) D3 सृगालः सहनाहनः (for $^b$) — After line 1025, Ñ2 3 V1 3 T3 ins an addl colophon [ *Mention of the Epic* T3 — *Mention of Khila* Ñ3 V1 3 — *Adhy. name* Ñ2 3 V1 3 शृगालवध. — *Adhy no* Ñ3 V1 101, V3 100, T3 106 ]

— Before line 1026, Ñ2 3 V1 3 ins वैशंपायन उवाच. — (L 1026) T3 श्रीमन्तं (for निशम्य) Ñ2 om (hapl.) lines 1026$^b$–1027$^b$ — T2 G1 om (hapl) lines 1027–1029 — (L 1027) T4 विपुलानि (for विमनांसि). — K Ñ3 V2 B Dn Ds D1 3–6 T1 3 4 G2 4 5 ins after line 1027 Ñ2 V1 3 D2 after line 1029.

122** केचित्प्रविश्य नगरं कश्मलाभिहता भृशम् ।
रुरुदुर्दुःखसंतप्ता भर्तृशोकाभिपीडिता· ॥
केचित्तत्रैव शोचन्तः स्मरन्तः सुकृतानि च ।
पतितं भूमिपं भूमौ न त्यजन्ति स्म दुःखिताः ॥
ततो मेघनिनादेन स्वरेणारिविमर्दनः । [5]
कृष्ण कमलपत्राक्षो जनानामभयं ददौ ॥
चक्रोचितेन हस्तेन राजताङ्गुलिपर्वणा ।
न भेतव्यं न भेतव्यमिति तानभ्यभाषत ॥
नास्य पापस्य दोषेण निराबाधकरं जनम् ।
घातयिष्यामि समरे नेदं शूरव्रतं मतम् ॥ [10]
अश्रुपूर्णमुखा दीनाः क्रन्दमाना भृशं तदा ।
पतितो वै शृगालाख्यो भ्रष्टः सन्दीनमानसः ॥

[ G2 om lines 1–4 — (L 2) K2 भृश (for भर्तृ-) Ñ2 -ताडिता (for -पी॰) — (L 3) Ñ2 3 (marg) V1 3 D3–5 शोचन्ति (for ॰न्त) — (L 4) Ñ2 V3 Ds2 T1 4 भूपतिं (for भूमिप) — D3 reads lines 5–8 after line 1081 — (L 5) V1 सुरेन्द्रो, D5 स्वनेन (for स्वरेण) B2 -विदारण (for -विमर्दन) T4 स्वरेणामित्रमर्दन॰ (for $^b$). — K Dn Ds D3 T1 3 4 G4 5 om lines 9–12 — (L 9) D1 2 कृत्यर्थं (for दोषेण). D1 -कराणि च, D2 5 -कराणि वः (for -करं जनम्) — (L 10) D1 5 पातयिष्यामि समरे (for $^a$) V1 स्मृतम्, V2 3 मम, B2 3 D4 6 भृशम्, G2 शुभम् (for मतम्) — V3 D1 2 om. lines 11–12 G2 transp lines 11 and 12 B1 3 D6 om line 12 — (L 12) Ñ2 V1 D4 G2 पातितोऽयं शृगालश्च (for $^a$) ]

— T2 G1 om lines 1028–1029 — (L 1029) Ñ2 V3 D2 छिन्नपक्षम् (for भिन्नशृङ्गम्) — (L 1030) Ñ1 M1. 3 ततः सर्वे; V3 स्म समरे (for स्म ते सर्वे). M1 3 नृप (for भृशम्) D3 सप्रजाः सचिवा भृशम् (for $^b$) — (L 1031) V3 -पूर्णेक्षणा, T1 G3 M1–3 -धारे॰; G2 -पूर्णमुखा (for -पातेक्षणा). — (L. 1032) K4 विह्वलै; V2 B3 D6 विविधै. (for विस्वरै.) G2 3 स्वनैः (for स्वरैः), T3 पौराणां निस्वनेन च (for $^b$). — (L 1033) D3 निश्चेरुः (for निष्पेतुः) T1 G3 M पुराग्र्य॰ (for सपुत्रा) — (L. 1034) D3 नाथं (for तास्तं). T1 G3 M श्लाघ्यं (for दृष्ट्वा) Ñ1 तास्तु दृष्ट्वा पतिं श्लाघ्यं (for $^a$) D5 भूमिगतं, T3. 4 तं भूपतिं (for भूमिपतिं). T1 पतिं भूपतिमीश्वरम्, G3 M4 भूपतिं पतिमीश्वरम्, M2 पतितं भूपतिं पतिम् (for $^b$). — (L 1035) G3 M1. 2 (*inf. lin.*) 3 4 केशान् (for स्तनान्). D1 4 T2 G1. 4. 5 आरुध्य (for ॰ज्य) K2 Ñ3 (marg as above) B3 D6 करुणं (for करजैर्) Ñ2 V3 ताश्च नार्यः सकरुणं (for $^a$) G3 M2. 4 शोकार्ताः; M1 तृष्णार्ताः, M3 तृषार्ताः (for भृशार्ताः). G2 भृशार्ता. पर्यवारयन् (for $^b$). — (L 1036) T1 G3 M2. 4 शिरांस्याकुलितानि च, M1 3 निघ्नन्त्यो निर्दयं करैः (for $^b$). — (L 1037) M1 3 हृदयं (for निर्दयं) G5 रुरुदुर्विस्वरं स्त्रियः (for $^b$). — M3 om (hapl) lines 1038–1045. — (L 1038) Ñ1 विलपन्त्यः, Ñ3 (marg as above) तस्योपरि (for ॰रसि). Ñ2 D5 T2 G1 4 रुदिताः; V3 G2. 5 रुदित-; D6 मृदित-; M4 रुरुदुः (for मृदिताः) G3 रुदितक्लिन्नचेतना·, M1 2 रुधिरक्लिन्नमूर्धजाः (for $^b$) — (L,

वारिविप्रहतानीव पङ्कजानि चकाशिरे ॥
ताः पतिं पतितं भूमौ रुदन्त्यो हृदि ताडिताः ।
लालप्यमानाः करुणं योषितः पर्यदेवयन् ॥
पुत्रं चास्य पुरस्कृत्य बालं प्रस्रुतलोचनम् ।
शक्रदेवं पितुः पार्श्वे द्विगुणं रुरुदुः स्त्रियः ॥ [ 1045 ]
इमं ते पश्य विक्रान्तं बालं पुत्रमपण्डितम् ।
अतृप्तास्तव सौख्यानां किं कुर्मो विधवा वयम् ॥
तस्य पद्मावती नाम महिषी प्रमदोत्तमा ।
गृहीत्वा तं सुतं तत्र वासुदेवमुपस्थिता ॥
यस्त्वया पातितो वीर रणप्रोक्तेन कर्मणा । [ 1050 ]
तस्य प्रेतगतस्यायं पुत्रस्त्वां शरणं गतः ॥
यदि त्वां प्रणमेतासौ कुर्याद्वा शासनं पुनः ।
नायमेकप्रहारेण जनस्तप्येत दारुणम् ॥
यदि कुर्यादयं मूढस्त्वयि बान्धवकं विधिम् ।
नैवं परीतः कृपणः सेवेत वसुधातलम् ॥ [ 1055 ]
अयमस्य विपन्नस्य बान्धवस्य त्वयानघ ।
संतती रक्ष्यतां वीरपुत्रः पुत्र इवात्मजः ॥
तस्यास्तद्वचनं श्रुत्वा महिष्या यदुनन्दनः ।
मृदुपूर्वमिदं वाक्यमुवाच वदतां वरः ॥
राजपत्नि गतो रोषः सहानेन दुरात्मना । [ 1060 ]
प्रकृतिस्था वयं जाता देवि सैषोऽस्मि बान्धवः ॥
रोषो मे विगतः साध्वि तव वाक्यैरकिल्बिषैः ।

---

1039 ) Ñ1 तत्र ( for सर्वाः ) Ñ2 3 V3 T1 4 M1 2 4 छिन्न , V2 क्षत- ( for कृत्त- ) — M1 om lines 1040–1042 — ( L 1040 ) M2 बाष्पाभि- ( for °म्बु ) V1 -पूर्णानां ( for °नि ) — ( L 1041 ) T1 वारिविप्लावितानीव ( for $^a$ ) — D1 om lines 1042–1043 — ( L 1042 ) G1 ततस्ता' ( for ता' पतिं ) Ñ1 T4 भूपतिं ( for पतितं ) M2 पतितं पतिता भूमौ ( for $^a$ ) Ds2 पीडिताः ; G2 तापिताः ( for ताडिताः ) — K1 om line 1043 — ( L 1043 ) Ds2 ( marg as above ) समरे ( for करुणं ) T2 G1 5 M1 विलप्यमाना करुणं ( for $^a$ ). — For line 1044, Ñ1 subst

123** सृगालपुत्रं चारभ्य पुरस्कृत्य तु बालकम् ।

— ( L 1045 ) M3 दृष्ट्वा बालं , Bom ed शुकदेवं ( for शक्र° ) T2 G1 4 5 करुणं ( for द्विगुणं ) T1 G3 M4 रुरुदुर्निपुणं ( M4 °णाः ) स्त्रिय , M2 रुरुदुः करुणं स्त्रियः ( for $^b$ ) — ( L 1046 ) M4 वीर ( for पश्य ) K Ñ2 3 V B D T2 4 G1 2 4 5 अयं ते वीर विक्रान्तो बालः पुत्रो न पण्डितः — After line 1046, K Ñ2 3 V B D T2–4 G1 2 5 ins

124** त्वद्विहीन' कथमयं पदे स्थास्यति पैतृके ।
कथमेकपदे त्यक्त्वा गतोऽस्यन्तःपुरं परम् ॥

[ ( L 1 ) G2 पुत्र ( for पदे ) — ( L 2 ) D3 यातो ( for गतो ) K2, 4 D1 2 4 G4 5 पुरम् , D3 5 वरम् ( for परम् ) ]

— ( L 1047 ) T2 G1 4 5 नाम ( for तव ) D3 अतृष्णास्ते च सौख्यानां , T1 G3 M1–3 अतृप्तं पितृसौख्यानां , M4 वितृप्तं पितृसौख्येन ( for $^a$ ) — ( L 1048 ) Ñ1 प्रथमा पत्निरुत्तमा ( for $^b$ ) — ( L 1049 ) Ñ2 V3 माता ( for तत्र ) K1 3 4 V2 B2 Dn Ds1 ( marg , after corr ) D1–5 T2–4 G1 4 5 M4 रुदती ( T3 °न्तं ) पुत्रमादाय ; K2 Ñ1 3 V1 B1 3 Ds2 D6 T1 G2 3 पुत्रमाता सुतं गृह्य ( for $^a$ ). — ( L 1050 ) Ñ2 V3 घातितो ( for पा° ). M1–3 देव ( for वीर ) D1 G1 M2 रणे ( for रण ). Ñ2 V3 M1 3 -दृष्टेन ( for -प्रोक्तेन ) Ñ1 शास्त्रोक्तेनैव कर्मणा , G5 M4 रणे प्राप्तेन कर्मणा ( for $^b$ ) — ( L 1051 ) Ds प्रेत्य- ( for प्रेत- ) — ( L 1052 ) D1 प्रणयता ( for प्रणमेत ) K1 प्रभो , K3 बुध' , Dn तव , D2 ( *inf lin* ) विभो ( for पुनः ) — Ñ1 2 T1 G3 M subst for line 1052 V3 T3 ins after line 1052

125** यदि त्वं बान्धव' श्लाघ्यः पुत्रस्य प्रणतस्य मे ।
दीयतां जीवितं देव बान्धवस्य यथात्मनः ॥

[ ( L 1 ) Ñ1 अथ मे प्रणमेत्सुत ( for $^b$ ) Ñ2 V3 M2 यदि त्वा बान्धव ( M2 °व ) श्लाघ्यमेष न प्रणमेत्पाति — Ñ1 2 V3 M2 om line 2 ]

— K1 om lines 1053–1057 T3 reads line 1053 twice — ( L 1053 ) D3 एवं ( for एक- ) Ñ3 V1 दारुणः ( for °णम् ). D3 तदा तप्येत चागुण' , T1 3 ( second time ) G3 M1 3 4 हतश्चक्रेण ते प्र( M3 वि )भो ( for $^b$ ) — ( L 1054 ) D4 G3 असंमूढस् ( for अयं मू° ) G2 यदि , M3 तव ( for त्वयि ). — ( L 1055 ) M1 3 पतितो नैव कृपण' ( for $^a$ ). K Ñ2 3 V B D T2–4 G1 2 4 धरणी- ( for वसुधा ) — ( L 1056 ) Ñ1 पितुर्बालो ( for विपन्नस्य ) — ( L 1057 ) Ñ1 वीर. ( for वीर- ) K1 सतत वीक्ष्यता वीर , K2 तस्यैव जगतां वीर , M1 3 एतस्य रक्ष्यता पुत्रो ( for $^a$ ) M1 3 देव ( for पुत्र' ) T1 G3 M [आ]त्मनः ( for °ज. ) V3 -पुत्रः पुत्रमिवात्मजम् ( for $^b$ ). — ( L 1058 ) D3 ततस् ( for तस्यास् ) — ( L. 1059 ) M1 3 उवाच पुरुषोत्तम ( for $^b$ ) — ( L 1061 ) V2 स चास्मि देव बान्धव. ; M1–3 स एवाहं च बा° ( for $^b$ ). — Ñ1 om line 1062 — ( L 1062 ) Ñ2 V3 ऽयं ( for मे ). T1 3 G1 3 5 M निर्गतः ( for विगत. ) Bom Poona eds अकल्मषैः ( for अकिल्बिषै. ) T1 G3, 5 M जातदुःखोऽस्मि सांप्रतम् ( M2

योऽयं पुत्रः सृगालस्य समाप्येष न संशयः ॥
अभयं चाभिषेकं च ददाम्यस्मै सुखाय वै ।
आहूयन्तां प्रकृतयः पुरोधा मन्त्रिणस्तथा । [ 1065 ]
पितृपैतामहे राज्ये तव पुत्रोऽभिषिच्यताम् ॥
ततः प्रकृतयः सर्वाः पुरोधा मन्त्रिणस्तथा ।
अभिषेकार्थमाजग्मुर्यत्र तौ रामकेशवौ ॥
अभिषिच्य सृगालस्य करवीरपुरे सुतम् ।
कृष्णस्तदहरेवाशु प्रस्थानमभिरोचयत् ॥ [ 1070 ]
रथेन हरियुक्तेन तेन युद्धार्जितेन वै ।
केशवः प्रस्थितोऽध्वानं यथेन्द्रस्त्रिदिवं यथा ॥

Colophon

वैशंपायन उवाच ।
तौ तु स्वल्पेन कालेन पञ्चरात्रोषितौ पथि ।

*inf lin* सप्रति ) ( for $^{5}$ ) — ( L 1064 ) K2 V1 3 दास्यामि ( for ददामि ) M1–3 सुताय ते ( for सुखाय वै ) — D4 G3 4 om ( hapl ) lines 1066–1067, D2 reads the same twice — ( L 1066 ) M1 3 देवि ( for राज्ये ) Ñ2 पितृपैतामहं राज्यं ( for $^{a}$ ) K2 Ds तस्य ( for तव ). — ( L 1068 ) M4 आजह्रुर् ( for °ग्मुर् ) Ñ2 Ds1 T1 यतो वै; Dn1 यत्रेमौ ( for यत्र तौ ) Ñ1 यत्र तौ केशवो भृशम् ( for $^{5}$ ) — After line 1068, K Ñ2 3 V B D T2–4 G1 2, 4 5 ins .

126** ततः सिंहासनस्थं तं राजपुत्रं जनार्दनः ।
अभिषेकेण दिव्येन योजयामास वीर्यवान् ॥

— ( L. 1070 ) K2 V3 Dn G2 प्रस्थानं समरोचयत्; K3 Ñ3 V2 B Ds D4 T4 °नमभ्यरोचयत्, M1–3 °नं समरोचत ( for $^{b}$ ) — ( L 1071 ) Ñ1 D4 हय- ( for हरि- ) M1–3 तेन युद्धजितेन वै ( for $^{5}$ ) — ( L 1072 ) K Ñ2, 3 V B D T2–4 G1 2 4 5 वृत्रहा ( for यथेन्द्रस् ). Ñ1 यथेन्द्रस्त्रिदिवेऽभवत् ( for $^{5}$ ) — After line 1072, Ñ2 3 V ins.

127** सहितौ तावनुगतौ मथुरां प्रति जग्मतुः ।

While D6 T1 2 G1 3–5 M ins. after line 1072 :

128** दमघोषोऽपि धर्मात्मा ससैन्य ससुहृज्जनः ।
आपृच्छ्य केशव राजा स्वा पुरीं प्रतिजग्मिवान् ॥

[ ( L 1 ) D6 T2 G1, 4, 5 -सुहृद्गण ( for °ज्जन ) ]

D6 T2 G1 4 5 cont. : K B Dn Ds D1–5 T3 4 G2 ins after line 1072 . Ñ2 3 V cont after 127** :

129** शक्रदेवोऽपि धर्मात्मा सह मात्रा परंतप ।
सबालवृद्धयुवतीमुख्याः प्रकृतयस्तथा ॥
शिबिकायामथारोप्य सृगालं युद्धदुर्मदम् ।
संहृता दूरमार्गेण पश्चिमाभिमुखा ययुः ॥
नैधनेन विधानेन चक्रुस्ते तस्य सत्क्रियाम् । [ 5 ]
सत्कार कारयामासुः पितॄणां पारलौकिकम् ।
उद्दिश्योद्दिश्य राजानं श्राद्धं कृत्वा सहस्रशः ॥
ततस्ते सलिलं दत्वा नामगोत्रादिकीर्तनैः ।
पितर्युपरते घोरे शोकसंविग्नमानसः ।
कृत्वोदकं तदा राजा प्रविवेश पुरोत्तमम् ॥ [ 10 ]

[ ( L 1 ) Bom ed शुक्र- ( for शक्र- ) — ( L 2 ) D3 -युवाति-, T3 -युवतीर् ( for युवती ) D5 -सुखा ( for -मुख्या ) — ( L 3 ) K1 इवारोप्य, Ñ2 G5 समा° ( for अथा° ) — K4 om lines 4–5 — ( L 4 ) K1 3 D1 2 5 T2 G1 5 सगता; Ñ3 V1 B Ds D6 G4 सहिता, D3 वहन्तो, T3 महता ( for स° ). K2 सहिता पुरमार्गेण ( for $^{a}$ ) Ñ2 V3 D3 T2 4 G1, 4 5 -मुखं ( for -मुखा ) T3 पश्चिमा दिशमाययु ( for $^{b}$ ) — G4 om. line 5 — ( L. 5 ) K3 Ñ2 D1 2 G1 नैधनस्य, T3 4 वैदिकेन ( for नैधनेन ) — ( L 6 ) T3 G2 संस्कार ( for सत्कार ). K1 सत्क्रिया कारयामास; K3 D3 सत्का( D3 सस्का )रं लम्भयामासु ( for $^{a}$ ) K3 Dn स पितु ( for पितॄणा ). K1 -लौकिकीम् ( for °कम् ). — ( L. 7 ) D5 विधानत ( for सहस्रश ) — ( L. 8 ) B2 -गोत्रानु- ( for °दि- ). — ( L 9 ) K4 प्रजा कृत्वोदकं तथा ( for $^{b}$ ) — ( L 10 ) K4 राज्ञ पुत्रै समं दीनाः ( for $^{a}$ ). ]

M3 cont after 128**.

130** श्रीवत्सच्छन्नवक्षोज्ज्वलितमणिवरोद्दीप्तदिव्याङ्गरागं
भास्वच्चक्रं सशङ्खं स्फुरदुरुमकुटं हारकेयूरहारि ।
मेघाभं पीतवासोमणिमकरलसत्कुण्डलं चन्द्रवक्त्रं
प्रोद्यत्तेजोम्बुजाक्षं हृदय भज सदा त्वं वपुः प्राशु जिष्णोः ॥

Colophon om in K2 — *Mention of the Epic* K3 Ds2 T3 — *Mention of Khila* K3 Ñ3 V B Ds D1. — *Sub parvan* T4 आश्चर्यपर्व — *Adhy name* K1 3, 4 Ñ V1 2 B Ds D1–5 T2, 4 G3 M सृगालवध ; V3 सृगालवधे तत्पुत्राभिषेकः; D6 G2 सृगालवासुदेववधः — *Adhy no.* K3 ( marg ) D4 98 , Ñ3 V1 B2 101 , V2 G1 102; Dn1 90; Dn2 Ds2 99; D1 96; T1 G2 3 M 104; T2 G4 100 , T3 107 , T4 91 , G5 103 — *Śloka no* Dn1 63; Ds2 65; D4 66 , T2 84 , G1 85.

—T2 G1 4 om line 1073 After line 1073$^{a}$, K Ñ1, 2 V3 Dn D2 3, 5 6 T3 G2 ins :

131** दमघोषेण संगतौ ।
अथाध्वविधिना तौ तु

[ ( L. 1 ) K1 संयुतौ , D3 समतौ ( for सगतौ ). — K1, 3, 4

नगरी मथुरां प्राप्तौ वसुदेवसुतावुभौ ॥
ततः प्रत्युद्गताः सर्वे यादवा यदुनन्दनौ । [ 1075 ]
सबला हृष्टमनस उग्रसेनपुरोगमाः ॥
श्रेण्यः प्रकृतयश्चैव मन्त्रिणः सपुरोहिताः ।
सबालवृद्धा सा चैव पुरी समभिवर्तत ॥
नन्दितूर्याण्यवाद्यन्त स्तूयेतां पुरुषोत्तमौ ।
रथ्याः पताकामालिन्यो भासन्ति स्म समन्ततः ॥ [ 1080 ]
हृष्टा प्रमुदिता सर्वा पुरी परमशोभिता ।
भ्रात्रोस्तयोरागमने यथैवेन्द्रमहे तथा ॥
मुदितास्तत्र गायन्ति राजमार्गेषु गायनाः ।
स्तवाशीःप्रभवा गाथा यादवानां प्रियंकराः ॥
गोविन्दरामौ संप्राप्तौ भ्रातरौ लोकविश्रुतौ । [ 1085 ]
स्वे पुरे निर्भयाः सर्वे क्रीडध्वं यादवाः सुखम् ॥
न तत्र कश्चिद्दीनो वा मलिनो वा विचेतनः ।
मथुरायामभूत्कश्चिद्रामकृष्णसमागमे ॥
वयांसि साधुवाक्यानि प्रहृष्टा गोहयद्विपाः ।
नरनारीगणाश्चैव भेजिरे मानसं सुखम् ॥ [ 1090 ]
शिवाश्च प्रववुर्वाता विरजस्का दिशो दश ।

---

Ñ$_1$ D$_{2\ 3\ 5\ 6}$ om. line 2 —(L 2) Ñ$_2$ V$_3$ अध्वानं विधिना चोभौ ]

K$_{3,\ 4}$ Ñ$_1$ D$_{3\ 5}$ om line 1073$^b$ — After line 1073, K$_1$ (marg ) $_2$ Ñ$_{2\ 3}$ V B Dn Ds D$_{1\ 4\ 6}$ T$_{1\ 3}$ G$_{2\ 3\ 5}$ M ins .

132* दमघोषेण संगम्य एकरात्रोषिताविव ।
जग्मतु सहितौ वीरौ मुदा परमया युतौ ॥

[ (L 1) T$_{1\ 3}$ G$_{3\ 5}$ M$_{1-3}$ नेमिघोषेण ( for दम° ) V$_3$ सहिताव्, G$_5$ संहत्य, M$_{1-3}$ सनाथ ( for संगम्य ). V$_2$ पुन , D$_1$ तत ( for इव ) Ñ$_3$ V$_1$ B Ds D$_6$ त्वेकरात्रोषितौ तत , T$_{1\ 3}$ G$_{3\ 5}$ M सहितौ बलकेशवौ ( for $^b$ ) ]

— T$_{3\ 4}$ om line 1074 —(L 1074) Ñ$_2$ मथुरां नगरीं प्रीतौ ( for $^a$ ) — After line 1074, D$_6$ T$_{1,\ 2}$ G$_{1\ 3-5}$ M G(ed) ins .

133** तत· कृष्णो महाशङ्खं पाञ्चजन्यं स यादवः ।
प्रदध्मौ लोकविख्यातः सुस्वरं पुरुषोत्तम· ॥

[ (L 1) T$_2$ G$_1$ महानाद ( for °शङ्ख ) —(L 2) D$_6$ G$_{4,\ 5}$ M$_4$ -विख्यातं ( for °त· ). T$_2$ G$_1$ तौ ख्यातौ लोकविख्यातौ ( for $^a$ ) ]

—(L 1075) K$_1$ प्रत्युद्ययु , Ñ$_2$ V$_3$ प्रत्यागता· ( for प्रत्युद्गता ) T$_1$ G$_{3\ 5}$ M तेन शब्देन विज्ञाय ( G$_5$ M °ता ) ( for $^a$ ) —(L 1076) K$_{1\ 4}$ D$_{1\ 2}$ सबाला, Ñ$_1$ D$_{3-5}$ सकला ( for सबला ) V$_1$ B$_1$ कृष्ण- ( for हृष्ट- ) T$_1$ G$_{3-5}$ M संप्रहृष्टा बालवृद्धा ( for $^a$ ) G$_2$ वसुदेव- ( for उग्रसेन- ). —(L 1077) M$_{1-3}$ सर्वा ( for चैव ) K Ñ V B Dn Ds D$_{1-4\ 5}$ ( marg ) $_6$ T$_4$ G$_2$ मन्त्रिणश्च यथोचि( B$_3$ D$_6$ °दि )ता , T$_1$ °णश्च पुरोधस ( for $^b$ ). — T$_1$ G$_3$ M om. line 1078. —(L 1078) T$_2$ G$_1$ सबला ( for सा चैव ). K$_3$ पुरी सर्वाभ्यवर्तत, D$_5$ सा चैव समवर्तत ( for $^b$) —(L 1079) T$_2$ G$_1$ अथ, G$_4$ तदा ( for नन्दि- \ K$_3$ [अ]ताडयन्त , V$_{1,\ 3}$ [अ]वादन्त ( for °द्यन्त ). K$_4$ अवादयन्त तूर्याणि ( for $^a$ ) K$_2$ स्तूयेतां पुरुषोत्तमम्, Ñ$_1$ स्तूयते स जनार्दन· , V$_2$ D$_3$ G$_{1\ 5}$ स्तूयेतां पुरुषर्षभौ ( for $^b$ ) —(L. 1080) Ñ$_2$ V$_3$ D$_5$ भ्राजन्ते स्म ( Ñ$_2$ सा ) ( for भासन्ति स्म ). —(L 1081) K$_2$ Ñ$_3$ V$_1$ B$_3$ D$_{1\ 6}$ G$_4$ हृष्टप्र- ; Ñ$_1$ प्रहृष्टा ( for हृष्टा प्र- ) K$_1$ D$_{3\ 5}$ T$_{1\ 4}$ G$_{3,\ 5}$ M हृष्टाः प्र( K$_1$ स )- मुदिता सर्वे, Ñ$_2$ V$_3$ प्रहृष्टवदना सर्वे ( for $^a$ ) K$_{1\ 4}$ V$_3$ D$_1$ शोभना ( for -शोभिता ) D$_5$ पुरी श्रेष्ठाभ्यशोभत , T$_1$ G$_{3-5}$ M पुरे परमशोभने ( for $^b$ ) — After line 1081, D$_3$ D$_5$ T$_2$ G$_2$ ins :

134** अक्रूरः सात्यकिश्चैव मन्त्रिणश्च यथोचिता ।

—(L 1082) G$_5$ M$_{1\ 3}$ आगतयोर् ( for °मने ) D$_3$ [इ]न्द्रपुरी ( for °महे ) —(L 1083) Dn$_2$ ते तु ( for तत्र ) Ñ$_1$ मुदिताश्चाप्यगायन्त ( for $^a$ ) S Bom Poona eds G(ed) गायका ( for °नाः ) —(L 1084) K$_{2\ 4}$ Ñ$_{2\ 3}$ V$_{1\ 3}$ B Dn Ds D$_{1-3\ 5\ 6}$ T$_{2-4}$ G$_{1\ 2\ 4\ 5}$ -बहुला , D$_4$ -विपुला ( for -प्रभवा ) K$_{1\ 3}$ तदा( K$_3$ °था )शीर्बहुला गाथा , Ñ$_1$ गायन्ति प्रथम गाथा , M$_4$ स्तवप्रभावा गाथा या ( for $^a$ ) —(L 1085) Ñ$_3$ ( marg ) V$_1$ T$_3$ यादवौ ( for भ्रातरौ ) T$_4$ तत्र ( for लोक- ) —(L 1086) K$_1$ D$_3$ T$_3$ स्वपुरे , Ñ$_2$ V$_3$ पुरे स्वे ( by transp ), T$_1$ G$_3$ M पुरेऽस्मिन् D$_{4\ 5}$ यादवा ( for निर्भया ) K$_2$ स्वपुरे यादवा सर्वे ( for $^a$ ) V$_1$ क्रीडन्ते ; T$_2$ G$_1$ °या ( for °ध्वं ) K$_2$ D$_{4,\ 5}$ निर्भया ( for यादवा ). Ñ$_1$ क्रीडध्वं सह बान्धवै ( for $^b$ ). — Ñ$_1$ om lines 1087–1092. —(L 1087) D$_{4\ 5}$ कश्चित्तत्र ( by transp ) D$_5$ दु खितो ( for मलिनो ) —(L 1088) Ñ$_2$ V$_3$ M$_{1-3}$ अभूद्राजन् , G$_3$ M$_4$ समभवद् ( for अभूत्कश्चिद् ) M$_{1-3}$ गोविन्दे समुपस्थिते ( for $^b$ ) —(L 1089) T$_1$ शुभ- , M$_{1-3}$ सुख ( for साधु- ). —(L 1090) V$_1$ सर्वे ( for चैव ) K$_3$ परमं , G$_1$ मानुषं ; G$_3$ M$_{1-3}$ मनसः ( for मानसं ) K$_1$ भेजिरे सुखमुत्तमम् ( for $^b$ ) —(L 1091) Ñ$_2$ V$_3$ शिवाश्च वाता· प्रववुर् ( for $^a$ ) K$_4$ विराजन्ति ( for विरजस्का ) —(L 1092) K$_4$ हृष्टानि ( for सर्वाणि ) K$_3$ D$_{1.\ 2}$ T$_{1,\ 2,\ 4}$ G$_3$ हृष्यन्त्यायतनेष्वथ ( for

दैवतानि च सर्वाणि दृष्टान्यायतनेष्वपि ॥
यानि लिङ्गानि लोकस्य वृत्तानीह कृते युगे ।
तानि सर्वाण्यदृश्यन्त आत्रोरागमनं प्रति ॥
ततः काले शिवे पुण्ये स्यन्दनेनारिमर्दनौ । [ 1095 ]
हरियुक्तेन तौ वीरौ प्रविष्टौ मथुरां पुरीम् ॥
विशन्तं नगरीं रम्यां गोविन्दं राममेव च ।
अनुजग्मुर्यदुगणाः शक्रं देवगणा इव ॥
वसुदेवस्य भवनं पितुस्तौ यदुनन्दनौ ।
प्रविष्टौ हृष्टवदनौ चन्द्रादित्याविवाचलम् ॥ [ 1100 ]
तावायुधानि विन्यस्य गृहे स्वे स्वैरचारिणौ ।
मुमुदाते यदुवरौ वसुदेवसुतावुभौ ॥
एवं तावकेनिर्माणौ मथुरायां शुभाननौ ।
उग्रसेनानुगौ भूत्वा कंचित्कालं मुमोदतुः ॥

Colophon.

No 18A

After line 880 of App I (No. 18), D6 S ins..

ससैन्यः सबलश्चापि पृष्ठतोऽन्वचरत्किल ॥
इत्युक्त्वा पार्थिवान्सर्वान्कृष्णः कृष्णाम्बुदोपमः ।
पूर्वजेन सहायेन स्थितः समरमूर्धनि ॥
श्रुत्वैव तु जरासंधः क्रोधविस्फारितेक्षणः ।
प्रलम्बश्च तथा राजा विष्णुना प्रभविष्णुना ॥ [ 5 ]

---

[5]) — (L 1093) D5 T2 G1-4 प्रवृत्तानि (for वृत्तानीह) — (L 1094) B1 T1 G3 M4 दृश्यन्ते (for [अ]दृश्यन्त) Ñ2 M4 तयोर् (for आत्रोर्) K Ñ3 V1 2 B D T2-4 G1 2 4 5 तयो( T3 आत्रो )रागमने तदा (for [b]) — G1 om lines 1095-1100 — (L 1095) K3 शुभे (for शिवे) — T3 G4 om (hapl) lines 1096-1100 — (L 1097) T1 G5 M3 पुण्यां, G3 M4 वीरं (for रम्यां) K Ñ3 V1 2 B D T3 4 G2 प्रविशन्तं पुरीं रम्यां (for [a]) Ñ2 V3 सकर्षण-जनार्दनौ; D4 रामं गोविन्दमेव च (for [b]) — (L 1098) K1 (marg) इन्द्रोपेन्द्रौ सुरा इव (for [b]) — (L 1099) K1 Ñ2 3 (marg) V1 3 ततस्तौ, D4 5 पेततुर्; T1 G3 5 M3 4 विशन्तौ (for पितुस्तौ). — (L 1100) D4-6 T2 G5 M4 प्रहृष्टौ (for प्रविष्टौ). T1 [अ]म्बरे, G3 M4 [अ]म्बरम् (for [अ]चलम्) — After line 1100, Ñ3 V B2 ins 135** — Ñ1 om lines 1101-1102 — (L 1101) Ñ3 V1 2 B1 3 D3 D3 6 T3 4 G2 तत्र, V3 तदा (for ताव्) Ñ1 T1 सं- (for वि-) K B2 Dn D1 2 4 5 T2 G1 4 तत्रायुधानि संन्यस्य (for [a]) V2 G3 स्वगृहे, V3 D2 G5 M1-3 स्वे गृहे (by transp) — K1 (marg) 2 Ñ2 Dn G2 ins after line 1102; Ñ3 V B2 after line 1100

135** ततस्तौ वसुदेवस्य पादौ समभिपीड्य च ।
तत्रोग्रसेनं राजानमन्यांश्च यदुपुंगवान् ॥
यथान्यायं पूजयित्वा तौ सर्वैश्चाभिनन्दितौ ।
जग्मतुर्हृष्टमनसौ मातुरेव निवेशनम् ॥

[ (L 1) Ñ2 3 V -वाद्य (for -पीड्य) — (L 3) K1 Ñ2 V1 3 भोजयित्वा (for पू°) — (L. 4) K1 Ñ2 3 V -वदनौ (for -मनसौ) ]

— Lines 1103-1104 = (var) 79 40 — (L 1103) K2 G2 -कर्माणौ (for -नि°) K1 सुखेन वै (for शुभाननौ). — (L 1104) K2 Ñ3 V1 D2 (before corr as above) 3 G2 विचेरतु, D6 G4 अथोषताम्; T2 G1 अथोषितौ, M2 अमोदताम् (for मुमोदतुः). — After line 1104, Ñ2 V3 ins

136** रामोग्रसेनौ विक्रान्तौ विष्णुना समलंकृतौ ॥
कृत्वा प्रयाणं गोमन्ताद्राजा स मगधेश्वरः ।
व्रीडयावनतो भूत्वा स्वपुरं प्रविवेश ह ॥

COLOPHON — *Mention of the Epic* · K3 Ñ2 Ds2 T3 — *Mention of Khila* K3 Ñ3 V B D1 — *Sub-parvan* · D5 पारिजात — *Adhy name* K Ñ3 V1 2 B D G2 M4 मथुरा( K2-4 °रायां )प्रत्यागमनम्, Ñ1 कृष्णप्रत्यागमनम्, Ñ2 गोमन्तदाहे मथुराप्रवेश., V3 गोमन्तान्मथुराप्रवेशः, T4 रामकृष्णयोर्मथुरायां प्रत्यागमनम् — *Adhy no.* · K3 D4 99, V1 3 B2 139, V2 G1 103; Dn Ds2 T1 100, D1 97; D3 107, T2 G4 101, T3 108; T4 92; G2 3 M 105; G4 104. — *Śloka no.:* Dn 18, Ds2 D4 17, D3 19; T2 14; G1 15 — After the above, T1 M read adhys. 80-82, and T3 G3 repeat the same.

18 A

T3 G2 om line 1 — (L 1) G3 M4 च बली (for सब-लश्च). G4 व्यचरत्, M2 ऽन्वगमत् (for °चरत्) — D6 T2 G1 M1 om line 2 G3 om lines 2-4. G4 om lines 2-6 M3 om lines 2-5 After line 3, T3 ins. an addl colophon mentioning the Epic and adhy no 103. — Before line 4, T3 G2 5 ins. वैशंपायन.. G3 om line 5. — (L 5) D6 G1 प्रलब्धश्च (for °म्बश्च) T1 3 G3 5 M1. 2 4 स्वबले च तथा भग्ने (for [a]) — (L. 6) D6 T1

धन्वी बाणी रथी खड्गी कुण्डली कवची बली ।
शूराणामग्रणीः साक्षादेक एवातुलो नृपः ।
केशवस्य पुरः स्थित्वा बभाषे केशिसूदनम् ॥
किमेतैस्तुच्छवाक्यैर्हि तिष्ठेदानीं ममाग्रतः ।
यद्बलं यच्च ते वीर्यं दर्शयस्व यदीच्छसि ॥ [ 10 ]
एष त्वां प्रहरिष्यामि तिष्ठ तावद्रणे क्षणम् ॥
एते ये निहता गोप राजानो बलमोहिताः ।
एतैर्वराकैर्गोपाल कृतं राजविदूषकैः ॥
एष त्वां दर्शयिष्यामि यमराजानमेव हि ।
इत्युक्त्वा स जरासंधः कृष्णमभ्यद्रवद्रणे ॥ [ 15 ]
तं दृष्ट्वा रोषताम्राक्षं कृष्णो वाक्यमुवाच ह ।
इच्छातः प्रहरस्वेति यदि शक्नोषि राजक ॥
एष ते प्रमुखे राजन्स्थितोऽहं किं विकत्थसे ॥
नैतावता रणे राजञ्शूराः सन्ति नृपोत्तमाः ।
शरैर्वा यदि वा शस्त्रैर्दर्शयस्व पराक्रमम् ॥ [ 20 ]
इत्युक्त्वा स जगन्नाथः सर्वेषामग्रणीर्हरिः ।
सुपर्णध्वजमास्थाय कृष्णस्तु रथमुत्तमम् ।
तमभ्ययाज्जरासंधं शरैर्विव्याध चाष्टभिः ॥
सारथिं चास्य विव्याध पञ्चभिर्निशितैः शरैः ।
जघान तुरगांश्चाजौ यतमानस्य वीर्यवान् ॥ [ 25 ]
बलदेवो धनुश्चास्य चिच्छेद नतपर्वणा ॥
तं कृच्छ्रगतमाज्ञाय चित्रसेनो महाबलः ।
सेनानीः कौशिकश्चैव कृष्णं विव्याध पञ्चभिः ॥
त्रिभिर्विव्याध संक्रुद्धः कामपालं तु कौशिकः ।
बलदेवो धनुश्चास्य भल्लेनाजौ द्विधाकरोत् ॥ [ 30 ]
जवेनाभ्यर्दितश्चापि तानरीञ्शरवृष्टिभिः ।
जनार्दनोऽपि भगवानाजघान स मागधम् ॥
जरासंधोऽपि वेगेन धनुरन्यन्महारथः ।
सज्यं कृत्वा महावीरः केशवं निशितैः शरैः ।
आजघान शरीरं वै नीलोत्पलदलप्रभम् ॥ [ 35 ]
भगवानपि गोविन्दः शरेण नतपर्वणा ।
ललाटे चास्य चिक्षेप जरासंधस्य चाभिभूः ॥
पुनर्विव्याध निशितैर्बाणैः शैलोपमैस्तथा ।
क्षुरप्रेणाहनच्चास्य ध्वजं कनकभूषणम् ॥
तं चित्रसेनः संरब्धो विव्याध निशितैः शरैः । [ 40 ]
कौशिकः पञ्चविंशत्या जरासंधस्तु सप्तभिः ॥
त्रिभिस्त्रिभिश्च नाराचैस्तान्बिभेद जनार्दनः ।
पञ्चभिः पञ्चभिश्चैव बलदेवस्तु तानरीन् ॥

---

कङ्कणी ( for कवची ) $G_2$ शरी ( for बली ) —( L 7 ) $T_{1.3}$ $G_{2.3}$ अग्रत ( for °णीः ) $T_3$ $G_{2.3.5}$ M तदा ( for [अ]तुलो ) —( L 8 ) $T_2$ $G_1$ मधु- ( for केशि- ). —( L 9 ) $T_1$ त्विह ( for तुच्छ ) $G_5$ $M_{1-3}$ किमेतै राजापसदैस् ( for [a] ) $G_2$ वृथा जल्पसि गोपक ( for [b] ) — $G_2$ om line 10 —( L 10 ) $M_2$ वैरं ( for वीर्यं ) —( L. 11 ) $T_1$ एकस् ( for एष ) $T_2$ $G_1$ एष त्वां प्रापयिष्यामि ( for [a] ) —( L. 12 ) $T_1$ $G_3$ -शोभिताः ( for -मोहिताः ). —( L 13 ) $D_6$ -विदूषणैः ; $M_{1-3}$ -विगूहकैः ( for विदूषकैः ) $T_{1.3}$ $G_3$ $M_4$ कृतं राजक( $T_3$ °न्य )-विग्रहै ; $G_2$ न कृतो राजविग्रहः ( for [b] ) — $G_2$ om line 14. —( L 16 ) $D_6$ $T_1$ $G_{2.3}$ $M_1$ -ताम्राक्ष ( for °क्षं ) $M_1$ विष्णुर् ( for कृष्णो ) $D_6$ $T_{1.3}$ $G_{3.5}$ $M_{2.3}$ वाचम् ( for वाक्यम् ). —( L 17 ) $T_2$ शक्तोऽसि ( for शक्नोषि ). — $G_2$ om line 18 —( L 18 ) $M_4$ एतेषु ( for एष ते ) $D_6$ $T_2$ $G_4$ विलम्बसे ( for विकत्थसे ). —( L 19 ) $M_{1.3}$ transp राजन् and शूराः. $D_6$ $T_{1.3}$ $G_2$ $M_4$ नृपोत्तम ; $M_{1-3}$ नृपा नृप ( for नृपोत्तमाः ). —( L. 20 ) $G_2$ $M_4$ [अ]प्यस्त्रैर् ( for शस्त्रैर् ). $T_1$ शरैर्वा युधि वाप्यस्त्रैर् ( for [a] ) — $G_2$ om. line 22. —( L 23 ) $D_6$ $T_2$ $G_4$ अन्वयाज् ( for अभ्य° ) $G_2$ तार्क्ष्यध्वजो मागधं तु ( for [a] ) —( L 25 ) $D_6$ $T_2$ $G_4$ [ए]व ; $T_1$ [अ]सौ ( for [आ]जौ ). $T_1$ $G_2$ युध्यमानस्य वीर्यवान् ( for [b] ). —( L 26 ) $D_6$ $T_{1-3}$ $G_{2.4}$ $M_{3.4}$ बलभद्रो ( for °देवो ). $M_{1.3}$ तस्य ( for चास्य ) —( L 27 ) $G_2$ महाबलम् ( for °ल ) —( L 28 ) $M_2$ जरासंधोऽपि सक्रुद्धः ( for [a] ). —( L. 30 ) $D_6$ $T_2$ $G_{1.4}$ [आ]जौ ( for [अ]स्य ) $D_6$ $T_2$ $G_1$ [अ]स्य ( for [आ]जौ ) $G_2$ चिच्छेद नतपर्वणा ( for [b] ) —$T_3$ om. line 31 $G_4$ om (hapl) lines 31–45 —( L 31 ) $D_6$ $T_1$ [अ]भ्यर्दयंश् ( for °र्दितश् ) —( L. 32 ) $M_{1.3}$ आजगाम ( for °घान ). $T_2$ $G_2$ $M_4$ बाणधी ( for मागधम् ) $T_1$ $G_3$ स जघान सबाणधीः ( for [b] ) —( L 33 ) $D_6$ $T_2$ $G_1$ $M_{1.3}$ बलवान् ( for वेगेन ). $T_{1.3}$ $G_{2.3.5}$ M महाबल ( for °रथ ). —( L 34 ) $T_3$ जघानाशु ; $M_2$ महाबाहु , $M_3$ °वीर्यः ( for °वीरः ) — $T_3$ om line 35 —( L 35 ) $T_1$ $G_2$ शरीरे हि ( for °रं वै ) $T_1$ प्रभे ; $G_2$ $M_4$ -प्रभैः ( for -प्रभम् ). —( L. 37 ) $T_1$ $G_3$ चिच्छेद , $G_2$ विव्याध ( for चिक्षेप ). —( L 38 ) $D_6$ $T_2$ $G_1$ $M_{1-3}$ शैलमयैस् ; $G_5$ मेघोपमैस् ( for शैलोपमैस् ). —( L 39 ) $M_4$

कृष्णो रथाश्वांश्चिच्छेद चित्रसेनस्य वीर्यवान् ।
बलदेवो धनुश्चास्य भल्लेनाजौ द्विधाकरोत् ॥ [ 45 ]
संछिन्नधन्वा विरथो गदामादाय वीर्यवान् ।
अभ्यद्रवत्सुसंक्रुद्धो जिघांसुर्मुसलायुधम् ॥
सिसृक्षतस्तु नाराचांश्चित्रसेनवधैषिणः ।
धनुश्चिच्छेद रामस्य जरासंधो महाबलः ॥
गदया च जघानाशु चित्रसेनो हलायुधम् । [ 50 ]
जरासंधस्तु बलवान्केशवं पञ्चभिः शरैः ॥
पुनर्नवत्या विव्याध पुनश्चैव हि सप्तभिः ।
अशीत्या च जरासंधः कृष्णं नीलोत्पलच्छविम् ।
धनुश्चिच्छेद भगवाञ्जरापुत्रस्य धीमतः ॥
उत्सृज्य सशरं चापं गदामादाय वीर्यवान् । [ 55 ]
जघान च तदा विष्णुं बाहुदेशे बली तदा ॥
गदया चैव गोविन्दो जघानास्य च वक्षसि ।
जानुभ्यां निपपातोर्व्यां पुनरुत्थाय मागधः ।
गदयाथ हरिं वेगाज्जघानाहत्य वक्षसि ॥
हरिश्च गदया राजञ्जरासंधममर्षणम् ॥ [ 60 ]
न ममर्ष जरासंधो गदायातं जनार्दनम् ।
जघान स्तनयोर्मध्ये बलदेवस्य पश्यतः ॥

ततः पीडितसर्वाङ्गो ययौ कृष्णो महीतलम् ।
सिंहनादं ततश्चक्रे मागधो राजसत्तमः ।
हतः कृष्णो हतः कृष्ण इति वाचं समाददे ॥ [ 65 ]
तं दृष्ट्वा पतितं कृष्णं क्रोधाद्विगुणविक्रमः ।
आदाय मुसलं रामो जरासंधमभिद्रवत् ॥
जघान स्तनयोर्मध्ये बाहुभ्यां यदुनन्दनः ।
पुनश्च गदया रामो ललाटे तं जघान ह ।
जानुभ्यामपतद्भूमौ गतसंज्ञो जरासुतः ॥ [ 70 ]
उत्थाय सहसा भूमेर्जरासंधः प्रतापवान् ।
बलभद्रं जघानाशु सस्वनं मागधस्तदा ॥
ततो हलधरो वीरो गदया सर्वपुष्टया ।
चिच्छेद तां गदां वीरः कृष्णस्य पुरतस्तदा ॥
जरासंधस्तु बलवानुत्सृज्य महती गदाम् । [ 75 ]
पुनरन्यां महाचण्डां सर्वायुधसमन्विताम् ॥
आदाय निशितां घोरां तां जघान हलायुधम् ।
पुनश्च गदया तं तु ललाटेऽभ्यहनद्बली ॥
मुष्टिना च समाहत्य गदया च तदा भृशम् ।
तलेन च जघानाशु वासुदेवस्य पश्यतः ॥ [ 80 ]
ततो मूर्छा समापेदे बलभद्रः प्रतापवान् ।

---

-भूषितम् ( for -भूषणम् ) — ( L 40 ) $G_3$ सर्वत्र ( for सरब्धो ). $D_6$ $T_1$ $G_{2,5}$ $M_{1-3}$ नवभि· ( for निशितै. ) — ( L 44 ) $D_6$ $T_1$ $G_2$ $M_1$ रथेषां ( for रथाश्वांश् ) $G_3$ योधानश्वांश्च चिच्छेद ( for [a] ). — ( L 45 ) $D_6$ $T_{1\ 2}$ $G_3$ [आ]जौ, $G_2$ [अ]सौ ( for [अ]स्य ). $D_6$ $T_{1\ 2}$ $G_{2,3}$ $M_4$ [अ]स्य ( for [आ]जौ ) — $M_2$ om lines 48–52 — ( L 48 ) $T_?$ सिसृक्षुस्तस्य नाराचं ( for [a] ). $M_3$ चित्रसेनममर्षणम् ( for [b] ) — ( L 50 ) $T_3$ $G_{4\ 5}$ $M_{1\ 4}$ चित्रसेनं ( for °नो ) $M_3$ चित्रसेनं हि सप्तभिः ( for [b] ). — $M_3$ om ( hapl ) lines 51–52 — ( L, 52 ) $M_1$ पुनर्विव्याध विंशत्या ( for [a] ) — ( L 53 ) $D_6$ $T_{1-3}$ $G_{1-4}$ $M_4$ जरापुत्र· ( for °संध ) — ( L 54 ) $T_2$ $G_1$ बलवाञ् ( for भग° ) $M_1$ जरासधस्य धीमत· , $M_4$ °पुत्रस्तु धीमतः ( for [b] ). — ( L 56 ) $T_1$ $G_3$ $M_{1-3}$ तया , $T_2$ महा- ( for तदा ). $M_{1-3}$ सक्थिदेशे ( for बाहु° ) $T_3$ $G_{2\ 3}$ $M_4$ तदा बली ( by transp ), $G_4$ बलीयसा — ( L 57 ) $D_6$ $G_{1\ 4}$ $M_{1-3}$ स्तन- , $T_1$ $M_4$ [अ]स्याथ , $G_2$ [अ]थास्य , $G_?$ [आ]हत्य ( for [अ]स्य च ) — $G_3$ om ( hapl ) lines 58–59 — ( L 59 ) $D_6$ $T_1$ $G_4$ वीरो ( for वेगाज् ). $T_1$ स तु ; $T_2$ $G_1$ [अ]तीव ; $T_3$ $M_{1,2}$ [आ]गत्य, $G_4$ [अ]भ्येत्य ( for [आ]हत्य ). — ( L 60 ) $T_2$ $G_{1\ 4}$ वीरो ( for राजञ् ). $T_3$ अमर्षणः, $G_{2\ 4}$ °र्षिणम् ( for °र्षणम् ). — ( L 61 ) $T_1$ $G_{2\ 3}$ $M_4$ तममृष्यं , $M_{1\ 2}$ तदमृष्य ( for न ममर्ष ). — ( L, 62 ) $D_6$ $T_2$ $G_{1\ 4}$ जघान स्तनमध्ये तु ( for [a] ). — ( L, 65 ) $T_2$ $G_1$ [अ]वोचत् , $G_4$ वाचः ( for वाचं ) — $D_6$ $G_{1,4}$ $M_{1,3}$ om line 66 — ( L 68 ) $T_1$ बाहुभ्यां ( for जघान ). $T_{1\ 3}$ $M_4$ जघान मगधेश्वरम् ( for [b] ) — ( L. 69 ) $G_3$ मागधं ( for गदया ) — ( L 70 ) $T_1$ ससंज्ञोऽथ ; $G_3$ $M_4$ विसंज्ञोऽभूज् ; $M_{1-3}$ विसंज्ञोऽथ ( $M_3$ °ज्ञो हि ) ( for गतसंज्ञो ). — ( L 71 ) $D_6$ स तदा ( for सहसा ). $T_2$ $G_1$ उत्थाय स तदा वेगाज् ( for [a] ) — ( L 72 ) $T_1$ $G_{2\ 3}$ $M_1$ सस्वरं , $M_2$ सत्वरं ( for सस्वनं ). $G_5$ $M_3$ सस्वनं मागधेश्वरः ( for [b] ). — ( L 76 ) $D_6$ $T_1$ महाघण्टां ( for °चण्डां ). $D_6$ $M_{1-3}$ सर्वायस- ( for °युध ) $T_{1\ 3}$ $M_4$ -विभूषिताम् ( for -समन्विताम् ). — ( L 77 ) $D_6$ $M_{1\ 3}$ च गदां ( for निशितां ) $T_{1\ 3}$ $G_{2-5}$ M आजघान ( for तां ज° ) — ( L 78 ) $D_6$ $T_1$ $G_{2\ 3}$ $M_2$ न्यहनद् ( for ऽभ्य° ) — ( L. 79 ) $T_2$ $G_1$ [अ]भ्यहनद् ( for च तदा ). $D_6$ गदया च समन्वितः ; $T_3$ तलेनाशु जघान ह ( for [b] ). — $T_3$

सिंहनादं ततश्चक्रे राजा स मगधेश्वरः ॥
एतस्मिन्नन्तरे विष्णुः संज्ञां प्राप्य जरासुतम् ।
गदया पोथयामास दानवारक्तसिक्तया ।
जरापुत्रस्तदा तस्मै प्राहिणोच्छक्तिमुत्तमाम् ॥ [ 85 ]
तामापतन्तीं संप्रेक्ष्य गृहीत्वा विष्णुरव्ययः ।
तस्मिन्नेव ददौ वीरः साक्षाद्विष्णुर्बलेरिव ॥
स तया ताडितो राजा पपात च मुमोह च ॥
प्राप्तसंज्ञस्तदा राजा परिघेण समाहनत् ॥
तयोस्तु युद्धमभवत्परस्परवधैषिणोः । [ 90 ]
देवासुरसमं युद्धमासीत्प्रथमसंगमे ।
नमुचेश्चैव शक्रस्य रामरावणयोरिव ॥
उभौ तौ लोकविख्यातौ बले चास्त्रे च विश्रुतौ ।
उभावेव रणे वीरौ युद्धे च परिविश्रुतौ ॥
एतस्मिन्नन्तरे विष्णुः शार्ङ्गमादाय वीर्यवान् । [ 95 ]
शरेणाशनिकल्पेन विव्याध मगधेश्वरम् ॥
अर्दितः स तु राजेन्द्रो गदयापोथयद्धरिम् ।
स हित्वा तु तदा शार्ङ्गं गदया तं जघान ह ॥
बलभद्रोऽपि धर्मात्मा प्रहर्तुं तं विनिश्चितः ।
तदन्तरे प्राह वीरो दरदो नाम पार्थिवः । [ 100 ]
न युक्तं राम रामेति परासक्तं प्रति प्रभो ॥
तं दृष्ट्वा रोषताम्राक्षो हली मुसलमाददे ।
रामं हलधरं राजा प्रतीयाद्युद्धदुर्मदम् ॥
तयोस्तद्युद्धमभवद्गजयूथपयोरिव ॥

No 19.

T1. 3 G3 M cont. after App I ( No. 18 ):

जनमेजय उवाच ।

पराजितो जरासंधः कृष्णेन द्विजसत्तम ।
सबलः सानुगश्चैव किं मत्वा स्वगृहं गतः ॥
कष्टमेतज्जरासंधः कृतवान्बलसंमितः ।
पलायनं द्विजश्रेष्ठ तयोर्यादवसिंहयोः ॥
पुरतः कृतवान्ब्रह्मन्न युक्तं प्रतिभाति मे । [ 5 ]
जरासंधोऽपि राजेन्द्रः सर्वेषामग्रणीः स्थितः ॥
लज्जाकरमिदं मन्ये तस्य राज्ञो द्विजोत्तम ।
पृष्ठतश्च समागम्य पुरस्तात्पश्यतोर्ययौ ॥
किमुत्तरं ततो राजा जरासंधः प्रतापवान् ।
अकरोद्यदुसिंहस्य माधवस्य द्विजोत्तम । [ 10 ]
एतदाचक्ष्व मे ब्रह्मन्विस्तरेण तपोधन ॥

वैशंपायन उवाच ।

दग्ध्वा प्रयातो गोमन्ताद्राजा स मगधेश्वरः ।
व्रीळयावनतो भूत्वा स्वपुरीं प्रविवेश ह ॥
प्रविश्य स्वपुरं सोऽथ पादस्पृष्ट इवोरगः ।
न शर्म लभते रात्रौ न दिवा शोककर्शितः ॥ [ 15 ]
ततः कदाचिद्राजा तु दुःखशोकसमन्वितः ।

---

om line 80 — ( L 80 ) D6 हलिन ( for तलेन ) — ( L 81 ) D6 T2 G1 4 समालेभे ( for समापेदे ) — ( L 84 ) D6 T2 दानवक्षतिदक्षया ( for [b] ). — ( L 85 ) T3 G3. 5 M1-3 जरासधस् ( for °पुत्रस् ) —( L 87 ) T1 G2 देव ( for वीरः ) T3 तस्मै तां प्राहिणोद्देव ( for [a] ) D6 किरीटवत्, T2 बलादिव, G2 M1 4 किरीटभृत् ( for बलेरिव ) T1 3 G3. 5 M2 3 साक्षात्कृष्ण किरीटभृत्, G4 °द्विष्णुकरादिव ( for [b] ). — T2 G1 4 om ( hapl ) lins 88–92. — ( L 90 ) T3 G3 ततः सु-, G2 तयोस्तद् ( for तयोस्तु ) — ( L. 91 ) D6 देवासुरं पुरा युद्धम् ( for [a] ) D6 परम- ( for प्रथम- ). T1 -संगरे ( for °मे ). — ( L 93 ) T2 G1 शस्त्रे ( for चास्त्रे ). — D6 T2. 3 G1 3 om ( hapl ) line 94 —( L. 94 ) M2 उभौ ( for युद्धे ) M4 युद्धाय च परिश्रुतौ ( for [b] ). — ( L. 97 ) M4 अर्दित स जरासंधो ( for [a] ) —( L 98 ) T2 G2. 3 नियम्य ( for स हित्वा ) —( L 100 ) T3 G2 महावीर्यो ( for प्राह वीरो ) T3 G2 M4 वीर्यवान् ( for पार्थिवः ). — T3 om line 101 —( L 101 ) G2 स उक्त्वा सालमाददे ( for [b] ) — D6 G1 4 5 om lines 102–104 —( L. 103 ) M3 प्रतीतो युद्धमुत्तमम् ( for [b] )

**19**

( L 2 ) T3 G3 M4 कृत्वा ( for मत्वा ) — ( L 3 ) M1 2 एतत्कथं, M3 कथमेतज् ( for कष्ट° ) — T3 om line 8, and lines 12–13 M1 om ( hapl ) lines 8–10 — ( L 12 ) M1-3 तदापयातो गोमन्ताद् ( for [a] ). —( L 14 ) M1. 3 स्वगृहं ( for स्वपुरं ) T3 G3 M4 पदा स्पृष्ट ( for पाद-

नृपान्सर्वान्समाहूय वचनं चेदमब्रवीत् ॥
मन्त्रयामो नृपश्रेष्ठा महत्कार्यमुपस्थितम् ।
पराजितोऽस्मि राजेन्द्रा गोपाभ्यां राजसंसदि ॥
स सर्वैः पार्थिवैः सार्धं मन्त्रयामास मन्त्रवित् । [ 20 ]
अहो धिक्पौरुषं मन्ये यदस्मान्प्रति पार्थिवाः ॥
ये नृपा बलकृष्णाभ्यां निर्जिताः सबलानुगाः ।
निरोत्स्यामः पुरीं रम्यां मधुरां यादवैर्वृताम् ॥
भगवन्तः पुरीं तत्र मधुरां चतुरङ्गिणः ।
बलेन महता युक्ता हन्तुं तौ गोपकिल्बिषौ ॥ [ 25 ]
अन्यथा ह्ययशोऽस्माकं यावल्लोको वपुष्मताम् ।
प्रतिज्ञा च ममाप्येषा श्रूयतां पार्थिवोत्तमाः ॥
यौ तौ गोपकवीरौ हि तौ हत्वा तु स्वकं पुरम् ।
यास्यामि सत्यमेतद्धि बलैर्बहुभिरन्वितः ॥
बलानि बहुरूपाणि मम सन्ति नृपोत्तमाः । [ 30 ]
निःसाधनौ यादवकौ निष्कोशा दुर्बला हि ते ॥
अथ साध्या पुरी सर्वा नात्र कार्या विचारणा ।
ततो यूयं स्थिरां कृत्वा बुद्धिं युद्धाय पार्थिवाः ।
प्रयान्तु सर्वे राजानः कम्पयन्तो वसुंधराम् ॥
सर्वतः परिरोद्धव्या पुरी यादवपालिता । [ 35 ]
निर्मूला चैव सा कार्या भवद्भिः ख्यातकीर्तिभिः ॥

Colophon.

No. 20.

After adhy. 83, N ( except $Ś_{1}$ $Ñ_{1}$ ) $T_{2\ 4}$ $G_{1,\ 2\ 4\ 5}$ G( ed. ) ins.

वैशंपायन उवाच ।

एतस्मिन्नन्तरे प्राप्ता लोकप्रावृत्तिका नराः ।
चक्रायुधगृहं सर्वे लोकपालगृहोपमम् ॥
तेष्वात्ययिकशंसीषु लोकप्रावृत्तिकेष्विह ।
कृतसंज्ञा यदुश्रेष्ठाः समीयुः कृष्णसंसदि ॥
समागतेषु सर्वेषु यदुमुख्येषु संसदि । [ 5 ]
प्रावृत्तिका नराः प्राहुः पार्थिवात्ययिकं वचः ॥
जनार्दन नरेन्द्राणां पार्थिवानां समागमः ।
भविष्यति क्षितीशानां सुमहानित्यनेकशः ॥
त्वरितास्तत्र गच्छन्ति नानाजनपदेश्वराः ।
कुण्डिने पुण्डरीकाक्ष भोजपुत्रस्य शासनात् ॥ [ 10 ]

---

स्पृष्ट ). —( L 15 ) $M_{4}$ निशि वा ( for न दिवा ) — $T_{3}$ om ( hapl ) line 16 —( L 18 ) $M_{4}$ नृपश्रेष्ठ ( for °ष्ठा ) $T_{3}$ अवस्थितम् ; $G_{3}$ $M_{4}$ समुत्थितम् ; $M_{1}$ सुदुष्करम् , $M_{3}$ सुदुस्तरम् ( for उपस्थितम् ) —( L 19 ) $T_{3}$ पराजिता स्म राजेन्द्रा ( for $^{a}$ ) — $T_{3}$ om line 20. —( L 20 ) $M_{4}$ धर्मवित् ( for मन्त्र° ) —( L 22 ) $T_{1}$ $M_{1-3}$ गोप- ( for नृपा ) $M_{1\ 2,\ 4}$ सपदानुगा ( for सबला° ) — $T_{3}$ om. line 24 —( L 24 ) $M_{4}$ वेगवन्त ( for भग° ) $M_{2}$ वेगवन्त. पुरीं गत्वा ( for $^{a}$ ) —( L. 25 ) $T_{3}$ तौ हन्तुं रोषकिल्बिषा ( for $^{b}$ ). —( L. 26 ) $M_{1\ 3}$ यावल्लोकेषु घुष्यताम्; $M_{2}$ °कोऽवघुष्यते ( for $^{b}$ ). —( L. 28 ) $T_{3}$ -रूपौ ( for -वीरौ ) $T_{3}$ मधुरं ( for तु स्वकं ) —( L 31 ) $M_{1\ 2}$ निर्बला ( for दु° ) —( L 32 ) $M_{4}$ कार्या ( for सर्वा ) —( L 35 ) $M_{4}$ -योद्धव्या ( for -रो° ) —( L 36 ) $T_{3}$ निर्मूल ( for °ला ) — COLOPHON — *Adhy. no* · $M_{1-3}$ 106 — After the above, $T_{3}$ repeats 80 2–18 with the colophon

**20**

$Ñ_{1}$ wrongly reads lines 51, 56–74 after 84 13 $Ñ_{2}$ $V_{3}$ repeat lines 1–37 after adhy 86 —( L 1 ) $T_{2}$ $G_{1}$ -वृत्तिकरा ( for -प्रावृत्तिका ) — $Ñ_{2}$ $V_{3}$ ( both second time ) om line 2 —( L 3 ) $K_{1\ 4}$ $D_{1\ 2}$ तेष्वागत्योपविष्टेषु ; $D_{5}$ °गतेष्वसङ्गेषु ( for $^{a}$ ) — $Ñ_{2}$ $V_{3}$ ( both second time ) om ( hapl ) line 4 —( L 4 ) $K_{1,\ 3\ 4}$ $V_{2}$ $B_{1\ 2}$ Dn $D_{1-5}$ $T_{2-4}$ $G_{1\ 4,\ 5}$ समेता ( for समीयु· ). $K_{2}$ $Ñ_{2}$ V $B_{2\ 3}$ Ds $D_{6}$ -ससदम् ( for -संसदि ). —( L. 5 ) $D_{3}$ समवेतेषु सर्वेषु; $T_{3\ 4}$ समासीनेषु स° ( for $^{a}$ ) $K_{4}$ om lines $6^{b}$–$7^{a}$. — $B_{3}$ om. line 7 —( L. 7 ) $K_{1\ 3\ 4}$ Dn $D_{1.\ 2}$ समागमे ( for °मः ). —( L. 8 ) $K_{1\ 3\ 4}$ $D_{1\ 2}$ ददृशुर्दाक्षिणात्यानां; Dn अद्राक्षद्दाक्षिणात्यानां , Cal ed शशंसुर्दाक्षिणात्यानां ( for $^{a}$ ) $K_{1}$ $V_{2}$ ( second time ) Dn $D_{1\ 2}$ समूद्वान् ( for सुम° ). $B_{2\ 3}$ $D_{3-5}$ $T_{2}$ $G_{1\ 4\ 5}$ नैकश. ( for [अ]ने° ) $K_{3\ 4}$ समूहानि ह्यनेकशः ( for $^{b}$ ) —( L 9 ) $V_{2}$ सर्वे ( for नाना- ). G(ed) -पुरेश्वरा· ( for -पदे° ). —( L 10 ) $Ñ_{2}$ $V_{3}$ ( both both times ) $D_{2}$ कुण्डिनं ( for °ने ). $K_{4}$ कुण्डिनेशपुरे कृष्ण ( for $^{a}$ ). $D_{2}$ भोजराजस्य ( for °पुत्रस्य ) —( L 11 ) $Ñ_{2}$ $V_{3}$ ( both both times ) प्रकाशास्तु , $B_{3}$ सकाशं स्म ( for प्रकाशं स्म ). —( L. 12 ) $K_{1.\ 3\ 4}$ $Ñ_{2}$ ( both times ) 3 ( marg. ) $V_{1\ 3}$ ( both times ) Dn Ds $D_{1\ 2}$ ( *sup lin.* as above ) $T_{3,\ 4}$ प्रथमा

प्रकाशं स्म कथास्तत्र श्रूयन्ते मनुजेरिताः ।
रुक्मिणी किल नाम्ना स्त्री रुक्मिणः प्रथिता स्वसा ॥
भावी स्वयंवरस्तत्र तस्याः किल जनार्दन ।
इत्यर्थमेते नृवरा गच्छन्ति सबलानुगाः ॥
तस्यास्त्रिलोकसुन्दर्यास्तृतीयेऽहनि यादव । [ 15 ]
रुक्मभूषणभूषिण्या भविष्यति स्वयंवरः ॥
राज्ञां तत्र समेतानां हस्त्यश्वरथगामिनाम् ।
द्रक्ष्यामः शतशस्तत्र शिबिराणि महात्मनाम् ॥
सिंहशार्दूलदर्पाणां मत्तद्विरदगामिनाम् ।
सदा युद्धप्रियाणां हि परस्परममर्षिणाम् ॥ [ 20 ]
जयाय शीघ्रं सहिता बलौघेन समन्विताः ।
निरुद्धाः पृथिवीपालाः किमेकान्तचरा वयम् ।
निरुत्साहा भविष्यामो गच्छामो यदुसत्तम ॥
श्रुत्वैतत्केशवो वाक्यं हृदि शल्यमिवार्पितम् ।
निर्जगाम यदुश्रेष्ठो यदूनां सहितो बलैः ॥ [ 25 ]
यादवास्ते बलोदग्राः सर्वे संग्रामलालसाः ।
निर्ययुः स्यन्दनैर्दिव्यैर्गर्वितास्त्रिदशा इव ॥
बलाग्रेण नियुक्तेन हरिरीशानसंमितः ।
चक्रोद्यतकरः कृष्णो गदापाणिर्व्यरोचत ॥
यादवाश्चापरे तत्र वासुदेवानुयायिनः । [ 30 ]
रथैरादित्यसंकाशैः किंकिणीप्रतिनादितैः ॥
उग्रसेनं तु गोविन्दः प्राह निश्चितदर्शनः ।
तिष्ठ त्वं नृपशार्दूल भ्रात्रा मे सहितोऽनघ ॥
क्षत्रिया निकृतिप्रज्ञाः शास्त्रज्ञाश्छिद्रदर्शिनः ।
पुरीं शून्यामिमां वीर जघन्याः पीडयन्ति नः ॥ [ 35 ]
अस्माकं शङ्किताः सर्वे जरासंधवशानुगाः ।
मोदन्ते सुखिनस्तत्र देवलोके यथामराः ॥
तस्य तद्वचनं श्रुत्वा भोजराजो महायशाः ।

---

( for प्रथिता ) —( L. 14 ) T4 G(ed ) सबला ( for नृवरा ). Ñ2 V3 ( both second time ) इत्यर्थं नृवरा सर्वे ( for $^a$ ). T4 G(ed ) गच्छन्ति मनुजाधिपाः ; G2 °न्ति सहसैनिकाः ( for $^b$ ) —( L 15 ) K1 3 4 Ñ2 ( second time ) 3 ( marg ) V1 2 B D ( except Ds ) T3 4 G1 G(ed ) त्रैलोक्य- ( for त्रिलोक- ) — Ñ2 ( second time ) T3 G4 om ( hapl. ) lines 18–19 V3 ( first time ) om ( hapl ) line 18 —( L 18 ) G2 द्रक्ष्यामस्तत्र वृन्दानि ( for $^a$ ) K2 Ñ3 V1 B Ds वृन्दानि च , G2 शतशश्च ( for शिबिराणि ) —( L 19 ) K1, 3 V2 B2 Dn D1 2 ( *sup lin* as above ) T2 4 G1 5 -दसानां ( for -दर्पाणा ) —( L. 20 ) G2 तेषां ( for सदा ) D3 परस्परजयैषिणाम् , T3 स्वयंवरसुहर्षिणाम् ( for $^b$ ). —( L 21 ) Ñ3 ( marg as above ) D2 ( *sup lin.* ) व्रजामः ( for जयाय ). K4 त्वरिता ( for सहिता ) Ñ2 V3 ( both both times ) जग्मुश्च सहितास्तत्र ; V1 जयाय सहिताः शीघ्रं ; G3 व्रजामस्तत्र सहिता ( for $^a$ ) D3 बलोपेता ( for बलौघेन ) —( L 22 ) K1 V3 ( second time ) निबद्धाः , K4 विवृद्धा , D5 निर्वैराः ( for निरुद्धा ). K2 Ñ3 V2 B2, 3 Ds D4 6 T3 4 -पालैः ( for -पाला ) V2 B1 Ds2 किमेकान्ततरा ( V2 °रिता ) वयम् ( for $^b$ ) —( L. 23 ) K2 गमिष्यामो , D3 निरुद्योगा ( for भविष्यामो ) V1 निरुत्साहान्करिष्यामो ( for $^a$ ) K1 3 4 Ñ2 ( first time ) V1 B1 2 Dn D1–5 T2–4 G1 4 5 -नन्दन , K2 -सत्तमाः ( for °म ) —( L 25 ) V1 रणे ( for बलैः ). —( L 27 ) K1 3 4 Ñ2 ( second time ) V2 3 ( second time ) Dn D1–5 T2–4 G1, 4 5 निर्ययुः स्यन्दनवरैर् ( for $^a$ ) K1 वेगितास् ( for गर्वि° ). —( L 28 ) Ñ2 V3 ( both second time ) बलोदग्रेण युक्तेन ( for $^a$ ) Ñ2 V3 ( both second time ) स हि ( for हरिर् ). —( L. 29 ) K2 व्यचोदयत् , K4 Ñ3 D1 G2 व्यरोचयत् ( for °चत ) — For the second occurrence of line 29, Ñ2 V3 subst

1** कृष्णोऽपि हि गदापाणिः शार्ङ्गशङ्खगदासिभृत् ।

—( L 30 ) T3 4 -मोदिता ( for -यायिनः ) —( L 31 ) G2 काञ्चन- ( for आदित्य- ) V2 -शत- , D5 -जाल- ( for -प्रति- ) — After line 31, K3 ins

2** अन्वयुः पुण्डरीकाक्षं स उवाच यदुप्रभुम् ।
नानाशक्तिप्रहरणैः स्वानुगैः परिवारितः ॥

— K3 om lines 32–33 K2 om line 32 —( L 32 ) Ds -दर्शनम् ( for °न ). —( L 33 ) D3 4 G4 नर- ( for नृप- ). V3 ( second time ) D6 ( marg ) पित्रा मे , G2 रामेण ( for भ्रात्रा मे ) G4 नृप ( for ऽनघ ) —( L. 34 ) G5 शत्रुज्ञाश् ( for शास्त्रज्ञाश् ) K1 3 4 Dn D2–5 T2–4 G4 शा( K4 G4 श )स्त्रनिश्चित( D3 T3 °श्चय )दर्शना ( for $^b$ ). —( L 35 ) Ñ2 V3 ( both second time ) ज्ञात्वा , G2 वीक्ष्य ( for वीर ) K2 V2 B2 D2 4 6 T2–4 G1 4 5 जघन्यैः ( for °न्याः ) K1 3 D1 2 ( before corr ) 5 G(ed ) जघन्येना( K3 °ने चा )भिपालयन् , K4 °न्यानभिपालय ; Ñ2 V3 ( both second time ) जघ्नुस्ते बलबृंहि( V3 °सवृ )ता , Ñ3 ( marg. ) जघ्नुस्तामभिपीडयन् , Dn जघन्येऽभिपतन्ति ह ( for $^b$ ). —( L 37 ) D1, 2 ( marg. as above ) मानिनस् ( for

कृष्णस्नेहेन विकृतं बभाषे वचनामृतम् ॥
कृष्ण कृष्ण महाबाहो यदूनां नन्दिवर्धन ॥ [ 40 ]
श्रूयतां यदहं त्वद्य वक्ष्यामि रिपुसूदन ॥
त्वया विहीनाः सर्वे स्म न शक्ताः सुखमासितुम् ।
पुरेऽस्मिन्विषयान्ते वा पतिहीना इव स्त्रियः ॥
त्वत्सनाथा वयं तात त्वद्बाहुबलमाश्रिताः ।
बिभीमो न नरेन्द्राणां सेन्द्राणामपि मानद ॥ [ 45 ]
विजयाय यदुश्रेष्ठ यत्र यत्र गमिष्यसि ।
तत्र त्वं सहितोऽस्माभिर्गच्छेथा यादवर्षभ ॥
तस्य राज्ञो वचः श्रुत्वा सस्मितं देवकीसुतः ।
यथेष्टं भवतामद्य तथा कर्तास्म्यसंशयम् ॥

Colophon.

वैशंपायन उवाच ।

एवमुक्त्वा तु कृष्णो हि जगामाशु रथेन वै । [ 50 ]
भीष्मकस्य गृहं प्राप्तो लोहितायति भास्करे ॥
प्राप्ते राजसमाजे तु शिबिराकीर्णभूतले ।
रङ्गं सुविपुलं दृष्ट्वा राजसी तनुमाविशत् ॥
वित्रासनार्थं भूपानां प्रकाशार्थं पुरातनम् ।
मनसा चिन्तयामास वैनतेयं महाबलम् ॥ [ 55 ]
ततश्चिन्तितमात्रस्तु विदित्वा विनतात्मजः ।
सुखलक्ष्यं वपुः कृत्वा निलिल्ये केशवान्तिके ॥
तस्य पक्षनिपातेन पवनोद्भ्रान्तकारिणा ।
कम्पिता मनुजाः सर्वे न्युब्जाश्च पतिता भुवि ।
शिरोभिः पतिताः सर्वे प्रावेपन्त यथोरगाः ॥ [ 60 ]
तान्संनिपतितान्दृष्ट्वा कृष्णो गिरिरिवाचलः ।
स तदा पक्षवातेन मेने पतगसत्तमम् ॥
ददर्श गरुडं प्राप्तं दिव्यस्रगनुलेपनम् ।
पक्षवातेन पृथिवीं चालयन्तं मुहुर्मुहुः ॥
पृष्ठासक्तैः प्रहरणैर्लेलिहद्भिरिवोरगैः । [ 65 ]

---

सुखिनस् ) $K_1$ तेऽत्र , $K_3$ चात्र ( for तत्र ). $V_1$ सुराः ( for [अ]मराः ) — After line 37, $Dn_1$ reads line 50 repeating it in its proper place — $K_{3\,4}$ $D_1$ om lines 38–49 , $K_1$ reads the same on marg (*sec m* ) Before line 38, B ins वैशंपायन उवाच — ( L 39 ) $B_1$ कृत्स्नं ; $B_3$ $D_{4-6}$ $G_2$ कृष्णं ( for कृष्ण- ) $\tilde{N}_2$ $V_3$ कृष्णं स्ने( $V_3$ °ष्णस्ने )हादविकृतं ( for $^a$ ) — $D_2$ om line 41 — ( L 41 ) $V_3$ तावद् , $D_8$ तात ( for त्वद्य ) $V_3$ मधु- ( for रिपु- ) — ( L 42 ) $T_2$ समरे ( for सर्वे स्म ). — ( L. 44 ) $D_3$ नाथ ( for तात ). — ( L 47 ) Dn $T_1$ $G_{1, 2\,4}$ गच्छ यादवनन्द( $T_2$ $G_1$ °वर्ध )न ( for $^b$ ) — ( L. 48 ) $T_4$ सस्मितो ( for °तं ). — $Ds_2$ reads line 49 twice — ( L 49 ) $V_1$ $D_2$ $T_1$ $G_{2\,4}$ [अ]संशय ; $Ds_1$ भोजज ( for [अ]-संशयम् ). — Colophon om in Ds $T_{3\,4}$. — *Mention of Khila* $K_{1, 2}$ $\tilde{N}_{2, 3}$ V B $Dn_2$ $D_{2-6}$ $T_2$ $G_{1\,2\,4\,5}$. — *Adhy name* $K_{1\,2}$ $\tilde{N}_{2\,3}$ V B $Dn_2$ $D_{2-6}$ मन्त्रोदाहरणम् — *Adhy no.*. $\tilde{N}_3$ 104 , $B_2$ 108 , $T_2$ $G_4$ 103 , $G_1$ 105 , $G_2$ 107 , $G_5$ 106 — *Śloka no.*: $T_2$ 24 , $G_1$ 25.

$D_5$ $T_{3, 4}$ om the ref — ( L. 50 ) $K_{1, 3\,4}$ $Dn_1$ ( first time ) $n_2$ $D_1$ $T_4$ वै कृष्णो , $V_{2\,3}$ $D_{4, 5}$ $T_3$ $G_{2\,4\,5}$ कृष्णो वै , $T_2$ $G_1$ कृष्णं वै ( for कृष्णो हि ) — ( L 51 ) $\tilde{N}_2$ $G_1$ पुरं ( for गृहं ) $G_4$ लोहिते भास्करे सति ( for $^b$ ). — ( L. 52 ) $K_2$ $\tilde{N}_{2, 3}$ V $B_2$ $D_2$ $G_2$ शिबिकाकीर्णभूतले ; $T_{3\,4}$ शिबिराकुलभू° ( for $^b$ ) — ( L 53 ) $D_3$ -विमलं ( for -विपुलं ) — ( L 54) $K_{1\,4}$ ( before corr ) $\tilde{N}_{2\,3}$ ( marg ) $V_{1\,3}$ $B_2$ $D_{3, 4}$ भूताना ( for भूपाना ) $K_3$ Dn त्रासनार्थं च भूपानां ( for $^a$ ). $D_{1\,2}$ सस्मारार्थं ( for प्रकाशार्थं ) — ( L 56 ) $D_1$ विदित्वा विभवमात्मनः ( hypermetric ) , $G_2$ °त्वा विनतासुतः ( for $^b$ ). — ( L 57 ) $K_2$ $G_2$ सूक्ष्मलक्ष्यं ( for सुख° ). $G_2$ ह्यभ्ययात् ( for निलिल्ये ). — ( L 58 ) $\tilde{N}_2$ तस्य पक्षाभिपातेन ( for $^a$ ). $\tilde{N}_1$ पवनोद्धूतकारिणा , $\tilde{N}_2$ पर्वताग्रानु° , $V_3$ पूर्वतोक्रान्ति° ( for $^b$ ) — ( L 59 ) $T_4$ कुपिता ( for कम्पिता ) $\tilde{N}_1$ यादवा ( for मनुजाः ) $G_2$ भ्रान्ताश् ( for न्युब्जाश् ). $T_2$ $G_{4\,5}$ इव ( for भुवि ) — ( L 60 ) $K_3$ Dn तथाभि- ; $V_3$ गदाभि ; $D_3$ कम्पिता ( for शिरोभिः ). $K_2$ $\tilde{N}_2$ $V_2$ $D_{1\,2\,4\,5}$ $T_{3\,4}$ $G_{2\,4\,5}$ गरुडाभिहताः सर्वे ; $\tilde{N}_1$ यादवाश्च हताः सर्वे , $T_2$ $G_1$ गरुत्मना हताः सर्वे ( for $^a$ ). $K_{1, 3}$ $T_3$ प्रवेष्टन्तो ( $K_3$ °न्ते ), $K_4$ Dn प्रचेष्टन्ते ( $K_4$ °न्तो ), $V_{2, 3}$ $D_{2, 6}$ $G_{1\,4\,5}$ प्रवेपन्तो ( for प्रावेपन्त ) $\tilde{N}_{1, 2}$ प्रवेपन्तो महोर( $\tilde{N}_2$ यथा न )गाः , $D_3$ व्यचेष्टन्त इवोरगा ( for $^b$ ). — ( L 61 ) $D_4$ सर्वान् , G( ed ) ह नि- ( for संनि- ) $K_2$ तं संनिपतितं दृष्ट्वा ( for $^a$ ) — ( L 62 ) $D_1$ रजः- ; $D_2$ ताक्ष्यं- ( for तदा ). $K_2$ $\tilde{N}_{2\,3}$ V $Ds_2$ $D_{4, 5}$ $T_2$ $G_{2\,4\,5}$ -पातेन ( for -वा° ) $K_{1\,3\,4}$ $\tilde{N}_1$ $D_3$ $T_{3\,4}$ $G_1$ स राज्ञः पक्षपातेन ( for $^a$ ). $V_3$ $D_{1-3\,5}$ मेने पतगमागतम् ( for $^b$ ) — ( L. 63) $V_3$ दीप्तं ( for प्राप्तं ) $D_{1\,3}$ स्रग्गन्ध- ( for -स्रगनु- ). — ( L. 64 ) $K_{1\,4}$ $D_2$ ( marg ). $_{3\,4}$ -पातेन ; $D_2$ -घा° ( for

वैष्णवं हस्तसंश्लेषं नाम्यमानमधोमुखम् ॥
चरणाभ्यां प्रकर्षन्तं पाण्डुरं भोगिनां वरम् ।
हेमपत्रैरुपचितं धातुमन्तमिवाचलम् ॥
अमृतारम्भहर्तारं द्विजिह्वेन्द्रविनाशनम् ।
त्रासनं दैत्यसंघानां वाहनं ध्वजलक्षणम् ॥ [ 70 ]
तं दृष्ट्वा स ध्वजं प्राप्तं सचिवं सांपरायिकम् ।
धृतिमन्तं गरुत्मन्तं जगाद मधुसूदनः ॥
दृष्ट्वा परमसंहृष्टः स्थितं देहमिवापरम् ॥
तुल्यसामर्थ्यया वाचा गरुत्मन्तमुपस्थितम् ॥
स्वागतं खेचरश्रेष्ठ सुरसेनारिमर्दन । [ 75 ]
विनताहृदयानन्द स्वागतं केशवप्रिय ॥
व्रज पत्रिवरश्रेष्ठ कैशिकस्य निवेशनम् ।
वयं तत्रैव गत्वाद्य प्रतीक्षामः स्वयंवरम् ॥
राज्ञां तत्र समेतानां हस्त्यश्वरथगामिनाम् ।
द्रक्ष्यामः शतशस्तत्र समेतानां महात्मनाम् ॥ [ 80 ]
एवमुक्त्वा महाबाहुर्वैनतेयं महाबलम् ।
जगामाथ पुरीं कृष्णः कैशिकस्य महात्मनः ।
वैनतेयसखः श्रीमान्यादवैश्च महारथैः ॥
विदर्भनगरी प्राप्ते कृष्णे देवकिनन्दने ।
हृष्टाः प्रमुदिताः सर्वे निवेशायोपचक्रमुः । [ 85 ]
सर्वे शस्त्रायुधधरा राजानो बलशालिनः ॥
एतस्मिन्नेव काले तु राजा नयविशारदः ।
कैशिकः प्रति चोत्थाय प्रहृष्टेनान्तरात्मना ॥
अर्घमाचमनं दत्त्वा स राजा कैशिकः स्वयम् ।
सत्कृत्य विधिवत्कृष्णं स्वपुरं संप्रवेशयत् ॥ [ 90 ]
पूर्वमेव तु कृष्णाय कारितं दिव्यमन्दिरम् ।
विवेश सबलः श्रीमान्कैलासं शंकरो यथा ।
खाद्यपानादिरत्नौघैरर्चितो वासवानुजः ॥
सुखेनैवोषितः कृष्णस्तस्य राज्ञो निवेशने ।
पूजितो बहुमानेन स्नेहपूर्णेन चेतसा ॥ [ 95 ]

Colophon

---

-वा°) $\tilde{N}_3$ (marg as above) कम्पयन्तं (for चाल°). — (L 65) $K_2$ पृष्ठासक्त- (for °क्तै) $K_{1\ 3\ 4}$ $\tilde{N}_{1\ 2}$ $V_3$ Dn $D_{1\ 2,\ 4}$ $T_3$ लेलिह्यन्तम्, $T_2$ देहवद्भिर् (for लेलिहद्भिर्) $D_4$ (marg) सह्यं गिरिमिवोरगै (for $^{b}$). — (L 66) $K_3$ सह- (for हस्त-). $K_2$ मानयानम् (for नाम्यमानम्) $V_2$ B $D_s$ अवाङ्मुखम् (for अधोमुखम्). $K_{1\ 3\ 4}$ Dn $D_{1\ 2}$ $T_4$ $G_2$ मन्यमानैरवाङ्मुखैः, $V_3$ $D_{4\ 5}$ नाम्यमानैरवाङ्मुखै; $D_2$ (marg) नाथमानैरवाङ्मुखम्, $D_3$ नीयमानेरथाशुगम् (for $^{b}$) — (L 67) $D_{3\ 4}$ विकर्षन्तं (for प्रक°) — (L 68) $G_4$ उपचितैर् (for °तं). $D_3$ भानुमन्तम् (for धातु°) — (L 69) $D_{3,\ 5}$ -कर्तारं (for -हृ°) — $K_2$ om lines 70–74. — (L 70) $G_2$ सैन्य- (for दैत्य). $D_3$ द्विज- (for ध्वज-) — (L. 71) $T_2$ $G_{1,\ 5}$ स (for तं) $K_3$ $Dn_2$ $D_1$ $T_3$ स्वं, $D_2$ स्व- (for स). $\tilde{N}_2$ दृष्ट्वा स स्वध्वज प्राप्तं (for $^{a}$) — (L 72) $D_3$ ध्वनिमन्तं (for धृति°) $V_1$ $D_1$ $G_{1,\ 5}$ जगाम (for °द) — (L. 73) $\tilde{N}_3$ $V_1$ $B_1$ $D_s$ $D_6$ $G_2$ तुष्ट- (for दृष्ट्वा) $\tilde{N}_1$ तमुवाच ततः कृष्ण- (for $^{a}$). $K_{1\ 3\ 4}$ $B_2$ Dn $D_{1-4\ 6}$ $T_{2-4}$ $G_{1\ 4\ 5}$ देवम्, $\tilde{N}_1$ दक्षम् (for देहम्) — (L 74) $K_3$ तुल्यसामर्थ्यवपुषा; $K_4$ °र्थ्यमवदद्, G(ed) तुल्यं समर्थया वाचा (for $^{a}$) $K_1$ $B_{1,\ 3}$ $Dn_2$ $D_{1\ 5}$ इव स्थितम्, $K_3$ व्यवस्थितम्, $K_4$ $\tilde{N}_{1\ 3}$ (marg) $V_2$ $Dn_1$ $D_{2-4}$ $T_{2-4}$ $G_{1\ 4,\ 5}$ अव° (for उप°) — After line 74, $\tilde{N}_1$ ins.:

5** जगाम त्रिदिवश्रेष्ठं भोजस्यान्त पुरं महत् ।

— Before line 75, some Mss ins श्रीकृष्ण उवाच and some श्रीभगवानुवाच. — (L 75) $K_2$ $D_4$ $G_2$ ते खग- (for खेचर-). — $T_4$ om lines 76–82. — (L 77) $K_3$ Dn $D_2$ $T_2$ पत्ररथ-; $V_3$ पत्रिव्रज-, $D_3$ मन्त्रिवर- (for पत्रि°). $G_2$ व्रज पक्षिनृपस्याद्य (for $^{a}$) — (L 80) $V_3$ शिबिराणि (for समेताना) — (L 82) $D_3$ पुर (for पुरीं) — (L 83) $T_2$ $G_1$ वैनतेयं समाश्रित्य, $T_3$ °येन च श्रीमान् (for $^{a}$). $D_3$ महाबल (for °रथै). — (L 86) $D_3$ यादवा (for राजानो) — Before line 87, some Mss ins वैशंपायन उवाच — (L 87) $V_2$ एतस्मिन्नन्तरे प्राप्ते (for $^{a}$) — (L. 88) $K_2$ $\tilde{N}_2$ $V_1$ B $D_s$ $T_2$ $G_{1\ 2\ 4,\ 5}$ G(ed) कैशिकस्तत ($V_1$ °त्र) उत्थाय, $\tilde{N}_3$ $V_3$ भीष्मकस्तत उत्थाय (for $^{a}$). — (L 89) $\tilde{N}_3$ $V_1$ $D_{3\ 5}$ अर्घमाचमनीयं च (for $^{a}$) $D_{3-5}$ दत्त्वास्मै (for स राजा) $\tilde{N}_3$ $V_1$ दत्त्वा राजा स कैशिकः (for $^{b}$). — (L 90) $K_2$ Dn संन्यवेशयत्, $K_3$ सुप्रवेश्य च, $\tilde{N}_3$ $V_1$ संप्रवेशित (for संप्रवेशयत्) $D_3$ स्वकं वेश्म प्रवेशयत (for $^{b}$). — (L. 91) $K_2$ $D_5$ कृष्णस्य (for कृष्णाय). — (L 93) $D_3$ $G_2$ अन्न- (for खाद्य-) $\tilde{N}_2$ $V_{2\ 3}$ $D_2$ -रत्नाद्यैर् (for -रत्नौघैर्). — (L 94) $K_3$ $\tilde{N}_2$ $V_3$ $D_4$ चोषितः; $D_2$ (before corr as above) $_3$ ह्यु°, $D_5$ शायित, $T_3$ विष्ठित- (for उषित). $Dn_2$ $D_s$ सुखेनैवोषितः

वैशंपायन उवाच ।
ते कृष्णमागतं दृष्ट्वा वैनतेयं महाद्युतिम् ।
बभूवुश्चिन्तयाविष्टाः सर्वे नृपतिसत्तमाः ॥
ते समेत्य गता राजन्राजानो भीमविक्रमाः ।
मन्त्राय मन्त्रकुशला नीतिशास्त्रार्थवित्तमाः ॥
भीष्मकस्य सभां गत्वा रम्यां हेमपरिष्कृताम् । [ 100 ]
सिंहासनेषु चित्रेषु विचित्रास्तरणेषु च ।
निषेदुस्ते नृपवरा देवा देवसभामिव ॥
तेषां मध्ये महाबाहुर्जरासंधो महाबलः ।
बभाषे सुमहातेजा देवान्देवेश्वरो यथा ॥
श्रूयतां भो नृपश्रेष्ठा भीष्मकश्च महामतिः । [ 105 ]
कथ्यमानं यथाबुद्ध्या वचनं वदतां वराः ॥
योऽसौ कृष्ण इति ख्यातो वसुदेवसुतो बली ।
वैनतेयसहायेन संप्राप्त इह कुण्डिनम् ॥
कन्याहेतोर्महातेजा यादवैरभिसंवृतः ।
अवश्यं कुरुते यत्नं कन्यावाप्तिर्यथा भवेत् ॥ [ 110 ]
यदत्र कारणं कार्यं सुनयोपेतवद्धितम् ।
कुरुध्वं नृपशार्दूला विनिश्चित्य बलाबलम् ॥
पादातौ तौ महावीर्यौ वसुदेवसुतावुभौ ।
वैनतेयं विना तस्मिन्गोमन्ते पर्वतोत्तमे ।
यत्कृतं सुमहद्घोरं भवद्भिर्विदितं हि तत् ॥ [ 115 ]
कृष्णस्य यादवैश्चैव भोजान्धकमहारथैः ।
समेत्य युध्यमानस्य कीदृशो विग्रहो भवेत् ॥
कन्यार्थे यतमानेन गरुडस्थेन विष्णुना ।
कः स्थास्यति रणे तस्मिन्नपि शक्रः सुरैः सह ॥
यदा चास्मै नापि सुता कदाचित्संप्रदीयते । [ 120 ]
ततो ह्ययं बलादेनां नेतुं शक्तः सुरैः सह ॥
पुरा एकार्णवे घोरे श्रूयते मेदिनी त्वियम् ।

---

कृष्णस् ( for $^a$ ) —( L 95 ) $D_5$ $T_4$ पूर्वेण ( for -पूर्णेन ).
COLOPHON — *Mention of the Epic* $K_3$ $Ds_2$ $T_3$ $G_5$. — *Mention of Khila* K $\tilde{N}_{2\ 3}$ V B D $T_{2-4}$ $G_{1\ 2\ 4\ 5}$. — *Adhy name* K $\tilde{N}_{2\ 3}$ V B D $T_{2,4}$ $G_1$ रुक्मिणीस्वयंवरम् — *Adhy. no* $\tilde{N}_3$ $V_3$ $B_2$ 105, Dn $Ds_2$ $D_4$ 102; $D_1$ 99, $D_2$ $G_4$ 100, $D_3$ 110, $T_2$ 104; $T_3$ 103, $T_4$ 94, $G_1$ 106; $G_2$ 108, $G_5$ (marg) 101. — *Śloka no*. $Dn_1$ 40, $Ds_2$ 46; $D_3$ 23
—(L 96) $K_{1-3}$ $\tilde{N}_2$ $B_3$ $Ds_1$ $D_{2-4}$ $T_4$ $G_2$ सहाच्युतम् ( $K_2$ °ता ); $K_4$ खगाग्रजम् ( for महाद्युतिम् ). $\tilde{N}_3$ $V_{1\ 2}$ $B_{1,2}$ Dn $Ds_2$ $D_{1\ 5\ 6}$ $T_3$ वैनतेयस( $V_2$ °यैः स )हाच्युतम् ( for $^b$ ). —( L. 97 ) $G_5$ ते नृप- ( for नृपति- ) —( L 98 ) $\tilde{N}_3$ $V_1$ महाराज; $V_3$ गतो राज्यां; $D_2$ ( *sup. lin* ) ततो राजन्, $G_2$ गता. सर्वे; $G_{4\ 5}$ सभां राजन् ( for गता रा° ). —( L 99 ) $\tilde{N}_2$ $V_3$ $B_2$ मन्त्रयुर्; $T_2$ $G_{1\ 5}$ मन्त्रार्थं ( for मन्त्राय ) $B_1$ नीतिशास्त्रविदुत्तमाः; $T_2$ $G_1$ °स्त्रविशारदा ( for $^b$ ) — After line 102, $Ds_1$ ins
6** भयसंविग्नमनसो बभूवुश्चिन्तयान्विताः ।
While $D_3$ ins after line 102
7** अथाब्रवीज्जरासंधो वचनं वदतां वरः ।
—( L 103 ) $D_3$ महातेजा ( for °बाहुर् ) $D_3$ om ( hapl ) lines $103^b$–$104^a$. —( L 104 ) Cal ed विश्वेश्वरो ( for देवे° ) — Before line 105, some Mss ins जरासंध उवाच —( L. 105 ) $D_5$ $G_2$ नर- ( for नृप- ). $K_2$ महामते, $\tilde{N}_2$ $V_3$ $T_2$ $G_{4,5}$ °द्युतिः; $T_3$ महीपतिः ( for महामतिः ). —( L. 106 ) $K_{2\ 4}$ $Ds$ $D_{1\ 2\ 4}$ $T_{2-4}$ $G_{1\ 2\ 4\ 5}$ मया ( for यथा- ) —( L 108 ) $T_4$ वैनतेयेन सहित ( for $^a$ ) $K_{1,3}$ $D_4$ संप्राप्तः कुण्डिनमिह, $K_4$ $\tilde{N}_2$ B Dn $D_{2\ 3\ 6}$ $T_{3,4}$ °प्तः कुण्डिनं त्विह; $\tilde{N}_3$ $V_{1,2}$ $Ds_1$ $T_2$ $G_{1\ 4\ 5}$ °प्त इह कुण्डिने, $D_1$ स प्राप्तः कुण्डिनामिह; $D_5$ °प्तः कुण्डिनं हि सः ( for $^b$ ). —( L. 109 ) $D_6$ -संहितः ( for -संवृत ) — $Dn_1$ repeats line 110 after line 112. —( L 110 ) $K_{2,4}$ कन्याप्राप्तिर् ( for °वाप्तिर् ) —( L 111 ) $T_2$ $G_{1\ 5}$ [अ]-नन्तरं ( for कारणं ) $D_1$ यदि प्रतारणं कार्यं ( for $^a$ ) Dn सुनयोपेतमृद्धितम्; $D_1$ $T_2$ $G_{1\ 5}$ सुनयो येन वर्धते; $T_{3,4}$ सुनयोपेतमव्ययम्, $G_2$ ह्यनयोपेतमद्भुतम्, $G_4$ सुनयेन च वर्धितम् ( for $^b$ ) — $K_3$ om. lines 113–118 $K_4$ om. lines 113–119 —( L 113 ) $K_1$ यदागतौ, $K_2$ पदाती तौ, $\tilde{N}_2$ $V_3$ यदैतौ तौ; $\tilde{N}_3$ $Ds$ $D_{4,6}$ पादस्थौ तौ; $\tilde{N}_3$ ( marg ) $V_1$ $D_{2,5}$ $G_{4\ 5}$ यदा च तौ, $B_2$ पदातौ तौ; Dn $G_2$ पदातिनौ; $D_1$ यादवौ तौ, $D_3$ पदातीमौ; $T_{2-4}$ $G_1$ यथा च तौ ( for पादातौ तौ ) —( L 115 ) $\tilde{N}_2$ सुमहद्यानं, $D_{3-5}$ $T_2$ $G_{1\ 4\ 5}$ सुमहाघोरं ( for सुमहद्घोरं ). Dn कृतवन्तौ महाघोरं ( for $^a$ ) $D_3$ बहुभिर् ( for भवद्भिर् ) $\tilde{N}_2$ महत्, $D_4$ तु तत् ( for हि तत् ) —( L 116 ) Dn $D_6$ $T_{2\ 4}$ $G_{1,2\ 4,5}$ वृष्णिभिर् ( for कृष्णस्य ) $K_1$ बृहद्बलैर्यादवैश्च, $V_{1\ 3}$ $D_{2\ 4\ 5}$ वृष्णयो यादवाश्चैव ( for $^a$ ). —( L 118 ) $V_3$ $D_3$ $T_2$ $G_{1\ 5}$ कन्यार्थं ( $V_3$ $D_3$ °र्थे ) यतमानस्य, Bom Poona eds. G(ed) °र्थे यततानेन ( for $^a$ ) $D_3$ गरुडस्थस्य शार्ङ्गिणः ( for $^b$ ). —( L. 119 ) $D_3$ के स्थास्यन्ति ( for कः स्थास्यति ). $K_3$ $D_2$

पातालस्य तले मग्ना विष्णुना प्रभविष्णुना ।
वाराहं रूपमास्थाय उद्धृता जगदादिना ।
हिरण्याक्षश्च दैत्येन्द्रो वराहेण निपातितः ॥ [ 125 ]
हिरण्यकशिपुश्चैव महाबलपराक्रमः ।
अवध्योऽमरदैत्यानामृषिगन्धर्वकिंनरैः ॥
यक्षराक्षसनागानां नाकाशे नावनिस्थले ।
न चाभ्यन्तररात्र्यह्नोर्न शुष्केणार्द्रकेन च ॥
अवध्यस्त्रिषु लोकेषु दैत्येन्द्रो ह्यपराजितः । [ 130 ]
नारसिंहेन रूपेण निहतो विष्णुना पुरा ॥
वामनेन तु रूपेण कश्यपस्यात्मजो बली ।
अदित्या गर्भसंभूतो बलिं बध्वासुरोत्तमम् ।
सत्यरज्जुमयैः पाशैः कृतः पातालसंश्रयः ॥
कार्तवीर्यो महावीर्यः सहस्रभुजविग्रहः । [ 135 ]
दत्तात्रेयप्रसादेन मत्तो राज्यमदेन च ॥
जामदग्न्यो महातेजा रेणुकागर्भसंभवः ।
त्रेताद्वापरयोः संधौ रामः शस्त्रभृतां वरः ॥
पर्शुना वज्रकल्पेन सप्तद्वीपेश्वरो नृपः ।
विष्णुना निहतो भूयश्छद्मरूपेण हैहयः ॥ [ 140 ]
इक्ष्वाकुकुलसंभूतो रामो दाशरथिः पुरा ।
त्रिलोकजयिनं वीरं रावणं विन्यपातयत् ॥
पुरा कृतयुगे विष्णुः संग्रामे तारकामये ।
षोडशार्धभुजो भूत्वा गरुडस्थो हि वीर्यवान् ।
निजघानासुरान्युद्धे वरदानेन दर्पितान् ॥ [ 145 ]
कालनेमिश्च दैत्यो वै देवतानां भयप्रदः ।
सहस्रकिरणाभेन चक्रेण निहतो युधि ॥
महायोगबलेनाजौ विश्वरूपेण विष्णुना ।
अन्तरं प्राप्य कालस्य निहता बहवोऽसुराः ॥
वने वनचरा दैत्या महाबलपराक्रमाः ॥ [ 150 ]
निहता बालभावेन प्रलम्बारिष्टधेनुकाः ।
शकुनी केशिनं चैव यमलार्जुनकावपि ॥
नागं कुवलयापीडं चाणूरं मुष्टिकं तथा ।
कंसं च बलिनां श्रेष्ठं सगणं देवकीसुतः ।

---

यदा च दुर्बलस्तस्मिन् ( for $^{a}$ ) — K2 3 Ñ2 3 V B D Dn Ds D1–4 6 T2–4 G1 2 4 5 om lines 120–121 D5 reads them on marg — ( L 120 ) D5 कदाचित्संप्रदास्यति ( for $^{b}$ ). — ( L 122 ) T3. 4 एकार्णवे पुरे घोरे ( for $^{a}$ ) K4 उद्धृता मेदिनी इयम् ( for $^{b}$ ) — ( L 123 ) K1 3 V2 Dn D1–4 T2–4 G1 4. 5 पातालतलसंमग्ना , K4 पातालमिव संलग्ना , D2 येन पातालस्य तले ( for $^{a}$ ) — ( L 124 ) K4 जवेन ( for उद्धृता ) G2 उद्धृता जगती तदा ( for $^{b}$ ) — ( L 126 ) D3 दैत्यो ( for चैव ). K3 पराजित· ( for °क्रम· ). — After line 126, B2 ins

**8 महावीर्यो महानासीत्सर्वदैत्यपितामहः ।

— ( L 127 ) G2 -दैत्यैश्च ( for दैत्यानां ). Ñ2 V3 अवध्यश्चामरेन्द्राणाम् ( for $^{a}$ ) B2 -पन्नगै , T3 4 -रक्षसाम् ( for -किंनरै ) — ( L 128 ) K4 आकाशे नावनिस्थिते , D3 नाकाशे नावनीषु च , G2 आकाशे चावनीतले ( for $^{b}$ ) — ( L 129 ) D3 बाह्यान्तर- ( for चाभ्य° ) K3 4 D1 2 -रात्र्याहे ( for -रात्र्यह्नोर् ) D2 ( marg ) नाभ्यन्तरे च रात्र्यह्नोर् ( for $^{a}$ ) — ( L 131 ) G5 वपुषा ( for रूपेण ) G2 विष्णुना निहत पुरा ( for $^{b}$ ) — ( L 132 ) V2 सुतो ( for [आ]त्मजो ) — ( L 133 ) K1 3 D1 2 G4 सुरोत्तमः ( for [अ]सुरोत्तमम् ) K4 V2 Dn D3 4 T3. 4 G2 बलिर्बद्धोऽसुरोत्तमः ( for $^{b}$ ). — ( L 134 ) K4 सत्याचार- ; B2 सत्यवज्र ; G2 तस्य रज्जु ( for सत्यरज्जु- ) G4 चक्रे ( for कृत. ) K2 D2 -संश्रितः , Ñ3 B1 -वासिनम् ; B3 -सश्रयम् ( for °य ) T2 G1 5 चक्रे पातालसंश्रयम् ( for $^{b}$ ) — ( L. 135 ) V1 3 कार्तवीर्यं महावीर्यं ( for $^{a}$ ) V1 -विग्रहम् , V2 D3 5 T3 विक्रम ( V2 °मम् ) ( for विग्रहः ) — ( L 136 ) Ñ1 V1 3 B1 2 Ds1 D6 Cal ed वर- ( for राज्य- ) — ( L 138 ) T4 मध्ये ( for संधौ ) — ( L 140 ) T2 G1 कार्तवीर्यो नृपोत्तम ; G4 रेणुकागर्भजन्मना ( for $^{b}$ ) — ( L 141 ) V2 -वंश- ( for कुल- ) — ( L 142 ) K3 4 D1 2 T3 4 -विजयं ( for -जयिन ). K1 V2 Dn त्रैलोक्यविजयं वीर ( for $^{a}$ ) — ( L 145 ) V2 निजघानाशु दैतेयान् ( for $^{a}$ ) K1 3 4 V2 B2 Dn D1–3 T2–4 G4 5 गर्वितान् ( for दर्पि° ) G1 वरदानसुदर्पितान् ( for $^{b}$ ). — ( L 146 ) K1 3 D1. 5 दैत्येयो ; V3 B1 D2 3 T2 G1 4 5 दैत्येन्द्रो ; Dn D4 दैत्यो यो , T3 4 दैतेयो ( for दैत्यो वै ). K2 Ñ2 3 V1 2 B2 3 Ds कालनेमिं च दैत्येन्द्र ( V2 °शं ) ( for $^{a}$ ). K1 3 4 Dn1 D1–5 T2–4 G1 4 5 देवानां च ( Dn1 स ) ( for देवतानां ) K2 Ñ2 3 V1 B Ds D5 भयप्रदम् ( for °दः ) V2 देवानां च भयप्रदम् ( for $^{b}$ ) — G4 om lines 147–150. — ( L 147 ) K2 Ñ3 V1 2 B1 3 Ds D6 न्यहनद् ( for निहतो ) — ( L 148 ) K1 4 Dn D2 T2 G1 5 [अ]सौ , D4 ( marg as above ) [अ]भूद् ( for [आ]जौ ) — ( L 149 ) K2 Ñ2. 3 ( marg as above ) V2 3 B Dn Ds D6 T2 अनेन ( Dn °न्तरं ) प्राप्तकालास्ते ( for $^{a}$ ). — ( L 152 ) D6 ( marg ) शकटं ( for शकुनीं ). T3. 4 यमलार्जुनमेव च ( for $^{b}$ ) — ( L.

निहत्य गोपवेषेण क्रीडयामास केशवः ॥ [ 155 ]
एवमादीनि दिव्यानि छद्मरूपाणि विष्णुना ।
कृतानि तत्र तत्रैव विष्णुना प्रभविष्णुना ।
तेनाहं वः प्रवक्ष्यामि भवतां हितकाम्यया ॥
तं मन्ये केशवं विष्णुं सुराद्यमसुरान्तकम् ।
नारायणं जगद्योनिं पुराणं पुरुषं ध्रुवम् ॥ [ 160 ]
स्रष्टारं सर्वभूतानां व्यक्ताव्यक्तं सनातनम् ।
अधृष्यं सर्वलोकानां सर्वभूतनमस्कृतम् ॥
अनादिमध्यनिधनं क्षरमक्षरशाश्वतम् ।
स्वयंभुवमजं स्थाणुमजेयं सचराचरैः ।
त्रिविक्रमं त्रिलोकेशं त्रिदशेन्द्रारिनाशनम् ॥ [ 165 ]
इति मे निश्चिता बुद्धिर्जातोऽयं मथुराधिपः ।
कुले महति वै राज्ञां विपुले चक्रवर्तिनाम् ।
कथमन्यस्य मर्त्यस्य गरुडो वाहनं भवेत् ॥
विशेषेण तु कन्यार्थे विक्रमस्थे जनार्दने ।
कः स्थास्यति पुमानद्य गरुडस्याग्रतो बली ॥ [ 170 ]
स्वयंवरकृतेनासौ विष्णुः स्वयमिहागतः ।
विष्णोरागमने चैव महान्दोषः प्रकीर्तितः ।
भवद्भिरनुचिन्त्येदं क्रियतां यदनन्तरम् ॥
एवं ब्रुवाणं तं भूपं मगधानां जनेश्वरम् ।
सुनीथोऽथ महाप्राज्ञो वचनं चेदमब्रवीत् ॥ [ 175 ]
सम्यगाह महाबाहुर्मगधाधिपतिर्नृपः ।
समक्षं नरदेवानां यथा वृत्तं महाहवे ।
गोमन्ते रामकृष्णाभ्यां कृतं कर्म सुदुष्करम् ॥
गजाश्वरथसंबाधा पत्तिध्वजसमाकुला ।
निर्दग्धा महती सेना चक्रलाङ्गलवह्निना ॥ [ 180 ]
तेनायं मागधः श्रीमाननागतमचिन्तयत् ।
ब्रूते च राजसेनायामनुस्मृत्य सुदारुणम् ॥
पदात्योर्युध्यतोस्तत्र बलकेशवयोर्युधि ।
दुर्निवार्यतरो घोरो ह्यभवद्वाहिनीक्षयः ॥
विदितं वः सुपर्णस्य आगतस्य नृपोत्तमाः ॥ [ 185 ]
पक्षवेगानिलोद्धूता बभ्रमुर्गगनेचराः ॥

---

155 ) K2 Ñ2 3 V1 3 B1. 3 Ds D6 G2 न्यहनद्, D3 निर्जित्य ( for निहत्य ) K2 Ñ2 3 V1 3 B1 3 Ds D6 T3 4 G2 क्रीडमानो हि केशव ; D3 क्रीडते मानुषेण च ( for $^{b}$ ). —( L 156 ) T2 G1 रूपाणि ( for दिव्यानि ) V2 Dn G5 चक्रिणा ( for विष्णुना ) D3 छद्मरूपेण चक्रिणा ( for $^{b}$ ). — K1. 3 4 D1 T2–4 G1 4 5 om. ( hapl ) line 157. – ( L 157 ) B3 Dn कृतानि दिव्यरूपाणि ( for $^{a}$ ). Ñ2 3 V B1 2 Ds D2–6 G2 मायया ( for विष्णुना ) —( L 159 ) G5 केवलं ( for केशवं ). D5 सुरेन्द्रम् ( for सुराद्यम् ). K2 G2 असुरान्तकरं हरिम् ( for $^{b}$ ) —( L 160 ) B3 जगन्नाथं ( for °द्योनिं ) T2 अनाद्यं ( for पुराणं ) B3 पुराणं पुरुषोत्तमम् ( for $^{b}$ ). — D3 om lines 162 —( L 162 ) Ñ3 B3 Dn1 अदृश्यं ; B3 अध्यक्षं ; D4. 5 अवध्यं ( for अधृष्यं ) K2 4 Ñ2 3 V1 3 B D5 -भूतानां , D6 देवानां ( for -लोकानां ) K2 Ñ3 V1 B1 Ds D5 6 T2 4 G1 4 लोक- ( for -भूत- ) —( L 163 ) K3 क्षरमक्षरमच्युतम् , K4 Dn °मव्ययम् , T2–4 G1 शाश्वतं क्षरमक्षरम् ( for $^{b}$ ). —( L. 165 ) -मर्दनम् ( for -नाशनम् ) —( L 166 ) B3 Ds D6 निश्चला ( for निश्चिता ) K2 Ñ3 मथुरामिह , K3 मनुजानपि , Ñ2 V3 B Dn D4–6 T3 4 मथुरामधि ; D2 मथुरापतिः , D3 G2 °मनु ( for °धिपः ) K1 4 जातेयमचिराद्भूपाः , V1 जातोऽयमिह केशवः ; Ds जातेयं मथुरामधि ( for $^{b}$ ). —( L. 168 ) K2 Ñ3 V1 D4, 5 G2 पुंसश्च , B1 3 Ds D6 पुंसस्तु , D3 मान्यश्च ( for मर्त्यस्य ) B2 D6 G2 गरुत्मान् ( for °डो ) K2 Ñ3 B1 3 Ds गरुत्मान्वाहनो भवेत् ( for $^{b}$ ). —( L 169 ) D6 विक्रमार्थे ( for °मस्थे ). Ñ2 विक्रमस्थो जनार्दन ( for $^{b}$ ). —( L 170 ) B1 D5 अस्य ( for अद्य ) T2 G1 कः स्यातेह भवेदद्य ( for $^{a}$ ) —( L 172 ) D1 प्रवर्तितः ( for प्रकी° ) — Before line 174, Mss ins. वैशंपायन उवाच —( L 174 ) V1 मन्त्रेण , D5 तं तत्र ( for तं भूपं ) K1. 2 4 D1 2 एवं च ब्रुवमाणं तं ; Ñ2 V2 3 Dn T3 G4 एव विब्रुवमाणं तं ; Ñ3 B Ds D6 एवं विब्रुवमाणे तु , D3 एवविध ब्रुवाणं त ; T2 3 G1. 5 एवं तत्र ( T3 चापि ) ब्रुवाणं तं , G2 एवं च प्रब्रुवाणं तं ( for $^{a}$ ). — Before line 176, some Mss ins सुनीथ उवाच. —( L 176 ) V3 D4. 6 महाबुद्धिर् ( for °बाहुर् ) —( L 177 ) V2 महामृधे ( for °हवे ). —( L 179 ) Ñ2 V3 T2 -संबाधं ( for °धा ). V3 T2 -समाकुलम् ( for °ला ) —( L 180 ) T3 च महा- ( for महती ) —( L 181 ) K4 नानागतम् ; D2 आगतं तम् ( for अनागतम् ) —( L 182 ) K2 ब्रूते स राजसेनाया ( for $^{a}$ ). —( L 183 ) D2 एतयोर् ( for पदात्योर् ) D4 T3. 4 यदात( D4 पादात्य )योर्युध्यतोश्च ; G4 पदात्यो युध्यते तत्र ( for $^{a}$ ) —( L 184 ) K2 Ñ3 V1 B Ds -तरैर्घातैर् ( for -तरो घोरो ). G2 मेदिनी ( for वाहिनी- ). —( L 185 ) K2 V3 D5 T2 G2 स्वा( D5 त्वा )गतस्य , T3. 4 अमर्त्यस्य ( for आगतस्य ).

समुद्राः क्षुभिताः सर्वे चचालाद्रिर्मही मुहुः ।
वयं सर्वे सुसंत्रस्ताः किमुत्पातेति विक्लवाः ॥
यदा संनह्य युध्येत आरूढः केशवेन सः ।
कथमस्मद्विधः शक्तः प्रतिस्थातुं रणाजिरे ॥ [ 190 ]
राज्ञां स्वयंवरो नाम सुमहान्हर्षवर्धनः ।
कृतो नरवरैराद्यैर्यशोधर्मस्य वै निधिः ॥
इदं तु कुण्डिनगरमासाद्य मनुजेश्वराः ।
न पुरेवैष्यते नूनं महापुरुषविग्रहः ॥
यदि सा वरयेदन्यं राज्ञां मध्ये नृपात्मजा । [ 195 ]
कृष्णस्य भुजयोर्वीर्यं कः पुमान्प्रसहिष्यति ॥
विख्यापितस्तु दोषोऽयं स्वयंवरमहोत्सवे ।
तदर्थमागतः कृष्णो वयं चैव नराधिपाः ॥
कृष्णस्यागमनं चैव नृपाणामतिगर्हितम् ।
कन्याहेतोर्नरेन्द्राणां यथा वदति मागधः ॥ [ 200 ]

Colophon.

वैशंपायन उवाच ।

इत्येवमुक्ते वचने सुनीथेन महात्मना ।
करूषाधिपतिर्वीरो दन्तवक्त्रोऽभ्यभाषत ॥
यदुक्तं मागधेन्द्रेण सुनीथेन नराधिपाः ।
युक्तपूर्वमिदं मन्ये यदस्माकं वचो हितम् ॥
न च विद्वेषणेनाहं न चाहंकारवादिना । [ 205 ]
न चात्मविजिगीषुत्वाद्दूषयामि वचोऽमृतम् ।
वाक्यार्णवं महागाध नीतिशास्त्रार्थबृंहितम् ।
क एष निखिलं वक्तुं शक्तो वै राजसंसदि ॥
किं त्वनुस्मरणार्थेऽहं यद्ब्रवीमि शृणुष्व मे ।
आगतो वासुदेवेति किमाश्चर्यं नराधिपाः ॥ [ 210 ]

—(L 186) K2 उन्मार्गा (for बभ्रमुर्) Ñ2 V3 घना (for -चरा) —(L 187) K2 D5 G2 चुक्षुभु ; D4 क्षोभिताः (for क्षु°) K4 चचालेयं, T4 चलाचल- (for चचालाद्रिर्) K1 G2, 5 मुहुर्मुहु°, D1 महीधरा (for मही मुहु°) D3 चलासीद्भूर्मुहुर्मुहु, D6 चचाराद्रिर्मुहु°, T2 G1 चञ्चला भूर्मुहु°, T3 चचार स गिरिर्महीम् (for [b]) —(L 188) D3, 4 T2–4 G1 4 5 समुत्त्रस्ता (for सुसंत्रस्ता°) D5 वयं च सर्वे मञ्चस्थाः (for [a]) Dn G2 उत्पातेन (for °तेति) —(L 189) K1 4 Ñ2 3 V B Ds D3 6 T3 4 G2 4 5 युयुधे (for युध्येत) D1 5 यदासनस्थो युयुधे, G1 यथा संनह्य युयुधे (for [a]) T4 गरुडः (for आरूढ°) K3 Dn D4 आरूढ केशवः खगम् (for [b]). —(L 190) K2 Ñ2 3 V B Ds D6 G2 कथमस्मद्विधैः शक्यं (for [a]) D3 परित्रातुं, G4 प्रतितिष्ठेद् (for °स्थातुं) K2 रणाङ्गणे (for °जिरे) —(L 192) T2 G1 4, 5 भन्यैर् (for आद्यैर्) D3 वारिधि (for वै निधिः) —(L. 193) K2 इदं कुण्डिननगरम्, D5 T2 G4 इदं तु कुण्डिनपुरम् (for [a]). —(L 194) D2 (marg) ईक्ष्यते (for एष्यते) T4 क्षिप्रं (for नूनं) K1 2 Ñ2 3 V1 3 B1 3 Ds D1 2 5 6 T2 3 G1 2 4 5 पुनरेवैष्यति ध्रुवं (D5 G2 क्षिप्र) (for [a]) K1 Ñ2 Dn D1 G5 -विग्रहम् (for °ह) D2 (marg as above) महापुरुषमव्ययम् (for [b]) —K2 om. lines 195–198 —(L 195) K3 Dn [ए]षा (for सा) G2 नृपात्मजम् (for °जा) —(L 196) D3 वेगं (for वीर्यं) —(L 197) K1 Ñ2 3 V B Ds D1–6 T3 विख्यापितमिदं दोषं (D2 3 T3 घोरं); K3 निष्पादितमिदं दोषं, K4 विख्यापितमहादोषं; T2 G1 4, 5 °तमिदं लोके (for [a]). K1 3 4 Ñ2, 3 V2 B2 D3 D2 T2–4 G1 4, 5 -महोत्सवम् (for °त्सवे)

—(L 198) G2 तत समागत कृष्णो (for [a]) D3 सर्वे (for चैव) —(L 199) D4 नृणामतिविगर्हितम् (for [b]) —Colophon om in K2 —*Mention of the Epic* K3 Ds2 T3 —*Mention of Khila* K3 4 Ñ3 V B Dn Ds2 D1–3 —*Sub-parvan* T4 आश्चर्यपर्व —*Adhy-name* K1 4 Ñ2 3 V B1 Dn Ds D2 4 6 रुक्मिणीस्वयंवरम्, K3 D5 स्वयंवरम्, B2 3 D1 रुक्मिणीस्वयवरे सुनीथवाक्यम्, D2 राजमन्त्रे सुनीथवाक्यम्, T4 G2 जरासंधसुनीथवाक्यम् —*Adhy no* K3 102, Ñ3 V 106, Dn Ds2 D4 103, D1 99, D3 111, T2 G4 105, T3 114, T4 95, G1 107, G2 109, G5 108

—(L 202) V2 ऽन्वभाषत (for ऽभ्य°) —Before line 203, K Ñ2, 3 V B D T2 G1 ins दन्तवक्त्र उवाच —(L 203) K1 3 4 Dn D1–3 T3 G4 यदुक्तं मागधेनात्र (D3 °नेह); D5 T2 G1 5 °क्तं मगधेन्द्रेण (for [a]) K3 om सुनीथेन D5 च पार्थिवाः, T4 महात्मना (for नराधिपा°). —(L 204) D1 6 युक्ति- (for युक्त) K1 3 4 B1 Dn G1 अहं (for इदं). T2 हि तत् (for हितम्) —(L 205) D3 G4 -वादतः; T2 G1 -वादिनः (for °ना) —(L 206) T3 राज- (for चात्म-). D3 -विजयैषित्वाद् (for -विजिगीषु°) G2 ऽनृतम् (for ऽमृतम्). —(L. 207) T2 G1 5 वाक्यं तव (for वाक्यार्णवं) D3 महाघोरं (for °गाध) —(L 209) G2 त्वदनु-; G5 किं तु नु (for किं त्वनु-) Ñ2 V3 स्मरणाच्चाहं, B1 °णेनाहं, Dn Cal ed °णार्थं, T2 G1 °णायेदं (for °णार्थेऽहं) V3 T3 तत् (for मे) K1 4 श्रूयतां (K4 शृणुध्वं) यद्ब्रवीम्यहम् (for [b]) —(L 211) D3 हर्षात् (for सर्वे). V1 om. lines 211[b]–

यथागता वयं सर्वे कृष्णोऽपीह तथागतः ।
किमत्र दोषो गौण्यो वा कन्याहेतोः समागताः ॥
यदस्माभिः समेत्यैव कृतं गोमन्तरोधनम् ।
तत्र युद्धकृतं दोषं कथं वः कर्तुमर्हथ ॥
वनवासे स्थितौ वीरौ कंसव्यामोहहेतुना । [ 215 ]
देवर्षिवचनाद्राजन्वृन्दावनतटे स्थितौ ॥
तावाहूय वधार्थाय उभौ रामजनार्दनौ ।
नागेनोद्दीपितौ वीरौ हत्वा नागं विवेशतुः ॥
ततः स्ववीर्यमाश्रित्य निहतो रङ्गसागरे ।
गतासुरिव चासीनो मथुरेशः सहानुगः ॥ [ 220 ]
किमत्र विहितो दोषो येनास्माभिर्वयोधिकैः ।
उपरोधपरा राजन्वयं सर्वे समागताः ॥
सेनातिबलमालोक्य वित्रस्तौ रामकेशवौ ।
पुरं बलं समुत्सृज्य गोमन्तं पर्वतं गतौ ।
तत्रापि गतमस्माभिर्हन्तुं समरयोधिभिः ॥ [ 225 ]
अप्राप्तयौवनाभ्यां च पदातिभ्यां रणाजिरे ।
रथाश्वनरनागेन तत्र वै विग्रहः कृतः ।
कृत्वोपरोधं शैलः स क्षत्रधर्मेण दीपितः ॥
दावाग्निमुखमाविश्य मृतौ यदि तपस्विनौ ।
विनीताविति मन्यामः सर्वे क्षत्रियपुंगवाः ॥ [ 230 ]
प्रतियुद्धे कृते त्वेवं दूषयामो जनार्दनम् ॥
यत्र यत्र प्रयास्यामो वयं तत्र भवेत्कलिः ।
प्रीत्यर्थं प्रयतिष्यामः कृष्णेन सह भूमिपाः ॥
इदं कुण्डिपुरं कृष्णो नागतः कलिहेतुना ।

---

217$^b$ $K_2$ $\tilde{N}_{2,3}$ $V_3$ B $D_S$ $D_6$ तथा कृष्ण इहागतः ( for $^b$ ). — ( L 212 ) $K_2$ $D_5$ $G_2$ गौण्यं , $D_1$ गुण्यो , $D_3$ वैरं , $D_6$ $T_3$ $G_1$ गौणो ( for गौण्यो ) $Dn_2$ $D_4$ $T_3$ $G_2$ समागत ( for °गता. ) $K_3$ कन्याहेतौ समास्थिता ( for $^b$ ) — ( L. 213 ) $K_{1\ 3}$ समेत्यैकी- , $K_2$ $D_{2-4}$ $T_4$ $G_2$ °त्यैवं , $G_4$ °तैश्च ( for °त्यैव ) $K_1$ यदास्माभिः समेत्यैक्यात् ( for $^a$ ) $V_3$ रोधने ( for °नम् ) $K_2$ $B_{1,3}$ $D_S$ $G_2$ कृते गोमन्तरोधने ( $B_3$ °नम् ) ( for $^b$ ) — ( L 214 ) $D_3$ तं च ( for तत्र ) $\tilde{N}_2$ $T_4$ रोषं , $G_5$ दोषः ( for दोषं ) $K_3$ $D_S$ $T_3$ $G_{2\ 4\ 5}$ वा , $\tilde{N}_2$ Dn $D_S$ $D_4$ वै ( for वः ) $K_1$ वक्तुम् ( for कर्तुम् ) $\tilde{N}_3$ $T_4$ कथं वै वक्तुमर्हथ ( for $^b$ ) — ( L 215 ) $K_3$ $D_5$ वनवास- ; $T_2$ $G_4$ जनवासे , $G_2$ वनवासौ ( for °वासे ). $T_3$ कंसस्य हतिहेतुकौ ( for $^b$ ) — ( L 216 ) $K_1$ देवर्षेर् ( for °र्षि- ) $K_3$ $D_{3,4}$ राज्ञां ( for राजन् ) $K_2$ $D_3$ -वने ; $\tilde{N}_2$ -तट- ( for तटे ). $T_2$ $G_{1,4,5}$ दृष्ट्वा हृष्ट( $G_1$ °ष्टौ )वने स्थितौ ( for $^b$ ) — ( L 217 ) $K_2$ चाहूय च , $D_3$ तावाहूतौ , $T_2$ $G_1$ °हवे ( for °हूय ) $K_{1\ 3}$ $D_{1\ 2}$ $T_{3\ 4}$ वधार्थेन ( for °र्थाय ) — ( L 218 ) Dn गजेन ( for नागेन ). $D_5$ [उ]द्वेजितौ ( for [उ]द्दीपितौ ) $K_1$ दीनौ ( for वीरौ ). $\tilde{N}_3$ ( marg as above ) विवेशितौ , $T_3$ विचेरतु ( for विवेशतुः ). $K_2$ $\tilde{N}_2$ $B_1$ $D_S$ $D_6$ $G_2$ हतनागौ विवेशितौ ( $\tilde{N}_2$ $D_6$ °विशतुः ; $Ds_2$ °चेरतु ) ( for $^b$ ) — ( L 219 ) $D_3$ कंसश्च , $T_4$ तत्र स्व- ( for ततः स्व- ) $D_1$ -मार्गम् ( for -वीर्यम् ) $\tilde{N}_3$ $V_1$ आसाद्य ( for आश्रित्य ) $K_4$ -संगरे ( for सा° ) — ( L 220 ) $D_3$ गतायुर् ( for °सुर् ) $G_2$ गतासुरभवद्दीनः ( for $^a$ ). $K_1$ ( *sup lin.* as above ) असुरेशः ( for मथु° ) $K_{2\ 3}$ $V_1$ $G_2$ सहानुज ( for °नुगः ) — ( L 221 ) $K_3$ $V_1$ विदितो ( for विहितो ) $D_3$ स योत्स्यते ( for वयोधिकै ) — ( L. 222 ) $B_1$ ( marg as above ). 2 Cal ed राज्ञो ; $B_3$ $D_S$ $D_6$ राज्ञा ( for राजन् ) — ( L 224 ) $\tilde{N}_2$ $V_3$ वनं ( for बलं ) $K_{1,3\ 4}$ $\tilde{N}_3$ $V_{1\ 2}$ $B_2$ Dn $D_{1-5}$ $T_{2-4}$ $G_{1\ 4\ 5}$ गोमन्ते ( $V_3$ $D_3$ °न्तं ) च ग( $T_2$ $G_1$ चाग )तावुभौ ( for $^b$ ) — ( L 225 ) $D_1$ अत्र- ; $K_{2\ 4}$ $D_5$ $T_3$ [अ]भि- , $K_3$ [अ]नु- ; $G_1$ [अ]धि ( for [अ]पि ). $K_{1\ 3,4}$ Dn $D_{1\ 3}$ वयं समरयोधिनः ( for $^b$ ) — ( L 226 ) $K_1$ संप्राप्ताभ्यां ; $K_2$ $\tilde{N}_{2\ 3}$ ( marg ) $V_{1,2}$ $B_{1\ 3}$ $D_S$ $D_6$ $G_2$ प( $V_3$ $D_S$ पा )दाताभ्यां , $K_3$ Dn $D_2$ जिता सर्वे , $K_4$ युयुधुस्ते , $\tilde{N}_3$ $V_3$ यदा ताभ्यां , $D_{3-5}$ यादवाभ्यां ( for पदातिभ्यां ). — ( L 227 ) $D_6$ $T_4$ -रथ- ( for -नर- ). $\tilde{N}_2$ $V_3$ -नागाना , $D_3$ -नागौघैर् ; $G_2$ -नागैर्हि ( for -नागेन ) $K_{1\ 3\ 4}$ $V_{1\ 2}$ Dn $D_{1-4}$ $G_{1,4,5}$ ना( $V_1$ अ- , $V_2$ $D_2$ चा )स्माभिर् , $\tilde{N}_3$ युष्माभिर् ( for तत्र वै ) — ( L 228 ) $K_2$ $G_2$ शैलेन्द्र ( for शैल स. ) $V_{1,2}$ $B_{1\ 2}$ $Dn_1$ $D_{2\ 6}$ $T_2$ कृतोपरोधः शैलः स , $B_3$ कृतोपरोधः शैलश्च , $D_1$ $T_2$ कृत्वोपरोध शैलस्य ( for $^a$ ) $\tilde{N}_3$ ( marg as above ) $V_1$ $T_4$ पीडितः ( for दीपितः ) — ( L 229 ) $K_4$ दवाग्नि- ( for दा° ) $G_2$ आश्रित्य ( for आविश्य ). $T_2$ $G_1$ दवाग्निमुखमाश्रित्य ( for $^a$ ) $K_2$ श्रितौ यदि , $V_2$ Cal. ed. मृतौ यत्र , $T_2$ भूतौ यदि ; Bom Poona eds. G( ed. ) दुर्विनीत- ( for मृतौ यदि ) $\tilde{N}_3$ ( marg ) $T_3$ तरस्विनौ ( for तप° ) — ( L 230 ) $K_1$ $D_2$ विनीत , $K_4$ $V_2$ $D_6$ विनीतम् ; $D_1$ तौ मृताव् ; $D_5$ विनष्टाव् , $G_2$ विजिताव् ( for विनी° ) $K_3$ Dn विनीत इति मन्याम , $T_4$ Bomb. Poona, Cal eds G(ed ) विनीत इव मन्याम. ( for $^a$ ) $G_2$ -पुंगवै ( for °वाः ). — ( L 231 ) $D_3$ नापि युद्धकृदित्येवं , Cal ed प्रतियुद्धं करोत्येवं ( for $^a$ ) $K_{1\ 2\ 4}$ $\tilde{N}_3$ $V_1$ B $D_S$ $D_{1\ 2}$ $T_{2-4}$ $G_{1\ 4,5}$ दूषयाम ; $\tilde{N}_2$ °येम , $V_{2,3}$ $D_5$ °यामि ( for °यामो ). — ( L. 232 ) $D_5$ प्रयामो वै ( for °स्यामो ). $\tilde{N}_2$ $V_3$ $G_2$ तत्र , $D_3$ नायं ( for वयं ) $T_4$ किल ( for कलि. ). $D_4$ तत्र

कन्यानिमित्तागमने कस्य युद्धं प्रयच्छति ॥ [ 235 ]
मर्त्येऽस्मिन्पुरुषेन्द्रोऽसौ न कश्चित्प्राकृतो नरः ।
देवलोके च देवेशः प्रवरः पुरुषोत्तमः ॥
देवानामपि कर्तासौ लोकानां च विशेषतः ।
न देवे बालिशा बुद्धिर्न चेर्ष्या न च मत्सरः ॥
न स्तब्धो न कृशो नार्तः प्रणतार्तिहरः सदा । [ 240 ]
एष विष्णुः प्रभुर्देवो देवानामपि दैवतम् ॥
आगतो गरुडेनेह छद्मप्राकाश्यहेतुना ।
न सेनासहितो याति कृष्णः शत्रुविनाशने ॥
इयं यात्रा विजानीध्वं प्रीत्यर्थं ह्यागतो हरिः ।
सहितो यादवेन्द्रैश्च भोजवृष्ण्यन्धकैरिह ॥ [ 245 ]
अर्घमाचमनीयं च दत्त्वातिथ्यं नराधिपाः ।
करिष्यामो वयं सर्वे केशवाय महात्मने ॥
एवं संधानतः कृत्वा कृष्णेन सहिता वयम् ।
वसाम विगतोद्वेगा निर्भया विगतज्वराः ॥
तस्य तद्वचनं श्रुत्वा दन्तवक्त्रस्य धीमतः । [ 250 ]
साल्वः प्रवदतां श्रेष्ठस्तानुवाच नराधिपान् ॥
किं भयेनास्य नः सर्वे न्यस्तशस्त्रा भवामहे ।
संधानकरणे हेतोः कृष्णस्य भयकम्पिताः ॥
परस्तवेन किं कार्यं विनिन्द्य बलमात्मनः ।
नैष धर्मो नरेन्द्राणां क्षत्रधर्मे व्यवस्थितः ॥ [ 255 ]
महत्सु राजवंशेषु संभूताः कुलवर्धनाः ।
तेषां कापुरुषा बुद्धिः कथं भवितुमर्हति ॥
अहं जानामि वै कृष्णमादिदेवं सनातनम् ।
प्रभुं सर्वनरेन्द्राणां नारायणपरायणम् ॥
वैकुण्ठमजयं लोके चराचरगुरुं हरिम् । [ 260 ]
संभूतं देवकीगर्भे विष्णुं लोकनमस्कृतम् ॥
कंसराजवधायार्थाय भारावतरणाय च ।

---

तत्र भवेत्किल (for $^{a}$) — (L 233) $B_1$ सह कृष्णेन भूमिपा· (for $^{b}$) — (L 234) $K_4$ कुण्डिनेश- (for इदं कुण्डि-) $V_3$ $T_2$ $G_1$ इदं कुण्डिन($V_3$ °ल)पुर कृष्णो (hypermetric), $D_{4,5}$ कुण्डिनं नगरं कृष्णो (for $^{a}$) $D_1$ किल (for कलि-) $D_8$ आगत· किल हेतुना (for $^{b}$) — (L 236) $K_4$ मृतेऽस्मिन्, $B_{1.3}$ $G_4$ मन्येऽस्मिन्, $G_2$ मन्येऽहं (for मर्त्येऽस्मिन्). $V_1$ मानुषेन्द्रो (for पुरु°) $K_1$ $T_3$ वै (for ऽसौ) $\tilde{N}_2$ $G_{2,4}$ जनः (for नर·) $V_3$ न कश्चित्पुरुषो जन (for $^{b}$) — (L 237) $K_4$ Dn $D_5$ $T_3$ $G_{1,4,5}$ देवेषु (for °शः). $K_{1,3}$ $D_{1-4}$ $T_{2,4}$ देवलोकेषु देवे($D_{1-3}$ लोके)षु (for $^{a}$) — (L. 238) $K_2$ $V_2$ Ds $G_2$ विशां पते (for विशेषत) — (L 239) $T_4$ Bomb Poona eds चैव (for देवे) $K_4$ सदैव विमला बुद्धिर् (for $^{a}$) $\tilde{N}_{2,3}$ $V_1$ B $D_6$ $T_3$ $G_2$ नापि, $V_3$ वापि (for न च). $D_{4,5}$ मानिता (for मत्सर) — (L 241) $\tilde{N}_2$ वीरो (for देवो). $D_3$ देवतानां च दैवतम् (for $^{b}$) — (L 243) $K_1$ नानाशास्त्र (hypermetric), $K_3$ $D_{2,4}$ (marg.) भ्रात्रा च, $K_4$ $B_2$ नानास्त्र (for न सेना-) $D_3$ विष्णु· (for कृष्णः) $K_1$ -निबर्हणः, $K_4$ $T_{2-4}$ -विनाशनः (for °शने) — (L 244) $K_2$ इमं पात्रं, $K_3$ Dn इदं चात्र; $\tilde{N}_{2,3}$ V B Ds $D_{1-6}$ $T_{2-4}$ $G_{1,2,4,5}$ इमां यात्रा (for इयं यात्रा) $D_8$ कन्यार्थं (for प्रीत्यर्थं) — (L. 245) $K_{1,3,4}$ $V_3$ Dn $D_3$ सहितो यादवेन्द्राणां ($D_3$ °न्द्रेण), $V_3$ °तो यादवश्रेष्ठैः (for $^{a}$) $V_3$ $D_{3,4}$ $T_{3,4}$ सह (for इह) $K_2$ $\tilde{N}_{2,3}$ $V_{1,3}$ $B_2$ Ds $D_9$ transp lines 246 and 247 — (L. 246) $K_{3,4}$ $\tilde{N}_3$ $V_2$ B Dn Ds $D_{3,6}$ $T_{2-4}$ $G_{1,4,5}$ अर्घ्यमाचमनं दत्त्वा (for $^{a}$). $K_3$ $\tilde{N}_3$ $V_2$ B Dn Ds $D_{3,6}$ $T_{1,4,5}$ आतिथ्यं च, $D_5$ कृत्वातिथ्य (for दत्त्वा°) $K_4$ आतिथ्यं च नरा प्रिय· (for $^{b}$). — $B_{1,3}$ om line 247 — (L 248) $G_2$ सधौ मतिं (for संधानत) — (L 249) $K_{1,4}$ $D_2$ विगतोद्विग्ना, $K_2$ °तद्वेषा (for °तोद्वेगा). $K_3$ $V_1$ Dn Ds $T_2$ $G_2$ वसामो विगतोद्विग्ना ($V_1$ $G_2$ °तद्वेषा) (for $^{a}$) — (L 251) $K_2$ $G_2$ प्रत्युवाच (for तानु°) $V_2$ नराधिप, $D_3$ महीधरान् (for नराधिपान्). — Before line 252, $K_1$ $T_2$ $G_{1,5}$ ins साल्व उवाच. — (L 253) $K_2$ Ds -कारणे, $\tilde{N}_2$ $V_3$ $T_4$ $G_{1,4}$ -करणाद् (for °णे) $D_2$ हेतौ, $D_5$ हेतु· (for हेतो.) $K_4$ G(ed) -शङ्किताः, $D_3$ -पीडिता. (for -कम्पिता.) — (L 254) $K_3$ $D_4$ न निन्द्य, $D_2$ अनिन्द्यं (for विनिन्द्यं) $K_2$ विनिवेदितमात्मना, $D_3$ $G_2$ निन्दते चा($G_2$ °माना)त्मनो बलम् (for $^{b}$). — (L 255) $K_4$ $T_2$ $G_{1,4,5}$ om (hapl) lines $255^{b}$–$259^{a}$, $K_1$ reads the same on marg $K_2$ $\tilde{N}_2$ $V_2$ $B_{1,3}$ Ds $D_2$ क्षात्रे धर्मे, $\tilde{N}_3$ $V_{1,3}$ क्षात्रधर्मे, $T_3$ यत्राधर्मो (for क्षत्रधर्मे) $K_1$ व्यवस्थितम्, $D_5$ $G_2$ °स्थिते (for °तः) $K_3$ शत्रुभ्यो बिभ्यते भृशम्, Dn क्षत्रधर्मेऽवतिष्ठताम्, $D_{2,6}$ क्षात्रे धर्मे व्यवस्थिता, $D_4$ क्षत्रवर्णव्यवस्थिताम्; $T_4$ यत्र धर्मे व्यवस्थिता (for $^{b}$) — (L 256) $T_4$ महतो (for महत्सु). $D_3$ -धर्मेषु (for -वंशेषु) — (L 258) $K_1$ वेद च तं, $\tilde{N}_3$ $V_1$ Dn $D_{3-5}$ च वेद तं, $V_2$ $T_3$ च वेद्मि वै ($T_3$ तं) (for जानामि वै) — (L 259) $D_6$ महेन्द्राणां (for नरे°) $\tilde{N}_{2,3}$ V $B_{2,3}$ Dn Ds $D_4$ $T_{3,4}$ प्रभुं सर्वामरेन्द्राणां; $K_3$ निखिलं वर्तते विश्वं (for $^{a}$) $T_{2-4}$ $G_{1,4}$ नारायणमनामयम्, $G_2$ °मिवापरम् (for $^{b}$) — (L 261) $K_1$ -गर्भे (for गर्भे) $\tilde{N}_3$ (marg as above) सर्वभूत-, $G_1$ विष्णुं देव- (for विष्णुं लोक-). — (L. 262)

अस्माकं च विनाशाय लोकसंरक्षणाय च ।
अंशावतरणे कृत्स्नं जाने विष्णोर्विचेष्टितम् ॥
संग्राममतुलं कृत्वा विष्णुना सह भूमिपाः । [ 265 ]
चक्रानलविनिर्दग्धा यास्यामो यमसादनम् ।
तं च जानामि राजेन्द्राः कालेनायुःक्षयो भवेत् ॥
नाकाले म्रियते कश्चित्प्राप्ते काले न जीवति ।
एवं विनिश्चयं बुध्वा न कुर्यात्कस्यचिद्भयम् ॥
स एव भगवान्विष्णुरालोक्य तपसः क्षयम् । [ 270 ]
निहन्ता दितिजेन्द्राणां यथाकालेन योगवित् ॥
बलिं वैरोचनिं चैव बुध्वावध्यं महाबलम् ।
कृतवान्देवदेवेशः पातालतलवासिनम् ॥
एवमादीनि चान्यानि विष्णोश्चेष्टानि वै नृपाः ।
तस्मादयुक्तं भवतां विग्रहार्थे विचारणम् ॥ [ 275 ]
न च संग्रामहेतोर्हि कृष्णस्यागमनं त्विह ।
यस्य वा तस्य वा कन्या वरयिष्यति तस्य सा ।
किमत्र विग्रहो राज्ञां प्रीतिर्भवति वै ध्रुवम् ॥
एवं कथयमानानां नृपाणां बुद्धिशालिनाम् ।
न किंचिदब्रवीद्राजा भीष्मकः पुत्रकारणात् ॥ [ 280 ]
महावीर्यं मदोत्सिक्तं भार्गवास्त्राभिरक्षितम् ।
रणे प्रचण्डातिरथं विचिन्त्य मनसा सुतम् ॥
कृष्णं न सहते नित्यं पुत्रो मे बलदर्पितः ।
नित्याभिमानी च रणे न बिभेति च कस्यचित् ॥
कृष्णस्य भुजवीर्येण ह्रियते नात्र संशयः । [ 285 ]
भविष्यति ततो युद्धं महापुरुषविग्रहम् ॥
द्वेषी चैवाभिमानी च कुतो जीवति मे सुतः ।
जीवितं नात्र पश्यामि मम पुत्रस्य केशवात् ॥
कन्याहेतोः सुतं ज्येष्ठं पितॄणां नन्दिवर्धनम् ।
कारयिष्ये कथं युद्धं पुत्रेण सह केशवम् ॥ [ 290 ]
न च नारायणं देवं वरमिच्छति रुक्मिणः ।
मूढभावमदोन्मत्तः संग्रामेष्वनिवर्तकः ।

---

K1 भूभारहरणाय च ( for ᵇ ) — ( L 263 ) D3 -संहरणाय ( for -संरक्ष° ) — ( L 264 ) V1 3 T4 अंशावतरणं कृत्स्नं ( T4 विष्णुं ) ( for ᵃ ) — ( L 265 ) Ñ2 V3 तुमुलं ( for अतुलं ) — ( L. 266 ) V2 चक्रलाङ्गलनिर्दग्धा , B2 चक्रानलेन निर्दग्धा ( for ᵃ ). D5 -मन्दिरम् ( for -सादनम् ) — G1 om. ( hapl ) lines 267–273 — ( L 267 ) K2 V2 Dn1 T4 G2 तत्त्व ; B2 Dn2 D4 तच्च ( for तं च ) K3 4 Ñ2. 3 V2 3 B3 D4 5 ( before corr ) 6 T2 G5 मम ; D5 महान्, D1 मत ( for भवेत् ) K1 V1 D2 कालेनायु क्षयं मम ; D3 कालमायुः-क्षयंकरम् ( for ᵇ ) — ( L 268 ) K2 3 B2 D4 T2 G2 प्राप्त कालो ( K3 T2 °ले ) ( for प्राप्ते काले ) — ( L 269 ) K2 Ñ2 V2. 3 B1 Ds D2 ( *sup lin* ) 4 ( marg as above ) T2–4 G4 5 कृत्वा ; D1 बुद्ध्वा ( for बुध्वा ). — ( L. 270 ) K3 एवं स , Ñ2 D3 4 G2 5 स एष ( for स एव ) D6 फलम् ( for क्षयम् ). K2 सर्वलोकस्य पक्षकृत् ( for ᵇ ) — ( L 271 ) T3 दानवेन्द्राणां , T4 दनुजे° ( for दिति° ) Ñ2 V3 D4 G4 यथा-कालं ( D4 G4 °ले ) स योगवित् ( for ᵇ ) — ( L 272 ) K2 विरोचनं ( for वैरोचनिं ) K1 3 4 Ñ2 V2 3 B Dn Ds1 D6 T2–4 G2 4 5 बध्वावध्य , Ñ3 बुद्ध्वा° , Ds2 लब्धा° , D1–3. 6 बुद्ध्वा बध्वा ( for बुध्वावध्यं ) — ( L 273 ) K2 B Ds -देवो वै ; D4 -दैत्येशः , D5 -देवोऽसौ , D6 -देवोऽपि ( for -देवेशः ) G2 कृत्वा च देवदेवो वै ( for ᵃ ) — ( L 274 ) Bom Poona eds. G( ed ) वै विष्णोश्च ( for चान्यानि ) K2 D2 ( marg ) 3 श्रेष्ठानि ; T3. 4 G तेजांसि ( for चेष्टानि ). Bom Poona eds G( ed ) चेष्टानि च नराधिपा ( for ᵇ ) — ( L 275 ) K1 2 यदुक्तं ( for अयुक्तं ) Ñ2 V3 D5 विचारणा ( for °णम् ) — For line 275, G2 subst

9** तस्मादस्मासु युक्तं तद्भवतां विग्रहे मति ।

— ( L 277 ) D1 तस्य , G2 य च ( for यस्य ) K2 4 Ñ2 3 D2 3 T2–4 G1 2 कस्य ( for तस्य ) T2 G1 ह , G2 वा ( for सा ). — G2 om. line 278 — ( L 278 ) D3 4 किमर्थं ( for °त्र ) K1 3 V2 T2 4 G1 भवतु ( for °ति ). D3 प्राप्तो भवति नो ध्रुवम् ( for ᵇ ) — Before line 279, some Mss ins वैशंपायन उवाच, — ( L 281 ) K3. 4 Ñ2. 3 V1 2 Dn Ds2 D1 T2–4 G1 2 4 5 महावीर्य- ( for °वीर्यं ) D3 मदोत्सेक ( for °त्सिक्तं ) — ( 282 ) K1. 3 Ñ2 V3 D3–5 T4 G4 रण- ( for रणे ) T2 G1 5 रणे प्रहस्यातिरथं ( for ᵃ ) — Before line 283, K3 B3 ins भीष्मकः K4 repeats lines, 284ᵇ–285ᵃ after line 287ᵃ — ( L 285 ) K2 G2 हतो वै ( for ह्रियते ) D3 दृश्यतेऽयं न संशय ( for ᵇ ). — ( L 286 ) G2 सह पुत्रेण केशवे ( for ᵇ ) — G2 om. lines 287–290 — ( L 287 ) V1 Ds2 मत्सुत: ( for मे सुत. ) — ( L 288 ) T2 G4 5 [अ]नु- ( for [अ]त्र ) — ( L. 289 ) Ñ3 ( marg ) V1 D3 4 T2 G1 5 श्रेष्ठ ( for ज्येष्ठं ). K4 नन्द- ; T2 G1 4 हर्ष- ( for नन्दि- ) — ( L 290 ) V3 D3 केशवे ( for °वम् ) — ( L 291 ) K1. 4 रुक्मियः ; K2 रुक्मणः , Dn Ds1 D4 ( marg ) T4 रुक्मवान्, D6 T2 G5

नियतं भस्मसाद्याति तूलराशिर्यथानलात् ॥
करवीरेश्वरः शूरः सृगालश्चित्रयोधिना ।
क्षणेन भस्मसान्नीतः केशवेन बलीयसा ॥ [ 295 ]
वृन्दावने वसञ्श्रीमान्केशवो बलिनां वरः ।
उद्धृत्यैकेन हस्तेन सप्ताहं धृतवान्गिरिम् ।
दुष्करं कर्म संस्मृत्य मनः सीदति मे भृशम् ॥
नगेन्द्रं सहसागम्य दैवतैः सह वृत्रहा ।
अभिषिच्याब्रवीत्कृष्णमुपेन्द्रेति शचीपतिः ॥ [ 300 ]
यथा वै दमितो नागः कालियो यमुनाह्रदे ।
विषाग्निज्वलितो घोरः कालान्तकसमप्रभः ॥
केशी चैव महावीर्यो दानवो हयविग्रहः ।
निहतो वासुदेवेन देवैरपि दुरासदः ॥
सांदीपनिसुतश्चैव चिरनष्टो हि सागरे । [ 305 ]
दैत्यं पञ्चजनं हत्वा आनीतो यममन्दिरात् ॥
गोमन्ते सुमहद्युद्धं बहुभिश्चैव तावुभौ ।
कृत्वा वित्रासजननं गजाश्वरथसंकुलम् ॥
गजेन गजवृन्दानि रथेन रथयोधिनः ।
सादिनश्चाश्वयोधानां चरणेन पदातिनः । [ 310 ]
जघ्नतुस्तौ महावीर्यौ वसुदेवसुतावुभौ ॥
न देवासुरगन्धर्वा न यक्षोरगराक्षसाः ।
न नागा न च दैत्येन्द्रा न पिशाचा न गुह्यकाः ॥
कृतवन्तस्तथा घोरं गजाश्वरथसंक्षयम् ।
तमनुस्मृत्य संग्रामं भृशं सीदति मे मनः ॥ [ 315 ]
न मया श्रुतपूर्वो वा दृष्टपूर्वः कुतोऽपि वा ।

रुक्मिक॰, G$_{1\ 4}$ रुक्मक ( for रुक्मिण॰ ) — For line 291, D$_{1\ 5}$ G(ed) subst

10** न च नारायणाद्देवो वरदृष्टस्तु रुक्मिण ।

[ D$_{5}$ नारायणो ( for °णाद् ) G(ed) स च नारायणो देवो ( for $^{a}$ ). D$_{5}$ वर इष्टस् ( for वरदृष्टस् ). G(ed) वर इष्टस्तु रुक्मवान् ( for $^{b}$ ) ]

— ( L 292 ) K$_{1\ 4}$ V$_{3}$ B$_{3}$ Dn D$_{4\ 6}$ T$_{2-4}$ G$_{1\ 4\ 5}$ मू- ( K$_{1}$ गू )ढभावो ( B$_{3}$ °वे ), D$_{1\ 3}$ °भावान् ( for °भाव- ) D$_{8}$ [अ]निवर्तन. ( for °क ) — ( L 293 ) K$_{1}$ V$_{2\ 3}$ T$_{3}$ इव ( for यथा ) K$_{2}$ B$_{1\ 3}$ Ds D$_{2}$ G$_{1\ 5}$ [अ]नले ( for °लात् ) G$_{4}$ तूलराशिरिवानले ( for $^{b}$ ). — ( L 294 ) V$_{3}$ T$_{4}$ करवीरे पु( T$_{4}$ °रपु )रे शूर ( for $^{a}$ ) K$_{1}$ ( by corr ) Ds -योधिन , K$_{2}$ B$_{1}$ D$_{2-4}$ G$_{2}$ -योधन॰ ( G$_{2}$ °क ) ( for योधिन. ). — ( L 295 ) K$_{2}$ भस्मतां ( for °सान् ) — ( L 296 ) K$_{4}$ च स ; Ñ$_{2,\ 3}$ B$_{2}$ Dn$_{1}$ D$_{1-3\ 6}$ T$_{2\ 3}$ G$_{1\ 4\ 5}$ ऽवसच् ( for वसन् ) — ( L. 297 ) D$_{3}$ उद्धृतेनैकहस्तेन ( for $^{a}$ ) — ( L 299 ) K$_{3}$ Ñ$_{3}$ D$_{1\ 3}$ T$_{3}$ नगेन्द्रे ; D$_{5}$ देवेन्द्र ; T$_{2}$ G$_{1}$ इन्द्रो हि , G$_{4,\ 5}$ इन्द्रस्तु ( for नगेन्द्रं ) K$_{2}$ Ñ$_{3}$ ( marg ) V$_{1,\ 2}$ B Ds D$_{6}$ G$_{2}$ इन्द्रस्तु स्वयमागम्य , K$_{4}$ नागेन्द्रेण सहागत्य , Ñ$_{2}$ V$_{3}$ नगेन्द्रे सह संगम्य , Dn$_{1}$ D$_{2}$ नगेन्द्रे सहसागत्य ( for $^{a}$ ). — ( L 302 ) D$_{1\ 2}$ ( *inf lin* as above ) रोषाग्नि- ( for विषाग्नि- ) K$_{2-4}$ B$_{1}$ D$_{5}$ T$_{3}$ -ज्वालितो , K$_{3}$ -ज्वलनो ( for ज्वलितो ); G$_{2}$ कालानल ( for °न्तक- ) — (L 304) D$_{8}$ सुदु सह॰ ( for दुरासद ). — ( L 305 ) K$_{1}$ सांदीपने , some Mss सांदीपिनि- ( for °पनि- ) Ñ$_{2\ 3}$ V$_{1\ 3}$ B$_{3}$ -सुतं ( for -सुतश् ) K$_{2}$ Ds D$_{6}$ G$_{2}$ सांदिपिनिसुतं चैव ( for $^{a}$ ) K$_{2}$ Ñ$_{2,\ 3}$ V$_{1,\ 3}$ B$_{2,\ 3}$ Ds D$_{6}$ G$_{2}$ -नष्टं ( for -नष्टो ). — ( L. 306 ) K$_{2}$ Ñ$_{2\ 3}$ V$_{1\ 3}$ B Ds D$_{6}$ G$_{2}$ कृष्ण ( for दैत्यं ) K$_{2}$ Ñ$_{2\ 3}$ V$_{1\ 3}$ B Ds D$_{6}$ G$_{2}$ चा( Ñ$_{2}$ V$_{3}$ आ )नयद् ( for आनीतो ) T$_{2}$ G$_{1\ 4}$ -सादनात् ( for -मन्दिरात् ) — ( L 307 ) K$_{4}$ D$_{2}$ गोमन्ते च , V$_{1\ 3}$ B$_{1\ 3}$ Ds °न्तेषु ( for °न्ते सु- ) D$_{3}$ गोमन्ते च महायुद्धं ( for $^{a}$ ) D$_{1\ 2\ 5}$ ( by corr ) वेष्टिताव् ( for चैव ताव् ) — K$_{1}$ om. ( hapl ) lines 308–311 — (L 308) Ñ$_{2\ 3}$ V$_{1\ 3}$ D$_{3\ 4}$ T$_{2\ 3}$ G$_{1\ 4}$ -संक्षयम् ( for -संकुलम् ) K$_{3\ 4}$ Dn D$_{1\ 2}$ T$_{4}$ G$_{5}$ नागाश्वरथसंक्षयम् ( for $^{b}$ ) —(L 309 ) V$_{3}$ नग- ( for गज- ) K$_{2}$ योधिनम् , V$_{2}$ B$_{2\ 3}$ Ds °नाम् , Dn$_{1}$ °ना ( for °न ) —(L 310) Ñ$_{2}$ V$_{1}$ सादिभिश्, B$_{2\ 3}$ Ds D$_{3}$ G$_{2}$ °ना ( for °नश् ) K$_{3\ 4}$ V$_{2}$ Dn D$_{1\ 6}$ T$_{2}$ G$_{1\ 4\ 5}$ -योधेन , D$_{5}$ -युद्धेन ( for योधानाम् ) K$_{3\ 4}$ V$_{2}$ D$_{1\ 4\ 6}$ T$_{2,\ 4}$ G$_{1\ 4\ 5}$ नरेण च , Ñ$_{2\ 3}$ V$_{1}$ पत्तिभिश्च , V$_{3}$ संग्रामेषु ( for चरणेन ) V$_{3}$ B$_{1}$ पदातिनाम् , D$_{5}$ °तिनम् ( for °तिन. ). K$_{2}$ V$_{3}$ B$_{2\ 3}$ Ds D$_{3}$ नरेण च पदातिनाम् ( K$_{2}$ °नम् , D$_{4}$ °ना ) , D$_{3}$ पत्तिना च पदातिनम् ( for $^{b}$ ) —(L 312) K$_{4}$ स- ( for the second न ) —(L 213 ) V$_{3}$ दैत्याश्च ( for दैत्येन्द्रा ) K$_{1}$ किंनरा॰ ; K$_{3\ 4}$ D$_{1}$ राक्षसाः ( for गुह्यकाः ) T$_{2}$ G$_{1}$ पिशाचा न च गुह्यका ( for $^{b}$ ) — ( L. 314 ) V$_{2}$ D$_{4,\ 6}$ T$_{2}$ G$_{1\ 4\ 5}$ कृतमे( V$_{2}$ कुर्युरे )वंविधं घोरं ( for $^{a}$ ) V$_{1}$ नराश्व- ( for गजाश्व- ) K$_{2}$ D$_{5}$ -संकुलम् ( for -संक्षयम् ). — ( L. 315 ) K$_{2}$ G$_{2}$ संग्रामे ( for °मं ). T$_{3}$ तस्य संगृह्य संग्रामं ( for $^{a}$ ). T$_{2}$ G$_{1\ 4\ 5}$ मेदिनी ( for मे मन ) — After line 315, Ñ$_{2}$ V$_{2}$ ins :

11** कृत्वा गोवर्धनं वेश्म रक्षिता गा नृभि सह ।
वातवृष्टिसमाक्रान्तास्तेन सीदति मे मनः ॥

[ ( L 2 ) V$_{2}$ -भयार्तांस्तु ( for -समाक्रान्ता ) ]

— ( L 316 ) D$_{3}$ मेऽभूत् ( for मया ) D$_{3}$ दृष्टपूर्वोऽपि वा

तादृशो भुवि मर्त्येऽस्मिन्वासुदेवात्सुरोत्तमात् ॥
सम्यगाह महाबाहुर्दन्तवक्त्रो महीपतिः ।
सान्त्वयित्वा महावीर्यं संविधास्याम यत्क्षमम् ॥
इति संचिन्त्य मनसा बलाबलविनिश्चयम् । [ 320 ]
गमनाय मतिं चक्रे प्रसादयितुमच्युतम् ॥
चिन्त्यमानो नरेन्द्रैस्तु बहुभिर्बलशालिभिः ।
सूतमागधबन्दीभिर्बोधितः स्तुतिमङ्गलैः ॥
प्रभातायां रजन्यां तु कृतपूर्वाह्णिकक्रियाः ।
उपविष्टा नृपाः सर्वे स्वेषु विश्रामवेश्मसु ॥ [ 325 ]
ये विशिष्टाश्च राजानो विदर्भायां नराधिपैः ।
तैरागम्य स्वभूपेषु रहो गत्वा निवेदितम् ॥
श्रुत्वा कृष्णाभिषेकं तु केचिद्धृष्टा नराधिपाः ।
केचिद्दीनतरा भीता उदासीनास्तथापरे ॥
त्रिधा प्रभिन्ना सा सेना नरनागाश्ववाहिनी । [ 330 ]
महार्णव इव क्षुब्धा अभिषेकेण चालिता ॥
नृपाणां भेदमालोक्य भीष्मको राजसत्तमः ।
व्यतिक्रममचिन्त्यं च कृतं नृपतिना स्वयम् ॥
विचिन्त्य मनसा राजन्दह्यमानेन चेतसा ।
जगाम नरदेवानां समाजे प्रतिबोधितुम् ॥ [ 335 ]
एतस्मिन्नन्तरे दूताः संप्राप्ताः कैशिकान्तिकात् ।
लेखमुद्धृत्य शिरसा विविशुस्ते नृपार्णवम् ॥

Colophon.

जनमेजय उवाच ।
हत्वा कंसं महावीर्यं देवैरपि दुरासदम् ।

क्षितौ ( for $^{b}$ ) — ( L 317 ) $B_2$ $D_5$ $T_2$ $G_{1,5}$ मर्त्योऽस्मिन्, Dn मर्त्योऽन्यो, $D_3$ नान्योऽस्ति, $D_6$ $G_2$ मर्त्योऽस्माद् ( for मर्त्येऽस्मिन् ) $K_4$ न दृष्टो भुवि मर्त्योऽस्मिन् ( for $^{a}$ ) G(ed) सुरान्तकात् ( for सुरोत्तमात् ). $D_2$ वासुदेव सुरोत्तमः ( for $^{b}$ ) — ( L 318 ) $\tilde{N}_2$ $V_3$ $B_{1\ 3}$ Ds $G_2$ महामति., Cal. ed महाद्युति ( for महीपति ) $K_2$ दन्तवक्त्रो महामतिः ( for $^{b}$ ) — ( L. 319 ) $K_{1\ 2}$ $B_2$ Ds $T_4$ संधयित्वा ( for सान्त्व° ) $G_2$ सधयित्वा महाबाहु ( for $^{a}$ ) $V_2$ Dn $D_1$ $T_2$ $G_1$ संविधास्यामि ( for °म ) $V_1$ फलम् ( for क्षमम् ). — Before line 320, all Mss ins वैशंपायन उवाच — ( L 320 ) $D_3$ निश्चित्य ( for संचिन्त्य ) $K_{1\ 4}$ $V_2$ -विनिश्चितम् ( for °श्चयम् ) — ( L 321 ) $D_5$ चक्रु ( for चक्रे ) — ( L 322 ) $\tilde{N}_2$ $D_3$ चिन्तयानो ( $D_3$ °मो ), $D_6$ छिद्यमानो ( for चिन्त्य° ). $K_1$ $Dn_1$ $D_{1\ 4}$ $T_3$ $G_1$ नरेन्द्रस्तु; $V_{1\ 3}$ B $G_2$ °न्द्रैश्च ( for °स्तु ) $K_{2-4}$ $Dn_2$ $D_2$ $T_4$ चिन्तयानो नरेन्द्रस्तु ( $K_2$ °न्द्रैश्च ) ( for $^{a}$ ) — ( L 323 ) K $\tilde{N}_{2,3}$ V B $Dn_1$ Ds $D_{1-6}$ $T_{2-4}$ $G_{1\ 2\ 4\ 5}$ बन्दिभ्यो ( for °भिर् ) $K_{1\ 2}$ बोधितं, $D_{5\ 6}$ $T_2$ °ता ( for °तः ) — ( L 325 ) $K_4$ सुख- ( for स्वेषु ) $G_2$ विश्राम्य ( for °म- ) $\tilde{N}_{2\ 3}$ $V_1$ -भूमिषु ( for -वेश्मसु ) — ( L 326 ) $K_1$ ऽत्रशिष्टाश्, $V_2$ $Ds_1$ $D_4$ $T_{2-4}$ $G_{1\ 4\ 5}$ विसृष्टाश् ( for विशिष्टाश् ) $K_2$ $V_3$ Dn $Ds_2$ $D_{3\ 6}$ ये विसृष्टाश्चरा राजन् ( $D_3$ °ज्ञो ), $\tilde{N}_{2\ 3}$ $V_1$ $B_{1\ 2}$ ये विसृष्टाश्च राज्ञा वै ( $B_{1\ 2}$ वा राजन् ), $B_3$ ये विशिष्टोत्सवा राजन् ( for $^{a}$ ) $K_{1\ 3\ 4}$ नराधिपम्; $D_{2\ 4}$ $T_9$ °धिपा ( for °धिपैः ) — ( L. 327 ) $K_4$ स्वदूतेन, $B_{2,3}$ $Ds_1$ स्वराजेषु; $Ds_2$ $D_6$ $T_2$ $G_{1,4\ 5}$ स्वराज्येषु ( for स्वभूपेषु ) $K_1$ तेनागम्य स्वदूतेन, $K_1$ तैरागत्य स्वराष्ट्रेषु, $K_3$ तेष्वागम्य स्वरूपेषु ( for $^{a}$ ). $T_2$ $G_{1,4}$ निवेशितुम्; $T_3$ $G_5$ °दितुम् ( for °दितम् ). — ( L. 328 ) $K_1$ दृष्ट्वा केचिन्, $V_3$ केचिद्दृप्ता; $D_1$ $T_4$ केचिद्दृष्ट्वा ( for °द्धृष्टा ). — ( L 329 ) $V_1$ दीनमना ( for °तरा ). $\tilde{N}_2$ $B_2$ भूता, $B_3$ भूत्वा ( for भीता ) $K_2$ Ds ऽभवन्कचित् ( for तथापरे ) $T_3$ वदासीनास्तदापरे ( for $^{b}$ ) — ( L 330 ) $D_2$ द्विधा; $T_{2\ 3}$ त्रिभि. ( for त्रिधा ) Ds $D_{4\ 5}$ भिन्ना तु, $G_2$ प्रवृत्ता ( for प्रभिन्ना ). $K_2$ $G_2$ -मालिनी; $\tilde{N}_3$ $V_{1\ 3}$ B Ds -शालिनी ( for -वाहिनी ). — ( L 332 ) $G_2$ वैरम् ( for भेदम् ) $T_2$ $G_1$ आलक्ष्य ( for आलोक्य ) — ( L 333 ) $D_{2\ 6}$ $G_5$ अचिन्त्यैवं ( for °न्त्यं च ) $K_4$ $D_3$ नृपतिभिः ( for °ना ) $K_2$ कृतं नृपतिसान्त्वनम् ( for $^{b}$ ). — ( L 334 ) $K_2$ $\tilde{N}_2$ $V_{2\ 3}$ B Dn $Ds_1$ $D_{2\ 3}$ $T_{3,4}$ $G_{2,5}$ राजा, $Ds_2$ राज्ञा ( for राजन् ) — ( L 335 ) $T_2$ $G_5$ -बोधितः ( for °तुम् ) — ( L 336 ) $G_5$ भ्रान्ता ( for दूता ) $V_3$ ( marg as above ) संप्राप्ता. कैशिकान्तिकम्, $D_1$ °प्ताः केशवान्तिकम्, $T_2$ $G_1$ °प्त कौशिकोऽन्तरात्, Bom Poon eds G(ed) °प्ताः क्रथकैशिकौ ( for $^{b}$ ) — ( L 337 ) $G_2$ लेख्यम् ( for लेखम् ) $D_{2,3}$ $T_3$ सहसा ( for शिरसा ) $K_3$ नृपार्णवे; $D_6$ $G_{1,4\ 5}$ लयम् ( for °र्णवम् ). — COLOPHON — *Mention of the Epic* $K_3$ $Ds_2$ $T_3$. — *Mention of Khila* $K_3$ $\tilde{N}_3$ V B $Dn_2$ Ds $D_1$. — *Sub-parvan* $T_4$ आश्चर्यपर्व — *Adhy. name* K $\tilde{N}_3$ V B Dn Ds $D_{2-6}$ $T_4$ $G_2$ रुक्मिणीस्वयंवरः, $\tilde{N}_2$ स्वयवर, $D_1$ रुक्मिणीस्वयंवरे भीष्मकवाक्यम् — *Adhy no* $K_3$ 103, $\tilde{N}_3$ V 107, $B_2$ $G_5$ 109, Dn $Ds_2$ $D_4$ 104; $D_1$ 100; $D_3$ 113, $T_2$ $G_4$ 106, $T_3$ 115 $T_4$ 96, $G_1$ 108; $G_2$ 110

$T_{3\ 4}$ transp line 338 and line 339 — ( L 338 ) Ds महाराजं, $T_2$ °वीरं ( for °वीर्यं ) — ( L. 339 ) $G_2$ -तिष्ठन् ( for विष्टो ) — ( L 340 ) $K_{2-4}$ $\tilde{N}$ V $B_{1\ 2}$ Dn

नाभिषिक्तः स्वयं राज्ये नोपविष्टो नृपासने ॥
कन्यार्थेनागतः कृष्णस्तत्रापि न कृतोऽतिथिः । [ 340 ]
अमानमतुलं प्राप्य क्षान्तवान्केन हेतुना ॥
विनतायाः सुतश्चैव महाबलपराक्रमः ।
स चापि क्षमया युक्तः कारणं किमपेक्षितम् ।
एतदाख्याहि भगवन्परं कौतूहलं हि मे ॥

वैशंपायन उवाच ।

विदर्भनगरीं प्राप्ते वैनतेये सहाच्युते । [ 345 ]
मनसा चिन्तयामास वासुदेवस्य कैशिकः ॥
दृष्टाश्चर्यं हि नः सर्वान्ध्रुवं पापक्षयो भवेत् ।
विशुद्धभावः कृष्णस्य आवयोर्दृष्ट तत्त्वतः ॥
अतः पात्रतरः कोऽन्यस्त्रिषु लोकेषु विद्यते ।
कृष्णात्कमलपत्राक्षाद्देवदेवाज्जनार्दनात् ॥ [ 350 ]
तस्यावां किं प्रदास्याव आतिथ्यकरणे नृप ।
पात्रमासाद्य वै राजन्यथा धर्मो न लुप्यते ॥
एवमन्योन्यं संचिन्त्य भ्रातरौ क्रथकैशिकौ ।
स्वं राज्यं दातुकामौ तौ जग्मतुः केशवान्तिकम् ॥
देवमासाद्य तौ वीरौ विदर्भनगराधिपौ । [ 355 ]
ऊचतुस्तौ महात्मानौ प्रणम्य शिरसा हरिम् ॥
अद्यावां सफलं जन्म अद्यावां सफलं यशः ।
अद्यावां पितरस्तृप्ता देवे त्वयि गृहागते ॥
चामरं व्यजनं छत्रं ध्वजं सिंहासनं बलम् ।
स्फीतकोशां पुरीं चैव गजाश्वरथसंयुताम् ॥ [ 360 ]
उपेन्द्रस्त्वं महाबाहो देवेन्द्रेणाभिषिक्तवान् ।
आवामिह हि राज्ये त्वामभिषिञ्चाव वै प्रभो ॥
आवयोर्यत्कृतं कार्यं बहुभिः पार्थिवैरपि ।

---

Ds D2–5 T3 4 G2 कन्यार्थे च ( for °र्थेन ) B3 D1 कन्यार्थे च गत. कृष्णम् ( for ᵃ ) T4 तथा ( for तत्र ). K1 T4 G2 विधि· ( for ऽतिथि· ) —( L. 341 ) G2 कृतवान् ( for क्षान्त° ) —( L 343 ) K1 Ñ3 Dn T3 4 G2 अपेक्षित ; K2, 3 Ñ2 V1 3 D1 2 6 T2 G1 4 5 उपेक्षित ( for अपेक्षितम् ) K4 कारणं समुपेक्षित ( for ᵇ ) —( L. 345 ) Dn T4 -नगरं, K2 -नगरे ( for °रीं ) Ñ2 B1, 2 Dn2 Ds वैनतेय ( for °ये ) —( L 346 ) वासुदेव हि, K4 °देवेऽपि ; D1 °देवोऽपि ; G2 °देवं च ( for °देवस्य ) Some Mss कौशिक- ( for कै° ) —K2 B3 om lines 347–348, D2 reads the same on marg —( L 347 ) K4 व ( for नः ). V1, 2 सर्वौ ; V3 सद्यो, B2 सर्वे, D6 सर्वं ( for सर्वान् ). D3 दृष्ट्वाश्चर्यं हि तत्सर्वं, G2 दृष्टमाश्चर्यमस्माभिः ( for ᵃ ) — After line 347ᵃ, K4 Bom Poona eds G(ed ) ins ·

12** राजन्यान्प्रवदाम्यहम् ।
वसुदेवसुते दृष्टे·

—( L 248 ) T3, 4 मनो विशुद्धं कृष्णस्य ( for ᵃ ) D3 आतिथौ ; D5 चावयोर् ( for आ° ) T3 4 वृत्त ( for दृष्ट ). K4 आवयोर्दर्शनं गत ( for ᵇ ) —( L 349 ) D3 पात्रतमः, D6 परतरं ( for पात्रतर ) T3 ऽन्यः कस् ( by transp. ). —( L. 350 ) K2 वासुदेवाज् ( for देव° ) —( L 351 ) K2 G2 अस्यावां ; G5 कस्य वा ( for तस्यावां ) Ñ2 V1 3 त्विह ; D4 नृपा· ( for नृप ) K2 V2 B Ds D2 ( *sup lin* ) 3 G2 आ( B3 वा )तिथ्यकरणेन ह, Cal. ed चातिथ्यकारणेन ह ( for ᵇ ). —( L 352 ) T2 G4 लिप्यते ( for लु° ) K3 न नो धर्मेण लुप्यते ( corrupt ), G1 यथा धर्मेण लिप्यते ( for ᵇ ). —( L. 353 ) B2 D6 T2 G1, 2 4, 5 अन्योन्यमेवं संचिन्त्य, T3 4 एवं सचिन्त्य चान्योन्यं ( for ᵃ ) —( L. 355 ) D3 एवम् ( for देवम् ) T2 G1 समासाद्य च तौ वीरौ ; G4 ते समासाद्य तौ वीरौ ( for ᵃ ) —( L 356 ) K4 याचेतां ( for ऊचतुस् ) T2 G1 महात्मानं, T4 °भागौ ( for °त्मानौ ). —( L 357 ) D4 5 नौ ( for [आ]वा ) —B1 om line 357ᵇ D4 5 नौ ( for [आ]वां ) Ñ2 V3 B3 Ds D3 प्रथितं ( for सफलं ) —( L 358 ) D4 5 नौ ( for [आ]वां ) V1 तुष्टा ( for तृप्ता ) K1 4 Dn T4 देवे चावां, B3 G2 देव त्वयि ; T3 देवदेवे ( for देवे त्वयि ) —( L 359 ) D5 चामरे ( for °र ) D3 तथा ( for बलम् ) —( L 360 ) K4 B2 D2–4, 6 T2–4 G1 4 5 -कोशा पुरी ( for कोशां पुरीं ). V1 [ए]नां ( for [ए]व ) K2 Ñ2 3 V2 3 B1 Dn Ds G2 स्फीतकोशा पुरी चेयम् ( Ñ2 V3 नाम ) ( for ᵃ ). D3 4 -संयुता ( for °ताम् ). K1 ( marg. as above ) Ñ2 V3 B1 Ds D6 T2 G4, 5 आवयो सहिता ( Ñ2 V3 B1 T2 G4 5 सहितं, D6 सकलं ; T4 सुहिता ) तव, K2 B2 3 Dn D2 G1 2 आवाभ्यां सहिता ( B2 3 सहितं, G1 सततं ) तव, D3 V1 2 D1 T3 आवयो. ( K3 °वाभ्यां ) सहितस्तव ( V1 °या ) ; K4 आवां यच्चास्ति तत्तव ; Ñ3 आवाभ्यां सुहिता तथा ( for ᵇ ) — ( L 361 ) V3 उपेन्द्रत्वे ( for °स्त्वं ) K3 D3 6 T2 G1 5 [अ]भिषेचितः, D1 निषिक्तवान्, G4 [अ]भिचोदितम् ( for °षिक्तवान् ) V3 D5 G2 देवेन्द्रस्त्वाभिषिक्तवान् ( for ᵇ ) —( L. 362 ) D3 स्वे ( for हि ). T4 राजेन्द्र ( for राज्ये त्वाम् ). K1, 3 V1 Dn D1 2 T3 आवयोरिह राजेन्द्र ( K3 Dn °ज्ये च ) ; K4 अवधारय राजेन्द्र ; Ñ2 V3 अद्यावामिह राज्ये त्वाम्, Ñ3 आवयोर्गतराज्ये त्वाम् ; D2 ( marg ) आवामिह स्वराज्ये त्वाम् ( for ᵃ ) Ñ2 V3 D3, 4 अभिषिच्याव ; N2 °षेकं च, G4 °षिञ्चामि ( for

शक्यते नान्यथा कर्तुं जरासंधेन वा स्वयम् ॥
शत्रुस्ते मागधो राजा जरासंधो महाद्युतिः । [ 365 ]
कथां ते ब्रुवते नित्यं नृपाणामभयप्रदः ॥
सिंहासनमनध्यास्य पुरं चास्य न विद्यते ।
कथं राजसमाजेऽस्मिन्नासते देवकीसुतः ॥
कृष्णोऽपि सुमहावीर्यो ह्यभिमानी महाद्युतिः ।
न चागमिष्यते चास्मिन्कन्यार्थे च स्वयंवरे ॥ [ 370 ]
पार्थिवेषूपविष्टेषु स्वेषु सिंहासनेषु वै ।
कथमास्यति नीचेषु आसनेषु महाद्युतिः ॥
इति संचोद्यमानस्तु श्रुत्वासौ भीष्मको नृपः ।
आवयोः सह संमन्त्र्य विग्रहोपशमार्थिना ॥
तव विश्रामहेतोर्हि कारितं च गृहोत्तमम् । [ 375 ]
देवानामादिदेवोऽसि सर्वलोकनमस्कृतः ॥
मानुषे मर्त्यलोकेऽस्मिन्राजेन्द्रत्वं समाचर ।
समाजे मनुजेन्द्राणां मा भूदासनसंकटम् ॥
विदर्भनगरे चेदं राजेन्द्रत्वं समाचर ।
आस्यतामासने शुभ्रे श्वः प्रभाते महाद्युते ॥ [ 380 ]
अधिवास्यात्मनात्मानं विधिदृष्टेन कर्मणा ।
यथागमिष्यन्ति नृपाः करिष्ये देवशासनात् ॥
एवमुक्त्वा सुरश्रेष्ठं प्रणिपत्य कृताञ्जली ।
प्रेषयामास तौ वीरौ रङ्गमध्ये नृपैर्वृते ॥
देवदूतस्य वचनं यथोक्तं वज्रपाणिना । [ 385 ]
लिखित्वा सुमहातेजाः कैशिकः शापजाद्भयात् ॥
विदितं वो नृपाः सर्वे वैनतेयसहाच्युतः ।

---

°षिञ्चाव ). K1 अभिषेकं पुन. पुन , K1 ( marg ) 3 4 Ñ3 V1 Dn D1 2 ( marg as above ) T3 4 अभिषेकं ( T3 4 °षिक्तं ) ददामि ते ( for $^{b}$ ) — ( L 363 ) D1 च तं ( for कृतं ). K4 राज्यं ( for कार्यं ) V3 इति ( for अपि ). — ( L. 364 ) K1 शक्नोति न, K3 शक्रस्तत्र, D3 G1 न शक्यते ( by transp ) K1 3 4 Ñ2 3 V1 3 B1 Dn D2–4 6 T2 4 G1. 5 जरासंधोऽपि ( Ñ2 V3 °ध ) ( for °संधेन ). — ( L. 365 ) D4 महीपति· ( for महाद्युति ) — ( L 366 ) T3 4 कथ्यते ( for कथां ते ) K3 Ñ2 V3 D4 वदते ( for ब्रुवते ). Cal. ed राजन् ( for नित्यं ). — ( L 367 ) K3 4 Dn D2 4 T3 4 अनध्यास्यं, Ñ3 V1 अनासाद्य ( for अनध्यास्य ) K4 पुरा चापि, D3 पुरुषस्य ( for पुरं चास्य ). K2 विद्यहे ( for विद्यते ) — ( L 368 ) K Ñ2 3 V B Dn Ds D2–4 6 T2–4 G1 2. 4. 5 आस्यते, D5 आसीनो ( for आसते ). — ( L 369 ) K2 Ñ2 V3 [अ]ति- ( for [अ]भि- ). — K3 T2 G1. 4 5 om ( hapl ) lines 370–372 — ( L 370 ) V2 D4 तस्मिन्, D2. 3 राजन्; T3 4 चात्र ( for चास्मिन् ). Dn स; G2 न ( for च ). Ñ2 B1. 3 D2–4 6 T4 स्वयवरम् ( for °रे ). K1 V1 कन्याहेतोः ( V1 कार्यार्थे च ) स्वयंवरम् ( for $^{b}$ ) — ( L 373 ) K2 Ñ3 V2 B Ds D1 T2–4 G1. 2 संचिन्त्यमानस्; D3 संनोद्य° ( for सचोद्य° ) Ñ2 इदं संचिन्त्यमानस्तु ( for $^{a}$ ) K4 कौशिको, D1 2 भीमको ( for भीष्मको ). — After line 373, K4 ins

13** सर्वं तद्वासुदेवाग्रे जरासंधचिकीर्षितम् ।
निवेदयामास तदा तस्याभिलषित त्विदम् ॥

— ( L 374 ) D6 T2. 3 G1 5 आवयोः सदृशं मन्त्रं ( for $^{a}$ ). K1 विग्रहप्र- ( for °होप- ). K2 -शमार्थिनोः; K3 Dn D4 °य च; D3 -समाधिना; T2 -शमाय नः ( for °र्थिना ). K1 विग्रहोऽत्र समर्पितः ( for $^{b}$ ). — ( L. 375 ) K3 न च, V1 तत्र ( for तव ) K1 2 Ñ2. 3 V2. 3 B Dn Ds1 D4. 5 T3 4 G2. 4 कारितेदं, K3 D2 °तं हि, K4 [अ]कारि चेदं, V1 कारितं ते, D3 °तं वै ( for °तं च ) — ( L 376 ) K4 B1 3 D3 अपि ( for आदि- ). K2 V1 2 T4 -देव- ( for लोक- ) — ( L. 377 ) K2 Ñ3 V1 B1 3 Dn2 D2 3. 5 6 T2. 4 G1 4 मानुष्ये, B2 °षो; D4 °षैर्; T3 °षं, G2 °ष्यं ( for °षे ). K3 सर्व- ( for मर्त्य- ). D1 मानुष्ये मृत्युलोकेऽस्मिन् ( for $^{a}$ ) — K2 G3 om lines 378–379. — ( L 378 ) Cal ed मानुषेन्द्राणां ( for मनुजे° ). T3 -संकुलम् ( for -संकटम् ). — ( L 379 ) Ñ2. 3 V1. 2 Dn D1. 4 G1 4 चैषां, V2 तेषां, D2 3 चैव; D6 T2 चैवं; G4 चेमं ( for चेदं ). K1. 4 विदर्भनगरोद्याने; K3 °नगरीश्चैवं ( for $^{a}$ ). K1 विरोचय; K3 4 Ñ2 3 V1. 3 Dn D1–6 T2–4 G1. 4. 5 विचेष्टय ( for समाचर ) — ( L 380 ) K4 आस्यतामासनं शुभ्र ( for $^{a}$ ) K2. 4 D1 सुप्रभाते; D6 स्वप्रभावे ( for श्वः प्रभाते ). — ( L 381 ) K1. 3 4 Ñ3 Dn Ds D4 (*sup. lin.*) T4 G1 [अ]द्य च ( for [आ]त्मना ). — ( L. 382 ) D4 यदि ( for यथा ) — ( L 383 ) K1. 2. 4 V1 2 B D1 2. 4 5 T2–4 G1. 2 कृताञ्जलि·, D2 ( marg ) जगत्पतिम्; D3 जगद्गुरुम् ( for कृताञ्जली ). — ( L 384 ) K3 घोषयामास ( for प्रे° ). V2 नरैर् ( for नृपैर् ). K1 4 D1 2 T2 G1 4 5 वृतौ; K2 D4 वृत , K3 वृतै· ( for वृते ). — ( L 385 ) K1. 3. 4 V2 Dn D1 2 5 6 ( marg as above ) एवं ( for देव- ) V3 -भूतस्य ( for -दूतस्य ) — ( L. 386 ) K4 लिखितं सुमहापूज्यः ( *sic* ) ( for $^{a}$ ) K1 3 4 Dn Ds1 ( marg. ) D1. 2 ( marg as above ) 4 ( marg. ) कौशिक प्राह शासनम्; D3 कैशिक· शक्रशासनम् ( for $^{b}$ ) — Before line 387, some Mss. ins. कौशिकः, and some कैशिकः. — ( L 387 ) Ñ2. 3 ( marg. as

आगतोऽतिथिरूपेण विदर्भनगरीं हरिः ॥
प्राप्तमालोक्य पात्रोऽयमिति संचिन्त्य भूपतिः ।
प्रददौ वासुदेवाय स्वं राज्यं धर्महेतुना ॥ [ 390 ]
इदमासनमास्स्वेति भ्रात्रा मे सहितोऽनघाः ।
वागुवाचाशरीरेण केनापि व्योमचारिणा ॥
न युक्तमासनं दातुं त्वयासीनं नराधिप ।
इदमस्यासनं दिव्यं सर्वरत्नविभूषितम् ॥
जाम्बूनदमयं दिव्यं रचितं विश्वकर्मणा । [ 395 ]
प्रेषितं देवराजेन सिंहलक्षणलक्षितम् ॥
अत्रोपविष्टं देवेश चराचरनमस्कृतम् ।
अभिषिञ्चत राजेन्द्रं बहुभिः पार्थिवैः सह ॥
आगताः कुण्डिनगरे कन्याहेतोर्नराधिपाः ।
नागमिष्यति यः कश्चित्सोऽस्य वध्यो भविष्यति ॥ [400]
इमे चैवाष्टकलशा निधीनामंशसंभवाः ।
अक्षया राजराजस्य धनेशस्य महात्मनः ॥
दिव्याः काञ्चनरत्नाढ्या दिव्याभरणयोनयः ।
राजेन्द्रस्याभिषेकार्थमागच्छन्ति नृपैर्वृताः ॥
एष शक्रस्य संदेशः कथितो वो नराधिपाः । [ 405 ]
लेखेनाहूय तान्सर्वानभिषिञ्चन्तु केशवम् ॥

कैशिक उवाच ।

इति संचोद्य खस्थोऽसौ देवदूतो गतो दिवम् ।
दत्त्वासनं च कृष्णाय बालार्कसदृशप्रभम् ॥
तेनाहं चोदयिष्यामि भवन्तो ये समागताः ।
दुर्निवार्यतरं घोरं शक्रेण स्वयमीरितम् ॥ [ 410 ]
युष्माभिर्दर्शने युक्तमद्भुतं भुवि दुर्लभम् ।
कलशैरभिषिच्यन्तं स्वयमेव नभस्तलात् ॥

---

above ) $V_3$ $D_4$ $T_3$ विदितार्था, $D_2$ $G_{1.5}$ °तो वो, $D_6$ $T_2$ $G_4$ °तो वै, ( for °तं वो ) $D_6$ $G_5$ -सखोऽच्युत ( for -सहाच्युत ) —( L 388 ) $D_3$ $G_4$ -नगरं ( for °रीं ) —( L 389 ) $K_3$ पात्रं च, $D_6$ मान्योऽयम्, $T_2$ $G_{1\ 4\ 5}$ यातोऽयम्, $G_2$ पात्रं हि ( for पात्रोऽयम् ) $K_4$ $D_{3\ 6}$ $T_2$ $G_{1\ 4\ 5}$ भूमिप ( for भूपतिः ). $G_2$ सुविनिश्चित्य भूपति ( for $^{b}$ ) —( L 391 ) $D_3$ आतिष्ठ ( for आस्स्वेति ) $K_1$ ऽनघ, $K_3$ $D_2$ ऽनघ, $D_6$ नृप, $T_2$ $G_{1.4\ 5}$ नृप ( for ऽनघा ) $K_1$ ( marg ) भ्रात्रा मे नोदिते तत· ; $K_2$ $G_2$ भ्रात्रा मे बोधितस्त( $G_2$ °ते त )त, $\tilde{N}_2$ $V_3$ $D_5$ भ्रात्रा ( $\tilde{N}_2$ °ता ) मे चोदितस्तत ; $\tilde{N}_3$ $V_{1\ 2}$ $B_1$ Ds $D_4$ भ्रात्रा मे चोदिते तत·, $B_2$ भ्रात्रा संचोदितेन ह, $B_3$ भ्रात्रा मेति तु चोदित ( sic ), Dn भ्रात्रा मेऽभिहितेऽनघ, $D_1$ त्राता मे संहृतोऽनघ, $D_3$ $T_{3\ 4}$ भ्रात्रा मे चोदिते( $D_3$ °तो )ऽनघ. —( L 392 ) $K_3$ $T_4$ $G_{2\ 5}$ उक्ता च, $D_5$ ऊचे च ( for उवाच ) Ds -चारिणी ( for °णा ) — Before line 393, K $\tilde{N}_{2\ 3}$ V B Dn Ds $D_{1\ 2\ 4-6}$ $T_{3.4}$ $G_2$ ins देवदूतः, $D_3$ देवः —( L. 393 ) $K_4$ तव मानान्, $B_3$ त्वया हीनं, $D_{3-5}$ त्वया चास्मै, $T_2$ $G_{1\ 4\ 5}$ त्वया रूपं ( for त्वयासीनं ). $G_2$ त्वयासितमहो नृप ( for $^{b}$ ). —( L 395 ) K $\tilde{N}_3$ ( marg. ) $V_1$ ( marg as above ) $_2$ Dn $D_{1-4\ 6}$ $T_{2-4}$ $G_{1\ 2.4\ 5}$ शुभ्रं, $\tilde{N}_3$ ( marg also as above ) चित्रं ( for दिव्यं ) —( L 396 ) $D_5$ प्रहितं ( for प्रेषितं ) —( L 397 ) $K_3$ $D_1$ तत्र ( for अत्र ) $T_2$ $G_{1\ 4}$ देवेन ( for °शं ) —( L 398 ) $K_1$ $T_4$ अभिषिञ्चतु, $V_2$ °षिक्तं तु ; Dn $D_{2.5}$ °षिञ्चथ, $D_{4\ 6}$ $T_3$ $G_{4\ 5}$ °षिच्याथ ( for °षिञ्चत ) $K_2$ राजेन्द्र ( for °न्द्रं ). $K_4$ अभिषिञ्चन्तु राजेन्द्रा, $D_1$ °षिञ्चतु राजेन्द्र, $D_3$ °षिच्यस्व राजेन्द्र, $T_2$ $G_1$ °षिच्याथ राजेन्द्र, $G_2$ °षिञ्चस्व राजानं ( for $^{a}$ ) —( L. 399 ) $K_1$ कुण्डिनमिदं, $K_4$ $D_3$ $T_2$ $G_1$ °नपुरं ( for °नगरे ) —( L 400 ) In $K_3$, the portion from स्य ( in $^{b}$ ) up to क्रथ ( in line $447^{b}$ ) is lost on a missing fol $D_1$ ऽपि, $D_3$ मे, $G_{1\ 4}$ स्म ( for ऽस्य ) —( L 401 ) $K_2$ वै चाष्ट-, $T_2$ वै लोष्ट ( for चैवाष्ट- ). $\tilde{N}_2$ $V_1$ अङ्ग- ( for अंश- ) —( L 402 ) $G_2$ अष्टधा ( for अक्षया ) $G_5$ राजसिंहस्य ( for °राजस्य ) $T_{3\ 4}$ धनदस्य ( for धनेशस्य ) —( L 403 ) $K_1$ दिव्य- ( for दिव्या ) $V_2$ $D_3$ दिव्यकाञ्चनरत्नौघा ( $D_3$ °रत्नाढ्यं ) ( for $^{a}$ ) —( L 404 ) $V_1$ [अ]भिषेकार्थं ( for °र्थम् ) $K_1$ आगच्छन्तु ( for °न्ति ) $D_3$ सुरैर् ( for नृपैर् ) —( L 405 ) $K_1$ परः ( for एष ) $K_4$ वां, $B_3$ मे, $T_2$ $G_1$ वै ( for वो ). —( L 406 ) $D_3$ लेखाद् ( for लेखेन ) $\tilde{N}_2$ $V_{1\ 3}$ $B_2$ अभिषिञ्चत, $B_3$ Ds $D_{2\ 4\ 6}$ °षिञ्चथ, Dn $D_3$ $G_{2\ 4}$ °षिञ्चस्व ; $D_1$ °षेकार्थं, $D_5$ °षेचय, $T_2$ $G_1$ °षिच्याथ ( for °षिञ्चन्तु ) —( L 407 ) $D_6$ इत्थं ( for इति ) $K_1$ संवेद्य, $V_2$ $B_3$ साचिन्त्य, $D_4$ संनोद्य ( for संचोद्य ) $K_2$ स्वकैर्वाक्यैर् ( hypermetric ), $V_3$ $G_1$ खस्थो वै, $D_2$ तं खस्थो ( for खस्थोऽसौ ). $D_{1\ 2}$ गतो दिवि, $D_2$ ( marg. दिवं ययौ, $G_4$ दिवं गत ( by transp ) ( L 408 ) $G_{4\ 5}$ दृष्ट्वा ( for दत्त्वा ). —( L 409 ) $K_{1\ 4}$ $V_2$ $D_{1-3}$ $G_5$ नोदयिष्यामि ( for चो° ) $K_1$ ( *sup lin.* ) भवतोऽर्थं, $K_4$ Dn $D_1$ भवद्भिर्ये, $T_2$ $G_1$ °न्तो वै ( for °न्तो ये ) $D_2$ ( *sup lin* ) समाश्रिताः ( for °गता ) $K_2$ $B_{1\ 2}$ $D_6$ $G_2$ भवतो वै समागतान्, $D_3$ °तो येन संगर ( for $^{b}$ ) —( L 410 ) Bomb Poona eds G(ed ) शक्रस्य ( for शक्रेण ) —( L 411 ) $K_2$ $\tilde{N}_{2.3}$ $V_1$ B $D_{3\ 6}$ $G_2$ दर्शनं, $K_4$ दैवतैर् ( for दर्शने ) $K_1$ ( marg as above ) युष्माभिर्जनार्दनो युक्त ( hypermetric ), $D_1$ $T_2$ $G_{1\ 4\ 5}$ अस्माभिर्दर्शनं युक्तम् ( for $^{a}$ ) —( L 412 ) $K_1$ $\tilde{N}_3$ $V_1$ B $Ds_2$

दृष्ट्वाश्चर्यं हि नः सर्वान्ध्रुवं पापक्षयो भवेत् ।
स्नापनार्थं च कृष्णाय देवदेवाय विष्णवे ॥
आगच्छध्वं नृपश्रेष्ठा न भयं कर्तुमर्हथ । [ 415 ]
आवयोः कृतसंधानो युष्मदर्थे जनार्दनः ॥
सर्वेषां मनुजेन्द्राणामभयं कुरुते हरिः ।
विशुद्धभावः कृष्णस्य आवयोर्दृष्ट तत्त्वतः ॥
मागधस्य विशेषेण न वैरं हृदि दृश्यते ।
यदत्र कारणं कार्यं तद्भवद्भिर्विचिन्त्यताम् ॥ [ 420 ]

वैशंपायन उवाच ।

एवं संचिन्त्यमानास्तु नृपाः शापभयार्दिताः ।
भूयः शुश्रुवू राजेन्द्र राजानः सर्व एव ते ॥
मेघगम्भीरनादेन स्वरेणापूरयन्नभः ।
वागुवाचाशरीरेण देवराजस्य शासनात् ॥

चित्राङ्गद उवाच ।

त्रैलोक्याधिपतिः शक्रः प्रजापालनहेतुना । [ 425 ]
आज्ञापयति युष्माकं नृपाणां हितकाम्यया ।
न युक्तं वदतान्योन्यं कृष्णेन सह वैरिणा ।
वसध्वं प्रीतिमुत्पाद्य स्वराष्ट्रेषु नराधिपाः ॥
प्रणतार्तिहरः कृष्णः प्रतिसेनान्तकोऽनलः ।
अनेन सह संप्रीत्या मोदध्वं विगतज्वराः ॥ [ 430 ]
मानुषाणां नृपा देवा नृपाणां देवताः सुराः ।
सुराणांदैवतं शक्रः शक्रस्यापि जनार्दनः ॥
एष विष्णुः प्रभुर्देवो देवानामपि दैवतम् ।
जातोऽयं मानुषे लोके नररूपेण केशवः ॥
अजेयः सर्वलोकेषु देवदानवमानवैः । [ 435 ]
कार्त्तिकेयसहायस्य अपि शूलभृतः स्वयम् ॥
तस्मै देवातिदेवाय केशवाय महात्मने ।
अभिषिच्य सुरैः सार्धं किमिच्छध्वमतः परम् ॥
न चाधिकारो देवानां राजेन्द्रस्याभिषेचने ।
तेनाहं नाभिषिञ्चामि सर्वलोकनमस्कृतम् ॥ [ 440 ]

---

$D_{4-6}$ $T_{3\ 4}$ $G_2$ अभिषिञ्चन्तं, $K_4$ °षिच्यैवं, $D_1$ °षिच्यन्तां (for °षिच्यन्तं), $T_2$ $G_{1\ 4\ 5}$ कलशाश्चागमिष्यन्ति (for ᵃ). $V_{2.3}$ $D_3$ $T_{2.3}$ $G_{1\ 4\ 5}$ नभ स्थलात् (for °स्तलात्) — $D_3$ reads line 413 after line 418 — (L 413) Ñ$_2$ V $B_1$ Ds $D_2$ सर्वौ, $D_{1\ 6}$ $G_2$ सर्वे (for सर्वान्) $D_3$ दृष्ट्वा स्वयं हि तत्सर्वं (for ᵃ) — $K_{1\ 4}$ $T_{2-4}$ $G_{1\ 4\ 5}$ om lines 414–417 (L. 414) Ñ$_{2\ 3}$ V B $D_{1\ 2\ 5\ 6}$ स्नापनेन, Dn $G_2$ स्नपनेन, $D_3$ स्नपनार्थं, $D_4$ स्नापनाय (for °र्थं) $D_1$ स्नापनेन च शक्राय (for ᵃ). — (L 415) $D_{3\ 4}$ आगच्छत (for °ध्वं) — (L. 416) $K_2$ $V_1$ $D_{1\ 2}$ -संधानं ($V_1$ °ने), $B_1$ -संमानो (for -संधानो). $D_3$ आवाभ्यां कृतसंधाने (for ᵃ) — (L 417) $K_2$ Ñ$_{2.3}$ V B Dn Ds $D_{1\ 6}$ $G_2$ न वैरं, $D_2$ न चैवं (for अभयं) — (L 418) $K_2$ $G_2$ कृष्णः स·; $T_{2\ 3}$ $G_{1\ 4.5}$ कृष्णस्तु (for कृष्णस्य) $T_3$ विशुद्धभावं कृष्णस्तु (for ᵃ) — (L 419) $D_4$ विद्यते, $T_2$ $G_5$ वर्तते (for दृश्यते) — (L. 420) $D_3$ सर्वं (for कार्यं) $K_2$ यत्र कारणकार्यं हि (for ᵃ) $B_2$ विधीयताम्, $T_4$ विचार्य° (for विचिन्त्य°) — (L 421) $V_2$ संचोद्यमानास्, $D_3$ चिन्तयमानास् (for सचिन्त्य°). $K_2$ ते (for तु) — (L 422) $T_2$ $G_1$ भयाच् (for भूयः) $K_{1\ 4}$ $D_1$ शुश्राव (for शुश्रुवू) $K_2$ $T_{3\ 4}$ राजेन्द्राः; $D_5$ राजोक्त (for राजेन्द्र) Bomb Poona eds G(ed) केशवाय महात्मने (for ᵇ) — (L 423) $T_2$ $G_{1.4\ 5}$ एवं (for मेघ-). $D_1$ [आ]पूरणं, $Ds_2$ [आ]पूरितं (for [आ]पूरयन्) $K_4$ दिशः (for नभः). — (L. 424) $Dn_1$ वायुवाचा, $G_4$ वल्गुवाचा (for वागुवाच) — (L 426) $D_3$ वः शक्रो, $T_1$ $G_{1\ 4\ 5}$ राजेन्द्र ($G_{4\ 5}$ °न्द्राः) (for युष्माकं) $T_2$ $G_{1\ 4\ 5}$ युष्माकं (for नृपाणां). — (L 427) $V_2$ रमत; $V_3$ वचसा (for वदत). $K_2$ वैरतः (for वैरिणा) — (L 428) Ñ$_2$ स्वराज्येषु (for °ष्ट्रेषु) $K_4$ नरासुराः, Bomb Poona eds. G(ed) नृपोत्तमाः (for नराधिपाः) $G_2$ स्वराष्ट्रे वसुधाधिपा (for ᵇ) — $K_4$ om lines 429–431 — (L 429) $D_1$ शृणु चार्ति- (for प्रणतार्ति-) $K_1$ पर- (for प्रति-) $G_2$ ऽनघः (for ऽनलः). — (L 430) $V_3$ वसध्वं (for मोदध्वं) — (L 432) $G_4$ शक्रस्य कमलासनः (for ᵇ) $G_4$ शक्रस्य कमलासनः (for ᵇ). — After line 432, $G_4$ ins

14** तस्यापि देवः स शिवः शिवस्यापि जनार्दनः ।

— (L 433) $T_2$ $G_{1\ 5}$ एवं (for एष) $K_2$ देवता, $V_2$ दैवतः (for °तम्) — (L 435) $K_4$ -लोके वै (for -लोकेषु). Ñ$_{2\ 3}$ $V_1$ -मानुषैः; $Ds_2$ -दानवैः (for -मा°) — (L 436) $K_1$ $Dn_2$ सहागत्य ($Dn_2$ °म्य); $D_{2\ 4\ 5}$ °येन (for °यस्य) $K_4$ कार्त्तिकेय समागम्य, $D_{1\ 3}$ °केन सहायेन (for ᵃ). Ñ$_2$ om line 436ᵇ $K_{1\ 4}$ Dn $T_{3\ 4}$ शूलधरः; $D_{1-3}$ °भृता; $D_{4\ 5}$ °धृता, $T_2$ $G_4$ °धृत, $G_1$ शूरधृतिः (for शूलभृतः). $K_2$ Ñ$_3$ V $B_{1\ 3}$ Ds $D_6$ $G_2$ अपि शू($Ds_2$ शै)लधरस्य च (for ᵇ). — (L 437) $K_4$ $D_{2-5}$ देवाधि-, $T_2$ $G_{1\ 2.5}$ °दि- (for °ति-) — (L 438) $Dn_2$ $T_4$ अभिषेक्तुं (for °षिच्य) $K_1$ इच्छेऽहम्, $K_4$ Ñ$_{2\ 3}$ $V_3$ B Dn Ds $T_{3.4}$ $G_{4.5}$ इच्छेयम्, $V_1$ इच्छ त्वम्, $D_2$ (marg.) आधिक्यम् (for इच्छ-

नृपाणामधिकारोऽयं राजेन्द्रस्याभिषेचने ॥
गत्वा यूयं विदर्भायां क्रथकैशिकयोः सह ।
संचिन्त्य विधिदृष्टेन कुरुध्वं नृपसत्तमाः ॥
प्रीतिसंधानकालोऽयमिति संचिन्त्य वासवः ।
बोधनार्थे विसृष्टोऽहं युष्माकं मनुजेश्वराः ॥ [ 445 ]
विदर्भनगरे कृष्णः श्रावितोऽस्याधिवासनम् ।
राजेन्द्रत्वाभिषेकार्थं राजानौ क्रथकैशिकौ ॥
ताभ्यां सह नृपश्रेष्ठाः कृत्वा सुमहदुत्सवम् ।
अभिषेकेण सत्कृत्य प्रतिगृह्यास्य दक्षिणाम् ।
आगमिष्यथ संहृष्टाः पुनरेव स्वयंवरम् ॥ [ 450 ]
जरासंधः सुनीथश्च रुक्मिणश्च महारथः ।
साल्वः सौभपतिश्चैव चत्वारो राजसत्तमाः ।
रङ्गस्याशून्यहेतोर्हि तिष्ठन्तु इह पार्थिवाः ।

वैशंपायन उवाच ।

एवमाज्ञां सुरेशस्य श्रुत्वा चित्राङ्गदेरिताम् ।
गमनाय मतिं चक्रुः सर्व एव नृपोत्तमाः ॥ [ 455 ]
अनुज्ञाता नरेन्द्रेण जरासंधेन धीमता ।
भीष्मकं पुरतः कृत्वा प्रयाताः स्वबलैर्वृताः ॥
भीष्मकश्च महाबाहुः स्वबलेन समन्वितः ।
जगाम पार्थिवैः सार्धं दह्यमानेन चेतसा ।
यत्र कृष्णो महाबाहुः कैशिकस्य निवेशने ॥ [ 460 ]
दूरादेव प्रकाशन्ती पताकाध्वजमालिनी ।
शुभ्रा देवसभा रम्या स्नानहेतोरिहागता ॥
दिव्यरत्नप्रभाकीर्णा दिव्यध्वजसमाकुला ।
दिव्याम्बरपताकाढया दिव्याभरणभूषिता ॥
दिव्यस्रग्दामकलिला दिव्यगन्धाधिवासिता । [ 465 ]
विमानयानैः श्रीमद्भिः समन्तात्परिवारिता ॥
दिव्याप्सरोगणाश्चैव विद्याधरगणास्तथा ।
गन्धर्वा मुनयश्चैव किंनराश्च समन्ततः ।
उपगायन्ति देवेशमम्बरान्तरमाश्रिताः ॥

---

ध्वम्) D3 किमिच्छथ ततः परम् ( for [b] ) —( L. 439 ) K1 B1 D2 3 5 T4 [अ]भिषेचनम्; D1 निषेवणम् ( for [अ]भिषेचने ). — D1 6 om (hapl) lines 440–441, D4 reads the same twice — ( L 440 ) D3 तेनाभिषिञ्चत नृपाः ( for [a] ) —(L. 441 ) B1 D2 3 5 T4 G5 [अ]भिषेचनम्, Bom. Poona eds G( ed. ) निवेशने ( for [अ]भिषेचने ). — K4 om lines 442–444 —( L 442 ) Ñ3 ( marg ) स्वयं ( for यूयं ) Cal ed विदर्भाणां ( for °या ) V1 गत्वा स्वयं विदर्भाभ्यां ( for [a] ) D3 तत्रैव क्रथकौशिकौ ( for [b] ) — ( L 443 ) K2 विचिन्त्य, Ñ2 अ° ( for सं° ) — ( L 444 ) V3 B1 D1 G2 प्रति- ( for प्रीति- ). — ( L 445 ) Ds1 मा ( for ऽहं ) — ( L 446 ) K1 Dn ऽद्याधि-, K1 ( marg ) D3 5 ह्याधि- ( for ऽस्याधि- ) T4 -शासनम् ( for -वा° ) T3 श्रावितोऽस्यापि शासनम्; G2 °तश्चापि तिष्ठति ( for [b] ) — ( L 447 ) V1 3 B1 2 D3 [अ]भिषेकार्थे, D6 G4 5 °काहौं ( D6 °हौं ) ( for °कार्थं ) K1 4 D4 राजेन्द्रमभिषेकार्थं, Ñ2 3 V2 B2 D1 2 5 T2 G1 राजेन्द्रस्याभिषेकार्थे ( Ñ2 D2 °र्थं, T2 G1 °हौं ) ( for [a] ) — ( L. 448 ) K2 B2 3 Ds D6 G2 तयोः सार्धं, Ñ2 3 V1 3 B1 ताभ्यां सार्धं ( for ताभ्यां सह ) D3 ताभ्यां नृपवरश्रेष्ठाः ( for [a] ) — D4 om line 449 — ( L 449 ) D3 संस्कृत्य ( for सत्कृत्य ) G1 परिगृह्य, G5 प्रतिग्राह्य ( for °गृह्य ) K2 B1 3 Ds1 D2 ( by corr. ) G2 स्व-, Ds2 प्र- ( for [अ]स्य ). K3 वै दिशम् ( for दक्षिणाम् ) — ( L 450 ) D1 T3 आगमिष्यन्ति ( for °थ ) — T2 G1 4 5 om lines 451–453 —( L 451 ) D3 सुवर्थिश् ( for सुनीथश् ) Dn Ds D2 रुक्मवांश्च, D1 5 रुक्मी चैव ( for रुक्मिणश्च ) K2 B1 महाबल ( for °रथः ) — ( L 452 ) D1 स च ( for साल्व ) — ( L 453 ) K2 Ñ2 3 V B Ds D3–6 T2–4 G2 तिष्ठन्त्विह च पार्थिवाः ( for [b] ) — After line 453, B1 3 ins an addl colophon mentioning Khila and adhy name B1 रुक्मिणीस्वयंवरे देवदूतवाक्यम्, B3 रुक्मिणीस्वयंवर — T2 G1 4 5 om the ref — ( L 455 ) D3 नरोत्तमा ( for नृपो° ) —( L 456 ) D4 अनुज्ञाते ( for °ता ) V3 नृपेन्द्रेण, T3 जने° ( for नरे° ) — ( L 457 ) G5 कृत्य ( for कृत्वा ) — ( L 460 ) D3 आस्थितस्तु ( for यत्र कृष्णो ) K1. 4 B2 3 Ds D1 6 T2–4 G4 5 निवेशनम् ( for °ने ) — ( L 461 ) K2 D6 ( marg ) T2 3 G1 4 5 प्रकाशार्थं; K3 °शोच्चैः; B2 °शेत D3 °शन्तीं, T4 °शेन ( for °शन्ती ) D3 -मालिनीम् ( for °नी ) T2 G4 पताकाभिरलंकृता ( for [b] ) — ( L 462 ) K2 Ñ2 3 V1 B D6 G2 शुभा, V2 प्रभा ( for शुभ्रा ) D3 शुभ्रां देवसभां रम्यां ( for [a] ) — ( L 463 ) D3 -कीर्णां ( for -कीर्णा ) D3 -समाकुलाम् ( for °ला ). G2 दिव्यस्रगनुलेपना ( for [b] ) — ( L 464 ) D3 -पताकाढयां ( for °ढया ) K3 D3 भूषिताम् ( for °ता ) —( L 465 ) K1 V1 2 D2 -कलिता, D3 °लां ( for °ला ). D3 -वासिताम् ( for °ता ) — ( L 466 ) D3 -वारिताम्, D4 शोभिता ( for -वारिता ). — ( L 467 ) K4 D3 4 -गणैश् ( for -गणाश् ) K2 Ñ3 V1 B Ds D6 तत्र ( for चैव ). K4 D3 4 -गणैस्तथा, G4 -गणैर्वृता

स्तुवन्ति मुनयः सर्वे सिद्धाश्च परमर्षयः । [ 470 ]
देवदुंदुभयश्चैव स्वयमेवानदन्दिवि ॥
पञ्चयोनिसमुत्थानि गन्धचूर्णान्यनेकशः ।
समन्तात्पात्यमानानि आकाशस्थैर्दिवौकसैः ॥
स्वयमागम्य राजेन्द्रो देवैः सह शचीपतिः ।
विमानवरमारुह्य सप्रकाशः स्थितोऽम्बरे ॥ [ 475 ]
अष्टभिर्लोकपालैस्तु स्वदिग्भागेषु संस्थितैः ।
उपगायद्भिर्नृत्यद्भिः स्तुवद्भिश्च समन्ततः ॥
श्रुत्वा सुतुमुलं नादं सर्व एव नराधिपाः ।
विस्मयोत्फुल्लनयना विविशुस्ते सभां शुभाम् ॥
कैशिकश्च महातेजा उपगम्य नराधिपान् । [ 480 ]
प्रवेशयामास बली प्रतिपूज्य यथाविधि ॥
निवेदिते सुरश्रेष्ठः पार्थिवानां समागमे ।
निर्जगाम हरिः श्रीमान्सर्वमङ्गलपूजितः ॥
ततोऽम्बरस्थास्ते दिव्याः कलशाश्चैलकण्ठिनः ।
सहकारसमायुक्ता ववर्षुर्जलदा इव ॥ [ 485 ]
दिव्यकाञ्चनरत्नौघैर्दिव्यपुष्पसमन्वितैः ।
गन्धचूर्णविमिश्रैश्च राजेन्द्रस्याभिषेचने ॥
यथोक्तविधिपूर्वेण अभिषिच्य जनार्दनम् ।
दीक्षयित्वा नरेन्द्राणां दिव्यैराभरणैः शुभैः ॥
दिव्याम्बरविचित्रैश्च दिव्यमाल्यानुलेपनैः । [ 490 ]
सत्कृत्य विधिवद्राज्ञामुपविष्टो जनार्दनः ॥
शुभे देवसभे रम्ये स्नानहेतोरिहागते ।
उपास्यमानो यदुभिर्विबभौ च नराधिपैः ॥
वैनतेयश्च बलवान्कामरूपी नराकृतिः ।
दक्षिणं पार्श्वमाश्रित्य आसनस्थो बभूव ह ॥ [ 495 ]

---

( for -गणास्तथा ) $K_2$ $\tilde{N}_3$ $V_1$ B $D_3$ $D_6$ ननृतुश्च समन्तत ( for $^b$ ) — ( L 468 ) $T_2$ सिद्धाः ( for चैव ) $G_5$ गन्धर्वाश् ( for किंनराश् ) $K_2$ सहस्रश ( for समन्तत ) — ( L 469 ) $K_2$ अवतारान्तरं श्रितम्, $T_3$ अम्बरान्तरसंश्रिता ( for $^b$ ). — ( L 470 ) Bom Poona eds G( ed. ) चैत्र ( for सर्वे ). —After line 471, $T_3$ ins

15** कर्पूरागरुकस्तूरीकङ्कोलं चन्दनानि च ।

— ( L. 472 ) $B_1$ पद्म- ( for पञ्च- ) $G_2$ -समृद्धानि ( for -समुत्थानि ) $\tilde{N}_2$ $V_1$ $T_2$ $G_2$ -पूर्णानि, $V_3$ -वर्णानि ( for -चू° ). — ( L 473 ) $K_4$ समन्तात्पातितान्युच्चैर् ( for $^a$ ) — $G_2$ om. lines 474–476. — ( L 474 ) $K_{1.2}$ आगत्य ( for म्य° ) $\tilde{N}_3$ V $B_{1\ 2}$ Dn $D_{2\ 5}$ देवेन्द्रो, $B_3$ $D_3$ $D_{4\ 6}$ $T_{2\ 3}$ $G_{1\ 4,5}$ राजेन्द्र ( for °न्द्रो ) $\tilde{N}_2$ $D_3$ $T_4$ स्वयमागत्य देवेन्द्रो ( for $^a$ ) — ( L. 475 ) $B_3$ सप्रकाशं, $D_{1\ 6}$ स्वप्रकाश ( for स° ). — For lines 476–477, $K_{1,3,4}$ $\tilde{N}_3$ $V_{1,2}$ $B_1$ ( marg. ) $_2$ Dn $D_{1-5}$ $T_{2-4}$ $G_{1\ 4\ 5}$ subst .

16** अष्टौ ये लोकपालास्ते स्वासु दिक्षु समास्थिताः ।
उपगायन्ति नृत्यन्ति स्तुवन्ति च समन्ततः ॥

[ ( L 1 ) $D_3$ $T_4$ $G_4$ समाश्रिता ( for °स्थिताः ). ]

— ( L. 478 ) $D_3$ शुश्रुवुस्, $T_{3\ 4}$ श्रुत्वा तु ( for श्रुत्वा सु- ). $D_1$ श्रुत्वा तु सुमहानादं, $D_5$ श्रुत्वा सुष्टुतमं नादं ( for $^a$ ) — ( L 479 ) $K_1$ $D_6$ $G_{4\ 5}$ शुभा सभाम् ( by transp ). — ( L 480 ) $V_2$ स ( for च ) Bom. Poona eds G( ed ) महाबाहुर् ( for °तेजा ) G( ed ) उपागम्य ( for उप° ) $K_1$ नराधिप ( for °धिपान् ). — ( L 481 ) $V_2$ प्रतिगृह्य ( for °पूज्य ) — ( L 482 ) $K_{1,4}$ $\tilde{N}_3$ V B Dn $D_3$ $D_{1-4,6}$ $G_4$ सुरश्रेष्ठे, $K_2$ °श्रेष्ठा ( for °श्रेष्ठ ) — ( L 484 ) $T_2$ $G_4$ देवाः ( for दिव्याः ) $D_1$ श्वेत- ( for चैल- ) $G_2$ कलशाश्चोदपूरिताः ( for $^b$ ) — ( L 485 ) $K_2$ $V_1$ ववृपुर् ( for ववर्षुर् ) — After line 485, $\tilde{N}_2$ ins an addl colophon, adhy name रुक्मिणीस्वयंवरे दूतवाक्यम् — Before line 486, $\tilde{N}_2$ ins वैशंपायन उवाच — ( L. 486 ) $D_3$ दिव्यै. काञ्चनरत्नाढ्यैर् ( for $^a$ ) $T_4$ -रत्न- ( for -पुष्प- ) — ( L 488 ) $K_4$ $D_1$ पूर्णेन ( for -पूर्वेण ) $B_1$ सोऽभिषिच्य, $D_5$ तेऽभि° ( for अभि° ) $K_2$ $V_2$ $B_2$ $G_2$ सोऽभिषिक्तो यथाविधि ( $V_2$ $B_2$ नराधिपैः ); $B_3$ $D_3$ $D_6$ $T_4$ अ( $D_3$ $D_6$ सोऽ )भिषिक्तो जनार्दनः ( for $^b$ ). — ( L 489 ) K Dn $D_{1-5}$ $T_2$ $G_{1\ 2\ 4,5}$ दर्शयित्वा, $\tilde{N}_3$ ( marg as above ) दीप° ( for दीक्ष° ). $T_4$ Bom Poona eds G( ed ) आवरणै. ( for आभ° ). $K_2$ स्रजम्, $\tilde{N}_2$ सह ( for शुभैः ) — ( L 490 ) $V_3$ -धरैश्चैव, $D_3$ -विमिश्रैश्च ( for -विचित्रैश्च ). $K_{1-3}$ $D_2$ -मालानु- ( for -माल्यानु- ) — ( L. 491 ) $B_3$ संहृत्य, $D_3$ सत्कृतिर् ( for सत्कृत्य ) $K_3$ Dn $D_5$ $T_2$ $G_1$ राज्ञ.; $B_2$ $D_6$ राज्ञा, $D_4$ $G_2$ राजा, $G_4$ राज्ये ( for राज्ञाम् ). $K_2$ $G_2$ सत्कृतो विधिवद्राजा ( for $^a$ ) $K_2$ $G_2$ सूपविष्टो ( for उ° ) — ( L 492 ) $K_2$ -सभादेशे; $\tilde{N}_2$ $V_3$ B $D_{3\ 6}$ $G_{1,4}$ सभोद्देशे, $T_3$ -सभां श्रेष्ठे ( for -सभे रम्ये ) $T_2$ $G_5$ शिवे देवसभोद्देशे, $G_2$ भेजिरे च सभादेशे ( for $^b$ ) — ( L. 493 ) $K_2$ $\tilde{N}_3$ $V_{1\ 2}$ $B_{1\ 3}$ $G_2$ विदर्भैश्च; $\tilde{N}_2$ विदर्भैः स; $D_2$ विदर्भौ च; $G_4$ विदर्भे च ( for विबभौ च ). $D_{2,5}$ नराधिप ( for °धिपैः ) $K_{1,3,4}$ Dn $D_{3\ 1}$ ( marg ) $D_1$ वैदर्भौ च नराधिपौ, $V_3$ विदर्भैः स नरादिभिः; $B_2$ $D_4$ विदर्भौ च नराधिपा ( $D_4$ °पौ ); $T_2$ $G_{1\ 5}$ विदर्भे च नराधिपे, $T_{3,4}$ विदर्भेन- ( $T_4$ °र्भैर्न )राधिपैः ( for $^b$ ) — ( L 494 ) $D_3$ $T_4$ भगवान्

क्रथकैशिकौ च तौ वीरौ वामपार्श्वे स्व आसने ।
उपविष्टौ महात्मानौ देवस्यानुमते नृपौ ॥
तथैव वामपार्श्वे तु वृष्ण्यन्धकमहारथाः ।
सात्यकिप्रमुखा वीरा उपविष्टा महाबलाः ॥
भास्करप्रतिमे दिव्ये दिव्यास्तरणसंवृते । [ 500 ]
सुखोपविष्टं श्रीमन्तं देवा इव शचीपतिम् ॥
सचिवैः श्राविताः पूर्वं प्रविष्टास्ते नराधिपाः ।
यथार्हेण च संपूज्य राजानः सर्व एव ते ।
सुखोपविष्टास्ते स्वेषु आसनेषु नराधिपाः ॥
कैशिकस्तु महाप्राज्ञः सर्वशास्त्रार्थवित्तमः । [ 505 ]
पूजयित्वा यथान्यायमुवाच वदतां वरः ॥
अविज्ञाता नृपाः सर्वे मानुषोऽयमिति प्रभो ।
भवन्तमुपरुन्धाना देव त्वं क्षन्तुमर्हसि ॥

कृष्ण उवाच ।

न मे वैरं निवसति एकाहमपि कैशिक ।
विशेषेण नरेन्द्राणां क्षत्रधर्मे व्यवस्थिते ॥ [ 510 ]
योद्धव्यमिति धर्मेण अधर्मेऽतिपराङ्मुखे ।
तेषां को हेतुना कोपः कर्तव्यस्त्ववनीश्वराः ॥
यद्गतं तदतिक्रान्तं ये मृतास्ते दिवं गताः ।
एष धर्मो नृलोकेऽस्मिञ्जायन्ति च म्रियन्ति च ॥
तस्मादशोच्यं भवतां मृतानां वै नराधिपाः । [ 515 ]
क्षन्तव्यं भवतास्माकं वीतवैरा भवन्तु वै ॥

वैशंपायन उवाच ।

एवमुक्त्वा नरेन्द्रांस्तानाश्वास्य मधुसूदनः ।
कैशिकस्य मुखं वीक्ष्य विरराम महाद्युतिः ॥
एतस्मिन्नेव काले तु भीष्मको नयकोविदः ।

---

( for बल° ). — ( L 495 ) $K_2$ $D_6$ $G_2$ **पक्षम्** ( for **पार्श्वम्** ). $D_3$ **आगत्य** ( for **आश्रित्य** ) $K_3$ $\tilde{N}_3$ ( marg ) $V_{1, 2}$ Dn $D_{1, 2}$ ( *sup lin* as above ) $_{4, 5}$ $T_{2-4}$ $G_{1, 4, 5}$ **महाबल** ( $V_2$ °**त्मनः** ) ( for **बभूव ह** ) $K_{1, 4}$ **आस्थितोऽसौ महाबल** ( for $^b$ ) — ( L 496 ) $K_1$ **अद्य तौ कौशिकौ वीरौ**, Dn **क्रथश्च कैशिको वीरो**; $D_{1, 2}$ **क्रथश्च कैशिकश्चैव**, $D_6$ $T_{2-4}$ $G_{1, 4, 5}$ **क्रथकैशिकवीरौ च** ( for $^a$ ). $\tilde{N}_2$ om lines, $496^b$–$497^a$ $D_{1, 2}$ $T_4$ **तथासने** ( for **स्व आ**° ) $K_{1, 4}$ **वामपार्श्वस्य** ( $K_4$ °**स्थ** ) **आसने**, $V_3$ °**पार्श्वेषु आसने**, $D_3$ °**पार्श्वसमागतौ**; $T_3$ °**पार्श्वशुभासने** ( for $^a$ ) — ( L 497 ) $V_2$ $Ds_2$ $D_5$ **स्थितौ** ( for **नृपौ** ) — ( L 499 ) $K_{1, 3, 4}$ $\tilde{N}_2$ $V_{2, 3}$ $D_{1-3, 5}$ $T_{2, 4}$ $G_{1, 4, 5}$ **नराधिपाः**; $V_1$ B Ds **महारथाः** ( for °**बलाः** ). — ( L 500 ) $K_{1, 4}$ $\tilde{N}_3$ $V_{1, 2}$ $D_{1, 3-5}$ $T_2$ $G_{1, 4, 5}$ -**विस्तृते**; $K_3$ -**संस्तृते**; $T_{3, 4}$ -**शोभिते** ( for -**संवृते** ) $D_2$ **दिव्याभरणविस्तृते** ( for $^b$ ). — ( L 501 ) $K_1$ **देवैरपि**; $K_{3, 4}$ $\tilde{N}_3$ ( marg ) $V_{1, 3}$ $D_{2, 5}$ $T_4$ **देवैरिव** ( for **देवा इव** ). — ( L 502 ) $\tilde{N}_3$ **सर्वं**; $T_2$ $G_5$ **पूर्वाः**; Bom Poona eds G( ed ) **सर्वे** ( for **पूर्वं** ). — $K_4$ $B_1$ om. ( hapl ) lines 503–504. — ( L. 504 ) $Ds_2$ **उपविष्टास्ते च स्वेषु** ( for $^a$ ). — ( L. 505 ) $D_4$ **सर्वशास्त्रविदुत्तमः** ( for $^b$ ). — Before line 507, some Mss ins **कैशिक** — ( L. 507 ) $K_3$ **अविज्ञाय**; $D_5$ $G_2$ °**त्वा** ( for °**ता** ). $D_3$ **नृपैः सर्वैर्** ( for **नृपाः सर्वे** ) — ( L 508 ) $K_{1, 4}$ $\tilde{N}_3$ $V_1$ $B_{1, 2}$ Dn $Ds_1$ ( marg ) $_2$ $D_{1, 2}$ $T_{2-4}$ $G_{1, 4, 5}$ **उपरुद्धानां**; $D_3$ **अपराद्धं तु** ( for **उपरुन्धाना** ) $D_{4, 5}$ **भगवन्नपराद्धांस्तान्** ( $D_5$ °**राद्धानां** ) ( for $^a$ ) $K_2$ $V_2$ $B_{2, 3}$ $D_6$ $T_2$ $G_{1, 2, 5}$ **तान्**, $\tilde{N}_2$ $B_1$ **तत्** ( for **त्वं** ) — $T_{2-4}$ $G_{1, 4, 5}$ **भगवान्** ( for **कृष्ण** ) — ( L 509 ) $K_{1, 2}$ $V_2$ $D_{1, 2}$ $G_2$ **निवसते** ( for °**ति** ). $K_3$ $D_{2, 4}$ ( last two on marg ) **न मे वै रोचते वैरं**, $\tilde{N}_2$ $V_{1, 3}$ B Dn $D_{4, 6}$ $G_5$ **न मे वैरो निवस**( $V_1$ **विश** )**ते**, $T_{2, 3}$ $G_1$ **न मे वैरोऽत्र वसति** ( $G_1$ °**ते** ), $T_4$ $G_4$ **न मे वैरो प्रवसति** ( sic ) ( for $^a$ ). — ( L 510 ) $K_2$ $\tilde{N}_2$ $V_{1, 2}$ Ds $D_6$ $T_3$ $G_2$ **क्षात्र**-, $\tilde{N}_3$ $T_3$ $G_2$ **क्षात्रे** ( for **क्षत्र**- ) Dn **ऽवतिष्ठताम्** ( for **व्यवस्थिते** ) Cal ed **क्षात्रे धर्मे व्यवस्थिता** ( for $^b$ ). — ( L 511 ) $K_1$ $B_2$ $T_{2, 3}$ $G_4$ **अधर्मेण**, $K_2$ Dn °**र्मे तु**, $K_3$ °**र्मस्तु**, $V_3$ $Ds_1$ **स्वधर्मेति**, $T_4$ $G_2$ **अधर्मे च** ( $G_2$ **वै** ) ( for °**र्मेऽति**- ) $D_3$ **अधर्मे ये पराङ्मुखाः** ( for $^b$ ) — ( L 512 ) $K_{1, 3, 4}$ $V_2$ $B_2$ Dn $D_{2, 3}$ **किं** ( for **को** ). $K_2$ Ds $D_6$ **हेतुतः** ( for °**ना** ) $K_4$ **तेषां तु हन्तुं नो कोपः**; $T_{2, 3}$ $G_{1, 4, 5}$ **तेषां किं हेतुना कोऽपि** ( for $^a$ ) — ( L 513 ) $B_3$ **यद्दत्तं** ( for **यद्गतं** ) $K_4$ **यैर्गतं ते अतिक्रान्ता** ( for $^a$ ). $T_1$ $G_{1, 5}$ **हतास्** ( for **मृतास्** ) $G_4$ **त्रिदिवं** ( for **ते दिवं** ) — ( L 514 ) $V_1$ **एको** ( for **एष** ) $K_1$ **जीवन्ति**; $K_2$ $\tilde{N}_2$ $B_{2, 3}$ Dn $D_{2-5}$ $T_4$ $G_2$ **जायन्ते** ( for °**न्ति** ) — ( L 515 ) $\tilde{N}_2$ $V_{1, 3}$ $B_2$ **अशोच्या** ( for °**च्यं** ) $K_{1, 3, 4}$ $D_1$ **मृतार्थेन**; $\tilde{N}_2$ $V_{1, 3}$ **मृता ये च**, Dn $D_{2-5}$ $T_4$ $G_2$ **मृतार्थे च**, $T_{2, 3}$ $G_{1, 4, 5}$ °**नां वो** ( for °**नां वै** ) — ( L 516 ) $K_2$ $V_3$ $D_4$ $T_2$ $G_{1, 2}$ **भवतो**; $K_3$ Dn $D_4$ ( *sup lin* ) $T_4$ **रोचते**, $K_4$ **भवते** ( for °**ता** ) $D_3$ -**रोगा** ( for -**वैरा** ) $Dn_2$ $D_5$ $G_1$ **ते** ( for **वै** ) — ( L 517 ) $D_1$ **नरेन्द्राणां** ( for °**न्द्रांस्तान्** ). — ( L 518 ) $K_4$ **विरराज**; $G_2$ **लोकनाथो** ( for **विरराम** ) — ( L. 519 ) $D_3$ **एतस्मिन्नन्तरे काले** ( for $^a$ ) — COLOPHON om in $K_2$ $V_3$ $B_3$ — *Mention of the Epic* $K_3$ $Ds_2$ $T_2$ — *Mention of Khila* $K_{1, 3, 4}$ $\tilde{N}_3$ $V_{1, 2}$ $B_{1, 2}$ Dn Ds $D_{1, 2, 5}$ — *Sub-parvan* $T_4$ **आश्चर्यपर्व** — *Adhy. name*: $K_{1, 3, 4}$ $V_2$ $B_2$ Dn $D_{2, 4}$ **रुक्मिणीस्वयंवरः**; $B_1$ $D_6$ **नृपाश्वासनम्**; Ds **रुक्मिणीस्वयंवरे**

यजस्व विविधान्यज्ञान्ददस्व विपुलं धनम् ।
जयस्व रिपुसैन्यानि मम बाहुबलाश्रयात् ॥ [ 1075 ]
त्यजस्व मनसस्तापं कंसनाशोद्भवं भयम् ।
नयस्व वित्तनिचयं मया दत्तं पुनस्तव ॥
इति प्राश्वास्य राजानं कृष्णोऽथ हलिना सह ।
प्रविवेश ततः श्रीमान्मातापित्रोरथान्तिकम् ॥
आनन्दपरिपूर्णाभ्यां हृदयाभ्यां महाबलौ । [ 1080 ]
पितृमात्रोस्तु पादौ वै नमश्चक्रतुरानतौ ॥
तस्मिन्मुहूर्ते नगरी मथुरा तु बभूव सा ।
स्वर्गलोकं परित्यज्यावतीर्णेवामरावती ॥
वसुदेवस्य भवनं समीक्ष्य पुरवासिनः ।
मनसा चिन्तयामासुर्देवलोकं न भूतलम् ॥ [ 1085 ]
विसृज्य मथुरेशं तु महिषीसहितं तदा ।
भवनं वसुदेवस्य प्रविश्य बलकेशवौ ॥
न्यस्तशस्त्रावुभौ वीरौ तस्थतुः स्वैरचारिणौ ।
ततः कृताह्निकौ भूत्वा सुखासीनौ कथान्तरे ॥
एतस्मिन्नेव काले तु महोत्पातो बभूव ह । [ 1090 ]
बभ्रमुश्च घनाकाशे चेलुश्चावनिपर्वताः ॥
समुद्राः क्षोभिताः सर्वे विभ्रान्ता भोगिनां वराः ।
कम्पिता यादवाः सर्वे न्युब्जाश्च पतिता भुवि ।
तौ तान्निपतितान्दृष्ट्वा रामकृष्णौ च निश्चलौ ।
महता पक्षवातेन विज्ञातः पतगोत्तमः ॥ [ 1095 ]
ददर्श समनुप्राप्तो दिव्यस्रगनुलेपनः ।
प्रणम्य शिरसा ताभ्यां सौम्यरूपी कृतासनः ॥
तं दृष्ट्वा समनुप्राप्तं सचिवं सांपरायिकम् ।
धृतिमन्तं गरुत्मन्तं जगाद मधुसूदनः ॥
स्वागतं खचरश्रेष्ठ सुरसेनारिमर्दन । [ 1100 ]
विनताहृदयानन्द स्वागतं केशवप्रिय ॥
तमुवाच ततः कृष्णः स्थितं देहमिवापरम् ।
तुल्यसामर्थ्यया वाचा आसीनं विनतात्मजम् ॥

---

1074 ) $K_{1\ 2}$ विधिवद्, $V_3$ $D_6$ $T_4$ विपुलान् ( for विविधान् ) —( L 1075 ) $\tilde{N}_3$ $V_1$ Ds $D_4$ -सेनायां; B $D_{3\ 6}$ $T_4$ -सेनां च; $D_{1\ 2}$ -सैन्यानां, $G_2$ -सेनाश्च ( for -सैन्यानि ) —( L 1076 ) $T_4$ परित्यज मनस्तापं ( for $^a$ ) $B_{1\ 3}$ Ds -नाशोद्गतं ( for °द्भवं ) —( L 1078 ) $\tilde{N}_2$ $V_{1\ 3}$ $B_{1\ 2}$ $Ds_1$ प्रश्वास्य, $D_1$ प्रश्राव्य; $D_2$ $T_4$ चाश्वास्य, $D_{3-5}$ [आ]श्वास्य स, $D_6$ ह्याश्वास्य ( for प्रा° ) $K_2$ तमाश्वास्य च राजानं ( for $^a$ ). $T_4$ हरिणा ( for हलिना ) —( L 1079 ) $\tilde{N}_2$ $V_3$ B Ds यद( $B_{1\ 3}$ दा )न्तिकम्, $D_3$ अथान्तिके ( for °कम् ) —( L 1081 ) $K_3$ मातापित्रोस् ( for पितृमा° ) $K_1$ पादे वै, $K_2$ $V_2$ $D_{1\ 2}$ पादं वै, $\tilde{N}_2$ $B_1$ $Ds_2$ वै पादौ ( by transp ), $\tilde{N}_3$ $V_{1\ 3}$ $B_3$ $Ds_1$ $D_6$ वै पादान्, $B_2$ $D_5$ पादाभ्यां, $D_4$ पादाब्जं, $T_4$ पादान्वै ; $G_2$ तौ पादं $K_4$ मातापित्रोश्च पादान्वै ( for $^a$ ). $Ds_2$ $G_2$ आगतौ ( for आनतौ ) —( L 1083 ) $\tilde{N}_{2\ 3}$ $V_{1\ 3}$ $B_{1,\ 3}$ Ds $G_2$ देव- ( for स्वर्ग- ) $K_2$ $\tilde{N}_3$ $V_1$ B Ds $D_6$ अवतीर्णा, $G_2$ ह्यवतीर्णा ( for [अ]वतीर्णेव ) $V_3$ [अ]वतीर्णा वासवावती ( for $^b$ ) —( L 1085 ) $D_4$ महीतलम् ( for न भू° ) —( L 1086 ) $\tilde{N}_2$ B Ds $D_6$ $G_2$ नृपम्, $\tilde{N}_3$ $V_1$ नृप ( for तदा ) —( L 1087 ) $T_4$ वसुदेवस्य भवन ( for $^a$ ) $B_3$ प्रविष्टौ ( for °इय ). —( L 1088 ) $K_2$ -शस्त्रायुधौ ( for शस्त्रावुभौ ). $G_2$ न्यस्तशस्त्रायुधावुभौ ( for $^a$ ) $B_{1\ 3}$ Ds $D_6$ $T_4$ $G_2$ स्वगृहे ( for तस्थतु ) $V_1$ स्वगृहेष्वेव चारिणौ ( for $^b$ ) —( L 1089 ) $D_5$ कृताञ्जली ( for °ह्निकौ ) —( L 1091 ) $K_{3\ 4}$ व्योम्नि; $D_3$ खे वै ( for [आ]काशे ). $K_{1,\ 2}$ चचाल ( for चेलुश्च ). Bom Poona eds G(ed) भुवि ( for [अ]वनि- ) $D_{1,\ 3}$ ( before corr ) चलितावनिपर्वताः ( for $^b$ ) —( L 1092 ) $\tilde{N}_{2\ 3}$ $V_3$ $B_3$ Ds $D_{5,\ 6}$ $T_4$ $G_2$ क्षुभिताः ( for क्षो° ) $K_{3,\ 4}$ Dn विभ्रान्तो भोगिनां वर ( for $^b$ ) —( L 1093 ) $\tilde{N}_{2\ 3}$ $V_{1,\ 3}$ $D_5$ पादपा ( for यादवा ) $G_2$ वृक्षाश् ( for न्युब्जाश् ). —( L 1094 ) $K_2$ एतान्, $\tilde{N}_3$ $V_3$ B Ds $D_6$ $G_2$ तान्सं- ( for तौ तान् ) $\tilde{N}_2$ $V_1$ तान्संनिपतितान्दृष्ट्वा ( for $^a$ ) $D_4$ महाबलौ ; $G_2$ च निश्चितौ ( for च निश्चलौ ) —( L 1095 ) $K_1$ ( marg as above ) महापक्षविवातेन ( for $^a$ ) K $\tilde{N}_2$ $V_{2\ 3}$ $B_2$ Dn $D_{1\ 2\ 4}$ $T_4$ विज्ञातौ ( $V_3$ °त्वा, $D_2$ °य ) पतगोत्तमम् ( for $^b$ ). —( L 1096 ) $K_{1\ 2}$ $B_2$ $D_{1\ 2}$ $T_4$ -प्राप्तं ( for -प्राप्तो ). $K_4$ ददृशाते त्वनुप्राप्तं, $V_2$ ददर्शाते च संप्राप्तं ( for $^a$ ) $\tilde{N}_2$ $D_6$ -स्रग्गन्ध ( for स्रगनु- ) K $V_{2\ 3}$ $B_2$ $Dn_1$ $D_{1-3}$ $T_4$ लेपनम् ( for °नः ) —( L 1097 ) $\tilde{N}_2$ $V_2$ ( marg ) $_3$ कृताञ्जलिः ( for °सनः ) —( L 1099 ) K $D_1$ बलसूदनः ( for मधु° ). Bom. Poona eds G(ed) उवाच बलिसूदनः ( for $^b$ ). —( L 1100 ) $K_{1\ 3}$ $\tilde{N}_{2\ 3}$ $V_{2\ 3}$ $B_2$ $D_5$ खेचर- ; $K_4$ च खग- ; $D_{3\ 4}$ ते खग- ( for खचर- ) $K_4$ सुरसेनाविमर्दन ( for $^b$ ) — Before line 1102, $G_2$ ins वैशंपायन.. —( L. 1102 ) Dn पुन ( for ततः ) $D_1$ स्थितो ( for स्थितं ) $K_4$ $\tilde{N}_3$ $V_1$ Dn Ds $D_{3\ 6}$ $T_4$ $G_2$ देवम् ( for देहम् ) —( L. 1103 ) $V_3$ -सामान्यया ( for -सामर्थ्यया ) — Before line 1104, all Mss ( except $G_2$ ) ins श्रीकृष्ण उवाच. —( L. 1104 ) $K_{1,\ 2}$ $V_3$ $B_3$ $D_{1,\ 2}$ यास्यामि, $K_4$ $\tilde{N}_2$ $V_1$ $B_{1,\ 2}$ $D_6$ T

यास्यामः पतगश्रेष्ठ भोजस्यान्तःपुरं महत् ।
तत्र गत्वा सुखासीना मन्त्रयामो मनोगतम् ॥ [ 1105 ]
प्रविष्टौ तौ महावीर्यौ बलदेवजनार्दनौ ।
वैनतेयतृतीयौ च गुह्यं मन्त्रममन्त्रयन् ॥
अवध्योऽसौ कृतोऽस्माकं सुमहच्च रिपोर्बलम् ।
कृतः सैन्यक्षयश्चापि महानिति नराधिपैः ॥
बलानि च ससैन्यानि हन्तुं वर्षशतैरपि । [ 1110 ]
न शक्ष्यामः क्षयं नेतुं जरासंधस्य वाहिनीम् ॥
अतोऽर्थं वैनतेय त्वां ब्रवीमि मथुरां पुरीम् ।
वसतोरावयोः श्रेयो न भवेदिति मे मतिः ॥

गरुड उवाच ।

देवदेवं नमस्कृत्य गतोऽहं भवतोऽन्तिकात् ।
वासार्थमीक्षितुं भूमिं तव देव कुशस्थलीम् ॥ [ 1115 ]
गत्वाहं खे समास्थाय समन्तादवलोक्य ताम् ।
दृष्ट्वा वै विबुधश्रेष्ठ पुरीं लक्षणपूजिताम् ॥
सागरानूपविपुलां प्रागुदक्प्लवशीतलाम् ।
पर्वतोदधिमध्यस्थामभेद्यां त्रिदशैरपि ॥
सर्वरत्नाकरवतीं सर्वकामफलद्रुमाम् । [ 1120 ]
सर्वर्तुकुसुमाकीर्णां सर्वतः सुमनोहराम् ॥
सर्वाश्रमाधिवासां च सर्वकामगुणैर्युताम् ।
नरनारीगणाकीर्णां नित्यामोदविवर्धनीम् ॥
प्राकारपरिखोपेतां गोपुराट्टालमालिनीम् ।
विचित्रचत्वरपथां विपुलद्वारतोरणाम् ॥ [ 1125 ]
यन्त्रार्गलविचित्राढ्यां हेमप्राकारशोभिताम् ।
नरनागाश्वकलिलां रथसैन्यसमाकुलाम् ॥
नानादिग्देशजाकीर्णां दिव्यपुष्पफलद्रुमाम् ।
पताकाध्वजमालाढ्यां महाभवनशालिनीम् ॥
भीषणीं रिपुसंघानां मित्राणां हर्षवर्धनीम् । [ 1130 ]
मनुजेन्द्राधिवासेभ्यो विशिष्टां नगरोत्तमाम् ॥
रैवतं च गिरिश्रेष्ठं कुरु देव सुरालयम् ।

°म (for °म) — (L 1105) D1 2 5 सुखासीनौ (for °ना). K1 V3 B3 Ds1 D6 मन्त्रयाम (for °मो) K4 B2 Dn D2–5 T4 मनोनुगम्, V2 मनोरथम् (for °गतम्) K3 मन्त्रयाम मनोगतौ, D1 °याव मनोनुगम् (for $^b$) — Before line 1106, all MSS ins वैशंपायन — (L 1106) V3 सु, D5 तु (for तौ) — (L 1107) Ñ2 V3 -तृतीयास्ते, V1 2 B2 3 D6 °येन, Ds °यौ तु, G2 °यास्तु (for °यौ च). D3 वैनतेयस्तृतीयश्च (for $^a$) K4 V1 2 Dn D3–5 T4 अथाब्रुवन् (for अमन्त्रयन्) K1–3 गुह्यमन्त्रमथाब्रुवन् (for $^b$) — (L 1108) V3 ऽयं (for ऽसौ) — (L 1109) Ñ2 3 (marg) V1 3 B Ds D1 5 6 च्रू(D5 ह)तः सैन्येन महता, D3 कृतसैन्यभरश्चापि (for $^a$) Ñ2 3 (marg) V1 3 B Ds D1 5 6 महद्भिश्च, V2 D4 महानिह (for °ति) — (L 1110) K3 4 Dn T4 बहुलानि च सैन्यानि; V1 बलवन्ति च सै° (for $^a$). — (L 1111) D3 6 शक्यामः (for शक्ष्याम°) K1 V2 D1–5 क्षयं कर्तुं; Ds क्षपयितुं (for क्षयं नेतुं) D3 वै द्विज (for वाहिनीम्) — (L 1112) K1 2 4 ततोऽर्थं, G2 अतोऽर्थे (for °र्थं) Ñ3 V1 B1 3 Ds D5 6 G2 इह (for पुरीम्) — K4 वैनतेय, D5 गरुत्मान् (for °ड) — (L 1114) K -देव (for -देवं) V2 Dn D6 T4 नमस्कृत्वा (for °त्य) Ds1 D6 भवनान्तिकात्, G2 °तोऽन्तिकम् (for °कात्) — (L 1115) D3 वीक्षितुं (for ई°) D6 वासार्थमीक्षिता भूमि (for $^a$) B1 2 D5 नरदेव (for तव देव). — (L 1116) K2 खं (for खे). K1 गत्वाहं खं समुत्थाय (for $^a$) — (L 1117) K Ñ3 V1 Dn D1–5 [अ]हं (for वै). K3 Dn1 पुरी-, B1 3 D3 पुर- (for पुरीं) V1 B2 भूषिताम् (for पूजि°) K2 पुरी लवणभूषिताम् (sic) (for $^b$) — (L 1118) K2 सागरान्तर- (for °नूप-) K1 2 -शालिनीम् (for -शीतलाम्) — (L 1119) K2 V1 B2 Dn D6 सर्वतोदधि- (for प°) — (L 1120) V2 -रत्न- (for काम-) K2 D3 प्रदाम् (for द्रुमाम्) — (L 1123) B3 समाकीर्णां (for -गणा°) D4 om (hapl) lines 1123$^b$–1128$^a$. Ñ2 3 V B D6 -विवर्धिनीम् (for °धंनीम्) — After line 1123, Ñ2 G2 read 1130, while Ds1 reads line 1130 repeating it in its proper place D3 om line 1124. After line 1124, V3 reads line 1130 V3 om line 1125 — (L 1126) V1 3 B1 2 यन्त्राकुल- (for °र्गल-). K4 -तोरणाम् (for -शोभिताम्) D5 विचित्रगृहशालिनीम् (for $^b$) — After line 1126, Ñ2 D5 read line 1130 — (L 1127) Ñ3 (marg as above) V2 B2 3 Ds D5 6 G2 रथनेमिस्वनाकुलाम् (for $^b$) — (L 1128) D5 -विवर्धनीम्, T4 -फलप्रदाम् (for °द्रुमाम्) — (L 1129) Ñ2 V3 मालिनीम् (for -शा°) — V1 om (hapl) line 1130 — (L 1130) B3 G2 भीषणां (for °णीं) V3 Dn2 D5 6 -वर्धिनीम् (for वर्ध°) — (L 1131) D1 मनुजेन्द्राधिकजुष्टां (for $^a$) Ñ3 V1 B1 Ds D5 विशिष्टं नगरो( D5 च नगो )त्तमम् (for $^b$) — (L 1132) K3 गिरिं, G2 नग- (for गिरि-). K4 स्वमालयम् (for सुरा°). — (L 1135)

नन्दनप्रतिमं दिव्यं पुरद्वारस्य भूषणम् ॥
कारयित्वाधिवासं तं तत्र गत्वा सुरोत्तम ।
कुमाराणां प्रचारश्च सुरमान्यो भविष्यति ॥ [ 1135 ]
नाम्ना द्वारवती नाम त्रिषु लोकेषु विश्रुता ।
भविष्यति पुरी रम्या शक्रस्येवामरावती ॥
यदि स्यात्संवृतां भूमिं प्रदास्यति महोदधिः ।
यथेष्टं विविधं कर्म विश्वकर्मा करिष्यति ॥
मणिमुक्ताप्रवालैश्च वज्रवैदूर्यसप्रभैः । [ 1140 ]
दिव्यैरभिप्राययुतैर्दिव्यरत्नैस्त्रिलोकजैः ॥
दिव्यस्तम्भसमाकीर्णान्स्वर्गे देवसभोपमान् ।
जाम्बूनदमयाञ्शुभ्रान्सर्वरत्नविभूषितान् ।
दिव्यध्वजपताकाढ्यान्देवकिंनरपालितान् ।
चन्द्रसूर्यप्रतीकाशान्प्रासादान्कारय प्रभो ॥ [ 1145 ]

वैशंपायन उवाच ।

एवं कृत्वाथ संजल्पं वैनतेयोऽथ केशवम् ।
प्रणम्य शिरसा ताभ्यां निषसाद कृतासनः ॥
कृष्णोऽपि रामसहितो विचिन्त्य हितमीरितम् ।
प्रकाशं कर्तुकामौ तौ विसृज्य विनतात्मजम् ॥
सत्कृत्य विधिवद्राजन्महार्हवरभूषणैः । [ 1150 ]
मोदेते सुखिनौ तत्र देवलोके यथामरौ ॥
तस्य तद्वचनं श्रुत्वा भोजराजो महायशाः ।
कृष्णं स्नेहेन विस्रब्धं बभाषे वचनामृतम् ॥
कृष्ण कृष्ण महाबाहो यदूनां नन्दिवर्धन ।
श्रूयतां यदहं त्वाद्य वक्ष्यामि रिपुसूदन ॥ [ 1155 ]
त्वया विहीनाः सर्वे स्म न शक्ताः सुखमासितुम् ।
पुरेऽस्मिन्विषयान्ते वा पतिहीना इव स्त्रियः ॥
त्वत्सनाथा वयं तात त्वद्बाहुबलमाश्रिताः ।

---

Bom Poona eds G(ed) कुमारीणां ( for °राणां ) $Ds_1$ प्रभावश्, $Ds_2$ $D_{1\ 2\ 4}$ प्रचारं ( for °रश् ) $K_{1.4}$ $\tilde{N}_{2.3}$ $V_{1\ 3}$ $B_{1\ 3}$ Dn $D_6$ $T_4$ सुरमण्यो, $Ds_1$ सुखमय्यो, Ds सुरम्यं च, $D_3$ °वर्यं, $D_4$ °गण्यं, $G_2$ °म्योऽपि ( for °मान्यो ) — $K_2$ $D_5$ om (hapl) lines 1136–1139 — (L 1136) $G_2$ नाना- ( for नाम्ना ) Bom Poona eds G(ed) ज्ञेया ( for नाम ) — (L 1138) $D_3$ यदि स्वां, $G_2$ यतस्त्वां ( for यदि स्यात् ) $K_{1\ 3\ 4}$ $B_{1\ 3}$ $Dn_1$ $D_{1\ 2\ 6}$ यदि स्यात्संवृता भूमि. ( for $^a$ ) — (L 1139) $K_1$ $\tilde{N}_{2\ 3}$ V B Ds $D_{3\ 4\ 6}$ $G_2$ कृत्वा, $D_2$ राष्ट्रं ( for कर्म ) $K_1$ $\tilde{N}_{2\ 3}$ $V_3$ $B_1$ $D_6$ $T_4$ चरिष्यति, $V_{1\ 2}$ $B_3$ $G_2$ रचि° ( for करि° ) — (L 1140) $K_1$ $\tilde{N}_3$ Dn $D_{1.2}$ $T_4$ -प्रवालाभिर्, $K_{2-4}$ $D_{3\ 4}$ ( *sup. lin* ) $_5$ °लादिर्, $V_1$ $G_2$ °लाभैर्, Ds $D_4$ °लानि ( for °लैश्च ) $\tilde{N}_2$ $V_3$ $G_2$ -संयुतै.; $\tilde{N}_3$ $V_2$ -सुप्रभै', $D_{3-5}$ -संनिभै ( for सप्रभैः ) — (L. 1141) $V_2$ $B_3$ $D_5$ $D_{4\ 5}$ द्रव्यैर् ( for दि° ). $D_5$ दिव्यै'; $D_4$ द्रव्य ( for दिव्य- ). — (L 1142) $B_{1\ 3}$ $Ds_1$ $D_6$ -रत्न- ( for -स्तम्भ ) $K_{1\ 3\ 4}$ $\tilde{N}_{2\ 3}$ V $B_2$ Dn $D_{1\ 2\ 4}$ $T_4$ -शताकीर्णान् ( for -समा° ) $G_2$ दिव्यरत्नशताकीर्णान् ( for $^a$ ) $K_1$ सर्वदेवसभोपमाम् ( for $^b$ ) — For line 1143, $K_2$ $D_5$ subst

32** जाम्बूनदमयां शुभ्रां सर्वरत्नविभूषिताम् ।

— $D_3$ om line 1144. — (L 1144) $K_2$ $D_5$ -पताकाढ्यां ( for °ढ्यान् ) $K_4$ $\tilde{N}_3$ -गन्धर्व-, $\tilde{N}_2$ $V_{2\ 3}$ B Ds $D_{2\ 4\ 6}$ $T_4$ (marg. as above) $G_2$ -किंखर- ( for -किंकर- ) $K_2$ $D_5$ -पालिताम् ( for °तान् ) $V_1$ दिव्यकिंकरपालितान् ( for $^b$ ) — (L. 1145) $B_{2\ 3}$ $D_6$ $G_2$ प्रभाकीर्णान् ( for -प्रतीकाशान् ) $Dn_2$ प्रासादान्विकृतासनान् ( for $^b$ ). — (L 1146) $K_{1\ 2\ 4}$ $V_2$ $D_{1-3}$ $T_4$ $G_2$ सकल्पं, $B_1$ तं जल्पं, $D_4$ संजल्प्य ( for संजल्पं ) $\tilde{N}_2$ $V_3$ $B_{1.3}$ $T_4$ $G_2$ महाबल· ( for ऽथ केशवम् ). — (L 1147) $D_3$ महाबल· ( for कृतासन ) — (L 1148) $K_2$ $D_5$ ईप्सितम् ( for ईरि° ) — (L 1149) $K_1$ प्रासादं ( for प्रकाशं ) $\tilde{N}_2$ $V_3$ $B_1$ $D_{1-3\ 6}$ $G_2$ प्रकाशं कर्तुकामश्च ( $D_3$ मोऽसौ ), $B_{2\ 3}$ प्रासादं ( $B_3$ [ marg ] प्रसादं as above ) कर्तुकामश्च ( for $^a$ ) — (L 1150) Ds -मणि ( for -वर- ). $D_{3\ 4}$ महार्हाम्बरभूषणैः ( for $^b$ ) — After line 1150, $\tilde{N}_2$ $V_2$ ins

33** प्रविवेश बली श्रीमान्स्वपितुर्भवनं नृप ।

(L 1151) $K_{1.3\ 4}$ Dn $D_{1.2\ 5}$ $T_4$ सुर- ( for देव- ) — (L 1152) $D_3$ महाद्युतिः ( for °यशा ). — (L 1153) $D_2$ विविध, $D_2$ (marg) विश्रब्धो ( for विस्रब्धं ) $B_3$ प्रणम्य कृष्णं विश्रब्धं ( for $^a$ ) $G_2$ उवाच ( for बभाषे ) — Before line 1154, some Mss ins उग्रसेन, some जनमेजय उवाच. Before line 1154, $B_3$ repeats line 1160 — (L 1155) $V_3$ Bom Poona eds G(ed) वचनं ( for यदहं ). $K_2$ $D_{4\ 6}$ $G_2$ त्वद्य ( for त्वाद्य ) $D_3$ श्रूयतां वचनं त्वद्य ( for $^a$ ) $V_3$ मधुसूदन ( for रिपु° ) — (L 1156) $K_2$ $D_5$ ऽस्मिन्, $D_1$ स्युर् ( for स्म ) $D_2$ युक्ता· ( for शक्ता· ). — (L. 1157) $V_1$ यथा ( for इव ) — $T_4$ om lines 1158–1162 — (L 1158) $D_3$ नाथ, $D_6$ तावत् ( for तात ) — (L. 1160) $K_1$ विषये त्वं ( for विजयाय ) — (L. 1162) $G_2$

विभीमो न नरेन्द्राणां सेन्द्राणामपि मानद ॥
विजयाय यदुश्रेष्ठ यत्र यत्र गमिष्यसि । [ 1160 ]
तत्र त्वं सहितोऽस्माभिर्गच्छेथा यादवर्षभ ॥
तस्य राज्ञो वचः श्रुत्वा सस्मितं देवकीसुतः ।
यथेष्टं भवतामद्य तथा कर्तास्म्यसंशयम् ॥

Colophon.

No 21

After adhy. 87 28, $D_6$ S ( except $G_2$ ) ins.:

यथार्हं च यथायोगं प्रश्रयं प्रददौ नृपः ॥
विवाहं घोषयामास शिशुपालस्य मागधः ।
सर्वमन्तःपुरं चैव विवाहे सोत्सुकं किल ॥
श्वोभूते तु विवाहः स्याचैद्यस्येति च भूमिपाः ।
संनद्धाः समपद्यन्त विभवैः स्वैर्यथातथम् ॥ [ 5 ]
शिशुपालोऽपि राजा तु वरवेषेण संयुतः ।
कुमारैरात्मतुल्यैश्च नियमस्थोऽभवत्तदा ॥

Colophon.

वैशंपायन उवाच ।

एतस्मिन्नेव काले तु नारदो मुनिसत्तमः ।
पृथिव्यां पर्यटन्नेको वीणासक्तकरस्तदा ॥
द्वारवत्यां ततो विष्णुं निवसन्तं यदूत्तमम् । [ 10 ]
सभाजयञ्जगन्नाथं प्राप्तो द्वारवतीं किल ।
प्रविश्य च पुरीं रम्यां केशवेनाभिपूजितः ॥
तस्यामेव सभायां तु यदुभिर्वृष्णिभिः सह ।
विहरन्तं जगन्नाथं ददर्श यदुनन्दनम् ॥
तदभ्याशे स्थितं राममुग्रसेनं च सात्यकिम् । [ 15 ]
अन्यानपि यदून्सर्वान्ददर्श मुदितान्महान् ॥
तं दृष्ट्वा यादवाः सर्वे प्रत्युज्जग्मुः ससंभ्रमम् ॥
भगवानपि गोविन्दो रामेण सह केशवः ।
उपतस्थे यथायोगमर्घमादाय चासनम् ।
इदमर्घ्यमिदं पाद्यमित्यूचे तं मुनीश्वरम् ॥ [ 20 ]
तच्च सर्वं यथाप्राप्तमुपयुज्य मुनीश्वरः ।
आसने च समास्थाय न्यषीदन्मुदितस्तदा ॥
आसनस्थं मुनिश्रेष्ठं यादवाः सर्व एव ते ।
आसनानि यथायोगं प्राप्नुवन्स्वानि सर्वतः ॥
केशवोऽपि च धर्मात्मा रामेण सह संगतः । [ 25 ]
निषसादासने शुभ्रे वृष्णानामग्रणीर्हरिः ॥
उवाच च मुनिश्रेष्ठं वीणासक्तमसङ्गगम् ॥
कुशलं सर्वकार्येषु वद किं मुनिसत्तम ।
अपि ते कुशलं विप्र तपसो मुनिसत्तम ॥

---

सस्मितो ( for °त ) — ( L 1163 ) $B_3$ [अ]हं स्वयम्, $G_2$ [अ]तन्द्रित ( for [अ]संशयम् ) $V_1$ तत्कर्ताऽस्मि न संशय ( for [b] )

Colophon — *Mention of the Epic* $K_3$ $V_2$ $Ds_2$ — *Mention of Khila* $K_{3\ 4}$ $\tilde{N}_3$ V B $Dn_2$ Ds $D_1$ —*Sub-parvan* · $D_5$ पारिजात — *Adhy name* K $\tilde{N}_{2\ 3}$ V $B_1$ Dn $D_{1-5}$ मन्त्रोदाहरणम्, $B_{2\ 3}$ Ds $D_6$ रुक्मिणीस्वयंवरे राजेन्द्राभिषेचनम्. — *Adhy no* $K_3$ 108, $\tilde{N}_3$ 112; $V_{1\ 2}$ $B_2$ 113, Dn $Ds_2$ $D_4$ 110, $D_1$ 107, $D_8$ 119, $T_4$ 102, $G_2$ 117

**21**

$T_3$ reads lines 1–7 ( = 992* ) for the first time after 87 1 — ( L 2 ) $D_6$ कारयामास ( for घोष° ) — ( L 3 ) $D_6$ $T_{1\ 3\ 4}$ $G_{3-5}$ चोत्सुकं, $G_1$ चोत्सवं; $M_4$ चोत्सुका ( sic ) ( for सोत्सुक ) $M_{1\ 3}$ विवाहायोत्सुकं किल ( for [b] ) — ( L 4 ) $T_1$ विवाहस्य ( for °ह स्याच् ) — ( L 5 ) T $G_{1\ 3-5}$ $M_4$ यथाक्रमम् ( for °तथम् ) — ( L 6 ) $M_{1\ 3}$ संवृत ( for सयुतः ).

Colophon om. in $D_6$ — *Mention of the Epic* . $T_3$ — *Adhy name* $T_2$ $G_{1\ 3}$ $M_4$ सर्वराजसंगमे शिशुपालविवाहोद्योग, $M_2$ रुक्मिणीहरणम् — *Adhy no* $T_{1\ 2}$ $G_{3\ 4}$ $M_{2-4}$ 115; $T_3$ 124; $G_1$ 117, $G_5$ 118, $M_1$ 105

— $D_6$ om. the ref — ( L 10 ) $M_{1-3}$ तदा ( for ततो ) — ( L 11 ) T $G_{1\ 3-5}$ $M_4$ सभायां तु ( for °जयञ् ) — ( L 12 ) $D_6$ $T_{1\ 3\ 4}$ $G_{3\ 5}$ $M_4$ -पूजिताम् ( for °त. ) — ( L 16 ) $T_2$ नृपान् ( for महान् ) $D_6$ ददर्श मुनिरात्मवान्; $T_{1\ 4}$ $G_{3-5}$ M °र्श मुदितात्मवान् ( for [b] ) — ( L 17 ) $T_4$ प्रत्याजग्मु. ( for प्रत्युज्जग्मुः — ( L 18 ) $M_1$ विश्वेशो, $M_3$ विश्वात्मा ( for गोविन्दो ) — ( L 20 ) $T_4$ [उ]वाच ( for [ऊ]चे तं ) — ( L 21 ) $T_{2\ 3}$ $G_1$ उपव्रज्य ( for °युज्य ) — ( L 22 ) $D_6$ $T_{1\ 4}$ $G_{3-5}$ M आसनं ( for °ने ). — ( L 23 ) $D_6$ $T_{1\ 4}$ $G_{3-5}$ M आसनस्थे मुनिश्रेष्ठे ( for [a] ). — $T_2$ om. line 24 — ( L.

कुशलं तव वीणाया वद विप्र यथातथम् ॥ [ 30 ]
जगतामद्य विप्रेन्द्र का वार्ता वद मे प्रभो ॥
अथ वा कुशलं नाम युष्माकं नियतात्मनाम् ।
दिष्ट्या दृष्टोऽसि संप्राप्तः पावयानश्च नो विभो ॥
प्रीता वयं मुनिश्रेष्ठ पूताश्चैव त्वदागमात् ।
अद्येयं यादवकुलं लोके ख्यातिं प्रयास्यति । [ 35 ]
त्वादृशां पुण्यकीर्तीनां संयोगाद्वद सांप्रतम् ॥
आद्यो हि मुनिमुख्यानां भवाल्लोके प्रथिष्यति ।
धन्याः खलु वयं विप्र यतो दृष्टास्त्वया विभो ।
एवमादि जगन्नाथः कुशलं पृष्टवान्मुनिम् ॥
तच्छ्रुत्वा कुशलं पृष्टं विष्णुना प्रभविष्णुना । [ 40 ]
मुनिः प्रीतमना भूत्वा प्रोवाच यदुसंसदि ॥
रामेण संगतं कृष्णमूर्ध्वबाहुमवस्थितम् ।
सर्वांस्तथा यदून्विप्रः समाभाष्य वचस्तदा ॥
किमयं कुशलप्रश्नः पृष्टः कृष्ण मयि प्रभो ।
न युक्तं प्रतिभात्येतद्देवदेव जगत्पते ॥ [ 45 ]
यतस्त्वं सर्वभूतानामादिः कुशलदस्तदा ।
त्वदिच्छया जगत्सर्वं कुशले विनियुज्यते ॥
वयं तु देवदेवेश नित्यं कुशलिनो हरे ।
तथा हि मूलभूत्या वै विष्णो तव युगे युगे ॥
इदं तु चित्रं देवेश यदुक्तं भवतो हरे । [ 50 ]
पावयान इति श्रीमल्लोकनाथ सुरेश्वर ॥
त्वं हि शुद्धः सदा योगी पूतः किल ममागमात् ।
किमन्यद्वद देवेश प्रसादात्तव मानद ॥
प्रसादातिशयादेतद्युक्तं वक्तुं जगत्पते ।
इदं निश्चितवानद्य प्रसन्नो मयि मानद ॥ [ 55 ]
सर्वथा कृतकृत्योऽस्मि दृष्टो येन त्वया विभो ।
प्रीतिर्मे ह्यतुला विष्णो तव संदर्शनेन हि ॥
इत्युक्त्वा स जगन्नाथं भूयः स्तोतुं प्रचक्रमे ।
पुराणज्ञः सदा विप्रो मुनीनामादिरव्ययः ॥
तत्त्वार्थवित्तदा विष्णोः साक्षाद्वेदार्थतत्त्ववित् । [ 60 ]
आदाय निहितां वीणां संस्थाप्य लयमुत्तमम् ॥
तन्त्रीं च सुदृढां कृत्वा जगौ गेयैर्जगत्पतिम् ।
अर्थ्याभिर्वाग्भिरिष्टाभिः सर्वयादवसंसदि ॥

नारद उवाच ।

नमः कृष्णाय हरये वेधसे भूतधारिणे ।
देवदेव जगन्नाथ नमस्ते चक्रधारिणे ॥ [ 65 ]
नमस्ते नरसिहाय दैत्यवक्षःप्रदारिणे ।

---

24 ) D6 प्रापुयु. ( for °वन् ). T3 G1 प्राप्नुवन्सर्वं एव ते ( for ^b ). — ( L 25 ) T1 सह, T2–4 G1 3–5 M2. 4 ऽपि स ( for ऽपि च ) — ( L 27 ) T G1 3–5 M2 4 समागतम् ( for असङ्गमम् ) — Before line 28, D6 ins कृष्णः, T G1 3 5 M2–4 श्रीभगवानुवाच. — M4 om. lines 29–32 D6 om ( hapl ) line 29 — ( L 31 ) D6 जगत्याम् ( for °ताम् ) D6 T G1. 4 5 M2 अत्र ( for अद्य ) T1 हे ( for मे ) D6 M3 विभो ( for प्रभो ) — ( L 33 ) T1 4 M4 पावनाय च नो विभो, T2 3 G1. 4 5 °नाय च मे ( G1 मम ) प्र( G4 5 वि )भो ( for ^b ) — ( L 34 ) G3 प्रिया ( for प्रीता ). G5 चैव ( for वय ) M2 द्विज- ( for मुनि- ) — ( L 36 ) D6 एव ( for वद ). — ( L 40 ) T2 3 G1 4 पृष्टो ( for पृष्टं ) — ( L 42 ) D6 T G1 M1–3 ऊर्ध्वबाहुरवस्थित ( for ^b ) — G4 om lines 44–47 — ( L 44 ) D6 किमिद कुशलं प्रश्न ( for ^a ). D6 कृष्णः पृष्टं ( for पृष्टः कृष्ण ). T2 पृष्ट कृष्णोऽपि मे प्रभो ( for ^b ) — ( L 45 ) T G1 3 5 M4 [ए]व ( for [ए]तद् ). — ( L 46 ) T2 3 यदि ( for यतस् ). D6 -देवानाम् ( for -भूतानाम् ) D6 M1 2 सदा, G3 5 तथा ( for तदा ) T1–3 G1 आदिस्त्वं ( T1 °दिगः ) कुशलस्तदा. — ( L 48 ) D6 वय ( for नित्यं ). — D6 om line 50 — ( L 50 ) G3 om ( hapl ) line 50^b–52^a M2 3 भवता ( for °तो ) T1 यदुक्तं च वद प्रभो ( for ^b ) — ( L 51 ) T G1 4 5 M पावनायेति हि श्रीमाँल्ँ ( for ^a ) M4 लोकाना तु ( for लोकनाथ ) — ( L 52 ) T2 सिद्ध ( for शुद्ध ) M2 मदागमात् ( for ममा° ) — ( L. 55 ) T3 इति ( for इदं ) — ( L 56 ) M1 3 येन दृष्टस् ( M3 °ष्ट ) ( by transp ) — ( L 57 ) T2 3 मयि ( for मे हि ) — ( L 59 ) M1 3 विष्णोर् ( for विप्रो ) — ( L. 60 ) D6 सदा ( for तदा ) D6 T1 3. 4 G3–5 M -तत्परः ( for -तत्त्ववित् ). — After line 61, T4 ins

34** तन्त्रीं च वीणां सस्फाल्य * * * लयमुत्तमम् ।

— ( L 62 ) T2 बध्वा ( for कृत्वा ) D6 T G1 3–5 M4 गेयं ( for गेयैर् ). T3 जगत्पतेः ( for °तिम् ) — ( L 63 ) D6 M3 अर्घ्याभिर्, M2 अग्र्या° ( for अर्थ्या° ) — ( L 64 ) D6 कृत्वा च ( for कृष्णाय ) G3 भूरि- ( for भूत- ). — After line 64, D6 reads line 70, followed by line

अभूश्च जामदग्न्यस्त्वं गृहीत्वा परशुं प्रभो ।
हतवांस्त्वं महावीर्यं कृतवीर्यसुतं रणे । [ 100 ]
निःक्षत्रियमिमं लोकमददाः काश्यपाय वै ॥
इदानीमपि गोविन्द लोकानां हितकाम्यया ।
मानुषं वपुरास्थाय द्वारवत्यां प्रतिष्ठसि ॥
हतवान्पूतनां बाल्ये गोकुले विहरन्प्रभो ।
अर्जुनौ हतवान्भूयो बद्धोलूखलसंपुटः ॥ [ 105 ]
पुनश्च क्रीडता विष्णो त्वयैव निहतो हयः ॥
अदधास्त्वं पुनः शैलं गवां संरक्षणाय हि ।
गोवर्धनं महाशैलं सर्वगोपस्य पश्यतः ॥
ननर्त भगवान्भूयो यमुनाया ह्रदे हरे ।
अकरोः कालियं विष्णो विमर्दं यमुनातटे ॥ [ 110 ]
रङ्गमध्ये हतौ विष्णो त्वया चाणूरमुष्टिकौ ।
दुःसहं लोकविद्विष्टं हतवान्कंसमोजसा ॥
उग्रसेनोऽभिषिक्तश्च राज्ये निहतकण्टके ।
स इदानीं स्थितो राज्ये त्वामाश्रित्येन्द्रवद्दिवि ॥
किमनेन जगन्नाथ सर्वं त्वद्वशगं जगत् । [ 115 ]
सर्वात्मन्सर्वभूतेश सर्वभावन भावन ।
नमस्ते देवदेवेश नमो भूयो नमो नमः ॥
इति स्तुत्वा जगन्नाथमुपारंसीत्स नारदः ।
तच्छ्रुत्वा यादवाः सर्वे परं विस्मयमागताः ॥
मनसा तुष्टुवुर्विष्णुं नारदाच्छ्रुतविस्तराः । [ 120 ]
धन्या वयं जगन्नाथमाश्रित्य सुखिनस्तथा ।
निर्वृता वयमेवेति नारदं च शशंसिरे ॥
पुनः प्रीतियुताः सर्वे विलोक्य च परस्परम् ।
धन्या वयं पुनर्धन्या धन्यानामग्रतः स्थिताः ॥

Colophon

श्रीभगवानुवाच ।

किमर्थमिह संप्राप्तो वद नारद सांप्रतम् । [ 125 ]
अलमेतैः स्तुतिपदैर्यथार्थैर्वापि नारद ॥
त्वदागमनजं विप्र तत्कार्यं वद सांप्रतम् ।
कुतूहलं मम विभो वृष्णीनां चैव सर्वशः ॥

नारद उवाच ।

श्रूयतां भगवन्विष्णो ममागमनकारणम् ॥
ह्यस्तने देवदेवेशं शूलिनं वृषभध्वजम् । [ 130 ]
अर्चयित्वा हरं शर्वं दक्षिणे सागरे विभुम् ॥
निवृत्तोऽस्मि तमाराध्य दिशं धनदपालिताम् ।
त्वां द्रष्टुं देवदेवेश वसन्तं वृष्णिसंसदि ॥
विन्ध्यस्य दक्षिणं पार्श्वं गतवान्भीष्मपालिताम् ।
प्रविश्य च पुरीं तां तु विदर्भस्य महीपतेः । [ 135 ]
स्थितोऽहं भीष्मकेणात्र पूजितो यादवेश्वर ॥
तत्र दृष्टो हृषीकेश राज्ञां समुदयो महान् ॥
जरासंधं पुरस्कृत्य राजानः सर्व एव हि ।
यथासुखं यथायोगं दृष्टाः केशव माचिरम् ॥

हतवांस्) — (L 103) $M_4$ रूपम् (for वपुर्) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ प्रतिष्ठसे (for °सि) — (L 104) $G_4$ विभो (for प्रभो) — $G_4$ om (hapl) lines $106^b$–$110^a$. $M_3$ om (hapl.) lines $106^b$–$111^a$ — (L 108) $T_4$ $M_4$ महेन्द्राभं ; $M_3$ महाभ्राभं (for °शैलं) $T_{2.3}$ -सैन्यस्य, $T_4$ $M_1$ -लोकस्य (for -गोपस्य). — (L 109) $T_1$ यमुनाह्रदतो हरे (for $^b$) — (L 110) $T_1$ -ह्रदे, $T_2$ -तरोः (for -तटे) — (L 111) $D_6$ $M_{1-3}$ -मल्लक॰ ($M_3$ °काः), $T_4$ -मुष्टिक (for °कौ) — (L 112) $D_6$ अरिष्टं ; T $G_{1\ 3-5}$ $M_2$ दुष्टं तं (for दुःसहं) — (L 114) $M_3$ इदानीं सुस्थितो राज्ये (for $^a$) $T_1$ om (hapl) lines $116^a$–$117^a$ — (L. 116) $D_6$ भूत- (for the first सर्व-) — Before line 118, $T_{3\ 4}$ $G_5$ ins वैशंपायनः. — (L 120) $D_6$ $T_{1-3}$ $G_{1\ 3-5}$ $M_2$ नारदस्तुतिविस्मिता. ($D_6$ $M_2$ °स्तरा) (for $^b$) — (L. 123) $D_6$ वाक्यमूचुः (for विलोक्य च).

COLOPHON om in $D_6$ $T_4$. — *Mention of the Epic* $T_3$ — *Adhy name* $G_3$ $M_1$ नारदस्तुति ; $M_{1-3}$ रुक्मिणीहरणम् — *Adhy no* $T_{1,2}$ $G_{2,4}$ M 116, $T_3$ 125; $G_1$ 118; $G_5$ 119

$D_6$ कृष्णः, $M_3$ वैशंपायन (for श्रीभगवान्). — (L 126) $T_{1-3}$ $G_{1,\ 3-5}$ $M_4$ स्तुतिपरैर् (for °पदैर्). — $D_6$ om. line 127 — (L. 127) $M_{1-3}$ छिन्धि नो वद नारद (for $^b$). — (L 128) $D_6$ कृत्स्नश. (for सर्वशः). — (L. 130) $D_6$ $T_{1-3}$ $G_{1\ 3-5}$ $M_{2-4}$ अ($D_6$ $M_2$ ह्य)स्तुवन्, $T_4$ अहं तु (for ह्यस्तने) — (L 132) $T_3$ तदा (for तम्) — (L. 133) $D_6$ T $G_{1\ 3-5}$ $M_4$ -देवेशं (for °श) — (L. 137) $T_4$ दृष्ट्वा (for दृष्टो). — (L 140) $M_3$ चैद्यानाम् (for

शिशुपालो हि नृपतिश्चेदीनामीश्वरश्च सः । [ 140 ]
पौण्ड्रको वासुदेवश्च नित्यं त्वां द्वेष्टि यो विभो ॥
दृष्टश्चाथ मया राजा भीष्मको मात्रवीद्वचः ।
शिशुपालस्य विप्रर्षे रुक्मिण्या सह संगमः ।
भविता श्वः प्रभाते तु तदर्थं राजसंगमः ॥
तच्छ्रुत्वा त्वरितो देव प्राप्तस्त्वां वृष्णिपुंगव । [ 145 ]
तद्गच्छ वृष्णिभिः सार्धं नगरं तस्य धीमतः ॥
गृहाण रुक्मिणीं कृष्ण जित्वा नृपतिपुंगवान् ॥
शिशुपालोऽथ राजा तु वरवेषेण विष्ठितः ॥
उद्वहेत जगन्नाथ यदि राजा स रुक्मिणीम् ।
अकृत्यमयशस्यं च भवतो नात्र संशयः ॥ [ 150 ]
याचिता सा भवद्भिस्तु न दत्ता भीष्मकेण हि ॥
आरक्षको जरासंधः पौण्ड्रश्च नृपपुंगवः ।
एकलव्यो हृषीकेश रुक्मी तस्य तु दास्यति ॥
भवन्तं यः सदा द्वेष्टि न त्वामाह्वयति प्रभो ॥
जरासंधस्तु वृष्णीनां सदा द्वेष्टा न संशयः । [ 155 ]
तद्गच्छतु भवाञ्शीघ्रं यानैरश्वैर्गजैरपि ॥
उग्रसेनं पुरस्कृत्य सात्यकिं च महाबलम् ।
तामादाय जगन्नाथ गत्वा यास्यसि माचिरम् ॥
सा च दृष्टा हृषीकेश शोकोपहतचेतना ।
त्वय्येव मन आधाय सदा त्वां स्मरति प्रभो ॥ [ 160 ]
यदि भर्ता भवेच्चैद्यः स्यान्मृता रुक्मिणी हरे ।
उज्जीवय हरे विष्णो रुक्मिणीं रुक्मभूषणाम् ॥
इत्यहं देव संप्राप्तः कृत्यशेषं विचिन्त्यताम् ।
न किंचिदपि दुःसाध्यं चक्रपाणे हरे तव ॥
साधयामो वयं देव गच्छेत्युक्त्वा जगाम सः ॥ [ 165 ]

Colophon

वैशंपायन उवाच ।

इत्युक्त्वा नारदे याते ब्रह्मलोकं सनातनम् ।
वासुदेवस्तु धर्मात्मा यदूनामग्रणीर्हरिः ॥
गमनाय मतिं चक्रे रुक्मिण्याहरणे तदा ।
उवाच च यदून्सर्वान्सज्जीभवत माचिरम् ॥
अस्मिन्नेव मुहूर्ते तु यास्यामः कुण्डिनं प्रति । [ 170 ]
रथमानय मे शीघ्रं सारथे दारुक प्रभो ॥
आरुह्यन्तां रथा अश्वा गजाश्च परिकल्पिताः ॥
अग्रतश्चास्तु नो वीरः सात्यकिः सत्यविक्रमः ।
मध्यतो बलभद्रस्तु राजा चैव तु पृष्ठतः ॥
अहं खड्गी गदी चक्री शार्ङ्गी शङ्खी तलत्रवान् । [ 175 ]
रथमास्थाय गच्छामि दारुकेण सहायवान् ॥
हत्वा च राजशार्दूलाञ्जरासंधपुरोगमान् ।

---

चेदी° ) — ( L 141 ) $D_6$ $T_{1\ 4}$ $G_{1\ 3-5}$ M पौण्ड्रोऽथ ( for पौण्ड्रको ). — ( L 142 ) $D_6$ $M_{1\ 3}$ पृष्टश् ( for दृष्टश् ) $D_6$ [अ]पि, $M_1$ [अ]त्र ( for [अ]थ ) $D_6$ भीष्मकश्चाब्रवीच्च स· ( for $^b$ ) — ( L 143 ) $D_6$ राजर्षे ( for विप्रर्षे ). — $T_2$ om. ( hapl ) line 144 — ( L 144 ) $M_{1\ 2}$ [अ]त्र ( for श्व· ). — ( L 145 ) $M_1$ प्राप्तवान् ( for °स्त्वां ) — ( L 146 ) $D_6$ नगरीं ( for °रं ) $M_{1\ 3}$ तद्विभो ( for धीमत. ). — ( L 147 ) $M_{1-3}$ विष्णो ( for कृष्ण ) $G_1$ दृष्ट्वा ( for जित्वा ) — ( L 148 ) $M_1$ वरवेषविलम्बित: ( for $^b$ ). — ( L 149 ) $D_6$ $T_4$ उद्वेक्ष्यति , $M_{1-3}$ उद्वक्ष्यति ( for °हेत ) — $G_1$ om ( hapl ) lines 151–155 — ( L. 151 ) $T_1$ त्वच्चित्ता साभवद्विष्णो ( foi $^a$ ) — ( L 152 ) $T_1$ अरक्षत्स ( for आरक्षको ) — ( L 154 ) $M_{1-3}$ मानयति ( for आह्वयति ) — ( L 156 ) $T_{1-3}$ $G_{1\ 3\ 5}$ $M_{1\ 3\ 4}$ रथै( $T_3$ $G_{1\ 3}$ यानै )रश्वैश्च पत्तिभि ( for $^b$ ) — ( L 158 ) $G_{3\ 5}$ भवान् ( for गत्वा ) — ( L. 159 ) $T_{2-4}$ $G_{1\ 5}$ $M_4$ हृष्टा ( for दृष्टा ). $T_2$ योगोपहतचेतना ( for $^b$ ). — ( L 160 ) $T_4$ $G_5$ मनसि ( for स्मरति ) — ( L 161 ) $M_2$ हर्ता ( for भर्ता ) — ( L 163 ) $D_6$ $T_4$ $M_{1-3}$ इत्यर्थं , $G_5$ $M_4$ इत्येवं ( for इत्यहं ) — ( L 164 ) $M_{1-3}$ दुःसाध्यं ( for °ध्यं ) $M_{1\ 2}$ चक्रायुध , $M_3$ चक्रभार ( for °पाणे ) — ( L 165 ) $M_1$ [उ]क्तो ( for [उ]क्त्वा ).

COLOPHON om in $D_6$ $T_4$ — *Mention of the Epic* · $T_3$ — *Adhy name* $T_1$ $M_4$ कृष्णनारदसंवाद ; $M_3$ रुक्मिणीहरणम् — *Adhy no* $T_{1\ 2}$ $G_{3\ 4}$ M 117 , $T_3$ 126 , $G_1$ 119 , $G_5$ 120

( L 170 ) $M_3$ पुरम् ( for प्रति ) — ( L 172 ) $M_{1\ 3}$ गजा ( for रथा ) $M_{1\ 3}$ रथाश् ( for गजाश् ) $T_1$ -कल्पितान् ( for °ता· ) $M_{1-3}$ गजाश्च बहुविस्तरा ( for $^b$ ). — ( L 175 ) T $G_{1\ 5}$ रथी ( for गदी ) $D_6$ तनुत्रवान् ( for तल ) — ( L 177 ) $D_6$ [अ]हं ( for च ) — ( L 178 ) $D_6$ $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ -विभूषितम् ( for -विडम्बिनम् ) — $M_1$ om. line 179 — ( L. 180 ) T $G_{1\ 3-5}$ $M_4$ राजानं ( for तां

शिशुपालं च राजानं वरवेषविडम्बिनम् ॥
बध्वा वा भीष्मकं सख्ये हत्वा चैव तु रुक्मिणम् ।
आनयिष्यामि तां राजन्रुक्मिणीं मत्प्रियां सदा ॥[ 180 ]
सज्जीभवन्तु राजानो रथैरश्वैर्गजैस्तथा ।
किं विलम्बथ राजानो यास्यामः सर्व एव हि ।
इत्युक्त्वा वृष्णयः सर्वे गमनायोपचक्रिरे ॥
कृष्णस्याज्ञां पुरस्कृत्य सर्वे ते यदुपुंगवाः ।
रथानारुह्य यातास्ते संनद्धाः शस्त्रपाणयः ॥ [ 185 ]
सात्यकिस्तु महाराज रथमारुह्य दंशितः ।
धन्वी खड्गी रथी बाणी सैन्याग्रे प्रत्यदृश्यत ।
बलदेवोऽपि धर्मात्मा गजमारुह्य दंशितः ॥
सैन्यमध्ये महाराज मृगमध्ये यथा हरिः ॥
भगवानपि गोविन्दो रथं दारुकसंस्कृतम् । [ 190 ]
आरुह्य सहसा विष्णुर्दारुकेण समन्वितः ।
गन्तुमैच्छज्जगन्नाथो हर्तुं भोजपतेः सुताम् ॥
सव्यमक्ष्णोर्युगं क्षुब्धं रुक्मिणीशिशुपालयोः ।
समाश्वस्ता तदा सा तु स च राजा सुदुःखितः ॥
वृष्णयोऽपि च राजेन्द्र वासुदेवपुरोगमाः । [ 195 ]
आहत्य दुंदुभीन्सर्वे शङ्खान्दध्मुः पृथक्पृथक् ।
क्रमेणैव गतास्ते तु भीष्मकस्य पुरीं प्रति ॥

No. 22

For 87 29-48, S ( except $G_2$ ) subst.:

पितृष्वसुः प्रियार्थं च रामकृष्णावुभावपि ।
प्रययुर्वृष्णयश्चान्ये मान्यास्तेजोबलान्विताः ॥
दृष्ट्वा तानागतान्सर्वान्वासुदेवपुरोगमान् ।
क्रथकैशिकभर्ता तु प्रतिगृह्य यथाविधि ॥
पूजयामास पूजार्हान्निविष्टान्बहिरेव तान् । [ 5 ]
न्यवेशयच्च तान्सर्वान्भीष्मको नगराद्बहिः ॥
स्थिते तस्मिञ्जरासंधे रिपौ तेषां महात्मनि ।
संभारास्तत्र सर्वत्र विवाहाय समाहृताः ॥
शङ्खाश्च पटहाश्चैव सस्वनुः सर्वतस्तदा ।
ब्राह्मणाश्च समायाता नानादिग्भ्यस्तथैव च । [ 10 ]
उच्छ्रिताश्चैव सर्वत्र ध्वजा वै समलंकृताः ॥
श्वोभाविनि विवाहे तु रुक्मिणी निर्ययौ बहिः ।
चतुर्युजा रथेनेन्द्रदेवतायतनं शुभा ॥
इन्द्राणीमर्चयिष्यन्ती कृतकौतुकमङ्गला ।
केशवो मे भवेद्भर्ता नान्यः कश्चिद्भवेदिति ॥ [ 15 ]
एवं मनसि संकल्पं कुर्वती रुक्मिणी शुभा ।
दीप्यमानेन वपुषा बलेन महता वृता ॥
तां ददर्श तदा कृष्णो लक्ष्मीं साक्षादिव स्थिताम् ।
एवं रूपेण संपन्नां देवतायतनान्तिके ॥

---

राजन् ) $T_4$ om ( hapl ? ) lines $180^b$-$182^a$ — ( L 181 ) $M_3$ सदा ( for तथा ) $D_6$ $G_5$ गजैरश्वै रथैस्तथा ( for $^b$ ). — ( L 183 ) $D_6$ $M_{1-3}$ प्रचक्रिरे ( for [उ]प° ) — $T_1$ $G_{3,5}$ om. lines 187–188 — ( L 187 ) $T_3$ $G_{1,3}$ सैन्याग्रौ ( for °ग्रे ) — ( L 188 ) $M_{1-3}$ रथम् ( for गजम् ) — ( L 189 ) $M_{1\ 3}$ रराजाथ ( for महाराज ) $D_6$ $T_4$ $M_{1-3}$ सिंह- ( for मृग ) — ( L 190 ) $D_6$ -संयुतम्, T $G_{1\ 3-5}$ $M_4$ संस्थितम् ( for -संस्कृतम् ) — ( L 191 ) $M_2$ ( *sup lin* as above ) [अ]थ तदा ( for सहसा ) — ( L 192 ) $T_4$ भोक्ष्यन् ( for हर्तुं ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ भोक्ष्यन्भोजसुतां विभो ( $T_{2\ 3}$ $G_4$ °भुः ); $M_{1-3}$ हर्तुं भोजसुतां वि( $M_3$ प्र )भो ( for $^b$ ) — $T_4$ om ( hapl ) lines 196-197 — ( L 196 ) $D_6$ शङ्खं प्राध्माय दंसिता, $T_1$ $G_{3\ 5}$ M शङ्ख प्र( $M_{2\ 4}$ °ङ्खान्प्र )ध्माप्य दसिता ( for $^b$ ). — ( L 197 ) $T_3$ पुरं ( for पुरी ) $T_1$ $G_{3\ 5}$ $M_4$ प्रभोः ; $G_4$ $M_{1-3}$ प्रभो ( for प्रति ).

22

[ Some portion of the above passage is given in $D_6$ as star-passages, the numbers of which are noted in the apparatus as they occur. ]

( L 1 ) $T_{2\ 3}$ $G_{1\ 3,\ 5}$ $M_4$ पितृष्वसृ- ( for °सु ) — ( L. 2 ) $G_5$ सर्वे ( for चान्ये ) — Line 3 = $D_6$ 998* — ( L. 3 ) $T_3$ $G_{4\ 5}$ दृष्टवान् ( for दृष्ट्वा तान् ) — ( L 4 ) $M_1$ परि- ( for प्रति- ) — ( L 5 ) T $G_{1\ 3-5}$ $M_4$ राजा तु ( for पूजार्हान् ) $T_{2,3}$ $G_{1\ 4}$ बहिष्ठान् ( for निविष्टान् ). — Lines 6–11 = $D_6$ 999* — ( L 6 ) $M_{1\ 3}$ राजा, $M_2$ राजन् ( for सर्वान् ) — ( L. 8 ) $G_{1,4\ 5}$ सभाराश् ( for सं° ). $T_{1,2\ 4}$ $G_{3\ 5}$ M चैव ( for तत्र ) $T_{3\ 4}$ $G_1$ समावृता ( for °हृता ). — ( L. 9 ) $G_5$ सर्वतः सस्वनुस्तदा ( for $^b$ ). — ( L 13 ) $T_{2\ 3}$ चतुर्युग ( for °जा ). $M_{1\ 3}$ [ऐ]न्द्र ( for [इ]न्द्र- ) T शुभम् — Lines 15–16 = $D_6$ 1001*. — ( L. 16 ) $T_4$

वह्नेरिव शिखां दीप्तां मायां भूमिगतामिव । [ 20 ]
पृथिवीमिव गम्भीरामुत्थितां धरणीतलात् ॥
मरीचिमिव सोमस्य सौम्यां स्त्रीविग्रहामिव ।
विना पद्मं श्रियमिव भुजिष्यास्त्रीसहायिनीम् ॥
कृष्णेन मनसा दृष्टा दुर्निरीक्ष्या सुरैरपि ॥
श्यामावदाता सा ह्यासीत्पृथुचार्वञ्चितेक्षणा । [ 25 ]
ताम्रोष्ठनयनापाङ्गी पीनोरुजघनस्तनी ॥
बृहती चारुसर्वाङ्गी तन्वी शशिनिभानना ।
ताम्रोत्तुङ्गनखी सुभ्रूर्नीलकुञ्चितमूर्धजा ॥
तीक्ष्णशुक्लनखैर्दन्तैः प्रभासद्भिरलंकृता ।
नास्त्यन्या प्रमदा लोके रूपेण यशसा श्रिया । [ 30 ]
रुक्मिणी रूपिणी देवी पाण्डरक्षौमवासिनी ॥
तां दृष्ट्वां ववृधे कामः कृष्णस्य प्रियदर्शनाम् ।
हविषेवालनस्यार्चिर्मनस्तस्यामथादधात् ॥
रुक्मिणी च तथा देवी ददर्शे कृष्णमीश्वरम् ।
अचिन्तयच्च सा देवी दृष्ट्वा कृष्णमवस्थितम् । [ 35 ]
सोऽयं विष्णुर्जगन्नाथः साक्षाद्रामानुजः कृती ॥
अस्य चक्रं सदा शङ्खो भुजयोरुभयोरपि ।
शोभयेतां सदा तौ तु दैत्यदानवदारिणौ ॥
अस्य हस्ते स्थितं शार्ङ्गं दैत्यदानवभीषणम् ।
सदा भाति महाचापं लोके ख्याततरं हरेः ॥ [ 40 ]
यमाश्रित्य सदा देवं गदा कौमोदकीति सा ।
दैत्यदानवहन्त्री च तन्मज्जापरिदारिणी ॥
यदनुज्ञां समाश्रित्य खड्गो नन्दकसंज्ञितः ।
रिपून्हन्ति महावीर्यानसह्यान्दैवतैरपि ॥
अस्याभूद्वाहनं विष्णोर्गरुत्मान्पक्षिपुंगवः । [ 45 ]
शक्रादीन्यः सुराञ्जित्वा जहारामृतमुत्तमम् ॥
सोऽयं विष्णुर्विभुः साक्षाद्गोपवेषविभूषितः ।
गोपस्त्रीस्तनभारेषु विजहार यथासुखम् ॥
यो ननर्त ह्रदे तस्या यमुनायास्तदा हरिः ।
अयमत्कालियं तस्माद्विषाग्निज्वालमालिनम् ॥ [ 50 ]
अयं गोवर्धनं शैलं दधारैकेन पाणिना ।
लीलया स जगन्नाथो गोलकं बालको यथा ॥
अयं स पुण्डरीकाक्षो यो गजं प्रजघान ह ॥
यश्चाणूरं मृधे हत्वा कंसं चैव महाबलम् ।
ननर्त रङ्गे गोविन्दो गोपैः सार्धं सयादवैः ॥ [ 55 ]
अयं स यादवश्रेष्ठः पद्मकिञ्जल्कलोचनः ।
श्यामावदातः सश्रीकः साक्षादिन्द्रानुजः कृती ।
युवा हरिः पुराणात्मा पद्माक्षः पद्मसप्रभः ॥
सोऽयमद्य जगन्नाथः प्राप्तो मामिह यादवः ।

---

संकल्प्य, $M_{1-3}$ सस्थाप्य ( for संकल्पं ) Some Mss कुर्वन्ती $M_4$ शुभम् $T_4$ कृताञ्जलिपुटी भवत्, $M_{1-3}$ पुष्पाञ्जलिपुटा-भवत् ( for [b] ) —( L 17 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ अलंकृता स्ववपुषा ( for [a] ) —( L 18 ) $T_1$ अवस्थिताम्, $T_2$ $G_{1\ 4}$ इहाग॰ ( for इव स्थि॰ ) —( L 22 ) $T_3$ तोयस्य ( for सोमस्य ) —( L. 23 ) $M_{1-3}$ श्रियं त्वि( $M_3$ ॰यामि )व विना पद्मां ( for [a] ) $M_{1-3}$ भविष्या- ( for भुजिष्या- ) $M_3$ श्री- ( for स्त्री- ) —( L 24 ) $T_1$ $G_3$ दुर्निरीक्ष्यां ( for ॰क्ष्या ) —( L 25 ) $M_{1\ 4}$ [अ]पि ( for हि ). $T_4$ पृथुचार्वायतेक्षणा ( for [b] ) —$T_4$ om lines 27-31 —( L 27 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ मनोज्ञा ( for बृहती ) —( L 28 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ ताम्रतुङ्ग- ( for ताम्रोत्तुङ्ग- ) —( L 29 ) $M_2$ तीक्ष्णैः शुक्लैः शुभैर्दन्तैः ( for [a] ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ प्रभावद्भिर् ( for ॰सद्भिर् ) —( L 32 ) $M_3$ -दर्शिनीम् ( for -दर्शनाम् ) —( L 33 ) $T_4$ समादधत् ( for अथादधात् ) —Lines 34-62 = $D_6$ 1003* —( L 35 ) $G_3$ इव, $M_{1\ 3}$ उप- ( for अव- ) —( L. 37 ) $G_3$ तस्य ( for अस्य ) —( L 38 ) $T_{1\ 2}$ $M_3$ तदा ( for सदा ) $M_1$ -दारुणौ, $M_{2\ 3}$ -दारणौ, $M_4$ राविणौ ( for -दारिणौ ) —( L 40 ) T $G_{1\ 3-5}$ $M_4$ महच्चापं ( for महाचाप ) —( L 41 ) $M_{1\ 2}$ तदा ( for सदा ) —( L 42 ) $T_1$ -धारिणी, $T_2$ -वारिणी; $T_4$ $M_{1-3}$ -दारुणा ( $T_4$ ॰णी ) —( L 44 ) $T_1$ अवध्यान् ( for असह्यान् ) —( L 46 ) $T_4$ $G_4$ $M_{2\ 4}$ असुराञ् ( for य सुरान् ) —( L 47 ) $M_4$ कृष्णो ( for विष्णुर् ) T $G_{1\ 3-5}$ $M_4$ गुरुः ( for विभु॰ ) —( L 50 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ मर्दयन्, $M_3$ अगमत् ( for अयमत् ) $T_{1\ 4}$ $G_{3\ 5}$ M तस्मिन् ( for तस्माद् ) $M_{1\ 3}$ -संयुतम् ( for -मालिनम् ) —( L 51 ) $T_1$ चैव ( for शैलं ) $M_{1-3}$ बाहुना ( for पाणिना ) —( L 53 ) $M_{1-3}$ हयं ( for गज ) $T_1$ वि- ( for प्र ) —( L 54 ) $M_3$ च शूरं ( for चाणूरं ) —( L 55 ) $T_{2\ 3}$ $G_{1\ 4}$ गोपालैः सह यादवैः ( for [b] ) —( L 58 ) $M_{1-3}$ कृती ( for हरि ) $T_3$ $G_{1\ 4}$ -सुप्रभः, $M_2$ ( *inf lin* as above ) -संभव ( for -सप्रभ ). —$T_4$ om line 60. —( L. 60 ) $T_{1-3}$ $G_{1,\ 3-5}$ $M_4$ पद्मम् ( for युगमम् ) —( L.

अमुष्य पादयोर्युग्ममुद्वहामि न संशयः ॥ [ 60 ]
शुश्रूषां प्रतियोक्ष्यामि पादयोः पद्मसंज्ञयोः ।
एवं विचिन्तयित्वा सा ववन्दे तं शर्चीं तदा ॥
रामेण सह निश्चित्य केशवस्तु महाबलः ।
तत्प्रस्थाथेऽकरोद्बुद्धिं वृष्णिभिः प्रणिधाय च ॥
कृत्वा तु देवकार्याणि निष्क्रामन्तीं सुरालयात् । [ 65 ]
उन्मथ्य सहसा कृष्णः स्वं निनाय रथोत्तमम् ॥
वृक्षमुत्पाट्य रामोऽपि जघानापततः परान् ।
समनह्यन्त दाशार्हास्तदाज्ञाय तु सर्वशः ॥
ते रथैर्विविधाकारैः समुच्छ्रितमहाध्वजैः ।
वाजिभिर्वारणैश्चैव परिवव्रुर्हलायुधम् ॥ [ 70 ]
आदाय रुक्मिणीं कृष्णो जगामाशु पुरं प्रति ।
रामे त्वासज्य तं भारं युयुधाने च वीर्यवान् ॥
अक्रूरे विपृथौ चैव गदे च कृतवर्मणि ।
वसुदेवे सुदेवे च सारणे च महाबले ॥
निकृत्तशत्रौ विक्रान्ते भङ्गकारे विदूरथे । [ 75 ]
उग्रसेनात्मजे कङ्के शतद्युम्ने च केशवः ॥
राजाधिदेवे मृदरे प्रसेने चित्रके तथा ।
अग्निदत्ते बृहद्दुर्गे श्वफल्के सत्यके पृथौ ॥
वृष्ण्यन्धकेषु चान्येषु मुख्येषु मधुसूदनः ।
गुरुमासज्य तं भारं ययौ द्वारवतीं प्रति ॥ [ 80 ]
ते चापि यादवाः सर्वे युद्धाय समुपस्थिताः ॥

Colophon.

## No. 22A

For 87 49-77, D6 S (except G2) subst. :

वैशंपायन उवाच ।

बलभद्रहताः शिष्टाः पुरुपास्तत्र रक्षिणः ।
न्यवेदयन्त तद्वृत्तं जरासंधाय मानद ॥
रुक्मिणे भीष्मकायापि पौण्ड्राय च महात्मने ।
दन्तवक्त्राय शूराय चैद्याय च सुमेधसे ॥
शिशुपालाय राज्ञे तु वरवेषविडम्बिने । [ 5 ]
अन्येभ्यश्चापि राजभ्यः प्रशशंसुर्यथातथम् ॥
श्रुत्यैवं तन्नृपबलं विवाहार्थं समागतम् ।
क्षुब्धं नरावरानीकं शिरसि प्रहृतं यथा ॥
चचाल राजकः सर्वस्तोत्रार्दित इव द्विपः ।
अहो वीर्यमहो धैर्यं कृष्णस्याक्लिष्टकर्मणः ॥ [ 10 ]
हता वयं निरानन्दा अवज्ञाताश्च सवशः ।
इत्यूचुस्ते नृपतयो मागधप्रमुखास्तदा ॥
अतिक्षुब्धो महाराजो जरासंधो महाबलः ।
उवाच राज्ञस्तान्सर्वान्मागधः क्रोधमूर्छितः ।
निष्पीड्य चरणौ राजा दन्तान्कटकटापयन् ॥ [ 15 ]
श्रूयतां मम वाक्यानि राजानः सर्व एव हि ।
एप गोपकदायादो यत्करोति ममाग्रतः ।
तस्याद्य फलभाक्सोऽस्तु यदि जीवामि भूमिपाः ॥

---

62 ) T1 3 यदा , T4 G1 3-5 M4 सदा ( for तदा ) — ( L 64 ) M1-3 वृष्णिभ्यः ( for °भिः ) — ( L 65 ) M1 3 -कार्यां तां ( for -कार्याणि ) T1 4 G3 5 M4 तां कृत्वा देवताकार्यं , T2 3 G1, 4 तां दृष्ट्वा देवकार्यार्थे ( for ° ) — ( L 66 ) M4 उद्यम्य ( for उन्मथ्य ) — ( L 68 ) T1-3 G1 4 6 सवश ( for सर्वशः ) T4 तदाज्ञसाश्च सर्वश· — ( L 69 ) T1 4 G3 5 M4 तै रथैर् , T2 3 G1 4 रथैश्च ( for ते रथैर् ). — ( L 71 ) T2 स्व- ( for [आ]शु ). M1-3 पुरीं ( for पुरं ). — ( L 72 ) T1 प्रसज्य ( for त्वा° ). — ( L 76 ) T1 2 G1 3 5 M4 कण्वे , T3 कंसे ( for कङ्के ) — ( L 77 ) T2 G4 त्रिवरे , T4 प्रवरे ( for मृदरे ) — T4 om line 76 — ( L 78 ) M1 अनिदत्ते , M2 अग्निदात्ते , M3 om ( for अग्निदत्ते ) — ( L 79 ) T2. 3 सैन्येषु ( for चा° ) T3 G1 4 मुख्येषु यदुनन्दन ( for ° ) — Line 81 = ( var. ) D6 1004* — ( L 81 ) M1 3 समव- ( for समुप- ).

COLOPHON. — *Mention of the Epic* T3. — *Adhy. name* T G1 3 4 M रुक्मिणीहरणम् — *Adhy no* · T1 2 G3 4 M 118 , T3 127 , T4 106 , G1 120 , G5 121.

### 22 A

( L 2 ) T1 G1 3-5 व्यक्तं ( for वृत्तं ) D6 T4 भारत ( for मानद ) — ( L 3 ) D6 पौण्ड्काय ( for भीष्म° ). D6 भीष्मकाय ( for पौण्ड्राय च ) — ( L 4 ) D6 सुधन्विने ( for सुमेधसे ) — ( L 7 ) D6 निवृत- ( for तन्नृप- ) T G1 3-5 M4 श्रुत्वैव नृपतिर्बालं ( for ° ). M3 पार्थिवं च ( for विवाहार्थं ) — ( L. 8 ) T2 G1 शिरसे ( for °सि ) D6 M1, 3

एषोऽहं सगणं हत्वा गोपालं नृपसंज्ञितम् ।
द्वारकां यादवपुरीं भङ्क्त्वानीय च रुक्मिणीम् ॥ [ 20 ]
दास्यामि नृपतिश्रेष्ठाः किं तिष्ठथ विलम्बथ ।
संनह्यन्तां रथश्रेष्ठा रथ आयातु मे त्वरात् ॥
इत्युक्त्वा स जरासंधः सिंहनादमथाकरोत् ।
चचाल च बलं सर्वं जरासंधप्रिये स्थितम् ॥
पौण्ड्रोऽप्यथ महाबाहुर्वासुदेवः प्रतापवान् । [ 25 ]
आहत्य तु सभास्तम्भं जरासंधमभाषत ॥
स्थातव्यं भवता राजन्स्थिते मयि नराधिप ।
भृत्योऽस्मि तव राजेन्द्र किमेतत्साहसं तव ॥
स्थिते भृत्ये कथं स्वामी कार्यं कुर्याद्विचक्षणः ।
अहमेकः स एवैकः कृष्णो गोपककिल्बिषः ॥ [ 30 ]
हत्वा तं गोपकं युद्धे बलभद्रस्य पश्यतः ।
अङ्गानि च महाराज चूर्णयित्वा गदाभृतम् ।
वृकेभ्यो हि प्रयच्छामि नात्र कार्या विचारणा ॥
अहमेव भविष्यामि वासुदेवो महीतले ।
हते तस्मिञ्जरासंध गोपके मम नामके ॥ [ 35 ]
इत्युक्त्वा धनुरादाय जगर्ज नृपसंसदि ॥
चैद्योऽप्यथ महाराज सर्वक्षत्रस्य पश्यतः ।
वरवेषप्रतिच्छन्नो लज्जया च समन्वितः ।
आदाय परिघं घोरमिदमाह नृपोत्तमान् ॥
अनेनैव तु राजानो यादवान्सबलान्युधि । [ 40 ]
हत्वा तु यमराजाय दास्यामि नृपपुंगवाः ।
तिष्ठध्वमिह राजानो ममैवायं पराभवः ॥
नैतद्युक्तं नृपश्रेष्ठाः परादारावमर्शनम् ।
जातानां क्षत्रियकुले नृपाणां नृपपुंगवाः ॥
तत्तु युक्तं यदुकुले क्षत्रिया न हि ते विभो । [ 45 ]
विशेषतोऽथ गोपाले बल्लवेषु विवर्धिते ॥
गवां वृत्तिं तु गोपाला वर्तयन्ति सदा तथा ।
कृष्णोऽपि गोकुले वृद्धो गोपैः सहचरः किल ॥
परदाराभियुक्तो हि केशवः सततं विभो ।
सर्वथा तं दुरात्मानं हनिष्ये सगणं रणे । [ 50 ]
तां चानयामि राजानस्तिष्ठध्वमिह भूमिपाः ॥
क नु ते बान्धवास्तेषां यानाश्रित्य तु यादवाः ।
अवज्ञां कृतवन्तो नो युष्माभिरिह चिन्त्यताम् ॥
इत्युक्त्वाथ स चैद्यस्तु युद्धाय समुपस्थितः ।
ते च सर्वे नृपतयः क्रुद्धा युद्धाय दंशिताः । [ 55 ]
स्वारोपितधनुष्मन्तः साङ्गुलित्राः सचामराः ॥
जरासंधोऽथ नृपती रथमारुह्य दंशितः ।
युद्धाय वै महाराज मनो दध्रे महीपतिः ॥

---

प्रहतं ( for प्रहृतं ). — ( L 11 ) $T_2$ $G_{1.4}$ हत- ( for अव ) — ( L 13 ) $T_4$ $G_5$ transp महाराजो and जरासंधो — ( L 15 ) $T_{1-3}$ $G_{1.3-5}$ $M_4$ निपीड्य चरणे राजन् ( for $^a$ ) — ( L 17 ) $D_6$ गोपस्य ( for °क- ) $M_3$ om from यत्करोति up to सिंहना ( in line 23 ) — ( L 18 ) $D_6$ फलकारो ( for °भास्वरो ) $M_4$ जीवति ( for जीवामि ). — ( L. 19 ) $D_6$ सगणो ( for °णं ) $D_6$ $M_{1.2}$ संज्ञकम्, $T_4$ -संज्ञिकम् ( for °तम् ) — ( L 20 ) $D_6$ नीयत ( for [आ]-नीय च ) — ( L 22 ) $D_6$ $M_4$ नृपश्रेष्ठा ( for रथ° ). — ( L 23 ) $T_{2.3}$ $G_1$ [अ]थ ( for स ) — ( L 24 ) $D_6$ T $G_{1.3-5}$ $M_4$ -प्रियोत्थितम् ( for -प्रिये स्थितम् ) — ( L 28 ) $T_{2.3}$ $G_1$ त्वया ( for the second तव ) — After line 29, $M_3$ ins

1** अहमेव भविष्यामि वासुदेवो महीतले ।

— ( L 30 ) $D_6$ ऽसौ गोप- ( for गोपक- ). — ( L 31 ) $T_4$ $G_5$ $M_4$ बलदेवस्य ( for °भद्रस्य ) — ( L 32 ) $D_6$ om ( hapl ) lines $32^b$–$37^a$ $T_{2.3}$ $G_1$ तदा मृतम्, $T_4$ $G_4$ $M_{1-3}$ गदाभृतः ( for °भृतम् ) — ( L 33 ) $G_3$ विचक्षणा ( for विचारणा ) — ( L 35 ) $T_4$ जरासंधे ( for °ध ) — $G_4$ om lines 38–40 — ( L 40 ) $M_3$ बलवान् ( for सबलान् ). — ( L 41 ) T $G_{1.3-5}$ $M_4$ धर्मराजाय ( for यम° ). $D_6$ T $G_{3-5}$ $M_4$ नर- ( for नृप- ) — ( L 43 ) $D_6$ $G_4$ $M_3$ परदाराभिमर्शनम्; $T_2$ $G_1$ °भिमर्शिनम्, $T_{3.4}$ $G_5$ °वमर्शिनः ( for $^b$ ) — $T_4$ reads lines 44–45 twice — ( L 44 ) $M_3$ यदु- ( for नृप- ) — $T_2$ om ( hapl ) lines 46–49. — ( L 47 ) $T_3$ $G_1$ भाव-; $M_3$ गोप- ( for गवां ) $T_3$ यथा ( for सदा ). $M_{1.3}$ सदा ( for तथा ) — ( L 48 ) $D_6$ -चरत्, $T_1$ $G_{1.3-5}$ $M_4$ -चरन् ( for -चरः ) — ( L 49 ) $G_1$ प्रभो ( for विभो ) — ( L 51 ) $T_2$ वासयामि, $G_1$ धार° ( for चान° ) $M_1$ राजेन्द्रास्, $M_3$ राजानं ( for °नस् ) $G_1$ दंसिताः ( for भूमिपा ) $T_{2.3}$ $G_4$ तिष्ठध्वमि( $T_3$ °म )ति दंसिताः ( for $^b$ ) — ( L 53 ) $T_{2.3}$ $G_{1.4}$ आभि- ( for इह ). — ( L 54 ) $T_{1-3}$ $G_{1.3-5}$ $M_4$ इत्युक्त्वा स तु वै चैद्यो ( for $^a$ ) $T_1$ $G_{3.5}$ $M_{1-3}$ समव- ( for समुप- ). — ( L 55 ) $T_4$

पौण्ड्रोऽप्यथ महाराज वासुदेवो महाबलः ।
रथमारुह्य सहसा युद्धायैव मनो दधे ॥ [ 60 ]
दन्तवक्त्रो जरासंधः शिशुपालश्च वीर्यवान् ।
संनद्धा निर्ययुः क्रुद्धा जिघांसन्तो जनार्दनम् ॥
अङ्गवङ्गकलिङ्गैशैः सार्धं पौण्ड्रेण वीर्यवान् ।
निर्ययौ चेदिराजश्च भ्रातृभिः सह बन्धुभिः ॥
क्व वासुदेवः क्व च गोपकस्तथा [ 65 ]
कुतो नु राजा यदुवंशजन्मनाम् ।
कुतो नु रामो मदमत्तगर्वितः
कुतो नु वीरो युधि सात्यकिः किल ॥
इति ब्रुवन्तो नृपसत्तमास्तदा
रणाय युक्ताः सबलाः समागधाः । [ 70 ]
शरैश्च खड्गैर्युधि पातयन्तो
महारथा निर्ययुरुग्रवीर्याः ॥

Colophon.

वैशंपायन उवाच ।

अथ सैन्ये महाराज मागधस्य महात्मनः ।
शङ्खदुंदुभयश्चैव सस्वनुर्युद्धशंसिनः ।
माधवोऽपि महाराज शङ्खं दध्मौ पृथक्तदा ॥ [ 75 ]
भेरीणां च मृदङ्गानां झर्झरीणां च सर्वशः ।
नादाः समभवंस्तत्र यदूनां सैन्यसंचये ॥
ततो युद्धं समभवत्सेनयोरुभयोस्तदा ।
जरासंधप्रमुखतो वृष्णयः प्रस्थितास्तदा ॥
तान्प्रत्यगृह्णात्संरब्धान्वृष्णिवीरान्महारथान् । [ 80 ]
जरासंधो महाराजः ससैन्यः सबलानुगः ॥
तं प्रत्यगृह्णन्संरब्धा वृष्णिवीरा महाबलाः ।
संकर्षणं पुरस्कृत्य वासवं त्वमरा इव ॥
आपतन्तं हि वेगेन जरासंधं महाबलम् ।
षड्भिर्विव्याध नाराचैर्युयुधानो महामृधे ॥ [ 85 ]
अक्रूरो दन्तवक्त्रं तु विव्याध नवभिः शरैः ।
तं प्रत्यविध्यत्कारूषो बाणैर्दशभिराशुगैः ॥
विपृथुः शिशुपालं तु शरैर्विव्याध सप्तभिः ।
अष्टभिः प्रत्यविध्यत्तं शिशुपालः प्रतापवान् ॥
गवेषणोऽपि चैद्यं तु षड्भिर्विव्याध मार्गणैः । [ 90 ]
अनिदन्तिस्तथाष्टाभिर्बृहद्दुर्गस्तु पञ्चभिः ॥
प्रतिविव्याध तांश्चैद्यः पञ्चभिः पञ्चभिः शरैः ।
जघान चाश्वांश्चतुरश्चतुर्भिर्विपृथोः शरैः ।
बृहद्दुर्गस्य भल्लेन शिरश्चिच्छेद चारिहा ।
विपृथोः सारथिं चैव प्राहिणोद्यमसादनम् ॥ [ 95 ]

---

G1 5 भूपतय: ( for नृ° ). — M3 om ( hapl ) 56–57. — ( L. 60 ) T2. 3 G4 तरसा ( for सहसा ). — From line 61, D6 follows the Crit Text ( 80 49–77 ), variants of which are given in proper stanzas and the star-passages wherever they occur are noted here. — ( L. 63 ) T3 -कलिङ्गैश्च ( for °ङ्गेशैः ). — Lines 65–79 = D6 1005* — ( L 66 ) T1 क्व वा नु- ; T2. 3 G1 3–5 M4 क्व चानु- ( for कुतो नु ) T2 -जन्मा ( for -जन्मनाम् ). — ( L. 67 ) T2. 3 G1. 3–5 M4 क्व चानु- ( for कुतो नु ) T2 3 G1 3–5 M4 मदनानु- ( for °मत्त- ). — ( L 68 ) T2 3 G1. 3–5 M4 क्व चानु- ( for कुतो नु ). — ( L 70 ) M1–3 मुक्ता. ( for युक्ताः ). M1–3 समागताः ( for °धाः ) T1–3 G1 3–5 M4 रणाय सर्वे सबलाः सबान्धवाः. — ( L. 71 ) T G1. 3–5 M4 वारयन्तो ( for पात° ).

Colophon — *Mention of the Epic* : T3. —*Sub-parvan*. T4 आश्चर्यपर्व. — *Adhy. name* T1 G3. 4 M4 रुक्मिणीहरणे जरासंधादियुद्धोद्योग. ; T2. 3 G1 जरासंधादियुद्धोद्योग, M1 2 रुक्मिणीहरणम्. — *Adhy no.* T1. 2 G3 4 M 119, T3 128, T4 107, G1 121, G5 122.

( L 74 ) G2 -दंसिता. ( for शंसिन. ). — ( 75 ) T G1. 3–5 M4 मागधोऽपि ; M2 माधवश्च ( for °वोऽपि ) T2 om. ( hapl ) lines 75b–81a T4 प्रतापवान्, G4 M1 पृथक्पृथक् ( for पृथक्तदा ) M2 3 शङ्खान्दध्मु. पृथक्पृथक् ( for b ) — M4 om ( hapl ) lines 76–79. — ( L 77 ) G1 4 M1–3 समभवत् ( for °वंस् ) T1, 3 G1. 3–5 यदूनामपि भारत ( for b ). — ( L 78 ) G4 तयोर् ( for ततो ) — ( L 80 ) T4 M3 संरब्धो ( for °ब्धान् ) T1 3 4 G1 3–5 M4 महाबलान् ( for °रथान् ) — ( L 81 ) M1 2 -पदानुगः ( for -बलानुगः ) — ( L 82 ) M4 तान् ( for तं ) T4 M3 संरब्धो ( for °ब्धा ) M1 3 महारथा. ( for °बलाः ). — ( L 83 ) T G1 3–5 M4 वासवं मरुतो यथा ( for b ) — ( L 86 ) T4 निशितै. ( for नवभिः ) — ( L 87 ) T2 3 प्रत्ययुध्यत् ( for °विध्यत् ) — ( 89 ) T2 3 G1. 3–5 M4 अष्टभि. प्रतिविध्यन्तं ( for a ) — ( L. 91 ) T G1. 3–5 M4 आग्निदत्तस् ( for अनि-

हताश्वं तु रथं त्यक्त्वा विपृथुः सुमहाबलः ।
आरुरोह रथं तूर्णं बृहद्दुर्गस्य वीर्यवान् ।
आरुह्य जवनानश्वान्नियन्तुमुपचक्रमे ॥
ते क्रुद्धाः शरवर्षेण सुनीथं समवाकिरन् ।
नृत्यन्तं रथमार्गेषु चापहस्तमभीतवत् ॥ [ 100 ]
शक्रदेवो दन्तवक्त्रं बिभेदोरसि कर्णिना ।
पटुशः पञ्चभिश्चापि विव्याध युधि मार्गणैः ॥
ताभ्यां स विद्धो दशभिर्बाणैर्मर्मातिगैः शितैः ।
ततो बली शक्रदेवं बिभेद दशभिः क्रुधा ॥
पञ्चभिश्चापि विव्याध सोऽविदूराद्विदूरथम् ॥ [ 105 ]
विदूरथोऽपि तं षड्भिर्विव्याधाजौ शितैः शरैः ॥
त्रिशता प्रत्यविध्यत्तं बली बाणैर्महारथम् ।
कृतवर्मा बिभेदाशु राजपुत्रं त्रिभिः शरैः ॥
न्यहनत्सारथिं चास्य ध्वजं चिच्छेद सूच्छ्रितम् ।
प्रतिविव्याध तं क्रुद्धः पौण्ड्रः षड्भिः शिलीमुखैः॥ [ 110 ]
धनुश्चास्य प्रचिच्छेद भल्लेन नतपर्वणा ।
निकृत्तशत्रुः कालिङ्गं बिभेदाङ्गं च मार्गणैः ॥
तोमरेणांसदेशे तं बिभेद च कलिङ्गजः ।
गजेनासाद्य कह्वस्तु गजमङ्गस्य वीर्यवान् ॥
तोमरेण जघानाशु बिभेदाङ्गं च वीर्यवान् । [ 115 ]
चित्रकश्च श्वफल्कश्च सात्यकिश्च महाबलः ।
कलिङ्गस्य रथानीकं नाराचैर्बिभिदुः शितैः ॥
विसृष्टेन हलेनाजौ वङ्गराजस्य वारणम् ।
जघान रामः संक्रुद्धो वङ्गराजं च संयुगे ॥
तं हत्वा गजमारुह्य धनुरादाय वीर्यवान् । [ 120 ]
संकर्षणो जघानोग्रैर्नाराचैः काशिकान्बहून् ॥
षड्भिर्निहत्य कारूषान्महेष्वासांश्च वीर्यवान् ।
शतं जघान संरब्धो मागधानां महारथः ॥
निहत्य तान्महाराज जरासंधं ततोऽभ्ययात् ॥
तमापतन्तं विव्याध नाराचैर्मागधस्त्रिभिः । [ 125 ]
तं बिभेदाष्टभिः क्रुद्धो नाराचैर्मुसलायुधः ॥
चिच्छेद चास्य भल्लेन ध्वजं रुक्मविभूषितम् ।
चापं च महादायत्तं शरैरेव हलायुधः ।
रथं चास्य महाराज तिलशश्च समाहनत् ॥
स च्छिन्नधन्वा विरथो गदामादाय मागधः । [ 130 ]
विव्याध बलभद्रं तु चिच्छेद च पुनः पुनः ।
रथं च चूर्णयामास गदयास्य स मागधः ॥
पात्यमानो रथात्तस्मादवप्लुत्य हलायुधः ।
सात्यकेस्तु रथं प्रायात्सर्वक्षत्रस्य पश्यतः ।
सात्यकिस्तु महाराज शरैर्विव्याध मागधम् ॥ [ 135 ]

---

दन्तिस् ) — ( L 93 ) $T_1$ जघानाश्वांश्च विव्याध ( for ° ) $T_1$ चतुरै· ( for विपृथोः ) — ( L 96 ) T $G_{1\ 3-5}$ $M_4$ हताश्व. स ( for °श्वं तु ) — ( L 97 ) T $G_{1,3-5}$ $M_4$ शीघ्रं ( for तूर्णं ). — $T_{2\ 3}$ $G_1$ om ( hapl ) lines 98–114 — ( L 98 ) $G_4$ निहन्तुम् ( for निय° ) — ( L 100 ) $T_1$ वन- ( for रथ- ) — ( L 101 ) $T_{1\ 4}$ $G_{3-5}$ $M_{3,4}$ चक्रदेवो ( for शक्र° ) $M_1$ चक्रदेवं दन्तवक्रो ( for ° ). — ( L 102 ) $T_4$ पटुशं ( for °शः ) — ( L 103 ) $T_4$ $G_4$ शरै ( for शितै ) — ( L 104 ) $T_4$ बल· ( for बली: ) $T_1$ $G_{3-5}$ $M_{1,3\ 4}$ चक्रदेवं ( for शक्र° ) $G_4$ शरै· ( for क्रुधा ) — ( L 105 ) $T_4$ अविदूराद् ( for सोऽवि° ) $T_4$ विदूरथः ( for °थम् ) — ( L 106 ) $G_{3-5}$ $M_4$ क्षिप्रं ( for षड्भिर् ) — ( L 109 ) $M_1$ [अ]न्यं ( for [अ]स्य ) $T_{1\ 4}$ $G_{3-5}$ $M_4$ चोर्जितम् ( for सूच्छ्रि° ) — ( L 110 ) $T_1$ $G_{3-5}$ पौण्ड्र् षड्भिः ; $M_4$ षड्भिः पौण्ड्रं ( by transp ) — ( L 111 ) $T_{1,4}$ $G_{3-5}$ $M_4$ धनुरप्यस्य भल्लेन ( $T_1$ चिच्छेद ) ( for ° ). $T_4$ $G_{3-5}$ $M_4$ चिच्छेद ( for भल्लेन ) — ( L. 113 ) $T_{1\ 4}$ $G_{3-5}$ $M_4$ निर्बिभेद कलिङ्गजम् ( for ° ) — ( L 114 ) $T_1$ $G_{3-5}$ $M_4$ कण्वस् ( for कह्वस् ). $G_3$ भुजम् ( for गजम् ) — ( L. 115 ) $M_2$ [आ]जघान ( for ज° ). $T_{1,4}$ $G_{1\ 3-5}$ $M_{2\ 4}$ च तं शरैः ; $T_2$ चतु शरै , $T_3$ च तंकरै ( for च वीर्यवान् ) — ( L. 116 ) $T_{1\ 3\ 4}$ $G_{1,3-5}$ $M_{3,4}$ सत्यकश् ( for सात्यकिश् ). $M_{1-3}$ महारथ ( for °बल· ) — ( L 117 ) $T_{2\ 3}$ शरैः ( for शितैः ). — ( L 120 ) T $G_{1\ 3-5}$ $M_4$ रथम् ( for गजम् ). — ( L. 121 ) $M_3$ संकर्षणं ( for °णो ) $T_2$ [अ]स्त्रैर् ( for [उ]ग्रैर् ). T $G_{1\ 3-5}$ $M_4$ कौशिकान् ( for का° ) — ( L 122 ) $G_4$ षष्टिं जघान कारूशान् ( for ° ) — ( L 123 ) $G_1$ स तं ( for शतं ) $M_{3\ 4}$ संक्रुद्धो ( for संरब्धो ) — ( L 125 ) T $G_{1,3\ 5}$ उत्पतन्तं ( for आप° ) T $G_{1\ 3\ 5}$ $M_{3,4}$ मागधं for °धस् ) — ( L 126 ) $M_3$ मुसलायुधम् — ( L. 127 ). T $G_{1\ 3-5}$ $M_4$ रत्न- ( for रुक्म- ) — Lines 128–137 = $D_6$ 1007* $G_3$ om line 128 — ( L. 128 ) $M_3$ चापं च

आयुष्याणि प्रशस्तानि कार्यसिद्धिकराणि च ।
पुण्यं वै विगतक्लेशं श्रीमद्वै मङ्गलान्वितम् ।
रामेणोदाहृतं पूर्वमायुःश्रीजयकाङ्क्षिणा ॥ [ 195 ]
यश्चेदं श्रावयेद्विद्वान्यश्चैवं शृणुयान्नरः ।
मङ्गलाष्टशतं स्नातो जपेत्पर्वणि पर्वणि ॥
वधबन्धपरिक्लेशं व्याधिशोकपराभवम् ।
न च प्राप्नोति वैकल्यं परत्रेह च नन्दति ॥
धन्यं यशस्यमायुष्यं पवित्रं वेदसंमितम् ॥ [ 200 ]
श्रीमत्स्वर्ग्यं सदा पुण्यमपत्यजननं शिवम् ॥
शुभं क्षेमकरं नृणां मेधाजननमुत्तमम् ।
सर्वरोगप्रशमनं सुकीर्तिकुलवर्धनम् ॥
श्रद्दधानो दयाभूतः प्रपठेदात्मवान्नरः ।
सर्वपापविशुद्धात्मा गतिं च लभते पराम् ॥ [ 205 ]

Colophon

No. 25

After $91.6^{*5}$, $D_6$ S ( except $G_2$ ) ins. ·

चतुर्मुखाल्लब्धवरो बबाधे सुरसत्तमान् ॥
स जातु विस्मयं कुर्वन्दिशां दानवसत्तमः ।
अनेकशतसाहस्रैर्दानवैश्च समन्वितः ।
देवलोकं जगामाशु कुर्वन्सिंहध्वनिं मुहुः ॥
इन्द्रस्य सदनं गत्वा कवाटं घट्टयन्दनुः । [ 5 ]
युध्यतामिति होवाच जयो वा प्रतिदीयताम् ॥
तच्छ्रुत्वा देवराजोऽपि देवैः सर्वैः समन्वितः ।
ऐरावतं समारुह्य देवसैन्यैश्च पालितः ॥
युद्धाय दानवेन्द्रेण नरकेण महात्मना ।
निर्जगाम पुरात्तस्माद्दानवानां समीपतः । [ 10 ]
ऐरावतं समास्थाय तस्थौ तत्र शचीपतिः ॥
ततो युद्धं समभवद्दानवानां दुरात्मनाम् ।

---

$T_{2\,4}$ $G_{1\,4}$ नदी( $T_4$ नान्दी )मुखा मयूरा( $G_4$ °र )श्च ( for $^a$ ). $D_{1\,5}$ बद्धा, $G_2$ बद्ध- ( for वज्र ) $D_3$ $M_{1-3}$ -ध्वजः ( for ध्वजा ) — ( L 193 ) $V_2$ $D_{1\,3,5}$ $G_1$ आयुधानि ( for °ष्याणि ) $M_{1-3}$ कार्याण्यृद्धिकराणि च ( for $^b$ ) — ( L 194 ) $K_2$ लिङ्गिनो विगतक्लेशा., $T_4$ ( also as above ) पुण्यं चैव गतक्लेश , $M_{1-3}$ पुण्यं स्वस्तिगते क्लेशे ( for $^a$ ) $K_2$ श्रीमन्तो, $K_{3\,4}$ $\tilde{N}_2$ $Dn_1$ Ds $D_{1-5}$ °न्तं ( for °द्वै ) $D_3$ मङ्गलार्चितम् ( for °न्वितम् ) $M_{1-3}$ श्रीमन्तो मङ्गलानि च ( for $^b$ ) — ( L. 195 ) $T_4$ $M_{1-3}$ श्रीधर्म ( for -श्रीजय- ). — ( L 196 ) $K_1$ $D_4$ [ए]नं; $G_3$ [ए]वं ( for [इ]दं ). $G_3$ तथैव ( for यश्चैवं ) $G_2$ भावयेन् ( for शृणुयान् ) — ( L 197 ) $K_2$ पुण्यं , Ds स्नायाज्, $T_4$ स्तोत्रं, $M_{1-3}$ नाम ( for स्नातो ) $T_1$ सर्वपापविशुद्धात्मा, $G_2$ मङ्गलार्थं जपेत्स्नातो ( for $^a$ ) $\tilde{N}_2$ Bom. Poona eds. G(ed ) जपन् ( for जपेत् ). — ( L 198 ) $M_4$ भय- ( for वध- ) $M_3$ -रिपु- (for -परि-) $K_2$ $G_5$ -क्लेश- ( for क्लेशं ) $T_2$ $G_{1\,4}$ $M_4$ -भयापहम् ( for -पराभवम् ) — ( L 199 ) $V_1$ $D_{2\,3\,6}$ $T_{2,4}$ $G_{1\,4,5}$ M वैक्लव्यं ( for वैकल्यं ) $K_2$ $T_4$ $M_{1-3}$ प्रेत्य च ( for परत्र ). $K_{3,4}$ $D_1$ विन्दति, $D_5$ शर्मदम् ( for नन्दति ) $M_4$ विजयं चानुविन्दति ( for $^b$ ) — ( L 200 ) $K_1$ धर्म्यं ( for धन्यं ) $T_4$ $M_{1-3}$ आरोग्यं ( for आयुष्यं ) — ( L 201 ) $K_2$ $D_2$ श्रीमत्स्वस्त्ययनं पुण्यम् ( for $^a$ ) $K_2$ परम्, $T_2$ $G_{1\,4}$ $M_4$ विदुः ( for शिवम् ) $T_4$ $M_{1-3}$ सपत्नशमनं शिवम् ( for $^b$ ) — ( L. 202 ) $K_2$ शिवं ; $Dn_1$ $G_{4,5}$ $M_3$ शुभ- ( for शुभं ) $K_4$ क्षेमंकरं — ( L 203 ) $K_2$ सर्वरोगोपशमनं ( for $^a$ ). $K_1$ गुण- ( for कुल- ) — ( L 204 ) $K_2$ दयावांश्च , $K_4$ °पूतः, $D_5$ ( *sup lin* ) Bom Poona eds G(ed ) दयोपेतो ; $M_4$ शुचिर्भूतो ( for दयाभूतो ) $M_{1-3}$ य इदं ( for आत्मवान् ) $K_2$ लभते नापद नर ( for $^b$ ) — ( L 205 ) $K_2$ धूतपापो ( for सर्वपाप- ) $T_4$ $M_{1-3}$ धूतपापो निर्मलात्मा ( for $^a$ ) $K_1$ शिवाम्, $K_{2-4}$ $\tilde{N}_2$ $V_{1\,2}$ B Dn Ds $D_{1\,4-6}$ $M_{1-3}$ शुभाम् ( for पराम् ) $G_2$ Bom Poona eds G(ed ) लभते च शुभां गतिम् ( for $^b$ )

Colophon — *Mention of the Epic* $Ds_2$ — *Mention of Khila* $K_{1\,2}$ $V_{1\,2}$ B $Dn_2$ Ds $D_{1\,5}$ — *Sub-parvan* Ds पारिजात — *Adhy name* K $\tilde{N}_2$ $V_{1\,2}$ $B_{1\,3}$ D बलदेवाह्निकम्, $B_2$ बलदेवमाहात्म्ये तदाह्निकम्, $T_{1\,2}$ $G_{1\,3\,4}$ बलदेवप्रोक्तमङ्गलाष्टकशतम्, $T_4$ M मङ्गलाष्टशतकम् . — *Adhy no* $K_3$ 63, $V_1$ $B_2$ 120, $V_2$ 167, Dn $Ds_2$ 165, $D_3$ $G_2$ 173, $D_4$ 163, $T_1$ $G_3$ 177, $T_2$ $G_1$ 179, $T_4$ 146, $G_4$ 170 $G_5$ $M_4$ 178, $M_{1-3}$ 142.

**25**

$M_{1\,2}$ om lines 1–3 $D_6$ om line 1 — ( L 1 ) $M_3$ बबाध ( for °धे ) — ( L 2 ) $D_6$ $M_3$ विजयं (for विस्मयं ). — ( L 4 ) $T_{2\,3}$ $G_{1\,4}$ महान् ; $M_{1\,2}$ नर., $M_3$ दनुः ( for मुहुः ) — ( L 5 ) $T_{1-3}$ $G_{1\,3\,5}$ $M_4$ भवनं ( for सदनं ). $D_6$ कपाट ( for कवाटं ) — ( L 6 ) $D_6$ [अ]पि प्र-, $G_4$ विप्र- ( for प्रति- ) — ( L. 7 ) $T_4$ ततो ज्ञात्वा देवराजो ( for $^a$ ).

देवैः शक्रसहायैश्च निघ्नतामितरेतरम् ॥
देवाः शरैः समाजघ्नुर्दानवान्नगसंनिभान् ।
दानवाश्च महाराज देवानिन्द्रपुरोगमान् । [ 15 ]
निजघ्नुः समरे तत्र खड्गैः प्रासैः परश्वधैः ॥
सिंहनादं महच्चक्रुर्दैत्या युधि महाबलाः ।
देवान्बबाधिरे ते तु प्रत्यक्षं च शचीपतेः ॥
आर्ता युद्धपरिश्रान्ता देवागच्छन्दिशो दश ।
शक्रेण वारिताश्चापि स्थातुं शक्ता न देवताः ॥ [ 20 ]
तांस्तु विद्रावितान्दृष्ट्वा वृत्रहा बलसूदनः ।
स्थातव्यमिति होवाच निर्जरान्स महाप्रभुः ॥
धनुरादाय विधिवज्ज्याघोषं समवासृजत् ।
ततः शरसहस्राणि मुमोच युधि वासवः ॥
लोकपालास्तथा राजन्समाजग्मुः समन्ततः । [ 25 ]
यक्षैश्च गुह्यकैश्चैव सह वैश्रवणस्तथा ॥
वरुणो यादसां राजा वारुणैश्च समन्वितः ।
नागैश्च शतसाहस्रैरनुयातो दिगीश्वरः ॥
यमोऽपि राजा राजेन्द्र कालमृत्युसमन्वितः ।
ययौ योद्धुं महाराज नरकं दानवोत्तमम् ॥ [ 30 ]
तैः सार्धं देवराजोऽपि युद्धं चक्रे महामतिः ।
नरकोऽपि महाराज युद्धं चक्रे सुदारुणम् ॥
हयग्रीवो निसुम्भश्च मुरश्च रिपुमर्दनः ।
चक्रुर्युद्धं महाघोरं नरकेण सह प्रभो ॥
लोकपाला महाराज संसक्ता योद्धुमीहते ॥ [ 35 ]
हयग्रीवो महाराज वरुणेन समागतः ।
चक्रे युद्धं महाघोरं यथा वृत्रवधे पुरा ॥
निसुम्भो दण्डहस्तेन यमेन सह संगतः ।
मुरोऽपि राजन्विक्रान्तो राजराजेन संगतः ॥
नरकोऽपि महाराज देवराजेन संगतः । [ 40 ]
ते च देवा महाराज दानवैः सह संगताः ॥
ते देवा दानवाश्चैव परस्परजयैषिणः ।
युद्धं चक्रुर्महाघोरं प्रासशक्त्यृष्टितोमरैः ॥
हयग्रीवं महाराज वरुणो यादसां पतिः ।
जघान निशितैर्बाणैर्मर्मभेदिभिराशुगैः ॥ [ 45 ]
वरुणं लोकपालेशं यादवो नगसंनिभः ।
परःशतैः शराणां तु विव्याध युधि दानवः ॥
शराणां च सहस्राणि तत्र देवपती रणे ।
मुमोच युधि पाशेशस्तमस्यन्तं शिताञ्शरान् ॥
पुनः क्रुद्धो महाराज दानवो नगसंनिभः । [ 50 ]

— (L. 8) $T_{2, 3}$ $G_{1, 4}$ देवसैन्येन पालितम् ($T_{3}$ वारितः) (for $^{b}$) — (L. 9) $M_{1-3}$ दुरात्मना (for महा°) — (L. 10) $M_{1, 3}$ देवतानां (for दानवानां) — (L. 11) $G_{5}$ $M_{4}$ तत्र नस्थौ (by transp.) — (L. 12) $D_{6}$ T $G_{1, 3-5}$ $M_{4}$ महात्मनाम् (for दुरा°). — (L. 14) $T_{3, 4}$ $G_{5}$ समाजग्मुर् (for °घ्नुर्) $T_{2}$ $G_{1}$ देवाः शनैः समाजग्मुर् (for $^{a}$) — (L. 16) $D_{6}$ $T_{4}$ $M_{1-3}$ खड्गैः पाशैः, $T_{2, 3}$ $G_{1, 4}$ प्रासैः खड्गैः (by transp.) — (L. 17) $T_{2}$ $G_{1, 4}$ ततश् (for महच्) — (L. 18) $M_{4}$ शचीपतौ (for °ते) — (L. 19) $M_{1-3}$ आर्ता युद्धत्वराक्रान्ता (for $^{a}$) $T_{1-3}$ $G_{1, 3-5}$ $M_{4}$ जग्मुर् (for [अ]गच्छन्) — (L. 20) $G_{1}$ पातिताश् (for वारि°) — (L. 21) $D_{6}$ $M_{1-3}$ विद्रवतो (for विद्रावितान्) — (L. 22) $D_{6}$ देवान्स च; $T_{4}$ दानवान्वै (for निर्जरान्स) $M_{1-3}$ देवता दैवतप्रभु (for $^{b}$). — (L. 23) $D_{6}$ T $G_{1, 3-5}$ $M_{4}$ [अ]वाकिरत् (for °सृजत्) — (L. 25) $D_{6}$ समाजघ्नुः (for °ग्मु). — (L. 26) $T_{2}$ वैश्रवणैस् (for °णस्) — (L. 27) $T_{2, 3}$ $G_{1, 4}$ समन्ततः (for °न्वितः) — $T_{1}$ om. lines 28–29. $D_{6}$ om. line 28 — (L. 28) $M_{2}$ पाशैश् (for नागैश्) — (L. 31) $D_{6}$ दानवेन्द्रो (for देवराजो) — (L. 33) $D_{6}$ $M_{1-3}$ निसुन्दश्, $T_{2}$ निकुम्भश् (for निसु°). — (L. 34) $T_{4}$ महाराज, $G_{1}$ महद्घोरं (for महाघोरं) $T_{2}$ $G_{4}$ समं (for सह) $M_{2}$ प्रासशक्त्यष्टितोमरैः (for $^{b}$) — (L. 35) T $G_{1, 3-5}$ $M_{4}$ लोकपालैर् (for °पाला). T $G_{1, 3-5}$ $M_{4}$ प्रसक्ता योद्धुमाहवे (for $^{b}$) — (L. 36) $D_{6}$ $G_{3}$ समन्वितः (for समागतः) — $M_{3}$ om. (hapl.) lines 37–40 — (L. 37) $T_{3}$ $G_{1}$ युधि (for यथा). — $D_{6}$ $G_{4}$ om. line 39 — (L. 39) $M_{1, 2}$ राजा (for राजन्) — $M_{1, 2, 4}$ om. line 40. $D_{6}$ om. line 41 — (L. 42) $D_{6}$ T $G_{1, 3-5}$ $M_{4}$ देवाश्च (for ते देवा) $T_{1-3}$ $G_{1, 3-5}$ $M_{4}$ -वधैषिणः (for -जयै°) — (L. 43) $D_{6}$ महाघोराः, $T_{4}$ °वेगाः (for °घोरं) $T_{1-3}$ $G_{1, 3-5}$ $M_{4}$ युद्धं च सुमहच्चक्रु (for $^{a}$) $T_{1-3}$ $G_{1, 3-5}$ $M_{4}$ शर- (for प्रास-) $D_{6}$ -शक्त्यर्ष्टि (for -शक्त्यृष्टि-). — $G_{4}$ om. (hapl.) lines 47–50 — (L. 47) $D_{6}$ ततः; $M_{1-3}$ परं (for परः-) $T_{2, 3}$ -शतं (for -शतैः). — (L. 48) $D_{6}$ -पतिं (for -पती) — (L. 49) $D_{6}$ पाशेशं, $T_{1-3}$ $G_{1, 3-5}$ $M_{4}$ पाशी च (for पाशेशस्). $T_{1-3}$ $G_{1, 3-5}$ $M_{4}$ हय-

वरुणस्य महच्चापं मुष्टिदेशे बभञ्ज ह ।
क्षुरप्रेण सुतीक्ष्णेन देवराजस्य पश्यतः ॥
विसृज्य सशरं चापं पाशमादाय पाशभृत् ।
समाजघ्ने स पाशेन हयग्रीवं महाबलम् ॥
तमापतन्तं वेगेन पाशं जग्राह दानवः । [ 55 ]
तेनैव तं समाजघ्ने वरुणं यादसां पतिम् ।
स तु पाशोऽत्र निर्वीर्यः स्वामिनं न बबाध ह ॥
ततः क्रुद्धो हयग्रीवो वरुणं यादसां पतिम् ।
जघान गदया राजन्मूर्ध्नि देशे महाबलम् ॥
स तेनाभिहतो मूर्ध्नि वमञ्शोणितमुल्बणम् । [ 60 ]
विसंज्ञोऽथ जगामाशु तस्मात्संग्रामदुस्तरात् ।
वारुणैस्तैः समायुक्तोः निर्जितो दानवोत्तमैः ॥
निसुम्भः पञ्चविंशत्या यमं जघ्ने महाबलः ।
यमोऽपि धनुरादाय शरेण नतपर्वणा ।
जघान दानवं संख्ये पश्यतस्तु शचीपतेः ॥ [ 65 ]
निसुम्भो रोषताम्राक्षो धनुश्चिच्छेद तस्य तत् ॥
उत्सृज्य धनुरत्नं च दण्डमुद्यम्य दानवम् ।
धावति स्म यमो राजन्हन्तुकामो महाबलः ॥
उत्सृज्य तु महाराज दानवो धनुरुत्तमम् ।
आदाय निशितं खड्गं प्रायात्प्रेतपतिं तदा ॥ [ 70 ]
तयोस्ताभ्यां महायुद्धमायुधाभ्यां तदाभवत् ।
पुरा देवासुरे युद्धे बलिवासवयोरिव ॥
दण्डेनाभ्यहनन्मूर्ध्नि निसुम्भस्य दुरात्मनः ।
आहतो दण्डधारेण यमेन सुमहात्मना ॥
किंचिदायस्तनयनो निसुम्भो दानवोत्तमः । [ 75 ]
खड्गेन प्राहरत्तं तु यमं वैवस्वतं युधि ॥
संछिन्नवर्मा देवेशो यमो याम्यैः समन्वितः ।
विसंज्ञेन्द्रियभूतात्मा निःश्वसन्प्राणसंशये ।
जगामाशु पुरं युद्धाद्भीतो दानवसत्तमात् ॥
राजराजस्तथा सार्धं गुह्यकैर्देवसंनिभैः । [ 80 ]
यक्षैर्विद्याधरैः सार्धं माणिभद्रपुरोगमैः ॥
मुरं तु मौरवैः सार्धं समाजघ्ने परःशतैः ।
शराणां शितधाराणां राजराजो महामतिः ॥
मुरः सप्रतिसाहस्रैर्मौरवैर्युद्धकोविदैः ।
जघान राजराजं तु शरैः सुनिशितैरपि । [ 85 ]
विध्वा तु राजराजं तं गुह्यकांश्च समाहनत् ॥
खड्गैः पाशैः समाजघ्ने यक्षान्देवरिपुस्तदा ।
यक्षाश्च गुह्यकाश्चैव भीता दुद्रुवुराहवात् ।
परित्यज्यायुधं मुख्यं माणिभद्रपुरोगमाः ॥
यक्षसैन्यं पराजित्य मुरो वैश्रवणं तदा । [ 90 ]

---

ग्रीवं रुषान्वित. ( for [b] ) — ( L 51 ) $T_{1-3}$ $G_{1, 5}$ $M_4$ ततश् ( for महच् ) — $G_3$ om lines 55–58 — ( L 55 ) $G_5$ जग्राह ( for वेगेन ) $G_5$ $M_4$ वेगेन ( for जग्राह ) — ( L 58 ) $D_6$ $T_{1, 4}$ $G_5$ $M_4$ वरुणं बाहु( $D_6$ बल )शालिनम् ( for [b] ) — ( L 59 ) T $G_{1, 3, 5}$ $M_4$ महाबल· ( for °बलम् ) — $G_4$ om. ( hapl ) lines 60–63 — ( L. 60 ) $D_6$ T $G_{1, 3, 5}$ $M_4$ नि- ( for [अ]भि- ) $T_{1-3}$ $G_{1, 3, 5}$ $M_4$ मुखाच्छोणितमुद्वमन् ( for [b] ) — ( L 61 ) $T_{2, 3}$ $G_1$ तस्माद्भीमाद्भयातुर ( for [b] ) — ( L 62 ) $T_4$ समायुक्तैर् ( for °युक्तः ). $T_{1-3}$ $G_{1, 3-5}$ $M_4$ वरुणस्तै. समायुक्तैर् ( for [ab] ) $M_{1-3}$ पीडितैर् ( for निर्जितो ) $T_{1-3}$ $G_{4, 3, 5}$ $M_4$ निर्जितो दानवेश्वरै. ( for [b] ) — $T_2$ $M_1$ om ( hapl ) lines 64–68 — ( L 64 ) $D_6$ [आ]नत ( for नत- ) — ( L 67 ) $D_6$ उत्सृज्य धनुरत्यर्थं ( for [ab] ) — ( L. 68 ) $T_4$ $G_{1, 4, 5}$ $M_4$ महाराज, $M_3$ यमो राजा ( for यमो राजन् ) — ( L 69 ) $T_{1-3}$ $G_{1, 3-5}$ $M_4$ स उत्सृज्य ( for उत्सृज्य तु ) — ( L 70 ) $D_6$ $M_{1-3}$ आयात् ; $T_{1, 4}$ $G_{3, 5}$ $M_4$ आगात् ( for प्रायात् ). — ( L 71 ) $D_6$ $M_{1-3}$ तदा युद्धम्, $T_{2, 3}$ $G_{1, 3, 5}$ महद्युद्धम् ( for महा युद्धम् ) — ( L 72 ) $T_{2-4}$ $G_{1, 3-5}$ $M_4$ बल- ( for बलि- ). — $T_2$ $G_{1, 4}$ om line 73 — ( L 73 ) $G_3$ महात्मन ( for दुरा° ). — ( L 74 ) $T_{1-3}$ $G_{1, 3-5}$ $M_4$ स हतो ( for आहतो ). — ( L. 75 ) $T_{2-4}$ $G_{1, 4, 5}$ $M_4$ आरक्त- ( for आयस्त- ). — ( L 77 ) $T_{2, 3}$ $G_{1, 3-5}$ $M_4$ -धन्वा ( for -वर्मा ). $T_1$ संछिन्नधन्वा देवोऽसौ ( for [a] ) — ( L. 79 ) $T_4$ [आ]स्म- ( for [आ]शु ) $D_6$ T $G_{1, 3-5}$ $M_4$ पुरी ( for पुरं ). — ( L. 80 ) $D_6$ $M_{1-3}$ युद्धं ( for सार्धं ) — ( L 82 ) $D_6$ $T_{3, 4}$ परश्वधै ; $T_2$ $M_{1-3}$ परं ( $T_2$ °रै ) शतै ( for पर शतैः ) — ( L 83 ) $T_4$ अस्त्राणां ( for शराणां ) $T_{2-4}$ $G_{1, 3-5}$ $M_4$ महाद्युति ( for °मति ) — ( L 84 ) $M_4$ मुरं तु सप्तसाहस्रैर् ( for [a] ) — ( L. 86 ) $G_3$ स विध्वा ( for विध्वा तु ) — ( L 87 ) $T_3$ -रिपुं तथा ( for -रिपुस्तदा ) $T_1$ $G_{1, 5}$ $M_4$ यक्षा देवरिपु तदा ( for [b] ). — (L 89) $T_{2, 3}$ $G_{1, 3, 5}$ $M_4$ [आ]युधान्मुख्यान्, $G_4$ °धान्सर्वान् ( for °धं मुख्यं ) $T_1$ आयुधानि परित्यज्य ( for [ab] ) — ( L 90 ) $G_5$ परित्यज्य ( for पराजित्य ) — ( L 91 ) $T_{1-3}$ $G_1$.

शरैराशीविषाकारैर्विव्याध युधि दानवः ॥
स्तनयोर्वक्षसि तथा चक्षुषोर्नेत्रसंपुटे ।
यथेष्टं धर्षयामास दानवो युद्धदुर्मदः ।
स चाप्यार्तो विषण्णश्च निर्जगाम रणाजिरात् ॥
ते च यक्षास्तदा राजन्गुह्यकाश्च समन्ततः । [ 95 ]
अलकां च समाजग्मुर्भीता युद्धपराङ्मुखाः ॥
यमोऽथ वरुणश्चैव कुबेरश्च महामतिः ।
निर्जिता दानवेन्द्रेण स्वं स्वं नगरमाययुः ॥
देवाश्च निर्जिताः सर्वे दानवैर्नगसंनिभैः ।
दिशो दश द्रुताः सर्वे भीता वृत्तविलोचनाः ॥ [ 100 ]

Colophon.

वैशंपायन उवाच ।

निर्जितं स्वबलं दृष्ट्वा देवराजः शचीपतिः ।
आरुह्यैरावतं नागं प्रांशुं शशिनिभं तदा ॥
माहेन्द्रमथ चापं च सज्यं कृत्वा सुदारुणम् ।
चक्रे युद्धं महाघोरं नरकेण दुरात्मना ॥
नरकोऽपि महाराज शक्रं दृष्ट्वा शचीपतिम् । [ 105 ]
ननाद विविधं नादं सिंहो गजपतिं यथा ॥
आगच्छेति तदोवाच ज्याघोषं च चकार सः ।
तयोः समभवद्युद्धं यथा वृत्रवधे पुरा ॥
आदाय निशितं बाणं नरको दुष्टचेतनः ।
आकर्णपूर्णं संधाय जघ्ने वृत्ररिपुं पुनः ॥ [ 110 ]
आहतस्तेन देवेन्द्रो विह्वलः समपद्यत ।
सुस्राव रुधिरं शक्रो गतसंज्ञस्तदाभवत् ॥
समाश्वस्तस्तदा शक्रः शरैर्विव्याध चाष्टभिः ।
रथं विव्याध सप्तत्या सारथिं नवभिः शरैः ॥
क्षुरप्रेण तदा राजन्ध्वजं चिच्छेद चोत्तमम् । [ 115 ]
सारथिं प्राहिणोत्तस्य यमाय निशितैः शरैः ॥
जघानाश्वांश्चतुर्भिस्तु बाणैः सुनिशितैरपि ।
धनुश्चिच्छेद भल्लेन नरकस्य दुरात्मनः ॥
स च्छिन्नधन्वा विरथो विबाणो हतसारथिः ।
आदाय निशितं खड्गमुत्पपात शचीपतिम् । [ 120 ]
आरुह्यैरावतं कुम्भे देवराजमपोथयत् ॥
व्याविध्य तु पुनर्दैत्यो देवराजस्य वक्षसि ।
खड्गेन पोथयामास देवगन्धर्वसंसदि ॥
विसंज्ञो विह्वलश्चैव देवराजः शतक्रतुः ।
उत्सृज्यैरावतं नागं गच्छति स्म तदार्तवत् ॥ [ 125 ]
नागं तं पोथयामास कुम्भदेशे स दानवः ।
स च नागो महाराज प्राद्रवच्च भयात्तदा ॥
जित्वाथ नरको भौमो वृत्रहन्तारमाहवे ।
ननाद विविधान्नादान्रोदसी च विनादयन् ॥

---

$_{3-5}$ $M_4$ युधि विव्याध दानव ( for $^{\delta}$ ) —( L 92 ) $D_6$ कर्ण- ; $T_{1-3}$ $G_1$ $_{3-5}$ $M_4$ श्रोत्र- ( for नेत्र- ) —( L 94 ) $T_{1-3}$ $G_{1.}$ $_{3-5}$ $M_4$ विषण्णात्मा ( for °ण्णश्च ) —( L 96 ) $T_{1-3}$ $G_1$ $_{3-5}$ $M_4$ विद्याधराः ( for अलका च ) —( L 99 ) $G_4$ गुह्यकाः ( for निर्जिता ) —( L 100 ) $T_{1-3}$ $G_1$ $_{3-5}$ $M_4$ भीता. ( for सर्वे ) $T_{1-3}$ $G_1$ $_5$ सर्वे , $G_3$ $M_4$ गता ( for भीता )

COLOPHON —*Mention of the Epic* $T_3$. —*Mention of Khila* $D_6$ —*Adhy name* $T_{1-3}$ $M_4$ लोकपालपराजय , $T_4$ नरकासुरयुद्धे दिक्पालाना ***, $G_3$ नरकासुरयुद्धे लोकपालपराजय. ; $G_4$ नरकेण लोकपालपराजय ; $M_1$ नरकवधः —*Adhy no* $T_{1.2}$ $G_4$ $M_{1\ 2\ 4}$ 125 ; $T_3$ 134 , $T_4$ 108 ; $G_1$ 127 , $G_5$ $M_3$ 128

$M_4$ om the ref —( L 102 ) T $G_1$ $_{3-5}$ $M_4$ गिरि- ( for शशि- ) —( L 103 ) $T_2$ [आ]शु- , $G_1$ तु ( for सु- ) —( L 104 ) $G_3$ महाराज ( for °घोरं ). T $G_{1.}$ $_{3-5}$ $M_4$ महात्मना ( for दुरा° ). —( L. 105 ) $D_6$ T $G_1$ $_{3-5}$ $M_4$ दृष्ट्वा शक्रं ( by transp ) —( L 108 ) $D_6$ T $G_1$ $_{3-5}$ $M_4$ तयोर्युद्धं समभवद् ( for $^{a}$ ) —( L. 109 ) $T_1$ स रक्षो ( for नरको ) —( L 112 ) $M_4$ -सत्त्वस् ( for संज्ञस् ) —( L 113 ) $M_4$ समाश्वास्य ( for °श्वस्तस् ) $M_{1\ 3}$ सप्तभि ( for चाष्टभिः ). —( L 115 ) $T_{1-3}$ $G_1$ $_{3-5}$ $M_4$ देवराट् ( for चोत्तमम् ). —( L 118 ) $M_{1\ 2}$ खड्गेन ( for भल्लेन ) $G_3$ महात्मनः ( for दुरा° ). —( L 119 ) $T_2$ $G_1$ स भिन्न , $T_3$ $G_{3-5}$ M सच्छिन्न- ( for स च्छिन्न ) $T_1$ $G_3$ $M_4$ हताश्वो ( for विबाणो ) —( L 120 ) $T_{1\ 2}$ $G_{1\ 3\ 5}$ $M_{2-4}$ शचीपतिः ( for °पतिम् ) —( L 122 ) $T_{1-3}$ $G_{1\ 3,4}$ $M_4$ तदा दैत्यो , $T_4$ च वै दोर्भ्यां ( for पुनर्दैत्यो ) $D_6$ आविध्यत पुनर्दोर्भ्यां ( for $^{a}$ ) — $G_4$ om line 123 —( L 123 ) T $G_{1\ 3,5}$ $M_4$ पातयामास ( for पोथ° ) —( L 124 ) $T_{1-3}$ $G_1$ $_{3-5}$ $M_4$ विवशश् ( for विह्वलश् ). —( L 125 ) $D_6$ T $G_{1.}$ $_{3-5}$ $M_4$ आरुह्य ( for उत्सृज्य ).

निर्जित्याखण्डलं शक्रं लोकपालांस्तथैव च । [ 130 ]
जयमाघोषयामास नरको दानवोत्तमः ॥
अमरावतीं तदा दैत्यः प्रविश्य च महासुरैः ।
उर्वशीं च समाहूय वचनं चेदमब्रवीत् ॥
भज मामिह वामोरु निर्जितः शक्र आहवे ।
अहमिन्द्रो यमो राजा वरुणो यादसां पतिः । [ 135 ]
अहमेव सदा भद्रे राजराजोऽस्मि सुप्रभे ॥

उर्वश्युवाच ।

ऋषयो यदि ते राजन्यक्ष्यन्ति क्रतुभिः सदा ।
तदा भजामि दैत्येन्द्र नात्र कार्या विचारणा ॥
एवमुक्तस्तदा दैत्यो बाढमित्यब्रवीद्वचः ॥
स्वर्गश्रेणीर्महाराज प्रमथ्य दितिजैः सह । [ 140 ]
स्वर्गद्रुमान्समादाय देवकन्यास्तथापराः ॥
अष्टौ राजन्सहस्राणि गृहीत्वा दानवोत्तमः ।
जगाम दैत्यराजस्तु यथेष्टं दानवैः सह ॥

No 26

After the addl. colopon of 91. 21, $D_6$ S ( except $G_2$ ) ins

वैशंपायन उवाच ।

संप्राप्य मानुषं लोकं नरको दानवोत्तमः ।
द्वारवत्यां जगन्नाथे तस्मिन्रक्षति भूतलम् ।
बबाधे मानुषान्सर्वानृषीन्विप्रांश्च दानवः ॥
रक्षत्येव जगन्नाथे विप्रान्मुनिगणांस्तथा ।
बाधते स्म तदा दैत्यो विप्रान्मुनिगणांश्च सः ॥ [ 5 ]
ततः कदाचिद्दैत्येन्द्र उर्वशीवचनं स्मरन् ।
बदर्यां हि महाराज यष्टुं मुनिगणांस्तदा ।
सत्रेण शक्रं देवेशं तथा देवगणानपि ॥
दृष्ट्वा तान्मुनिवीरांस्तु नरको दानवोत्तमः ।
प्रोवाच वचनं काले यष्टव्योऽस्मि मुनीश्वराः ॥ [ 10 ]
अस्मिन्काले जगन्नाथ इन्द्रोऽहं विबुधाधिपः ।
जितः शक्रो रणे विप्रा लोकपालैः सहामरैः ।
तत इज्यो नमस्कार्यो वन्द्यो लोकहिताय वै ॥
तदेतद्वचनं श्रुत्वा नरकस्य दुरात्मनः ।
आहुस्ते मुनयः सर्वे बदरीवासतत्पराः ॥ [ 15 ]
यक्ष्यामो न वयं दैत्य दानवोऽसि दुरात्मवान् ।
इन्द्रं देवगणैः सार्धं यक्ष्यामो विगतज्वराः ॥
तच्छ्रुत्वा रोषताम्राक्षो दानवानिदमब्रवीत् ।
वध्यन्तामृषयः सर्वे भिद्यन्तां यज्ञभूमयः ॥
न त्वां यक्ष्याम हे दैत्य इत्यूचुः किल तापसाः ॥ [ 20 ]
ते च सर्वं तथा चक्रुर्दानवा दुष्टचेतसः ॥
यज्ञभूमिं समालोड्य यज्ञभारांश्च सर्वशः ।
अग्नीन्संमिश्रयामासुर्ददहुर्दर्भपुञ्जकान् ॥
कमण्डलून्द्विधाकृत्य जटा आच्छिद्य दूरतः ।

---

— ( L. 129 ) $D_6$ $T_{1\ 4}$ $G_{3-5}$ M ननाद विविध नादं ( for $^a$ ) — ( L 130 ) $D_6$ $T_{2-4}$ $G_{3-5}$ $M_4$ सगण ( for [आ]खण्डलं ). $T_1$ स जित्वा सगणं शक्र, $G_1$ निर्जित्य सगणं शत्रुं ( for $^a$ ) — ( L 131 ) $T_2$ जवेन, $G_4$ जयं वि- ( for जयमा- ) — ( L 132 ) $D_6$ महाबलैः, $M_1$ सहासुरै· ( for म° ) — ( L 137 ) $D_6$ T $G_{1\ 3-5}$ $M_4$ सह ( for सदा ) — ( L 139 ) T $G_{1\ 3-5}$ $M_4$ [ए]व तां ब्रुवन् ( for [अ]ब्रवीद्वच· ) — ( L 140 ) $D_6$ -श्रेणिं ( for -श्रेणीर् ). — ( 141 ) $D_6$ तथादाय ( for समा° ). $D_6$ वराः ( for [अ]पराः )

26

$T_3$ om lines 1–34. — ( L 1 ) $T_{1\ 2}$ $G_{3-5}$ $M_{3\ 4}$ स ( for स- ) — ( L 3 ) $T_4$ बभाषे, $M_{1\ 3}$ बबाध, $M_2$ संप्राप्य ( for बबाधे ). $T_2$ $G_5$ बबाधे मानुषं लोकम् ( for $^a$ ) — ( L. 4 ) $M_3$ च स ( for तथा ) — $G_1$ $M_3$ om ( hapl ) line 5. — ( L 5 ) $T_{1\ 2\ 4}$ $G_{3\ 5}$ $M_4$ तथा, $G_4$ तदा ( for च सः ) $D_6$ दुरात्मा दुरतिक्रम ( for $^b$ ) — ( L 7 ) $T_{1\ 2}$ $G_{1\ 3-5}$ $M_4$ स्थितान्. $T_4$ तथा ( for तदा ) — $T_1$ reads line 8 twice — ( L 8 ) $T_1$( both times ) $_2$ $G_{1\ 3-5}$ $M_{2\ 4}$ शक्र- ( for शक्रं ). $T_1$ (second time ) देवेन्द्र ( for °शं ) $T_1$ ( first time ) $M_2$ तथा; $M_{1\ 3}$ तदा ( for अपि ) — ( L 9 ) $T_{1\ 2\ 4}$ $G_{1\ 3-5}$ $M_4$ -वर्यांस् ( for -वीरांस् ) — ( L 13 ) $D_6$ $T_1$ $G_3$ $M_4$ तस्मादीज्यो; $T_{2\ 4}$ $G_{1\ 4\ 5}$ तस्मात्पूज्यो ( for तत इज्यो ) — Before line 14, $T_4$ ins वैशपायन· Before line 16, $M_2$ ins वैशपायन·, $T_4$ $G_{1\ 4\ 5}$ $M_{1\ 2}$ om line 17 — ( L 18 ) $T_2$ $G_{1\ 4}$ दानवो वाक्यमब्रवीत् ( for $^b$ ) — ( L 21 ) $D_6$ $T_4$ सर्वे ( for सर्वं ). $T_{1\ 2\ 4}$ $G_{1\ 3\ 5}$ $M_4$ चेतना· ( for चेतस ). — ( L 22 ) $G_3$ समालोक्य ( for °लोड्य ) $D_6$ $T_4$ यज्ञागारांश् ( for यज्ञभा° ).

प्रक्षिप्य दानवाः सर्वे नरकेण समन्विताः ॥ [ 25 ]
यज्ञवाटं समालोड्य चक्रुर्भस्म तदा नृप ।
तावत्तानि हवींष्यत्र भक्षयामासुरोजसा ।
आनीतान्यज्ञसिद्ध्यर्थं पशून्यज्ञसमागमे ।
तेष्वेव चाग्निमुख्येषु दग्ध्वा ते दानवोत्तमाः ॥
एवं ते दानवाः सर्वे चक्रुर्विघ्नक्रियां तदा । [ 30 ]
ते च सर्वे मुनिवराः पलायन्ति दिशो दश ॥
तत्र या मुनिकन्यास्तु जहार नरकस्तदा ।
प्राग्ज्योतिषं जगामाशु कन्याभिस्ताभिरेव च ।
यथेष्टं मुमुदे तत्र प्रियाभिः सह दानवः ॥

Colophon

वैशंपायन उवाच ।

गतेषु दैत्यसैन्येषु मुनयो दैन्यपीडिताः । [ 35 ]
तस्मिन्नेवाश्रमे रम्ये मन्त्रयित्वा परस्परम् ॥
देवाय लोकनाथाय कृष्णाय च महात्मने ।
निवेदयामः पापस्य दानवस्य कृतं पुनः ॥
यदि स प्रतिकुर्याद्धि तन्नः श्रेयो भविष्यति ॥
यदि जीवेदसौ पापो नरको दानवोत्तमः । [ 40 ]
जगन्न स्थास्यते सम्यग्विनष्टश्च भवेज्जनः ॥
इति संमन्त्र्य मुनयो बदरीसनिवेशिनः ।
यज्ञभारं तदाच्छिन्नं नरकेण दुरात्मना ।
गृहीत्वा मुनयः सर्वे शिष्यैर्धमनिसंतताः ॥
केशवाय च तस्मै तु बदरीफलसंहतिम् । [ 45 ]
केशवेनोपभुक्तां तु तस्मिन्नाश्रमसंपुटे ।
ते गत्वा दूरमध्वानं दक्षिणं मार्गमास्थिता. ॥
वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः ।
कण्वो धूम्रो बृहद्दुर्गो भरद्वाजश्च गालवः ।
कवषो धूम्रकेतुश्च काश्यः कापिलकस्तथा ॥ [ 50 ]
एते चान्ये च मुनयो नरकेण दुरात्मना ।
बाधिताः पुण्डरीकाक्षं द्रष्टुकामास्तपस्विनः ॥
शिष्यैः सह समायाता आर्ता दानवपापिना ।
कृतवेदार्थतत्त्वज्ञा द्रष्टुकामा जनार्दनम् ॥
गङ्गां च समनुप्राप्य स्थितास्तस्यास्तटे तदा । [ 55 ]
तत्र स्नातुं समारब्धा मुनयः संशितव्रताः ।
अत्र स्नात्वा वयं यामो द्रष्टुं लोकहितैषिणम् ।
नित्यशुद्धं जगन्नाथं वसन्तं द्वारकापुरे ॥
इति संचिन्त्य मुनयः स्नानं चक्रुर्यथाविधि ।
येन योग्या मुनिवरा द्रष्टुं केशवमव्ययम् । [ 60 ]
तस्मिन्गङ्गाम्भसि स्नात्वा सर्वे शुद्धास्तपोधनाः ॥

---

— ( L 23 ) $T_{2}$ अग्निं ( for अग्नीन् ) $D_{6}$ अदहन् ( for ददहुर् ) — ( L 24 ) $D_{6}$ कमण्डलु ( for °लून् ) $T_{1\ 2\ 4}$ $G_{1\ 3-5}$ $M_{4}$ उच्छिद्य ( for आ° ) — ( L 25 ) $G_{3.\ 5}$ $M_{4}$ प्राक्षिपन् ( for प्रक्षिप्य ) $G_{1.\ 4}$ om ( hapl ) lines $25^{b}$–$29^{a}$. — $T_{2}$ om lines 26–30 — ( L 27 ) $M_{1}$ पाचितानि ( for तावत्तानि ) — ( L 30 ) $T_{1\ 4}$ $G_{1\ 3-5}$ $M_{4}$ क्रियास् ( for क्रियां ) — ( L 31 ) $D_{6}$ $T_{1\ 2\ 4}$ $G_{1\ 3-5}$ $M_{3-5}$ पलायन्ते ( for °यन्ति )

Colophon om in $T_{3}$ — *Adhy. name* $D_{6}$ नरकासुरयुद्धम्, $T_{4}$ यज्ञविघ्नकरणम्, $G_{3}$ नरकातिक्रमकथनम्, $M_{1-3}$ नरकवध. — *Adhy no* . $T_{1\ 2}$ $G_{4}$ M 127, $T_{4}$ 120, $G_{1}$ 129, $G_{5}$ 130

( L 36 ) $M_{4}$ अस्मिन् ( for त° ) $D_{6}$ $T_{1\ 4}$ $G_{1\ 3-5}$ M राजन् ( for रम्ये ) — For line 38, $D_{6}$ $T_{1\ 4}$ $G_{3\ 5}$ M subst :

1** निवेदयिष्याम कृतं तेन दानवपापिना ।

— ( L. 39 ) $D_{6}$ सप्रति- ; $T_{3}$ $G_{1}$ न. प्रति- ; $M_{4}$ सम्यक्प्र- ( for स प्रति- ) — ( L 40 ) $D_{6}$ T $G_{1,\ 3-5}$ $M_{4}$ दुष्टो ( for पापो ) $T_{2\ 3}$ $G_{1\ 4\ 5}$ $M_{4}$ दानवाधम ( for °वोत्तम ) — ( L 42 ) $T_{1}$ $G_{3}$ $M_{4}$ बदरीसंनिवेशिता. ( $G_{3}$ °शने ), $T_{2\ 3}$ $G_{1\ 4\ 5}$ °वनवासिन· ( for $^{b}$ ) — ( L 43 ) $T_{4}$ $G_{3}$ वज्रभारं, $G_{4\ 5}$ वज्रभावं ( for यज्ञभारं ) $T_{2}$ ततो नैच्छन्, $M_{1\ 2}$ तदा भिन्नं ( for तदाच्छिन्नं ) $T_{3}$ यज्ञभावं ततो नैच्छन् ( for $^{a}$ ) — ( L 44 ) $T_{1-3}$ $G_{1.\ 3-5}$ $M_{4}$ शिष्यैः सार्धं समागता ( for $^{b}$ ) — ( L 45 ) $D_{6}$ $T_{1}$ $G_{1.\ 3-5}$ $M_{4}$ वासुदेवाय तस्मै तु ( for $^{a}$ ) $G_{3}$ संगतिम् ( for -संह° ). — ( L 46 ) $D_{6}$ $T_{1\ 4}$ $G_{3-5}$ M पुरा ( $M_{4}$ तदा ) भुक्तां, $T_{2.\ 3}$ $G_{1}$ [उ]पभुक्तं तु ( $T_{2}$ तत् ) ( for °क्तां तु ) — $M_{1.\ 2}$ om line 47 — ( L 47 ) $T_{3\ 4}$ $G_{1\ 5}$ दीर्घम् ( for दूरम् ). — $D_{6}$ $T_{1\ 3}$ दक्षिणं मार्गसंस्थिता ; $T_{4}$ °णामार्गसंस्थिता· ( for $^{b}$ ). — ( L 49 ) $D_{6}$ धौम्यो ( for धूम्रो ) $T_{1}$ $G_{4\ 6}$ $M_{4}$ भारद्वाजश् ( for भ° ) $D_{6}$ $M_{1.\ 3}$ मालव , $T_{4}$ माधवः ( for गालव. ). $M_{2}$ भारद्वाजश्च मालवः ( for $^{b}$ ) — ( L 50 ) $M_{4}$ धूम- ( for धूम्र- ). $D_{6}$ T $G_{1\ 3-5}$ $M_{3\ 4}$ -काश्यप· ( $D_{6}$ कण्वश्च ) कपिलस्तथा ( for $^{b}$ ). — ( L 55 ) $M_{3}$ स्थित्वा ( for स्थितास् ) — ( L

अवतीर्य ततो गङ्गां नौभिर्मुनिवरास्तदा ।
क्रमेण समनुप्राप्ता द्वारकां कृष्णपालिताम् ॥
प्रविश्य द्वारकां ते तु वसिष्ठाद्या मुनीश्वराः ।
अतीत्य यदुमुख्यानां भवनानि सहस्रशः ॥ [ 65 ]
या सभा लोकविख्याता सुधर्मेति च विश्रुता ।
तस्या द्वारं समास्थाय द्वाःस्थं प्रोचुर्महर्षयः ॥
निवेद्यतां द्वारपाल केशवाय महात्मने ।
बदर्यां वै समुषिता मुनयः संशितव्रताः ।
द्रष्टुं त्वां समनुप्राप्ता पीडिता दानवोत्तमैः ॥ [ 70 ]
तच्छ्रुत्वा द्वारपालोऽपि केशवाय महात्मने ।
निवेदयामास तदा यदुक्तं मुनिसत्तमैः ॥
श्रुत्वा तु देवदेवेशो मुनीन्यदुवरार्चितः ।
प्रवेश्यन्तामिति प्रोक्ताः प्रद्युम्नं समचोदयत् ॥
अर्घ्यं पाद्यं तदा पात्रमासनानि समन्ततः । [ 75 ]
आनीयन्तां यथायोगं स च सर्वं चकार ह ॥
ते प्रविष्टा मुनिवरास्तां सभां सभ्यपूजिताम् ॥

No. 27

After 91 24, $D_6$ S ( except $G_2$ ) ins :

तां सभां विविशुर्हृष्टाः सशिष्या मुनिसत्तमाः ॥
तान्दृष्ट्वा समनुप्राप्तान्केशवः केशिसूदनः ।
नमस्कृत्य मुनीन्सर्वानासनानीत्यवोचत ॥
आसनानि समाविश्य मुनयः संशितव्रताः ।
अर्घ्यं च तेभ्यः प्रददौ पाद्यमाचमनं तथा ॥ [ 5 ]
उत्सृज्य गां जगन्नाथो मधुपर्कं ददौ पुनः ।
अन्धका वृष्णयश्चैव प्रणामं चक्रिरे मुनीन् ॥
तैरप्यनुमताः सर्वे यादवा मुनिसत्तमैः ।
स्वं स्वं हि भेजिरे ते तु आसनं लोकविश्रुताः ॥ [ 10 ]
केशवोऽपि महाराज स्वं स्थानं समवाप ह ॥

Colophon

वैशंपायन उवाच ।

आसीनेषु जगन्नाथो मुनिवीरेषु तत्र ह ।
उवाच वचनं काले सोपस्करमिदं हरिः ॥
कुशलं सर्वकार्येषु तपःसु च तपोधनाः ।
युष्मदागमनं मह्यं प्रीणाति सततं भृशम् ॥ [ 15 ]
यादवाश्च परां प्रीतिमास्थिता मुनिसत्तमाः ।
युष्मदागमनाद्विप्राः किमु वक्तव्यमत्र ह ॥
कुलं पूतं सदा विप्रा यस्मिन्विप्राः समागताः ।
युष्मदागमनप्रश्नो न युक्तो वक्तुमत्र नः ॥
तथापि नो मनांसीह प्रसह्य मुनिसत्तमाः । [ 20 ]
कौतूहलं समायान्ति प्रश्नश्रवणसंनिधौ ।
तस्माद्विप्रा यथातत्त्वं वक्तव्यं कारणं तदा ॥
एवं पृष्टास्तदा विप्राः केशवेन महात्मना ।
ऊचुः प्राञ्जलयः सर्वे केशवं केशिसूदनम् ॥
शृणु देव जगन्नाथ कारणं कारणात्मक ॥ [ 25 ]

---

58 ) $T_4$ -सिद्धं ( for -शुद्धं ). — ( L 61 ) $D_6$ स्नाताः ( for स्नात्वा ) $D_6$ $T_{1\ 4}$ $G_{3\ 5}$ M शुद्धा. सर्वे ( by transp ). — ( L 62 ) $M_2$ अवतेरुस् ( for °तीर्य ) — ( L 64 ) $M_{1\ 3}$ क्रमेण ( for प्रविश्य ) — ( L 66 ) $D_6$ या सुधर्मेति विश्रुता ( for [b] ). — $T_1$ om lines 71–72 — ( L 71 ) $D_6$ $T_{2-4}$ $G_{1\ 3-5}$ $M_4$ कृष्णाय सु- ( for केशवाय ) — ( L 73 ) $D_6$ $T_{1\ 4}$ $G_{1\ 3\ 5}$ $M_{2\ 4}$ तच्छ्रुत्वा, $M_{1\ 3}$ ताञ्श्रुत्वा ( for श्रुत्वा तु ) — ( L 74 ) $D_6$ T $G_{1\ 3-5}$ $M_4$ प्रवेश्यतामिति वच ( for [a] ) — ( L 75 ) $T_3$ $G_4$ अर्घ्यं पात्र तदा पाद्यम् ( for [a] )

27

( L 3 ) $D_6$ [इ]त्यचोदयत्, $T_{1\ 3}$ $G_{1\ 3-5}$ $M_4$ न्यवेदयत्, $T_4$ न्यचोदयत् ( for [इ]त्यवोचत ). — ( L 6 ) $M_2$ स ( for गां ) — ( L 8 ) $T_{1\ 2}$ $G_{1\ 5}$ $M_4$ तदा ( for मुनीन् ). — ( L 10 ) $T_1$ $G_{1,\ 3\ 6}$ $M_4$ -विश्रुतम् ( for °ताः ) — ( L. 11 ) T $G_{1\ 3-5}$ स्वस्थानं, $M_2$ स्वासनं ( for स्वं स्थानं ). $M_4$ स्वस्थानं समपद्यत ( for [b] )

Colophon — *Mention of the Epic* $T_{3,\ 4}$. — *Adhy. name* $T_1$ $M_4$ कृष्णदर्शनम्, $G_3$ कृष्णसंदर्शनम्, $M_{1-3}$ नरकवध. — *Adhy no* $T_{1\ 2}$ $G_{3\ 4}$ M 128, $T_3$ 136; $T_4$ 121, $G_1$ 130, $G_5$ 131

$M_4$ om the ref — ( L 12 ) $T_1$ -वर्येषु ( for -वीरेषु ). — ( L 13 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ सोपस्थानम्, $T_4$ °स्कारम् ( for °स्करम् ) — ( L 15 ) T $G_{1\ 3-5}$ $M_4$ प्रीणात्यमृत-सनिभम् ( for [b] ) — ( L. 19 ) $D_6$ आगमने; T $G_{1.\ 3-5}$

नरको नाम देवेश भौमो दानवसत्तमः ।
बाधते नो जगन्नाथ दानवैर्दानवाधमः ॥
जघ्नुस्ते दानवा देव हुतं होतव्यमेव च ।
अभक्षयन्त ते देव यज्ञभाण्डान्सहस्रशः ॥
इदं चोवाच दुष्टात्मा इज्योऽस्मीति च माधव । [ 30 ]
बिभिदुस्ते दुरात्मानो दानवा नगयोधिनः ।
कमण्डलूञ्जटाश्चैव उटजानि सहस्रशः ।
न क्वचिच्छर्म देवेश लप्स्यामो यदि जीवति ॥
तस्मिन्दुष्टे जगन्नाथ धिग्गता निरयं वयम् ।
जहि तं देवदेवेश दानवं दुष्टचेतसम् ॥ [ 35 ]
रक्ष नः सकलान्हत्वा दानवान्दुष्टपौरुषान् ॥
ऋषिपत्नीः समानीय स्वपुरं नीतवान्दनुः ।
रक्षा हि त्वयि गोविन्द स्थिता नित्यं जगत्पते ॥
क्षात्रं वृत्तं समास्थाय द्वारवत्यां वसन्हरे ।
निगृह्य दुष्टान्रक्षस्व साधून्साधुप्रियो ह्यसि । [ 40 ]
आर्ता वयं जगन्नाथ हतास्तेन दुरात्मना ॥
इयं च भवते देव नीता ह्यस्माभिरच्युत ।
बदरीसंहतिर्देव पूर्वभुक्ता त्वया विभो ॥
इत्युक्त्वा मुनयस्ते तु ददुः सर्वं जगत्पतेः ।
आहूताञ्छिष्यवर्गेण भिन्नान्दानवसत्तमैः । [ 45 ]
यज्ञभारान्महाराज दर्शयामासुरञ्जसा ॥
दृष्ट्वा श्रुत्वा च देवेशो रोषताम्राकुलेक्षणः ।
कष्टं कष्टं महज्जातमृषीणां भावितात्मनाम् ।
इति मत्वा जगन्नाथो नोत्तरं प्रत्यपद्यत ॥
चिन्ताविष्टे जगन्नाथे रक्षमात्मनि चिन्तिते ॥ [ 50 ]
तुष्टुवुः पुण्डरीकाक्षमृषयो वीतमत्सराः ।
अर्घ्याभिर्वाग्भिरिष्टाभिरीश्वरं प्रणतास्तदा ॥
नमः प्रपन्नार्तिहरादिदेव
जगत्पते कारण कारणात्मन् ।
स्वभावशुद्धान्तपुरोधसे नमः [ 55 ]
प्रसन्नगोविन्दगुणानुरूपिणे
नमो नमो देव सनातनात्मने ॥
नमो नमो देव जनार्दनोऽसि
नमो नमो माधव भक्तवत्सल ।
नमो नमो वामन वामनाकृते [ 60 ]
नमः स्वभावप्रभव प्रभो हरे ॥
जयाच्युतानन्त जगन्निवास
जय प्रपन्नार्तिहरामरेश ।

---

$M_4$ °मनात् ( for °मन- ). — ( L 21 ) $D_6$ T $G_{1, 3-5}$ $M_4$ कुतूहल समायाति ( for $^a$ ) — ( L 22 ) $D_6$ T $G_{1, 3-5}$ $M_4$ सर्वं ( for तत्त्वम् ) — Before line 25, $M_2$ ins. मुनयः. — ( L 27 ) $M_{1-3}$ बबाध [ for बाधते ) $T_2$ $G_5$ दानवाधिप ( for °धम. ) — ( L 28 ) $D_6$ $T_2$ $G_{1, 3-5}$ जहुस् ( for जघ्नुस् ) — ( L 29 ) $D_6$ T $G_{1, 3-5}$ $M_4$ भक्षयन्ति सदा देव ( for $^a$ ) $D_6$ यज्ञभागान्, $T_4$ °भारान् ( for °भाण्डान् ) $T_{1-3}$ $G_{1, 3-5}$ $M_4$ यज्ञशालासु सर्वशः ( for $^b$ ). — ( L 30 ) T $G_{1, 3-5}$ $M_4$ केशव ( for माधव ) — ( L 31 ) $M_{1, 2}$ महात्मानो ( for दुरा° ) — ( L. 32 ) $T_{2, 3}$ $G_{1, 3, 5}$ $M_4$ कमण्डलुं ( for °लून् ) $G_4$ कमण्डलु जटां चैव ( for $^a$ ). — ( L 33 ) $M_{1, 3}$ लप्स्यामो ( for देवेश ). $M_2$ न क्वचित्सुखमाप्स्यामो ( for $^a$ ) $D_6$ $T_4$ प्राप्स्यामो, $M_{1, 3}$ देवेश ( for लप्स्यामो ) — ( L 34 ) $D_6$ निर्गता; $T_4$ स्थापिता ( for धिग्गता ) $T_{1-3}$ $G_{1, 3-5}$ $M_4$ स्थापिता निरये ( $T_{2, 3}$ $G_{1, 4}$ नरके ) वयम् ( for $^b$ ) — ( L. 35 ) $T_{1, 3}$ -चेतनम् ( for °सम् ) भौमं दानवसत्तमम् ( for $^b$ ) — ( L 36 ) $T_3$ $G_1$ $M_{1, 2}$ पूरुषान् ( for -पौरु° ) — ( L. 37 ) $D_6$ $T_{2, 4}$ $G_5$ स्वपुरीं ( for °रं ) $T_3$ $G_{1, 4}$ स्वपुरं दानवाधम, $M_2$ °रीं नीतवान्नरः ( for $^b$ ) — ( L 38 ) T $G_{1, 3-5}$ $M_4$ तव ( for त्वयि ). $D_6$ सा रक्षा तव गोविन्द ( for $^a$ ) $T_1$ स्थितस्य जगतः पते ( for $^b$ ). — ( L 39 ) $D_6$ $T_4$ अनुष्ठाय ( for समास्थाय ) — ( L 40 ) $M_{1, 3}$ निहत्य ( for निगृह्य ) — ( L. 42 ) $D_6$ $T_4$ नीतमस्माभिरद्य हि ( for $^b$ ) — ( L 43 ) $M_3$ संगतिर् ( for सह° ). — ( L 44 ) $T_{2-4}$ $G_{1, 4, 5}$ सर्वे ( for ते तु ). $D_6$ सर्वां, $T_{1, 3}$ $G_{3-5}$ सर्वान्, $T_4$ सर्वे ( for सर्वं ). — ( L 45 ) $T_1$ $G_{1, 3-5}$ $M_4$ -वर्गैर्हि ( for -वर्गेण ) $T_{2, 3}$ आहूताञ्छिष्यवर्गैर्हि ( for $^a$ ) — ( L 46 ) $M_{1, 3}$ -भाण्डान् ( for -भारान् ) — ( L 47 ) $D_6$ $T_{1, 4}$ $G_{3-5}$ M श्रुत्वा दृष्ट्वा ( by transp ) — ( L 49 ) $D_6$ $T_4$ प्रत्यभाषत ( for °पद्यत ). — ( L 52 ) $D_6$ $M_3$ अर्घ्याभिर् ( for अर्घ्या° ). $D_6$ $T_4$ $G_5$ $M_{1-3}$ स्थिता ( for तदा ) — ( L 54 ) $D_6$ जगत्पते जन्मजराविदूर — $D_6$ om lines 55–56 — ( L 55 ) $T_1$ $M_4$ -सिद्धान्त- ( for -शु° ) — ( L 57 ) $D_6$ $T_1$ $G_{1, 3-5}$ M सनातनात्मन् ( for °त्मने ) — ( L 58 ) $G_1$ जनार्दनेति ( for °नोऽसि ) — $T_{2, 3}$ $G_{1, 4}$ om lines 59–64. — ( L. 61 )

जयामरेशेश सनातनोऽसि ॥
त्वयि प्रबुद्धे जगदादिदेव [ 65 ]
प्रबुद्धमासीत्सकलं सदैवम् ।
सुप्तोत्थिते देव जगन्निवास
प्रबोधमायाति कथं नु लोकः ॥
अनन्यतुल्या तव शक्तिरेपा
दुर्बोधरूपा सकलैः सुरैरपि । [ 70 ]
अद्यापि तां वेत्तुमनन्यचेता
ब्रह्मा समीष्टे नियतं जनार्दन ॥
कथं वयं वेत्तुमलं जगत्पते
मग्ना हि संसारमहार्णवे हरे ।
निरूपयन्तः सततं भवन्तं [ 75 ]
ज्ञातुं वयं देव यतामहे गुरो ॥
तथापि सूक्ष्मं सकलेश्वरस्य
जगत्पते ते सततं नियामक ।
स्थूलं तु नित्यं जगतां निवास
तमर्चयामो वयमादिदेव ॥ [ 80 ]
तमेव नित्यं जनकादयस्ते
भजन्ति सन्तो भगवन्यतीन्द्राः ।
तमर्चयामः सततं पुरातन
प्रभो प्रपन्नार्तिहरादिदेव ॥
नताः स्म नित्यं जगतां निवास [ 85 ]
भवत्पदं यत्परमं सनातनम् ।
नताः स्म गोविन्द गुणानुरूप
जगत्पते कारण कारणात्मन् ॥
नमस्तुभ्यं नमस्तुभ्यं देव देव हरे हरे ।
नमो गोविन्द दुर्ज्ञेय योगिध्येयाङ्घ्रिपङ्कज ॥ [ 90 ]
यत्पदं परमं नित्यं तव विष्णो हरे परम् ।
तं नमाम जगन्नाथ यत्तु पश्यन्ति योगिनः ।
नमो नमो हरे विष्णो नमो माधव केशव ॥
यत्तु पश्यन्ति सततं योगिनो यतचेतसः ।
यत्प्राप्य न निवर्तन्ते तन्नमाम पदं तव ॥ [ 95 ]
या माया तव गोविन्द दुर्ज्ञेया योगचिन्तकैः ।
तां नताः स्म जगन्नाथ यामाश्रित्य स्थिति स्थिताः ।
या रक्षति जगद्विष्णो तां नमाम हरे सदा ॥
ऋग्यजुश्च तथा साम यं स्तौति सततं हरे ।
द्वाभ्यां द्वाभ्यां त्रिभिश्चैव पञ्चभिश्च जनार्दन ॥ [ 100 ]
पुनश्चैव जगन्नाथ द्वाभ्यां स्तौति जगत्पते ।
तं त्वां नताः स्म देवेश ऋग्यजुःसामरूपिणम् ॥
अकारोऽसि जगन्नाथ तथैवोकारसंज्ञितः ।

---

$T_4$ $G_{3\ 5}$ $M_4$ जय ( for नम ). $T_1$ जय स्वभावप्रभुरव्ययात्मन् — ( L 63 ) $T_1$ $G_{3,5}$ $M_4$ [आ]दिदेव ( for [अ]मरेश ) $D_6$ $T_4$ नम प्र( $T_4$ जगत्प्र )पन्नार्तिहरो हरेश — ( L 66 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ जगच्च, $M_{1-3}$ सदैवतम् ( for सदैवम् ) — ( L 67 ) $D_6$ सुप्ते त्वयि देव, $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ त्वयि प्रसुप्ते तु, $T_4$ सुप्ते स्थितो देव ( for सुप्तोत्थिते देव ) — ( L 68 ) $D_6$ नृलोक ( for नु लोक ) — ( L 71 ) T $G_{1\ 3-5}$ $M_4$ नाद्यापि ( for अ° ) — ( L 72 ) $T_{1-3}$ $G_{1\ 3\ 5}$ M तु सुरारिसूदन ( for नियतं जनार्दन ) — ( L 76 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ अज्ञा ( for ज्ञातुं ) — ( L 77 ) $D_6$ $T_4$ सूक्ष्म ( for सूक्ष्मं ) $T_{2\ 3}$ $G_{1\ 4}$ जगदीश्वरस्य ( for सकले° ) — ( L. 78 ) $T_{1-3}$ $G_{1,3-5}$ $M_4$ सकल न ( $T_1$ °लाम ) विघ्न ( for सततं नियामक ) — ( L 79 ) $D_6$ $M_3$ स्थूलस् ( for स्थूलं ). — ( L. 81 ) T $G_{1,3-5}$ $M_4$ तत्त्वं ( for नित्यं ) — ( L 82 ) $D_6$ M भावं ( for सन्तो ). $M_{1-3}$ जितेन्द्रिया ( for यतीन्द्रा ) — ( L. 83 ) $D_6$ $T_4$ पुरातनं; $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ सनातनं ( for पुरातन ). — ( L 84 ) $D_6$ $T_{1-3}$ $G_{1,3-5}$ $M_4$ [अ]मरेश ( for [आ]दिदेव ) $T_4$ प्रपन्नार्तिहरं हरेश — ( L 85 ) $T_3$ अधीश ( for निवास ) — ( L 88 ) T $G_{1\ 3-5}$ $M_4$ त्वामिह ( for कारण ) — $D_6$ $T_{1\ 4}$ $G_{1\ 3-5}$ M om line 90 — ( L 90 ) $T_3$ -पङ्कजम् ( for °ज ). — $T_{2,3}$ $G_1$ om lines 91-96 — ( L 91 ) $D_6$ $G_4$ $M_4$ हरेः पदम् ( for हरे परम् ) — ( L 92 ) $D_6$ $T_{1\ 4}$ $G_{3-5}$ $M_4$ नताः स्म ( for नमाम ) $T_4$ सूरय ( for योगिनः ) — ( L. 95 ) $D_6$ $T_1$ $G_{1\ 3-5}$ $M_4$ नताः स्म ( for नमाम ) $T_4$ तन्नताः स्म वयं तव ( for [b] ) — ( L 96 ) $T_1$ $G_{4\ 5}$ -चिन्तनैः ( for °कैः ). $M_4$ दुर्ज्ञेया योगिपुंगवैः ( for [b] ) — ( L 97 ) $D_6$ $M_{1\ 3}$ नमाम ( for नताः स्म ) $T_{1\ 3}$ $G_{1\ 4,5}$ $M_4$ स्थितम्, $G_3$ स्थितौ ( for स्थिताः ) $T_2$ यामाश्रित्य जगत्स्थितम् ( for [b] ) — ( L 98 ) $D_6$ T $G_{1\ 3-5}$ $M_4$ नताः स्म ( for नमाम ). — For line 99, $T_2$ $G_{1,4}$ $M_4$ subst

1** ऋग्यजुःसामभिर्मन्त्रैः स्तुतस्त्वं जगतीपते ।

— ( L 101 ) $M_{1\ 2}$ चतुर्भिश्च चतुर्भिश्च ( for [a] ) $M_{1\ 2}$ यः स्तौति च ( for द्वाभ्यां स्तौति ). — ( L 102 ) $T_{3,4}$ $G_{1,4}$

मकारोऽसि तथा विष्णो नमस्ते प्रणवात्मक ॥
उद्गीथाय नमो नित्यं नमो होत्रे जनार्दन । [ 105 ]
अध्वर्यवे नमस्तुभ्यं यष्टृरूपाय ते नमः ॥
चातुर्होत्र नमस्तुभ्यं चातुर्वर्ण्यविभावन ।
जगत्सर्वं त्वमेवासि जगच्च त्वयि तिष्ठति ॥
संहर्ता चासि जगतां तथा पाता जगत्पते ।
स्रष्टासि च तथा देव स्थितौ स्थितिमतां वर ॥ [ 110 ]
नमः सर्वात्मने तुभ्यं सर्वभूतहृदिस्थित ।
सर्वात्मन्सर्वकर्तासि सर्वभावनभावन ।
नमः सर्वात्मने तुभ्यं भूयो भूयो नमो नमः ॥
एवं स्तुत्वा जगन्नाथं प्रणामं चक्रिरे हरेः ॥
ततश्च वृष्णयः सर्वे शिनिवीरपुरोगमाः । [ 115 ]
उत्थाय चासनात्सर्वे प्रणामं चक्रिरे हरेः ॥
सर्वे ते यादवास्तत्र प्रसन्नमनसोऽभवन् ।
सोऽयमेष जगन्नाथः पाति नोऽस्मिन्वसन्सदा ।
आश्रित्यैनं सुखं सर्वे वत्स्यामो यादवीं पुरीम् ॥
इति मत्वा तदा सर्वे यादवाः कृष्णमव्ययम् ॥ [ 120 ]
ववन्दिरे महाभागाः स्तुतं मुनिभिरव्ययम् ॥

Colophon.

वैशंपायन उवाच ।

एवं स्तुतो जगन्नाथो मुनिभिः पुण्यकीर्तिभिः ।
परिबृंहितमात्मानं मेने यादवसत्तमः ॥
अन्तः प्रीतियुतश्चासीत्प्रकृतिस्थोऽपि केशवः ।
प्रतिज्ञामकरोत्तेभ्यो मुनिभ्यो यदुसंसदि ॥ [ 125 ]
एषोऽस्मि सगणं हत्वा नरकं दुष्टपूरुषम् ।
निष्कण्टकमिमं लोकं करिष्यामि मुनीश्वराः ॥
स्थावरं जङ्गमं चैव सुखं स्वप्स्यति माचिरम् ।
चक्रेण निशितेनैव शिरश्छेत्स्यामि दानवम् ॥
मुरं च दानवं विप्रा हयग्रीवं च दानवम् । [ 130 ]
सर्वानेतान्हनिष्यामि गच्छध्वं विगतज्वराः ।
आरभ्यन्तां क्रियाः सर्वाः किं विलम्बथ माचिरम् ॥
प्रतिज्ञाते जगन्नाथे विनेदुर्यादवास्तदा ।
मुनयश्च तदा देवे प्रतिज्ञाते तु केशवे ।
आशीर्वादांस्तदा विप्रा ददुस्तस्मै महात्मने ॥ [ 135 ]
निर्विघ्ना तव देवेश प्रतिज्ञा शत्रुतापन ।
भूयाद्भूतहितार्थाय साधयाम इतो वयम् ।
स्वस्ति तेऽस्तु गमिष्यामो बदरीं तव शोभनाम् ॥
इत्युक्त्वा मुनयः सर्वे प्रणिपत्य च केशवम् ।

---

तत्त्वां ( for तं त्वां ) —( L 103 ) $D_6$ तथैवोंकारसंज्ञक ( for * ). —( L 104 ) $G_{1\ 3\ 5}$ जगन्नाथ, $M_{1-3}$ सदा विष्णो ( for तथा विष्णो ) $G_5$ प्रणवात्मने ( for °क ) $T_1$ $G_4$ तथापि प्रणवात्मकः ( for $^b$ ) —( L 105 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ तुभ्यं ( for नित्यं ) $D_6$ गोप, $T_4$ गोप्त्रे ( for होत्रे ) —( L 106 ) $D_6$ T $G_{1,3-5}$ $M_4$ यज्ञ- ( for यष्टृ- ) —( L 107 ) $D_6$ $T_{1\ 4}$ $G_{1\ 3-5}$ $M_{1\ 2\ 4}$ चातुर्होत्रे ( for °त्र ) —( L 109 ) $T_{1\ 2}$ $G_{1,3,4}$ $M_4$ देवेश ( for जगतां ) $T_1$ $G_3$ $M_4$ त्वयि सृष्टिर्; $T_{2,3}$ $G_1$ तथा पासि; $G_4$ तथा पाहि ( for तथा पाता ) — After line 109, $T_{2\ 3}$ $G_{1,4}$ ins

2** वासुदेवेश भो विष्णो त्वयि सृष्टिं जगत्पते ।

[ $T_3$ वासुदेव नमो विष्णो ( for * ) ]

—( L. 110 ) $T_{1-3}$ $G_{1\ 3\ 4}$ $M_4$ स्थितिरूपोऽसि देवेश ( for * ) —( L 111 ) $D_6$ T $G_{1\ 3-5}$ नित्यं ( for तुभ्यं ). — Before line 114, $T_4$ ins वैशंपायन· —( L 114 ) $T_{2\ 3}$ $G_4$ प्रणतिं ( for प्रणामं ). —( L 116 ) $M_{1-3}$ तस्मात् ( for सर्वे ). $G_4$ प्रणतिं ( for प्रणाम ). —( L. 117 ) $D_6$ T $G_{1,3-5}$ $M_4$ -वदना ( for -मनसो ) —( L 118 ) $D_6$ $T_2$ ऽस्मान् ( for ऽस्मिन् ) —( L 119 ) $D_6$ T $G_{1\ 3-5}$ $M_{3\ 4}$ वयं ( for सुखं ). —( L 120 ) $D_6$ $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ [उ]क्त्वा तं ( for मत्वा ) —( L 121 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ अच्युतम् ( for अव्ययम् )

Colophon — *Mention of the Epic* $T_3$ — *Adhy name* $T_{1-3}$ $G_{3,4}$ कृष्णस्तुति·, $M_{1-3}$ नरकवध.. — *Adhy. no* · $T_{1\ 2}$ $G_{3\ 4}$ M 129, $T_3$ 137; $T_4$ 122, $G_1$ 131; $G_5$ 132

( L 123 ) T $G_{1\ 3-5}$ $M_4$ उप ( for परि- ) —( L. 125 ) $D_6$ $T_4$ चाकरोत् ( for अ° ). —( L. 126 ) $D_6$ $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ ऽहं ( for ऽस्मि ). $D_6$ $T_{1\ 3\ 4}$ $G_{1,3-5}$ -पौरुषम्, $M_4$ -मानवम् ( for -पूरुषम् ) —( L 128 ) $T_1$ स्थास्यति; $G_4$ स्वपिति ( for स्वप्स्यति ) $M_{1-3}$ निर्भयम् ( for माचिरम् ). —( L. 129 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ माचिरम् ( for दानवम् ). —( L. 130 ) $D_6$ T $G_{1\ 3-5}$ $M_4$ हत्वा ( for विप्रा ) $D_6$ $T_1$ $G_{1\ 3-5}$ महासुरम् ( for च दानवम् ) —( L 131 ) $T_{1,3\ 4}$ $G_{1\ 3\ 5}$ $M_4$ वधिष्यामि ( for हनि° ) —( L. 132 ) $M_{1-3}$ आरभन्तां ( for °भ्यन्तां ). —( L. 133 ) $T_1$ $M_{1-3}$ देवतास् ( for याद-

जग्मुः शिष्यैर्महाराज बदरीं तां तपोधनाः ॥ [ 140 ]
गतेषु तेषु विप्रेषु सहशिष्येषु यादवाः ।
विस्मयं परमं गत्वा यथायोगमुपासते ॥

No 28

D6 S ins after 91 52 : D3 after 91. 52^cd :

शङ्खं प्राध्मापयामास शार्ङ्गधन्वा गदाधरः ॥
तस्य शङ्खरवं श्रुत्वा नरको युद्धदुर्मदः ।
धनुरादाय विस्फार्य नादेन महता तदा ।
नादयन्रोदसी यायाद्युद्धाय नरको बली ॥
केशवं पुरतो दृष्ट्वा गदिनं शार्ङ्गिणं तथा । [ 5 ]
उवाच नरको दैत्यः को भवान्किमिहागतः ।
दैत्येन्द्रो नरकः स्रष्टा जेता शक्रस्य संयुगे ॥
कोऽयं पक्षी स्थितः पार्श्वे कैषा ते वद सांप्रतम् ।
एनां ग्रहीतुमिच्छामि जानीयां यदि सांप्रतम् ॥
एवमुक्तो जगन्नाथः प्रहस्य सुचिरं तदा । [ 10 ]
आलोक्य सत्यभामां तु वचनं चेदमब्रवीत् ॥
वासुदेवोऽस्मि दैत्येन्द्र यदि ते श्रुतिमागतः ।
एषा सत्राजितः पुत्री भार्या मम यवीयसी ॥
एष तार्क्ष्यो गरुत्मांस्तु वाहनं मम दैत्यप ।
त्वां हन्तुमिह संप्राप्तो वदामि किमतः परम् ॥ [ 15 ]
श्रुत्वैतद्दानवो घोरो विहस्य सुचिरं तदा ।
वासुदेवोऽसि संप्राप्तो मां हन्तुं किल यादव ॥
दिष्ट्या संप्राप्तवानद्य चिन्तनीयः सदा मया ।
कदासौ दृश्यते युद्धे हनिष्यामीति मे मतिः ॥
क्षणं तिष्ठ यदुश्रेष्ठ कुरु युद्धं यदीच्छसि । [ 20 ]
हत्वा त्वामद्य संप्राप्तमानयामि पुरं मम ॥
एनां पद्मपलाशाक्षीं युध्यतां किं विलम्बसे ।
इच्छातः प्रहरस्वेति प्रोवाच यदुनन्दनः ॥

No 28A

D3 6 T G1 3–5 M4 G(ed) ins. after 91. 55 M1–3 after 91. 53 :

शरैरनेकसाहस्रैर्जघान पुरुषोत्तमम् ॥
पुनः सप्ततिसाहस्रैर्बाणैर्निशितकोमलैः ।
गरुडं पोथयामास शराणां च परःशतैः ।
नाराचानां सहस्रेण विव्याध यदुनन्दनम् ॥
किंचिदार्तमना विष्णुर्हृष्टोऽयं दानवोत्तमः । [ 5 ]

वास ) —( L. 134 ) D6 T1 4 G3–5 M4 तथा प्रीता ; T2 3 G1 तदा प्रीताः ( for तदा देवे ). —( L 137 ) T1 भूयो ह्यात्म- ( for भूयाद्भूत- ) —( L 139 ) D6 T G1 3–5 M4 जनार्दनम् ( for च केशवम् ) —( L 140 ) T1–3 G1 3–5 M4 ते ( for तां ) D6 बदरी ते तपोवनम् ( for ^b )

28

( L 1 ) D3 T1 G1–3 5 M3 शङ्खं प्रध्मापयामास, T2 3 M4 शङ्खमाध्मा° ( for ^a ) D6 T4 जनार्दनः ( for गदाधरः ). G2 om lines 2–23 —( L 2 ) T G1 3–5 M4 -ध्वनिं, D3 -स्वनं ( for -रवं ) —( L 3 ) D3 विस्फूर्ज्य ( for विस्फार्य ) —( L 4 ) D3 सोऽयाद् ( for यायाद् ) —( L 5 ) D5 पुरुषं ( for पुरतो ) D3 6 शार्ङ्गिणं गदिनं तथा ( for ^b ) —( L 7 ) T G1, 3 5 M2 4 पृष्टा ( for स्रष्टा ). D6 समरे ( for संयुगे ) D3 नरकोऽहं दैत्यपतिर्जित्वा शक्र च संगरे —( L 8 ) D3 G4 केषां, D6 केय ( for कैषा ) —( L 9 ) D3 एतां ( for एनां ) —( L 10 ) T2 G1 5 M4 जगन्नाथ ( for °थ ) —( L 11 ) D3 G4 ताम् ( for तु ) D3 G4 इदं वचनमब्रवीत् ( for ^b ) —( L 12 ) D6 T2–4 G1 4 5 श्रोत्रम्, T1 स्मृतिम् ( for श्रुतिम् ) —( L 13 ) T1–3 G4 M4 यशस्विनी ( for यवीयसी ) T4 G1 3. 5 मम भार्या यशस्विनी ( for ^b ) —( L. 16 ) D3 वाक्यं ( for घोरो ) T1–3 G1 3–5 M4 श्रुत्वैतद्दानववरो ( for ^a ) T4 प्रहस्य ( for वि° ) D3 T4 G4 रुचिरं ( for सु° ) —( L 17 ) D3 G4 मां हन्तुं यादव किल ( for ^b ). —( L 20 ) D3 चिरं ( for क्षणं ) —( L 21 ) D3 तव, G1 5 पुनः ( for मम ). —( L 22 ) G3 -विशालाक्षीं ( for पलाशाक्षीं ) D6 M1–3 विलम्बसि ( for °से ). — After line 22, T1 G3 M4 ins

1** पुरः संयति साहस्रैर्बाणैर्निशितकोमलैः ।

—( L 23 ) D3 उत्थाय ( for इच्छात ) T G1 3–5 M4 प्रोवाच मधुसूदनः ( T4 °सत्तमम् ) ( for ^b ) — After line 23, D3 6 G4 M1–3 read and T4 repeats 91 54–55.

28 A

( L 1 ) G(ed) शरैरेकसहस्रेण ( for ^a ) —( L 2 ) T3 -तोमरैः ( for -कोमलै ) —( L. 3 ) D3 वेधयामास ( for

इति संचिन्त्य मनसा शरैर्विव्याध पञ्चभिः ।
अष्टाभिर्दानवं विष्णुर्नवभिश्च शितैः शरैः ॥
दानवोऽपि महाराज विव्याध निशितैः शरैः ॥
वासुदेवं महाराज सर्वलोकगुरुं हरिम् ॥
षड्भिर्विव्याध नाराचैर्दानवं देवकीसुतः । [ 10 ]
दानवोऽपि जगन्नाथं शरैर्विव्याध सप्तभिः ॥
तौ तु युद्धं महाघोरं चक्रतुर्युद्धलालसौ ।
यथा देवासुरे युद्धे पुरा शम्बरवासवौ ।
यथा युद्धं महाघोरं रामरावणयोर्भुवि ॥
ततः क्रुद्धो हृषीकेशः शरेण नतपर्वणा । [ 15 ]
ध्वजं विव्याध राजेन्द्र नरकस्य दुरात्मनः ॥
तमन्तरे शरै राजन्विव्याध युधि दानवः ।
विव्याध गरुडं राजन्नाराचेन महामतिः ॥
विव्यधे गरुडस्तस्य नाराचेन समाहतः ।
सुस्राव रुधिरं घोरं वासुदेवस्य पश्यतः । [ 20 ]
पक्षे समाहतः पक्षी चचाल च पुनः पुनः ॥
ततो रोषसमाविष्टो गरुडः पक्षिपुंगवः ।
पक्षेण पक्षिणां श्रेष्ठः पोथयामास दानवम् ॥
आहत्य सहसा भूय आजघ्ने दृढमुष्टिना ।
ततश्चचाल नरको नरकेणेव किल्बिषी ॥ [ 25 ]
ततः सज्यं धनुः कृत्वा व्याविध्य च पुनः पुनः ।
दीर्घेण निशितेनाजौ नाराचेन महाबलः ।
आकर्णपूर्णमाकृष्य जघान हरिमीश्वरम् ॥
नाराचः स च राजेन्द्र ललाटे प्रापतत्तदा ।
चचाल च जगन्नाथस्तोत्रार्दित इव द्विपः ॥ [ 30 ]
विसंज्ञश्च ततो भूत्वा रथोपस्थ उपाविशत् ॥
सत्यभामा च तं दृष्ट्वा वासुदेवं तथागतम् ।
चामरैर्वीजयामास पक्षाभ्यां पक्षिपुंगवः ॥
आश्वस्तोऽथ हृषीकेशः संज्ञां प्राप्य च केशवः ।
धनुस्तस्यै ततो दत्त्वा शार्ङ्गं भारसहं रणे । [ 35 ]
युध्यस्व नरकं देवि श्रान्तोऽस्मि युधि पीडितः ॥
एवमुक्ता तदा देवी सत्या सत्यवतां वरा ।
तदा युद्धं समारेभे नरकेण दुरात्मना ॥
नाराचैरर्धचन्द्रैश्च भल्लैः सुनिशितैरपि ।
जघान दानवं सत्या महिषी शार्ङ्गधन्वनः । [ 40 ]
बबाध दानवं सत्या सत्यं सत्येतरं यथा ॥
युध्यन्तीं तां तथा दृष्ट्वा नरको दानवोत्तमः ।
स्तनमध्येऽथ तस्यास्तु समाजघ्ने शरोत्तमैः ।

---

पोथ° ) $M_3$ परं शतैः ( for पर शतैः ) —( L. 4 ) $D_6$ मधुसूदनम्, $D_3$ $G_4$ यदुनन्दनः ( for °नम् ). —( L. 5 ) $D_3$ कृष्णो ( for विष्णुर् ). —( L 6 ) $T_1$ $G_{3.4}$ निश्चित्य ( for संचिन्त्य ) —( L. 7 ) $D_3$ दशभिश् ( for नव° ). — $D_{3.6}$ $T_{3.4}$ $G_{3-5}$ om. ( hapl ) line 8 —( L 9 ) $D_6$ T $G_{1.3-5}$ $M_4$ महाबाहुं ( for °राज ) — $M_4$ om ( hapl. ) lines $12^b$–$14^a$. —( L 13 ) $D_3$ पुरा ( for यथा ) $M_{1-3}$ तदा ( for पुरा ). $D_3$ यथा नरकवासवौ ( for $^b$ ) —( L 14 ) $T_4$ यथा घोरं महायुद्धं ( for $^a$ ) $D_3$ यथा, $D_6$ $M_{1-3}$ तदा; $T_{1.4}$ $G_{3.5}$ तथा, $T_{2.3}$ $G_4$ $M_4$ इव ( for भुवि ). —( L 16 ) $D_3$ $G_4$ शिरो ( for ध्वजं ) — $T_4$ om line 17. —( L 17 ) $D_3$ अम्बरे ( for अन्तरे ) $D_6$ चिच्छेद ( for विव्याध ) $T_{1-3}$ $G_{1.4.5}$ माधवम् ( for दानव ) $D_3$ नाराचेन महामतिम् ( for $^b$ ).
— After line 17, $D_3$ ins .

1** विद्धोऽथ गरुडस्तेन नरकेण दुरात्मना ।

— $T_4$ om. lines 18–21 $D_3$ om lines 18–19. —( L 19 ) $T_{1.2}$ $G_{1.3-5}$ $M_4$ विव्याध ( for विव्यधे ). $T_3$ समन्तत ( for समाहतः ). —( L. 20 ) $D_3$ ववाम ( for सुस्राव ) —( L 21 ) $D_3$ पक्षेण वाहनत्पक्षी; $T_1$ पक्षेण महता पक्षी ( for $^a$ ). —( L 22 ) $D_3$ -समायुक्तो ( for °विष्टो ). $M_{1-3}$ गरुडः पततां वर ( for $^b$ ). —( L 23 ) $D_3$ पक्षाभ्यां ( for पक्षेण ) $D_3$ योधयायास ( for पोथ° ) —( L 24 ) $D_6$ $T_{3.4}$ $G_{1.5}$ $M_3$ तरसा ( for सहसा ) $D_3$ आकृष्टो दुष्टमुष्टिना ( for $^b$ ) — $T_4$ om line 25 —( L 25 ) $D_3$ $G_4$ नारक्य ( for नरकेण ) —( L 26 ) $D_3$ तत स सुधनुर्नत्वा ( for $^a$ ) $D_{3.6}$ $T_4$ $G_{3.4}$ विव्याध ( for व्याविध्य ) $T_{1-3}$ $G_{1.5}$ $M_4$ विव्याध युधि दानव ( for $^b$ ) —( L 28 ) $G_5$ संकृष्य ( for आ° ). $T_4$ $G_5$ $M_4$ जघान युधि केशवम् ( for $^b$ ) —( L. 29 ) $T_4$ नारायणस्य राजेन्द्र ललाटे प्रत्यदृश्यत —( L 30 ) $D_3$ $G_4$ क्षणं नाथस् ( for जगन्नाथस् ) —( L. 31 ) $T_2$ निःसंज्ञश् ( for वि° ) $T_1$ विसंज्ञवत्तदा भूत्वा ( for $^a$ ). $G_5$ om. ( hapl ) lines $31^b$–$35^a$ ( L 34 ) $T_3$ $G_{1.4}$ अथ स्वस्थो ( for आश्वस्तोऽथ ). —( L 35 ) $G_5$ भामा- ( for भार ) $T_4$ शार्ङ्गं भारसहस्रकम् ( for $^b$ ) — $G_3$ om ( hapl ) lines $37^b$–$41^a$ —( L 39 ) $T_4$ शरैः ( for अपि ) —( L 40 ) $T_4$ विव्याध ( for जघान ). $M_{1.2}$ om. ( hapl ) lines $40^b$–$41^a$ —( L. 41 ) $D_3$ विव्याध

बाह्वन्तरे तथा षड्भिः पार्श्वे सप्तभिराशुगैः ॥
सत्यभामा ततः क्रुद्धा बाणेन निशितेन च । [ 45 ]
धनुश्चिच्छेद तस्यापि नरकस्य दुरात्मनः ॥
ध्वजं छत्रं तथा यष्टिं रथमश्वांस्तथैव च ।
एतान्द्विधाकरोत्सर्वान्सत्यभामा बलान्विता ॥
पुनरन्यन्महच्चापमाददे दानवोत्तमः ।
तच्चापि चिच्छिदे चापं महिषी शार्ङ्गधन्वनः । [ 50 ]
पुनरन्यत्समादत्ते द्विधा तच्चापि साकरोत् ॥
ततः स दानवः क्रुद्धो गदां सुनिशितां तदा ।
आदाय प्राहिणोत्तस्यै वासुदेवस्य पश्यतः ॥
तामापतन्तीं संप्रेक्ष्य तिलशः साकरोत्तदा ।
ततः शक्तिं समादाय तस्यै दातुं प्रचक्रमे ॥ [ 55 ]
सत्यभामाथ सा देवी केशवप्राणवल्लभा ।
तां चापि तिलशः कृत्वा सस्वरं प्रजहास च ॥
ततः परिघमादाय व्याविध्य नरकस्तदा ।
प्राहिणोच्च तदा तस्यै सान्तरे निजघान ह ।
शरैश्च निशितै राजन्सत्या विव्याध दानवम् ॥ [ 60 ]
तुष्टुवुश्च तदा सत्यां केशवप्राणवल्लभाम् ।
दिवि स्थिता देवगणा ऋषयश्च तथामलाः ॥
सारथेश्च शिरः कायाच्छरेण निरकृन्तत ।
शक्तिर्भगवतो देवी वासुदेवस्य धीमतः ॥
तत्र प्रीतो महाविष्णुः परिष्वज्य च तां विभुः । [ 65 ]
श्रमाम्भश्चापि तस्यास्तु मार्जयामास केशवः ॥
तस्यास्तु कण्ठाभरणं ददौ प्रीतो जनार्दनः ।
न दत्तमथ रुक्मिण्या दत्तं तस्या महात्मना ।
महार्घं लोकविख्यातं हृतं बलिमखे तदा ॥
सत्यभामा तदादाय भूषणं लोकविश्रुतम् । [ 70 ]
बध्वा कण्ठे तदा देवी रराज बहुशः शुभा ॥
असकृद्याचमानापि विहारे शयने तथा ।
न हि लब्धवती पूर्वं तदा लब्धं जनार्दनात् ॥
स्थीयतां सांप्रतं देवि श्रमार्तासि वरानने ।
इत्युक्त्वा धनुरादाय युयुधे दानवं रणे ॥ [ 75 ]
नरको रथमारुह्य सध्वजं सपताकिनम् ।
आदाय परमं चापं बाणैर्विव्याध चाष्टभिः ॥
स वासुदेवमाविध्य सत्यां च दशभिः शरैः ।
गरुडं पञ्चविंशत्या वासुदेवं च सप्तभिः ॥

---

( for बबाध ) $D_6$ T $G_{1\ 4\ 5}$ $M_4$ पुनर्बबाधे सा सत्या ( for $^a$ ) $D_3$ सत्यावरं, $G_3$ सत्यवरं ; $G_4$ सत्यतरं ( for सत्ये° ) — $G_3$ om lines 44-45 — ( L 44 ) $D_6$ $T_4$ स्तनान्तरे ( for बाह्व° ) — ( L 46 ) T $G_{1\ 5}$ $M_{1\ 4}$ [आ]शु ( for [अ]पि ) $G_1$ महात्मन ( for दुरा° ) — ( L 47 ) $D_3$ $G_4$ षड्भी ( for यष्टिं ). — ( L. 51 ) $D_3$ $G_4$ समादत्त, $D_6$ T $G_{1\ 3\ 5}$ $M_4$ °धत्त ; $M_{1-3}$ °धत्ते ( for °दत्ते ) — ( L 52 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ पुनः ( for ततः ) $D_3$ ततो हि दानवसुतो ( for $^a$ ) $D_3$ $G_4$ सुनियतां ( for °शितां ). — ( L 54 ) $D_3$ $G_4$ संलभ्य, $T_{1-3}$ $G_{1\ 3\ 5}$ $M_4$ क्षिप्रं तु ( for संप्रेक्ष्य ) — ( L 56 ) $M_4$ केवलं ( for केशव- ). — $D_3$ om lines 57-62 — ( L 59 ) $D_6$ $T_4$ सान्तरा निपपात ह ( for $^b$ ) — ( L 60 ) $D_6$ T $G_{1.\ 3-5}$ $M_4$ विविधै ( for निशितै ) — ( L 62 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ [अ]पि हर्षिताः ( for तथामला ) — ( L 63 ) $D_3$ $M_{1-3}$ शरेण नतपर्वणा ( for $^b$ ) — ( L 64 ) $D_6$ $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ पश्यतः ( for धीमत ). — ( L 65 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ ऽथ तां ( $M_4$ यां ) वीक्ष्य ( for महाविष्णु ) $D_6$ $T_4$ $M_{1-3}$ [अ]थ तां, $T_1$ $G_{3-5}$ $M_4$ महा- ( for च तां ) — For line 65, $D_3$ subst

2** महाविष्णु सस्वजे ता सत्यभामां प्रियां तदा ।

— ( L 66 ) $T_2$ श्रमाम्बु ( for श्रमाम्भश् ). $D_3$ ददावपि च तस्यास्तु ( for $^a$ ) $D_{3\ 6}$ $T_4$ $M_{1-3}$ परिमृज्य जनार्दन ; $T_1$ $G_{1\ 3\ 5}$ $M_4$ परिमृज्याथ केशव ( for $^b$ ) — ( L 67 ) $D_6$ T $G_{1\ 2-5}$ $M_4$ कर्ण( $D_6$ $T_4$ कण्ठ )स्याभरणं तस्यै ( for $^a$ ). $T_{1\ 3}$ $G_{1\ 3-5}$ M तदा हरि. ( for जनार्दन ) $D_6$ ददौ प्रीतमना हरि ( for $^b$ ) — ( L 68 ) $D_3$ यच्च ( for अथ ) $D_6$ T $G_{1\ 3-5}$ $M_{1\ 4}$ तस्यै ( for तस्या ) — ( L 69 ) $G_3$ महार्थं ; $M_2$ अनर्घं ( for महार्घ ) $D_3$ पुरा ( for तदा ) — ( L 70 ) $M_3$ om ( hapl ) lines $70^b$-$75^a$ $M_{1\ 2}$ -पूजितम् ( for -विश्रु° ) — ( L 71 ) $T_1$ $G_3$ कर्णे ( for कण्ठे ) $D_6$ महा- ( for तदा ) $D_3$ तथा ( for शुभा ) — ( L 72 ) $D_3$ द्योतमाना ( for याच° ). $T_{2-4}$ $G_{1\ 5}$ $M_4$ विहार- ( for °रे ) $D_3$ $G_4$ ऽपि वा, $D_6$ विभो, T $G_{1\ 3-5}$ $M_4$ रता, G(ed) रतौ ( for तथा ) — ( L 73 ) $D_3$ $G_4$ तत्तु ; $D_6$ देवी ( for पूर्वं ). $D_3$ $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ लब्ध्वा ( for लब्ध ) $D_3$ $G_4$ जनार्दनम्. — ( L 77 ) $D_6$ T $G_{1\ 3.\ 5}$ चापर, $M_4$ च वरं ( for परम ). $T_{2-4}$ $G_{1\ 5}$ $M_4$ शरैर् ( for बाणैर् ) $D_{3\ 6}$ $T_{1\ 3\ 4}$ $G_{1\ 3\ 5}$ M सप्तभि ( for चाष्टभि. ) — $D_3$ reads line 78 twice. — ( L 78 ) $D_{3\ 6}$ T $G_{1.\ 3\ 5}$ $M_4$ वासुदेवं समाविध्य ( $D_6$ °हत्य ) ( for $^a$ ) — ( L 79 ) $D_3$ $G_4$ पञ्चभि. ( for सप्तभि ) — ( L 80 ) $D_6$ अथ नारायणो देवः ( for $^a$ ) $T_{1-3}$ $G_{1\ 3-5}$

अथो जगत्पतिर्देवः क्रुद्धः संप्रति दानवे । [ 80 ]
आदाय निशितं बाणं धनुश्चिच्छेद तस्य हि ।
रथं च सारथिं चापि जघान यदुनन्दनः ॥
ततः क्रुद्धो रथात्तस्मादाप्लुत्य नरकस्तदा ।
गदामादाय गोविन्दं जघानाविध्य वक्षसि ।
गरुडं पोथयमास तलेन नरकस्तदा ॥ [ 85 ]
पुनः परिघमादाय वासुदेवं समभ्ययात् ।
तदन्तरेऽथ कृष्णेन द्विधाभूतमभज्यत ॥
ततः शिलाः समादाय प्राहिणोद्यदुनन्दनम् ।
ताश्च सर्वाः समाजघ्ने शरैः शार्ङ्गविनिःसृतैः ॥
शैलैर्वृक्षैस्तथा पाशैर्गदापरिघपट्टसैः । [ 90 ]
भिण्डिपालैस्तथा खड्गैः परशुप्रासतोमरैः ॥
तद्युद्धमभवद्घोरं नरके दानवेश्वरे ॥
अथ रोषविरूपाक्षः केशवः केशिसूदनः ।
हन्तुमैच्छज्जगन्नाथो नरकं दानवेश्वरम् ॥
आयुधं लोकविख्यातं देवर्षिगणपूजितम् । [ 95 ]
दैत्यशोणितदिग्धाङ्गं दैत्यासृक्पानलालसम् ॥
आदाय निशितं चक्रं दैत्यचक्रविनाशनम् ।
नरकं साधुविद्विष्टं द्विष्टं मुनिगणैः सदा ।
प्रदीप्तचक्रं चक्रेण क्षिप्तेन निशितेन च ॥
नरकस्य महाबाहुर्हृदयं लोकपूजितः । [ 100 ]
द्विधा चिच्छेद लोकेशः सर्वलोकस्य पश्यतः ॥

No 29

K Ñ$_{2.3}$ V B D T G $M_4$ ins after adhy. 92 Ñ$_1$ after App. I ( No. 42 )

जनमेजय उवाच ।

प्रादुर्भावे मुनिश्रेष्ठ माथुरे चरितं शुभम् ।
शृण्वन्वै नाधिगच्छामि तृप्तिं कृष्णस्य धीमतः ॥
द्वारकायां निवसतः कृतदारस्य यद्गुणम् ।
चरितं ब्रूहि कृष्णस्य सर्वं हि विदितं तव ॥

वैशंपायन उवाच ।

जनमेजय कृष्णस्य कृतदारस्य भारत । [ 5 ]
निबोध चरितं चित्रं तस्यैव सदृशं प्रभोः ॥

---

$M_4$ क्रुद्धस्तं दानवं प्रति, $M_{1-3}$ क्रुद्धस्तं प्रति दानवः ( $M_1$ °वं ) ( for $^b$ ) — $G_3$ om lines 81–85. —(L 81) $T_{1-3}$ $G_{1, 4, 5}$ $M_{2, 4}$ आदाय निशितैर्बाणैर् ( for $^a$ ) — ( L 82 ) $D_3$ $G_4$ सरथं ( for रथं च ) — ( L. 83 ) $D_3$ $G_4$ उत्प्लुत्य ( for आ° ) — ( L 84 ) $D_6$ [आ]हत्य ( for [आ]विध्य ). — ( L 86 ) $T_2$ तमभ्ययात् ( for स° ). — ( L 87 ) $D_3$ द्विभूतं परिघ महत् ( for $^b$ ) — ( L 88 ) T $G_{1, 3, 5}$ M शिलां ( for शिला ) $D_3$ $T_2$ -नन्दने ( for °नम् ). — ( L 89 ) $D_3$ T $G_{1, 3-5}$ $M_4$ तां च कृष्ण ( for ताश्च सर्वाः ). $D_3$ शरै. सुनिशितैस्तदा ( for $^b$ ). — ( L 90 ) $T_1$ शरैर् ( for शैलैर् ) — ( 91 ) $D_3$ $G_4$ भिण्डमालैस् ( for भिण्डिपा° ) — ( L 92 ) $T_{2, 3}$ $G_{1, 3-5}$ $M_4$ नरके दानवोत्तमे ( for $^b$ ) — After line 92, G(ed.) ins ·

3** शस्त्रपातं महाघातं नरकेण महात्मना ।
मुहूर्तं योधयामास नरकं मधुसूदन ॥

— ( L 93 ) G(ed) रोषात् ( for रोष- ). —( L 94 ) $D_6$ $T_4$ $G_{1, 3, 5}$ नरक दानवोत्तमम् ( for $^b$ ). — ( L 95 ) $G_3$ आयसं ( for आयुधं ). $D_6$ महर्षि- ( for देवर्षि ). — ( L. 96 ) $D_3$ दैत्यशोणितमानसम् ( for $^b$ ). — ( L 98 ) $G_4$ वन्द्यो ( for द्विष्टं ) —(L 99) $T_{1-3}$ $G_{1, 3, 5}$ $M_4$ प्रतिचिक्षेप चक्रेशश् ( for $^a$ ) $D_6$ $T_4$ दीप्तेन, $T_{1-3}$ $G_{1, 3, 5}$ $M_4$ चक्रेण ( for क्षिप्तेन ) G(ed) उद्दिश्य प्रतिचिक्षेप चक्रेशस्ताम्रलोचनः. — ( L 100 ) $T_4$ बिभेदाशु ( for महाबाहुर् ) $D_3$ विश्रुतम्; $D_6$ $T_{1-3}$ $G_{1, 4, 5}$ $M_4$ दूषितम् ( for पूजित ) $T_4$ हृदयं कोपपूरित ( for $^b$ ) — $T_4$ $G_3$ om line 101 — ( L 101) $M_{1-3}$ बिभेद (for चिच्छेद) $D_{3, 6}$ द्विधा बिभेद देवेशः ( for $^a$ )

29

$M_4$ om the ref $T_{1-3}$ $G_{1, 3-5}$ ins after the ref.: $M_4$ before line 1 G( ed ) after line 4

1** कथं देवो देवतरुं हृतवान्देवकीसुत ।
तद्वदाशु गुरो मह्यमविग्लानं कथं हरिः ॥

[ ( L 2 ) $G_4$ G( ed ) वदस्व ( for वदाशु ) $T_1$ $G_3$ G( ed.) अविग्लान ( for °ग्लान ) $G_4$ विविवत्ता कथा हरे. ( for $^b$ ). ]
— $T_{1-3}$ $G_{1, 3-5}$ $M_4$ om lines 1–11 — ( L 1 ) $V_1$ प्रादुर्भावं ( for °भावे ) Ñ$_1$ च हितं ( for चरितं ) — ( L. 2 ) Ñ$_1$ $V_2$ $B_{1, 2}$ $Ds_1$ $D_5$ शृण्वन्नैव, Ñ$_2$ $V_{1, 3}$ $B_3$ $D_6$ शृण्वानो न ( for शृण्वन्वै न ). $D_3$ शृण्वन्नैवाभिगच्छामि ( for $^a$ ). —( L. 3 ) $K_2$ $B_1$ ( marg ) $D_5$ $G_2$ सद्गुणम्, Ñ$_1$ $V_2$ B Dn $D_3$

प्राप्तदारो महातेजा वासुदेवः प्रतापवान् ।
रुक्मिण्या सहितो देव्या ययौ रैवतकं नृप ॥
उपवासावसानं हि रुक्मिण्याः प्रतिपूजयन् ।
तर्पयिष्यन्स्वयं विप्राञ्जगाम मधुसूदनः ॥ [ 10 ]
कुमाराः प्रययुस्तत्र पुत्रा भ्रातर एव च ।
प्रेषिता वासुदेवेन नारदस्याभ्यनुज्ञया ॥
षोडश स्त्रीसहस्राणि जग्मुरेव च धीमतः ।
ऋद्ध्या परमया राजन्विष्णोरेवानुरूपया ॥
ततस्तत्र द्विजातीनां कामान्प्रादादधोक्षजः । [ 15 ]
अर्थिनां धर्मनित्यानां बन्दिनामिष्टवादिनाम् ॥
कल्याणनामगोत्राणां महतां पुण्यकर्मणाम् ।
यौनैः श्रौतैश्च माखैश्च शुद्धानां कुरुनन्दन ॥
तर्पयित्वा द्विजान्कामैरिष्टैरिष्टः सतां हरिः ।
ज्ञातीन्संतर्पयामास यथार्हं धर्मवत्सलः ॥ [ 20 ]
उपवासावसाने च भगवान्सविशेषतः ।
बहु मेने प्रियां भार्यां रुक्मिणीं भीष्मकात्मजाम् ॥
वसतस्तस्य कृष्णस्य सदारस्यामितौजसः ।
सहासीनस्य रुक्मिण्या नारदोऽभ्याययौ मुनिः ॥
आगतं चाप्रमेयात्मा मुनिमिन्द्रानुजस्तदा । [ 25 ]
शास्त्रदृष्टेन विधिना अर्चयामास केशवः ॥
सोऽर्चितो वासुदेवेन मुनिरच्यर्यतमः सताम् ।
पारिजाततरोः पुष्पं ददौ कृष्णाय भारत ॥
तद्वृक्षराजकुसुमं रुक्मिण्याः प्रददौ हरिः ॥
पार्श्वस्था सा हि कृष्णस्य भोज्या नरवराभवत् ॥ [ 30 ]
प्रतिगृह्य तु तत्पुष्पं कामारणिरनिन्दिता ।
शिरस्यमलपत्राढ्यं ददौ कृष्णेङ्गितानुगा ॥
त्रैलोक्यरूपसर्वस्वं नारायणमनोहरा ।
शुशुभे तेन पुष्पेण द्विगुणं रुक्मिणी तदा ॥

---

$D_6$ षड्गुणम् ( for यद्गु° ) —( L 4 ) $D_2$ तत्सर्वं ( for सर्वं हि ). —( L 5 ) $D_8$ धीमत , $D_3$ यद्गुणम् ( for भारत ) —( L. 6 ) K $V_3$ $B_3$ $D_{s1}$ $D_{1\ 2\ 5}$ प्रभो , $Ñ_1$ $V_2$ $B_1$ विभो , $Ñ_2$ $V_1$ $D_{3.6}$ विभो. ( for प्रभो ) —( L 8 ) $D_3$ देवो ( for देव्या ) —( L 9 ) $K_4$ उपवासं वसानां च , $V_1$ B $D_8$ $D_{2\ 3\ 5\ 6}$ $T_4$ $G_2$ °सावसाने हि ( for [a] ) $K_4$ रुक्मिणी ( for °ण्या ). —( L 10 ) $D_3$ तर्पयित्वा ( for °यिष्यन् ) —( L 11 ) $Ñ_{1.2}$ $V_1$ $B_{1\ 3}$ $D_6$ च ( for प्र- ) $K_3$ $Ñ_1$ $B_2$ $D_5$ पुत्र- ( for पुत्रा ). — Before line 12, $T_{2\ 3}$ $G_{1\ 4\ 5}$ $M_4$ ins वैशंपायनः —( L 12 ) $K_3$ प्रेक्षिता , $D_2$ तर्पिता ( for प्रेषिता ). $Ñ_1$ वासुदेवस्य देवस्य ; $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ वासुदेवेन देवेन ( for [a] ) $Ñ_1$ नारदेन ( for °दस्य ) — $D_3$ om lines 13–14 —( L 16 ) $Ñ_1$ अर्थतां , $V_2$ अर्हाणां , $D_8$ सुखिनां ( for अर्थिनां ) $Ñ_2$ om line 16[b] $K_2$ $M_4$ कृतिनाम् ( for बन्दि° ). $K_1$ धर्मार्थविदुषां सताम् ; $K_4$ सदाचारवतां तथा , $Ñ_1$ कृतीनां सुष्टुवादिनाम् ( for [b] ) —( L 17 ) $V_1$ $B_{2.3}$ $D_5$ -कर्मिणाम् ( for -कर्म° ) —( L 18 ) $K_3$ $Ñ_2$ $B_{2.3}$ $D_{n1}$ $D_8$ $D_{4\ 5}$ मौखैश्च , $V_1$ $D_2$ सौख्यैश्च , $D_1$ मोक्षैश्च ( for माखैश्च ). $K_1$ यौनैः श्रौत्रैश्च मौख्यैश्च , $K_2$ $V_3$ व्रतैः ( $V_3$ दानैः ) श्राद्धैश्च मुख्यैश्च , $K_4$ पूतैः श्रौतैश्च मौखैश्च , $Ñ_1$ corrupt , $V_2$ दानैः श्रौतैश्च वै माखैः , $D_3$ यौनैः शौचैश्च मौनैश्च , $D_6$ $T_{1\ 2}$ $G_{1.3\ 4}$ $M_4$ दिनैः ( $D_6$ दानैः , $T_2$ $G_1$ दीनैः , $G_4$ $M_4$ दिनैः ) श्राद्धैश्च सौख्यैश्च , $T_3$ दिवैः श्राद्धैश्च माखैश्च ( for [a] ) $K_4$ युक्तां तान् ( for शुद्धानाम् ) —( L 19 ) $K_2$ इष्टवतां , $K_4$ $V_3$ इष्टः स तान् ( for इष्टः सतां ). $B_1$ $T_1$ $G_3$ गतिः ( for हरिः ). —( L. 20 ) $D_3$ ज्ञाती सं- , $T_4$ ज्ञाति तं ( for ज्ञातीन्सं- ) $D_{2.3}$ यथावद् ( for °र्हं ) $T_{1\ 4}$ $G_3$ भक्त- ( for धर्म- ) —( L 21 ) $G_3$ उपवासविधाने च ( for [a] ) $T_{2\ 3}$ $G_{1\ 4}$ भगवान्देवकीसुतः ( for [b] ) — After line 21, $D_6$ $T_{1.2}$ $G_{1\ 3-5}$ $M_4$ ins

2** वैशंपायन उवाच ।
कदाचिदथ रुक्मिण्या वसन्गेहे जनार्दनः ।

— Before line 22, $T_3$ ins वैशंपायनः —( L 23 ) $K_2$ $V_1$ $B_1$ $D_{n1}$ $D_5$ ( marg ) तत्र ( for तस्य ) —( L 24 ) B $D_6$ सुखासीनस्य ( for सहा° ) $Ñ_2$ $V_2$ $B_{1.3}$ $D_6$ नारदोऽभ्यागमत्ततः ( for [b] ) —( L 25 ) $K_2$ $D_5$ तमप्रमेयात्मा ( for चाप्र° ) —( L 26 ) $B_1$ ( marg as above ) -पूतेन ( for -दृष्टेन ) $Ñ_1$ सर्वशस्त्रभृतां वरः ( for [b] ) —( L 27 ) $D_2$ अर्घ्यतम ( for अर्च्य° ) —( L 28 ) $G_5$ वै तदा ( for भारत ) —( L 29 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ पारिजात- ( for वृक्षराज- ) $V_3$ रुक्मिण्यां ; $G_4$ °ण्यै ( for °ण्याः ) —( L 30 ) $D_3$ भोज्या नारी- , $D_5$ ( by corr on marg ) भैमी नर- ; $D_6$ भोजा नर- ; $T_{2\ 3}$ $G_{1\ 4\ 5}$ $M_4$ भोजनारी- , $G_8$ भोगनारी- ( for भोज्या नर- ) $D_{1\ 2}$ भीष्मकस्यात्मजाभवत् ; $G_2$ सदारस्यामितौजसः ( for [b] ) —( L 31 ) $Ñ_2$ $V_1$ $B_{1\ 3}$ $D_{3\ 6}$ ततः पुष्पं ; $V_2$ तु तत्सर्वं ( for तु तत्पुष्पं ) $D_2$ प्रगृह्य च ततः पुष्पं ( for [a] ) —( L 32 ) $Ñ_1$ $V_1$ $B_{1\ 3}$ $D_{1\ 6}$ $T_4$ -पत्राक्षी , $D_4$ -मध्वाढ्य ( for -पत्राढ्यं ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ शिरस्यम्बुजपत्राक्षी ( for [a] ) $D_3$ ददौ कृष्णे हितानुगा , $M_4$ ददौ कृष्णे नितान्तगा ( for [b] ) —( L. 33 ) $G_2$ त्रैलोक्यानन्दरूपा सा ( for [a] ).

तां नारदस्तथोवाच मुनिर्ब्रह्मसुतस्तदा । [ 35 ]
तवैवौपयिकं पुष्पमेकं देवि पतिव्रते ॥
अलंकृतं पुष्पमेतत्संसर्गात्तव सर्वथा ।
अत्यर्हा च मता मे त्वमेतत्पुष्पं धृतव्रते ॥
कल्याणगुणसंपन्ने सततं भर्तृवत्सले ।
अम्लानमेतत्सततं पुष्पं भवति कामिनि ॥ [ 40 ]
संवत्सरपरं कालं कालज्ञे गुणसंमते ।
ईप्सितानपि गन्धांश्च ददाति वदतां वरे ॥
शीतोष्णे चेप्सिते देवि पुष्पमेतत्प्रयच्छति ।
स्रवत्यपि रसान्देवि मनसा काङ्क्षितान्वरान् ॥
सेव्यमानं च सौभाग्यं ददाति वरवर्णिनि । [ 45 ]
स्रवत्यपि तथा गन्धानीप्सितान्प्रीतिवर्धनान् ॥

यानि यानि च पुष्पाणि त्वं देव्यभिलषिष्यसि ।
कुसुमं वृक्षराजस्य तानि तानि प्रदास्यति ॥
एतदेव भगाधानं धर्मिष्ठे धर्मदं तथा ।
मति च नाशुभे धत्ते धार्यमाणं सदा शुभे ॥ [ 50 ]
यद्यदिच्छसि वर्णं च तत्सर्वं धारयिष्यति ।
स्वल्पं वा यदि वा स्थूलं छन्दतस्ते भविष्यति ॥
अनिष्टगन्धहरणमेतत्सद्गन्धवर्धनम् ।
प्रदीपकर्म रात्रौ च करोति कमलेक्षणे ॥
संतानकस्रजो मालां पुष्पवस्त्रादि वाच्युतम् । [ 55 ]
पुष्पमण्डपमुख्यानि चिन्तितेन प्रदास्यति ॥
बुभुक्षा वा पिपासा वा ग्लानिर्वाप्यथ वा जरा ।
देव्येतद्धारयन्त्यास्ते स्वच्छन्देन भविष्यति ॥

---

$B_3$ $D_{2\,3}$ -मनोरमा ( for °हरा ) — ( L 34 ) $K_{1\,3\,4}$ $\tilde{N}_{1\,2}$ V $B_2$ Dn $D_{1-4}$ $T_{1\,2\,4}$ G $M_4$ देव- ( for तेन ) $K_{1\,2}$ भीष्मकी, $K_{3.4}$ $\tilde{N}_{1\,2}$ $V_{1\,3}$ B D T $G_2$ भैष्मकी ( for रुक्मिणी ) $V_2$ भैष्मिकी द्विगुणं तदा ( for $^b$ ) — ( L 35 ) $G_2$ त्वथ ; $G_3$ तदा ( for तथा ) $\tilde{N}_{1\,2}$ $V_1$ $B_{1\,3}$ $D_{2\,6}$ नारदस्तामुवाचाथ ( for $^a$ ) $T_{1-3}$ $G_{1\,3-5}$ $M_4$ मुनिर्ब्रह्मविदां वरः ( for $^b$ ) — ( L 36 ) $K_3$ $Dn_1$ $G_4$ इदं, $D_6$ $T_1$ $G_{2\,3}$ एतद् ( for एकं ) $T_{2\,3}$ $G_1$ एतद्देवि वरानने ( for $^b$ ) — ( L. 37 ) $B_1$ एकं ( for एतत् ). $Dn_1$ संपर्काद् ( for संसर्गाद् ) $B_3$ $D_2$ संस्थितम् ( for सर्वथा ). — ( L 38 ) $V_1$ $B_1$ $D_{3\,4}$ अभ्यर्हा च, $T_1$ अर्हा सर्व-, $T_{2\,3}$ $G_{1\,5}$ अर्हा चैव ( for अत्यर्हा च ). $K_2$ अनन्या हि महार्हाणि, $V_3$ अनन्यार्हमहार्हत्वम् ; $D_1$ अत्यर्हार्चनया मे त्वम् ; $D_6$ अन्यानर्हं च मानार्हम् ; $G_2$ अनन्यार्हं महार्हं च ( for $^a$ ) $G_{1\,3}$ एतत्पुष्पाद् ( for °त्पुष्पं ) $B_2$ पतिव्रते ( for धृत° ) $G_2$ पुष्पमेतद्ध्रुव व्रते ( for $^b$ ) — After line 38, $T_4$ repeats line 37 — ( L 40 ) $K_2$ $D_5$ $T_2$ भामिनि ( for का° ) — ( L 41 ) $T_{1\,4}$ संवत्सरं ; $M_4$ °त्सरात् ( for °त्सर- ). $D_5$ काले ( for कालं ). $D_3$ भर्तृ- ( for गुण- ). $K_2$ -संमतम् ( for °ते ) $T_{2\,3}$ $G_1$ कालज्ञैर्गुणसंभृतैः ( $T_2$ °मतै ) ( for $^b$ ). — ( L 42 ) $\tilde{N}_2$ गन्धाढ्यान् ; $D_3$ सर्वांश्च ( for गन्धांश्च ). $D_3$ $G_4$ ददाति वरवर्णिनि, $T_{2\,3}$ $G_1$ °ति हि पतिव्रते ( for $^b$ ). — $D_3$ om lines 43–45 $G_4$ om lines 43–44 — ( L 43 ) $T_3$ [इ]च्छिते ( for [ई]प्सिते ) $K_2$ शीतोष्ण चेप्सितं देवि ( for $^a$ ) $\tilde{N}_1$ $B_{1\,3}$ ददात्यपि ( for प्रयच्छति ) — ( L 44 ) $B_3$ प्रवात्येनद् ( for स्रवत्यपि ). $T_{1-3}$ $G_{1,3-5}$ $M_4$ रसं ( for रसान् ) $K_{1.4}$ शुभान्, $K_3$ Dn $Ds_1$ $D_2$ $T_4$ वरे ; $V_3$ बहून् ( for वरान् ) $T_{1-3}$ $G_{1,3,5}$ $M_4$ मनसा काङ्क्षितं क्षणात् ( $G_5$ च यत् ) ( for $^b$ ) — ( L. 46 ) $T_{1-3}$ $G_{1\,3-5}$ $M_4$ प्रयच्छति ( for स्रवत्यपि ) — ( L 47 ) $K_4$ $D_1$ पुण्यानि ( for पुष्पाणि ). — ( L 48 ) $\tilde{N}_2$ कुसुमं पारिजातस्य, $D_3$ °मं राजवृक्षस्य ( for $^a$ ) — ( L. 49 ) $D_3$ देवि ( for एव ) $K_4$ च धर्मिष्ठे, $T_{1-3}$ $G_{1\,3-5}$ $M_4$ भगाधारं ( for °नं ) $K_2$ एतानि कामजनकं, $D_3$ एतदेव भाग्यधाम ( for $^a$ ). $G_2$ धर्मिष्ठ ( for °ष्ठे ) $B_2$ $Ds_2$ $T_4$ पुत्रदं ; $D_1$ धर्मदे ( for °दं ) $K_4$ धर्मदं पुत्रदं तथा, $D_3$ धर्मिष्ठे धर्मवत्सले ( for $^b$ ) — ( L. 50 ) $K_1$ $D_{3-5}$ $G_2$ च नाशुभां ; $\tilde{N}_2$ $V_1$ $B_3$ $D_5$ न चाशुभे ( for च ना° ) $K_4$ $T_{1-3}$ $G_{1\,3-5}$ $M_4$ मतिं च नाशुभां यच्छेद् ( $K_4$ दत्ते ) ( for $^a$ ) $\tilde{N}_1$ न चाशुभे, $V_3$ तदा शुभे, $B_2$ सदानघे, $D_{2\,3}$ तथा शुभे ( for सदा शुभे ). — ( L 51 ) $T_{2\,3}$ $G_{1\,3-5}$ यदिच्छसि सुवर्णं च ( for $^a$ ) $\tilde{N}_1$ एतत् ( for सर्वं ). $K_{1-3}$ $V_{2\,3}$ Dn $D_{2\,5,6}$ $T_{3,4}$ $G_{2,4,5}$ $M_4$ धारयिष्यसि ( for °ष्यति ) — ( L 52 ) $K_2$ $\tilde{N}_2$ $V_{1,2}$ $B_2$ $D_{2\,5\,6}$ [अ]प्यथ ( for यदि ) $V_3$ स्वच्छन्दस्, $Ds_2$ छन्दं तं ; $T_1$ इच्छतस्, $T_2$ विन्द° ( for छन्द° ). — ( L. 53 ) $\tilde{N}_1$ अनिष्टगन्धापहरणम् ( hypermetric ), $V_1$ $B_{1\,3}$ $D_6$ °गन्धापहरम् ; $T_{1\,2}$ $G_{1\,4\,5}$ °गन्धावरणम् ( for $^a$ ) $K_{1\,3}$ $V_3$ $D_{1\,2\,4}$ $T_1$ $G_3$ तत्समं ; $\tilde{N}_2$ $D_3$ $G_2$ त्वत्समं ( for एतत्सद्- ). $K_4$ तत्सर्वं गन्धमर्दनम् ; $\tilde{N}_1$ $B_3$ एतद्गन्धानुवर्धनम् ; $B_1$ एतत्संबन्धव°, $G_4$ एतद्गन्धविव° ( for $^b$ ) — ( L 55 ) $T_{1-3}$ $G_{1,3\,5}$ $M_4$ सांतानिकं स्रजां जालं ( for $^a$ ). $T_{2\,3}$ $G_{1,5}$ $M_4$ पुष्पं ( for पुष्प- ) $B_3$ $D_6$ -वस्त्राणि ( for °दि ) $\tilde{N}_2$ -चारुताम् ( for वाच्युतम् ) — ( L 56 ) $\tilde{N}_2$ $V_{2\,3}$ -मण्डल- ( for -मण्डप- ) $K_2$ पुण्यमङ्गलमुख्यानि ( for $^a$ ) $\tilde{N}_1$ चिन्तिते तु ; $\tilde{N}_2$ विचिन्तेन ; $V_{1\,2}$ B $Ds_1$ चिन्तिते ते ( for °तेन ). — ( L. 58 ) $K_{1\,3\,4}$ $\tilde{N}_2$ $V_{2\,3}$ $D_{1-6}$ $T_{3,4}$ $G_{2\,3}$ देववद् ; $T_1$ देवि तद्, $G_1$ देव्यास्तद् ( for देव्येतद् ) — ( L. 59 ) $K_1$

अनुगीतानि गीतानि दास्यत्यपि च चिन्तिते ।
सुवादित्रान्सुमधुरांस्तथैव तव संमतान् ॥ [ 60 ]
पूर्णे संवत्सरे देवि पुष्पमेतत्तवान्तिकात् ।
निवर्त्स्यते तरुवरं समयेन प्रयास्यति ॥
कृतिरेषा हि भद्रं ते पारिजातस्य सुप्रभे ।
निसर्गतः सर्गकृता सत्कारार्थेऽसुरद्विषाम् ॥
उमा देववरस्येष्टा हिमाचलसुता सती । [ 65 ]
धारयेदीश्वरी नित्यं पुष्पाण्येतानि सुप्रभे ॥
अदितिश्च सपौलोमी महेन्द्रसुरतारणी ।
सावित्री वेदमाता च श्रीश्च सर्वगुणोदिते ॥
देवपत्न्यस्तथैवान्या देवाश्च वसुदेवताः ।
संवत्सरः परः कालः सर्वेषां तु न संशयः ॥ [ 70 ]
षोडशस्त्रीसहस्राणां मध्ये त्वं खलु वर्तसे ।
अद्येष्टां वासुदेवस्य वेद्मि त्वां भोजनन्दिनि ॥
सपत्न्यस्ते गुणोपेते सर्वाः सर्वेश्वरप्रिये ।
अवमानावसेकेन त्वया सिक्ताद्य भामिनि ॥
प्रकाशमद्य सौभाग्यमनिवार्यं यशश्च ते । [ 75 ]
मन्दारकुसुमं दत्तं यत्ते मधुनिघातिना ॥
अद्य सात्राजिती देवी ज्ञास्यते वरवर्णिनी ।
सौभाग्याढ्यं सदा वेत्ति यात्मानं सुभगा सती ॥
साम्बमाताथ गान्धारी भार्याश्चान्या महात्मनः ।
सौभाग्यार्थोद्यताकाङ्क्षामद्य मोक्ष्यन्ति निःस्पृहाः ॥ [ 80 ]
सौभाग्यैकरथो जैत्रस्तव देव्यद्य निःसृतः ।
मनोरथरथानां यः सहस्रैरपि दुर्जयः ॥
अद्याहमवगच्छामि सर्वथा सर्वशोभने ।
आत्मा द्वितीयः कृष्णस्य भोजे त्वमिति भामिनि ॥
त्रैलोक्यरत्नसर्वस्वमददाद्यत्तवाच्युतः । [ 85 ]
जीवितातिशयस्तेन त्वया प्राप्तो हरिप्रिये ॥
नारदेनैवमुक्तं तु तथ्यं वाक्यं नराधिप ।
तत्रस्थाः शुश्रुवुः प्रेष्याः प्रेषिताः सत्यभामया ॥

---

हास्यान्यपि, $V_1$ $B_{1\,3}$ गास्यत्यपि, $M_4$ ते दास्यति ( for दास्यत्यपि ) $K_2$ च चर्चिते, $D_3$ $T_1$ $G_2$ च चि( $D_3$ विचि )-न्तितम् ( for च चिन्तिते ) — ( L 60 ) $K_4$ $D_1$ सुवादितान् ( for °त्रान् ) $G_2$ सुमनस· ( for °धुरांस् ) $K_3$ सुवादितान्सु-मधुरांस्, $V_1$ $B_2$ सवादित्रान्समधुरांस्; $D_S$ $T_{1-3}$ $G_{1\,3-5}$ $M_4$ सवादित्रं सुमधुरं ( for $^a$ ) $V_{1\,3}$ $D_1$ $G_2$ सस्मितान् ( for सम° ) $D_{S1}$ $D_4$ $T_4$ तवैव स्तवसंमितम्; $T_{1-3}$ $G_{1\,3-5}$ $M_4$ स्तवैः स्तवसमान्वितम् ( for $^b$ ) — ( L 62 ) $K_1$ ( marg ) $B_3$ निर्वर्त्स्यते; $K_{2\,3}$ $V_3$ $D_{2\,4}$ $T_3$ $G_{2\,4\,5}$ $M_4$ निवर्त्स्यते; $D_{1,6}$ °र्त्स्यते ( for °र्त्स्यते ) $G_3$ समयेऽभिप्रदास्यति ( for $^b$ ) — ( L 63 ) $K_2$ $D_5$ वै शुभे; $V_2$ सुव्रते ( for सुप्रभे ) —After line 63, $D_2$ reads lines 67–68 — ( L 64 ) $D_4$ $M_4$ स्वर्गकृतां, $T_2$ शर्वकृता, $G_2$ सर्वगता ( for सर्गकृता ) $T_{2\,3}$ $G_{1,4}$ -द्विष. ( for द्विषाम् ) — ( L 65 ) $K_2$ $D_5$ उमा चैव हरस्येष्टा, $V_3$ $D_{S2}$ $D_4$ उमा देवीवरश्रेष्ठा; $T_1$ उमा देवि वरा श्रेष्ठा ( for $^a$ ) $B_2$ $T_{1\,4}$ $G_3$ हिमालय- ( for °चल- ) — ( L 66 ) $\tilde{N}_2$ $V_{2\,3}$ $B_2$ $D_4$ $G_{2\,3}$ धारयन्ती ( for °येद् ) $\tilde{N}_1$ $D_n$ धारयत्यैश्वरी नित्यं, $D_2$ °येच्छेश्वरीकृत्य ( for $^a$ ) — ( L 68 ) $K_{1,3\,4}$ $\tilde{N}_2$ $V_{2\,3}$ $B_1$ $D_n$ $D_S$ $D_{1\,6}$ $T_{2\,4}$ $G_{1\,3}$ $M_4$ देवमाता, $T_1$ देवभूता ( for वेदमाता ). $\tilde{N}_1$ सावित्री देवता चापि ( for $^a$ ) $K_{1\,4}$ $\tilde{N}_2$ $V_3$ $B_1$ $D_{2\,3}$ $T_{1\,3}$ $G_{1\,3-5}$ $M_4$ गुणोचिता, $K_3$ $D_n$ $D_{1\,4}$ $G_2$ °चिते, $V_2$ °र्जिता; $D_{5\,6}$ °दिता ( for °दिते ). — ( L 69 ) $D_3$ देवता ( for देवाश्च ) — ( L. 70 ) $\tilde{N}_1$ सवत्सरावरः कालः, $M_4$ °त्सरात्परं कालं ( for $^a$ ). — ( L 71 ) $\tilde{N}_{1\,2}$ षोडशानां ( for °शस्त्री ) $K_4$ त्वं परि-, $V_1$ $D_6$ खल्वद्य, $B_3$ खलु सु- ( for त्वं खलु ) — ( L 72 ) $K_1$ ( marg as above ) अद्य त्वां; $D_3$ $G_2$ अथेष्टां, $G_4$ अतीष्टां ( for अद्येष्टां ) — $G_4$ om lines 73–74 — ( L. 73 ) $\tilde{N}_1$ स्व- ( for ते ) $K_2$ $\tilde{N}_2$ $V_3$ $D_{1\,4}$ $T_2$ गुणोपेता. ( for °ते ) $D_2$ सपत्न्यस्तु गुणोपेता ( for $^a$ ) — ( L 74 ) $T_{1\,2}$ $G_{1\,3\,5}$ $M_4$ अवमानावृतास्तेन ( for $^a$ ) $T_1$ सक्तेन, $M_4$ सिक्तेन ( for सिक्ताद्य ) $T_2$ $G_{1\,3}$ त्वदास( $G_3$ °सि )क्तेन भामिनि ( for $^b$ ) — ( L 75 ) $K_2$ $D_{4\,5}$ प्रसादम् ( for प्रकाशम् ) — ( L 76 ) $D_3$ -निपातिना ( for -निघा° ). $\tilde{N}_1$ यस्यान्ते मधुघातिना, $G_2$ यत्ते मधुरभाषिणि ( for $^b$ ). — ( L 77 ) $K_1$ $\tilde{N}_2$ V $B_{2\,3}$ $D_{1\,3\,6}$ $T_2$ $G_1$ $M_4$ ज्ञास्यत्यव( $\tilde{N}_1$ $V_{1\,3}$ $D_6$ °म )रवर्णिनि ( for $^b$ ) — ( L 78 ) $K_1$ $\tilde{N}_1$ $B_1$ $D_n$ $D_2$ सौभाग्याद्यं; $K_2$ $V_3$ $D_{4\,6}$ $T_{1\,2}$ $G_{1\,4\,5}$ °ग्यार्हं, $D_5$ °ग्याढ्यां; $G_2$ सा सौभाग्यं; $G_3$ $M_4$ सौभाग्यार्हां ( for °ग्याढ्यं ) $K_{1\,3\,4}$ $\tilde{N}_1$ $B_1$ $D_n$ $D_S$ $D_{1\,5}$ $T_1$ $G_{1-3}$ सुभगां ( for °गा ) — ( L 80 ) $\tilde{N}_2$ सौभाग्याश्चोद्यताकाङ्क्षाम्; $D_4$ ता सौभाग्योद्यताकाङ्क्षाम् ( for $^a$ ) $D_2$ सद्यो ( for अद्य ). — ( L 81 ) $G_3$ -रसो ( for -रथो ) $T_2$ $G_1$ $M_4$ [अ]त्र ( for [अ]द्य ) $D_6$ तव देवाद्य निश्चित· ( for $^b$ ) — ( L 84 ) $D_2$ भार्या ( for भोजे ) $K_2$ असि ( for इति ) — ( L 85 ) $D_2$ अक्षय्यं च ( for अददाद्यत् ) — ( L 86 ) $D_3$ जातो वशो हरिर्यत्ते; $G_4$ जीवितातिशयत्वेन ( for $^a$ ) — Before line 87, $G_2$ ins. वैशंपायन . — ( L 88 ) $D_1$ तत्रत्याः ( for

देवीनां च तथान्यासां सपत्नीनां विशां पते ।
दृष्ट्वा ताः सविशेषं च नारदेनाभ्युदाहृतम् ॥ [ 90 ]
तच्च श्रुत्वा मुनिखिलं प्रेष्याभिः स्त्रीस्वभावतः ।
प्रकाशीकृतमेवासीद्विष्णोरन्तःपुरे तदा ॥
कर्णाकर्णि ततो देव्यः कौलीनमिव सर्वशः ।
मन्त्रयांचक्रिरे दृष्ट्वा रुक्मिण्यातिगुणोदयम् ॥
अर्हेति पुत्रमातेति ज्येष्ठेति च समागताः । [ 95 ]
प्रायेण प्रवदन्ति स्म दृष्ट्वा दामोदरस्त्रियः ॥
ममृषे न सपत्न्यास्तु तत्सौभाग्यगुणोदयम् ।
सत्यभामा प्रिया नित्यं विष्णोरतुलतेजसः ॥
रूपयौवनसंपन्ना स्वसौभाग्येन गर्विता ।
अभिमानवती देवी श्रुत्वैवेर्ष्यावशं गता ॥ [ 100 ]
समुत्सृजन्ती वसनं सकुङ्कुमं
शुचिस्मिता शुक्लतमैकमंशुकम् ।
जग्राह रोषाकुलितेन चेतसा
वह्नेः शिखा श्रीरिव वर्धितेन्धना ॥
दंदह्यमाना ज्वलनेन वर्धता [ 105 ]
ईर्ष्यासमुत्थेन गतप्रभेव ।
क्रोधान्विता क्रोधगृहं विविक्तं
विवेश तारेव घनं सतोयम् ॥
बध्वा ललाटे हिमचन्द्रशुक्लं
दुकूलपट्टं प्रियरोषचिह्नम् ॥ [ 110 ]
पर्यन्तदेशं सरसेन देवी
विलिप्य सा लोहितचन्दनेन ॥
संस्मृत्य संस्मृत्य शिरः सरोषं
प्रकम्पमाना समयोपविष्टा ।
दीर्घोपधाने शयनेऽपनीय [ 115 ]
विभूषणान्येकनिबद्धवेणी ॥
अकारणार्थेन विरुध्यमाणा
प्रेष्याजनस्याभिजनेन याचिता ।

---

°स्था ) $K_4$ दास्य ; $V_1$ सर्वाः ( for प्रेष्या ) Ñ$_1$ सुबह्वयः, $D_2$ प्रहिता. ( for प्रेषिता. ). — ( L 89 ) $K_{1\ 3\ 4}$ $V_3$ $D_1$ Dn Ds $T_4$ $G_4$ पत्नीनां च ( for सपत्नीनां ) — ( L 91 ) $B_3$ ते श्रुत्वा तु , $T_3$ $M_4$ तत्र श्रुत्वा ( for तच्च श्रुत्वा ) $D_3$ प्रेष्य-स्त्रीभिश्च , $G_2$ प्रेष्याभिश्च ( for प्रेष्याभिः स्त्री- ) $K_3$ प्रेष्यस्त्री-भिश्च भावतः ( for $^b$ ) — ( L 93 ) $K_{1\ 3\ 4}$ Ñ$_{1\ 2}$ $V_{1\ 3}$ B Dn Ds $D_{1\ 2\ 4}$ $G_2$ सघश , $D_3$ चात्मन ( for सर्वशः ). — ( L 94 ) $V_1$ रुष्टा ; $D_{2-4}$ $T_{1-3}$ $G_{1-4}$ दृष्ट्वा, $G_5$ तत्र ( for दृष्टा ) $D_3$ om ( hapl. ) lines $94^b$–$96^a$ — ( L 95 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ सा प्रधाना ( for पुत्रमाता ). $T_2$ $G_1$ समाहिता. ( for °गता ) — ( L 96 ) $D_3$ सर्वा ( for दृष्टा ) Ñ$_{1\ 2}$ $V_1$ $B_{1\ 3}$ नारायण- ( for दामोदर- ). — ( L 97 ) $Dn_1$ सा ( for न ) $K_3$ ममृषे तु न तत्सत्या ; $G_2$ सा सेहे न सपत्नी तु , $G_3$ मन्त्रकोपेन पत्न्यास्तु ( for $^a$ ). Ñ$_2$ सौभाग्यस्य ( for तत्सौभाग्य ) — After line 97, $D_3$ ins .

3** अहो यादवपुत्रस्य मतिभीक्ष्यं तु चागता । (sic)

— ( L 98 ) Ñ$_2$ $V_1$ $B_{1\ 3}$ $D_6$ $T_{2\ 3}$ $G_{1\ 3-5}$ $M_4$ अमित- ( for अतुल- ) — ( L 99 ) Ñ$_1$ $B_3$ $D_6$ -मानै. सा , $V_1$ -साम्यै· सा ( for -सपन्ना ) $B_1$ सा ( for स्व- ) $K_2$ Cal ed सौभाग्येन च निर्वृता , Ñ$_1$ $D_6$ सौभाग्येन च गर्विता , $D_3$ सौभाग्यगुणगर्विता ( for $^b$ ) — ( L 100 ) Ñ$_1$ $V_1$ दृढ-मीर्ष्या- , $V_3$ वृथैवेर्ष्या- , $G_4$ श्रुत्वा चेर्ष्या- ( for श्रुत्वैवेर्ष्या- ) B $D_6$ श्रुत्वेर्ष्यावशमागता , $D_3$ श्रुत्वा प्रेष्यावचस्तदा ( for $^b$ ) — After line 100, Ñ$_{1,\ 2}$ $V_{1,\ 3}$ ins. .

4** सा शुभं कौङ्कुम वास. समुत्सृज्य शुचिस्मिता ।
महारजतरागं च शुक्ले जग्राह वाससी ॥

[ ( L 1 ) Ñ$_2$ कौसुम ( for कौङ्कुम ) $V_1$ सुविस्मिता ( for शुचि° ) — $V_3$ om line 2 ]

— Ñ$_2$ om lines 101–104 — ( L 101 ) $D_4$ सकौसुमं ; $D_6$ सुकुङ्कुमं ( for स° ) — ( L 102 ) $D_{2\ 6}$ सुविस्मितं ( $D_6$ °ता ) ( for शुचिस्मिता ) $G_4$ शुक्लमथैकम् ( for °तमैकम् ) — ( L 103 ) $V_1$ रोषोद्गलितेन ( for रोषाकु° ) — ( L 104 ) $T_2$ $G_{1,\ 4\ 5}$ $M_4$ वने शिखाग्नेरिव वार्धितेन्धना — ( G 105 ) $G_5$ संद-ह्यमाना ( for दंद° ). $K_4$ ज्वलितेन ( for ज्वलनेन ) $K_{2\ 4}$ $D_1$ $G_2$ वार्धिता , Ñ$_1$ $V_1$ वामा ( for वर्धता ) $D_2$ सा दह्यमाना ज्वलनेन तेन — ( L 106 ) Ñ$_1$ $V_1$ $B_{1,\ 3}$ $D_6$ सेर्ष्या- ( for ईर्ष्या- ) — ( L 108 ) Bom ed वन ( for घनं ). $D_{3,\ 4}$ $T_3$ $M_4$ -तोयदम् ( for -तोयम् ), $G_4$ विवेश तारा गगनं सतो-यम् — ( L 109 ) $K_4$ $G_2$ -चन्द्रशुभ्रं , $D_4$ -शुक्लचन्द्रं ( for -चन्द्रशुक्लं ) — ( L 110 ) $T_{2,\ 3}$ $G_{1\ 4}$ -रोषचिह्नितम् , $M_4$ रोषिचिह्नम् ( for -रोष° ) — ( L 111 ) $D_2$ पर्यन्तदेशे निष-साद देवी , $D_3$ °शे सरसं तु देवी — ( L 112 ) Ñ$_1$ $V_2$ $B_2$ लिलेप सा , Ds लिलिम्प सा — ( L 113 ) $T_{2,\ 3}$ संमृज्य ( for the first संस्मृत्य ) — ( L 114 ) $V_3$ शयनोपविष्टा ; $M_4$ समयोपदिष्टा ( for °विष्टा ) Ñ$_2$ $D_{1\ 2}$ प्रकम्पयामास सृषो-( $D_2$ सुखो )पविष्टा , $D_3$ प्रकम्प्यमाना समुपोप° — ( L 115 ) $K_{1,\ 3\ 4}$ दीर्घोपधानं ( for °ने ) $D_4$ शयने परीत्य , $M_4$ °ने निपीड्य ( for °नेऽपनीय ). — ( L. 117 ) $K_2$ $D_3$ अकारणार्थे

विचूर्णयामास कुशेशयं सा
निःश्वस्य निःश्वस्य नखैर्नतभ्रूः ॥ [ 120 ]

Colophon.

वैशंपायन उवाच ।

उपविष्टं मुनिं ज्ञात्वा रुक्मिण्या सह केशवः ।
निश्चक्रामाप्रमेयात्मा व्यपदेशेन सर्वकृत् ॥
जगाम त्वरितश्चैव सत्यभामागृहं महत् ।
रम्ये रैवतकोद्देशे निर्मितं विश्वकर्मणा ॥
अभिमानवतीमिष्टां प्राणैरपि गरीयसीम् । [ 125 ]
जानन्सात्राजितीं विष्णुर्विवेश शनकैरिव ॥
रुषितामिव तां देवीं स्नेहात्संकल्पयन्निव ।
भीतभीतोऽतिशनकैर्विवेश यदुनन्दनः ॥
दारुकं द्वारदेशे तु तिष्ठेत्युक्त्वा विवेश ह ।
नारदस्योपचारार्थं प्रद्युम्नं विनियुज्य च ॥ [ 130 ]
स ददर्श प्रियां दूरात्क्रोधागारगतां तदा ।
प्रेष्यामध्यस्थितां क्रोधान्निःश्वसन्तीं मुहुर्मुहुः ॥
करजाग्रावलीढं तु पङ्कजं मुखपङ्कजे ।
संश्लेषयित्वा निःश्वस्य विहरन्तीं पुनः पुनः ॥
किंचिदाकुञ्चिताग्रेण चरणेन वसुंधराम् । [ 135 ]
कृत्वा पृष्ठेऽथ वदनं विहसन्तीं पुनः पुनः ॥
करपद्मे पुनः शश्वन्मुखपद्मं निवेश्य च ।
विनतां चारुसर्वाङ्गीं ध्यायन्तीं कमलेक्षणाम् ॥
सरसं चन्दनं गृह्य प्रेष्याहस्तादनिन्दिताम् ।
प्रसाधयित्वा हृदयं क्षिपन्तीं निर्दयं पुनः ॥ [ 140 ]
पुनरुत्थाय शयनात्पतन्तीं च पुनः पुनः ।

---

त्वयि, D2 °र्थेऽत्वपि, T2 3 G1. 5 °र्थेन च (for °र्थेन वि-). T1 G2 3 -कृष्यमाणा (for -हृष्य°) —(L 118) K Ñ1 2 V B D T1 4 G2 -जनान्विताापि (T4 °ता च) (for -जनेन याचिता) —(L 119) K4 Ds2 G5 M4 विघूर्णयामास (for विचू°) K3 या, T4 रसान् (for सा) —(L 120) D4 रोषाच्च (for the second निःश्वस्य) Ñ2 D3 शनैर् (for नखैर्)- Colophon — *Mention of the Epic* K3 Ds2 T3. — *Mention of Khila* K3 V B Dn2 D5 D1 4 — *Adhy. name* K V B Dn Ds D2-6 T G1 4 पारिजातहरणम्, Ñ1 मन्दारहरणम्, D1 पारिजातहरणे सत्यभामारोष — *Adhy no* K3 (marg) 119, V1 125, V2 B2 124, V3 123, Dn Ds2 D4 120, D1 117, D3 129, T1 2 G3 4 M4 134, T3 142, T4 127, G1 136, G2 126, G5 137

T2 om the ref —(L 122) K3 4 B2 Dn Ds2 D5 T1 G4 सर्ववित्, D2 कर्मकृत्, G2 सर्वदृक् (for °कृत्) —(L 123) K2 D1 T4 त्वरितं (for °तश्च) D2 तत्र, D3 स्वैरं (for चैव). Ñ2 प्रति (for महत्) Ñ1 स गृहं सत्यभामया, G3 सत्यभामां स्मरन्गृहात् (for $^b$) —(L 124) K1 D3 रम्यं (for रम्ये) D4 T1-3 G1 4 5 M4 रम्ये मनोहरे (D4 रैवतके) देशे (for $^a$) —(L 125) Ñ2 B1 3 D4 6 देवीं (for इष्टां) V1 B1 3 Dn2 D3 4 6 T2 3 G1 4 5 M4 प्राणेभ्योऽपि, V2 प्राणैश्चापि (for °रपि) — G2 om line 126 —(L 127) K1 दृष्ट्वा (for देवीं) G2 स्नेहं (for स्नेहात्) K3 D4 संकलयन्, D6 °ल्पयन्; T2 3 G1 °ल्पताम् (for °ल्पयन्), —(L 128) Ñ1 B1 D6 स, B3 च, T3 ऽथ (for ऽति-) Ñ2 om line 128$^b$ Bom Poona eds G(ed) विवेश मधुसूदन (for $^b$) —(L 129) T1 सेवकं (for दारुकं) K1 स (for ह) —(L 130) K4 D4 विनियोज्य (for °युज्य). Bom Poona eds G(ed) स (for च) —(L. 132) V2 G5 प्रेष्यामध्ये, D5 °मिव (for °मध्य) Ñ1 B3 D6 गतां (for -स्थितां) B2 G1 3 5 कोपात्, G2 क्रूरां, M4 क्रुद्धां (for क्रोधात्) K1 3 4 D1 T1 प्रेक्ष्या (K3 4 D1 °ष्या) मिवस्थितां कोपात्, Ñ2 V1 प्रेष्यामध्ये गता क्रोधात् (for $^a$) —(L. 134) T2 G1 श्लेषयित्वा तु, G5 संशोषयित्वा (for संश्लेष°). K2 D3 4 विहसन्तीं, K4 विगर्हन्तीं, Ñ1 2 V1 B2 Dn D2 5 T G M4 विसहन्तीं (for °रन्तीं) V3 विहसन्तीं मुहुर्मुहु· — After line 134, Ñ2 repeats line 142 K3 4 D1 2 om (hapl) lines 135-136, K1 reads the same on marg —(L 135) K1 D3 4 T4 अस्पन्दिताग्रेण, B3 Ds2 G2 4 [आ]कुलिता°, T1-3 G1 3 5 M4 लिखन्तीम° (for आकुञ्चिता°) D6 (marg) लिखित्वा कुञ्चिताग्रेण (for $^a$) —(L 136) T2 G3 4 M4 पृष्ठेन (for °ष्ठे तु) Ñ1 स्पृश्यान्स्पृश्येऽथ धवलां (for $^a$) K2 विरुदन्तीं, B1 D3 विलिखन्तीं, B2 Ds D5 6 T1 4 G1 3 4 विहरन्तीं (for °सन्तीं) —(L 137) K1-3 Ñ1 V2 B2 Dn Ds1 (marg) 2 D1 T1 सव्ये; K4 शङ्खे, V3 सास्तं (for शश्वन्) D3 करपद्मं सनिःश्वासं (for $^a$). T3 G4 -पद्मे (for पद्मं) D3 मुखपद्मे निधाय सा (for $^b$). —(L 138) K2 रुचिरं, B1 3 D6 विविक्ते; B2 D1 T1 2 G3 वनितां, Ds1 (marg) विविक्तं, T3 G1 4 5 वसन्तीं (for विनतां) K4 D1 2 5 कमलेक्षणम् (for °णाम्) — For line 138, V3 D3 4 G2 subst

5** विमना चारुसर्वाङ्गी ध्यायन्ती कमलेक्षणा ।
[ V3 कमलेक्षणम् (for °णा) ]

—(L 139) V3 D4 G2 अनिन्दिता (for °ताम्) —(L.

तास्ताश्चेष्टास्तथान्याश्च प्रियाया ददृशे हरिः ॥
अवगुण्ठ्य यदा वक्त्रमुपधाने न्यवेशयत् ।
इदमन्तरमित्येव ततो मत्वा जनार्दनः ॥
प्रेष्याजनं समाज्ञाप्य अनाख्येयोऽस्मि संज्ञया । [ 145 ]
सशङ्कितप्रचारश्च त्वरितोऽन्वगमच्च ताम् ॥
जग्राह व्यजनं चैव स्थित्वा स परिपार्श्वतः ।
शनैरवासृजद्वातं जहास शनकैरिव ॥
स पारिजातपुष्पस्य संसर्गादनुवासितः ।
बभार भगवान्गन्धं दिव्यं मानुषदुर्लभम् । [ 150 ]
अत्यद्भुतं सुगन्धं च जिघ्रित्वा विस्मयान्विता ।
अपावृणोन्मुखं सत्या किमेतदिति चाब्रवीत् ॥
सोत्थिता पृष्ठतो देवमपश्यन्ती सुविस्मिता ।
पर्यपृच्छदथो प्रेष्या गन्धस्य प्रभवं तदा ॥
ताः पृष्टास्त्वप्रभाषन्त्यो जानुभ्यां धरणीं गताः । [ 155 ]
अधोमुख्यस्ततस्तस्थुः कृताञ्जलिपुटास्तदा ॥
तदपूर्वमदृष्ट्वैव गन्धं मुञ्चति मेदिनीम् ।
कथमेकतरस्तस्या गन्धोऽयमुदभूत्खलु ॥
किं त्विदं स्यादिति च सा विवेक्षन्ती समन्ततः ।
ददृशे केशवं देवी सहसा लोकभावनम् ॥ [ 160 ]
युज्यतीति तदोवाच सहसास्राविलेक्षणा ।
अवसिक्तेव रोषेण बभूव प्रणयान्विता ॥
सा प्रस्फुरितचार्वोष्ठी निःश्वस्याधोमुखी तदा ।
मुहूर्तमसितापाङ्गी तस्थावन्यमुखी शुभा ॥
निबध्य भ्रुकुटीं वामां सम्यगुत्क्षिप्य लोचने । [ 165 ]

---

140 ) K Ñ1.2 V B Dn Ds D1.2.4–6 T2.4 G2 प्र( V3 प्रा )-ह्लादयित्वा, D3 प्रक्लेद° (for प्रसाद्य°) T1–3 G1.3–5 M4 तां पुन· (for निर्दयं). — D3 om line 141. — (L 141) T1.2 G1.3–5 M4 उत्थाय (for पुनर्), T2 G1.5 जपन्तीं, G4 जल्पन्तीं (for पतन्तीं) Ñ1 पतन्तीमभि[नि]र्दयम् (for $^b$) — (L. 142) T1 Bom. Poona eds G(ed) प्रियायाश् (for तथान्याश्), and तथान्या (for प्रियाया) Ñ1 ददृशे प्रियया हरि (for $^b$). — (L 143) T1 अवक्रम्य, G2 °गूह्य (for °गुण्ठ्य). G3 अवकुण्ठ्य तथा वक्त्रं (for $^a$) K3 निवेश्य च (for न्यवेशयत्). — (L 144) K1.3.4 V3 B1 Dn Ds D1.5 T1.3 G3 तदा गत्वा; K2 V2 D3.4 T4 ततो गत्वा (for ततो मत्वा). — (L 145) K1–3 Dn D1–6 T1.4 स संज्ञाय (K3 T1 °प्य); K4 Ñ2 V1 Ds समाज्ञाय, Ñ1 B संज्ञयाथ, T2.3 G1.3–5 M4 च संज्ञाप्य, G2 समाख्याय (for °ज्ञाप्य). Ñ2 नाख्यार्होऽस्मीति संज्ञया, V1.2 D6 नाख्येयोऽस्मीति सं°; B नाख्यायोऽस्मीति संज्ञपन् (for $^b$). — (L 146) V D3–5 सशङ्कित- (for सश°). B2 -प्रचारं, G3 -प्रकारश् (for -प्रचा°) K2–4 V2 Dn Ds D1–4 T2.3 G2 M4 स (for च). Ñ1.2 V1.3 B1.3 D6 त्वरितोऽन्तिकमभ्ययात्, B2 D5 T1.4 G1.3–5 वारितोऽन्वगमत्स ताम् (for $^b$) — (L 147) K4 D2.3 T4 गृहीत्वा; Ñ1 B3 Dn प्रहाय (for जग्राह) D2 स्थितः स, D3 संस्थित; D4 स स्थित्वा (by transp). G3 स्थित्वा सं-. D6 स्थित्वा सपदि पार्श्वत; T2.3 G1.4 स्थित्वा चापरपा° (for $^b$). — G2 om lines 148–149. — (L 148) D6 अवाकिरद् (for °सृजद्) D3 वायुं (for वातं) — (L 149) B3 D6 संस्पर्शेन (for संसर्गाद्) —(L 150) Ñ2 D2 दधार (for बभार). B2 दिव्य गन्धं (by transp). — (L 151) Ñ1 तदद्भुतं (for अत्य°). Ñ2 तदद्भुतमिदं गन्धं, B1.3 D6 अत्यद्भुततमं गन्धं (for $^a$) T2.3 G1.4.5 M4 घ्रात्वा सा (for जिघ्रित्वा) Ñ1 विस्म ागता (for °न्विता) — (L 152) T2.3 G1.4 सा (for च) — (L. 153) D2 स्थितोऽयं, D3 M4 सा स्थितं (for स त्थिता) K Ñ1.2 V1 B1 Dn Ds2 D1.2.4–6 T1 G2 शुा स्मिता (for सुवि°) G3 पश्यन्ती साधु विस्मिता (for $^b$) — (L 154) K2 Ñ2 V1 D1.4 T3 प्रेष्यां (for प्रेष्या) — (L 155) K1.4 [अ]भ्यभाषन्त (for [अ]प्रभाषन्त्यो) G2 तया पृष्टाः प्रभाषन्त्यो (for $^a$) K Ñ1.2 V B D T2.3 G1.4.5 M4 जानुभिर् (for °भ्यां) — (L 156) K1.4 V2.3 Ds D1.2.6 T2.3 G1.4.5 M4 अधोमुखास्; D3 ध्यानोन्मुखास् (for अधोमुख्यस्) Ñ1.2 V1 B1.3 अधोमुखमुखास्तस्थुः (for $^a$). — (L 157) K3 अदृष्ट्वैनं, Ñ2 °ष्टं च, D2.3 °ष्ट्वं वै; D6 (marg as above) मनुष्येषु (for अदृष्ट्वैव) Ñ1 B1 तत्पूर्वमभिदृष्ट्वैव, T1.3 G1.4.5 अथापूर्वमदृष्टं तु (for $^a$). — (L 158) D3 कथमेवंविधस्तस्या; T1–3 G1.3–5 M4 अथ वै कतरस्तस्या (for $^a$) B3 इति ते, T2 G1 अदहत् (for उदभूत्) — (L 159) V1 B3 व्यवेक्षन्ती, T2 G1.5 M4 त्ववे° (for विवे°) —(L 160) T2–4 G1.4.5 देवं (for देवी) —(L 161) K2 युज्यते वा; Ñ1 मुञ्चतीति, V B2 मुञ्चतीति, D3.6 T3, G1.4 M4 युज्यतेति (for °तीति) K3 शुष्यती विगतोत्साहा, D5 मुञ्चती विगतोत्साहा (for $^a$) Ñ1 B मुक्त्वा सा (for सहसा) —(L. 163) K2 B2 D4.6 G2 -बिम्बोष्ठी (for -चार्वोष्ठी) K1.4 सा रोषात्स्फु( K4 °षस्फु )रमाणोष्ठी, K3 सा प्रास्फारितसर्वाङ्गी (for $^a$) T1 M4 निःश्वासाभि- (for निःश्वस्याधो-). K3 D5 -मुखं (for -मुखी) K2 G2 शुभा (for तदा). — G1.3 om line 164. — (L 164) D2 अधो- (for अन्य-). D3 स्थिता (for

निवेश्य वदनं हस्ते शोभसीत्यब्रवीद्धरिम् ॥
तस्याः सुस्राव नेत्राभ्यां वारि प्रणयकोपजम् ।
कुशेशयपलाशाभ्यामवश्यायजलं यथा ॥
समुत्पत्य जलं तत्र पतितं वदनाम्बुजात् ।
प्रतिजग्राह पद्माक्षः कराभ्यामपि सत्वरम् ॥ [ 170 ]
अथोरसि पतत्तोयं श्रीवत्साङ्कोऽम्बुजेक्षणः ।
प्रियानयनजं देवः परिमृज्येदमब्रवीत् ॥
स्रवत्यसितपत्राक्षि किमर्थं तव भामिनि ।
तोयं सुन्दरि नेत्राभ्यां पुष्कराभ्यामिवोदकम् ॥
प्रभाते पूर्णचन्द्रस्य मध्याह्ने पङ्कजस्य च । [ 175 ]
बिभर्ति तव किं वक्त्रं वपुर्मम मनोहरम् ॥
किमर्थं कौङ्कुमं वासो महारजतमेव च ।
नानुगृह्णासि सुश्रोणि शुक्लं वासोऽनुगृह्यते ॥
वासस्येते तवाभीष्टे महारजतकौङ्कुमे ।
देवाभिगमनादूर्ध्वं शुक्लं नेष्टं हि ते प्रिये ॥ [ 180 ]
किं चानाभरणं गात्रं सुगात्रि तव कथ्यताम् ।
चित्रकस्थानमाक्रान्तं कस्माच्च वरवर्णिनि ॥
श्वेतेन तव पट्टेन वाससा प्रियदर्शने ।
ललाटं सेव्यते कस्माच्चन्दनेन सुगन्धिना ॥
सरसेनायतापाङ्गि कान्तेन हृदयप्रिये । [ 185 ]
प्रभोपमर्दः केनाथ कारणेनाननस्य च ।
करोषि मम चात्यर्थं मनो ग्लापयसि प्रिये ॥
प्रसृतश्चन्दनरसः कपोलप्रणयी तव ।
पत्रलेखासपत्नत्वं प्राप्तो नातिविराजते ॥
रत्नस्याभरणैर्मुक्ता तव ग्रीवा न शोभते । [ 190 ]
ग्रहनक्षत्ररहिता द्यौरिवाव्यक्तशारदी ॥
पूर्णचन्द्रसपत्नेन स्मेरेणाबहुभाषिणा ।
किमु नाभाषसे माद्य मुखेनोत्पलगन्धिना ॥

---

शुभा ) — ( L 165 ) K1 3 4 V1 D1 2 4 5 वामा ( for वामां ) B1 उत्क्षिप्त- , Bom Poona eds G( ed ) विक्षिप्य ( for उत्क्षिप्य ) Ñ1 D1 लोचनम् ( for लोचने ) V2 सम्य गुत्क्षिप्तलोचना ( for $^{b}$ ) — ( L 166 ) V1 प्रविश्य ( for निवेश्य ) K2 सत्यभामा , D1 2 शोचन्तीति , T2 G1 4 शोभ यन्ती ( for °सीति ) — K2 om lines 168–169 — ( L. 169 ) K3 समुत्पतज् , D5 T1–3 G1 3–5 M4 °पेत्य ( for °त्पत्य ) B1 3 तत कृष्णः ( for जलं तत्र ) Ñ1 अश्रुधर्मव्रजस्तं तु , D1 समुत्सृज्य जल तत्तु , D6 °पेत्य तत· कृष्ण ( for $^{a}$ ) K1 3 4 Ñ2 V D1 2 4 5 पतन्तं , Ñ1 B Ds D6 T2 3 G M4 पतत्तद् ( for पतितं ) — ( L 170 ) K2 4 V1 3 B1 Dn D1–4 6 सत्वर ( for °रम् ) Ñ1 B2 Ds1 D5 T1 4 G2 3 कराभ्यामति- सत्वर· ( for $^{b}$ ) — ( L 171 ) K1 3 V1 Dn D1–4 स ( V1 D4 च ) तत्तोयं , K4 स्थितं तोयं ; V3 [अ]पतत्तोयं ; D2 3 गतं तोयं ( for पतत्तोयं ) D6 अथात्मोरसि तत्तोयं ( for $^{a}$ ) —( L 172 ) D3 प्रियाया नयनं देव· ( for $^{a}$ ) K2 3 Ñ2 B Ds D4 परिगृह्य ; V1 विसृज्य ( for परिमृज्य ) — After line 172, K2 ins an addl. colophon mentioning adhy name सत्यभामाकोपः — Before line 173, K2 ins वैशपायन· — ( L 173 ) V2 Cal ed पद्माक्षि ( for -पत्राक्षि ) B3 Cal ed किमिदं तव भाविनि ( for $^{b}$ ) — ( L 175 ) T1–3 G1 3–5 M4 भास्करस्य ( for पङ्कजस्य ) — ( L 176 ) T2 3 G1 तावकं ( for तव किं ) G2 रूप ( for वक्त्रं ) K4 D5 T1 4 वपुस्तव ; V1 °र्नाम , D6 ( marg as above ), G3 M4 रूपं मम , T2 G1 4 5 उपमानं , T3 वपुर्मानं ( for °र्मम ) Ñ1 मनोहरे ( for °हरम् ) — ( L 177 ) K4 कथं वा , T4 किमद्य ( for °र्थं ) D3 किमथैकान्तसंवासो — ( L 178) K2 शुष्कं ( for शुक्लं ) G1 शुक्लवासो निगृह्यते ( for $^{b}$ ) — ( L 179 ) D4 वाससी तव चाभीष्टे ( for $^{a}$ ) — ( L 180 ) K1 3 4 V1 Dn Ds D5 तत्स्त्रिया , Ñ2 तत्प्रिये , V3 न स्त्रिय , D1 ते प्रियम् ; D2 मे प्रिये ( for ते प्रिये ) D4 शुक्लं श्रेष्ठ हि तत्स्त्रियः ( for $^{b}$ ) — ( L 181 ) G1 M4 गात्रे ( for गात्रं ) K1 कथ्यते , D6 ( marg ) कङ्कणम् ( for कथ्यताम् ) — ( L. 182 ) T1 3 G3 5 चित्रकस्थानमात्रं त्वं ( G5 तं ) ( for $^{a}$ ). Ds1 अमर- , D1 तद्वर- ( for च वर- ) — ( L 183 ) D1 T2 3 G1 4 5 नव ( for तव ) K3 Dn1 T4 पादेन ( for पट्टेन ) — ( L 185 ) D3 सरसेनापि तन्वङ्गि ( for $^{a}$ ) Ñ2 om lines 185$^{b}$–186$^{a}$ — K4 om ( hapl ) lines 186–187 — ( L 186 ) V2 B Dn Ds D5 G2 प्रभोपमर्दं ; D6 प्राप्तोपमर्द· , T2 G1 4 M4 प्रभावमर्दं ( M4 °र्दं ) ( for प्रभोप° ) K3 Ñ1 V1 D1 T1 4 G3 प्रभोपमर्दं केनापि , T3 °मर्दनेनाथ ( for $^{a}$ ) —( L 187 ) D3 दुनोषि ( for करोषि ) — ( L 188 ) K4 प्रसिक्तश्च , B1 D6 प्रभूतश्च ; D2 प्रसू° ( for प्रसृ° ) T2. 3 G1 4 5 न च ( for तव ) — ( L. 189 ) T1–3 G1 3–5 M4 -वृतत्वं वा ( for -सपत्नत्वं ) — ( L. 190 ) D5 T2 3 G4 5 M4 रहसि , T1 4 G1 3 रत्नैश्च ( for रत्नस्य ) D2 श्रोणी ( for ग्रीवा ) Ñ1 V3 B1 3 D6 श्रोणिस्ते नातिशोभने ( V3 D6 °शोभिता , B3 °शोभना ) — ( L 192 ) K4 -सवर्णेन , D4 -प्रसन्नेन ( for सपत्नेन ) K2 स्वरेण ; K3 D4 स्मरेण ( for स्मे° ) D1 बहु- ( for [अ]बहु- ) D2 3 स्मयता- ( D3 °रता )द्भुतभाषिणा , G2 M4 स्व( M4 स्म )रेण बहु° , G5 स्मरणे बहु° ( for $^{b}$ ) — ( L. 193 ) Ñ1 Dn T2 नो भाषसे

अर्धाक्ष्णापि हि तावन्मां किमर्थं न निरीक्षसे ।
मुञ्चस्येव सनिःश्वासं तोयमञ्जनदुर्दिनम् ॥ [ 195 ]
अलमिन्दीवरश्यामे रुदितेन मनस्विनि ।
जलमञ्जनकल्माषं मा मोक्षीराननद्विपम् ॥
त्वदीयोऽहं यदा देवि ख्यातो जगति किंकरः ।
नाज्ञापयसि मां किं त्वं पुरेव वरवर्णिनि ॥
किमकार्षमहं देवि विप्रियं तव भामिनि । [ 200 ]
येनातिमात्रमात्मानमायासयसि सुन्दरि ॥
मनसा कर्मणा वाचा न त्वामतिचराम्यहम् ।
सर्वथा सर्वचार्वङ्गि सत्यमेतद्ब्रवीम्यहम् ॥
बहुमानो ममान्यासु स्त्रीषु सर्वासु शोभने ।
स्नेहश्च बहुमानश्च त्वामृतेऽन्यासु नास्ति मे ॥ [ 205 ]
नैव त्वां मदनो जह्यादृते मयि मामकः ॥
इति मे निश्चितं विद्धि चेतः सुरसुतोपमे ॥
क्षमादयश्च मेदिन्यां शब्दाद्याश्चाम्बरे गुणाः ।
ध्रुवं पङ्कजगर्भाभे त्वयि स्नेहस्तथा मम ॥
रुचिरग्नौ यथा दिव्या प्रभा चैव दिवाकरे । [ 210 ]
कान्तिश्च शाश्वती चन्द्रे स्नेहस्त्वयि तथा मम ॥
एवंवादिनमात्मेष्टं सत्यभामा जनार्दनम् ।
शनैरुवाच नेत्राभ्यां प्रमृज्य सुभगा जलम् ॥
मदीयस्त्वमिति ह्यासीन्मम नित्यं मनः प्रभो ।
अद्य साधारणस्नेहस्त्वमित्यवगता ह्यहम् ॥ [ 215 ]
नाज्ञासिषमहं पूर्वमनित्यं कालपर्ययम् ।
अद्य लोकगतिं कृत्स्नामवगच्छामि न ध्रुवाम् ॥
अमृताया द्वितीयं हि जन्मेदं मम सर्वथा ।
किमत्र बहुनोक्तेन हृदयं वेत्ति तेऽच्युत ॥
वाङ्मात्रमिव पश्यामि माधुर्यं संप्रयुज्यते । [ 220 ]
मयि स्नेहश्च कृतकस्तवान्यत्र न कृत्रिम. ॥

---

(for नाभा°) D8 मे (for मा) K2 किं त्वमाभाषसे नाद्य, Ñ2 V3 B1.3 D6 T4 किं मामाभाषसे नाद्य, D2 3 किमु मां भाषसे नाद्य (D3 न त्वं), D4 M4 किमु नो भाषसे नाद्य (for ᵃ) — (L 194) T1 3 G4 5 M4 मा देवि (for तावन्मां). D8 सुलोचनाभ्यां तावन्मां (for ᵃ) — (L 195) V1 वि-, M4 च (for स-) — (L 197) B1 (marg) G5 M4 अलम् (for ज°) T2 G1 4 अलमम्बुजकल्माषं (for ᵃ). D4 कार्षीर् (for मोक्षीर्) T1 2 G3 मा मोक्षीराननाम्बुजात्, G1.4 5 M4 मा त्याक्षीराननाम्बुजात् (for ᵇ) — (L 198) M4 ऽस्मि तव (for जगति) — (L 199) K1 B2 G2 न ज्ञापयसि मां किं तु (B2 नु) (for ᵇ) — V3 om line 200 — (L 200) K3 महादेवि (for अहं देवि) D2 किमकारि मया देवि (for ᵃ). — K3 M4 om (hapl) line 203 — (L 203) K1 Dn D4 T2 3 G1 3–5 सर्वथा चारुसर्वाङ्गि (for ᵃ). — For line 203, K4 subst

6** द्वितीयं न हि मे किंचिदुक्तं यन्मेति नागरे (sic)।

— (L 204) V3 बहुमान्या (for °नो) Ñ2 न च (for मम) D3 बहुष्वन्यासु मान्यासु, T1–3 G1 3–5 °मान्यासु सर्वासु (for ᵃ) K2 Ñ2 B1 2 Ds D2–5 T G1 3–5 M सर्वाङ्ग (for °सु) V1 स्त्रीषु सर्वाङ्गशोभिनि, B3 D6 सर्वासु स्त्रीषु शोभने (for ᵇ) — (L 205) G1 स्नेहाच्च बहुमानाच्च (for ᵃ) — (L 206) T3 सुमनो (for मदनो) D6 T4 दह्याद् (for ज°) Ñ1 B D2 मृतेऽपि, D5 ऋतेऽपि, G2 मदते (for अमृते) — For line 207, D3 subst

7** निश्चितं विद्धि चेतो मे त्वयि नित्यं सुनिश्चलम् ।

— (L 208) K2 B2 D4 गुणो गन्धश्, B1 3 Dn D5 6 T2 3 G1 3–5 M4 क्षमा गन्धश् (for क्षमादयश्) K3 क्षमा यथा च मेदिन्या (for ᵃ) K1 3 4 Ñ2 Dn D1 यथा, Ñ1 [अ]परे (for [अ]म्बरे). D2 खे शब्दाद्या यथा गुणा (for ᵇ) — For line 208, D3 subst

8** गन्धो गुणश्च मेदिन्या खे शब्दश्च यथा गुण' ।

— (L 209) Dn ध्रुवा (for ध्रुवं) — T1 G3 om (hapl.) lines 210–211 — (L 210) K1 4 तथा, G4 5 प्रभा (for यथा) Ñ1 नित्यं (for दिव्या) G4.5 यथा (for प्रभा) — (L 212) G2 आलोक्य (for आत्मेष्टं) — (L 213) V2 प्रगृह्य; Ds2 प्रयुज्य, D3 प्रसृज्य (for प्रमृज्य) — (L 214) Ñ2 असि (for इति) D3 मतिः (for मन.) D1 मनसीति मम प्रभो (for ᵇ) — (L 215) T4 अन्य- (for अद्य) K4 Ñ1 T1 2 G1.3 5 अद्य साधारणं स्नेहं (for ᵃ) K4 B1 D4 T1 G3 त्वयि तावद्गता ह्य(T1 G3 °तास्म्य)हम्, M4 त्वयीत्यवगतास्म्यहम् (for ᵇ) — (L 216) D3 अनित्यं कामपर्यये; T2 3 G1 4 5 नित्यं कालविपर्ययम् (for ᵇ) — For line 217, D subst

9** अद्यालोक्य गतिं कृत्स्नां नैवं जानामि वा ध्रुवम् ।

— (L 218) D3 अमृतायां (for °ताया) K1.3 4 Ñ1 Dn K1 3 4 Ñ1 Dn द्वितीयोऽपि, V1 °योऽहं; V2 B3 D1 5 6 °योऽयं; D5 °यो हि (for °य हि) K1 4 Ñ1 Dn D1.5 6 जन्मो (Ñ1 Dn °न्मौ) हि, K3 जननो, V1 जन्माहो, B2.3 जन्मापि; D1 जन्मेह, D5 जन्मोऽद्य, G2 जन्म ते (for जन्मेदं). D3 तव (for मम). —(L. 219) Ñ1 D3 T G M4 वेद्मि (for वेत्ति)

ऋजुस्वभावां भक्तां च सर्वथा पुरुषोत्तम ।
अवजानासि जानन्मां कैतवी वृत्तिमास्थितः ॥
एतावत्खलु पर्याप्तं दृष्टं द्रष्टव्यमद्य यत् ।
श्रुतं वाप्यथ वा श्राव्यं दृष्टः स्नेहफलोदयः ॥ [ 225 ]
यदि त्वहमनुग्राह्या मामनुज्ञातुमर्हसि ।
तपस्येयं परं कृत्वा निश्चयं पुरुषोत्तम ॥
भर्तुश्छन्देन नारीणां तपो वा व्रतकानि वा ।
निष्फलं खलु यद्भर्तुरच्छन्देन क्रियेत यत् ॥
इतीदमुक्त्वा पुनरेव शोभना [ 230 ]
मुमोच तोयं नयनोद्भवं सती ।
प्रहाय पीतं हरिवाससः शुभा
पटान्तमाधाय मुखे शुचिस्मिता ॥

Colophon.

वैशंपायन उवाच ।
नारायणः सत्यभामां पुनरेवाथ भारत ।
प्रोवाच प्रणयात्क्रुद्धामभिमानवती सतीम् ॥ [ 235 ]
दहतीव ममाङ्गानि शोकः कमललोचने ।
किमु तत्कारणं येन त्वमेवमतिविक्लवा ॥
शापितासि मम प्राणैराचक्ष्वानत्ययो यदि ।
श्रोतव्यं यदि भक्तेन भर्त्रा सर्वाङ्गशोभने ॥
ततः प्रोवाच भर्तारं सत्या सत्यव्रते स्थितम् । [ 240 ]
बाष्पगद्गदया वाचा तथैवाधोमुखी स्थिता ॥
त्वयैव स्थापितं पूर्वं सौभाग्यं मम मानद ।
जगत्यमलपत्राक्ष तत्ख्यातं केशिनाशन ॥
शिरो वहामि चेष्टत्वात्तवाहं देव गर्विता ।
सर्वसीमन्तिनीमध्ये स्पृहणीयास्मि सर्वथा ॥ [ 245 ]
साहमद्यावहास्यास्मि सपत्नीनां जनस्य च ।

---

— ( L 220 ) Ñ1 D1 T3 4 G3 5 एव , V3 अपि ( for इव ). Dn यत्प्र- , D2 प्रिय ( for संप्र- ) K3 -योजितम् , Ñ1 T1 G1-3 -युज्यसे ( for °ते ) — ( L 222 ) K2 रक्तां च , Ñ1 V1 B1 3 D6 मा भक्तां , D1 भक्ता मा ( for भक्तां च ) — ( L 223 ) K3 कपोती- , K4 Ñ1 Ds1 D5 कैतवां , Ds1 °वी- ( for °वी ) T1-3 G3-5 आश्रित ( for आस्थित ) — ( L 224 ) T4 पर्यन्तं ( for पर्याप्तं ) D4 द्रष्टुं ( for दृष्टं ) K1 3 4 V3 B2 Dn D1 T1 4 G2 अव्ययम् ( for अद्य यत् ) T2 3 G1 4 5 द्रष्टव्यं दृष्टमद्य तत् ( for ᵇ ) — ( L 225 ) K1 2 4 Ñ1 2 V1 2 B3 Ds D1 4-6 T4 G2 यच्छ्राव्यं ; V3 यच्छेषं , B2 D2 यच्छ्रव्यं ( for वा श्राव्यं ) B1 श्रुतं यच्चाप्यथ श्रव्यं ( for ᵃ ) — ( L 227 ) K2 Ñ1 2 V B Dn Ds D5 6 T1 G1 तपस्येऽहं ( for °स्येयं ) K4 T2 ज्ञात्वा ( for कृत्वा ) D2 तपस्येऽहं पदं कृत्वा ; D3 तपश्चर्तुं परं ज्ञात्वा ( for ᵃ ) — ( L 229 ) D3 स्त्रिया कृतम् ( for क्रियेत यत् ) K4 अच्छेदेन क्रियेत हि ( for ᵇ ) — ( L 232 ) K2 V2 3 B3 D2 3 5 जग्राह , D3 ( before corr ) आदाय ( for प्रहाय ) V3 D1 वाससं ( for °स ). Ñ2 D3 4 शुभं ( for शुभा ) T3 G1 3-5 M4 प्रहादपेता ( G3 4 M4 °तं ) हरिवासस. शुभा , G2 जग्राह पीतं हरिवाससं शुभं — ( L 233 ) T3. 4 G1 4 5 आदाय ( for आधाय )

Colophon — *Mention of the Epic* K3 Ds2 T3 — *Mention of Khila* · K3 V B Ds D1 — *Adhy name* · K Ñ1 V B Dn Ds D1 2 4-6 T2 3 G1 पारिजात( K1 °जातक , T3 G1 °जाताप )हरणम् , D3 T1 G4 पारिजात( G4 °जाताप )हरणे सत्यभामासान्त्वनम् ( D3 °भामाकोप. ); T4 G3 सत्यभामासान्त्वनम् — *Adhy no* K3 ( marg ) 120 , Ñ1 123 , V1 126 , V2 125 , V3 124 , B2 T4 128 ; Dn Ds2 D4 121 , D1 118 , D3 130 , T1 G3 4 M4 135 , T2 G1 137 , T3 144 , G2 127 , G5 138

— ( L 234 ) K4 D1 [ए]ष ( for [अ]थ ) V3 D2 पुनरेवाभ्यभाषत ( for ᵇ ) — ( L 235 ) T2 G1 4 5 सखीम् ( for सतीम् ) — Before line 236, some Mss ins वासुदेव., some कृष्ण , some भगवान् — ( L 236 ) Ñ1 V1 B2 Ds2 दंदहीति , D2 दंदह्यते , D5 दंदहन्ति , T1 G2 4 5 M4 दहन्तीव ( for °तीव ) — G3 om lines 237-239. — ( L 237 ) V3 B3 M4 किं तु ( M4 नु ) तत् , Ds किमेतत् ( for किमु तत् ) — ( L 238 ) K4 समतासि , T1-3 G1 4 5 प्रियासि च ( for शापितासि ) M4 प्रियासि मम च प्राणैर् ( for ᵃ ) K2 वचनं , D1 2 5 [अ]नुग्रहो , T2 G1 [अ]न्यमितो , G2 प्रणयो ( for [अ]नत्ययो ) D3 आचक्ष्व न भयं क्वचित् ( for ᵇ ) — ( L 239 ) K4 -शोभिना , Ñ2 -शोधने ( for -शोभने ) — ( L 240 ) D2 G2 स्थिता ( for स्थितम् ) K2 सत्या सत्यप्रतिष्ठितम् ; D3 सत्यभामा व्रते स्थिता ( for ᵇ ) — ( L 242 ) Ñ2 B1 Dn2 Ds1 D4-6 G5 ख्यापितं , M4 [आ]ख्या° ( for स्था° ) — ( L 243 ) K2 Ñ2 D3 4 [उ]त्पल- ( for [अ]मल- ). V2 T2 G1 -पद्माक्ष ( for -पत्राक्ष ) K3 जगत्कमलपत्राक्ष ( for ᵃ ) K2 तत्कृतं ; D3 प्रख्यातं , T1 4 यत्ख्यातं ( for त° ) — ( L 244 ) T3 G1 5 M4 गिरा वदामि चेष्टं त्वां ( for ᵃ ). D6 ( marg ) तेन ( for देव ) — ( L 245 ) B3 सर्वसीमन्तिनीना च ( for ᵃ ).

इति प्रेष्याभिराख्यातं श्रुत्वा तथ्यं ततस्ततः ॥
यत्पारिजातकुसुमं दत्तवान्नारदस्तव ।
तत्किलेष्टजने दत्तं त्वयाहं परिवर्जिता ॥
रत्नातिशयदानेन तस्यामभ्यधिकः किल । [ 250 ]
स्नेहश्च बहुमानश्च प्रकाशं गमितस्त्वया ॥
तामस्तौषीत्समक्षं ते प्रियां स किल नारदः ।
तमश्रौषीश्च हृष्टस्त्वं प्रियायाः संस्तवं किल ॥
स्तोतव्या यदि तावत्सा नारदेन तवाग्रतः ।
दुर्भगोऽयं जनस्तत्र किमर्थमनुशब्दितः ॥ [ 255 ]
प्रणयस्य रसं दत्त्वा पश्चात्तापः प्रभो यदि ।
अनुज्ञां मे प्रयच्छस्व तपः कर्तुं प्रसीद मे ॥
स्वप्नेनापि न दृष्टाहं श्रद्दध्यां पुष्करेक्षण ।
यदन्यदेव निर्वृत्तमश्रौषं पश्यतस्तव ॥
कामः कामं तु तस्यैव मुनेरतुलतेजसः । [ 260 ]
अत्र मन्युस्तु मे देव सांनिध्यं तव तत्र यत् ॥
मानार्थं जीव्यते लोके सद्भिरित्युक्तवानसि ।
तदेवं सति नेच्छामि जीवितुं मानवर्जिता ॥
ममाभवद्यतो रक्षा भयमद्य ततो मम ।
सर्वतो रक्षते यो मां स मां नाद्याभिरक्षति ॥ [ 265 ]
हा गतिं कां गमिष्यामि त्यक्ता देव त्वया विभो ।
कुमुद्वतीगतां नूनं गतिं यास्याम्यसंगता ॥
किमकार्षमहं मोहादीश्वराणां प्रियाप्रियम् ।
प्रिया भूत्वाप्रिया भूता यदहं तव मानद ॥
वसन्तकुसुमैश्चित्रं सदा रैवतकं गिरिम् । [ 270 ]
प्रिया भूत्वाप्रिया भूता कथं द्रक्ष्याम्यहं पुनः ॥
परपुष्टस्वनोन्मिश्रं पुष्पगन्धवहं शुचिम् ।
कथं नामानिलं द्वेष्या सेवेयं दुर्भगा सती ॥
जलक्रीडां तवाङ्कस्था देव कृत्वा महोदधौ ।

— ( L 246 ) K1 Ñ1 2 V2 3 B1 2 Dn T4 G2 [अ]वहास्यामि ( for °स्मि ) T1-3 G1 3-5 M4 सा( T1 अ )हं मान्यापहास्यामि ( T3 G4 °स्मि ) ( for [a] ) V3 जनेश्वर ( for जनस्य च ) — ( L 247 ) D1 दासीभिर् ( for प्रेष्या° ) D6 G4 सत्यं ( for तथ्य ). B1 D8 वचस् ( for ततस् ) — ( L 248 ) K1 3 4 D1 G2 तत् ( for यत् ) T3 G4 तदा ( for तव ) K2 D4 नारदस्तव दत्तवान् ( for [b] ) — ( L 249 ) K4 वृत्तं ( for दत्तं ) D3 -वञ्चिता ( for वर्जिता ) — ( L 250 ) D3 रत्नपुष्पप्रदानेन, D5 रत्नातिश्रेष्ठदा° ( for [a] ) Ñ2 अद्याधिकः, D2 अत्य°, G4 अभ्यधिकं ( for °कः ). G2 कृत. ( for किल ). — ( L 251 ) T2 G1 4 5 प्रकामं (for °शं) — ( L 252 ) V1 किल स ( by transp. ) D5 मानद ( for नारद ). — ( L 253 ) D2 5 अस्तौषीश् ( for अश्रौषीश् ) — ( L. 254 ) D6 T1 M4 ते यत्सा ; T2 3 G1. 4 ते भार्या ( for तावत्सा ). T4 G3 स्तोतव्यो यदि तावत्स ( for [a] ). — ( L 255 ) D3 मादृशो ( for दुर्भगो ) D3 -शंसित ; T2. 3 G1, 3-5 M4 -वन्दित. ( for -शब्दितः ). K1 किमर्थं शब्दितस्त्वया ( for [b] ). — ( L 256 ) Ñ1 2 V2 3 B1 D8 D6 T1-3 G1 3-5 M4 प्रणयं परमं ( Ñ2 V3 B1 D6 तु परं ) दत्त्वा, G2 प्रणयं स्वजने कृत्वा ( for [a] ) D6 परो ( for प्रभो ). K3 V3 T2. 3 G4. 5 पश्चात्तापपरो यदि ( for [b] ). — ( L. 257 ) Dn2 प्रयच्छ त्वं ( for °च्छस्व ) Ñ2 B1 3 Dn D8 D3 5 6 T3 चर्तुं ( for कर्तुं ) — ( L 258 ) Ñ1 स्वप्नेऽपि नैव तद्दृष्टा ; Ñ2 V1 B1 D5 6 स्वप्नेऽपि नैतदृष्टाहं, D2 स्वप्नेऽपि नान्तरं दृष्टा, D6 (marg ) T2 3 G1 3 5 M4 स्नेहेनाहं न दृष्टापि ; T1 स्वप्नं· नाहं न दृष्टापि ( for [a] ) D5 सद्दध्यां ( for श्रद्दध्यां ) — D3 om. lines 260-261 — ( L 260 ) Ñ1 B2 D8 D5 G2 कामं कामोस्तु तस्यैव ( for [a] ) — ( L. 262 ) K4 मानार्थं जीवते लोक. ( for [a] ) K4 D5 सद्भिरित्युक्तमेव हि ; D3 °त्युच्यते सदा ( for [b] ) — ( L 263 ) D3 तेनाहमेव नेच्छामि ( for [a] ) V1 2 D2 T3 जीवितं ( for °तुं ) T2 जीवितं मानवार्जितम् ( for [b] ) — ( L 264 ) K3 Dn पुरा ( for मम ) D4 राज्यं ( for रक्षा ) — ( L 266 ) T1 2 G1 4 5 M4 भो ( for हा ). D4 कां गतिं ( by transp ) Ñ2 श्रयिष्यामि ( for गमि° ) V2 प्रभो ( for विभो ) — ( L 267 ) Ñ2 B1 D8 D4 -गता ( for -गतां ) K3 कुमद्वती गता नूनं ( for [a] ). G4 यास्यति ( for यास्यामि ) Ñ1 [अ]सङ्गवाम्, Ñ2 D3 4 T3 G2 सगता ; M4 [अ]सगतम् ( for °ता ). — ( L 268 ) V3 महा- ( for अहं ) T1-3 G1 3-5 ईश्वरस्य ( for °राणां ). D8 ईश्वरेऽहं त्वयि प्रियं ( for [b] ) — ( L. 269 ) T2 G1 3 4 M4 जाता ( for भूता ) T3 वदाहं ( for यदहं ) — ( L 270 ) T1-3 G1 3-5 M4 -मारुतैश् ( for -कुसुमैश् ). — K2 om. line 271 — ( L 271 ) D2 [अ]परा ( for [अ]प्रिया ). — ( L. 272 ) G4 शुभम् ( for शुचिम् ). — ( L 273 ) Ñ1 व्योमानिलं ( for ना° ) Ñ2 सहेयं ( for सेवेयं ) Ñ1 सुभगा ( for दुर्भगा ) — ( L 274 ) D3 त्वयि गते ( for तवाङ्कस्था ). V1 2 जलक्रीडान्तराङ्कस्था ( for [a] ). D3 देव कर्तुं ; D5 6 कृत्वा देव ( by transp ) — ( L 275 ) G2 कथं दौर्भाग्यसंपन्ना ( for [a] ) T2 3 G1 4 5 M4 प्रिय ( for अपि ) T1 G3 पश्येम प्रिय सं( G3 °सा )गरम् ( for [b] ). — ( L 276 ) K1 V2 त्वत्तो नास्तीति यद्धि मां ( for [b] ) — ( L 277 ) V3 क्वचिद्यातम् ; D2 क्व तथ्यं तद् ; T2-4 G4 M4 कृतघ्नस्त्वं ( M4

कथं दौर्भाग्यमापन्ना पश्येयमपि सागरम् ॥ [ 275 ]
सात्राजिति प्रिया नान्या त्वत्तो मेऽस्तीति विद्धि माम् ।
त्वमवोचः क तद्यातमथ वा कः स्मरिष्यति ॥
यदद्राक्षीद्धि मां श्वश्रूर्बहुमानेन नन्दिनीम् ।
अवज्ञाता त्वया राज्ञी नूनं दौर्भाग्यकीर्तिता ॥
कि तु गूढेन मे प्रेम्णा सुस्निग्धेनापि मानद । [ 280 ]
यत्समानां जनैर्देवो मां न पश्यति नित्यदा ॥
नाहं त्वां कितवं धूर्तमज्ञासिषमरिंदम ।
अद्य ज्ञातोऽसि तत्पक्षश्चञ्चलो जनवञ्चकः ॥
स्वरवर्णेङ्गिताकारैर्निगूढो देव यत्नतः ।
चोर ज्ञातोऽसि तत्पक्षो वाङ्मात्रमधुरः शठः ॥ [ 285 ]
एवमीर्ष्यावशं प्राप्तां देवीं सात्राजितीं हरिः ।
अभिमानवती देवः सान्त्वपूर्वमथाब्रवीत् ॥
मैवं पद्मपलाशाक्षि ममेश्वरि वद प्रिये ।
किमत्र बहुनोक्तेन त्वदीयमवगच्छ माम् ॥
तत्पारिजातकुसुमं तस्या देवि ममाग्रतः । [ 290 ]
नारदो मत्प्रियं कुर्वन्मुनिरक्लिष्टकर्मकृत् ॥
दाक्षिण्यादनुरोधाच्च दत्तवानात्रसंशयः ।
प्रसीदैकापराधं मे मर्षयस्व शुचिस्मिते ॥
पारिजातस्य पुष्पाणि यदीच्छस्यतिकोपने ।
तदा दातास्मि सुश्रोणि सत्यमेतद्ब्रवीमि ते ॥ [ 295 ]
स्वर्गास्पदादानयित्वा पारिजातं द्रुमेश्वरम् ।
गृहे ते स्थापयिष्यामि यावत्कालं त्वमिच्छसि ॥
एवमुक्ता तु हरिणा प्रोवाच हरिवल्लभा ।
यद्येवं स द्रुमः शक्य इहानयितुमच्युत ॥
मन्युरेष प्रमृष्टो हि भवेद्बहुगुणो मम । [ 300 ]
सीमन्तिनीनां सर्वासामधिका स्यामधोक्षज ॥
तथास्तु प्रथमः कल्प इति तां मधुसूदनः ।
प्रोवाचाप्रतिमो देवो जगतः प्रभवोऽव्ययः ॥
तथेत्युक्तेऽथ कृष्णेन तुतोष समितिंजय ।
सत्यभामा सतामिष्टा कंसनाशनवल्लभा ॥ [ 305 ]
ततः स्नातो जगन्नाथः सर्वेशः सर्वभावनः ।

---

°श्रेद् ) ( for क तद्यातम् ) $T_1$ $G_{1, 3\ 5}$ यदवोचः कृतघ्नस्त्वं ( for $^a$ ) $D_3$ मां ( for वा ). $Ds_2$ $D_2$ ( *sup lin* as above ) $_6$ $M_4$ करिष्यति ( for स्म° ) — For line 277, $K_1$ subst

10** मामुवाच भवांस्तथ्यं न नूनमिति चिन्तये ।

— ( L 278 ) $V_2$ वर्धमानेन ( for बहु° ) — ( L. 279 ) $K_3$ $B_1$ $D_{3\ 4}$ अवज्ञातां त्वया राज्ञीं ; $\tilde{N}_2$ V $B_{2\ 3}$ $D_6$ T $G_{1\ 3\ 5}$ °ज्ञातां त्वयाद्राक्षीन् ( $G_2$ °साहं ), $M_4$ °ज्ञातां स्वयं द्राक्षीन् ( for $^b$ ). $K_2$ $V_{2, 3}$ $D_2$ कीर्तिताम् ; $\tilde{N}_{1, 2}$ $V_1$ B $D_{5\ 6}$ $T_{1\ 4}$ $G_{3-5}$ $M_4$ -कर्शिताम् , $T_{2\ 3}$ $G_1$ -दर्शिताम् ; $G_2$ -चेष्टितम् ( for -कीर्तिता ) — ( L 280 ) $K_4$ $T_1$ $G_3$ किं तु ( $T_1$ $G_3$ न ) मूढेन मे प्रेम्णा , $V_1$ किं त्वगूढेन मे प्रेम्णा , $D_3$ किं नु स्तवेन ते प्रेम्णा ( for $^a$ ) $D_3$ ( by corr on marg ) धिग्देहेन , $G_3$ संसिद्धेन ( for सुस्निग्धेन ) $\tilde{N}_2$ कीर्तिता ( for मानद ) — ( L 281 ) $D_4$ यत्स मां स्व- ( for यत्समानां ) $\tilde{N}_1$ यत्समानो जनो देवो ( for $^a$ ) $T_{1\ 3}$ $G_{3\ 4}$ $M_4$ पश्यसि ( for °ति ). — ( L 282 ) $B_2$ ( marg as above ) हि ( for [अ]हं ) $V_1$ पूर्वम् , $G_2$ मूर्खम् ( for धूर्तम् ) — ( L 283 ) $K_2$ तत्त्वेन ; $\tilde{N}_2$ तत्पक्षे , $V_2$ तत्प्रेक्ष ; $V_3$ मत्पक्ष , $D_1$ तत्पक्षं , $G_2$ प्रत्यक्षं ( for तत्पक्षश् ) $V_1$ $B_1$ चपलो ( for चञ्चलो ). $K_2$ बत ( for जन- ) — ( L 284 ) $T_2$ $G_{1\ 4\ 5}$ स्वरवर्णेङ्गिताकारो ( for $^a$ ). $V_2$ निगूढेनैव यत्नतः ( for $^b$ ) — ( L 285 ) $K_{1\ 3}$ $\tilde{N}_1$ $B_3$ Dn $D_{1\ 4}$ $T_{2\ 4}$ $G_1$ $M_4$ तत्पक्ष , $K_2$ तत्त्वज्ञो ; $D_3$ सुव्यक्तो , $D_5$ यत्पक्षो ( for तत्पक्षो ) — ( L 286 ) $K_2$ $D_1$ ईर्ष्यां च सं- , $D_6$ ईर्ष्यावशां ( for °वशं ) — ( L 287 ) $B_3$ $T_4$ देवीं ( for देवः ) $V_1$ $T_2$ साम- , $V_2$ शम- ( for सान्त्व- ). — Before line 288, $K_3$ ins श्रीकृष्ण: — ( L 288 ) $T_{1-3}$ $G_3$ न ( for मा ) $T_{1\ 4}$ Gs प्राणेश्वरि ( for ममे° ). — ( L. 290 ) $V_1$ $B_{1\ 3}$ $D_5$ यत् ( for तत् ) — ( L 291 ) $B_2$ $T_{1-3}$ $G_{1\ 4\ 5}$ ऽदात्प्रियं , $D_2$ यत्प्रियं ( for म° ). $K_2$ $D_4$ कर्तुं ( for कुर्वन् ) $\tilde{N}_2$ -कर्मवित् ( for °कृत् ) — ( L 292 ) $D_4$ तत्तथा ( for दत्तवान् ) — ( L 293 ) $D_1$ हर्षयस्व ( for म° ) — ( L 294 ) $T_4$ $M_4$ पारिजातकपुष्पाणि ( for $^a$ ) $V_3$ $D_4$ च कोपने ; $D_3$ [अ]तिशोभने ( for [अ]तिकोपने ) $K_2$ यदिच्छसि च कोपने ; $V_1$ $B_1$ $D_{5\ 6}$ त्वं यदीच्छसि कोपने ; $D_2$ यदिच्छस्यतिशोभने ( for $^b$ ) — ( L 295 ) $D_4$ प्रसीद मे ( for ब्रवीमि ते ) — ( L. 296 ) $K_2$ स्वर्गादानयित्वा वै ( submetric ), $\tilde{N}_2$ $V_1$ $B_{1, 2}$ $D_{5\ 6}$ स्वर्गादिहानयित्वा वा ( for $^a$ ) $K_{1\ 3\ 4}$ Dn Ds $D_1$ पारिजातद्रु( Dn Ds °तं द्रु )मं परम् ( for $^b$ ) — ( L 297 ) $T_1$ तं ( for ते ) — Before line 299, $K_3$ ins सत्यभामा उवाच — ( L 300 ) $K_1$ $V_3$ प्रनष्टो ( for प्रमृष्टो ) K $\tilde{N}_2$ V B Dn Ds $D_{1-5}$ $T_4$ गुणं ( for -गुणो ) — ( L. 303 ) $T_2$ $G_1$ प्रीतिमान् ( for [अ]प्रतिमो ). $K_1$ $\tilde{N}_{1\ 2}$ $G_3$ जगतः प्रभवाप्यय ; $T_3$ $G_{4, 5}$ °तः प्रथमोऽव्यय , $G_2$ °त प्रभुरव्ययः ( for $^b$ ).

चकारावश्यकं सर्वं सर्वकामप्रदः सताम् ॥
दध्यौ च नारदं देवः स्नातो देवमुनिं नृप ।
अभ्याजगाम स्नानान्ते मुनिश्रेष्ठो महोदधौ ॥
तमागतं नरपते सतां गतिरधोक्षजः । [ 310 ]
सत्यया सह धर्मात्मा यथाविधिमपूजयत् ॥
पादौ प्रक्षालयांचक्रे मुनेः सात्राजिती स्वयम् ।
जलं देवः स्वयं कृष्णो भृङ्गारेण ददौ तदा ॥
अथोपकल्पयामास सुखासीनाय केशवः ।
परमान्नं स मुनये प्रयतात्मा जगद्गुरुः ॥ [ 315 ]
तल्लोककर्त्रा सत्कृत्य दत्तं मुनिरुदारधीः ।
बुभुजे वदतां श्रेष्ठः श्रद्धया परयान्वितः ॥
उपस्पृश्य ततस्तृप्तः प्रददौ चाशिषः प्रभोः ।
ताश्च प्रीतेन मनसा प्रतिजग्राह केशवः ॥
ततः सात्राजितीं देवीं प्रणतां नारदोऽब्रवीत् । [ 320 ]
प्रसार्य दक्षिणं हस्तं सजलं जलजेक्षणाम् ॥
यथेदानीं तथैव त्वं भव देवि पतिव्रता ।
सविशेषं च सुभगा भव त्वं तपसो बलात् ॥
इत्युक्ता मुनिमुख्येन सत्यभामा हरिप्रिया ।
उत्तस्थौ महता युक्ता हर्षेण तु नराधिप ॥ [ 325 ]
स कृष्णोऽप्यभ्यनुज्ञां तु लब्ध्वा मुनिवरात्तदा ।
बुभुजे विघसं धीमानप्रमेयपराक्रमः ॥
ततस्त्वावश्यकं कृत्वा सत्यभामापि भारत ।
अनुज्ञया तदा भर्तुर्विवेशान्तर्गृहं मुदा ॥
ततो विनिर्गता देवी कृष्णस्यैवाभ्यनुज्ञया । [ 330 ]
स्थिता पार्श्वे च कृष्णस्य नमस्कृत्वा महात्मने ॥
ततो मुहूर्तमासित्वा नारदः कृष्णमब्रवीत् ।
आपृच्छे त्वां गमिष्यामि शक्रलोकमधोक्षज ॥
तत्राद्य देवामीशानं नमस्कृत्य महेश्वरम् ।
गास्यन्ति देवगन्धर्वास्तथैवाप्सरसां वराः ॥ [ 335 ]
मासि मास्युचितं ह्येतन्महेन्द्रसदने विभो ।
पूजार्थं देवदेवस्य गान्धर्वं नृत्यमेव च ॥
अन्तर्हितो देवदेवः सोमः सप्रवरो विभुः ।

---

— Before line 304, some Mss ins वैशंपायन — (L. 304) $K_2$ $B_2$ $D_2$ [उ]क्त्वा (for [उ]क्ते) $K_2$ $B_2$ $D_4$ $G_2$ तुतोष जनमेजय (for $^b$) — (L 305) $D_3$ सती दृष्टा (for सतामिष्टा) — (L 306) $\tilde{N}_{1\ 2}$ $V_1$ $B_{1\ 3}$ $D_{5\ 6}$ सर्वात्मा, $D_1$ सर्ववीर्यः, $T_{1-3}$ $G_{1,\ 3-5}$ $M_4$ सर्वग (for सर्वेशः) — (L 307) $D_6$ (marg) $T_{2\ 3}$ $G_{1,\ 3-5}$ $M_4$ कर्म (for सर्वं) $T_3$ -प्रदं (for -प्रदः) — (L 308) $K_2$ $\tilde{N}_2$ $V_2$ $B_{1\ 3}$ $D_{5\ 6}$ ध्यातो (for स्नातो). $K_{2-4}$ $\tilde{N}_{1,\ 2}$ $V_{1\ 2}$ B Dn Ds $D_{1\ 4-6}$ T $G_{1-3,\ 5}$ $M_4$ देवमुनिर् (for °मुनिं) — (L. 309) $\tilde{N}_1$ स्नात्वा स; $\tilde{N}_2$ $V_1$ $B_{2\ 3}$ $D_{2\ 5\ 6}$ स स्नात्वा, $V_3$ सुस्नातो, $T_{1-3}$ $G_{1\ 3\ 5}$ $M_4$ स्नात्वा तु (for स्नानान्ते). $G_2$ महातपाः (for महोदधौ). — (L 311) $K_1$ Dn Ds $D_3$ $T_{1\ 4}$ $G_5$ $M_4$ यथाविधि (for °विधिम्) $K_3$ पूजयेत्तं यथाविधि, $K_4$ यथाविधिः पूजयन्, $D_2$ स यथाविध्यपूजयत्, $T_{2\ 3}$ $G_1$ यथाविध्यभ्यपूजयत्, $G_3$ °विधि चापूजयत् (for $^b$) — (L 315) $\tilde{N}_2$ परमात्मा, $D_2$ स पूतात्मा (for प्रय°) — (L 316) $\tilde{N}_2$ -भर्त्रा (for कर्त्रा) — (L 317) $D_4$ $G_4$ युत (for [अ]न्वित) $K_4$ श्रिया परमयान्वित (for $^b$) — (L 318) K $T_1$ अप स्पृश्य, $D_6$ उपश्रुत्य (for °स्पृश्य) $K_4$ तत्र (for तृप्त) $\tilde{N}_1$ $D_5$ (marg as above) $_6$ प्रयुयोजाशिष प्रभो, $T_2$ $G_{1\ 4\ 5}$ प्रददौ चाशिषं प्रभो (for $^b$) $G_3$ om lines 319$^b$–322$^a$ — (L 321) $D_4$ $G_2$ $M_4$ जलजेक्षणः (for °णाम्) — (L. 322) $D_3$ (before corr. as above) यथेन्द्राणी (for °दानीं) — (L 323) $\tilde{N}_{1\ 2}$ V B Dn Ds $D_6$ $T_{1\ 4}$ $G_2$ मत्तपसो, $D_{2\ 3}$ मे त° (for त्वं त°). $K_4$ भव त्व कृष्णवल्लभे (for $^b$) — (L 325) K $D_1$ (marg) $T_3$ मुनिना (for महता) — (L 326) $K_1$ अथ कृष्णोऽभ्यनुज्ञां तु, $\tilde{N}_{1\ 2}$ $V_1$ B $D_{2,\ 6}$ कृष्णोऽभ्यनुज्ञां कौरव्य, $D_3$ स कृष्णोऽथाभ्यनुज्ञातो (for $^a$). — (L 327) $\tilde{N}_1$ $V_2$ $B_{1\ 3}$ $D_{5\ 6}$ पायसं (for विघसं). $D_{2\ 3}$ श्रीमान् (for धी°). $V_1$ बुभुजे पायसं श्रीमान्, $T_{2\ 3}$ $G_{1\ 4\ 5}$ $M_4$ °जे विघसान्नं तद् (for $^a$). — (L. 328) $K_{3\ 4}$ $T_3$ नारद, $D_2$ भामिनी (for भारत.) — (L 329) $B_3$ अनुज्ञाप्य; $G_2$ °ज्ञाता (for °ज्ञया). $T_2$ $G_{1\ 4}$ [अ]पि सा, $G_3$ [अ]थ सा (for तदा) $T_1$ $G_3$ [अ]न्तःपुरं (for [अ]न्तर्गृहं) $K_1$ $V_3$ $G_5$ तदा (for मुदा). V $T_{2\ 3}$ $G_{1\ 4}$ $M_4$ विवेशान्त पुरं तदा (for $^b$) — (L 330) $K_1$ विसर्जिता, $D_2$ सत्राजिती (for विनिर्गता); $K_2$ ततो विनिर्गतां देवीं (for $^a$). — (L 331) $K_2$ स्थितां (for स्थिता) $\tilde{N}_2$ $D_5$ $G_2$ नमस्कृत्य (for °त्वा). $B_1$ (marg) महामुनिम्, $T_4$ °त्मन (for °त्मने) $D_3$ नमस्कृत्य महामुनेः (for $^b$) — (L. 333) $\tilde{N}_{1\ 2}$ $V_1$ $B_1$ $D_6$ आमन्त्र्य (for आपृच्छे) $D_3$ अरिंदम (for अधोक्षज) — (L. 334) $\tilde{N}_1$ $B_{1\ 3}$ पुरस्कृत्य, $D_2$ $T_2$ $G_{1\ 2}$ नमस्कृत्वा (for °स्कृत्य). — $\tilde{N}_2$ om line 335. — (L 335) $K_1$ देवं (for देव-). $\tilde{N}_1$ [अ]प्सरसो (for °सां). $K_{3,\ 4}$ B Dn $D_{1,\ 4\ 6}$ गणाः (for

पश्यत्यमरमुख्येन कृतं भक्त्याद्रिघातिना ॥
निमन्त्रितोऽहं पूर्वेद्युः पुष्पं दातुं महाद्युते । [ 340 ]
पारिजातस्य भद्रं ते तरुराज्ञो महात्मनः ॥
यदेतदाहृतं स्वर्गात्तत्त्वदर्थं मया विभो ।
देवोपभोग्यमेतद्धि तरुराजसमुद्भवम् ॥
इष्टः स वृक्षः सततं शच्याः पुष्करलोचन ।
सौभाग्यमावहत्येव पूज्यमानोऽपि नित्यशः ॥ [ 345 ]
पुण्यं कर्तुं तदा सृष्टः पारिजातो महाद्रुमः ।
अदित्या धर्मनित्येन कश्यपेन महात्मना ॥
पुरादित्या महातेजास्तोषितः किल कश्यपः ।
वरेण च्छन्दयामास मारीचस्तपसो निधिः ॥
सोवाच सुभगा येन भवेयं मुनिसत्तम । [ 350 ]
स्वलंकृता कामतश्च सर्वैरेव विभूषणैः ॥
ईप्सितं गीतनृत्यं च भवेन्मम तपोधन ।
कुमारी नित्यदा चैव भवेयं तपसां निधे ॥
विरजाः शोकरहिता भवेयमपि नित्यदा ।
पतिभक्तिमती चैव धर्मशीला तथैव च ॥ [ 355 ]
पारिजातं ततोऽस्राक्षीददित्याः प्रियकाम्यया ।
सर्वकामप्रदैः पुष्पैरावृतं दिव्यगन्धदैः ॥
त्रिशाखं सर्वदा दृश्यं सर्वभूतमनोहरम् ।
सर्वपुष्पाणि दृश्यन्ते तस्मिन्नेव महाद्रुमे ॥
ईदृशान्यस्य पुष्पाणि बिभर्त्येकातिरूपिणी । [ 360 ]
बहुरूपाणि चाप्यन्या पद्मानि च तथापरा ॥
मन्दारादपि वृक्षाच्च सारमुद्धृत्य कश्यपः ।
तस्मादेष तरुश्रेष्ठः सर्वेषां श्रेष्ठतां गतः ॥
ततस्तत्र निबध्याथ कश्यपं प्रददौ शुभा ।
अदितिर्मम पुण्यार्थं सौभाग्यार्थं तथैव च ॥ [ 365 ]
निष्क्रयेण मया मुक्तः कश्यपस्तु तपोधनः ।
इन्द्रो दत्तस्तथेन्द्राण्या सौभाग्यार्थं ततो मम ॥
सोमश्चाप्यथ रोहिण्या ऋद्ध्या च धनदस्तथा ।
एवं सौभाग्यदो वृक्षः पारिजातो न संशयः ॥
पारिजातो विष्णुपत्न्याः पारिजातेति शब्दितः । [ 370 ]

---

वराः ) — ( L 336 ) $D_4$ Bom ed माहेन्द्र- ( for म° ) $D_3$ भवने ( for -सदने ) — ( L 337 ) $B_2$ देवराजस्य ( for °देवस्य ) $V_2$ क्रियते ( for गान्धर्वं ) $K_1$ गन्धर्वैर्नृत्तमेव च ( for ᵇ ) — ( L 338 ) $K_3$ सपार्षदो ( for सप्रवरो ) $K_4$ $V_3$ हरि- ( for विभु- ) — ( L 339 ) $D_3$ -राजेन ( for -मुख्येन ) $D_{2-4}$ $M_4$ [अ]रि- ( for [अ]द्रि- ) $D_3$ कृत शक्त्यारिघातिना ( for ᵇ ) — ( L 340 ) $K_{1\ 3}$ $\tilde{N}_1$ $V_3$ $D_{1-3}$ $T_{1\ 4}$ $G_5$ दत्तं, $V_{1\ 2}$ $B_2$ Dn $D_5$ दत्त्वा ( for दातुं ) $\tilde{N}_2$ महामते ( for °द्युते ) — ( L 341 ) $V_1$ वृक्ष- ( for तरु- ) — ( L 342 ) $\tilde{N}_1$ $D_2$ त्वदर्थं ( $D_2$ °र्थे ) भो , $\tilde{N}_2$ $B_2$ Ds $D_5$ $T_1$ $G_3$ त्वदर्थं तु , $V_1$ तवार्थं च , $B_{1\ 3}$ $D_6$ तवार्थं भो ( for तत्त्वदर्थं ). $V_2$ त्वदर्थं भो मया प्रभो ( for ᵇ ) — ( L 343 ) $K_{1\ 3\ 4}$ $V_3$ $B_3$ ( marg ) Ds $D_1$ -समुद्गतम् ( for °द्भवम् ) — ( L 344 ) $D_4$ पङ्कज- ( for पुष्कर- ) — For line 345, $T_{1-3}$ $G_{1,\ 3-5}$ $M_4$ subst .

11** सौभाग्यार्थं तवैवाहं पुष्पमाहृतवांस्ततः ।

— ( L 346 ) $K_1$ यदा सृष्ट- , $T_{1-3}$ $G_{1,\ 3-5}$ समादिष्ट. ( for तदा सृष्टः ) — ( L 348 ) $B_3$ $D_6$ महातेजाः पुरादित्या ( for ᵃ ) $D_3$ प्रार्थित ( for तोषित ) — ( L 349 ) $K_2$ कश्यपो , $V_1$ $D_{1-5}$ T $G_{1,\ 2\ 4\ 5}$ तपसां ( for °सो ) $D_3$ बलात् ( for निधि ) — ( L 351 ) $V_1$ $D_3$ अलंकृता ( for स्व° ) $D_{s1}$ रत्न- , $T_{2\ 3}$ $G_{1\ 4}$ अपि ( for एव ) — ( L 352 ) $V_3$ गन्धनृत्यं , $B_2$ $D_3$ $T_5$ नृत्यगीतं , $T_{1\ 2\ 4}$ $G_{3\ 4}$ गीतनृत्तं , $G_{1\ 5}$ नृत्तगीतं ( for गीतनृत्यं ) — ( L 353 ) $K_2$ $D_4$ $T_{2\ 3}$ $G_{1-4}$ $M_4$ भवेयं तव संनिधौ ( for ᵇ ) — ( L 354 ) $D_6$ विजरा , $T_4$ विरुजा ( for विरजा ) — ( L 356 ) $G_2$ साक्षाद् ( for ऽस्राक्षीद् ) — ( L 357 ) $T_4$ Bom Poona Cal eds G(ed) नित्य ( for दिव्य- ) $K_2$ गन्धजैः , $B_3$ °कैः , $D_6$ $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ -गन्धिभि ( for गन्धदैः ) — ( L 360 ) $T_{2\ 3}$ $G_{1\ 3-5}$ रूपाणि ( for पुष्पाणि ) $V_1$ $D_4$ ईदृशान्येव ( $D_4$ °न्यति ) रूपाणि , $M_4$ °शान्यन्यरूपाणि ( for ᵃ ) — ( L 361 ) $\tilde{N}_2$ $B_{1.\ 2}$ $D_6$ -वर्णानि ( for -रूपाणि ) $V_1$ $D_{2\ 3}$ [अ]न्यानि ; $D_1$ [अ]प्येतत् ( for [अ]प्यन्या ) $D_3$ बिभर्ति च तथापरम् ( for ᵇ ) — ( L 362 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ मन्दा( $G_5$ °न्द )राणां तु वृक्षाणां ( $G_4$ °क्ष ) ( for ᵃ ) — ( L 363 ) $G_2$ देव ( for [ए]ष ) $V_1$ $D_6$ ज्येष्ठतां ( for श्रेष्ठतां ) — After line 363, $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ ins

12** अदित्यै प्रददौ श्रीमान्पारिजातं महाद्रुमम् ।

— ( L 364 ) $V_3$ निवेश्य ( for निबध्य ). $K_{1\ 3}$ $V_3$ Dn $D_{1\ 5}$ T $G_{1\ 3-5}$ शुभे ( for शुभा ) — ( L 365 ) $K_3$ ततो मम ( for तथैव च ) — After line 365, Bom Poona eds G(ed) ins

13** अदित्या कश्यपो दत्तः पुण्यार्थं च ततो मम ।
पुष्पदाम्ना वेष्टयित्वा कण्ठे पुण्यार्थमात्मवान् ॥

मन्दारपुष्पैर्यद्युक्तो मन्दारस्तेन कथ्यते ॥
कोऽप्ययं दारुरित्याहुरजानन्तो यतो जनाः ।
कोविदार इति ख्यातः संततः स महातरुः ॥
मन्दारः कोविदारश्च पारिजातश्च नामभिः ।
स वृक्षो ज्ञायते दिव्यो यस्यैतत्कुसुमोत्तमम् ॥ [ 375 ]

Colophon

वैशंपायन उवाच ।

ततो जिगमिषुं तत्र नारदं मुनिसत्तमम् ।
प्रोवाच भगवान्विष्णुरप्रमेयपराक्रमः ॥
महर्षे धर्मतत्त्वज्ञ स्वर्गं गत्वा त्वयानघ ।
दृष्ट्वा सदस्यान्देवस्य त्रिपुरघ्नस्य धीमतः ॥
अनुज्ञया मद्वचनाद्विज्ञाप्यः पाकशासनः । [ 380 ]
संवर्णयित्वा भ्रातृत्वं पौराणं वेत्सि यन्मुने ॥
यदस्राक्षीन्मुनिश्रेष्ठो भगवान्कश्यपस्तरुम् ।
पारिजातं पुरादित्याः प्रियार्थं धर्मवित्तम ॥
स पुण्यमतिसौभाग्यं ददाति तरुसत्तमः ।
तव दत्तं पुरा दानं व्रते च तरुसत्तमम् ॥ [ 385 ]
देवीभिर्धर्मनित्याभिर्धर्मार्थममरोत्तम ।
दत्तं श्रुत्वाभिकाङ्क्षन्ति दातुं पत्न्यो मम प्रभो ॥
पुण्यार्थं दानधर्मार्थं मम प्रीत्यर्थमेव च ।
आनाय्य च द्वारवतीं पारिजातं महातरुम् ॥
दत्ते दाने पुनः स्वर्गं तत्र तं नाययिष्यसि । [ 390 ]
स वाच्य एवं भगवान्बलभिद्भगवंस्त्वया ॥

---

— (L 366) $K_{2}$ स (for तु) — (L 367) $D_{2}$ ममानया (for ततो मम) — (L 368) $T_{1}$ पुलोम्या (for ऋद्ध्या च) — (L 370) $T_{2\,3}$ $G_{1\,4\,5}$ विष्णुपद्या, $M_{4}$ °पत्न्या (for °पद्या·) $\tilde{N}_{2}$ विश्रुत (for शब्दित·) — (L 371) $D_{3}$ युक्तोऽयं; $D_{4}$ यास्सिक्तो (for यद्युक्तो) $D_{3}$ चोच्यते (for कथ्यते) — (L 372) $D_{3}$ [ए]वं (for [आ]हुर्) $V_{1}$ जानन्तोऽपि, $D_{3}$ प्राहुरेनं (for अजानन्तो) $D_{2}$ यतो नरा, $T_{4}$ महाजना· (for यतो जना) — (L 373) $K_{1}$ $D_{3}$ तत स तु, $K_{2}$ $\tilde{N}_{2}$ $V_{1}$ $B_{3}$ $D_{4}$ तत्त्वत· स, $K_{3}$ $\tilde{N}_{1}$ $V_{2}$ $B_{1\,2}$ Dn Ds $D_{1\,5\,6}$ $T_{1}$ $G_{2}$ तत· स सु·, $V_{3}$ ततश्च सु·; $D_{2}$ तत· सत्सु, $T_{4}$ ततस्तु सु· (for संतत· स) $K_{4}$ तत स समुदाहृतः (for $^{b}$) — (L. 375) $T_{2}$ $G_{4}$ तत् (for [ए]तत्) $D_{3}$ पुष्पित कुसुमोत्तम (for $^{b}$)

COLOPHON — *Mention of the Epic* · $K_{3}$ $Ds_{2}$ $T_{3}$ — *Mention of Khila* $K_{3\,4}$ $\tilde{N}_{1\,2}$ V B $Dn_{2}$ Ds $D_{1}$ — *Adhy name* K $\tilde{N}_{1}$ V B Dn Ds $D_{1\,2\,4-6}$ $T_{1\,2\,4}$ $G_{1\,4}$ पारिजात( $T_{2\,4}$ $G_{1}$ °जाताप )हरणम्, $D_{3}$ पारिजातहरणे नारदवाक्यम्. — *Adhy no* $K_{3}$ (marg) 121, $\tilde{N}_{1}$ 123, $V_{1}$ 127, $V_{2}$ $B_{2}$ 126, $V_{3}$ 125, Dn $Ds_{2}$ $D_{4}$ 122, $D_{1}$ 119, $T_{1}$ $G_{3\,4}$ $M_{4}$ 136, $T_{2}$ $G_{1}$ 138, $T_{3}$ 145, $T_{4}$ 129, $G_{2}$ 128, $G_{5}$ 139

(L 377) $D_{3}$ उवाच (for प्रो°) — (L 378) $T_{1-3}$ $G_{1\,3-5}$ $M_{4}$ महर्षे सर्वधर्मज्ञ (for $^{a}$) $D_{3}$ स्वर्गं गच्छ त्वनिन्दित (for $^{b}$) — (L 379) $D_{6}$ सदसि, $T_{4}$ °स्यं (for °स्यान्) $D_{2}$ देवर्षे (for °स्य) $D_{3}$ दृष्ट्वा सदस्तु देवर्षे (for $^{a}$) — (L. 380) $K_{3}$ $D_{3-5}$ ममाज्ञया, $\tilde{N}_{1\,2}$ V B Dn Ds $T_{4}$ अना°, $D_{6}$ तदा°, $T_{1}$ अनुज्ञातुं, $G_{3}$ °ज्ञाय (for °ज्ञया) $K_{1\,4}$ ममाज्ञया स भवता (for $^{a}$). — (L 381) $K_{4}$ संवर्णयामि त्वां चाह; $D_{1}$ $T_{4}$ संभावयित्वा भ्रातृत्वं (for $^{a}$) — (L 382) Dn Ds $D_{2-4\,6}$ T G $M_{4}$ यम् (for यद्) $K_{2}$ तु तम् (for तरुम्). — (L 383) $K_{1\,4}$ $\tilde{N}_{2}$ धर्मसत्तम·; $K_{2\,3}$ $\tilde{N}_{1}$ $B_{1}$ Dn Ds $D_{2-4}$ $G_{2}$ °वित्तम·, $B_{2.\,3}$ $D_{5\,6}$ $T_{3\,4}$ $M_{4}$ °भृत्तमः (for °वित्तम) $D_{1}$ $T_{1\,2}$ $G_{1\,3-5}$ सुखार्थं धर्मभृ( $T_{1}$ °वि )त्तम· (for $^{b}$) — $B_{3}$ om line 384 — (L 384) $T_{1\,2}$ $G_{1\,3}$ ददाति तरुरुत्तम (for $^{b}$) — $D_{1}$ $T_{2}$ $G_{1}$ om (hapl) line 385 — (L 385) $\tilde{N}_{2}$ $B_{1\,3}$ $D_{5}$ तत्र दत्तं, $T_{1}$ $G_{3\,4}$ $M_{4}$ तवाकृत (for तव दत्तं). $T_{3}$ तवाकृत पुरा तेन (for $^{a}$) $K_{4}$ $V_{1}$ $D_{2}$ $G_{2}$ व्रतं (for व्रते) $K_{1}$ $\tilde{N}_{2}$ $V_{2\,3}$ $B_{1\,2}$ $D_{5\,6}$ व्रतं च तरुसत्तमे, $\tilde{N}_{1}$ $B_{2}$ $G_{5}$ व्रतेन तरुमुत्तमम्, $T_{1\,4}$ संप्राप्ते ( $T_{4}$ वृतेन ) तरुसत्तम ; $T_{3}$ $G_{3\,4}$ $M_{4}$ प्राप्तेन तरुसत्तमम् (for $^{b}$) — (L 386) $D_{1}$ -निष्ठाभिर् (for -नित्या°) $B_{2}$ देवीधर्मार्थनित्याभिर्, $D_{2}$ देवीभिर्नित्यविश्वा° (for $^{a}$) $D_{6}$ $T_{4}$ अमरोपम, $T_{1-3}$ $G_{1,\,3-5}$ $M_{4}$ अमराधिप (for °रोत्तम). — (L 387) $G_{2}$ पत्नी (for पत्न्यो) — (L 388) $K_{2}$ पुण्यार्थं धर्मदानार्थं (for $^{a}$). — (L 389) K $\tilde{N}_{1}$ $V_{1\,2}$ B Dn Ds $D_{4\,5}$ $G_{2}$ आनाययद्; $\tilde{N}_{2}$ °ययस्व, $V_{3}$ $D_{6}$ आनीय यद्; $D_{3}$ $T_{1}$ $G_{3}$ आनीय त (for आनाय्य च). $D_{1}$ आनीय द्वारकां चैव; $D_{2}$ आनीय द्वारवतीं च (for $^{a}$) $K_{2}$ $\tilde{N}_{1\,2}$ $V_{2}$ $B_{3}$ Dn Ds $D_{2-6}$ T G $M_{4}$ महाद्रुमम् (for °तरुम्) — (L 390) $K_{1}$ $\tilde{N}_{1}$ $V_{2}$ $B_{1\,3}$ $D_{5}$ $T_{4}$ तरु तं, $\tilde{N}_{2}$ तरु ते, $V_{1}$ तं तरु, $B_{2}$ तरुं त्वं (for तत्र तं). $K_{2-4}$ $D_{2\,4}$ तरु तं प्रा( $D_{2}$ स्था )पयिष्यसि, $V_{3}$ $D_{3}$ तरु त्वं प्राप°, $D_{1}$ तरु त्वं नेतुमर्हसि; $T_{1-3}$ $G_{1\,3-5}$ $M_{4}$ तरु तं ता( $T_{1}$ धा )रयिष्यसि, $G_{2}$ तरुं तं प्रापयस्व मे (for $^{b}$) — (L 391) $K_{2\,3}$ $\tilde{N}_{1\,2}$ V B Dn Ds $D_{3-6}$ $T_{1-3}$ $G_{1,\,2\,4\,5}$ $M_{4}$ प्र- (for स) $K_{1}$ एवं वाच्य स भगवान् (for $^{a}$) — (L 392) $K_{3}$ प्रयत्नेन; $G_{4}$ प्रयुक्तश्च (for प्रयत्नश्च). $K_{1.\,3,\,4}$ $V_{3}$ $D_{1}$ कार्योऽपि ( $K_{1}$ °र्योऽयं ) मुनिसत्तम;

तथा तथा प्रयत्नश्च कार्यो मुनिवर त्वया ।
यथा तरुवरं दद्यात्पारिजातं सुरेश्वरः ॥
तत्र दूतगुणं तावत्पश्यामस्ते तपोधन ।
संभाव्या सर्वकृत्यानां संपद्धि त्वयि मे मता ॥ [ 395 ]
एवं नारायणेनोक्तो नारदो भगवानृषिः ।
प्रहस्योवाच केशिघ्नमिदं वाक्यं तपोधनः ॥
बाढमेवं प्रवक्ष्यामि यदुमुख्य सुरेश्वरम् ।
न तु दास्यति देवेन्द्रः पारिजातं कथंचन ॥
मन्दरं पर्वतश्रेष्ठ दानवैस्त्रिदशैस्तथा । [ 400 ]
निक्षिप्य तोयधौ पूर्वं पारिजातः समाहृतः ॥
मन्दरं पर्वतश्रेष्ठं नयितुं प्रेषितः पुरा ।
पारिजातं हरेणापि लोककर्त्रा जनार्दन ॥
स्वयं विज्ञापितो गत्वा ततः शक्रेण शंकरः ।
आक्रीडद्रुम उद्याने शच्याः स्यादिति याचितः ॥ [ 405 ]
तथास्त्वित्यति वरो दत्तो महादेवेन चानघ ।
न च नीतः पारिजातो मन्दरं चित्रकन्दरम् ॥
क्रीडावृक्षः स शच्येति व्यपदेशेन मोक्षितः ।
महेन्द्रेण महाबाहो पारिजातस्तरुः पुरा ॥
प्रियार्थमुमयास्राक्षीत्पारिजातवनं हरः । [ 410 ]
गव्यूतिमात्रविस्तीर्णं मन्दरस्यैककन्दरे ॥
न तत्र सूर्यभाः कृष्णः प्रविशन्ति नगोत्तमे ।
न च चन्द्रप्रभाः शीता नैव कृष्ण सदागतिः ॥
शीतोष्णे छन्दतस्तत्र शैलपुत्र्या भवन्ति हि ।
स्वयंप्रभं वनं तद्धि महादेवस्य तेजसा ॥ [ 415 ]
वर्जयित्वा महादेवं सगणं यदुवर्धन ।
मां चान्यस्तद्वनं दिव्यं न प्रयाति कथंचन ॥
स्रवन्ति तत्र वार्ष्णेय पारिजाताः समन्ततः ।
सर्वरत्नानि मुख्यानि मनसा काङ्क्षितानि वै ॥
गणास्तान्युपभुञ्जन्ति प्रवराणां महात्मनाम् । [ 420 ]
आज्ञया देवदेवस्य लोकनाथस्य केशव ॥

---

Bom Poona eds G(ed) कार्योऽस्मिन्मुनिसत्तम ( for $^{b}$ ) — ( L 393 ) $V_1$ $B_{2\ 3}$ $D_6$ यथा तरुं ( for तरुवरं ) — ( L 394 ) $V_2$ अत्र दूत-, $D_3$ तत्तु दूते, $T_1$ तत्तदूत- ( for तत्र दूत- ) $K_1$ $V_1$ $B_{2\ 3}$ $D_{2\ 4\ 6}$ -गुणांस्, $K_{2\ 3}$ $B_3$ $D_1$ $M_4$ -गणांस् ( for गुणं ) — $G_2$ om ( hapl ) lines 395–397 —( L 395 ) $K_4$ समाधिस्, $D_6$ सम्यग्धीस् ( for संपद्धि ) $K_2$ संपदस्त्वयि मे मता, $K_4$ सम्यक्त्वं त्वयि मे मतम्, $T_{1-3}$ $G_{1\ 3-5}$ सम्यक्त्वमसि मे मत ( $T_3$ °ति ) — Before line 396, Dn ins वैशंपायन —( L 396 ) $K_4$ भगवान्नारदो मुनि ( for $^{b}$ ) —( L 398 ) $K_3$ $\tilde{N}_1$ $V_3$ $D_2$ $T_1$ $G_5$ सुरेश्वर ( for °श्वरम् ) —( L 399 ) $V_1$ न प्रदास्यति गोविन्द ( for $^{a}$ ) —$G_{4\ 5}$ repeat line 400 after 401 —( L. 400 ) $B_3$ पर्वतं ( for °त- ) $\tilde{N}_1$ $D_3$ om. ( hapl ) lines $401^{b}$–$402^{a}$. —( L 401 ) $D_2$ वारिधौ ( for तोयधौ ) —( L 402 ) $K_3$ $D_5$ मन्दरे पर्वतश्रेष्ठे ; $G_3$ °रात्पर्वतश्रेष्ठान् ( for $^{a}$ ) $K_4$ नेतु सं-, $T_1$ नायकं, $T_{2\ 3}$ $G_{1,\ 4}$ नायितुं ( for न° ) $V_{1,\ 2}$ B प्रेषितुं, $G_4$ पृष्ठतः ( for प्रेषित. ) $D_3$ नयितुं प्रेषिता. सुराः ( for $^{b}$ ) —( L 403 ) Dn $G_2$ पारिजातो ( for °तं ) $V_2$ भर्त्रा ( for -कर्त्रा ) —( L 404 ) $K_4$ ज्ञात्वा, $G_5$ देव ( for गत्वा ) $D_6$ $T_{3\ 4}$ $G_{4\ 5}$ $M_4$ तत्र ( for तत ). —( L 405 ) $D_5$ आक्रीडं ( for °ड- ) $D_2$ आक्रीडश्च मनोद्याने ( for $^{a}$ ) $T_4$ $G_2$ योजित. ( for याचित· ) $\tilde{N}_1$ शच्या इति प्रयाचित ( for $^{b}$ ) —( L 407 ) $D_2$ नासौ नीतः, $T_{1-3}$ $G_{1,\ 4\ 5}$ तेनानीतः ( for न च नीत ) $T_3$ मन्दराच् ( for °रं ). $T_1$ $G_3$ चित्रकन्दरात् ( for °रम् ). $T_2$ $G_{1\ 4\ 5}$ मन्दराच्चित्रकन्दरात् ( for $^{b}$ ) —( L 408 ) $T_{2\ 3}$ $G_{1\ 3-5}$ $M_4$ शच्यास्तु ( for शच्येति ) $V_3$ मोचित, $T_4$ वै स्थित ( for मोक्षित ) —( L 409 ) $Dn_2$ ततः पुनः ( for तरु पुरा ). —( L 410 ) $K_1$ $B_2$ $Dn_1$ $T_{1\ 2}$ $G_{1,\ 4\ 5}$ साक्षात् ( for [अ]स्राक्षीत् ) $K_2$ उमाप्रियार्थमस्राक्षित् ( for $^{a}$ ) $T_3$ पुर· ( for हर ) —( L 411 ) $V_{1\ 2}$ $B_2$ $G_{2\ 3}$ शत- ( for -मात्र- ) $K_{1\ 4}$ $\breve{N}_1$ $V_3$ $B_1$ Ds $D_{1\ 2}$ गव्यूतिम( $V_3$ ° मि )तिविस्तीर्णं ( $D_1$ °र्णे ) ( for $^{a}$ ) $\breve{N}_1$ $D_1$ मन्दरस्यैव कन्दरम् ( $D_1$ °र ) ( for $^{b}$ ) —( L 412 ) $T_4$ नक्षत्र- ( for न तत्र ) $K_{1\ 4}$ $V_{1\ 2}$ $B_3$ $D_2$ T G $M_4$ नगोत्तमम्, $K_2$ $D_3$ नरोत्तम, $D_6$ ( marg as above ) वनोत्तमे ( for नगो° ) —( L 413 ) $V_1$ $B_1$ $D_6$ न चन्द्रस्य प्रभा शीता ( for $^{a}$ ). —( L 414 ) $V_2$ $D_1$ $G_5$ $M_4$ शीतोष्णं ( for °ष्णे ) $V_1$ छन्दशस् ( for °तस् ). $T_{1-3}$ G $M_4$ भवत्विति ( for °न्ति हि ) —( L 415 ) $K_2$ स्वप्रकाश-, $\tilde{N}_2$ $G_{2\ 3}$ स्वयंप्रभ-, $D_1$ स्वयंभवं ( for °प्रभं ) —( L 416 ) $K_{2\ 3}$ $\tilde{N}_1$ Dn $T_4$ महादेवौ ( for °वं ) $K_{2\ 3}$ $\tilde{N}_1$ Dn सगणौ ( for °णं ) $B_1$ Ds $D_{2-5}$ $T_{1-3}$ G $M_4$ -नन्दन ( for -वर्धन ). $V_2$ $T_4$ सगणौ यदुनन्दन ( for $^{b}$ ) —( L 417 ) $B_3$ मदन्यस्तद्, $D_2$ न चा°, D नान्यस्तच्च ( for मा चान्यस्तद् ) $D_2$ रम्यं ( for दिव्यं ) $D_3$ $T_2$ $G_1$ सं- ( for न ) $D_2$ संप्रयाति कदाचन ( for $^{b}$ ) —( L 418 ) $V_1$ तत्र स्रवति वार्ष्णेय ( for $^{a}$ ) $V_1$ पारिजातः, $T_1$ °जातात् ( for °जाता ) $K_1$ सहस्रश ( for समन्तत. ). —( L 419 ) $V_1$ दिव्यानि ; $T_{1-3}$ $G_{1\ 3-5}$ रम्याणि ( for मुख्यानि ) $T_3$ काङ्क्षितेन ( for °तानि ) —( L 420 )

पारिजाताद्बहुगुणं फलं तेषां तथा धनम् ।
अभिमानं प्रभा चैव गुणा भूरिगुणास्तथा ॥
मूर्तिमन्तश्च ते वृक्षाः सोमं देवं वृषध्वजम् ।
उपतिष्ठन्ति सततं प्रवरैः सह केशव ॥ [ 425 ]
रौद्रेण तेजसा जुष्टा हीना दुःखैः सुखान्विताः ।
तरवो मन्दरे ते हि दयिताः शैलकन्यया ॥
प्रविवेशान्धको नाम घोरस्तत्र महाबलः ।
दैतेयो वरदानेन दर्पितः पापनिश्चयः ।
स हतो देवदेवेन हरेणामित्रघातिना । [ 430 ]
अवध्यः सर्वभूतानां वृत्राद्दशगुणं बली ॥
एवं दुःखेन ते देव पारिजातं प्रदास्यति ।
पुष्कराक्ष सहस्राक्षः सत्यमेतद्ब्रवीमि ते ॥
सततं सहितो देव्या शच्या स हि वरद्रुमः ।
सर्वकामप्रदः कृष्ण तथेन्द्रस्यामितौजसः ॥ [ 435 ]

वासुदेव उवाच ।
मुने तद्युज्यते साधु महादेवेन धीमता ।
यच्छची कारणं कृत्वा न नीतः स तरुः पुरा ॥
स ज्येष्ठः सर्वभूतानां लोककृत्प्रभवोऽव्ययः ।
पारावर्यस्य सदृशं कृतवानिति मे मतिः ॥
अहं यवीयान्देवस्य सर्वथा बलघातिनः । [ 440 ]
लालनीयश्च भगवञ्जयन्त इव सत्तम ॥
सर्वथा भगवांस्तावदुपायैर्बहुविस्तरैः ।
करोतु यत्नं प्रीत्यर्थं शक्तो ह्यसि तपोधन ॥
मया मुने प्रतिज्ञातं पुण्यार्थं सत्यभामया ।
स्वर्गादिहानयिष्यामि पारिजातमिति प्रभो ॥ [ 445 ]
मया तदनृतं शक्यं कथं कर्तुं तपोधन ।
नानृतं हि वचो विप्र प्रोक्तपूर्वं मयानघ ।
मयि भग्नप्रतिज्ञे हि लोकानां संप्लवो भवेत् ॥

V2 -भुञ्जन्ते, T2–3 G1 4 5 M4 युञ्जन्ति (for -भुञ्जन्ति) D3 6 प्रमथानां, T2 G1 प्रवराणि (for °णा). — (L 422). K2 महाधनम्; Ñ1 2 V1 3 B Ds D5 6 G2 5 तथा वनम्; V2 तपोधन, D2 विशिष्यते (for तथा धनम्) — (L 423) Ñ1 महिमानं, D2 6 अभिमान., D3 अतिमानं (for अभि°) K2 अभिमानप्रभावौ च (for a). D4 बहुगुणास्, G3 5 M4 मणिग° (for भूरिगु°) T2 G1 4 गुणान्मणिगणास्तथा (for b) — (L. 425) K1 प्रवर; D3 6 (marg) G2 प्रमथैः (for प्रवरैः). — (L 426) K1 (*sup lin.* as above). 4 Ñ2 B3 T1–3 G3. 4 युक्ता, K3 D4 5 (marg) पुष्टा, V3 हृष्टा, D5 रुष्टा (for जुष्टा) K1 3 4 Ñ2 V3 Dn D1 2 दुःखेनापि; T1 G3 M4 दुःखैर्हीनाः (by transp); T2 3 G1 5 दुःखहीनाः; T4 दुःखभीताः; G2 हीनदुःखा. G4 दुःखहीना सुदुःखिता (for b) — (L 427) K2 Ñ2 V2 B2 D2 4 T1 3 तर्पिता., G1. 4. 5 दर्पिता (for दयिताः) — (L 429) T1 तर्जितः, G4 तर्पित. (for द°) — (L 430) V2 महता (for स हतो). Ñ1 V1 B1 3 D6 हरेणामिततेजसा (for b). — (L 431) B3 D6 -देवानां (for भूतानां) D3 गुणो (for -गुण). — (L. 432) Dn T4 दुःखं न, G2 पृष्टेऽपि (for दुःखेन) Ñ1 देवः स (for ते देव) — (L 434) T1 G3 5 च (for स-) D1 स हित सततं देव्या, D4 सततं दयितो देव्याः (for a). V2 T1–3 G1 3–5 वरो द्रुम; D4 महातरुः (for वरद्रुम) — G4 om line 435 — (L 435) T4 [अ]मितौजसे (for °सः) K Ñ2 V3 Dn Ds D1–4 G2 तथेन्द्रायामितौजसे, Bom Poona eds G(ed) °न्द्राय महौजसे (for b)

— After line 435, D3 ins. an addl colophon, mentioning Khila, adhy name पारिजातहरणे नारदवाक्यम् and adhy no. 132 — Some Mss कृष्ण, some भगवान् (for वासुदेव) — (L 436) K3 तद्युज्यतां, Ñ1 ऽन्यताकृतं, V1 B D6 तेन कृतं, D5 यद्युज्यते (for त°) — (L 437) T2 G1 4 वर्णित (for न नीतः) — (L 438) K Ñ2 V2 B2 D1 5 T3 D2 प्रभवाव्यय., D4 °वोऽप्यय, M4 °वाप्यय (for °वोऽव्यय) — (L 439) D2 परं धैर्येण, D3 परधैर्येण; G1 परावरस्य (for पारावर्यस्य). B1 सततं (for सदृशं) V3 अपि (for इति). — (L 441) K4 पालनीयश् (for ला°) V3 सर्वथा (for सत्तम) K2 जयन्त इति सर्वश. (for b) — (L 442) M4 तात (for तावद्) V3 उपायैर्बहुभिः स्तवैः (for b) — (L 443) B1 स्थित्यर्थं (for प्री°). — (L 444) K2 पुण्यार्थे (for °र्थं) K1 4 सत्यायाः पुरतो वच. (for b) — (L 446) K4 वाक्यं; B3 D6 T G1 3–5 M4 कर्तुं (for शक्यं) B3 D6 T G1 3. 5 M4 शक्यं (for कर्तुं) — (L. 447) T G1 4. 5 M4 अनृतं (for ना°) K1 वदे (for वचो) D2 वाचा हि नानृतं विप्र (for a) Ñ1 2 V3 B1 3 Ds2 D3–5 प्रोक्तं पूर्वं; T1–3 G1 3 4 M4 नोक्तपूर्वं, G5 पूर्वं नोक्तं (for प्रोक्तपूर्वं) — (L 448) T2 3 G1 4 संशयो (for संप्लवो) — (L 449) K1. 3 B1 G3 लोकधर्मं, Ñ1 Ds2 D5 6 G5 लोका धर्मा, Ñ2 V3 T1 2 4 G1 लोकधर्मा, G2 लोके धर्म- (for लोका धर्म-). — Ñ1 om line 450 — (L 450) K2 Dn D2–4 परिधार्याः, Ñ2 V2 3 B1 Ds T1 G1 3 °वार्या; B3 D1 °चर्याः (for °पाल्याः). K1. 4 V1 B2 D5. 6 T4 G5 M4 परिवार्या-

यन्मया हि मुनिश्रेष्ठ लोका धर्मगुणान्विताः ।
परिपाल्याः स्थितौ सर्वे स कथं ह्यनृतं वदेत् ॥ [ 450 ]

न देवगन्धर्वगणा न राक्षसा
न चासुरा नैव च यक्षपन्नगाः ।
मम प्रतिज्ञामपहन्तुमुद्यताः
सुखाय जीवन्ति चिरं महामुने ॥
स पारिजातं यदि न प्रदास्यति [ 455 ]
प्रयाच्यमानो भवतामरेश्वरः ।
ततः शचीव्यामृदितानुलेपने
गदां विमोक्ष्यामि पुरंदरोरसि ॥
इति प्रवाच्यो यदि सामपूर्वकं
प्रयाच्यमानो न तरुं प्रयच्छति । [ 460 ]
सुनिश्चितं मामवगम्य सर्वथा
त्वयापि कार्यः खलु तत्र निश्चयः ॥

Colophon.

वैशंपायन उवाच ।

नारदोऽथ मुनिर्गत्वा महेन्द्रसदनं प्रभुः ।
तां रात्रिमवसत्तत्र ददृशे च महोत्सवम् ॥
तत्रादित्या महात्मानो वसवश्च सुरोत्तमाः । [ 465 ]
राजर्षयश्च विद्वांसः स्वर्गताः कर्मभिः शुभैः ॥
नागा यक्षाश्च सिद्धाश्च चारणाश्च तपोधनाः ।
ब्रह्मर्षयश्च शतशो देवर्षिमनवस्तथा ॥
सुपर्णाश्च महात्मानो मरुतश्च महाबलाः ।
दिवौकसा निकायाश्च शतशोऽन्ये समागताः ॥ [ 470 ]
उपर्युपरि सर्वेषां सोमो देवो महेश्वरः ।
तस्थावमितविक्रान्तः स्वैर्गणैः परिवारितः ॥
देवर्षिभिर्मुनिश्रेष्ठैः संवृतः सर्वभावनः ।
कल्पान्तरसहस्रेषु क्षयो येषां न विद्यते ॥
यानर्चयन्ति सततं देवा देवेश्वरोपमाः । [ 475 ]
आत्मज्ञा नावलेपान्धा ये च धर्मपथे स्थिताः ॥

---

स्थिताः सर्वे, $T_{2\ 3}$ $G_{2\ 4}$ °धार्या स्थिता सर्वे (for $^a$) —(L 451) $D_4$ चासुरा (for राक्षसा) —(L 452) $K_2$ दैत्यसंघा न (for चासुरा नैव) $G_2$ पन्नगोत्तमा (for यक्षपन्नगा) — For lines 451–452, $K_4$ subst

14** न देवगन्धर्वगणा राक्षसा नैव चासुरा ।
नैव यक्षपिशाचाश्च न च सर्वेऽपि पन्नगा ॥

—(L 453) K $V_2$ Dn $D_{1\ 2\ 5}$ $G_2$ उपहन्तुम्, $D_3$ अभि°, $D_4$ उपहर्तुम्, $G_4$ अपहर्तुम् (for °हन्तुम्) —(L 454) $K_2$ दुःखाय, $D_2$ $G_2$ सुखे न (for सुखाय) $\tilde{N}_{1\ 2}$ $V_{1\ 3}$ B Dn $Ds_1$ (marg as above) $_2$ $D_{5\ 6}$ मुने समर्था. खलु सत्य( Dn Ds भद्र )मस्तु ते —(L 456) $D_1$ प्रसाद्यमानो (for प्रयाच्य°) $K_2$ $\tilde{N}_2$ $V_1$ $D_{4\ 5}$ $G_2$ सुरेश्वर°, $\tilde{N}_1$ महेश्वर°, $D_3$ महेन्द्र° (for [अ]मरेश्वर) —(L 459) $K_4$ $V_3$ प्रयाच्यो, $D_{2\ 3}$ प्रबोध्यो (for प्रवाच्यो) —(L 460) $\tilde{N}_2$ $V_{2\ 3}$ $G_2$ प्रदास्यति (for प्रयच्छति) —(L 461) $K_3$ $V_1$ $D_1$ सुनिश्चयं (for °श्चितं) $V_3$ $B_2$ $G_5$ $M_4$ मद्गमनाय (for मामवगम्य) $K_2$ $\tilde{N}_2$ $V_2$ Dn Ds $D_{2-4}$ $T_1$ $G_3$ सुनिश्चयं ( $K_2$ मुने स्वयं ) मद्गमनाय सर्वथा, $T_{2\ 3}$ $G_1$ स्वनिश्चितं मद्गमनाय सर्वदा —(L 462) $V_1$ $B_{1\ 3}$ $D_6$ निश्चयस्तथा (for तत्र निश्चयः).

Colophon — *Mention of the Epic* $K_3$ $Ds_2$ $T_3$ — *Mention of Khila* $\tilde{N}_2$ V B $Dn_2$ Ds $D_1$. — *Adhy name* $K_{1,2\ 4}$ $\tilde{N}_1$ V B Dn Ds $D_{1\ 2\ 4-6}$ $T_{1\ 3}$ $G_{1\ 3}$ पारिजात( $T_3$ $G_1$ °जाताप )हरणम्, $D_3$ पारिजातहरणे कृष्णसंवाद., $T_4$ पारिजातोत्पत्तिकथनम् — *Adhy no* $K_3$ (marg) 122, $V_1$ 128, $V_2$ 127, $V_3$ $B_2$ 126, Dn $Ds_2$ $D_4$ 123, $D_1$ 120, $D_3$ 133, $T_1$ $G_3$ 137, $T_2$ $G_1$ 139; $T_3$ 146, $T_4$ 130, $G_2$ 129, $G_5$ 140

(L 463) $D_4$ ऽयं (for ऽथ) $\tilde{N}_2$ $B_{2\ 3}$ Ds $D_{5\ 6}$ नृप; $V_2$ Dn $D_{2-4}$ T $G_{1\ 3-5}$ $M_4$ प्रति (for प्रभु) $\tilde{N}_1$ महेन्द्रसदने नृप (for $^b$) —(L 464) $D_3$ च वसंस् (for अवसत्). $G_2$ ददर्श (for ददृशे) —(L 465) $T_2$ वासव स सुरोत्तम (for $^b$) —(L 466) $G_3$ विक्रान्ता (for विद्वांस॰) $K_{1\ 4}$ स्वकै (for शुभै) —(L 467) $D_3$ गन्धर्वाश् (for सिद्धाश्च) —(L 468) $K_1$ $D_{2\ 3}$ -मुनयस् (for -मनवस्) —(L. 469) $V_3$ महाबाहो (for °त्मानो) —(L 471) $Ds_2$ $D_6$ $T_1$ $G_{1,3}$ सोम- (for सोमो) —(L 472) $T_{2\ 3}$ $G_{1\ 4\ 5}$ $M_4$ विदित- (for अमित-) $\tilde{N}_1$ $T_4$ $G_5$ $M_4$ स्वर्गणैः, $\tilde{N}_2$ $V_1$ $B_1$ $D_{1\ 4}$ स्वैर्गुणै, $D_2$ $T_2$ $G_4$ स्वगणै॰ (for स्वैर्गणैः) —(L 473) $\tilde{N}_1$ देवदेवैर् (for °र्षिभिर्) $D_{3\ 4}$ देवर्षिमुनिभि॰ श्रेष्ठैः (for $^a$) —(L 475) $K_2$ $D_4$ यम्, $\tilde{N}_1$ ताव्; $V_2$ B $D_6$ तेऽपि (for यान्) $\tilde{N}_2$ $G_2$ यमर्चयन्त॰ सततं, $D_3$ ते तमर्चन्ति स°, $M_4$ विराजन्तश्च स° (for $^a$) $\tilde{N}_2$ $V_1$ $D_4$ $M_4$ देव-, $V_2$ देवं (for देवा) $K_2$ देवा देवं नरोत्तमा., Ds देवा देवेश्वरोपमान्, $D_3$ देवं देववरोपमा (for $^b$) —(L 476) $D_1$ -लेपा ये (for लेपान्धा) $\tilde{N}_1$ अलोपका सत्यसधास्, $\tilde{N}_2$ V $B_2$ $D_{2,3\ 5}$ T G $M_4$ आत्मज्ञानबलोपेता, $B_2$ (marg) $_3$ Ds $D_6$ °ज्ञा सत्यसंधाश्च, $D_4$ °धर्मावलोकेन (for $^a$) $\tilde{N}_1$ ते हि, $D_4$

रुद्राश्च काश्यपा देवमध्युपासन्त भारत ।
स्कन्दश्च भगवान्रौद्रिर्गङ्गा च सरितां वरा ॥
अर्चिष्मांस्तुम्बुरुश्चैव भारिश्च वदतां वरः ।
नेतारो देवदेवानामेते हि तपसान्विताः ॥ [ 480 ]
एताननुविधीयन्ते सर्वदेवगणा नृप ।
धर्मनित्यास्तपोनित्याः सतां मार्गमुपाश्रिताः ॥
ये त्विमे मानुषा देवानर्चयन्ति शुभार्थिनः ।
तानर्चयन्ति ह्यमरास्तथा राजञ्शुभार्थिनः ॥
पितृकृत्येषु देवानां संन्यासं ये त्वनुष्ठिताः । [ 485 ]
स्वाध्यायवन्तः कौरव्य सदा नियमचारिणः ॥
गन्धर्वाधिपतिः श्रीमांस्तत्र चित्ररथो नृप ।
सपुत्रो वादयामास देववाद्यानि हृष्टवत् ।
ऊर्णायुश्चित्रसेनश्च हाहा हूहूस्तथैव च ।
डम्बरस्तुम्बुरुश्चैव जगुरन्ये च तद्गणाः ॥ [ 490 ]
उर्वशी पूर्वचित्तिश्च हेमा रम्भा च भारत ।
हेमदन्ता घृताची च सहजन्या तथैव च ॥
जुजोष भगवान्देवस्तदुपस्थानमात्मवान् ।
वृत्तेन तुष्टः शक्रस्य जगाम जगतः पतिः ॥
गते भूतपतौ सर्वे नृपा जग्मुर्यथागतम् । [ 495 ]
महेन्द्रेणार्चिता देवाः स्वानेव निलयान्गताः ॥
ततः सर्वेषु यातेषु सुखासीनं पुरंदरम् ।
सदस्यैः स्वैः सहासीनं नारदोऽभ्याययौ मुनिः ॥
तमिन्द्रः पूजयामास समुत्थाय तपोधनम् ।
दिदेश कुशगर्भं च पीठमात्मासनोपमम् ॥ [ 500 ]
नारदोऽथ महातेजा महेन्द्रमिदमब्रवीत् ।
दूतोऽहममरश्रेष्ठ विष्णोरतुलतेजसः ॥
किंचित्कार्यं पुरस्कृत्य प्रेषितोऽस्मि महात्मना ।
आनर्तादार्तिहरणं तस्यैवानघतेजसः ॥
प्रीतिवाक्यानि हृद्यानि प्रयुज्य मुनये तदा । [ 505 ]
ततः प्रहृष्टो भगवानब्रवीत्पाकशासन. ॥

---

स्वे च ( for ये च ) $K_{1\ 3}$ $\tilde{N}_{1\ 2}$ Dn $D_{1\ 4}$ -पथि ( for पथे ) — ( L 477 ) $B_{1\ 3}$ $D_{6}$ गन्धर्वास्ते स्म भारत , $D_{2\ 3}$ अभ्युपासत भारत , $G_{2}$ यसुपासन्त भारत ( for $^{b}$ ) — ( L 478 ) $K_{1\ 4}$ तत्र , $\tilde{N}_{2}$ $Dn_{2}$ $T_{1\ 3\ 4}$ $G_{5}$ आङ्गिर् , $D_{1}$ रुद्रो , $D_{2}$ सौरिर् , $D_{3}$ रौद्रो , $G_{2}$ देवो ( for रौद्रिर् ). — ( L 479 ) $V_{1}$ आयुष्मास् ( for अर्चि° ) $K_{1\ 3\ 4}$ $D_{1}$ $G_{3}$ डम्बरश् , $V_{2}$ $D_{2-5}$ तुम्बरश् , $T_{2\ 3}$ $G_{1\ 4\ 5}$ $M_{4}$ शम्बरश् ( for तुम्बुरुश् ) $\tilde{N}_{2}$ भारश्च , $V_{1}$ ऋषिश्च , $D_{3}$ रुचिश्च , $D_{4}$ भास्करो , $T_{2}$ $G_{4}$ हरिश्च , $T_{3}$ $G_{1\ 3\ 5}$ M हारिश्च , $G_{2}$ भानुश्च ( for भारिश्च ) — ( L 480 ) $G_{2}$ -लोकानाम् ( for -देवा° ) $D_{2}$ नेतारो देवतानां च ( for $^{a}$ ) $D_{1}$ येऽन्ये हि , $D_{4}$ नियते ( for एते हि ) — ( L. 481 ) $D_{2}$ एते तमनुतिष्ठन्ति ( for $^{a}$ ) $\tilde{N}_{1}$ देव- , $V_{2}$ $Dn_{1}$ $Ds_{1}$ $D_{1}$ सर्वे , $B_{1\ 3}$ देवान् ( for सर्व- ) $V_{1}$ देवान्सर्वगणान्नृप ( for $^{b}$ ) — ( L 482 ) $K_{2}$ तपोनिष्ठा ( for °नित्यास् ) $V_{3}$ $B_{2}$ Ds $D_{2\ 3}$ उप( $V_{3}$ °पा )स्थिता ( for उपाश्रिताः ) $\tilde{N}_{1\ 2}$ $V_{1}$ $B_{2}$ $D_{6}$ सन्त सन्मार्गमाश्रिता ( for $^{b}$ ) — After line 482, $D_{2}$ reads line 486 — ( L 483 ) $V_{2}$ B $D_{6}$ यथेमे , $T_{1-3}$ $G_{1\ 3-5}$ $M_{4}$ यानिमान् ( for ये त्विमे ). — $D_{3}$ $G_{4}$ om. line 484 — ( L 484 ) $\tilde{N}_{2}$ $B_{1\ 3}$ तम् ( for तान् ). — ( L 485 ) $K_{3}$ -कृत्ये तु ( for -कृत्येषु ) $K_{4}$ सत्थानां , $T_{2}$ $G_{4}$ सांनिध्ये , $T_{3}$ $G_{1\ 5}$ सानिध्यं ( for संन्यास ) $\tilde{N}_{1}$ $V_{1}$ साध्या. सन्तो भवन्ति ते ( for $^{b}$ ) — ( L. 486 ) $\tilde{N}_{1}$ $V_{1}$ B $D_{5}$ सततं धर्मचारिण ( for $^{b}$ ) — ( L 488 ) $D_{4}$ स देवो ( for सपुत्रो ) — ( L 489 ) $\tilde{N}_{1,\ 2}$ $V_{1}$ $B_{1,\ 3}$ $D_{6}$ च भारत ( for तथैव च ). — ( L. 490 ) $K_{1}$ डम्बरुस्तुम्बरश्चैव , $K_{2}$ जुवोष भगवाश्चैव ( for $^{a}$ ) $K_{2}$ ऽथ यद्गुणान् , $K_{3}$ $\tilde{N}_{1\ 2}$ V B Dn Ds $D_{1\ 3\ 4\ 6}$ $T_{1\ 4}$ $G_{2}$ च षड्गुणान् , $D_{6}$ ( marg ) ऽत्र तद्गुणान् , $G_{5}$ ऽथ षड्गुणान् , $T_{2\ 3}$ $G_{1\ 3-5}$ $M_{4}$ च मागधा. ( for च तद्गणा ) — ( L 491 ) $\tilde{N}_{1\ 2}$ V Ds $T_{4}$ $G_{1\ 3}$ विप्रचित्तिश् ( for पूर्व° ) T $G_{1\ 4\ 5}$ तथैव च ( for च भारत ) — ( L 493 ) $\tilde{N}_{1}$ $V_{2}$ $D_{2\ 4,\ 6}$ $T_{1}$ जुगोप ; $G_{2}$ तुतोष ( for जुजोष ) — ( L 494 ) $D_{1\ 2}$ नृत्येन ( for वृत्तेन ) $K_{1}$ $\tilde{N}_{1\ 2}$ V B Dn Ds $D_{1\ 2\ 5\ 6}$ $G_{2}$ गति , $D_{6}$ ( also marg ) जनि: ( for पतिः ) — ( L 495 ) $V_{3}$ शूलपतौ ; $Ds_{2}$ चमू° ( for भूत° ) $V_{3}$ यथाविधि ( for °गतम् ) — ( L. 496 ) $V_{1}$ हृष्टा ( for देवा. ) $K_{1\ 4}$ $D_{4}$ स्वमेव निलयं गताः ( for $^{b}$ ) — ( L 498 ) $\tilde{N}_{2}$ सुखासीनं , $V_{3}$ $T_{2}$ $G_{1\ 3-5}$ $M_{4}$ समा° ( for सहा° ) K V $B_{2}$ Dn Ds $D_{1-5}$ $T_{4}$ $G_{2}$ ऽभिययौ , $\tilde{N}_{1}$ $B_{1\ 3}$ $D_{6}$ ऽभिगतो , $\tilde{N}_{2}$ ऽभिमुखो ( for ऽभ्याययौ ) — ( L. 499 ) $T_{2}$ $G_{1}$ तमुत्थाय ( for स° ) — $M_{4}$ om line 500 — ( L. 500 ) $D_{6}$ -भद्रं ( for -गर्भं ). — ( L 501 ) $D_{4}$ ( marg ) महाराज ( for °तेजा ) — ( L 502 ) $D_{3}$ $T_{2}$ $G_{1\ 4}$ अमित- ( for अतुल- ) — ( L 503 ) $V_{3}$ समुद्दिश्य ( for पुरस्कृत्य ) $G_{4,\ 5}$ ऽहं ( for ऽस्मि ) — $B_{1}$ om line 504 — ( L 504 ) $K_{2}$ $V_{3}$ आर्तानाम् , $G_{2}$ अनर्थाद् ( for आनर्ताद् ) $\tilde{N}_{1}$ -रहितं , $V_{1}$ -हरणे , $D_{6}$ $T_{1-3}$ $G_{1\ 3\ 4}$ $M_{4}$ -हरणात् ( for -हरण ) $D_{3}$ [अ]मित- ( for [अ]नघ- ) $D_{2}$ तस्यैवामिततेजसा , $T_{1-3}$ $G_{1.\ 3-5}$ $M_{4}$ तस्मादाकर्ण्य तद्वच ( for $^{b}$ ) — $\tilde{N}_{1}$ om. line 505 Before line 505, some Mss. ins. वैशंपायन उवाच.

किमाह पुरुषश्रेष्ठः शीघ्रमाचक्ष्व मे मुने ।
चिरस्य खलु कृष्णेन संस्मृताः स्म महात्मना ।
प्रियवाक्यानि हृद्यानि ब्रूहि धर्मभृतां वर ॥

नारद उवाच ।

महेन्द्रेन्द्रानुज द्रष्टुं गतोऽहं भ्रातरं तव । [ 510 ]
द्वारकां पुरुषश्रेष्ठ काश्यपानां यशस्करम् ॥
तं तु रैवतकेऽद्राक्षं तदासीनमरिंदमम् ।
रुक्मिण्या सहितं वीरमुमयेव वृषध्वजम् ॥
पारिजाततरोः पुष्पं तस्य दत्तं मयानघ ।
विस्मापनार्थं देवेश पत्नीनामुरुतेजसः ॥ [ 515 ]
तद्दृष्ट्वा तस्य पत्न्यस्तु विस्मयं परमं ययुः ।
बहुकामप्रदं पुष्पं वृक्षराजसमुद्भवम् ॥
गुणास्तासां मयाख्यातास्तस्य पुष्पस्य मानद ।
सृष्टिश्च पारिजातस्य कश्यपेनातितेजसा ॥
अदित्या कश्यपो दत्तः पुण्यार्थं च यथा मम । [ 520 ]
पुष्पदाम्ना वेष्टयित्वा कण्ठे पुण्यार्थमात्मवान् ॥
त्वं च दत्तो यथा शच्या देवाश्चान्ये सुरेश्वर ।
निष्क्रयश्च यथा दत्तः कश्यपाद्यैर्महात्मभिः ॥
तच्छ्रुत्वा तस्य पत्न्येका सत्यभामेति विश्रुता ।
पुण्यकार्थं मनश्चक्रे दयिता ते यवीयसः ॥ [ 525 ]
तया चाभ्यर्थितो भर्ता देव्या देवगणेश्वरः ।
प्रतिजज्ञे स धर्मात्मा यवीयांस्तव मानद ॥
ततो मामुक्तवान्वीरो विष्णुर्बलवतां वरः ।
यथावत्सुरमुख्येश ब्रुवतः शृणु भावन ॥
लालनीयो यवीयांस्तु प्रणिपत्याच्युतोऽब्रवीत् । [ 530 ]
आनायय सुरश्रेष्ठ पारिजातं वरद्रुमम् ॥
मनोरथोऽस्तु सफलो वध्वास्तेऽसुरसूदन ।
धर्मकृत्ये विशेषेण वध्वास्तेऽमरसत्तम ॥

— ( L 505 ) $B_1$ प्रिय- ( for प्रीति- ) $Ds_2$ चान्यानि ( for हृद्यानि ) $T_2$ om ( hapl ) lines $505^{b}$–$509^{a}$ $K_{1\ 3\ 4}$ प्रयुक्त्वा ( for °ज्य ) $D_2$ मुनिराट् ( for मुनये ) —( L. 507 ) $T_3$ $G_{1\ 4}$ भगवान् ( for पुरुष- ) $D_4$ तन्ममाकथ्यतां मुने ( for $^{b}$ ) — ( L 508 ) $K_4$ चिरं हि ( for चिरस्य ) $K_1$ $\tilde{N}_2$ V $B_{1\ 3}$ $D_{1-3\ 6}$ $T_{1\ 4}$ $M_4$ रास्मृतोऽस्मि महामुने ( for $^{b}$ ). — $B_1$ $T_1$ $G_3$ om line 509 —( L 509 ) $D_4$ धर्मविदां ( for °भृता ) —After line 509, $K_2$ ins an addl colophon mentioning adhy name नारदस्य स्वर्गगमनम् — ( L 510 ) $V_3$ श्रेष्ठ, $D_4$ कृष्णं ( for द्रष्टु ) $G_2$ तं महेन्द्रानुज द्रष्टु ( for $^{a}$ ) — ( L 511 ) $K_{1\ 3\ 4}$ $\tilde{N}_2$ V $B_2$ Dn Ds $D_{1-3\ 5}$ T G $M_4$ कथचिद्द्वा( $V_3$ $D_3$ कदाचिद्द्वा-, $D_2$ गतश्च द्वा )रकां तत्र ( for $^{a}$ ) $\tilde{N}_2$ $T_1$ $G_4$ यादवानां ( for काश्यपानां ) $K_{2\ 3}$ Dn $D_{3\ 4}$ यशस्कर ( for °स्करम् ) $G_1$ द्वारकाणां यशस्विनम्, $G_2$ यादवानां यशस्करीम् ( for $^{b}$ ) — ( L 512 ) $D_5$ तत्र ( for तं तु ). $K_2$ $\tilde{N}_2$ सुखासीनम्; $\tilde{N}_1$ देवा°, $B_1$ $Ds_2$ तत्रा° ( for तदा° ). — ( L. 513 ) $\tilde{N}_2$ सह सं ( for सहितं ) $B_{1\ 3}$ $D_6$ देवम् ( for वीरम् ) $V_1$ स्तुवन्तं च ( for उमयेव ) $K_{1\ 3\ 4}$ $V_3$ $B_2$ Dn Ds $D_{1\ 2.\ 4.\ 5}$ $T_4$ $G_2$ स्तुवन्तं वृषभध्वजम्, $\tilde{N}_2$ उमेव वृषभ°, $D_3$ ध्यायन्तमृषभ° ( for $^{b}$ ) —( L 515) $\tilde{N}_2$ विस्मापनार्थें ( for °र्थं ) $\tilde{N}_2$ $V_1$ $B_3$ अति- ( for उरु- ) $D_4$ पत्नीनाममितौजस· ( for $^{b}$ ). — ( L 517 ) $D_4$ पुण्यं ( for पुष्प ) — ( L 518 ) $\tilde{N}_2$ $V_3$ $B_1$ $D_5$ $G_2$ समाख्यातास् ( for मया° ). — $T_2$ om ( hapl ) lines 519-527 — ( L 519 ) $V_1$ $T_4$ सृष्टिं ( for सृष्टिश् ). $D_3$ यथा कृत पारिजातः ( for $^{a}$ ). $V_2$ महात्मना ( for [अ]तितेजसा ) — ( L 520 ) $Ds_2$ पुण्यार्थें च, $T_{1\ 3}$ $G_{1\ 3-5}$ पुण्यस्यार्थं, $M_4$ पुत्रस्यार्थं ( for पुण्यार्थं च ) —( L 521 ) $T_3$ $G_{1\ 4\ 5}$ $M_4$ निज- ( for कण्ठे ) — ( L 522 ) $K_1$ शक्र ( for शच्या ) — ( L 523 ) $K_1$ महाद्युति , $\tilde{N}_1$ $B_{1\ 3}$ $D_6$ महर्षिभि ( for महात्मभि ) — ( L 524 ) $K_1$ सा; $D_3$ [अ]ङ्ग ( for [ए]का ) — ( L 525 ) $K_4$ देव कार्यें, $\tilde{N}_2$ पुण्यं कर्तुं, $D_4$ पुण्यकार्यें, $G_2$ संग्रहार्थं ( for पुण्यकार्थं ) $K_4$ देवी सा ( for दयिता ) $G_4$ यवीयसी ( for °सः ) $D_5$ दयिता तस्य मानद ( for $^{b}$ ) — ( L 527 ) $G_2$ प्रतिज्ञाय ( for °जज्ञे ) $T_1$ $G_3$ धर्मार्थं, $G_1$ °य ( for °त्मा ) — ( L 529 ) $\tilde{N}_1$ $D_6$ $T_1$ $G_{1\ 3-5}$ यथा तत् ( for यथावत् ) $K_{1\ 2\ 4}$ $D_{4\ 5}$ मानद, Dn $D_{1\ 3}$ भावत , $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ भाषितम् ( for भावन) — ( L 530 ) $V_1$ $B_{2\ 3}$ $D_6$ $T_{1-3}$ $G_{3-5}$ $M_3$ त्वां, $G_2$ ते ( for तु ). — ( L 531 ) $K_{1\ 4}$ $\tilde{N}_1$ $B_2$ $G_{2\ 5}$ आनयेय, $K_2$ $D_{2-4}$ आज्ञापय, $K_3$ $D_6$ $T_{2\ 3}$ $G_{1.\ 4}$ आनीय च ( for आनायय ) $G_5$ -श्रेष्ठात् ( for -श्रेष्ठ ) $T_1$ $G_3$ $M_4$ आनीय च सुरश्रेष्ठात् ( for $^{a}$ ). $K_2$ $V_3$ Ds $D_{3\ 4}$ महा-; $\tilde{N}_2$ $V_1$ $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ सुर-, $D_4$ च तं ( for वर- ) — ( L 532 ) $\tilde{N}_{1\ 2}$ $B_{1\ 3}$ $D_6$ वध्वास्तेऽसुरनाशन; $D_3$ °स्ते रिपूसूदन, $D_5$ °स्ते सुरनन्दन; $G_5$ वध्वा मे बलसूदन ( for $^{b}$ ). — $D_3$ om line 533 — ( L 533 ) $K_2$ $\tilde{N}_1$ $V_{2\ 3}$ $B_{1\ 2}$ $Ds_2$ $D_4$ T $G_{1\ 3-5}$ $M_4$ सुरसत्तम, $G_2$ ऽसुरसूदन ( for ऽमर° सत्तम ) —( L 534 ) $D_5$ दर्शित ( for दुर्लभ ) $K_3$ $\tilde{N}_{1\ 2}$ $V_2$ $B_{1\ 2}$ Ds $D_{2\ 6}$ $T_{1\ 4}$ $G_{1\ 4}$ लोको ( for लोके ) — ( L. 535 ) $K_1$ $D_6$ $T_4$ पश्यतु ( for °न्तु ) $T_{2\ 3}$ $G_{1\ 5}$ पश्य त्वं मम कल्याणं ( for $^{a}$ ). $K_4$ मत्प्रतापाच्, $\tilde{N}_2$ $V_3$ °सादाच्

अयं दुर्लभकल्याणो लोके लोकगणेश्वर ।
पश्यन्त्वमरकल्याणं मत्प्रभावाच्च मानुषाः ॥ [ 535 ]

वैशंपायन उवाच ।

वासुदेववचः श्रुत्वा महेन्द्रः कुरुनन्दन ।
नारदं वदतां श्रेष्ठमिदं वाक्यमथाब्रवीत् ॥
भजासनं द्विजश्रेष्ठ श्रुतमुक्तं त्वया द्विज ।
संदेशं प्रतिदास्यामि विष्णोरतुलतेजसः ॥
आसीने नारदे शक्रो लब्धानुज्ञोऽथ नारदात् । [ 540 ]
स्वमासनं ततो भेजे तस्यैव सदृशं विभो ॥
उपविष्टः सुरपतिरथोवाच तपोधनम् ।
निरीक्ष्य स्वबलं वीर्यं पार्षदं वृत्रनाशनः ॥
महर्षे कुशलं पृष्ट्वा वक्तव्यस्ते जनार्दनः ।
वचनान्मम धर्मज्ञ सर्वभूतसुखावहम् ॥ [ 545 ]
मदनन्तरमीशस्त्वं जगतो नात्र संशयः ।
त्वदीयः पारिजातश्च रत्नान्यन्यानि चाच्युत ॥
त्वं तु भारावतरणं कर्तुं देव महीं गतः ।
मानुष्यं सर्वभूतानामास्थितः कार्यसिद्धये ॥
त्वयि तीर्णप्रतिज्ञे हि पुनः प्राप्ते त्रिविष्टपम् । [ 550 ]
पूरयिष्यामि वध्वास्ते इष्टान्कामानधोक्षज ॥
स्वर्गीयाणि न रत्नानि नयितव्यानि केशव ।
स्वल्पार्थे मानुषं लोकमिति पूर्वकृता स्थितिः ॥
उत्क्रम्य हि स्थितिं दैवी प्रवर्तामि महाबल ।
यद्यहं किं प्रवक्ष्यन्ति प्रजापतिगणाः प्रभो ॥ [ 555 ]
ब्रह्मणा सहपुत्रेण सपौत्रेण महात्मना ।
नियमाः सर्वकृत्यानां स्थापिता जगतो ध्रुवाः ॥
प्रजापतिकृतं मार्गमपास्य व्रजतो मम ।
श्रुत्वा प्रजापतिर्धीमाञ्शापमप्युत्सृजेत्प्रभुः ॥
अस्माभिर्भिद्यमानं हि मर्यादासेतुबन्धनम् । [ 560 ]

---

( for °भावाच् ) $D_6$ मानद , $T_1$ $G_3$ $M_4$ मानुषम् , $T_4$ मानुष° ; Bom Poona eds G(ed) मानवा ( for मानुषाः ) $\tilde{N}_1$ प्रभावात्तव सर्वथा , $T_2$ $G_{4\ 5}$ त्वत्प्रसादाच्च मानुषम् ( for $^b$ ) — ( L 536 ) $\tilde{N}_1$ $T_1$ $G_{1\ 3}$ कुल- ( for कुरु- ) — ( L. 537 ) $K_4$ इदं वचनमब्रवीत् ( for $^b$ ) — ( L 538 ) $T_{1-3}$ $G_{4,\ 5}$ मुनि- ( for द्विज- ) $K_3$ शुभम् , $B_3$ ऋतम् , $G_3$ युक्तम् ( for श्रुतम् ) $D_3$ मया ( for त्वया ) $V_2$ [अ]नघ ( for द्विज ). — ( L 539 ) $G_1$ अमित- ( for अतुल- ) — ( L 540 ) $V_3$ लब्धार्थज्ञो , $D_3$ लब्ध्वानुज्ञां , $T_4$ लब्धसज्ञो ( for लब्धानुज्ञो ). — ( L 541 ) $\tilde{N}_{1\ 2}$ $V_1$ $B_3$ $D_6$ स्वमासनवरं भेजे ( for $^a$ ). — ( L 542 ) $K_3$ तपोनिधिम् ( for °धनम् ). — ( L. 543 ) $K_4$ तद्बलं; $D_2$ स्वं बलं ( for स्वबलं ). $\tilde{N}_1$ निरीक्षस्व च मां बली ( for $^a$ ) $K_{1\ 4}$ पर्षदान् , $K_3$ पार्षदो , $\tilde{N}_1$ $T_{1\ 4}$ $G_3$ हर्षदं; Dn $Ds_2$ पार्षदान् , $T_{2\ 3}$ $G_{1,\ 4\ 5}$ $M_4$ नारदं ( for पार्षदं ). $K_2$ $V_3$ $D_4$ प( $V_3$ ह- , $D_4$ पा )र्षद वृत्रशासनः ; $Ds_1$ पार्षदान्वृत्रनाशनः ( *sup. lin.* °सूदन° ) ( for $^b$ ). — Before line 544, some Mss. ins शक्र , some इन्द्र. — ( L. 544 ) $T_{2\ 3}$ $G_{1\ 4}$ $M_4$ इन्द्रो ( $M_4$ °न्द्रे ) महर्षे कुशलं , $G_5$ इतो महर्षे कुशलं ( for $^a$ ) $T_{2\ 3}$ $G_{1\ 4\ 5}$ $M_4$ प्रष्टव्यस् ( for वक्त° ) — ( L 545 ) $V_3$ वचनं ( for वचनान् ) T $G_{1\ 3\ 4}$ धर्मं तु , $G_5$ धर्मात्तु ( for धर्मज्ञ ) $K_{1\ 2}$ $\tilde{N}_{1\ 2}$ V B Dn $Ds_2$ $D_{1\ 5,\ 6}$ $T_1$ $G_{2\ 3}$ -सुखावह. , $K_{3\ 4}$ $Ds_1$ $D_{2-4}$ °वह ( for °वहम् ) — ( L 546 ) $K_{1\ 4}$ अमरेषु न संशयः ( for $^b$ ) — For line 548, $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ subst

15** त्वं तु भारावताराय मह्या देव भुवं गत ।

— $D_2$ om. line 549. — ( L 549 ) $D_3$ मानुष्ये ; $D_4$ °ष्यात् ( for °ष्यं ) $K_{1\ 3\ 4}$ $\tilde{N}_1$ $B_1$ Dn Ds $D_{1\ 5}$ $T_1$ $G_{2\ 3}$ -वृत्तानाम् , $V_{1\ 3}$ $B_{2\ 3}$ $D_6$ $T_{2-4}$ $G_{1\ 4\ 5}$ $M_4$ -वृत्तान्तम् ( for भूतानाम् ) $V_2$ मानुष्य सर्वथा वृत्तं ( for $^a$ ) $V_2$ आश्रितः ( for आस्थित ) $K_{1,\ 3\ 4}$ $\tilde{N}_2$ Dn Ds $D_{1\ 3\ 5}$ स्थित कार्यप्रसिद्धये , $G_2$ स्थित. कार्यस्य सिद्धये ( for $^b$ ). — ( L 550 ) $T_2$ इति ( for त्वयि ) $\tilde{N}_{1\ 2}$ $V_1$ $B_{1\ 3}$ तीर्णप्रतिज्ञ. संप्राप्य ( for $^a$ ) $\tilde{N}_1$ $B_1$ $D_6$ एव ; $\tilde{N}_2$ आयात् , $D_3$ प्राप्तस् ( for प्राप्ते ) — ( L 551 ) $D_2$ ते वध्वा ( by transp ), $T_4$ वध्वास्तु . $\tilde{N}_2$ $V_1$ $B_3$ $D_6$ पूरयिष्यसि वध्वास्त्वं ( for $^a$ ) $B_2$ इमान् ; $D_4$ $G_5$ सर्वान् ( for इष्टान् ) — ( L 552 ) $K_1$ स्वर्गजानि , $K_4$ स्वर्गतानि ( for स्वर्गीयाणि ) $K_2$ स्वर्ग्याणि न च रत्नानि ; $\tilde{N}_2$ $V_{1\ 3}$ B $D_6$ $T_4$ न स्वर्गीयाणि र° , $D_{2-4}$ स्वर्गौयानि च र° ; $T_3$ $G_{1\ 4}$ न स्वर्गार्हाणि र° , $G_5$ $M_4$ न स्वर्भवानि र° ( for $^a$ ). $B_{1\ 3}$ $D_6$ तेऽच्युत ( for केशव ) $D_2$ $T_1$ $G_{2,\ 3}$ न नेतव्यानि केशव ( for $^b$ ) — ( L 553 ) $K_2$ $\tilde{N}_2$ $V_3$ $B_2$ $D_{2\ 6}$ $T_{2\ 3}$ $G_{2\ 3\ 5}$ $M_4$ पूर्वं कृता ( $V_3$ °त- ) ; $V_1$ पूर्वं स्थिता ( for पूर्वकृता ) — ( L 554 ) $K_3$ उत्क्राम्य , $T_1$ $G_3$ व्युत्क्रम्य ( for उ° ) $K_2$ $\tilde{N}_2$ $V_2$ B $D_{2\ 4,\ 6}$ $T_4$ $G_2$ देव ( for दैवी ) $K_{1\ 4}$ $V_3$ $D_{1\ 5}$ उत्क्राम्य ( $V_3$ °त्क्रस्य , $D_5$ °त्क्षिप्य ) हि स्थितिं देव , $V_1$ उत्क्रम्य तु स्थितं देव , $D_3$ °म्य तां स्थितिं देव ; $T_{2\ 3}$ $G_{1\ 4}$ $M_4$ व्युत्क्रम्य हि स्थितिं देव ; $G_5$ व्युत्क्रमन्ति स्थितिं देव ( for $^a$ ) — ( L 555 ) T $G_{1\ 3-5}$ $M_4$ प्रवक्ष्यामि ( for °क्ष्यन्ति ) $T_{1\ 3}$ $G_{1,\ 3-5}$ $M_4$ मुखान् ( for -गणा. ) — ( L. 557 ) $D_{2\ 3}$ -भूतानां ( for -कृत्यानां ). $M_4$ ध्रुवम् ( for ध्रुवाः ) $K_1$ ( marg as above ) स्थापयित्वा गतो ध्रुवाः ( for $^b$ ). — ( L 558 ) $G_2$ -हितं ( for -कृतं ) $K_4$ om. lines 558$^b$–

भेत्स्यन्त्यशङ्किता दैत्या दैत्यपक्षास्तथापरे ॥
स्त्रीनिमित्तमितो नीते पारिजाते द्रुमेश्वरे ।
स्वर्गौकसो भविष्यन्ति विमनस्काश्च मानद ॥
उपभोगा मनुष्याणां विहिता ये स्वयंभुवा ।
तैस्तु तुष्यतु मे भ्राता संपश्यन्कालपर्ययम् ॥ [ 565 ]
इहापि तावत्त्रिदिवे मम यः स्यात्परिग्रहः ।
त्रिदिवस्थोऽपि तं कृष्णः सर्वं भोक्तुमिहार्हति ॥
तृप्तो ह्यामिषभोज्यानामभिमानाज्जनार्दनः ।
ततो धर्मं समुत्सृज्य पापमेवानुवर्तते ॥
स्त्रीवश्यता ख्याप्यमाना कृष्णस्य हि महात्मनः । [ 570 ]
जगत्ययशसा योगं जनयेदिति मे मतिः ॥
मानुष्यं मानुषे प्राप्तो यदेतन्मधुसूदनः ।
कुर्यान्निर्बन्धनीयं यद्भ्रात्रा ज्येष्ठेन नारद ॥

स्वर्गरत्नविलोपेन धर्षणा स्यान्ममानघ ।
ज्ञातितो धर्षणा चैव विशेषेण हि गर्हिता ॥ [ 575 ]
धर्ममर्थं च कामं च क्रमेण मधुसूदनः ।
सेवत्वेष सतां धर्मान्स्थापितान्पद्मयोनिना ॥
महीतलं पारिजातमर्पयिष्यामि ते यदि ।
पौलोमीमादितः कृत्वा को नु मां बहु मंस्यते ॥
पारिजातं महीपृष्ठे दृष्ट्वा स्पृष्ट्वा च मानुषाः । [ 580 ]
स्वर्गार्थं नोद्यमिष्यन्ति दृष्ट्वा स्वर्गफलं क्षितौ ॥
पारिजातगुणान्मर्त्या जुषन्ति यदि नारद ।
देवानां मानुषाणां च न विशेषो भविष्यति ॥
तत्र यत्क्रियते कर्म इह तद्भुज्यते नरैः ।
स्वर्गार्थं न यतिष्यन्ति पारिजातगुणान्विताः ॥ [ 585 ]
सर्वरत्नवरः स्वर्गे पारिजातस्तपोधन ।

---

560$^a$ — ( L 559 ) $K_3$ प्रजापतिस्तु धीमन्तम् ( for $^a$ ) $K_2$ $G_3$ उत्सृजति, Dn $G_2$ अभ्युत्सृजेत् ( for अप्यु° ) $K_{1\,3}$ Ds $D_{1-3}$ $T_{2-4}$ $G_{1\,4\,5}$ $M_4$ मामप्युत्सृजति प्रभु ( for $^b$ ) — ( L 561 ) $V_1$ [अ]शङ्कित ( for °ता ) — ( L 563 ) $V_3$ नारद ( for मानद ) — $G_4$ om lines 564–603 — ( L 564 ) $V_3$ $B_2$ मानुषाणा ( for मनुष्याणां ) $T_{2\,3}$ $G_{1\,5}$ $M_4$ कल्पिता ( for विहिता ) — ( L 565 ) $K_1$ तुष्यति स ( for तु तुष्यति ) $V_1$ $B_1$ तैस्तुष्यतु स मम भ्राता ( hypermetric ) — ( L 566 ) $K_{2\,3}$ $\tilde{N}_{1,2}$ $B_{1\,2}$ Dn Ds $D_{1-5}$ $T_1$ $G_{2\,3}$ $M_4$ तात ( for तावत् ) — ( L 567 ) $T_3$ $G_{1\,5}$ त्रिदिवे ( $G_5$ °दशे ) स्थापित कृष्ण ( for $^a$ ) $B_3$ $D_6$ नोप, $T_2$ स त्वं, $T_{3\,4}$ $G_{1\,5}$ न त्वं ( for सर्वं ) $\tilde{N}_1$ $V_1$ $B_{1\,3}$ $D_6$ ( marg ) T $G_{1-3\,5}$ ins after line 567 $D_4$ after line 575

16** ज्येष्ठकानिष्ठ्यभावानां नाभिज्ञ किं जनार्दन ।

[ $\tilde{N}_1$ -योगाना, $V_1$ -भोगाना ( for -भावाना ). $B_1$ ज्येष्ठो ज्यायिष्ठभोगाना; $B_3$ ज्येष्ठज्यायिष्ठभा°, $D_4$ ज्येष्ठज्यायिष्य-भोज्याना, $G_1$ ज्येष्ठाश एव भोज्याना ( for $^a$ ) $\tilde{N}_1$ $T_1$ $G_{2\,3}$ अभिज्ञ ( for ना° ) ]

— $\tilde{N}_1$ T $G_{1-3\,5}$ om line 568 — ( L. 568 ) $K_{1\,3\,4}$ $V_2$ $B_{1,3}$ Dn Ds $D_{1\,2,6}$ हृष्टो हि, $V_{1\,3}$ $B_2$ कृष्णोऽपि ( for तृप्तो हि ) $K_1$ अभिमानी, $V_2$ अभिज्ञः किं, $B_2$ $D_1$ अतिमानाज् ( for अभि° ) — ( L 569 ) $V_{1\,2}$ B $D_6$ यतो, $V_3$ तथा ( for ततो ) $\tilde{N}_1$ $B_2$ $G_2$ कामम् ( for पापम् ) — ( L 571 ) $K_2$ $D_{2\,5}$ $G_5$ [अ]यशसो ( for °सा ) — ( L 572 ) $V_{1\,2}$ $B_{1\,3}$ मानुषः ( for °षे ). Ds प्राप्ते ( for प्राप्तो ) $D_3$ मानुष्यं च समासाद्य, $D_4$ °ष्ये मानुषे प्राप्ते ( for $^a$ ). $D_3$ स यावन्, $T_{1-3}$ $G_{1\,3}$ यदिद, $M_4$ यदीदं ( for यदेतन् ) — ( L 573 ) $V_2$ कुर्यान्निर्वचनीयं हि ( for $^a$ ) G(ed) धात्रा ( for भ्रात्रा ) $V_3$ मानद ( for नारद ) — $T_3$ om lines 574–576 — ( L. 574 ) $K_2$ $\tilde{N}_2$ $V_{1\,3}$ $B_{1\,3}$ स्वर्गे, $V_2$ स्वर्ग्य ( for स्वर्ग- ) $T_{2-4}$ $G_{1\,5}$ -विलोभेन ( for °पेन ) $T_1$ $G_3$ $M_4$ स्वर्ग्यरत्न-विलोभेन ( for $^a$ ) $\tilde{N}_{1\,2}$ $V_{1\,2}$ $B_{1\,3}$ $D_6$ परा मम ( for ममानघ ) — ( L 575 ) $\tilde{N}_1$ नारद, $T_{1\,2}$ $G_{1\,3}$ $M_4$ सर्वदा ( for गर्हिता ) — $T_3$ om lines 576–577 $D_4$ om line 576 — ( L 577 ) $\tilde{N}_2$ आस्थिता, $B_2$ $D_{5\,6}$ $T_{1\,4}$ $G_{1\,3\,5}$ स्थापिता ( for °तान् ) — $T_2$ $G_{1\,3}$ om line 578 — ( L 578 ) $K_1$ नार्पयिष्यामि, $K_2$ $D_{2\,5}$ $G_5$ $M_4$ स्थान°; $K_3$ $\tilde{N}_2$ V $B_{1\,2}$ Ds $D_6$ नाय°, $B_3$ $D_1$ नान°, $Dn_2$ $D_4$ प्राप° ( for अर्प° ) — ( L 579 ) $B_1$ अग्रत ( for आदित ) $T_{2\,3}$ $G_1$ $M_4$ पौलोमीममता कृत्वा ( sic ) ( for $^a$ ) V $D_{1\,5}$ $T_{2\,4}$ मन्यते ( for मंस्यते ) $\tilde{N}_2$ को मा बहु न मंस्यते ( for $^b$ ). — $D_3$ om lines 580–581 — ( L 580 ) $D_2$ नीतं तु ( for स्पृष्ट्वा च ) — ( L 581 ) $D_1$ मोघमेष्यन्ति, $T_2$ $G_{1\,2\,5}$ $M_4$ नो गमि°, $G_3$ नागमि° ( for नोद्यमि° ) — After line 581, $\tilde{N}_2$ reads line 584 — ( L 582 ) $K_1$ इष्यन्ति, $D_3$ जुषन्तो ( for °न्ति ) $D_2$ मानवाः ( for नारद ) — ( L 583 ) $K_{1\,3\,4}$ $\tilde{N}_1$ Ds $D_1$ $T_{1\,2}$ देवतानां मनुष्याणा ( for $^a$ ) $K_1$ $V_{1\,3}$ B $D_6$ विशेषो न ( by transp ), $G_2$ निर्विशेषो — ( L 584 ) $\tilde{N}_1$ $V_2$ $B_{1\,3}$ $D_6$ तदिहाश्नुवते नरा ( for $^b$ ) — ( L 585 ) $K_3$ तत्सर्वं न करिष्यन्ति ( for $^a$ ) $\tilde{N}_1$ गुणोचिताः ( for गुणान्विता ) — ( L 586 ) $K_{3\,4}$ $D_4$ -रत्नधर ( for °वरः ) — $V_2$ om ( hapl. ) lines 587–591. — ( L 587 ) $T_3$ -सुखैर् ( for समैर् ) $\tilde{N}_{1,2}$

तुल्यं देवसमैर्मर्त्यैः सर्वदैव जगद्भवेत् ॥
यज्ञैर्मर्त्या न यक्ष्यन्ति लब्धस्वर्गफला भुवि ।
न पूर्तानि प्रदास्यन्ति तुल्यत्वममरैर्गताः ॥
यज्ञैर्जप्याह्निकैश्चैव नित्यमाप्याययन्ति नः । [ 590 ]
मानुषाः स्वर्गमिच्छन्तः श्रद्दधानास्तपोधन ॥
तत्सर्वं न करिष्यन्ति पारिजातगुणान्विताः ।
निस्तेजसो भविष्यामस्ते गतास्तद्विहीनताम् ॥
इतः सुवृष्ट्या सस्यैस्ते जीवन्ति पुरुषा भुवि ।
आप्याययन्तस्तेऽप्यस्मान्दानैर्यज्ञैस्तथैव च ॥ [ 595 ]
न बुभुक्षा पिपासा वा बाधते यदि मानुषान् ।
रोगो जरा वा धर्मज्ञ मृत्युर्वा रतिरेव वा ॥
दौर्गन्ध्यं वा सुघोरा वा ईतयः कर्मसंभवाः ।
किमुद्योगं करिष्यन्ति पारिजातगुणान्विताः ॥
सर्वथा नयनं तत्र पारिजातस्य न क्षमम् । [ 600 ]
इति वाच्यस्त्वया विप्र विष्णुरक्लिष्टकर्मकृत् ॥
यथा यथा च मे भ्राता तुष्यत्येतद्विचारयन् ।
तथा तथा त्वया कार्यं कार्यं मत्प्रीतिमिच्छता ॥
हारांश्च मणयश्चैव चन्दनान्यगुरूणि च ।
वस्त्राणि च विचित्राणि वध्वास्त्वं द्वारकां नय ॥ [ 605 ]
योग्यानि यानि मर्त्यानां यावदिच्छति केशवः ।
न स्वर्गपरिमोषं तु कर्तुमर्हति केशवः ॥
दधामि रत्नानि यथेप्सितान्यहं
बहूनि चित्राणि विभूषणानि च ।
न पारिजातं च कथंचन द्रुमं [ 610 ]
मुने प्रदास्यामि दिवौकसां प्रियम् ॥

Colophon.

---

V1 3 B2. 3 D4 6 भुज्यते ( Ñ1 °न्ति ) यदि मर्त्यैः स ( Ñ2 V2 °र्त्येषु, D6 °र्त्यैः स्म ) ( for $^a$ ). K4 Ñ1 सर्वमेव, Ñ1 °दैवं, V1 3 B2 3 D6 °मेकं, D5 सर्वं देव-, T1 सर्वदेवैर्, G2 °थैव ( for °दैव ) — ( L 588 ) B3 यदि ( for यज्ञैर् ) G3 यतिष्यन्ति ( for न यक्ष्यन्ति ) D1 यज्ञैर्मां नैव यक्ष्यन्ति ( for $^a$ ) M4 भूय ( for लब्ध- ) Ñ1 -फल ( for -फला ) D3 लब्ध्वा स्वर्गफल भुवि ( for $^b$ ) — ( L 589 ) K4 V3 दानानि, Ñ2 पुण्यानि ( for पूर्तानि ) — ( L 590 ) K2 D2. 3 यथाह्निकैश्, D4 जाप्यादिकैश्; G जपाह्नि° ( for जप्याह्नि° ) — ( L 591 ) V1 G1 इच्छन्ति ( for इच्छन्तः ) Dn2 D1 T2 3 G1. 2 M4 तपोधनाः ( for °धन ) — ( L 593 ) Ñ1 V1 B1. 2 D6 ततस्तैर्न विवर्जिताः; Ñ2 तद्गतास्तेन वर्जिताः; B3 तत्र तेन विवर्जिता. ( for $^b$ ). — ( L 594 ) M4 इत सुवृष्टै सस्यैस्तैर् ( for $^a$ ) — ( L 595 ) D2 3 आप्याययन्ति; D4 °यन्तश्च ( for °ययन्तस् ) D1 तृप्यन्ति, D6 G1 5 M4 ते ह्यस्मान् ( for तेऽप्य° ) Ñ1 D5 आप्याययंस्तथाप्यस्मान्, V1 °ययंस्तथास्मांस्ते ( for $^a$ ). V3 तपोधन ( for तथैव च ). — ( L 596 ) D1 क्लमो वा, T1–3 G1. 5 श्रयते; M4 श्रयन्ते ( for बाधते ) K4 बाधते यदि मानवान्, V1 B3 D6 °ते मानुषान्यदि ( for $^b$ ) — ( L 597 ) K2–4 V3 Dn2 रोगा ( for रोगो ) Bom. Poona eds. G(ed) मृत्युर्वा ( for धर्मज्ञ ) K1 रोगा जरा वा मृत्युर्वा ( for $^a$ ) K1 T1 G3 धर्मज्ञ ( for मृत्युर्वा ) D2 हानिर्, G2 भ्रान्तिर् ( for रतिर् ) — ( L 598 ) K2 V1 D2 3 दौर्गत्य, D4 दुर्गन्धो ( for दौर्गन्ध्यं ) T3 दौर्गत्यं वा सुघोरं वा ( for $^a$ ). K1 ( *sup lin* as above ) सर्व ( for कर्म- ). — ( L 600 ) T1–3 G1. 3. 5 M4 कर्मणि ( for न क्षमम् ). — ( L. 601 ) T2 3 स च ( for इति ) D भ्राता ( for विप्र ) G4 M4 स वाच्यस्त्वया विप्रर्षे ( for $^a$ ) D3 तुष्यत्येतद्विचारयन् ( for $^b$ ) — ( L. 602 ) K1 2 4 V1. 2 D4 तुष्यते तद् ( for °त्येतद् ) Ñ1 B D6 तुष्येत द्विपदां वरः ( for $^b$ ) — ( L 603 ) K4 विप्र ( for the first कार्यं ) D8 D3 मम ( D3 °यि ) प्रीतिमिहेच्छता, T2 G1 3 5 M4 मनस प्रिय( M4 प्रीत )मिच्छता ( for $^b$ ) — ( L 604 ) D3 रत्नानि ( for हारांश्च ) V2 B1 3 D6 T2 3 G1 3–5 M4 हारां( V2 B3 T2 G1 °रा )श्च मणिरत्नानि ( for $^a$ ) — ( L 605 ) Ñ1 V1 B2. 3 वधूनां, T4 वध्वास्तु ( for °स्त्वं ) — G4 om lines 606–607 — ( L. 606 ) V1 B1 3 D6 योग्यानि मर्त्यलोकानां ( for $^a$ ) — V3 G1 om line 607 — ( L 607 ) K3 तत्स्वर्गपरिमोष तु; D3 न स्वर्ग्यं परिसौख्यं तु; T4 न स्वर्गं परिमोक्षं तु ( for $^a$ ). Dn1 सांप्रतम् ( for केशवः ) K1 3 4 Dn2 D1 2. 5 कर्तुमर्हसि सांप्रतम् ( D2 5 केशव ) ( for $^b$ ) — ( L. 609 ) V3 D4. 5 विभूषितानि; T3 G1 च भूषणानि ( for विभू° ). — ( L 610 ) D2 [इ]मं ( for द्रुमं ) — ( L 611 ) V3 निधिम्; T1–3 G1 3–5 M4 च ( for प्रियम् )

COLOPHON om in D2 — *Mention of the Epic* · K3 B3 D5. — *Mention of Khila* K3. 4 Ñ1 2 V B Dn Ds1 D1 5 — *Sub parvan* Ñ2 पारिजात — *Adhy name* K Dn D1 पारिजातहरणे इन्द्रवाक्यम्, Ñ1 V B D3 D3–6 T1–3 G1 4 पारिजात( T2 3 G1 4 °जाताप )हरणम्; T4 पारिजातसंपातायामिन्द्रवचनम्, G2 इन्द्रवाक्यम् — *Adhy. no* · K3 ( marg. ) 123, V1 129, V2 B2 128; V3 125;

वैशंपायन उवाच ।
देवराजवचः श्रुत्वा नारदः कुरुनन्दन ।
प्रोवाच वाक्यं वाक्यज्ञो महात्मा धर्मवित्तमः ॥
अवश्यमेव वक्तव्यं हितं बलनिषूदन ।
मया तव महाबाहो बहुमानोऽस्ति मे त्वयि ॥ [ 615 ]
उक्तो मया वासुदेवो जानता भवतो मतम् ।
न दत्तः पारिजातो हि हरस्यापि त्वया पुरा ॥
हेतवश्च मया तस्य दर्शिता भोः समासतः ।
न चावगतवान्देवः सत्यमेतद्ब्रवीमि ते ॥
उपेन्द्रोऽहं महेन्द्रेण लालनीयः सदेति माम् । [ 620 ]
अथाह पुण्डरीकाक्षस्तत्तदुत्तरमेव च ॥
पुनः पुनर्मया चास्य हेतवो देव दर्शिताः ।
ततो न बुद्धिर्व्यावृत्ता वृत्रनाशन तस्य वै ॥
अपि चाप्युक्तवान्देवो वाक्यं ते मधुसूदनः ।
प्रहस्य पुरुषश्रेष्ठः सरोपमिव वासवः ॥ [ 625 ]
न देवगन्धर्वगणा न राक्षसा
न चासुरा नैव च पन्नगोत्तमाः ।
मम प्रतिज्ञामपहन्तुमुद्यता
मुने समर्थाः खलु भद्रमस्तु ते ॥
स पारिजातं यदि न प्रदास्यति [ 630 ]
प्रयाच्यमानो भवतामरेश्वरः ।
ततः शचीव्यामृदितानुलेपने
गदां विमोक्ष्यामि पुरंदरोरसि ॥
उपेन्द्रस्य महेन्द्रायं भ्रातुस्ते निश्चयः परः ।
यदत्र मन्यसे न्याय्यं सम्प्रधार्य कुरुष्व तत् ॥ [ 635 ]
तत्त्वं हितं च देवेश श्रूयतां वदतो मम ।
नयनं पारिजातस्य द्वारकां मम रोचते ॥
नारदेनैवमुक्तस्तु प्रव्यक्तं बलदेहभित् ।
रोषाविष्टः सहस्राक्षोऽब्रवीदेतन्नराधिप ॥
अनागसि मयि ज्येष्ठे सोदरे यदि केशवः । [ 640 ]

---

Dn $D_{4\ 5}$ 124, $D_1$ 121, $D_3$ 134, $T_1$ $G_{3\ 4}$ $M_4$ 138, $T_2$ $G_1$ 140, $T_3$ 147, $T_4$ 131, $G_2$ 130, $G_5$ 141

( L 612 ) $D_4$ -सत्तम ( for नन्दन ) — ( L 613 ) $T_3$ $G_1$ प्रसह्य, $G_4$ प्रहस्य ( for प्रोवाच ) $K_3$ वाक्यज्ञ् ( for °ज्ञो ) $T_1$ $G_{3\ 5}$ $M_4$ प्राह वाक्य च वाक्यज्ञो ( for $^a$ ) $\tilde{N}_2$ $V_3$ $T_4$ धर्मात्मा ( for महात्मा ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ देवेन्द्र ऋषिसत्तम. ( for $^b$ ) — Before line 614, $D_1$ ins नारद उवाच — ( L 614 ) $K_1$ ( *sup lin* as above ) $_3$ $T_3$ $G_{1\ 2\ 4}$ कर्तव्यं ( for वक्तव्यं ) — ( L 615 ) $K_3$ त्वयि ( for तव ) $B_3$ $T_2$ ऽस्तु ( for ऽस्ति ). — ( L. 616 ) $G_2$ दत्तो ( for उक्तो ) $V_3$ जानतो ( for °ता ). — ( L. 617 ) $K_1$ $\tilde{N}_1$ $B_1$ $D_6$ ऽयं ( for हि ) $K_2$ $\tilde{N}_2$ $V_{2\ 3}$ $D_{1\ 4\ 5}$ पुरा त्वया ( by transp ), $D_3$ यथा पुरा — ( L 618 ) $V_3$ तत्र, $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ [अ]प्युक्तास् ( for तस्य ). $T_{1-3}$ $G_{1\ 3-5}$ तस्य वै ( for दर्शिता ) $K_{1.4}$ वै, $D_3$ ते, $D_5$ वः ( for भोः ) $M_4$ तस्य वै भो समाहित ( for $^b$ ) — ( L 619 ) $K_3$ $D_3$ देव ( for देवः ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ न चैवावमतं देव ( for $^a$ ) $G_1$ एव ( for एतद् ) — ( L 620 ) $K_3$ महेन्द्रेण लालनीयः ( for $^a$ ). $K_3$ ( marg ) यथावच्च, $G_{3.5}$ $M_4$ ख्यापनीयः ( for लाल° ) — After line 620, Ds ins

17** उवाच भगवान्देव सत्यमेतद्ब्रवीमि ते ।

— ( L. 621 ) $K_2$ $D_5$ अवोचत्, $\tilde{N}_1$ मुमोच, $V_2$ $B_{1\ 3}$ $D_6$ उवाच, $Dn_1$ $D_3$ $T_{2-4}$ $G_{4\ 5}$ अथाहं, $D_4$ अवोच ( for अथाह ) $V_2$ B $D_6$ T $G_{1\ 3-5}$ $M_4$ तदनन्तरम्, $D_3$ ते तदुत्तरम्, Bom. Poona eds G(ed) दत्तमुत्तरम् ( for तत्तदु° ) — ( L 622 ) $D_3$ [उ]क्तो ( for [अ]स्य ) $\tilde{N}_2$ दर्शिता भोः समास्मतः ( for $^b$ ). — ( L 623 ) $\tilde{N}_1$ $B_{1\ 3}$ $D_6$ नैव बुद्धिश्च व्यावृत्ता ( for $^a$ ) $T_4$ -नाशाय ( for -नाशन ) $V_3$ तत्र ( for तस्य ) $G_{4\ 5}$ तत्र वै वृत्रनाशन ( for $^b$ ) — ( L 624 ) $T_{1\ 3}$ $G_{1\ 3-5}$ $M_4$ असकृद्धि ( for अपि चापि ) $\tilde{N}_{1\ 2}$ $V_3$ $B_{2\ 3}$ Dn Ds $D_{4-6}$ $T_1$ $G_{3\ 4}$ वाक्यान्ते ( for वाक्यं ते ) — ( L 625 ) $D_1$ $G_1$ प्रत्याह ( for प्रहस्य ) Ds प्रहस्य पुण्डरीकाक्ष ( for $^a$ ) $G_5$ इह ( for इव ) — ( L 627 ) $Ds_1$ सासुरा, $T_3$ $G_{1\ 3-5}$ $M_4$ चारणा ( for चासुरा ) — ( L 628 ) $K_1$ $V_{1\ 3}$ $Dn_1$ $Ds_1$ $D_{1\ 4}$ $T_3$ उपहन्तुम्; $\tilde{N}_1$ $V_2$ $B_{1\ 3}$ $D_6$ प्रति°, $T_{1\ 2}$ $G_{1\ 3}$ अपहर्तुम् ( for °हन्तुम् ). — ( L 629 ) $K_1$ न मे ( for मुने. ) $D_1$ प्रतिज्ञा ( for समर्था ) $G_1$ किल ( for खलु ) $\tilde{N}_1$ $D_6$ सत्यम् ( for भद्रम् ). — ( L 631 ) $K_{1\ 4}$ $\tilde{N}_1$ $G_4$ महेश्वर, $K_2$ $\tilde{N}_2$ $D_{4.5}$ सुरे°, Bom Poona eds G(ed) पुरंदर ( for [अ]मरेश्वर. ) $D_3$ प्रयाच्यमानो भगवान्महेन्द्र — ( L 634 ) $\tilde{N}_1$ B [ए]ष, $\tilde{N}_2$ [अ]द्य ( for [अ]यं ) $K_3$ परम्, $B_1$ कृत, $D_3$ पुर. ( for परः ). — ( L 635 ) $D_1$ मन्यते ( for °से ) $\tilde{N}_2$ ऽन्योऽर्थस् ( for न्याय्यं ) $D_1$ तं ( for सं- ) — $D_4$ om line 636 — ( L 636 ) $V_2$ वचनं ( for वदतो ) — ( L 638 ) $K_2$ $G_2$ सुव्यक्तं, Ds प्रत्यक्षं ( for प्रव्यक्तं ) $K_1$ $V_3$ $B_3$ $D_2$ $T_4$ प्रव्यक्तं बलदेहहृत्, $D_2$ °जित् ); $\tilde{N}_1$ $V_2$ $B_1$ $D_6$ °क्तं वृत्रदेहभित् ( $\tilde{N}_1$ °भृत् ), $T_{1\ 3}$ $G_3$ सुव्यक्तं ( $T_3$ प्रवक्तुं ) बलसूदन, $G_{1\ 4\ 5}$ $M_4$ प्रव्यक्तं बलसूदन ( for $^b$ ) — ( L 639 ) $B_{1.3}$ $D_6$ देवराजः ( for सहस्राक्षो ). B $D_6$ सह-

एवं प्रवृत्त. किं शक्यं कर्तुमद्य तपोधन ॥
बहूनि प्रतिलोमानि पुरा स कृतवान्मयि ।
कृष्णो नारद सोढानि भ्रातेति स मयानघ ॥
खाण्डवे चार्जुनरथं पुरा वाहयता सता ।
मदीया वारिता मेघाः शमयन्तोऽभिमुद्धतम् ॥ [ 645 ]
गोवर्धनं धारयता विप्रियं च कृतं मम ॥
तथा वृत्रवधे प्राप्ते साहाय्यार्थं वृतो मया ।
समोऽहमिति सर्वेषां भूतानामिति चोक्तवान् ।
स्वबाहुबलमाश्रित्य वृत्रश्च निहतो मया ॥
देवासुरेषु प्राप्तेषु संग्रामेषु च नारद । [ 650 ]
युध्यत्यात्मेच्छया कृष्णो मुने सुविदितं तव ॥
बहुनात्र किमुक्तेन तस्मादिष्टया प्रवर्तताम् ।
ज्ञातिभेदो न मे कार्यः साक्षी त्वं मम नारद ॥
ममोरसि गदां मोक्तुमुद्यतो यदि केशवः ।
अनुशोच्याथ पौलोमी गुणः इह दृश्यते ॥ [ 655 ]

उद्वासगतो धीमान्पिता नः कश्यपः प्रभुः ।
अदित्या सह मे मात्रा तयोर्वाच्यमिदं भवेत् ॥
अजितात्मा मम भ्राता रजसा महता वृतः ।
कामेन च स्त्रिया वाक्यादेवं मामुक्तवान्गुरुम् ॥
सर्वथा धिक्स्त्रियो विप्र धिग्रजस्तमसी तथा । [ 660 ]
यत्राधिक्षिप्तवान्विष्णुरेवं मां स्त्रीजितो द्विज ॥
न दृष्टं कश्यपकुलं व्यपदेश्यं महामुने ।
नैव दक्षकुलं दृष्टं मातुर्मे यत्र संभवः ॥
न ज्येष्ठता न राजत्वं देवानां प्रतिमानितम् ।
कामरागाभिभूतेन कृष्णेन खलु नारद ॥ [ 665 ]
पुत्रदारसहस्रैर्हि भ्रातानघ विशिष्यते ।
सद्वृत्तो ज्ञानसंपन्न इति ब्रह्मा पुराब्रवीत् ॥
नास्ति भ्रातृसमो बन्धुराहार्य इतरो जनः ।
इति मामब्रवीन्माता पिता चैव प्रजापतिः ॥
सोदरेषु विशेषं तु पिता मे कश्यपोऽब्रवीत् । [ 670 ]

---

साक्षो( B2 देवराजो )ऽब्रवीदिदम् ( for $^{b}$ ) — ( L 640 ) G3 श्रेष्ठे ( for ज्येष्ठे ) T4 G5 सोदर ( for °रे ) — ( L 641 ) K4 वाक्यं , T G1 3–5 M4 कर्तु ( for शक्य ) T1–3 G1 3–5 शक्यते ( for कर्तुम् ) — ( L 642 ) V3 स पुरा ( by transp ) ; T2 3 पुरासौ Ñ1 B2 3 D6 मम ( for मयि ) — ( L 643 ) K1 दयया ; K2 D3 स्मयता , Ñ1 V2 B3 D6 च मया ( for स मया ) Bom Poona eds G(ed) सदा ( for [अ]नघ ) D2 5 भ्रातेति स्मरता मया , T2 3 G2 3–5 M4 भ्राता मेति मया( M4 °मा )नघ ( for $^{b}$ ) — ( L 644 ) D3 मम , T3 सदा , G4 तदा ( for सता ) — ( L 645 ) Ñ2 प्रशमन्तो ( for शमयन्तो ) V D1 2 उद्यतम् , T2 उत्थि° ( for उद्ध° ) — ( L 646 ) K1 सुमहद्धि प्रियं कृतम् ( for $^{b}$ ) — T1 om. lines 650–653 — ( L 651 ) D3 स्वेच्छया ( for [आ]त्मे° ) Ñ2 प्र- , T4 वै ( for सु- ) T2 3 G1 4 त्वया ( for तव ). — ( L 652 ) Ñ1 V2 B3 T3 4 G3 4 प्रवर्तते , V3 °र्तित ( for °र्तताम् ) — ( L 653 ) G2 प्राप्तः ( for कार्यः ) Ñ2 मम ( for मम ) — ( L 654 ) Ñ3 उदितो , D6 प्रोद्यतो ( for उ° ) T3 युधि ( for यदि ) — ( L 655 ) D1 -शंसत , D4 ( marg ) शप्याथ , D4 शक्याथ , T2 -शब्दयाथ ( for शोच्याथ ) K1 2 D3 अनुशय्या( K1 °प्या )थ पौलोमी ; K4 Ñ1 2 V1 2 B Dn2 D9 D2 T1 4 G2 °शब्दयाथ ( B2 °ब्दय च ) पौलोमी ( for $^{a}$ ) V2 वर्तते ( for दृश्यते ) T1–3 G1 3–5 M4 रणकर्मणि दृश्यते ( for $^{b}$ ) — ( L 656 ) K2 D5 ( *sup lin* as above ) उद्यासन , Dn उदवासं , T2 3 G3–5 M4 उक्तवान्स ( for उद्वास ) D1 श्रीमान् ( for धी° ) G1 उक्तवान्कर्मणो धीमान् ( for $^{a}$ ) D3 मे ( for न. ) K2 D5 प्रभो ( for प्रभु ) — ( L 657 ) K1 4 Ñ1 B1 D2 T1 2 वाक्यम् ( for वाच्यम् ) — ( L 658 ) K2 D4 ( marg as above ) 5 स हि ( for मम ) B D2 3 4 ( marg ) 6 T1–3 G M4 तपसा ( for महता ) V1 महता रजसा वृत ( for $^{b}$ ). — ( L 659 ) K1 B1. 3 D2–4 T G M4 स्त्रियो ( for स्त्रिया ) — ( L 660 ) K1 Ñ1 V2 B1 3 Dn D6 T G M4 धिक्स्त्रिय सर्वथा विप्र , K3 4 सर्वथा विप्र विग्राह्यं ( K4 °ह्यो ), D9 °था विप्र धिग्राज्यं , D1 2 °था विप्रतिग्राह्य ( for $^{a}$ ) K3 4 Ds1 धिक्कि( K4 विक्कि )य स यथा तथा ; Ñ1 2 धिग्रजस्तमसस्तथा ; B D6 T G1 3–5 M4 धिग्रजो ( B1 °ग्राजा ) धिक्तमस्तथा , Dn1 धिग्राजसमितिं तथा , Ds2 धिक्क्रियः समया तथा ; D1 धिग्धिगस्तु यथा तथा ; D2 धिक्स्त्रियः स यथा तथा , G2 धिग्रजस्तामसं तथा ( for $^{b}$ ). — After line 660, Ñ2 ins

18** सर्वं च स्त्रीषु संग्राह्यं धिक्स्त्रिय स यथा तथा ।

— ( L 661 ) T4 यद्यद्वि- ; G2 यत्र वि- ( for यत्राधि- ). — ( L 662 ) Dn M4 -कुले ( for -कुलं ) G2 द्रष्टव्यं काश्यपकुलं ( for $^{a}$ ). Ñ2 D3. 4 T2 G1 3–5 व्यपदेशं ( for °श्यं ). — ( L 663 ) Ñ2 नौ ( for मे ) — ( L 664 ) K3 हीष्टता ; D1 ज्येष्ठतां ( for °ता ) — ( L 666 ) D2 [अ]वश्यं ; T2–3 G1 4 ननु , G5 M4 चैव ( for [अ]नघ ) — ( L 667 ) D3 मोदते ज्ञातिसंपन्न , G5 असद्वृत्तोऽथ स° ( for $^{a}$ ) — ( L 668 ) D5 भ्रात्रा , D2 3 भ्रातु. ( for भ्रातृ- ) B2 3 सहाया ( for आहार्य ) V G2 आहार्या इतरे जना ( for $^{b}$ ). — ( L. 670 )

दृप्ता मया विरुध्यन्ते दानवाः पापनिश्चयाः ॥<br>
काममेतन्न वक्तव्यं स्वयमात्मस्तवान्वितम् ।<br>
प्राप्तस्त्ववसरो विप्र यदिहाद्योच्यते मया ॥<br>
धनुर्ज्यायां मुनिश्रेष्ठ छिन्नायां हि पुरानघ ।<br>
धन्विभिरमराणां च वरदानान्महामते ॥ [ 675 ]<br>
उत्कृत्तशिरसो विष्णोः पुरा देहो धृतो मया ।<br>
संधितं च शिरो यत्नाच्छिन्नं रौद्रेण तेजसा ॥<br>
अहं विशिष्टो देवानामित्युक्त्वा पुनरच्युतः ।<br>
धनुरारोप्य दर्पेण स्थितो नारद केशवः ॥<br>
किं मां पिता वा माता वा वक्ष्यतीति मया मुने । [ 680 ]<br>
स्नेहेन विधृतं विष्णोः शरीरं मुनिसत्तम ॥<br>
ऐन्द्रं वैष्णवमस्यैव मुने भागमहं ददौ ।<br>
यवीयांसमहं प्रेम्णा कृष्णं पश्यामि नारद ॥<br>
संग्रामेषु प्रहर्तव्यं तेन पूर्वं तपोधन ।<br>
राजा किलाहं समरे प्रहराम्यग्रतो ध्रुवम् ॥ [ 685 ]<br>
प्रादुर्भावेषु सर्वेषु स्वशरीरमिवानघ ।<br>
यत्तो रक्षामि धर्मज्ञ केशवं भक्तिमाश्रितम् ॥<br>
इदं भङ्क्त्वा मदीयं च भगवन्विष्णुना कृतम् ।<br>
उपर्युपरि लोकानामधिकं भवनं मुने ॥<br>
अवमानः स च मया पृष्ठतः क्रियते मुने । [ 690 ]<br>
लालनीयो मया बाल इत्येवं भ्रातृगौरवात् ॥<br>
बालोऽयं मम पुत्रेति यवीयानिति नारद ।<br>
पित्रा मात्रा च गोविन्दो नातीव परिभाषितः ॥<br>
इष्टस्तत्र जनन्याः स केशव सविशेषतः ।<br>
वयं द्वेष्या न संदेहस्तत्र स्नेहोऽतिरिच्यते ॥ [ 695 ]<br>
सर्वज्ञो बलवाञ्शूरः पात्रं मानयिता तथा ।<br>
केशवेत्येव च ध्यानं यत्तद्वितथतां गतम् ॥<br>
गच्छ नारद वक्तव्यः केशवो वचनान्मम ।<br>
आहूतो न निवर्तेयं समरं प्रति शत्रुभिः ॥<br>
यदीच्छसि तदागच्छ सह्यं ते यत्त्वमिच्छसि । [ 700 ]

---

Dn2 सोदरे तु ( for °रेषु ) V1 3 विशेषस् ( for °षं ) T3 G4 5 कार्यम् ( for कश्यपो ) — ( L 671 ) D2 यदा, T1-3 G1 3-9 M4 दृष्टा ( for दृप्ता ) K3 D1 6 -निश्चयात् ( for °या° ) —( L 672 ) K1 3 4 कर्तव्य ( for वक्तव्यं ). D1 2 काममेव न कर्तव्यं ( for $^{a}$ ) D2 3 गुणस्तवम् ( for -स्तवान्वितम् ) — G3 om lines $673^{b}$-$683^{a}$ — ( L 675 ) Ñ2 धनुर्भिर् ( for धन्विभिर् ) T4 M4 असुराणां ( for अम° ) V1 2 धनुर्भिरमरारीणां, V3 धनुर्भिश्चामरारीणां, D6 धन्वीनामसुराणां हि ( for $^{a}$ ) G4 om lines $675^{b}$-$686^{a}$ B3 मया मुने ( for महामते ). — For line 675, T1-3 G1 3-6 M4 subst

19** धनुर्भिरसुराणां हि दानवानां महामुने ।<br>
— T1-3 G1 5 M4 om lines 676-687 — ( L 676 ) Ñ2 V1 3 B1 D4-6 उत्कृत्तं च शिरो विष्णो ( for $^{a}$ ) V1 देहो भृतो, V3 B1 D4 6 देहाद्धृतं, D5 देहे धृतं ( for देहो धृतो ) — ( L 677 ) K1 4 दत्त्वा, D5 -रत्नं ( for यत्नाच् ) — ( L 679 ) K3 स्थित्वा ( for स्थितो ) — ( L 680 ) K2 D5 ममाधुना, Ñ2 V2 3 B1 D1 6 महामुने, D2 3 पुरा मुने, D4 मयाधुना ( for मया मुने ) — ( L 681 ) K1 4 D1 च स्थितं, K2 Ñ1 2 V B Dn Ds D4-6 T4 G2 च धृतं ( for विधृत ) V1 2 -पुंगव ( for -सत्तम ) — ( L 682 ) V2 अप्येवं, T4 अस्येति ( for अस्यैव ) — ( L 683 ) K1 4 महत्प्रेम्णा ( for अहं प्रेम्णा ). G3 यदि ( for कृष्ण ) — ( L 684 ) D5 प्रवर्तव्यं ( for प्रह° ) K° D4 5 न मे ( for तेन ) —( L 686 ) K2 स्वं शरीरमिहानघ ( for $^{b}$ ). — ( L. 687 ) Ñ2 V B Dn2 D6 G2 यत्नाद्, G4 युक्तो ( for यत्तो ) D3 ततो रक्षामि धर्मज्ञ ( for $^{a}$ ) V2 B2 शक्तिम् ( for भ° ) Ñ2 B3 D3 T3 4 आश्रित ( for °तम् ) K2 केशवं भुवमास्थितम्, B1 D6 °वं शक्तिमाश्रित. ( for $^{b}$ ) — ( L 688 ) Ñ1 इम ( for इदं ) Ñ1 V3 D5 6 T1 3 G1 3-5 M4 त्यक्त्वा, V1 भुङ्क्त्वा, D3 दृष्ट्वा, T4 भुक्त्वा, G2 भक्तं ( for भङ्क्त्वा ) D6 मदीय ( for भगवन् ) — ( L 689 ) T G1 4 5 M4 भगवन् ( for भवनं ) — ( L 690 ) V2 B3 Ds अपमान ( for अव° ) — ( L 691 ) Ñ2 D2 3 ह्ययं बाल ( for मया बाल ) V2 T G1 4 5 M4 सौहृदात् ( for गौरवात् ) — ( L 693 ) D3 नाशिवं, Bom Poona eds G(ed) मानी च ( for नातीव ) —( L 694 ) Dn D4 G2 सूनुस् ( for तत्र ) T2 3 G3 5 जनस्यास्य ; Bom Poona eds G(ed) जनानां च ( for जनन्याः स ) Ñ1 इष्टं तत्र भवन्त्या स, B1 इष्ट पुत्रो जनन्यास्तु, D1 इष्टस्तत्र जनन्यां स्म, D3 इष्ट· स तु जनन्याश्च ( for $^{a}$ ) — T2 3 G1 4 om lines 696-697 — ( L 696 ) Ñ1 V2 3 B2 3 D6 मान्य-, B1 मातुर्, T1 G3 5 M4 मान्यो, G2 पित्रा ( for पात्र ) — ( L 697 ) D1 ते ( for च ) Ñ2 V3 B2 केशवेत्यवदद्धीमान्, V1 °वेति वचः ख्यातं ; V2 B1 D6 °वेत्यब्रवीद्धीमान्, D2 °वे तमहं मानं, T1 G3 °वो हि तदस्मिंस्तु ; G2 °वोऽस्त्यवहन्मान, G5 M4 °वो हीति तस्मिंस्तु ( for $^{a}$ ) D2 4 तदेतद्वितथं गतम्, D3 एतद्धि वितथां गतम्, T1 G3 5 M4 पित्रोः स्नेहोऽतिरिच्यते, G2 हन्त तद्धि यथा गतम् ( for $^{b}$ ) —( L 698 ) T3 वचनं ( for °नान् ) — ( L 699 ) B2 निवर्तेऽहं

प्रहरस्व च पूर्वं त्वं भार्याजित यथेच्छसि ॥
रथाङ्गेनाथ शार्ङ्गेण गदया नन्दकेन वा ।
प्रहरारुह्य गरुडं दृढो भूत्वा जनार्दन ॥
प्रहृते प्रहरिष्यामि यथाशक्त्या च केशव ।
अहो धिग्यदि मां स्नेहो विक्लवं न करिष्यति ॥ [ 705 ]
यावन्न संग्रामगतो जितोऽहं चक्रपाणिना ।
पारिजातं न दास्यामि तावद्ब्रो मुनिसत्तम ॥
मां समाह्वयते ज्येष्ठं यवीयान्संस्तपोधन ।
अहं तं मर्षयिष्यामि किमर्थं स्त्रीजितं हरिम् ॥
अद्यैव गच्छ भगवन्द्वारकां कृष्णपालिताम् । [ 710 ]
विवादः संस्थितः सोऽद्य इति वाच्यस्त्वयाच्युतः ॥
पलाशपत्रार्धमपि त्वयाजितो
न पारिजातस्य तव प्रदास्यति ।
इति प्रवाच्यो मधुसूदनस्त्वया
वचो मदीयं स्मरता तपोधन ॥ [ 715 ]
पुनः प्रवाच्यो भगवंस्त्वयाच्युतो
मम प्रियार्थं खलु निर्विशङ्कितम् ।
न मायया हर्तुमिहार्हसि द्रुम
सुयुद्धमेवास्तु धिगस्तु जिह्मताम् ॥

Colophon

वैशंपायन उवाच ।

महेन्द्रवचनं श्रुत्वा नारदो वदतां वरः । [ 720 ]
विविक्ते देवराजानमिदं वचनमब्रवीत् ॥
कामं प्रियाणि राजानो वक्तव्या नात्र संशयः ।
प्राप्तकालं तु वक्तव्यं हितमप्रियमच्युत ॥
अनियुक्तः पुरोभागो न स्यादिति वदन्ति हि ।
स लोकगतितत्त्वज्ञो नयविज्ञानकोविदः ॥ [ 725 ]
कार्याकार्ये समुत्पन्ने परिपृच्छति मां भवान् ।

---

( for °तैयं ) G2 समरे, G5 यत्त्वं मां ( for समरं ) K2 शत्रुतः ( for °भि ) T1-3 G1 3 4 M4 यन्मा ( T1 अहं, G3 त्वं मां ) प्रति च शत्रुभि ( for ⁶ ) —( L 700 ) K1 ( *sup lin* ) Ñ2 V1 शक्यं ; D3 6 T2 4 G1 सत्य ( for सह्य ) D5 शक्यं ते यत्त्वमर्हसि, T3 G4 5 M4 सत्यं ते तद्यदिच्छसि ( for ⁶ ). —( L 701 ) D3 तच्चरस्व ( for प्रहरस्व ) K1 जितभार्य ( for भार्याजित ) — M4 om lines 702-719 —( L 702 ) K3 D1 तथाङ्गनार्थं शार्ङ्गेण ( for ᵃ ) —( L 704 ) K1 प्रहृष्ट., K3 Dn2 Ds1 प्रहृते, K4 हृष्टस्ते ( for प्रहृते ) V1 3 D5 G2 यथाशक्ति ( for °क्त्या ) —( L 705 ) V3 मां यदि ( by transp ). —( L. 706 ) Ñ1 -जितो, D6 -गते, T3 -गतिं ( for -गतो ) K4 यावत्संग्रामगतोऽहम् ( for ᵃ ) K4 अजितश्च ( for जितोऽहं ) —( L 707 ) V3 -पुंगव ( for -सत्तम ) —( L 708 ) Ñ1 V2 B समाह्वयति मां ज्येष्ठं, D5 मां स चाह्वयते ज्येष्ठं ( for ᵃ ) K1, 4 यवीयांस्तु, Ñ1 2 V B3 Ds D2-5 °यान्स, B2 D1 °यांसं ( for °यान्संस् ). T G1 3-5 यवीयाञ्शत्रु( T4 °स्त्र )योधिनम् ( for ⁶ ) —( L 709 ) D5 अद्य, T1 G1 अहो ( for अहं ) —( L 711 ) Ñ2 विवादे; T4 °द ( for °दः ). K2-4 D6 T4 G4 शक्र; G1 शक्रे ( for सोऽद्य ) V1 अमर्षसंस्थित सोऽज्ञ, V2 3 B1 D6 ( marg ) अहं च संस्थित सज्ज ; B2 अह चात्र स्थित सोऽज्ञ, Dn2 विवादसंस्थित सद्य ( for ᵃ ) — After line 711, Ñ2 ins .

20** अहं सज्जः स्थितः साङ्ग इति वाच्यस्त्वयाच्युत ।

— After line 711, D1 reads lines 716-719. —( L 712 ) G2 -पादार्धम् ( for पत्रा° ) T2 3 G1 4 5 [अ]र्थितो ( for [अ]जितो ) —( L 713 ) Ñ1 B न ते ( for तव ). — T3 G4 om lines 715-716 —( L 715 ) K4 D4 ऽस्मदीयं ( for म° ) —( L 716 ) T2 G1 3-5 पुनश्च वाच्यो मधुसूदनस्त्वया —( L 717 ) Ñ2 निर्विशङ्कित ( for °तम् ) —( 718 ) V3 त्व ( for द्रुमं ) —( L 719 ) G3 सं- ( for सु- ) D3 न चास्तु जिह्मता ( for धिगस्तु जिह्मताम् )

COLOPHON om in D2 M4 — *Mention of the Epic* : K3 Ds2 T3 — *Mention of Khila* K3 4 Ñ2 V B Dn2 Ds D1. — *Adhy, name* K Ñ1 V B Dn D1, 3-6 T1-3 G1 4 पारिजात( K1 °जातक, T2 3 °जाताप )हरणम्, D3 पारिजातहरणे इन्द्रवाक्यम्, T4 इन्द्र प्रति सदेशकथनम्. — *Adhy no* K3 ( marg ) 124, V1 130, V2 B2 129, V3 126, Dn Ds2 D4 125, D1 122, D3 135, T1 G3, 4 139, T2 G1 141, T3 148, T4 132, G2 131, G5 142

T4 om from line 720 up to line 127 of App. I ( No. 29A ) —( L 721 ) D6 ( marg ) निर्जने ( for विविक्ते ). D4 विविक्ते देवराजं तम् ( for ᵃ ) —( L 723 ) T3 G1, 4 इदम् ( for हितम् ) K2 2 Ñ1 2 B1, 2 Dn Ds D1-3 5 6 G2 अप्युत ( for अच्युत ) K1 4 सर्वथा सद्भिरप्रियम्, K3 हितमप्रियमप्युत; T1 2 G3 5 M4 इदमप्रियमप्युत ( for ⁶ ) — K4 om lines 724-730, K1 reads the same on marg —( L. 724 ) D2 अतियुक्त. ( for अनि° ) T1 G3 M4 पुरा यो वै ; T3 G1, 4, 5 पुरोधा वै ( for °भागो ) K1 अभियुक्तपरो भागो, T2 अवियुक्तः पुरा योगी ( for ᵃ ). T1-3 G1 3-5 M4 विनियुक्तो ( T1 °क्तं )

यतस्ततः प्रवक्ष्यामि गृह्यतां यदि रोचते ॥
अनुक्तेनापि सुहृदा वक्तव्यं जानता हितम् ।
न्याय्यं च प्राप्तकालं च पराभवमनिच्छता ॥
वक्तव्यं सर्वथा सद्भिरप्रियं चापि यद्धितम् । [ 730 ]
आनृण्यमेतत्स्नेहस्य सद्भिरेवाहृतं पुरा ॥
अनृते धर्मभङ्गे च न शुश्रूषति चाप्रिये ।
न प्रियं न हितं वाच्यं सद्भिरेते विनिन्दिताः ॥
सर्वथा देव वक्तव्यं श्रूयतां शृण्वतां वर ।
श्रुत्वा च कुरु सर्वज्ञ मम श्रेयस्करं वचः ॥ [ 735 ]
अन्योन्यभेदो भ्रातॄणां सुहृदां वा बलान्तक ।
भवत्यानन्दकृद्देव द्विषतां नात्र संशयः ॥
हितानुबन्धसहितं कार्यं ज्ञेयं सुरेश्वर ।
विपरीतं च तद्बुध्वा नित्यं बुद्धिमतां वर ॥
यत्स्यात्तापकरं पश्चादारब्धं कार्यमीदृशम् । [ 740 ]

आरम्भेणैव तद्विद्वानेष बुद्धिमतां नयः ॥
विपाकमस्य कार्यस्य नानुपश्यामि शोभनम् ।
यत्तु तत्कारणं देव निबोध विबुधाधिप ॥
य एको विश्वमध्यास्ते प्रधानं जगतो हरिः ।
प्रकृत्या यं परं सर्वे क्षेत्रज्ञं वै विदुर्बुधाः ॥ [ 745 ]
तस्याव्यक्तस्य यो व्यक्तो भागः सर्वभवोद्भवः ।
तस्यात्मा प्रथमो देवो विष्णुः सर्वस्य धीमतः ॥
प्रकृत्याः प्रथमो भाग उमा देवी यशस्विनी ।
व्यक्तः सर्वमयो विष्णुः स्त्रीसंज्ञो लोकभावनः ॥
रुक्मिण्याद्याः स्त्रियस्तस्य व्यक्तत्वे प्रथमो गुणः । [ 750 ]
अव्यया प्रकृतिर्देवी गुणदेवो महेश्वरः ॥
न विशेषोऽस्ति रुद्रस्य विष्णोश्चामरसत्तम ।
गुणिनश्चाव्ययः शश्वत्सदा च प्रथमो गुणः ॥
नारायणो महातेजाः सर्वकृल्लोकभावनः ।

हितं वदेत् ( for $^{b}$ ) — ( L 725 ) $K_3$ $B_2$ $D_1$ $T_3$ $G_{2,4}$ $M_4$ सु- ( for स ) $K_2$ $D_{2\ 4\ 5}$ ( before corr ) सन्तो लोकगताभिज्ञा , $\tilde{N}_1$ सन्तो लोकगतौ तज्ज्ञा ( for $^{a}$ ) $\tilde{N}_1$ Ds ज्ञानवि- , $V_2$ नयज्ञो ( for नयवि- ) $K_2$ $D_{2\ 4\ 5}$ -कोविदा , $D_5$ °दम् ( for °द ) $\tilde{N}_4$ नयविद्वांश्च कोविदः ( for $^{b}$ ) — ( L 726 ) $K_2$ $G_5$ कार्ये कार्ये , $\tilde{N}_2$ $V_1$ नयकार्ये ( for कार्याकार्ये ) — ( L 727 ) Ds? प्रीतस् ( for यतस् ) $G_5$ प्रवर्तामि ( for °क्ष्यामि ) — ( L 730 ) $\tilde{N}_1$ अदृष्टैर् ( for अप्रिय च ) $D_2$ तद् ( for यद् ) — ( L 731 ) $B_1$ आनृण्यमेव स्नेहेन ( for $^{a}$ ) $V_1$ $B_{1\ 3}$ च विदितं , $G_1$ एव हितं ( for एवाहृतं ) — $\tilde{N}_1$ om lines 732–733 — ( L 732 ) $T_3$ $M_4$ [अ]प्रियम् ( for °ये ) $K_2$ न च शुश्रूषति प्रिये , $D_4$ शुश्रूषयति चाप्रिये ( for $^{b}$ ) — ( L 733 ) $T_{1-3}$ $G_{1\ 3-5}$ [अ]प्रियं ( for प्रिय ) $\tilde{N}_2$ नाप्रियं नाहितं वाच्य , $D_4$ न प्रियं नाहितं वाक्यं ( for $^{a}$ ) $D_{5\ 6}$ सद्भिरेतद्विनिन्दितम् , $T_{1-3}$ $G_{1\ 4}$ $M_4$ °रेवं विनिन्दितम् , $G_{3\ 5}$ °रेभिर्विनिन्दितम् ( for $^{b}$ ) — ( L 735 ) Dn धर्मज्ञ ( for सर्वज्ञ ) — ( L. 736 ) $D_3$ कुलान्तकः ( for बलान्तक ) — ( L 737 ) $T_{2\ 3}$ $G_{1\ 4\ 5}$ तव हि ( for भवति ) $D_5$ आनन्दनो ( for °न्दकृद् ). — ( L 738 ) $K_1$ $\tilde{N}_2$ $T_{2\ 3}$ $G_{1\ 3}$ $M_4$ सदृशं ( for -सहित ) $V_3$ हितार्थबन्धुसहितं ( for $^{a}$ ) $K_4$ कर्तव्यं च ( for कार्यं ज्ञेयं ) $D_2$ सुविस्तरम् ( for सुरेश्वर ). — $T_{2\ 3}$ $G_{1\ 4}$ om lines 739–743 $G_3$ om line 739 — ( L 739 ) $K_3$ $B_1$ Ds $D_{4\ 5}$ च ते बु( $B_1$ $Ds_2$ तद्बु )द्ध्वा , $K_1$ तद्बुद्ध्वा वा , $T_1$ च यद्बुध्वा ( for च तद्बुध्वा ) $D_3$ ( marg by corr ) त्यजेद् ( for नित्यं ) — ( L. 740 ) $B_1$ $D_1$ पश्चात्ताप- ; $D_{2\ 3}$ यत्संताप- ( for यत्स्यात्ताप- ) $V_{1\ 2}$ $B_3$ $D_{4\ 6}$ ( marg ) पश्चात्तापकरं यत्स्याद् ( for $^{a}$ ) $D_2$ अकार्यं ( for आरब्धं ) — ( L 741 ) $G_5$ $M_4$ आरम्भेणैव तद्विद्याद् ( for $^{a}$ ) $G_5$ $M_4$ एवं ( for एष ) $D_4$ धर्मवतां ( for बुद्धि° ) $G_3$ एवं बुद्धिमता तथा ( for $^{b}$ ) — ( L 742 ) $\tilde{N}_2$ $V_1$ $B_{1\ 2}$ $D_6$ [अ]त्र ( for [अ]नु- ) — ( L 743 ) $K_2$ सर्वं तत् , $\tilde{N}_2$ महत्तत् , $B_1$ यत्र तत् , $B_{2\ 3}$ $D_6$ यतस्तत् , $D_5$ यत्ते तत् , $T_1$ $M_4$ यत्त्वत्र , $G_3$ यत्र त्वं , $G_5$ यदत्र ( for यत्तु तत् ) $T_1$ $G_{3-5}$ $M_4$ निबोध विबुधेश्वर ( for $^{b}$ ) — ( L 744 ) $\tilde{N}_1$ नयम् , $G_5$ गुरु ( for हरि ) — ( L 745 ) $K_2$ सर्वं ( for सर्वे ) $D_{1\ 5}$ य ( for वै ) $T_2$ $G_1$ क्षेत्रं वै विविदुर्बुधा ( for $^{b}$ ) — ( L 746 ) $D_{4\ 5}$ भाग· सर्वोद्भवोद्भव ( for $^{b}$ ) — $T_2$ $G_1$ read line 747 twice — ( L 747 ) $T_2$ $G_1$ ( both second time ) प्रकृत्या ( for तस्यात्मा ) $K_{1\ 3\ 4}$ Dn $D_{1\ 4}$ ( marg ) $T_1$ परमो , $\tilde{N}_2$ प्रथमं ( for °मो ) — ( L 748 ) $K_4$ प्रकृत्यां ( for °त्या ) $T_{1\ 2}$ $G_{1\ 4}$ देवो , $G_3$ देवी ( for भाग ) $K_1$ प्रकृत्या प्रथमा नाम , $B_3$ $D_{1\ 4}$ प्रकृत्या ( $B_3$ °त्यां ) प्रथमो भावः ( for $^{a}$ ) $K_1$ उक्ता ; $T_2$ $G_4$ रमा ( for उमा ) — ( L. 749 ) $K_{1\ 3\ 4}$ $\tilde{N}_1$ $B_1$ Dn $Ds_1$ $D_{1\ 4}$ $G_3$ $M_4$ विश्व ( for विष्णु ). $B_3$ व्यक्त. सर्वेश्वरो विश्वः ( for $^{a}$ ) — ( L 750 ) $K_{1\ 3\ 4}$ $\tilde{N}_1$ $B_2$ Dn $D_{1\ 2}$ $T_{1\ 2}$ $G_{2\ 3}$ $M_4$ तस्या , $V_1$ यस्य ( for तस्य ) $M_4$ व्यक्त्यर्थे , Poona ed G( ed ) व्यक्तत्व ( for °त्वे ) — ( L 751 ) $D_{1\ 6}$ $G_2$ अव्यक्ता ; $D_2$ आद्या या ( for अव्यया ) $G_4$ गौरी ( for देवी ) $D_4$ अव्यक्तप्रकृतिर्देवो , $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ अव्यक्ता प्रकृतिर्गौरी ( for $^{a}$ ) $K_3$ $V_2$ Dn $D_{3,5}$ $T_{1-3}$ G $M_4$ गुणी ; $\tilde{N}_1$ $D_{2\ 6}$ गुणो , $B_1$ उमा ( for गुण- ) — ( L, 752 ) $T_2$

भोक्ता महेश्वरो देवः कर्ता विष्णुरधोक्षजः ॥ [ 755 ]
ब्रह्मा देवगणाश्चान्ये पश्चात्सृष्टा महात्मना ।
महादेवेन देवेश प्रजापतिगणास्तथा ॥
एवं पुराणपुरुषो विष्णुर्देवेषु पठ्यते ।
अचिन्त्यश्चाप्रमेयश्च गुणेभ्यश्च परस्तथा ॥
अदित्या तपसा विष्णुर्महात्माराधितः पुरा । [ 760 ]
वरेण च्छन्दिता तेन परितुष्टेन चादितिः ॥
तयोक्तस्त्वामहं पुत्रमिच्छामीति सुरोत्तम ।
प्रणतं देव विज्ञाय नारायणमधोक्षजम् ॥
तेनोक्ता भुवने नास्ति मत्समः पुरुषोऽपरः ।
अंशेन तु भविष्यामि पुत्रः खल्वहमेव ते ॥ [ 765 ]
स जातः सर्वकृद्देवो भ्राता तव सुरेश्वर ।
नारायणो महातेजा यमुपेन्द्रं प्रचक्षते ॥
इच्छन्नेव हरिर्देवः काश्यपत्वमुपागतः ।
तैस्तैर्भावैर्विकुरुते भूतभव्यभवोऽव्ययः ॥
प्रादुर्भावं गतो देवो जगतो हितकाम्यया । [ 770 ]
माथुरं जगतो नाथः कर्ता हर्ता च केशवः ॥
यथा च तिलपिण्डः स्याद्व्याप्तः स्नेहेन मानद ।
तथा जगदिदं व्याप्तं विष्णुना प्रभविष्णुना ॥
ब्रह्मण्यदेवः सर्वात्मा तैस्तैर्भावैर्विकुर्वते ।
जगत्यतिगुणो देवो वैकुण्ठः सर्वभावनः ॥ [ 775 ]
अतः समस्तदेवानां पूज्य एव च केशवः ।
पद्मनाभश्च भगवान्प्रजासर्गकरो विभुः ॥
अनन्तो धारणार्थं च बिभर्ति च महद्यशः ।
यज्ञ इत्यपि सद्भिश्च कथ्यते वेदवादिभिः ॥
श्वेतः कृतयुगे देवो रक्तस्त्रेतायुगे तथा । [ 780 ]

---

विष्णोश्चामित्रकर्शन (for $^b$) — (L 753) K1 स्वस्य, K3 Dn शास्ता, T1-3 G1 3-5 M4 चैव (for शश्वत्) Ñ1 V1 3 B Ds1 (marg as above) D6 [अ]व्यथायाश्च, G2 [अ]व्ययस्यैव (for [अ]व्यय शश्वत्) Ñ1 2 V1 2 B Ds D4 G2 सदार (for सदा च) D6 T2 3 सदार प्रथितो गुणः, G1 3-5 M4 स्वदाराः प्रथितो गुण (for $^b$) — (L 755) K1 कृती (for कर्ता) — (L 756) K3 यथा, G2 येन (for पश्चात्). K2 D4 5 परात्मना, M4 महात्मन (for °ना) — D3 om (hapl) lines 758–759. — (L 758) K1 3 4 D1 4 एवं स पुरुषो विष्णुर्, G2 पुराणपुरुषो देवो (for $^a$) Ds1 वेदे च (for देवेषु) Dn2 विष्णुर्वेदेषु विद्यते (for $^b$) — (L. 759) T3 G1 4 परेषा (for गुणेभ्यश्च) Ñ1 परं (for परस्) G3 परेभ्यश्च गुणैस्तथा (for $^b$) — (L 760) B1 Ds महता (for महात्मा) G4 नाथितः (for [आ]राधितः). — (L 761) D6 सा (for च) T1-3 G1 3-5 M4 परिव(T2 वरं व)व्रे तदा दितिः (for $^b$) — K3 4 om lines 762–767, K1 reads the same on marg — (L 762) K2 D4 5 [उ]क्तं (for [उ]क्तस्) Ñ1 2 V2 3 B Dn Ds D2-4 (marg.) 6 T1 3 G2. 3 त्वत्समं (for त्वामहं). V1 D1 त्वयोक्तं त्व(D1 °क्तस्त्व)त्समं पुत्रम् (for $^a$) — D1 om lines 763–764. K2 om line 763 — (L 763) Ñ2 V1 2 T2 3 G4 5 प्रणम्य देवं विज्ञाय, B2 D6 T1 G1 3 M4 प्रणम्य (B2 °ता) देवं विज्ञाप्य; Dn प्रणिपत्य च विज्ञाय, D2 5 प्रणतां (D3 °शान्तं, D4 3 °णता) चैव वि°, G2 विज्ञाय देवं प्रणता (for $^a$) — (L 764) D3 T3 G1 3 5 M4 [उ]क्तं (for [उ]क्ता) G2 तेनोक्तमदिते नास्ति (for $^a$) B1 पुरुषोत्तम; G1 °षो वर (for °षोऽपरः) — (L. 765) D3 तवादिते; T1-3 G1, 3-5 M4 वरानने (for [अ]हमेव ते) — After line 765, T2 3 G1 ins

21** स एवायं देवदेवो लोकस्य हितकाम्यया ।
प्रधानं जगतो नाथः कर्ता भर्ता च केशवः ॥

— (L 766) T2 3 G1 सर्वविद् (for °कृद्) T1 G3 5 M4 स एवायं देवदेवो (for $^a$) D6 T2 3 G1 4 सुरोत्तम (for सुरेश्वर) — (L 768) B1 3 D5 इत्थमेष, D6 इच्छन्नेष (for °व) T1 G3 काश्यपं तम् (for °पत्वम्). — (L 769) B3 D6 (marg) सर्वभूत- (for भूतभव्य-) Dn D3 -भवाप्ययः (for -भवोऽव्ययः) Ñ1 सर्वभूतभवाप्यय (for $^b$) — B3 om line 770–775 — (L. 770) V3 प्रादुर्भावयुतो देवो (for $^a$) V2 जगतां, T3 G5 M4 लोकस्य (for जगतो) — (L 771) K2 Ñ2 V3 माथुरे, T2 3 G1 निधानं, G2 माधवो, G3 5 M4 प्रधानं (for माथुरं) D3 माथुरो जगतां नाथ (for $^a$) T2 G1 भोक्ता, G3 5 M4 भर्ता (for हर्ता). — (L 772) T1 G3, 5 M4 भारत (for मानद) T2 G1 व्याप्तं तैलेन मानद (for $^b$). — (L 774) D5 ब्रह्मण्य एष सर्वात्मा; D6 G5 °ण्यः सर्वदेवात्मा (for $^a$). G1 3 भावं (for भावैर्). B2 Dn2 D1 2 T1 विकुर्वति, D6 विकारयन् (for विकुर्वते). D3 भावैस्तैस्तैर्विसृष्टिकृत् (for $^b$) — (L. 775) D5 जगत्पति-, T3 जगत्स्वति (for °त्यति-) K3 जगत्पाति गुणी देवो; D6 (marg as above) T2 G1 3 5 M4 जगत्स्वकर्मणा देवो (for $^a$) Ñ1 सर्वभूतभवाभव, B1 D6 (marg) सर्वभूतभवोऽव्यय, T1-3 G1 3 5 भावयन्भूतभावन (for $^b$). — (L 776) Ñ1 B1 3 D6 (marg) वैकुण्ठः सर्वदेवानां (for $^a$) D5 एक स (for एव च) — (L 778) T2 G1 धारणार्थाय (for °र्थं च) — (L 779) T2, 3 G1, 3 5 M4 अनन्त

द्वापरे च यथा पीतः कृष्णः कलियुगे विभुः ॥
अवधीत्स हिरण्याक्षं दिव्यरूपधरो हरिः ।
जघ्ने हिरण्यकशिपुं नारसिंहवपुर्हरिः ॥
दधाराप्सु निमज्जन्तीमेष देवो वसुंधराम् ।
वाराहं वपुराश्रित्य जगतो हितकाम्यया ॥ [ 785 ]
जिगाय जगती चैव विष्णुर्वामनरूपधृक् ।
बबन्ध च बलिं देवः श्रीमान्पन्नगबन्धनैः ॥
देवदानवसंभूतामकामयदपि श्रियम् ।
त्वय्यायत्तः पुरा विष्णुरुदारमतिविक्रमः ॥
सावशेषं तपो यस्य तं निहन्ति जनार्दनः । [ 790 ]
अलीकेष्वपि वर्तन्तं व्रतमेतन्महात्मनः ॥
जघ्ने च दानवान्मुख्यान्देवानां ये च शत्रवः ।
तव प्रियार्थं गोविन्दो धर्मनित्यः सतां गतिः ॥
रामत्वमपि चावाप्य जघ्ने रावणमात्मवान् ।
भूत्वा कामगुणश्चैव जघान द्विरदं हरि ॥ [ 795 ]
हिताय जगतोऽद्यापि लोके वसति मानुषे ।
उपेन्द्रो जगतो नाथः सर्वभूतोत्तमोत्तमः ॥
जटी कृष्णाजिनी दण्डी दृष्टपूर्वो मया हरिः ।
दैतेयेषु चरन्देवस्तृणेष्वग्निरिवोद्धतः ॥
अद्राक्षमपि गोविन्दं दानवैकार्णवं जगत् । [ 800 ]
कुर्वाणं दानवैर्हीनं जगतो हितकाम्यया ॥
अवश्यं पारिजातं ते नयिष्यति जनार्दनः ।
द्वारकाममरश्रेष्ठ नानृतं च ब्रवीम्यहम् ॥
भ्रातृस्नेहाभिभूतस्त्वं कृष्णे न प्रहरिष्यसि ।
नापि कृष्णस्त्वयि ज्येष्ठे प्रहरिष्यति वासव ॥ [ 805 ]
नैव चेच्छ्रोष्यसि प्रोक्तं मया देव कथंचन ।

---

इति सन्दिश्य ( for $^a$ ) —( L 780 ) K$_2$ कृते पुरा ( for कृतयुगे ) — G$_3$ om line 781–785 T$_{2\ 3}$ om line 781 —( L 781 ) K$_3$ G$_1$ तथा , V$_3$ प्रभु ( for विभु ) — After line 781, D$_5$ ins

22** प्रात कृतयुगो यो मे त्राता वै मध्यमे तथा ।
तृतीये द्वापरो यामे संध्यायां कलिरेव च ॥
चतुर्युगस्य पर्याये वासरस्य प्रयोजने ।
चतुर्युगसमात्राप्तिर्वासरे वासरे तथा ॥

—( L 782 ) D$_6$ हिरण्याख्यं ( for °क्षं ) K$_2$ त्रिश्व ( for दिव्य- ) D$_3$ G$_2$ विभु· ( for हरि· ) —( L 783 ) Ñ$_1$ B$_3$ D$_3$ नरसिंह- ( for ना° ) D$_5$ त्रिभु ( for हरिः ) —( L 784 ) K$_1$ ( *sup lin.* as above ) जहार , D$_4$ धृत्वा च ( for दधार ) —( L 785 ) Ñ$_2$ Ds$_2$ रूपम् ( for वपुर् ) B$_1$ वराहरूपमाश्रित्य ( for $^a$ ) —( L 786 ) Ñ$_2$ पृथिवी ( for जगतीं ) Ñ$_1$ भृत् ( for -धृक् ) —( L 788 ) V$_2$ B$_3$ देवीं ( for देव- ). Ñ$_2$ -भूतानाम् ( for -संभूताम् ) Ñ$_1$ V$_1$ B$_2$ Ds देवीं दानवसाद्भूताम् , B$_1$ देवदानवसाद्भुताम् ( for $^a$ ) V$_3$ अपाकर्षद् ( for अकामयद् ) Ñ$_{1\ 2}$ V$_{1\ 2}$ B$_{1\ 3}$ Ds D$_5$ T$_{1\ 3}$ G$_{1-3,\ 5}$ M$_4$ अकामाम( Ñ$_2$ D$_5$ °द )पि च स्त्रियम् , B$_2$ Dn D$_6$ अकामां यद- ( D$_6$ ताम )पि श्रियम् ( for $^b$ ) — After line 788, D$_3$ ins :

23** अन्यानि रत्नजातानि गजादीनि महायशा· ।

—( L 789 ) K$_{1\ 3\ 4}$ Ñ$_1$ V$_3$ D$_5$ त्वय्यनन्त. , Ñ$_2$ V$_{1\ 2}$ B Dn Ds D$_3$ ( before corr as above ) $_{4\ 6}$ T$_1$ त्वय्याधत्त ; D$_2$ त्वय्यधर्ता ( for त्वय्यायत्त ) K$_1$ Dn D$_6$ उदारामित- ; K$_4$ T$_1$ °रोऽमित- ; Ñ$_2$ °रगति- ( for °रमति- ) —( L 790 ) T$_{1-3}$ G$_{1\ 3\ 5}$ M$_4$ तु दैत्यानां ( for तपो यस्य ) D$_6$ ( marg ) सहस्राणि भुजा यस्य ( for $^a$ ) K$_2$ V$_1$ D$_{2-4}$ तं न हन्ति , B$_1$ न तं हन्ति , D$_1$ तत्राहंति ( for त निहन्ति ) — G$_5$ M$_4$ om lines 791–797 —( L 791 ) Ñ$_2$ V$_{1\ 3}$ B$_3$ अनीकेषु ( for अली° ) D$_1$ ध्रुवम् ( for व्रतम् ) —( L 792 ) Ñ$_2$ कृत्स्नान् ( for मुख्यान् ) Ñ$_1$ देव- ( for ये च ) K$_{1\ 4}$ Ds देवानां चैव ( Ds °नामपि ) शात्रवान् , V$_3$ °नां देवसत्तम , D$_3$ कालनेमिपुर सरान् ( for $^b$ ) — D$_3$ om lines 793–794 —( L 793 ) Ñ$_1$ V$_3$ सनातन ( for सतां गति ) —( L 794 ) K$_2$ D$_{4\ 5}$ गत्वा च , Ñ$_1$ च गत्वा , V$_2$ गत्वा यो ( for चावाप्य ). B$_3$ आत्मन ( for °आत्मवान् ) —( L 795 ) K$_{3\ 4}$ D$_5$ कामगुणाच्; Ñ$_{1\ 2}$ Dn T$_1$ G$_1$ काम( Ñ$_1$ कल्प )गुणाश्च , Ds °गुणैश्च ( for °गुणश्च ) G$_3$ खे च ( for चैव ) V$_2$ भूत्वा कामगमो ह्येव ( for $^a$ ) D$_3$ जहार ( for जघान ) Ñ$_2$ D$_5$ द्विविद , D$_4$ दानवान् , T$_2$ G$_{1\ 3}$ नरकं ( for द्विरदं ) — D$_2$ om. ( hapl ) lines 796–798 —( L 796 ) Ñ$_2$ वा ( for ऽद्य ) —( L. 797 ) Ñ$_1$ B$_1$ Dn Ds$_2$ T$_{1\ 2}$ G$_{1\ 3}$ जगता ( for °तो ). —( L 799 ) K$_2$ D$_{3-5}$ दैत्येषु वि- , D$_1$ °षु च ( for दैतेयेषु ). D$_2$ एष ( for देवस् ) V$_1$ T$_{2\ 3}$ G$_5$ [उ]त्थित· ( for [उ]द्धतः ) —( L 800 ) D$_1$ दानवै कर्शितं जगत् ( for $^b$ ) —( L 802 ) Ñ$_1$ B$_{1\ 3}$ Ds D$_6$ असंशयं पारिजातं ( for $^a$ ) D$_5$ नेष्यतीति ( for नयिष्यति ) —( L 803 ) T$_2$ -ज्येष्ठ ( for -श्रेष्ठ ) G$_5$ द्विजोत्तम ( for ब्रवीम्यहम् ) K$_2$ Ñ$_2$ नानृतं ते ( Ñ$_2$ च ) वदाम्यहम् ( for $^b$ ) —( L 804 ) Ds G$_{1\ 2\ 5}$ न कृष्णे ( by transp ) —( L 805 ) K$_1$ D$_6$ श्रेष्ठे ( for ज्येष्ठे ) D$_3$ नैव कृष्णस्त्वयि श्रेष्ठे ( for $^a$ ). K$_1$ ( marg as above ) वीर्यवान् ( for वासव ) —( L 806 ) Ñ$_1$ [ए]व त्वं , D$_1$ चैव ; D$_3$ [ए]व च ( for [ए]व चेच् ) —( L 807 ) K$_{1\ 3\ 4}$ -धर्मज्ञ ( for

पृच्छ त्वं नयधर्मज्ञान्ये हितास्तव मन्त्रिणः ॥
नारदेनैवमुक्तस्तु महेन्द्रो जनमेजय ।
इदमुत्तरमीशोऽथ प्रत्युवाच जगद्गुरुम् ॥
एवंविधप्रभावं त्वं कृष्णं वदसि यद्द्विज । [ 810 ]
एवमेतत्सुबहुशः श्रुतं खलु मया मुने ॥
यतश्चैवंविधः कृष्णस्ततोऽहं तस्य तं तरुम् ।
न प्रदास्यामि दातव्यं सतां धर्ममनुस्मरन् ॥
महाप्रभावो नाल्पार्थे रुष्येदिति विचिन्तयन् ।
व्यवस्थितोऽहं भद्रं ते मुने सर्वगुणोदितः ॥ [ 815 ]
महाप्रभावाः सततं भवन्ति हि सहिष्णवः ।
श्रोतारश्चैव सततं वृद्धानां ज्ञानचक्षुषाम् ॥
महात्मा कारणे नाल्पे कृष्णो धर्मभृतां वरः ।
भ्रात्रा ज्येष्ठेन धर्मज्ञो विरोधं गन्तुमर्हति ॥
यथैव मम मातुः स वरं प्रादादधोक्षजः । [ 820 ]
तथैव तस्याः पुत्राणां ज्येष्ठानां सोढुमर्हति ॥
यथैवोपेन्द्रतां यातः स्वयमिच्छञ्जनार्दनः ।
तथैव भ्रातुरिन्द्रस्य संमानं कर्तुमर्हति ॥
ज्यैष्ठ्यमेतेन देवेन नारब्धं किं पुरातने ।
अथेदानीमपीच्छेत्स ज्येष्ठोऽस्तु मधुसूदनः ॥ [ 825 ]
सुनिश्चितं बलरिपुमीक्ष्य नारदो
विसर्जितस्त्रिदशवरेण धर्मवित् ॥
ययौ पुरीं यदुवृषभाभिरक्षितां
कुशस्थलीं धृतिमतिमांस्तपोधनः ॥

Colophon.

वैशंपायन उवाच ।
अथैत्य द्वारकां रम्यां नारदो मुनिसत्तमः । [ 830 ]
ददर्श पुरुषश्रेष्ठं नारायणमरिंदमम् ॥
स्ववेश्मनि सुखासीनं सहितं सत्यभामया ।
विराजमानं वपुषा सर्वतेजोतिगामिना ॥
तमेवार्थं महात्मानं चिन्तयन्तं दृढव्रतम् ।

---

°ज्ञान्) K2 Ñ1 B1 3 D4 5 पृच्छान्यानपि धर्मज्ञ (Ñ1 °ज्ञान्)· Ñ1 B1 3 D6 (marg) वृत्रहन् (for मन्त्रिण.) — Before line 808, some Mss ins वैशंपायन T1-3 G1 3-5 M4 om lines 809-810 — (L 810) Ñ1 B1 3 -भूत (for -विध-). Ñ2 om lines $810^b$–$811^a$ — (L 811) K3 D1 सुबहुलं (for °श). G4 सर्वं (for खलु) V3 D2 (*sup lin.* as above) महा- (for मया). — (L 812) Ñ1 B2 D6 भोस्, D3 T1-3 G1 3-5 M4 वै (for तं) — (L 813) Ñ1 D6 प्रयच्छामि, V3 दास्यामि प्र- (for प्रदास्यामि). B3 न प्रयच्छाम्यहं दिव्य (for $^a$) — (L 814) K1 बाल्यार्थे, K2-4 Ñ2 V B2 Ds D1 2 4 (marg) 5 G2 नाल्पार्थं, D3 ह्यल्पार्थे; D4 मान्यार्थे (for नाल्पार्थे) V1 कुप्येद्; D2 दुष्येद् (for रु°) G2 विचिन्तया (for °यन्) — (L 815) T2. 3 G1 4 5 M4 ऽयं (for ऽहं) K B2. 3 Dn Ds D1 2 4 5 T1 G3 -गुणादिति, Ñ2 V1. 3 -गुणान्वित, V2 -गुणोदित, B1 -गुणादिभिः, D3 6 गुणोदिते, G2 °दितम् (for °दित) —(L 816) V1 महानुभावाः सततं (for $^a$) D3 भविष्यन्ति (for भवन्ति हि) — (L. 817) Ñ1 तज्ज्ञानां (for वृद्धानां) — (L 818) K2 चाल्पे, K3 नापि (for नाल्पे) — (819) K2 धर्मज्ञ, K3 Ñ1 B1 3 Dn Ds D4. 6 T3 G1 4 5 सर्वज्ञो (for धर्मज्ञो) V1 G2 कर्तुम्, V2 हन्तुम् (for ग°) — T1 M4 om (hapl) lines 820-823 K4 om. (hapl) lines 820-821 — (L 820) D3 यथैवं मम मातुश्च (for $^a$). — (L. 821) V1. 2 B2. 3 D6 ज्येष्ठतां (for ज्येष्ठानां) Ñ2 क्षन्तुम्, D5 T3 G4 वोढुम् (for सो°). — (L 822) D3 यच्च (for यथा) G2 याति (for यातः) — (L 824) B3 D6 ज्यैष्ठ्यमेव तु; D3 श्रैष्ठ्यमेतेन; D5 ज्येष्ठेनै° (for ज्यैष्ठ्यमे°) G5 देवानाम् (for देवेन). M4 क्षारब्धं (for ना°) D3 यत् (for किं) V3 T1. 2 G5 पुरा मुने, G2 पुरातनम् (for °तने). — (L 825) K1 4 यमिच्छेत्स, V1 अपीच्छसे, D2 °च्छेत; G2 अपि स चेत् (for अपीच्छेत्स) B2 ज्येष्ठस्तु, D3 ज्येष्ठत्वं, T1 3 G1. 5 M4 ज्यैष्ठ्यं तु, G3 ज्येष्ठकृत् (for ज्येष्ठोऽस्तु) — (L. 826) D2 स (for सु-) D3 -रिपुनाथ (for °मीक्ष्य) — (L. 827) K Ñ1 V1 2 B1 2 Dn D2 4 6 T2 G2 4 धर्मभृत् (for °विद्) — (L 828) D2 -पालितां (for -रक्षितां) D3 ययौ पुरीं यदुवृषभेन पालितां

Colophon — *Mention of the Epic* K3 B3 Ds2 T3. — *Mention of Khila* K3 Ñ2 V B Ds2 D1. — *Adhy name* K Ñ1 2 V B D T1-3 G1. 3. 4 पारिजात (T2 3 G1. 4 °जातप) हरणम् — *Adhy no* K3 125; V1 131, V2 130, V3 127, B2 129, Dn Ds2 D4 126, D1 123, D3 136, T1 G3 4 140, T2 G4 142; T3 149, G2 132, G5 143

K4 om the ref. — (L 831) D2 5 अरिंदम (for °मम्) — (L. 832) T2 G1 समासीनं (for सुखा°) — (L 833) D2 3 सर्वतेजोभिभाविना (for $^b$). — (L. 835) Ñ2 तोषयन्तं (for योज°). K1. 3. 4 भावितम् (for भामिनीम्). M4

केवलं योजयन्तं च वाक्यमात्रेण भामिनीम् ॥ [ 835 ]
दृष्ट्वैव नारदं देवः प्रत्युत्थाय अधोक्षजः ।
पूजयामास च तदा विधिदृष्टेन कर्मणा ॥
सुखोपविष्टं विश्रान्तं प्रहस्य मधुसूदनः ।
वृत्तान्तं परिपप्रच्छ पारिजाततरुं प्रति ॥
अथोवाच मुनिः सर्वं विस्तरेण तपोधनः । [ 840 ]
इन्द्रानुजायेन्द्रवाक्यं निखिलं जनमेजय ॥
श्रुत्वा कृष्णस्तु तत्सर्वं नारदं वाक्यमब्रवीत् ।
अमरावतीं पुरीं यास्ये सोऽहं धर्मभृतां वर ॥
इत्युक्त्वा नारदेनैव सहितः सागरं ययौ ।
संदिदेश ततस्तत्र विविक्ते नारदं हरिः ॥ [ 845 ]
महेन्द्रभवनं गत्वा वदस्वाद्य तपोधन ।
अभिवाद्य महात्मानं मद्वाक्यममरोत्तमम् ॥
न युद्धे प्रमुखे शक्र स्थातुमर्हसि मे प्रभो ।
पारिजातस्य नयने निश्चितं त्वमवेहि माम् ॥
एवमुक्तस्तु कृष्णेन नारदस्त्रिदिवं गतः । [ 850 ]
आचचक्षे च कृष्णोक्तं देवेन्द्रस्यामितौजसः ॥
ततो बृहस्पतेः शक्रः शशंस बलनाशनः ।
श्रुत्वा बृहस्पतिर्देवमुवाच कुरुनन्दन ॥
अहो धिग्ब्रह्मसदनं मयि याते शतक्रतो ।
दुर्नीतमिदमारब्धमत्र भेदो हि दारुणः ॥ [ 855 ]
अनाख्याय कथं नाम भवता भुवनेश्वर ॥
ममैतत्कृत्यमारब्धं देव केनापि हेतुना ॥
अथ वा भवितव्येन कर्मजेन प्रमुह्यते ।
जगद्भूत्रन्न न विधिः शक्यः समतिवर्तितुम् ॥
सहसैव तु कार्याणामारम्भो न प्रशस्यते । [ 860 ]
तदेतत्सहसारब्धं कार्यं दास्यति लाघवम् ॥
बृहस्पतिं महात्मानं महेन्द्रस्त्वब्रवीद्वचः ।
एवं गतेऽद्य यत्कार्यं तद्भवान्वक्तुमर्हति ॥
तमुवाचाथ धर्मात्मा गतानागततत्त्ववित् ।

---

वाङ्मात्रेण च भामिनीम् ( for [b] ) —( L 836 ) $K_2$ $\tilde{N}_1$ $V_2$ $B_{1\,3}$ $D_{5\,6}$ प्रत्युत्तस्थाव् ( for °त्थाय ) $V_3$ जनार्दन ( for अधोक्षज ) — ( L 838 ) $T_2$ $G_1$ विक्रान्त ( for विश्रान्तं ) $\tilde{N}_2$ अथोपविष्टं श्रीमन्त ( for [a] ) — ( L 840 ) $K_{1\,3}$ $\tilde{N}_2$ V $B_{1\,2}$ Dn Ds $D_{1\,3}$ $T_{1-3}$ G $M_4$ अथाचष्ट ( $V_3$ $D_3$ $G_2$ °ष्टे ), $D_4$ आश्रावयन् ( for अथोवाच ) $K_4$ $D_5$ अथाचष्ट तत सर्वं ( $D_5$ मुनिश्रेष्ठो ) ( for [a] ) $\tilde{N}_1$ $B_{1\,3}$ महात्मने, $D_6$ महामते ( for तपोधन ) —( L 843 ) Hypermetric. $K_{1,4}$ अमराणा ( for अमरावती ) $\tilde{N}_{1\,2}$ V $B_{1\,2}$ Ds $D_{4\,6}$ $T_{1-3}$ $G_{1-3.5}$ $M_4$ श्वो, $G_4$ भो ( for सो ) —( L 844 ) $D_3$ ( before corr. as above ) $_{4\,5}$ स गिरिं ( for सागरं ), —( L 845 ) $B_1$ तत्तु ( for ततस् ) $T_1$ $G_{3\,5}$ गत्वा स्नात्वा च तत्तीरे, $T_{2.3}$ $G_{1.2}$ तत्र कृष्णो मुनिश्रेष्ठम् ( for [a] ). $D_3$ विविक्तो, $T_1$ $G_3$ ह्यवदन्; $T_{2\,3}$ $G_{1\,4.5}$ अब्रवीन् ( for विविक्ते ) $B_3$ नारदं वचनं हरि. ( for [b] ) — ( L. 846 ) $D_2$ -भुवनं ( for -भ° ). $T_{2\,3}$ $G_{1\,4}$ गच्छ ( for गत्वा ) $\tilde{N}_1$ $D_{1,3-5}$ वदत्वद्य, $\tilde{N}_2$ वदाद्य त्वं, V $G_2$ वद चाद्य, B Ds $T_{2.3}$ $G_{1\,4}$ वद वाक्यं, Dn अद्य ब्रूहि, $D_2$ वदस्वाथ, $T_1$ $G_{3-5}$ $M_4$ वद तावत् ( for वदस्वाद्य ) —( L 847 ) V $B_{2\,3}$ $D_6$ मद्वाक्याद् ( for °क्यम् ) $K_2$ $D_{3-5}$ मम वाक्यमनुत्तमम् ( for [b] ) — ( L. 848 ) $K_4$ $B_{1-3}$ $D_6$ स्थातुम् ( for शक्र ) $V_2$ विभो ( for प्रभो ) $K_4$ $B_{1\,3}$ $D_6$ अर्हसि त्वं मम प्रभो ( for [b] ) — ( L. 849 ) $T_{1-3}$ $G_{1\,3-5}$ $M_4$ पारिजातं हरिष्यामि ( for [a] ) $V_3$ निश्चितस्, $T_{1-3}$ $G_{1\,3.5}$ $M_4$ ह्यागतं ( for निश्चितं ) $B_{1\,3}$ समरे हि ( for त्वमवेहि ) —( L 851 ) $\tilde{N}_2$ $B_{1\,3}$ देवेन्द्राय ( for °न्द्रस्य ) $B_2$ [अ]मितौजसे ( for °जस ) — ( L 852 ) $V_2$ बृहस्पति ( for °ते ) $K_{1\,4}$ बृहस्पते समक्ष च ( for [a] ) $D_4$ $T_{2\,3}$ $G_1$ सूदन ( fot नाशनः ) — ( L 853 ) $\tilde{N}_2$ शक्रम्, $B_{1\,3}$ $D_6$ चेदम् ( for देवम् ) — ( L 854 ) $K_3$ $D_4$ स्वर्ग- ( for ब्रह्म ) $K_3$ $D_4$ ( marg ) यदिदं ते, $\tilde{N}_2$ $D_5$ गते मयि, $D_1$ यदिमं ते ( for मयि याते ) $K_4$ यदिदं नारदेन वै ( for [b] ) — ( L 855 ) $V_2$ अनीतम्, $D_4$ दुर्विनीतम् ( hypermetric ) ( for दुर्नीतम् ) $D_4$ om ( hapl ) lines $855^b$–$857^a$ $K_2$ मध्य-, $K_3$ मित्र-, $K_4$ $\tilde{N}_2$ V $B_{2\,3}$ Ds $D_{5\,6}$ $T_2$ ( marg ) $_3$ $G_{1\,2\,4\,5}$ मन्त्र- ( for अत्र ) $M_4$ विदारणम् ( for हि दारुण. ) $T_2$ देवेन्द्रस्यामितौजस ( for [b] ) — ( L 856 ) $\tilde{N}_1$ V $B_{2\,3}$ Dn Ds $D_4$ अनाख्यात्वा ( for °य ) — ( L 858 ) $K_3$ [अ]त्र मुह्यते; $\tilde{N}_2$ $V_{1\,3}$ B Dn Ds $D_{3\,4\,6}$ $T_{1-3}$ G $M_4$ प्रयुज्यते, $V_2$ नियुज्यते ( for प्रमुह्यते ) — ( L 859 ) K $\tilde{N}_2$ $V_3$ Dn Ds $D_{1-5}$ $G_2$ विविध, $V_1$ त्रिदिवं, $V_2$ स विधि, $T_3$ $G_1$ विधिवच् ( for न विधि ) K $\tilde{N}_2$ $V_{1\,3}$ Dn Ds $D_{1-5}$ $G_2$ न शक्यमतिव( $K_{1\,4}$ $Ds_2$ $D_5$ °निव-, $D_4$ °पि व )र्तितुम् ( for [b] ) —(L 860) $K_4$ ( marg by corr as above ) प्रवर्तते ( for प्रशस्यते ) — ( L 861 ) $K_{1\,3}$ $V_3$ सर्वम् ( for सहसा ) — ( L 863 ) $D_6$ न्याय्यं ( for कार्यं ) $V_1$ $D_8$ कर्तुम् ( for वक्तुम् ) — ( L. 864 ) $K_1$ सर्वात्मा ( for

अधोमुखश्चिन्तयित्वा बृहस्पतिरुदारधीः ॥ [ 865 ]
यतस्व सहपुत्रेण योधयस्व जनार्दनम् ।
तथा शक्र करिष्यामि यथा न्याय्यं भविष्यति ॥
बृहस्पतिस्त्वेवमुक्त्वा क्षीरोदं सागरं गतः ।
आचष्ट मुनये सर्वं कश्यपाय महात्मने ॥
तच्छ्रुत्वा कश्यपः क्रुद्धो बृहस्पतिमभाषत । [ 870 ]
अवश्यं भाव्यमेतद्धि सर्वथा नात्र संशयः ॥
इच्छतः सदृशीं भार्यां महर्षेर्देवशर्मणः ।
अपध्यानकृतो दोषः पतत्येष शतक्रतोः ॥
अस्य दोषस्य शान्त्यर्थमारब्धश्च मुने मया ।
उदवासः स दोषश्च प्राप्त एव सुदारुणः ॥ [ 875 ]
तद्गमिष्यामि मात्रास्य सहादित्या तपोधन ।
उभौ तौ वारयिष्यामि दैवं संवदते यदि ॥
बृहस्पतिस्तु धर्मात्मा मारीचमिदमब्रवीत् ।
प्राप्तकालं त्वया तत्र भवितव्यं तपोधन ॥
तथेति कश्यपश्चोक्त्वा संप्रस्थाप्य बृहस्पतिम् । [ 880 ]
जगामार्चयितुं देवं रुद्रं भूतगणेश्वरम् ॥
तत्र सोमं महात्मानमानर्च वृषभध्वजम् ।
वरार्थी कश्यपो धीमानदित्या सहितः प्रभुः ॥
तुष्टाव च तमीशानं मारीचः कश्यपस्तदा ।
वेदोक्तैः स्वकृतैश्चैव स्तवैः स्तव्यं जगद्गुरुम् ॥ [ 885 ]

उरुक्रमं विश्वकर्माणमीशं
जगत्स्रष्टारं धर्मदृश्यं परेशम् ।
सर्वेशं त्वां धृतिमद्धाम दिव्यं
विश्वेश्वरं भगवन्तं नमस्ये ॥
यो देवानामधिपः पापहर्ता [ 890 ]
ततं विश्वं येन जगन्मयत्वात् ।
आपो गर्भो यस्य शुभा धरित्र्यां

---

ध°) —(L 868) $G_5$ ययौ (for गत) —(L 869) $K_1$ मनुजे (for मुनये) $Ñ_1$ $B_{1\ 3}$ आचष्टे ($B_3$ °ष्ट) चैव मुनये, $D_6$ आचष्ट चैवं मुनये (for [a]) —(L 870) $K_{1\ 4}$ $G_5$ $M_4$ क्षुब्धो, $K_3$ क्रूरो (for क्रुद्धो) —(L 871) $K_{1-3}$ $D_1$ अवश्य- (for °श्यं) $D_2$ एतावत्, $T_1$ एतद्ध, $G_2$ एवैतत् (for एतद्धि) —(L 872) $K_{1\ 4}$ ईहतः, $Ñ_2$ गच्छत (for इ°). $G_5$ $M_4$ -वर्मणः (for -श°). —(L 873) $K_4$ तस्यां ध्यान-, $V_3$ तिरस्कार-, $D_6$ $T_{2\ 3}$ $G_1$ अपज्ञान (for अपध्यान) $G_{4\ 5}$ $M_4$ अवज्ञानकृताद्दोषात् (for [a]) $K_4$ शतक्रतौ (for °क्रतोः). —(L 874) $T_{1-3}$ $G_1$ तस्य (for अस्य) $D_3$ अस्य शान्त्यर्थमारब्ध (for [a]). $K_{1, 3\ 4}$ $Ñ_2$ $B_1$ $D_{1\ 2\ 5}$ आरब्धं च, $D_3$ पुरैव तु, $D_4$ आरब्धयन् (for आरब्धश्च) $T_2$ $G_{1\ 4}$ मया मुने (by transp.), $T_3$ महामुने —(L 875) $Ñ_2$ $D_{2\ 3\ 6}$ उदवासं (for °वास) $K_4$ सदोष (for स दोषश्) $K_1$ (marg) $D_1$ उदवासं सदोषं च, $T_2$ $G_{1\ 4\ 5}$ उपवासस्तु दोषाच्च (for [a]) —(L 876) $Ñ_2$ $V_{1\ 3}$ शान्त्यर्थं, $Dn$ $T_3$ मध्येऽस्य; $D_3$ शर्वस्य, $G_3$ तत्रास्य (for मात्रास्य) $K_{1\ 4}$ उद्गमिष्यामि मध्यस्य ($K_4$ °स्थः) (for [a]) $T_{2\ 3}$ $G_{1\ 3-5}$ $M_4$ बृहस्पते (for तपोधन) — $K_2$ om (hapl) lines 877–879 —(L 877) $T_{2\ 3}$ $G_{1\ 3-5}$ $M_4$ कृष्णं तं (for उभौ तौ) $D_5$ वारयिष्यावो (for °मि) $D_3$ देवः (for दैवं) $K_2$ $D_4$ (marg) देवौ विवदतौ यदि ($D_4$ युधि) (for [b]) —(L 879) $K_{1, 3}$ $Ds_1$ प्राप्तकालस् (for °काल) $G_5$ विप्र (for तत्र) —(L 880) $V_1$ प्रोक्त्वा (for चोक्त्वा), $D_6$ स स्थाप्य च, $G_5$ त प्रस्थाप्य (for संप्र°)

— $G_1$ om lines 881–882 —(L 881) $K_3$ $D_2$ [अ]र्थयितुं, $G_2$ चार्चितुं (for [अ]र्चयितुं) $T_{1-3}$ $G_{3\ 5}$ $M_4$ तदा- ($T_2$ °था) राधयितु देव (for [b]) —(L 882) $K_{1\ 4}$ $Ñ_1$ $D_{1\ 2\ 4}$ $T_1$ सौम्यं (for सोमं) $K_2$ अभ्यर्च्य; $G_2$ अर्पयेन् (for आनर्च). $K_4$ स वृष- (for वृषभ-) —(L. 883) $K_2$ $D_{2\ 3}$ वरार्थं, $V_3$ °र्थं, $T_{1-3}$ $G_{1, 3-5}$ $M_4$ पुत्रार्थं (for वरार्थी) $D_4$ श्रीमान् (for धी°) —(L 884) $V_3$ समासीनं (for तमीशानं) —(L 885) $D_1$ स्वसूक्तैश् (for स्वकृतैश्) $D_3$ मन्त्रैः (for चैव) $B_2$ रतवै स्तुत्यं, $D_6$ सर्वैः स्तुत्यं, $T_{2\ 3}$ $G_{1\ 3-5}$ $M_4$ तथैवास्तौज् (for स्तवैः स्तव्यं). — Before line 886, some Mss ins. कश्यप उवाच —(L 887) $T_1$ -वृतं, $G_1$ -दर्शं (for -दृश्यं). $K_{1\ 3}$ $Ñ_{1, 2}$ $B_2$ $Dn$ $Ds$ $D_{1\ 3\ 4\ 6}$ $T_3$ वरेशम्, $V_2$ $B_1$ $D_2$ $G_2$ वरेण्यम्; $V_3$ सुरेशम् (for प°) $V_1$ जगत्स्रष्टारं धर्मदृष्टं वरेण्यम्, $B_2$ $D_5$ $T_2$ $G_{3, 4}$ °रं धर्मदर्शं ($B_2$ °र्शा) वरेशम्, $G_5$ °रं धर्मभृतामधीशम्; $M_4$ °रं धर्मभृतां वरेश्वरम् —(L 888) $K_1$ तं सर्वेशं त्वा, $K_2$ शर्वं त्वा, $Ñ_3$ V B $Dn$ $Ds_2$ $D_{2\ 6}$ $G_2$ स शर्वं त्वां, $D_2$ तं सर्वज्ञ, $D_5$ तत्सर्वं त्वां (for सर्वेशं त्वां). $T_1$ $G_3$ सर्वज्ञत्वाद्धृतिमन्तं च दिव्यं, $T_{2\ 3}$ $G_{1\ 4, 5}$ $M_4$ सर्वज्ञ ($G_4$ स सर्वं) त्वां धृतिमन्तं च दिव्यं. —(L. 889) $D_6$ विश्वेश्वरं तं शरणं प्रपद्ये —(L 890) $D_{2, 3}$ अधिपतिः (for अधिप) $K_4$ $D_1$ पाप्महर्ता (for पाप°) —(L. 891) $K_4$ $Ñ_{1\ 2}$ $V_{2\ 3}$ $B_3$ $Ds$ $D_{2-4\ 6}$ $G_4$ जगन्महत्त्वात् (for °न्मयत्वात्) $K_{1\ 2}$ त($K_2$ य)तो विश्वं येन जगन्महत्त्वात्, $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ नतं ($T_1$ सत्यं; $T_3$ $G_3$

विश्वेश्वरं तं शरणमहं प्रपद्ये ॥
शालावृकान्यो यतिरूपो निजघ्ने
दत्तानिन्द्रेण प्रणुदोऽहितानाम् । [ 895 ]
विरूपाक्षं सुदर्शनं पुण्ययोनि
विश्वेश्वरं यामि मूर्ध्ना प्रपद्ये ॥
भुङ्क्ते य एको विभुर्जगतो विश्वमग्र्यं
धाम्नां धाम सुकृतित्वान्न धृष्यः ।
पुष्यात्स मां महसा शाश्वतेन [ 900 ]
सोमपानां मरीचिपानां वरिष्ठः ॥
अथर्वाणं सुशिरसं भूतयोनि
कृतिनं वीरं दानवानां च बाधम् ।
वियज्जुष्टं संस्कृतं वैकृतं च
विश्वेश्वरं शरणं यामि देवम् ॥ [ 905 ]
जगज्जालं विततं यत्र विश्वं
विश्वात्मानं प्रीतिदेवं नतानाम् ।
यदूर्ध्वगं रथमास्थाय याति
विश्वेश्वरः स सुमना मेऽस्तु नित्यम् ॥
अन्तश्चरं रोचनं चारुशाखं [ 910 ]
महाबलं धर्मनेतारमाद्यम् ।
सहस्रनेत्रं शतवर्त्मानमुग्रं
महादेवं विश्वसृजं नमस्ये ॥
शोचिष्केशं शमनं शान्तपापं
शर्वं शंभुं शंकरं भूतनाथम् । [ 915 ]
धुरंधरं गोपतिं चन्द्रचिह्नं

---

ततं ) विश्वं वेद ( $M_4$ येन ) जगन्महृ( $G_5$ °म )त्वात् — ( L 892 ) $D_2$ गतिर् ( for गर्भो ). $K_2$ $\tilde{N}_2$ V $B_3$ Dn Ds $D_{4,6}$ $T_2$ धरिञ्यो ( for °ञ्यां ) $K_1$ $\tilde{N}_1$ आपो गर्भं यस्य शुभा धरित्री ( $\tilde{N}_1$ °ञ्यो ), $B_2$ $T_{1\ 3}$ $G_{2\ 4\ 5}$ आपो गर्भो ( $G_{2\ 5}$ °र्भे ) यस्य शुभां धरिञ्यो, $D_3$ आपो गर्भे यस्य शुभा धरित्री, $G_1$ M आपो गर्भो यस्य शुभा धरिञ्या — ( L 893 ) $D_3$ विश्वेशं तं ( for °श्वरं ) $K_2$ $\tilde{N}_{1\ 2}$ $V_{1\ 2}$ $B_{2\ 3}$ Dn $Ds_2$ $D_{2\ 6}$ $T_{1-3}$ $G_{1\ 3-5}$ शरणं ( for शरणमहं ) — $M_4$ om lines 894–917 — ( L 894 ) $D_3$ यद्विरूपो, $D_5$ प्रति° ( for यति° ) $K_4$ व्यालान्वृकान्पतिरूपो निजघ्ने — ( L 895 ) Dn $G_2$ दान्तान् ( for दत्तान् ) $\tilde{N}_1$ $T_1$ $G_{3\ 5}$ प्राणदो वै, $D_4$ प्रददौ, $T_2$ $G_1$ प्राणदे वै ( for प्रणुदो ) $B_2$ योऽहितानाम् ( for ऽहिता° ) — ( L 896 ) $K_4$ विश्वरूपाक्ष ( for विरू° ) $\tilde{N}_1$ $T_1$ दुर्दर्शन, $D_9$ सुन्दरं ( for सुदर्शनं ) $D_{2\ 3}$ विश्व ( for पुण्य- ) — ( L 897 ) $K_4$ तमहं, $D_2$ ( marg ) योनिं ( for यामि ) $\tilde{N}_2$ $V_3$ B Dn $D_{4\ 6}$ $T_{1-3}$ $G_{1\ 3-5}$ विश्वेश्वरं शरणं यामि मूर्ध्ना ( $G_3$ देवम् ), $V_1$ °रं शरण यास्यामि मूर्ध्ना — $G_4$ om lines 898–905 — ( L 898 ) $\tilde{N}_2$ विश्वभुङ्नो ( for विभुर्जगतो ) $K_{1\ 4}$ उग्रं ( for अग्र्यं ) $D_4$ एको त्रिभुर्जगतो विश्वमग्र्यं, $T_{1\ 2}$ $G_{3\ 5}$ भुङ्क्ते विभुर्जगतो विश्वमग्र्यं — ( L 899 ) $\tilde{N}_2$ $V_3$ $D_4$ सुकृतीनामधृष्य', $V_1$ °तीनां सुधृक्षः, $V_2$ $B_1$ °तित्वान्न प्रधृष्य, $B_{2\ 3}$ $D_6$ °ती नान्यधृष्यः, $T_{2\ 3}$ $G_{1\ 3}$ °तित्वादधृष्य. ( for °तित्वान्न धृष्य· ) $D_{2\ 3}$ धर्माधीन सुकृतत्वान्न धृष्य — ( L 900 ) $D_4$ श्रियः पुष्यत्सु ( for पुष्यात्स मां ) $K_{1\ 3}$ $\tilde{N}_{1\ 2}$ $V_2$ $B_{2\ 3}$ $Ds_1$ $D_{2,6}$ महता, $V_3$ °तां ( for °सा ). $K_4$ पुण्यां स मां महता शा°; $V_1$ $B_1$ क्षम्यात्स मां महता शा°, $T_{1-3}$ $G_{1\ 3-5}$ पुष्यात्स मां महतां चैव यत्स्यात् — ( L 901 ) $T_1$ स सोमपानां ( for सोम° ) $K_1$ वरिष्ठम् ( for °ष्ठ ) $\tilde{N}_1$ विश्वेश्वर सोमपाना वरिष्ठ·, $\tilde{N}_2$ B $D_6$ देवदेव सोमपानां व° — ( L 902 ) $D_5$ सुशिरं ( for सुशिरसं ) $V_3$ विश्व- ( for भूत ) $K_2$ अथर्वाणं सुरसंभूतयोनिं — ( L 903 ) $\tilde{N}_2$ सुकृतिन, $T_2$ $G_1$ कृतीना ( for कृतिनं ) $K_2$ $D_{4\ 5}$ दानवानीक-, $D_1$ °वाना वि- ( for °वानां च ). $\tilde{N}_1$ कृतिं वीरं नन्दन नानुशोकम् — ( L 904 ) $K_2$ विज्ञेयं सु-, $\tilde{N}_2$ $V_{2\ 3}$ B $D_{3\ 6}$ वियज्जुष, $D_2$ विचक्षुषं, $D_4$ विसह्यं सु- ( for वियज्जुष्ट ) $K_1$ यज्ञेयं यज्ञपं सस्कृतं च, $K_3$ यज्ञे हुतं यज्ञियं संस्कृत च, $V_1$ ऋग्यजुष संस्कृत प्राकृतं च, Dn Ds $D_5$ ( marg ) Bom Poona eds G(ed) यज्ञे हुतं य( Bom Poona eds °तिं या )ज्ञिय सस्कृतं वै — ( L 905 ) $G_2$ मूर्ध्ना ( for देवम् ) — ( L 906 ) $K_2$ जगज्जातं, $V_1$ °ज्जनं ( for °ज्जाल ) $\tilde{N}_2$ $B_1$ $D_6$ संतत, $T_{1-3}$ $G_{1\ 4\ 5}$ स° ( for वि° ) $D_3$ जगज्जातं यत्रित यत्र विश्वं — ( L 907 ) $K_4$ प्रीतिमेवं ( for °देव ) $D_2$ जनानाम्, $T_{1-3}$ $G_{1,3-5}$ हिता° ( for नता° ) $D_3$ $G_2$ विश्वात्मान प्रीतिदं देवतानाम् — ( L. 908 ) $V_1$ $Dn_2$ $D_2$ $T_{1-3}$ $G_{1\ 3}$ य ऊर्ध्वग, $G_2$ यमू°, $G_4$ य उर्ध्वाङ्गं ( for यदूर्ध्वगं ) — ( L 909 ) $K_4$ सुसु-, $G_2$ स्वस्थ- ( for स सु- ). — ( L 910 ) $K_2$ रुचिरं ( for रोचनं ) — ( L 911 ) $K_2$ $\tilde{N}_2$ V $B_{1\ 2}$ $D_{4-6}$ $T_{1-3}$ G ईड्यम्, $B_3$ $Dn_2$ ईशम् ( for आद्यम् ) — ( L 912 ) $K_2$ $G_5$ धन्वानम्, $V_{1\ 3}$ $B_{2\ 3}$ $D_{3\ 5}$ -धर्माणम्, $V_2$ $D_{1\ 4\ 6}$ -वर्माणम् ( for -वर्त्मानम् ) — ( L 914 ) $\tilde{N}_2$ $B_1$ शंसनं, $D_6$ $G_2$ शमिनं: $T_{1\ 2}$ $G_{1\ 3\ 4}$ शशिन ( for शमनं ) K $\tilde{N}_1$ Dn Ds $D_{1\ 4\ 5}$ शुचिं योगं शंसनं शान्तपा( $K_3$ °ता )पं — ( L 915 ) $K_1$ $D_1$ शर्वं शुभं, $K_2$ शर्वं शुभ्रं, $D_2$ सर्वेश्वरं ( for शर्वं शंभु ) — ( L 916 ) $\tilde{N}_2$ $B_3$ धनुर्धर ( for धुरंधरं ). $B_1$ $Dn_2$ $T_1$ $G_{2,3}$ चन्द्रजिह्व ( for °चिह्नं ) $\tilde{N}_1$ $D_6$ धनुर्धरं गोपतिं चन्द्रजिह्वं·

तथा दत्त्वा वरं तस्य पर्वतस्य तु केशवः ।
दध्यौ गङ्गां सरिच्छ्रेष्ठां नमस्कृत्वा वृषध्वजम् ॥
अथाययौ विष्णुपदी स्मृता कृष्णेन भारत ।
संपूज्य तां ततः कृष्णः स्नात्वा स्नानमधोक्षजः ॥
उदकं च ग्रहायाथ बिल्वं च हरिरव्ययः । [ 1275 ]
देवमावाहयामास रुद्रं सर्वसुरेश्वरम् ॥
ततः प्राप्तो महादेवः सोमः सप्रवरो विभुः ।
तस्थावुपरि बिल्वस्य तथा गङ्गोदकस्य च ॥
तं पारिजातकुसुमैरर्चयामास केशवः ।
तुष्टाव वाग्भिरीशेशं सर्वकर्तारमीश्वरम् ॥ [ 1280 ]
रुद्रो देवस्त्वं रुदनाद्रावणाच्च
रोरूयमाणो द्रावणाच्चादिदेवः ।
भक्तं भक्तानां वत्सलं वत्सलानां
कीर्त्या युङ्क्ष्वेशाद्य प्रभवाम्यन्तरेण ॥
ग्राम्यारण्यानां त्वं पतिस्त्वं पशूनां [ 1285 ]
ख्यातो देवः पशुपतिः सर्वकर्मा ।
नान्यस्त्वत्तः परमो देवदेव
जगत्पतिः सुरवीरारिहन्ता ॥
यस्मादीशो महतामीश्वराणां
भवानाद्यः प्रीतिदः प्राणदश्च । [ 1290 ]
तस्माद्धि त्वामीश्वरं प्राहुरीशं
सन्तो विद्वांसः सर्वशास्त्रार्थतज्ज्ञाः ॥
भूतं यस्माज्जगदत्यन्तधीर
त्वत्तोऽव्यक्तादक्षरादक्षरेश ।
तस्मात्त्वामाहुर्भव इत्येव भूतं [ 1295 ]
सर्वेश्वराणां महतामत्युदारम् ॥

---

33** रमे त्वां पश्यमानोऽहं बहुचित्रमृगायुतम् ।
[ $V_3$ -गणायुतम् , $Ds_1$ -नगा° ( for -मृगा° ). ]

— Before line 1271, $D_6$ ins वैशंपायन — ( L 1272 ) $V_{1\ 3}$ $B_{2\ 3}$ $D_{2-4\ 6}$ नमस्कृत्य ( for °त्वा ) — ( L 1273 ) $K_1$ ( *sup lin* as above ) स्मृत्वा पुण्येन भारत ( for ^b ). — (L 1274) $K_2$ [ए]तां ( for ता ) $D_2$ कृत्वा ( for कृष्ण ). $K_{2-4}$ $\tilde{N}_2$ $V_1$ $B_2$ Dn Ds $D_{1\ 3-5}$ $T_{1-3}$ G $M_4$ कृत्वा स्नानम् , $\tilde{N}_1$ $V_{2\ 3}$ $B_{1\ 3}$ $D_6$ स्नातस्तस्याम् ( for स्नात्वा स्नानम् ) $K_1$ यथाविधि ( for अधोक्षज ) $K_1$ ( marg ) कृत्वा स्नानं यथाविधि ( for ^b ) — ( L 1275 ) $K_{3\ 4}$ $D_{1-3\ 5}$ $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ गृहीत्वा ( for ग्रहाय ) $\tilde{N}_1$ $V_3$ $B_{1\ 3}$ [ई]शो ( for [अ]थ ) $K_2$ उदकं जग्राह ततो, $D_4$ °कं स गृहीत्वाथ , $D_6$ °कं च गृहीत्वेशो ( for ^a ) $\tilde{N}_2$ ईश्वर· ( for अव्यय ) — ( L 1276 ) $K_3$ $\tilde{N}_{1\ 2}$ $V_{2\ 3}$ B Dn Ds $D_6$ $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ [ई]श्वरेश्वरम् ( for सुरे° ) — ( L 1277 ) $K_2$ $D_5$ ससोम , $D_1$ सोम स· ( for सोम स- ) $K_3$ सोम सपार्षदो विभु ; $D_2$ सोमः सोमधरो विभु ( for ^b ) — ( L 1279 ) $D_1$ पारिजातस्य कुसुमै ( for ^a ) — ( L 1280 ) $\tilde{N}_2$ ईशानं ( for ईशेशं ) $\tilde{N}_1$ $V_3$ $B_{1\ 3}$ तुष्टाव च स्तवेनेशं ( $\tilde{N}_1$ °श ); $D_3$ °व वाग्भिरीशं सः, $D_6$ °व च तमीशानं ( for ^a ) — Before line 1281, some Mss ins कृष्ण उवाच — ( L 1281 ) $K_1$ त्वं देव , $K_{3\ 4}$ $\tilde{N}_1$ Dn Ds $D_{1\ 4}$ देव त्वं ( for देवस्त्वं ) $G_2$ रोदनाद् ( for रु° ). $K_2$ $\tilde{N}_2$ V $B_{2.3}$ $D_{2\ 5\ 6}$ रुद्रो देव त्वं रोदनाद्रावणाच्च ; $D_3$ रुद्रो देव त्वं चोदनाद्रावणाद्वा , $T_{1-3}$ $G_{3-5}$ $M_4$ रुद्रं देवं रोदनाद्रावणाच्च — ( L 1282 ) $V_2$ [इ]ति देवः ; $T_1$ $G_5$ [अ]तिदेवम् , $G_4$ $M_4$ [आ]दिदेवम् ( for °देवः ) $K_2$ $D_6$ रोरूयमाणाद्द्रावणाच्चापि दे( $D_6$ °तिदे )व , $D_1$ °माणो रवणाच्चातिदेवः — ( L 1283 ) $V_3$ सेवकाना ( for वत्सलानां ) $\tilde{N}_1$ भक्तं भक्तानां वत्सलोपमकीर्तिमान् , $D_1$ भक्तो भक्तानां वत्सलो वत्सलाना — ( L 1284 ) $\tilde{N}_1$ om कीर्त्या. $D_5$ प्रसाद्य ( for युङ्क्ष्वेशाद्य ) $V_1$ प्रभवाम्युत्तरेण , $D_5$ न प्रभवाम्यन्त° , $D_2$ प्रभवोऽस्यन्त° ( for प्रभवाम्यन्त° ) $K_2$ कीर्त्यायु·प्रदं संप्रसादयाम्यहम् , $K_3$ $D_4$ ( marg ) कीर्त्या जुष्टं त्वां प्रपेदे ( $D_4$ °पद्ये ) शरणम् , $D_3$ कीर्त्या युक्त साद्यकृन्मा तनुष्व , $T_{1-3}$ $G_{1\ 3\ 5}$ कीर्त्यायुर्दक्षेशाद्य प्रभाम( $T_3$ °वा )न्तरेण , $G_2$ कीर्त्या युक्ष्वेशाद्य प्रवरेणा° — ( L 1286 ) $V_3$ $B_3$ सर्वकर्मन् , $B_1$ °कर्मणि , $T_{2\ 3}$ $G_{1\ 4}$ °कामः , $G_2$ °कर्ता ( for °कर्मा ). — ( L 1287 ) $K_2$ $\tilde{N}_2$ $V_1$ $D_4$ $T_{2\ 3}$ $G_{1\ 4-5}$ $M_4$ -देवो ( for -देव ). — ( L 1288 ) $B_{2\ 3}$ $D_6$ जगत्यस्ति , $D_1$ °त्पते ( for °त्पति ) $D_4$ -वीराधि- , $T_2$ $G_{1\ 3}$ $M_4$ -संघाधि ( for °वीरादि- ) $B_1$ जगत्यस्ति सुरवीरहन्ता , $T_3$ $G_{4\ 5}$ बृहस्पति सुरसघारि° . — ( L. 1290 ) $\tilde{N}_1$ $V_{1\ 3}$ $B_{2.3}$ $D_6$ ईड्य ( for आद्य ). — ( L. 1291 ) $K_2$ विद्वन् ( for हि त्वाम् ) $T_2$ ईश ( for ईशं ). — L 1292 ) $D_3$ वेद्याः ( for विद्वांसः ) $D_4$ -शास्त्र ( for -शास्त्रार्थ- ) $V_1$ $D_2$ $G_2$ -तत्त्वज्ञा , $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ -तत्त्वम् ( for तज्ज्ञाः ). — ( L. 1293 ) $K_3$ भवत्यस्माज् ( for भूतं य° ) $V_2$ $B_2$ $D_6$ जगदाद्यन्त- , $B_3$ °दाद्यं तु ( for °दत्यन्त- ) $K_1$ ( *sup. lin* ) $B_1$ $D_4$ $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ भूतं यस्माज्जगदाद्यं तु वी( $K_1$ $B_1$ °द्यन्तवी )र. — ( L 1294 ) $T_2$ ब्यासाद् ( for ऽव्यक्तात् ). V $B_2$ अक्षरेण , $D_1$ $T_1$ $G_{2\ 3\ 5}$ °रेश ( for °रेश ) — ( L 1295 ) $K_2$ $V_1$ $D_{4\ 5}$ भवम् ( for भव ) $D_3$ भूत- ( for भूतं ) — ( L. 1296 ) $D_3$ -गणाना वै महतामप्युदारम् — ( L 1297 ) $K_4$ तस्माद्यज्ञैर् , $\tilde{N}_2$ $D_{1\ 3,4}$ यस्माज्जनैर् , $V_3$ °ज्जिनैर् ; $T_1$

यस्माज्जितैरभिषिक्तोऽसि सर्वै-
र्देवासुरैः सर्वभूतैश्च देव ।
महेश्वरं विश्वकर्माणमाहु-
स्त्वां वै सर्वे तेन देवाधिदेव ॥ [ 1300 ]
पूज्यो देवैः पूज्यसे नित्यदा वै
शश्वच्छ्रेयःकाङ्क्षिभिर्वरदामेयवीर्य ।
तस्माद्विख्यातो भगवान्देवदेवः
सतामिष्टः सर्वभूतात्मभावी ॥
भूमिस्त्रयाणां देव यस्मात्प्रतिष्ठा [ 1305 ]
मुने लोकानां भावनोऽमेयकीर्तिः ।
त्र्यम्बकेति प्रथमं तेन नाम
तवाप्रमेयेति त्रिदशेशनाथ ॥
शर्वः शत्रूणां शासनादप्रमेय-
स्तथा भूयः शासनाच्चेश्वरेश । [ 1310 ]

सर्वव्यापित्वाच्छंकरत्वाच्च सद्भिः
शब्दस्येशानः श्रीकरार्कोग्र्यतेजाः ॥
संसक्तानां नित्यदा यत्करोषि
शर्म भ्रातृव्यान्यद्व्यनैषीः समस्तान् ।
तस्माद्देवः शंकरोऽस्यप्रमेयः [ 1315 ]
सद्भिर्धर्मज्ञैः कथ्यसे सर्वनाथ ॥
दत्तः प्रहारः कुलिशेन पूर्वं
तवेशान सुरराज्ञातिवीर्य ।
कण्ठे नैल्यं तेन ते यत्प्रवृत्तं
तस्मात्ख्यातस्त्व नीलकण्ठेति कल्यः ॥ [1320]
यल्लिङ्गाङ्कं यच्च लोके भगाङ्कं
सर्वं सोम त्वं स्थावरं जङ्गमं च ।
प्राहुर्विप्रास्त्वां गुणिनं तत्त्वविज्ञा-
स्तथा ध्येयामम्बिकां भूतधात्रीम् ॥

---

तस्माज्जितैर् ( for य° ) $K_2$ देवैर् ( for सर्वैर् ) —( L 1298 ) $K_4$ वेदै सुरै ( for देवासुरै ) — ( L 1299 ) $D_{2\ 3}$ विश्वेश्वर ( for महे° ) $B_2$ $Ds_2$ सर्व- ( for विश्व- ) — ( L 1300 ) $D_2$ सर्व- ( for तेन ) Ds त्वां वै सर्वे सर्वदेवातिदेव, $D_3$ त्वां वै सर्वे देवा देवाधिदेवम्. — ( L 1301 ) $D_3$ पूज्यैर् ( for पूज्यो ) $V_3$ $D_1$ देव. ( for देवै ) $K_2$ नित्यदायान्, $Ñ_1$ $D_5$ °दा य , $D_4$ दानवैश्च ( for नित्यदा वै ) $T_2$ पूज्यो नित्यं पूजितो नित्यदानै ; $T_3$ $G_{3-5}$ $M_4$ पूज्यो नित्यं पूज्यते नित्यदासैः — ( L 1302 ) $K_2$ $V_3$ $B_1$ $D_2$ वरदोऽमेयवीर्यं ; $K_3$ °दानेऽतिवीर्यः , $D_{1\ 4}$ °दामोघवीर्यं ( for °दामेयवीर्य ) $T_{1\ 3}$ $G_{3-5}$ $M_4$ भूतै श्रेय काङ्क्षितामेयवीर्यै , $T_2$ भूते श्रेय काङ्क्षतामेयविद्य. — ( L 1305 ) $K_3$ $Ñ_1$ $B_2$ Dn Ds $T_{1\ 3}$ $G_{1,3\ 4}$ भूमि- ( for भूमिस् ) $D_1$ यस्मादेतत्, $D_4$ यस्मात्तत्, $G_2$ तस्मात् ( for य° ) $K_{1\ 4}$ भूमित्र( $K_4$ °मिं त्र )याणां देव यस्मादेतत्प्रतिष्ठा , $K_2$ भूमिस्त्वया विधृता देव यस्मात् — ( L 1306 ) $K_{1\ 4}$ $D_1$ मुनि- , $Ñ_1$ Dn Ds पुनर् ( for मुने ) $V_3$ -वीर्यं, $T_1$ कीर्तें ( for -कीर्ति ) $K_2$ प्रतिष्ठा मुनेर्भावनामेयकीर्तिः , $D_2$ मुनिर्लोकानां भावनोऽमेयकीर्ति. , $D_3$ $G_2$ पुनर्लोकानां भावनो ( $G_3$ भवतो )मेय° , $T_{2\ 3}$ $G_4$ मुने देवानां भवतोऽमेयकीर्तिः ( $G_4$ °र्तें ), $G_{1\ 5}$ $M_4$ मुने लोकानां भवतोऽमेयकीर्तें. — ( L 1307 ) $D_5$ देव ( for तेन ) — ( L 1308 ) $K_3$ [इ]ति सुपर्व- , $D_4$ [इ]ति त्रिदश- , $T_{2\ 3}$ $G_{1\ 4}$ त्रिदशाधि- ( for त्रिदशेश- ) $V_2$ तवाप्रमेयं त्रिदशेशाथ. — ( L 1309 ) $K_{1-3}$ $B_3$ $D_{1\ 3-5}$ $T_{2\ 3}$ $G_4$ सर्व- ( for शर्व ) $V_{2\ 3}$ $D_6$ अप्रमेय ( for °यस् ). $K_4$ सर्वशत्रूणां सादनादप्रमेयस् — $T_2$ om (hapl) lines 1310–1315 — ( L 1310 ) $D_3$ शंसनाच् ( for शा° ) $Ñ_2$ $D_4$ त्वं सुरेश. , $B_2$ Dn Ds $D_6$ $G_3$ चेश्वरेण , $D_1$ च स्वरश्च , $T_1$ $G_{1\ 3\ 5}$ $M_4$ चेश्वरोऽसि , $G_4$ हीश्वरोऽसि ( for चेश्वरेश ) — ( L 1311 ) $T_{1\ 3}$ $G_{1\ 3-5}$ $M_4$ सर्वव्यापित्वाद्व्यापकश्चासि नाना — ( L 1312 ) $K_3$ $V_3$ सर्वस्येशान ( for शब्दस्येशान ) $D_3$ शंकरश्चार्क- ( for श्रीकरार्काग्र्य- ) — ( L 1313 ) $K_{1\ 2}$ $V_3$ $D_3$ सभक्तानां , $V_2$ $T_{1\ 3}$ $G_{2-5}$ $M_4$ शंभुर्भक्तानां ; $B_{1\ 2}$ $D_{5\ 5}$ $G_2$ शं भक्तानां , $B_3$ स भ° , $G_1$ शंभुर्भूतानां ( for ससक्तानां ) $D_3$ य करोति ( for यत्करोषि ) — ( L. 1314 ) $K_3$ अपूर्वं , $Ñ_1$ च सर्वं , $Ñ_2$ $D_1$ असर्वं ( for समस्तान् ) $D_3$ समं भ्रातृव्यान्युध्यसे वीर शर्वं. , $T_1$ $G_3$ शमं ( $G_3$ °र्मं ) भ्रातृव्यानप्यवध्यानवैषि , $T_3$ $G_{1\ 4\ 5}$ $M_4$ शर्मं भ्रातृव्यानप्यवध्याननैषी — ( L 1315 ) $K_{1\ 4}$ $V_1$ $B_2$ $D_4$ $T_{1\ 3}$ $G_{3\ 5}$ इति ( for ऽसि ) — ( L 1316 ) $D_1$ सर्वैर् ( for सद्भिर् ) $K_{2\ 3}$ $Ñ_1$ $B_1$ Dn Ds $D_2$ $T_{1-3}$ $G_{1\ 3}$ $M_4$ सर्वनाथ. , $V_3$ $G_4$ धर्मनाथ ( $G_4$ °थ ) ( for सर्वनाथ ) — ( L 1319 ) $K_1$ नीलं ( for नैल्यं ) $K_{1\ 4}$ प्रदत्तं ( for प्रवृत्तं ) — ( L 1320 ) $Ñ_1$ काय , $V_3$ काव्ये , $B_1$ ( marg ) $_3$ $D_6$ काव्य , $B_2$ काव्यः ; $T_2$ काय ( for कल्य. ) $T_{1\ 3}$ $G_{1\ 3-5}$ $M_4$ तस्मात्ख्यातस्त्वं नीलकण्ठोऽतिकाय — ( L 1322 ) $K_{1\ 4}$ सोमः सर्वं त्वं ; $K_3$ $D_1$ सोम सर्वस्त्वं , $Ñ_2$ V $B_3$ Ds $D_{2\ 3\ 5}$ सर्वं सोमस्त्वं ; $Dn_1$ सर्वं सोमस्त्वं , $D_4$ सोमस्त्वं तत् ; $T_{1-3}$ $G_{4\ 5}$ $M_4$ सर्वस्योजस्त्वं , $T_2$ सर्वस्वोजस्त्वं ; $G_3$ सर्वस्येशस्त्व ( for सर्वं सोम त्वं ) — ( L 1323 ) $K_2$ $T_{2\ 3}$ गुणिनस् ( for °नं ) $G_5$ प्राहुर्विप्रा मुक्तिदं त्वां त्वभिज्ञास् — ( L 1324 ) $K_2$ ज्ञेयाम् ;

वेदैर्गीता सा हि तत्त्वं प्रसूता [ 1325 ]  
यज्ञो दीक्षाणां योगिनां चातिरूपः ।  
नात्यद्भुतं त्वत्समं देव भूतं  
भूतं भव्यं भव देवाथ नास्ति ॥  
अहं ब्रह्मा कपिलोऽथाप्यनन्तः  
पुत्राः सर्वे ब्रह्मणश्चातिवीरा. । [ 1330 ]  
त्वत्तः सर्वे देवदेव प्रसूता  
एवं सर्वेशः कारणात्मा त्वमीड्यः ॥  
इति संस्तूयमानस्तु भगवान्गोवृषध्वजः ।  
प्रसार्य दक्षिणं हस्तं नारायणमथाब्रवीत् ॥  
मनीषितानामर्थानां प्राप्तिस्तेऽस्तु सुरोत्तम । [ 1335 ]  
पारिजातं च हर्तासि मा भूत्ते मनसो व्यथा ॥  
यथा मैनाकमाश्रित्य तपस्त्वमकरोः प्रभो ।  
तथा मम वरं कृष्ण संस्मृत्य स्थैर्यमाप्नुहि ॥  
अवध्यस्त्वमजेयश्च मत्तः शूरतरस्तथा ।  
भवितासीत्यवोचं यत्तत्तथा न तदन्यथा ॥ [ 1340 ]  
यश्च स्तवेन मां भक्त्या स्तोष्यतेऽमरसत्तम ।  
त्वया कृतेन धर्मज्ञ धर्मभाक्स भविष्यति ॥  
समरे च जयं विष्णो प्राप्य पूजां तथोत्तमाम् ।  
बिल्वोदकेश्वरो नाम भविताहमिहानघ ।  
देशे त्वया स्थापितो वै देवसिद्धोपयाचनः ॥ [ 1345 ]  
इहस्थोपोषितो विद्वान्भक्तिमान्मम केशव ।

---

V3 B2 3 D6 [अ]व्ययम्, T1–3 G1 3 4 M4 ह्युमाम् ( for ध्येयाम् ) G5 तथा ह्युमां कमला लोकधात्रीम् — ( L 1325 ) K3 B1 D1 G2 तत्त्वप्रसूता, K4 तत्त्वत्प्रसादात्; D2 त्वं तत्प्रसूता, D3 त्वत्त. प्र° ( for तत्त्वं प्र° ). Ñ1 वेदो वेदाङ्गै सहिता सुप्रभूता, Ñ2 D4 6 देवै( D4 वेदै )र्गीता ( D6 °ता ) सा हि त्वत्त प्रसूता, V1. 3 B2. 3 T2 3 G1 3 4 M4 वेदा वेदाङ्गैः सहितास्त्वत्प्र°, T1 वेदैर्गीता या गिरेस्त्वत्प्र° — G5 om ( hapl ) lines 1326–1331 — ( L 1326 ) B1 [अ]भिरूप, T3 [अ]तिरूपम्, G1 [अ]नुरूपम्, G3 [अ]नुरूप ( for [अ]तिरूप ) Ñ1 2 V1 यज्ञो दीक्षा दक्षिणा चातिरूप ( V1 °णाश्चातिरूपाः ), V2 3 B2 3 यज्ञो दीक्षा दक्षिणा चाभिरूप, D3 यज्ञो दीक्षा योगिना चानिरूप्य, G2 यज्ञो दीक्षा दक्षिणा चाभिरूपा, T1–3 G1 3 4 M4 यज्ञे दीक्षा दक्षिणा चैव भूता — ( L 1327 ) D1–3 5 6 T1–3 G1–3 नान्यद्भूतं, G2 नास्त्यद्भुतं ( for नात्य° ) K1 Ñ2 तत्सम ( for त्वत्सम ) Ñ1 D6 -देव, V3 -भूत· ( for भूतं ) V1 नान्यद्भूतं त्वत्सम देवदेव — K1 om line 1328 — ( L 1328 ) D5 भव्यं भवं ( for भूतं भव्यं ) Ñ2 भवतो नाथ ( for भव देवाथ ) K4 भूतं भव्य न च देवास्ति नाथ, V3 भूतं स्तव्यं भव देवाथ नास्ति, D2 भूतं भवित्रं च देवाथ नास्ति, D3 भूतं भवद्भावि नान्यत्त्वदस्ति, D4 भूतं भव्यं देवताना सुरेश; T1–3 G1 3–5 भव त्वत्तो देवदेवोऽथ नास्ति; G2 भव्यं भवं देवतानां त्वमेव — ( L 1329 ) G3 M4 आद्यो ( for अहं ) D5 कश्यपो ( for कपिलो ) K2 चाप्यनन्त·, Ñ1 योऽप्य°, Ñ2 ऽथानन्तश्च, D4 ऽप्यनन्त. ( for ऽथाप्य° ) T1–3 G1 2 4 आद्यो ब्रह्मा कपिलो वाप्यनन्त· — (1330 ) K2 ब्राह्मणाश् ( for ब्रह्मणश् ) D2 3 6 -वीर्या, G2 वीर ( for वीरा· ) — ( L 1332 ) K2 3 T1–3 G3 M4 त्वं; G4 स त्वं ( for एवं ) B3 कारणानां ( for °णात्मा ) V1 आद्यः; G4 ईशः ( for ईड्य. ). D4 एवं सर्वेषां कारणात्मा त्वमीश·, D5 एव सर्वेषा कारणं नाथ नान्य — Before line 1333, D6 ins वैशंपायन — ( L 1333 ) B3 D6 स ( for तु ). K1 V1 2 D2–5 वृषभ- ( for गोवृष- ) — ( L 1334 ) T1–3 G1 3–5 M4 वासुदेवम् ( for नारायणम् ) K2 नरो नारायणोऽब्रवीत्, Ñ1 नारायणमिदमब्रवीत् ( hypermetric ), V3 B2 3 गोविन्दमिदम° ( for $^{b}$ ) — Before line 1335, G2 ins शिव — ( L 1335 ) D6 समीलितानामर्थाना ( for $^{a}$ ) K1 3 Ñ1 2 V1 B2 Dn Ds D1–4 T1 3 G2 3 M4 प्राप्तिस्ते सुरसत्तम ( for $^{b}$ ). — ( L 1336 ) T2 3 G1 5 त्वं ( for [अ]सि ) T1 G3 पारिजातस्य हर्ता त्वं ( for $^{a}$ ) D5 मानसी; T1–3 G1 3–5 मनसि ( for °सो ) — ( L 1337 ) K4 पुरा, Ñ2 V2 B D6 यदा ( for यथा ) T1–3 G1 4 5 मामकम्, G3 मां कामम् ( for मैनाकम् ) — ( L 1338 ) K1 3 4 तथ्यं मम; Ñ1 V2 3 B D6 तदा दत्तं ( for तथा मम ) K3 [ऐ]श्वर्यम् ( for स्थैर्यम् ) K2 संस्मर्य स्थैर्यमात्मनि, B2 स्मृत्वा धैर्यमवाप्नुहि, D3 संस्मृत्वा धैर्यमा° ( for $^{b}$ ) — After line 1338, D4 ins

34** नीत्वोदकेन दिव्येन स्नपयिष्यसि केशव ।

— ( L 1339 ) T2 त्वं ( for च ) V3 शूरतमस्, D3 च परतस् ( for शूरतरस् ) — ( L 1340 ) D3 भवितासि त्वमित्येवं T1 2 G3–5 M4 °ता सत्यवादी त्वं ( T1 2 G3 °वादित्व ); T3 G1 °तासीत्यवादीस्त्वं ( for $^{a}$ ) D4 तत्तथैव न चान्यथा ( for $^{b}$ ) — ( L 1341 ) Ñ1 कश्चित् ( for भक्त्या ) V3 B1 3 D6 य संस्तवेन मां कश्चित् ( for $^{a}$ ) — ( L. 1342 ) K4 कृष्णेन ( for कृतेन ) V2 तत्त्वज्ञ ( for धर्मज्ञ ) — ( L 1343 ) T1 G3 विजयं, T2 3 G5 M4 विजयी ( for च जयं ). B1 ( marg as above ) कृष्ण ( for विष्णो ) K3 कृत्वा ( for प्राप्य ) V1 अनुत्तमाम् ( for तथो° ) B2 प्राप्स्यसि त्वं तथोत्तमम् ( for $^{b}$ ) — ( L 1345 ) K1 3 Dn Ds D1 2 देवे·

त्रिरात्रमीप्सिताल्लोकान्गमिष्यति जनार्दन ॥
अवन्ध्या नाम देशेऽस्मिन्गङ्गा चैव भविष्यति ।
गङ्गास्नानसमं स्नानं मन्त्रतो भविता तथा ॥
षट्पुरं नाम नगरं दानवानां जनार्दन । [ 1350 ]
अत्रान्तर्धरणीदेशे तच्चाक्रम्य महाबलाः ॥
एते दैत्या दुरात्मानो जगतो देवकण्टकाः ।
छन्ना वसन्ति गोविन्द सानावस्य महागिरेः ।
अवध्या देवदेवानां वरेण ब्रह्मणोऽनघ ।
मानुषान्तरितस्तस्मात्त्वमेवाज्ञहि केशव ॥ [ 1355 ]
एवमुक्त्वा महादेवस्तत्रैवान्तरधीयत ।
परिष्वज्य महात्मानं वासुदेवं जनाधिप ॥
ततो याते महादेवे प्रभातायां नराधिप ।
तस्यां निशायां गोविन्दो भूयः पर्वतमब्रवीत् ॥
तत्राधः पर्वतश्रेष्ठ निवसन्ति महासुराः ॥ [ 1360 ]
त्वया रुद्धो हि तन्मार्गो जगतो हितकाम्यया ॥
निर्गमिष्यन्ति ते नैव मया रुद्धा महाबलाः ।
द्वारे निरुद्धे तत्रैव विनङ्क्ष्यन्ति ममाज्ञया ॥
त्वयि संनिहितश्चाहं भविष्यामि महागिरे ।
अधिष्ठाय महाघोरान्निवत्स्यामि च पर्वत ॥ [ 1365 ]
आरुह्य मूर्ध्नि मद्रूपं दृष्ट्वा पर्वतसत्तम ।
गोसहस्रप्रदानस्य फलं प्राप्स्यन्ति शाश्वतम् ॥
त्वत्तोऽश्मभिश्च प्रतिमां कारयित्वेह भक्तितः ।
शुश्रूषिष्यन्ति ये नित्यं मम यास्यन्ति ते गतिम् ॥
इति तं पर्वतं कृष्णो वरदोऽनुगृहीतवान् । [ 1370 ]
तदाप्रभृति देवेशस्तत्र सनिहितोऽच्युतः ॥
पाषाणैः प्रतिमां तत्र कारयित्वा च कौरव ।

---

श्वर त्वया गीतो , K2 देवेश स्थापितो देव , K4 बिल्वेश्वरस्तथा गीतो ( for $^a$ ) K2 त्वया ( for देव- ) V3 B2 D6 -सत्योप- ( for -सिद्धोप- ) T1-3 G1 3-5 M4 याचित·, G2 -सेवित ( far -याचन· ) K4 देवीसिद्धोपयाचितः ( for $^b$ ) — ( L. 1346 ) V3 इहोष्य ( for इहस्थ ) D2 योऽर्च्यते ( for [उ]पोषितो ) — ( L 1347 ) D5 त्रिरात्राद् ( for °त्रम् ) K2 Ñ2 कामान् ( for लोकान् ) Ñ2 आगमिष्यति ( hypermetric ) ( for गमि° ) — ( L 1348 ) V1 B1 ( marg ) आवर्ना, D2 5 अचिन्त्या , T1 G2 4 आवर्ते, G5 M4 आवर्तो ( for अवन्ध्या ) T2 3 G1 आवर्तनामा देशेऽस्मिन् ( for $^a$ ) — ( L 1349 ) K2 संततं , G5 M4 मात्रतो ( for मन्त्रतो ) D5 मन्त्रस्नानं भविष्यति ( for $^b$ ) — ( L 1351 ) K4 वारुणे ( for धरणी- ) K1 3 4 Dn D1 T1 G3 पराक्रम्य , Ñ2 तत्रा° ; D5 तं चा° ( for तच्चा° ) Ñ1 तच्चाक्रम महाबल ( for $^b$ ) — ( L 1352 ) Ñ1 B1 D6 हिंस्त्रा ( for दैत्या ) K1 B2 T1-3 G1 3-5 M4 महात्मानो ( for दुरा° ) V3 B3 एते हिंस्रा महात्मानो ( for $^a$ ). V1 लोक ( for देव- ) T1-3 G1 3-5 M4 जगतामपि कण्टकाः ( for $^b$ ) — ( L 1353 ) M4 वसन्तोऽस्मिन् ( for सानावस्य ) D5 महात्मनः ( for °गिरे· ). T1-3 G1 4-5 वसन्तोऽस्मिन्महागिरौ ( for $^b$ ) — G4 om lines 1354$^b$-1357$^a$. — ( L 1355 ) D5 मानुषान्तर्हितस्तस्मात् ( for $^a$ ) T1 G3 सत्वर , T2, 3 G1 5 M4 सत्वरम् ( for केशव ) — Before line 1356, G2 ins वैशंपायनः — ( L 1356 ) K3 महाबाहुस् , Ñ1 °बाहो ( for °देवम् ) — ( L 1357 ) T1-3 G1 3 5 प्रतिपूज्य ( for परिष्वज्य ) — D6 om line 1358 — ( L 1358 ) D1 ततो यातो महादेवं ( for $^a$ ) V2 D4 जनाधिप ( for नरा° ) — ( L. 1359 ) D2 3 रजन्यां ( for निशायां ). Ñ2 स्वयं ( for भूय ) — After line 1360, K1 ( marg ) B2 Dn G2 ins

35** अवध्या देवदेवानां वरेण ब्रह्मण पुरा ।

[ B2 सर्वं ( for देव- ) ]

— K2-4 D1 om. line 1361 — ( L 1361 ) K1 तेन रुद्धो हि भगवान् , Ñ1 Dn D2-6 G2 तेन ( G2 तैर्हि ) रुद्धो भवानत्र , Ñ2 V B Ds ते निरुद्धा मया चात्र ( for $^a$ ) — ( L 1363 ) K1 ऽभिरुद्धे ( for नि° ) K2 विनश्यन्ति ( for विनङ्क्ष्यन्ति ) Ñ2 V1 महासुरा ( for ममाज्ञया ) — ( L 1365 ) K3 महारूपं , K4 D4 ( marg. ) 6 T3 °घोरं , Ñ2 D2 °योगं ; V3 B2 3 [अ]सुरान्घोरान् , D3 महाशृङ्गं , D4 °शूरान् , D5 °शूर ( for °घोरान् ) K2 D4 5 G2 पर्वते ( for °त ) — ( L. 1366 ) T2, 3 G1 4 तद्रूपं ( for म° ) Ñ1 B1 आरोक्ष्यन्त्यूर्ध्वबाहुश्च , D5 नर आरुह्य मद्रूपं , G5 आरुह्य मूर्तिमद्रूपं ( for $^a$ ). Ñ1 B1 3 यस्त्वा ( for दृष्ट्वा ) B3 यस्त्वां पर्वतसत्तमम् ( for $^b$ ) — ( L 1367 ) D4 गोप्रदानसहस्रस्य ( for $^a$ ). K Ñ2 V2 3 B Dn Ds D1 6 T1 G1-3 5 M4 प्राप्स्यति ; V1 Ds2 °सि ( for °न्ति ) — ( L 1368 ) K2 त्वत्तोऽस्माकं ; D6 त्वदश्मभिश्च ( for त्वत्तोऽश्म° ) D3 शक्तित ( for भ° ). — ( L 1369 ) K2 Ñ2 Ds D2-4 शुश्रूषयन्ति ; T1 G3 5 M4 °षन्ति च ( for °षिष्यन्ति ) V1 सततं ( for ये नित्यं ). T2 3 G1, 4 शुश्रूषन्ति च ते नित्यं ( for $^a$ ) K4 गिरिम् ( for गतिम् ) T1-3 G1 3-5 M4 आर्या प्राप्स्यन्ति ते गतिम् ( for $^b$ ). — ( L 1371 ) Ñ1 तद्देव ( for देवेशस् ) Ñ1 नित्यं ( for तत्र ) — ( L 1372 ) K2 पाषाणे ( for °णैः ) K3 4 Ñ2 V2 B2 Dn Ds D1, 2 T1 G2 5 M4 तात , D3 तां तु ; D6

शुश्रूषन्ति कृतात्मानो विष्णुलोकाभिकाङ्क्षिणः ॥

Colophon.

वैशंपायन उवाच ।

ततो रथवरं कृष्णः समारुह्य महामनाः ।

बिल्वोदकेश्वरं देवं नमस्कृत्य ययौ नृप ॥ [ 1375 ]

महेन्द्रमाह्वयामास रथस्थो मधुसूदनः ।

सत्कृतं पुष्कराभ्याशे सर्वैर्देवगणैः सह ॥

ततः शक्रो जयन्तोऽथ हरिमिर्युक्तमुत्तमम् ।

आरुरोह रथं देवः सर्वकामप्रदः सताम् ॥

तयो रथस्थयोर्युद्धमभवत्कुरुनन्दन । [ 1380 ]

देवयोर्दैवयोगेन पारिजातकृते तदा ॥

ततोऽहनद्रणे विष्णुर्बाणैः शत्रुबलार्दनः ।

सैन्यानि देवराजस्य बाणजालैरजिह्मगैः ॥

उपेन्द्रं न महेन्द्रोऽथ नैव विष्णुः सुरेश्वरम् ।

ताडयामासतुर्वीरौ शस्त्रैः शक्तावुभौ प्रभो ॥ [ 1385 ]

एकैकमश्वं दशभिर्महेन्द्रस्य जनार्दनः ।

विव्याध बाणैर्निशितैरश्वयुक्तैर्जनेश्वर ॥

सैन्यान्यपि च देवेन्द्रः शरैरमरसत्तमः ।

छादयामास राजेन्द्र घोरैरस्त्राभिमन्त्रितैः ॥

स च बाणसहस्रैश्च कृष्णो गजमवाकिरत् । [ 1390 ]

गरुडं च महातेजा बलभिद्धरिवाहनः ॥

भूमिष्ठाभ्यां रथाभ्यां तौ ततदहः शत्रुदारणौ ।

---

कृत्वा ( for तत्र ) T1–3 G1 4. 5 M4 च केशवम्, G2 तु कौरव, G3 हि भक्तित ( for च कौरव ). — ( L 1373 ) G4 महात्मानो ( for कृता° ) B1 शुश्रूषयन्ति ये नित्यं ( for ^a ) K2 -लोक च ( for -लोकाभि- ). Ñ1 V3 B1 3 D6 -काङ्क्ष्या ( for -काङ्क्षिण· )

Colophon — *Mention of the Epic* K3 Ñ2 B3 Ds2 T3 — *Mention of Khila* · K3 Ñ1 2 V1 3 B Ds D1 — *Adhy name* K Ñ1 2 V B Dn Ds D2 4–6 पारिजातहरणम्, D1 पारिजातहरणे ईशस्तवः, D3 पारिजातहरणे बिल्वोदकेश्वरमाहात्म्यम्, T1 G3 4 पारिजातहरणे बिल्वोदकेश्वरप्रतिष्ठा, T2 3 G1 M4 बिल्वोदकेश्वरप्रतिष्ठा ( T2 °ष्ठानम् ), G2 पारिजातहरणे बिल्वेश्वरप्रादुर्भाव. — *Adhy no* K3 ( marg. ) 128, V1 G2 134, V2 133, V3 132, Dn Ds2 D4 129, D1 126, D3 139, T1 G3 4 M4 143, T2 G1 145, T3 155, G5 146

( L 1374 ) B1 D6 स्वमारुह्य ( for स° ) Ñ2 Ds T3 महाबल, D3 °बली ( for °मना ) — ( L 1375 ) Bom Poona eds G(ed) नृप ( for नृप ) — After line 1376, K1 4 D1 read line 1383 repeating it in its proper place — ( L 1377 ) K1 3 4 D6 यत्कृत, Ñ1 संस्कृतं, Ñ2 संस्थितः, V2 3 B1 3 D5 6 संस्थितं, T2 सततं; G2 सुकृतं, G5 सत्कृत ( for °तं ) K2 B3 Ds D4 5 G2 सर्व-; T2 समैर् ( for सर्वैर् ) — ( L 1378 ) Ñ1 V3 B3 D6 ऽपि संयत्तो; V1 जयन्तश्च; V2 ( *sup lin* as above ) ऽपि जयन्तो; B1 2 ऽथ संयुक्तो, D4 जयन्तोऽपि ( for °न्तोऽथ ) — ( L 1379 ) G4 -प्रदं ( for -प्रद· ) — ( L 1380 ) K3–4 Ñ1 2 V2 3 B3 D6 G2 ततो ( for तयो ) T1–3 G1 3–5 M4 तयोरथ पुनर्युद्धम् ( for ^a ) — ( L 1382 ) D1 विष्णुं ( for विष्णुर् ) Ñ2 ततर्द देवराजस्य; V3 B2 2 ततर्द तरसा विष्णुर् ( for ^a ) K1–3 D4 शक्र-; D1 शक्रो ( for शत्रु ) B3 D3 बलार्दनम् ( for °र्दन ) K4 D2 बाणैः शक्रं जना( D2 बला )र्दनम्. — ( L 1383 ) Ñ1 -राजस्तु ( for -राजस्य ). — ( L 1384 ) K1 4 उपेन्द्रेण; K3 D3 उपेन्द्रं च, Ñ1 न देवेन्द्रं, G2 उपेन्द्र स ( for °न्द्रं न ) T1–3 G1 3 5 M4 उपेन्द्रं तं ( T1 तु ) महेन्द्रोऽपि ( for ^a ) D3 निघ्नन्, T1 M4 न च, G3 4 स च ( for नैव ) — ( L 1385 ) K Ñ1. 2 V1. 2 B2 3 Dn Ds D1 2 4 6 G2 अपि ( for उभौ ) V3 B3 शरै शक्तावपि प्रभो, D3 शस्त्रै. शक्राशनिप्रभै, D5 शस्त्रै. शक्तावपि प्रभू ( for ^b ) — ( L 1386 ) K2 अत्र; D1 4 अस्त्रं ( for अश्वं ) D2 3 एकैकमस्त्रं बहुभिर् ( for ^a ) — V3 om line 1387–1393 — ( L 1387 ) K Ñ1 2 V1 Dn Ds D1–5 G3 विशिखैर्, T2 3 G4 दशभिर् ( for निशितैश् ). V2 B D6 विव्याध विशिखैस्तीक्ष्णैर् ( for ^a ) K1 ( *sup lin.* as above ) अश्वयुक्तैर्, B3 अस्त्रयुक्तं, D6 °मुक्तैर् ( for °युक्तैर् ) K1 D1 4 जनेश्वर.; K2 जनार्दन, K4 नरेश्वर, G5 जनाधिप ( for जनेश्वर ) — ( L 1388 ) K2 D3 तथोपेन्द्र., D2 च देवेश ( for च देवेन्द्र ) Ñ1 B1 3 D5 शैल्याद्यानपि देवेन्द्र· ; V1 B2 सैन्यादीनपि दे°, Dn सैन्याद्यानपि दे° ( for ^a ) K2 D5 -सत्तम, B3 °मै· ( for °म ) — For line 1388, T1–3 G1. 3–5 M4 subst

36** सैन्यं च ह्यर्दयामास शरैर्यादवसत्तमः ।

— ( L 1389 ) Ñ1 D1 देवेन्द्रो ( for राजेन्द्र ) T1–3 G1 3–5 M4 अचिरेणैव राजेन्द्र ( for ^a ) K1 ( *sup, lin.* as above ). 4 शरैर् ( for घोरैर् ) — ( L 1390 ) B2 3 बली ( for स च ). D2 काष्ण्यं रथम् ( for कृष्णो गजम् ) — ( L 1391 ) Ñ1 गरुडश् ( for °डं ) K2 महाबाहुर् ( for °तेजा ) K1 D1 बलिभिर् ( for बलभिद् ) K3 T1 2 G3 हरिवाहनम् ( for °हन ) — ( L 1392 ) B2 T1 G3 M4 भूयिष्ठाभ्यां लता-( M4 रथा )भ्यां तु ( B2 तौ ) K3 दारुणै·, D1 5 -दारणैः ( for °णौ ) — ( L. 1393 ) K1 महावीर्यौ ( for °त्मानौ ). — ( L,

युयुधाते महात्मानौ नारायणसुराधिपौ ॥
चकम्पे वसुधा कृत्स्ना नौर्जलस्थेव भारत ।
दिशां दाहेन दिग्देशाः संवृताश्च समन्ततः ॥ [ 1395 ]
चेलुर्गिरिवराश्चैव पेतुश्च शतशो द्रुमाः ।
पेतुश्च धरणीपृष्ठे मर्त्या धर्मगुणान्विताः ॥
निर्घाताः शतशश्चान्ये पेतुस्तत्र नराधिप ।
ऊहुश्च सरितः सर्वाः प्रतिस्रोतो विशां पते ॥
विष्वग्वाता ववुश्चैव पेतुरुल्काश्च निष्प्रभाः । [ 1400 ]
मुहुर्मुहुर्भूतसंघा रथनादेन मोहिताः ॥
प्रजज्वाल जले चैव वह्निर्जनपदेश्वर ।
युयुधुश्च ग्रहैः सार्धं ग्रहा नभसि सर्वतः ॥
ज्योतींषि शतशः पेतुः स्वर्गाच्च धरणीतले ।
दिशां गजाः प्रकुपिता नागाश्च धरणीतले ॥ [ 1405 ]
गर्दभारुणसंस्थानैश्छिन्नाभ्रैश्चावृतं नभः ।
विनदद्भिर्महारावैरुल्काशोणितवर्षिभिः ॥
न भूर्न द्यौर्न गगनं नरेन्द्रवृषभाभवन् ।
स्वस्थानि सुरवीरौ तौ दृष्ट्वा युद्धगतौ तदा ॥
जेपुर्मुनिगणा मन्त्राञ्जगतो हितकाम्यया । [ 1410 ]
ब्राह्मणाश्च महात्मानो व्यतिष्ठंस्तेषु सत्वरा ॥
ततो ब्रह्मा महातेजा कश्यपं वाक्यमब्रवीत् ।
गच्छ वध्वा सहादित्या पुत्रौ वारय सुव्रत ॥
स तथेति तदा देवमुक्त्वा पद्मभवं मुनिः ।
जगाम रथमास्थाय तस्थौ नरवरान्तिके ॥ [ 1415 ]
स्थितं तु कश्यपं दृष्ट्वा सहादित्या तदान्तरा ।
उभौ रथाभ्यां धरणीमवतीर्णौ महाबलौ ॥
न्यस्तशस्त्रौ च तौ वीरौ ववन्दतुररिंदमौ ।

---

1395 ) $T_{2\ 3}$ $G_{1\ 4\ 5}$ $M_4$ दिशो दाहेन तद्देशा ( for $^{a}$ ) $K_1$ संवृत्य, $K_{2\ 3}$ $D_4$ °त्ताश्, $\tilde{N}_2$ सधूमाश्, $V_2$ $B_3$ $D_2$ संभृताश्, $G_2$ संवृक्ताश् ( for °ताश् ) — ( L 1396 ) $K_2$ अभिहताश् ( for गिरिवराश् ) $\tilde{N}_2$ $D_S$ निपेतु ( for पेतुश्च ) — ( L 1398 ) $\tilde{N}_1$ $V_3$ $B_3$ $D_6$ [ए]व ( for [अ]न्ये ) $K_3$ तेन ( for तत्र ) — ( L 1399 ) $D_3$ श्रेष्ठा· ( for सर्वा ) — ( L 1400 ) $D_3$ तिर्यग्वाता ( for विष्व° ) $\tilde{N}_1$ $V_3$ $B_2$ $D_S$ $D_6$ च सप्रभा· ; $B_3$ सहस्रश., $D_4$ [अ]शनिप्रभा· ( for च निष्प्रभा ) — ( L 1401 ) $B_3$ $D_6$ -गणा ( for -संघा ) $K_3$ $\tilde{N}_2$ $V_1$ $B_2$ $D_S$ $D_{4\ 5}$ मुमुहुर्भूतसघाश्च, $V_1$ स्वर्गं मुहुर्भूतगणा ( for $^{a}$ ) $B_1$ रण- ( for रथ ) — $D_4$ om ( hapl ) lines 1402–1403 — ( L. 1403 ) $D_3$ विग्रहं ( for युयुधुश् ) $D_3$ ग्रहा· कुर्वन्ति सर्वश ( for $^{b}$ ) — ( L 1404 ) $D_2$ च तदा ( for शतश ) $\tilde{N}_2$ उल्काश् ( for स्वर्गाच् ) $\tilde{N}_1$ $V_3$ B $D_S$ $D_{2\ 3\ 6}$ $T_{2\ 3}$ $G_{1\ 3-5}$ $M_4$ -तलम् ( for -तले ) — $D_{3\ 4}$ $T_{2\ 3}$ $G_{1\ 4}$ om ( hapl ) line 1405 — ( L 1405 ) $K_4$ दिग्गजाश्च ( for दिशां गजा ) $K_2$ $\tilde{N}_2$ V B $D_S$ $D_{5\ 6}$ प्र( $B_3$ $D_6$ सं )क्षुभिता ; $D_2$ प्रचलिता ( for प्रकुपिता ) $K_2$ पतिता ( for नागाश्च ) — ( L 1406 ) $V_2$ $D_3$ $G_2$ -संकाशैश्, $D_2$ -संस्थाभैश् ( for °नैश् ) $D_3$ चित्राभ्रैश्च, $T_{1-3}$ $G_{1\ 3-6}$ $M_4$ मेघैश्चैव ( for छिन्नाभ्रैश्च ) $K_3$ वृतं नभ, $D_4$ समन्तत ( for [आ]वृतं नभ ) — ( L. 1407 ) $V_2$ निनदद्भिर् ( for वि° ) $K_2$ $B_2$ $D_{S1}$ $D_{2\ 3}$ महानादान्, $K_3$ $\tilde{N}_1$ $D_n$ $D_{1\ 4\ 5}$ $T_3$ $G_1$ °रावान्, $K_4$ $G_2$ °राज, $\tilde{N}_2$ $B_1$ $D_{S2}$ $M_4$ °नादा, $T_1$ °रावास् ( for °रावैर् ) $K_{1\ 4}$ $D_n$ $D_S$ $D_{1\ 2\ 5}$ रूक्ष-, $V_1$ उल्का:, $T_{1\ 3}$ $G_{1,\ 3}$ रक्त ( for उल्का ) $\tilde{N}_2$ वृष्टिभि· ( for -वर्षिभि ) $B_1$ रूक्षशोणितवृष्टिभि. ( for $^{b}$ ). — ( L. 1408 ) $K_1$ द्यौर्न भूर् ( for भूर्न द्यौर् ) $T_{2\ 3}$ $G_1$ भगणो ( $T_2$ °णं ) ( for गगनं ) $K_{1\ 2}$ $V_{1,\ 3}$ $B_{2\ 3}$ $D_{1-6}$ $G_2$ [अ]भवत् ( for °वन् ) $\tilde{N}_2$ नरेद्रवृषभावन, $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ नरे( $G_1$ महे )न्द्र प्रबभौ तदा ( for $^{b}$ ) — ( L 1409 ) $V_{1\ 3}$ $B_3$ $T_1$ $G_{3-5}$ स्वस्थाने ( for °नि ) $D_1$ स्वस्थानानि च वीरौ तु, $D_2$ °ने च सुवीरौ तु, $D_3$ स्वस्थौ नृसुरवीरौ तु, $T_3$ $G_{1\ 4}$ स्वस्थाने क्रूरवीरौ तु ( for $^{a}$ ) — ( L. 1410 ) $V_2$ $D_6$ मन्त्रं ( for मन्त्रान् ) $K_4$ जगतां ( for °तो ) — ( L 1411 ) $K_{1\ 3\ 4}$ $\tilde{N}_1$ $V_2$ $D_n$ $D_S$ $D_1$ ह्यतिष्ठंस् ( for व्य° ) $V_3$ $B_3$ $D_6$ तेन ( for तेषु ) $K_2$ $D_{3-5}$ ह्यतिष्ठञ्जप्य( $D_3$ °ञ्जाप्य-; $D_4$ °ञ्जप )तत्पराः, $\tilde{N}_2$ द्युतिमन्तोऽथ सत्वरा., $V_1$ जातिवन्तोऽथ स°, $D_2$ $G_2$ व्य( $G_2$ ह्य )तिष्ठञ्जपतत्परा, $T_{1\ 2}$ $G_{3-5}$ ह्यतिष्ठंस्तेऽथ ( $T_2$ °स्तेन ) सत्वरा ; $T_3$ ह्यतिष्ठन्ह्यथ स° ( for $^{b}$ ) — ( L 1412 ) $T_{1\ 3}$ $G_{1\ 3-5}$ [अ]मरै साकं, $T_2$ हरै साक ( for महातेजा ) — ( L 1413 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ गच्छस्व सहसादित्या ( for $^{a}$ ) — ( L 1414 ) $M_4$ transp स and तथेति $D_4$ चैवम् ( for देवम् ) $K_{1,\ 2,\ 4}$ $D_{1\ 2}$ पद्मभुवं ( for °भवं ) — ( L 1415 ) $V_3$ $B_3$ $D_6$ आरुह्य ( for आस्थाय ) $K_2$ देव- ; $G_{1-3}$ $M_4$ गिरि- ( for नर- ) $\tilde{N}_2$ -वरान्तरे ( for °न्तिके ) $D_{2\ 3}$ तस्थौ मुनिवरोऽन्तिके ; $D_6$ तस्थौ वररथान्तिके ( for $^{b}$ ) — ( L 1416 ) $K_2$ $D_5$ $G_2$ तथाम्बरे, $D_6$ $M_4$ तदान्तरे, $T_{1-3}$ $G_{1\ 3-5}$ तदन्तरे ( for तदान्तरा ). — ( L 1417 ) $\tilde{N}_1$ $V_3$ $B_3$ $D_6$ अवनीम् ( for धरणीम् ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ कृष्णशक्रौ तु धरणीम् ( for $^{a}$ ) — ( L 1418 ) $T_1$ -शस्त्रवरौ, $G_3$ -शस्त्रौ वरौ, $M_4$ -शस्त्रधरौ ( for -शस्त्रौ च तौ ) — ( L 1419 ) $K_4$ भूतज्ञौ ( for तत्त्वज्ञौ ) $V_2$ पितरौ सर्वधर्मज्ञौ ( for $^{a}$ ) — ( L 1420 ) $K_2$ $D_5$ जग्राह ; $K_3$ $\tilde{N}_2$ $V_3$ B $D_{S2}$ $D_{2-4,\ 6}$ $T_{1-3}$

पितरौ धर्मतत्त्वज्ञौ सर्वभूतहिते रतौ ॥
उभौ प्रहाय' हस्ताभ्यामदितिस्त्वब्रवीद्वच. । [ 1420 ]
असोदराविवैवं किमन्योन्यं हन्तुमिच्छथ ॥
स्वल्पमर्थं पुरस्कृत्य प्रवृत्तमतिदारुणम् ।
सदृशं नेति पश्यामि सर्वथा मम पुत्रयोः ॥
श्रोतव्यं यदि मातुश्च पितुश्चैव प्रजापतेः ।
न्यस्तशस्त्रौ स्थितौ भूत्वा कुरुतं वचनं मम ॥ [ 1425 ]
तथेत्युक्त्वा च तौ देवौ स्नातुकामौ महाबलौ ।
गङ्गां जग्मतुरेवाथ प्रजल्पन्तौ परस्परम् ॥

शक्र उवाच ।

त्वं प्रभुर्लोककृत्कृष्ण राज्येऽहं स्थापितस्त्वया ।
स्थापयित्वा कथं नाम पुनर्मामवमन्यसे ॥
भ्रातृत्वमुपगम्यैवं ज्येष्ठत्वं प्रतिपूज्य च । [ 1430 ]
कथं कमलपत्राक्ष निर्वाणं कर्तुमर्हसि ॥
स्नातौ तु जाह्नवीतोये पुनरभ्यागतौ नृप ।
यत्रादितिः कश्यपश्च महात्मानौ दृढव्रतौ ॥
प्रियसंगमनं नाम तं देशं मुनयोऽवदन् ।
यत्र तौ संगतौ चोभौ पितृभ्यां कमलेक्षणौ ॥ [ 1435 ]
ततः शक्रस्य कौरव्य प्राप्ता वासाजिरं तदा ।
यत्र देवगणाः सर्वे समेता धर्मचारिणः ॥
ततो ययुर्विमानैस्तु देवाः सर्वे त्रिविष्टपम् ।
ऋद्ध्या परमया युक्तास्तेषामेवानुरूपया ॥
कश्यपश्चादितिश्चैव तथा शक्रजनार्दनौ । [ 1440 ]
विमानमेकमारुह्य गता राजंस्त्रिविष्टपम् ॥
ते शक्रसदनं प्राप्ता रम्यं सर्वगुणान्वितम् ।
ऊषुरेकत्र कौरव्य मुदिता धर्मचारिणः ॥
शची तु कश्यपं पत्न्या सहितं धर्मवत्सला ।
उपाचरन्महात्मानं सर्वभूतहिते रता ॥ [ 1445 ]
ततस्तस्यां प्रभातायां रजन्यामब्रवीद्धरिम् ।
अदितिर्धर्मतत्त्वज्ञा सर्वभूतहितंकरम् ॥

---

G $M_4$ गृहीत्वा, $V_2$ प्रगृह्य ( for प्रहाय ) Ñ$_1$ तत' ( for वचः ) — ( L 1421 ) $T_1$ कथम्, $T_{2\,3}$ $G_{1\,3-5}$ $M_4$ च किम् ( for [ए]वं किम् ) $K_4$ असोदरवदेवं किम् ( for $^a$ ) $K_2$ $V_3$ $D_3$ $T_{1-3}$ $G_{1\,3-5}$ $M_4$ इच्छत , $K_3$ Ñ$_1$ $V_{1\,2}$ B Dn Ds $D_{2\,4\,5}$ $G_2$ °थ ( for °थ ) — ( L 1422 ) Ñ$_1$ $V_{1\,3}$ अल्पमर्थं, $V_2$ अल्पार्थं च ( for स्वल्पमर्थं ) — ( L 1423 ) $D_3$ [ए]व ( for [इ]ति ) — ( L 1425 ) $K_1$ Ñ$_1$ स्थिरो , Ñ$_2$ च तौ , $D_4$ धृतौ ( for स्थितौ ) $G_2$ कुरुध्वं ( for °तं ) — Before line 1426, $D_6$ ins वैशंपायन — ( L 1426 ) $K_4$ Ñ$_2$ Ds $D_{2\,3}$ च तौ वीरौ, $T_{1-3}$ $G_{1\,3-5}$ $M_4$ स्थितौ वीरौ ( for च तौ देवौ ) $V_2$ स्थातुकामौ ; $D_6$ ( marg as above ) $T_1$ $G_{3\,5}$ $M_4$ भ्रातरौ तौ, $T_{2\,3}$ $G_{1\,4}$ तदा तौ तु ( for स्नातुकामौ ) — $T_{1-3}$ $G_{1\,3-5}$ $M_4$ om. lines 1427–1433. — ( L 1427 ) $D_6$ ( marg as above ) पद्भ्यां ( for गङ्गां ) $K_4$ संबाध ( for एवाथ ) $V_3$ $B_3$ $D_6$ कथयन्तौ ( for प्रजल्पन्तौ ) — $D_{4\,6}$ इन्द्र ( for शक्र ) — ( L 1428 ) $V_3$ $B_3$ $D_{5,6}$ त्वं प्रभु' कृष्ण लोकस्य ( for $^a$ ) — ( L 1430 ) $K_1$ $D_1$ [ए]ष , $K_2$ Ñ$_1$ $D_{3-5}$ [ई]श ( for [ए]वं ) Ñ$_2$ भ्रातृत्वमवगम्यैव ( for $^a$ ) $K_2$ व्यतियुज्य, $K_3$ Dn चाप्यपोह्य, $B_2$ प्रतिगृह्य , $D_{3\,5}$ विनियुज्य , $D_4$ च व्यपोह्य ( for प्रतिपूज्य ). — ( L 1431 ) $K_{1-3}$ Ñ$_2$ $B_2$ Dn Ds $D_{1-4}$ इच्छसि ( for अर्हसि ) — ( L 1432 ) $V_3$ $B_3$ $D_6$ स्नात्वा तौ ( for स्नातौ तु ) $D_4$ -तीरे ( for -तोये ) — ( L. 1433 ) $K_2$ माता ( for यत्र ). — ( L 1434 ) Ñ$_2$ संगमजं ( for °नं ) $Dn_1$ ते ( for तं ). $D_2$ जगु , $D_3$ विदु' , $T_{2\,3}$ $G_{1\,3-5}$ $M_4$ गता ( for ऽवदन् ). — ( L 1435 ) $T_{1-3}$ $G_{1\,3-5}$ $M_4$ वीरौ ( for चोभौ ) — Before line 1436, $D_6$ ins वैशंपायन — ( L 1436 ) $D_6$ प्राप्तौ ( for प्राप्ता ) $T_1$ सर्वेऽचिरं , $T_{2-3}$ $G_{1\,4}$ $M_4$ सर्वे जितास् , $G_{3-5}$ सर्वेऽजिरं ( for वासा° ) $K_{1\,2\,4}$ Ñ$_2$ $V_2$ $B_1$ Dn Ds $D_{1-5}$ $G_2$ दत्त्वा चैवा( Ñ$_2$ $V_2$ Dn वाचा )भयं तदा , $K_3$ $D_5$ ददौ वाचाभय तदा , $V_1$ गत्वा वासाजिरं तथा ; $D_4$ दत्त्वोवाचाभयं तदा ( for $^b$ ) — ( L 1437 ) $D_3$ ब्रह्म- ( for धर्म- ) — ( L 1438 ) $V_1$ जग्मु' , $G_5$ सर्वे ( for ययुर् ) $G_5$ ययुर्देवास् ( for देवा सर्वे ). — ( L. 1440 ) $K_2$ शक्रश्चैव जनार्दन' ( for $^b$ ). — ( L 1441 ) $B_3$ गजराज ( for गता राजंस् ) — ( L. 1442 ) $V_3$ $B_3$ प्राप्य ( for प्राप्ता ) $K_4$ तैः शक्रसदनं प्राप्तं , Dn ते शक्रसदनप्राप्ता ( for $^a$ ) — ( L 1443 ) $K_2$ चैकत्र , $T_3$ $G_{4\,5}$ एते तु ( for एकत्र ) $G_1$ ऊचुरेते तु कौरव्य ( for $^a$ ) $T_{2\,3}$ $G_{1\,4}$ मुदा ते ( for मुदिता ) — ( L 1144 ) Ñ$_2$ धर्मवर्त्मना , $T_{1-3}$ $G_{1\,3-5}$ $M_4$ °वत्सलम् ( for °वत्सला ). — ( L 1445 ) $D_2$ उवाच तं , $G_{1\,4\,5}$ $M_4$ उपचारं ; $G_2$ उपास च ( for °चरन् ) $K_{1\,3\,4}$ Ñ$_1$ $V_{1\,3}$ Dn $D_{1-3}$ $G_{1\,4}$ -हिते रतम् , $K_2$ -हितेप्सिता ( for -हिते रता ) — $D_3$ om line 1446–1447 — ( L 1446 ) $K_2$ $D_{4\,5}$ तत्र ( for ततस् ). — ( L 1447 ) $K_{2\,4}$ -तत्वज्ञं ( for °ज्ञा ) $K_{1\,2}$ $D_{4\,5}$ -हिते रता , $K_4$ Dn $G_4$ -हिते रतम् , $B_1$ Ds -हितं वच. , $B_3$ $D_{1\,2}$ $G_5$ -हितंकरी ( for °करम् ) $V_1$ सर्वभूताभयंकरम् ( for $^b$ ). — ( L. 1448 ) $T_{1-3}$ $G_{1\,3-5}$ $M_4$ हरस्व ( for नयस्व ).

उपेन्द्र द्वारकां गच्छ पारिजातं नयस्व च ।
वध्वा संप्रापयस्वेमं पुण्यकं हृदयेप्सितम् ॥
पुण्यके सत्यया प्राप्ते पुनरेष त्वया तरुः । [ 1450 ]
नन्दने पुरुषश्रेष्ठ स्थाप्यः स्थाने यथोचिते ॥
एवमस्त्विति कृष्णेन देवमाता यशस्विनी ।
उक्ता धर्मगुणैर्युक्ता यादवेन महात्मना ॥
ततोऽभिवाद्य पितरं मातरं च जनार्दनः ।
महेन्द्रं सह शच्या च प्रतस्थे द्वारकां प्रति ॥ [ 1455 ]
ददौ कृष्णाय पौलोमी नियोगात्कुरुनन्दन ।
सर्वासामेव कृष्णस्य भार्याणां धर्मचारिणी ॥
दिव्यानां सर्वरत्नानां वाससां च मनस्विनी ।
नानारागविरक्तानां सदैवारजसामपि ॥
भार्याणां च सहस्राणि यानि षोडश माधवे । [ 1460 ]
प्रतिगृह्य महातेजाः प्रययौ द्वारकां प्रति ॥
संपूज्यमानो द्युतिमान्खेचरैः पुण्यकर्मभिः ।
ससात्यकिः सपुत्रश्च प्राप्तो रैवतकं गिरिम् ॥
स तत्र स्थापयित्वा च पारिजातं वरद्रुमम् ॥
सात्यकिं प्रेषयामास द्वारकां द्वारमालिनीम् ॥ [ 1465 ]

कृष्ण उवाच ।

पारिजातमिहानीतं महेन्द्रसदनान्मया ।
निवेदय महाबाहो भैमानां भैमवर्धन ॥
अद्य द्वारवतीं चैव पारिजातं महाद्रुमम् ।
प्रवेशयिष्ये नगरे शोभा प्रक्रियतां शुभा ॥
इत्युक्तः सत्यको गत्वा तथोक्त्वा पुनरागतः । [ 1470 ]
कुमारैर्नागरैः सार्धं साम्बप्रभृतिभिः प्रभो ॥
ततोऽग्रतः पारिजातमारोप्य गरुडे तदा ।
प्रद्युम्नो द्वारकां रम्यां विवेश रथिनां वरः ॥
शैब्यादिहययुक्तेन रथेनानुययौ हरिः ।
तस्यानु रथमुख्येन सत्यकः साम्ब एव च ॥ [ 1475 ]
ये त्वन्ये नृप वार्ष्णेया यानैर्बहुविधैस्तथा ।
ययुः प्रहृष्टास्तत्कर्म पूजयन्तो महात्मनः ॥
सत्यकाद्विस्तरं श्रुत्वा यादवा नागरास्तथा ।
विस्मयं परमं जग्मुरप्रमेयस्य कर्मणः ॥
तं दिव्यकुसुमं वृक्षं दृष्ट्वानर्तनिवासिनः । [ 1480 ]

---

— (L 1449) K$_1$ Ñ$_1$ D$_3$ T$_1$ G$_3$ [ई]श, Ñ$_2$ V$_2$ M$_4$ [ए]नं (for [इ]मं) K$_3$ वध्वास्त्व प्रापयस्वेश, B$_1$ वध्वा संपादयस्वेमं, T$_2$ $_3$ G$_4$ वध्वा. समर्पयस्वैनं (for $^a$). K$_1$ Ñ$_1$ V$_2$ Dn D$_3$ G$_1$ $_2$ पुण्यकं हृदये स्थितम् (for $^b$) — (L. 1451) D$_3$ स्थाप्य स्थाने यथोचितम् (for $^b$) — (L. 1453) T$_3$ युक्ता, G$_2$ उक्तं (for उक्ता). K Ñ$_1$ V$_3$ B$_2$ $_3$ Dn D$_3$ D$_1$ $_{2,4}$ $_5$ G$_2$ नारदेन, Ñ$_2$ वरदेन; V$_1$ $_2$ B$_1$ D$_6$ नरदेव, D$_3$ मानदेन (for यादवेन) — (L 1455) D$_1$ महेन्द्रं सहसापृच्छ्य (for $^a$) — T$_{1-3}$ G$_{1,3-5}$ M$_4$ om (hapl.) lines 1456–1461 — (L 1456) D$_3$ नियोगं (for °गात्). — (L 1458) Ñ$_2$ om (hapl) lines 1458$^b$–1459$^a$ V$_{2,3}$ B$_1$ D$_2$ यशस्विनी (for मन°) — (L 1459) V$_3$ B$_1$ (marg) $_3$ D$_6$ -विचित्राणां (for -विरक्तानां). — (L. 1460) Ñ$_1$ नियोगानां (for भार्याणां च) K$_4$ Ñ$_1$ $_2$ V$_1$ B$_{1,3}$ D$_6$ G$_2$ माधव. (for माधवे) — After line 1460, D$_4$ $_5$ ins

37** तानि संभावयेथास्त्वं वस्त्रैराभरणैस्तथा ।

— Lines 1461–1515 are lost on a missing folio in Dn$_1$ — (L 1462) Ñ$_1$ द्युवरै, V$_3$ B D$_6$ द्युमरै (for द्युतिमान्) Ñ$_1$ D$_6$ B$_3$ सुकर्मा (for खेचरै) — (L 1464) T$_{1-3}$ G$_{1,3-5}$ तत्र संस्थाप्य च हरि (for $^a$). V$_2$ महाद्रुमम् (for वर°)

— G$_2$ om (hapl) lines 1465–1468 — (L 1465) K$_{1,4}$ Ñ$_1$ $_2$ B$_2$ $_3$ Dn$_2$ D$_4$ $_5$ -शालिनीम् (for -मा°) — T$_{2,3}$ T$_1$ G$_3$ $_5$ M$_4$ भगवान् (for कृष्ण) — (L 1466) Ñ$_1$ B$_3$ -भवनान् (for -सद°) V$_3$ माहेन्द्रभवनान्मया (for $^b$). — (L 1467) K$_1$ $_4$ भयानां भीतिवर्धन; K$_2$ $_3$ भीमानां भीमदर्शन (K$_3$ °वर्धन), M$_4$ हैमाङ्गं हेमवर्धनम् (for $^b$). — (L 1468) K$_4$ V$_1$ B$_1$ Dn$_2$ D$_3$ D$_5$ अहं द्रुमम्; Ñ$_1$ V$_3$ B$_3$ D$_6$ T$_{1-3}$ G$_1$ $_{3-5}$ M$_4$ वरद्रुमम् (for महा°). — (L. 1469) K$_1$ Ñ$_2$ शुभाम्; G$_2$ पुरे (for शुभा) T$_{1-3}$ G$_1$ $_{3-5}$ शोभा प्रतिविधीयताम् (for $^b$) — (L 1470) K$_2$ V$_3$ D$_{1,5}$ सात्यको, D$_2$ $_3$ T$_{1-3}$ G$_1$ $_{3-5}$ M$_4$ सात्यकिर् (for सत्यको). — (L 1471) Ñ$_1$ B$_1$ $_3$ अपरै (for नागरै) D$_6$ कुकुरैरपरैः सार्ध (for $^a$) — (L 1472) K$_1$ $_2$ $_4$ D$_3$ D$_{1-4}$ गरुडं (for °डे) K$_3$ ऽनघ (for तदा) T$_{1-3}$ G$_1$ $_{3-5}$ M$_4$ आरोप्य गरुडोपरि (for $^b$) — (L. 1474) T$_{1-3}$ G$_1$ $_{3-5}$ M$_4$ स दारुकप्रयुक्तेन (for $^a$) — (L 1475) T$_2$ -युक्तेन (for -मुख्येन) V$_3$ तस्याथ हयमुख्येन (for $^a$) Ds$_2$ सत्य साम्बश्च एव च (for $^b$) — (L 1476) Ñ$_1$ अप्यन्ये, B$_3$ D$_6$ अन्वयुर्, D$_1$ ते त्वन्ये; D$_5$ ये चान्ये, T$_1$ एते वै (for ये त्वन्ये). V$_3$ अन्वयुर्नृप राष्ट्रेया (for $^a$). K$_2$ जनैर् (for यानैर्) T$_{1-3}$ G$_{1,3-5}$ M$_4$ यानैश्च रथिनां वरा (for $^b$). — (L. 1478) K$_3$ माग-

राजन्न ततृपुर्हृष्टाः पश्यमाना महोदयम् ॥
तमद्भुतमचिन्त्यं च मदकेलिकिलाण्डजम् ।
वृक्षोत्तमं पश्यता वै वृद्धानामगमज्जरा ॥
ये त्वन्धचक्षुषः सर्वे तेऽभवन्दिव्यचक्षुषः ।
विरोगा रोगिणश्चासन्घ्रात्वा गन्धं वनस्पतेः ॥ [ 1485 ]
लपन्तः कोकिलाः श्वेताः श्रुत्वानर्तनिवासिनः ।
बभूवुर्हृष्टमनसो ववन्दुश्च जनार्दनम् ॥
नानाविधानि तूर्याणि गेयानि मधुराणि च ।
शुश्रुवुस्तस्य वृक्षस्य नातिदूरगता नराः ॥
यो यं संकल्पयामास गन्धं हृद्यं नरस्तदा । [ 1490 ]
स तदैव तमाजघ्रे पारिजातसमुद्भवम् ॥
ततः प्रविश्य रम्यां तु द्वारकां यदुनन्दनः ।
वसुदेवं महात्मानं ददृशे देवकीं तथा ॥
कुकुराधिपतिं चैव बलं भ्रातरमेव च ।
वृद्धांश्च यादवानां ये मानार्हानमरोपमान् ॥ [ 1495 ]
विसर्ज्य तान्वै भगवाननादिनिधनोऽच्युतः ।
संपूज्य च यथान्यायं स्वमेव भवनं गतः ॥
स सत्यभामया वासं विवेश मधुसूदनः ।
पारिजातं तरुश्रेष्ठं प्रहाय गदपूर्वजः ॥
सा देवी पूजयामास प्रहृष्टा वासवानुजम् । [ 1500 ]
प्रतिजग्राह तं चापि पारिजातं महाद्रुमम् ॥
मनीषितेन स तरुरल्पो भवति भारत ।
महांश्च वासुदेवस्य तदद्भुतमिवाभवत् ॥
कदाचिद्द्वारकां सर्वां प्रच्छादयति भारत ।
कदाचिद्धस्तधार्यस्तु भवत्यङ्गुष्ठसंनिभः ॥ [ 1505 ]
ननन्द सत्या कौरव्य देवी प्राप्य मनोरथम् ।

---

धास् ( for नागरास् ) — ( L 1479 ) $D_{2\ 3}$ चक्रुर् ( for जग्मुर् ) $K_1$ $\tilde{N}_1$ $V_3$ B $Dn_2$ $D_6$ $T_{1\ 3}$ $G_{1\ 3}$ $M_4$ कर्मणा ( for कर्मणः ) — ( L 1480 ) $K_2$ देशनि-, $K_3$ नृत्यन्ति, $\tilde{N}_2$ $V_{2\ 3}$ B Ds $D_{1\ 2\ 6}$ $T_{2\ 3}$ $G_{1\ 4}$ मर्त्यनि-, $G_2$ नगर-; $G_5$ $M_4$ कर्मनि- ( for [आ]नर्तनि ) $K_4$ ननृतुस्ते निवासिन. ( for $^{b}$ ) — ( L 1481 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ तत्र पुनर् ( for न ततृपुर् ) $\tilde{N}_2$ राजन्नतिप्रहृष्टास्ते, $D_2$ राजञ्जातप्रहर्षास्ते, $D_3$ राजन्प्रहृष्टा ननृतु ( for $^{a}$ ) $V_1$ महोत्सवम् ( for °दयम् ) — ( L 1482 ) $K_{1\ 2\ 4}$ $\tilde{N}_1$ $V_{2\ 3}$ B Ds $D_{1\ 2\ 4-6}$ $T_{1-3}$ $G_{1\ 2\ 4\ 5}$ $M_4$ तदद्भुतम् ( for तम° ) $D_2$ -कलागतम्, $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ -विवर्धनम् ( for -किलाण्डजम् ) — ( L 1483 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ वृक्षेश्वरं ( for वृक्षोत्तमं ) $K_1$ अनशज्, $T_2$ नागमज् ( for अ° ) — ( L 1484 ) $\tilde{N}_1$ $V_3$ $B_3$ येऽन्धा स, $D_3$ ये मर्त्य ( for ये त्वन्ध- ) Ds ये च त्वचक्षुष सर्वे, $D_6$ येऽन्धा सचक्षुका सर्वे ( for $^{a}$ ) $\tilde{N}_1$ $V_3$ $B_3$ $D_6$ संबभूवु क्षणादिव ( for $^{b}$ ) — ( L. 1485 ) $D_3$ सर्वे ( for चासन् ) $D_5$ च तस्य ते ( for वनस्पते ) — ( L 1486 ) $K_2$ $D_4$ लपन्त्य, $D_2$ वल्गन्त्य ( for लपन्त ) $K_{1,\ 3}$ $V_1$ $B_2$ $Dn_2$ $D_1$ $T_1$ G $M_4$ लपन्त ( $K_1$ $D_1$ जपन्तः; $K_3$ नदन्तः, $V_1$ लपत ) कोकिलाञ्श्वेतान्; $K_4$ जपन्त कोकिलांश्चैतान्, $D_3$ जाताश्च कोकिलाश्चैता ( for $^{a}$ ) $K_{2\ 3}$ $\tilde{N}_2$ V B Ds $D_{1\ 2\ 6}$ $M_4$ मर्त्य- ( for [आ]नर्त- ) $K_{1\ 4}$ श्रुत्वा मर्त्तभवासिन ; $T_{2\ 3}$ $G_{1\ 5}$ दृष्ट्वा मर्त्यनिवा° ( for $^{b}$ ) — ( L 1487 ) $T_{1\ 2}$ $G_{1,\ 3-5}$ भूत्वा प्र ( for बभूवुर् ) $K_3$ बभूवुश्, $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ जजल्पुश् ( for ववन्दुश् ) — ( L 1488 ) $\tilde{N}_1$ $D_6$ दिव्यानि; $\tilde{N}_2$ $V_3$ $B_3$ वाद्यानि, $G_4$ कार्याणि ( for तू° ). $D_2$ वादित्राणि पराणि च ( for $^{b}$ ) — ( L 1489 ) $B_2$ $T_{1,\ 2}$ $G_{1\ 3,\ 5}$ $M_4$ [अ]तिदूरं ( for °दूर- ). — ( L. 1490 ) $G_2$ जनस् ( for नरस् ) — ( L 1491 ) $T_1$ तमेव ( for तदैव ) $\tilde{N}_1$ $V_2$ तदाजघ्रे, $\tilde{N}_2$ $B_2$ $D_{4\ 5}$ ( marg ) समा°, $B_1$ समाजघ्रौ; Ds तमाजिघ्रे, $D_5$ ( also ) समाजह्रे ( for तमाजघ्रे ) $V_3$ $D_6$ $T_{2\ 3}$ $G_{3-5}$ $M_4$ स तमेव समाजघ्रे ( $V_3$ तदाजघ्रौ, $T_2$ सदाजघ्रे ) ( for $^{a}$ ) — $D_2$ om lines 1492–1494 — ( L. 1492 ) $T_{2\ 3}$ $G_{1\ 3-5}$ $M_4$ ता ( for तु ) $D_6$ ( marg as above ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ द्वारकां मधुसूदन ( for $^{b}$ ) — ( L 1493 ) Ds ववन्दे; $D_3$ मातरं ( for ददृशे ) — ( L 1494 ) $\tilde{N}_1$ कुकुराधिप च ब्रह्मात्मा, $T_1$ $G_3$ $M_4$ कुरुराजपतिं चैव ( for $^{a}$ ) — ( L 1495 ) $K_{1-3}$ $B_1$ $Dn_2$ $Ds_1$ $D_5$ वृद्धाश् ( for वृद्धांश् ) V $B_3$ $D_6$ यादवानन्यान्, $T_{1\ 3}$ $G_{1\ 3-5}$ $M_4$ °वान्सर्वान्, $T_2$ °वांश्चैव ( for °वानां ये ) $\tilde{N}_2$ $D_2$ वृद्धाश्च यादवानां च ( for $^{a}$ ) $D_3$ दाशार्हान्; $D_4$ महा° ( for माना° ). — ( L. 1496 ) $K_{1-3}$ $\tilde{N}_2$ $V_{2\ 3}$ $B_{1\ 2}$ $Dn_2$ Ds $D_{1-3\ 6}$ $G_2$ $M_4$ -विसृज्य ; $T_{1-3}$ $G_{1,\ 3-5}$ प्रणम्य ( for विसर्ज्य ) $\tilde{N}_1$ विसर्जितस्तैर्भगवान् ( for $^{a}$ ) $V_1$ ऽव्यय. ( for ऽच्युत ) $D_3$ रत्नादिभिरथोऽच्युत ( for $^{b}$ ) — ( L 1497 ) $\tilde{N}_1$ पूजितश् ( for संपूज्य ). $D_3$ $T_{2\ 3}$ यथान्याय्यं ( for °न्याय ) — ( L 1498 ) $K_4$ साकं ( for वासं ) $K_1$ गृहं च सत्यभामाया, $V_3$ स सत्यभामाआवासं ( for $^{a}$ ) — ( L 1499 ) $K_{1\ 4}$ आहार्य, $K_{2\ 3}$ $D_{3-6}$ $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ गृहीत्वा ( for प्रहाय ) — ( L 1502 ) $K_{1,\ 4}$ बालो; $K_2$ अन्यो, $M_4$ कल्पो ( for अल्पो ) — ( L 1503 ) K $D_{1\ 4\ 5}$ सुमहान्, $\tilde{N}_2$ V B Ds $D_{2,\ 6}$ $T_{2\ 3}$ $G_{1\ 2\ 5}$ $M_4$ महत्त्वाद्; $D_3$ महान्हि ( for महांश्च ) $K_{1\ 2\ 4}$ $\tilde{N}_{1\ 2}$ $V_{2,\ 3}$ $Dn_2$ Ds $D_{1\ 2,\ 4-6}$ $T_{1-3}$ $G_{2-4}$ $M_4$ अभून्महत्, $K_3$ अभून्महान् ( for इवाभवत् ) — ( L 1504 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ राजन् ( for सर्वां ) $T_{2,\ 3}$ $G_{1,\ 4,\ 5}$ $M_4$ सं- ( for प्र- ). — ( L.

पुण्यकार्थं तु संभारान्संभर्तुमुपचक्रमे ॥
यानि द्रव्याणि कौरव्य जम्बुद्वीपे तु कानिचित् ।
योग्यानि तानि कृष्णेन संहृतानि महात्मना ॥
मुनिं तदा संस्मृतवान्स नारदं [ 1510 ]
जनार्दनः सर्वगुणान्वितं वशी ।
प्रतिग्रहार्थं व्रतकस्य सत्यया
यथोपदिष्टस्य पुरंदरानुजः ॥

Colophon.

वैशंपायन उवाच ।

अथ कृष्णस्य कौरव्य ध्यातमात्रस्तपोधनः ।
आजगाम मुनिश्रेष्ठो नारदो वदतां वर ॥ [ 1515 ]
तं पूजयित्वा विधिवद्वासुदेवो विशां पते ।
प्रतिग्रहार्थं विधिवच्छ्रीमानभिन्यमन्त्रयत् ॥
ततः काले च संप्राप्ते स्नातं देवो महामुनिम् ।
संपूज्य माल्यैर्गन्धैश्च भोजयामास भारत ॥
सार्वकामिकमन्नाद्यं सर्वभूतकृदव्ययः । [ 1520 ]
सत्यया प्रियया सार्धं प्रहृष्टेनान्तरात्मना ॥
पुष्पदामावसज्याथ कण्ठे कृष्णस्य भाविनी ।
बबन्ध कृष्णं सुभगा पारिजाते वनस्पतौ ॥
अद्भिर्ददौ नारदाय ततोऽनुज्ञाप्य केशवम् ॥
देवी धेनुसहस्रं च काञ्चनस्य च पर्वतम् ॥ [ 1525 ]
हिरण्यरूप्यमिश्रस्य मणिरत्नप्रभस्य च ।
तिलमिश्रस्य च तथा धान्यैरन्यैर्युतस्य च ॥
प्रतिगृह्य तु तत्सर्वं नारदो मुनिसत्तमः ।
प्रहृष्टो वदतां श्रेष्ठो भुक्त्वा केशवमब्रवीत् ॥
भोः केशवः मदीयस्त्वमद्भिर्दत्तोऽसि सत्यया । [ 1530 ]

---

1505) $K_{1\ 2\ 4}$ $\tilde{N}_{1\ 2}$ V B $Dn_2$ Ds $D_{1-3\ 6}$ हस्त( $K_4$ वस्त्र )हार्यस् ( for °धार्यस् ) $T_{1\ 3}$ $G_{1\ 3-5}$ $M_4$ कदाचिद्र-स्वभावेन ( for $^{a}$ ) $D_6$ [अ]ङ्गुलि- ( for [अ]ङ्गुष्ठ- ). $K_2$ संमित: ( for -संनिभ ) —( L 1506 ) $V_3$ $B_3$ $D_6$ $G_5$ देवी प्राप्तमनोरथा ( for $^{b}$ ) — ( L 1507 ) $B_2$ पुण्यकार्यं च सद्भावान्, $M_4$ °कामार्थसंभारान् ( for $^{a}$ ) $V_1$ $D_3$ $D_4$ संहर्तुम्; $D_5$ $T_{1-3}$ $G_{1.\ 3-5}$ $D_5$ $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ आहृ° ( for संभ° ) — ( L 1508 ) $K_4$ $\tilde{N}_2$ $V_{1\ 3}$ $Ds_2$ $D_5$ द्वीपे च, $B_1$ -द्वीपेषु, $T_1$ -द्वीपे न, $T_{2.\ 3}$ $G_{1\ 4}$ -द्वीपेऽपि ( for -द्वीपे तु ) — ( L. 1509 ) $K_2$ संक्रीतानि, $K_3$ आहृ°, $\tilde{N}_1$ संहि°, $V_{1\ 2}$ $B_2$ $Dn_2$ $T_3$ $G_{1\ 2\ 5}$ $M_4$ संभृ° ( for संहृ° ) — ( L 1510 ) $K_{1\ 4}$ $D_1$ नारदं स ( by transp ) — ( L 1511 ) $\tilde{N}_1$ $V_3$ $B_3$ $D_6$ -गुणोदितं, $V_2$ $Dn_2$ $T_{1\ 2}$ $G_3$ -गुणोचित; $B_1$ गुणार्चितं ( for °न्वितं ) $K_{3\ 4}$ च ( for वशी ) — ( L 1512 ) $D_3$ प्रतिग्रहार्थे ( for °र्थं ) $T_{1\ 3}$ $G_{3\ 5}$ $M_4$ किल तस्य ( for व्रतकस्य ) $K_1$ श्रीपतिप्रहार्थं व्रतचर्ययास्य सत्यया, $K_3$ व्रतस्य चर्यस्य च सत्यभामया, $T_2$ $G_{1\ 4}$ प्रतिग्रहार्थं किल सत्यया तथा — ( L 1513 ) $T_{1-3}$ $G_{1.\ 3-5}$ [उ]क्तमस्यैव ( for [उ]पादिष्टस्य )

COLOPHON missing in $Dn_1$ — *Mention of the Epic* $K_3$ $Ds_2$ $T_3$. — *Mention of Khila* $K_3$ $\tilde{N}_1$ V B Ds $D_{1\ 3}$ — *Adhy name* K $\tilde{N}_{1\ 2}$ V B $Dn_2$ Ds $D_{4-6}$ $T_1$ $G_{3.\ 4}$ पारिजातहरणम्, $D_1$ पारिजातहरणे कृष्णस्यागमनम्, $D_3$ पारिजातस्य द्वारकानयनम्, $T_{2\ 3}$ $G_{1\ 2}$ $M_4$ पारिजातापहरणम्. — *Adhy no.* $K_3$ 129, $V_1$ $T_3$ $G_2$ 135, $V_2$ 134; $V_3B_2$ 133, $Dn_2$ $Ds_2$ $D_4$ 130, $D_1$ 127, $D_3$ 140, $T_1$ $G_{2,\ 4}$ $M_4$ 144; $T_2$ $G_1$ 146, $G_5$ 147

( L 1514 ) $K_4$ कृष्णेन ( for कृष्णस्य ) $K_2$ स्मृतमात्रस्; $V_3$ $B_{2.\ 3}$ $D_6$ ध्यातमात्रे ( for °मात्रस् ) — ( L 1515 ) $T_{1\ 2}$ $G_{3\ 4}$ $M_4$ आययौ च ( for आजगाम ) $D_5$ वरः ( for वर ) — ( L 1516 ) $B_3$ सं- ( for तं ) $D_4$ पूजयित्वा च विधिवद् ( for $^{a}$ ) — ( L 1517 ) $K_{1\ 4}$ तं सं-, $K_3$ $\tilde{N}_2$ Dn $T_1$ भक्त्या ( for अभि- ) $K_2$ -निमन्त्रित ( for -न्यमन्त्रयत् ) $Ds_1$ श्रीमानद्य निमन्त्रयत्, $D_5$ °न्भक्त्या न्यभिमन्त्रयत् ( for $^{b}$ ) — ( L 1518 ) $V_3$ $B_{2\ 3}$ संप्राप्तं ( for °प्ते ) $D_6$ तत कालेन सप्राप्तं ( for $^{a}$ ) $D_2$ तत स्नातं ( for स्नातं देवो ) — ( L 1519 ) $D_3$ गन्धैर्माल्यैश् ( by transp ), $T_1$ $G_{1\ 3-5}$ $M_4$ सो( $T_1$ $G_3$ चो )पचारैश् $V_1$ संपूज्यमानैर्गन्धैश्च ( for $^{a}$ ) — ( L 1520 ) $K_{3\ 4}$ $T_{2\ 3}$ $G_{1\ 3-5}$ सर्व- ( for सार्व- ) $V_2$ $Dn_1$ $T_2$ $G_{1-3\ 5}$ -कृदन्वय, $V_3$ °व्ययम् ( for °व्यय ) — ( L 1522 ) $K_3$ $D_5$ पुष्पदाम्ना ( for °दाम ). $V_3$ $B_1$ $D_6$ [अ]वसृज्य ( for °सज्य ) $T_2$ $G_{1\ 4}$ $M_4$ पुष्पमादाय सत्याथ ( for $^{a}$ ) — ( L 1523 ) $G_3$ सुभगं ( for °गा ) $K_2$ $V_3$ $D_2$ पारिजात- ( for °जाते ) — ( L 1524 ) $T_2$ $G_4$ हविर् ( for अद्भिर् ) — ( L 1526 ) K $\tilde{N}_{1\ 2}$ V B Dn $Ds_2$ $D_{1\ 2\ 4-6}$ $T_1$ $G_{2.\ 3}$ -मिश्रं च ( for मिश्रस्य ) $Ds_1$ $D_3$ हिरण्यरूपमिश्रं च ( for $^{a}$ ) $K_3$ -घनस्य, $K_4$ -भवस्य, $\tilde{N}_2$ V $B_{1\ 2}$ Ds $D_{4\ 6}$ $T_{1-3}$ G $M_4$ -युतस्य ( for -प्रभस्य ). $B_3$ धनरत्नयुतस्य च ( for $^{b}$ ) $K_2$ om lines 1526$^{b}$–1527$^{a}$ — ( L 1527 ) $K_1$ $\tilde{N}_2$ $Ds_2$ $D_2$ धान्यै रत्नैर्, $V_3$ $D_{5\ 6}$ तथा धान्यैर्, $T_{1-3}$ $G_{1,\ 4\ 5}$ $M_4$ धनरत्नैर् ( for धान्यैरन्यैर् ) $K_2$ यवैर्माषैस्तिलैर्युतम्, $D_3$ धान्यै रत्नैर्वृतस्य च ( for $^{b}$ ) — $T_1$ om lines 1528$^{b}$–1532$^{a}$. —( 1529 ) $K_{1-3}$ $\tilde{N}_2$ $B_1$ Dn $Ds_2$ $D_{2-5}$ $T_2$

स त्वं मामनुगच्छस्व कुरु यद्यद्ब्रवीम्यहम् ॥
प्रथमः कल्पः इत्येवमब्रवीन्मधुसूदनः ।
व्रजन्तमनुवव्राज नारदं च जनार्दनः ॥
परिहासं बहुविधं कृत्वा मुनिवरस्तदा ।
तिष्ठस्व गच्छामीत्युक्त्वा परिहासविचक्षणः ॥ [ 1535 ]
अपनीय ततः कण्ठात्पुष्पदामैनमब्रवीत् ।
कपिलां गां सवत्सां भो निष्क्रयार्थं प्रयच्छ मे ॥
कृष्णाजिनं तिलैः पूर्णं प्रयच्छ च सकाञ्चनम् ।
एषोऽत्र निष्क्रयः कृष्ण विहितो वृषकेतुना ॥
तथेत्युक्त्वा हृषीकेशस्तथा चक्रे जनाधिप । [ 1540 ]
स उवाच मुनिश्रेष्ठं रहिते मधुसूदनः ॥
वरं वरय धर्मज्ञ यस्ते नारद काङ्क्षितः ।
तं ते दातास्मि धर्मज्ञ परा प्रीतिर्हि मे त्वयि ॥

नारद उवाच ।

नित्यमेवास्तु मे प्रीतो भवान्विष्णो सनातन ।
त्वत्प्रभावाच्च सालोक्यं व्रजेयं ते महामते ॥ [ 1545 ]
अयोनिजो भवेयं च नारायण सतां गते ।
भवेयं ब्राह्मणश्चैव पुनर्जात्यन्तरेष्वहम् ॥
एवमस्त्विति तं देवो विष्णुः प्रोवाच भारत ।
तुतोष च ततो धीमान्नारदो मुनिसत्तमः ॥
षोडश स्त्रीसहस्राणि विष्णोरतुलतेजसः । [ 1550 ]
निमन्त्रितानि कौरव्य सत्यया हरिकान्तया ॥
तासां ददौ संनियोगमेकैकं हरिवल्लभा ।
शच्या यो वासुदेवस्य पुरा दत्तो नराधिप ॥
पारिजातो वसंस्तत्र ततः प्रववृधे तदा ।
आज्ञया वासुदेवस्य नारदेन महात्मनः ॥ [ 1555 ]
निमन्त्रिता गणाः सर्वे केशवेन महात्मना ।
विभूतिं पारिजातस्य ददृशुः कुरुनन्दन ॥
पाण्डवांश्चानयामास सहैव पृथया हरिः ।
द्रौपद्या च महातेजास्तथैव च सुभद्रया ॥

---

$G_2$ स संप्रहृष्टो भुक्त्वाथ, $K_4$ प्रहृष्टोऽप्यभवत्कामं, $Ds_1$ D स संप्रहृष्टोऽथ भुक्त्वा, $T_{2\ 3}$ $G_{1\ 3-5}$ $M_4$ संस्पृष्ट्वा च समुत्थाय ( $G_{1\ 5}$ स भुक्त्वाथ ) ( for $^a$ ) K $\tilde{N}_2$ $V_1$ $B_1$ Dn Ds $D_{1-5}$ $T_{2\ 3}$ G $M_4$ भूय ( for भुक्त्वा ) —( L 1530 ) $T_3$ $G_{1\ 3-5}$ $M_4$ दत्तो भक्तो ( for अद्भिर्दत्तो ) $D_1$ नान्यथा ( for सत्यया ) —( L 1531 ) $V_1$ कुरु यत्तद्, $V_3$ $B_{1\ 3}$ $D_6$ कुरुष्व यद्, $T_2$ $G_{1\ 4\ 5}$ $M_4$ सत्यमेतद् ( for कुरु यद्यद् ) $T_3$ सत्यमेतद्ब्रुवन्नहम् ( for $^b$ ) —( L 1532 ) $K_3$ Dn Ds पक्ष ( for कल्प ) —( L 1534 ) $V_3$ $B_3$ $D_3$ परिहासान्बहुविधान् ( for $^a$ ) $G_5$ उक्त्वा ( for कृत्वा ) —( L 1535 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ तिष्ठ गच्छ त्वमित्युक्त्वा ( $G_{1\ 5}$ °त्येव ) ( for $^a$ ) $D_{1-3}$ परिहास ( for °हास- ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ -त्रिधानवित् ( for -विचक्षण. ) —( L 1536 ) $\tilde{N}_{1\ 2}$ $V_2$ $B_3$ $D_{2-6}$ -दामेदम्, $D_3$ -दामैतम्, $T_1$ -दामानम् ( for -दामैनम् ) —( L 1538 ) Cal ed तिलकृष्णाजिनं सूर्पं ( for $^a$ ) $K_{1\ 3\ 4}$ $\tilde{N}_2$ $V_1$ $D_1$ त्वं च; $K_2$ $Ds_2$ $D_{2\ 4\ 5}$ $T_{1-3}$ G $M_4$ त्वं स- ( for च स- ) —( L 1539 ) $K_2$ त्वं ( for ऽत्र ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ पूर्वं ( for कृष्ण ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ कल्पितो ( for विहितो ) —( L 1540 ) $G_3$ नराधिप ( for जना° ) —( L 1541 ) $\tilde{N}_1$ उवाच स ( by transp ), $V_3$ $B_3$ $D_6$ उवाच तं; $G_2$ तमुवाच $T_{1\ 3}$ $G_{1\ 3-5}$ कुरुश्रेष्ठ ( for मुनिश्रेष्ठं ) $M_4$ उवाच स कुरुश्रेष्ठ ( for $^a$ ) $K_4$ प्रहितो, $\tilde{N}_2$ $D_3$ $G_4$ रहितो, $V_2$ विहिते, $V_3$ हितं तन्, $B_2$ Dn हसित्वा ( for रहिते ). —( L 1542 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ om ( hapl ) lines 1542$^b$–1543$^a$ $G_2$ यत्ते नारद काङ्क्षितम् ( for $^b$ ) —( L 1543 ) $\tilde{N}_1$ $V_3$ $B_{2\ 3}$ $D_6$ तव ( for तं ते ) $D_{4\ 5}$ ( marg ) दास्यामि ( for दातास्मि ) — $G_4$ om the ref —( L 1544 ) $K_1$ ( *sup lin* as above ) सत्यम् ( for नि° ) $K_4$ $\tilde{N}_2$ सु- ( for मे ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ भव त्वं मधुसूदन ( for $^b$ ) —( L 1545 ) $K_{2\ 3}$ $\tilde{N}_2$ $B_1$ Dn $D_4$ $T_{2\ 3}$ $G_{2\ 4}$ त्वत्प्रसादाच्, $D_6$ °तापाच् ( for °भावाच् ) $\tilde{N}_1$ सता गते ( for महामते ) — $D_1$ om ( hapl ) line 1546 —( L 1546 ) $\tilde{N}_1$ ते ( for च ) $G_2$ महामते ( for सता गते ) —( L 1547 ) $\tilde{N}_1$ $V_3$ $B_{2\ 3}$ $D_6$ देव ( for पुनर् ) $V_1$ पुनर्जन्मान्तरेष्वपि; $T_{2\ 3}$ $G_{1\ 4}$ °र्जात्यन्तरे त्वयि ( for $^b$ ) —( L. 1548 ) $T_{1\ 3}$ $G_{1\ 3-5}$ $M_4$ प्रोवाच भरतर्षभ ( for $^b$ ) —( L 1549 ) $K_4$ चतुरो, $T_{1\ 3}$ $G_{1\ 3-6}$ $M_4$ वदतो, $G_2$ [अ]वनतो ( for च ततो ) —( L 1550 ) $G_{3\ 4}$ अमित- ( for अतुल- ) —( L 1552 ) $V_3$ $B_3$ $D_6$ ददौ तासां संनियोगान् ( $D_6$ °योगम् ). $K_{1\ 3}$ -वत्सला ( for -वल्लभा ) —( L 1553 ) $D_4$ सत्याया ( for शच्या यो ) $D_2$ $G_2$ सत्यया ( $G_2$ °त्यायै ) वासुदेवेन ( for $^a$ ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ द्रुमो ( for पुरा ) —( L 1554 ) $K_2$ $V_3$ $B_3$ $D_{2\ 4}$ ऽवसत् ( for वसंस् ) K $\tilde{N}_{1\ 2}$ $V_1$ $B_{1\ 3}$ Dn Ds $D_{1-5}$ $T_{1\ 2}$ प्रववृते ( for °धे ) —( L. 1555 ) $D_6$ नारदस्यैव धीमत, $T_{2\ 3}$ $G_{1\ 3-5}$ $M_4$ °दस्य महात्मन. ( for $^b$ ) — $T_1$ om lines 1556–1557 $G_1$ om line 1556.

प्रतिष्ठां लभते नित्यमुद्वेगं नाधिगच्छति ॥ [ 265 ]
दिवा या सूर्यपूतेन वर्तयेत्स्त्री पतिव्रता ।
एवं संवत्सरं पूर्ण रात्रावन्नं विवर्जयेत् ॥
सा जीवपुत्रा सुभगा भवत्यमरवर्णिनी ।
अधितिष्ठति सर्वाश्च सपत्न्यो नात्र संशयः ॥
पूर्णे संवत्सरे दद्यात्सौवर्णं सूर्यमुत्तमम् । [ 270 ]
ब्राह्मणायाभिरूपाय दरिद्राय यशस्विने ॥
फलानि वाथ पुष्पाणि भक्ष्याण्यपि च सुव्रता ।
दद्यादनस्तमितके चरितव्रतका तथा ॥
अथास्तंगमिते सूर्ये भुङ्क्ते स्त्री नियता सती ।
चन्द्रनक्षत्रपूतानि भोज्यानि वरवर्णिनी ॥ [ 275 ]
सा दद्यात्काञ्चनं चन्द्रं नक्षत्राणि ग्रहानपि ।
अभिरूपाय विप्राय वासश्च लवणान्वितम् ॥
चन्द्रशीतलगात्री सा भवत्यमरवर्णिनि ।
सुभगा दर्शनीया च पुत्रवत्यपि भामिनि ॥
पौर्णमास्यां तु सततं प्राप्ते सोमोदयेऽङ्गना । [ 280 ]
अर्घ्यं दद्यात्सुमनसा साक्षतं सकुशं तथा ॥
यावकं च बलिं दद्याद्दधिना सह संयुतम् ।
एवं या कुरुते नित्यं सर्वान्कामानवाप्नुयात् ॥
अदृष्ट्वा या तु नाश्नाति सूर्यं नारी पतिव्रता ।
दुर्दिने वाथ वा व्यभ्रे सर्वान्कामानवाप्नुयात् ॥ [ 285 ]
काञ्चनं शक्तितो दद्यात्सा विप्राय मनस्विनी ।
सुभगा दर्शनीया च भवत्यमरवर्णिनी ॥

Colophon.

---

च न खादेद्या (for $^{a}$) T3 om (hapl) lines $261^{b}$–$262^{a}$ Ñ1 V3 B3 D3 5 6 प्राप्नोति सुखमीप्सितम्, D1 भर्तुः सुखमिहेच्छति (for $^{b}$) — (L 262) K4 आस्थिता, Ñ1 V3 B3 आदित., T2 3 G1 4 5 M4 अत्र सा (for आदृता) — (L. 263) K1–3 V1 B1 D3. 4 सुदक्षिणा, K4 सुलक्षणा, Ñ1 2 V2 3 B2 3 Dn2 D1 2 5 6 T G1 3–5 M4 सदक्षिणं (for सु°) D3 पुरंधिका, G2 ह्यरुन्धति, G3–5 पराधिका, M4 वरा° (for पुरो°) — (L 264) K4 G2 स्वय प्रक्षाल्यमाना स्त्री, T1–3 G1. 3–5 M4 स्वयं प्रक्षालयन्ती च (for $^{a}$) D4 पादावेव समाहिता, T1–3 G1 3–5 M4 विप्रपादावनि(G3 °भिव)न्दिता (for $^{b}$) — (L 265) V3 B2 3 D5 6 उद्वेगरहिता सती (for $^{b}$) — (L 266) D2 दिवाद्यात्, T1–3 G1. 3–5 M4 वायुना (for दिवा या) K Ñ2 B1 Dn1 Ds D1 2 4 -मार्गेण, V3 -पूर्णेन (for पूतेन) K1 वर्जयेत्, V3 वर्ण°, D2 3 वर्तते (for °येत्) T1–3 G1 3–5 M4 सा (for स्त्री) V1 D4 वर्तयेत पतिव्रता (for $^{b}$). — (L 267) K1 3 4 Ñ1 V1 B1 2 Dn D2–4 T2 4 G2 एकं (for एवं) Ñ2 विसर्जयेत्, T1–3 G1. 3–5 M4 समाचरेत् (for विवर्जयेत्) — (L 269) Ñ2 V3 G1 4 5 अति-, T3 प्रति (for अधि-) T3 G1 5 M4 सपत्नीः (for °त्न्यो) — (L 271) K1. 3 V1 3 D3 यशस्विनि, T4 तपस्विने, G2 कुटुम्बिने (for यशस्विने) — (L. 272) D3 मुख्यानि (for पुष्पाणि) K2 4 D2 3 5 G2 सुव्रते, T1–3 G1 3–5 M4 सर्वदा (for सुव्रता) — (L 273) D1 दद्यादनन्तविभवा; T1 °दनस्तंगमिते (for $^{a}$) K4 चरितव्रतकेऽथ वा; Ñ1 °तव्रतकं सदा, T3 G1 4 5 °त्रव्रतकां तथा (for $^{b}$). — (L 274) Ñ1 अथानस्तंगते सूर्ये, V3 B2 3 D5 6 अथ वास्तंगते सूर्ये, Dn Ds या तथास्तमिते सूर्ये; G2 तथा चास्तंगते सूर्ये (for $^{a}$) — (L 276) K1 बिम्ब, T1–3 G1 3–5 M4 दिव्यं (for चन्द्र) T1–3 G1. 3–5 M4 नक्षत्रेशं (for °त्राणि) — (L 277) K4 लक्षणान्वितम् (for लवणा°) — (L 279) K1 वर्णनीया (for दर्श°) T1 om (hapl) lines $279^{b}$–$281^{b}$ — (L 281) K1 Ñ1 2 D1 2 4 G2 सुमनसं (for °सा) D3 om lines $281^{b}$–$283^{a}$ T2 3 G1 3–5 M4 साक्षतेन च वारिणा (for $^{b}$) — (L 282) K4 K4 धूपदीपौ (for यावकं च) V3 B3 D6 कुर्याद् (for दद्याद्) K2 Ñ2 V3 Dn D4 5 G2. 3 दध्ना च, D6 विधिना, T4 बलिना, G1 पत्या च (for दधिना) G3 संगता (for संयुताम्) V2 दध्ना च पयसा युतम्, T2 G4 5 पत्या सह वराङ्गना, T3 M4 पत्या च सह संगता (for $^{b}$). — (L 285) D4 व्यभ्रे वा (by transp), D5 वाप्यस्ते T2 3 G1 3–5 M4 दुर्दिने वर्षयोगेन (for $^{a}$) K3 Ñ1. 2 V B Dn Ds D4 6 T4 सेष्टान्; D1–3 5 G2 श्रेष्ठान् (for सर्वान्) Ñ1 B3 अवाप्नुते (for °यात्) T2 3 G1 3–5 M4 सा सौभाग्यमवाप्नुयात् (for $^{b}$) — (L 286) K1 4 साभिप्राय, K2 सुविप्राय, K3 स्वाभिप्रायान् (for सा विप्राय) V1 D2 3 मनस्विने, B1 यशस्विनी; D1 तपस्विने (for मनस्विनी) — (L. 287) B2 T2 3 G1 4 पुत्रवत्येव भामिनी (for $^{b}$).

Colophon — *Mention of the Epic* Ñ2 T3 — *Mention of Khila* K3 V B Ds D1 — *Sub-parvan* K V2 3 B Dn Ds D1 3–6 T4 पारिजातहरणम् — *Adhy name* V1 उमाव्रतम्, B2 व्रतकफलम्, D1 व्रतकविधि; D3 T1 2 4 G1–4 पुण्यकविधिः; T3 पुण्यकथा — *Adhy no* K3 133, Ñ1 120, V1 G2 138, V2 138, V3 B2 137, Dn Ds2 D4 134, D1 131; D4 T4 144; T1 G3 4 M4 148, T2 G1 150, T3 157, G5 151

उमोवाच ।

निर्वेष्टव्यं शरीरं यैर्व्रतकैः पुण्यकैरपि ।
अरुन्धति प्रवक्ष्यामि सहैताभिर्वरे शृणु ॥
कृष्णाष्टमीं या क्षिपति स्याद्वा मूलफलाशिनी । [ 290 ]
ब्राह्मणायैकमशनं स्वं दत्त्वा भर्तृदेवता ॥
शुक्लवस्त्रा शुभाचारा गुरुदैवतपूजका ।
एवं संवत्सरं कृत्वा ततो दद्याद्विजातये ॥
गोवालरज्जुसुकृतं चामरं बल्वजं तथा ।
दक्षिणापूर्वमिष्टान्नं शक्त्या वापि शुचिस्मिते ॥ [ 295 ]
उर्मिमन्तः स्वरालाग्रा. श्रोणिदेशावलम्बिनः ।
तस्या भवन्ति केशास्तु भवतीष्टा हि भर्तरि ॥
शिरो निर्वेष्टुकामा तु गोमयेन शिरः सती ।
प्रक्षालयेन्मलं धात्र्या बिल्वेन श्रीफलेन च ॥
गोमूत्रं च सदा प्राशेच्छिरःस्नानं च मिश्रयेत् । [ 300 ]
कृष्णां चतुर्दशीं त्वेतत्कर्तव्यं वरवर्णिनि ॥
भवत्यविधवा चैव सुभगा विज्वरा तथा ।
शिरोरोगैर्नैव चास्याः शरीरमभितप्यते ॥
दर्शनीयं ललाटं या काङ्क्षति स्त्री शुचिस्मिते ।
तिथिं प्रतिपदं नित्यं सा क्षपेदेकभोजना ॥ [ 305 ]
पयसा च तथाश्नीयाद्यावत्संवत्सरो गतः ।
ब्राह्मणस्य ततो दद्यात्पट्टं रूप्यमयं शुभम् ।
ललाटं रूपसंपन्नमाप्नोति स्त्री सुमध्यमा ॥
सततं स्त्री द्वितीयायां भ्रुवोरिच्छेत्सुरूपताम् ।
अनन्तरोपवासेन शाकभक्ताशना सती ॥ [ 310 ]

---

Some Mss भगवती ( for उमा ) — ( L 288 ) D3 T4 शरीरं वै, T3 °रस्य ( for °रं यैर् ) T1 2 G1 3–5 M4 निर्वेष्टिं ( T2 °र्दिष्टं, G1 4 °र्विष्टं ) वै शरीरस्य ( for $^{a}$ ). — ( L 289 ) B1 Ds2 सहिताभिर् ( for सहै° ). Ñ2 व्रतं शृणु, D4 वचः शृणु, G4 वरे वृणु, Bom Poona eds G( ed ) वरेण तु ( for वरे शृणु ) K2 D1 सह ताभिर्व्रतं ( D1 °र्वंच· ) शृणु ( for $^{b}$ ) — ( L 290 ) V B2 3 Ds1 D2 6 क्षपति ( for क्षि° ) K2 D3 D5 ( marg ) शाक-, T2 3 G1 4 स्नात्वा ( for स्याद्वा ). B3 T3 G4 5 -फलाशना ( for °शिनी ) — ( L 291 ) Ñ2 V B1 D6 G2 सा ( for स्वं ). G2 दद्याद् ( for दत्त्वा ) — ( L 292 ) K2 D5 शुक्लवासाः ( for °वस्त्रा ) D4 शुक्लवासा' शुभा नारी ( for $^{a}$ ) V B1 3 D2 3 6 T1 -पूजिका; D4 -पूजना ( for -पूजका ). — ( L 293 ) K1 ज्ञात्वा ( for कृत्वा ) T2 G1 4 दत्त्वा ( for दद्याद् ) — ( L 294 ) G1 3–5 M4 -रज्वा ( for -रज्जु- ) G2 -संभूतं ( for -सुकृतं ) D6 T4 गोवालरज्जुं सुकृतां ( for $^{a}$ ). K1. 3 4 B2. 3 Dn Ds1 D1 4 5 ( after corr on marg ) T4 च ध्वजं; K2 बिल्वजं, Ñ2 V व्यजन, D6 बिल्वक ( for बल्वजं ) T1–3 G1 3–5 M4 शृङ्गजं वालजं तथा ( for $^{b}$ ) — ( L 295 ) V2 Dn दाक्षिणापूर्णं, G2 °पूप- ( for °पूर्व- ). K2 3 -मृष्टान्न ( for -मि° ) V3 B2 3 D6 T G1 3–5 M4 सदाक्षिणं पतिं ( T1 °णावता ) पूर्वं ( for $^{a}$ ) K1 4 Ñ2 V1 B1 Dn Ds D3 5 शुचिव्रते; K2 V2 °व्रता, G2 °स्मितं ( for °स्मिते ). V3 B2. 3 D6 T G1 3–5 M4 अनुज्ञाप्य ( T4 °य ) शुचिव्रते, D4 शक्त्यापि च शुचिव्रते ( for $^{b}$ ). — ( L 296 ) K V1 Dn D1–5 T2 3 G1 4 5 M4 स्वरालाश्च. Ñ2 सुवालाश्च, V2 B2 सुचार्वग्रा. ( for स्वरालाग्रा ) G2 उर्मिमन्तं सुवालाग्रा', G3 °न्तं स्वरालाश्च ( for $^{a}$ ) — ( L 297 ) V1 3 B D6 G2 भक्तिमत्या, T1–3 G1. 3–5 M4 भवन्तीह ( for °तीष्टा ) T4 भवन्तु ज्ञानभर्तरि ( sic ) ( for $^{b}$ ) — ( L 298 ) T1–3 G1. 3 5 M4 शिरोनिवेदन या तु ( for $^{a}$ ) — ( L 299 ) T2 3 G1 जलं ( for मलं ) K B Ds1 D1 2 4–6 T3 G4 कृत्वा, D3 हित्वा, T1 2 G1 3 5 M4 हृत्वा ( for धात्र्या ) Ñ2 V प्रक्षाल्य निर्मलं कृत्वा, D3 क्षालयेन्निर्मलं कृत्वा ( for $^{a}$ ) V2. 3 B D6 पयसा, D6 ( marg ) तिलैश्च ( for बिल्वेन ) Ñ2 बिल्वेन पयसा तथा ( for $^{b}$ ) — ( L 300 ) K3 प्राश्य ( for प्राशेच् ) K3 4 D6 G2 स्नाने V1 वर्जयेत् ( for मिश्र° ) — ( L 302 ) T1–3 G1 3–5 M4 गते संवत्सरे चैव ( for $^{a}$ ) T1–3 G3–5 M4 सुभगा विगतज्वरा ( for $^{b}$ ) — ( L 303 ) G5 शिरोरुहैश्च नैवास्याः ( for $^{a}$ ) K1 -भाव्यते ( for -तप्यते ) — ( L 304 ) K2 D4 5 काङ्क्षते स्त्री ( D5 च ); V3 B2 3 D6 स्त्री काङ्क्षति ( by transp ), D1 G2 काङ्क्षन्ती स्त्री, K2 पतिव्रता ( for शुचिस्मिते ) — ( L 305 ) T1–3 G1 3–5 M4 तथ्यं प्रतिवदेन्नित्यं ( for $^{a}$ ) T2 सा क्षिपेद्देवभाजने; T3 G1 4 सा क्षेपेदेव भाजने; G3. 5 M4 सा क्षेपेदेव भोजने ( for $^{b}$ ). — ( L 306 ) Ñ2 V2 T G1 3–5 पायसान्नं ( for पयसा च ). D3 यावत्संवत्सरं शुभे ( for $^{b}$ ) — ( L 307 ) Ñ2 V3 D3 G1 5 ब्राह्मणाय ( for °णस्य ) Ñ2 रूपमयं, V3 B1 2 D4 6 रुक्म° ( for रूप्य° ) G5 तथा ( for शुभम् ) K2 D3 पट्टं रुक्मयुतं ( D3 °मयं ) तथा; D4 5 पट्टं रूप्ययुतं तथा ( D5 शुभा ) ( for $^{b}$ ). — ( L 308 ) B1 इच्छति ( for आप्नोति ) K1 2 4 D3–5 G2 सुमध्यमे ( for °मा ) V3 B2 3 D6 तेनाप्नोत्यङ्गना सती ( for $^{b}$ ). — D6 om. lines 309–310 — ( L 309 ) B2 3 द्वितीयां स्त्री सदा सौम्ये ( for $^{a}$ ) T1–2 G1 3–5 M4 कर्णौ प्रार्थयते तु या ( for $^{b}$ ) — T4 om ( hapl ) lines 310–319 — ( L 310 ) D1 एक-; D2 सैक- ( for शाक- ) — ( L 311 ) V2 3 B1 3 D6 G2 ब्राह्मणान् T1 G3 om. ( hapl ) lines 311$^{b}$–316$^{a}$. B2 T2, 3 G1,

ततः संवत्सरे पूर्णे ब्राह्मणं स्वस्ति वाचयेत् ।
फलैः परिणतैः सौम्ये माषाणां दक्षिणान्वितैः ।
लवणेन च भद्रं ते घृतपात्रेण चानघे ॥
आत्मनः शोभनौ कर्णाविच्छन्ती स्त्री सुमध्यमा ।
नक्षत्रे श्रवणे प्राप्ते ध्रुवं भुञ्जीत यावकम् ॥ [ 315 ]
ततः संवत्सरे पूर्णे कर्णौ दद्याद्धिरण्मयौ ।
घृते प्रक्षिप्य विप्राय पयसा सहितौ शुभे ।
नासामिच्छेल्ललाटान्तामव्यङ्गां व्याधिवर्जिताम् ।
तिलगुल्मं सदा सिञ्चेद्यावत्पुष्पेद्धि रक्षितः ॥
अनन्तरोपवासेन सेक्तव्यः सलिलैः सदा । [ 320 ]
तस्मादादाय पुष्पाणि घृते प्रक्षिप्य दापयेत् ॥
स्वक्षी भवेयमिति या स्त्री काङ्क्षत्यमृतोद्भवे ।
अनन्तरं वै भुञ्जाना पयसा वा घृतेन वा ॥
ततः संवत्सरे पूर्णे पद्मपत्राणि पण्डिता ।
तथैवोत्पलपत्राणि न्यसेत्क्षीरे शुचिस्मिते ॥ [ 325 ]
प्लवमानानि विप्राय ततो दद्यात्सती सति ।
कृष्णसारसमानाक्षी तद्दत्त्वा भवति स्म वै ॥
इच्छेदोष्ठौ चारुरूपौ या स्त्री धर्मगुणान्विता ॥
सा मृण्मयेन तु पिबेदुदकं वत्सरं सती ॥
अयाचितेन भुञ्जीत नवम्यां धर्मभागिनी । [ 330 ]
ततः संवत्सरे पूर्णे विद्रुमं दातुमर्हति ॥
तेन बिम्बफलाभौष्ठी स्त्री भवत्येव शोभने ।
सुभगाथ वपुःपुत्रधनाढ्या गोमती तथा ॥
या चारुरूपानिच्छेत दन्तानमरवर्णिनि ।
शुक्लाष्टमी न साश्नीयाद्भक्तद्वयमनिन्दिता ॥ [ 335 ]
ततः संवत्सरे पूर्णे दद्याद्रूप्यमयान्सती ।
दन्तान्प्रक्षिप्य धर्मज्ञे पयस्यतिगुणोदिते ॥
तेन सा तिलपुष्पाभान्दन्तानाप्नोति सा सती ।

---

$_{4,5}$ $M_4$ कर्णौ दद्याद्धिरण्मयौ ( for $^b$ ) — $T_{2,3}$ $G_{1,4,5}$ om ( hapl ) lines 312–316 — ( L 312 ) $K_{1,2,4}$ $V_3$ $B_1$ $D_{1,2,4,5}$ $G_2$ सौम्यैर् ( for सौम्ये ) $D_3$ पारण दक्षिणान्वितम् ( for $^b$ ) — ( L 313 ) $V_3$ $B_3$ $D_6$ -मात्रेण ( for -पा° ) — After line 313, $G_2$ Cal ed ins

3** श्रुत्वौ विधाय सा दद्यान्मृगनाभिमये शुभे ।

— ( L 314 ) $V_3$ $B_{2,3}$ $D_6$ श्रवणौ रूपसंपन्नाव् ( for $^a$ ) $K_2$ शुचिस्मिते ; $V_3$ $B_1$ $D_{3-6}$ सुमध्यमे ( for °मा ) — ( L 317 ) $D_3$ विप्राय वेदविदुषे ( for $^a$ ) $K_{1,2}$ $\tilde{N}_2$ B $D_{1,4,6}$ $T_{1-3}$ G $M_4$ सहिते $D_5$ शर्करासहिते शुभे ( for $^b$ ) — ( L 318 ) $V_1$ मध्यगां , $D_{3-5}$ मध्यमा ( for अव्यङ्गां ) $K_{1,3,4}$ $D_8$ मध्यमावधिवर्जिताम् ( $K_1$ °तम् ), $D_1$ मध्यगां च विव° ; $T_{1-3}$ $G_{1,3-5}$ $M_4$ मध्यगा ( $T_1$ अव्यङ्गा , $T_2$ मध्यमा , $G_3$ मध्यगां ) सुभगा तु या ( for $^b$ ). — $G_4$ om line 319 — ( L 319 ) $T_{1-3}$ $G_{1,3,5}$ $M_4$ नीलं ( for तिल- ) $D_1$ गुल्मान् ( for गुल्मं ) $K_2$ $V_3$ $D_{3-5}$ यावत्पुष्पैर्विराजितम् ( $D_3$ °जति , $D_4$ °जित· ), $T_{2,3}$ $G_1$ °ष्पेऽपि रक्षितुं , $G_4$ °ष्येऽधिरक्षितम् ( for $^b$ ) — ( L 320 ) $V_1$ $D_{2,3,6}$ सतिल. , $T_{1-3}$ $G_{1,3-5}$ $M_4$ स तरुः ( for सलिलैः ) — ( L 321 ) $K_{2,4}$ $V_1$ $B_2$ $D_3$ $T_4$ तस्य ( for तस्माद् ) $K_3$ Dn Ds $D_4$ $G_2$ अवाप्य ( for आदाय ) — ( L 322 ) $D_1$ स्वक्षिणी विमले या स्त्री ( for $^a$ ) $K_2$ [अ]मरोद्भवे , $T_1$ $G_{1,3,5}$ $M_4$ शुचिस्मिते ( for [अ]मृतोद्भवे ) $\tilde{N}_2$ $V_3$ B $D_{4-6}$ स्त्री काङ्क्षेत्सोमसभवे ; $D_1$ काङ्क्षेत्सोमस्य संभवे ; $T_{2,3}$ $G_4$ स्त्री काङ्क्षन्ती शुचिस्मिते , $T_4$ काङ्क्षयत्यमृतोद्भवे ( for $^b$ ) — ( L 323 ) $V_3$ $B_{2,3}$ $D_6$ $T_4$ भजनात् ( for भुञ्जाना ) — ( L 324 ) Bom Poona eds G( ed ) मण्डिता ( for पण्डिता ) $D_5$ पद्मपत्रैश्च मण्डिता ( for $^b$ ) $T_{2,3}$ $G_{1,4}$ om lines 325–328 — ( L 326 ) $T_1$ $G_3$ $M_4$ दद्यात्तु ( for विप्राय ) $G_5$ पत्रमानानि दद्यात्तु ( for $^a$ ) $T_1$ $G_{3,5}$ $M_4$ वत्सरं स्त्री ( for ततो दद्यात् ) — ( L 327 ) $V_3$ $B_{2,3}$ Ds $D_6$ स्त्री ( for तद् ) — ( L 328 ) $V_3$ $B_3$ $D_6$ इच्छन्ति ( for इच्छेद् ). $D_4$ चानु- , $T_1$ $G_5$ $M_4$ यथा ( for चारु- ) $V_3$ $D_3$ -गुणान्विते ( for °ता ) — ( L 330 ) $T_4$ om lines 330$^b$–335$^a$ $K_2$ $B_2$ $D_3$ -भाविनी ; $K_3$ भाजिनी ( for -भागिनी ) $T_{1-3}$ $G_{1,3-5}$ $M_4$ नवम्यां वै शुचिव्र( $T_3$ $G_3$ °स्मि )ते ( for $^b$ ) — $K_2$ om ( hapl ) lines 331–335 — ( L 331 ) $D_3$ प्राप्ते ( for पूर्णे ) — ( L 332 ) $K_4$ $V_{1,2}$ $D_4$ $T_2$ भवत्येव च शोभने ( for $^b$ ) — ( L 333 ) $K_3$ $D_3$ सुभगा बहुपुत्राथ ; $K_4$ $D_6$ $G_{1,5}$ $M_4$ सुभगा सुवपु·पुत्रा , $V_3$ सुभगा जीवपुत्रा च ( for $^a$ ) — ( L 334 ) $T_2$ इच्छेत्सा ( for °त ) $T_{1-3}$ G $M_4$ वै वर- ( for अमर- ) — ( L 335 ) $K_{1,3,4}$ साश्नाति , $\tilde{N}_2$ $D_5$ साश्नीत ( for °याद् ) $T_{1-3}$ $G_{1,3-5}$ $M_4$ शुक्लानि तिलपुष्पाणि ( for $^a$ ) $K_{1,4}$ $D_1$ $G_2$ भुक्त- ( for भक्त- ) $V_3$ $B_{1,3}$ अनिन्दिते ( for °न्दिता ) $T_{1-3}$ $G_{1,3-5}$ $M_4$ साश्नीयात्सा-ध्वनिन्दिता ( for $^b$ ) — ( L 336 ) $D_3$ दत्त्वा ( for दद्याद् ). $K_4$ $\tilde{N}_2$ V B Dn Ds $D_{1,4-6}$ T G रौप्यमयान् ( for रू° ) $K_2$ रदान् ; $V_3$ $B_{2,3}$ $D_6$ शुभान् ( for सती ) $M_4$ दद्याद्रूपगुणं भवेत् ( for $^b$ ) — ( L 337 ) $K_2$ $B_2$ गुणान्विते , $V_1$ -गुणोदये , $D_3$ -गुणोदिता ( for °ते ) — ( L 338 ) $K_2$ -पुष्पाढ्यान् ( for -पुष्पाभान् ) $D_2$ चानघे ( for सा सती ).

सौभाग्यमपि चाप्नोति सपुत्रत्वं तथानघे ॥
सर्वमेव मुखं कान्तमिच्छेद्या रुचिरानने । [ 340 ]
सा पौर्णमास्यामश्नातु प्राप्ते चन्द्रोदये शुभे ॥
यावकं पयसा सिद्धं दत्त्वा विप्राय भामिनी ।
ततः संवत्सरे पूर्णे चन्द्रं रूप्यमयं शुभम् ॥
पद्मे फुल्ले तु विन्यस्य ब्राह्मणान्स्वस्ति वाचयेत् ।
पूर्णचन्द्रमुखी तेन दानेन स्त्री शुभे भवेत् ॥ [ 345 ]
स्तनाविच्छति या नारी तृणराजफलोपमौ ।
अयाचितं दशम्यां सा नित्यमश्नीत वाग्यता ॥
संवत्सरे ततः पूर्णे द्वे बिल्वे काञ्चने शुभे ।
सदक्षिणे ब्राह्मणाय प्रयच्छतु धृतात्मने ॥
सौभाग्यं परमाप्नोति बहून्पुत्रांस्तथैव च । [ 350 ]
सदोन्नतौ स्तनौ सा स्त्री बिभर्त्यमरवर्णिनि ॥
शातोदरत्वमिच्छन्ती क्षपेदेकान्नभोजिनी ।
पञ्चम्यां तु न भोक्तव्यमन्नं तोयेन नित्यदा ॥
ततः संवत्सरे पूर्णे दद्याज्जातीलतां शुभे ।
फुल्लां सदक्षिणां धन्ये ब्राह्मणाय धृतात्मने ॥ [ 355 ]
हस्ताविच्छति या नारी रूपयुक्तौ सुमध्यमे ।
द्वादशीं सा क्षपेदेवं शाकैः सर्वैरनिन्दितैः ॥
संवत्सरे ततः पूर्णे रौक्मे पद्मे ददातु सा ।
ब्राह्मणायाभिरूपाय तथा पद्मद्वयं शुभे ॥
श्रोणी विशालामन्विच्छेत्स्त्री क्षपत्वेव सुव्रता । [ 360 ]
त्रयोदशीमेकभक्तमश्नात्वेवमयाचितम् ॥
ततः संवत्सरे पूर्णे लवणं संप्रयच्छतु ।
प्रजापतिमुखाकारं कृत्वा तज्ज्ञा वरानने ॥
काञ्चनं चैव दातव्यं तदाकारस्य सर्वदा ।
अञ्जनेन च धर्मज्ञे शनकैरवचूर्णयेत् ॥ [ 365 ]
रत्नानि चैव पूर्णानि वासो रक्तं च दापयेत् ।

---

— ( L 339 ) $V_1$ सत्पुत्रत्वं ( for सपु° ) $T_4$ तपोधने ( for तथानघे ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ सुपुत्रं तु तपोधने ( for [b] ) — ( L 340 ) $K_2$ इच्छेद्या तु वरानना ( for [b] ) — ( L. 341 ) $K_{1\ 3.4}$ $D_5$ स्नाता तु , $K_2$ $B_1$ Dn $D_1$ $G_2$ स्नात्वा तु ; $D_4$ स्नानं तु ( for अश्नातु ) $K_{1-3}$ $\tilde{N}_2$ $V_1$ $B_1$ Dn Ds $D_{1\ 4\ 5}$ $T_1$ $G_2$ प्राप्य ( for प्राप्ते ) $K_2$ Dn $Ds_1$ $D_4$ $G_2$ चन्द्रोदयं ( for °ये ) — ( L. 342 ) $G_{1\ 4\ 5}$ पायसं ( for पयसा ) $D_4$ दद्याद् ( for दत्त्वा ) — ( L. 343 ) $V_2$ Ds शुभे ( for शुभम् ) — ( L 344 ) $K_{1.2}$ $V_1$ $G_2$ पद्मपुष्पे , $K_3$ $D_1$ फुल्लपद्मे , $K_4$ पद्मकुम्भे , $\tilde{N}_2$ पद्मपत्रे ; $V_{2\ 3}$ $B_{2\ 3}$ Ds $D_{2\ 4}$ पद्मफुल्ले , $D_5$ फुल्ले पद्मे ( by transp ), $T_{1-3}$ $G_{1\ 5}$ पात्रे फले $V_3$ $B_{1\ 3}$ $D_6$ ऽभि- ( for तु ) $K_4$ वाडवान् ; $V_3$ $B_{2.3}$ $D_4$ ब्राह्मणम् , $D_6$ °णे ( for °णान् ) $V_1$ वाच्य च ( for वाचयेत् ) — ( L 347 ) $V_3$ $B_{1\ 2}$ $D_6$ $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ अश्नातु ( for अश्नीत ) — ( L 348 ) $D_4$ द्वे बिल्वे काञ्चनप्रभे ( for [b] ) — ( L 349 ) $D_3$ दक्षिणेय , $T_4$ सदक्षिणं ( for °णे ) $T_2$ तदात्मने , $G_4$ यता° ( for धृता° ) $V_3$ $B_3$ $D_6$ बिल्वे चैव प्रयच्छतु ( for [b] ) — ( L 350 ) $D_4$ पतिम् ( for परम् ) — ( L 351 ) $K_1$ $T_{2\ 3}$ $G_{1\ 3-5}$ $M_4$ साध्वी ( for सा स्त्री ) $V_3$ $B_{2\ 3}$ $D_6$ सदोन्नतस्तनी चैव ; $T_4$ °ते स्तने सा स्त्री ( for [a] ) $V_3$ $B_{2\ 3}$ $D_6$ भवति ( for बिभर्ति ) $K_1$ $V_2$ $T_{2-4}$ $G_{1\ 3\ 4}$ $M_4$ वर- ( for [अ]मर- ) — ( L 352 ) $K_1$ $V_1$ कृशोदरत्वम् , $K_2$ $D_{4\ 5}$ क्षामोदरि- ( $D_5$ °र )त्वम् , $K_3$ $V_3$ $B_{2\ 3}$ Ds शातोदरीत्वम् ( for °रत्वम् ) $B_3$ $D_6$ अन्विच्छेत् ( for इच्छन्ती ) $K_4$ $V_2$ B $Dn_1$ $D_{2\ 4\ 5}$ $T_1$ G एकान्त ( for °न्न- ) $\tilde{N}_2$ $Ds_2$ $D_5$ $G_5$ -भोजनी , $V_{2\ 3}$ $B_3$ Dn $D_6$ भोजना ( for -भोजिनी ) — ( L 353 ) $D_1$ तया भोज्यम् ( for तु भोक्तव्यम् ) $K_1$ भोक्तव्यमन्न पञ्चम्यां ( for [a] ) — ( L 354 ) $K_2$ जातीं नवा , $D_1$ $T_4$ जातीफलं , $T_3$ जललतां ( for जातीलतां ) — ( L 355 ) $D_3$ स्वर्णां , $T_{2\ 3}$ $G_{1\ 4\ 5}$ $M_4$ तत ( for फुल्लां ) $K_2$ $D_2$ धन्यां , $D_1$ दद्यात् , $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ साध्वी ( for धन्ये ) $D_5$ महात्मने , $T_4$ जिता° , $G_1$ भृता° ( for धृता° ) — ( L 356 ) $B_1$ $D_{1\ 3}$ $T_{1\ 2\ 4}$ $G_{1.\ 3-5}$ $M_4$ च स्त्री ( for नारी ) — ( L 357 ) V B Ds $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ अनिन्दिते ( for °तैः ) — ( L 358 ) $V_3$ $B_{2\ 3}$ $D_{3\ 5\ 6}$ $G_2$ प्राप्ते ( for पूर्णे ) $K_1$ $\tilde{N}_2$ $V_2$ Ds $D_4$ $G_5$ ततः संवत्सरे पूर्णे ( $V_2$ $G_5$ प्राप्ते ) ( for [a] ) $V_3$ B $D_6$ पद्मे रौक्मे ( by transp ) $V_1$ सुमध्यमा ( for ददातु सा ) $K_3$ रौप्ये पद्मे निवेश्य सा ( for [b] ). — $\tilde{N}_2$ om line 359 — ( L 359 ) $K_4$ सु- ( for [अ]भि- ) $V_1$ Bom Poona eds G(ed) शुभम् ( for शुभे ) — ( L 360 ) $K_2$ $D_{2-4}$ इच्छन्ती , $V_1$ इच्छेत्स्त्री ( for अन्विच्छेत् ) $V_3$ B $D_6$ $T_{1\ 4}$ $G_{2-4}$ सुव्रते ( for °ता ) $K_1$ स्त्री क्षिपेच्चैवमादरात् ( for [b] ). — ( L 361 ) $K_4$ V $G_{1\ 2}$ -भुक्तम् ( for भक्तम् ) — ( L 362 ) $T_{1-3}$ $G_1$ (marg.) $_{3-5}$ $M_4$ लवणं ब्राह्मणाय च ( for [b] ) — ( L 363 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ प्रयच्छतु ( for प्रजापति- ) $K_{1\ 3\ 4}$ $B_1$ Dn $D_{2\ 3.6}$ $T_{1\ 4}$ तत्र ; $\tilde{N}_2$ $D_{4\ 5}$ तं तु ( for तज्ज्ञा ) — ( L 364 ) $\tilde{N}_2$ चोप- , $V_3$ $B_{2\ 3}$ तत्र ( for चैव ) — ( L 365 ) $K_{1\ 3}$ V B Dn Ds $D_2$ धर्मज्ञा ; $\tilde{N}_2$ सर्वज्ञा ( for धर्मज्ञे ) $D_1$ -पूरयेत् ( for -चूर्ण° ) $T_{1-3}$ $G_{1.\ 3-5}$ $M_4$ नेत्रयोरस्य ( $G_{1.\ 5}$ °त्र ) पूरयेत् ; $T_4$ शनकैरिव पूर्णयेत् ( for [b] ) — ( L 366 ) $K_3$ चूर्णानि , $V_3$

तेन श्रोणीमभिमतां स्त्री सौम्ये प्रतिपद्यते ॥
मधुरां वाचमिच्छन्ती वर्जयेल्लवणं सती ।
संवत्सरं वा मासं वा दापयेल्लवणं ततः ॥
सदक्षिणं ब्राह्मणाय परं माधुर्यमिच्छती । [ 370 ]
शुकवाक्याच्छतगुणं भवत्यमरवर्णिनि ॥
गूढगुल्फशिरौ पादाविच्छन्त्या सोमनन्दिनि ।
षष्ठ्यां षष्ठ्यां वरारोहे भोक्तव्यं सतिलौदनम् ॥
अग्निर्वा ब्राह्मणो वापि न स्प्रष्टव्यः पदा सदा ।
पदा यदा स्पृशेत्तं च वन्देत तपसान्विता ॥ [ 375 ]
पादेन चैव पादं न प्रक्षालयितुमर्हति ।
एतैर्नित्यव्रतैर्युक्ता धर्मज्ञा पतिदेवता ॥
कूर्मौ रुक्ममयौ दद्याद्ब्राह्मणाय पतिव्रते ।
तौ वाचयेद्ब्राह्मणाय स्थापयित्वा घृतेऽनघे ॥
पद्मे चाधोमुखे कृत्वा दद्याद्विप्राय नन्दिनि । [ 380 ]
रक्तैर्द्रव्यैर्मिश्रयित्वा काञ्चनेनाभ्यलंकृतौ ॥
सर्वमेव तु या गात्रमिच्छत्यतिमनोहरम् ।
त्रिरात्रं पुष्पकाले सा करोतु पतिदेवता ॥
कौमुद्यामथ वाषाढ्यां माघ्यां चाश्वयुजे तथा ।
मातरं पितरं चैव मन्यते यदि दैवतम् ॥ [ 385 ]
घृतं च नित्यं विप्रेभ्यो ददातु लवणं तथा ।
संमार्जनं गृहे चैव करोतु पतिदेवता ॥
उपलेपनं च धर्मज्ञे बलिकर्म च मानिनि ।
वाग्दुष्टा चैव मा शुभ्रे भवत्वात्मार्थपण्डिता ॥
पर्यश्नातु च सा कंचिदपि शाकं यशस्विनि । [ 390 ]

---

B D4 6 द्रव्याणि ( for पूर्णानि ) K3 नक्तं, V1 युक्तं, T1 G3 4 रत्नं ( for रक्तं ) M4 भावयेत् ( for दाप° ) —( L 367 ) T1–3 G1 3–5 M4 सा तु ( tor तेन ) D4 सौम्ये स्त्री ( by transp ) —( L 369 ) K1 3 4 V3 Dn D4 वर्जयेल्, Ñ2 V1 Ds T1 2 प्रयच्छेल् ( foi दापयेल् ) K1 सती ( for तत ) —( L 370 ) D5 T1 4 G3 M4 ऋच्छति ( for इच्छती ) —( L 371 ) K1 4 V B1 2 Dn D4 5 श्रुतवाक्याच्, K2 पिक°, D3 शुभ°, G2 श्रुतवर्याच् ( for शुकवाक्याच् ) T1–3 G1 3–5 M4 शुभ( T1 °क )वाक्याच्च माधुर्यं ( for ᵃ ) K1 4 जायते ( K4 भवेच्च ) वरवर्णिनि ( for ᵇ ) —( L 372 ) M4 -गुल्फौ ( for -गुल्फ- ) T1 दृढमल्पं शिर पादाव् ( for ᵃ ) K1 2 D3 4 इच्छन्ती, G5 इच्छेद्या ( for इच्छन्त्या ) —( L 373 ) K1 षष्ठ्यान्तर-, T G3–5 M4 षष्ठ्यां चैव ( for षष्ठ्या षष्ठ्या ) K1 3 4 V B Ds1 D1 4–6 G1 2 M4 भोक्तव्यं सलिलौदनम्, K2 Dn Ds2 D2 T1 2 4 G3 4 °व्यं सलिलोदनम्; V3 B3 D6 °व्य सलिलोदन ( for ᵇ ) —( L 374 ) K2 Ñ2 V1, 3 B1 3 Ds D2 5 6 T G M3 सदा पदा ( by transp ), K4 सदा तया —( L 375 ) Ñ2 V2 Dn2 Ds1 यदा पदा ( by transp ) K2 D4 6 स्पृशेत्तं चापि शिरसा ( for ᵃ ) K4 D1 3 वन्देत्तं, T1–3 G3–5 M4 साध्वी तु ( for वन्देत ) —( L 376 ) V3 B D6 पादेन न च वै पादं, T1–3 G1 3–5 M4 हस्ते( T2 पादे )-न चैव ( G3 °नैव च ) तत्पादौ, T4 पदे च चैव पादौ च ( for ᵃ ) —( L 377 ) G4 एवं ( for एतैर् ) V1 स्त्री सदा ( for धर्मज्ञा ) —( L. 378 ) Ñ2 T1 G3 रूप्य- ( for रुक्म- ). K2 पतिव्रता —Ñ2 om line 379 —( L 379 ) K3 Dn D3 वराय, K4 धीराय, D1 धारयेद्, D3 दाप° ( for वाच° ) T1–3 G1 3–5 M4 तौ चा( G5 M4 ताव )र्चयित्वा श्रेष्ठाय ( for ᵃ ) D6 T1 3 4 G1, 3–5 M4 घृतेन वै ( for घृतेऽनघे ) —( L 380 ) K1 4 दद्याद् ( for कृत्वा ) T1 3 G1, 4 5 M4 पद्मैश्चाधोमुखै कृत्वा ( for ᵃ ) K3 नन्दिनीम्, V2 भाविनी, D2 तद्दिने ( for नन्दिनि ) —( L 381 ) K1 रत्नैर् ( for रक्तैर् ) G2 दिव्यैर् ( for द्र° ) K2 मर्दयित्वा, K4 D4 G2 मुद्र°, Ñ2 मण्ड°, V1 2 T4 म्रक्ष°, D3 म्लक्ष°, D6 अर्च° ( for मिश्र° ) D5 रक्तैर्दिव्यैर्मर्द( marg °मुद्र )यित्वा ( foi ᵃ ) T4 चन्दनेन ( foi काञ्च° ) V3 B3 D6 स्वलंकृते ( for [अ]भ्यल° ) —T4 om line 382 —( L. 382 ) T1–3 G1 3–5 M4 गात्रं या ( by transp ) T1 2 G4 वाञ्छन्ती सु-, T3 G1 3 5 M4 वाञ्छती सु- ( for इच्छत्यति ) K2 V1 -मनोरमम्, T1 G3 °हरा ( for °हरम् ) —( L 383 ) G2 कृत्वा तु ( for करोतु ) —D3 om ( hapl ) lines 384–387 —( L 384 ) K4 D4 कार्तिक्याम् ( for कौमुद्याम् ) Ñ2 V2 D2 5 6 T2 4 षष्ठ्या ( for [आ]षाढ्यां ) T1–3 G1 3–5 M4 माघे तु ( for माघ्यां च ) K2 4 V1 3 B1 2 D2 6 T4 [आ]श्वयुजीं ( for °युजे ) —( L 385 ) K3 Dn Ds ऽतिथि-, Ñ2 पति-, V3 B2 3 ऽपि च, D4 5 G2 त्वधि- ( for यदि ) D1 देववत्; T2 3 G1 4 M4 देवताम् ( for दैवतम् ) —( L 388 ) Hypermetric V3 B2 D6 T2 उपलेप च धर्मज्ञा ( T2 °ज्ञे ) ( for ᵃ ) K3 4 D3 भामिनि; B3 नारद ( for मानिनि ) —( L 389 ) K3 वाग्दुष्टे; V3 वाग्भूषा ( for वाग्दुष्टा ) D2 सा सुभ्रु, D3 भवतु, G5 M4 अशुभा ( for मा शुभ्रे ) T2 3 G1 4 वर्षाश्चैवं शुभाः कृत्वा ( for ᵃ ) K2 भव तत्त्वार्थपण्डिता, D2 सा भवत्यर्थप°, D3 भवत्येवाथ प°, T2 3 G1 3–5 M4 कृत्वात्मान( G5 °र्थे )मप° ( for ᵇ ) —( L 390 ) K3 V1 2 B2 3 D1, 2 5 6 T2–4 G2, 4 मा ( for सा ) K1 3 4 Dn Ds दासं ( sic ), K2 D2, 4 सायं, V1, 3 मासं ( for शाकं ) —( L 391 ) K1 बलिं

बलि सृजत्वतथ्यं च परित्यजतु भामिनि ॥
बान्धवान्सगुणानिच्छेदेकभक्तेन नित्यदा ।
सप्तमीं सप्तमीं नित्यं क्षपेत्स्त्री पतिदेवता ॥
ततः संवत्सरे पूर्णे वृक्षं दद्याद्धिरण्मयम् ।
सदक्षिणं ब्राह्मणाय शुभबन्धुमती भवेत् ॥ [ 395 ]
करञ्जे दीपकं दद्यात्सदा या प्रमदा वरे ।
पूर्णे संवत्सरे दद्यात्सौवर्णं दीपकं तथा ॥
रुच्या सा स्त्री भवेद्भर्तुरिष्टा पुत्रवती तथा ।
सपत्नीनामधि तथा दीपवज्ज्वलते शुभे ॥
या शेषभोजिनी नित्यं नैव च स्यादरुंतुदा । [ 400 ]
न च स्याद्व्यशना सौम्ये नित्यं च पतिदेवता ॥
शौचान्विता च सततं न च रूक्षाभिभाषिणी ।
श्वश्रूश्वशुरयोर्नित्यं शुश्रूषानिरता सती ॥
किं तस्या व्रतकैः कार्यं किं वा स्यादुपवासकैः ।
या भर्तृदेवता नित्यं सत्यधर्मगुणान्विता ॥ [ 405 ]
विधवा स्त्री तु या हि स्याद्दैवयोगात्सती सति ।
तस्या वक्ष्यामि यो धर्मः पुराणोक्तः सुमध्यमे ॥
पतिं संकल्पयित्वा सा चित्रस्थं वाथ मृन्मयम् ।
तस्य पूजां सदा कुर्यात्सतां धर्ममनुस्मरेत् ॥
तत एवाभ्यनुज्ञां च नित्यं याचेत सुव्रता । [ 410 ]
व्रतके चोपवासे च भोजने च विशेषतः ॥
भर्तृलोकान्व्रजत्येवं न चेद्व्युच्चरते पतिम् ।
शाण्डिली सूर्यवद्भाति सततं पतिदेवता ॥
अद्यप्रभृति सर्वेषां देवानां चैव योषितः ।

---

सृजत्यतथ्य च, $V_3$ बलिं सृजतु तथ्य च, $B_2$ सृज त्वं तथ्यं त्र बलिं, $D_6$ ( marg ) बालि सृजे तथात्यर्थम्; $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ बलिं सृजेत मिथ्यां च, $T_4$ बलिं सृजेच्च तीर्थं च ( for $^{a}$ ) — After line 391, Dn Ds Bom Poona eds G(ed) ins an addl colophon [ *Mention of the Epic* $Ds_2$ — *Mention of Khila*: Ds — *Sub-parvn* Dn Ds पारिजात — *Adhy name* Dn Ds व्रतकविधानम् — *Adhy no* Dn $Ds_2$ 135 ] — Before line 392, some Mss ins उमोवाच — ( L 392 ) $T_4$ ब्राह्मणान् ( for बान्धवान् ). $K_4$ $V_2$ भुक्तेन ( for -भ° ) $V_1$ कर्मणा, $D_3$ नित्यश ( for °दा ) — ( L 393 ) $D_2$ च क्षिपेन् ( for the second सप्तमी ) $V_3$ प्राप्य ( for नित्यं ). $V_{1\ 3}$ $B_{1.3}$ $D_6$ $T_2$ क्षपयेत्स्त्री ( $V_1$ °पेत स्त्री, $V_3$ °पेत्स्त्री च ) पतिव्रता ( for $^{b}$ ) — $T_{2\ 3}$ $G_{1\ 4}$ om ( hapl ) lines 394–401 — ( L 395 ) $D_3$ सा तु, $G_3$ बहु- ( for शुभ ) — ( L 396 ) $K_{1\ 4}$ $D_2$ $T_1$ करञ्ज-, $D_3$ वरं च, $G_2$ करण्डे ( for करञ्जे ) K $D_4$ चरेत्, $G_5$ परे ( for वरे ) — After line 396, $Ds_1$ ins an addl. colophon mentioning adhy no 135 — ( L 398 ) $K_2$ तुष्टा सा स्त्री, $V_3$ $B_{2\ 3}$ $D_6$ दीपभूता, $D_5$ सेव्या सा स्त्री ( for रुच्या सा स्त्री ). $T_{1\ 4}$ $G_{3\ 5}$ भवेत् ( for तथा ) — ( L 399 ) $K_2$ $D_4$ सदा मध्ये, $T_1$ $G_{3\ 5}$ $M_4$ अभिमता ( for अधि तथा ) — ( L 400 ) $K_4$ $Dn_2$ $Ds_2$ $D_{5\ 6}$ -भोजनी ( for -भोजिनी ) $T_1$ देवदेवस्य धर्मयुक्, $G_3$ नैव च स्यादमर्मयुक्, $M_4$ नैव यस्मादधर्मयुक् ( for $^{b}$ ) — ( L 401 ) $T_1$ $G_{3\ 5}$ $M_4$ न च दुर्वासनाक्रान्ता ( for $^{a}$ ) — ( L 402 ) $K_1$ शोभान्विता ( for शौचा° ) $K_1$ -काङ्क्षिणी, $V_2$ -भाविनी ( for -भाषिणी ) — ( L 403 ) $D_6$ om ( hapl ) lines $403^{b}$–$405^{a}$. $\tilde{N}_2$ $Dn_2$ $D_{4\ 5}$ शुश्रूषाभिरता सती, $T_{1-3}$ $G_{1\ 3\ 5}$ $M_4$ °नियता सती, $T_4$ °नियतां सतीम् ( for $^{b}$ ) — ( L 404 ) $B_2$ कृत्यं ( for कार्यं ) — ( L 405 ) $V_1$ या च, $Dn_1$ सत्यं; $D_3$ $T_{2\ 3}$ $G_{1\ 4}$ सर्व ( for सत्य- ). — After line 405, $Ds_1$ ( marg. ) ins

4** या योनिमिच्छते नारी शुभां सकुचितामपि ।
कृष्णां चतुर्दशीं सा तु संवत्सरमुपोष्य च ॥
दद्याद्धैममयीं योनिं दधिपूर्णां द्विजन्मने ।
मुक्तायुग्मेन संयुक्तां शुभा योनिं लभेत्ततः ॥

— $K_3$ om line 407 — ( L 407 ) $D_3$ धर्मास्ते; $G_2$ ये धर्मा. ( for यो धर्म ) $V_3$ $B_{2\ 3}$ $D_6$ शुचिस्मिते ( for सुमध्यमे ). — ( L 408 ) $K_3$ [अ]सौ, $G_4$ तु ( for सा ) $\tilde{N}_2$ om वा. $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ हिरण्मयम् ( for [अ]थ मृ° ). $K_3$ चित्रसस्थ वा मृण्मयम् ( for $^{b}$ ) — ( L 409 ) $D_{4\ 5}$ तस्य पूजा सदा कार्या ( for $^{a}$ ) $\tilde{N}_2$ $D_{3-5}$ सती, $K_2$ $V_3$ $T_2$ $G_{1\ 4\ 5}$ $M_4$ सदा, $D_2$ सत्यं ( for सता ) — ( L. 410 ) $T_2$ नित्यं याचेत्तदादृता ( for $^{b}$ ) — ( L 412 ) $Dn_2$ $D_5$ $T_1$ भर्तुर्लोकान्व्रजत्येव ( for $^{a}$ ). $K_4$ उद्विजते, $V_{2.3}$ $B_3$ अतिक्रमेत्, $B_2$ अतिचरेत्, $D_{3-5}$ उच्चरते ( for व्युच्च° ). $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ न चैवातिचरेत्पतिम् ( for $^{b}$ ) — ( L. 413 ) $G_2$ तेजिष्ठा ( for शाण्डिली ). — ( L. 414 ) $D_3$ देवानां ( for सर्वेषां ). $K_{1\ 2\ 4}$ $V_1$ $D_{1\ 2.4}$ ( marg as above ) $_5$ $G_2$ यत्नत., T $G_{1\ 3-5}$ $M_4$ पत्नय ( for योषित ). $\tilde{N}_2$ देवतानां च योषित, $D_3$ सर्वेषां चैव यत्नतः ( for $^{b}$ ). — ( L 415 ) $G_3$ om ( hapl ) lines $415^{b}$–$421^{a}$. $K_2$ नित्यमेव सनातना, $K_4$ पौराणां ये सनातना; $D_1$ ( marg as above ) °णे सततं नरा., $D_3$ पुराणोक्तं सनातनम्, T $G_{1.\ 4\ 5}$ पौराणा ये सनातनाः; $M_4$ °णा यं सनातनम् ( for $^{b}$ ).

द्रक्ष्यन्ति पुण्यकविधिं पौराणो यः सनातनः ॥ [ 415 ]
मुनिश्च नारदः कृत्स्नं पौराणं ज्ञास्यते विधिम् ।
उपवासस्य धर्मात्मा व्रतकानां तथैव च ॥
अदितिश्चापि सेन्द्राणी त्वं च सोमसुते वरे ।
प्रवर्तने व्रतकानां पुण्यकानां च सर्वदा ।
कीर्तनीयाः सतीनां हि भविष्यथ गुणान्विताः ॥ [ 420 ]
उपवासव्रतविधिं यथावदिह कृत्स्नशः ।
प्रादुर्भावेषु सर्वेषु विष्णोर्भार्या महात्मनः ।
ज्ञास्यन्ति पुण्यकविधिं नित्यमेव सनातनम् ॥
सविशेषं च धर्माणां स्त्रीधर्मेषु प्रशस्यते ।
पतिभक्तिरदुष्टत्वमवाग्दुष्टत्वमेव च ॥ [ 425 ]

नारद उवाच ।

एवमुक्तास्तु ताः साध्व्यो महादेव्या तपोधनाः ।
जग्मुर्हृष्टा महादेवीं प्रणिपत्य हरप्रियाम् ॥
अदितिर्व्रतकं चक्रे शृणु यद्धर्मचारिणी ।
उमाव्रतविधिः सर्वः पूर्वोद्दिष्टस्तया कृतः ॥
पारिजाते निबध्याथ मम दत्तस्तु कश्यपः । [ 430 ]
अदितिव्रतकं नाम तद्दत्तं सत्यभामया ॥
तदेव व्रतकं दत्तं सावित्र्या धर्मनित्यया ।
तैरेव युक्तैः संयुक्तमिदं त्वभ्यधिकं कृतम् ॥
संध्याकाले च संप्राप्ते स्थाने स्थाने तथैव च ।
पूजनं वा नमस्कारो जपश्च द्विगुणः स्मृतः ॥ [ 435 ]
सावित्र्या व्रतकं कृत्वा तथादित्या व्रतं सती ।
भर्तुः कुलं पितृकुलं तथात्मानं च तारयेत् ॥
इन्द्राणी व्रतकं चक्रे तथैवोमा यथाविधि ।
रक्तमभ्यधिकं वासो भोजनं चैव सामिषम् ॥
चतुर्थे दिवसे चापि पुण्यकार्थविधिः पुनः । [ 440 ]
अहोरात्रोपवासश्च देयं कुम्भशतं तथा ॥
गङ्गया व्रतकं दत्तं तदेवौमं यशस्करि ।
स्नानमभ्यधिकं कार्यं प्रत्यूषस्यात्मनो जले ॥
अन्यत्र वा जले माघशुक्लपक्षे हरिप्रिये ।
एतद्गङ्गाव्रतं नाम सर्वकामप्रदं स्मृतम् ॥ [ 445 ]

---

— ( L 416 ) $V_2$ युज्यते ( for ज्ञास्यते ). — ( L 417 ) $K_{1 3 4}$ धर्माणां ( for °त्मा ) $M_4$ च सर्वदा ( for तथैव च ). — $M_4$ om lines 418–419 — ( L 419 ) $K_2$ प्रवर्तिनी ( for °र्तने ) $V_{2 3}$ $B_{2 3}$ $T_{1-3}$ $G_{1 4 5}$ पुण्यकानां ( for व्रत° ) $D_6$ प्रवर्तके पुण्यकाना ( for $^a$ ) $V_3$ $B_{2 3}$ $D_6$ $T_{1-3}$ $G_{1 4}$ व्रतकानां तथैव च ( for $^b$ ). — ( L 420 ) $D_3$ भविष्यन्ति ( for °ष्यथ ) — ( L 421 ) $B_{2 3}$ $D_6$ ज्ञास्यथापि च कृत्स्नशः ( for $^b$ ). — ( L 422 ) $T_4$ पुण्यकानां महात्मनाम् ( for $^b$ ) — $G_3$ om lines 423–426 — ( L 423 ) $D_1$ द्रक्ष्यन्ति; $G_{1 5}$ ज्ञास्यन्ते ( for °न्ति ) — ( L 424 ) $V_3$ $B_{2, 3}$ $D_6$ विशेषधर्मो धर्माणां ( for $^a$ ) $D_3$ स्त्रीधर्मस्तु ( for °र्मेषु ) $D_1$ विशिष्यते ( for प्रशस्यते ). — ( L 425 ) $K_4$ $D_1$ $T_{1, 3, 4}$ वागदुष्टत्वम् ( for अवाग्दु° ) — After line 425, $D_{s1}$ ( marg ) ins :

5** या पतिं दूषयेन्नारी दुष्टैर्वाक्यैश्च नीचवत् ।
सा याति नरकान्घोरान्यावत्तपति भास्करः ॥
भोजनं कुरुते या तु अग्रतो भर्तुरेव च ।
यावन्ति पांशवो भूमौ तावद्वर्षाणि वल्गुली ॥

— $G_2$ om the ref — $G_2$ om lines 426–428 — ( L 426 ) $V_2$ $B_2$ $D_6$ देव्यो; $V_3$ $B_3$ देव्या, T $G_{1 4 5}$ $M_4$ सर्वा ( for साध्व्यो ). — ( L 427 ) $\tilde{N}_2$ नमस्कृत्य ( for प्रणिपत्य ). — ( L 428 ) $K_3$ तु व्रतं ( for व्रतकं ). $K_3$ श्रुत्वा सद्धर्मचारिणी ( for $^b$ ). — Before line 429, $G_2$ ins. नारदः — ( L 429 ) $K_4$ पूर्वं दृष्टस् ( for पूर्वोद्दिष्टस् ) — $D_s$ om lines 430–431 — ( L 430 ) $K_4$ पारिजातेन बध्वा तु ( for $^a$ ) — ( L 431 ) $K_3$ श्रुत्वा, $D_4$ ( *sup. lin* ) कृत्वा ( for नाम ) $K_3$ तद्वृत्तं, $D_2$ मे दत्तं, $D_5$ ( before corr ) मद्दत्तं, $G_1$ तदिदं ( for तद्दत्तं ) — $D_2$ om lines 432–434 B $T_3$ om line 432. — ( L 433 ) $D_3$ मन्त्रै, $T_{1-3}$ $G_{1 5}$ $M_4$ युक्तं, $T_4$ युक्तः ( for युक्तै ) $D_1$ तैरेव युक्त संयुक्त; $G_3$ तैरेव दत्तं संयुक्तम् ( for $^a$ ) — ( L 434 ) $G_2$ जप- ( for the first स्थाने ) $T_{2 3}$ $G_{1 3 4}$ स्थितानि ( for तथैव ) — ( L 435 ) $K_1$ पूजितं वा, $V_3$ पूजां चाथ, $B_1$ मौन चाथ ( for पूजनं वा ) $D_5$ $T_4$ जपश्च द्विगुणं कृ( $T_4$ स्मृ )तम् ( for $^b$ ). — ( L 436 ) $B_{2 3}$ $D_{n2}$ $D_{5 6}$ $T_1$ $G_{2 5}$ $M_4$ सावित्री-; $T_2$ सादित्या ( for सावित्र्या ) $K_3$ चक्रे; $D_4$ दृष्ट्वा ( for कृत्वा ) $K_8$ om ( hapl ) lines 436$^b$–438$^a$ $D_5$ [अ]दिति- ( for °त्या ) — ( L 437 ) $T_{1-3}$ $G_{1 3}$ $M_4$ [आ]त्मनश् ( for [आ]त्मानं ) — ( L. 438 ) $V_{1 2}$ B $D_n$ $D_s$ $D_6$ $M_4$ तदेवौमं $V_3$ तथैवौमं, $D_4$ तद्वद्गोर्धं, $D_5$ तद्वद्धोमं, $G_5$ तथैवोमं ( for °वोमा ) — ( L. 440 ) $K_4$ प्राप्ते ( for चापि ) $K_4$ पुण्यकार्थो विधिः स्मृत ( for $^b$ ) — ( L 442 ) $K_2$ $D_5$ सहोमं च, $K_4$ तदेवं मे, $D_3$ तदेवेदं ( for तदेवौमं ) $G_{1 5}$ $M_4$ यथाविधि ( for यशस्करि ) $D_1$ तदेवेमं यशस्करम्, $D_4$ सहोमं च यथाविधि, $T_{1-3}$ तथैवौमं ( $T_1$ °था कामं ) यशस्करम् ( for $^b$ ) — ( L 443 ) $K_3$ कृत्वा; $D_n$ $D_s$ त्वत्र ( for कार्यं ). — ( L. 445 ) $D_1$

सप्त सप्त च सप्ताथ कुलानि हरिवल्लभे ।
स्त्री तारयति धर्मज्ञा गङ्गाव्रतकचारिणी ॥
देयं कुम्भसहस्रं तु गङ्गाया व्रतके शुभे ।
तारणं पारणं चैव तद्व्रतं सार्वकामिकम् ॥
यमभार्या चकाराथ व्रतं यामरथं शुभम् । [ 450 ]
हेमन्ते तत्तु कर्तव्यमाकाशे हरिवल्लभे ॥
इमानि चैव वाक्यानि ब्रूयादाकाशमास्थिता ।
स्नाता शुचिसमाचारा नमस्कृत्य पतिं शुभे ॥
चराम्यहं यामरथं हिमं पृष्ठेन धारये ।
पतिव्रता जीवपुत्रा भवेयं च पुरोधिका ॥ [ 455 ]
सपत्नीश्चाधितिष्ठेयं पश्येयं चैव मा यमम् ।
सभर्तृपुत्रा जीवेयं चिरं सुसुखमेव च ॥
पतिलोकं च गच्छेयं भवेयं नन्दिनी तथा ।
सुचेला मृष्टहस्ता च स्वजनेष्टा गुणान्विता ॥
एवं कृत्वा ततो विप्रं मधुना स्वस्ति वाचयेत् । [ 460 ]
तिलैरपि तथा कृष्णैः पायसेन तु भोजयेत् ॥

एवं व्रतानि देवीभिः कृतान्यमरवर्णिनि ।
महादेव्या पुरोक्तानि रुद्रपत्न्या हरिप्रिये ॥
अहं ब्रवीमि तपसा मदीयेन समन्विता ।
सर्वा द्रक्ष्यथ पुण्यानि व्रतकानि तथैव च ॥ [ 465 ]
पौराणान्युमया देव्या यानि दृष्टानि वै पुरा ।
कल्याणगुणयुक्तानि पावनानि शुभानि च ॥

वैशंपायन उवाच ।

रुक्मिणी व्रतकं चक्रे दृष्ट्वा व्रतकविस्तरम् ।
उमाया वरदानेन दृष्ट्वा दिव्येन चक्षुषा ॥
उमाव्रतेषु सर्वेषु वृषदानं तथाधिकम् । [ 470 ]
रत्नमालाप्रदानं च तथान्नं सार्वकामिकम् ॥
तथा जाम्बवती चक्रे पुरोमाव्रतकं तथा ।
ददावभ्यधिकं सा तु रत्नवृक्षं मनोहरम् ॥
सत्या ददौ तथैवाथ पुरोमाव्रतकं यथा ।
पीतमभ्यधिकं वासस्तया दत्तमुमाव्रते ॥ [ 475 ]
रोहिण्याथ च फाल्गुन्या मघया च पुरातने ।

---

$T_{2,3}$ $G_{1\ 2\ 4}$ शुभम् ( for स्मृतम् ) — ( L 446 ) $T_{1\ 3}$ $G_{1\ 3-5}$ $M_4$ सप्तानि ( for °थ ) — $G_2$ om ( hapl ) lines $445^b$–$450^a$ $\tilde{N}_2$ om ( hapl ) lines 447–451 — ( L 447 ) $T_{1\ 4}$ $M_4$ धारयति ( for तार° ) $K_2$ $T_4$ धर्मात्मा ( for धर्मज्ञा ) $T_2$ स्त्री धारयन्ती धर्मज्ञे ( for $^a$ ) $K_1$ या गङ्गाव्रतचारिणी ( for $^b$ ) — T $G_{1\ 3-5}$ $M_4$ G(ed) om ( hapl ) lines 449–453 $K_3$ om line 448 — ( L 449 ) $V_{1,3}$ पावनं ( for पारणं ) $D_4$ ( marg as above ) भजनं ( for तद्व्रतं ) $V_1$ -कामदम् ( for -कामिकम् ) — ( L 450 ) $B_3$ व्रतं यामं यशस्करम् ( for $^b$ ) — ( L 452 ) $D_{3-5}$ जपेद् ( for ब्रूयाद् ) — ( L 453 ) K $\tilde{N}_2$ $V_1$ $B_2$ Dn Ds $D_{1-5}$ स्नात्वा ( for स्नाता ) — ( L 454 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ हिमपृष्ठगतां ( $T_1$ °तं ) शुभे ( for $^b$ ). — ( L 456 ) $T_3$ $V_2$ सपत्नीभ्यो, $D_3$ °त्नीनाम्, $G_2$ °त्नीषु ( for °त्नीश्च ) Dn Ds सपत्नीराधितिष्ठेयं ( for $^a$ ) $T_4$ माधवम् ( for मा यमम् ). $D_{3-5}$ पश्येयं मा यमालयम्, $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ पश्येयं चाप्यनामयम् ( for $^b$ ). — ( L 457 ) $D_5$ सुसुखं चिरमेव च ( for $^b$ ) — ( L 458 ) $\tilde{N}_2$ $B_{2\ 3}$ $D_6$ धनिनी ( for नन्दिनी ) $T_{1-3}$ $G_{3\ 4}$ $M_4$ भवेयं नातिदीनताम् ( $M_4$ °ता ), $G_5$ °यं चाप्यनिन्दिता ( for $^b$ ) — ( L 459 ) $K_{1\ 3}$ $T_3$ सुचेष्टा, $K_4$ $D_5$ सुवेषा, $D_1$ सुखेष्टा, $D_2$ सुबला ( for सुचेला ) $D_3$ मृदु- ( for मृष्ट- ) $T_2$ सुचेलां मृष्टहस्तां च ( for $^a$ ). $K_{1\ 4}$ स्वजनेऽथ, $D_2$ °नेष्ट-, $D_{4\ 5}$ °नेभ्यो ( for °नेष्टा ). — ( L 460 ) $K_2$ दत्त्वा, $K_3$ Ds $D_{1\ 2.5}$ नत्वा, $D_3$ जप्त्वा ; $T_{2-3}$ $G_{1\ 3-5}$ $M_4$ उक्त्वा ( for कृत्वा ). $D_6$ विप्रैर् ( for विप्र ) $K_2$ $D_{3\ 4}$ $T_{2\ 3}$ $G_{1\ 3\ 5}$ $M_4$ मधुरं, $D_{1,5}$ ( marg ) साधुना ( for म° ) — ( L 461 ) $T_{1-3}$ $G_{1,3-5}$ $M_4$ अपि मुद्गैश्च भोजयेत् ( for $^b$ ) — ( L. 462 ) $K_{1\ 2\ 4}$ $\tilde{N}_2$ $D_{3\ 5}$ वर ( for [अ]मर- ) — ( L 465 ) Bom Poona eds G(ed) गुण्यानि ( for पु° ) — ( L 466 ) $K_2$ $D_{4,5}$ संनिर्दिष्टानि वै पुरा ( for $^b$ ) — ( L 467 ) $Dn_1$ कल्याणयुक्तानि तथा ( for $^a$ ) — ( L 468 ) $T_{2\ 3}$ $G_{1\ 4\ 5}$ श्रुत्वा ( for दृष्ट्वा ) $V_2$ सा व्रत, $B_1$ [उ]माव्रत- ( for व्रतक- ) — ( L 469 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ उमया च कृतं दृष्ट्वा ( for $^a$ ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ साध्वी ( for दृष्ट्वा ) — ( L 470 ) $V_{2\ 3}$ $B_{2\ 3}$ $D_6$ उमाव्रतकवत्सर्वं ( for $^a$ ) $K_1$ $T_3$ व्रत- ( for वृष- ). — $T_4$ om ( hapl ) line 471 — ( L 471 ) $\tilde{N}_2$ -माल्य- ( for -माला- ) — ( L 472 ) $V_1$ तदोमा-, $D_1$ पुलोमा- ( for पुरोमा- ) $D_5$ $T_1$ पुलोमाव्रतकं तथा ( for $^b$ ). — ( L 473 ) $D_2$ सार्धं ; $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ वासः, $G_2$ चापि ( for सा तु ) $T_1$ $G_3$ सा तु रक्तं, $T_{2\ 3}$ $G_{1\ 4}$ सा तु रत्नं ( for रत्नवृक्षं ) $K_1$ $D_6$ मनोरमम् ( for °हरम् ). $G_5$ $M_4$ सा तु रत्नं मनोहरा ( for $^b$ ) — ( L 475 ) $T_4$ महाव्रते ( for उमा° ). — ( L 476 ) $K_2$ माघ्यां चाथ ; $D_1$ मघायां च, $T_2$ $G_{1\ 4}$ माघेया च ( for मघया च ) — ( L 477 ) $D_1$ रत्नानि, $D_4$ दानानि ( for व्रतानि ) $D_5$ ( marg ) रत्नानि खलु दिव्यानि ( for $^a$ ) $D_6$ $G_5$ कुरुनन्दन ; $T_{1\ 3}$ $G_{1\ 3}$ कुरुवर्धन ( for कुलवर्धने ).

व्रतानि खलु दत्तानि बहूनि कुलवर्धने ॥
ददौ शतभिषा चैव व्रतकं पुण्यलक्षणम् ।
येन नक्षत्रमुख्यत्वं जगाम कुरुनन्दन ॥

Colophon.

29B

K Ñ$_2$ V B D T G $M_4$ cont

जनमेजय उवाच ।

वैशंपायन धर्मज्ञ व्यासशिष्य तपोधन ।
पारिजातस्य हरणे षट्पुरं परिकीर्तितम् ॥
निवासोऽसुरमुख्यानां दारुणानां तपोधन ।
तेषां वधं मुनिश्रेष्ठ कीर्तयस्वान्धकस्य च ॥

वैशंपायन उवाच ।

त्रिपुरे निहते वीरे रुद्रेणाक्लिष्टकर्मणा । [ 5 ]
तत्र प्रधाना बहवो बभूवुरसुरोत्तमाः ।
शराग्निना न दग्धास्ते रुद्रेण त्रिपुरालयाः ।
षष्टिः शतसहस्राणि न न्यूनान्यधिकानि च ।
ते ज्ञातिवधसंतप्ताश्चक्रुर्वीराः पुरा तपः ।
जम्बूमार्गे सतामिष्टे महर्षिगणसेविते ॥ [ 10 ]
आदित्याभिमुखा वीराः सहस्राणां शतं समाः ।
वायुभक्षा नृपश्रेष्ठ स्तुवन्तः पद्मसंभवम् ॥
तेषामुदुम्बरं राजन्गण एकः समाश्रितः ।
वृक्षं तत्रावसन्वीर ते कुर्वन्तो महत्तपः ॥
कपित्थं वृक्षमाश्रित्य केचित्तत्रोषिताः पुरा । [ 15 ]
सृगालवाटी त्वपरे चेरुरुग्रं तथा तपः ॥
वटमूले तथा चेरुस्तपः कौरवनन्दन ।
अधीयन्तः परे ब्रह्म वटं गत्वासुरात्मजाः ॥
तेषां तुष्टः प्रजाकर्ता नरदेव पितामहः ।
वरं दातुं सुरश्रेष्ठः प्राप्तो धर्मभृतां वरः ॥ [ 20 ]

---

—(L 478) $T_{1\ 2}$ $G_{1\ 3-5}$ $M_4$ शतभिषक् ( for °भिषा ). $D_4$ व्रतकं पुण्यकं तथा, $T_{2\ 3}$ $G_{1\ 4\ 5}$ $M_4$ व्रतं पुण्यकलक्षण( $G_5$ °वर्धन )म् ( for $^b$ ) —(L 479) $D_{1\ 5}$ कुलनन्दिनी°, $D_{2,\ 8}$ कुलनन्दन ( for कुरु° ) — After line 479, $D_4$ ins

6** उमामहेश्वरं दानं कार्यं सर्वव्रताशने ।
कपिलागोप्रदानेन विवाहे नीलमुत्सृजेत् ॥
सर्वैरेवासहेन्द्रश्च (sic) उमा वै रुद्रसंयुता ।
स्वे स्थानेन गता राजन्विष्णोर्व्रतकशासनात् (sic) ॥

Colophon — *Mention of the Epic* $K_{2-4}$ $V_{1,\ 2}$ $Ds_2$ $D_{3\ 5}$ $T_3$ — *Mention of Khila* $K_{2-4}$ V B Dn Ds $D_{1\ 3\ 5}$ — *Adhy name*. K Ñ$_2$ V $B_{1\ 2}$ Dn Ds $D_{1-3\ 5\ 6}$ उमाव्रतकम्, $B_3$ पारिजातहरणम्; $T_{1\ 2,\ 4}$ $G_{1,\ 4}$ पुण्यकविधि., $G_3$ पुण्यकविधिवर्धनम् — *Adhy no.*: $K_3$ ( marg ) 134, $V_1$ 140, $V_3$ $B_2$ 138, Dn $Ds_2$ 136, $D_1$ 132, $D_3$ $T_4$ 145, $D_4$ 135, $T_1$ $G_{3\ 4}$ $M_4$ 149, $T_2$ $G_1$ 151, $T_3$ 158, $G_2$ 140, $G_5$ 152

**29 B**

(L 4) $D_3$ युद्धं ( for वधं ). —(L 5) $K_{3\ 4}$ $D_{1-4}$ $T_{1-3}$ $G_{1\ 4}$ $M_4$ वीर, $B_1$ दैत्ये ( for वीरे ). —(L 6) $K_{1\ 4}$ नानायुधाश्च बहवो, $K_3$ अयुध्यमाना ब°, Cal ed तत्रायुधाना ब° ( corrupt ) ( for $^a$ ) $K_4$ बभूवुरमरोपमाः ( for $^b$ ) —(L 7) $D_1$ $G_2$ निर्दग्धास्तु; $D_3$ प्रदग्धास्ते ( for न द° ) $V_2$ $D_4$ त्रिपुरालये, $T_3$ °लयम् ( for °लया ) —(L 8) $K_{1,\ 3\ 4}$ Ñ$_2$ V $B_{1\ 2}$ Dn $D_{1\ 6}$ $T_4$ $G_2$ षष्टिं ( for षष्टिः ) $K_2$ $D_4$ दैत्य- ( for शत- ) $B_1$ $D_1$ $T_{2\ 3}$ $G_{1\ 4}$ भोः ( for च ) $D_3$ $D_4$ $T_4$ $G_2$ न न्यूनाभ्यधिकानि भो ( $D_4$ ते, $G_2$ वै ) $D_2$ मन्युनाभ्यधिका विभो, $T_1$ $G_3$ न न्यूनानधिकानि भोः ( for $^b$ ) —(L 9) Ñ$_2$ -बन्ध- ( for -वध- ) $K_{1\ 3\ 4}$ Dn $D_5$ वीर ( for वीरा ) $V_1$ $D_3$ महत्तप, $V_2$ $B_1$ $G_2$ तदा तप, $D_{1\ 4}$ पर तप., $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ प्रदाश्रिणम् ( for पुरा तप. ) $D_2$ चक्रुर्घोरा परं तप ( for $^b$ ) — $K_2$ om lines $10^b$–$12^a$ —(L 12) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ निराहाराः ( for नृपश्रेष्ठ ) —(L 13) Ñ$_2$ उदुम्बरे, $B_3$ उडुम्बर, $T_2$ औदु° ( for उदु° ) $V_1$ गणम् ( for गण ) $B_3$ सहाश्रित ( for समा° ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ गणा एके समाश्रिताः ( for $^b$ ) —(L 14) Ñ$_2$ $V_{2\ 3}$ B $Dn_1$ Ds $D_{1\ 3\ 6}$ $T_{1-3}$ G वीरास् ( for वीर ) $K_4$ $D_6$ महातपः ( for महत्तप. ) — $K_4$ $B_3$ $G_4$ om ( hapl ) lines 15–16. —(L 15) $K_{1\ 3}$ Ñ$_2$ $B_{1,\ 2}$ Dn $D_{1\ 6}$ $T_{1\ 4}$ $G_{1\ 3\ 5}$ कपित्थ ( for °त्थं ) $T_{2\ 3}$ कपित्थमूलमाश्रित्य ( for $^a$ ) —(L 16) $K_{1-3}$ Ñ$_2$ $Ds_1$ $D_{1\ 2\ 4}$ -वाटीस् ( for -वाटी ) $G_2$ सृगालपादीमपरे, $G_5$ $M_4$ °पादीस्त्वपरे ( for $^a$ ) $V_2$ $G_2$ महत्, $B_1$ $T_3$ तदा ( for तथा ). —(L 18) $G_1$ अधीयन्ते, $M_4$ °यानं ( for °यन्तः ) $V_1$ $Dn_2$ Ds $D_{1\ 2}$ पर, $V_3$ ऽपरे ( for परे ) $K_2$ $T_{1\ 2\ 4}$ $G_{3-5}$ अधीयन्तापरे ब्रह्म ( for $^a$ ) $D_3$ [अ]सुरोत्तमा ( for °रात्मजाः ) $V_3$ तं गत्वा त्रिपुरात्मजा ( for $^b$ ) —(L 19) $K_1$ देवदेव, Ñ$_2$ $Ds_1$ $D_1$ $T_2$ नरदेव ( for °देव ). —(L 21) $V_3$ वरं वरय इत्युक्तास् ( for $^a$ ) —(L 22) $K_2$

वरं वरयतेत्युक्तास्ते राजन्पद्मयोनिना ।
ते नेषुर्वरदानं तु द्विषन्तस्त्र्यम्बकं विभुम् ।
इच्छन्तोऽपचितिं गन्तुं ज्ञातीनां कुरुनन्दन ॥
तानुवाच ततो ब्रह्मा सर्वज्ञः कुरुनन्दन ।
विश्वस्य जगतः कर्तुः संहर्तुश्च महात्मनः । [ 25 ]
कः शक्तोऽपचितिं गन्तुं मास्तु वोऽत्र वृथा श्रमः ॥
अनादिमध्यनिधनः सोमो देवो महेश्वरः ।
तमस्तूय सुखं स्वर्गे वस्तुमिच्छन्ति येऽसुराः ॥
ते नेषुस्तत्र केचित्तु दुरात्मानो महासुराः ।
अथेषुरपरे राजन्नसुरा भव्यभावनाः ॥ [ 30 ]
नेषुर्ये सुदुरात्मानस्तानुवाच पितामहः ।
वरयध्वं वरं वीरा रुद्रक्रोधमृतेऽसुराः ॥
ते ऊचुः सर्वदेवानामवध्याः स्याम हे विभो ।
पुराणि षट् च नो देव भवन्त्वन्तर्महीतले ॥
सर्वकामसमृद्धार्थं षट्पुरं चास्तु नः प्रभो । [ 35 ]
वयं च षट्पुरगता वसेम च सुखं विभो ॥
रुद्राच्च नो भयं न स्याद्येन नो ज्ञातयो हताः ।
निहतं त्रिपुरं दृष्ट्वा भीताः स्म तपसां निधे ॥

पितामह उवाच ।

असुरा भवतावध्या देवानां शंकरस्य च ।
न बाधिष्यथ चेद्विप्रान्सत्पथस्थान्सतां प्रियान् ॥ [ 40 ]
विप्रोपघातं मोहाच्चेत्करिष्यथ कथंचन ।
नाशं यास्यथ विप्रा हि जगतः परमा गतिः ॥
नारायणाद्धि भेतव्यं कुर्वद्भिर्ब्राह्मणाहितम् ।
सर्वभूतेषु भगवान्हितं धत्ते जनार्दनः ॥
ते गता असुरा राजन्ब्रह्मणा ये विसर्जिताः । [ 45 ]
येऽपि भक्ता महादेवमसुरा धर्मचारिणः ॥
स्वयं हि दर्शनं तेषां ददौ त्रिपुरनाशनः ।

---

ते तेपुर्, B1 Dn Ds नेषुस्तद्, D3 ते सर्वे ( for ते नेषुर् ) Cal ed तद् ( for तु ) T1–3 G1 3–5 M4 वरं तु वव्रिरे सर्वे ( for $^{a}$ ) — ( L 23 ) Dn1 om ( hapl ) lines 23$^{b}$–26$^{a}$ K1 T1–3 G3 5 M ज्ञानिना ( for ज्ञातीनां ) — T1 G3 om ( hapl ) line 24 Before line 25, D6 ins ब्रह्मोवाच — ( L 26 ) K3 क शक्तो विग्रहं कर्तुं ( for $^{a}$ ) — ( L 27 ) T2 3 G1 4 अनादिनिधन सोमो ( for $^{a}$ ) G5 सोम- ( for सोमो ) — ( L 28 ) K2 नमस्कृत्य, D1 2 तमाश्रित्य, T2–3 G1 3–5 M4 तं सस्तूय ; Poona ed तमासूय ( for तमस्तूय ) D6 स्वर्गं ( for स्वर्गे ). K3 के, D2 ते ( for ये ) G2 नरा· ( for ऽसुरा· ) G5 वस्तुमिच्छथ हेऽसुरा ( for $^{b}$ ) — T2 3 G1 4 om ( hapl ) lines 29–32 T1 om ( hapl ) line 29 — ( L 29 ) D5 ते नेषुर्वरदानं तु ( for $^{a}$ ) — V3 om line 30 — ( L 30 ) D3 ये च ( for राजन् ). V1 D1 भव-, Ds2 D4 T1 G3 5 M4 भाव्य- ( for भव्य- ) K1 3 4 असुरा हव्यवाहना· ( for $^{b}$ ) — ( L 31 ) K1 ये नेषुश्च, K2 तेपुर्ये तु ; K4 V1 2 B Dn Ds D1 3 4 6 नेषुर्ये तु ( B2 ये ), V3 D5 तेषु ये ये ( D5 वै ), T1 ते नेमुर्ये ; G3–5 M4 ते नेषुर्ये ( for नेषुर्ये सु- ) G2 -महात्मानस् ( for -दुरा° ) K3 प्रणेमुर्ये विधिं भक्तास् ; D2 तेषु ये तु महात्मानस् ( for $^{a}$ ) — ( L 33 ) Ñ2 B2 D2 T2 G2 3 तमूचुः, G1 ऊचुस्तु ( for ते ऊचु· ). T3 4 G1. 5 M4 वयम् ( for विभो ) — ( L 34 ) Ñ2 T1 षट्पुरे ( for षट् च नो ). D1 पुराणि षट्पुरो देवो ( for $^{a}$ ) K2 Ñ2 T2 3 G1 4 5 M4 [अ]त्र ; K3 च ( for [अ]न्तर् ). — ( L. 35 ) K2. 4 Ñ2 V2, 3 B3 D1–4 -समृद्ध्यर्थं, G4 °द्धं च ( for °द्धार्थं ) — V3 om ( hapl ) line 36. — ( L 36 ) K2 Ñ2 V1 2 B Dn D3–5 T1 4 G1 2 वयं च षट्पुरं गत्वा ( for $^{a}$ ) Ñ2 V1 2 B3 वत्स्याम, D2 6 वसाम ( for वसेम ) K2 G2 प्रभो ( for विभो ) D3 गच्छामः सुखिनो विभो ( for $^{b}$ ) — ( L 37 ) K3 न स्याद्, V B1 2 B1 2 Dn D5 6 G2 उग्रं, B3 अग्नि , T2 3 G4 5 M4 न च ( for च नो ) K2 रुद्रात्वास्तु भयं तस्माद्, Ñ2 T1 G1 3 °द्र च भयं नः स्याद्, D4 भद्रं नोऽस्तु भयं तस्माद् ( for $^{a}$ ) K4 [अ]-स्मज्ज्ञातयो, Ds2 वो ज्ञा° ( for नो ज्ञा° ) — T G1 3 5 M4 ब्रह्मा ( for पितामह ) — ( L 39 ) K1 4 V3 Dn Ds D4. 5 भवथ, D3 न तथा ( for भवत ) — ( L 40 ) K2 ते गता असुरा राजन्, G2 न च बाधिष्यतो विप्रान् ( for $^{a}$ ). K4 मम ( for सता ) K1 सत्पथि प्रस्थितान्प्रियान्, K3 हितं धत्ते जनार्दनः, K3 ( also ) सत्पथिस्थान्हरिप्रियान्, D1 न सत्पथसत· प्रियान्, D2 सत्यस्थानसतां प्रिया ( for $^{b}$ ) — ( L 42 ) K4 Ñ2 विप्रो ( for विप्रा ) T4 जगतः परमो गुरु ( for $^{b}$ ). — ( L 43 ) K1 3 4 Dn1 D2 4 6 T1–3 G1 3 M4 बिभेतव्यं, K2 V B1 2 Ds D1 G2 5 वो भे°, Ñ2 G4 वा भे° ( for हि भे° ) K1 4 कुर्वद्भिर्ब्राह्मणेऽहितम् ( for $^{b}$ ) — ( L. 44 ) Ñ2 -भूते हि ( for -भूतेषु ) K4 हितवान्, Dn2 भगवन् ( for °वान् ) D1 धर्मं ( for धत्ते ) — ( L 45 ) D2 रुद्रं ( for राजन् ) — After line 45, D2 3 5 ins :

1** अन्तर्महीतले कृत्वा षट्पुर रोषवर्जिता. ।

[ D2 कोप- ( for रोष- ) D3 षट्पुर तेऽतिगर्विता· ( for $^{b}$ ).]
— ( L. 48 ) T1–3 G1 3 सर्ववर ( for सम्र° ). V2 D3, 5

श्वेतं वृषभमारुह्य सोमः सप्रवरः प्रभुः ।
उवाच चेदं भगवानसुरान्स सतां गतिः ॥
वैरमुत्सृज्य दम्भं च हिंसां चासुरसत्तमाः । [ 50 ]
मामेव चाश्रितास्तस्माद्वरं साधु ददामि वः ॥
यैर्दीक्षिताः स्थ मुनिभिः सत्क्रियापरमेर्द्विजैः ।
सह तैर्गम्यतां स्वर्गः प्रीतोऽहं वः सुकर्मणा ॥
इह ये चैव वत्स्यन्ति तापसा ब्रह्मवादिनः ।
अपि कापित्थिकावृक्षे तेषां लोका यथा मम ॥ [ 55 ]
इह मासान्तपक्षान्तौ यः करिष्यति मानवः ।
वानप्रस्थेन विधिना पूजयन्मां तपोधनः ॥
वर्षाणां स सहस्रं तु तपसां प्राप्स्यते फलम् ।
कृत्वा त्रिरात्रं विधिवल्लप्स्यते चेप्सितां गतिम् ॥
अर्कद्वीपे निवसतो द्विगुणं तद्भविष्यति । [ 60 ]
नीचे देशे च भद्रं वो वरमेतं ददाम्यहम् ॥
श्वेतवाहननामानं यश्च मां पूजयिष्यति ।
सर्वतो भयचित्तोऽपि गतिं स मम यास्यति ॥
औदुम्बरान्वाटमूलान्द्विजान्कापित्थिकानपि ।
तथा सृगालवाटीयान्धर्मात्मानो दृढव्रतान् ॥ [ 65 ]
मुनींश्च ब्रह्मवाटीयान्सविशेषेण ये नराः ।
पूजयिष्यन्ति सततं ते यास्यन्तीप्सितां गतिम् ॥
इत्युक्त्वाथ महादेवो भगवाञ्श्वेतवाहनः ।
तैरेव सहितः सर्वैं रुद्रलोकं जगाम वै ।
जम्बूमार्गं गमिष्यामि जम्बूमार्गे वसाम्यहम् । [ 70 ]
एवं संकल्पमानोऽपि रुद्रलोके महीयते ॥

Colophon.

---

विभु ( for प्रभु ) — ( L 49 ) K1 3 4 Ñ2 V3 B1 2 Dn Ds D3–6 T1 G2 [इ]द च ( by transp ), D1 2 [इ]दं स ; T2 3 G1 3–5 M4 देवो K4 तपतां, D1 2 च सतां ( for स सतां ) — Before line 50, D6 ins ईश्वर — ( L 50 ) D4 दम्भमुत्सृज्य वैरं च ( for ^a ) — ( L 51 ) T1 हि ( for च ) V1 [अ]न्वितास्, D5 श्रि° ( for [आ]श्रि° ) K1 मामेव च श्रिता यस्माद्, K2 D4 यन्मामेवाश्रितास्तस्माद् ( for ^a ) K3 ददानि, D6 वदामि, T3 वरामि ( for ददामि ) — ( L 52 ) M4 ये ( for यैर् ) K2 वीक्षितास्तु ( for दीक्षिता स्थ ) V1 D2 3 T1 2 G3–5 ये दीक्षितास्तु मुनिभि. ( for ^a ) — ( L 53 ) Ñ2 सहितैर्, T2 G4 5 संगतैर् ( for सह तैर् ) D2 स्वर्गं ( for स्वर्ग· ) — ( L 54 ) D2 इह चैव निवत्स्यन्ति ( for ^a ) K1 4 V1 3 B D1 3 T2–4 G1 2 4 5 तपसा, V2 तपसे ( for तापसा ) — ( L 55 ) K2 Ñ2 V B1 D2–5 कापित्थके ; K3 °त्थका-, Dn G2 °त्थिके ( for °त्थिका- ). T1, 2 M4 इह येऽव स्थिता वृक्षे, T3 G1 3–5 इह येऽपि ( T3 ये यं ) स्थिता वृक्षे ( for ^a ) Ñ2 V2, 3 Dn Ds D2 3 6 T1 G3 लोको ( for लोका ) — ( L 56 ) K1 V1 D3 T4 G2–5 इह मासं तप क्षान्तो ( for ^a ) — ( L 57 ) B2 D5 पूजयेन् ( for °यन् ). T1 M4 य· पूजां मां तपोधन , G5 य. पूज्यानां त° ( for ^b ). — ( L 58 ) G3 5 द्वि- ( for स ) K2 Ñ2 V B D2–4 6 G1 2 वर्षाणां तु सहस्रस्य ( K2 °स्रं च , Ñ2 °स्रेण ; D4 °स्राणां , G1 °स्राणि ) ( for ^a ) Ñ2 M4 तपसा, D4 G5 तपस: , T1 समान ( for तपसां ) K4 V1 2 Dn1 D2 T2 प्राप्यते, D1 प्राप तत् ( for प्राप्स्यते ) K3 G2 तपस: प्राप्यते फलम् ( for ^b ) — ( L 59 ) K2–4 V1 Ds2 D1, 5 G2, 5 विरात्रं ( for त्रि° ) T4 G2, 5 लभते ( for लप्स्यते ) D3 लप्स्यते चेप्सितं फलम् ( for ^b ). — ( L 60 ) K2 निवसतां ( for °तो ) T G1 3–5 M4 करिष्यति ( for भवि° ) — ( L 61 ) K1 2 4 V1 3 B1 D2, 5 6 नीचदेशे , K3 D4 तीरदेशे , V2 नीपदेशे ; Dn Ds T1 M4 न विदेशे , D3 जम्बू`शे , G2 निम्नदेशे ( for नीचे देशे ). Ñ2 निदेशे चैव भद्रं वो ( for ^a ) — ( L 62 ) D1 -नामाहं ( for °नं ) — ( L 63 ) D3 -विघ्नो ( for -चित्तो ) V1 3 D3 मम स ( by transp ) D6 [अ]वाप्स्यति ( for यास्यति ). D2 गति मम स चाप्स्यति ( for ^b ) — ( L 64 ) K2 वटान्मूलान्, D3 निम्बमूलान् ( for वाट° ) D5 उदुम्बरान्वटमूलान् ( for ^a ) — ( L 65 ) D3 वाटीया, T3 G5 M4 -पादीयान् ( for वाटी° ) K2 D4 धृत- ( for दृढ- ) D3 -व्रता ( for -व्रतान् ) — ( L 66 ) K3 ब्रह्मचारीयान्, B1 D6 T1–3 G1–3 5 M °वादीयान्, D2 धर्मवाटी° ; D3 धर्मपरमान् ( for ब्रह्मवाटीयान् ) T4 तदा ( for नरा ) — ( L 68 ) Ñ2 च, D3 खं, G2 तु ( for [अ]थ ) — ( L 69 ) K1 B3 D4 5 G2 सहितै ( for °त· ) D3 स्वर्गं ( for सर्वैं ) — Bofore line 70, T2 3 G4 ins वैशंपायन· — ( L 70 ) G5 -मार्गं ( for -मार्गं ) K1 जम्बूमार्गं गमिष्यन्ति, K2 यस्तु कामयते नित्यं ( for ^a ) — ( L 71 ) D3 एव सजल्पमानो हि ( for ^a ) D3 रुद्रलोकं ( for °लोके )

COLOPHON — *Mention of the Epic* K3 Ds2 T3. — *Mention of Khila* K3 V1 3 B Dn2 Ds1. — *Sub-parvan* पारिजात — *Adhy name* K Ñ2 V B Dn Ds D1–3 5, 6 T1–3 G1 3 4 षट्पुरवध: — *Adhy no* K3 ( marg ) 135, V1 141, V2 140, V3 B2 139, Dn 127, Ds 137, D1 133, D3 T4 146, D4 136, T1 G3, 4 M4 150, T2 G1 152, T3 159, G2 142, G6 163.

इहैष्यति किमर्थं त्वां प्रद्युम्नो रुक्मिणीसुतः ॥ [ 145 ]
त्रैलोक्ये यस्य रूपेण सदृशोऽथ कुलेन वा ।
गुणैर्वा चारुसर्वाङ्गि शौर्येणाप्यथ वा शुभे ॥
देवेषु देवः सुश्रोणि दानवेषु च दानवः ।
मानुषेष्वपि धर्मात्मा मानुषः स महाबलः ॥
यं सदा देवि दृष्ट्वा हि स्रवन्ति जघनानि हि । [ 150 ]
आपीनानीव धेनूनां स्रोतांसि सरितामिव ॥
न पूर्णचन्द्रेण मुखं नयने वा कुशेशयैः ।
उत्सहामोपमातुं हि मृगेन्द्रेणाथ वा गतिम् ॥
जगतः सारमुद्धृत्य पुत्रः स विहितः शुभे ।
कृत्वानङ्गं वशे साङ्गं विष्णुना प्रभविष्णुना ॥ [ 155 ]
हतेन शम्बरो बाल्ये येन पापो निबर्हितः ।
मायाश्च सर्वाः संप्राप्ता न च शील विनाशितम् ॥
यान्यान्गुणान्पृथुश्रोणि मनसा कल्पयिष्यसि ।
एष्टव्यास्त्रिषु लोकेषु प्रद्युम्ने सर्व एव ते ॥
रुच्या वह्निप्रतीकाशः क्षमया पृथिवीसमः । [ 160 ]
तेजसा सूर्यसदृशो गाम्भीर्येण ह्रदोपमः ॥
प्रभावती शुचिमुखीमिति होवाच भाविनी ।
विष्णुर्मानुषलोकस्थः श्रुतः स बहुशो मया ॥
पितुः कथयतः सौम्ये नारदस्य च धीमतः ।
शत्रुः स किल दैत्यानां वर्जनीयः किलानघे ॥ [ 165 ]
कुलानि किल दैत्यानां तेन दग्धानि मानिनि ।
प्रदीप्तेन रथाङ्गेन शार्ङ्गेण गदया तथा ॥
शाखानगरदेशेषु वसन्ति किल येऽसुराः ।
इत्येते दानवेन्द्रेण सदिश्यन्ते हि तं प्रति ॥
मनोरथो हि सर्वासां स्त्रीणामेवं शुचिस्मिते । [ 170 ]
भवेद्धि मे पतिकुलं श्रेष्ठं पितृकुलादिति ॥
यदि नामाभ्युपायः स्यात्तस्येहागमनं प्रति ।
महाननुग्रहो मे स्यात्कुलं स्यात्पावितं च मे ॥
समर्थनां मे पृष्टा त्वं प्रयच्छ शुचिलापिनि ।

---

( for °शास्त्वत् ) — ( L 144 ) D3 om line $144^b$–$146^a$ K3 4 सदृश ( for सदृशान् ) — ( L 145 ) D6 ( marg ) उद्रक्ष्यति ( for इहैष्यति ) T1 कृतार्थत्वं, T2 G4 कृतार्थस्त्वां ( for किमर्थं त्वां ) — ( L 146 ) K3 V2 Dn2 D2 3 5 6 T1–3 G3 4 सदृशो न, T4 G2 5 M4 °शोऽस्ति, G1 °शेन ( for °शोऽथ ) — ( L 147 ) Ñ2 D5 स ( for वा ) D1 -सर्वाङ्गै ( for सर्वाङ्गि ) V3 B3 Dn D6 [अ]स्ति, Poona ed G(ed) [अ]ति ( for [अ]थ ) — ( L 149 ) Ñ2 Dn D3 मनुष्यः ( for मानुषः ) B1 मनुष्यः सुमहाबल ( for $^b$ ) — ( L 152 ) D4 न सूर्य-, T1–2 सपूर्ण- ( for न पूर्ण ) T4 पूर्णचन्द्रेण सुमुख ( for $^a$ ) — ( L 153 ) K3 Dn D3 T3 4 G1 उत्सहे न ( for °हाम ) K1 [उ]पमा गन्तु, K4 °मा कर्तुं, Ñ2 D5 °मां दातुं ( for °मातुं हि ) K2 Ds2 D4 उत्सहाम्युपमा दातु, V2 °हे नोपमा दातुं ( for $^a$ ) T1 [इ]व तद्गतिः ( for [अ]थ वा गतिम् ) — ( L 154 ) T2 3 G4 शुभम्, G1 शुभ ( for शुभे ) D3 विहितस्तनय शुभे ( for $^b$ ). — B1 om lines 155–159 ( L 155 ) K1 वरं शार्ङ्गी, K2 Ñ2 V2 पुरा साङ्गं ( Ñ2 सर्गं ), V1, 3 B2 3 Ds D2–3 6 T4 G2 5 M4 वरे साङ्गं, D1 4 ( marg ) वशे शार्ङ्गं ; D5 वपु. साङ्ग ( for वशे साङ्ग ) K3 कृत्वानन्दं वशे साक्षाद्, T1 G3 यथा शृङ्गवरे शार्ङ्गं ( G3 शृङ्गं ) T2 3 G1 4 यथा शृङ्गिवरै शृङ्गं ( for $^a$ ) — ( L 156 ) G4 एतेन ( for ह° ) M4 बाले ( for बाल्ये ) T G1 3–5 M4 निपातित ( for निबर्हित ). — ( L 157 ) D4 न च शीलविनाशनम् ( for $^b$ ) — ( L 158 ) T4 धन्यान् ( for या° ) — ( L 159 ) G5 द्रष्टव्यास् ( for ए° ) K3 सर्वे- ( for त्रिषु ) K1 4 पृष्टव्याः सर्वे लोकेषु ( for $^a$ ) K2 प्रद्युम्नात् ( for °म्ने ) — ( L 160 ) K4 प्रकाश स ( for -प्रतीकाश ) — ( L 161 ) Ñ2 G5 -संकाशो ( for -सदृशो ) D4 गाम्भीर्ये सागरोपमः ( for $^b$ ) — T4 G3 5 M4 om line 162 — ( L 162 ) Ñ2 D5 T1 सूचिमुखीम् ( for शुचि° ) — T3 om ( hapl ) lines 163–166 Before line 163, K Ñ2 V B D G2 5 M4 ins प्रभावती — ( L 163 ) K2 मानव ( for मानुष- ) Ñ2 -देहस्थ., Ds1 -रूपस्थ, D1 लोकस्य, T2 लोकेऽथ ( for -लोकस्थ ) — ( L. 165 ) K2 Ñ2 om ( hapl ) lines $165^b$–$166^a$ V2 Dn G1 2 सदा ( for किल ) D2 वर्जनीयाः किलारय ( for $^b$ ) — ( L 166 ) D2–4 T2 4 G1 2 4 5 M4 भामिनि ( for मानिनि ) — ( L 169 ) G3 [ए]तद् ( for [ए]ते ) D6 संदृश्यते हि संप्रति ( for $^b$ ) — ( L 170 ) D3 एष ( for एवं ) — ( L 171 ) K1 3 4 यदि कुलं, Ñ2 प्रतिकूलं ( for पतिकुलं ) T1 2 G4 भवेद्धि न प्रतिकूलं ( for $^a$ ) — ( L 172 ) K4 शुभाय ( for [अ]भ्युपाय ) D1 [आ]नयनं ( for [आ]गमन ) — ( L 173 ) G1 पालितं तु ( for पावितं च ) K4 पाचितं कुणप च मे, D2 कुलस्यास्योचितं च मे ( for $^b$ ) — ( L 174 ) K2 सर्वथा नाम D4 समर्थं नाम, D5 °र्थतां मे, D6 ( marg ) कार्यनिश्चयं, T2–3 G1–3 प्रियं च नाम ( for समर्थना मे ) K1 पृष्टात्र ; B3 दृष्ट्वार्थं, D5 हृष्टा त्वं, G2 दृष्ट्वा त्वं ( for पृष्टा त्व ) T1 G4 प्रियं च नाम दृष्ट्वा त्व, G5 M4 समर्था ननु द( M4 सृ )ष्टा त्व ( for $^a$ ) K4 च विलासिनि, D1–3 सुविलापिनि ( for

प्रद्युम्नः स्याद्यथा भर्ता मम वृष्णिकुलोद्भवः ॥ [ 175 ]
अत्यन्तवैरी दैत्यानामुद्वेजनकरो हरिः ।
असुराणां स्त्रियो वृद्धाः कथयन्त्यो मया श्रुताः ॥
प्रद्युम्नस्य तथा जन्म पुरस्तादपि मे श्रुतम् ।
यथा च तेन निहतो बलवान्कालशम्बरः ॥
हृदि मे वर्तते नित्यं प्रद्युम्नः खलु सत्तमे । [ 180 ]
हेतुः स नास्ति तस्यार्थे यथा मम समागमः ॥
दासी तवाहं सख्यार्हे दूत्ये त्वां च विसर्जये ॥
पण्डितासि वदोपायं मम तस्य च संगमे ॥
ततस्तां सान्त्वयित्वा सा प्रहसन्तीदमब्रवीत् ।
तत्र दूती गमिष्यामि तवाहं चारुहासिनि । [ 185 ]
इमां भक्तिं तवोदारां प्रवक्ष्यामि शुचिस्मिते ॥
तथा चैव करिष्यामि यथैष्यति तवान्तिकम् ।
साक्षात्कामेन सुश्रोणि भविष्यसि सकामिनी ॥
इति मे भाषितं सत्यं स्मरेथाः शुचिलोचने ।
कथाकुशलतां पित्रे कथयस्वायतेक्षणे ॥ [ 190 ]
मम त्वं तत्र मे देवि हितं सम्यक्प्रपत्स्यसे ।
इत्युक्त्वा सा तथा चक्रे यत्तत्सा तामथाब्रवीत् ॥
दानवेन्द्रश्च तां हंसीं पप्रच्छान्तःपुरे तदा ।
प्रभावत्या समाख्याता कथाकुशलता तव ॥
तत्त्वं शुचिमुखि ब्रूहि कथां योग्यतया वरे । [ 195 ]
किं त्वया दृष्टमाश्चर्यं जगत्युत्तमपक्षिणि ॥
अदृष्टपूर्वमन्यैर्वा योग्यायोग्यमनिन्दिते ।
सोवाच वज्रनाभं तु हंसी नरवरोत्तम ॥
श्रूयतामित्यथामन्त्र्य दानवेन्द्रं महाद्युतिम् ।
दृष्टा मे शाण्डिली नाम साध्वी दानवसत्तम । [ 200 ]
आश्चर्यं कर्म कुर्वन्ती मेरुपार्श्वे मनस्विनी ॥
सुमना चैव कौसल्या सर्वभूतहिते रता ।
तथाविदूरे शाण्डिल्याः शैलपुत्र्याः शुभा सखी ॥
नटश्चैव मया दृष्टो मुनिदत्तवरः शुभः ।

---

शुचि°) $K_1$ प्रयच्छस्व विलासिनि ( for $^b$) —( L 175 ) $G_2$ $M_4$ विष्णु- ( for वृष्णि ) $V_2$ $D_{2\ 3}$ -कुलोद्वह· ( for °द्भव ) $\tilde{N}_2$ स मे वृष्णिकुलोद्वह ( for $^b$) —( L 178 ) $T_1$ $G_3$ शत्रु ( for जन्म ) $T_{2\ 3}$ $G_{1\ 4}$ प्रद्युम्नश्च यथा शत्रु ( for $^a$) T G $M_4$ इति न ( for अपि मे ) —( L 179 ) $K_2$ युध्वा ( for यथा ) —( L 180 ) $T_2$ सत्तम ( for °मे ) —( L 181 ) $K_1$ तेन स्याद्, $K_2$ $Ds_2$ $D_4$ तस्याथ, $K_{3\ 4}$ $V_{1\ 3}$ B Dn $Ds_1$ $D_{1-3}$ $T_4$ $G_{1\ 2\ 5}$ $M_4$ स्यात्तेन ( for तस्यार्थे ) $D_6$ $T_1$ हेतुर्हि नास्ति स्यात्तेन ( $G_1$ तस्यास्ते ) $T_{2\ 3}$ $G_{3\ 4}$ हेतुभिर्नास्ति तस्यास्तैर् ( $G_3$ °स्ते ) ( for $^a$) $T_{1-3}$ $G_{3\ 4}$ अय( $T_1$ $G_3$ न य )था मम संगम ( for $^b$) —( L 182 ) $\tilde{N}_2$ तस्यार्थे, $V_1$ साखि हे, $D_1$ शिक्ष्यास्मि, $D_2$ शिष्यास्मि, $D_4$ सख्यार्थे; $D_6$ $T_4$ $G_5$ $M_4$ सखि भो, $T_{2\ 3}$ $G_{1\ 3\ 4}$ सखि मे, $G_2$ सख्यं ते ( for सख्यार्हे ) $K_1$ $V_2$ $D_{1\ 2\ 5}$ दौत्ये, $K_2$ $V_{1\ 3}$ $B_{2\ 3}$ $D_S$ $D_4$ दूती, $K_4$ सौम्ये ( for दूत्ये ) $D_3$ $T_1$ दूती तु ( $T_1$ °त्यर्थे ) त्वा विसर्जये ( for $^b$) —( L 183 ) $D_2$ यथा, $G_5$ मम ( for वद ) $T_{1-3}$ $G_{3\ 4}$ पण्डिता रचयोपायं, $G_1$ °ता च नयोपाय ( for $^a$) $K_2$ वद ( for मम ) —( L 184 ) $\tilde{N}_2$ ततस्ता सान्त्वयद्वाचा ( for $^a$) — Before line 185, K $\tilde{N}_2$ V B D $T_{2-4}$ G $M_4$ ins शुचिमुखी, $T_1$ सूचीमुखी —( L 185 ) $B_3$ -भाषिणि ( for -हासिनि ) —( L 186 ) $T_{1-3}$ $G_{1\ 3\ 4}$ शुभानने ( for शुचिस्मिते ) —( L 187 ) $K_{1\ 3\ 4}$ [ए]वेति ( for [ए]ष्यति ) —( L 188 ) $T_{1-3}$ G $M_4$ भविष्यति समागमः ( for $^b$). — Before line 189, $D_6$ ins. प्रभावत्युवाच —( L 189 ) Dn $T_1$ $G_3$ नित्य ( for सत्यं ) $K_3$ स्मरस्व ( for स्मरेथा ) — For line 190, $V_1$ subst

1** कथानुकूलता पित्रे कथयायतलोचने ।

—( L 191 ) $G_5$ मम त्वत्तस्तत्र देवि ( for $^a$) $K_3$ $V_1$ $D_{1\ 2}$ प्रपश्यसे, $D_6$ $G_{2\ 5}$ $M_4$ प्रवर्तते, $T_{2\ 3}$ $G_{1\ 4}$ प्रवर्तसे ( for प्रपत्स्यसे ) $K_2$ तं त्व संप्रतिपत्स्यसे ( for $^b$) — Before line 192, $G_2$ ins वैशंपायन —( L 192 ) $K_2$ यत्तु सत्यम् ( for यत्तत्सा ताम् ) $D_3$ यद्वृत्त सा तथाब्रवीत् ( for $^b$) —( L 194 ) $K_1$ $T_{1-3}$ $G_{1\ 3\ 4}$ $M_4$ ममाख्याता ( for स° ) $B_1$ कथानुकूलता तव ( for $^b$) —( L 195 ) $D_S$ $D_3$ तथ्य ( for तत्त्वं ) $D_5$ शुचिस्मिते ( for °मुखि ) $D_3$ $T_1$ $G_3$ कथा योग्यां तथा परे ( $T_1$ कथा वरे ), $T_{2\ 3}$ $G_4$ कथायोग्यास्तथा परे ( $G_4$ ध्रुवम् ) ( for $^b$) —( L 197 ) $G_2$ मर्त्यैर् ( for अन्यैर् ) — $D_3$ om ( hapl ) lines 199–200 —( L 199 ) $K_1$ $T_4$ महाद्युति.; $K_2$ $D_5$ °द्युते ( for °द्युतिम् ) —( L 201 ) $D_{2\ 3}$ $G_5$ यशस्विनी, $T_{1-3}$ $G_{1\ 3\ 4}$ तप° ( for मन° ) —( L 202 ) $V_{2\ 3}$ $B_3$ $Dn_2$ $D_{3\ 5\ 6}$ T $G_{1\ 3-5}$ सुमनाश्, $G_2$ सुकुमारी ( hypermetric ) ( for सुमना ) —( L 203 ) $K_3$ कथंचित्तत्र, $\tilde{N}_2$ $V_1$ $B_{1\ 2}$ $D_S$ कथचिद्वर, $V_{2\ 3}$ $B_2$ कथंचिद्वीर, $T_{1-3}$ $G_{1\ 3}$ $M_4$ तथाविदूरं, $T_4$ $G_2$ तथाविधा सा, $G_4$ तथा च वीर ( for तथाविदूरे ) $K_3$ $T_{1-3}$ $G_{1\ 3\ 4}$ सती ( for सखी ) —( L 205 ) $D_1$ भोग्यश्, $T_4$ $G_{2.5}$ $M_4$ भोगी ( for भोज्यश् ) $T_{1-3}$ $G_{1\ 3\ 4}$ कामरूपी चर भोग्य ( for $^a$) $K_2$ $\tilde{N}_2$ V $D_5$ $D_{4\ 5}$ $T_1$ नृत्य( $K_2$ °प-, $T_1$ °त्त )समत,

कामरूपी च भोज्यश्च त्रैलोक्ये नित्यसंमतः ॥ [ 205 ]
कुरून्यात्युत्तरान्वीर कालाम्रद्वीपमेव च ।
भद्राश्वान्केतुमालांश्च द्वीपानन्यांस्तथानघ ॥
देवगन्धर्वगेयानि नृत्यानि विविधानि च ।
स वेत्ति देवान्नृत्येन विस्मापयति सर्वदा ॥

वज्रनाभ उवाच ।

श्रुतमेतन्मया हंसि नचिरादिव विस्तरम् । [ 210 ]
चारणानां कथयतां सिद्धानां च महात्मनाम् ॥
कुतूहलं ममाप्यस्ति सर्वथा पक्षिनन्दिनि ।
नटे दृत्तवरे तस्मिन्संस्तवस्तु न विद्यते ॥

हंस्युवाच ।

सप्तद्वीपान्विचरति नटः स दितिजोत्तम ।
गुणवन्तं जनं श्रुत्वा गुणहार्यः स सर्वथा ॥ [ 215 ]
तव चेच्छृणुयाद्वीर सद्भूतं गुणविस्तरम् ।
नटं तदागतं विद्धि पुरं तव महासुर ॥

वज्रनाभ उवाच ।

उपायः सृज्यतां हंसि येनेह स नटः शुभे ।
आगच्छेन्मम भद्रं ते विषयं पक्षिनन्दिनि ॥

ते हंसा वज्रनाभेन कार्यहेतोर्विसर्जिताः । [ 220 ]
देवेन्द्रायाथ कृष्णाय शशंसुः सर्वमेव तत् ॥
अधोक्षजेन प्रद्युम्नो नियुक्तस्तत्र कर्मणि ।
प्रभावत्याश्च संसर्गे वज्रनाभवधे तथा ॥
दैवीं मायां समाश्रित्य सविधाय हरिर्नटम् ।
नटवेषेण भैमानां प्रेषयामास भारत ॥ [ 225 ]
प्रद्युम्नं नायकं कृत्वा साम्बं कृत्वा विदूषकम् ।
पारिपार्श्वं गदं वीरमन्यान्भैमांस्तथैव च ॥
वारमुख्या नटीः कृत्वा तत्तूर्यसदृशं तदा ।
तथैव भद्रंभद्रस्य सहायांश्च तथाविधान् ॥
प्रद्युम्नविहितं रम्यं विमानं ते महारथाः । [ 230 ]
जग्मुरारुह्य कार्यार्थं देवानाममितौजसाम् ॥
एकैकस्य समा रूपे पुरुषाः पुरुषस्य ते ।
स्त्रीणां च सदृशाः सर्वे स्वरूपैर्नराधिप ॥
ते वज्रनगरस्याथ शाखानगरमुत्तमम् ।
जग्मुर्दानवसंकीर्णं सुपुरं नाम नामतः ॥ [ 235 ]

Colophon

---

$D_3$ $G_5$ सुरसत्तम, $T_{2-4}$ $G_{1\ 2\ 4}$ नृत्तसत्तम, $G_3$ $M_4$ नृपसत्तम ( for नित्यसंमत ) — ( L 206 ) $T_{2\ 3}$ $G_{1\ 2\ 4}$ अप्युत्तरान्, $G_3$ अप्युत्तमान् ( for यात्युत्तरान् ) $K_2$ कालाम्बु-, $K_3$ Dn $D_{1\ 4}$ $G_5$ $M_4$ कालाप, $D_4$ कलापं, $D_3$ कलाप, $T_{1\ 2}$ $G_{1\ 3}$ कालाद्रि-, $T_3$ $G_4$ कालादि-, $G_2$ सकल- ( for कालाम्र- ) — ( L 208 ) T $G_{1\ 3-5}$ $M_4$ गीतानि ( for -गेयानि ) $K_2$ गन्धर्वगेयानि तथा ( for $^a$ ) Second part of Ms $K_1$ begins from line $208^b$ — ( L 213 ) $N_3$ संभवस्, $D_2$ अश्रुतस्, $D_6$ संवासस्, $T_{1-3}$ $G_{1\ 3\ 4}$ संशयस् ( for संस्तवस् ) — ( L 214 ) $D_6$ संचरति, $T_2$ $G_{1\ 3\ 4}$ आच° ( for विच° ) — ( L 215 ) $V_2$ दृष्ट्वा ( for श्रुत्वा ) $K_1$ गुणकार्यं, $D_3$ °ग्राह्य', $T_4$ °भार्य. ( for °हार्य· ) $T_{2\ 3}$ $G_{1\ 3\ 4}$ सुखाहार्यस्तु सर्वथा ( $G_1$ °दा ) ( for $^b$ ) — ( L 216 ) $G_4$ सम्भृतं ( for सद्भूतं ) — ( L 217 ) $D_3$ $T_{2\ 3}$ $G_{4\ 5}$ $M_4$ तमागतं ( for तदा° ) — ( L 218 ) $D_3$ उपायैः ( for °य ) $T_{1\ 2}$ $G_{1\ 3}$ $M_4$ सृजता, $G_5$ पश्यतां ( for सृज्यतां ) $V_3$ उपाय सृजता हंसि ( for $^a$ ) $T_{1-3}$ $G_{1\ 3\ 5}$ येन हन्त नट· शुभे ( $G_5$ °भ· ) ( for $^b$ ) — ( L 219 ) $D_1$ विषयं च ममानघे ( for $^b$ ) — ( L 222 ) $T_4$ स ( for नि- ) $K_{3\ 4}$ तेन, $V_1$ सर्व-; $D_2$ शुभ- ( for तत्र ). $K_3$ $D_1$ $T_3$ कर्मणा ( for °णि )

— ( L 224 ) $V_2$ उपाश्रित्य ( for समा° ) $T_1$ सुतं ( for हरिर् ) $T_{2\ 3}$ $G_{1\ 3-5}$ हरि कृत्वा सुतं नटम् ( for $^b$ ) — ( L 225 ) $D_3$ भैमांस्तान् ( for भैमाना ) — ( L 226 ) $V_{1\ 2}$ $D_3$ नाटकं ( for नायक ) — ( L 227 ) $K_3$ कृत्वा पार्श्वे, $\tilde{N}_2$ V B Dn Ds $D_{1\ 4-6}$ $G_4$ पारिपार्श्वे ( for °पार्श्व ) — For line 227, $K_4$ subst

2** पार्श्वे गदा वीरमत्या भैमाना च तथैव हि ।

— ( L 228 ) $\tilde{N}_2$ $D_2$ वारमुख्या नटीं कृत्वा ( for $^a$ ) $T_1$ $G_{1\ 5}$ स तूर्यं, $T_4$ तत्तूर्यं, $G_2$ तत्कार्यं ( for तत्तूर्यं ) Ks तन्नृत्यसदृशास्तथा ( for $^b$ ) — ( L 229 ) तथा बहून् ( for तथाविधान् ) — $T_1$ om line 230 — ( L 230 ) $M_4$ -सहित ( for -वि° ) $M_4$ महासुरा ( for °रथा ) — ( L 231 ) $D_3$ अतितेजसाम्, $D_6$ अमितौजस ( for °जसाम् ) — ( L 232 ). $K_2$ एकैकश. ( for °कस्य ) $D_{2-4}$ रूपै. ( for रूपे ) $G_4$ रूपेण ( for पुरुषाः ) $T_{2\ 3}$ $G_{1\ 3\ 5}$ रूपेण पुरुषस्य ता ( for $^b$ ) — ( L 233 ) $G_2$ $M_4$ सर्वा· ( for सर्वे ) $K_1$ $D_4$ तै. स्वरूपैर् $K_2$ $Dn_2$ ते स्व°, $\tilde{N}_2$ $D_6$ स्वस्व°, $V_1$ सुरूपैश्च, $V_2$ सुररूपैर्, $V_3$ $T_4$ $G_2$ $M_4$ स्त्रियो रूपैर्, $D_3$ स्वरूपैस्ते, $D_5$ वररूपैर्, $T_{1\ 2}$ $G_{1\ 3-5}$ भैमा रू° ( for स्वरू° ) — $B_2$ om. line 231–235.

वैशंपायन उवाच ।

ततः सुपुरवासीनामसुराणां नराधिप ।
पूर्वश्रुतो नटः प्राप्तः कौतूहलमजीजनत् ॥
नटस्याथ ददुर्दैत्याः सत्कारं परया मुदा ।
प्रत्ययार्थं ददुश्चापि रत्नानि सुबहून्यथ ॥
ततः स ननृते तत्र वरदत्तो नटस्तदा । [ 240 ]
सुपुरे पुरवासीनां परं हर्षं समादधत् ॥
रामायणं महाकाव्यमुद्देशं नाटकीकृतम् ।
जन्म विष्णोरमेयस्य राक्षसेन्द्रवधेप्सया ॥
लोमपादो दशरथ ऋश्यशृङ्गं महामुनिम् ।
शान्तामानाययामास गणिकाभिः सहानघ ॥ [ 245 ]
रामलक्ष्मणशत्रुघ्ना भरतश्चैव भारत ।
ऋश्यशृङ्गश्च शान्ता च तथारूपैर्नटैः कृतैः ॥
तत्कालजीविनो वृद्धा दानवा विस्मयं गताः ।
आचचक्षुश्च तेषां वै रूपतुल्यत्वमच्युत ॥
संस्काराभिनयौ तेषां प्रस्तावानां च धारणम् । [ 250 ]
दृष्ट्वा सर्वे प्रवेशं च दानवा विस्मयं गताः ॥
ते रक्ता विस्मयं नेदुरसुराः परया मुदा ।
उत्थायोत्थाय नाट्यस्य विशेषेषु पुनः पुनः ॥
ददुर्वस्त्राणि तुष्टाश्च ग्रैवेयवलयानि च ।

---

— ( L 234 ) D5 ते वज्रनगराभ्याशे ( for [a] ) — ( L 235 ) -सपूर्णं ( for °संकीर्णं ) T4 षट्पुरं ( for सु° )

COLOPHON om in B3 — *Mention of the Epic* Ds2 T3 — *Mention of Khila* V B Ds D1 4 — *Adhy name* K1 2 Ñ2 V B1 2 Dn Ds D1–4 वज्रनाभप्रद्युम्नोत्तरम्, K3 वज्रनाभप्रद्युम्नयुद्धम्, K4 वज्रनाभप्रद्युम्न , D5 वज्रनाभवधे प्रद्युम्नोत्तरम्, T G1 2 4 वज्रनाभवध — *Adhy no* K3 ( marg ) 145, V1 151, V2 150, V3 Ds3 149, D1 143, D3 T4 G2 156 D4 146, T1 G3, 4 M4 160, T2 G1 162, T3 169, G5 163

B5 om line 236 — ( L 236 ) K3 4 Ds2 D1 T4 स ( for सु- ) K1 2 Ñ2 V B1 2 D3 4 G3 M4 तत स्वपुरवासी- ( D3 T3 °सा )नाम् ( for [a] ) Ñ2 तथैव च, T4 जनाधिप ( for नरा° ) — After line 236, K1 Ñ2 Dn D5 ins

3** ददावाज्ञां वज्रनाभो दीयतां गृहमुत्तमम् ।
आतिथ्यं क्रियतामेषां बहुरत्नमुपायनम् ॥
वासांसि सुविचित्राणि सुखाय जनरञ्जनम् ।
भर्तुराज्ञां समालभ्य तथा चक्रुश्च सर्वश ॥

[ ( L 2 ) K1 एव , G5 अस्य ( for एषां ) K1 Ñ2 D5 तथा ( for बहु- ) — ( L 3 ) Ñ2 मन- ( for जन- ) D5 सुखाय कुरुनन्दन ( for [b] ) — ( L 4 ) Ñ2 समाकर्ण्य ( for °लभ्य ) Ñ2 दानवा ( for सर्वश ), ]

— ( L 237 ) K1 Dn2 D1 5 T1 2 G1 3 M4 पूर्व श्रुतो, V1 B3 D2 T3 G2 पूर्वाश्रुतो ( for पूर्व° ) Ds1 M4 नर ( for नट ) G6 कुतूहलम् ( for कौ° ) — ( L 238 ) G2 सत्कारान् — ( L 239 ) K3 4 V3 B3 Dn T4 M4 पर्यायार्थं ( K3 M4 °र्थे ), K1 2 D4 D2 पर्ययार्थं, Ñ2 V1 Ds D5 यथेप्सितं, V2 B1 पृथगर्थं ( B1 °र्थे ), B2 D3 6 G2 सपर्यार्थं, T1–3 G1 3–5 नाट्य( G4 नट )स्यार्थं ( for प्रत्ययार्थं ) D1 पाद्यार्घ्यमददुश्चापि ( for [a] ) D5 T1–3 G1 3–5 रत्नानि विविधानि च ( for [b] ) — ( L 240 ) M4 स तत्र ( for तत स ) D2, 3 M4 वीर ( for तत्र ) D2 वरदानान् ( for °दत्तो ) G2 नटो दत्तवरस्तदा ( for [b] ) — ( L 241 ) M4 कृत ( for पुर- ) K3 D1 3 G2 -वासाना ( for वासीनां ) T2 3 G1 3 5 सुपुरे कृतवासानां ( for [a] ) Ds1 परि ( for परं ) V3 B3 D6 अथादधत् ( for समा° ) — ( L 242 ) K1 4 सुदेशं ( K4 °श्य ), V2 3 Dn D1 T1 4 G1 3 उद्देश्य , D2 उद्दिश्य , D3 उद्दिश्य , T2 3 G4 5 उद्देशान् ( for °शं ) — ( L 243 ) D2 -वधे यथा ( for वधेप्सया ) — ( L 244 ) K1 4 रामप्राप्तौ , D6 लोकपालो , T1–3 G1 3–5 M4 रोमपादाद् ( for लोमपादो ) D1 2 लोमपादं दशरथम् ( for [a] ) D3 महामुनि — ( L 245 ) K1 V1 3 Dn शान्तार्थमानयामास , K4 शान्त वनादनयत् , T1 G3 शान्तामप्यानयामास , T2–4 G1 4 5 M4 स शान्तामान° ( for [a] ) V2 तथा ( for सह ) — ( L 246 ) V1 B3 D5 T1 2 G3–5 -शत्रुघ्न- ( for °घ्ना ) V1 Dn2 D5 T1 2 G3–5 -भरताश् ( for भरतश्च ) — ( L 247 ) K4 शान्तात्मा , D3- 6 शान्ता च ( for शान्ता च ) K2 Ñ2 Dn D3 6 T G M4 कृता ( for कृतैः ) — T4 G4 om line 248 — ( L 248 ) K3 वृद्धान् ( for वृद्धा ) — K1 om ( hapl ) lines 249–251 — ( L. 249 ) K2 D5 अच्युतम् , K3 D1 °त , K4 V2 B3 T1 2 G3 6 एव च , D4 G2 M4 उच्यते ( for अच्युत ) V1 रूपतुल्यत्वयाच्युत , T3 G1 4 °स्तथैव च ( for [b] ). — ( L. 250 ) K3, 4 D3 संस्काराभिनयस्तेषां , T2 सत्काराभिनयौ तेषां ( for [a] ) — ( L 251 ) T1–3 G3 5 तेषां ( for सर्वे ). D3 प्रशंसन्तो ( for प्रवेश च ) — ( L 252 ) D6 T2–4 G1 2 4 6 ते गता , T1 आगता , G3 ते गत्वा ( for ते रक्ता ) V B2 D2 विस्मयान् ( for °य ) Ñ2 ते रक्ता विस्मयार्थे तु ( for [a] ). D3 G6 सुरा परमया मुदा ( for [b] ) — ( L 253 ) K4 तेऽप्यस्य ( for नाट्यस्य ) K2 विविशुश्च , B1 Ds2 D5 T1 G5 विषयेषु B2 विशिष्टेषु , D3 विविशु स्वं ( for विशेषेषु ) — ( L 254 ) D2 भूषाश् , D3 हृष्टाश् ( for तु° ) Ñ2 B2 Ds2 D6 T2 4 ग्रैवेयं ( for °य- ) K2 ग्रैवेयं कम्बलानि च , K4 °याभरणानि च ( for [b] ) — ( L 256 ) V2 पृथगेतेषु , T1 °क्तेषु च , T3 G1

हारान्मनोहरांश्चैव हेमवैदूर्यभूषितान् ॥ [ 255 ]
पृथगर्थेषु दत्तेषु श्लोकैस्ते तुष्टुवुर्नटाः ।
असुरांश्च मुनींश्चैव गोत्रैरभिजनैरपि ॥
प्रेषितं वज्रनाभस्य शाखानगरवासिभिः ।
नटस्य दिव्यरूपस्य नरेन्द्रागमनं तदा ॥
पुरा श्रुतार्थो दैत्येशः प्रेषयामास भारत । [ 260 ]
आनीयतां वज्रपुरं नटोऽसाविति हर्षितः ॥
दानवेन्द्रवचः श्रुत्वा शाखानगरवासिभिः ।
नीता वज्रपुरं रम्यं नटवेषेण यादवाः ॥
आवासश्च ततो दत्तः सुकृतो विश्वकर्मणा ।
एष्टव्यं यच्च तत्सर्वं दत्तं शतगुणोत्तरम् ॥ [ 265 ]
अथ कालोत्सवं चक्रे वज्रनाभो महासुरः ।
कारयामास रम्यं च रङ्गवाटं प्रहृष्टवत् ॥

ततस्तान्परिविश्रान्तान्प्रेक्षार्थाय प्रचोदयत् ।
दत्त्वा रत्नानि भूरीणि वज्रनाभो महासुरः ॥
उपविष्टश्च तान्द्रष्टुं सह ज्ञातिभिरात्मवान् । [ 270 ]
छत्रे चान्तःपुरं स्थाप्य चक्षुर्दृश्ये जनाधिप ॥
भैमापि बद्धनेपथ्या नटवेषधरास्तथा ।
कार्यार्थं भीमकर्माणो नृत्यार्थमुपचक्रमुः ॥
ततो घनं सशुषिरं मुरजानकभूषितम् ।
तन्त्रीस्वरगुणैर्विद्धमातोद्यानन्ववादयन् ॥ [ 275 ]
ततस्तु देवगान्धारं छालिक्यं श्रवणामृतम् ।
भैमस्त्रियः प्रजगिरे मनःश्रोत्रसुखावहम् ॥
आगान्धारग्राममरागं गङ्गावतरणं तदा ।
विद्धमासारितं रम्यं जगिरे स्वरसंपदा ॥
लयतालसमं श्रुत्वा गङ्गावतरणं शुभम् । [ 280 ]

---

$_{3\ 5}$ °गात्तेषु ( sic ) ( for °गर्थेषु ) $D_4$ वीरेषु ( for दत्तेषु ) $M_4$ पृथग्वृत्तेषु सर्वेषु ( for [a] ) $B_{1\ 3}$ $Ds_2$ $D_{2\ 5\ 6}$ $T_{1\ 3}$ $G_{1\ 2\ 4\ 5}$ $M_4$ लोकैस् ( for श्लोकैस् ) $K_3$ $D_{1\ 2\ 5}$ तैस् ( for ते ) $D_1$ नृपाः ( for नटा ) — ( L 257 ) $K_3$ सुराश्चैव ( for असुरांश्च ) $V_3$ Bom ed गात्रैर्, $D_6$ गानैर् ( for गोत्रैर् ) $T_4$ अभिनवैर्, $G_2$ °नयैर् ( for °जनैर् ) $T_1$ $G_{1\ 3\ 4}$ $M_4$ गा( $T_2$ दा-, $T_3$ $G_1$ ज्ञा )नैरभिनयैरपि, $G_5$ गानैरपि नयैरपि ( for [b] ) — $T_{1-3}$ $G_{1\ 3-5}$ om ( hapl ) lines 259–262 — ( L 259 ) $D_5$ नटस्य बहुचित्रस्य ( for [a] ) — ( L 260 ) $K_1$ Dn दैत्येन्द्र.; $T_4$ °न ( for °श ) — ( L 261 ) $M_4$ [अ]भाषत ( for हर्षितः ) — ( L 264 ) $K_3$ $D_4$ सत्कृतो ( for सुकृतो ) — ( L 265 ) $K_3$ $D_4$ प्रष्टव्यं ( for ए° ) — $K_2$ om line 266. — ( L 266 ) $D_2$ कामोत्सवं ( for कालो° ) $\tilde{N}_2$ महाबल ( for °सुर ) — $\tilde{N}_2$ om ( hapl ) lines 267–269 — ( L 267 ) $K_{1\ 3\ 4}$ V B Dn Ds $D_6$ T G $M_4$ चमूवाट, $D_{1\ 2}$ नटरङ्गं, $D_3$ नृत्यवाट ( for रङ्ग° ) $Dn_2$ $Ds_2$ $D_3$ $G_{1\ 2\ 4\ 5}$ $M_4$ प्रहृष्टवान्, $D_5$ महर्द्धिमत् ( for प्रहृष्टवत् ) — ( L 268 ) $B_2$ $D_3$ $D_4$ ततस्तानपरिश्रान्तान् ( for [a] ) $D_3$ प्रेक्ष्यार्थं च ( for प्रेक्षार्थाय ) $K_{2-4}$ प्रणोदयत्, $D_4$ प्रनोदयन् ( for प्रचोदयत् ) — ( L 269 ) K $V_{1\ 2}$ Dn $Ds_2$ $D_{2-5}$ $T_4$ $G_2$ महाबल ( for °सुर ) — ( L 270 ) $D_4$ उपविश्य ( for °विष्टश् ). — ( L 271 ) $Ds_2$ ~~$D_4$ [अ]पि ( for च )~~ $K_2$ प्राप्य, $B_3$ चास्य ( for स्थाप्य ) $D_4$ चक्षुर्दत्त्वा ( for °दृश्ये ) $K_1$ $V_{2\ 3}$ $D_5$ $G_2$ $M_4$ नराधिप ( $V_{2\ 3}$ $D_5$ °प ); $\tilde{N}_2$ $B_3$ Dn $Ds_2$ $D_{1\ 2\ 6}$ जनाधिप ( for °प ) $K_3$ $B_1$ चक्षुर्दृश्यं ( $B_1$ °श्य ) जनाधिप, $T_{1-3}$ $G_{1\ 3-5}$ चोदयामास तान्नटान् ( for [b] ) — ( L 272 ) The second part of $K_1$ begins from बद्धनेपथ्या $V_2$ स्त्रियश्च, $B_3$ $D_3$ निबद्ध-, $D_5$ [अ]पि कृत- ( for [अ]पि बद्ध- ). — ( L 273 ) $K_2$ $D_4$ कार्यार्थं ( $D_4$ °णि ) भैमकर्माणि ( for [a] ) $K_2$ नृपार्थम्, T $G_{1-3\ 5}$ नृत्ता° ( for नृत्या° ) $T_4$ उपचक्रमे ( for °मु ) — ( L 274 ) $D_{1\ 3}$ ततं ( for ततो ) $K_{1-3}$ $Ds_2$ $D_2$ च शुषिर; $K_4$ सुशु°, $V_2$ $B_{2\ 3}$ $Dn_2$ $D_{1\ 3\ 4}$ $G_2$ $T_{1\ 4\ 6}$ ससु°, $D_5$ सुसु° ( for सशु° ) $T_{2\ 3}$ $G_{1\ 3-5}$ $M_4$ ततो घनान्त( $T_2$ °ना स )सुषिरं ( for [a] ) $\tilde{N}_2$ स्वरजालकभूषितम् ( for [b] ) — ( L 275 ) $K_4$ स्वन- ( for -स्वर- ) $\tilde{N}_2$ V B Dn $D_{1\ 5\ 6}$ $G_{1\ 5}$ गणैर् ( for -गुणैर् ) $K_2$ V $B_{2\ 3}$ $Dn_2$ विद्धान्, $K_2$ $D_{1\ 4}$ विद्वान्, $K_3$ नद्धम्, $Dn_1$ विद्धे, $D_{2\ 6}$ $G_2$ बद्धान्, $D_3$ बद्धम्, $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ युक्तम् ( for विद्धम् ) $D_3$ ततो दिव्यमवादयत्, $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ नानावाद्यमवादयन् ( for [b] ) — ( L 276 ) $K_{3\ 4}$ $D_5$ -गन्धारं, $\tilde{N}_2$ गन्धर्व-, $D_{2,3}$ $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ गान्धर्वं ( for गान्धारं ) $Ds_2$ ततस्ते देवगान्धारे ( for [a] ) — ( L 277 ) $K_{1\ 2}$ $Ds_2$ $D_{2\ 4}$ $T_1$ भैमा ( for भैम- ) $T_{1-3}$ $G_{1\ 3-5}$ om lines 277[b]–278[a] $G_2$ तस्य ( for मन- ) $T_4$ $M_4$ तच्छ्रोत्रसुखवाहनम् ( for [b] ) — ( L 278 ) $K_2$ $\tilde{N}_2$ $V_{1\ 2}$ -ग्रामरागैर्; $K_3$ °रागो, $V_3$ $B_{1\ 3}$ Ds $D_4$ $T_4$ °रागे ( for राग ) $K_{1\ 4}$ $D_{3\ 5}$ गान्धारग्रामरागेण ( $D_3$ °गैस्ते ), $D_1$ आगान्धारे ग्रामरागे, $D_2$ तथा गान्धारमाधाय ( for [a] ) $D_1$ om ( hapl ) from तदा up to तरण ( in line 280 ) $D_3$ नटा ( for तदा ) — $K_3$ om line 279 — ( L 279 ) $D_3$ दिव्यम् ( for विद्धम् ) $V_1$ आवासितं, $D_{2\ 3}$ $T_4$ आसादितं, $T_1$ आहारितं ( for आसा° ) — ( L 280 ) $V_2$ -तालमयं ( for °सम ) $T_{1-3}$ $G_{3-5}$ कृत्वा ( for -श्रुत्वा ) $D_3$ नटा ( for शुभम् ). — ( L 281 ) $K_1$ $D_4$ नामयामासुर्, $K_{3\ 4}$ $D_1$ बोधयामास; $\tilde{N}_2$ श्रावयामास, $V_1$ $B_1$ $D_6$ $T_4$ $G_{2\ 3\ 5}$ रमयामास ( $G_{3,5}$

असुरांस्तोपयामासुरुत्थायोत्थाय भारत ॥
नान्दीं च वादयामास प्रद्युम्नो गद एव च ।
साम्बश्च वीर्यसंपन्नः कार्यार्थं नटतां गतः ॥
नान्द्यन्ते च तदा श्लोकं गङ्गावतरणाश्रितम् ।
रौक्मिणेयस्तदोवाच सम्यक्स्वभिनयान्वितम् ॥ [ 285 ]
रम्भाभिसारं कौवेरं नाटकं ननृतुस्ततः ।
शूरो रावणरूपेण रम्भावेषा मनोवती ॥
नलकूबरस्तु प्रद्युम्नः साम्बस्तस्य विदूषकः ।
कैलासो रूपितश्चापि मायया यदुनन्दनैः ॥
शापश्च दत्तः क्रुद्धेन रावणस्य दुरात्मन' । [ 290 ]
नलकूबरेणाथ यथा रम्भा चाप्यथ सान्त्विता ॥
एतत्प्रकरणं वीरा ननृतुर्यदुनन्दनाः ।
नारदस्य मुनेः कीर्तिं सर्वज्ञस्य महात्मनः ॥
पादोद्धारेण नृत्येन तथैवाभिनयेन च ।
तुष्टुवुर्दानवा वीरा भैमानमिततेजसः ॥ [ 295 ]
ते ददुर्वस्त्रमुख्यानि रत्नान्याभरणानि च ।
हारांस्तरलविद्धांश्च वैदूर्यमणिभूषितान् ॥
विमानानि विचित्राणि रथांश्चाकाशगामिनः ।
गजानाकाशगांश्चैव दिव्यनागकुलोद्भवान ॥
चन्दनानि च दिव्यानि शीतानि रसवन्ति च । [ 300 ]
गुरूण्यगुरुमुख्यानि गन्धाढ्यानि च भारत ।
चिन्तामणीनुदारांश्च चिन्तिते सर्वकामदान् ॥
प्रेक्षासु तासु बह्वीपु ददन्तो दानवास्तदा ।
धनरत्नैर्विरहिताः कृताः पुरुपसत्तम ।
स्त्रियो दानवमुख्याना तथैव च जनेश्वर ॥ [ 305 ]
ततो हंसी प्रभावत्याः सखी प्राह प्रभावतीम् ।
गतास्मि द्वारकां रम्यां भैमगुप्तामनिन्दिते ॥
प्रद्युम्नश्च मया दृष्टो विविक्ते चारुलोचने ।
भक्तिश्च कथिता तस्य मया तव शुचिस्मिते ॥
तेन हृष्टेन कालश्च कृतः कमललोचने । [ 310 ]

---

°सुर्), $V_{2\ 3}$ $B_{2\ 3}$ $D_s$ रामयामास, $D_5$ दर्शयामासुर्, $T_{2\ 3}$ $G_{1\ 4}$ भ्रा( $T_3$ $G_1$ भ्र )मयामासुर् ( for तोष° ) $D_3$ om ( hapl ) lines $281^b$–$282^a$ — ( L 282 ) $D_4$ $T_{2\ 3}$ $G_{1\ 4}$ नान्दीश्, $V_{2\ 3}$ $Dn_2$ $D_1$ $T_1$ $G_3$ नन्दिं ( for नान्दीं ) $K_2$ नटश्चि नाटयामास ( for $^a$ ) $D_3$ प्रद्युम्नो यदुपुंगव ( for $^b$ ) — ( L 283 ) $K_1$ स चैव, $D_4$ संसत्सु ( for कार्यार्थं ) — ( L 284 ) $K_2$ $D_2$ $G_2$ नाट्यान्ते ( for नान्द्यन्ते ) $K_2$ गङ्गावतरणाश्रिते, $V_{1\ 2}$ °णान्वितम्, $G_4$ °णं श्रुतम् ( for $^b$ ) — ( L 285 ) $T_{2\ 3}$ $G_{1\ 5}$ सम्यक्तु विनयान्वित ( $T_2$ °तम् ), $G_2$ सम्यक्स विनयान्वितम्, $G_{3\ 4}$ °क्स्वविनयान्वित ( for $^b$ ) — ( L 286 ) $M_4$ रामाभि- ( for रम्भाभि- ) $K_2$ -सारे ( for सारं ) — ( L 287 ) $T_{2\ 3}$ $G_{1\ 4\ 5}$ रमण- ( for रावण- ) $D_5$ -वेषेण ( for -रूपेण ) $D_2$ -रूपेण ( hypermetric ) ( for -वेषा ) $K_2$ मनोहरी, $B_3$ °वतीम् ( for °वती ) $T_{1-3}$ $G_{1\ 3\ 4}$ $M_4$ रम्भावेषं गदो गत, $G_5$ गङ्गावेषं गदो गत, $M_4$ रम्भावेष गतो गद ( for $^b$ ). — ( L 289 ) $V_1$ $D_5$ रचितश्, $\tilde{N}_2$ $D_2$ ( before corr as above ) $G_3$ रोपि°, $D_3$ तुलि° ( for रूपि° ) — ( L 290 ) $G_5$ रावणेन ( for °णस्य ) — $K_4$ om ( hapl ) lines 291–293 — ( L 291 ) $D_1$ $T_1$ सा ( for च ) $D_3$ रम्भा * यशसान्विता ( for $^b$ ) — After line 291, $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ ins

4** एवं रामस्य चरितं षट्काण्डमथ सोत्तरम् ।
धन्यं यशस्यमायुष्यं राज्ञां च विजयावहम् ॥
पूर्वं वाल्मीकिना प्रोक्त शृङ्गारादिरसान्वितम् ।
निषादादिस्वरैर्युक्तं गायन्तो मधुरस्वरा. ॥
[ ( L 3 ) $G_3$ -समन्वितम् ( for -रसा° ) ]

— ( L 292 ) $T_2$ $D_5$ वीर ( for वीरा ) $D_5$ नृप- ( for यदु- ) $M_4$ -पुंगवा ( for -नन्दना ) — ( L 293 ) $K_3$ $Dn_2$ $D_{1\ 3\ 5}$ कीर्तिं. ( for कीर्तिं ) $T_{2\ 3}$ $G_{1\ 3-5}$ शर्वस्य तु ( for सर्वज्ञस्य ) — ( L 294 ) $Dn$ $D_{2\ 3}$ $T_1$ $G_5$ $M_4$ नृत्तेन ( for नृत्येन ). $T_{2\ 3}$ $G_{1\ 3\ 4}$ पादोद्धारणनृत्तेन ( for $^a$ ) — ( L 295 ) $Ds_2$ तुतुपुर् ( for तुष्टुवुर् ) $B_3$ सर्वे ( for वीरा ) $T_4$ om lines $295^b$–$304^b$ K $\tilde{N}_2$ V B D $T_1$ $G_{1-4}$ $M_4$ भैमानामतिते( $K_1$ $D_s$ $M_4$ °मितौ )जसाम् ( for $^b$ ) — ( L 296 ) $K_2$ $D_4$ वसु- ( for वस्त्र ) $\tilde{N}_2$ वस्त्राणि, $T_{2\ 3}$ $G_4$ $M_4$ दिव्यानि ( for रत्नानि ) — ( L 297 ) $D_6$ ( *sup lin* ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ -सिद्धांश् ( for -विद्धांश् ) $D_3$ हाराश्च रत्नविद्धाश्च ( for $^a$ ) $D_3$ चित्रितान् ( for -भूषितान् ) — ( L 298 ) $D_4$ रथाश् ( for रथांश् ) — ( L 299 ) $D_5$ दिव्यात्रागकुलोद्वहान् ( for $^b$ ) — ( L 300 ) $D_1$ प्रस्रवन्ति, $D_3$ सुख° ( for रस° ) — ( L 302 ) $V_2$ om from नुदारांश्च up to प्रद्युम्नश्च ( in line 308 ) $D_3$ चिन्तितै. ( for °ते ) — ( L 303 ) $\tilde{N}_2$ प्रेक्षायुक्तासु बह्वीषु, $T_{2\ 3}$ $G_{1\ 3-5}$ प्रेक्षकासु च पङ्क्तीपु ( for $^a$ ) $K_2$ $D_2$ ददतो, $D_1$ नन्दन्तो ( for ददन्तो ) — ( L 304 ) $T_1$ रथ- ( for धन- ) $M_4$ च सहिता ( for विरहिता ) $Dn$ $D_1$ $T_4$ -सत्तमा, $D_3$ °मै — ( L 306 ) $K_2$ $D_{2,6}$ सखीं — ( L 307 ) $K_1$ $D_4$

अद्य प्रदोषसमये त्वया सह समागमः ॥
तदद्य रुचिरश्रोणि तव प्रियसमागमः ।
न ह्यात्मवन्तो भाषन्ति मिथ्या भैमकुलोद्भवाः ॥
ततः प्रभावती हृष्टा हंसी तामिदमब्रवीत् ।
उषितासि ममावासे स्वप्नुमर्हसि सुन्दरि ॥ [ 315 ]
त्वयाहं सहितावासे द्रष्टुमिच्छामि केशविम् ।
निःसाध्वसा भविष्यामि त्वया सह विहंगमे ॥
हंसी तथेति चोवाच सखी कमललोचनाम् ।
आरुरोह च तद्धर्म्यं प्रभावत्या विहंगमा ॥
विश्वकर्मकृते तस्मिन्हर्म्यपृष्ठे प्रभावती । [ 320 ]
संविधानं चकाराशु प्रद्युम्नागमनक्षमम् ॥
तस्मिन्कृते संविधाने काममानयितुं ययौ ।
प्रभावतीमनुज्ञाप्य हंसी वायुसमा गतौ ॥

सा गत्वाभ्यागता हंसी प्रभावतिमथाब्रवीत् ।
अभ्येति रौक्मिणेयोऽसावाश्वसायतलोचने ॥ [ 325 ]
प्रद्युम्नो नीयमानं तु ददृशे माल्यमात्मवान् ।
भ्रमरैरावृतं वीरः सुगन्धमरिमर्दन ॥
निलिल्ये तत्र माल्ये तु भूत्वा मधुकरस्तदा ।
प्रभावत्या नीयमाने विदितार्थः प्रतापवान् ॥
प्रवेशितं च तन्माल्यं स्त्रीभिर्मधुकरायुतम् । [ 330 ]
अविदूरे च विन्यस्तं प्रभावत्या जनाधिप ।
भ्रमरास्ते ययु सौम्य संध्याकाले ह्युपस्थिते ॥
स भैमप्रवरो वीरस्तैः सहायैर्विहीनतः ।
कर्णोत्पले प्रभावत्या निलिल्ये शनकैरिव ॥
ततः प्रभावती हंसीमुवाच वदतां वरा । [ 335 ]
उद्यच्छन्तं पूर्णचन्द्रं समीक्ष्यातिमनोहरम् ।

---

भैमैर् ( for भैम- ) $D_1$ अनिन्दितै ( for °ते ) — ( L 308 ) $Ñ_2$ Ds -हासिनि , $V_3$ $B_3$ $D_6$ लोचन ( for °ने ) — ( L 309 ) $D_1$ $T_4$ $G_2$ तत्र ( for तस्य ) — ( L 310 ) $K_4$ तुष्टेन ( for हृ° ) — ( L 311 ) $T_{1-3}$ $G_{1,3-5}$ अद्य प्रदेशे रम्ये च ( for $^a$ ) K $Ñ_2$ $B_2$ Dn T G $M_4$ समागमे , $D_1$ °मम् ( for °म. ) — ( L 312 ) $Dn_1$ $G_3$ -समागमे — ( L 313 ) $K_{2,3}$ V B Dn Ds $D_{1-3,6}$ $T_4$ $G_2$ [आ]त्मवति, $Ñ_2$ Poona ed G (ed ) °वातौ ( for °वन्तो ) $D_{2,3}$ T G $M_4$ भाषन्ते ( for °न्ति ) $G_3$ -कुलोद्वहा· ( for °द्भवा ) — ( L. 315 ) $Ñ_2$ $V_3$ $B_1$ $Ds_1$ मया ( for मम ) $V_2$ om ( hapl ) lines $315^b$–$316^a$ $D_6$ $T_{2,3}$ $G_{1,3}$ $M_4$ वस्तुम् ( for स्वप्नुम् ) — ( L 316 ) $V_1$ [आ]रामे ( for [आ]वासे ) $K_{3,4}$ $D_5$ $G_2$ $M_4$ कैशवम् , $D_{2,3}$ T $G_{3,4}$ केशवम् ( for कैशविम् ) — ( L 318 ) $K_2$ $G_{1,4}$ होवाच , $D_2$ सो° , $D_5$ तामाह , $G_5$ प्रोवाच ( for चो° ) $T_1$ $G_{3,4}$ अतुल- ( for कमल- ) — ( L 320 ) $K_{3,4}$ Dn $T_1$ तत्र ( for तस्मिन् ) — ( L 321 ) $K_{3,4}$ प्रद्युम्नागमनाश्रयम् ( for $^b$ ) — ( L 323 ) $G_5$ गता ( for गतौ ) $D_2$ हंसी सा वेगतो गता ( for $^b$ ) — After line 323, $Ds_1$ Bom Poona eds G( ed ) ins

5** नटवेषधरं कामं गत्वोवाच शुचिस्मिता ॥
अद्य भूत· स भगवन्समयो वर्तते निशि ।
तथेति प्राह तां काम सा निवृत्ताथ पक्षिणी ॥

[ ( L 1 ) $Ds_1$ प्रत्युवाच ( for गत्वो° ) — ( L 2 ) $Ds_1$ व्रजस्व ( for भून' स ) — ( L 3 ) $Ds_1$ काम ( for काम ) ]

— ( L 324 ) $T_{1-3}$ $G_{1,3-5}$ गत्वा ह्यनुगता हंसी , Bom Poona eds G( ed ) अभ्यागता च सा हंसी ( for $^a$ ) $K_1$ $V_3$ $T_2$ $G_1$ $M_4$ प्रभावतीमिदमब्रवीत् ( hypermetric ), $D_1$ ह्यब्रवीत्तां प्रभावतीम् , $D_6$ ( marg ) तामवोचत्प्रभावतीम् ( for $^b$ ) — ( L 325 ) $V_{1,2}$ $B_1$ ऽयं ( for ऽसाव् ) $T_{1-3}$ $G_{1,3-5}$ om lines $325^b$–$329^a$. $K_{3,4}$ $D_4$ वर्तुलायतलोचने , $V_{1,2}$ रा( $V_2$ वा )ममायत° , $V_3$ $B_3$ वासमायत° , $D_5$ वाशु ह्यायत° ( for $^b$ ) — ( L 326 ) $V_{1,3}$ $D_1$ नीयमानस् ( for °मानं ) $D_3$ ददर्श ( for ददृशे ) — ( L 327 ) $K_3$ Dn आचित ( for आवृतं ) $B_3$ सुगन्धिम् , $Dn_1$ सगन्धम् ( for सु° ) — ( L. 328 ) $D_4$ माल्येषु ( for माल्ये तु ) $D_3$ निलिल्ये तु स्वयं तस्मिन् ( for $^a$ ) — ( L 329 ) $D_3$ प्रभावत्यै ( for °त्या ) $K_3$ नीयमानो ( for °ने ) $T_{1-3}$ $G_{1,3-5}$ वा गतश्च ( for विदितार्थ ) — $K_2$ om line 330 — ( L 330 ) $T_{1-3}$ $G_{1,3-5}$ प्रेषितं तच्च माल्यं च ( for $^a$ ) $K_{1,4}$ मधुकरैर्युतम् , $Ñ_2$ $D_5$ °रान्वितम् , $D_3$ $G_2$ °रावृतम् ( for °रायुतम् ) — After line 330, $K_{1,3,4}$ V B Dn Ds $D_{1,3,6}$ $T_{1-3}$ $G_{1-5}$ $M_3$ ins :

6** उपनीतं प्रभावत्यै स्त्रीभिस्तद्भ्रमरावृतम् ।
[ $V_{1,2}$ भ्रमरायुतम् ( for °वृतम् ) ]

— ( L 331 ) $V_1$ $D_2$ $M_4$ नराधिप , $D_3$ अरिंदम ( for जनाधिप ) — ( L 332 ) $K_1$ साम्यं , $K_2$ $D_4$ सौम्या· , $V_1$ वीर , $V_3$ सौम्ये ( for सौम्य ) $T_1$ ऽभ्युप- ( for ह्युप- ) — ( L 333 ) $T_{1,4}$ $G_3$ -भ्रमरो ( for -प्रवरो ) $Ds_2$ विनिर्गत $D_4$ बहिर्गत , $M_4$ विनाकृतः ( for विहीनतः ) $T_{1-3}$ $G_{1,3-5}$ भ्रमरैस्तैर्विनाकृत ( for $^b$ ) — ( L 335 ) $V_1$ Dn $Ds_2$ $D_{2-4}$ $T_4$ वर ( for वरा ) $T_{1-3}$ $G_{1,3-5}$ भगिन्यावपि चाब्रवीत् ( for $^b$ ). — ( L 336 ) $D_3$ $T_4$ $G_2$ $M_4$ उद्गच्छन्त , $G_4$ उद्यन्तं तं ( for उद्यच्छन्तं ) $Ñ_2$ Ds $D_2$ उद्यन्तं ( $Ds_2$ °तं ) पूर्णचन्द्रं सा ( $D_2$

सखि दह्यन्ति मेऽङ्गानि मुखं च परिशुष्यति ।
औत्सुक्यं हृदि चातीव कोऽयं व्याधिरनौषधः ॥
दधद्द्विगुणमौत्सुक्यमसौ पूर्णनिशाकरः ।
नवोदितः शीतरश्मिः संविहारोचितप्रियः ॥ [ 340 ]
न दृष्टपूर्वो हि मया श्रुतिमात्रेण काङ्क्षितः ।
अहो धूमयतेऽङ्गानि स्त्रीस्वभावस्य धिक्खलु ॥
कल्पयामि यथा बुद्ध्या यदि नाभ्येति मे प्रियः ।
कुमुद्वतीगतं मार्गं हा गमिष्याम्यकिंचना ।
मदनाशीविषेणास्मि दष्टा हाहा मनस्विनी ॥ [ 345 ]
शीतवीर्याः प्रकृत्यैव जगतो ह्लादनाः सुखाः ।
दहन्ति मम गात्राणि किं नु चन्द्रगभस्तयः ॥
प्रकृत्या शीतलो वायुर्नानापुष्परजोवहः ।
दावाग्निसदृशो मेऽद्य दंदहीति शुभां तनुम् ॥
ततः सकल्पये एव स्थैर्यं कार्यमिवात्मनः । [ 350 ]
नावतिष्ठति निर्वीर्यं मनः संकल्पधर्षितम् ॥
विमनस्कास्मि मुह्यामि वेपथुर्मे महान्हृदि ।
बंभ्रमीति च मे दृष्टिर्हा हा यामि ध्रुवं क्षयम् ॥

Colophon

वैशंपायन उवाच ।

आविष्टेयं मया बाला सर्वथेत्यवगम्य तु ।
कार्ष्णिर्हृष्टेन मनसा हंसीमिदमुवाच ह ॥ [ 355 ]
दैत्येन्द्रतनयां प्राप्तमवगच्छस्व मामिह ।
षट्पदैः सह षट्पादो भूत्वा माल्ये निलीय तु ॥

---

तं ) ( for $^{a}$ ) $T_{1\,2}$ $G_{3}$ उदीक्ष्य ( for समीक्ष्य ) $M_{4}$ समीक्षन्ती मनोरमम् ( for $^{b}$ ) — ( L 337 ) $T_{1-3}$ $G_{1\,3\,5}$ दह्यन्ते मम चाङ्गानि ( for $^{a}$ ) $K_{3\,4}$ $D_{5}$ -शुष्यते — ( L 338 ) $K_{4}$ निरौषध ( for अनौ° ) — ( L 339 ) $D_{5}$ दत्त-, $T_{2\,3}$ $G_{1}$ दद्याद्, $T_{4}$ अथ, $G_{2}$ ददौ ( for दधद् ) $M_{4}$ om from पूर्ण up to यदि ( in line 343 ) $D_{2}$ पौर्णमास्यां निशाकर ( for $^{b}$ ) — ( L 340 ) $K_{2\,4}$ Dn सख्य हरति च प्रिय ( $K_{4}$ °ये ), V $B_{2\,3}$ $D_{1\,6}$ सनीहारो रतिप्रिय, $B_{1}$ सविहारो ह्यतिप्रिय, $D_{3}$ नाद्याप्यायाति मे प्रिय, $D_{5}$ सखि मे नैति च प्रिय, $T_{1}$ सहरेमेति विप्रिय, $T_{2\,3}$ $G_{1\,3-5}$ सहारो मेति विप्रिय ( $T_{2}$ °श्रुत ), $T_{4}$ $G_{2}$ सविहारोऽतिविप्रिय ( for $^{b}$ ) — ( L 341 ) Dn $D_{2\,3}$ $T_{4}$ $G_{2}$ श्रुत ( for श्रुति- ) — ( L 342 ) $K_{2}$ $V_{2}$ $B_{1}$ $Dn_{2}$ Ds $D_{4}$ धूमायते, $D_{3}$ धूमानि मे, $T_{1-3}$ $G_{1\,3-5}$ दहति च ( for धूमयते ) $D_{2}$ अहो धूमायतेऽङ्गश्री ( for $^{a}$ ) — ( L 343 ) $K_{2\,4}$ $T_{2\,3}$ $G_{1\,3-5}$ [आ]याति ( for [अ]भ्येति ) $\tilde{N}_{2}$ $V_{1}$ मत्प्रिय ( for मे प्रिय ) — ( L 344 ) $T_{1-3}$ $G_{1\,3-5}$ कुमुद्वतीं वा गङ्गां वा ( for $^{a}$ ) $D_{2}$ हा गमिष्ये पतिं विना, $T_{1-3}$ $G_{1\,3-5}$ $M_{4}$ गाहयिष्यामि किंचन ( for $^{b}$ ) — ( L 345 ) $K_{3\,4}$ Dn $G_{2}$ हाहा दष्टा ( by transp ) ( L 346 ) $K_{2-4}$ $D_{1\,2}$ $V_{1\,2}$ ह्लादका, $B_{3}$ दहना. ( for ह्लादना ) $D_{3}$ शुभा ( for सुखाः ) $K_{1}$ $D_{4}$ जगतो ह्लादिन खलु, $T_{2}$ जगदाह्लादिनोत्सुका ( sic ), $T_{4}$ °दास्वादनाः सुखाः ( for $^{b}$ ) — ( L 347 ) $T_{1-3}$ $G_{1\,3-5}$ चाङ्गानि ( गात्राणि ) — ( L 348 ) $D_{3}$ -गन्ध- ( for -पुष्प- ) $G_{2\,4}$ -रसावह ( for रजो° ). — ( L 349 ) $T_{2\,3}$ $G_{1\,3\,5}$ दवाग्नि ( for दावाग्नि- ) $K_{1\,2}$ $B_{3}$ $M_{4}$ दहतीति, $D_{4}$ दह्यतीव ; $T_{2-4}$ $G_{1\,3-5}$ दहत्यति, $G_{2}$ दह्यतीव ( for ददहीति ) — ( G 350 ) $K_{1\,2}$ तत संकल्पयत्ये( $K_{2}$ °यित्वै )षा, $K_{3}$ $D_{1}$ मन संकल्पयत्येतत्, $K_{4}$ $\tilde{N}_{2}$ $B_{2}$ Dn $Ds_{1}$ तत्संकल्पय धैर्यं मे ( $\tilde{N}_{2}$ $B_{2}$ °यत्येवैष, Dn $Ds_{1}$ °य एवैषा ), $V_{1\,2}$ $B_{3}$ तद्वत्संकल्पयत्येतत्, $V_{3}$ $D_{2\,6}$ तत्संकल्पयते वैष ( $D_{6}$ वैतत् ), $B_{1}$ तद्वत्सकल्पयत्येव, $Ds_{2}$ $D_{3-5}$ तत सकल्पयत्येष ( $D_{3}$ °य कार्यं ), $D_{6}$ ( marg ) T G $M_{4}$ तत संकल्पयत्येव ( for $^{a}$ ) $K_{1\,2}$ $Dn_{1}$ $D_{2\,4}$ स्थैर्य-, $D_{6}$ ( marg ) $G_{2}$ $M_{4}$ शैघ्र्य, T $G_{1\,3-6}$ शीघ्रं, ( for स्थैर्यं ) $K_{4}$ $V_{3}$ कामम् ( for कार्यम् ) $T_{2}$ $G_{3}$ इह ( for इव ) — ( L 351 ) $B_{3}$ $T_{4}$ निर्वार्यं, $D_{2}$ निर्बीज ( for निर्वीर्यं ) $D_{3}$ मम संकल्पचर्चितम् ( for $^{b}$ ) — ( L 352 ) $T_{1-3}$ $G_{1\,3-5}$ [अ]ति- ( for [अ]स्मि ) $K_{3\,4}$ मुष्टास्मि, $B_{3}$ दह्यामि ( for मुह्यामि ) — ( L 353 ) $K_{2}$ विभ्राम्यति, $\tilde{N}_{2}$ $V_{3}$ $B_{1\,2}$ $D_{6}$ भ्रमतीव, $T_{1-3}$ $G_{3-5}$ भ्रमत्यपि, $G_{1}$ भवत्यपि ( for बंभ्रमीति ). $T_{2}$ $G_{1}$ दृष्ट्वा ( for दृष्टिर् ) $T_{1-3}$ $G_{1\,3-5}$ om lines $353^{b}$–$426^{b}$ — $M_{4}$ यास्यामि ( for हा यामि ) $K_{2}$ ध्रुवा, $V_{1}$ $D_{3}$ यम- ( for ध्रुवं )

Colophon — *Mention of the Epic* $Ds_{2}$ — *Mention of Khila* $K_{1}$ V B $Dn_{2}$ Ds $D_{1}$ — *Adhy name* $K_{1\,2\,4}$ V B Dn $Ds_{1}$ $D_{1-4\,6}$ वज्रनाभे प्रद्युम्नोत्तरम् ; $K_{3}$ प्रद्युम्नोत्तरम्, $\tilde{N}_{2}$ $Ds_{2}$ वज्रनाभपुरे प्रद्युम्नोत्तरम्, $D_{5}$ वज्रनाभवध — *Adhy no* $K_{3}$ 146, $V_{1}$ 152, $V_{2}$ 151, $V_{3}$ $Ds_{2}$ 150, Dn 148, $D_{1}$ 144, $D_{3}$ $T_{4}$ $G_{2}$ 157, $D_{4}$ 147 ; $M_{4}$ 161

$K_{2}$ om the ref — ( L 354 ) $D_{2}$ -गम्यते, $D_{3\,4}$ गम्य तत् ( for -गम्य तु ) $K_{3\,4}$ $Dn_{1}$ सर्वथा त्ववगम्य तु, $D_{1}$ °थेत्येव गम्यताम् ( for $^{b}$ ) — $\tilde{N}_{2}$ om line 356 — ( L 356 ) $D_{1}$ -तनये ( for °यां ) $V_{3}$ प्राप्तुम् ( for प्राप्तम् ) $D_{3}$ -गच्छन्तु ( for -गच्छस्व ) $M_{4}$ अनुगच्छस्व मामिति ( for $^{b}$ ) — ( L 357 ) $K_{3\,4}$ $D_{2\,4}$ षट्पदैः षट्पदो भूत्वा ( for $^{a}$ ) $K_{3\,4}$ $D_{4}$ माल्ये

विधेयोऽस्मि प्रभावत्या यथेष्टं मयि वर्तताम् ।
इत्युक्त्वा दर्शयामास सुरूपो रूपमात्मनः ॥
तद्धर्म्यपृष्ठं प्रभया द्योतितं तस्य धीमतः । [ 360 ]
अभिभूता प्रभा चैव राजंश्चन्द्रोद्भवा शुभा ॥
प्रभावत्यास्तु तं दृष्ट्वा ववृधे कामसागरः ।
चन्द्रस्येवोदये प्राप्ते पर्वण्यां सरितां पतिः ॥
सलज्जाधोमुखी किंचित्किंचित्तिर्यग्गवेक्षिणी ।
प्रभावती तदा तस्थौ निश्चलेवामलेक्षणा ॥ [ 365 ]
करेणाधःप्रदेशे तां चारुभूषणभूषिताम् ।
स्पृष्ट्वोवाच वरारोहां रोमाञ्चिततनुस्तनुम् ॥
मनोरथशतैर्लब्धं किं पूर्णेन्दुसमप्रभम् ।
अधोमुखं मुखं कृत्वा न मां किंचित्प्रभाषसे ॥
प्रभोपमर्दं मा कार्षीर्वदनस्य वरानने । [ 370 ]
साध्वसं त्यज्यतां भीरु दासः साध्वनुगृह्यताम् ॥
न कालमिव पश्यामि भीरु भीरुत्वमुत्सृज ।
याचाम्येपोऽञ्जलिं कृत्वा प्राप्तकालं निबोध मे ॥
गान्धर्वेण विवाहेन कुरुष्वानुग्रहं मम ।

देशकालानुरूपेण रूपेणानुत्तमा सती ॥ [ 375 ]
उपस्पृश्य ततो भैमो मणिस्थं जातवेदसम् ।
जुहाव समये वीरः पुष्पैर्मन्त्रानुदीरयन् ॥
जग्राहाथ करं तस्या वराभरणभूषितम् ।
चक्रे प्रदक्षिणं चैव तं मणिस्थं हुताशनम् ॥
प्रजज्वाल स तेजस्वी मानयन्नच्युतात्मजम् । [ 380 ]
भगवाञ्जगतः साक्षी शुभस्याथाशुभस्य च ॥
उद्दिश्य दक्षिणां वीरो विप्राणां यदुनन्दनः ।
उवाच हंसीं द्वारस्थां तिष्ठावां रक्ष पक्षिणि ॥
तस्यां प्रणम्य यातायां कामस्तां चारुलोचनाम् ।
प्रहाय दक्षिणे हस्ते निनाय शयनोत्तमम् ॥ [ 385 ]
ऊरावेवोपवेश्यैनां सान्त्वयित्वा पुनः पुनः ।
चुचुम्ब शनकैर्गण्डे वासयन्मुखमारुतैः ॥
ततोऽस्या आपपौ वक्त्रं पद्मं मधुकरो यथा ।
आलिलिङ्गे च सुश्रोणी क्रमेण रतिकोविदः ॥
अरामयद्रहस्येनां न चोद्विजिगवांस्तदा । [ 390 ]
आप कृत्स्नं चरत्यर्थं रतिकार्यविशारदः ।

---

चैव, $D_3$ त्वस्मिन्मालये ( for भूत्वा मालये ) $D_{2\,3}$ निलीनवान् ( for °य तु ) — ( L 358 ) $B_3$ यथोक्तं ( for यथेष्टं ) — ( L 359 ) $D_3$ स्वरूपमथ चात्मन ( for $^{b}$ ) — ( L 360 ) $D_3$ तद्धर्म्यं प्रभया सर्वं ( for $^{a}$ ) — ( L 361 ) $K_3$ चन्द्रोद्गता, $K_4$ चन्द्रगता ( for चन्द्रोद्भवा ) $D_6$ तदा, $G_2$ प्रभा ( for शुभा ). — ( L. 363 ) $V_3$ [उ]दयात् ( for °ये ) $K_4$ यथा चन्द्रोदये प्राप्ते ( for $^{a}$ ) $K_1$ Dn $D_4$ शर्वर्यां, $K_3$ $D_1$ पर्वण्य, $K_4$ पार्वण्य, $T_4$ $M_4$ पार्वण ( for पर्वण्यां ) — ( L 364 ) $K_{1\,3\,4}$ $B_{2.\,3}$ Ds $D_{1-6}$ -मुखमुखी ( for -मुखी किंचित् ) $K_2$ तिर्यग्दृष्ट्या गवेक्षिणी ( for $^{b}$ ) — ( L 365 ) $V_1$ $T_4$ $G_2$ $M_4$ निश्चला कमलेक्षणा, Dn $D_5$ °लं कमलेक्षणा, $D_3$ °लेवायतेक्षणा ( for $^{b}$ ) — ( L 366 ) $T_4$ $G_2$ [अ]थ ( for [अ]धः- ) $B_{2\,3}$ $D_{1\,6}$ $T_4$ $G_2$ $M_4$ भूषिते ( for °ताम् ) — ( L 367 ) Dn $D_5$ -तनुस्तत, $D_3$ तनुं तदा, $D_5$ ( marg ) -तनूरुह' ( for -तनुस्तनुम् ) — ( L 368 ) $D_3$ संपूर्णेन्दुसमप्रभे ( for $^{b}$ ) — ( L 369 ) $V_{2\,3}$ $D_{4\,6}$ अधोमुख- ( for °खं ) $\tilde{N}_2$ प्रभावत्यद्भुतं दृष्ट्वा, $M_4$ अधोमुखमुखा किंचित् ( for $^{a}$ ) $M_4$ कृत्वा ( for किंचित् ) — ( L 370 ) $K_4$ $D_1$ प्रभावमर्दं मा कार्षीर्, $D_3$ प्रभावति विमर्दं मा ( for $^{a}$ ) $K_4$ वदनस्थं ( for °स्य ) $D_3$ कार्षीर्वद शुभानने ( for $^{b}$ ). — ( L 372 ) $K_{1\,4}$ अव-, $V_2$ $D_5$ इह ( for इव ) $D_3$ भीरु ते वदनं प्रिये ( for $^{b}$ ) — ( L 373 ) $D_3$ याचे त्वाम् ( for याचाम्येषो ) — ( L 374 ) $D_5$ विधानेन ( for विवाहेन ) Poona ed मयि ( for मम ). — ( L 375 ) $K_{3\,4}$ Dn $T_4$ [अ]प्रतिमा ( for [अ]नुत्तमा ) $D_2$ रूपेणानुत्तमा सतीम् ( for $^{b}$ ) — ( L 376 ) G( ed ) उपस्पृष्टस् ( for °स्पृश्य ) — ( L 377 ) $K_2$ जुहुवे, $V_1$ जहार, $D_3$ अजुहोत् ( for जुहाव ) $V_2$ $B_3$ मन्त्रम्, $G_2$ गन्धान् ( for मन्त्रान् ) — ( L 379 ) $D_{1\,4}$ प्रदक्षिणा ( for °णं ) $M_4$ मणिस्थं तं ( by transp ) — ( L 380 ) $D_5$ संप्रजज्वाल तेजस्वी ( for $^{a}$ ) $D_5$ मानयन्केशवात्मजम् ( for $^{b}$ ) — ( L 382 ) $K_{3\,4}$ उवाच ( for विप्राणा ) — ( L 383 ) Dn $D_{2\,3\,5}$ $T_4$ द्वारस्था $D_1$ तिष्ठ वा गच्छ पक्षिणि ( for $^{b}$ ) — ( L 385 ) $K_3$ $Ds_2$ जग्राह, $K_4$ $D_{1-3}$ गृहीत्वा ( for प्रहाय ) — ( L 386 ) $K_2$ पुरा चैव, $K_{3\,4}$ $D_5$ ऊर्वोरेव, Ds ( marg as above ) जगाद च, $D_1$ जगौ चैव ( for ऊरावेव ) — ( L 387 ) $K_1$ $V_{2\,3}$ Dn $Ds_2$ $D_{2\,5}$ $M_4$ गण्ड, $\tilde{N}_2$ कण्ठं; $V_1$ वक्त्र ( for गण्डे ). — ( L 388 ) Some Mss च ( for आ- ) — $\tilde{N}_2$ om line 389 — ( L 389 ) $K_2$ $V_2$ $D_{2\,3}$ आलिलिङ्ग ( for °ङ्गे ) $K_4$ आलिङ्ग्याङ्गेन सुश्रोणीं ( for $^{a}$ ) — ( L 390 ) $K_2$ $V_1$ $B_{1\,2}$ $Ds_1$ ( marg ) $D_{2\,5}$ $T_4$ आरामयद् ( for अराम° ) $K_2$ $D_3$ [ए]तां ( for [ए]ना ) — $K_2$ om line 391 — ( L 391 ) $K_3$ $\tilde{N}_2$ Dn $D_{1,\,5\,6}$ अपकृष्टं, $T_4$ $G_2$ $M_4$ स च कृत्स्नं ( for

उवास स तया सार्धं रमन्कृष्णसुत. प्रभुः ॥
अरुणोदयकाले च ययौ यत्र नटालयः ।
अकामया प्रभावत्या कथंचित्स विसर्जितः ।
तामेव मनसा कान्तां कान्तरूपः समुद्वहन् ॥ [ 395 ]
त ऊषुर्नटवेषेण कार्यार्थं भैमवंशजाः ।
प्रतीक्षन्तस्तदा वाक्यमिन्द्रकेशवयोस्तदा ।
उद्योगं वज्रनाभस्य त्रैलोक्यविजयं प्रति ॥
प्रतीक्षन्तो महात्मानो गुह्यसरक्षणे रताः ।
कश्यपस्य मुनेः सत्रं यावत्तावन्नराधिप ॥ [ 400 ]
देवासुराणां सर्वेषामविरोधो महात्मनाम् ।
त्रैलोक्यविजयार्थाय जयतां धर्मचारिणाम् ॥
एवं कालप्रतीक्षाणां वसतां तत्र धीमताम् ।
संप्राप्तः प्रावृषो रम्यः सर्वभूतमनोहरः ॥
अहर्निशं च वृत्तान्तं प्रयच्छन्ति मनोजवाः ॥ [ 405 ]
शक्रकेशवयोर्हंसाः कुमाराणां महात्मनाम् ॥
रेमे सह प्रभावत्या प्रद्युम्नश्चानुरूपया ।
रात्रौ रात्रौ महातेजा धार्तराष्ट्राभिरक्षितः ॥
तैर्हि वज्रपुरं हंसैर्वेसद्भिर्वासवाज्ञया ।
व्याप्तं नृप नटांस्तांश्च न विदुः कालमोहिताः ॥ [ 410 ]
दिवापि रौक्मिणेयस्तु प्रभावत्या नृपालये ।
तिष्ठत्यन्तर्हितो वीरो हंससंघाभिरक्षितः ॥
माययास्य प्रतिच्छाया दृश्यते हि नटालये ।
देहार्धेन तु कौरव्य सिषेवे स प्रभावतीम् ॥
संनतिं विनयं शीलं लीलां दाक्ष्यं विलासिताम् । [ 415 ]
स्पृहयन्त्यसुरा दृष्ट्वा विद्वत्तां च महात्मनाम् ॥
रूपं विलासं गन्धं च मृजां भाषामथार्यताम् ।
तासां यादवनारीणां स्पृहयन्त्यसुरस्त्रियः ॥
वज्रनाभस्य तु भ्राता सुनाभो नाम विश्रुतः ।
दुहितृद्वयं च नृपतेस्तस्य रूपगुणान्वितम् ॥ [ 420 ]
एका चन्द्रवती नाम्ना गुणवत्यथ चापरा ।
प्रभावत्यालयं ते तु व्रजतः खलु नित्यदा ॥
ददृशाते तु ते तत्र रतिसक्तां प्रभावतीम् ।
परिपप्रच्छतुश्चैव विश्रम्भोपगतां सतीम् ॥
सोवाच मम विद्यास्ति याधीता काङ्क्षितं पतिम् । [ 425 ]

---

आप कृत्स्न ) $K_4$ $B_3$ रतिशास्त्र ( for °कार्य- ) —( L 392 ) $D_3$ तदा ( for प्रभु ) —( L 393 ) $K_4$ $M_4$ नटालयम् , $D_3$ नटा निजा ( for नटालय ) —( L 396 ) $K_2$ ते तस्थुर् , $V_1$ तुतुषुर् ( for त ऊषुर् ) $\tilde{N}_2$ -यादवा ( for -वशजा ) —( L 398 ) $\tilde{N}_2$ औत्सुक्याद् ( for त्रैलोक्य- ) —( L 399 ) $V_3$ प्रतीक्षन्तौ महात्मानौ ( for [a] ) $M_4$ गूढ- ( for गुह्य- ) —( L 401 ) $D_4$ पूर्वेषाम् ( for स° ) $K_1$ आविरोधान् , $K_3$ $D_1$ °धे ( for °धो ) — $D_3$ om ( hapl ) lines 402-406 —( L 402 ) $K_1$ $\tilde{N}_2$ $D_{4\ 6}$ यजता , $K_{2\ 4}$ Dn $M_4$ यतता , $V_3$ $B_1$ $D_1$ जगता ( for जयतां ) — After line 402, $Ds_1$ ( marg ) ins .

7** तावद्दिवाया दैत्येन्द्र नाट्यंश्च नटान्नृप ।
दिवासु ननृतुस्ते वै रात्रावेव कदाचन ॥

—( L 403 ) $K_1$ $B_1$ $Ds_2$ $D_{1\ 2\ 4}$ $T_4$ $G_2$ $M_4$ कालं ( for काल- ) $\tilde{N}_2$ -प्रतीक्षार्थं ( for °क्षाणा ) $D_5$ सतत ( for वसता ) — $K_4$ om lines 404-406 $K_2$ om lines 404-405 —( L 405 ) $M_4$ महाजवा ( for मनो° ) —( L 407 ) $K_{2\ 3}$ V $B_1$ $Dn_1$ $Ds_1$ $D_{1,3\ 4}$ चारु- ( for चानु- ) —( L 408 ) $V_1$ -पालित ( for -रक्षित ) —( L 409 ) $K_4$ Cal ed. वज्रपुरे ( for °रं ) —( L 410 ) $K_3$ नरांस् ; $M_4$ भटैस् ( for नटांस् ) $V_1$ तत्र ( for तांश्च ) $K_2$ $B_3$ $D_6$ काम- ( for काल- ) —( L 412 ) $V_3$ [अ]भ्यर्हितो ( for [अ]न्त° ) $\tilde{N}_2$ हंसहंस्यभिरक्षित , $D_2$ हंससंघातिरक्षितम् , $M_4$ हंसेन सह रक्षित ( for [b] ) —( L 413 ) $\tilde{N}_2$ प्रतिच्छन्ना ( for °च्छाया ) $D_3$ ऽस्य ( for हि ) —( L. 414 ) $K_3$ Dn $D_{4\ 5}$ $G_2$ ऽसौ , $T_4$ ऽथ ( for स ) —( L 415 ) $K_3$ संनतिर् , $T_4$ संनीतिं ( for संनतिं ) $K_2$ लीलां दान- , $D_2$ लीलावाक्य ( for लीला दाक्ष्यं ) $K_1$ $D_4$ $M_4$ विलासितम् , Dn $D_5$ अथार्जवम् ( for विलासिताम् ) $K_3$ लीला दाक्ष्यविनम्रताम् , $D_{3\ 4\ 6}$ लीलां वाक्यं वि( $D_6$ दानवि )लासितम् ( for [b] ) —( L. 416 ) $D_2$ ( *sup lin* as above ) $T_4$ विद्वत्वं च , $M_4$ विश्वस्ताना ( for विद्वत्ता च ) $V_1$ मनोहराम् ( for महात्मनाम् ) $\tilde{N}_2$ विविक्ता च मनोहराम् ( for [b] ). —( L 417 ) $D_3$ शिक्षा , $T_4$ मृदु- , Bom Poona eds G(ed) मञ्जु- ( for मृजां ) $V_1$ $D_2$ अथार्जिताम् , $D_3$ °र्जवम् , $D_6$ तथार्यताम् ( for अथार्य° ) —( L 420 ) $D_6$ ( *sup lin* ) $T_4$ $M_4$ कन्या- ( for दुहितृ- ) $D_{5\ 4}$ नरपते ( for च नृपतेस् ). —( L 422 ) $D_{2\ 3}$ व्रजन्त्यौ ( for °त ) $K_2$ वज्रनाभस्य नित्यदा ( for [b] ) —( L 423 ) $D_3$ तत्र रहो , $T_4$ $G_2$ $M_4$ तु तां तत्र ( for तु ते तत्र ) $K_2$ -युक्तां ; $G_3$ रक्तां , $D_6$ -भक्ता ( for -सक्ता ) —( L 424 ) $\tilde{N}_2$ सखीम्

रत्यर्थमानयत्याशु सौभाग्यं च प्रयच्छति ।
देवं वा दानवं वापि विवशं सद्य एव हि ॥
साहं रमामि कान्तेन देवपुत्रेण धीमता ।
दृश्यतां मत्प्रभावेन प्रद्युम्नः सुप्रियो मम ।
ते दृष्ट्वा विस्मयं याते रूपयौवनसंपदम् ॥ [ 430 ]
पुनरेवाब्रवीत्ते तु भगिन्यौ चारुहासिनी ।
प्रभावती वरारोहा कालप्राप्तमिदं वचः ॥
देवा धर्मरता नित्यं दम्भशीला महासुराः ।
देवास्तपसि रक्ता हि सुखरक्ता महासुराः ॥
देवाः सत्यरता नित्यमनृते तु महासुराः । [ 435 ]
धर्मस्तपश्च सत्यं च यत्र तत्र जयो ध्रुवम् ॥
देवपुत्रौ वरयतं पतिविद्यां ददाम्यहम् ।
उचितौ मत्प्रभावेन सद्य एवोपलप्स्यथ ॥

तां तथेत्यूचतुर्हृष्टे भगिन्यौ चारुलोचनाम् ।
परिपप्रच्छ भैमं च कार्यं तत्प्रति मानिनी ॥ [ 440 ]
स पितृव्यं गदं वीरं साम्बं चाप्यब्रवीत्तदा ।
रूपान्वितौ सुशीलौ च शूरौ च रणकर्मणि ॥

प्रभावत्युवाच ।

परितुष्टेन दत्ता मे विद्या दुर्वाससा पुरा ।
परितुष्टेन सौभाग्य सदा कन्यात्वमेव च ॥
देवदानवयक्षाणां यं ध्यास्यसि स ते पतिः । [ 445 ]
भवितेति मया चैव वीरोऽयमभिकाङ्क्षितः ॥
गृह्णीतं तदिमां विद्यां सद्यो वां प्रियसंगमः ।
ततो जगृहतुर्हृष्टे तां विद्यां भगिनीमुखात् ॥
दध्यतुर्गदसाम्बौ च विद्यामभ्यस्य ते शुभे ।
तौ प्रद्युम्नेन सहितौ प्रविष्टौ भैमनन्दनौ ॥ [ 450 ]

---

( for सतीम् ) — ( L 425 ) $K_2$ सा ध्याता ( for याधीता ) $D_3$ यो यो न. काङ्क्षित पति ( for $^{b}$ ) — ( L 427 ) $D_2$ मानवं ( for दा° ) $T_{1-3}$ $G_{1\ 3-5}$ देवो वापि मनुष्यो वा, $M_4$ देवा वा दानवा वापि ( for $^{a}$ ) $D_3$ विशते ( for विवशं ) $\tilde{N}_2$ सत्यम् ( for सद्य ) $G_{1\ 4}$ एष्यति ( for एव हि ) $T_{1-3}$ $G_{3\ 5}$ मे वश सद्य एष्यति ( for $^{b}$ ) — ( L 428 ) $D_3$ -रूपेण ( for -पुत्रेण ) — $M_4$ om line 429 — ( L 429 ) $K_3$ $Dn_1$ $Ds_2$ स प्रियो, $T_1$ सुनयो ( for सुप्रियो ) — ( L 430 ) $K_4$ $D_{3\ 4}$ $M_4$ -संपदा $\tilde{N}_2$ °द्रि ( for °दम् ) — $V_3$ $B_3$ $T_1$ $G_3$ om ( hapl ) line 434 $K_1$ $D_4$ transp lines 434 and 435 — ( L 434 ) $T_{2\ 3}$ $G_{1\ 4\ 5}$ तु धर्म- ( for तपसि ) $G_2$ $M_4$ संरक्ता ( for रक्ता हि ) $V_1$ Ds राज्यरक्ता, $B_1$ $T_4$ $G_4$ सुखे रक्ता, $D_2$ अप्रवृत्यां, $D_6$ $G_3$ $M_4$ सुखे सक्ता ( for सुखरक्ता ) — ( L 435 ) $B_{1.2}$ $D_{4\ 6}$ $T_4$ $M_4$ सत्ये ( for सत्य- ) — ( L 436 ) $T_4$ नित्यं ( for सत्यं ) — ( L 437 ) $K_3$ -पुत्र ( for -पुत्रौ ) $K_{1.2}$ $\tilde{N}_2$ $Ds_2$ $D_{1-5}$ $T_{1\ 3}$ G $M_4$ वरयता, $K_4$ $B_2$ °यितुं ( for °यतं ). $K_1$ $V_{1\ 3}$ $B_1$ Dn $Ds_1$ $D_{2\ 4}$ पती, $K_4$ $B_2$ पतिं, $D_3$ एतां, $T_1$ $G_{3\ 5}$ प्रीति-, $T_3$ $G_4$ प्रीति ( for पति- ) — $G_3$ om lines 438–442 — ( L 438 ) $V_1$ $D_3$ मत्प्रसादेन ( for °भावेन ). — ( L 439 ) $D_2$ हृष्टा ( for हृष्टे ) $D_3$ -लोचने ( for °नाम् ) — ( L 440 ) $T_{1-3}$ $G_{1\ 4\ 5}$ ताभ्यां पृष्टा च सा पश्चात् ( for $^{a}$ ) K $V_3$ Dn $D_{1\ 4}$ $G_2$ तत्पति ( for तत्प्रति ). $\tilde{N}_2$ कामिनी, $D_6$ $T_4$ $G_2$ $M_4$ भामिनी ( for मानिनी ) $T_1$ प्रद्युम्नं मम मानिनी, $T_{2\ 3}$ $G_{1\ 4\ 5}$ प्रद्युम्नमपि भामि( $G_5$ मानि )नी ( for $^{b}$ ) — ( L 441 ) $D_2$ स्व-, $T_{2\ 3}$ $G_{1\ 4\ 5}$ तत् ( for स ) $M_4$ संस्मृत्वा ( for साम्बं च ) — ( L 442 ) $D_2$ रूपार्थिनौ ( for °न्वितौ ) $T_{1-3}$ $G_{1\ 3-5}$ रूपान्वितान्सुशीलांश्च ( for $^{a}$ ) $T_{1-3}$ $G_{1\ 4\ 5}$ शूराश् ( for शूरौ ) $D_5$ रणकर्मणि निष्ठुरौ ( for $^{b}$ ) — $T_3$ $G_{2\ 3}$ om G(ed) वैशपायन ( for प्रभावती ) — ( L 443 ) $K_3$ पुरा ( for परि- ) $K_1$ विद्या ( for दत्ता ) $K_1$ दत्ता ( for विद्या ) $K_4$ परा ( for पुरा ) — ( L 444 ) $T_1$ सौभाग्यदायिनी सत्ये रत्नं सौभाग्यमेव च ; $T_{2\ 3}$ $G_{1\ 3-5}$ सुभर्तृदायिनी सद्यो दत्त ( $T_3$ $G_5$ °त्ता ) सौभाग्यमेव च — ( L 445 ) $M_4$ ध्यायसि ( for ध्यास्यसि ) $T_{2.3}$ $G_{1\ 3-5}$ अवध्यो य स मे पति ( for $^{b}$ ) — ( L 446 ) $D_1$ भविष्यति ( for °तेति ) $K_2$ अति-, $K_4$ इति ( for अभि- ) — After line 446, $T_{1-3}$ $G_{1\ 3-5}$ ins

8** प्रद्युम्नं त्वहमेष्यामि युवां तावप्यवाप्स्यथ ।
[ $T_1$ इच्छामि ( for एष्यामि ) ]

— ( L 447 ) $K_2$ $T_4$ गृह्णीता ( for °तं ) $B_2$ $D_6$ ताम् ( for तद् ) $G_2$ गृह्णीतामुत्तमा विद्यां ( for $^{a}$ ) — ( L 449 ) $M_4$ जग्मतुर् ( for दध्य° ) $T_{1-3}$ $G_{1\ 3-5}$ विन्यस्य ( for अभ्यस्य ). — ( L 450 ) $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ तु प्रद्युम्न- ( for प्रद्युम्नेन ). $D_2$ तौ ध्यातमात्रौ च तदा ( for $^{a}$ ) $G_5$ प्रहृष्टौ ( for प्रविष्टौ ) — $K_4$ om ( hapl ) lines 451–452 — ( L 451 ) $T_2$ प्रभिन्नौ, $G_5$ पृच्छन्तौ ( for प्रच्छन्नौ ) $K_1$ $M_4$ मायया ( for मायिना ) — After line 451, $T_{1-3}$ $G_{1\ 3-5}$ ins. .

9** ततः प्रभावती दृष्ट्वा प्रद्युम्नप्रमुखानिमान् ।
हंसीमुखविनिर्दिष्टान्हर्षनिर्भरमानसा ॥
उत्थाय संभ्रमाविष्टा प्रद्युम्नं परिरभ्य च ।
उवाच वाक्यं वाक्यज्ञा सिञ्चन्ती नेत्रवारिणा ॥
धन्यास्म्यनुगृहीतास्मि यन्मयालिङ्गितो भवान् । [ 5 ]
अद्य मामनुगृह्णीष्व भर्तृभावेन मानद ॥

तदस्त्रप्रतिघातार्थं देवीं संस्मर्तुमर्हसि ।
स्तव्या चैव नमस्या च महादेवी रणोत्सुकैः ॥
तत्र वै क्रियतां यत्नः संग्रामे रिपुणा सह ।
इत्युक्त्वा नारदो वाक्यं प्रययौ यत्र वासवः ॥ [ 350 ]

Colophon

वैशंपायन उवाच ।

शम्बरस्तु ततः क्रुद्धो मुद्गरं तं समाददे ।
मुद्गरे गृह्यमाणे तु द्वादशार्काः समुत्थिताः ॥
पर्वताश्चलिताः सर्वे चलितं वसुधातलम् ।
उन्मार्गाः सागरा जाताः संक्षुब्धाश्चापि देवताः ।
गृध्रचक्राकुलं व्योम उल्कापातो बभूव ह । [ 355 ]
ववर्ष रुधिरं देवः परुषं पवनो ववौ ॥
एवं दृष्ट्वा महोत्पातान्प्रद्युम्न स त्वरान्वितः ।
अवतीर्य रथाद्वीरः कृताञ्जलिपुटः स्थितः ॥
देवीं सस्मार मनसा पार्वतीं शंकरप्रियाम् ।
प्रणम्य शिरसा देवीं स्तोतुं समुपचक्रमे ॥ [ 360 ]

प्रद्युम्न उवाच ।

ओं नमः कात्यायन्यै गुहस्य जनन्यै नमः ।
नमस्त्रैलोक्यमायायै कात्यायन्यै नमो नमः ॥
नमः शत्रुविनाशिन्यै नमो गार्ग्यै गिरीशये ।
नमस्ये शुम्भहननीं निशुम्भहृद्दिदारणीम् ॥
कालरात्रिं नमस्येऽहं कुमारीं चापि नित्यशः । [ 365 ]
कान्तारवासिनीं देवीं नमस्यामि कृताञ्जलिः ॥
विन्ध्यवासिनीं दुर्गघ्नीं रणदुर्गां रणप्रियाम् ।
नमस्यामि महादेवीं जयां च विजयां तथा ॥
अपराजितां नमस्येऽहमजितां शत्रुतापनीम् ।

---

D1 5 अमोघं, V1 °वैश्र् ( for °घश्र् ) K1 M4 -मानुषै ( for -मानवै ) — ( L 347 ) Ñ3 ततस्तत्, D2 ततस्त्वं, D3 तत्तस्य ( for तदस्त्र- ) D4 -घाताय ( for °र्थं ) K2 G4 तदस्त्रप्रविघाताय ( G2 °तैश्च ), K4 °स्त्रविद्यां दिव्यां वै, T1 2 G1 3–5 °स्त्रस्य प्रदात्रीं च ( for ᵃ ) K2 देव ( for देवीं ) T1 2 G1 3–5 स्मर्तुमिह ( for संस्मर्तुम् ) — After line 347, G2 M4 ins

8** गृहाण वैष्णवं चास्त्रं देव्यै चैव नमस्य च ।

— ( L 348 ) K1 D3 D4 पूज्या, K3 D2 तथा, G2 देवैश् ( for स्तव्या ) — ( L 349 ) B3 तस्य वै, D6 T2 G1 3–5 तत्रैव ( for तत्र वै )

COLOPHON. — *Mention of the Epic* Ds2. — *Mention of Khila* K1 4 V B Ds1 D1–3 — *Adhy name* K1 2 D4 नारदवाक्यम्, K3 शम्बरवधानन्तरं नारदवाक्यम्, K4 B V3 Dn Ds D1–3 5 6 T4 शम्बरवधे नारदवाक्यम्, T1 G3 शम्बरवधे नारदोपायकथनम्. — *Adhy no* K3 160; V1 165, V2 164, V3 Ds2 163, D1 157, D3 G2 170, D4 160, T1 G3 174, T2 G1 176, T4 143, G5 M4 175

( L 351 ) D3 स ( for तं ) K3 4 V2 Dn समादधे ( for °दे ). —( L 352 ) K4 Ds1 D1 समुच्छ्रिता., D3 उपस्थिताः, T1 G1–3 M4 समुद्यता. ( for °त्थिता ) — ( L 353 ) Ñ2 V1. 2 Ds कम्पिता., D1 स्खलिता, T2 G1 चालिता ( for च° ) D2 कम्पितं, Bom Poona eds G( ed ) तथैव ( for चलित ). — ( L 354 ) G2 सर्वे ( for जाता. ) K2 T1 2 4 G M4 संक्रुद्धाश् ( for संक्षुब्धाश् ). — ( L 355 ) D1 -रक्ताकुलं ( for -चक्रा° ) K2 उल्काघातो, K4 B3 D1–3 5 °पातं ( for °पातो ) Ñ2 पपात ( for बभूव ) D3 उल्कापाताः सहस्रश ( for ᵇ ) — ( L 356 ) V3 मेघ ( for देव ) D3 परुष ( for °षं ) K3 पवन परुष ववौ, T2 परुष पवनोदका ( for ᵇ ) — ( L 358 ) Ñ2 -युत ( for -पुट ) T1 2 G5 M4 तथा, G1 3 4 तदा ( for स्थित ) — ( L 359 ) K3 पार्वती शंकरप्रिया ( for ᵇ ) —K2 वैशंपायन, D3 G6 om ( for प्रद्युम्न ) —( L 361 ) T1 ओं नमो महाजनन्यै, T2 G1 3–5 M4 ओं नमो गुहजनन्यै ( for ᵃ ) K1 D4 जननी ( for °न्यै ) T1 2 G1 3–5 M4 कात्यायन्यै ( G5 °यिनि ) नमो नम ( for ᵇ ) — V2 om ( hapl ) line 362 — ( L 362 ) V1 -सारायै, G2 -मातायै, M4 -मायिन्यै ( for -मायायै ) G1 कौमारिण्यै ( for कात्यायन्यै ) — ( L 363 ) K1 2 D4 गरीयसे, K4 V1 D1 5 T1 गिरीशायै, V2 G2 Dn1 D6 गिरिशायै, V3 B3 Ds2 गिरिशये ( for गिरी° ) K3 गिरीशायै नमो नम, Dn2 B1 T4 नमो गौर्यै गिरीशायै, D2 नम शाङ्गर्यै गरीयसे, D3 नमो भार्ग्यै गरीयसि ( for ᵇ ) — ( L 364 ) Ñ2 V1 नमस्ते ( for °स्ये ) K2 -वाहिनीं, T1 -मथनीं ( for -हननी ) V3 G3 नमस्ते शुम्भमथनी, T2 G1 4 5 °स्ते सुम्भहननि ( for ᵃ ) Ñ2 V Dn D2 4 6 दारिणीं, T1 दारिणि ( for दारणीम् ) D3 निशुम्भस्यापि दारिणीम्, T2 सुम्भस्य हृदि दारुणि; T4 G M4 निसुम्भहृदि दारिणि ( for ᵇ ). — (L. 365 ) B2 T1 G3 5 कालरात्रि, M4 कालि कालि ( for कालरात्रिं ) Bom Poona eds G(ed) कालरात्रि नमस्तुभ्यं ( for ᵃ ) B1 Bom Poona eds G(ed) कौमार्यै च नमो नम ( for ᵇ ) — ( L 366 ) T3 2 G1 3–5 M4 नमस्येऽहं ( for °स्यामि ) — ( L 367 ) D1 3 -वासिनि ( for °नीं ) K1. 3. 4 V. B Dn D4 6 दुर्गघ्नां ( for दुर्गघ्नीं ) K2 विन्ध्यवासिं दुर्गमां च; T1. 2 G1–3 5 M4 सुविन्ध्यावासिनी दुर्गा, G4 सुविन्ध्यवासिनीं दुर्गघ्नां ( hypermetric ) ( for ᵃ ) D2 दुर्गे दुर्गा;

घण्टाहस्तां नमस्यामि घण्टामालाकुलां तथा ॥ [ 370 ]
त्रिशूलिनीं नमस्यामि महिषासुरघातिनीम् ।
सिंहवाहां नमस्यामि सिंहप्रवरकेतनाम् ॥
एकानंशां नमस्यामि गायत्रीं यज्ञसत्क्रियाम् ।
सावित्रीं चापि विप्राणां नमस्येऽहं कृताञ्जलिः ।
रक्ष मां देवि सततं संग्रामे विजयं कुरु ॥ [ 375 ]
इति कामवचः श्रुत्वा दुर्गा सुप्रीतमानसा ।
उवाच वचनं देवी सुप्रीतेनान्तरात्मना ॥
पश्य पश्य महाबाहो रुक्मिण्यानन्दवर्धन ।
वरं वरय वत्स त्वममोघं दर्शनं मम ॥
देव्यास्तु वचनं श्रुत्वा रोमाञ्चोद्गतमानसः । [ 380 ]
प्रणम्य शिरसा देवीं विज्ञप्तुमुपचक्रमे ॥
यदि त्वं देवि तुष्टासि दीयतां मे यदीप्सितम् ।
वरं च वरदे याचे सर्वामित्रेषु मे जयः ॥
यस्त्वया मुद्गरो दत्तः शम्बरस्यात्मसंभवः ।
एष मे गात्रमासाद्य माला पद्ममयी भवेत् ॥ [ 385 ]
तथास्त्विति च साप्युक्त्वा तत्रैवान्तरधीयत ।
प्रद्युम्नस्तु महातेजा हृष्टो रथमथारुहत् ॥
मुद्गरं तु गृहीत्वा च शम्बरः क्रोधमूर्छितः ।
भ्रामयित्वा स चिक्षेप प्रद्युम्नोरसि वीर्यवान् ॥
स गत्वा मदनाभ्याशं माला भूत्वाथ पौष्करी । [ 390 ]
प्रद्युम्नस्य च कण्ठे सा समायुक्ता व्यराजत ।
नक्षत्राणां तु मालायां यथा परिवृतो विधुः ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
साधु साध्विति वाचोचुः पूजयन्केशवात्मजम् ॥
मुद्गरं पुष्पभूतं तु दृष्ट्वा प्रद्युम्नसंनिधौ । [ 395 ]
वैष्णवं परमास्त्रं तु नारदेन यदाहृतम् ।
संदधे चापमायम्य इदं वचनमब्रवीत् ॥
यद्यहं रुक्मिणीपुत्रः केशवस्यात्मजो ह्यहम् ।
तेन सत्येन बाणेमं जहि त्वं शम्बरं रणे ॥
इत्युक्त्वा चापमाकृष्य संधाय च महामनाः । [ 400 ]
चिक्षेप शम्बरायाथ दहल्लोकत्रयं त्विषा ॥
स क्षिप्तो वृष्णिसिंहेन बाणः क्रव्यादमोहनः ।
हृदयं शम्बरस्याथ भित्त्वा धरणिमागमत् ॥

---

D3 महाभीमां ( रणदुर्गां ) —( L 369 ) G3 नपराजितां ( for अप° ) G5 नमस्यामि ( for °स्येऽहम् ) D4 नमस्येऽहं महामायां ( for $^a$ ) Ñ2 V1 2 D1 5 T4 G M4 तापिनीम्, T1 -नाश°, T2 -वाहि° ( for -ताप° ) —( L 370 ) Bom ed घण्टाहस्तो ( for °स्तां ) G2 घण्टामालां नमो नम ( for $^b$ ) V2 D3 om ( hapl ) lines $371^b$–$372^a$ —( L 372 ) Ds सिंहवाहना (hypermetric); Bom Poona eds G(ed ) सिंहाननां ( for सिंहवाहां ). T2 G4 om ( hapl ) lines $372^b$–$373^a$ K1. 4 V1 B Dn D1–6 T1 4 G2 5 M4 केतनीम् ( for °नाम् ) —( L 373 ) K1-3 Ñ2 B2 3 Dn Ds D1 2 4 6 T4 G1 4 -सत्कृतां ( K3 °तं ), K4 -संस्कृतां ( for -सत्क्रियां ) —( L 374 ) B3 नमस्यामि ( for °स्येऽह ) —( L 376 ) K1 Ñ2 V B Ds D5 T1 4 G2. 3 5 तुष्टा ( for श्रुत्वा ) K3 4 B2 D1 5 T1. 2 G3 4 M4 सं- ( for सु- ) — D5 om line 377 —( L 378 ) D4 रुक्मिण्यां नन्दवर्धनम् ( for $^b$ ). —( L 379 ) D3 [इ]मम् ( for त्वम् ) —( L 382 ) Ds परि- ( for देवि ) —( L 383 ) D3 देवि ( for याचे ) K3 मजय ; D5 वै जय. ( for मे जय· ) T1 2 G1. 3–5 M4 सर्वामित्रे भवेज्जय ( for $^b$ ) —( L. 385 ) V1 पद्मवती, D3 पुष्पमयी ( for पद्म° ) —( L 387 ) V2 दृष्टा, G1 तुष्टो ( for हृष्टो ) K1 2 V3 B3 D4, 6 T1, 2, 4 G3–5 प्रहृष्टो रथमारुहत् ( for $^b$ ) —( L 388 ) K4 स, V1 B1 [अ]थ ( for च ) K3 om ( hapl ) from शम्बर up to स गत्वा ( in line 390 ) —( L 390 ) K1–3 B1 D2 पौष्करीम्, Ds1 °राम् ( for °री ) —( L 391 ) K1 2 Ñ2 V B Ds D4. 6 T1 2 G M4 समासक्ता ( for °युक्ता ) V1 व्यजायत ( for व्यराजत ) —( L. 392 ) Ñ2 D5 मालाभिर्, Ds1 मालया ; T1 2 4 G M4 या माला ( for मालायां ) K3 4 Ñ2 V B Dn Ds1 D1–3 5 6 T1 2 4 G1 2 4 M4 यथा परिवृतोडु- ( K3 4 °तेन्दु )राट् ( for $^b$ ) K1 2 D4 यथा परिवृतश्चन्द्रो ऋक्षाणां मालया दिवि ; Ds2 यथा परिवृतश्चन्द्रो नक्षत्राणा तु मालया —( L 394 ) K1, 2 Ds2 D4 चैवोचुः, K4 चाप्युक्त्वा V3 वाक्प्रोचु., D1 5 वाचाभिः ( for वाचोचु ) K2 अवोचन् ( for पूजयन् ) —( L 395 ) M4 परिभूत ( for पुष्प° ). —( L 396 ) K3 V1 B1 3 Ds D2 5 T1 यथाहृतम्; Ñ2 यदा कृतम्, G3 यदा श्रुतम् ( for यदाहृतम् ) —( L 397 ) K1 2 Ñ2 B2 Dn G3 4 आनम्य, K3 4 D1 5 आकृष्य; V2 D6 आदाय, D3 आनाय ( for आयम्य ) V3 D5 वचनं चेदमब्रवीत् ( for $^b$ ) —( L 399 ) K3 4 D1 4 ( *sup lin* ) T4 G2 बाणेन, D5 बाणैनं, T1 2 G1. 3–5 M4 बाणाद्य ( for बाणेमं ) —( L 400 ) Ñ2 Ds स संधाय ( for संधाय च ). —( L 401 ) K1–3 Ñ2 V2. 3 B D T4 G2 शम्बरस्य, K4 °रं

नैवास्य मांसं न स्नायुर्नास्थि न त्वङ् शोणितम् ।
सर्वं तद्भस्मसाद्भूतं वैष्णवास्त्रस्य तेजसा ॥ [ 405 ]
हते दैत्ये महाकाये दानवे शम्बरेऽधमे ।
जहृषुर्देवगन्धर्वा ननृतुश्चाप्सरोगणाः ॥
उर्वशी मेनका रम्भा विप्रचित्तिस्तिलोत्तमा ।
ननृतुर्हृष्टमनसो जगत्स्थावरजंगमम् ॥
देवराजस्तु सुप्रीतः सर्वैर्देवगणैः सह । [ 410 ]
प्रद्युम्नं पुष्पवर्षेण समभ्यर्च्य प्रहृष्टवत् ॥
अथ समरहते तु दैत्यराजे
मधुमथनस्य सुतेन वैष्णवास्त्रैः ।
विगतरिपुभयाः सुराश्च जग्मु-
र्मकरविभूषणकेतनं स्तुवन्तः ॥ [ 415 ]
स च समरपरिश्रमं वहन्वै
नगरमुखं प्रविवेश रौक्मिणेयः ।
प्रियतम इव कान्तया प्रहृष्ट-
स्त्वरितपदं रतिदर्शनं चकार ॥

Colophon.

No 31

T2 4 G M1–3 ins after adhy 105. Dn Ds2 D6 T1 M4 after App I ( No 42B ).

जनमेजय उवाच ।

किमर्थं भगवान्विष्णुर्देवदेवो जनार्दनः ।
गतः कैलासशिखरमालयं शंकरस्य ह ॥
नारदाद्यैस्तपोवृद्धैर्मुनिभिस्तत्त्वदर्शिभिः ।
तत्र दृष्टो महादेवः शंकरो नीललोहितः ॥
केशवेन पुरा विप्र कुर्वता तप उत्तमम् । [ 5 ]
अर्चितस्तेन देवेन शंकरश्चेति विश्रुतम् ॥
देवास्तत्र जगन्नाथं दृष्टवन्तः पुरातनम् ।
अर्चयांचक्रिरे साक्षाच्छक्राद्यास्तं हरिं हरम् ॥
तौ तु देवौ महादेवावेकीभूतौ द्विधा कृतौ ।
एकात्मानौ जगद्योनी सृष्टिसंहारकारकौ ॥ [ 10 ]
परस्परसमावेशाज्जगतः पालने स्थितौ ॥
तयोस्तत्र यथावृत्तं कैलासे पर्वतोत्तमे ।
ऋषयः किमचेष्टन्त दृष्ट्वा तौ पुरुपोत्तमौ ।

---

च ( for °राग्र ) — ( L. 402 ) V B2. 3 D2–4 6 T2 4 G1 2 4 M4 -मोदन , G3 5 -नन्दनः ( for -मोहन ) — ( L 403 ) V2 D3 T4 आविशत् , D5 आगत ( for °मत् ) — ( L 404 ) Bom Poona eds G(ed ) च ( for [ए]व ) — ( L 406 ) B3 G1 5 महामाये ( for °काये ) K Ñ2 V1 3 B Dn D1 4 5 6 T2 G1 4 5 दानवे शम्बराधमे ( K2 °भिधे ), V2 Ds G2 शम्बरे दानवाधमे ( for $^{b}$ ). — ( L 407 ) K4 T2 जहर्षुर् ( for जहृषुर् ) D3 जहृषुर्देवता सर्वा ( for $^{a}$ ) — ( L 409 ) V1 जग्मतुर् ( for ननृतुर् ) — ( L 410 ) K2 प्रीत सन् ; T1 संप्रीत ( for सु° ) K2 V B D1 2 5 6 T1 2 4 G M4 सर्वे- ( for सर्वैर् ) — ( L 411 ) T1 G1 2 4 5 तमभ्यर्च्य ( for स° ) D2 T1 2 4 G M4 प्रहृष्टवान् ( for °वत् ). — ( L 413 ) B3 मधुमथनसुतेन वैष्णवास्त्रै — ( L 415 ) K4 स्मरन्त· ( for स्तुवन्त. ) — ( L 416 ) V1 हरन्वै , G1 3–5 M4 च हित्वा ( for वहन्वै ) — ( L 418 ) K2 काङ्क्षया ( for कान्तया ) — ( L. 419 ) Ds -दर्शने ( for °नं ).

Colophon — *Mention of the Epic* . Ds2 — *Mention of Khila* . K1, 4 V B Dn2 Ds D1 3 — *Adhy name* K1 V B Dn Ds2 D4–6 प्रद्युम्नदुर्गास्तव· , K2 Ñ2 प्रद्युम्नकृतो दुर्गास्तव· , K3 प्रद्युम्नदुर्गास्तुति ; K4 दुर्गास्तव , Ds D6 T4 प्रद्युम्नदुर्गास्तव. शम्बरवध , D1 शम्बरवधे प्रद्युम्नदुर्गास्तवः ; D2 प्रद्युम्नेन शम्बरवध , D3 प्रद्युम्नोत्तरे शम्बरवध , T1 वैष्णवास्त्रेण शम्बरवध. , T2 G1 2 4 शम्बरवध , G3 प्रद्युम्नदुर्गास्तवे वैष्णवास्त्रेण शम्बरवध — *Adhy no* K3 161 , V1 166 ; V2 165 , V3 160 , Dn2 163 , Ds2 164 , D1 158 , D3 G2 171 , D4 161 , T1 G3 4 175 , T2 G1 177 , T4 144 ; G5 M4 176

**31**

( L 2 ) D6 T1 2 G1 3 गत्वा ( for गत. ) — ( L 3 ) M4 देवाद्यैश्च ( for नारदाद्यैस् ) — ( L 4 ) T1 शंकरो लोकशंकर ( for $^{b}$ ) — ( L 6 ) Dn Ds2 T1 2 G2 3 M1 3 देव- ( for तेन ) G2 M2 न· श्रुतम् ( for विश्रु° ) — ( L 7 ) D6 T2 G1 2 4 5 M1–3 जगन्नाथौ D6 T2 G1 4 5 M1–3 पुरातनौ ( for °तनम् ) Dn Ds2 T4 G3 M4 देवौ तत्र जगन्नाथौ दृष्टवन्तौ पुरातनौ — ( L 8 ) Dn Ds2 D6 T4 G2, 5 M देवा ( for साक्षाच् ) G5 इन्द्राद्यास् ( for शक्रा° ) Dn Ds2 D6 T4 G2 M1–3 शक्रा( Dn Ds2 T4 इन्द्रा )द्याः शंकरं हरिम् , T1 शक्रस्तं हरिं हरम् , M4 इन्द्राद्यास्तं हर हरिम् ( for $^{b}$ ). — ( L 10 ) T1, 2 G3 4 एकाकारौ ( for °त्मानौ ), — ( L. 11 ) Dn -रसा

एतत्सर्वमशेषेण वक्तुमर्हसि सत्तम ॥
यथागतो हरिर्विष्णुः कृष्णो जिष्णुः पुरातनः । [ 15 ]
यथा च शंकरः साक्षात्कृतवान्नागभूषणः ।
एतत्सर्वं विप्रवर्य ब्रूहि तत्त्वेन यत्नतः ॥
वैशंपायन उवाच ।
शृणुष्वावहितो राजन्यथा कृष्णो गतो नगम् ।
यथा च दृष्टो देवेशः शंकरो वृषवाहनः ॥
यथा चचार च तपो यथा ते मुनयो गताः । [ 20 ]
एकत्वं च तयोर्यद्वत्तथा शृणु नृपोत्तम ॥
द्वैपायनोऽथ भगवान्यथा प्रोवाच मां तथा ।
नमस्कृत्वा प्रवक्ष्यामि केशवं खगवाहनम् ।
यथाशक्ति यथाप्रज्ञं शृणु यत्नेन सुव्रत ॥
न ह्यशुश्रूषवे वाच्यं नृशंसायातपस्विने ॥ [ 25 ]
नानधीताय वक्तव्यं पुण्यं पुण्यवतां सदा ॥
स्वर्ग्यं यशस्यं धन्यं च बुद्धिशुद्धिकरं सदा ।
ध्येयं पुण्यात्मना नित्यमिदं वेदार्थनिश्चितम् ॥
अनेकारण्यसंयुक्तं सेवन्ते नित्यमीदृशम् ।
मुनयो वेदनिरता नारदाद्यास्तपोधनाः ॥ [ 30 ]
अत्यद्भुतं महापुण्यं वृत्तं कैलासपर्वते ।
शिवयोर्देवयोस्तत्र हरेश्चैव भवस्य ह ॥
हतेष्वसुरसंघेषु नरकादिषु भूमिप ।
हतेष्वथ नृपेष्वेव किंचिच्छिष्टेषु शत्रुषु ॥
शासति स्म तदा विष्णुः पृथिवीं पुरुषोत्तमः । [ 35 ]
द्वारवत्यां जगन्नाथो वसन्वृष्णिभिरीश्वरः ॥
रुक्मिणीसंगतो देवो वसंस्तत्र पुरे हरिः ।
कदाचिच्च तया सार्धं शेते रात्रौ जगत्पतिः ।
विहरंश्च यथायोगं प्रीतः प्रीतियुजा तया ॥
अथोवाच तदा देवी रुक्मिणी रुक्मभूषणा । [ 40 ]
पुत्रमिच्छामि देवेश त्वत्तो देवकिनन्दन ॥
बलिनं रूपसंपन्नं त्वय्यैव सदृशं प्रभो ।
वृष्णीनामपि नेतारं वीर्ययुक्तं तपोन्वितम् ॥
सर्वशास्त्रार्थकुशलं राजविद्यापुरस्कृतम् ।
एवमादिगुणैर्युक्तं दातुमर्हसि सत्तम ॥ [ 45 ]
त्वयि सर्वस्य दातृत्वं नित्यमेव प्रतिष्ठितम् ।
त्वं हि सर्वस्य कर्ता च दाता भोक्ता जगत्पते ।
विशेषतस्तु भृत्यानां शुश्रूषानियतात्मनाम् ॥
वक्तव्यं किमु देवेश यदि भक्तास्मि केशव ।
अनुग्रहो यदि स्यान्मे देवदेव जगत्पते । [ 50 ]

---

वेशाज्, $T_1$ समावेशौ, $T_2$ $G_{1\ 4}$ °देशाज् ( for °वेशाज् ) $D_6$ $T_{1\ 2\ 4}$ G $M_4$ रतौ ( for स्थितौ ). —( L 13 ) $M_4$ ( marg ) पुरुधाकृतौ ( for °षोत्तमौ ) —( L 14 ) $T_1$ $G_{1\ 3-5}$ $M_4$ सुव्रत ( for सत्तम ). —( L 15 ) $M_2$ यथा च स ( for यथागतो ) $G_1$ कृष्णो विष्णु.; $G_2$ अव्ययश्च ( for कृष्णो जिष्णु ) $M_{2\ 3}$ सनातन. ( for पुरा° ) $M_4$ जिष्णुर्विष्णु. सनातन. ( for $^b$ ) —( L 16 ) $G_5$ कृतवान्नगभूषण.; $M_1$ °न्नागभूषणम् ( for $^b$ ) —( L 17 ) $D_6$ अशेषेण ( for विप्रवर्य ) —( L 18 ) $G_4$ गतागतं, $G_5$ नगं गत. ( for गतो नगम् ) — $G_1$ om lines $19^b$–$24^a$ —( L 21 ) Dn $D_{s2}$ $T_4$ एव तयोर्यथावृत्त ( $D_{n1}$ °त्ते ) ( for $^a$ ) Dn $D_{s2}$ नरोत्तम ( for नृपो° ) —( L 23 ) $T_{2\ 4}$ $G_3$ $M_4$ नमस्कृत्य ( for °त्वा ) $M_{1\ 3}$ वृष- ( for खग- ) —( L 24 ) $G_4$ यथावृत्त, Cal ed °युक्तं ( for °प्रज्ञ ). $G_2$ यथा यथाप्रतिज्ञं हि ( for $^a$ ) $G_1$ तत्त्वेन ( for यत्नेन ) G(ed ) भारत ( for सुव्रत ) $G_5$ शृणु तत्त्वेन यत्नत ( for $^b$ ). —( L 25 ) $D_6$ चापि, $T_4$ नापि ( for वाच्यं ) $T_{1\ 2}$ $G_{1.\ 3-5}$ $M_4$ नाशुश्रूषोर्नृशंसाय नाभक्तायातपस्विने —( L 26 ) $M_4$ वरम् ( for सदा ) — $G_2$ $M_4$ om line 27. —( L 27 ) $T_{1\ 2}$ $G_4$ धर्म्यं ( for स्वर्ग्यं ) —( L 28 ) Dn $D_{s2}$ $T_2$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ पुण्यात्मनां ( for °ना ) —( L 29 ) $D_6$ $T_4$ $G_2$ ईश्वरम् ( for ईदृशम् ) —( L 30 ) $M_{1-3}$ निलया ( for -निरता ) $T_4$ $M_{1-3}$ तपोबलात्, $G_2$ °बला, $G_5$ $M_4$ तपस्विन. ( for तपोधना ) —( L 32 ) $G_2$ तस्य ( for चैव ) $M_4$ हरस्य ( for भवस्य ) —( L 35 ) $D_{n1}$ सदा ( for तदा ) —( L 36 ) $D_6$ $G_2$ वसन्विष्णुर्महे( $G_2$ °हरी )श्वर ( for $^b$ ) —( L 38 ) $M_4$ रात्रौ (( for सार्धं ) $M_4$ सार्धं ( for रात्रौ ). —( L. 39 ) $T_2$ $G_{1\ 3\ 4}$ यथाकाम ( for °योगं ) $M_3$ प्रीत' प्रीतियुतस्तदा ( for $^b$ ) —( L 40 ) $T_2$ $G_{1\ 4}$ ततो ( for तदा ) Cal ed रुक्मभूषणम् —( L 41 ) $D_{n2}$ $D_{s2}$ $D_6$ $T_{1\ 2\ 4}$ $G_{1-4}$ $M_{2\ 4}$ त्वत्तो माधव नन्दनम् ( for $^b$ ) —( L 43 ) Dn $D_{s2}$ $T_1$ $G_5$ $M_{2\ 4}$ वीर्यवन्तं ( for °युक्त ) Dn $D_{s2}$ $G_5$ $M_4$ तपोनिधिम् ( for °न्वितम् ) —( L 44 ) $D_6$ -विद्यासु, $G_2$ -विद्यार्थ- ( for शास्त्रार्थ- ) $M_4$ सर्व- ( for राज ) —( L 46 ) $M_4$ सर्वत्र ( for °स्य ) —( L 47 ) $M_4$ सर्वत्र ( for सर्वस्य ) Dn $D_{s2}$ जगत्पति ( for °त्पते ). —( L 48 ) $G_2$ विशेषसत्यनित्यानां ( for $^a$ ). —( L. 49 ) $M_4$ यदि ( for किमु ).

दातुमर्हसि पुत्रं त्वं वीर्यवन्तं जनार्दन ॥

वैशंपायन उवाच ।

इत्युक्तो देवदेवेशः प्रियया प्रीयमाणया ।
तया महिष्या रुक्मिण्या रुक्मिशत्रुर्यदूद्वहः ॥
प्रोवाच वचनं काले रुक्मिणीं यादवेश्वरः ।
दातास्मि तादृशं पुत्रं यं त्वमिच्छसि भामिनि ॥ [ 55 ]
नित्यभक्तासि मे देवि नात्र कार्या विचारणा ।
अवश्यं तव दास्यामि पुत्रं शत्रुनिबर्हणम् ॥
पुत्रेण लोकाञ्जयति सतां कामदुघा हि ये ।
पुदिति नरकस्याख्या दुःखं च नरकं विदुः ॥
पुदस्त्राणात्ततः पुत्रमिहेच्छन्ति परत्र च । [ 60 ]
अनन्ताः पुत्रिणो लोकाः पुरुषस्य प्रिये शुभाः ॥
पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम् ।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥
पुत्रवतां बिभेतीन्द्रः किं नु ते नाजितं भवेत् ।
नापुत्रो विन्दते लोकान्कुपुत्राद्वन्ध्यता वरा ॥ [ 65 ]
कुपुत्रो नरको यस्मात्सुपुत्रात्स्वर्ग एव हि ।
तस्माद्विनीतं सत्पुत्रं श्रुतवन्तं दयापरम् ॥
विद्या हि विनतिर्यस्माद्विद्यायुक्तं सुधार्मिकम् ।
इच्छेत्पुत्रं सदा पुत्री पुरुषो यत्नवान्बुधः ॥
तस्माद्दास्यामि ते पुत्रं विद्यावन्तं सुधार्मिकम् । [ 70 ]
एष गच्छामि पुत्रार्थं कैलासं पर्वतोत्तमम् ॥
तत्रोपास्य महादेवं शंकरं नीललोहितम् ।
ततो लब्धास्मि पुत्रं ते भवाद्भूतहिते रतात् ॥
तपसा ब्रह्मचर्येण भवं शंकरमव्ययम् ।
तोषयित्वा विरूपाक्षमादिदेवमजं विभुम् ॥ [ 75 ]
गमिष्याम्यहमद्यैव द्रष्टुं शंकरमव्ययम् ।
स च मे दास्यते पुत्रं तोषितस्तपसा मया ॥
तत्र गत्वा महादेवं नमस्कृत्य सहोमया ।
प्रविश्य बदरीं पुण्यामृषिजुष्टां तपोमयीम् ॥
अग्निहोत्राकुलां दिव्यां गङ्गाम्बुप्लाविता सदा । [ 80 ]
मृगपक्षिसमायुक्तां सिंहद्वीपिशताकुलाम् ॥
बदरीफलसंपूर्णां वानरक्षोभितद्रुमाम् ।
वेत्रारूढमहावृक्षां कदलीखण्डमण्डिताम् ॥

---

— (L 50) D6 ते (for मे)- — (L 51) Ds2 तं, D6 मे (for त्वं) — T1 2 G1 3 4 M4 om the ref — (L 52) D6 इत्युक्ते देवदेवेश (for $^{a}$) — M4 om line 53 — (L 53) G1 3 रुक्मिणी च (for °शत्रुर्) — (L 54) कृष्णः प्रोवाच वचनं (for $^{a}$) — (L 56) T1 2 G M1 4 नित्यं (for नित्य-) — (L 57) Dn Ds2 T1 M4 नित्यं (for पुत्रं) — (L 58) T1, 2 G4 पुत्रेण लेभिरे लोकान् (for $^{a}$) T2 G4 सदा (for सतां) T4 कामदुहा (for °दुघा) Dn2 D6 ते (for ये) — (L 59) M2 पूतीति (for पुदिति) T1, 2 G3 4 विबुधा (for नरकं) Dn Ds2 T1 2 G1 3 5 M4 नरकं पुदि(T1 G1 3 °मि)ति ख्यात (for $^{a}$) — (L 60) D6 T4 पूतस्त्राणात, T1 पुदिस्त्रा°, T3 G1 पुमित्रा°, G2 पूतिस्त्रा°, M1–3 पूतित्रा° (for पुदस्त्रा°) T2 प्रीतम् (for पुत्रम्). G3 पुत्राणामाद्दत पुत्रम् (sic) (for $^{a}$) T1 4 G2 3 M [इ]च्छति (for °न्ति) — (L 63) T2 G1 तस्मात्, G4 तस्या (for तस्यां) — After line 63, D6 T4 ins

1** तज्जाया जाया भवति यदस्यां जायते पुनः ।

— (L 64) T4 पुत्रवन्त (for °वतां) D6 बिभर्ति (for बिभेति). G1 4 नाशितं, G3 नार्जित (for नाजितं) — (L 65) M1–3 कुपुत्राद्वरमपुत्रता (hypermetric) (for $^{b}$) — (L 66) D6 G(ed.) कुपुत्रान्, M1 3 °त्रे (for °त्रो). Dn Ds2 T1 2 4 G M3 4 नरके (for °को) D6 T4 सत्पुत्रात्, T2 G3 सुपुत्र, M1–3 °त्रे (for °त्रात्) — G2 om lines 67$^{b}$–68$^{a}$ — (L 68) Dn Ds2 T1 2 G1 3–5 M4 विद्यया (T1 2 G3 4 °द्या च) विनयो यस्माद् (for $^{a}$) D6 M4 विद्यावन्तं, T1 2 G1 3 4 तस्मात्पुत्रं (for विद्यायुक्तं) — G2 om. (hapl) lines 69–70 — (L 69) Dn Ds2 D6 T1 2, 4 G1 3–5 पुत्रकाम (for सदा पुत्री) — (L 70) M1–3 श्रुतान्वितम् (for सुधार्मिकम्) — (L 71) Ds2 transp पुत्रार्थं and कैलासं — (L 72) T4 G1–3 5 तत्रोपास्यं, M4 तथोपास्य (for तत्रो°) D6 तारकं (for शंकरं) T4 शंकरं लोकशंकरम् (for $^{b}$) — (L 73) G5 लब्धासि (for °स्मि) — M4 om from दास्यते in line 77 up to अग्निहोत्रा (in line 80) — (L 77) G3 ते (for मे) — G4 om line 78 — (L 78) T4 देवि (for गत्वा) D6 M1–3 तत्र देवि (D6 °वं) विरूपाक्षं (for $^{a}$) G1 सदा मया (for सहोमया) — (L 79) Dn Ds2 G1 2 M2 मुनिजुष्टां (for ऋषि°). — G3 om (hapl) lined 80–84 — (L 80) T1. 2 4 G1–4 M1–8 -क्षालितां (for -प्लाविता) — (L 81) D6 M1–3 मृगर्क्षपक्षिसंयुक्ता (for $^{a}$) Dn1 Ds2 T1 2 4 G2 4 5 -द्विप- (for -द्वीपि-) G1 M4 सिंहद्विपसमाकुलाम् (for $^{b}$) — (L. 83) M4 वेत्ररूप- (for वेत्रारूढ-) Ds2 -महाकक्षा (for

मुनिभिर्वेदतत्त्वार्थविचारनिपुणैः सदा ।
तर्कनिश्चिततत्त्वार्थैः प्रमाणकुशलैर्युताम् ॥ [ 85 ]
इदमेकमिदं तत्त्वमिति निश्चितमानसैः ।
उपासमानामन्यत्र सिद्धैः सिद्धार्थतत्परैः ॥
श्रुतिस्मृतिपुराणज्ञैः सेव्यमानं महर्षिभि ।
गच्छद्भि. स्वर्गनिलयं परित्यज्य कलेवरम् ॥
प्रसिद्धां महती देवि यास्यामि सुकृतालयाम् । [ 90 ]
इत्युक्त्वा विररामैव देवदेवो जनार्दनः ॥

Colophon

वैशंपायन उवाच ।
प्रभातायां तु शर्वर्यां गन्तुमिच्छञ्जनार्दनः ।
हुताग्निः कृतकल्याणः समाप्तवरदक्षिणः ॥
गाश्च दत्त्वाथ विप्रेभ्यो नमस्कृत्य द्विजोत्तमान् ।
आस्थानमण्डपं कृष्णः प्रविवेश जगत्पतिः ॥ [ 95 ]
आसनं महदास्थाय वृष्णीनाहूय सर्वशः ।
बलभद्रं शिनेः पुत्रं हार्दिक्यं शठसारणौ ॥
उग्रसेनं महाबुद्धिमुद्धवं नीतिमत्तरम् ।
यस्य नीतिं समाश्रित्य जीवन्ति यदवः सुखम् ॥
नेता च यदुवृष्णीनां स तु धर्मपरः सदा । [ 100 ]
यस्य बिभ्यति देवाश्च नीतेस्तस्य महात्मनः ॥
यस्य बुद्धिवशाद्विष्णुः शशास पृथिवीं सदा ।
तं च वृष्णिवरं वीरमुद्धवं देवसप्रभम् ॥
अन्यानपि यदून्सर्वानुवाच भगवान्हरिः ।
शृण्वन्तु मम वाक्यानि यादवाः सर्व एव हि । [ 105 ]
शृणु चापि वचो मह्यं पितरुद्धव मे सखे ॥
बाल्यात्प्रभृति यो यत्नो मम दुष्टनिबर्हणे ।
प्रत्यक्षं भवता दृष्टं पूतनानिधनं नृपाः ॥
केशी च निहतो बाल्ये मया बालेन यादवाः ।
गोवर्धनो धृतः शैलो गावश्च परिपालिताः ॥ [ 110 ]
अभिषिक्तोऽस्मि शक्रेण देवानामग्रतः स्थितः ।
कंसोऽपि निधनं नीतो मया चाणूरमल्लकः ॥
उग्रसेनोऽभिषिक्तश्च कृता द्वारवती मया ।
अन्ये चापि नृपा राजन्बलिनो निहता मया ॥
योऽपि वीरो जरासंधो निगृहीतो बलान्मया । [ 115 ]
भीमेन बलिना राजन्नयेन मम यादवाः ॥
सृगालो निहतः संख्ये गोमन्ताद्गच्छता मया ।

°वृक्षां ) D6 T1.4 om line 85 — ( L 85 ) Dn Ds2 T2 G M4 वेद- ( for तर्क ) G3 -तत्त्वार्थं G1.3.4 M सदा, G5 तथा ( for युताम् ) — ( L 87 ) D6 G2 सिद्धान्त- ( for सिद्धार्थ- ) — ( L 88 ) Dn Ds2 G2.4.5 M4 इतिहास- ( for श्रुतिस्मृति- ) Dn Ds2 T2.4 G M1-3 सेव्यमाना, D6 °माना ( for °मानं ) D6 M1 मनीषिभि ( for महर्षिभि. ) — ( L. 90 ) D6 T1.2.4 G1.3 वृत्तान्तां, G2 वृत्तान्त ( for प्रसिद्धां ) Ds2 D6 T1.2.4 G2.3.5 M4 देवीं ( for देवि ) — ( L 91 ) D6 रमापति·, M1-3 जगत्पति ( for जनार्दन· ).

COLOPHON — *Mention of the Epic* Ds2 — *Mention of Khila* Dn D6 T1.2.4 G M — *Sub parvan* Dn Ds2 T1.2 G1.3-5 M कैलासयात्रा — *Adhy name* Ds2 रुक्मिणीश्रीकृष्णसंवाद. — *Adhy no* Dn 258, Ds2 257, T1 G3 184, T2 186, T4 153, G1 186, G4 183, G5 M4 185, M1-3 149

( L 92 ) Dn G2 ऐच्छन् ( for इच्छन् ) — ( L 94 ) G2 गच्छन् ( for गाश्च ) — T4 om lines 95-99 — ( L 96 ) T1.2 G1.3 आसाद्य ( for आस्थाय ). — ( L 97 ) M1-3 पौत्रं ( for पुत्र ). Dn2 कण्ठसारणौ ; T1.2 G1-4 M4 शुक° ; M1.3 शठमेव च ( for शठसारणौ ) — ( L 98 ) M4 इन्द्रसेनं ( for उग्र° ) G4 उत्तम ( for उद्धवं ) D6 नीतिमत्तमम् ( for °त्तरम् ) — After line 98, T2 G3 read line 104 — ( L 99 ) Dn Ds2 G5 M4 बुद्धिं ( for नीति ) Dn Ds2 यादवा — ( L 100 ) G2 प्रभुश् ( for नेता ) G2 धर्मप्रद, M2 °पथ ( for °पर ) M1 ( *inf lin* ) 3 स तु धर्मपथानुग ( for $^b$ ). — ( L 101 ) G2 M1.3 बि( G2 ल )भ्यन्ति यं सदा देवा ( for $^a$ ) — ( L 102 ) M1-3 इमाम् ( for सदा ) — ( L 103 ) T1 कृष्ण परं ( for वृष्णिवरं ) M4 देवम् ( for वीरम् ) M2 बुद्धि- ( for देव- ) Dn T2 G2.5 -सुप्रभम् ( for -सप्र° ) — Before line 105, T2.4 G3 M1-3 ins भगवान् — ( L 105 ) D6 T4 M1-3 श्रूयन्तां ( for शृण्वन्तु ) — ( L 106 ) D6 शृणुत ( for शृणु च ) Dn Ds2 T1.2.4 G M4 पितुर् ( for पितर् ) T2 ते सखे, G1 हे सखे, G2 नेमिप, M1-3 नीतिप ( for मे सखे ) — ( L 107 ) T1 ये यत्ना ( for यो यत्नो ) — ( L 108 ) D6 द्रष्टु ( for दृष्टं ) M4 -निधने ( for -निधन ). D6 M4 नृप ( for नृपा ) — ( L 109 ) Dn2 T1 बाल्येन ( for बालेन ) — ( L. 110 ) M3 गोपाश् ( for गावश् ) — ( L 112 ) T2 om. lines $112^b$–$116^a$ Dn Ds2 T1 -मुष्टिकौ, G1-4 M4 -मल्लकौ ( for -मल्लक ) — ( L 115 ) M1-3 ऽसौ ( for ऽपि ) M4

योऽपि वीरो दुरात्मासौ दानवो नरको हतः ।
निष्कण्टकमिमं लोकं कृतवान्राजसत्तमाः ॥
किं तु वीरो नृपो जज्ञे सखा भौमस्य यादवाः । [ 120 ]
पौण्ड्रो वीर्यवतां नेता द्वेष्टा चासौ सदा मम ॥
शिष्यो द्रोणस्य राजेन्द्रो बली ब्रह्मास्त्रवित्कृती ।
शास्त्रज्ञो नीतिमान्साक्षान्नेता सैन्यस्य यत्नवान् ।
योद्धा युद्धप्रियो राजा जामदग्न्य इवापरः ॥
एकान्तशत्रुरस्माकं छिद्रान्वेषी सदा मम । [ 125 ]
बाधिष्यते पुरीं योद्धा छिद्रं यदि लभेत सः ॥
न ह्यल्पसाध्यो बलवान्पुण्ड्रस्येशो नृपोत्तमाः ।
यत्ता भवन्तस्तिष्ठन्तु प्रगृहीतशरासनाः ।
यथा न बाधते राजा पुरीं यदुकुलाश्रयाम् ॥
अहं तु यास्ये कैलासं कुतश्चित्कारणान्नृपाः । [ 130 ]
शंकरं द्रष्टुकामोऽस्मि भूतभावनभावनम् ।
यावदागमनं मह्यं तावद्यत्ता भवन्त्विह ॥
मया विरहितां चेमां यदि जानाति पौण्ड्रकः ।
आगमिष्यति राजेन्द्रो रोत्स्यते च पुरीमिमाम् ।
इमां निर्यादवीं कर्तुं शक्नोतीति च मे मतिः ॥ [ 135 ]
यत्ता भवत राजेन्द्राः खड्गैः पाशैः परश्वधैः ।
पाषाणैः कर्पणस्थैश्च सनद्धा भवत स्वकैः ।
पिधाय च कपाटानि महाद्वाराणि यत्नतः ॥
एक एव महाद्वारो गमनागमने सदा ।
मुद्रया सह गच्छन्तु राजानो गन्तुमीप्सवः ॥ [ 140 ]
न चामुद्रः प्रवेष्टव्यो द्वारपालस्य रक्षतः ।
यावदागमनं मह्य तावदेव भविष्यति ॥
मृगया नात्र कर्तव्या न च क्रीडा बहिः पुरात् ।
ज्ञातव्याश्च परे स्वे च गमनागमने सदा ॥
एवमादि क्रिया कार्या यावदागमनं मम । [ 145 ]
इत्युक्त्वा यादवान्सर्वान्सात्यकिं पुनराह च ॥

Colophon

श्रीभगवानुवाच ।

सात्यके शृणु मद्वाक्यं यत्तो भव युधां वर ।
त्वं तु खड्गी गदी भूत्वा चापी बाणी तलत्रवान् ।

---

मया बली ( for बलान्मया ) — G( ed ) om ( hapl ) lines 116-117 — ( L 118 ) $T_{1\ 2}$ $G_3$ सो ( for यो ) $T_1$ [अ]थ ( for [अ]सौ ) — ( L 119 ) $T_{1\ 2\ 4}$ $G_{1\ 3\ 5}$ $M_4$ राजसत्तम· — ( L 120 ) $T_1$ $G_1$ भीमस्य ( for भौ° ) — ( L 121 ) $T_2$ द्वेष्टा ( for नेता ) $T_2$ चासौ देव , $G_2$ द्वेष्टा चास्मान् , $M_{1-3}$ द्विष्यते स ( for द्वेष्टा चासौ ) $D_6$ नृपोत्तम· , $G_2$ नृपोत्तमा ( for सदा मम ) — ( L 122 ) $D_6$ $T_1$ $G_3$ स हि , $T_2$ स ह ( for बली ) — ( L 123 ) $T_{1\ 2}$ $G_3$ नेता सर्व- ( for साक्षान्नेता ) Dn $Ds_2$ सर्वस्य ( for सैन्यस्य ) — ( L 126 ) $Dn_1$ पुरी ( for पुरीं ) — ( L 127 ) $Dn_1$ स्वल्प ( for ह्यल्प- ) $D_6$ $M_{3\ 4}$ पौण्ड्रस्य ( for पुण्ड्रस्य ) G( ed ) नृपोत्तमः — ( L 130 ) $M_{1-3}$ कस्मिंश्चित् ( for कुतश्चित् ) — ( L 133 ) $T_{2\ 2}$ $G_{1\ 3.\ 4}$ $M_3$ विरहिणीं ( for °हितां ) Some Mss पुण्ड्रक ( for पौण्ड्रक ) — ( L 134 ) $T_4$ राजेन्द्रा ( for °न्द्रो ) Dn $Ds_2$ $T_4$ $G_4$ योत्स्यते ( for रोत्स्यते ) — ( L 135 ) $T_1$ $G_1$ $M_4$ निर्यादवीं — After line 136, $G_2$ ins

2** वैशपायन ।

इत्युक्ता वासुदेवेन वृष्णयो यदुपुंगवा ।
तेषां मध्ये महाबाहुरुद्धव कृष्णमब्रवीत् ॥

— $G_2$ om lines 137-172 — ( L 137 ) $D_6$ कवटस्थैश् ; $T_1$ करण° , $G_1$ कवच° , Cal ed G( ed ) कर्षणीयैश् ( for कर्पणस्थैश् ) — ( L 138 ) $D_6$ $T_2$ कवाटानि ( for कपा° ) — $G_3$ om ( hapl ) lines 140-144 — ( L 140 ) Dn $Ds_2$ $D_6$ $T_{1\ 2\ 4}$ $G_{4\ 5}$ $M_{1\ 3\ 4}$ राज्ञो ये ( for राजानो ) — $T_2$ om. lines 141-144 — ( L 141 ) Dn $Ds_2$ $T_1$ $G_{1\ 4\ 5}$ पश्यत· ( for रक्षत ) — ( L 142 ) $M_{1\ 2}$ भवत्विति ( for भविष्यति ) — ( L 144 ) $Ds_2$ $T_{1\ 4}$ ज्ञातव्यं ( for °व्याश् ) $D_5$ स्वपरे ( for परे स्वे ) — After line 144, $D_6$ ins

3** चक्राङ्किता प्रवेष्टव्या· यावदागमन मम ।
नामुद्रिता· प्रवेष्टव्या यावदागमनं मम ॥

COLOPHON — *Mention of the Epic* $Ds_2$ — *Mention of Khila* Dn $Ds_2$ $D_6$ $T_{1\ 2\ 4}$ $G_{1\ 3-5}$ M — *Sub-parvan* Dn $Ds_2$ $D_6$ $T_{1\ 2}$ $G_{1.\ 3\ 4}$ M कैलासयात्रा — *Adhy name* $Ds_2$ वृष्णिशिक्षा पुररक्षणम् ; $T_{1\ 2}$ $G_{1.\ 3}$ नगरीसविधानम् — *Adhy no* Dn 259 , $Ds_2$ 258 , $T_1$ $G_3$ 185 , $T_2$ $G_1$ 187 , $T_4$ 154 , $G_4$ 184 ; $G_5$ $M_4$ 186 , $M_{1-3}$ 150

— ( L 147 ) $D_6$ $M_1$ मे वाक्य ( for मद्वाक्यं ) $T_2$ $G_1$ युद्धवतां ( for भव युधां ) — ( L 148 ) $T_4$ चापपाणिस् , $M_4$ चापबाण- ( for चापी बाणी ) Poona ed G(ed) तनुत्र- ( for

तिष्ठ यत्नेन रक्षस्त्र पुरीं बहुनृपाश्रयाम् ॥
न च निद्रा त्वया कार्या रात्रौ यदुवृष प्रभो । [ 150 ]
न च व्याख्या त्वया कार्या शास्त्राणां शास्त्रतत्पर ।
न च वादस्त्वया कार्यो वादिभिः सह वृष्णिप ॥
त्वं हि योद्धा बली जेता धनुर्वेदस्य वेदवित् ।
तथा कुरु यथा वीर नोपहास्या भवेमहि ॥

सात्यकिरुवाच ।

करिष्यामि वचस्तुभ्यं यथाशक्ति जनार्दन । [ 155 ]
आज्ञा तव जगन्नाथ धार्या यत्नेन मे सदा ॥
भृत्यवत्प्रचरिष्यामि कामपालस्य माधव ।
यावदागमनं तुभ्यं तावत्स्थास्यामि यत्नतः ॥
प्रसादस्तव गोविन्द यदि स्यान्मयि माधव ।
किं नाम मम दुःसाध्यं शत्रूणां निग्रहे हरे ॥ [ 160 ]
यदि शक्रं यमं वापि कुबेरमपि पाशिनम् ।
सर्वानेतान्विजेष्यामि किमु पौण्ड्रं नृपोत्तमम् ।
गच्छ कार्यं कुरुष्वेदं यत्तोऽहं सततं हरे ॥
उद्धवं पुनराहेदं कृष्णः पद्मनिभेक्षणः ।
शृणूद्धव त्व वाक्यं मे कुर्यास्त्वेतत्प्रयत्नवान् ॥ [ 165 ]
रक्ष्या नयेन राजेन्द्र पुरी द्वारवती त्वया ।
यत्तो भव सदा तात कुरु साहाय्यमत्र नः ।
लज्जा मम समुत्पन्ना वदतस्तव सांप्रतम् ॥
त्वं हि नेता समस्तस्य विद्यापारस्य सर्वतः ।
को नु शक्ष्यति मेधावी वक्तुं विद्यावतः पुरः ॥ [ 170 ]
यत्कार्यं तद्भवान्वेत्ति ह्यकार्यं चापि सर्वतः ।
अतोऽहं विरमे तात वक्तुं संप्रति वृष्णिप ॥

उद्धव उवाच ।

किमिदं तव गोविन्द वर्तते मां प्रति प्रभो ।
अहो प्रसन्नता मह्यं किं तु प्रीतिरियं तव ॥
जानाम्यहं जगन्नाथ प्रसादस्यैष विस्तरः । [ 175 ]
यस्य प्रसन्नो भवसि तस्य किं नास्ति केशव ॥
त्वं हि सर्वस्य जगतः कर्ता हर्ता प्रधानकृत् ॥
प्रभवः सर्वकार्याणां वक्ता श्रोता प्रमाणवित् ॥
ध्याता ध्यानमयो ध्येय इति ब्रह्मविदो विदुः ।
जेता देवरिपूणां च गोप्ता नाकसदां भवान् ॥ [ 180 ]
त्वन्नाथा वयमेवेति जीवामो निहतद्विषः ।
इयं नीतिरहं मन्ये नेता नीतेर्यतो भवान् ॥
को नु नाम न यो वेद त्वां विना सांप्रतं वद ।
नीतिस्त्वं सर्वकार्याणामिति मे निश्चिता मतिः ॥

---

तलत्र-) — (L. 149) $M_4$ पुरीं नृपसमाश्रयाम् (for $^b$) — (L 150) $G_4$ $M_4$ रात्रौ यदुकुलेश्वर (for $^b$) — (L 151) $M_4$ [अ]वज्ञा (for व्याख्या) $D_6$ $T_4$ $G_4$ -तत्पर, $M_{1-3}$ -कोविद (for तत्पर) — (L 153) Dn $T_4$ $G_{4\ 5}$ बली ज्ञाता ($G_5$ °तो), $D_{s2}$ बली ज्ञात्वा, $G_1$ बली ख्यातो, $M_4$ कुलज्ञातो (for बली जेता) $G_5$ धनुर्वेदाख्य (for °वेदस्य) $D_{s2}$ $D_6$ तत्त्ववित्; $M_{1-3}$ पारग (for वेदवित्) — (L 154) $D_6$ $G_{4\ 5}$ $M_{1-3}$ [अ]पहास्या (for [उ]प°) — (L 156) $M_4$ कार्या (for धार्या) $T_2$ $G_1$ सर्वदा (for मे सदा) — (L 157) $M_{1\ 2}$ प्रकरिष्यामि (for प्रच°) — $T_1$ $G_4$ $M_4$ om (hapl) lines 158-159 — (L 158) $D_6$ तस्य (for तुभ्यं). — (L 159) $M_2$ मम (for मयि) — (L 160) $T_1$ $G_1$ मे च (for मम) $M_4$ दुर्धार्यं (for दुःसाध्य) $T_2$ किं नाम यदुभिः साध्यं (for $^a$) $D_6$ विग्रहे (for नि°) Dn रणे (for हरे) — (L 161) $D_6$ $T_4$ $D_6$ $T_4$ वाशिवम्, $T_1$ शासनम्; $M_{1-3}$ पाशपम् (पाशिनम्) — (L 162) $T_2$ $G_1$ वधिष्यामि (for विजे°) Cal ed किमुपेन्द्र- (for किमु पौण्ड्रं) $M_{1-3}$ नृपाधमम् (for नृपोत्तमम्). — (L. 163) $M_{1-3}$ यत्तेऽभिलषितं हरे (for $^b$) — (L 165) $D_6$ $M_{1-3}$ कुर्यास्त्वं तत् (for °स्त्वेतत्) $M_4$ शृणुध्वं यादवा सर्वे सर्वत्रासौ प्रयत्नवान् — (L 169) $G_4$ $M_4$ [अ]सि सर्वस्य (for समस्तस्य) — (L 170) $M_{1-3}$ को नु नाम समर्थो हि (for $^a$) — (L 171) $D_6$ $T_4$ $M_{1-3}$ वेद (for वेत्ति) $D_{n1}$ त्वकार्यं, $D_6$ $T_4$ $M_{1-3}$ अ° (for ह्य°) — (L 173) $M_4$ प्रति (for तव). — (L. 174) $G_2$ प्रधानता (for प्रसन्नता) $G_5$ प्रीतिकरं (for °रियं). — (L 176) $T_4$ $G_4$ भवति, $M_2$ भगवांस् (for भवति) — (L 177) $D_6$ $G_{4\ 5}$ $M_4$ भर्ता (for हर्ता) Dn $D_{s2}$ $G_{3,5}$ $M_4$ प्रधानत, $D_6$ प्रधानभृत्, $T_1$ प्रभाववित्; $T_2$ प्रधानवत् (for °कृत्) — (L 178) $D_6$ $T_{1\ 2\ 4}$ $G_{2\ 3}$ प्रमाणकृत्; $G_1$ प्रधानकृत्, $M_3$ प्रधानवित् (for प्रमाण°) — (L 179) $D_6$ $T_2$ $G_{1\ 4\ 5}$ ध्यानमतो (for °मयो) $M_{3\ 4}$ ध्येयम् (for ध्येय) $D_{n2}$ ब्रह्ममयो; $M_4$ वेदविदो (for ब्रह्म°) — (L 181) $D_6$ $G_2$ $M_{1-3}$ एते हि (for एवेति). — (L 182) $M_{1\ 3}$ त्वां तु नीतिम् (for इयं नीतिर्). $D_6$ अहं (for यतो) — (L 183) $D_6$ $M_{1-3}$ देव (for वेद) Cal ed ऋते (for विना) — (L 185) $D_6$ दुर्गाहो; $T_2$ °भो (for

दुर्गाढो नयमार्गोऽयमित्याहुस्तद्विदो जनाः । [ 185 ]
चतुर्धा प्रोच्यते नीतिः सामदाने जनार्दन ॥
दण्डो भेदो मनुष्याणां निग्रहावग्रहे सदा ।
दण्डयेषु दण्डमिच्छन्ति सामान्यं तु नये हरे ॥
बलवत्स्वथ दानं तु त्रयाणां चेदगोचरे ।
प्रयोक्तव्यो महाभेद इति नीतिमतां मतम् ॥ [ 190 ]
तेषु तेष्वथ सर्वेषु प्रमाणं त्वां विदुर्बुधाः ।
किमत्र बहुनोक्तेन सर्वं त्वयि समर्पितम् ।
इत्युक्त्वा विररामैव उद्धवो नीतिमत्तरः ॥
ततः स भगवान्विष्णुरेवमेव नृपोत्तम ।
कामपालं महाबाहुमुवाच यदुसंसदि । [ 195 ]
उग्रसेनं नृपं राजंस्तथा हार्दिक्यमेव च ॥
कामपालं पुनर्विष्णुरिदं होवाच तत्त्ववित् ।
न प्रमादस्त्वया कार्यः सर्वदा यत्नवान्भव ॥
स्थिते त्वयि महाबाहो का पीडा जगतो भवेत् ।
गदी भव सदा आर्य न क्रीडा सर्वदा भवेत् ॥ [ 200 ]
रक्ष त्वं सर्वदा यत्नात्पुरीं द्वारवतीं प्रभो ।
नोपहास्या यथा स्याम तथा कुरु गदी भव ॥
उत्साहः सर्वथा कार्यो निरुत्साहो न यत्नतः ।
बाढमित्यब्रवीद्रामः कृष्णं वृष्णिकुलोद्वहम् ॥
वृष्णयः सर्व एवैते स्वं स्वं सद्म समाययुः । [ 205 ]
गन्तुमैच्छज्जगन्नाथः कैलासं पर्वतोत्तमम् ॥

Colophon.

वैशंपायन उवाच ।

ततः स चिन्तयामास गरुडं पक्षिपुंगवम् ।
आगच्छ त्वरित तार्क्ष्य इति विष्णुर्जगत्पतिः ॥
ततः स भगवांस्तार्क्ष्यो वेदराशिरिति स्मृतः ।
बलवान्विक्रमी योगी शास्त्रनेता कुरूद्वह ॥ [ 210 ]
यज्ञमूर्तिः पुराणात्मा साममूर्धा च पावनः ।
ऋग्वेदपक्षवान्पक्षी पिङ्गलो जटिलाकृतिः ॥
ताम्रतुण्डः सोमहरः शक्रजेता महाशिराः ।
पन्नगारिः पद्मनेत्रः साक्षादिन्द्र इवापरः ॥
वाहनं देवदेवस्य दानवीगर्भकृन्तनः । [ 215 ]
राक्षसासुरसंघानां जेता पक्षबलेन यः ॥
प्रादुरासीन्महावीर्यः केशवस्याग्रतस्तदा ।
जानुभ्यामपतद्भूमौ नमो विष्णो जगत्पते ॥

---

°ढो ) —( L 186 ) $D_6$ $G_2$ $M_3$ सामदानं ( for °दाने ) —( L. 187 ) $G_1$ दण्डोच्छेदो ( for दण्डो भेदो ) $D_6$ विग्रहाविग्रहे स्मृता , $T_{1\,2}$ $G_1$ विग्रहोऽविग्रह स्मृत , $G_2$ विग्रहावग्रहे स्मृत., $G_{3-5}$ विग्रहाविग्रह स्मृत , $M_{1\,3}$ विग्रहप्रग्रहे स्मृता , $M_2$ विग्रहाप्रग्रहे स्मृता , $M_4$ विग्रह प्रग्रह स्मृत ( for $^b$ ) — ( L 188 ) $G_2$ नयम् ( for दण्डम् ) $D_6$ समानेऽनुनयो हरे ; $T_1$ $G_3$ सा( $G_3$ स )मान्यनुनये हरे , $M_{1-3}$ सामान्येन नयं हरे ( for $^b$ ) — ( L 189 ) $M_4$ [अ]र्थंदान ( for [अ]थ दान ) $T_{1\,2}$ $G_4$ त्रयाणां भेदगोचरे , $T_4$ °णां चैव गोचरे ( for $^b$ ) — ( L 191 ) $G_4$ दण्डेषु तेषु सर्वेषु , $M_{1-3}$ एतेष्वथ च स° ( for $^a$ ) $D_6$ $G_2$ ताः प्रमाणं ( for प्रमाणं त्वां ) — ( L 192 ) $G_4$ समाहितम् ( for समर्पितम् ) — Before line 193, Dn $Ds_2$ ins वैशंपायन उवाच — ( L 196 ) $G_2$ यदुश्रेष्ठं , $G_3$ तदा राजंस् ( for नृपं राजंस् ) — ( L 197 ) $D_6$ नृपं ( for पुनर् ) Dn $Ds_2$ $T_{1\,4}$ $G_2$ $M_3$ प्रोवाच ( for हो° ) — ( L 200 ) $T_2$ $G_1$ न च क्रीडा सदा भवेत् ( for $^b$ ) — ( L 201 ) $T_1$ पुरं ( for पुरीं ) $M_{1\,3}$ विभो ( for प्रभो ) — ( L 202 ) $D_6$ $T_2$ $G_{1\,3\,4}$ $M_{1-3}$ [अ]पहास्या , $G_2$ [उ]पहास्यं ( for °हास्या ) $D_6$ $G_2$ $M_{1-3}$ रामस् ; $T_2$ $G_{1\,3-5}$ नाम ; $T_4$ रामस् ( for स्याम ) — ( L 204 ) Dn $Ds_2$ $T_{1\,2\,4}$ G $M_{3\,4}$ कुलोद्भवम् ( for °द्वहम् ) — ( L 205 ) $D_6$ $T_4$ $G_2$ $M_2$ वेश्म ( for सद्म )

COLOPHON — *Mention of the Epic* $Ds_2$ $M_4$ — *Mention of Khila* Dn $Ds_2$ $D_6$ $T_{1\,2\,4}$ $G_{1-4}$ M — *Sub-parvan* Dn $Ds_2$ $T_{1\,2}$ $G_{3\,4}$ $M_{2\,4}$ कैलासयात्रा — *Adhy name* $Ds_2$ श्रीकृष्णशिक्षा , $T_{1\,2}$ $G_{1\,3}$ द्वारवतीसंविधानम् — *Adhy no* . Dn 260 , $Ds_2$ 259 , $T_1$ $G_3$ 186 , $T_2$ $G_1$ 188 , $T_4$ 155 , $G_2$ 182 , $G_4$ 150 , $M_{1-3}$ 151 ; $M_4$ 187

( L 207 ) $Dn_2$ $Ds_2$ $D_6$ $T_{1,2}$ $G_{2-5}$ $M_{1\,3}$ स- ( for स ). — ( L 209 ) $D_6$ अवस्थितः ( for इति स्मृत ) $T_4$ वेदराशिस्थित स्मृत ; $M_{2\,3}$ °स्मृतिस्मृत ( for $^b$ ) — ( L 210 ) $D_6$ क्रतूद्वह , $M_1$ क्रतूद्वह ( for कुरूद्वह ) — ( L 211 ) $D_6$ $T_4$ $G_2$ $M_2$ यजुर्मूर्ति ( for साममूर्धा ). $D_6$ $T_4$ $G_2$ $M_2$ स ( for च ) $M_{1-3}$ यज्ञमूर्तिः सनातन ( for $^b$ ) — ( L 212 ) $D_5$ $G_2$ $M_{1-3}$ ऋक्पक्ष ( for ऋग्वेद- ) — ( L. 213 ) $D_6$ ताम्रं तुण्डं ( for ताम्रतुण्ड ) $T_2$ सोमभर ( for °हर ). Cal ed शत्रु- ( for शक्र- ) $D_6$ शक्रतेजा महासुरः ( for $^b$ ) — ( L 214 ) Dn $Ds_2$ $G_{2\,4\,5}$ $M_{1\,4}$ विष्णुर् ( for इन्द्र ) — $M_4$ om. lines 215-218. — ( L. 215 ) $M_2$ वाहनो. — ( L 216 )

नमस्ते देवदेवेश हरे स्वामिन्निति ब्रुवन् ।
पस्पर्श पाणिना कृष्णः स्वागतं तार्क्ष्यपुंगव ॥ [ 220 ]
इत्युवाच तदा तार्क्ष्य यास्ये कैलासपर्वतम् ।
शूलिनं द्रष्टुमिच्छामि शंकरं शाश्वतं शिवम् ॥
बाढमित्यब्रवीत्तार्क्ष्य आरुह्यैनं जनार्दनः ।
तिष्ठध्वमिति ह्योवाच यादवान्पार्श्ववर्तिनः ॥
ततो ययौ जगन्नाथो दिशं प्रागुत्तरां हरिः । [ 225 ]
रवेण महता तार्क्ष्यस्त्रैलोक्यं समकम्पयत् ॥
सागरं क्षोभयामास पद्भ्यां पक्षी व्रजंस्तदा ।
पक्षेण पर्वतान्सर्वान्विहन्देवं जनार्दनम् ॥
ततो देवाः सगन्धर्वा आकाशेऽधिष्ठितास्तदा ।
तुष्टुवुः पुण्डरीकाक्षं वाग्भिरिष्टाभिरीश्वरम् ॥ [ 230 ]
जय देव जगन्नाथ जय विष्णो जगत्पते ।
जयाजेय नमो देव भूतभावनभावन ॥
नमः परमसिंहाय दैत्यदानवनाशन ।
जयाजेय हरे देव योगिध्येय भयापह ॥
नारायण नमो देव कृष्ण कृष्ण हरे हरे । [ 235 ]
आदिकर्तः पुराणात्मन्ब्रह्मयोने सनातन ॥
नमस्ते सकलेशाय निर्गुणाय गुणात्मने ।
भक्तप्रियाय भक्ताय नमो दानवनाशन ।
अचिन्त्यमूर्तये तुभ्यं नमस्ते सकलेश्वर ॥
इत्यादिभिस्तदा देवं वाग्भिरीशानमव्ययम् ॥ [ 240 ]
तुष्टुवुर्देवगन्धर्वा ऋषयः सिद्धचारणाः ॥
शृण्वन्नेव जगन्नाथः स्तुतिवाक्यानि तानि च ।
ययौ सार्धं सुरगणैर्मुनिभिर्वेदपारगैः ॥
यत्र पूर्वं स्वयं विष्णुस्तपस्तेपे सुदारुणम् ।
लोकवृद्धिकरः श्रीमाल्ँलोकानां हितकाम्यया ॥ [ 245 ]
वर्षायुतं तपस्तप्तं विष्णुना प्रभविष्णुना ।
यत्र विष्णुर्जगन्नाथस्तपस्तप्त्वा सुदारुणम् ।
द्विधाकरोत्स्वमात्मानं नरनारायणाख्यया ॥
गङ्गा यत्र सरिच्छ्रेष्ठा मध्ये धावति पावनी ॥
यत्र शक्रः स्वयं हत्वा वृत्रं वेदार्थतत्त्वगम् । [ 250 ]
ब्रह्महत्याविनाशार्थं तपो वर्षायुतं चरत् ।
यत्र सिद्धाश्च सिद्धाः स्युर्ध्यात्वा देवं जनार्दनम् ॥
यत्र हत्वा रणे रामो रावणं लोकरावणम् ।
एतच्छासनमिच्छंश्च तपो घोरमतप्यत ॥
देवाश्च मुनयश्चैव सिद्धिं यान्ति शुचिव्रताः । [ 255 ]
यत्र नित्यं जगन्नाथः साक्षाद्वसति केशवः ॥
यत्र यज्ञाः प्रवर्तन्ते नित्यं मुनिगणैः सह ।
यस्याः स्मरणमात्रेण नरः स्वर्गं गमिष्यति ॥
स्वर्गसोपानमिच्छन्ति यां पुण्यां मुनिसत्तमाः ।
शत्रवो मित्रतां यान्ति यत्र नित्यं नृपोत्तम ॥ [ 260 ]

---

$T_2$ $G_{1\ 5}$ स ( for य. ) — ( L 220 ) $D_6$ $T_2$ $G_{1-3}$ $M_{1-3}$ बाहुना ( for पाणिना ) $Dn_2$ $T_2$ $G_{1\ 4}$ $M_{1\ 3\ 4}$ -पुगवम् ( for °व ). — ( L 225 ) $D_6$ प्रागुत्तरं ( for °रां ). — ( L. 226 ) $T_4$ रयेण ( for रवेण ). — ( L 227 ) $M_3$ व्रजांस् ( for व्रजंस् ). — ( L. 228 ) $D_6$ $T_4$ $G_2$ पक्षिराज. प्रतापवान् ( for ° ). — ( L 229 ) $T_2$ $G_{1\ 3-5}$ $M_{1,3\ 4}$ ऽविष्ठितास् ( for ऽधिष्ठितास् ) $D_6$ साकाशे धर्षितास्तदा , $T_1$ लोकाश्चैविष्टपास्तदा ( for ° ). — ( L 230 ) $D_6$ अष्टाभिर् ( for इ° ). — ( L. 232 ) $D_6$ $T_1$ $G_{1\ 3}$ जयाजय , $T_4$ $G_4$ $M_3$ जय देव ; $G_5$ जय जय ( for जयाजेय ) — ( L 233 ) $T_1$ $M_4$ -हसाय ( for -सिंहाय ) $G_2$ -नाशने ; $G_4$ -नाशिने ( for -नाशन ) — $G_2$ om. ( hapl ) lines 234–238. — ( L 234 ) $G_4$ $M_4$ नमो देव ( for हरे देव ). Dn $Ds_2$ $G_5$ परागते ; $D_6$ [अ]द्वयावह ( for भयापह ) — ( L. 237 ) $D_6$ कमलेशाय ( for सकले° ) $T_2$ नमः परमसिंहाय ( for ° ) — ( L 238 ) Dn $T_1$ $M_{3,4}$ भक्ति- ( for भक्त- ) $G_4$ $M_4$ -नाशिने ( for -नाशन ). G(ed.) शक्तिप्रियाय शक्ताय ( for ° ) — ( L 241 ) $G_2$ सिद्धाश्च परमर्षय· ( for ° ). — ( L 242 ) $G_4$ श्रुति- ( for स्तुति- ) — ( L 243 ) $G_2$ यदुगणैर् ( for सुर° ) — $G_4$ om ( hapl ) lines 245-247 — ( L 245 ) Dn $D_6$ -वृद्धिकरं ( for °र. ) — ( L. 246 ) $T_4$ तह्वा ( for तप्त ) — ( L 247 ) $D_6$ तत्र ( for यत्र ) $G_3$ तप्तं ( for तप्त्वा ) — ( L 249 ) $G_5$ गङ्गा या च , $M_{1-3}$ यत्र गङ्गा ( by transp ) — ( L 250 ) $T_{1,2}$ $G_{1\ 3}$ -पारगम् ( for -तत्त्वगम् ) — ( L 252 ) $D_6$ साध्याश्च ( for सिद्धा स्युर् ) — $T_4$ om lines 253-254 — ( L 254 ) $M_{1-3}$ एनःशोधनम् ( for एतच्छासनम् ) — ( L 255 ) $T_2$ $G_1$ सिद्धाश्च ( for देवाश्च ) $D_6$ $T_2$ $G_1$ शुद्धिं , $M_4$ सिद्धा ( for सिद्धिं ) $M_4$ दृढव्रता ( for शुचि° ) — ( L 257 ) $M_{1\ 3}$ सदा ( for सह ). — ( L 258 ) $D_6$ $T_{1\ 2\ 4}$ $G_{1,4}$ यस्य ( for यस्याः ) — ( L. 261 ) $G_1$ धन्विनाम् ( for -धर्मिणाम् ) — ( L 263 ) $D_6$

यामाहुः पुण्यशीलानां स्थानमुत्तमधर्मिणाम् ।
यत्र विष्णुं समाराध्य देवाः स्वर्गं समाययुः ॥
सिद्धिक्षेत्रमिदं प्राहुर्ऋषयो वीतमत्सराः ।
विशालां बदरीं विष्णुस्तां द्रष्टुं सकलेश्वरः ॥
सायाह्ने चामरगणैर्मुनिभिस्तत्त्वदर्शिभिः । [ 265 ]
प्रविवेश महापुण्यामृषिजुष्टां तपोमयीम् ॥
अग्निहोत्राकुले काले पक्षिव्याहारसंकुले ।
नीडस्थेषु विहंगेषु दुह्यमानासु गोषु च ॥
बृसीष्वथ च तिष्ठत्सु मुनिवीरेषु सर्वतः ।
समाधिस्थेषु सिद्धेषु चिन्तयत्सु जनार्दनम् ॥ [ 270 ]
अधिश्रितेषु हविःषु ज्वाल्यमानेषु चाग्निषु ।
हूयमानेषु तत्रैव पावकेषु समन्ततः ।
अतिथौ पूज्यमाने च संध्याविष्टे जगन्मये ॥
स तस्यामथ वेलायां देवैः सह जनार्दनः ।
विवेश बदरीं विष्णुर्मुनिजुष्टां तपोमयीम् ॥ [ 275 ]
आश्रमस्याथ मध्यं तु प्रविश्य हरिरीश्वरः ।
गरुडादवरुह्याथ दीपिकादीपिते तदा ।
प्रदेशे पुण्डरीकाक्षः स्थितस्तावत्सहामरैः ॥

Colophon.

वैशंपायन उवाच ।

ततो मुनिगणा दृष्ट्वा देवदेवमवस्थितम् ।
समाप्य चाग्निहोत्राणि संपूज्यातिथिसत्तमान् ॥ [ 280 ]
मुनयो दीर्घतपसः समाधौ कृतनिश्चयाः ।
जटिनो मुण्डिनः केचिच्चिराधमनिसंतताः ॥
निर्मज्जानीरसाः केचिद्वेताला इव केचन ।
अश्मकुट्टाशनपराः पर्णभक्षास्तथापरे ॥
वेदविद्याव्रतस्नाता निराहारा महातपाः । [ 285 ]
स्मरन्तः सर्वदा विष्णुं तद्भक्तास्तत्परायणाः ॥
आसन्नमुक्तयः केचित्केचिद्ध्यानैकतत्पराः ।
ध्यानेन मनसा विष्णुं दृष्टवन्तस्तपोधनाः ॥
संवत्सराशिनः केचित्केचिज्जलविचारिणः ।
शक्रस्य भयदातारः श्रुतिस्मृतिपरायणाः ॥ [ 290 ]
वसिष्ठो वामदेवश्च रैभ्यो धूम्रस्तथैव च ।
जाबालिः काश्यपः कण्वो भरद्वाजोऽथ गौतमः ॥
अत्रिरश्वशिरा भद्रः शङ्खः शङ्खनिधिः कुणिः ।
पाराशर्यः पवित्राक्षो याज्ञवल्क्यो महामनाः ॥
कक्षीवानङ्गिराश्चैव मुनिर्दीर्घतमास्तथा । [ 295 ]
असितो देवलस्तात वाल्मीकिश्च महातपाः ॥

---

T1.2 G M4 सिद्धक्षेत्रम् ( for सिद्धि° ) — ( L 264 ) G2 तद्राष्ट्रं ( for तां द्रष्टुं ) — G2 om. lines 265–266 — ( L 266 ) Dn Ds2 D6 T1 2 G1 3 5 महापुण्यम्, G4 M4 °रण्यम्, M2 महत्पुण्यम् ( for महापुण्याम् ) Dn Ds2 D6 T1 4 G1 4 5 M2 4 ऋषिजुष्टं, T2 G3 ऋषिं द्रष्टु ( for ऋषिजुष्टां ) Dn Ds2 T4 G1 4 M4 तपोवनम्, T1 2 G3 M1.2 °मयम् ( for °मयीम् ) — G2 om line 269 — ( L 269 ) Dn2 Ds2 ऋषिषु ( for बृसीषु ). D6 तप स्थितेषु वीरेऽस्मिन्, G3 पृथिवीष्वथ तिष्ठत्सु ( for $^a$ ) G4 सुव्रत ( for सर्वत ) — ( L 270 ) D6 जनार्दनः — ( L 271 ) D6 हविषि ( for हवि षु ) D6 ज्वलमानेषु ( for ज्वाल्य° ) — ( L 272 ) D6 तथैव हूयमानेषु, T4 तथैवाहूयमानेषु, G2 इहैव हूयमानेषु ( for $^a$ ) — ( L 274 ) D6 G2 M1–3 एतस्याम् ( for स त° ) — ( L 278 ) T1 प्राविशत्; G3 प्रवेशे, M4 प्रपेदे ( for प्रदेशे )

COLOPHON — *Mention of Khila* Dn Ds2 D6 T1.2 4 G1–4 M1–3 — *Sub parvan* Dn Ds2 T2 G1 3 4 M2 4 कैलासयात्रा — *Adhy name* T1.2 G1 3 4 M4 बदरिकाश्रमप्रवेशः — *Adhy no.* Dn 261, Ds2 262, T1 G3 187; T2 G1 189, T4 156, G2 183, G4 186; M1–3 152, M4 188

T2 4 G1 3 om the ref — ( L 279 ) D6 नमस्कृतम्, T1 G2 3 M4 उपस्थितम् ( for अव° ) — T1 om lines 280–286. — ( L 281 ) T4 दीर्घतपसा ( for °स ) D6 समये, G5 समेयुः ( for समाधौ ) — M4 om lines 282$^b$–287$^a$ — ( L 283 ) G3 निर्मेद्मा- ( for °ज्जा- ) — ( L 284 ) T2 G3 M1–3 अश्मकुट्टा दशतपा ( for $^a$ ) Ds2 D6 T2 G1 3–5 M1–3 पत्रभक्षास्; G2 अभक्षाश्च, Cal ed परभिक्षास् ( for पर्णभक्षास् ) — T2 G1 3 om lines 285$^b$–290$^a$. Ds2 om lines 286$^b$–288$^a$ G4 om. lines 287–290 — ( L 287 ) M1 3 -निश्चया ( for -तत्परा ) — ( L 288 ) M1 3 द्रष्टुकामा ( for दृष्टवन्तस् ) — ( L. 289 ) G2 M4 -विहारिणः ( for -विचा° ) — ( L 291 ) D6 T1.2.4 G1.2.4 5 M2 काश्यपो ( for वसिष्ठो ) — ( L 292 ) G1.4 जाबाली, Cal ed जाजलिः ( for जाबालि. ) — ( L 293 ) G2 मुनिर् ( for अत्रिर् ) Cal ed. चैव ( for भद्र ) D6 T4 G2 क्षाणि ( for कुणि ) — ( L. 294 ) T1 G2 पाराशरः ( for °शर्य ). G5 महातपाः, M4 °नृषिः

एते चान्ये च मुनयो द्रष्टुमीश्वरमव्ययम् ।
आदायार्घ्यं यथायोगमुटजात्स्वात्समाययुः ॥
ते च गत्वा हरिं कृष्णं विष्णुमीशं जनार्दनम् ।
भक्तिनम्रास्तदा देवं प्रणेमुर्भक्तवत्सलम् ॥ [ 300 ]
नमोऽस्तु कृष्ण कृष्णेति देवदेवेति केशवम् ।
प्रणवात्मञ्जगन्नाथ नताः स्म शिरसा हरे ॥
विष्णो जिष्णो हृषीकेश केशवेति च सर्वदा ।
प्रणामप्रणता विप्राः प्राहुरित्थं जगत्पतिम् ॥
इदमर्घ्यमिदं पाद्यमिदं विष्टरमेव च । [ 305 ]
कृतार्थाः सर्वथा देव प्रसन्नो नो जगत्पतिः ॥
किं कुर्मः किं नु नः कृत्यं कश्चिद्दोषः प्रभो हरे ।
इति प्राञ्जलयः सर्वे स्थिता देवस्य पार्श्वतः ॥
कृष्णोऽपि तद्यथायोगमुपयुज्य सहामरैः ।
कृतं सर्वं मुनिवरा वर्धतां तप उत्तमम् ॥ [ 310 ]
इति ब्रुवन्पुराणात्मा प्रीतस्तेन गरुत्मता ।
आसनं लम्भयामास रात्रौ देवो जनार्दनः ॥
कुशलं पृष्टवान्भूयो मुनीनां भावितात्मनाम् ।
अग्निहोत्रेषु तपसि तथा कृत्येषु सर्वशः ।
एवमादि जगन्नाथः पृष्टवानीश्वरस्तदा । [ 315 ]
सर्वत्र कुशलं ते तु ब्रूयुः कृष्णस्य तत्त्वतः ॥
आतिथ्यं चक्रिरे ते तु नीवारैः फलमूलकैः ।
देवानामथ सर्वेषां विष्णोः कृष्णस्य यत्नतः ।
आतिथ्यमुपयुञ्जानस्ततः प्रीतोऽभवद्धरिः ॥

Colophon

वैशंपायन उवाच ।

ततः स भगवान्विष्णुर्दुर्विज्ञेयगतिः प्रभुः । [ 320 ]
यत्र पूर्वं तपस्तप्तमात्मना यादवेश्वरः ॥
गङ्गायाश्चोत्तरे तीरे देशं द्रष्टुमुपागतः ।
स्वयमेव हरिः साक्षात्प्रविवेश तमालयम् ॥
प्रविश्य सुचिरं कालं ददर्श च मनोरमम् ।
निषसाद ततस्तस्मिन्नाश्रमे पुण्यवर्धने ॥ [ 325 ]
समाधौ योजयामास मनः पद्मनिभेक्षणः ।
किमप्येष जगन्नाथो ध्यात्वा देवेश्वरः स्थितः ॥
स्थिते देवगुरौ तत्र समाधौ दीपवद्धरौ ।
तत्र शब्दो महान्घोरः प्रादुरासीत्समन्ततः ॥
खाद खाद नमो देव यात यात मृगानिमान् ॥ [ 330 ]

---

( for °मना ) — ( L 295 ) Dn1 Ds2 D3 T1 2 G1 3–5 दीर्घतपास्, T4 G2 M4 दीप्ततपास् ( for दीर्घतमास् ) — G2 om lines 296–297 D6 G1 3 T1 2 4 M1–3 om line 296 — ( L 297 ) T2 G1 द्रष्टुमव्ययमीश्वरम् ( for b ) — D6 om lines 298–299 — ( L 299 ) T2 4 G1–3 M विष्णु, Cal. ed द्रष्टुं ( for कृष्णं ) M कृष्णम् ( for विष्णुम् ) T1 2, 4 G1–3 कृष्णमीश्वरमव्ययम् ( for b ) — T2 om lines 301–304 G1 om lines 301–302 — ( L 302 ) D6 T1 जगन्नाथं — ( L 303 ) Dn Ds2 G1, 2 4 5 M4 कृष्ण विष्णो ( for विष्णो जिष्णो ) D6 M1–3 ते सदा, T4 G2 ते तदा ( for सर्वदा ) — ( L 304 ) D6 प्रणेमु ( for प्रणाम- ). Dn Ds2 T1 G1–4 M4 -प्रवणा ( for -प्रणता ) D6 M1–3 ब्रूयुर्; T1 आहुर् ( for प्राहुर् ). M4 आसन् ( for इत्थ ) G4 जनार्दनम् ( for जगत्पतिम् ) — ( L 306 ) T2 4 G3 जगत्पते ( for °त्पतिः ) — ( L 307 ) Dn Ds2 T1, 4 M4 कश्चिद्दोषः; T2 G1, 3–5 M1–3 कश्च शेषः, G2 कच्चित्क्षेमं; G4 कश्च दोषः ( for कश्चिद्दोष ) D6 कश्च दोष. परो हरे ( for b ) — ( L 308 ) M2 देव- ( for स्थिता ) Dn Ds2 T1 2 G1 3–5 M4 प्राहुर्देवस्य पश्यत. ( for b ). — ( L 312 ) D6 T1 G4 5 M1 3 देवैर् ( for देवो ) — ( L 314 ) Dn Ds2 T4 G2 3 भृत्येषु ( for कृ° ) — ( L 316 ) Dn सर्वत, D6 T4 G2 सर्वश ( for तत्त्वत. ) T1 2 G1 3 ब्रुवन्त. शार्ङ्गधन्वन ( for b ) — G4 M4 om lines 317–319 Ds2 om lines 317–318

Colophon — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 D6 T1 2 4 G M — *Sub-parvan* Dn Ds2 G4 M2–4 कैलासयात्रा — *Adhy name* T1, 2 G1 3 कृष्णपूजनम् — *Adhy no.* Dn 262, Ds2 261, T1 G3 188, T2 G1 190, T4 157, G2 184, G4 187; G5 189, M1–3 153, M4 189

Dn1 T2 G1 om the ref — ( L 321 ) G2 परमेश्वर. ( for यादवे° ) — ( L 322 ) D6 तत्र, G5 देशं ( for तीरे ) T2 G1 देवं ( for देशं ). D6 G2 M1 2 उपागमत्, G4 इवागतः ( for उपा° ) — ( L 323 ) Dn Ds3 D6 G2 M1 2 तपोवनम् ( for तमालयम् ) — D6 om lines 324–328 — ( L 324 ) Dn Ds2 T4 G1 4 5 M2 4 देशं ( for कालं ) G4 सुमनोरमम्; M4 सुमनोहरम् ( for च मनोरमम् ) — ( L. 325 ) M4 पुनस् ( for ततस् ). Dn Ds2 G5 -वर्धन. ( for °ने ) — ( L. 327 )

प्रेषयेह शुनः सर्वान्प्रसादाच्छार्ङ्गधन्वनः ॥
एष विष्णुरयं कृष्णो हरिरीश इतोऽच्युतः ।
नमोऽस्तु विष्णो देवेश स्वामिन्माधव केशव ॥
इत्यादिशब्दः सुमहानाविरासीत्तदा निशि ॥
ततश्च सुमहानादः सिंहानां मृगविद्विषाम् । [ 335 ]
धावतां च शुनां राजन्मृगाननु विनर्दताम् ॥
मृगाणां भीतियुक्तानामृक्षाणां द्वीपिनां तथा ।
गजानां नर्दतां राजन्बृंहितानि ततस्ततः ॥
महावातसमुद्भूतक्षुभितस्येव वारिधेः ।
नादस्त्रैलोक्यवित्रासः प्रादुरासीत्तदा निशि ॥ [ 340 ]
श्रुत्वा तं तु हरिर्देवस्तादृशं तत्र विष्ठितः ।
समाधिक्षोभनिपुणं निःश्वस्य च जगत्पतिः ॥
ततः स चिन्तयामास कोऽयमेष महास्वनः ।
कस्यायमीदृशः शब्दः स्तुतियुक्तो मम त्विति ॥
आहोस्विन्मृगयाशब्दः शुनां संचरतां वने । [ 345 ]
मृगाणामथ सर्वेषां नादश्च सुमहानयम् ।
व्यामिश्रः स्तुतियुक्ताभिर्वाग्भिर्मम समन्ततः ॥
इति संचिन्त्य मनसा दिशो विप्रेक्ष्य सर्वतः ।
तत आस्ते हरिस्तत्र ज्ञातुं तस्य समुद्भवम् ॥
ततो मृगाः समायान्ति यत्र तिष्ठति केशवः । [ 350 ]
तांश्चैवानुचरो राजञ्श्वगणः समपद्यत ॥
अथ वै दीपिका राजञ्शतशोऽथ सहस्रशः ।
ततस्तमोऽपि व्यनशद्दिवेव समपद्यत ॥
ततोऽनु भूतसंघाश्च समदृश्यन्त तत्र ह ।
पिशाचाश्च महाघोरा नर्दन्तो बहुविस्वरम् ॥ [ 355 ]
भक्षयन्तोऽथ पिशितं पिबन्तो रुधिरं बहु ।
प्रादुरासन्महाघोराः पिशाचा विकृताननाः ॥
हन्यमाना हता राजन्पतन्तः पतिता मृगाः ।
इतश्चेतश्च धावन्तो बाणैर्विद्धा मृगद्विपः ॥
ततो मृगसहस्राणि समुदीर्णानि भारत । [ 360 ]
यत्रासौ तिष्ठते देवस्तत्र यातानि भारत ।
अन्तरीकृत्य देवेशं स्थितानीत्यनुशुश्रुमः ॥
पिशाच्यो विकृताकाराः कराला लोमहर्षणाः ॥
पुत्रवत्यः समापेतुर्यत्र तिष्ठति केशवः ।
श्वगणस्तत्र राजेन्द्र चरत्येव ततस्ततः ॥ [ 365 ]
ततः स भगवान्विष्णुः सर्वमालोक्य विष्ठितः ।
विस्मयं परमं गत्वा पश्यन्नास्ते स्म केशवः ॥
कस्यैष विसृतो नादः कस्य वायं जनः पतन् ।

---

$T_{1, 2, 4}$ $G_{2, 3}$ [ए]वं (for [ए]ष) $G_4$ ध्यात्वा देवैरवस्थित (for $^b$) — (L 328) $T_1$ शिववद् (for दीप°) — (L 331) $Dn_1$ $Ds_2$ $D_6$ प्रेप्सया (for प्रेषय) $Dn_2$ $Ds_2$ पुन (for शुन·) — (L 332) $G_2$ अयं, $G_5$ एवं (for एष) $D_6$ पर. (for अयं) $G_{1-3}$ $M_3$ एष (for ईश) $D_6$ $T_4$ $M_{2, 3}$ शिवः (for ऽच्युत·) — Cal ed om lines $334^b$–$336^a$ $T_2$ om lines 336–340 — (L 336) $T_1$ विवर्धताम्, $M_2$ विमर्द° (for विनर्द°) — (L 338) Dn $Ds_2$ $T_{1, 2}$ $G_{1, 3-5}$ $M_4$ बृंहितं च (for °तानि) $D_5$ $T_4$ $G_2$ $M_2$ बृंहितानामितस्तत· (for $^b$) — (L 340) $M_4$ वने (for निशि) — (L 341) Dn $Ds_2$ $T_{1, 4}$ $G_{1, 3-5}$ शब्दं (for तं तु) Dn $Ds_2$ $G_4$ धिष्ठित, $D_6$ $T_{1, 2, 4}$ $G_{2, 3}$ विष्ठितम् (for विष्ठित). — (L 342) Dn $Ds_2$ $G_{1, 3-5}$ $M_4$ समाधिक्षोभमासाद्य (for $^a$) — (L 343) $G_4$ $M_4$ तत संचिन्तयन्घोर- ($M_4$ °न्क्रोध)म् (for $^a$) $G_4$ $M_4$ एष कृष्णो (for कोऽयमेष) — (L 344) $T_2$ स्तुतिशब्दो, $M_3$ इति युक्तो (for स्तुतियुक्तो) — (L 345) Dn $T_{1, 4}$ $G_{2-5}$ $M_{3, 4}$ अहोऽस्विन् (for आहोस्विन्) — (L. 346) $T_1$ मया (for अयम्). — (L 347) $G_{1, 5}$ श्रुति- (for स्तुति-) — (L 348) $D_6$ $G_2$ $M_2$ सहसा (for मनसा) — (L 350) Dn $Ds_2$ $G_{1, 4, 5}$ $M_4$ समाधावन् (for °यान्ति) — (L 351) $G_{3, 5}$ $M_4$ सगण (for श्व°) — (L 354) $D_6$ $T_{1, 2}$ $G_1$ $M_{1, 3}$ समपद्यन्त; $T_4$ °पश्यन्त (for °दृश्यन्त) — (L 355) Dn $T_2$ $G_{1, 3-5}$ M -विस्वनम्, $T_4$ $G_2$ विस्तरम् (for -विस्व°). — After line 356, $D_6$ $T_4$ $G_2$ ins.

4** यत्रासौ तिष्ठते देव तानि तत्रैव भारत ॥
ततो मृगसहस्राणि समुदीर्णानि भारत ।
[(L 2) $D_6$ मेघ- (for मृग-)]

— (L 357) $D_6$ प्रादुरासुर् (for °सन्). $G_2$ पिशिताननाः; $G_4$ $M_4$ घोरदर्शना· (for विकृतानना) — (L 358) $T_2$ $G_1$ महाराजन् (for हता राजन्) $T_2$ पतितान्मृगान् — (L 359) $M_{1, 4}$ मृगद्विषाम्, Bom Poona eds G(ed) मृगा द्विपाः, (for मृगद्विष) — $D_6$ om lines 360–361. — (L 360) $M_2$ सर्वत (for भारत) — $T_{1, 2}$ $G_{1-4}$ $M_{1-3}$ om line 361 — (L 361) $T_4$ $M_1$ तत्र याता निरन्तरम् (for $^b$) — (L 362) $D_6$ $T_1$ $G_{2, 3}$ अन्तरं (for अन्तरी-). — (L,

को नु मां स्तौति भक्त्या तु भविष्ये प्रीतिमानहम् ॥
कस्य मुक्तिः समायाता प्रीते मयि सुदुर्लभा । [ 370 ]
इति संचिन्त्य भगवानास्ते प्राकृतवद्धरिः ॥

Colophon

वैशंपायन उवाच ।

तेषामनु महाघोरौ पिशाचौ विकृताननौ ।
प्रांशू पिङ्गललोमानौ दीर्घजिह्वौ महाहनू ॥
लम्बकेशौ विरूपाक्षौ हीहीहाहेतिवादिनौ ।
खादन्तौ मांसपिटकं पिबन्तौ शोणितं बहु ॥ [ 375 ]
आन्त्रवेष्टितसर्वाङ्गौ दीर्घौ कृशकृशोदरौ ।
लम्बमानमहाप्रेतौ शूलप्रोतशिरोधरौ ॥
कर्षन्तौ शवयूथानि बाहुभ्यां तत्र तत्र ह ।
हसन्तौ विविधं हासं स्वजातिसदृशं नृप ॥
वदन्तौ बहुरूपाणि वचांसि प्राकृतानि च । [ 380 ]
कम्पयन्तौ महावृक्षावूरुपादप्रघट्टनैः ॥
सृक्किणी लेलिहन्तौ च दन्तान्कटकटायिनौ ।
अस्थिस्नायुसमाकीर्णौ धमनीरज्जुसंततौ ॥
वदन्तौ कृष्ण कृष्णेति माधवेति च संततम् ॥
कदा नु द्रक्ष्यते विष्णुः स इदानीं क्व तिष्ठति ॥ [ 385 ]
स्वामी नः कुत्र वसति कुतो द्रष्टुं यतामहे ।
अत्र वा कुत्र देवेशः कुतो नु स्थास्यते हरिः ॥
कुतः पद्मपलाशाक्षः साक्षादिन्द्रानुजो हरिः ।
यमाहुः पुण्डरीकाक्षं ब्रह्म ब्रह्मविदो जनाः ।
तमजं पुरुषं विष्णुं द्रष्टुमभ्युद्यता वयम् ॥ [ 390 ]
अन्तकाले जगन्नाथं प्रविवेश जगत्त्रयम् ।
तमजं विश्वकर्तारं कुतो द्रक्ष्याम सांप्रतम् ॥
यस्य विस्तार एवैष लोकः प्राणिनिवासित ।
तं देवं द्रष्टुमीशानं यतामः सांप्रतं हरिम् ॥
दशा घोरतमा लोके विद्विष्टा सर्वजन्तुभिः । [ 395 ]
पैशाचीयं समुत्पन्ना कथं नौ प्राविशद्बलात् ।
नरमांसास्थिकलिला सर्वभीतिप्रदायिनी ॥
अहो नौ दुष्कृतं कर्म प्राक्तने जन्मसचये ।
अत्रैव महती प्रीतिर्वर्तते सर्वदा तदा ॥
यावन्नो दुष्कृतं कर्म तावत्स्थास्यति तादृशी । [ 400 ]
दशा सा सर्वविद्विष्टा प्राणिपीडनकारिणी ॥
सर्वथा दुष्कृतं कर्म बहुभिर्जन्मसंचयैः ।

---

363 ) $D_6$ $T_3$ $G_2$ $M_{1-3}$ पिशाच्यो विकृता॰ काश्चित् , $T_2$ $G_1$ $M_4$ ॰च्यो विविधाकाराः ( for ª ) — ( L 368 ) Dn $T_2$ $G_{1\ 3-5}$ M विस्तृतो , $D_6$ $T_4$ विस्वरो , $T_1$ विश्रुतो , $G_2$ प्रस्तुतो ( for विसृतो ) Dn $Ds_2$ $D_6$ $T_4$ $G_{1\ 2}$ $M_{3\ 4}$ ऽपतत् ( for पतन् ) — ( L 370 ) $G_3$ भक्ति ( for मुक्ति॰ ) $T_{1\ 2}$ प्रीतिर् ( for प्रीते ). — ( L 371 ) $T_4$ $M_{1\ 3}$ मनसा ( for भगवान् )

Colophon — *Mention of the Epic* $Ds_2$. — *Mention of Khila* . Dn $Ds_2$ $D_6$ $T_{1\ 2\ 4}$ $G_{2\ 4}$ M — *Sub-parvan* . Dn $Ds_2$ $D_6$ $T_4$ कैलासयात्रा — *Adhy no* Dn 263, $Ds_2$ 262, $T_1$ $G_3$ 189, $T_2$ $G_1$ 191, $T_4$ $G_2$ 185, $G_2$ 188, $M_{1\ 4}$ 154, $M_{2\ 3}$ 190

$T_2$ $G_1$ om lines 373-385 — ( L 373 ) $D_6$ महातनू ( for ॰हनू ) — ( L 375 ) Dn $Ds_2$ $D_6$ $T_4$ $G_{2\ 4\ 5}$ $M_4$ रुधिरं ( for शोणितं ) — ( L 376 ) $T_1$ $G_4$ $M_4$ अन्त्र- ( for आन्त्र- ). Dn $Ds_2$ $T_4$ $G_5$ $M_{1-3}$ -कृतोदरौ , $D_6$ $G_{2\ 3}$ -तरौ॰ , $M_2$ -तनू॰ ( for -कृशो॰ ) $T_1$ दीर्घौ क्रूरतरोदरौ ( for ᵇ ). — ( L 377 ) Dn $Ds_2$ $G_2$ -महाप्रान्त ( for -महाप्रेतौ ) $G_5$ लम्बमानौ महाप्रोतौ ( for ª ). — ( L 378 ) $M_4$ -भूतानि ( for -यूथानि ). — ( L 380 ) $M_{1,3}$ वचांसि ( for वदन्तौ ) $M_{1\ 3}$ वदन्तौ ( for वचांसि ) $D_6$ $M_{1-3}$ प्राकृतावित्र ( for ॰तानि च ) — ( L 382 ) $G_4$ लेलिहानौ ( for ॰हन्तौ ) $M_4$ दन्तान्कटकटापयन् ( for ᵇ ) — ( L 383 ) $G_2$ दीर्घजिह्वौ महाहनू ( for ᵇ ). — ( L 384 ) $M_4$ समन्तत ( for च सततम् ) — $G_4$ om. lines 386–389 — ( L 386 ) $D_6$ $T_4$ $M_2$ स्वामिनौ , $M_3$ स्वामिनो ( for स्वामी न ) $D_6$ $M_2$ यतावहे ( for ॰महे ) — ( L 387 ) $T_4$ देवेश , $M_3$ देशे वा ( for देवेश॰ ) $D_6$ ऽयं ( for नु ) $T_2$ $G_1$ स्थाप्यते ( for स्थास्यते ) — ( L 390 ) $G_5$ अभ्युदिता , $M_4$ ॰त्थिता ( for ॰द्यता ) — ( L 392 ) $D_6$ $M_4$ द्रक्ष्यामि ( for ॰म ) — ( L 393 ) $Dn_1$ $D_6$ $T_{1\ 2\ 4}$ $G_{1,\ 3-5}$ $M_4$ -निवासिनः , $G_2$ -निदर्शन ; $M_3$ -निवासन. ( for ॰सित ) — ( L 394 ) Dn $Ds_2$ transp देव and द्रष्टुम्. $D_6$ यत्ता स्म॰ , $G_2$ $M_{2\ 3}$ यत्ता. स्म ( for यताम ) — ( L 395 ) $T_4$ बिन्दुभि. ( for -जन्तुभि ) — ( L 396 ) $M_3$ पिशाची ( for पै॰ ) — ( L 397 ) Dn $Ds_2$ $T_{1\ 2}$ G $M_4$ -कलुषा ( for -कलिला ) — ( L 398 ) $T_2$ अहो नु , $G_2$ आगतौ ( for अहो नौ ) Dn $Ds_2$ $T_4$ $M_4$ कर्म ( for जन्म ) — ( L 399 ) $T_2$ $G_1$ वर्तते ( for महती ) — ( L 400 ) Dn $Ds_2$ $D_6$ $T_{1\ 2\ 4}$ $G_{1\ 3-5}$ $M_{2\ 4}$ यावन्नौ ; $G_2$ यावत्तु ( for यावन्नो ) $G_2$ तादृशम् ( for ॰शी ). — $M_1$ om lines 402–403. — ( L 402 )

तथा हि तत्फलं घोरमद्यापि न निवर्तते ॥
यत्ताः स्मः प्राणिनो हन्तुं श्वगणैः सह सांप्रतम् ।
तथा हि प्राणिनो लोके बाल्यमादौ समास्थिताः । [405]
अज्ञानावृतचित्ताश्च कृत्याकृत्यं न जानते ॥
तथा यौवनिनो मत्ता विषयैर्बहुलीकृताः ।
यतन्ते श्रेयसे नैव ततो विपयसस्थिताः ।
विषयाकृष्टचित्ता हि मनुष्या न विजानते ॥
तथा च वृद्धभावे तु व्याधिभिर्बहुभिर्वृताः । [410]
जरादिभिर्महाघोरैर्नानादुःखविधायिभिः ।
यतन्ते न हि वै श्रेयो विनष्टेन्द्रियगोचराः ॥
ततो मृता गर्भवासे वसन्ति सततं नराः ।
विण्मूत्रकलिले घोरे दुःखैर्बहुभिराचिता ॥
च्यवन्ते तु ततो घोराद्गर्भात्संसारमण्डले । [415]
परस्परं विहिंसन्तः कुर्वन्तः कर्मसंचयम् ॥
महत्येवं सदा घोरे संसारे दुःखसंकुले ।
पापानि बहुरूपाणि कुर्वतेऽज्ञानतः सदा ॥
संसारस्यैष महिमा विसृतः सर्वजन्तुषु ।
अच्छेद्यः शस्त्रसंपातैरुपायैर्बहुभिः सदा । [420]
एतस्मान्न निवर्तन्ते मर्त्याः प्राकृतबुद्धयः ॥
इमं हत्वा मनुष्येन्द्रमिदमस्माद्धराम्यहम् ।
चोरयित्वा धनमिदं हरिष्याम्यद्य याम्यहम् ॥
निर्भर्त्स्यैनमिदं शान्तं हरिष्यामि धनं बली ।
इत्यादि व्याकुला मूर्खा यतन्ते प्राणिपीडनम् । [425]
अस्यैव दुःखमूलस्य ससारस्य सदा हरिः ॥
भेषजं सर्वथा देवः शङ्खचक्रगदाधरः ।
आदिदेवः पुराणात्मा आत्मा ब्रह्मविदां सदा ।
तं वयं सर्वयत्नेन द्रक्ष्याम. सर्वथा हरिम् ।
इत्थं पिशाचौ भाषन्तौ प्रादुरास्तां हरेः पुरः ॥ [430]

Colophon

वैशंपायन उवाच ।
ततः स भगवान्विष्णुः पिशाचौ मांसभक्षकौ ।
ददर्शाथ महाघोरौ दीपिकास्थकरौ हरिः ॥
विलोकयाचक्रतुस्तौ पिशाचौ देवकीसुतम् ।
स्थितं सुखासने विष्णुं दृष्ट्वा लोकेश्वरं हरिम् ॥
तौ च गत्वा समुद्देशं पिशाचौ केशवस्य ह । [435]
ततस्तावूचतुर्विष्णुमन्तरीकृत्य केशवम् ॥

---

T1 -संचय (for °यै) — G1 om (hapl) from तत्फल (in line 403) up to तथा हि (in line 405) G3 om lines 404-406 — (L 404) D6 यत्रास्मि (for यत्ता स्म) — (L 405) D6 बाध्यमाना, G2 पाल्यमानाः (for बाल्यमादौ) — (L 406) Dn2 अज्ञानाचित्तवृत्ताश्च (sic) (for °) G2 च कुर्वते, M1 3 न कुर्वते (for न जानते) — (L 407) M4 यौवनिके (for °नो) T2 4 M1-3 मर्त्या, G1 भ्रान्ता (for मत्ता) D6 बहुभि· (for बहुली) — (L 409) T4 G4 विषयाविष्टचित्ता हि (for °) D6 [अ]पि (for वि-). — (L. 411) D6 -विधायकैः (for °यिभिः) — D6 om line 413 — (L 414) T2 सकले, G3 -सलिले, M4 -कलुषे (for -कलिले) T1 G3 4 M4 आवृता (for आचिता.) — (L. 415) D6 मर्त्या, M1 गर्भ- (for गर्भात्) G2 गर्भसंसारमण्डलात् (for $^b$) — D6 om lines 416-417 — (L 416) G2 विनिघ्नन्त. (for विहिंसन्त·) M4 कुर्वन्त धर्मसंचयम् (for $^b$). — (L 417) M4 मज्जति (for महति) — (L 418) D6 G2 कुर्वन्तो, G1 कुर्वन्ते (for कुर्वते) M4 ऽज्ञानिन (for °नत.) — (L 419) Dn Ds2 T2, 4 G1 3-5 विस्तृत, D6 विहित ; G2 विष्ठित. (for विसृतः) — (L 420) D6 T2 G1 अभेद्य (for अच्छेद्य) — (L 423) D6 G2 अहं (for इदं) D6 G2 M1-3 ददामि, T2 4 G1 4 5 M4 [आ]ददामि (for [अ]द्य यामि) — (L 424) D6 निर्मथ्यैवम्, T1 निर्मथ्यैनम् (for निर्भर्त्स्यैनम्) G2 निर्मथ्यैनामिमा शान्ता (for °) T2 अमु, M2 3 इदं (for इमं) M1 पद्र (for धन) — (L 425) D6 -पीडने (for °नम्) — (L 426) D6 T4 अद्यैव, T1 M2 अस्यैवं (for °व) M1-3 -रूपस्य (for -मूलस्य) — T2 om (hapl) lines 427-429 — (L 427) T1 भेषजं सर्वदेवेश (for °) — (L 428) M4 ब्रह्मा (for आत्मा) M4 वर (for सदा) — (L 429) Dn T1 G1 3 M2 ते (for तं) T4 द्रक्ष्यामि (for °म·) — (L 430) M4 पुरो हरेः (by transp)

COLOPHON — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 D6 T1 2 G M — *Sub parvan* Dn Ds2 G4 M2 3 कैलासयात्रा, — *Adhy name* M2 3 पिशाचदर्शनम् — *Adhy no* Dn 264, Ds2 263, T1 G3 180; T2 G1 192, G2 186, G4 189, G5 M4 191, M1-3 155

(L 431) T4 -भक्षणौ (for °कौ) — (L 432) M1 ददर्श तौ (for °र्शाथ) Dn Ds2 T1 2 G1, 3-5 M4 दीपिकाधारिणौ

को भवान्कस्य वा मर्त्य कुतश्चागम्यते त्वया ।
किमर्थमिह संप्राप्तो वने घोरमृगाकुले ॥
निर्मनुष्ये द्वीपिवृते पिशाचगणसेविते ।
श्वापदैः सेव्यमाने च विपिने व्याघ्रसकुले ॥ [ 440 ]
स कुमारोऽनवद्याङ्गः साक्षाद्विष्णुरिवापरः ।
पद्मपत्रेक्षणः श्यामः पद्माभः श्रीपतिः स्वयम् ॥
अस्मत्प्रीतिकरः साक्षात्प्राप्तो विष्णुरिवापरः ।
देवो वा यदि वा यक्षो गन्धर्वः किनरोऽपि वा ॥
इन्द्रो वा धनदो वापि यमोऽथ वरुणोऽपि वा । [ 445 ]
एकाकी विपिने घोरे ध्यानार्पितमना इव ॥
ब्रूहि मर्त्य यथातत्त्वं ज्ञातुमिच्छामि मानद ।
एवं पृष्टः पिशाचाभ्यामाह विष्णुरुरुक्रमः ॥
क्षत्रियोऽस्मीति मां प्राहुर्मनुष्याः प्रकृतिस्थिताः ।
यदुवंशे समुत्पन्नः क्षात्रं वृत्तमनुष्ठित ॥ [ 450 ]
लोकानामथ पातास्मि शास्ता दुष्टस्य सर्वदा ।
कैलासं गन्तुकामोऽस्मि द्रष्टुं देवमुमापतिम् ॥
इत्येवं मम वृत्तान्तः कथ्यतां कौ युवामिति ।
युवामिह समायातौ किमर्थं ब्राह्मणाश्रमम् ॥
एषा हि बदरी पुण्या नानाविप्रनिषेविता । [ 455 ]
बदरीयं समाख्याता न क्षुद्रैराश्रिता क्वचित् ॥
तपस्विभिस्तपोयुक्तैर्जुष्टा सिद्धनिषेविता ।
श्वगणा नात्र दृश्यन्ते पिशाचा मांसभोजनाः ॥
न हन्तव्या मृगाश्चात्र मृगया नात्र वर्तते ।
न तु क्षुद्रैः प्रवेष्टव्या न कृतघ्नैर्न नास्तिकैः ॥ [ 460 ]
अहमस्य तु देशस्य रक्षिता नात्र संशयः ।
व्यतिक्रमो यदि भवेत्तस्य शास्तास्मि यत्नतः ॥
कौ भवन्तौ क्व नु युवां कस्येयं महती चमूः ।
नातः परं प्रवेष्टव्यमृषयस्तत्र संस्थिताः ॥
विघ्नस्तत्र प्रवर्तेत तपःसु च तपस्विनाम् । [ 465 ]
इहैव स्थीयतां तावद्वक्तव्यं च ततः सुखम् ॥
अन्यथाहं निषेद्धा स्यां बलाद्बाह्वोस्तथैव च ।
एवं पृष्टौ पिशाचौ तु वक्तुमेवं प्रचक्रतुः ॥
तयोरेको महाघोरः पिशाचो दीर्घबाहुकः ।
उवाच वचनं तत्र यथा हृदि समर्पितम् । [ 470 ]
श्रूयतामभिधास्यामि समाहितमना भव ॥
नमस्कृत्य जगन्नाथं हरिं कृष्णं जगत्पतिम् ।
आदिदेवमजं विष्णुं वरेण्यमनघं शुचिम् ।
वक्ष्यामि सकलं यद्वृत्तथा शृणु यदीच्छसि ॥
घण्टाकर्णोऽस्मि नाम्नाहं पिशाचो घोरदर्शनः । [ 475 ]
मांसादो विकृतो घोरः साक्षान्मृत्युरिवापरः ॥

---

हरिः (for $^{b}$) — (L 434) $Dn_2$ $T_{1\,2}$ $G_{1\,3-5}$ $M_4$ दृष्ट्वा लोकेश्वरेश्वरम् (for $^{b}$) — (L 435) $M_{1\,3}$ तमुद्देशं (for समु°) — (L 436) $D_6$ अन्तरीकृतकेशवौ (for $^{b}$) — (L 438) Dn $Ds_2$ $T_1$ $G_{1,3}$ $M_{1-3}$ घोरे (for घोर-). $D_6$ वने घोरे महाकुले (for $^{b}$) — (L 439) $D_6$ द्वीपिवने (for °वृत्ते) — $M_4$ om lines 440-444. — (L 442) $T_1$ पद्मनाभ· श्रिय· पतिः, $G_2$ °नाभो हरि स्वयम् (for $^{b}$). — $G_1$ om line 443 — (L 444) $G_3$ रक्षो (for यक्षो) — (L 446) $M_4$ विजने (for विपिने) — (L 447) $D_6$ $T_{2\,4}$ $G_{1-3}$ $M_{1-3}$ तत्त्वं, $T_1$ त्वं च (for मर्त्य) $D_6$ $T_{1\,2}$ $G_1$ $M_{1-3}$ यथा मर्त्यं, $T_4$ यथा मर्त्यं (for यथातत्त्वं) Dn $Ds_2$ $G_2$ $M_{1\,3}$ इच्छाम, $D_6$ $T_2$ $G_{1\,4}$ $M_{2\,4}$ °व (for °मि). $G_3$ मानव (for °द) — (L 448) $T_4$ कुरूत्तम (for उरुक्रम·) $D_6$ $T_2$ $G_{1-3}$ आह कृष्ण कुरूत्तम ($D_6$ °द्वह) (for $^{b}$) — (L 449) Dn $Ds_2$ $T_4$ $G_4$ $M_4$ आहुर्; $D_6$ $T_{1\,2}$ $G_{1-3}$ M° ब्रूयुर् (for प्राहुर्) $T_1$ प्राकृता (for प्रकृति-) — (L 450) $G_5$ क्षात्रवृत्तिम् (for क्षात्रं वृत्तम्) $G_2$ $M_3$ अनुष्ठितम् — (L 453) $M_{1-3}$ [ए]ष (for [ए]व) — (L 455) Dn $Ds_2$ $D_6$ $T_{1\,2\,4}$ $G_{1\,3-5}$ M महती (for बदरी) — $Ds_2$ om lines 456-457 — (L 456) $M_1$ [इ]ति (for [इ]य) — (L 457) $G_4$ $M_4$ विप्र- (for सिद्ध-) — (L 458) $D_6$ $T_1$ $G_{2\,3}$ $M_{1-3}$ वर्तन्ते (for दृश्यन्ते) — (L 459) $G_2$ न गन्तव्या मृगैरेषा (for $^{a}$) — (L 460) $T_2$ कृतघ्नै (for तु क्षुद्रै) — (L 461) $D_6$ $G_2$ गतभावैर्, $T_2$ न तु क्षुद्रैर् (for न कृतघ्नैर्) — (L 461) $Dn_2$ देवस्य (for देशस्य) — (L 464) $G_2$ प्रवेष्टव्या (for °व्यम्) — (L 465) $T_2$ तपसश्च, $G_2$ तपस्विषु (for तप सु च) $D_6$ $M_{1-3}$ तपस्विषु (for °नाम्) — (L 467) $M_2$ [अ]स्मि (for स्यां) $T_{1\,4}$ $M_4$ वाक्यैस् (for बाह्वोस्) — Before line 468, Dn $Ds_2$ $G_4$ M ins वैशंपायन उवाच — (L 468) $T_2$ $G_{1\,3}$ उक्तौ (for पृष्टौ) $G_4$ $M_{1-3}$ प्रचक्रमु (for °क्रतुः) — Before line 471, Dn $Ds_2$ $T_{1\,2\,4}$ $G_{1\,3-5}$ M ins पिशाच उवाच — (L. 472) $D_6$ $T_4$ च तं विष्णुं

धनदस्यानुगन्ताहं साक्षाद्रुद्रसखस्य च ।
ममायमनुजः साक्षादन्तकस्यान्तको ह्ययम् ॥
मृगयायां समायाता विष्णोः पूजार्थमित्युत ।
ममेयं वर्तते सेना श्वगणोऽपि ममैव तु ॥ [ 480 ]
आगतोऽयं महाशैलात्कैलासाद्भूतसेवितात् ।
अहं पिशाचवेषेण संविष्टः पापकर्मकृत् ॥
सततं दूषयन्विष्णुं घण्टामाबध्य कर्णयोः ।
मम न प्रविशेन्नाम विष्णोरिति विचिन्तयन् ॥
अहं कैलासनिलयमासाद्य वृषभध्वजम् । [ 485 ]
आराध्य तं महादेवमस्तुवं सततं शिवम् ॥
ततः प्रसन्नो मामाह वृणीष्वेति वरं हरः ।
ततो मुक्तिर्मया तत्र प्रार्थिता देवसंनिधौ ॥
मुक्तिं प्रार्थयमानं मां पुनराह त्रिलोचनः ।
मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः ॥ [ 490 ]
तस्माद्गत्वा च बदरीं तत्राराध्य जनार्दनम् ।
मुक्तिं प्राप्नुहि गोविन्दान्नरनारायणाश्रमे ॥
इत्युक्तो देवदेवेन शूलिना ज्ञातवानहम् ।
तमेव परमं मत्वा गोविन्दं गरुडध्वजम् ।
तस्मात्प्रार्थयमानः सन्मुक्तिदेशमिमं गतः ॥ [ 495 ]
अन्यच्च शृणु मे कार्यं यदि कौतूहलं तव ।
पुरी द्वारवती नाम पश्चिमस्योदधेस्तटे ॥
यदुवृष्णिसमाकीर्णा सागरोर्मिसमाकुला ।
अध्युवास हरिर्विष्णुस्तां पुरीं पुरुषोत्तमः ॥
द्रष्टुं लोकहितार्थाय वसन्तं द्वारकापुरे । [ 500 ]
निर्गताः सांप्रतं मर्त्ये वयमेतैः सहानुगैः ।
विष्णुः सर्वेश्वरः साक्षाद्द्रष्टव्योऽस्माभिरद्य हि ॥
लोकानां प्रभवः पाता कर्ता हर्ता जगत्पतिः ।
आदेरादिः समस्तस्य प्रभवं कारणं हरिः ॥
कर्ता समस्तस्य हरिः पुरातनः [ 505 ]
प्रभुः प्रभूणामपि यः सदात्मकः ।
तमादिदेवं वरदं वरेण्यं
द्रष्टुं हरिं संप्रति संयताः स्मः ॥
यस्य प्रसादाज्जगदेवमासी-
त्सप्राणिगन्धर्वमहोरगौघम् । [ 510 ]
देवं जगद्योनिमजं जनार्दनं
द्रष्टुं हरिं संप्रति संयताः स्मः ॥
यस्योदराद्विश्वमिदं प्रभूतं
लयं च यस्मिन्समुपैति कल्पे ।
यस्यैव साक्षाद्वशवर्ति विश्वं [ 515 ]
द्रक्ष्याम देवं पुरुषोत्तमं हरिम् ॥

( for जगन्नाथं ) M4 विष्णुं ( for कृष्णं ) — ( L. 473 ) G2 om lines 473[b]–477[a] G5 शुभम् ( for शुचिम् ) — ( L 474 ) D6 T4 यत्तत् ( for यद्वत् ) — ( L 478 ) Dn Ds2 T1 2 4 G1 3–5 [अ]हम् ( for [अ]यम् ) D6 [अ]न्तकाह्वय ( for °को ह्ययम् ) — ( L 479 ) Dn Ds2 T1 4 G4 5 M4 मृगयेयं सुमहती ( for [a] ) G1 विष्णु- ( for विष्णो ) — ( L 481 ) G1 कालसंभूतसेवितात् ( for [b] ) — D6 T4 G2 M1–3 om lines 482–495 — ( L 484 ) T2 G1 सं- ( for न ) — ( L 492 ) T1 गोविन्दं ( for °न्दान् ) T1 नरनारायणाश्रमम् ( for [b] ) — ( L 495 ) M4 इहागत ( for इमं गत· ) — ( L 498 ) G2 3 समाकीर्णां ( for °र्णा ) G2 M4 समाकुलाम् ( for °ला ) — ( L 499 ) Dn Ds2 G4 3 M4 अध्यास्ते स ( for अध्युवास ) — ( L 501 ) Ds2 D6 T1 2 G1 3–5 M4 निर्गत: ( for °ता· ) T2 G1 4 M4 मर्त्यं ( for मर्त्ये ). G2 निर्गताः संप्रवर्तन्ते ( for [a] ) D6 T4 G2 समाहितैः ( for सहानुगै ). —(L. 502 ) G2 M4 अत्र ( for अद्य ). — ( L, 503 ) D6 कर्ता ( for पाता ) G3 D6 भर्ता ( for कर्ता ) — ( L 504 ) Bom Poona eds G( ed ) आदि स हि (for आदेरादि ) — ( L 506 ) Dn1 सहात्मक· , G4 सदात्मकम् ( for °त्मक ) — ( L 508 ) M4 दृष्ट्वा ( for द्रष्टुं ) M1 3 वयं ( for हरिं ) T1 G4 संयतात्मा ( for °ता स्म ) — ( L 509 ) M1 3 प्रभावाज् ( for प्रसादाज् ) — ( L 510 ) M4 -महोरगोरगम् ( for °गौघम् ) — ( L 511 ) D6 G2 अहं ( for अजं ) — ( L 512 ) D6 संयतोऽस्मि , G4 °तात्मा ( for °ता स्म ) M1 3 द्रष्टुं तमीश वयमुद्यता स्म· — G2 om lines 513–515 — ( L 513 ) T2 यस्योदरं ( for °दराद् ) M4 प्रसूतं ( for प्रभूतं ) — ( L 514 ) G1 लयाय ( for लयं च ) M4 तस्मिन् ( for य° ) M2 काले ( for कल्पे ). — ( L 516 ) D6 T2 G1 द्रक्ष्यामि ( for °म ); D6 T4 विश्व ( for देवं ) — G2 om lines 517–519 — ( L 517 ) D6 [अ]पि च ( for च यो ) — ( L 518 ) G3 भर्ता ( for हर्ता ). — ( L 519 ) D6 द्रक्ष्याव , T2 G3 °मि ( for °म ) T2 G1 2 पुरुषेश्वरं ( for भुवने° ). — ( L 520 ) M2. 3 ईड्यम् ( for

स्रष्टा च योऽसौ सकलस्य देवः
पाता च हर्ता च हरिः स एव ।
द्रक्ष्याम नित्यं भुवनेश्वरं हरि
पुराणमाद्यं प्रभविष्णुमव्ययम् ॥ [ 520 ]
अजस्य कर्ता भुवनस्य गोप्ता
भुवश्च कर्ता हरिरेक एव ।
तं योगिनं योगविशुद्धबुद्धि
लभेम केनेति मतिः समाकुला ॥
निगीर्य विश्वं सकलं जगत्पतिः [ 525 ]
शेते शिशुत्वं समवाप्य साक्षात् ।
वटस्य पत्रे जगतां निवासः
पादौ च विक्षिप्य करौ च धून्वन् ॥
यस्योदरे देवमुनिः पुरातनो
ददर्श लोकानखिलान्स्वमायया । [ 530 ]
प्रविश्य विश्वं सकलं यथाव-
द्बहिर्यथाभूतमभूदिदं महत् ॥
निगीर्य विश्वं जगदादिकाले
शेते महाहौ जलधेर्जलौघे ।
देव्या श्रिया चामरलोलहस्तया [ 535 ]
निषेव्यमाणः पुरुषोत्तमस्तदा ॥

नाभेश्च यस्याविरभूत्सपत्रं
पद्मं महत्काञ्चनसप्रभं प्रभो ।
जन्मास्पदं लोकगुरोर्यदासी-
द्विस्तारि पद्मं जगदादिसृष्टौ ॥ [ 540 ]
दधार यो भूतपतिर्महान्मही
दंष्ट्राग्रसंस्थापितरूढमूलाम् ।
नदन्महामेघ इवादिकाले
कुर्वन्वराहो मुनिगीतकीर्तिः ॥
हरिः पुराणः पुरुषोत्तमः प्रभुः [ 545 ]
कर्ता समस्तस्य समस्तसाक्षी ।
यज्ञात्मको यज्ञपतिर्जगत्पति-
र्द्रष्टुं तमीशं वयमुद्यताः स्मः ॥
केचिद्बहुत्वेन वदन्ति देव-
मेकात्मना केचिदिमं पुरातनाः । [ 550 ]
वेदान्तसंस्थापितसत्त्वयुक्तं
द्रष्टुं तमीशं वयमुद्यताः स्मः ॥
अनेकमेकं बहुधा वदन्ति
श्रुतिस्मृतिन्यायनिविष्टचित्ताः ।
आहुर्यमात्मानमजं पुराविदो [ 555 ]
द्रष्टुं तमीशं वयमुद्यताः स्मः ॥

---

अव्ययम् ).— After line 520, G2 ins :

5** द्रष्टुं हरिं संप्रति संयता स्म ।

—( L 522 ) भवस्य ( for भुवश्च ) —( L 523 ) T4 G1, 4 5 योगिनो ( for °नं ) — M4 -सत्त्वं ( for -बुद्धिं ). —( L. 524 ) Dn Ds2 D6 T4 G5 M4 तेनैव ; G2 तेनैष ( for केनेति ) T1 2 G1 3, 4 transp मतिः and समाकुला —( L. 525 ) D6 उदीर्य , M2 उद्गीर्य ( for निगीर्य ) —( L 527 ) M3 निवासं ( for °स ). —( L 528 ) M2 वि- ( for च ) Dn Ds2 D6 T2 4 G1 2 विधुन्वन् ( for च धू° ). —( L. 530 ) T2 G1, 3 M1 निखिलान् ( for आखि° ). Dn2 D6 G2 4 M4 स ( for स्व- ) —( L 533 ) D6 निस्तीर्य ; M1–3 उद्गीर्य ( for निगीर्य ) —( L 534 ) Dn2 T1 2 4 G1–4 M4 महात्मा ( for °हौ ) G2 जलोघै ( for °घे ). —( L. 535 ) M3 -हस्तलोलया ( for -लोलहस्तया ) —( L 537 ) D6 G3 सपद्मं ; M2 सुपत्रं ( for सपत्रं ) —( L. 538 ) Dn T1 4 G1, 4, 5 M1, 3, 4 प्रभोः ; D6 विभो ( for प्रभो ). —( L 540 ) G2 M4 विस्तार्य ( for °रि ). —( L 541 ) Dn1 Ds2 T1 G3 M4 महामहीं ; T2 G1 4 महात्मा महीं ( for महान्महीं ). —( L 542 ) Ds2 -गूढमूलाम् ; G3 -मूलरूढां ( for -रूढमूलाम् ) —( L 543 ) D6 M2 3 नादं ( for नदन् ) D6 T2 G3 पदादि- ( for इवादि- ) —( L 544 ) Dn Ds2 T2, 4 G1 2 4, 5 M4 -मूर्ति ( for -कीर्तिः ) —( L 547 ) D6 पुराण ( for जगत्पतिर् ) —( L 548 ) G1 उद्यतात्मा ( for °ताः स्म ). — T2 G1 3, 4 ( hapl ) om lines 549–556. D6 om ( hapl ) lines 549–552. —( L 549 ) G2 बहुत्वेऽपि ( for °त्वेन ) —( L 550 ) T4 M1 अमुं ( for इमं ) Dn Ds2 T1 G5 M4 पुरातनम् ; Bom Poona Cal. eds G(ed) पुराणम् ( for पुरातना· ) —( L 551 ) T1 -सत्ययुक्तं , M1–3 -सत्त्वयुक्ता ( for °युक्त ) G2 यं सर्वगं देवमयं पुरातनं . —( L. 552 ) G2 द्रष्टुं हरिं संप्रति संयताः स्म —( L 553 ) T1, 4 G5 एके ( for एकं ). M1–3 वदन्तः ( for °न्ति ) —( L. 554 ) T1 -विशिष्ट- ( for -निविष्ट- ). —( L. 557 ) G3 सं- ( for यं ) —( L 558 )

यं प्राहुरीड्यं वरदं वरेण्य-
मेकान्ततत्त्वं मुनय. पुरातनाः ।
यं सर्वगं देवमज जनार्दनं
द्रष्टुं हरि संप्रति संयताः स्मः ॥ [ 560 ]
यस्मिन्सर्वमिदं प्रोतमादिकाले जगत्पतौ ।
तं द्रष्टुमद्य संवृत्ताः किं नु वक्ष्याम सांप्रतम् ॥
गच्छामो वयमन्यत्र गच्छ त्वं काममन्यतः ।
नियमोऽप्यस्ति नो मर्त्य यथेष्टं गच्छ सांप्रतम् ।
रात्रिमध्यमनुप्राप्तं नात्र कार्या विचारणा ॥ [ 565 ]
इत्युक्त्वा घोररूपोऽसौ पिशाचो विकृताननः ।
तस्मिन्नेव समे देशे पीत्वा च रुधिरं बहु ॥
भक्षयित्वा यथाकामं मांसराशिं विचक्षणः ।
अपः संस्पृश्य तत्रैव पार्श्वे संस्थाप्य साधनम् ॥
आन्त्रपाशं महाघोरं संस्थाप्य विपुलं महत् । [ 570 ]
आसनं कुशसंयुक्तं कृत्वा चाभ्युक्ष्य वारिणा ॥
उत्सार्य श्वगणान्सर्वान्यत्नेन महता तदा ।
सुखासनं समास्थाय समाधौ यतते श्वपः ॥
एकचित्तस्तदा भूत्वा नमस्कृत्य च केशवम् ।
इमं मन्त्रं पठन्घोरः पिशाचो भक्तवत्सलम् ॥ [ 575 ]
नमो भगवते तस्मै वासुदेवाय चक्रिणे ।
नमस्ते गदिने तुभ्यं वासुदेवाय धीमते ॥
ॐ नमो नारायणाय विष्णवे प्रभविष्णवे ।
मम भूयान्मनःशुद्धिः कीर्तनात्तव केशव ॥
जन्मेदमीदृशं घोरं मा भून्मम दुरासदम् । [ 580 ]
देवभूतो भविष्यामि स्मरणात्तव गोपते ॥
तव चक्रप्रहारेण कायो नश्यतु मामकः ।
मम भूयो भवो मा भूदेषा मे प्रार्थना तव ॥
अर्थिनां कल्पवृक्षोऽसि दाता सर्वस्य सर्वदा ।
यत्र यत्र भवेज्जन्म तत्र तत्र भवान्हृदि ॥ [ 585 ]
वर्ततां मम देवेश प्रार्थनैषा ममापरा ।
नमस्तुभ्यं नमस्तुभ्यं भवत्वेवं सदा मम ॥
निर्विघ्ना प्रार्थना देव नमस्तेऽस्तु सदा मम ॥
यदा मे मरणं भूयात्तदा मा भूत्स्मृतिभ्रमः ॥
दिने दिने क्षणं चित्तं त्वयि संस्थं भवत्विति । [ 590 ]
एवं प्रेरय मां देव मा भूत्ते चित्तमीदृशम् ॥
नृशंसोऽयं पिशाचोऽयं दया कस्मिन्भवेदिति ।
एवं चिन्तय मां देव भृत्यो मह्यमिति प्रभो ॥
परपीडा न मत्तोऽस्तु नमस्ते भगवन्प्रभो ।
इन्द्रियाणीन्द्रियार्थेषु मा भूवन्सांप्रतं हि मे ॥ [ 595 ]
अन्तकाले ममाप्येवं प्रसादात्तव केशव ।

---

$T_1$ $G_4$ $M_1$ एकात्मतत्त्वं, $M_2$ °त्मकत्वं ( for °न्ततत्त्वं ). $G_2$ पुराविद. ( for °तनाः ) —( L. 559 ) $M_1$ तं ( for य ). — ( L 560 ) $M_{1-3}$ वयं ( for हरिं ) — ( L 561 ) Dn $Ds_2$ $D_6$ $T_{1\ 2\ 4}$ $G_{2-5}$ $M_{2\ 4}$ विश्वम् ( for सर्वम् ) $T_4$ जगत्पिता ( for °त्पतौ ) —( L 562 ) $T_4$ अभि- ( for अद्य ). $M_4$ संयुक्ता ( for संवृत्ता ) $D_6$ $T_{1\ 2}$ $G_{2-4}$ वक्ष्यामि ( for °म ) — ( L 567 ) $M_2$ समुद्देशे ( for समे देशे ) — ( L 568 ) $G_2$ मांसाशी स ( for मांसराशिं ) $M_3$ मांसानि सुबहूनि च ( for $^b$ ) — ( L 570 ) $G_1$ अन्त्रपाशं, $G_2$ आर्द्रपाशं ( for आन्त्रपाशं ) — ( L. 573 ) $Ds_2$ च य. ( for श्वप· ) — ( L 574 ) $T_2$ एकधीस्तत्तथा भूत्वा ( for $^a$ ) $G_3$ नमश्चक्रे ( for °स्कृत्य ) — ( L 575 ) $T_1$ महाघोरं, $M_3$ पठन्घोरं ( for °न्घोरः ) $M_{1\ 3\ 4}$ -वत्सलः. — ( L. 578 ) $T_2$ ब्रह्मविष्णवे ( for प्रभ° ). — ( L. 579 ) $D_6$ $T_4$ $G_2$ $M_{1-3}$ भूयान्मम मन· शुद्धं ( for $^a$ ). — ( L. 580 ) $D_6$ भूयान्; $G_2$ मोघं ( for मा भून् ) — ( L 581 ) Dn $Ds_2$ $T_{2,4}$ $G_{2-4}$ $M_4$ देवदूतो, $T_1$ $G_1$ °पूतो, $M_2$ तप.पूतो; $M_3$ भवभूतो ( for देवभूतो ) $G_2$ केशव ( for गोपते ) — After line 581, $D_6$ ins

6** अत्र पूतो भविष्यामि स्मरणात्तव केशव ।

— ( L 582 ) $D_6$ -प्रहरणात् ( for -प्रहारेण ) $T_2$ $M_1$ नश्यति ( for °तु ) — ( L 583 ) Dn $Ds_2$ $T_{1,2}$ $G_{1\ 3}$ $M_4$ विभो; $M_2$ हरे ( for तव ) — ( L 584 ) $Ds_2$ अर्थानां ( for अर्थिनां ). — ( L 587 ) $M_1$ नमस्कृत्य ( for the first °स्तुभ्यं ) $G_3$ सदात्मनि ( for सदा मम ) — $T_2$ $G_{1\ 4}$ om ( hapl. ) line 588 — ( L 588 ) $T_1$ $M_4$ निर्विघ्नं ( for °घ्ना ) $M_{2\ 4}$ हरे ( for मम ) — ( L 589 ) $D_6$ मति- ( for स्मृति- ) $T_2$ तदाभूत्स्मृतिविभ्रम· ( for $^b$ ) — ( L. 590 ) $D_6$ सुस्थं ( for संस्थं ) $T_2$ $G_{3\ 4}$ भविष्यति ( for भवत्विति ). — ( L. 591 ) $T_1$ चिन्तय ( for प्रेरय ) $T_1$ om ( hapl ) lines 591$^b$–593$^a$. $M_2$ ईदृशं मनः ( for चित्तमीदृशम् ). — ( L. 592 ) Dn $Ds_2$ $D_6$ $T_{2\ 4}$ $G_{2-4}$ M [अ]स्मिन्का ( by transp. ). $M_4$ इह ( for इति ) — $T_2$ $G_1$ om. line 593. — ( L 593 )

पृथिवी पातु मे घ्राणं रसना पातु मे पयः ॥
सूर्यश्च पातु मे चक्षुः स्पर्शं पातु च मारुतः ।
श्रोत्रमाकाशमप्येतु मनः प्राणं च गच्छतु ॥
जलं मां रक्षतान्नित्यं पृथिवी रक्षतां हरे । [ 600 ]
सूर्यो मां रक्षतां विष्णो नमस्ते सूर्यतेजसे ॥
वायुर्मा रक्षतां दुःखादाकाशं च जनार्दन ।
न मनः सर्वगं देव रक्षतां विषयाद्धरे ॥
मनोविपर्ययं घोरं पुरुषान्हन्ति नित्यशः ।
पापेषु योजयेत्पुंसः परपीडादिकेषु च ॥ [ 605 ]
मनस्तद्रक्षतां देव भूयो भूयो जनार्दन ।
मा भून्मनसि कालुष्यं मनो मे निर्मलं भवेत् ॥
कलुषं यस्य तच्चित्तं नरके पातयत्यमुम् ।
बाह्यानि निर्मलान्येवमिन्द्रियाणि भवन्ति चेत् ।
न तानि कार्यवन्तीह मनश्चेत्कलुषं भवेत् ॥ [ 610 ]
तथा हि मुष्टिनामेध्यं गृहीत्वा यो व्यवस्थितः ।
बहिः प्रक्षालनं कुर्वन्किं भवेत्तस्य केशव ।
व्यर्थो हि केवलं तस्य प्रग्रहो बाह्यगोचरः ॥
तस्मात्सर्वप्रयत्नेन चित्तं रक्ष जनार्दन ।
बलवानिन्द्रियग्रामो वारयैनं जनार्दन ॥ [ 615 ]
परिवादाज्जगन्नाथ वाचं रक्ष दुरुद्वहाम् ।
परद्रव्यान्मनो रक्ष परदाराज्जनार्दन ।
सर्वत्र मे दया भूयात्प्रसादात्तव केशव ॥
त्वय्येव भक्तिरचला भूयाद्भूतेषु मे दया ।
बहुनात्र किमुक्तेन शृणुष्वेदं वचो मम ॥ [ 620 ]
सुखे दुःखे च रागे च भोजने गमने तथा ।
जाग्रत्स्वप्नेषु सर्वत्र त्वय्येव रमतां मनः ॥
मामकं देवदेवेश नमस्तेऽस्तु जनार्दन ।
इति ब्रुवन्घोरतमो जात्या हीनो न चित्ततः ॥
पिशाचो भगवद्भक्तः समाधिं समपद्यत । [ 625 ]
दृढं बध्वात्मनः कायमात्रपाशेन मांसपः ॥
निश्चलेनैव मनसा सुखमास्ते स मांसपः ।
ध्यायन्हरिं जगद्योनिं विष्णुं पीताम्बरं शिवम् ॥
कुन्दाभमादिपुरुषमेकाकारमनामयम् ।
नित्यं शुद्धं ज्ञानगम्यं कारणं सर्वदेहिनाम् ॥ [ 630 ]
नासिकाग्रं समालोक्य पठन्ब्रह्म सनातनम् ।
निवातस्थो यथा दीप प्रोच्चरन्प्रणवं सदा ॥

---

M2 भृत्यं ( for भृत्यो ). — G2 4 om line 594 — ( L 594 ) T1 नमो देव, T2 G1 च मे मास्तु ( for न मत्तोऽस्तु ) — ( L 595 ) M2 प्रभो ( for हि मे ) — ( L 597 ) Dn D6 T1 4 G1 2 4 पृथिवी ( for °वी ) T1 4 G2 3 M4 रसनां ( for °ना ) D6 M1-3 पातु मे रसना मया ( for $^{b}$ ) — ( L 598 ) Dn Ds2 D6 T1 4 G3 M1-3 सूर्यं ; G2 आर्या ( for सूर्यश्च ) Dn Ds2 D6 T1 2 G2-4 M मारुतम् ( for °त. ) — ( L 599 ) G2 om. from मप्येतु up to मनस्तद्रक्ष ( in line 606 ) D6 अभ्येतु ( for अप्येतु ) T1 पुन. ( for मन ) D6 रक्षतु ( for गच्छतु ) — ( L 600 ) T2 M3 पृथिवीं ( for °वी ) T2 हरि ( for हरे ) — ( L 601 ) D6 सूर्यो रक्षतु मां नित्यं ( for $^{a}$ ) T2 चक्षुषे ( for -तेजसे ) — ( L 602 ) M1 2 मा ( for मां ) — T2 G1 om lines 603-606 — ( L 603 ) D6 T1 G3 M1-3 मनः ( D6 °म ) सर्वत्रगं देव, G4 मम सर्वजगद्देव ( for $^{a}$ ) Dn Ds2 T1 4 G3-5 M4 विषयान्तरे ( for °द्धरे ) — ( L 604 ) Dn Ds2 T1 4 G3-5 M4 -विपर्यये ( for °यं ) Dn2 T1 G3-5 M4 घोरे ( for घोरं ) — ( L 605 ) D6 पापेषु येषु पुरुषं ( for $^{a}$ ) Dn Ds2 T1 4 G3-5 M4 परपीडात्मकेषु च ( for $^{b}$ ) — ( L. 608 ) Dn2 T4 कालुष्यं ( for कलुषं ). — ( L. 609 ) Dn Ds2 T1 2. 4 G1. 3-5 M4 [उ]त, D6 M2 च ( for चेत् ) — ( L 611 ) Dn Ds2 नाङ्गानि, D6 M1 3 यथा हि ( for तथा हि ) — ( L 613 ) M4 प्रग्रहं ( for केवलं ) M4 केवल ( for प्रग्रहो ) — G4 om lines 614-617 — ( L 616 ) T1 2 4 G1 3 M2 परवादाज्, G2 M1 परीवादाज् ( for परि° ) D6 T4 यदूद्वह ( for दुरुद्वहाम् ) T2 वाचं रक्षतु दुर्वहाम् ( for $^{b}$ ) — D6 om ( hapl ) lines 618-623 — ( L 621 ) M4 भाग्ये ( for रागे ) — ( L 624 ) D6 घोरतनुर् ; M4 °तरं ( for °तमो ). M4 om lines 634$^{b}$-628$^{a}$ T4 तत्त्वत ( for चित्तत ) D6 जात्या तु न तु चित्तत ( for $^{b}$ ) — ( L 625 ) M1 3 समाधौ ( for °धिं ) — T2 G4 ( hapl ) om line 627 — ( L 627 ) G2 स्म संयत ( for स मांसप ) — ( L 628 ) G5 जगन्नाथं ( for °द्योनिं ) — ( L 629 ) Dn Ds2 T1 2 4 G1 3-5 M4 मुकुन्दम् ( for कुन्दाभम् ) M1 एकाक्षरम् ( for °कारम् ). — ( L. 630 ) M1 3 नित्य- ( for नित्यं ) — ( L 631 ) T2 पर- ( for पठन् ) — ( L 632 ) T2 निवासस्थो ; T4 निर्वातस्थो ( for निवा° ) G1 2 5 प्रणत ( for °वं ) — ( L 634 ) D6 M1 3 संयत, M2 संयत ( for सततं ) — ( L 636 ) M1 शुभ्र- ( for शुभ- ) — ( L 637 ) T4 पिशितादस्, G2 वशी स्नानस्, M4 विगताशस् ( for पिशि° ) — ( L 638 ) D6 M1 3 त्रिशरीरं

प्रणवं वाचकं मत्वा वाच्यं ब्रह्मेति निश्चितः ।
एकाग्रं सततं कृत्वा चित्तं विष्णौ समर्पितम् ॥
विकल्परहितं चित्तं हृदि मध्ये न्यवेशयत् । [ 635 ]
पुण्डरीके शुभदले समावेश्य जगत्पतिम् ॥
आस्ते सुखं महायोगी पिशिताशस्तदा महान् ।
त्रिधामानं जपंस्तत्र स्मरन्विष्णुं सनातनम् ॥

Colophon

वैशंपायन उवाच ।

ततः स भगवान्विष्णुः पिशाचं दृष्टवांस्तदा ।
चिन्तयन्तं स्वमात्मानं शुद्धं बुद्धिसमन्वितम् ॥ [ 640 ]
आत्मन्येव स्थितं साक्षात्पठन्तं प्रणवं सकृत् ।
प्रार्थयन्तं स्वमात्मानमेकान्ते नियतं हरिः ।
अचिन्तयज्जगन्नाथः कारणं पुण्यसंचये ॥
ध्यात्वा तु सुचिरं विष्णुः कारणं पुण्यकर्मणः ।
धनदस्योपदेशेन पठन्सुबहुशः क्षितौ । [ 645 ]
वासुदेवेति कृष्णेति माधवेति च मां सदा ॥
जनार्दन हरे विष्णो भूतभावनभावन ।
नरकारे जगन्नाथ नारायण परायण ॥
इति मां नामभिर्नित्यं पठत्येष दिवानिशम् ।
स्वपञ्जाग्रत्तथा तिष्ठन्भुञ्जन्गाच्छंस्तथा वदन् ॥ [ 650 ]

भक्षयन्मांसपिटकं पिबञ्शोणितमेव च ।
बाधमानं च सुचिरं हत्वापि च मृगान्बहून् ॥
हनने भोजने चैव जाग्रत्स्वप्ने तथैव च ।
सर्वेष्वपि च कार्येषु कर्ताहमिति मन्यते ॥
एतस्य कर्मणः पाक एष घोरस्य सर्वतः । [ 655 ]
निश्चित्यैवं जगन्नाथः प्रीतस्तस्य बभूव ह ॥
अदर्शयत्स्वमात्मानमनन्यस्य जगत्पतिः ।
शुद्धेऽन्तःकरणे तस्य पिशाचस्याथ भूमिप ॥
स च घोरः पिशाचोऽपि ददर्शात्मनि केशवम् ।
पीतकौशेयवसनं पद्माक्षं श्यामलं हरिम् ॥ [ 660 ]
शङ्खिनं चक्रिणं विष्णुं स्रग्विणं गदिनं विभुम् ।
किरीटिनं कौस्तुभिनं श्रीवत्साच्छादितोरसम् ॥
नीलमेघनिभं कान्तं गरुडस्थं प्रभञ्जनम् ।
चतुर्भुजं शुभगिरं निश्चलं सर्वगं शुभम् ॥
अनादिमजरं नित्यं मायाविनममायिनम् । [ 665 ]
सत्ययुक्तं सदा शुद्धं बुद्धिगम्यं सदामलम् ॥
मनसैव जगन्नाथं दृष्ट्वा विष्णुमनेकधा ।
अनिमील्यैव नयने कृतार्थोऽस्मीत्यमन्यत ॥
अद्य दृष्टो हरिर्विष्णुः साक्षात्सर्वत्रगः शुभः ।
प्रसन्नो हि हरिर्मह्यं तेनाहं दृष्टवान्हरिम् ॥ [ 670 ]

---

( for त्रिधामानं ) $T_1$ हरिं ( for जपंस् ) $G_5$ जपन् ( for स्मरन् )

COLOPHON — *Mention of the Epic* $Ds_1$ — *Mention of Khila* Dn $D_6$ $T_{1\ 4}$ G M — *Sub parvan* Dn $Ds_2$ $D_6$ $T_{1\ 2}$ $G_1$ M कैलासयात्रा — *Adhy name* Dn $Ds_2$ $T_{1\ 2}$ $G_1$ $M_4$ घण्टाकर्णचित्तसमाधि., $G_3$ घण्टाकर्णसमाधिविधानम्, $M_{1-3}$ पिशाचदर्शनम् — *Adhy no* Dn 265, $Ds_2$ 264, $T_1$ $G_3$ 191, $T_2$ $G_1$ 193, $T_4$ 160, $G_2$ 187, $G_4$ 190, $G_5$ $M_4$ 192, $M_{1-3}$ 165

( L 640 ) $D_6$ शुद्धिं, $T_{1\ 4}$ $G_{4\ 5}$ $M_1$ शुद्धि-, $G_1$ शुचिं ( for शुद्ध ) Dn शुद्धि- ( for बुद्धि- ) $M_4$ चित्तशुद्धिसमन्वितम् ( for $^b$ ) — ( L 641 ) $T_4$ $G_3$ $M_4$ आत्मन्यव-, $G_2$ °न्येवं ( for °न्येव ) — ( L 642 ) $D_6$ $T_4$ $G_2$ $M_{1-3}$ एकात्म-, $T_{1\ 2}$ $G_1$ °न्त-, $G_5$ °न्तं ( for °न्ते ) $T_{2\ 4}$ हरिम् ( for हरि ) — ( L 643 ) $T_{1\ 2\ 4}$ $G_3$ चिन्तयन्तं जगन्नाथं ( for $^a$ ) $D_6$ -संचयम्, $G_5$ -संक्षये ( for -संचये ) — ( L 644 ) $T_1$ $G_2$ -कर्मणाम् ( for °णः ) — ( L 648 ) $T_4$ $G_1$ नराकार, $M_4$ नराकृते, Bom. ed नमस्कारी ( for नरकारे ) — ( L 649 ) $T_1$ वदति ( for पठति ) — ( L 650 ) Dn $Ds_2$ $T_2$ G $M_4$ जाग्रंस् ( for जाग्रत् ) $T_1$ $M_{1-3}$ गच्छन् ( for तिष्ठन् ) $D_6$ $T_4$ $M_{1-3}$ तिष्ठंस् ( for गच्छंस् ) $G_1$ पठन् ( for वदन् ) — ( L 651 ) $T_1$ -पिठरं ( for -पिटकं ) $T_1$ पिण्डं ( for पिबञ् ) — ( L 652 ) $D_6$ $G_2$ वध्यमानं, $M_{1\ 3}$ वध्यमानश्, $M_4$ वधमानं ( for बाधमानं ) $M_4$ मृगगणान् ( for [अ]पि च मृगान् ) — ( L. 653 ) $M_3$ गमने ( for हनने ) — ( L 655 ) $T_4$ पाकम् ( for पाक ). $G_1$ घोरेषु ( for घोरस्य ) Dn $Ds_2$ $G_2$ कर्मण, $M_{1\ 3}$ सर्वदा; $M_4$ °श ( for °त ) — ( L 658 ) $D_6$ $G_3$ $M_4$ शुद्धान्तःकरणे तस्य ( for $^a$ ) $T_2$ $G_1$ भूपते ( for भूमिप ) — ( L 663 ) $G_2$ प्रभुं हरिम् ( for प्रभञ्जनम् ) — ( L 664 ) Dn $Ds_2$ $G_{2\ 4.\ 5}$ $M_{1\ 4}$ शिवम् ( for शुभम् ) — $M_1$ om line 665. — ( L. 665 ) $T_4$ $G_4$ $M_4$ अनादिनिधनं नित्यं, $G_5$ °मध्यनिधनं ( for $^a$ ) $M_{2\ 3}$ मायारूपम् ( for °विनम् ) — ( L 666 ) $D_6$ सत्त्वयुक्तं; $G_2$ विबन्धनं ( for सत्ययुक्तं ) $D_6$

सिद्धं मे जन्मनः कृत्यं किमतः कृत्यमस्ति मे ।
ग्रन्थयो मम निर्भिन्ना वश्यान्येवेन्द्रियाणि मे ॥
प्रायेण जितमित्येव मनो मन्ये स्मृते हरौ ।
एषणाश्च निरस्ता मे प्रसन्नोऽहं तथाभवम् ॥
एभ्योऽथापि पिशाचेभ्यो निर्मुक्तः सांप्रतं तथा । [ 675 ]
योऽसौ ममानुजः साक्षात्स च भक्तस्तथा हरौ ।
कालेन चैव निर्मुक्तो विष्णोः सायुज्यमाप्नुयात् ॥
इत्येवं चिन्तयित्वा स आत्मपाशं विभिद्य च ।
क्रमेण प्राणमुन्मुच्य विलोक्य च दिशस्तथा ।
शरीरं सुसमं कृत्वा प्रातिष्ठत्स सुखेन ह ॥ [ 680 ]

Colophon

वैशंपायन उवाच ।

पिशिताशो जगन्नाथं ददर्श जगतां पतिम् ।
समाधौ च यथा दृष्टं भूमौ चैव जगत्पतिम् ॥
अयं विष्णुरयं विष्णुरित्यूचे पिशिताशनः ।
समाधौ च यथा दृष्टः सोऽयमत्रापि दृश्यते ।
इत्युवाच पुनर्ब्रूते नृत्यन्निव हसन्निव ॥ [ 685 ]

अयं स चक्री शरशार्ङ्गधन्वा
गदी रथी सध्वजतूणपाणिः ।
सहस्रमूर्धा सकलामरेशो
जगत्प्रसूतिर्जगतां निवासः ॥
विष्णुर्जिष्णुर्जगन्नाथः पुराणः पुरुषोत्तमः । [ 690 ]
विश्वात्मा विश्वकर्ता य. सोऽयमेष सनातनः ॥
अस्यैव देवस्य हरेः स्तनान्तरे
विराजते कौस्तुभरत्नदीपः ।
यस्य प्रसादाज्जगदेतदादौ
विराजते चन्द्रमसेव रात्रिः ॥ [ 695 ]
योऽसौ पृथ्वीं दधाराशु दंष्ट्रया जलसंचयात् ।
योऽयमेष हरिः साक्षाद्वाराहं वपुरास्थितः ॥
बध्वा तथा दानवमुग्रपौरुषं
दत्त्वा च शक्राय ततोऽनु राज्यम् ।
बलिं बलादेप हरि. स वामनः [ 700 ]
स्तुतश्च भक्त्या मुनिभिः पुरातनैः ॥
दंष्ट्राकरालः सुमहान्हत्वा यो दानवं रणे ।
निःशोकं निखिलं लोकं चकारासौ जनार्दनः ॥

---

$T_4$ $G_2$ सदाशिवम् ( for °मलम् ) — ( L 668 ) $Dn_1$ $T_{2\ 4}$ $G_{1, 3-5}$ $M_{2\ 4}$ अनुन्मील्य, $Dn_2$ $Ds_2$ अनुमील्य ; $D_6$ आनिमील्य, $G_2$ निमील्य च ( for अनिमील्य ) — ( L 669 ) $D_6$ $T_4$ $G_2$ $M_{1-3}$ शिव ( for शुभ ) — ( L 674 ) $T_4$ $M_3$ एषणा ( for °णाश् ) $M_4$ निवृत्ता ( for निरस्ता ) — ( L. 675 ) $T_4$ $M_4$ एतेभ्यो ( for एभ्योऽथ ) — ( L 677 ) $M_3$ [ए]व वि- ( for चैव ) $T_1$ विष्णु- ( for विष्णो. ) — ( L 678 ) $D_6$ विपाट्य ( for विभिद्य ) — ( L 679 ) Dn $T_{1, 4}$ $G_{1\ 2\ 5}$ प्राणान्, $M_2$ चक्षुर्, $M_4$ पाशम् ( for प्राणम् ) — ( L 680 ) $D_6$ सुसुखं, $T_1$ $M_4$ सुगमं, $G_4$ स्वं समं ( for सुसमं ). $G_1$ शरीरं सुसमुत्कृत्य ( for $^a$ ) Dn $Ds_2$ प्राविशत् ( for प्रातिष्ठत् ) $Ds_2$ $D_6$ $T_{2, 4}$ $G_{2-4}$ M सु- ( for स ).

Colophon — *Mention of the Epic* $Ds_2$. — *Mention of Khila* Dn $Ds_2$ $D_6$ $T_{1\ 2\ 4}$ G M — *Sub-parvan* Dn $Ds_2$ $T_4$ $M_{1-3}$ कैलासयात्रा — *Adhy name* · Dn $Ds_2$ पिशाचविष्णुसाक्षात्कारः, $T_{1. 2}$ $G_{1\ 3\ 4}$ $M_4$ विष्णुसाक्षात्कार, — *Adhy no* Dn 266, $Ds_2$ 265 ; $T_1$ $G_3$ 192, $T_2$ $G_1$ 194, $T_4$ 161, $G_2$ 188, $G_4$ 191 ; $G_5$ $M_2$ 193, $M_{3\ 4}$ 157.

( L. 681 ) Dn $Ds_2$ $G_{2\ 4\ 5}$ $M_4$ ददर्शाथ जगद्गुरुम् ( for $^b$ ). — ( L 682 ) Dn $Ds_2$ $D_6$ $G_{2\ 4}$ M तथा हरिम् ( for जगत्पतिम् ) — ( L 683 ) $G_2$ इत्यूचु॰ पिशिताशना॰ ( for $^b$ ). — ( L 685 ) $Dn_2$ $T_{1\ 4}$ $G_{2-5}$ $M_{1\ 4}$ [उ]क्त्वा च ( for [उ]वाच ) — ( L 686 ) $D_6$ -धन्वी ( for -धन्वा ) — ( L 687 ) $D_6$ खड्गी ( for गदी ) — ( L 690 ) $G_2$ अयं ( for विष्णुर् ) — ( L 691 ) $G_2$ [अ]यं ( for य ) $G_4$ जनार्दन ( for सनातनः ) — ( L 693 ) $G_2$ -रत्नकान्ति ( for °दीप॰ ) — ( L 694 ) $T_1$ $G_3$ प्रभावाज्, $M_2$ [अ]वभासाज् ( for प्रसादाज् ). — ( L 696 ) $D_5$ जलसंचयाम्, $T_1$ °संश्रयात्, $G_2$ जगदीश्वरः ( for जलसंचयात् ) — ( L 697 ) $Dn_2$ $T_4$ सो ( for यो ). $D_6$ $T_{2\ 4}$ $G_{2\ 3}$ रूपम् ( for वपुर् ) — ( L. 698 ) $T_2$ $G_1$ विध्वा ( for बध्वा ) $M_{1-3}$ च यो ( for तथा ) $M_4$ अप्रय- ( for उग्र- ) — ( L 699 ) $D_6$ $M_{1-3}$ ददौ ( for दत्त्वा ) $G_2$ स ( for ऽनु ) — ( L 701 ) $D_6$ $T_4$ $G_2$ नित्यं, $M_{1\ 3}$ तुष्ट्या ; $M_2$ सत्य ( for भक्त्या ) $D_6$ $T_4$ $G_2$ सनातनै. ( for पुरा° ). — ( L 702 ) $Dn_2$ स ( for सु- ) $G_{1\ 3}$ $M_{1\ 4}$ दानवान् ( for °व ) — ( L 703 ) Dn $Ds_2$ $D_6$ $T_{1, 2\ 4}$ $G_{1. 2, 5}$ $M_4$ अखिलं ( for नि° ). — ( L 705 ) $T_2$ $G_1$ महारणे ( for °र्णवे ). — ( L 706 ) Dn $Ds_2$ $D_6$ $T_2$ G $M_2$ महान् ( for महत् ).

आदौ दधारैकभुजेन मन्दरं
निर्जित्य सर्वानसुरान्महार्णवे । [ 705 ]
ददौ च शक्राय सुधामयं मह-
त्स एष साक्षादिह मामवस्थितः ॥
यः शेते जलधौ नागे देव्या लक्ष्म्या सुखावहे ।
हत्वा तौ दानवौ घोरौ मधुकैटभसञ्ज्ञितौ ॥
यमाहुराद्यं विबुधा जगत्पति [ 710 ]
सर्वस्य धातारमजं जनित्रम् ।
अणोरणीयांसमतिप्रमाणं
स्थूलात्स्थविष्ठं हरिमेव विष्णुम् ॥
यत्र स्थितमिदं सर्वं प्राप्ते लोकस्य नाशने ।
आदौ यस्मात्समुत्पन्नं सोऽयं विष्णुरिह स्थितः ॥ [ 715 ]
यस्येच्छया सर्वमिदं प्रवर्तते
निवर्तते चापि जनार्दनस्य ।
अयं स विष्णुः पुरुषोत्तमः शिवः
प्रपद्यते मामिह यादवेश्वरः ॥
भृगोर्वंशे समुत्पन्नो जामदग्न्य इति श्रुतः । [ 720 ]
शिष्यत्वं समवाप्यैव मृगव्याधस्य यः स्थितः ॥
जघान वीर्याद्बलिनं महारणे
कुठारशस्त्रेण गिरीशशिष्यः ।
सहस्रबाहुं कृतवीर्यसंभवं
हयैश्च नागैश्च रथैश्च निर्गतम् ॥ [ 725 ]
कुरुक्षेत्रं समासाद्य यश्चकार पितृक्रियाम् ।
निःक्षत्रियमिमं लोकं कृतवानेकविंशतिम् ॥

रघोरथ कुले जातो रामो नाम जनार्दनः ।
सीतया च श्रिया युक्तो लक्ष्मणानुचरः कृती ॥
कृत्वा च सेतुं जलधौ जनार्दनो [ 730 ]
हत्वा च रक्षःपतिमाशुगैः शरैः ।
दत्त्वा च राज्यं स विभीषणाय
दशाश्वमेधानयजच्च योऽसौ ॥
वसुदेवकुले जातो वासुदेवेति शब्दितः ।
गोकुले क्रीडते योऽसौ सकर्षणसहायवान् ॥ [ 735 ]
उत्तानशायी शिशुरूपधारी
पीत्वा स्तनं पूतनिकाप्रदत्तम् ।
व्यसुं चकाराशु जनार्दनस्तदा
दनोः सुतां तामवसत्सुखं हरिः ॥
पयःपानं तथा कुर्वन्भक्षयन्दधिपिण्डकम् । [ 740 ]
दाम्ना बद्धोदरो विष्णुर्मात्रा रुषितया दृढम् ॥
ततश्च दाम्ना सुदृढेन बद्धो
जघान योऽसौ यमलार्जुनौ च ।
क्रीडन्हरिर्गोकुलवासवासी
गोपीभिरास्वाद्य मुखं स्तनं च ॥ [ 745 ]
वृन्दावने वसन्विष्णुर्गोपैर्गोकुलवासिभिः ।
तत्र हत्वा हयं घोरं विरराजांशुमानिव ॥
यः क्रीडते नागफणे जनार्दनो
निषेव्यमाणः स ह गोपदारकैः ।
महाह्रदे नागपतिं जगत्पति- [ 750 ]
र्ममर्द वीर्यातिशयं प्रदर्शयन् ॥

—(L 707) D6 माधवः स्थित, M2 मामुपस्थितः (for मामव°) —(L. 709) M3 -संज्ञिकौ (for °तौ). —(L 712) D6 M1-3 अणु- (for अति-) —(L 714) M1 3 विश्वं (for सर्वं) —(L 715) D6 G2 स्वयं (for सोऽयं) —T2 G1 om (hapl) lines 716-720 —(L 717) Dn1 M1 प्रवर्तते, Bom Poona eds प्रवृत्तं (for निवर्तते) —(L 718) G3 शुभ· (for शिव) —(L 719) Dn Ds2 T4 G2, 4 5 M4 प्रवर्तते (for प्रपद्यते). —(L 720) D6 G2 M2 स्थितः, M1 3 स्मृत (for श्रुत) —(L. 722) G5 जहार (for जघान). —(L 723) T1 G2 3 -शिष्यम् (for -शिष्य. —(L 725) G2 गजैश्चैव (for च नागैश्च) —(L 727) Ds2 एकविंशति, D6 T1 4 G2 M1-3 °विंशकम् (for °विंशतिम्) —(L 728) G4 रवेर् (for रघोर्) G3 om $728^b$-$733^b$ D6 M2 रामनाम्ना, M1 रामनामा (for रामो नाम) —(L 731) G2 आत्मन (for आशुगै.). —(L. 733) Dn Ds2 T2 G1 4 5 M4 दशाश्वमेधैर् (for °मेधान्). —(L 739) G2 अवधीत् (for अवसत्). —(L 740) T1 -खण्डकम्, T2 G1 -पिण्डकान् (for °कम्) —(L 741) G4 रोषितया, M4 योषि° (for रुषि°) —(L 742) M1 योऽसौ (for बद्धो) —(L 743) M1 बद्धो (for ऽसौ). —(L. 745) M3 सुख (for मुखं) —(L 747) Dn Ds2 D6 T1 2, 4 G M4 राजन् (for घोरं). —(L 748) Dn Ds2 G3

योधेनुकं तालवने तत्फलैः सममच्छिनत् ।
हत्वा दानवमुग्रं तं गोपान्विस्मापयन्निव ॥
दधार यो गोधरमुग्रपौरुषो
महामतिर्मेघसमागमे सति । [ 755 ]
विडम्बयञ्शक्रबलं प्रमोदय-
न्गोपांश्च गोपीश्च सगोकुलं हरिः ॥
गोपीनां स्तनमध्ये तु क्रीडते काममीश्वरः ।
योऽसौ पिबंस्तदधरं मायामानुपदेहवान् ॥
गोपीभिरास्वाद्य मुखं विविक्ते [ 760 ]
शेते स्म रात्रौ सुखमेव केशवः ।
स्तनान्तरेष्वेव तदा च तासां
कामीव कान्ताधरपल्लवं पिबन् ॥
अक्रूरेण समाहूतस्तेन गच्छन्हि यामुने ।
जले योऽभ्यर्चितस्तेन नागलोके स एव हि ॥ [ 765 ]
ततश्च गच्छन्बलवाञ्जनार्दनो
हत्वा तमुग्रं रजकं बलात्पथि ।
हृत्वा च वस्त्राणि यथेष्टमीश्वरो
ययौ सरामो मथुरां पुरीं हरिः ॥
लब्ध्वा च दामानि बहूनि कामदो [ 770 ]
दत्त्वा वरं माल्यकृते महान्तम् ।
लब्ध्वानुलेपं सुरभि च यादवः
कुब्जां चकाराशु महार्हरूपाम् ॥
योऽसौ चापं समादाय मध्ये छित्त्वा महद्धनुः ।
सिंहनादं महच्चक्रे कल्पान्ते जलदो यथा ॥ [ 775 ]
हत्वा गजं घोरमुदग्ररूपं
विषाणमादाय ततोऽनु केशवः ।
ननर्त रङ्गे बहुरूपमीश्वरः
कंसस्य दत्त्वा भयमुग्रवीर्यः ॥
योऽसौ हत्वा महामल्लं चाणूरं निहतद्विषम् । [ 780 ]
यादवेभ्यो ददौ प्रीतिं कंसस्यैव तु पश्यतः ॥
जघान कंसं रिपुपक्षघातिनं
पितृद्विषं यादवनामवेयम् ।
संस्थाप्य राज्ये हरिरुग्रसेनं
सांदीपनिं काश्यमुपागमद्यः ॥ [ 785 ]
विद्यामवाप्य सकलां दत्त्वा पुत्रं महामुनेः ।
साग्रजोऽथ जगामाशु मथुरां यादवीं पुरीम् ॥
हत्वा निशुम्भं नरकं महामतिः
कृत्वा सुघोरं कदनं जनार्दनः ।
ररक्ष विप्रान्मुनिवीरसंघा- [ 790 ]
न्देवांश्च सर्वाङ्गगतो जगत्पतिः ॥
स एष भगवान्विष्णुरद्य दृष्टो जनार्दनः ।
कृतकृत्योऽस्मि संजातः सायुज्यं प्राप्नुयामहम् ॥

---

$M_4$ नागफणौ, $D_6$ °फणां (for °फणो) —(L 749) $G_3$ निक्षिप्यमाण (for निषेव्य°) $D_6$ गोपबालै (for °दारकै·) —(L 752) $T_4$ $M_{1\ 3}$ आचिनोत् (for अच्छिनत्). $T_{1,3}$ $G_3$ प्राच्छिनत्तत्फलै सह (for ᵇ) —(L 753) $M_{1\ 3}$ लोकान् (for गोपान्) —(L 754) $T_1$ $G_{1-3}$ -पौरुषान् (for °षो). —(L 756) $G_2$ शत्रुबलं (for शक्र°) —(L 757) $M_3$ समाकुलं (for सगो°). —(L. 759) $T_{1\ 2}$ $G_{1\ 3}$ स्तनं तासां (for तदधरं) —(L 760) $D_6$ $T_2$ $G_1$ विविक्त, $T_4$ °क्तं (for °क्ते) —(L 761) $T_2$ $G_1$ योऽसौ (for रात्रौ) $T_2$ $G_{1\ 3}$ स्वयम् (for सुखम्) —(L. 762) $D_6$ $G_2$ रात्रौ (for तासां) $T_1$ $G_3$ क्षणान्तरेषु क्षणदासु तासां, $T_2$ $G_1$ स्तनान्तरे च क्षणदासु तासां —(L 764) $D_6$ $M_4$ गच्छति (for °न्हि) $T_{1\ 2}$ G $M_2$ तेन गच्छति यामुनम् (for ᵇ). —(L 765) $T_1$ यथैव (for स एव) —(L 768) $M_{1,3}$ हित्वा, $M_2$ छित्त्वा (for हृत्वा). $D_6$ यथेच्छम् (for °ष्टम्) —(L 769) $T_2$ $G_3$ योऽसौ (for ययौ) $M_{1-3}$ मधु ($M_3$ °थु)-रापथ हरि, $M_4$ मथुरां महापुरीम् (for °रां पुरीं हरि) —(L 770) $M_4$ दत्त्वा (for लब्ध्वा) $D_6$ $T_4$ $M_3$ कामतो (for °दो) —(L 771) $Ds_2$ माल्यवते (for °कृते) — $G_1$ om lines 772–777 —(L 772) $M_4$ च (for [अ]नु-) —(L. 773) $D_6$ $G_2$ महार्घरूपाम्, $T_4$ महार्घ्यं°, $M_{1-3}$ महर्घ्यं° (for महार्ह°) —(L 774) $G_4$ छित्त्वा मध्ये (by transp). —(L 776) $D_6$ उदार- (for उदग्र-) —(L 779) $D_6$ $T_4$ $G_2$ $M_{1-3}$ उग्रमीडय (for °वीर्यं) —(L 781) $D_6$ तु स (for [ए]व तु) —(L 782) $D_6$ -पातिनं (for घा°) —(L 785) $G_5$ उपागतो (for °गमद्) —(L 786) $D_6$ $G_2$ महात्मने; $G_1$ °मुनिः, $M_{2\ 3}$ °त्मन (for °मुने·) —(L 788) $D_6$ $M_{1\ 2}$ निसुन्दं, $T_{1\ 2}$ निकुम्भं, $G_{1\ 3-5}$ $M_4$ निसुम्भं (for निशुम्भं) —(L 789) $D_6$ $T_4$ च, $T_2$ $G_{1-3\ 5}$ $M_4$ स (for सु-). $G_3$ नरकं (for कदनं) —(L 790) $D_5$ मुनि-,

येन दृष्टो हरिः साक्षात्तस्य मुक्तिः करस्थिता ।
सोऽयमेष हरिः साक्षात्प्रत्यक्षमिह वर्तते ॥ [ 795 ]
को नु जन्मान्तरे पूर्वं धर्मः संचित एव मे ।
यस्य पाकः समुत्पन्नो येनासौ दृश्यते मया ॥
सर्वथा पुण्यवानस्मि नष्टसंसारबन्धनः ।
किमस्मै दीयते वस्तु किं नु वक्ष्यामि सांप्रतम् ।
करिष्ये किमहं विष्णो वदस्वाद्य यथेप्सितम् ॥ [ 800 ]
इत्युक्त्वा विस्वरं नादं ननाद बहुशस्तदा ।
जहास विकृतं भूयो ननर्त पिशिताशनः ॥
नमो नमो हरे कृष्ण यादवेश्वर केशव ।
प्रत्यक्षं च हरेस्तत्र ननर्त विविधं नृप ॥

Colophon

वैशंपायन उवाच ।

विहस्य विकृतं भूयः प्रनृत्य च यथाबलम् । [ 805 ]
ब्राह्मणस्य हतस्याथ शवमादाय सत्वरम् ॥
द्विधाकृत्य महाघोरं पिशितं केशशाड्वलम् ।
ततः खण्डं समादाय अद्भिरभ्युक्ष्य यत्नतः ॥
निधाय पात्रे सुशुभे नमस्कृत्य जनार्दनम् ।
इदं प्रोवाच देवेशं प्राञ्जलिः प्रणतः स्थितः ॥ [ 810 ]
गृहाणेदं जगन्नाथ भक्ष्यं योग्यं तव प्रभो ।
मयादृशैर्जगन्नाथ ग्राह्यं सर्वात्मना हरे ॥
भक्तिनम्रा वयं विष्णो नात्र कार्या विचारणा ।
दत्तं यद्भक्तिनम्रेण ग्राह्यं तत्स्वामिना हरे ॥
नवं सुसंस्कृतं भक्ष्यं ब्राह्मणं शवमुत्तमम् । [ 815 ]
अस्माकं पिशिताशानां शास्त्रे नियतमेव हि ।
ततो गृहाण भगवन्यदि दोषो न विद्यते ॥
इत्युक्त्वा विकृतं भूयो विहस्य स तु कामतः ।
दातुमैच्छत्तदा खण्डमस्पृश्यस्य शवस्य ह ॥
ततः प्रीतो हरिस्तस्मै मनसापूजयच्च तम् । [ 820 ]
अहोऽस्य स्नेहकारुण्यं मयि सर्वत्र वर्तते ॥
इति संचिन्त्य मनसा प्रोवाच यदुपुंगवः ।
अलमेतेन सर्वत्र पिशाच पिशितानन ।
अस्पृश्यं मादृशैरेतद्ब्राह्मणं शवमुत्तमम् ॥
ब्राह्मणः सर्वथा पूज्यो जन्तुभिर्धर्मकाङ्क्षिभिः । [ 825 ]
पिशाचा घोरकर्माणो यतन्ते ब्रह्महिंसने ॥
न हन्तव्याः सदा विप्रास्तद्धिंसा नरकावहा ।
तस्मादस्पृश्यमस्माभिर्नात्र कार्या विचारणा ॥
तस्मात्प्रीतोऽस्मि भद्रं ते मनोनिर्मलता यथा ।

---

संघांश्च सर्वान्, M2 °वर्यसघान् (for °वीरसंघान्) — (L 793) Dn Ds2 T2 G1 3–5 M4 प्राप्तवान् (for प्राप्नुयाम्) — (L 794) Dn T1 2 G1 3 M4 करे स्थिता; D6 G2 पुरे दधे, T4 पुर स्थिता (for करस्थिता) — (L 796) T4 G2 M4 नूनं (for को नु) — Before line 801, Dn Ds2 G4 M4 ins वैशंपायन उवाच — (L 801) T1 4 G1–3 M1 4 विस्तरं; G4 विस्वनं (for °रं) Dn Ds2 T4 G3–5 M4 ननर्द (for ननाद) — (L. 803) M4 विष्णो (for कृष्ण) — (L 804) D6 विधिवन् (for विविध)

COLOPHON — *Mention of the Epic* Ds2. — *Mention of Khila* Dn Ds2 D6 T1 2 4 G1 3–5 M. — *Sub-parvan* Dn Ds2 D6 T2 4 कैलासयात्रा — *Adhy name* Dn Ds2 T1 2 4 G1 3 4 घण्टाकर्णस्तुतिः — *Adhy no* Dn 167, Ds2 268, T1 G3 193, T2 G1 195; T4 162, G4 M4 194, M2 3 185.

(L. 805) Cal ed प्रहस्य (for प्रनृत्य) G2 यथाकथम् (for °बलम्) — (L 806) Dn Ds2 T1 2 G1, 2, 4 M4 सत्वरः (for °रम्) D6 om (hapl) lines 805[b]–811[a]. — (L 807) M3 पिशाचं (for पिशितं) — (L 808) M1 2 खड्गं (for खण्डं) T2 G1 3 5 त्वद्भिर् (for अद्भिर्) G3 अभ्यर्च्य (for अभ्युक्ष्य) — (L 811) Dn Ds2 T2 G1 4, 5 M4 मे, T1 G3 [इ]मं (for [इ]दं) Dn2 भोग्यं, T1 भोज्यं (for योग्यं) — (L 815) T4 च (for सु-) Dn2 G5 ब्रह्मण्यं (for ब्राह्मणं) — After line 815, T1 G2 M3 ins:

7** सर्वेषामेव वर्णानां शवं ब्राह्मणमुत्तमम् ।

— D6 om lines 816–820 — (L 816) M1 3 निश्चितम् (for नियं°) T4 G2 शास्त्रैर्निश्चितमेव हि (for [b]) — (L 819) Dn Ds2 G2 5 M4 अस्पृश्यं तु (for °श्यस्य) — (L 820) Dn Ds2 T1 2 4 G M4 ऽभवत् (for हरिस्). — (L. 821) T2 G1 विद्यते (for वर्तते) — (L 822) D6 G2 M1–3 -नन्दन (for -पुंगव). — (L. 824) T2 G1 ब्राह्मणैर्; M1 3 मानुषैर् (for मादृशैर्) G1 ब्राह्मं (for एतद्). D6 G2 M1 3 मानुषं, G4 5 ब्राह्मण्यं (for °णं). — (L 825) D6 T4 M1 3 ब्राह्मणा सर्वथा पूज्या, G (ed) °णेन सदा पूज्यो (for [a]) G4 M4 सर्व- (for धर्म-). — (L. 826) D6 (also

मनः शुद्धिं यदापन्नं ततः प्रीतोऽस्मि मांसप ॥ [ 830 ]
अस्मत्संकीर्तनाच्छश्वच्छुद्धं हि करणं तव ।
अतीव मनसा प्रीत इत्युक्त्वा भगवान्हरिः ॥
पस्पर्शाङ्गं तदा विष्णुः पिशाचस्याथ सर्वतः ।
करेण मृदुना देवः पापान्निर्मोचयद्धरिः ।
ततस्तस्य बभौ रूपं कामरूपसमप्रभम् ॥ [ 835 ]
दीर्घकुञ्चितकेशाढ्यो दीर्घबाहुः सुलोचनः ।
समाङ्गुलिः समनखः समवक्त्रः समुन्नसः ।
पद्माक्षः पद्मवर्णाभः पद्मकेसरभूषणः ॥
केयूरी चाङ्गदी चैव कौशेयवसनस्तदा ।
ज्ञानवान्सत्त्वसंपन्नः साक्षादिन्द्र इवापरः । [ 840 ]
गन्धर्व इव गायंस्तु सिद्धः सिद्ध इव स्वयम् ॥
साक्षात्स्पृष्टं तदा विष्णोः करेण मृदुपूर्वकम् ।
न नूनं तादृशं रूपमासीत्कल्पान्तरेष्वपि ॥
अद्यापि नैव मुनयो लभन्ते तादृशं वपुः ।
कृत्वा सुबहुशो घोरं तपः परमदुश्चरम् ॥ [ 845 ]
यच्च लब्धं तदा तेन पिशाचेन नृपोत्तम ।
को नु नाम जगन्नाथमाश्रितः सीदते नृप ॥
न हि सर्वत्र कल्याणो यो हि नित्यं जनार्दनम् ।
ध्यायन्पठञ्जपन्वापि तस्य किं नास्ति भूपते ॥
ततः प्रोवाच भगवान्स्थितं काममिवापरम् । [ 850 ]
अक्षयः स्वर्गवासस्ते यावदिन्द्रो भविष्यति ॥
तावत्स्वर्गी भवानस्तु शासनान्मम नान्यतः ।
नष्टे शक्रे ततः स्वर्गात्सायुज्यं मम गच्छतु ॥
योऽयं भ्राता तव स्वर्गी यावदिन्द्रो भवेत्तदा ।
वरं वरय भद्रं ते यत्ते मनसि वर्तते । [ 855 ]
दातास्मि सर्वत. सर्वं नात्र कार्या विचारणा ॥

घण्टाकर्ण उवाच ।

यश्चेमं संगमं देव संस्मरेन्नियतात्मवान् ।
भक्तिस्तस्याचला देव त्वयि भूयाज्जनार्दन ॥
मनःशुद्धिर्भवेत्तस्य मा भूत्कलुषता हरे ।
कालुष्यं मनसस्तस्य मा भूदेष वरो मम ॥ [ 860 ]
एवमस्त्विति देवेशः स्वर्गं गच्छेति केशवः ।
इन्द्रातिथिर्भवानस्तु त्वां प्रतीक्ष्य हरिः स्थितः ॥
इत्युक्त्वा भगवान्विष्णुस्ततो देशादपागमत् ।
यत्र ते मुनयः सिद्धा अग्निहोत्रमुपासते ।
स च स्वर्गी ततः स्वर्गमाज्ञया केशवस्य ह ॥ [ 865 ]
तस्मात्पठ सदा राजन्मनःशुद्धिं यदीच्छसि ।

---

as above) यजन्ते ( for यतन्ते ) D6 T1 4 G2 3 M2 3 -हिंसनम् ( for °ने ) — (L 829 ) Dn Ds2 T1 2 G1 3–5 M4 भक्त्या ( for तस्मात् ) — (L 830) T4 M1 3 शुद्धं ( for शुद्धिं ) T1 समापन्नः, T2 M2 यदापन्नस्, T4 यथा यत्नं, G(ed) तथापन्नं ( for यदा° ). T1 2 मांसद ( for °प ) — (L 834) D6 निर्मोचनं ; T4 M1–3 °चयन् ( for °यद् ). — (L 835) Dn Ds2 [अ]भवद् ( for बभौ ). M1–3 कामप्रतिमसंनिभम् ( for $^b$ ). — (L 836) D6 नील- ( for दीर्घ- ) — (L 237) T1 2 G3 समवर्ण. ( for °वक्त्रः ). T2 समुन्नत ( for °न्नसः ). — (L 838) G2 -वस्त्राभ. ( for -वर्णाभः ) G2 -केयूर- ( for -केसर- ) — (840) G4 रुद्र ( for इन्द्र ) — (L 841) M1, 3 [अ]पर. ( for स्वयम् ) — (L 842) D6 पृष्टस्, T4 M1 3 स्पृष्टस् ( for स्पृष्टं ) D6 करेणामृतपूर्वकम्, G2 °ण मृदुपर्वणा ( for $^b$ ). — (L. 843) Dn Ds2 D6 T1 2 4 G M4 कालान्तरेषु ( for कल्पा° ) — (L 245) D6 तीर्त्वा, M1–3 चीर्त्वा ( for कृत्वा ) Dn Ds2 D6 T1. 2 4 G2 4. 5 M4 -दारुणम्, G3 -धारणम् ( for -दुश्चरम् ) — (L 847) T2 G1 किं ( for को ) M3 आश्रितं ( for °तः ). — (L, 848) D6 M3 स ( for न ) — (L 849) D6 M4 जपन्पठन् ( by transp ) G1 नित्यं ( for तस्य ) D6 G2 भूतले ( for भूपते ) — (L 851) Dn Ds2 D6 T1 2. 4 G1 2 4 5 M2 वसिष्यति ( for भवि° ). — (L 852) G4 M4 नित्यतः ( for नान्यतः ). — (L 855) T1. 2. 4 G1 4 5 M4 यस् ( for यत् ) — (L 856) Dn Ds2 G2–5 M3. 4 दातास्मि सर्वं सर्वत्र ( for $^a$ ). — T1 G3. 5 M स्वर्गी, T2 G1 4 om. ( for घण्टाकर्ण ) — (L 857) Dn2 Ds2 G2–5 संस्मरन् ( for °रेन् ) — (L 859) D6 T4 M1–3 मनः शुद्धं ( for मन.शुद्धिर् ) T4 तस्मिन् ( for तस्य ) T2 कालुष्यता ( for कलुषता ) — (L 861) D6 T4 देवेश ( for °शः ). — (L. 862) T1 चन्द्रातिथिर् ( for इन्द्रा° ). — G1 om. from line 863 to the end of the colophon — (L 863) Dn Ds2 T2 G4 5 M4 कृष्णस् ( for विष्णुस् ) Dn Ds2 T1. 2 G3–5 M4 उत्थाप्य ब्राह्मणं तदा ( for $^b$ ) — After line 863, Dn Ds2 T1 2 G3–5 M4 ins.

8** तेन स्तुतो जगन्नाथः पूजयित्वा च तं द्विजम् ।
तततो विसृज्य गोविन्दस्तस्माद्देशादुपागमत् ॥

— (L. 864) Dn Ds2 T1. 2 G3, 5 M4 अग्निहोत्रसमन्विता

मनश्च शुद्धं भवति पठतस्ते जगत्पते ॥

Colophon

वैशंपायन उवाच ।

ततः स भगवान्विष्णुर्मुनिभ्यस्तत्त्वमादितः ।
कथयामास यद्वृत्तं पिशाचस्य महात्मनः ॥
तच्छ्रुत्वा मुनयः सर्वे विस्मयं परमं गताः । [ 870 ]
अहोऽस्य कर्मणः पाकस्तव सदर्शनादिति ॥
अर्चितो मुनिभिः सर्वैः प्रीतः प्रीतिमतां प्रियः ।
ततः प्रभाते विमले सूर्ये चाभ्युदिते सति ॥
आरुह्य गरुडं विष्णुर्ययौ कैलासमुत्तमम् ।
भवद्भिस्तत्र गन्तव्यमित्युक्त्वा मुनिसत्तमान् ॥ [ 875 ]
यत्र विश्वेश्वराः सिद्धास्तपस्यन्ति यतव्रताः ।
यत्र वैश्रवणः साक्षादुपास्ते शंकरं सदा ।
यत्र तन्मानसं नाम सरो हंसालयं महत् ॥
यत्र भृङ्गी रिटिर्देवमुपास्ते शंकरं शिवम् ।
गाणपत्यमवाप्याथ नित्यं पार्श्वचरो हरे ॥ [ 880 ]
यत्र सिंहा वराहाश्च द्विपद्वीपिमृगैः सह ।
क्रीडन्ति वन्यरतयः परस्परहिते रताः ॥
यत्र नद्यः समुत्पन्ना गङ्गाद्याः सागरंगमाः ।
यत्र विश्वेश्वरः शंभुराच्छिनद्ब्रह्मणः शिरः ।
यत्रोत्पन्ना महावेत्रा भूतानां दण्डतां ययुः ॥ [ 885 ]
उमया यत्र सहितः शंकरो नीललोहितः ।
ऋषिभिः प्रार्थितः पूर्वं ददौ यत्र नगः सुताम् ।
शंकराय जगद्धात्रे शिवाय पृथिवीपते ॥
यत्र लेभे हरिश्चक्रमुपास्य बहुभिर्दिनैः ।
पुष्करैः शतपत्रैश्च नेत्रेण च जगत्पतिम् ॥ [ 890 ]
गुहां यत्र समाश्रित्य क्रीडन्ते सिद्धकिंनराः ।
प्रियाभिः सह मोदन्ते पिबन्ते मधु चोत्तमम् ॥
यमुद्धृत्य भुजैः सर्वैः पौलस्त्यो विरराम ह ।
तमारुह्य महाशैलं देवकीनन्दनो हरिः ।
मानसस्योत्तरं तीरं जगाम यदुनन्दनः ॥ [ 895 ]
तपश्चर्तुं किल हरिर्विष्णुः सर्वेश्वरः शिवः ।
जटी चीरी जगन्नाथो मानुषं वपुरास्थितः ।
तपसे धृतचित्तस्तु शुचौ भूमावुपाविशत् ॥
अवरुह्य ततो यानाद्गरुडाद्वेदसंमितात् ।
द्वादशाब्दं तपश्चर्तुं मनो दध्रे जगत्पतिः ॥ [ 900 ]
फाल्गुनेन तु मासेन समारेभे जनार्दनः ।
शाकभक्षः कृतजपो वेदाध्ययनतत्परः ॥
किमुद्दिश्य जगन्नाथस्तपश्चरति मानदः ।
तत्र विद्मो यथाकामं दुर्ज्ञेयेश्वरचिन्तना ॥

---

( for $^{b}$ ) — ( L 865 ) $D_6$ $T_4$ $G_{2\,4}$ तत ( for स च ) $T_4$ $G_3$ $M_{1-3}$ गत: ( for तत. ). — $M_{2\,3}$ om line 667 — ( L 867 ) $T_{1\,2}$ $G_3$ मन शुद्धिश्च भविता ( for $^{a}$ ) $T_1$ पठन्नेव ( for °तस्ते )

Colophon — *Mention of the Epic* $Ds_2$ — *Mention of Khila* Dn $Ds_2$ $D_6$ $T_{1\,2}$ $G_{2-5}$ M. — *Subparvan* · Dn $Ds_2$ $D_6$ कैलासयात्रा — *Adhy name* Dn $Ds_2$ घण्टाकर्णमुक्तिप्रदानम्, $T_{1,2}$ $G_{3\,4}$ $M_4$ पिशाचदर्शनम् — *Adhy no* Dn 268, $Ds_2$ 267, $T_1$ $G_3$ 194, $T_2$ 196; $G_2$ 192, $G_5$ 195, $M_{1-3}$ 159

$G_1$ om the ref — ( L 868 ) $G_1$ इत्युक्त्वा ( for ततः स ). — ( L 871 ) $G_2$ युष्मत्सं- ( for तव सं- ) $T_2$ $G_1$ इत: ( for इति ). — ( L 876 ) $D_6$ धृतव्रता. ( for यत° ) — ( L 877 ) $Ds_2$ शिवम् ( for सदा ) — $Ds_2$ om. lines 878–879 —( L. 879 ) $G_4$ सदा ( for शिवम् ) — ( L 880 ) $D_6$ ऽभवत् ( for हरे ) Dn $Ds_2$ $T_{1\,2}$ $G_{1\,3-5}$ $M_4$ हरपार्श्वचर: सदा ( for $^{b}$ ) — ( L 882 ) $G_2$ -पशव ( for -रतय ) $D_6$ $T_4$ क्रीडन्ति वन्या. पशव: ( for $^{a}$ ) — ( L 884 ) $D_6$ योऽच्छिनद्, $T_4$ आच्छि° ( for अच्छि° ) — ( L 885 ) $D_6$ गता ( for ययु ) $T_2$ $G_3$ भूतानां दण्डपाणय: ( for $^{b}$ ) — ( L 887 ) $D_6$ प्रार्थिभि ( for °त ) Dn $Ds_2$ $T_2$ $G_4$ $M_4$ गिरि ( for नग. ) — ( L 888 ) Dn $Ds_2$ $G_{4\,5}$ $M_{2\,4}$ जगती ( for पृथिवी- ) $M_{1-3}$ शिवाय परमात्मने ( for $^{b}$ ) — $D_6$ $T_{1\,2,4}$ G om ( hapl ) lines 889–890 — ( L 890 ) $M_3$ जगत्पति ( for °तिम् ). — ( L 891 ) $M_1$ यस्य ( for यत्र ) $G_2$ क्रीडन्तस् ( for °न्ते ) $T_1$ यक्ष- ( for सिद्ध- ) — ( L 893 ) $Ds_2$ $T_1$ $M_{1\,3}$ विररास, $D_6$ °राव ( for °राम ) — ( L 895 ) $G_2$ मधुसूदन ; $G_4$ यदुपुंगव. ( for °नन्दन. ) — ( L 896 ) $T_{1\,2}$ $G_3$ शुभ· ( for शिव· ) — ( L. 898 ) $G_5$ शुचौ देशे उपागमत् ( for $^{b}$ ). — ( L 9 0 ) Dn $Ds_2$ $D_6$ $T_{1\,2,4}$ $G_{1-4}$ ततो हरि· ( for जगत्पति ) — ( L 901 ) Dn $Ds_2$ $D_6$ $T_{1\,2\,4}$ G $M_3$ जगत्पति: ( for जनार्दन ) — ( L. 902 ) $T_2$ कृततपो ( for °जपो ) — ( L 903 ) Dn $Ds_2$ $T_2$ $G_{1\,3-5}$ मानव: ; $D_6$ $T_1$ $M_2$ °द ( for °द: ). — ( L. 906 ) Dn $Ds_2$ $T_{1,2}$ $G_{1,3-5}$ गरुड का( $G_{1,4}$ क° )श्यपसुत,

तपस्यति तदा विष्णौ पर्वते भूतसेविते । [ 905 ]
गरुडस्ताक्ष्यतनय इन्धनानि समाचिनोत् ।
होमार्थं वासुदेवस्य चरतस्तप उत्तमम् ॥
चक्रराजोऽथ पुष्पाणि संचिनोति तदा हरेः ।
दिक्षु सर्वासु सर्वत्र ररक्ष जलजस्तदा ॥
खड्ग आहृत्य यत्नेन कुशान्सुबहुशस्तदा । [ 910 ]
गदा कौमोदकी चैव परिचर्यां चकार ह ॥
धनुःप्रवरमत्युग्रं शार्ङ्गं दानवभीषणम् ।
स्थितं हि पुरतस्तस्य यथेष्टं भृत्यवत्स्वयम् ।
जुहोति भगवान्विष्णुरेधोभिर्बहुभिः सदा ॥
आज्यादिभिस्तदा हव्यैरग्निं संपूज्य माधवः । [ 915 ]
सप्तार्चिषः समाप्तिं च समस्तव्यस्ततः कृती ॥
एकस्मिन्नेकदा मासे भुञ्जानो नियतात्मवान् ।
द्वितीये त्वथ पर्याये भुञ्जन्नेकेन केनचित् ॥
एकस्मिन्वत्सरे भुञ्जंस्तथैवैकेन केनचित् ।
समाप्य वत्सरं सर्वमेवमेव जगत्पतिः ॥ [ 920 ]
द्वादशाब्दे तथा पूर्णे ऊनमासे जगत्पतिः ।
जुह्वन्नग्निं समाध्यायन्पठन्मन्त्राञ्जनार्दनः ॥
आरण्यकं पठन्विष्णुः साक्षात्सर्वेश्वरो हरिः ।
आस्ते ध्यानपरस्तत्र पठन्प्रणवमुत्तमम् ॥

Colophon

वैशंपायन उवाच ।

तत इन्द्रः स्वयं तत्र आरुह्य गजमुत्तमम् । [ 925 ]
द्रष्टुं सर्वेश्वरं विष्णुं तपस्यन्तं समाययौ ॥
ततो यमस्तु भगवानारुह्य महिषं वरम् ।
किंकरैश्च स्वयं साक्षादाययौ नगमुत्तमम् ॥
प्रचेता हंसमारुह्य वारुणैश्च समन्वितः ।
श्वेतच्छत्रसमायुक्तः श्वेतव्यजनवीजितः । [ 930 ]
ययौ कैलासशिखरं द्रष्टुं केशवमञ्जसा ॥
अन्येऽपि च तथा देवा आदित्या वसवस्तथा ।
रुद्राश्चैव तथा राजन्द्रष्टुं केशवमाययुः ॥
सिद्धाश्च मुनयश्चैव गन्धर्वा यक्षकिंनराः ।
सर्वाश्चाप्सरसो राजन्नृत्तगीतविशारदाः ॥ [ 935 ]
ततो देवगणः सर्वः कैलासं समपद्यत ।
पर्वतो नारदश्चैव तथान्ये मुनिसत्तमाः ।
विस्मयस्थितलोलाक्षाः सर्वे देवगणास्तथा ॥
आश्चर्यं खलु पश्यध्वं न भूतं न भविष्यति ।
योगिध्येयः स्वयं कृष्णो यत्तप्यति गुरुः स्वयम् । [ 940 ]

---

$T_4$ तत. स गरुडस्ताक्ष्यंम्, $G_2$ गरुडस्ताक्ष्यंतां यात ( for ª ) —( L 909 ) $Dn_2$ $D_6$ $T_2$ $G_{1, 2\ 4\ 5}$ $M_4$ जलदस् ( for °जस् ) — $T_2$ om line 910 —( L 915 ) $D_6$ $T_4$ दिव्यैर् ( for हव्यैर् ) $G_3$ अयं ( for अग्निं ) —( L 916 ) $D_6$ समाप्तिश् ( for °प्तिं ) $G_2$ तत. ( for कृती ) $D_6$ समस्तव्यस्तव्याहृती: ( for ᵇ ). —( L 918 ) $T_1$ मध्याह्ने, Cal ed षण्मासे ( for पर्याये ) Dn $Ds_2$ $T_2$ $G_{1\ 4\ 5}$ केशव ( for केनचित् ) $M_1$ भुञ्जानो येन केनचित् ( for ᵇ ) —( L 919 ) $Dn_1$ $M_2$ वासरे ( for वत्सरे ). $G_5$ केशव. ( for केनचित् ). —( L 920 ) Dn $Ds_2$ $T_{1, 4}$ $G_{4\ 5}$ तत्तप, Cal ed तु तत· ( for वत्सरं ) $D_6$ सम्यग् ( for सर्वम् ) — $T_{1\ 2}$ $G_{1, 4}$ om line 921. —( L 921 ) $D_6$ माघमासे ( for ऊन° ). —( L 922 ) $G_4$ समं ध्यायन् $M_3$ सदा ध्यायन्, Bom Poona eds. G( ed ) समास्थाय ( for °ध्यायन् ) $D_6$ $T_2$ $G_{1\ 3-5}$ $M_1$ मन्त्रं ( मन्त्रान् ). —( L 923 ) $M_4$ लोके ( for साक्षात ) $D_6$ $M_{1-3}$ लोकेश्वरो ( for सर्वे° ). $G_2$ सर्वलोकेश्वरो हरि ( for ᵇ ) —( L. 924 ) $G_2$ यदुवरस् ( for ध्यानपरस् )

COLOPHON. — *Mention of the Epic*. $Ds_2$ — *Mention of Khila* Dn $Ds_2$ $D_6$ $T_{1\ 2\ 4}$ G M — *Sub-parvan* Dn $Ds_2$ $G_4$ $M_{2-4}$ कैलासयात्रा — *Adhy no* Dn 269; $Ds_2$ 268, $T_1$ $G_3$ 195, $T_2$ $G_1$ 197, $T_4$ 164, $G_2$ 190, $G_4$ 194; $G_5$ $M_4$ 196, $M_{1-3}$ 160

( L 925 ) $D_6$ $T_{1\ 2\ 4}$ $G_{1\ 3, 5}$ M शक्र ( for तत्र ) —( L. 927 ) $D_6$ स भगवान्; $T_4$ तु भवनाद्, $G_2$ $M_{2\ 3}$ स्वभवनाद् ( for तु भगवान् ) —( L 928 ) $D_6$ $T_2$ $G_{1\ 5}$ $M_{1-3}$ स्वकै· ( for स्वयं ) — ( L 929 ) $T_1$ $G_5$ वारणैश् ( for वारु° ). ( L 930 ) $G_4$ वाल- ( for श्वेत- ) $T_3$ सयुतम्; $G_1$ -दीपित. ( for -वीजित ) — $T_2$ $G_{1\ 3}$ om ( hapl ) lines 932–933 $G_2$ om lines 933-934 —( L 933 ) $Dn_2$ अञ्जसा ( for आययु ) —( L 934 ) Cal ed तथान्ये मुनिसत्तमा. ( for ᵇ ) —( L 936 ) $Dn_2$ $D_6$ $T_{1\ 2}$ G -गणा. सर्वे ( for -गण: सर्व· ) — $G_2$ om lines 937–938. —( L. 939 ) $T_1$ $G_{3\ 5}$ -स्थिति ( for स्थित ) $Dn_2$ $D_6$ $T_{1\ 4}$ $G_{3\ 5}$ $M_4$ सर्व· ( for सर्वे ) — After line 938, $T_4$ $G_2$ ins

9** को न्वत्र विस्मयो भूयादिति ते मेनिरे गणाः ।

— M om 939–940 —( L 940 ) $T_1$ विष्णुर् ( for कृष्णो ).

को न्वत्र समयो भूयादिति ते मेनिरे गणाः ॥
ततः समाप्ते सकले जगत्पते-
र्व्रते समूले सकलेश्वरः शिवः ।
द्रष्टुं हरिं लोकहितैषिणं प्रभुं
ययौ भवान्या सह भूतसंघैः ॥ [ 945 ]
सार्धं कुबेरेण सगुह्यकेन
प्रियेण सख्या प्रभुरीश्वरः शिवः ।
स्वयं जटी भूतपिशाचसंवृतः
शरी च खड्गी शशिशेखरः शिवः ॥
करेण बिभ्रत्सह दर्भकुण्डिकां [ 950 ]
करेण साक्षादपरेण दीपिकाम् ।
अन्येन बिभ्रन्महतीं सडिण्डिमां
शूलं च बिभ्रन्नपरेण बाहुना ॥
गुणान्सरुद्राक्षकृतान्समुद्वह-
ञ्जटाभिरापिङ्गलताम्रमूर्तिभिः । [ 955 ]
विराजमानः प्रभुरिन्दुशेखरो
वृषेण युक्तः सुसितेन शंकरः ॥
उमास्तनद्वंद्वसमर्पिताननः
स्तया समाश्लिष्य निपीडिताधरः ।
गङ्गाम्बुविक्षालितचन्द्रशेखर- [ 960 ]
स्तां चापि वीक्षन्बहुशस्तदा शिवः ॥
भस्माङ्गरागैरनुलेपिताननो
महोरगैर्बद्धजटः सनातनः ।
शिरःकपालैः परिशोभितस्तदा
द्रष्टुं हरिं केशवमभ्ययाच्छिवः ॥ [ 965 ]
यमाहुरग्र्यं पुरुषं महान्तं
पुरातनं सांख्यनिबद्धदृष्टयः ।
यस्यापि देवस्य गुणान्समग्रां-
स्तत्त्वांश्चतुर्विंशतिमाहुरेके ॥
यमाहुरेकं पुरुषं पुरातनं [ 970 ]
कणादनामानमजं महेश्वरम् ।
दक्षस्य यज्ञं विनिहत्य यो वै
विनाश्य देवांश्च पुरा पुरातनः ॥
यं विदुर्भूततत्त्वज्ञं भूतं भूतेशभावनम् ।
वामदेवं विरूपाक्षमाहुस्तत्त्वविदो जनाः ॥ [ 975 ]
महादेवं सहस्राक्षं कालमूर्तिं चतुर्भुजम् ।
रुद्रं रोदननामानमाहुर्विश्वेश्वरं शिवम् ॥
अप्रमेयमनाधारमाहुर्माहेश्वरा जनाः ।
नग्नं नग्नपरीतं तु नागिनं नग्नवर्चसम् ।
आहुर्विश्वेश्वरं शान्तं शिवमादि सनातनम् ॥ [ 980 ]
तस्य मूर्तिरिमाः सर्वा धराद्याः सकला नृप ॥
भूमिरापोऽनलो वायुः खं सूर्यश्च तथा शशी ।
अग्निश्च यजमानश्च प्रकृतिश्चैवमष्टधा ॥
महादेवो महायोगी गिरीशो नीललोहितः ।

---

T4 हरि G2 गिरौ (for गुरु॰) —T4 G2 om line 941 —(L 941) D6 M विस्मयो (for समयो) —(L. 942) D6 M1–3 सकले जगत्पतिर्, T4 ऽहनि शंकरस्य (for सकले जगत्पतेर्) —(L 943) T1 रत (for व्रते) D6 वृत. स शौरि सकलेश्वरेश्वर — G3 om (hapl) lines 944–949 —(L 944) T3 G1 5 हितं, T4 सदा (हरि) —(L 945) T2 G1 सिद्धसंघै॰ (for भूत॰) —(L 947) Dn Ds2 T4 G4 5 सख्या प्रियेण (by transp) — G2 om (hapl) lines 948–949 —(L. 949) T1 चर्मी (for शरी) Dn1 Ds2 G4 शशिखण्डशेखर॰ (G4 ॰मण्डनः) (for ॰शेखर शिव॰) —(L. 950) G5 दण्ड- (for दर्भ-). —(L 951) D6 अपरे प्र (for अपरेण) —(L 953) M1 3 बिभ्रद् (for बिभ्रन्) G4 पाणिना (for बाहुना). —(L. 954) D8 गणान् (for गु॰) —(L. 955) T1 3 G1 3–5 ताम्रमूर्ति (for ॰र्तिभि.) —(L 957) T1 सुगतेन (for सुसि॰) —(L 961) M2, 4 तया निरीक्षन् (for ता चापि वीक्षन्) D6 G2 सदा (for तदा) —(L. 964) D8 बहु- (for परि) —(L 965) D6 ययौ; M1 3 द्रुतं (for हरिं). — G4 om lines 966–969 —(L 967) M2 पुरातनाः (for ॰तनं) —(L 968) G3 तस्य (for यस्य) —(L 970) M3 एके (for एकं). —(L 973) Dn Ds2 T4 G2 4 असुरान्सनातन॰, D6 T1 2 G1 3 5 M1, 3 असुरान्पुरातनम् (T3 G1 3 ॰न) (for च पुरा सनातन) —(L 979) Dn Ds2 T1, 2 4 त्वग्नि- (for नग्न). —(L 980) T1 शंभुं (for शान्तं). —(L 981) D6 पश्य (for तस्य) —(L 982) G2 अग्निर् (for भूमिर्) Dn1 ऽनिलो (for ऽनलो) —(L 983) M4 तथैव (for अग्निश्च). —(L. 985) Dn2 T2, 4 G2, 4 M4 महाभर्ता;

आदिकर्ता महीभर्ता शूलपाणिरुमापतिः । [ 985 ]
द्रष्टुं विश्वेश्वरं विष्णुं भूतसंघैः समाययौ ॥

Colophon

वैशंपायन उवाच ।

तस्याग्रे समपद्यन्त भूतसंघाः सहस्रशः ।
घण्टाकर्णो विरूपाक्षः कुण्डभानुः कुमुद्वहः ॥
दीर्घलोमा दीर्घशिखो दीर्घबाहुर्निरञ्जनः ।
उरुवक्त्रः शतमुखः शतग्रीवः शतोदरः ॥ [ 990 ]
कुण्डोदरो महाग्रीवः स्थूलजिह्वो द्विबाहुकः ।
पार्श्ववक्त्रः सिंहमुख उन्नतांसो महाहनुः ।
त्रिबाहुः पञ्चबाहुश्च व्याघ्रवक्त्रः सिताननः ॥
एते चान्ये च बहवो दीर्घास्या दीर्घलोचनाः ।
नृत्यन्तः प्रहसन्तश्च स्फोटयन्तः परस्परम् ॥ [ 995 ]
तथान्ये घोररूपाश्च तथान्ये विकृताननाः ।
प्रेतभक्षाः प्रेतवहा मांसशोणितभोजनाः ॥
शवानि सुबहून्याशु भक्षयन्तस्ततस्ततः ।
पिबन्तो रुधिरं घोरं खण्डयन्तः शवं बहु ॥
कराला विनता दीर्घा धमनिस्नायुसंतताः । [ 1000 ]
नग्नाश्चैव सचीराश्च शूलाग्रप्रोतमानुषाः ॥
शिरोमालावृताः केचिदान्त्रपाशावपाशिताः ।
डिण्डिमैरट्टहासैश्च नादयन्तो वसुंधराम् ।
कपालिनो भैरवाश्च जटिला मुण्डिनस्तथा ।
एवं बहुविधा घोराः पिशाचा विकृताननाः ॥ [ 1005 ]
तथान्ये मुनिवीराश्च ध्यायन्तः परमेश्वरम् ।
पठन्तो वेदशास्त्राणि साङ्गानि विविधानि च ॥
कुण्डिकास्थकराः केचित्केचित्कपिशचीरिणः ।
केचित्कौपीनवसनाः केचित्कर्पटसंवृताः ॥
स्तुवन्तः शंकरं भक्त्या स्तोत्रैर्माहेश्वरैस्तथा । [ 1010 ]
एकत्र ते मुनिगणा अपरत्र गणास्तथा ॥
अन्यत्र सिद्धगन्धर्वाः प्रियाभिः सह संगताः ।
नृत्यन्ति नृत्यकुशला गायन्ति स्म च कन्यकाः ॥
विद्याधरास्तथान्यत्र स्तुवन्त. शंकरं शिवम् ।
ननृतुस्तस्य पुरतो गच्छन्तोऽप्सरसां गणाः ॥ [ 1015 ]
एवमेतैर्महाघोरैः पिशाचैर्भूतकिंनरैः ।
मुनिभिश्चाप्सरोभिश्च समं शर्वः समाययौ ॥
यत्र विश्वेश्वरो विष्णुस्तपस्तेपे सुदारुणम् ।
यत्र ते लोकपालाश्च तिष्ठन्ति स्म दिदृक्षया ।
उमया लोकभाविन्या गङ्गया चन्द्रशेखरः ॥ [ 1020 ]

---

M1 3 महीकर्ता (for °भर्ता) — (L. 986) M3 सहाययौ (for समा°)

COLOPHON — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 D6 T1 2 4 G M — *Sub-parvan* Dn Ds2 M2–4 कैलासयात्रा — *Adhy name* Dn 270; Ds2 259 T1 G3 196, T2 G1 198, T4 165, G2 189, G4 165, G4 195, G5 M4 197, M2 3 161

G3 om lines 987–1024 T4 om the ref — (L 988) Dn D6 G1 2 4 5 कुण्डधारः, T1 कुमरश्च (for कुण्डभानु) T4 कुरूद्वह (for कुमु°) T2 कुन्दर सकुमुद्वह (for [b]) — (L 989) Dn Ds2 T4 G2 4 दीर्घभुजो, T1 2 °शिरा; G1 °शिरो (for °शिखो) — G4 om lines 990–993 — (L. 990) Dn1 G2 उरुनेत्र., D6 उग्रवक्त्र (for उरु°). M4 शितोदर. (for शतो°) — (L 992) G1 सिंहमुखी (for °मुख) — (L 994) G5 द्विबाहु (for त्रि°) D6 शतानन ; T1 2 G1. 5 सनातन (for सिताननः). — (L. 996) M1–3 पिशाचा (for the second तथान्ये). D6 तथान्ये सुकृताननाः (for [b]). — (L 997) G2 प्रेतसंघाः ; M4 °रक्षा (for °भक्षा) Dn1 T1 2 G1 2. 4 5 प्रेतवाहा (for °वहा). — (L 998) T2 G1 शवान्सुबहुशस्तत्र (for [a]) — G4 om line 999 — (L 999) Dn Ds2 T1 2 G1 5 शवान्बहून् (for शवं बहु) — (L 1000) D6 T4 M2 4 विकृता (for वितता) T2 घोरा (for दीर्घा) — (L 1001) Dn Ds2 T2 G1 2. 4 नानाविधा., D6 भग्नाश्चैव (for नग्ना°) Dn Ds2 D6 T2 4 G1. 5 M4 सुचीराश्च (for सची°) T1 नग्नाश्च सुचिराश्चैव (for [a]). — (L 1002) T2 M2 शिला- (for शिरो-). D6 आन्त्रपाशैश्च पाशिताः, M3 4 °पाशविपाशिताः (for [b]). — (L 1004) M1 कलापिनो (for कपालिनो) G4 जटिनो (for जटिला) — (L 1005) T1 2 G1 5 M2 4 एव बहुविधाकाराः (for [a]) — (L 1007) Dn Ds2 G2 4 -वाक्यानि (for -शास्त्राणि) — (L 1008) T1 कुण्डिकान्तकराः केचित्; G2 °स्थिकराः केचित् (for [a]) Dn Ds2 D6 T1 2 G1 2 5 केचित्कुशाविचीरिण. (for [b]) — (L 1009) T4 G2 4 कार्पास- (for कर्पट) — (L 1011) D6 T1. 2 G1 4 5 M मुनिवरा (for °गणा) — (L. 1012) Ds2 D6 T1 4 M3 सिद्धा (for सिद्ध-) — (L 1013) Cal ed नृत्येऽपि कुशलाः सर्वे

स सर्वलोकप्रभवो हरिः शिवो
जटी च साक्षात्प्रणवात्मकः कृती ।
द्रष्टुं हरिं विष्णुमुदारविक्रमो
ययौ यथेष्टं पिशिताशनैर्वृतः ॥

Colophon.

वैशंपायन उवाच ।

एवं बहुविधैर्भूतैः पिशाचैरुरगैः सह । [ 1025 ]
आगत्य भगवान्रुद्रः शंकरो वृषवाहनः ॥
ददर्श विष्णुं देवेशं तपन्तं तप उत्तमम् ।
जुह्वानमग्निं विधिवद्द्रव्यैर्मेध्यैर्जगत्पतिम् ॥
गरुडाहृतकाष्ठं तु जटिलं चीरवाससम् ।
चक्रेणानीतकुसुमं खड्गानीतकुशं तथा ॥ [ 1030 ]
गदाकृतसमाचारं देवदेवं जनार्दनम् ॥
इन्द्राद्यैर्देवसंघैश्च वृतं मुनिगणैः सह ।
अचिन्त्यं सर्वभूतानां ध्यायन्तं किमपि प्रभुम् ॥
अवरुह्य वृषाच्छर्वो भगवान्भूतभावनः ।
ततः प्रीतः प्रसन्नात्मा ललाटाक्ष उमापतिः । [ 1035 ]
ततो भूतपिशाचाश्च राक्षसा गुह्यकास्तथा ।
मुनयो विप्रवर्याश्च जयशब्दं प्रचक्रिरे ॥
जय देव जगन्नाथ जय रुद्र जनार्दन ।
जय विष्णो हृषीकेश नारायण परायण ॥
जय रुद्र पुराणात्मञ्जय देव हरेश्वर । [ 1040 ]
आदिदेव जगन्नाथ जय शंकर भावन ॥
जय कौस्तुभदीप्ताङ्ग जय भस्मविराजित ।
जय चक्रगदापाणे जय शूलिंस्त्रिलोचन ॥
जय मौक्तिकदीप्ताङ्ग जय नागविभूषण ।
इति ते मुनयः सर्वे प्रणाम चक्रिरे हरिम् ॥ [ 1045 ]
तत उत्थाय भगवान्दृष्ट्वा देवमवस्थितम् ।
वृषध्वजं विरूपाक्षं शंकरं नीललोहितम् ।
ततो हृष्टमना विष्णुस्तुष्टाव हरमीश्वरम् ॥

भगवानुवाच ।

नमस्ते शितिकण्ठाय नीलग्रीवाय वेधसे ।
नमस्ते अस्तु शोचिषे नमस्ते उपवासिने ॥ [ 1050 ]
नमस्ते अस्तु मीढुषे नमस्ते गदिने हर ।
नमस्ते विश्वमूर्तये वृषाय वृषरूपिणे ॥
अमूर्ताय च देवाय नमस्तेऽस्तु पिनाकिने ।

---

( for $^a$ ). — ( L 1017 ) $T_4$ मुनिभिश्चैव प्रमथै ( for $^a$ ) — ( L 1021 ) $D_6$ $T_{1\ 2}$ $G_{1\ 2}$ $M_{1\ 2\ 4}$ हर· शिवो , $T_4$ भवो विभुर् ( for हरि शिवो ) — ( L 1022 ) $T_1$ प्रणवात्मकं, $M_{1.4}$ °वाकृति (( for °वात्मक ) — ( L 1023 ) $D_6$ $G_2$ बिभ्रद् ( for विष्णुम् ) $D_6$ उदारविभ्रमं , $T_{1\ 2}$ M °विक्रमं ( for °विक्रमो )

Colophon — *Mention of the Epic* $Ds_2$ —*Mention of Khila* Dn $Ds_2$ $D_6$ $T_{1\ 2\ 4}$ $G_{1\ 2\ 4\ 5}$ M — *Sub-parvan* Dn $Ds_2$ $D_6$ M कैलासयात्रा — *Adhy no* . Dn 271, $Ds_2$ 270 · $T_1$ 197 , $T_2$ 199 , $T_4$ $G_1$ 166 , $G_2$ 192 ; $G_4$ 196 , $G_5$ $M_4$ 198 , $M_{1-3}$ 162

( L 1025 ) $D_6$ अनुगै· ( for उरगैः ) — ( L 1028 ) $D_6$ $G_2$ जुह्वन्तम् ( for जुह्वानम् ) Dn $T_{1\ 4}$ $G_{1-4}$ $M_{1\ 2\ 4}$ द्रव्यैर् ( for मेध्यैर् ) — $T_4$ om lines 1029–1032. — ( L 1029 ) $G_1$ पीत- ( for चीर- ) — ( L 1030 ) $D_6$ $G_2$ चक्रानीतकुशासनम् ( $G_2$ °दिकम् ) ( for $^b$ ). — ( L 1032 ) $T_1$ -गन्धर्वैर् ( for संघैश्च ) $G_5$ तथा ( for सह ). — $M_4$ om. line 1033 $M_{1-3}$ om line 1034 — ( L 1037 ) $M_{1-2\ 4}$ -संघाश् ( for -वर्याश् ). — ( L. 1040 ) $M_4$ रुद्र ( for देव ) $T_2$ $G_{1.2.4}$ $M_4$ हरे हर , $G_3$ $M_{1-3}$ हरे हरे ( for हरेश्वर ) — ( L 1043 ) $D_6$ $T_4$ $G_2$ $M_{1-3}$ कपर्दिने ( for त्रिलोचन ) — ( L 1045 ) $T_2$ [इ]मे ( for ते ) — ( L 1046 ) $M_{2\ 4}$ देवेशो ( for भगवान् ) $D_6$ उमापतिम् , $G_3$ उपस्थितम् ( for अवस्थि° ) — ( L 1048 ) $D_6$ ईश्वर ( for °रम् ) — $D_6$ कृष्ण ( for भगवान् ) — ( L 1049 ) $D_6$ नीलकण्ठाय ( for शिति° ) $G_5$ नीलकण्ठाय ( for °ग्रीवाय ) — ( L 1050 ) $G_2$ नमस्ते गदिने तुभ्यं , $G_4$ नमोऽस्तु शोचिषे तुभ्यं , Bom Poona eds G (ed ) °स्ते शोचिषे अस्तु ( for $^a$ ) $D_6$ $T_4$ अस्तु मीढुषे , $G_2$ विश्वमूर्तये ( for उपवासिने ). — $G_2$ om line 1051 — ( L 1051 ) $T_2$ नमस्ते हरये तुभ्यं ; Bom Poona eds. G (ed ) °स्ते मीढुषे अस्तु ( for $^a$ ). $T_2$ $G_{2-5}$ हरे ( for हर ) $D_6$ $T_4$ नमस्ते विश्वमूर्तये ( for $^b$ ) —( L. 1052 ) Dn $Ds_2$ $G_1$ विश्वतनवे , $T_1$ °कर्त्रे ते, $T_2$ °मूर्ताय ( for °मूर्तये ) $T_4$ नमस्ते जटिने तुभ्यं ( for $^a$ ) $D_6$ वृषाय वृषसिंहाय वृषरूपाय ते नम ; $G_4$ नमस्ते गदिने तुभ्यं नमस्ते विश्वमूर्तये — After line 1052, $G_4$ ins.

10** उपनिर्याय च नमो वृषाय वृषरूपिणे ।

— ( L 1053 ) $M_{1-3}$ अदकाय ( for अमूर्ताय ) $T_1$ मूर्ताय ( for देवाय ) — Afer line 1053, $T_4$ ins ;

नमः कुब्जाय कूपाय शिवाय शिवरूपिणे ॥
नमस्तुण्डाय तुष्टाय नमस्तुटितुटाय च ।　[ 1055 ]
नमः शिवाय शान्ताय गिरिशाय च ते नमः ॥
नमो हराय हिप्राय नमो हरिहराय च ।
नमोऽघोराय घोराय घोरघोरप्रियाय च ॥
नमोऽघण्टाय घण्टाय नमो घटिघटाय च ।
नमः शर्वाय शान्ताय भूताधिपतये नमः ॥　[ 1060 ]
नमो नमो विरूपाय पुराय पुरहारिणे ।
नम आद्याय बीजाय शुचये भस्मरूपिणे ॥
नमः पिनाकहस्ताय नमः शूलासिधारिणे ।
नमस्ते खट्वहस्ताय नमस्ते कृत्तिवाससे ॥
नमस्ते वामदेवाय नम आकाशमूर्तये ।　[ 1065 ]
हराय हरिरूपाय नमस्ते तिग्मतेजसे ॥
भक्तप्रियाय भक्ताय भक्तानां वरदायिने ।
नमोऽभ्रमूर्तये देव जलमूर्तिधराय च ॥
नमश्चन्द्राय देवाय सूर्याय च नमो नमः ।
नमः प्रधानदेवाय भूतानां पतये नमः ॥　[ 1070 ]
नमः करालमुण्डाय विकृताय कपर्दिने ।
अजाय च नमस्तुभ्यं भूतभावन भावन ॥
नमोऽस्तु हरिकेशाय पिङ्गलाय नमो नमः ।
नमस्तेऽभीशुहस्ताय भीरुभीरुहराय च ॥
हराय भीतिरूपाय घोराणां भीतिदायिने ।　[ 1075 ]
नमो दक्षमखघ्नाय भगनेत्रापहारिणे ॥
उमापते नमस्तुभ्यं कैलासनिलयाय च ।
आदिदेवाय देवाय भवाय भवरूपिणे ॥
नमः कपालहस्ताय नमोऽजमथनाय च ।
त्र्यम्बकाय नमस्तुभ्यं त्र्यक्षाय च शिवाय च ॥ [ 1080 ]
वरदाय वरेण्याय नमस्ते चन्द्रशेखर ।
नम इध्माय हविषे ध्रुवाय च कुशाय च ॥
नमस्ते शतद्युम्नाय नागपाशप्रियाय च ।
विरूपाय सुरूपाय भद्रपानप्रियाय च ॥
श्मशानरतये नित्यं जयशब्दप्रियाय च ।　[ 1085 ]
खरप्रियाय खर्वाय खराय खररूपिणे ॥
भद्रप्रियाय भद्राय भद्ररूपधराय च ।

---

11** नमो घोराय घोराय घोरघोरप्रियाय च ।
— (L 1054) $T_1$ कक्ष्याय (for कूपाय). — $M_1$ om line 1055 — (L 1055) $G_{1, 2, 4}$ नमस्तुष्टाय (for °स्तुण्डाय) Dn $Ds_2$ $G_4$ तुष्याय, $D_6$ $T_2$ $G_1$ तुण्डाय, $T_4$ तुण्ड्याय; $G_3$ कूप्याय (for तुष्टाय) $D_6$ नमस्तदितुडाय च, $T_2$ नमस्त्वपि तृणाय च (for $^b$) —(L 1056) $G_2$ हरीशाय (for गिरि°) (L 1057) $T_1$ हिताय, $T_4$ हिरण्याय (hypermetric), $G_2$ ऽङ्गिराय; $G_{3, 5}$ $M_{1, 3, 4}$ हिराय (for हराय) $T_{1, 4}$ विप्राय (for हिप्राय) $D_6$ नामायाभिप्राय नमो (for $^a$) $G_{3, 5}$ $M_{2, 4}$ हिरिहिराय (for हरिह°) — (L. 1058) $T_{1, 2}$ $G_{1, 3-5}$ नमोऽस्तु ($G_1$ °मस्तु) घोरघोराय (for $^a$) $D_6$ घोराघोर-; $T_1$ $G_{3, 5}$ नमो घोर-; $M_1$ घोररूप- (for घोरघोर-). — (L 1059) $G_1$ घण्टघटाय (for घटि°) — (L 1060) $T_1$ शिवाय (for शर्वाय) — (L 1061) Dn $Ds_2$ $T_1$ नमो विरूपरूपाय (for $^a$) — (L 1062) Dn $Ds_2$ $G_{1, 4}$ शुचयेऽष्टस्वरूपिणे, $T_4$ °ये भस्मधारिणे (for $^b$) — $G_2$ om (hapl) lines 1063$^b$–1064$^a$ — (L 1064) $T_{1, 2}$ $G_{1, 3}$ खड्ग- (for खट्व-) Dn $Ds_2$ $D_6$ $T_4$ $G_4$ M नमः खड्गाङ्गहस्ताय (for $^a$). —(L 1065) Dn $Ds_2$ $T_4$ नमस्ते देवदेवाय; $T_1$ °स्ते मन्यवे देव, $T_2$ $G_{1, 3-5}$ $M_{1, 3}$ °स्ते वायवे देव (for $^a$) — (L 1066) $T_1$ $G_3$ $M_3$ हररूपाय (for हरि°) — (L. 1067) $D_6$ भक्ति- (for भक्त-). $D_6$ प्रियकामिने, $G_2$ प्रियदायिने (for वर°) — $T_1$ om (hapl) lines 1068–1075 —(L 1068) $M_{1, 3}$ भूमूर्तये (for ऽभ्रमू°) Dn $Ds_2$ $T_4$ $G_4$ जगन्मूर्ति (for जलमूर्ति-) — (L 1069) $G_2$ सूर्याय देवाय (by transp) — $G_2$ $M_3$ om line 1070 —(L 1071) $M_3$ -घोराय (for -मुण्डाय) Dn $Ds_2$ $T_4$ $G_4$ करालाय च मुण्डाय (for $^a$) — (L 1072) $Dn_1$ यज्ञ (for भूत) $G_2$ -मूर्तये (for -भावन) — (1074) $D_6$ $G_2$ M -भयाय (for -हराय) —(L 1075) $D_6$ $T_4$ घोररूपाय, $T_2$ $G_1$ भीम° (for भीति°) $G_2$ M हरये घोररूपाय (for $^a$) $D_6$ $T_4$ $G_2$ M भीरूणां (for घोराणा) M भीरु- (for भीति) —(L 1076) $T_1$ भृगु- (for भग) — $M_{2, 4}$ om (hapl) lines 1078–1080 — (L 1078) $G_2$ देवाय, $G_3$ भाचाय (for भवाय) — $T_2$ $G_1$ om lines 1081–1085 $G_2$ om lines 1081–1083 —(L 1082) $Dn_1$ दध्याय (for इध्माय) $D_6$ $T_{1, 4}$ $G_2$ स्रुवाय (for ध्रु°) $Dn_2$ $D_6$ $G_3$ कृशाय (for कु°) — $G_4$ om (hapl) lines 1083–1085 — (L 1083) Bom Poona eds G (ed) नमस्ते शक्तियुक्ताय (for $^a$). $G_3$ om lines 1083$^b$–1087$^a$ — (L 1084) $D_6$ विरुद्धाय (for विरूपाय) $D_6$ भद्रवादि-, $T_4$ $M_{2, 4}$ °पाद-; $M_1$ °वाद- (for °पान-) — $D_6$ $M_3$ om. (hapl) lines 1085–1091 — (L 1085) $M_{1, 2, 4}$ तुभ्यं (for नित्यं) — (L 1086) $T_{1, 2}$ $G_1$ शर्वाय (for ख°)

विरूपाय सुरूपाय महाघोराय ते नमः ॥
घण्टाय घण्टनादाय घण्टभूपणभूषिणे ।
तीव्राय तीव्ररूपाय तीव्ररूपप्रियाय च ॥ [ 1090 ]
नग्नाय नग्नरूपाय नग्नरूपप्रियाय च ।
भूतावास नमस्तुभ्यं सर्वावास नमो नमः ॥
नमः सर्वात्मने तुभ्यं नमस्ते भूतिदायिने ।
नमस्ते वामदेवाय महादेवाय ते नमः ॥
का नु वाक्स्तुतिरूपा ते को नु स्तोतुं प्रशक्नुयात् । [1095]
कस्य वा स्फुरते जिह्वा स्तुतौ स्तुतिमतां वर ॥
क्षमस्व भगवन्देव भक्तोऽहं ध्याहि मां हर ।
सर्वात्मन्सर्वभूतेश ध्याहि मां सततं हर ॥
रक्ष देव जगन्नाथ लोकान्सर्वात्मना हर ।
ध्याहि भक्तान्सदा देव भक्तप्रिय सदा हर ॥ [ 1100 ]

Colophon.

वैशंपायन उवाच ।

ततो वृषध्वजो देवः शूली साक्षादुमापतिः ।
करं करेण संस्पृश्य विष्णोश्चक्रधरस्य ह ॥
प्रोवाच भगवान्रुद्रः केशवं गरुडध्वजम् ।
शृण्वतां सर्वदेवानां मुनीनां भावितात्मनाम् ॥
किमिदं देवदेवेश चक्रपाणे जनार्दन । [ 1105 ]
तपश्चर्या किमर्थं ते प्रार्थना तव का विभो ।
स्वयं विष्णुर्भवान्नित्यस्तपस्त्वं तपसां हरे ॥
पुत्रार्थं यदि ते देव तपश्चर्या जनार्दन ।
पुत्रो दत्तो मया देव पूर्वमेव जगत्पते ॥
शृणु तत्रापि भगवन्कारणं कारणात्मक ॥ [ 1110 ]
तपश्चर्तुं प्रवृत्तोऽहं कुतश्चित्कारणाद्धरे ।
वर्षायुतं महाघोरं पुरा कृतयुगे तदा ॥
भवानी तत्र मे देव परिचर्तुं तदाभवत् ।
पित्रा नियुक्ता देवेश उमैषा वरवर्णिनी ।
भीत इन्द्रस्तदा देव मारं मां प्रैषयत्तदा ॥ [ 1115 ]
मधुना सह संयुक्तो मारो मामागतस्तदा ।
लक्ष्यं मामकरोत्तत्र बाणस्य प्रेषितस्य ह ॥
एषा मां सेवते तत्र दानात्पुष्पादिना हरे ॥
ततः क्रुद्धोऽहमभवं दृष्ट्वा मारं तथाविधम् ।
क्रुध्यतो मम देवेश नेत्रादग्निः पपात ह ॥ [ 1120 ]
सोऽयमग्निस्तदा मारं भस्मसात्कृतवांस्तदा ।
अचिन्तयं तदा विष्णो शक्रस्यैतच्चिकीर्षितम् ॥
ततःप्रभृति देवेश दया तं प्रति वर्तते ।

— G2 om 1087[b]-1088[a] — (L 1088) T1 घोररूपाय, M2 महामेघाय (for °घोराय) — (L 1089) Dn Ds2 T4 घण्टभूषाय, G4 °भूताय (for °नादाय) T1 2 G1 3 5 घण्टानादाय घण्टाय (for [a]) G2 घण्टाघण्टाय ते नमः (for [b]) —G4 om line 1091 —(L 1092) Dn Ds2 D6 T4 भूतवास (for भूता°) D6 लोकवास, G2 M3 सर्वं° (for सर्वा°) — D6 om (hapl) lines 1093-1094 — (L. 1093) Dn Ds2 नमस्ते भूतिदायक, T1 4 G3 °स्ते भूतदायिने, G4 °स्ते भूतदायक (for [b]) — (L 1095) D6 सनिरूपा (for स्तुति°) — (L 1096) G3 वाक् (for वा) T1 स्फुरते कस्य जिह्वा तु (for [a]) G3 कृतौ (for स्तुतौ) — (L 1097) Dn Ds2 G3 4 त्राहि (for ध्याहि) — (L 1098) Dn Ds2 D6 T4 G3 4 त्राहि (for ध्याहि) D6 वर, G2 हरे (for हर) — D6 G2 om (hapl) line 1099 — (L. 1099) T2 सह; T4 हरे (for हर) — (L. 1100) Dn Ds3 D6 T1 2 G4 त्राहि (for ध्याहि) T2 भक्तं (for भक्तान्)

COLOPHON — *Mention of the Epic* · Ds2 — *Mention of Khila* Dn Ds2 D6 T1, 2, 4 G4 — *Sub parvan* · Dn Ds2 D6 T4 G4 M4 कैलासयात्रा — *Adhy name*. G3 कृष्णेन स्तुति, G4 ईश्वरस्तुति, M1 रुद्रस्तव. — *Adhy no*. Dn 272, Ds2 271, T1 G3 198, T2 G1 200, T4 167; G2 193, G4 197, G5 199, M1-3 163, M4 199

T2 G1 om. the ref — (L 1101) G4 शिव (for शूली) — (L 1102) G5 करे वा (for करेण) — (L 1104) M3 ऋषीणां (for मुनीनां) — (L 1107) Dn1 D6 T4 G3 नित्यं (for नित्यस्) D6 T4 M1 3 तपतां (for तपसां) G4 तपस्त्वं तपतां वर (for [b]) — (L. 1108) Cal ed प्रति (for यदि) — (L 1109) G4 जनार्दन (for जगत्पते) — (L 1110) D6 करुणात्मक (for कारणा°). — (L 1111) D6 G2 कारणान्तरे (for °णाद्धरे) — (L. 1112) Dn1 ऽनघ (for तदा) — (L 1113) D6 G2 4 तपश्चर्तुं (for परिचर्तुं) D6 गताभवत्, T1 तथावहत् (for तदाभवत्) — (L 1114) G3 4 मम (for उमा) — G4 om lines 1116-1118 — (L 1117) G2 कथं (for लक्ष्यं). — (L 1118) T1 3 G3 देवी (for दानात्) — (L 1121) Dn Ds2 हरे (for तदा) — G4 om. lines 1122-1124.

ब्रह्मणा च नियुक्तोऽस्मि प्रीतस्तत्र जनार्दन ॥
नियुक्तः पुत्ररूपेण स ते देव जगत्पते । [ 1125 ]
ज्येष्ठस्तव सुतो देव प्रद्युम्नेत्यभिविश्रुतः ॥
स्मरं तं विद्धि देवेश नात्र कार्या विचारणा ।
इत्युक्त्वा पुनराहेदं याथात्म्यं दर्शयन्निव ।
मुनीनां श्रोतुकामानां याथात्म्यं तत्र सत्तम ॥
अञ्जलिं संपुटं कृत्वा विष्णुमुद्दिश्य शंकरः । [ 1130 ]
उमया सार्धमीशानो याथात्म्यं वक्तुमैहत ॥
हरे कुर्वति तत्रैवमञ्जलिं कुरुसत्तम ।
मुनयो देवगन्धर्वाः सिद्धाश्च सहकिंनराः ।
अञ्जलिं चक्रिरे विष्णौ देवदेवेश्वरे हरौ ॥

महेश्वर उवाच ।

यत्तत्कारणमाहुस्तत्सांख्याः प्रकृतिसञ्ज्ञितम् । [ 1135 ]
त्रिधाभूतं जगद्योनि प्रधानं कारणात्मकम् ॥
सत्त्वं रजस्तमो विष्णो जगदण्डं जनार्दन ।
तस्य कारणमाहुस्त्वां सांख्यास्तत्त्वविदो हरे ।
तद्रूपेण भवान्विष्णो परिणम्याधितिष्ठति ॥
ततो महान्समुत्पन्नः प्रकृतिर्यस्य कारणम् । [ 1140 ]
तस्मात्तु महतो घोरादहंकारो महानभूत् ।
स त्वमादौ जगन्नाथ परिणामस्तथा हि सः ॥
अहंकारात्प्रभो देव कारणानि महान्ति च ।
तन्मात्राणि तथा पञ्च भूतानि प्रभवन्त्युत ॥
तानि त्वामाहुरीशानं भूतानीति जगत्पते । [ 1145 ]
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥
चक्षुर्घ्राणं तथा स्पर्शो रसना श्रोत्रमेव च ।
मनः षष्ठं तथा देव प्रेरकं तत्र तत्र ह ॥
कर्मेन्द्रियाणि चाप्याहुः पादादीनि जनार्दन ।
त्वमेव तानि सर्वाणि करोषि नियतात्मवान् ॥ [ 1150 ]
स्वेषु स्वेषु जगन्नाथ विषयेषु तथा हरे ।
निवेशयसि देवेश योग्यामिन्द्रियपद्धतिम् ॥
यदा त्वं रजसा युक्तस्तदा भूतानि सृष्टवान् ।
यदा च सत्त्वयुक्तोऽसि तदा पाता जगत्त्रयम् ॥
यदा ते तम उत्कृष्टं तदा संहरसे जगत् ॥ [ 1155 ]
त्रिभिरेव गुणैर्युक्तः सृष्टिरक्षाविनाशने ॥
वर्तसे विविधां भूतिमादाय नियतात्मवान् ।
इन्द्रियाणीन्द्रियार्थेषु नियोजयसि माधव ॥
प्राणिनामुपभोगार्थमन्तः स्थित्वा जगद्गुरो ।
तस्मात्सर्वत्र भूतेषु वर्तसे सर्वगो भवान् ॥ [ 1160 ]
ब्रह्मा त्वं सृष्टिकाले तु स्थितौ विष्णुरसि प्रभो ।
संहारे रुद्रनामासि त्रिधामा त्वमिति प्रभो ॥
भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
एताः प्रकृतयो देव भिन्नाः सर्वत्र ते हरे ॥

---

—(L 1122) $D_6$ $M_{1-3}$ [इ]दं (for [ए]तच्) —(L 1123) $G_3$ परि- (for प्रति) —(L 1124) $M_3$ ऽस्मिन्प्रीतिस् (for ऽस्मि प्रीतस्) M तस्य (for तत्र) —(L 1127) $G_4$ मम (for विद्धि) — $G_4$ om lines 1128-1141 —(L 1128) $Dn_2$ $G_3$ om (hapl) lines 1128[b]-1129[a]. $D_6$ यथार्थं; $G_2$ $M_4$ याथार्थ्यं (for °त्म्यं). —(L 1129) $T_1$ $M_{2\ 4}$ याथार्थ्यं (for °त्म्यं) —(L 1131) $D_6$ $M_4$ याथार्थ्यं (for °त्म्य) —(L 1132) Dn $Ds_2$ हरेः (for हरे) $Dn_1$ $Ds_2$ कुर्वन्ति —(L 1134) $T_{1.\ 2\ 4}$ $G_{1\ 3\ 5}$ विष्णोर् (for विष्णौ) — $G_2$ महेश (for महेश्वर). —(L 1135) $D_6$ महत् (for यत्तत्) $T_1$ त्वां सख्यम् (for कारणम्) $M_{1\ 2\ 4}$ ते, $M_3$ तु (for तत्) Dn $Ds_2$ -सञ्ज्ञकम् (for -संज्ञितम्) —(L. 1140) $T_{1\ 2}$ $G_{1.\ 3\ 5}$ M प्रकृतेर्जन्मकारणम्; $G_2$ जगतो जन्मकारणम् (for [b]) —(L. 1144) $T_1$ मात्राणि (for भूतानि) $D_6$ $G_2$ कारणानि महा( $G_2$ भव )न्त्युत (for [b]) —(L 1145) $D_6$ भूतानि जगत पते (for [b]) —(L 1147) $D_6$ $T_{1.\ 4}$ G M रसनं (for °ना). —(L 1149) Dn $Ds_2$ $M_{2\ 4}$ [अ]न्यानि (for [अ]प्याहुः) Dn $Ds_2$ $M_{2\ 4}$ वागादीनि; $T_{1\ 2}$ $G_{1\ 3-5}$ वायवा° (for पादा°). —(L 1152) $D_6$ M नियोजयसि (for निवेश°). —(L 1154) $D_6$ $T_4$ $G_2$ M जगद्यथा (for जगत्त्रयम्). —(L 1155) Dn $Ds_2$ $T_2$ $G_{3-5}$ यदा त्वं तमसाकृष्टस्; $T_1$ $G_1$ यदा त्वं तमसा कृष्ण (for [a]) $G_2$ यथा त्वं नामसंभावं हरसे तत्तथा जगत् —(L 1157) $D_6$ $T_4$ $M_{2\ 3}$ भूमिम् (for भूतिम्). —(L 1159) Cal ed. अन्नं सृष्ट्वा (for अन्त. स्थित्वा); $T_2$ $G_{1\ 3}$ जगत्पते, $T_4$ °द्गुरुम् (for °द्गुरो) —(L 1162) $D_6$ त्रियामा (for त्रिधामा) Dn $Ds_2$ $T_{1\ 2\ 4}$ G असि (for इति) —(L. 1164) $G_2$ एतासां प्रकृतिर्देव (for [a]) G(ed) हिता (for भिन्नाः). $G_2$ नो भवान् (for ते हरे). —(L 1166) Dn $Ds_2$

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । [ 1165 ]
सहस्रोदरसाहस्री सहस्रात्मा दिवस्पतिः ॥
भूमि सर्वामिमां प्राप्य सप्तद्वीपां ससागराम् ।
अणुः सर्वत्रगो भूत्वा अत्यतिष्ठद्दशाङ्गुलम् ॥
त्वमेवेदं जगत्सर्वं यद्भूतं यद्भविष्यति ।
त्वत्तो विराट् प्रादुरभूत्सम्राट् चैव जनार्दन ॥ [ 1170 ]
तव वक्त्राज्जगन्नाथ ब्राह्मणो लोकरक्षकः ।
प्रादुरासीत्पुराणात्मन्षट्कर्मनिरतः सदा ॥
राजन्यस्तु तथा बाह्वोरासीत्संरक्षणे रतः ।
ऊर्वोर्वैश्यस्तथा विष्णो पादाच्छूद्र उदाहृतः ।
एवं वर्णा जगन्नाथ तव देहात्सनातनात् ॥ [ 1175 ]
मनसस्तव देवेश चन्द्रमाः समपद्यत ।
सुखकृत्सर्वभूतानां शीतांशुरमृतप्रभः ॥
अक्ष्णोः सूर्यः समुत्पन्नः सर्वप्राणिविलोचनः ।
यस्य भासा जगत्सर्वं भासते भानुमानसौ ॥
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत । [ 1180 ]
नाभेरन्तरिक्षमुत्पन्नं तव देव जनार्दन ॥
द्यौरासीत्तु महाघोरा शिरसस्तव गोपते ।
पद्भ्यां भूमिः समुत्पन्ना दिशः श्रोत्राज्जगत्पते ।
एवं सृष्ट्वा जगत्सर्वं व्याप्य सर्वं व्यवस्थितः ॥
व्याप्य सर्वानिमाल्लँोकान्स्थितः सर्वत्र केशव । [ 1185 ]
ततश्च विष्णुनामासि धातोर्व्याप्तेश्च दर्शनात् ॥
नारा आपः समाख्यातास्तासामयनमादितः ।
यतस्त्वं भूतभव्येश तन्नारायणशब्दितः ॥
वसनाद्देवनाद्देव वासुदेवेति शब्दित. ।
हरसि प्राणिनो देव ततो हरिरिति स्मृतः ॥ [ 1190 ]
शं करोषि सदा देव ततः शंकरनामवान् ।
बृहत्त्वाद्बृंहणत्वाच्च तस्माद्ब्रह्मेति शब्दितः ।
मधुरिन्द्रियनामेति ततो मधुनिषूदनः ॥
हृषीकाणीन्द्रियाण्याहुस्तेषामीशो यतो भवान् ।
हृषीकेशस्ततो विष्णो ख्यातो वेदेषु पठ्यते ॥ [ 1195 ]
को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिषु ।
आवां तवाङ्गे संभूतौ ततः केशवनामवान् ॥
मा विद्या च हरे प्रोक्ता तस्या ईशो यतो भवान् ।
तस्मान्माधवनामासि धवः स्वामीति शब्दितः ॥
गौरेषा तु यतो वाणी तां च वेद यतो भवान् । [ 1200 ]
गोविन्दस्तु ततो देव मुनिभिः कथ्यते भवान् ॥
त्रिरित्येव त्रयो वेदाः कीर्तिता मुनिसत्तमैः ।
क्रमते तांस्तथा सर्वांस्त्रिविक्रम इति स्मृतः ॥
अणुर्वामननामासि यतस्त्वं वामनाख्यया ।
मननान्मुनिरेवासि यमनाद्यतिरुच्यसे ॥ [ 1205 ]
तपश्चरसि यस्मात्त्वं तपस्वीति च शब्दितः ।

---

सहस्रदारः साहस्री, $D_6$ सहस्रोरुः सहस्राक्षी, $G_2$ सहस्रोदरस्साहस्रः (for [a]) $T_2$ सहस्राख्य- (for °स्रात्मा) —(L 1167) $M_2$ व्याप्य (for प्राप्य) —(L 1168) M अध्यतिष्ठत् (for अत्य°) — $G_2$ om lines 1171–1174 —(L 1172) $M_3$ पुराणात्मा (for °त्मन्) —(L 1174) $G_3$ शूद्रो (for विष्णो) $D_6$ पादौ (for पादाच्). —(L 1175) M सनातन (for °तनात्) —(L 1177) $M_{2\ 3}$ -जन्तूनां (for -भूतानां) Dn $Ds_2$ $T_1$ $G_{2\ 4}$ M अमित- (for अमृत-) —(L 1178) $G_5$ अक्ष्ण. (for अक्ष्णो) —(L 1179) $D_5$ om. (hapl) 1179[b]–1181[a] $T_2$ व्याप्य रूपं व्यवस्थित. (for [b]) —(L 1180) Submetric $T_4$ स इन्द्रश्, M त इन्द्रश् (for इन्द्रश्). Dn $Ds_2$ $T_2$ $G_4$ Cal ed मुखादिन्द्र- (Cal. ed °द्प)श्च अग्निश्च (for [a]) —(L 1181) Hypermetric Dn $Ds_2$ $G_3$ नाभेरभूदन्तरिक्षं, $T_{1\ 2}$ $G_{1\ 3\ 5}$ °रथान्तरिक्ष च; $T_4$ °र्व्योम समुत्पन्नं (for [a]). $T_{1\ 2}$ $G_{1\ 3\ 5}$ समुत्पन्नं (for तव देव) —(L 1182) $G_{2\ 4}$ भूपते (for गोपते) —(L 1184) $T_{1\ 2}$ $G_{1\ 3\ 5}$ जगद्रूपं (for °त्सर्वं) —(L 1185) $G_5$ व्याप्तः (for व्याप्य) $D_6$ सर्वम् (for सर्वान्) $D_6$ $T_4$ एवं (for स्थित·) —(L 1186) M प्र- (for the second च) — Dn $Ds_2$ $T_{1\ 2\ 4}$ G om line 1189 —(L 1190) $M_1$ हरति स्म नृणां पापं (for [a]) —(L 1191) महादेव (for सदा देव) Dn $Ds_2$ $T_{1\ 2}$ $G_{1\ 3-5}$ ततः शंकरतां गत (for [b]) —(L. 1195) $G_4$ om (hapl) lines 1195[b]–1201[a] $M_{2.5}$ केशव (for पठ्यते) Dn $Ds_2$ $M_{1\ 3}$ ख्यातो देवेषु केशव (for [b]) —(L 1196) Dn $Ds_2$ $D_6$ $T_{1\ 2\ 4}$ G क इति ब्रह्मणो नाम (for [a]) Dn $Ds_2$ $D_6$ $T_{1\ 2\ 4}$ $G_{1-3.5}$ $M_1$ -देहिनाम् (for -देहिषु). —(L 1197) Dn $Ds_2$ $T_{1\ 2\ 4}$ $G_{1\ 5}$ $M_3$ तवाङ्ग- (for °ङ्गे) Dn $Ds_2$ $T_{2\ 2}$ $G_{1\ 3\ 5}$ तस्मात् (for तत.) —(L 1198) $D_6$ $T_4$ $G_2$ लक्ष्मीश् (for विद्या) —(L 1199) $D_6$ $T_4$ $G_2$ त्वमिति (for स्वामीति) —(L.

वसन्ति त्वयि भूतानि भूतावासस्ततो हरे ॥
ईशस्त्वं सर्वभूतानामीश्वरोऽसि ततो हरे ।
प्रणवः सर्ववेदानां गायत्री छन्दसां प्रभो ॥
अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रयः । [ 1210 ]
रुद्राणामहमेवास्मि वसूनां पावको भवान् ।
आदित्यानां भवान्विष्णुरिन्द्रो देवेश्वरो भवान् ।
अश्वत्थो वृक्षजातीनां ब्रह्मा लोकगुरुर्भवान् ।
मेरुस्त्वं पर्वतेन्द्राणां देवर्षीणां च नारदः ॥
दानवानां भवान्दैत्यः प्रह्लादो भक्तवत्सल । [ 1215 ]
सर्पाणामेव सर्वेषां भवान्वासुकिसंज्ञकः ॥
गुह्यकानां च सर्वेषां भवान्धनद एव च ।
वरुणो यादसां राजा गङ्गा त्रिपथगा भवान् ॥
आदिस्त्वं सर्वभूतानां मध्यमन्तस्तथा भवान् ।
त्वत्तः समभवद्विश्वं त्वयि सर्वं प्रलीयते ॥ [ 1220 ]
अहं त्वं सर्वगो देव त्वमेवाहं जनार्दन ।
आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ॥
नामानि तव गोविन्द यानि लोके महान्ति च ।
तान्येव मम नामानि नात्र कार्या विचारणा ॥
त्वदुपासा जगन्नाथ सैवास्तु मम गोपते । [ 1225 ]
यश्च त्वां द्वेष्टि देवेश स मां द्वेष्टि न संशयः ॥
त्वद्विस्तारो यतो देव अहं भूतपतिस्ततः ।
न तदस्ति विना देव यत्ते विरहितं हरे ॥
यदासीद्वर्तते यच्च यच्च भावि जगत्पते ।
सर्वं त्वमेव देवेश विना किंचित्त्वया न हि ॥ [ 1230 ]
स्तुवन्ति देवाः सततं भवन्तं स्वैर्गुणैः प्रभो ।
ऋक्च त्वं यजुरेवासि सामासि सततं विभो ॥
किमुच्यते मया देव सर्वं त्वं भूतभावनः ।
नमः सर्वात्मने देव विष्णो माधव केशव ॥
नमस्करोमि सर्वात्मन्नमस्तेऽस्तु सदा हरे । [ 1235 ]
नमः पुष्करनाभाय वन्दे त्वामहमीश्वर ॥

Colophon

वैशंपायन उवाच ।

इत्युक्त्वा देवदेवेशं मुनीनाह पुनः शिवः ।
एवं जानीत हे विप्रा ये भक्ता द्रष्टुमागताः ॥
एतदेव परं वस्तु नैतस्मात्परमस्ति वः ।
एतदेव विजानीध्वमेतद्वः परमं तपः ॥ [ 1240 ]
एतदेव सदा विप्रा ध्येयं प्रयतमानसैः ।
एतद्वः परमं श्रेय एतद्वः परमं तपः ॥

---

1203) $M_{1-2}$ क्रमसे (for °ते) $G_{1\ 5}$ श्रुत. (for स्मृत) — $T_{1\ 2}$ $G_1$ om line 1208 — (L 1208) M तदा स्मृतः (for ततो हरे). — (L 1209) M भवान् (for प्रभो) — (L. 1210) $G_2$ प्रभवो (for स्फोटस्त्वं) — Dn $Ds_2$ $G_2$ om line 1212 $T_1$ om lines 1213–1218 — (L 1213) M देव- (for लोक-) $D_6$ $T_4$ कृतां (for -गुरुर्) — (L. 1215) Cal ed ज्ञानवान्दैत्यमध्ये तु (for $^a$). — (L 1216) Dn $Ds_2$ $T_2$ $G_{1\ 3-5}$ -सज्ञित (for -संज्ञकः) — $D_6$ om. lines 1221–1234 $T_2$ $G_1$ om (hapl) lines 1226–1229 $G_4$ om line 1226 — (L 1226) $M_1$ यश्च त्वां द्विषते देव (for $^a$) — $D_6$ om line 1227 — (L 1227) $T_4$ त्वयि विस्तारितो देव (for $^a$) $G_2$ om (hapl) $1227^b$–$1233^a$ — (L 1228) $D_6$ $T_4$ क्वचित् (for हरे) — $T_2$ $G_1$ om line 1229 — (L. 1229) $M_3$ भाति (for भावि) — (L 1230) $T_1$ सह (for न हि) — (L 1231) $D_6$ स्तुवन्ति सर्वे देवाश्च सततं स्वगुणैर्विभो — (L 1232) Dn $Ds_2$ $T_2$ $G_4$ प्रभो (for विभो) — $G_4$ om line 1233 — (L 1233) M किमुच्यसे जगन्नाथ (for $^a$). $G_3$ om. (hapl.) lines $1233^b$– $1234^a$ — After line 1233, $T_2$ ins

11** नमः सर्वात्मने देव मुनीनाह पुन शिवः ।
एवं जानीत हे विप्रा ये भक्ता द्रष्टुमागता· ।
एतदेव परं वस्तु नैतस्मात्परमस्ति वः ॥

— (L 1234) Dn $Ds_2$ $T_{1\ 4}$ $G_{2\ 4}$ $M_{2\ 4}$ सर्वात्मना (for °त्मने) — (L 1236) $T_4$ $G_{1\ 3}$ ईश्वरम् (for ईश्वर)

COLOPHON — *Mention of the Epic* $Ds_2$ — *Mention of Khila* Dn $Ds_2$ $D_6$ $T_{1\ 2}$ G M — *Sub-parvan* Dn $Ds_2$ $D_6$ $T_4$ $G_4$ M कैलासयात्रा — *Adhy name* $D_6$ $T_4$ $G_4$ कृष्णस्तुति· — *Adhy no* Dn 273, $Ds_2$ 272; $T_1$ $G_3$ 199, $T_2$ $G_1$ 201, $T_4$ 168, $G_2$ 194, $G_4$ 198; $G_5$ 200; $M_{1-3}$ 164, $M_4$ 200

$G_3$ om lines 1237–1276. — (L 1238) $D_6$ $G_2$ भो (for हे) $D_6$ द्रष्टुमानसा· (for °गता.) — $G_2$ om lines 1240–1245 — (L 1240) $M_{2-4}$ एवम् (for the first एतद्) — (L 1241) Dn $Ds_2$ $T_{1\ 4}$ $G_1$ $M_4$ सतत-, $D_6$ च यत- (for प्रयत-) — (L 1242) $D_6$ ज्ञेयम् (for श्रेय).

एतद्वो जन्मनः कृत्यमेतद्वस्तपसः फलम् ।
एष वः पुण्यनिचय एष धर्मः सनातनः ॥
एष वो मोक्षवशग एष मार्ग उदाहृतः । [ 1245 ]
एष पुण्यप्रदः साक्षादेतद्वः कर्मणां फलम् ॥
एतदेव प्रशंसन्ति विद्वांसो ब्रह्मवादिनः ।
एषा त्रयीगतिर्विप्राः प्रार्थ्या ब्रह्मविदां सदा ॥
एतदेव प्रशसन्ति सांख्ययोगसमाश्रिताः ।
एष ब्रह्मविदां मार्गः कथितो वेदवादिभिः ॥ [ 1250 ]
एवमेव विजानीत नात्र कार्या विचारणा ।
हरिरेकः सदा ध्येयो भवद्भिः सत्त्वसस्थितैः ॥
ओमित्येवं सदा विप्राः पठध्वं ध्यात केशवम् ।
ततो निःश्रेयसप्राप्तिर्भविष्यति न संशयः ॥
एवं ध्यातो हरिः साक्षात्प्रसन्नो वो भविष्यति । [ 1255 ]
भवनाशमयं देवः करिष्यति न संशयः ॥
सदा ध्यात हरिं विप्रा यदीच्छा प्राप्तुमीश्वरम् ।
एष संसारविभवं विनङ्क्ष्यति जगद्गुरुः ॥
स्मरध्वं सर्वदा विष्णुं पठध्वं त्रिशरीरिणम् ॥
मनःसंयमनं विप्राः कुरुध्वं यत्नतः सदा । [ 1260 ]
शुद्धेऽन्तःकरणे विष्णुः प्रसीदति तपोधनाः ॥
ध्यात्वा मां सर्वयत्नेन ततो जानीत केशवम् ।
उपास्योऽयं सदा विप्रा उपायोऽस्मि हरे स्मृतौ ॥
उपायोऽयं मया प्रोक्तो नात्र संदेह इत्यपि ।
अयं मायी सदा विप्रा यतध्वं मायनाशने ॥ [ 1265 ]
यथा वो बुद्धिरखिला शुद्धा भवति यत्नतः ।
तथा कुरुत विप्रेन्द्रा यथा देवः प्रसीदति ॥
एवमुक्तास्तत सर्वे यतयः पुण्यशालिनः ।
यथावदुपगृह्णाना निरस्ताः संशयान्नृप ॥
एवमेवेति ते विप्राः प्राहुः प्राञ्जलयो हरम् । [ 1270 ]
छिन्नो नः संशयः सर्वो गृहीतोऽर्थः स तादृशः ॥
एतदर्थं समायाता वयमद्य तवालयम् ।
संगमाद्युवयोः सर्वो नष्टो मोहो महानिह ।
यथा वदसि देवेश तथा नः श्रेयसे परम् ॥
यथाह भगवान्रुद्रो यतामः सततं हरौ । [ 1275 ]
इति ते मुनयः प्रीताः प्रणेमुः केशवं हरिम् ॥

Colophon.

---

Dn Ds2 T1 2 G1 4 5 M4 धनम् ( for तप. ) — T2 G1 om line 1243 — ( L 1244 ) Dn Ds2 T1 2 G1 4 5 -निलय ( for -निचय ) — ( L 1245 ) Dn Ds2 T1 2 G1 4 5 -दाता च ( for -वशग ) Cal ed मोक्ष ( for मार्ग ) — D8 om line 1246 — ( L 1248 ) D6 प्राप्या, T1 G4 M प्रार्थ्यो, G2 प्रेक्ष्यो ( for प्रार्थ्या ) — ( L 1249 ) D6 T2 4 G2 4 साख्ययोगं, G1 सांख्यं योग ( for साख्ययोग- ). — ( L. 1250 ) D6 G4 M1 ब्रह्म- ( for वेद- ) — ( L 1251 ) D6 विजानीयान् ( for °नीत ). — ( L 1252 ) M1 3 एष ( for एक ) Dn Ds2 G4 सत्त्वमास्थितै ( for °सस्थितै ). — After line 1252, Dn Ds2 T1, 2 G1 4 5 ins .

12** नान्यो जगति देवोऽस्ति विष्णोर्नारायणात्पर. ।

— ( L 1253 ) Dn Ds2 G2 M4 पठत ( for पठध्व ) — ( L 1254 ) D6 T1 G1, 4 M1–3 व· श्रेयस- ( for नि श्रे° ) — ( L 1256 ) Dn Ds2 G2 M दृढ हरि ( for न संशयः ) — ( L 1257 ) Dn Ds2 T2 G1 4 5 M4 अच्युतम् ( for ईश्वरम् ) T1 यदीह प्रापुरुत्तमम् ( for [b] ) — ( L 1258 ) D6 व्यपोहति ( for विनङ्क्ष्यति ) Dn Ds2 T4 G4 विनाशयति वो गुरु ( for [b] ) — ( L 1259 ) Dn Ds2 D6 T1 2, 4 G1, 2, 4 5 सततं ( for सर्वदा ) — G4 om line 1260 — ( L 1260 ) G2 मननं श्रवणं विप्रा ( for [a] ) — ( L 1261 ) G5 शुद्धान्त - ( for शुद्धेऽन्त.- ) — ( L 1262 ) M3 [अ]मुं ( for मां ) — ( L 1263 ) T1 2 G1. 4 5 हरि ( for सदा ) Dn1 om ( hapl ) lines 1263[b]–1265[a] Dn Ds1 T1 2 G1 2, 4 5 उपास्ये( T2 G5 °यो )ऽस्मिन्हरौ स्मृत ( for [b] ) — ( L 1264 ) D6 संशय ( for संदेह ) T2 4 G1 इष्यते ( for इत्यपि ) — G2 om line 1265. — ( L 1265 ) T1 मान ( for मायी ) Dn Ds2 अघ- ; T1 G4 मान-, ( for माय- ) — Before line 1268, some Mss ins. वैशंपायन उवाच — ( L 1268 ) Dn Ds3 T4 G2 M2 मुनय ( for यतय ) — ( L 1269 ) M1 2 4 संशयं ( for °यान् ) Dn Ds2 T1 2 4 G1, 4 5 निरस( T1 2 G1 °स्य )न्संशयं नृप ( for [b] ) — ( L 1270 ) M1 विप्रेन्द्रा ( for तं विप्राः ). D6 T2 G2 4 5 M1–3 प्रोचु ( for प्राहु. ) T1 नृप ( for हरम् ) — ( L 4271 ) T1 सदाशिव ( for स तादृश· ) — ( L. 1273 ) T1 G5 M1–3 शर्व ( for सर्वो ) — ( L 1274 ) T4 G5 M पुरा ( for परम् ) — ( L 1275 ) T4 हरे ( for हरौ ) — ( L. 1276 ) M1–3 हरम् ( for हरिम् )

COLOPHON. — *Mention of the Epic* . Ds2. — *Mention*

वैशंपायन उवाच ।

ततः स भगवान्रुद्रः सर्वान्विस्मापयन्निव ।
स्तुत्या प्रचक्रमे स्तोतुं विष्णुं विश्वेश्वरं हरिम् ।
अर्थ्याभिः श्रुतियुक्ताभिर्मुनीनां शृण्वतां तदा ॥
नमो भगवते तुभ्यं वासुदेवाय धीमते । [ 1280 ]
यस्य भासा जगत्सर्वं भासते नित्यमच्युत ।
नमो भगवते देव नित्यं सूर्यात्मने नमः ॥
यः शीतयति शीतांशुर्लोकान्सर्वानिमान्प्रभुः ।
नमस्ते विष्णवे देव तुभ्यं सोमात्मने नमः ॥
यः प्रजाः प्राणयत्येको विश्वात्मा भूतभावनः । [ 1285 ]
नमः सर्वात्मने देव नमो वाय्वात्मने हरे ॥
यो दधार करेणासौ कुशचीरादि यत्सदा ।
दधार वेदान्सर्वांश्च तुभ्यं ब्रह्मात्मने नमः ॥
सर्वान्संहरते यस्तु संहारे विश्वदृक्सदा ।
क्रोधात्मा विश्वरूपोऽसि तुभ्यं रुद्रात्मने नमः ॥ [ 1290 ]
सृष्टौ स्रष्टा समस्तानां प्राणिनां प्राणदायिने ।
अजाय विष्णवे तुभ्यं स्रष्ट्रे विश्वसृजे नमः ॥
आदौ प्रकृतिमूलाय भूतानां प्रभवाय च ।
नमस्ते देवदेवेश प्रधानाय नमो नमः ॥
पृथिव्यां गन्धरूपेण संस्थितः प्राणिनां हरे । [ 1295 ]
दृढाय दृढरूपाय तुभ्यं गन्धात्मने नमः ॥
अपां रसाय सर्वत्र प्राणिनां सुखहेतवे ।
नमस्ते विश्वरूपाय रसाय च नमो नमः ॥
तेजसा भास्वरो यस्तु गुणो जन्तुहितः सदा ।
तस्मै देव जगन्नाथ नमो भास्वररूपिणे ॥ [ 1300 ]
वायोः स्पर्शो गुणो यत्र शीतोष्णसुखदुःखदः ।
नमस्ते वायुरूपाय नमः स्पर्शात्मने हरे ॥
आकाशेऽवस्थितः शब्दः सर्वश्रोत्रनिवेशनः ।
नमस्ते भगवन्विष्णो तुभ्यं शब्दात्मने नमः ॥
यो दधार जगत्सर्वं मायामानुपदेहवान् । [ 1305 ]
नमस्तुभ्यं जगन्नाथ मायिनेऽमायदायिने ॥
नम आद्याय बीजाय निर्गुणाय गुणात्मने ।
अचिन्त्याय सुचिन्त्याय तस्मै चिन्त्यात्मने नमः ॥
हराय हरिरूपाय ब्रह्मणे ब्रह्मवादिने ।
नमो ब्रह्मविदे तुभ्यं ब्रह्मब्रह्मात्मने नमः ॥ [ 1310 ]
नमः सहस्रशिरसे सहस्रचरणाय च ।
नमः सहस्रवक्त्राय सहस्रनयनाय च ॥
विश्वाय विश्वरूपाय विश्वकर्त्रे नमो नमः ।

---

*of Khila* Dn $Ds_2$ $D_6$ $T_{1\ 2.4}$ $G_{1\ 2\ 4\ 5}$ M — *Subparvan* Dn $Ds_2$ कैलासयात्रा — *Adhy no* Dn$Ds_2$ 272, $T_1$ 200; $T_2$ $G_1$ 202, $T_4$ 169, $G_2$ 195, $G_4$ 199; $G_5$ $M_{1.\ 2\ 4}$ 201, $M_3$ 165

(L 1277) $M_{1\ 3}$ सर्वं (for सर्वान्) — (L 1278) $T_2$ $G_1$ सर्वेश्वरं (for विश्वे°) — (L 1279) $D_6$ अभ्याभि (for अर्थ्याभि·) $T_4$ $G_4$ अर्थ्याभिस्तु तदा वाग्भिर् (for ${}^a$) — Before line 1280, Dn $Ds_2$ M ins महेश्वर उवाच — (L. 1281) $Dn_2$ $G_2$ उच्यते (for अच्युत) — (L 1282) $D_6$ सूर्याय ते (for °त्मने) — $G_4$ om (hapl) lines 1283–1288. $G_3$ om lines 1283–1284 — (L 1283) $D_6$ सर्वलोकान् (for लोकान्सर्वान्) Dn $Ds_2$ $M_4$ विभु (for प्रभु) — (L 1284) $D_3$ तुभ्यं, $T_4$ $G_2$ नित्यं (for देव) Dn $Ds_2$ $D_6$ $T_{1\ 3}$ $G_1$ नित्यं (for तुभ्यं) — $D_6$ om (hapl) lines 1285–1290 — $T_2$ om (hapl) lines 1285–1288 — (L. 1285) $M_{1-3}$ प्राणान् (for प्रजा.) $G_2$ $M_4$ प्रीणयति (for प्राण°) — (L 1286) $Ds_2$ $G_2$ वागात्मने (for वाय्वा°) $G_3$ तव (for हरे). — (L. 1288) $G_1$ सर्वान्वेदांश्च (by transp). — (L. 1289) $T_4$ विश्वसृक्, $M_2$ °कृत् (for °दृक्) — (L 1290) $T_{2\ 4}$ $G_{1-3}$ रुद्ररूपो (for विश्व°) Dn $Ds_2$ क्रोधात्मासि विरूपोऽसि (for ${}^a$) $M_4$ विश्वात्मने (for रुद्रा°). — (L 1293) $M_{2\ 4}$ -रूपाय (for -मूलाय) — $G_3$ om (hapl) lines 1295–1298 $G_4$ om (hapl) lines 1289–1301 — (L 1299) $T_2$ $G_{1\ 5}$ $M_{1\ 3}$ तेजसां (for तेजसा) $Ds_2$ $T_{1\ 2\ 4}$ $G_{1\ 2\ 5}$ M भास्करो (for भास्वरो) Dn $Ds_2$ $D_6$ $G_2$ घृणो, $M_3$ गुहो (for गुणो) — (L 1300) $Ds_2$ $T_{1\ 2.4}$ $G_{1-3\ 5}$ $M_3$ भास्कर-, $D_6$ भासुर- (for भास्वर-) — (L 1301) $G_1$ वायौ (for वायो.) Dn $Ds_2$ $D_6$ $T_{1\ 2\ 4}$ G ($G_4$ om) M स्पर्श- (for स्पर्शो) $M_3$ यश्च (for यत्र) — (L 1302) $D_6$ $T_4$ सत्वात्मने, $T_2$ स्पर्शात्मनो, $G_1$ °त्मना (for °त्मने) — (L 1303) $D_6$ $G_2$ $G_2$ $M_{1-3}$ य स्थित· (for ऽवस्थित.) $T_1$ सत्त्व- (for सर्व-) — (L 1304) $G_{1\ 4\ 5}$ सर्वात्मने (for शब्दा°) — (L 1306) $D_6$ ऽमायिमायिने; $T_2$ $G_1$ °यिदायिने (for °यदायिने) — (L. 1308) $D_6$ चिन्त्याय ते (for °त्मने) $M_2$ चिन्त्याचिन्त्यात्मने नमः (for ${}^b$) — $G_3$ om (hapl) lines 1309–1313 — (L 1309) Dn $Ds_2$ $D_6$

विश्वहर्त्रे नमो नित्यं भूतावास नमो नमः ॥
इन्द्रियायेन्द्ररूपाय विषयाय सदा हरे । [ 1315 ]
नमोऽश्वशिरसे तुभ्यं वेदाहरणरूपिणे ॥
अग्नयेऽग्निपते तुभ्यं ज्योतिषां पतये नमः ।
नमः सूर्याय भद्राय तेजसां पतये नमः ॥
नमः सोमाय सौम्याय नमः शीतात्मने हरे ।
नमो वषट्कृते तुभ्यं स्वधास्वाहास्वरूपिणे ॥ [ 1320 ]
नमो यज्ञाय ईज्याय हविषे हव्यसंस्कृते ।
नमः स्रुवाय पात्राय यज्ञाङ्गाय पराय च ॥
नमः प्रणवदेहाय क्षरायाप्यक्षराय च ।
वेदाय वेदरूपाय शस्त्रिणे शस्त्ररूपिणे ॥
गदिने खड्गिने तुभ्यं शङ्खिने चक्रिणे नमः । [ 1325 ]
शूलिने चर्मिणे नित्यं वरदाय नमो नमः ॥
बुद्धप्रियाय बुद्धाय प्रबुद्धाय सुखाय च ।
हरये विष्णवे तुभ्यं नमः सर्वात्मने गुरो ॥
नमस्ते सर्वलोकेश सर्वकर्त्रे नमो नमः ।
नमः स्वभावशुद्धाय नमस्ते यज्ञसूकर ॥ [ 1330 ]
नमो विष्णो नमो विष्णो नमो विष्णो नमो हरे ।
नमस्ते वासुदेवाय वासुदेवाय धीमते ॥
नमः कृष्णाय कृष्णाय सर्वावास नमो नमः ।
नमो भूयो नमस्तेऽस्तु पाहि लोकाञ्जनार्दन ॥
इति स्तुत्वा जगन्नाथमुवाच मुनिसत्तमान् । [ 1335 ]
इदं स्तोत्रमधीयाना नित्यं व्रजत केशवम् ।
शरण्यं सर्वभूतानां तत्र श्रेयो विधास्यति ॥
ये चेमं धारयिष्यन्ति स्तवं पापविमोचनम् ।
तेषां प्रीतः प्रसन्नात्मा पठतां शृण्वतां हरिः ।
श्रेयो दास्यति सर्वात्मा नात्र कार्या विचारणा ॥ [ 1340 ]
अवश्यं मनसा ध्यात केशवं भक्तवत्सलम् ।
श्रेयः प्राप्तुं यदीच्छन्ति भवन्तः संशितव्रताः ॥
इत्युक्त्वा भगवान्रुद्रस्तत्रैवान्तरधीयत ।
सगणः शंकरः साक्षादुमया भूतभावनः ॥
ततस्ते मुनयः सर्वे परां निर्वृतिमाप्नुयुः । [ 1345 ]

---

T1 2 4 G ( G4 om ) दायिने ( for -वादिने ) —( L 1310 ) Cal ed तुभ्यं ( for ब्रह्म- ) — ( L 1311 ) T1 2 4 G1 4 -किरणाय ( for -चर° ) G2 om lines 1311ᵇ–1312ᵃ — ( L 1314 ) D6 G1 भूतवास ( for भूता° ) G4 विश्वाय विश्वरूपाय विश्वकर्मे नमो नम —( L 1315 ) Dn ऐन्द्रियरूपाय ( for इन्द्र° ) D6 इन्द्राय इन्द्ररूपाय , T4 इन्द्रियोपेन्द्रियोपेन्द्रा ( for ᵃ ). — G3 om ( hapl ) lines 1316–1320 ( L 1316 ) Dn Ds2 T4 G2 वेदाभरणरूपिणे ( for ᵇ ) — G1 om (hapl) lines 1317–1320 — ( L 1317 ) D6 नित्यं ( for तुभ्यं ) — G2 4 om ( hapl ) line 1318 —( L 1318 ) Dn Ds2 D6 T1 2 4 G5 सूर्याय सूर्यपुत्रा( D6 °रूपा- , T2 G5 °भद्रा )य ( for ᵃ ) D6 ज्योतिषा ( for तेजसां ) — ( L 1319 ) T1 शान्तात्मने ( for शीता° ) Dn2 D6 नम ( for हरे ). — After line 1319, D6 ins

13** रुद्राय रुद्ररूपाय विषयाय सदा हरे ।

— ( L 1320 ) D6 T4 स्वधास्वाहात्मरूपिणे ( for ᵇ ) — ( L. 1321 ) T1 हविषे ( for ईज्याय ) G3 नमो विश्वरसेज्याय ( for ᵃ ) T1 नित्यं कव्यं च संस्कृते ( for ᵇ ) — ( L 1323 ) D6 भयायाथ भयाय च ( for ᵇ ) — After line 1323, T4 ins

14** वेदाय वेदरूपाय अक्षय्याय क्षयाय च ।

— D6 reads line 1324 twice. — ( L. 1324 ) D6 (both times ) T1 2 4 G देवाय देवरूपाय , Cal ed वेदरूपाय वेदाय ( for ᵃ ) D6 ( first time ) अक्षयाय क्षयाय च , Cal ed शास्त्राय शास्त्ररूपिणे ( for ᵇ ) — ( L 1325 ) D6 T1 2 4 G चक्रिणे ( for खड्गिने ) G4 om ( hapl ) lines 1325ᵇ–1328ᵃ D6 T1 2 4 G1–3 5 खड्गिने ( for चक्रिणे ) — ( L 1327 ) D6 T2 4 G1–3 5 M2–4 बुद्धिप्रियाय ( for बुद्ध° ) — ( L 1329 ) D6 T4 G3 नमोऽस्तु ते ( for नमो नमः ) —( L 1330 ) D6 -शब्दाय ( for शुद्धाय ). — ( L 1331 ) M1 3 जिष्णो ( for the third विष्णो ). T2 G1 हरे नम ( by transp ); G4 हरे हरे — ( L 1333 ) T2 G1 नीलाय ( for the second कृष्णाय ) — M1 om line 1335 — ( L 1336 ) Dn2 Ds2 D6 T4 M1 3 इम ( for इदं ). — ( L 1337 ) D6 T1 2 G M1–3 शरणं ( for °ण्यं ). — ( L. 1838 ) -विमोचकम् ( for °नम् ) — ( L. 1339 ) M3 प्रपन्नात्मा ( for प्रस° ) — ( L 1340 ) Dn Ds2 T1. 2. 4 G1 3–5 धर्मात्मा ( for सर्वात्मा ) — ( L. 1341 ) D6 ध्येयं ; T1 2 ध्यात्वा , G3 ध्यातं ( for ध्यात ) G( ed ) अप्यहं स्तोतुमिच्छामि ( for ᵃ ) — ( L 1342 ) M1–3 -प्राप्तिं ( for प्राप्तुं ). D6 यदिच्छन्ति ( for यदी° ) — Before line 1343, D6 ins. वैशंपायन उवाच — ( L. 1344 ) G4 सह ( for भूत- ). — After line 1345, Dn Ds2 T1 2 G1 3–5 ins :

15** तमेव परमं तत्त्वं मत्वा नारायणं हरिम् ।

विस्मयं परमं गत्वा मेनिरे स्वकृतार्थताम् ॥
लोकपालास्तदा विष्णुं नमस्कृत्य हरिं तदा ।
जग्मुः स्वान्यथ वेश्मानि गणैः सर्वैर्नृपोत्तम ॥
आरुह्य भगवान्विष्णुर्गरुडं पक्षिपुंगवम् ।
शङ्खी चक्री गदी खड्गी शार्ङ्गी तूणीतलत्रवान् ॥ [ 1350 ]
यथागतं जगन्नाथो ययौ वदरिकामनु ।
सायाह्ने पुण्डरीकाक्षो नित्यं मुनिनिषेविताम् ॥
तत्र गत्वा यथायोगं विश्रम्य हरिरीश्वरः ।
अर्चितो मुनिभिः सर्वैर्निषसाद सुखासने ॥

Colophon

वैशंपायन उवाच ।

एतस्मिन्नेव काले तु पौण्ड्रो नृपवरो नृप । [ 1355 ]
बलवान्सत्त्वसंपन्नो योद्धा विपुलविक्रमः ॥
वृष्णिशत्रुस्तदा राजा कृष्णद्वेष्टा बलात्तदा ।
नृपान्सर्वान्समाहूय प्रोवाच नृपसंसदि ॥
जिता च पृथिवी सर्वा जिताश्च नृपसत्तमाः ।
वृष्णयस्ते बलोन्मत्ताः कृष्णमाश्रित्य गर्विताः ॥ [ 1360 ]
न दास्यन्ति करं सर्वे मम ते कृष्णसंश्रयात् ।
स तु कृष्णश्च बलवान्मामवज्ञाय तिष्ठति ॥
अहं चक्रीति गर्वोऽभूत्तस्य गोपस्य सर्वदा ।
शङ्खी चक्री गदी शार्ङ्गी तूणीशरसहायवान् ।
एवमादिर्महागर्वस्तस्य संप्रति वर्तते ॥ [ 1365 ]
लोके च मम यन्नाम वासुदेवेति नित्यशः ।
अगृह्णान्मम तन्नाम गोपो मदबलान्वितः ॥
तस्य चक्रस्य यच्चक्रं ममापि निशितं महत् ।
गर्वहन्तृ सदा तस्य बलि नाम्ना सुदर्शनम् ॥
सहस्रारं महाघोरं तस्य चक्रस्य नाशनम् । [ 1370 ]
अनेन महता चक्रं गोपकस्य नृपोत्तमाः ॥
ममाप्येतद्धनुर्दिव्यं शार्ङ्गं नाम महावरम् ।
नाशयामि न संदेहश्चक्रं तस्य यदद्भुतम् ।
पाञ्चजन्यो महाशङ्खो महानादः सदा बभौ ।
तस्य शङ्खस्य जेतासौ पश्यध्वं नृपसत्तमाः ॥ [ 1375 ]
गदा कौमोदकी नाम ममेयं महती दृढा ।
कालायससहस्रस्य भारेण सुकृता मया ॥
खड्गो नन्दकनामासौ ममायं विपुलो दृढः ।
अन्तकस्यान्तको घोरस्तस्य खड्गस्य नाशकः ॥

---

— ( L 1346 ) G2 M2 स्म ( for स्व- ) M3 मेनिरे परमार्थताम् ( for ᵇ ) — ( L 1347 ) Dn2 मुदा ( for तदा ) — ( L 1350 ) G1 शङ्खचक्र- ( for शङ्खी चक्री ) G3 शङ्खी खड्गी गदी शार्ङ्गी ( for ᵃ ) M1 3 शृङ्गी- ( for तूणी- ) — ( L 1351 ) D6 T1 यथागतो ( for °गतं ) — ( L 1352 ) M3 -निषेवितः ( for °ताम् ) — ( L. 1353 ) Dn Ds2 T4 G2 विनम्य, T1 M3 विश्राम्य ( for विश्रम्य ) — ( L 1354 ) G3 ( also as above ) नित्यं मुनिनिषेविताम् ( for ᵇ )

Colophon. — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 D6 T1 2 4 G — *Sub-parvan* Dn Ds2 D6 M कैलासयात्रा — *Adhy no* Dn1 Ds2 274, T1 G3 201, T2 G1 203, G2 196, G4 M4 200; G5 202, M1-3 166

T2 G1 om the ref — ( L 1355 ) Dn Ds2 T1 2 4 G -वरोत्तम ( for -वरो नृप ) — ( L 1357 ) T4 G1 कृष्णे ( for वृष्णि- ) D6 T2 4 G1 5 सदा ( for तदा ) D6 T2 राजन् ( for राजा ). Dn Ds2 G2 3 कृष्णद्वेषी, T1 °द्वेषाद् ( for °द्वेष्टा ) D6 बली ( for बलात् ) — ( L 1358 ) G3 -सत्तम ( for -संसदि ) — ( L 1360 ) D6 T1 2, 4 G1, 4, 5 दर्पिताः ( for गर्विता. )

— ( L 1361 ) Dn Ds2 T4 दास्यन्ति मे ( for न दास्यन्ति ). Dn1 सर्वं ( for सर्वे ) D6 G2 M दास्यन्ति करसर्वस्वं ( for ᵃ ) Dn1 Ds2 T1 G2 M न हि ते, Dn2 निहते; D6 T4 न हि मे ( for मम ते ) Cal ed न हि ते मम शत्रव. ( for ᵇ ) — ( L 1362 ) Dn Ds2 G2 4 स तु कृष्णश्चक्रबलान्, Cal ed कृष्णश्चक्रबलान्मत्तो ( for ᵃ ) — ( L 1363 ) G2 ऽयं ( for ऽभूत् ) — ( L 1364 ) Dn Ds2 शरी तूणी ( for तूणीशर- ) — ( L 1366 ) Dn Ds2 विश्रुतम् ( for नित्यश ) — ( L 1367 ) D6 T4 गोपालोऽति- ( for गोपो मद- ) M1 2 गोपो बलमदान्वित ( for ᵇ ) — ( L 1368 ) G4 ममासीन्निश्चितं महत् ( for ᵇ ) — ( L 1369 ) D6 G1 5 गर्वहर्तृ, T4 °भङ्गं ( for °हन्तृ ) Dn Ds2 M1 3 नाम्ना चापि, D6 बभौ नाम्ना, M2 4 नाम चापि ( for बलि नाम्ना ) — ( L. 1370 ) G4 M2-4 नाशकम् ( for °नम् ) — ( L 1371 ) Dn Ds2 गोपजस्य ( for °कस्य ) M गोपस्य नृपसत्तमा· ( for ᵇ ) — Dn Ds2 M3 om lines 1373-1375 — ( L. 1376 ) D6 T1 4 G2 3 चैव ( for नाम ) T1, 4 G3 बृहती ( for महती ) — ( L 1377 ) T2 G1 5 सुकृतं; G3 °तो ( for °ता ) — ( L 1379 ) D6 T2 G3, 4

ततश्चाहं गदी खड्गी शार्ङ्गी चक्री तलत्रवान् । [ 1380 ]
युधि जेतास्मि कृष्णस्य नात्र कार्या विचारणा ॥
मां च ब्रूत नृपाश्चैवं गदिनं चक्रिणं तथा ।
शङ्खिनं शार्ङ्गिणं वीरं ब्रूत नित्यं नृपोत्तमाः ।
वासुदेवेति मां ब्रूत न तु गोपं यदूत्तमम् ॥
एकोऽहं वासुदेवो हि हत्वा तं गोपदारकम् । [ 1385 ]
सख्युर्मम निहन्तारं नरकस्य महात्मनः ॥
मां तथा यदि न ब्रूत दण्ड्या भारं शतं शतम् ।
सुवर्णस्य च निष्कस्य धान्यानां बहुशस्तथा ॥
तथा ब्रुवति राजेन्द्रे मनसा दुःसहं तदा ।
केचिल्लज्जासमायुक्ता आसते वीर्यवत्तराः । [ 1390 ]
रसज्ञा बलवीर्यस्य केशवस्य सदा नृपाः ॥
अपरे तु नृपा राजन्नेवमेवेति चुक्रुशुः ।
अन्ये बलमदोत्सिक्ता जेष्यामः केशवं रणे ॥

Colophon.

वैशंपायन उवाच ।

ततः कैलासशिखरान्निर्गतो मुनिसत्तमः ।
नारदः सर्वलोकज्ञः पौण्ड्रस्य नगरं प्रति ॥ [ 1395 ]
अवतीर्य नभोमार्गात्प्रत्यागम्य नृपोत्तमम् ।
द्वाःस्थेन च समाज्ञप्तः प्रविवेश गृहोत्तमम् ॥
अर्घ्यादिसमुदाचारं नृपाल्लब्ध्वा महामुनिः ।
निषसादासने शुभ्रे स्वास्तृते शुभ्रवाससा ॥
कुशलं पृष्टवान्भूयो नृपस्य मुनिसत्तमः । [ 1400 ]
उवाच नारदं भूयः पौण्ड्रको बलगर्वितः ॥
भवान्सर्वत्र कुशलः सर्वकार्येषु पण्डितः ।
प्रथितो देवसिद्धेषु गन्धर्वेषु महात्मसु ॥
सर्वत्रगो निराबाधो गन्ता सर्वत्र सर्वदा ।
अगम्यं तव विप्रेन्द्र ब्रह्माण्डेऽत्र न किंचन ॥ [ 1405 ]
नारदैवं वद त्वं हि यत्र यत्र गतः सदा ।
तत्र तत्र तपःसिद्धो लोके प्रथितवीर्यवान् ॥
पौण्ड्र एव बली ख्यातो वासुदेवेति शब्दितः ।
शङ्खी चक्री गदी शार्ङ्गी खड्गी तूणीतलत्रवान् ॥
विजेता राजसिंहानां दाता दानस्य सर्वदा । [ 1410 ]
भोक्ता राज्यस्य सर्वस्य शास्ता राज्ञां बलाद्बली ।
अजेयः शत्रुसैन्यानां रक्षिता स्वजनस्य ह ॥
योऽन्यो गोपकनामासौ वासुदेवेति शब्दितः ।

---

नाशन. ( for °क· ) — ( L 1380 ) $Dn_2$ $M_2$ तत्रायं च, $G_3$ ततश्चायं ( for °श्चाहं ) $D_6$ $M_{1-3}$ चक्री, $G_2$ शङ्खी ( for खड्गी ). $T_4$ ततश्चापाङ्गखड्गी च ( for $^a$ ) $Ds_2$ शङ्खी, $T_4$ चक्री, $G_2$ शङ्खी ( for शार्ङ्गी ) Dn शङ्खी, $D_6$ $M_3$ खड्गी, $T_4$ शार्ङ्गी ( for चक्री ) Dn $Ds_2$ तनुत्रवान् ( for तलत्र° ) — ( L 1381 ) $D_6$ हन्ता च, $T_4$ पाता च ( for जेतास्मि ) — ( L 1386 ) Dn $Ds_2$ $D_6$ $T_4$ M बलाद्धन्ता ( for निहन्तारं ) — ( L. 1387 ) $D_6$ दण्डो ( for दण्ड्या ) Dn $Ds_2$ $M_{1\ 3}$ भारशतै ; $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 3}$ भारशतं ( for भारं शतं ) — ( L. 1388 ) Dn $Ds_2$ $T_{1\ 4}$ $G_{2\ 3}$ $M_2$ धान्यस्य ; $M_{1\ 3}$ धनानां ( for धान्यानां ) — ( L 1399 ) $D_6$ मनसा दु खसंयुता ( for $^b$ ) — ( L 1390 ) $G_2$ om ( hapl ) $1390^b$–$1393^a$ $M_4$ आसंस्ते ( for आसते ) $Ds_2$ बलवत्तरा , $D_6$ $T_4$ $G_4$ वीर्यसत्तमा , $G_3$ M °वत्तमा ( for °वत्तरा ) — ( L 1391 ) $G_4$ नृप ( for नृपा· ) Bom Poona eds G(ed ) राजानस्ते सदा नृप ( for $^b$ )

Colophon — *Mention of the Epic* $Ds_2$ — *Mention of Khila* Dn $Ds_3$ $D_6$ $T_{1\ 2\ 4}$ G M — *Adhy name* . Dn $Ds_2$ M पौण्ड्रवध.. — *Adhy. no.* : Dn $Ds_2$ 275, $T_1$ $G_3$ 202 , $T_2$ $G_1$ 204 , $T_4$ 171 , $G_3$ 197 ; $G_4$ 201 , $G_5$ 203 , $M_{1-4}$ 167 , $M_4$ 300.

$T_4$ om the ref — ( L 1394 ) $D_6$ निर्गता मुनिसत्तमाः ( for $^b$ ) — $G_1$ om lines 1396–1399 — ( L 1396 ) $Dn_2$ $Ds_2$ $G_2$ $M_4$ नभोभागात् ( for °मार्गात् ) $M_1$ प्रतिगम्य ; $M_4$ प्रत्युद्गम्य ( for प्रत्यागम्य ) Dn $Ds_2$ $T_4$ नरोत्तमम् ( for नृपो° ). — ( L 1397 ) $G_2$ द्वारस्थेन ( for द्वा स्थेन च ). — ( L 1399 ) $D_6$ $T_{1\ 4}$ $G_{1\ 3-5}$ शुद्धे ( for शुभ्रे ) $Dn_1$ $Ds_2$ $M_3$ ह्यास्तृते , $T_{1.\ 4}$ $G_{1\ 3-5}$ $M_{1\ 2\ 4}$ वि° ( for स्वा° ). — ( L 1400 ) Dn $Ds_2$ नृप स मुनिसत्तमम् ( for $^b$ ) — ( L 1401 ) $T_2$ $G_{1\ 5\ 4}$ वचनं ( for नारदं ) — ( L 1403 ) $D_6$ प्रार्थितो ( for प्रथितो ) — ( L 1405 ) न हि ( for ऽत्र न ) — ( L. 1406 ) Dn $Ds_2$ भवान् ( for सदा ) — ( L 1408 ) Dn $Ds_2$ $T_4$ च विख्यातो ; $G_2$ बलख्यातो ( for बली ख्यातो ) $T_1$ T शब्दयते ( for शब्दित ). — $G_3$ om lines 1410-1413. — ( L 1409 ) $G_1$ शङ्खचक्रगदाशार्ङ्गी ( for $^a$ ) Dn $Ds_2$ -तनुत्रवान् ( for -तलत्र° ) — ( L 1410 ) Dn $Ds_2$ सर्वस्य ; $T_1$ धान्यस्य ( for दानस्य ) — ( L. 1411 ) Dn $Ds_2$ राजा ( for राज्ञां ) — ( L. 1413 ) $Dn_1$ ऽयं ; $Dn_2$ $Ds_3$ $T_4$ $G_3$ ऽद्य ( for

तस्य वीर्यबले न स्तो नाम्नश्च मम धारणे ॥
स हि गोपो वृथा बाल्याद्धारयत्येव नाम मे । [ 1415 ]
इदं निश्चिनु विप्रेन्द्र एक एव भवाम्यहम् ॥
वासुदेवो जगत्यस्मिन्निर्जित्य बलिनं यदुम् ।
वृष्णीन्सर्वान्बलाज्जित्वा निर्दहिष्ये च तां पुरीम् ।
द्वारकां वृष्णिनिलयां योद्धा चाहं महामते ॥
एते च बलिनः सर्वे नृपा मम समागताः । [ 1420 ]
अश्वाश्च वेगिनः सन्ति रथा वायुजवा मम ।
नागा मत्ताः सहस्रं च शतं नियुतमेव च ॥
एतेनैव बलेनाजौ हनिष्ये केशवं रणे ।
तस्मादेवं सदा विप्र वद ब्रह्मपुरे मम ॥
इन्द्रस्यापि सदा विप्र वद नारद सांप्रतम् । [ 1425 ]
प्रार्थनैषा मम विभो नमस्ये त्वां तपोधन ॥

नारद उवाच ।

सर्वत्रगः सदा चास्मि यावद्ब्रह्माण्डसंस्थितिः ।
अवार्यः सर्वलोकेषु गमने केनचिन्नृप ॥
किं तु वक्तुं तथा राजन्नोत्सहे नृपसत्तम ।
महीं शासति देवेशे चक्रपाणौ जनार्दने ॥ [ 1430 ]
विष्णौ सर्वत्रगे देवे दुष्टान्हत्वा सबान्धवान् ।
वासुदेवेति को नाम तिष्ठत्यस्मिन्हराविति ।
को नाम वक्तुमेवं हि कृष्णे शासति गोपतौ ॥
अज्ञानाद्वक्तुमेवं चेत्समर्थः प्राकृतो जनः ।
हरिः सर्वत्रगो विष्णुर्दर्पं ते व्यनेष्यति ॥ [ 1435 ]
अचिन्त्यविभवो विष्णुः शार्ङ्गधन्वा गदाधरः ।
आदिदेवः पुराणात्मा दर्पं ते व्यपनेष्यति ॥
हास्यमेतन्महाराजन्यच्चक्रं तव संस्थितम् ।
शार्ङ्गं शङ्खं तथा राजन्गदा घोरतरा हि ते ।
अतीव हासकालोऽयं तव संप्रति वर्तते ॥ [ 1440 ]

Colophon.

वैशंपायन उवाच ।

ततः क्रुद्धो महाराज पौण्ड्रो बलमदान्वितः ।
नारदं विप्रवर्यं तं प्रोवाच नृपसंसदि ॥
मा मैवं वद देवर्षे राजाहं विजयी सदा ।
गच्छ त्वं काममद्यैव मुनिः शापप्रदः सदा ।
भीतस्त्वत्तो महाबुद्धे गच्छ त्वं काममत्र ह ॥ [ 1445 ]
इत्युक्तो नृपवीर्येण तूष्णीमेव स नारदः ।

ऽन्यो ) $D_6$ $T_4$ $G_2$ -ह्यरोऽसौ ( for -नामासौ ) —( L 1416 ) $G_2$ वासुदेव ( for एक एव ) —( L 1417 ) $D_6$ पदम् ( for यदुम् ) —( L 1418 ) Dn $Ds_2$ क्षिप्त्वा, $G_2$ जित्य ( for जित्वा ) $Dn_2$ $Ds_2$ $M_{3\ 4}$ निहनिष्ये ( for निर्दहिष्ये ) —( L 1419 ) $G_{1\ 4}$ $M_3$ विष्णु ( for वृष्णि- ) $G_5$ महामुने ( for °मते ) —( L 1421 ) $D_6$ $T_4$ बहवः ( for वेगिनः ) $G_2$ तथा ( for रथा ) $G_1$ वायुजिता ( for °जवा ) —( L 1422 ) $M_4$ नानामत्रा ( for नागा मत्ता ) $G_5$ नागा सहस्रमत्ताश्च ( for ᵃ ) Dn $Ds_2$ गजा ( for शत ). —( L 1423 ) Dn $Ds_2$ [अ]हं ( for [ए]व ) $D_6$ $T_{1\ 2,4}$ G [अ]हं ( for [आ]जौ —( L 1426 ) $M_{1\ 3}$ तपोधनम् —( L 1427 ) $D_6$ सो ( for च ) —( L 1428 ) Dn $Ds_2$ $T_{2,4}$ $G_{1,2\ 4}$ आचार्यः ( for अवार्य ) Dn $Ds_2$ $D_6$ -कार्येषु ( for -लोकेषु ) —( L 1429 ) Dn $Ds_2$ $T_{2,4}$ $G_{1-4}$ $M_1$ नु ( for तु ) Dn $Ds_2$ $G_{1\ 2}$ $G_{1-4}$ $M_4$ उत्सहे ( for नो° ). —( L. 1432 ) $D_6$ नृपाविह ; $G_2$ नराधिप ( for हराविति ). —( L 1433 ) Dn $Ds_2$ M गोमतीम् ( for गोपतौ ) —( L 1434 ) Dn $Ds_2$ समर्था प्राकृता जना ( for ᵇ ) —( L 1438 ) Dn $D_6$ $T_{1,4}$ $G_{1,4}$ $M_4$ महाराज ; $T_2$ महद्राजन्, $M_2$ वहन्रा° ( for महारा° ). Dn तच्च ( for तव ) $G_2$ चक्रं तव सुसंस्थितम् ( for ᵇ ) —( L 1439 ) $Ds_2$ $T_{1\ 4}$ $G_2$ खड्गं , $D_6$ $M_2$ शङ्ख. , $G_3$ चक्रं ( for शङ्खं ) $G_1$ गदा ( for तथा ) Dn शार्ङ्गंखड्गं तथा राजन् ( for ᵃ ) $D_6$ $T_4$ $M_{1-3}$ घोरतमा ( for °तरा ) Dn $Ds_2$ महाघोरं न दाप्यते, $T_1$ महाघोरतरा हि ते; $G_2$ महाघोरं तमो हि ते ( for ᵇ )

Colophon — *Mention of Khila* Dn $Ds_2$ $D_6$ $T_{1\ 2\ 4}$ G M — *Adhy name* Dn $Ds_2$ पौण्ड्कनारदसंवाद , $D_6$ M पौण्ड्कवधः ; $T_4$ पौण्ड्वधः — *Adhy no* $Dn_2$ $Ds_2$ 276 ; $T_1$ $G_3$ 203 , $T_2$ $G_1$ 205 , $T_4$ 172 , $G_2$ 186 , $G_4$ 202 ; $G_5$ 204 , $M_{1-3}$ 168 $M_4$ 204

( L 1441 ) $T_2$ $G_{1\ 5}$ महातेजा· ( for °राज ). Dn $Ds_2$ $D_6$ $T_{1\ 2\ 4}$ $G_{1-6}$ $M_1$ पौण्ड्रो मदबलान्वित· ( for ᵇ ) —( L. 1443 ) $T_1$ विप्रर्षे ( for देवर्षे ) $Dn_2$ किमिदं विप्र विप्रर्षे , $Ds_2$ किमभिप्रेत्य विप्रर्षे , $M_2$ मा चैवं वद विप्रर्षे ( for ᵃ ). $M_3$ राजानं ( for राजाहं ) $D_6$ $T_4$ $G_3$ सह ( for सदा ) Dn $Ds_2$ राजाह च द्विजैः सह ( for ᵇ ) —( L 1444 ) Dn $Ds_2$ अथ वा ( for अद्यैव ). Dn $Ds_2$ मुने ( for मुनि· ) $D_6$ $T_4$ $G_3$

जगामाकाशगमनो यत्र तिष्ठति केशवः ।
स गत्वा विष्णुसकाशं विष्णोः सर्व शशंस ह ॥
तच्छ्रुत्वा भगवान्विष्णुर्यथेष्टं वदतामिति ।
गर्व तस्यापनेष्यामि श्वोभूते मुनिसत्तम । [ 1450 ]
इत्युक्त्वा विररामैव तस्मिन्बदरिकाश्रमे ॥
ततः पौण्ड्रो महावीर्यो बलैर्बहुभिरीश्वरः ।
अश्वैरनेकसाहस्रैर्गजैर्बहुभिरन्वितः ॥
सप्तकोटिरथैर्युक्त ईश्वरः सत्यसंगरः ।
अनेकशतसाहस्रैः पत्तिभिश्च समन्वितः । [ 1455 ]
एकलव्यप्रभृतिभी राजभिश्च समन्वितः ॥
अष्टौ हयसहस्राणि नागानां नियुतं तथा ।
प्रयुतं पत्तिसाहस्रं तद्बलं समपद्यत ॥
एतेन तु बलेनाजो प्रस्फुरन्नृपसत्तम ।
विरराज महाराज उदयस्थो यथा रविः ॥ [ 1460 ]
ययौ मध्यमरात्रेण नगरीं द्वारकामनु ।
पत्तयो दीपिकाहस्ता रात्रौ महति दारुणे ॥
ययुर्विविधशस्त्रौघाः सपतन्तो महाबलाः ।
द्वारकां वीर्यसंपन्नां महाघोरां नृपोत्तमाः ॥
रथं महान्तमारुह्य शस्त्रौघैश्च समन्वितम् । [ 1465 ]
पट्टसासिसमाकीर्णं गदापरिघसंकुलम् ॥
शक्तितोमरसंकीर्णं ध्वजमालासमाचितम् ।
किंकिणीजालसंयुक्तं शरासिप्रासशोभितम् ॥
महाघोरं महारौद्रं युगान्तजलदोपमम् ।
धनुर्गदासमाकीर्णं महावातजवोपमम् । [ 1470 ]
अश्यर्कसदृशाकारं ययौ द्वारवतीमनु ॥
गृहीतदीपिको राजा वीर्यवान्बलवान्नृप ।
हन्तुमैच्छज्जगन्नाथं वृष्णींश्चैव समन्ततः ॥
आकर्षन्बलमुख्यांस्तान्राज्ञः सर्वान्महाद्युतिः ।
पूर्वद्वारं समागम्य बलं संस्थाप्य यत्नतः । [ 1475 ]
इदं प्रोवाच राजा तु नृपान्सर्वानवस्थितान् ॥
ताड्यतामत्र भेरी तु नाम विश्राव्य मामकम् ।
युध्यतां युध्यतामत्र देयं वा प्रतिदीयताम् ॥
आगतः पौण्ड्रराजोऽयं युद्धार्थी वीर्यवत्तरः ।
हन्तुकामः समग्रान्वः कृष्णबाहुबलाश्रयान् ॥ [ 1480 ]

---

भवान् ( for सदा ) —( L 1445 ) Dn Ds2 अद्य हि ( for अत्र ह ) — G3 om lines 1446–1448 – ( L 1446 ) Ds2 D6 M2 5 इत्युक्तो नृपवर्येण ( for ᵃ ) —( L 1448 ) D6 T2 4 G1 4. 5 M गत्वा विष्णुसकाशं स , T1 गत्वा तत्र तथा विष्णोर् ( for ᵃ ) T1 यथा ( for विष्णो ) —( L 1450 ) Dn Ds2 D6 T4 G1 2 M दर्पं ( for गर्वं ) Dn Ds2 T1 2 4 G द्विज- ( for मुनि- ) —( L 1451 ) D6 T1 2 4 G1–4 आसि-न्बदरिकावने ( for ᵇ ) —( L 1452 ) Dn Ds2 M2 महाबाहुर् ( for °वीर्यो ) — G2 om line 1453 G4 om lines 1454–1455. —( L 1454 ) T1 G2 3 शस्त्र- ( for सप्त- ) T1 G3 -धनैर्युक्तम् , T2 -धनैर्युक्त ( for -रथैर्युक्त· ) Dn Ds2 M शस्त्र- ( M2 सप्त )कोटिसमायुक्त ( for ᵃ ) Dn Ds2 स राजा ( for ईश्वर ) —( L 1455 ) D6 पङ्क्तिभिश् ( for पत्ति° ) —G1 om line 1456 —( L. 1456 ) Dn Ds2 समन्तत. ( for °न्वित. ). —( L 1457 ) Dn Ds2 G2 रथ- ( for हय- ) Dn Ds2 G4 T4 G2 M1 4 अयुतं ( for नियुतं ) —( L 1458 ) Dn Ds2 अर्बुदं पत्तिसंघानां ( for ᵃ ) — —( L 1359 ) D6 M प्रत्व-रन् ( for प्रस्फुरन् ) —( L 1460 ) D6 T2, 4 G1 3, 4, 5 M3 महावीर्यं ( for °राज ). Dn Ds2 M2 महारविः ( for यथा रविः ). —( L 1461 ) Dn Ds2 G4 स ययौ मध्यरात्रेण ( for ᵃ ) —( L 1462 ) M पत्तिनो ( for पत्तयो ). Dn Ds2 D6 तमसि ( for महति ) —( L 1463 ) Cal ed. -शस्त्राढ्या ( for -शस्त्रौघा ) —( L 1465 ) Dn Ds2 T4 समावृतम् , G1 निरन्त-रम् ( for समन्वितम् ) —( L 1466 ) T1 2 G4 3–5 -शोभितम् ( for -संकुलम् ) G2 महाजलदसंनिभम् ( for ᵇ ) — G2 om lines 1467–1470 T4 om line 1467 . — ( L 1467 ) Dn1 -समन्वितम् , D6 -समाकुलम् ( for °चितम् ) T1 ध्वजमालाभि-रञ्जितम् ( for ᵇ ) —( L 1468 ) G5 संकीर्णं ( for -संयुक्तं ) D6 T4 शक्त्यृष्टि- , T1, 2 गदासि- , ( for शरासि- ) Dn Ds2 -संयुतम् , D6 T4 M1 3 -तोमरम् ( for -शोभितम् ) —( L 1469 ) D6 T4 महाघोषं ( for °घोरं ) — D6 T1 2 4 G1, 3 om line 1470 — ( L 1470 ) G4 5 समायुक्तं ( for °कीर्णं ) Dn Ds2 महावाद्योपम महत् , Cal ed महामेघोपम महत् ( for ᵇ ) —( L 1471 ) D5 T1 2 4 G3 अत्यर्क- , G4 5 अर्कस्य ( for अश्यर्क- ). —( L 1472 ) M1 3 राजन् ( for राजा ) T4 M1–3 नृप ( for नृप ). —( L 1473 ) T1, 2 4 G वृष्णिवीरं ( for वृष्णींश्चैव ) — ( L 1474 ) T1, 2 G1 3 5 राजा ( for राज्ञ· ). D6 तत्र ( for सर्वान् ) T1, 2 G1 3, 4 महामतिः ( for °द्युतिः ) — ( L 1475 ) Dn Ds2 पुरद्वारं समासाद्य ( for ᵃ ) — ( L 1476 ) T1 उपस्थितान् ( for अव° ) —( L 1478 ) G5 वध्यताम्

इति ते प्रेषिताः सर्वे समाघ्नंस्तूर्यकान्बहून् ।
दीपिकाश्च प्रदीप्यन्ते बह्वयः शतसहस्रश. ॥
इतश्चेतश्च राजानो वर्तन्ते युद्धलालसाः ।
पुरीं ते परितस्तस्थुः क्षत्रियाः शस्त्रिणस्तथा ।
सिंहनादं प्रकुर्वन्तः शस्त्रधारासमाकुलाः । [ 1485 ]
कुतो नु वृष्णिप्रवरः कुतो राजा जगत्पतिः ॥
कुतश्च सात्यकिर्वीर. कुतो हार्दिक्य एव च ।
कुतो नु बलभद्रश्च सर्वयादवसत्तमः ।
इत्येवं कथयन्तो वै राजानः सर्व एव तु ॥
आदाय शस्त्राणि बहूनि सर्वतः [ 1490 ]
शरांश्च चापानि महान्ति सर्वे ।
युद्धाय संनाहनिबद्धदृष्टयो
ययुः पुरीं द्वारवतीं नृपोत्तमाः ॥

Colophon

वैशंपायन उवाच ।
ततश्च यादवाः सर्वे दृष्ट्वा सैनिकसंचयम् ।
रात्रौ च समनुप्राप्तं महाशस्त्रसमाकुलम् ॥ [ 1495 ]
महावातसमुद्भूतं कल्पान्ते सागरोपमम् ।
अचिन्त्यं सर्वभूतानां कालान्तकयमोपमम् ॥
संनद्धाः समपद्यन्त शस्त्रिणो युद्धलालसाः ।
गृहीतदीपिकाः सर्वे यादवाः शस्त्रयोधिनः ॥
सात्यकिर्बलभद्रश्च हार्दिक्यो निशठस्तथा । [ 1500 ]
उद्धवोऽथ महाबुद्धिरुग्रसेनो महाबलः ॥
अन्ये च यादवाः सर्वे कवचग्रहे रताः ।
सामन्ता युद्धकुशला रात्रौ संनाहयोधिनः ॥
खड्गिनः शस्त्रिणश्चैव सर्वे शस्त्रसमाकुलाः ।
युद्धाय समपद्यन्त बहवो बाहुशालिनः ॥ [ 1505 ]
रथिनो गजिनश्चैव सादिनः सायुधास्तथा ।
नित्ययुक्ता महात्मानो धन्विनः पुरुषोत्तमाः ॥
निर्ययुर्नगरात्तूर्णं दीपिकाभिः समन्ततः ।
कुतः पौण्ड्रक इत्येव ब्रुवन्तः सर्वसात्वताः ॥
दीपिकादीपितो देशो निस्तमाः समपद्यत । [ 1510 ]
ततो वितिमिरो देशः समन्तात्प्रत्यपद्यत ।
युद्धं समभवद्घोरं वृष्णीनां क्षत्रियैः सह ॥
ततो महान्समभवत्संनादो लोमहर्षणः ।
हया हयैः समायुक्ताः गजाश्च रथयूथपैः ॥

---

(for युध्यताम्) —(L 1479) Dn Ds$_2$ G$_2$ आगतः पौण्ड्रको राजा (for $^a$) T$_2$ G$_3$ M$_4$ युद्धार्थं (for °र्थी) D$_6$ T$_{1,2}$ G M वीर्यसत्तम ; T$_4$ °वत्तम (for °वत्तरः) —(L 1480) T$_{1\ 2}$ G हत्वा वृष्णीन् (for हन्तुकाम ) M$_4$ -बलाश्रितान् (for °श्रयान्) —(L 1481) Dn Ds$_2$ समीयु· सूर्यकान्बहून्; G$_2$ सवनं सूचका° (for $^b$) —(L. 1483) Dn Ds$_2$ युध्यन्ते, T$_4$ G$_4$ वर्धन्ते (for वर्तन्ते) —(L 1484) T$_4$ G$_{2\ 4}$ पुरतस् (for परितस्) T$_1$ तत्र (for तस्थुः) Dn Ds$_2$ पुरीं ते पुरतस्तत्र (for $^a$) —(L 1488) M$_3$ स (for नु) —(L. 1489) Dn Ds$_2$ ते, M$_4$ च (for तु) —(L 1491) Dn Ds$_2$ बहूनि (for महान्ति) T$_2$ G$_1$ संयुगे (for सर्वे) —(L. 1492) Dn Ds$_2$ T$_2$ G$_{2,3}$ -निबद्धशो ययुर् (for °द्धदृष्टयो) —(L. 1493) Dn Ds$_2$ T$_4$ G$_{2\ 3}$ हरे , D$_6$ तत (for ययु·) G$_1$ नृपोत्तम·

Colophon — *Mention of the Epic* , Ds$_2$ — *Mention of Khila* Dn Ds$_2$ D$_6$ T$_{1\ 2\ 4}$ G M — *Adhy name* Dn Ds$_2$ M पौण्ड्रकवध , T$_1$ G$_5$ पौण्ड्रकस्य द्वारकागमनम्, G$_4$ पौण्ड्रवध — *Adhy no* : Dn Ds$_3$ 277, T$_1$ G$_3$ 204; T$_2$ G$_1$ 206; T$_4$ 173, G$_2$ 199, G$_5$ 205, M 169

(L 1494) -संचयान् —(L 1495) Dn Ds$_2$ G$_{2\ 4}$ व्यसन (for समनु-) —(L 1496) D$_6$ T$_{1,2}$ G कल्पान्ते सागरं यथा, Bom Poona eds G(ed) °न्ते समरोपमम् (for $^b$) —(L 1497) G$_{2\ 3-5}$ -शतोपमम् (for -यमो°) — Dn Ds$_2$ om line 1498 —(L 1498) T$_1$ सनाथा· (for संनद्धा.) G$_1$ शस्त्रेणायुधलालसा. (for $^b$). —(L. 1499) G$_3$ गृहीत्वा (for गृहीत-) G$_5$ चित्र- (for शस्त्र ) —(1501) D$_6$ T$_4$ G$_2$ स (for ऽथ). —(L 1502) D$_6$ T$_4$ कवचावृतमूर्तय. (for $^b$) —(L 1503) Dn Ds$_2$ M$_1$ समस्त-, D$_6$ T$_{1\ 2}$ G$_{1\ 3-5}$ M$_3$ समन्ताद्, G$_2$ समर्था (for सामन्ता) —(L 1504) Dn Ds$_2$ T$_1$ शस्त्रिण खड्गिनश्चैव (for $^a$) —(L 1506) D$_6$ T$_{1\ 2}$ G$_{1\ 3-5}$ M$_{2-4}$ गदिनश् (for गजि°) G$_2$ वाजिन (for सादिन.) —(L 1509) Dn Ds$_2$ D$_6$ T$_1$ G$_{2\ 4}$ M$_4$ वदन्त·, T$_2$ कुर्वन्तः (for ब्रुवन्त.). —(L 1511) G$_5$ समपद्यत (for प्रत्य°) —(L 1512) D$_6$ पुन (for युद्धं) M वृष्णिभि (for वृष्णीनां). Dn Ds$_2$ वृष्णिभि शत्रुभि· सह (for $^b$) —(L 1513) D$_6$ G$_1$ संचारो; T$_1$ संनद्धो (for सनादो) —(L 1514) T$_2$ G$_3$ om (hapl.) 1514$^b$–1516$^a$. — Dn Ds$_2$ गज- (for रथ-). —(L.

रथा रथैः समायुक्ताः सादिनः सादिभिस्तथा । [ 1515 ]
खड्गिभिः खड्गिनो राजन्गदिभिर्गदिनस्तथा ॥
परस्परव्यतिकरो रण आसीत्सुदारुणः ।
महाप्रलयसंक्षोभः शब्दस्तेषां महात्मनाम् ॥
आधावत प्रहरत द्रुतं विपरिधावत ।
निघ्नतैतानित्यवोचन्वृष्णयः सर्वतो नृपान ॥ [ 1520 ]
अयमेष महाबाहुः खड्गी पतति वीर्यवान् ।
अयमेष शरी घोरो वर्तते नः सुदारुणः ।
गदी चायं महावीर्यः सर्वान्नो बाधते नृपः ॥
अयं रथी शरी चापी गदी तूणीरवान्प्रभो ।
पट्टसी सर्वतो याति कुन्तपाणिरयं बली ॥ [ 1525 ]
अयमत्र महाशूली संस्थितः सर्वतोदिशम् ।
गजोऽयं सुविषाणाग्रो वर्तते सर्वतः पथि ॥
अश्वी सर्वत्रगः शूरो वेगवान्वातसंनिभः ।
शराञ्शरैः समाहन्ति दण्डान्दण्डैर्जगत्पते ॥
कुन्तान्कुन्तैः समाजघ्नुर्गदाभिश्च गदास्तथा । [ 1530 ]
परिघान्परिघैश्चैव शूलाञ्शूलैः समन्ततः ॥
एवं तेषां महाराज कुर्वतां रणमुत्तमम् ।
संग्रामः सुमहानासीच्छब्दः समभवन्महान् ॥
तूर्याणि सुबहून्याजौ शब्दवन्ति महान्ति च ।
प्रादुरासन्सहस्राणि शङ्खानां चैव निस्वनाः ॥ [ 1535 ]
रात्रौ प्रादुरभूच्छब्दः संग्रामे लोमहर्षणः ।
वर्तमाने महायुद्धे वृष्णीनां चैव तैः सह ॥
केचिद्धताः समापेतुः पृथिव्यां पृथिवीक्षितः ।
केचिन्मथितमस्तिष्का विप्रकीर्णशिरोधराः ।
पेतुरुर्व्यां महावीर्या राजानः शस्त्रपाणयः ॥ [ 1540 ]
केचित्तु भिन्नवर्माणः समापेतुस्ततस्तत. ।
परस्परं समाहत्य परस्परवधैषिणः ॥
न्यस्तशस्त्रा महात्मानः समांसारक्तविग्रहाः ।
पेतुर्गतासवः केचिद्यमराष्ट्रविवर्धनाः ।
एवं ते निहता राजन्राजानः सर्व एव तु ॥ [ 1545 ]
एतस्मिन्नन्तरे शूर एकलव्यो निषादपः ।
धनुर्गृह्य महाघोरं कालान्तकयमोपमम् ॥
शरैरनेकसाहस्रैरर्दयामास यादवान् ।

1515 ) Dn $Ds_2$ $D_6$ $G_{3\,4}$ $M_{2\,4}$ सादिभि सादिनस्तथा ( for $^b$ ) — ( L 1516 ) Dn $Ds_2$ $T_2$ $G_{1\,3}$ खड्गिन· खड्गिभि सार्धं ( for $^a$ ) — $T_1$ om line 1517 — ( L 1517 ) Dn $Ds_2$ $T_4$ -व्यतीकारो ( for °करो ) — ( L 1518 ) $G_4$ -सघोष ( for -संक्षोभ ) — ( L 1519 ) Dn $Ds_2$ धावन्तः प्रहरन्त्येतान् ( for $^a$ ) — ( L 1520 ) Dn $Ds_2$ हन्तैतान् ( for वृष्णय ) — ( L 1521 ) $T_1$ चरति ( for पतति ) — ( L 1522 ) $D_6$ $T_1$ शरो ; $G_3$ महा- ( for शरी ) Dn $Ds_2$ ऽति-, $D_6$ च, $G_3$ $M_4$ य. ( for न. ) $T_2$ $G_{3.\,4}$ सदा रणे, $G_{1\,5}$ $M_4$ सुदारुणे ( for °रुण. ) $T_1$ वर्तते सर्वदा रणे ( for $^b$ ) — ( L 1523 ) $D_6$ $T_4$ M बाधति नो ( for नो बाधते ). — ( L 1524 ) $T_4$ $G_{1\,3\,5}$ transp रथी and शरी Dn $Ds_2$ तनुत्रवान्, M तलत्र° ( for तूणीर° ) — ( L 1525 ) Bom Poona eds G( ed ) यादृश. ( for पट्टसी ). — ( L 1526 ) Dn $Ds_2$ $T_1$ संश्रित· ( for संस्थित ) — ( L 1527 ) Dn $Ds_2$ $D_6$ $T_4$ $G_2$ $M_4$ स- ( for सु- ) Dn $Ds_2$ $T_4$ M प्रति ( for पथि ) — ( L 1529 ) $D_6$ $G_2$ $M_{1-3}$ शरा ( for शराञ् ) $T_1$ शरे ( for शरै ) $G_2$ M समाघ्नाता ; $T_{1\,2}$ °जघ्नु ( for °हन्ति ) $D_6$ $T_{2\,4}$ $G_2$ $M_{1-3}$ दण्डं ( for दण्डान् ) — ( L 1530 ) $D_6$ $T_2$ $G_3$ कुन्ता. कुन्तै — ( L 1531 ) $D_6$ $T_{1\,2\,4}$ $G_3$ $M_{1-3}$ परिघा ( for °घान् ) Dn $Ds_2$ सार्धं ( for चैव ) $T_{1.\,2}$ $M_{1-3}$ शूलाः, $G_2$ शिलाः ( for शूलाञ् ).

— ( L 1533 ) Dn $Ds_2$ $G_4$ $M_{1\,3}$ शब्दश्चापि महानभूत् ( for $^b$ ) — ( L 1534 ) Dn $Ds_2$ $G_4$ $M_1$ भूतानि, $T_{1\,2}$ $G_{1\,3\,5}$ तूर्याणा ( for तूर्याणि ) — ( L 1535 ) Dn सशस्त्राणि ( for सहस्राणि ) Dn $Ds_2$ $D_5$ $T_4$ $M_{1-3}$ निस्वन $G_2$ शङ्खाना भीमनिस्वन ( for $^b$ ) — ( L 1536 ) $D_6$ $T_{1\,2\,4}$ $G_3$ M घोर ( for शब्द ) Dn $D_6$ $G_3$ M संग्रामो ( for °मे ) — ( L. 1537 ) $T_{1\,2}$ $G_{1\,3}$ -घोरे ( for -युद्धे ) Cal ed प्रावर्तत महायुद्धं ( for $^a$ ) — ( L 1538 ) $G_4$ $M_1$ ग्रस्ताः ( for हता ) $T_2$ समाजघ्नु ( for °पेतु. ) — ( L 1539 ) $M_4$ पतित- ( for मथित- ) $G_3$ -मूर्धानो ( for -मस्तिष्का ) Dn $Ds_2$ केचित्पतितमाश्लिष्टा ( for $^a$ ) $T_{1\,2}$ $G_{1\,3}$ M -शिरोरुहा ( for °धरा ) — ( L 1541 ) Dn $Ds_2$ सहस्रशः ( for ततस्तत ) — ( L 1542 ) Dn $Ds_2$ समाश्रित्य, $G_2$ °पत्य ; $G_3$ सत्यपराः ( for समाहत्य ) — ( L 1543 ) Dn $Ds_2$ समन्तात्क्षतविग्रहा ; $G_2$ समरेष्वाततायिन· ( for $^b$ ) — ( L 1544 ) $G_5$ गतासव पेतुरुर्व्यां ( for $^a$ ) — ( L 1545 ) Dn $Ds_2$ योजिताः, $T_1$ योधिता· ( for राजान ) $T_2$ $G_1$ ते ( for तु ) — ( L 1546 ) $D_6$ $T_{1\,2\,4}$ $G_{1\,2\,4\,5}$ M महाबलः ( for निषादपः ) — ( L 1547 ) Dn $Ds_2$ $G_3$ -यमोपम· ( for °पमम् ) — ( L 1548 ) $M_{1\,3}$ दारयामास ( for अर्द° ) $D_6$ वीर्यवान् ( for याद° ) — ( L. 1549 ) Dn $Ds_2$ $M_2$ परं शतै., $D_6$ पृथक्शतै., $T_1$ परःशतं ;

परःशतैः शराणां तु निशितैर्मर्मभेदिभिः ॥
वृष्णिवीरबलं सर्वं पोथयामास सर्वतः । [ 1350 ]
युध्यतः शस्त्रपाणींश्च क्षत्रियान्वीर्यवत्तमान् ॥
निशठं पञ्चविंशत्या शराणां नतपर्वणाम् ।
सारणं दशभिर्विध्वा हार्दिक्यं पञ्चभिः शरैः ॥
उग्रसेनं नवाशीत्या वसुदेवं च सप्तभिः ।
उद्धवं दशभिश्चैव अक्रूरं पञ्चभिः शरैः ॥ [ 1555 ]
एवमेकैकशः सर्वान्निहत्य निशितैः शरैः ।
विद्राव्य यादवीं सेनां नाम विश्राव्य वीर्यवान् ॥
एकलव्यो यदूनाह वीर्यवान्बलवानहम् ।
इदानीं सात्यकिर्वीरः क्व यास्यति महाबलः ॥
मदमत्तो हली साक्षात्क्व यातीह गदाधरः । [ 1560 ]
इत्याह सिंहनादेन सर्वान्विस्मापयन्निव ॥

Colophon

वैशंपायन उवाच ।

विद्रुतेषु च सैन्येषु वृष्णिवीरेषु चैव हि ।
भीतेष्वथ महाराज हतेषु युधि सर्वतः ॥
दीपिकासु प्रशान्तासु निःशब्दे सति सर्वतः ।
जितमित्येव तन्मत्वा वृष्णीनां बलमुत्तमम् ॥ [ 1565 ]
ततः पौण्ड्रो महावीर्यो बभाषे सैनिकान्स्वकान् ।
शीघ्रं गच्छत राजेन्द्राष्टङ्कैः कुन्तैः पुरीमिमाम् ॥
कुठारैः कुन्तलैश्चैव पाषाणैः सर्वतोदिशम् ।
कर्पणस्थैश्च पाषाणैः सर्वतो यात भूमिपाः ॥
भिद्यन्तां प्राकारचयाः प्रासादाश्च समन्ततः । [ 1570 ]
गृह्यन्तामश्वमुख्याश्च धनानि सुबहूनि च ॥
गृह्यन्तां कन्यकाः सर्वा दास्यश्चैव समन्ततः ।
गृह्यन्तामश्वमुख्याश्च धनानि सुबहून्यथ ॥
तथेति ते महात्मानो राजानः सर्व एव तु ।
कुठारैः सर्वतश्चैव चिच्छिदुः पौण्ड्रकाज्ञया । [ 1575 ]
प्राकारांश्चैव सर्वत्र प्रासादान्रत्नसंचयान् ॥
अथ तत्र महाशब्दः प्रादुरासीत्समन्ततः ।
टङ्केषु पात्यमानेषु प्राकारेषु महाबलैः ।
पूर्वद्वारे महाराज भिन्नाः प्राकारसंचयाः ॥
श्रुत्वा शब्दं महाघोरं सात्यकिः क्रोधमूर्छितः । [ 1580 ]

---

$T_4$ परः शरै (for परःशतैः) — (L 1550) Dn $Ds_2$ $G_2$ वृष्णीनां च (for वृष्णिवीर-) — (L 1551) Dn $Ds_2$ वीर्यवत्तरान्, $T_{1\,2}$ $G_{1\,4\,5}$ °सत्तमान् (for °वत्तमान्). — $G_3$ om (hapl) lines 1552–1557 — (L 1552) $T_2$ निशितं, $G_2$ निस्त्रिंशं (for निशठं). $G_2$ -पर्वभि. (for °णाम्). — (L. 1553) $D_6$ $T_4$ पञ्चभिर् (for दश°) — (L 1554) Dn $Ds_2$ $M_3$ नवत्याशु, $G_2$ नवत्या च (for नवाशीत्या). — $T_{1\,2}$ $G_{1\,2\,4\,5}$ om line 1555 — (L 1556) Dn $Ds_2$ $T_{1\,4}$ सर्वे (for सर्वान्) Dn $Ds_2$ $G_2$ निहता (for °त्य) — (L 1558) Dn $Ds_2$ $D_6$ $T_4$ M यदुवृषान्, $G_2$ यदून्वृष्णीन् (for °नाह). $T_1$ तदा, $G_2$ द्विष. (for अहम्) $G_4$ बलवान्वीर्यवानहम् (for $^b$) — (L 1559) $D_6$ $T_{2\,4}$ $G_1$ $M_{1-3}$ याति स्म (for यास्यति) — (L 1560) $T_{1\,2}$ $G_1$ हरि ; $T_4$ M बली (for हली). $T_4$ याति स्म; $G_{4\,5}$ यास्यति (for यातीह) — (L 1561) Dn $Ds_2$ $T_1$ $G_2$ सिंहान् (for सर्वान्)

Colophon — *Mention of the Epic* $Ds_2$ — *Mention of Khila* Dn $Ds_2$ $D_6$ $T_{1\,2\,4}$ $G_{1,3-5}$ M — *Adhy name* Dn $Ds_2$ M पौण्ड्रकवध — — *Adhy no* Dn $Ds_2$ 278 $T_1$ $G_3$ 275, $T_2$ $G_1$ 277; $T_4$ 174; $G_4$ 204; $G_4$ 206, M 170.

$T_2$ om the ref — — (L 1562) $D_6$ तदा तेषु; $T_{1\,2}$ $G_{1\,3}$ च मुख्येषु (for च सैन्येषु) Dn $Ds_2$ निवृत्तेष्वथ सैन्येषु (for $^a$) — (L 1564) $G_4$ नि शब्देषु समन्तत (for $^b$) — (L 1566) $D_6$ प्रति (for स्वकान्) — (L 1568) $G_2$ कुठारैश्चैव कुन्तैश्च (for $^a$) — (L 1569) Cal ed सुघोरैस्तान् (for च पाषाणैः) $G_4$ यान्तु (for यात) — (L 1570) $T_{1\,2}$ प्रासाद- (for प्राकार-) $Ds_2$ $T_2$ $G_{1\,3-5}$ प्राकाराश् (for प्रासादाश्) $G_{2\,3}$ $M_4$ ins after line 1570, $T_{2\,4}$ $T_{1,4}$ after 1572

16** योषितो वारमुख्याश्च नागाश्चैव समन्ततः ।

— $T_4$ $G_4$ om line 1572 — (L 1574) Dn $Ds_2$ ते तथेति (by transp) — (L 1576) $D_6$ प्राकार सर्वतश्चैव, $G_2$ °रान्सर्वतश्चैव (for $^a$) Dn वरसंचयान्, $Ds_2$ नर°, $D_6$ नृपसत्तम, $T_{1\,2}$ $G_{1\,3}$ वित्तसंचयान्, $G_2$ नृप°; $G_{4\,5}$ गृह°, $M_4$ रुक्म° (for रत्न°) — $T_1$ om (hapl) lines 1577–1579. — (L 1578) $D_6$ $M_3$ प्रासादेषु (for प्राकारेषु). — (L. 1579) $K_6$ $M_{1-3}$ पूर्वद्वारि (for °रे) $D_6$ $T_2$ $G_{1\,3\,5}$ $M_{2,4}$ छिन्ना (for भिन्ना.) $T_2$ $G_{1\,3}$ प्रासाद- (for प्राकार-). — (L 1580) $T_4$ $G_4$ -मूर्छितम् — (L 1582) Dn $Ds_2$ $T_4$ $M_4$ शंकरम्, $M_{1\,3\,4}$ ईशानम् (for ईश्वरम्) — $G_2$ om. line 1583 — (L 1583) Dn $Ds_2$ हि मया (for सर्वथा).

मयि सर्वं समारोप्य केशवो यादवेश्वरः ।
गतः कैलासशिखरं द्रष्टुमीश्वरमव्ययम् ॥
अवश्यं सर्वथा रक्ष्या पुरी द्वारवती मया ।
इति संचिन्त्य मनसा धनुरादाय सत्वरम् ॥
रथं महान्तमारुह्य दारुकस्य महात्मनः । [ 1585 ]
पुत्रेण संस्कृत घोरं यन्ता च स्वयमेव ह ॥
धनुर्महत्तमादाय शरांश्चाशीविषोपमान् ।
आमुच्य कवचं घोरं शस्त्रसंपातदुःसहम् ॥
अङ्गदी कुण्डली तूणी शरी चापी गदासिमान् ।
ययौ युद्धाय वेगेन संस्मरन्केशवं वच. ॥ [ 1590 ]
दीपिकादीपिते देशे ययौ सात्यकिरुत्तम. ॥
तथा च बलदेवोऽपि रथमारुह्य भास्वरम् ।
गदी शरासिमान्वीरः प्रायाद्रणचिकीर्षया ॥
सिंहनादं प्रकुर्वंस्तु विमुञ्चन्भैरवं रवम् ।
उद्धवोऽपि बली साक्षाद्गजमारुह्य सत्वरम् ॥ [ 1595 ]
मत्तं महारवं घोरं संग्रामं नीतिमत्तरः ।
ययौ नीतिं विचिन्वानः परां प्रीतिं महाबलः ॥
अन्येऽपि वृष्णयः सर्वे ययुः संग्रामलालसाः ।
रथान्गजान्समारुह्य हार्दिक्यप्रमुखास्तदा ॥
दीपिकाभिश्च सर्वत्र पुरोवृत्ताभिरीश्वराः । [ 1600 ]

सिंहनाद प्रकुर्वन्तः स्मरन्तः केशवं वचः ॥
पूर्वद्वारि समागम्य वृष्णयो युद्धलालसाः ।
ते समेत्य यथायोगं स्थितास्तत्र महाबलाः ॥
स्थिते सैन्ये महाघोरे दीपिकादीपिते पथि ।
शिनिर्वीरः शरी चापी गदी तूणीरपाणिमान् ॥ [ 1605 ]
वायव्यास्त्रं समादाय योजयित्वा महाशरम् ।
आकर्णपूर्णमाकृष्य धनुः प्रवरमुत्तमम ॥
मुमोच परसैन्येषु शिनिवीरः प्रतापवान ॥
वायव्यास्त्रेण ते सर्वे तत्रस्था नृपसत्तमाः ।
विद्रुता ह्यस्त्रवीर्येण यत्र तिष्ठति पौण्ड्रकः ॥ [ 1610 ]
तत्र गत्वा स्थिताः सर्वे निर्धूता वातरंहसा ।
यत्र पूर्वं स्थिताः सर्वे विद्रुता राजसत्तमाः ॥
तत्र स्थित्वा स शैनेयः शरमादाय सत्वरम् ।
निशितं सर्पभोगाभं बभाषे सात्यकिस्तदा ॥
केदानीं स महाबाहुः पौण्ड्रको राजसंज्ञकः । [ 1615 ]
स्थितोऽस्मि व्यवसायेन शरी चापी महाबलः ॥
यदि द्रष्टा दुरात्मानं ततो हन्ता नृपाधमम् ।
भृत्योऽस्मि केशवस्याहं जिघांसुः पौण्ड्रकं स्थितः ॥
छित्त्वा शिरस्तु तस्याहं सर्वक्षत्रस्य पश्यतः ।
दास्यामि वल्गृध्रेभ्यः श्वभ्यश्चैव दुरात्मनः ॥ [ 1620 ]

---

Dn Ds$_2$ त्वियम् ( for मया ) —( L 1584 ) D$_6$ G$_{1\ 3}$ सत्वर ( for °रम् ) —( L 1585 ) T$_{1\ 2}$ G$_{1\ 3}$ आदाय ( for आरुह्य ) —( L 1587 ) G$_5$ आरुह्य ( for आदाय ) —( L 1588 ) Cal ed दृढं ( for शस्त्र- ) D$_6$ -संघात- ( for -संपात- ) —( L 1590 ) Dn Ds$_2$ शैनेय ( for वेगेन ) —( L 1592 ) G$_4$ सत्वरम् ( for भास्वरम् ) —( L 1593 ) Dn Ds$_2$ गदी शरी महावीर्य ; G$_5$ शरी गदासिमान्वीर' ( for $^a$ ) —( L 1594 ) Dn Ds$_2$ T$_4$ G$_2$ प्रकुर्वन्तो , T$_2$ G$_1$ विमुञ्चंस्तु ( for प्रकुर्वंस्तु ) Dn Ds$_2$ T$_4$ मुञ्चन्वै ; T$_2$ G$_1$ प्रकुर्वन् , G$_2$ मुञ्चन्तो ( for विमुञ्चन् ) G$_4$ स्वरम् ( for रवम् ) —( L 1595 ) G$_{4\ 5}$ गदी ( for बली ) D$_6$ रथम् ( for गजम् ) Dn$_2$ भास्वरम् , Cal ed समतम् ( for सत्वरम् ). —( L 1596 ) Cal ed कृत्वा ( for मत्त ) Ds$_2$ G$_1$ नीतिमत्तरम् , T$_1$ G$_{2,\ 3}$ °मत्तमः ( for °मत्तरः ) Dn T$_4$ M$_4$ संग्रामे नीतिमत्तरम् ; Cal. ed सर्वयादवसत्तम. ( for $^b$ ) —( L 1597 ) D$_6$ T$_4$ M$_{1\ 3}$ परान्प्रति ( for परां प्रीतिं ) —( L. 1599 ) D$_6$ T$_{1,\ 2\ 4}$ G$_{1-3}$ हयान् ( for गजान् ) —( L 1602 ) Dn Ds$_2$ T$_1$ पूर्वद्वारं ( for °द्वारि ). T$_{1\ 4}$ G$_{1-3}$ समावृत्य , T$_2$ °श्रित्य , M °गत्य ( for °गम्य ) —( L 1603 ) G$_5$ तै ( for ते ) —( L 1604 ) M$_{1\ 3}$ महारौद्रे ( for °घोरे ) Cal ed तथा ( for पथि ) —( L 1605 ) Dn Ds$_2$ M$_{1\ 3}$ गदी तूणीरवान्विभो ( for $^b$ ) —( L 1607 ) T$_1$ G$_3$ M$_1$ आकर्ण ( for आकर्ण- ). —( L 1609 ) Dn Ds$_2$ नर- ( for नृप- ) Dn Ds$_2$ T$_4$ विजिता ( for विद्रुता ) —( L 1611 ) D$_6$ T$_{1,\ 2\ 4}$ G$_{1,\ 2,\ 4\ 5}$ याता ( for गत्वा ) T$_2$ G$_1$ om ( hapl ) lines 1611$^b$–1612$^a$ D$_6$ M$_3$ -रंहस ( for °सा ) —( L. 1615 ) Dn Ds$_2$ T$_4$ महाबुद्धि ( for °बाहुः ) Dn Ds$_2$ D$_6$ T$_4$ G$_2$ -सत्तमः ; T$_4$ -संज्ञित ( for -संज्ञक ) —( L 1616 ) G$_2$ M$_4$ ऽस्मि ( for ऽस्मि ) —( L 1617 ) T$_{1.\ 2}$ G$_{1\ 3-5}$ नराधमम् ; M$_3$ नृपोत्तमम् ( for नृपाधमम् ) —( L. 1618 ) G$_4$ जिघांसुः पौण्ड्रकस्य च ( for $^b$ ) — T$_4$ om line 1619 —( L. 1619 ) D$_6$ भित्त्वा ( for छित्त्वा ) Dn Ds$_2$ [अ]थ , M$_{1\ 3}$

को नु नामेदृशं कर्म चोरवच्च समाचरेत् ।
सुप्तेषु निशि सर्वत्र यादवेषु महात्मसु ॥
चोरोऽयं सर्वथा राजा न हि राजा बलान्वितः ।
यदि शक्तो न कुर्याच्च चौर्यमेतन्नृपाधमः ॥
अहोऽस्य बालता राज्ञश्चोरकार्यं प्रकुर्वतः । [ 1625 ]
सर्वथा गमनं तस्य न हि पश्यामि सांप्रतम् ॥
इत्युच्चैः सात्यकिर्वीरः प्रजहास महास्वनम् ।
विस्फार्य सुदृढं चापं संदधे कार्मुके शरम् ॥
आकर्ण्य वचनं वीरः सात्यकेस्तस्य धीमतः ।
वासुदेवो महावीर्यः पौण्ड्रको नृपसत्तमः ॥ [ 1630 ]
आदाय निशितं बाणमागत्य पुरतो यदोः ।
बभाषे वासुदेवस्तु हसन्बहुविधं नृपः ॥
सात्यके शृणु मे वाक्यं यदि योद्धुं व्यवस्थितः ।
क्व नु कृष्णः क्व गोपालः कुतः स इह वर्तते ॥
स्त्रीहन्ता पशुहन्ता च क्व च स्वामीति शब्द्यते । [ 1635 ]
स इदानीं क्व वर्तेत गृहीत्वा मम नाम तत् ।
हन्ता सख्युर्महावीर्यो नरकस्य महात्मनः ॥
ममैव नाम तद्ब्रूयाद्धते तस्मिन्दुरात्मनि ।
गच्छ त्वं कामतो वीर योद्धुं न क्षमते भवान् ॥
अथ वा तिष्ठ किंचित्तु ततो द्रष्टासि मे बलम् । [ 1640 ]
शिरस्ते पातयिष्यामि शरैर्घोरैर्दुरासदैः ॥
हतस्य तव वीरस्य भूमिः पास्यति शोणितम् ।
श्रोष्यते स तथा गोपो हतः सात्यकिरित्यपि ॥
यो गर्वस्तस्य गोपस्य सर्वदा वर्तते महान् ।
विनङ्क्ष्यति स तु क्षिप्रं हते त्वयि यदूत्तम ॥ [ 1645 ]
त्वयि रक्षां समादिश्य गोपः कैलासपर्वतम् ।
गत इत्येवमस्माभिः श्रुतं पूर्वं महामते ॥
शरं गृहाण निशितं यदि शक्नोषि मत्पुरः ।
इत्युक्त्वा बाणमादाय योद्धुं व्यवसितः किल ॥

Colophon

वैशंपायन उवाच ।
ततः क्रुद्धो महाराज सात्यकिर्वृष्णिपुंगवः । [ 1650 ]
उवाच वचनं राजन्वासुदेवं स्मयन्निव ॥
मा वोच ईदृशं वाक्यं वासुदेवं नृपाधम ।
को नाम जगतां नाथमित्थं ब्रूयाज्जिजीविषुः ॥
मृत्युस्त्वां सर्वथा याति वदन्तं तादृशं वचः ।

---

[अ]स्य, M2 4 [अ]द्य (for [अ]हं). — (L 1620) Dn Ds2 बलिं, T2 G1 तत्र, G2 बहु- (for बळ-) — (L 1621) D6 समारभेत् (for °चरेत्) — (L 1624) Dn Ds2 T4 G3 M1-4 एवं (for एतन्) M1 नृपोत्तम (for नृपाधमः). — (L 1625) G3 बलिनो (for बालता) — (L 1627) Dn Ds2 T4 M4 [उ]क्त्वा (for [उ]च्चै) D6 वीरै, T4 वीरं (for वीर) Dn Ds2 G2 3 M2 महाबल (for °स्वनम्) — (L 1628) T1 कार्मुकी; T3 G3 °कं (for °के) —(L 1629) D6 T1 G2 M2 2 धीर (for वीर.) — Dn Ds2 G2 om. lines 1630-1633 — (L 1630) M4 राजसत्तम (for नृप°) — (L 1631) D6 आरुह्य (for आदाय). T2 आगत· (for °त्य) —(L 1634) M2 3 ऽद्येह (for इह) Dn Ds2 G2 4 M1 कुत सोऽथ प्रवर्तते (for $^b$) —(L 1635) D6 M1-3 सर्व, T2 G2 स्वयं (for क्व च) Dn Ds2 सेवित (for शब्द्यते) —(L 1636) T2 नामकृत् (for नाम तत्) — (L 1648) Dn Ds3 ममैव तात युद्धेऽस्मिन् (for $^a$). —(L 1639) G2 क्षमसे (for क्षमते) — (L 1641) G3 शिरश्चोत्पातयिष्यामि (for $^a$) T1 2 G1 2 महाबलै (for दुरासदैः) —(L 1642) Dn Ds2 वीरेह (for वीरस्य). — (L 1643) D6 ऽस्मान् (for स) — (L. 1644) T1, 2 G3 सर्वदा श्लाघते भवान् (for $^b$) — (L 1645) Dn1 G1 5 विनश्यति, Dn2 Ds2 °श्यतु (for °ङ्क्ष्यति) M1 2 4 दुरात्मनि (for यदूत्तम) — (L 1646) G1 समावेश्य (for °दिश्य) D6 T4 G2 4 गत, M1-3 पुर्याः (for गोप) — (L 1648) D6 शक्तोऽसि (for शक्नोषि) Dn Ds2 यदि शक्तोऽसि सात्यके (for $^b$) — (L 1649) Dn Ds2 D6 ययौ (D6 पौण्ड्रो) योद्धुं व्यवस्थित (for $^b$)

Colophon — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 D6 T1 2 4 G M — *Adhy name* Ds2 M पौण्ड्रकवध — *Adhy no* Dn 279, T1 G3 206, T2 G1 208, T4 175, G2 201, G4 205, G5 207, M1 3 171

G4 om the ref —(L 1650) G2 -नन्दन (for -पुंगव) — (L 1651) Dn Ds2 T1 G3 M4 स्मरन् (for स्मयन्) — (L. 1652) Dn Ds2 अवोचद् G2 M1 3 4 मा वोचं (for मा वोच) M4 यादृशं (for ईदृशं) D6 T1 4 G3 4 M1 2 वासुदेव (for °देवं) Dn Ds2 नृपाधमम्, (for °धम) T1 G1 वासुदेवस्य माधव (for $^b$) — (L 1653) D6 जगतो (for जगतां) — (L 1154) G4 M3 मृत्युस्थं (for °स्त्वां)

जिह्वा ते शतधा दीर्याद्वदतस्तादृशं वचः ॥ [ 1655 ]
एष ते पातयिष्यामि शिरः कायाच्च पौण्ड्रक ।
यन्नाम वासुदेवेति तव संप्रति वर्तते ॥
यावत्पतति कायात्तु शिरस्तावत्तु वर्तताम् ।
स एव श्वो हि भगवान्वासुदेवो भविष्यति ॥
एक एव जगन्नाथः कर्ता सर्वस्य सर्वगः । [ 1660 ]
दुरात्मन्सर्वथा देवो भविष्यति न संशयः ॥
एष ते स्वशिरः कायात्पातयिष्यामि राजक ।
यद्यसौ भगवान्विष्णुर्नागमिष्यति सांप्रतम् ॥
अस्त्रं वीर्यं बलं चैव सर्वं दर्शय सांप्रतम् ।
नातः परं बलं राजन्वीर्यं तव च वर्तते ॥ [ 1665 ]
सर्वं दर्शय यत्नेन स्थितोऽस्मि व्यवसायवान् ।
शरी चापी गदी खड्गी सर्वथाहमुपस्थितः ॥
नेतो नगरमायासि सत्येनैतद्ब्रवीम्यहम् ।
सर्वथा कृतकृत्योऽस्मि दृष्ट्वा त्वां वासुदेवक ।
तवाङ्गं तिलशः कृत्वा श्वभ्यो दास्यामि राजक ॥ [ 1670 ]
इत्युक्त्वा बाणमादाय वासुदेवं महाबलम् ।
आकर्णपूर्णमाकृष्य विव्याध निशितं शरम् ॥
स तेन विद्धो यदुना वासुदेवः प्रतापवान् ।
वमञ्शोणितमत्युष्णमङ्गान्नेत्रान्नृपोत्तम ॥
ततश्चुक्रोध स नृपो वासुदेवः प्रतापवान् । [ 1675 ]
नवभिर्दशभिश्चैव शरैः संनतपर्वभिः ।
विव्याध सात्यकिं राजा नदंश्च बहुधा किल ॥
ततो नाराचमादाय निशितं यमसंनिभम् ।
धनुराकृष्य बलवान्वासुदेवो नृपोत्तमः ।
विव्याध सात्यकिं भूयो निशि प्रह्लादयन्स्वकान् ॥ [ 1680 ]
नाराचेन समाविद्धः सात्यकिः सत्यसंगरः ।
ललाटे सुदृढं वीरो वृष्णीनामग्रणीस्तदा ।
निषसाद रथोपस्थे निश्चेष्ट इव सत्तम ॥
ततः स पौण्ड्रको राजा विध्वा दशभिराशुगैः ।
सारथिं पञ्चविंशत्या हयांश्च चतुरो दृढम् ॥ [ 1685 ]
ते हया रुधिराक्ताङ्गाः सारथिश्च समन्ततः ।
विह्वलाः समपद्यन्त वासुदेवस्य पश्यतः ।
वासुदेवो रथी चापी सिंहनादं समाददे ॥
तेन नादेन तत्राभूद्विबुद्धः सात्यकिस्तदा ।
विद्धान्हयांस्तथा दृष्ट्वा सारथिं च तथागतम् ॥ [ 1690 ]
शैनेयोऽथ महावीर्यो रुषितो नृपसत्तम ।
अरे द्रक्ष्यामि ते वीर्यमित्युक्त्वा बाणमाददे ।

---

— $T_1$ $G_{1, 2, 4}$ $M_{1, 3}$ om (hapl) line 1655 — (L 1655) $D_6$ $G_{3, 5}$ $M_{2, 4}$ दीर्येः (for दीर्याद्) — (L 1657) $G_2$ तव संपरिवर्तते (for $^b$) — (L 1658) $T_2$ कायं (for कायात्) Dn $Ds_2$ $T_4$ $G_{1, 2}$ ते (for तु) Dn $Ds_2$ $G_2$ प्रवर्तते, $G_4$ प्रवर्तताम् $M_4$ तु वर्तते (for तु वर्तताम्) — (L 1659) Dn $Ds_2$ न; $D_6$ $G_{2, 3}$ ऽपि (for हि) $Dn_1$ $T_4$ $G_{1, 4, 5}$ $M_4$ भविष्यसि (for °ति) — (L 1662) Dn $Ds_2$ $T_4$ ऽहं (for स्व-) — (L 1663) $Dn_1$ $Ds_2$ $T_{2, 4}$ $M_2$ यद् (for यदि) — $D_6$ om line 1664 — (L 1664) $Dn_1$ $Ds_2$ $G_{1, 3}$ $M_4$ अस्त्र-, $Dn_2$ अत्र, $T_1$ अस्य (for अस्त्रं) $G_2$ मम द्रक्ष्यति सांप्रतम् (for $^b$) — (L 1665) Dn $Ds_2$ $G_1$ परतरं (परं बलं) — (L 1667) $D_6$ खड्गी (for शरी) $G_3$ रथी (for गदी) $D_6$ $T_4$ तूणी, $G_2$ M बाणी (for खड्गी) — (L 1668) Dn $Ds_2$ नैतन् (for नेतो) Dn $Ds_2$ $T_{1, 2}$ $G_{1, 3}$ $M_4$ आयासीः (for °सि) $M_3$ न हि ते नगरं यासि (for $^a$) $Ds_2$ $T_1$ $G_{2, 3}$ सत्यम् (for सत्येन) $D_6$ $T_{1, 2, 4}$ $G_4$ M शपामि (for ब्रवीमि) $G_1$ तेनैव तच्छपाम्यहम् (for $^b$) — (L. 1671) Dn $Ds_2$ $G_{3-5}$ $M_4$ महाबल — (L. 1672) $D_6$ $G_2$ विव्याध निशितैः शरैः (for $^b$) — $T_4$ $G_{4, 5}$ om (hapl) lines 1674–1675 — (L. 1674) $D_6$ $T_{1, 2}$ $G_2$ अत्युग्रम् (for °ष्णम्) $D_6$ $T_{1, 2}$ $G_1$ $M_{1-2}$ सुखान् (for अङ्गान्) — (L 1675) Dn $Ds_2$ $G_1$ नृपतिर्, $T_2$ च नृपो (for स नृपो) — (L 1677) $T_{1, 2, 4}$ G $M_{1-3}$ बहुश· (for °धा) — (L 1679) Dn $Ds_2$ $D_6$ $G_{1, 2}$ भगवान् (for बलवान्) Dn $T_{1, 4}$ नृपोत्तम, $Ds_2$ °त्तमम् (for °त्तम·) — (L 1680) $M_4$ वीरो (for भूयो). — (L 1683) $Ds_2$ $T_{1, 4}$ $G_{1, 4, 5}$ $M_{1, 4}$ सत्तम — After line 1683, $G_2$ ins

17** ततस्तत्तत्क्षणेनैव गतमोहः प्रतापवान् ।
सक्रुद्धः शिनिवीरोऽसौ प्रहसन्निदमब्रवीत् ।
पातयिष्यामि ते वीर्यमित्युक्त्वा बाणमाददे ॥

— $G_2$ om lines 1684–1692. — (L. 1685) $Dn_1$ नृपः; $Dn_2$ $Ds_2$ नृप (for दृढम्) — (L 1686) $D_6$ तदा (for हया) $D_6$ $T_{1, 2}$ M समं तदा (for समन्ततः). — (L. 1688) Dn $Ds_2$ $G_{1, 4}$ रथे (for रथी). $T_1$ $G_{1, 3, 5}$ समादधे; $T_2$ °दधन् (for °ददे) — (L 1689) $D_6$ प्रबुद्ध·, $T_2$ $G_3$ विवृद्धः (for विबुद्धः). Dn $Ds_2$ नृप; $D_6$ किल (for तदा)

विव्याध तेन बाणेन वक्षस्येनं महाबलम् ॥
ततश्चचाल तेनाजौ वासुदेवः शरेण ह ।
सुस्रुवे रुधिरं घोरमत्युष्णं वक्षसो नृप ॥ [ 1695 ]
रथोपस्थे पपाताशु निःश्वसन्बहुशो नृप ।
कृत्यं चापि न जानाति केवलं निषसाद ह ॥
सात्यकिस्तु रथं विध्वा दशभिः सायकैस्तदा ।
ध्वजं चिच्छेद भल्लेन वासुदेवस्य वृष्णिपः ।
हयांश्च चतुरो हत्वा बाणैः सारथिमेव च ॥ [ 1700 ]
युयुधानोऽथ राजेन्द्र भल्लेन निशितेन ह ।
सारथेश्च शिरः कायादहरत्सात्यकिस्तदा ।
रथग्रन्थिं च चिच्छेद हयाश्च व्यसवोऽभवन् ।
अश्वांश्च चतुरो हत्वा चतुर्भिः पत्रिभिस्तदा ।
चक्रं च तिलशः कृत्वा बाणैर्दशभिरञ्जसा । [ 1705 ]
जहास विपुलं राजन्वासुदेवो महाबलः ॥
सात्यकिश्च तदा राजन्रथादाप्लुत्य सत्वरम् ।
धनुरादाय विपुलं तस्थौ भूमौ यदूत्तमः ॥
ततो भल्लेन तीक्ष्णेन ज्यां च चिच्छेद सत्वरम् ।
निमेषादिव वीरस्तु सात्यकिः सत्यविक्रमः । [ 1710 ]
धनुश्चिच्छेद भल्लेन सर्वान्विस्मापयन्निव ॥
ततस्त्यक्त्वा महाचापमन्यद्घोरं महामृधे ।
अन्यत्कार्मुकमादाय विव्याध निशितैः शरैः ॥
वासुदेवोऽपि निःश्वस्य धनुरादाय सत्वरम् ।
शरांश्च कतिचिद्राजन्गदां खड्गं च यत्नतः । [ 1715 ]
यावद्बलं समादाय ततो भूमौ व्यतिष्ठत ॥
भूमिष्ठो वासुदेवस्तु सात्यकिं सत्यविक्रमम् ।
शरैरनेकसाहस्रैरर्दयामास सत्वरम् ॥
सात्यकेर्ध्वजवंशं तु चिच्छेद रणमूर्धनि ।
रथं जघान निशितैः शरैर्दशभिराशुगैः ॥ [ 1720 ]
सात्यकिः क्रूरकर्माणमिन्द्रो वृत्रवधे यथा ॥
ततश्च युयुधानस्तु वासुदेवं नृपोत्तम ।
दशभिर्दशभिश्चैव पञ्चभिः पञ्चभिस्तथा ॥
षड्भिः षड्भिस्तथाष्टाभिर्बिभेद रणमूर्धनि ।
यथा देवासुरे युद्धे बलिं बलिरिपुर्नृप ॥ [ 1725 ]
स च चापं महाघोरं पौण्ड्रो यदुवृषस्य ह ।
मुष्टिदेशे द्विधा कृत्वा बाणैर्दशभिरञ्जसा ।
जहास विपुलं राजन्वासुदेवो महाबलः ॥
ततोऽपरं महच्चापं सात्यकिर्वृष्णिपुंगवः ।
सज्यं कृत्वा बली साक्षात्सर्वक्षत्रस्य पश्यतः । [ 1730 ]
शरैः सप्ततिसाहस्रैरर्दयामास सत्वरम् ॥
ते शराः शलभाकारा निपेतुः सर्वतस्तदा ।

---

— (L 1691) T2 महावीरो (for °र्यो). — (L 1692) Dn Ds2 बलं (for शरे) — (L 1693) Dn1 Ds2 T4 G5 महाबलः (for °बलम्) — (L. 1695) T1 2 G M4 सुस्राव (for सुस्रुवे). Dn Ds2 T2 G1–3 5 M वक्षसा (for °सो) M नृप· — (L 1696) Dn Ds2 निःश्वसन्नुरगो यथा (for b). — (L 1701) Dn Ds2 बाणैः सारथिमेव च, Bom Poona eds पौण्ड्रकस्य च पश्यत. (for b). — (L. 1702) T1 स रथी; T2 G3 M1–3 सारथी (for सात्यकिस्) — (L 1703) D6 G2 4 5 M1–3 स, T2 G1 वि- (for च) G2 हयांश्च विधमद्बली (for b) — Dn Ds2 D6 om. line 1704. — (L 1704) G1 4 5 चतुर्भिश्चतुरस्तथा (for b) — (L 1705) M3 चक्रे (for चक्रं) Dn Ds2 om (hapl.) lines 1705b–1727a. — (L 1706) T2 M1–3 राजा (for राजन्) G2. 4 M4 वासुदेवं (for °वो). — (L. 1707) D6 T2 4 G3 5 M1 सत्वर; G1 सर्वतः (for सत्वरम्). — (L. 1708) T4 G5 भुवि (for भूमौ) — (L 1709) G4, 5 M4 चिच्छेद स (for च चिच्छेद) — (L 1712) D6 T1 2 4 G महाघोरं (for °चापम्) D6 T1, 2 4 G1 2 4, 5 महाचाप (for अन्यद्घोरं) M1–3 महाहवे (for °मृधे) — (L 1713) D6 T4 M सज्यं (for अन्यत्) M3 दशभि, (for निशितै) — G4 om (hapl) lines 1715–1718. — (L 1715) G2 सत्तम (for यत्नत) — (L 1719) D6 M रथवशं, G2 अग्निवर्ण (for ध्वजवंशं) — (L 1721) T2 G2 M3 सात्यकिं (for °कि) D6 D2 M2 4 सत्य- (for क्रूर-) — (L 1722) D6 T1 4 G1 3–5 M1 2 4 नृपोत्तमस् (for °त्तम) — (L 1723) M3 om line 1723a G4 घोरैः (for चैव) T2 दशभिश्चैव नाराचै (for a) — D6 T1 2 4 M om. lines 1725b–1726b — (L 1727) Dn Ds2 अंहसा (for अञ्जसा) — (L 1728) Bom Poona eds G(ed) वासुदेवं (for °वो) — (L 1729) Dn Ds2 परं (for ऽपरं). Dn Ds2 महत्प्रायं, D6 T1 2 4 G2–4 M1–3 महाचापं (for महच्चापं). Dn Ds2 D6 T4 G2 4 M -नन्दन (for -पुंगवः). — (L 1731) Dn Ds2 T2 4 -संख्याकैर् (for -साहस्रैर्).

शिरस्तः पार्श्वतश्चैव पृष्ठतः पुरतस्तथा ॥
आस्ये चैव महाराज जङ्घयोर्जघने तथा ।
व्यथां च ददुरत्यन्तं वासुदेवस्य मर्मगाः ॥ [ 1735 ]
संभ्रान्तः पर्वताकारो निश्चलः समपद्यत ।
केवलं धैर्यनिचयस्तृषार्तः शरवान्यथा ।
यथा मनस्वी रिक्तश्च तथा तिष्ठति पौण्ड्रकः ॥
ततश्चुक्रोध बलवान्वासुदेवः प्रतापवान् ।
अर्धचन्द्रं समादाय विव्याध युधि सात्यकिम् । [ 1740 ]
विध्वा सप्तभिरायान्तं क्रोधेन प्रस्फुरन्निव ॥
विद्धोऽथ सात्यकिस्तेन शरैः पञ्चभिराशुगैः ।
चापं चिच्छेद पौण्ड्रस्य सिंहनादं व्यनीनदत् ॥
वासुदेवो गदां गृह्य भ्रामयित्वा पदात्पदम् ।
त्वरितं पातयामास सात्यकेर्वक्षसि प्रभो ॥ [ 1745 ]
सव्येन तां समाकृष्य करेण यदुनन्दनः ।
शरं प्रगृह्य विव्याध सात्यकिर्युधि पौण्ड्रकम् ॥
तमन्तरे गृहीत्वाशु वासुदेवः प्रतापवान् ।
शक्तिभिर्दशभिश्चैव सात्यकिं निजघान ह ॥
ताभिर्विद्धो रणे वीरः सात्यकिः सत्यसंगरः । [ 1750 ]
अपास्य धनुरत्नं तद्गदामादाय सत्वरम् ।
आजघान तदा वीरो वृष्णीनामग्रणीर्नृप ॥

Colophon.

वैशंपायन उवाच ।
ततः क्रुद्धो गदापाणिः सात्यकिर्वृष्णिनन्दनः ।
वासुदेवं जघानाशु गदया तीक्ष्णया नृप ।
सात्यकिं वासुदेवस्तु गदयाभ्यहनद्बली ॥ [ 1755 ]
तावुद्यतगदौ वीरौ शुशुभाते तदा रणे ।
दृप्तौ यथा वने सिंहौ परस्परवधैषिणौ ॥
ततः स सात्यकिः क्रुद्धः सव्यं मण्डलमागमत् ।
जघ्नतुस्तौ तदा युद्धे गदाभ्यां गदिनौ नृप ॥
स्तनयोः पार्श्वयोः पृष्ठे ताडितौ गदधारिणौ । [ 1760 ]
उभौ तौ रुधिराक्ताङ्गौ पुष्पिताविव किंशुकौ ॥
सिंहनादं प्रकुर्वन्तौ प्रावृषीव महाघनौ ।
तिष्ठ तिष्ठेति भाषन्तौ परस्परवधैषिणौ ॥
दक्षिणं वासुदेवस्तु तं जघान स्तनान्तरे ।
युयुधानोऽथ वीरस्तु बाह्वोर्मध्यमताडयत् ॥ [ 1765 ]
दृढं स ताडितो वीरो जानुभ्यामपतद्भुवि ।
तत उत्थाय भूयस्तु ललाटेऽभ्यहनद्यदुम् ॥
विषण्णः किंचिदायस्तस्तत उत्थाय सत्वरम् ।

---

— D6 om lines 1732–1733 — (L 1733) Ds2 T4 M3 शिरसः (for शिरस्त) M1 3 पार्श्वयोश् (for °तश्) T1 2 G1 3–5 M पृष्ठत स्तनमध्यत (for $^{b}$) — Dn Ds2 D6 om lines 1734–1736 — (L 1737) G5 तृणाक्त, M4 तृष्णार्तो (for तृषार्त) D6 T2 G1, 4 5 सारवान् (for शर°) — (L 1738) T2 G1 3 4 मत्तश् (for रिक्तश्) — (L. 1741) T1 2 G1, 3–5 शरै. (for इव) — (L 1742) G4 5 आयसैः (for आशुगै.) — (L 1745) D6 T1 G3–5 प्रेषयामास (for पात°) — (L 1747) G5 स तां (for शरं) — (L 1748) D6 T4 G2 अन्तरेण (for तमन्तरे) — (L 1749) T1 2 G1 3 शरैश्च शक्तिभिश्चैव (for $^{a}$) — (L. 1750) G2 शूर (for वीर) G2 सात्यकिर्वृष्णिनन्दन, G5 °कि. सत्यविक्रम. (for $^{b}$) — After line 1750, G2 ins

18** वासुदेवं जगन्नाथं न्यहनत्सत्यसंगर· ।

— (L. 1751) Dn D6 M6 धनुरन्यत् (for °रत्नं). Dn Ds2 T4 G1 5 M4 धनुर् (for गदाम्) — (L. 1752) G4 ततो विद्धो (for तदा वीरो)

Colophon — *Mention of the Epic* Ds2. — *Mention of Khila* Dn D6 T1 2 4 G M2–4 — *Adhy name* Dn G4 M2–4 पौण्ड्रकवध, D6 T4 पौण्ड्रयुद्धम् —*Adhy no* · Dn 280, T1 G3 107, T2 G1 209, T4 176; G2 202; G4 206, G5 208, M2–4 172

(L 1753) G5 -पुंगव (for -नन्दनः) — (L 1755) T2 ह्यहनद्, G1 न्यह° (for [अ]भ्य°). — (L 1756) G2 शूरौ (for वीरौ) Dn Ds2 सुदारुणौ (for तदा रणे) — (L 1758) D6 आगत; T4 आवहत् (for आगमत्) — (L 1759) M2 महायुद्धे; M3 गदायुद्धे (for तदा युद्धे). D6 तु तौ (for नृप) — D6 om line 1760 — (L 1760) T2 गदधारणे; M4 गदया रणे (for °धारिणौ) — (L. 1761) D6 उभौ रुधिरसिक्ताङ्गौ (for $^{a}$) — (L 1763) D6 M3 वाशन्तौ (for भाषन्तौ) — (L 1766) G2 भृशं (for दृढं) — (L 1767) Dn Ds2 वीरस् (for भूयस्). Dn Ds2 गदाम्, T1 दृढम् (for यदुम्) — (L. 1768) D6 निर्विंघ्न (for विषण्णः) D6 आश्वस्य; G2 आश्वस्तस् (for आयस्तस्) — (L 1769) T2 G3 -विक्रमम् (for -सत्तमम्) — (L 1770) T1 4 G1, 5 बलिर् (for बली). — (L 1772) M1 3 तत स (for स

गदयाभ्यहनद्वीरः सात्यकिः पौण्ड्रसत्तमम् ॥
वासुदेवो बली वीरः साक्षान्मृत्युरिवापरः । [ 1770 ]
जघान गदया वृष्णिं निर्दहन्निव चक्षुषा ।
स तया ताडितो वृष्णिर्गदया बाहुमुक्तया ।
आलम्ब्य भूमिं सहसा मृत्योरङ्कगतो यथा ॥
संज्ञां पुनः समालम्ब्य पाणिभ्यां दृढमेव च ।
गदां तस्य महाराज गृहीत्वा प्रग्रहेण ह ॥ [ 1775 ]
द्विधा कृत्वा महागुर्वीं गदां कालायसीं शुभाम् ।
उत्सृज्य सहसा वीरः सिंहनादं व्यनीनदत् ॥
तत उत्प्लुत्य राजा तु वासुदेवो महाबलः ।
सव्येन सात्यकिं गृह्य दक्षिणेन करेण ह ॥
मुष्टिं कृत्वा महाघोरां वासुदेवः प्रतापवान् । [ 1780 ]
ताडयामास मध्ये तु स्तनयोः सात्यकिं नृप ॥
शैनेयो वृष्णिवीरस्तु गदामुत्सृज्य सत्वरम् ।
तलेनाभ्यहनद्वीरो वासुदेवं रणाजिरे ॥
तलेन वासुदेवोऽपि सात्यकिं सत्यसंगरम् ।
तयोरेवं महाघोरं तलयुद्धमवर्तत ॥ [ 1785 ]
जानुभ्यां मुष्टिभिश्चैव बाहुभ्यां शिरसा तथा ।
उरसोरः समाहत्य जानुभ्यां शिरसा तथा ।
कराभ्यां करमाहत्य तौ युद्धं संप्रचक्रतुः ॥
तालयोस्तत्र राजेन्द्र वृक्षयोः संनिकृष्टयोः ।
वने यथाग्निरुत्पन्नस्तथैवासीत्सुदारुणः ॥ [ 1790 ]
तावाजौ प्रथितौ वीरावुभौ पौण्ड्रकसात्यकी ।
निशि स्तिमितमूकायां शस्त्रं त्यक्त्वा महाबलौ ।
युयुधाते महारङ्गे मल्लौ द्वाविव विश्रुतौ ॥
उभे सेने महाराज संशयं जग्मतुस्तदा ।
किं नु स्यात्सात्यकिर्वीरो हतोऽनेन दुरात्मना । [ 1795 ]
आहोस्विद्वासुदेवस्तु हतोऽनेन भविष्यति ॥
अथ वैतौ महावीरौ परस्परवधैषिणौ ।
हत्वा परस्परं वीरौ वीरस्वर्गं गमिष्यतः ।
अन्यथा नोपरम्येतां युद्धाद्वीरौ सुविश्रुतौ ॥
अहो वीर्यमहो धैर्यमेतयोर्बलशालिनोः । [ 1800 ]
एतौ महाभटौ लोके नैतौ प्राकृतसंमतौ ॥
नैवं युद्धं महाघोरमासीद्देवासुरेष्वपि ।
न श्रुतो न च वा दृष्टः संग्रामोऽयं कदाचन ॥
एवं ते सैनिका ब्रूयुः सेनयोरुभयोरपि ।
रात्रौ निशातमे घोरे दृष्ट्वा युद्धं सुदारुणम् ॥ [ 1805 ]
अथ तौ बाहुभिर्घोरैः संनिपेततुरोजसा ।
दशभिर्मुष्टिभिर्जघ्ने सात्यकिः पौण्ड्रनन्दनम् ।
पञ्चभिः सात्यकिं पौण्ड्रः समाजघ्ने महाबलः ॥

---

तया ) — G2 om lines 1774–1778 — ( L 1774 ) D6 T4 M2. 3 समालभ्य ( for °लम्ब्य ) G5 स संज्ञां पुनरालम्ब्य ( for ᵃ ). — ( L 1776 ) D6 कालमयीं ( for कालायसीं ) — ( L 1777 ) D6 T4 उत्सृज्य तां गदा भग्ना ( for ᵃ ) D5 व्यनादयत् ( for व्यनीनदत् ) — ( L 1778 ) Dn Ds2 T1 2 G1 3 M1. 2 4 उत्सृज्य ( for उत्प्लुत्य ). — ( L. 1782 ) T1 नृप- ( for वृष्णि- ) G3 सत्वरः. — ( L 1785 ) Dn T2 4 G3 प्रवर्तत, Ds2 G1 °र्तते ( for अवर्तत ). — ( L 1789 ) D6 बद्धयोः ( for वृक्षयो ) Dn Ds2 G2 M1. 3 संनिकर्षयोः ( for °कृष्टयो. ) — ( L 1790 ) Dn1 Ds2 D6 T2 G2 M2. 5 निरुत्पन्नस् ( for [अ]ग्निरु° ) G6 [अ]भूत् ( for [आ]सीद् ) D6 G2 सुदारुणम्, T2 °रुणौ, M3 महारणः ( for सुदारुण ) Dn Ds2 M1 2 4 तथैवाभून्महास्वनः ( M2 4 °रण. ) ( for ᵇ ). — ( L 1791 ) M1. 4 उभौ तौ पौण्ड्रसात्यकी ( for ᵇ ) — ( L 1772 ) G3 महाबलम् ( for °बलौ ) — ( 1794 ) T4 उत्सेधने ( for उभे सेने ) Dn Ds2 G4 महाराज्ञोः ( for °राज ). — ( L 1795 ) Dn Ds2 हतस्तेन भविष्यति ( for ᵇ ) — ( L. 1796 ) T1. 2 M2 4 महात्मना, G1 4 दृढात्मना, G2 3 M1 3 दुरात्मना ( for भविष्यति ) — ( L 1797 ) Dn Ds2 अद्य, D6 तदा, T4 G2 हतौ ( for अथ ) T2 नैतौ, G1 4 5 द्वौ तौ ( for वैतौ ) D6 G2 4 5 M2 महावीर्यौ ( for °वीरौ ) — ( L 1798 ) T1. 4 G1–3 5 परस्परौ ( for °स्परं ) Dn Ds2 नरौ ( for वीर ). — ( L 1799 ) D6 T3 G2 अथ वा ( for अन्यथा ) D6 G2 यथा ( for युद्धाद् ) Dn Ds2 सुनिश्चितौ ( for सुविश्रुतौ ) — ( L 1801 ) Dn Ds2 T1 2 4 M1 3 महाबलौ ( for °भटौ ) T3 तौ च ( for नैतौ ) Dn Ds2 एतौ प्रकृतिसत्तमौ, T1 2 G1 M4 नैतौ प्रकृतिसमतौ, T4 एतौ प्रकृतसंमतौ; G3 न तौ प्राकृतसंमितौ ( for ᵇ ) — ( L 1804 ) T4 एते वै ( for एवं ते ) T1 2 G1 3 उभयोः सेनयोरपि; G4 5 उभयोरपि सेनयो ( for ᵇ ) — ( L 1805 ) Dn Ds2 रात्रौ निशीथे मेघौघे, T2 G1 2 5 रात्रौ तु तिमिरे घोरे ( for ᵃ ). — ( L 1806 ) Dn Ds2 वीरौ ( for घोरैः ) Dn Ds2 T4 G3 अञ्जसा, G2 आसने ( for ओजसा ) — ( L 1807 ) Dn Ds2 सात्यकिं पौण्ड्रकं तदा ( for ᵇ ). — ( L.

तयोश्चटचटाशब्दो ब्रह्माण्डक्षोभणो महान् ।
प्रादुरासीत्तु सर्वत्र सर्वान्विस्मापयन्निव ॥ [ 1810 ]

Colophon.

वैशंपायन उवाच ।

एतस्मिन्नन्तरे क्रुद्ध एकलव्यो निषादपः ।
बलभद्रमभिप्रेक्ष्य धनुरादाय सत्वरम् ।
आरुह्य स रथं वीरो ययौ यत्र हली स्थितः ॥
दृष्ट्वायान्तं निषादेशमेकलव्यं हली तदा ।
रथी गदी शरी भूत्वा तस्थौ तस्याग्रतो बली ॥ [ 1815 ]
बलदेवं च विंशत्या जघान शरमालया ।
रथं दशभिराहत्य सूतं दशभिराशुगैः ॥
सिंहनादं प्रकुर्वाणो दशभिस्त्वथ सीरिणम् ।
धनुर्ज्यां दशभिश्छित्त्वा सिंहनादं व्यनीनदत् ॥
सज्यं च कार्मुकं कृत्वा बलदेवो निषादपम् । [ 1820 ]
नाराचैर्दशभिर्विद्ध्वा बाणैश्च दशभिः शितैः ।
चिच्छेद धनुरर्धं तत्सर्वक्षत्रस्य पश्यतः ॥
सूतं दशभिराहत्य रथं त्रिंशद्भिरेव च ।
ध्वजं चिच्छेद भल्लेन निषादस्य जगत्पते ॥
ततोऽपरं महच्चापं निषादो वीर्यवत्तमः । [ 1825 ]
दृढमौर्वीसमायुक्तं दशतालप्रमाणतः ।
कामपालं शरेणाशु जघान स्तनदेशतः ॥
बलदेवो महावीर्यः शेषः सर्प इव श्वसन् ।
दशभिस्तद्धनुर्दिव्यं शरैः सर्वसहैर्बली ।
चिच्छेद मुष्टिदेशे तु माधवो माधवाग्रजः ॥ [ 1830 ]
एकलव्यो निषादेशः खड्गमादाय सत्वरम् ।
प्राहिणोद्बलदेवाय निशितं घोरविग्रहम् ॥
तमन्तरे यदुवृषो वृष्णिवीरः प्रतापवान् ।
तिलशः पञ्चभिर्बाणैश्चकार यदुनन्दनः ॥
ततोऽपरं महाखड्गं सर्वकालायसं शुभम् । [ 1835 ]
प्राहिणोत्सारथेः कायमालोक्याथ निषादपः ॥
तं चापि दशभिर्वीरो माधवो यदुपुंगवः ।
बाणैर्निमेषमात्रेण निर्बिभेद महारणे ॥
ततः शक्तिं समादाय घण्टामालाकुलां नृप ।
निषादो बलदेवाय प्रेषयित्वा महाबलः । [ 1840 ]
सिंहनादं महाघोरमकरोत्स निषादराट् ॥
सा शक्तिः सर्वकल्याणी बलदेवमुपागमत् ॥

---

1810 ) $D_6$ $T_4$ $G_3$ सर्वं (for सर्वान् ).

Colophon — *Mention of the Epic* $Ds_2$ — *Mention of Khila*. Dn $Ds_2$ $D_6$ $T_{1\,2\,4}$ G M — *Adhy name* Dn $Ds_2$ पौण्ड्रकसात्यक्युिद्धम्, $G_{4\,5}$ M पौण्ड्रयुद्धम् — *Adhy no* Dn $Ds_2$ 281; $T_1$ $G_3$, 208, $T_2$ $G_1$ 210, $T_4$ 177, $G_2$ 202, $G_4$ 207, $G_5$ 209, $M_{1\,2,\,4}$ 209, $M_3$ 173

( L 1812 ) $Dn_1$ अभिक्षिप्त (for °प्रेक्ष्य ) — Dn om. (hapl ) lines 1813–1820 — ( L 1814 ) $D_6$ $T_{1\,2}$ G $M_4$ स्व- ( for स ) $T_1$ $G_{1\,4\,5}$ M घोरं, $G_3$ वीर ( for वीरो ) $T_2$ $G_{1\,4}$ हरि (for हली ) — ( L 1814 ) $D_6$ तु लाङ्गली, $T_2$ हरिस्तदा, $G_2$ तदा हली ( by transp ) — ( L 1815 ) $T_4$ रथी शरी; $G_5$ गदी रथी ( by transp ) $D_6$ रथी शरी गदी खड्गी, $G_2$ तदा रथी शरी खड्गी ( for ᵃ ) $D_6$ $T_4$ $G_2$ भूत्वा ( for तस्थौ ) — $G_1$ om lines 1816–1819 — ( L 1817 ) $D_6$ $T_2$ $G_{2\,3}$ M आविध्य ( for आहत्य ) — ( L 1819 ) $M_2$ चैव ( for छित्त्वा ), $D_6$ $T_4$ $G_2$ धनुर्द्वादशभिश्छित्त्वा ( for ᵃ ). — ( L 1820 ) $M_4$ स ( for च ) $T_2$ $G_2$ छित्त्वा ( for कृत्वा ) $G_{1\,5}$ निषादप° — ( L 1821 ) Dn $Ds_2$ $T_{1\,2}$ $G_{1\,3-5}$ M परै., $T_4$ शतैः ( for शितैः ). — ( L. 1822 ) $D_6$ $T_{1,\,2}$ M धनुरत्न, $G_2$ °रात्तं ( for °रर्धं ) — ( L 1824 ) Dn $Ds_2$ $T_4$ $M_{1\,3}$ जगत्पति ( for °त्पते ) — ( L 1825 ) $T_2$ $G_{1\,5}$ $M_{1-8}$ महा ( for महच् ) $G_5$ निषादो वीर्यवत्तमम्, Bom Poona eds G( ed ) °दो वीर्यसमत ( for ᵇ ) — ( L 1827 ) Bom Boona eds G ( eds ) -मौर्व्या ( for -मौर्वी- ) — ( L 1827 ) Dn $Ds_2$ जघान जनमध्यत ( for ᵇ ) — ( L 1829 ) Dn -सहैर्बलैः, $Ds_2$ समैर्बलैः, $D_6$ $T_{3\,4}$ $G_{1\,2\,4,\,5}$ M -समैर्बली ( for -सहै° ) — ( L 1830 ) $D_6$ माधवाग्रतः ( for °जः ). — ( L 1831 ) Dn $Ds_2$ $G_3$ सत्वरः ( for °रम् ) — ( L 1832 ) $G_2$ बलवीराय; Bom Poona eds G( ed ) °देवाय ) $T_1$ घोरविक्रमं, $T_2$ $G_1$ °मुत्तमम्, $G_2$ °विभ्रम ( for °विग्रहम् ) — ( L 1833 ) Dn यदुर्वीरो, $Ds_2$ पटुर्वीरो ( for यदुवृषो ) — ( L. 1835 ) Dn ततो महत्परं खड्गं ( for ᵃ ) — ( L 1836 ) $D_6$ $G_2$ समालोक्य ( for आलोक्याथ ) Bom Poona eds. G( ed ) निषादजः ( for °दप ) — ( L 1337 ) $D_6$ चापं ( for चापि ) Dn $Ds_2$ यदुनन्दनः, $D_6$ $T_{1\,2\,4}$ $G_{1\,2\,5}$ M वृष्णिपुंगवः ( for यदु° ) — ( L 1838 ) Dn $Ds_2$ बाह्वोरन्तरयोश्चैव; $D_6$ $T_{1\,2\,4}$ G M बाणैरन्तर एवाशु ( for ᵃ ). — ( L 1841 ) Dn $Ds_2$ $G_2$ निषादप ( for °दराट् ) — ( L 1842 ) Cal. ed सा शक्तिः प्रेषिता तेन ( for ᵃ ). — ( L 1843 ) Dn $Ds_2$

उत्प्लुत्य तां महाघोरां बलभद्रः प्रतापवान् ।
आदायाथ निषादेशं सर्वान्विस्मापयन्निव ।
तथैव तं जघानाशु वक्षोदेशे स माधवः ॥ [ 1845 ]
स तया ताडितो वीरः स्वशक्त्याथ निषादपः ।
विह्वलः सर्वगात्रेषु निपपात महीतले ।
प्राणसंशयमापन्नो निषादो रामताडितः ॥
निषादास्तस्य राजेन्द्र शतशोऽथ सहस्रशः ।
अष्टाशीतिसहस्राणि निषादाः शस्त्रयोधिनः । [ 1850 ]
गदिनः सादिनश्चैव महेष्वासा महाबलाः ॥
शरैरनेकसाहस्रैः शक्तिभिश्च परश्वधैः ।
गदाभिः पट्टसैः शूलैः परिघैः प्रासतोमरैः ॥
कुन्तैरथ कुठारैश्च व्यद्रवन्राममोजसा ।
शलभा इव राजेन्द्र दीप्यमानं हुताशनम् । [ 1855 ]
ते शरैः पातयांचक्रू रामं राममिवापरम् ॥
केचित्कुठारैराजघ्नुः केचित्कुन्तैः परश्वधैः ।
गदाभिः केचिदायान्ति शक्तिभिश्च तथापरे ।
निजघ्नुः सहसा रामं स्फुरन्तं पावकं यथा ॥
ततः क्रुद्धो हली साक्षाद्धलमुद्यम्य सत्वरम् । [ 1860 ]
सर्वांस्तान्कर्षयामास मुसलेन व्यपोथयत् ॥
ते हन्यमाना रामेण निषादाः पर्वताश्रयाः ।
निपेतुर्धरणीपृष्ठे शतशोऽथ सहस्रशः ॥
क्षणेन तान्महाराज हत्वा सर्वान्महाबलान् ।
सिंहवद्विनदंस्तत्र तस्थौ रामो महाबलः ॥ [ 1865 ]
ततो रात्रौ महाघोराः पिशाचाः पिशिताशनाः ।
आकृष्य मांसयूथानि भक्षयन्तः समासते ।
पिबन्तः शोणितं कोष्णं संकृष्य च शवं बहु ॥

Colophon.

वैशंपायन उवाच ।

क्रव्यादाः सर्व एवाशु भक्षयन्तस्तदा शवम् ।
हसन्तो विविधं घोरं नादयन्तो वसुंधराम् ॥ [ 1870 ]
राक्षसाः पिशिताशाश्च पिबन्तो रुधिरं बहु ।
आशिषं युञ्जते राजञ्शवस्य पिशिताशनाः ॥
नृत्यन्ति स्म तदा राजन्नगर्या रणतोषिणः ।
काका बळाश्च गृध्राश्च श्येना गोमायुकास्तथा ।
भक्षयन्तः प्रधावन्तस्ततश्चेतश्च दारुणम् ॥ [ 1875 ]
एतस्मिन्नन्तरे वीरो निषादो लब्धसंज्ञकः ।
हतान्सर्वान्समालोक्य निषादानथ सीरिणा ॥
गदामादाय कुपितो राममेव जगाम ह ।

---

उत्पततीं ; $T_4$ उत्पत्य नां ( for उत्प्लुत्य तां ) $D_6$ $T_4$ $G_2$ महाराज ( for °घोरां ) $D_6$ $T_{1\ 4}$ $G_{2\ 4}$ बलदेव ( for °भद्र॰ ) — ( L 1844 ) $G_2$ तामादाय ( for आदायाथ ) — ( L 1845 ) Dn $Ds_2$ $D_6$ $T_2$ $G_{2,\ 5}$ तथैव ( for तथैव ) — $T_1$ om ( hapl ) lines 1849[b]–1855[a] $G_3$ om ( hapl ) lines 1850–1863 — ( L 1850 ) Dn $Ds_2$ तस्य ( for शस्त्र ) — ( L 1851 ) Dn $Ds_2$ खड्गिनश् ( for सादि° ) — $T_2$ om ( hapl ) lines 1853–1857 — ( L 1854 ) Dn $Ds_2$ यादवानां महौजसाम् ; $G_2$ बलभद्रं महौजसम् ( for [b] ) — ( L 1858 ) Dn $Ds_2$ आघ्नन्ति ( for आयान्ति ) — ( L 1861 ) Dn $Ds_2$ $T_1$ $G_2$ $M_1$ सर्वानाकर्षयामास ( for [a] ) Dn $Ds_2$ $T_1$ $M_{1\ 3}$ हि पीडयन् , $D_6$ ह्ययोधयत् , $G_2$ ह्यपोथयत् , $M_{2\ 4}$ निपीडयन् ( for व्यपोथयत् ). — ( L. 1862 ) Dn $Ds_2$ राजेन्द्र ( for रामेण ). — ( L 1865 ) व्यनदत् ( for विनदंस् ) — ( L 1868 ) Dn $Ds_2$ $M_4$ कोष्ठात् ; $G_n$ क्षोभात् ( for कोष्णं ) Dn $Ds_2$ $D_6$ $T_4$ $G_2$ $M_{1-2}$ ( *inf lin* as above ) $_3$ संछिद्य , $T_2$ संगृह्य ( for संकृष्य )

COLOPHON. — *Mention of the Epic* : $Ds_2$. — *Mention of Khila* $Dn_2$ Ds $D_6$ $T_{1\ 2\ 4}$ G M. — *Adhy name* : Dn $Ds_2$ एकलव्यसैन्यवध. — *Adhy no* Dn 283 , $Ds_2$ 282 , $T_1$ $G_3$ 209 , $T_2$ $G_2$ 204 , $G_4$ $M_{1\ 2.\ 4}$ 210, $M_3$ 174.

$T_2$ $G_1$ om the ref — ( L 1869 ) $T_{1.\ 2}$ $G_{1\ 3-5}$ शवं बहु ( for तदा शवम् ) — ( L 1870 ) $Dn_2$ हसन्ते ( for °न्तो ) $T_{1\ 2}$ $G_{1\ 3-5}$ नादं , M हास ( for घोरं ) — ( L 1871 ) Bom Poona eds G( ed ) च पिशाचास् ( for पिशिताशास् ) Dn $Ds_2$ $G_2$ शोणिते ( for रुधिरं ) — ( L 1872 ) Dn $Ds_2$ $G_{1\ 3\ 4}$ $M_{1\ 3}$ आशिषो ( for °ष ) Dn $Ds_2$ $T_4$ $G_2$ $M_4$ भुञ्जते ( for यु° ) $T_1$ राम , $T_2$ $G_{1\ 3-5}$ रामे ( for राजञ् ). $D_6$ $T_4$ $G_2$ M रामस्य , $T_{1\ 2}$ $G_{1\ 3-5}$ जयेति ( for शवस्य ). — ( L 1873 ) $T_{1\ 2}$ $G_{1\ 3\ 4}$ $M_3$ -तोषिता ( for °ण: ) — ( L. 1874 ) Dn $Ds_2$ $G_{1\ 5}$ बलाका , $D_6$ बकाश्च , $T_1$ व्यालाश्च ; $G_3$ $M_4$ बलाश्च ( for बळाश्च ) Dn $Ds_2$ $D_6$ $T_{1\ 4}$ $G_2$ $M_{1\ 3}$ गोमायवस् ( for °युकास् ) — ( L 1875 ) Dn $Ds_2$ $T_{1\ 2}$ $G_{1\ 3\ 4}$ M प्रवर्तन्ते ( for प्रधावन्तस् ) Dn $Ds_2$ $D_6$ इतस् ( for ततस् ) Dn $Ds_2$ राक्षसाश्चैव दारुणाः ( for [b] ). — ( L 1876 ) $T_2$ -संज्ञित. , $T_4$ $G_2$ -संज्ञिक: ( for -संज्ञकः ).

जघान गदया राजञ्जत्रुदेशे निषादपः ॥
ततो रामो गदी राजन्निषादं बाहुशालिनम् । [ 1880 ]
आजघ्ने गदया क्रूरं मदमत्तो हलायुधः ।
तयोश्च तुमुलं युद्धं गदाभ्यां समवर्तत ॥
आकाशे शब्द आसीत्तु तयोर्युद्धे महारवः ।
समुद्राणां यथा घोषः सर्वेषा सनिगच्छताम् ॥
कल्पक्षये महाराज शब्दः स तुमुलोऽभवत् । [ 1885 ]
क्षुभितो नागलोकश्च नागाः क्षोभं समाययुः ।
पृथिवी चान्तरिक्षं च सर्व शब्दमयं बभौ ॥
ततः स पौण्ड्रको राजा सात्यकिं वृष्णिनन्दनम् ।
गदयैव जघानाशु सत्वरं रणकोविदः ।
युयुधानो बली राजन्वासुदेवं जघान ह ॥ [ 1890 ]
तयोश्च तुमुलः शब्दः प्रादुरासीन्महारणे ।
चतुर्णां युध्यतां राजन्परस्परवधैषिणाम् ।
ब्रह्माण्डक्षोभणो राजञ्शब्द आसीत्सुभैरवः ॥
ततो रजः प्रादुरभूत्तस्मिन्संग्राममूर्धनि ।
तारका निष्प्रभा आसंस्तमस्येवं क्षयं गते ॥ [ 1895 ]
उषसि प्रतिबुद्धायां तमो निःशेषतां ययौ ।
उदितो भगवान्सूर्यश्चन्द्रश्च क्षयमाययौ ॥
ततो युद्धं प्रादुरभूच्चतुर्णां बाहुशालिनाम् ।
देवासुरसमं राजन्नुदिते भास्करे महत् ॥

Colophon

वैशंपायन उवाच ।

ततः प्रभाते विमले भगवान्देवकीसुतः । [ 1900 ]
गन्तुमैच्छज्जगन्नाथ. पुरीं बदरिकाश्रमात् ॥
नमस्कृत्य मुनीन्सर्वान्ययौ द्वारवतीं प्रभुः ।
आरुह्य गरुडं विष्णुर्वेगेन महता प्रभुः ॥
सुमहाञ्शुश्रुवे शब्दस्तेषां युद्धं प्रकुर्वताम् ।
गच्छता देवदेवेन पुरीं द्वारवतीं नृप ॥ [ 1905 ]
अचिन्तयज्जगन्नाथः को न्वयं शब्द उत्थितः ।
संग्रामसंभवो घोर आर्यशैनेयसंयुतः ॥
व्यक्तमागतवान्पौण्ड्रो नगरीं द्वारकामनु ।
तेन युद्धं समभवत्पौण्ड्रकेण दुरात्मना ॥
यदूनां वृष्णिवीराणां युध्यतामितरेतरम् । [ 1910 ]
शब्दोऽयं सुमहान्वृत्तो नात्र कार्या विचारणा ॥
इत्येवं चिन्तयित्वा तु दध्मौ शङ्खं महारवम् ।

— Dn2 om lines 1877–1878 —(L 1877) T2 एतान् (for हतान्) D6 शौरिणा, M4 सीरिणम् (for सीरिणा) Dn1 निषादान्नगदारिण, Ds2 °न्नगचारिण T2 °न्विद्धसीरणान् (for $^b$) —(L 1878) T3 G1 [आ]जगाम (for जगाम) —(L. 1879) T1 2 G1 4 घोरं (for राजन्) Dn Ds2 M1 छत्रदेशे (for जत्रु°) —(L 1880) Cal ed द्वंद्वं (for गदी) —(L 1883) Dn Ds2 महाभुज, G4 सुदारुणम् (for महारव.) —(L 1884) D6 G2 महाघोर, G5 महाघोष. (for यथा घोष) —(L 1885) Dn Ds2 T1 2 4 M सु (for स) G4 महान् (for ऽभवत्) —(L 1886) D6 T4 G4 5 M4 क्षोभितो, G1 क्षुधितो (for क्षुभितो) Dn Ds2 G2 क्षो(G2 क्षु)भितो नागराजश्च (for $^a$) M1 3 परं ययु· (for समाययु·) —(L 1887) T4 शस्त्रमयं (for शब्द°). D6 सर्वे लोका. सर्वदिश. (for $^b$) —(L 1889) D6 T4 G2 -कोविदम् (for °द) —(L 1891) G2 समन्ततः (for महारणे) —(L 1893) Dn Ds2 T1 G3 4 सुदारुणः; M4 तु भैरवः (for सुभै°). —(L 1894) D6 G2 M रण. (for रजः) G5 M1 3 आसीत् (for अभूत्) —(L 1895) Dn Ds2 T1, 2 G1 M राजंस् (for आसंस्). G2 [इ]इ (for [ए]व) —(L 1896) G5 उषसा (for °सि) Dn Ds2 T2 G M4 ततो (for तमो) —(L 1897) D6 लयम् (for क्षयम्) —(L 1898) T1 2 G1 3 4 बलशालिनाम् (for बाहु°) — D6 T1 2 4 G om line 1899.

COLOPHON — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 D6 T1 2 G M — *Adhy name* Dn Ds2 D6 पौण्ड्रकयुद्धम्, T4 G4 M1 2 4 पौण्ड्रकवध. — *Adhy no* Dn Ds2 283, T1 G3 210, T2 G1 5 M1, 2 4 211, T4 179, G2 205; G4 209, M3 175

T3 G1 2 om the ref —(L 1901) G2 om. (hapl) 1901$^b$–1906$^a$. Dn Ds2 M4 पुर (for पुरी) —(L 1902) T2 G1 4 नमस्कृत्वा (for °स्कृत्य) Dn Ds2 G3 नृप, D6 प्रति, T2 G1 4 प्रभो; M1–3 हरि. (for प्रभु·) — G3 om. lines 1903–1905 —(L 1903) D6 T1 2 4 G1 4 5 हरि (for प्रभु.). —(L 1904) D6 T1 2 G1, 4 5 M1–3 श्रूयते (for शुश्रुवे) —(L 1906) M उत्तमः (for उत्थित.). —(L 1907) D6 T4 -संभ्रमो (for -संभवो) G5 -संवृतः (for -संयुतः) M3 शैनेयेन च संयुत (for $^b$) —(L 1909)

पाञ्चजन्यं हरिः साक्षात्प्रीणयन्वृष्णिपुंगवान् ॥
रोदसी पूरयामास तेन शब्देन केशवः ।
यादवा वृष्णयश्चैव श्रुत्वा शङ्खस्य तं रवम् ॥ [ 1915 ]
व्यक्तमायाति भगवान्पाञ्चजन्यरवो ह्ययम् ।
इति ते मेनिरे राजन्वृष्णयो यादवास्तथा ।
निर्भयाः समपद्यन्त वृष्णयो यादवा नृप ॥
तस्मिन्नेव क्षणे दृष्टस्तार्क्ष्यश्च पततां वरः ।
ततश्च देवकीसूनुर्दृष्टस्तैर्यादवेश्वरैः ॥ [ 1920 ]
सूताश्च मागधाश्चैव पुरो यान्ति जगत्पतेः ।
स्तुत्या स्तोतुं हरिं विष्णुमीश्वरं कमलेक्षणम् ॥
ततश्च यादवाः सर्वे परिवव्रुर्जनार्दनम् ।
कृष्णस्तु गरुडं भूयो गच्छ त्वं मेरुमुत्तमम् ॥
इत्युक्त्वा गरुडं विष्णुर्विसृज्य यदुपुंगवः । [ 1925 ]
दारुकं पुनराहेदं रथमानय मे प्रभो ॥
स तथेति प्रतिज्ञाय रथमानीय सत्वरम् ।
रथोऽयं भगवन्देव किमतः कृत्यमस्ति मे ।
इत्युक्त्वा रथमादाय प्रणम्याग्रे स्थितो हरेः ॥
गतेऽथ गरुडे विष्णू रथमारुह्य सत्वरम् । [ 1930 ]
यत्र युद्धं समभवत्तत्र याति स केशवः ॥
तत्र गत्वा महारङ्गे युध्यतां च महात्मनाम् ।
पाञ्चजन्यं महाशङ्खं दध्मौ यदुवृषोत्तमः ॥
पौण्ड्रोऽथ वासुदेवस्तु कृष्णं दृष्ट्वा रणोत्सुकम् ।
सात्यकिं पृष्ठतः कृत्वा वासुदेवमुपागमत् ॥ [ 1935 ]
क्रुद्धोऽथ सात्यकी राजन्वारयामास पौण्ड्रकम् ।
न गन्तव्यमितो राजन्नेष धर्मः सनातनः ॥
जित्वा मां गच्छ राजेन्द्र परं योद्धुं महारणे ।
क्षत्रियोऽसि महावीर स्थिते मयि रणोत्सुके ॥
एष ते गर्वमखिलं नाशयिष्यामि संयुगे । [ 1940 ]
इत्युक्त्वा चाग्रतस्तस्थौ गच्छतो यादवेश्वरः ॥
पौण्ड्रस्य शिनिनप्ता तु पश्यतः केशवस्य ह ।
अवज्ञाय शिनेः पौत्रं कृष्णमेव जगाम ह ॥
निर्भर्त्स्य सहसा भूयः सात्यकिः क्रोधमूर्छितः ।
गदया प्राहरत्पौण्ड्रं वासुदेवस्य पश्यतः । [ 1945 ]
यथाशक्ति यथायोगं सात्यकिः सत्यविक्रमः ॥
दृष्ट्वाथ भगवानेवं सात्यकिं प्रशशंस ह ॥
निवार्य सात्यकिं कृष्णो यथेष्टं क्रियतामसौ ।
उपारमद्यथायोगं सात्यकिः कृष्णवारितः ॥
ततः स पौण्ड्रको राजा वासुदेवमुवाच ह । [ 1950 ]
भो भो यादवगोपाल इदानीं क्व गतो भवान् ॥
त्वां द्रष्टुमद्य संप्राप्तो वासुदेवोऽस्मि सांप्रतम् ॥
हत्वा त्वां सबलं कृष्ण बलैर्बहुभिरन्वितः ।
गतेऽथ यमलोकं तु त्वयि केशव बन्धुभिः ।
अहमेको भविष्यामि वासुदेवो जगत्पतिः ॥ [ 1955 ]
यच्चक्रं तव गोविन्द प्रथितं सुप्रभं महत् ।

---

Cal. ed महात्मना ( for दुरा° ). — ( L 1910 ) $G_3$ वृष्णिवर्याणां — ( L 1911 ) Dn $Ds_2$ $T_1$ $G_2$ व्यक्तो ( for वृत्तो ). — ( L 1912 ) $T_2$ प्रतापवान् ( for महारवम् ) — ( L 1915 ) $D_6$ $G_2$ $M_2$ यदवो ( for यादवा ) $Ds_2$ $T_2$ ते ( for तं ) — ( L 1916 ) $G_3$ -स्वनो ( for -रवो ) — ( L 1918 ) $G_2$ निर्णयं समवाप्यन्त ( for ${}^a$ ) Dn $Ds_2$ $T_1$ $G_3$ $M_{1\ 3}$ च ते ( for नृप ). — ( L 1920 ) Dn $Ds_2$ $T_4$ $G_4$ यादवेश्वर·, $T_1$ °वैर्नृप ( for °वेश्वरैः ) — ( L 1921 ) $G_2$ आगता ( for सूताश्च ). — ( L 1922 ) Dn $Ds_2$ $G_3$ स्तुत, $D_6$ $T_4$ $G_2$ स्तुत्यं ; $T_{1\ 2}$ $G_{1,\ 4}$ [अ]स्तुवन् ( for स्तोतु ) — ( L 1923 ) $T_{1\ 4}$ $G_{1-3}$ $M_{1\ 2,\ 4}$ गताश् ( for ततश् ) — ( L 1924 ) Dn $Ds_2$ नाकम् ( for मेरुम् ) — ( L 1925 ) $D_6$ $T_4$ $G_2$ व्यसृजद् ( for विसृज्य ) Dn $Ds_2$ $M_{1\ 3}$ -नन्दन ( for -पुंगव. ) — ( L 1927 ) Dn $Ds_2$ $T_2$ $G_3$ $M_2$ ( *inf. lin.* as above ) आदाय ( for आनीय ) — ( L 1929 ) $T_4$ हरि· ( for हरे· ) — ( L 1931 ) $D_6$ $T_{1\ 2}$ $G_{2\ 3}$ ततो ( for तत्र ) — ( L 1932 ) Dn $Ds_2$ $T_4$ $G_3$ महाराज ( for °रङ्गे ) $G_2$ परस्परम् ( for महात्मनाम् ) — ( L 1934 ) $T_2$ $G_{1\ 4}$ पौण्ड्रको ( for पौण्ड्रोऽथ ) — $G_3$ om lines 1935–1939 — ( L 1942 ) Cal ed पौण्ड्रकस्य शिनेर्नप्ता ( for ${}^a$ ) — ( L 1946 ) Dn $Ds_2$ यथाप्राण ( for यथाशक्ति ) $D_6$ $T_{1\ 2}$ G M यथाप्राणं ( for यथायोगं ) Cal ed सात्यकिः क्रोधमूर्छित ( for ${}^b$ ) — ( L 1947 ) $T_2$ $G_{1\ 5}$ स, $M_4$ [आ]शु ( for [आ]थ ) $T_2$ $G_{1\ 2\ 5}$ सात्यकिः ( for °किं ) — ( L. 1948 ) $Dn_2$ विष्णो ( for कृष्णो ) — ( L 1949 ) $G_1$ -पालितः ( for -वारित· ). — ( L 1950 ) Dn $Ds_2$ $M_{1\ 3}$ स तत. ( by transp ) $T_2$ तत. स पौण्ड्रं राजा तु ( for ${}^a$ ) — $Dn_2$ Ds $M_{1-3}$ om. line 1954 — ( L. 1955 ) Dn $Dn_2$ $G_{1\ 2}$ महीतले ( for जगत्पति ). — ( L.

अनेन मम चक्रेण पाटितोऽस्मि च तद्रणे ॥
चक्रमस्तीति यद्वीर्यं तव माधव सांप्रतम् ।
नाशयिष्यामि तत्सर्वं सर्वक्षत्रस्य पश्यतः ॥
शार्ङ्गीति मां विजानीहि न त्वं शार्ङ्गीति शब्दयसे । [1960]
शङ्खी चाहं गदी चाहं चक्रीति च जनार्दन ।
मामेव हि सदा ब्रूयू राजानो वीर्यशालिनः ॥
आदौ त्वं बल्लवैर्वृद्धो हत्वा स्त्रीबालकान्बहून् ।
गाश्च हत्वा महागर्वस्तव संप्रति वर्तते ॥
तत्तेऽहं व्यपनेष्यामि यदि तिष्ठसि मत्पुरः । [ 1965 ]
शस्त्रं गृहाण गोविन्द यदि योद्धुं व्यवस्थितः ।
इत्युक्त्वा बाणमादाय तस्थौ पार्श्वे जगत्पतेः ॥
एतद्वचनमाकर्ण्य वासुदेवस्य भाषितम् ।
स्मितं कृत्वा हरिः कृष्णो बभाषे पौण्ड्रकं नृपम् ॥
कामं वद नृप त्वं हि पातक्यसि सदा नृप । [ 1970 ]
गोघाती बालघाती च स्त्रीहन्ता सर्वथा नृप ॥
चक्री भव गदी राजञ्शार्ङ्गी च सततं भव ।
नामासीद्यद्वृथा मह्यं वासुदेवेति च प्रभो ॥
शार्ङ्गी चक्री गदी शङ्खीत्येवमादि वृथा मम ।
किं तु वक्ष्यामि किंचित्तु शृणुष्व यदि मन्यसे ॥ [ 1975]
क्षत्रिया बलिनो ये तु स्थिते मयि जगत्पतौ ।
तथा नु ब्रुवते त्वां हि जीवत्येव मयि प्रभो ॥
यत्ते चक्रं महाघोरं सर्वकालायसं महत् ।
तत्तुल्यं मम चक्रस्य वृत्तनो न तु वीर्यतः ।
आयुधेष्वथ सर्वत्र शब्दसादृश्यमस्ति ते ॥ [ 1980 ]
गोपोऽहं सर्वदा राजन्प्राणिनां प्राणदः सदा ।
गोप्ता सर्वेपु लोकेपु शास्ता दुष्टस्य सर्वशः ॥
कत्थनं सर्वदा कार्यं जित्वा शत्रूंरणे नृप ।
अजित्वा किं भवान्ब्रूते स्थिते मयि च शस्त्रिणि ॥
हत्वा मां ब्रूहि राजेन्द्र यदि शक्नोषि पौण्ड्रक । [ 1985 ]
स्थितोऽहं चक्रमाश्रित्य रथी चापी गदासिमान् ॥
रथमारुह्य युद्धाय संनद्धो भव मानद ।
इत्युक्त्वा भगवान्विष्णुः सिंहनादं व्यनीनदत् ॥

Colophon

वैशंपायन उवाच ।

ततः शरं समादाय वासुदेवः प्रतापवान् ।
पौण्ड्रं जघान सहसा निशितेन शरेण ह ॥ [ 1990 ]
पौण्ड्रोऽथ वासुदेवस्तु शरैर्दशभिराशुगैः ।
वासुदेवं जघानाशु वार्ष्णेयं वृष्णिनन्दनम् ॥
दारुकं पञ्चविंशत्या हयान्दशभिरेव च ।
सप्तत्या वासुदेवं तु यादवं वासुदेवकः ॥
ततः प्रहस्य सुचिरं केशवः केशिसूदनः । [ 1995 ]
धृष्टोऽसीतीह मनसा संपूज्य यदुनन्दनः ॥

1957 ) पीडितो ( for पाटितो ) — ( L 1960 ) Dn Ds2 शिष्यसे ( for शब्दयसे ) — ( L 1962 ) Dn Ds2 जानन्तो ( for राजानो ) — T1 om line 1963 — ( L. 1963 ) Dn Ds2 आदौ त्वं बलवद्वृद्धान्; G2 आदौ तु शल्यवेषस्त्वं ( for ᵃ ) — ( L 1972 ) T2 G2 नृप ( for भव ) — ( L 1973 ) Dn Ds2 T4 नामधेयं, G2 M4 नाममात्रं, M1-2 नामधेयो ( for नामासीद्यत् ). — G5 om lines 1974-1976. — ( L 1974 ) Dn यथा ( for वृथा ) D6 T1. 2 4 G2 4 M2 नृप ( for मम ) — ( L 1977 ) D6 T2 M1-3 न ( for नु ) — ( L 1978 ) Ds2 असुरान्तकरं महत् ( for ᵇ ) — ( L 1979 ) T1 2 G1 3 4 चक्रं तु, G2 M2 वीर्यस्य ( for चक्रस्य ) — ( L 1980 ) T2 G1. 3-5 मे ( for ते ). — ( L. 1981 ) G1 सर्वथा; G4 5 प्राणिनां ( for सर्वदा ) G4. 5 सर्वदा ( for प्राणिनां ). D6 T4 G2 त्वमेव सर्वदा राजन्प्राणद सर्वदेहिनाम्. — ( L. 1982 ) G4 5 गोप्ता सर्वस्य लोकस्य ( for ᵃ ) Dn Ds2 M सर्वदा ( for सर्वशः ) — ( L 1983 ) Bom. Poona. eds G(ed ) कत्थनं सर्वकार्यं हि ( for ᵃ ) Dn1 Ds2 नृपाधम ( for रणे नृप ) Dn2 जित्वा राजन्नृपाधम ( for ᵇ ) — ( L 1984 ) T1 शत्रुणा; G2 शार्ङ्गिणि ( for शस्त्रिणि ). — ( L 1985 ) Dn Ds2 G2 M2 4 शक्तोऽसि ( for शक्नोषि ). G1 5 शक्नोषि ( G5 °क्तोऽसि ) यदि पौण्ड्रक ( for ᵇ ) — ( L 1986 ) T4 शरी ( for रथी ) — D6 T4 G2 om line 1988. — ( L 1988 ) G4 5 M3 इत्युक्तो ( for °क्त्वा ). G4 5 कृष्ण ( for विष्णु. ).

Colophon — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 D6 T1 2 4 G M —*Adhy name*. Dn Ds2 कृष्णपौण्ड्रकयुद्धम्, D6 T1 M2 4 पौण्ड्रकवधः. —*Adhy no* · Dn Ds2 284, T1 G3 201; T2 G1 213; T4 180, G2 206, G4 212, M1-3 176; M4 112.

( L 1992 ) D6 जगन्नाथं ( for जघानाशु ) — ( L 1994 ) D6 T4 G2 यादवान् ( for °वं ) — ( L 1995 ) G2 केवलं ( for केशव ). Dn2 -नाशनः ( for -सूदनः ). — ( L 1996 ) Ds2

आकृष्य शार्ङ्गं बलवान्संधाय रिपुमर्दनः ।
नाराचेन सुतीक्ष्णेन ध्वजं चिच्छेद केशवः ॥
सारथेश्च शिरः कायादाहृत्य यदुपुंगवः ।
अश्वांश्च चतुरो हत्वा चतुर्भिः सायकोत्तमैः ॥ [ 2000 ]
रथरज्जूः समाहृत्य तथोभौ पार्ष्णिसारथी ।
चक्रं च तिलशः कृत्वा हसन्किंचिदवस्थितः ॥
पौण्ड्रको वासुदेवस्तु रथादाप्लुत्य सत्वरम् ।
आदाय निशितं खड्गं प्राहिणोत्केशवाय ह ॥
स खड्गं शतधा कृत्वा शरैर्दशभिरेव च । [ 2005 ]
बालवत्केशवोऽतिष्ठन्निमील्य नयने हरिः ॥
ततः शक्तिं समादाय निशितां घोरविग्रहाम् ।
प्राहिणोद्वृष्णिवीराय सिंहनादं समाददे ॥
तां चापि तिलशः कृत्वा तूष्णीमासीत्स केशवः ॥
ततोऽपरं महाघोरं परिघं कालसंनिभम् । [ 2010 ]
गृहीत्वा वासुदेवाय वासुदेवः प्रतापवान् ॥
प्राहिणोद्वृष्णिवीराय सर्वक्षत्रस्य पश्यतः ।
तद्द्विधा जगतां नाथश्चकार यदुनन्दनः ॥
ततश्चक्रं महाघोरं सहस्रारं महाप्रभम् ।
त्रिंशद्धारसमायुक्तमयसा निर्मितं महत् । [ 2015 ]
आदायाथ महाराज केशवं वाक्यमब्रवीत् ॥
पश्येदं निशितं घोरं तव चक्रविनाशनम् ।
अनेन तव गोविन्द दर्पं दर्पवतां वर ।
अपनेष्यामि वार्ष्णेय सर्वक्षत्रस्य पश्यतः ॥
त्वामुद्दिश्य महाघोरं कृतं मम दुरासदम् । [ 2020 ]
यदि शक्तो हरे कृष्ण दारयैनं महास्पदम् ॥
इत्युक्त्वा तच्छतगुणं भ्रामयित्वा महाबलः ।
चिक्षेपाथ महावीर्यः पौण्ड्रको नृपसत्तम ।
हरिमुद्दिश्य सहसा विनदन्भैरवं रवम् ॥
ततः प्रहस्य भगवानापतन्तं महायुधम् । [ 2025 ]
गृहीत्वा बलवद्घोरं तेनैव प्राहिणोद्धरिः ॥
दृष्ट्वा तं महदायान्तं पौण्ड्रको नृपसत्तमः ।
अवप्लुत्य तनो देशात्तदुत्सृज्य महाबलः ।
सिंहनादं महाघोरं व्यनदद्वीर्यवांस्तदा ॥
ततो विस्मयमापन्नो भगवान्देवकीसुतः । [ 2030 ]
अहो वीर्यमहो धैर्यमस्य पौण्ड्रस्य दुःसहम् ।
इति मत्वा जगन्नाथः स्थित एव रथोत्तमे ॥
ततः शिलाः समादाय प्रेषयामास केशवे ।
ताः शिला: प्रेषयामास तस्मै यादवनन्दनः ॥

---

दृष्टो; Cal. ed हृष्टो (for घृष्टो) Ds2 G3 M1 3 ऽसाविति; T2 G2 ऽसीति हि, M2 4 ऽसीति च (for ऽसीतीह) G5 मृदुना (for मनसा) — (L 1997) Dn Ds2 T2, 4 G1 5 M1 2 4 -सूदन (for -मर्दन·) — T2 om. line 1999 — (L 1999) G3 om lines 1999ᵇ–2001ᵃ Dn Ds2 आहृत्य यदुनन्दनः (for ᵇ). — (L 2001) Dn Dn2 रथं राज्ञ.; D6 रथरज्जुं, T1 °रज्ज्वा; T2 °रथ्या (for रज्जू.) M1 3 4 प्राष्टि-; M2 प्राष्टि- (for पार्ष्णि-) G2 तस्थौ प्रातिष्ठसारथी (sic) (for ᵇ) — (L 2002) Dn1 T1 4 G2 4 M इव स्थित, D6 इवास्थित (for अव°) — (L 2003) G2 M1 4 उत्प्लुत्य (for आप्लुत्य) G4 5 M3 सत्वर· (for °रम्) Dn Ds2 रथादुत्प्लुत्य सत्वर. (for ᵇ). — (L 2004) Dn Ds2 स (for ह) — (L 2005) T1 2 G1 3–5 M3 दशधा (for शतधा) Dn Ds2 G2 4 om 2005ᵇ–2009ᵃ — (L 2009) Dn Ds2 T1 4 G3 M1 आसीच्च, T2 G1 4 5 M2–4 °त (for °त्स) — (L 2010) Dn Ds2 M3 4 -संमितम् (for -संनिभम्). — (L 2011) वासुदेवं (for °देव). — (L. 2013) M3 द्विधा तं (for तद्द्विधा), T2 G1, 3–5 तद्द्विधं (G3, 4 °धा) तु जगन्नाथश्च (for ᵃ) — (L 2015) D6 T1 2 4 G M विंशद्धार- (for त्रिंश°). T1 2 4 G5 बृहत् (for महत्) Dn Ds2 M4 आयसास्यममित्रहा, M1–3 अयस्मयममित्रहा (for ᵇ) — (L 2016) D6 T4 G2 आदाय पौण्ड्रको राजा (for ᵃ) — (L 2017) G2 [इ]मं, M3 त्वं (for [इ]दं) T4 पश्यैतन्निहितं घोरं (for ᵃ). D6 सहस्रारं महाप्रभम् (for ᵇ) — (L 2018) T2 पौण्ड्र- (for दर्पं) G3 दर्पविदां (for °वतां) — (L 2020) Dn Ds2 M4 कृतमन्यद्, G2 कृतवर्म- (for कृत मम) — (L 2021) Dn Ds2 G2 दारयेदं, D6 वारयेदं; T1 2 4 G1 3–5 M1–3 वारयैनं (for दार°) D6 T1, 4 G3 M1–3 ममास्पदम्, G2 महत्स्वनम् (for महास्पदम्) — Dn Ds2 om (hapl) lines 2024–2027. — (L 2026) D6 प्राहरद् (for प्राहिणोद्). — (L 2027) G2 चक्रं (for दृष्ट्वा). — (L 2031) D6 T1 वर्यिम् (for धैर्यम्) G2 दुष्प्रभम् (for दुःसहम्) — (L 2032) Dn Ds2 उत्थितश्च रथोत्तमात् (for ᵇ) — (L 2033) Dn Ds2 G2 3 शिलां (for शिलाः) Bom Poona eds G(ed) केशवम् (for °वे) — (L 2934) Dn Ds2 T1 G3 4 तां शिलां (for ता शिलाः) Dn Ds2 तस्मै यदुकुलोद्वहः; G2 कृष्णो

पौण्ड्रेण सुचिरं कालं विक्रीड्य भगवान्हरिः । [ 2035 ]
ततश्चक्रं समादाय निशितं रक्तभोजनम् ॥
दैत्यमांसप्रदिग्धाङ्गं नारीगर्भविमोचनम् ।
शातकुम्भनिभं घोरं दैत्यदानवनाशनम् ॥
सहस्रारं शतारत्निमद्भुतं दैत्यभीषणम् ।
वैष्णवं परमं चक्रं नित्यं सुरगणार्चितम् ॥ [ 2040 ]
विष्णुः कृष्णो रथी शार्ङ्गी नित्ययुक्तः सदा हरिः ।
जघान तेन गोविन्दः पौण्ड्रकं नृपसत्तमम् ॥
तस्य देहं विदार्याशु चक्रं पिशितभोजनम् ।
कृष्णस्याथ करं भूयः प्राप सर्वेश्वरस्य ह ।
ततः स पौण्ड्रको राजा गतासुः प्रापतद्भुवि ॥ [ 2045 ]
निहत्य भगवान्विष्णुर्दुर्विज्ञेयगतिः प्रभुः ।
प्रतिपेदे सुधर्मां तु यादवैः पूजितो हरिः ॥

Colophon.

वैशंपायन उवाच ।

निषादेशं ततो रामः शक्त्या वीर्यवतां वरः ।
आजघान स्तनद्वंद्वे सिंहनादं व्यनीनदत् ॥
ततः क्रुद्धो निषादेशो रामं मत्तं महाबलम् । [ 2050 ]
गदया लोकविख्यातो जघान स्तनवक्षसि ॥
आहतः स तु तेनाशु बलभद्रो महाबलः ।
उभाभ्यां चैव रामस्तु कराभ्यां वृष्णिपुंगवः ।
गदां गृह्य महाघोरां निषादाय समाददे ॥
तां दृष्ट्वा महती घोरामायान्तीं प्राणहारिणीम् । [ 2055 ]
दुद्रावाथ निषादेशः समुद्रं मकरालयम् ।
अन्वधावत्ततो रामो धावन्तं मकरालयम् ॥
धावत्येवं तदा राजन्नेकलव्ये निषादपे ।
धावत्येव च रामोऽपि यत्र यातो निषादप. ॥
सागरं स प्रविश्याशु गत्वा योजनपञ्चकम् । [ 2060 ]
भीत एव तदा राजन्नेकलव्यो निषादपः ।
कंचिद्द्वीपान्तरं राजन्प्रविश्य जडवत्स्थितः ॥
ततो रामो निषादेशं जित्वा यादवनन्दनः ।
तां सभां मणिरत्नाढ्यां प्रविवेश हलायुधः ॥
सात्यकिर्युद्धसंरक्तस्तां सभां प्रविवेश ह । [ 2065 ]
अन्ये च यादवा राजन्यथायोगमुपस्थिताः ॥
आसीनेषु च सर्वेषु वृष्णिवीरेषु सर्वतः ।
अभिवाद्य यथायोगं वृद्धान्सर्वान्स केशवः ।
उवाच वचनं काले भगवान्देवकीसुतः ॥
दृष्टः कैलासशिखरे शंकरो नीललोहितः । [ 2070 ]
स तु मह्यं यदुवराः प्रीतिमांश्च ददौ वरम् ॥
तत्र देवाः समायाता मुनयश्च तपोधनाः ।
दृष्ट्वा मां शंकरं चैव प्रीतास्तुष्टाः समाययुः ॥
अत्यद्भुतं मया दृष्टं रात्रौ यादवसत्तमाः ।

---

देवकिनन्दन (for [b]) —(L 2037) M1 -प्रदीप्ताङ्गं (for -प्रदिग्धाङ्गं) —(L 2038) Dn Ds2 शातकुम्भमयं घोरं (for [a]). G4.5 -शासनम् (for -नाशनम्) —(L 2039) Dn Ds2 T4 शतारं तद्, T1 2 G1 3–5 सहस्रांशुम् (for शतारत्निम्) T4 -मारणम् (for -भीषणम्). M4 भूतदैत्यविभीषणम् (for [b]) —(L 2040) Dn Ds2 ऐश्वर्यं वर्म परमं, M ऐश्वरं परमं वर्म (for [a]) —(L 2041) Dn Ds2 T1 M1 3 तथा (for रथी). G2 गदी चक्री (for नित्ययुक्त)

Colophon. — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 D6 T1 2 4 G M — *Adhy name* Dn D6 T1 2 G1 3 4 M1 4 पौण्ड्रकवध, Ds2 वासुदेववधः — *Adhy no.* Dn Ds2 285, T1 G3 212, T2 G1 214, T4 179; G2 207; G4 211; G5 213, M1–3 177; M4 213

Dn2 G2 om. the ref. —(L 2048) G2 निषादकं (for °देशं) —(L 2049) D6 स्तनद्वंद्वं (for °न्द्वे) —(L 2050) G2 रणोन्मत्तं (for रामं मत्तं) M2 3 महाबल. (for °बलम्) —(L 2052) T1 आहतः स्तन एवाशु (for [a]). T4 बलदेवो (for °भद्रो) —Dn Ds2 D6 om line 2057. —(L 2057) G2 M3 अन्वीयाच्च (for अन्वधावत्) T4 G2 समुद्रं (for धावन्त) D6 निषादेशं जिघांसया (for [b]). —(L. 2058) Dn Ds2 M1 तदा राज्ञि, T2 जवाद्राजन्; T4 G2 ततो राजन् (for तदा राजन्) T4 G1 4 5 M2–4 एकलव्यो निषादप. (for [b]) —(L 2059) D6 ततो राजन्, M3 तदा रामो (for च रामोऽपि) D6 एकलव्यो, T4 G2 यत्र रामो (for यत्र यातो). —(L. 2062) Dn Ds2 प्रविश्य न्यवसत्तदा (for [b]) —(L 2063) Dn Ds2 जिगाय यदुनन्दनः (for [b]) — G3 om line 2065 —(L 2065) Dn Ds2 G1 T2 3 M1 -ससक्तस; D6 -संनद्धस; T4 -सयुक्तस (for -संरक्तस) —(L 2068) Dn Ds2 T1.4 G4 वृष्णीन् (for वृद्धान्). —(L 2070) Dn Ds2

पिशाचौ द्वौ महाघोरौ वदन्तौ मामिकां कथाम् ॥ [2075]
मृगयां चक्रतुस्तौ तु चिन्तयन्तौ तु मां सदा ।
दृष्ट्वा मां तौ तु राजेन्द्राः प्रीतिमन्तौ तपस्विनौ ।
भक्तिनम्रौ महात्मानौ प्रणामं चक्रतुस्तदा ॥
ततोऽहं सर्वथा प्रीतस्तौ दृष्ट्वा स्वर्गमुत्तमम् ।
तोषयित्वा महादेवमह्ना चाहं ततो गतः ॥ [ 2080 ]
ततस्ते वृष्णयः सर्वे देवदेवं प्रशंसिरे ।
सर्वथा कृतकृत्यास्ते वृष्णयः केशवाश्रयाः ।
यादवाः सर्व एवात्र स्वं स्वं जग्मुर्यथालयम् ॥
अभ्यन्तरं जगन्नाथः प्रविश्य हरिरीश्वरः ।
रुक्मिणीसत्यभामाभ्यामाचचक्षे यथाभवत् ॥ [ 2085 ]
ते प्रीते प्रीतियुक्तेन केशवेन समन्विते ।
एतत्ते सर्वमाख्यातं केशवस्य च चेष्टितम् ॥
शशास पृथिवीं कृत्स्नां दुष्टान्हत्वा महाबलः ।
नरकं घोरकर्माणं पौण्ड्रं च नृपसत्तमम् ॥
हयग्रीवं निशुम्भं च तथा सुन्दोपसुन्दकौ । [ 2090 ]
ररक्ष विप्रान्देवेशो मुनीन्मुनिवरार्चितः ॥
विप्रेभ्यश्च ददौ वित्तं गाश्च रत्नानि केशवः ।
अग्निहोत्रं प्रयुञ्जानो ब्राह्मणांश्च सुतर्पयन् ॥
मुनींश्च ब्रह्मचर्येण देवान्यज्ञेन केशवः ।
स्वधया च पितॄन्सर्वान्प्रीणयत्येव सर्वदा ॥ [ 2095 ]
तस्मिञ्शासति देवेशे राज्यं निष्कण्टकं बभौ ।
सुखमेव प्रजाः सर्वा जीवन्ति ब्राह्मणोत्तराः ॥

Colophon

जनमेजय उवाच ।

भूय एव द्विजश्रेष्ठ शङ्खचक्रगदाभृतः ।
चरितं श्रोतुमिच्छामि विस्तरेण तपोधन ।
न हि मे तृप्तिरस्तीह शृण्वतः कैशवीं कथाम् ॥ [ 2100 ]
को नु नाम हरेर्विष्णोर्देवदेवस्य चक्रिणः ।
शृण्वन्कथां स्मरन्वापि तृप्तिं याति दिवानिशम् ॥
पुरुषार्थोऽयमेवैको यत्कथाश्रवणं हरेः ॥
कथमासीज्जगद्धेतोर्हंसस्य डिभकस्य च ।
समितिः सर्वभूतानां सदा विस्मयदायिनी ॥ [ 2105 ]
विचक्रस्य कथं युद्धं दानवस्य महात्मनः ।
स तयोर्मित्रतां यात इत्येवमनुशुश्रुम ॥
तौ नृपौ वीर्यसंपन्नौ शिष्यौ भृगुसुतस्य ह ।
सर्वास्त्रकुशलौ वीरौ हराङ्कधवरौ किल ॥
संग्रामः सुमहानासीदित्युक्तं भवता पुरा । [ 2110 ]

$T_1$ $G_{2,3}$ $M_{1,4}$ दृष्टं (for दृष्टः). Dn $Ds_2$ $G_3$ दृष्टं कैलासशिखरं (for [a]). — (L 2071) $T_2$ यथा (for ददौ) — (L 2073) Dn $Ds_2$ शंकरश्च (for °रं) $G_5$ प्रति· स्तुत्वा समाययौ (for [b]) — (L 2075) पठन्तौ (for वदन्तौ) $D_6$ $G_2$ वदन्तौ मामिकाः कथा (for [b]) — (L. 2076) $D_6$ प्रीणयन्तौ (for चिन्त°). — (L 2077) $T_2$ $G_{1,4,5}$ राजेन्द्र. — (L. 2078) $D_6$ भक्तिमन्तौ (for °नम्रौ). — (L. 2079) Dn $Ds_2$ नीतौ (for दृष्ट्वा) — (L 2080) $D_6$ $T_{1,4}$ $G_{3,5}$ M प्रेषयित्वा (for तोष°) $T_1$ $G_{1,3-5}$ महात्मानाव्, $T_2$ °त्मानम् (for महादेवम्) $T_1$ आत्मा; $T_2$ वशं (for अह्ना) Dn $Ds_2$ मया चाद्य समागतम् (for [b]) — Before line 2081, some Mss ins वैशंपायन उवाच — (L 2081) Dn $Ds_2$ M शशंसिरे (for प्रशं°). — $G_3$ om lines 2082–2084 — (L 2082) $D_6$ $T_4$ $G_2$ $M_{1-3}$ केशवाश्रयात् (for °श्रयाः) — (L 2083) $G_{4,5}$ यथागतम् (for °लयम्) — (L 2086) M ततस्ते (for ते प्रीते) — After line 2086, G(ed) ins an irrelevant narrative, not connected with the topic — (L 2087) $Ds_2$ $D_6$ $T_{1,2,4}$ $G_{1,2,4}$ M वि- (for च). — (L 2088) $D_6$ $T_{1,2,4}$ $G_{2,2}$ सर्वां (for कृत्स्नां) Dn $Ds_2$ $G_2$ M महाबलात् (for °बल) — (L 2089) Dn $Ds_2$ पौण्ड्रकं (for पौण्ड्रं च) — (L 2092) $D_6$ $T_2$ $G_2$ तदा, $G_1$ यथा (for ददौ) $G_{4,5}$ रत्नं (for वित्तं) Dn $Ds_2$ $G_2$ दत्त्वा स, $G_5$ वित्तं च, $M_{1-3}$ रत्नान्स (for °नि). — (L 2094) Dn $Ds_2$ देवान्यज्ञैरनेकधा (for [b]) — (L 2095) $D_9$ $T_1$ $G_5$ M प्रजया (for स्वधया) Dn $Ds_2$ $D_6$ $T_4$ $G_2$ M प्रीणयन् (for °यति) $D_6$ केशव (for सर्वदा) — (L 2096) Dn $Ds_2$ $D_6$ $T_4$ $G_2$ M प्रभो (for बभौ) — (L 2097) Dn $Ds_2$ $M_{1,3}$ ब्राह्मणादयः, $D_6$ °णोत्तमाः (for °णोत्तराः).

COLOPHON — *Mention of the Epic* $Ds_2$. — *Mention of Khila* Dn $Ds_2$ $T_{1,2,4}$ G M. — *Adhy. name*· Dn $Ds_2$ M पौण्ड्रकवधः, $T_{1,2}$ $G_{1,3}$ एकलव्यपराजयः — *Adhy. no* Dn $Ds_2$ 286; $T_1$ $G_3$ 213, $T_2$ $G_1$ 215; $T_4$ 188, $G_4$ 112; $G_5$ 214; $M_{1-3}$ 178, $M_4$ 284

(L 2102) $T_4$ $G_3$ $M_4$ तथा (for कथां) Bom Poona eds G(ed) शृण्वंस्तथा रमन्वापि (for [a]) — (L 2104) $D_6$ $T_2$ $G_{1,4,5}$ जगद्धातुर्; $G_2$ °त्पातुं (for °द्धेतोर्). — (L.

तयोश्च नृपयोर्विप्र केशवस्य जगत्पतेः ॥
कस्य पुत्रौ समुत्पन्नौ किंवीर्यौ किंपराक्रमौ ।
सर्वमेतद्द्विजश्रेष्ठ वक्तुमर्हसि सुव्रत ॥

वैशंपायन उवाच ।

शृणु राजन्महाबाहो कथां पापप्रणाशिनीम् ।
यथा संग्राम आसीत्तु तयोश्चक्रधरस्य च ॥ [ 2115 ]
यथा च तौ समुत्पन्नौ यथाभूद्विग्रहो महान् ।
अष्टाशीतिसहस्राणि दानवानां महात्मनाम् ॥
बलान्यथ विचक्रस्य शितशूलधराणि च ।
आसन्युद्धे महाराज दानवस्य महात्मनः ॥
यदूनामन्तरं प्रेप्सुर्विचक्रो युद्धकाङ्क्षया । [ 2120 ]
देवासुरे महायुद्धे देवानजयदम्बरे ।
तद्वधार्थं सदा यत्नमकरोच्चैव केशवः ॥

Colophon.

वैशंपायन उवाच ।

आसीत्साल्वेषु राजेन्द्र ब्रह्मदत्तो नृपोत्तमः ।
नाम्ना राजन्स भूतात्मा सर्वभूतदयापरः ॥
पञ्चयज्ञपरो नित्यं जितामित्रो जितेन्द्रियः । [ 2125 ]
ब्रह्मविद्वेदविच्चैव सदा यज्ञपरः शिवः ॥
तस्य भार्ये महीपाल रूपौदार्यगुणान्विते ।
बभूवतुः सुसपन्ने अनपत्ये नृपोत्तम ।
स ताभ्यां मुमुदे राजा शच्या शक्र इवाम्बरे ॥
नाम्ना मित्रमहो नाम सखा चासीद्द्विजोत्तमः । [ 2130 ]
तस्य राज्ञो महायोगी वेदवेदाङ्गपारगः ।
अनपत्यः स विप्रेन्द्रो यथा राजा बभूव ह ॥
स राजा सहितस्ताभ्यामर्चयामास शंकरम् ।
पुत्रार्थं शूलिनं शर्वं दश वर्षाण्यनन्यधीः ।
स विप्रो वैष्णवं सत्रं पुत्रार्थं समयोजयत् ॥ [ 2135 ]
अर्चितस्तेन राजेन्द्र शंकरो नीललोहितः ।
आत्मानं दर्शयामास स्वप्ने राजानमब्रवीत् ।
प्रीतोऽस्मि तव भद्रं ते वरं वरय सुव्रत ॥
अथ राजा जगन्नाथमुवाचेदं स्वपन्नपि ।
पुत्रौ मम भवेतां हि तथेत्युक्त्वा वृषध्वजः । [ 2140 ]
अन्तर्धानं गतः शंभुः स च प्रीतोऽभवन्नृपः ॥
सोऽपि मित्रसहो विद्वान्देवं केशवमव्ययम् ।
पञ्चवर्षं जगन्नाथमर्चयामास भक्तितः ॥
अर्चितस्तेन विप्रेण देवदेवो जनार्दनः ।

---

2105) M3 तदा (for सदा) — (L 2107) G2 शत्रवो मित्रता यान्ति (for $^a$) — (L 2108) Dn Ds2 सुतौ (for नृपौ) — (L 2109) Dn Ds2 T1 2 4 G M3 हरेर् (for हराल्) —(L 2110) M3 स (for सु) —(L 2111) T1 2 G1 3–5 वीर (for विप्र) — Dn Ds2 om (hapl) 2112$^b$–2116$^a$ —(L 2113) T4 एव (for एतद्) —(L 2117) Dn Ds2 T1 G2. 3 M1 ? 4 तरस्विनाम् (for महात्म°) — (L 2118) G4 5 शत- (for शित-) G2 -धरस्य (for -धराणि) —(L 2119) M1 3 दुरात्मन., Cal ed जयैषिण (for महात्मन) — (L 2120) Dn D6 M2 3 अन्तर-, M1 अन्तरे (for अन्तरं) Dn Ds2 T1 M1 यदूनां (for विचक्रो) — (L 2121) Dn Ds2 M1 देवाञ्जयति दुर्धर (for $^b$) — (L. 2122) T2 G4 5 तदा (for सदा) — D6 [ए]ष (for [ए]व)

COLOPHON — *Mention of the Epic* · Ds2 — *Mention of Khila* Dn Ds2 D6 T1. 2 4 G M — *Adhy name* Dn Ds2 T1 2 4 G M हंसडिभकोपाख्यानम् — *Adhy no.*. Dn Ds2 287; T1 G3 214; T2 G1 216; T4 183; G2 209, G5 215, M1-3 179, M4 215

(L 2123) Dn1 बलदत्तो (for ब्रह्म°) — (L 2124) Dn Ds2 पूतात्मा (for भू°) — (L 2125) D6 M1 3 जितात्मा (for °मित्रो) Dn Ds2 T1 2 4 G जितात्मा विजितेन्द्रिय (for $^b$) — (L 2126) Bom Poona eds. G(ed) यज्ञमय (for °पर) D6 T4 शिवे (for शिव.) — (L. 2127) M1-3 महाराज (for महीपाल) — (L 2128) G2 समुत्पन्ने, Cal ed सुसंपन्ने (for °पन्ने) — G1 om. lines 2129–2132 T1 om (hapl) lines 2129–2130 — (L 2130) D6 G3 मित्रसखो (for °सहो) Cal ed महामते (for द्विजोत्तमः) — (L 2131) Dn2 T4 तत्परः (for -पारगः). Dn1 D6 T1 G2 4 5 वेदवेदान्ततत्पर (for $^b$) — (L 2134) G2 शत- (for दश) M1-3 [अ]नन्यभाक् (for °धी.) — (L. 2135) M1 3 समकल्पयत् (for °योजयत्). — (L. 2137) M1 3 दर्शयित्वा तु (for °यामास). — (L 2139) Dn Ds2 स्वपन्निव; T1. 2 G1 3–5 स्मयन्निव (for स्वपन्नपि) — (L. 2140) D6 T4 M1-3 भवेयाता (for °तां हि) — (L 2141) Dn Ds2 M1 3 प्रतिबुद्धस्ततो नृपः (for $^b$) — (L. 2142)

पुत्रमेकं ददौ तस्मै स्वात्मना सदृशं हरिः ॥ [ 2145 ]
ते भार्ये गर्भमाधत्तां तेजसा शंकरस्य ह ।
विप्रभार्या महाराज वैष्णवं तेज आदधात् ॥
महिष्यौ ते महावीर्यौ पुत्रौ शंकरसंमितौ ।
असूयेतां महीपाल क्रमेणैव नृपस्य ह ॥
स तयोश्च महाराज जातकर्मादिकाः क्रियाः । [ 2150 ]
चकार विधिवत्सर्वा विप्रसाच्च महद्धनम् ॥
स च विप्रो विनीतात्मा पुत्रमेकं प्रजज्ञिवान् ।
साक्षादिव जगन्नाथं स्थितं पुत्रात्मना नृप ॥
जातकर्मादिकं सर्वं करणं स चकार ह ।
तौ कुमारावयं चैव त्रयः सवयसोऽभवन् ॥ [ 2155 ]
वेदानधीत्य ते सर्वाञ्श्रुत्वा चान्वीक्षिकीं तथा ।
धनुर्वेदे तथास्त्रे च निपुणास्तेऽभवंस्तदा ॥
हंसो ज्येष्ठो नृपसुतो डिभकोऽनन्तरोऽभवत् ।
स च विप्रसुतो राजञ्जनार्दन इति स्मृतः ॥
अन्योन्यं मित्रतां याताः सर्वे चैव कुमारकाः ॥ [ 2160 ]

Colophon.

वैशंपायन उवाच ।

हंसश्च डिभकश्चैव तपश्चर्तुं महामती ।
मनश्चक्रतुरात्मांशौ शंकरस्य नृपोत्तम ॥
गत्वा तु हिमवत्पार्श्वं तपश्चक्रतुरञ्जसा ।
उद्दिश्य शंकरं शर्वं नीलग्रीवमुमापतिम् ॥
वीर्यास्त्रे चैव नौ स्यातामित्याधाय तु मानसे । [ 2165 ]
एकाग्रौ प्रयतौ भूत्वा वाय्वम्बुप्राशिनौ नृप ॥
नमस्ते देवदेवेश शंकरेति दिवानिशम् ।
हर शर्व शिवानन्द नीलग्रीव उमापते ॥
वृषध्वज विरूपाक्ष हर्यक्ष जगतां पते ।
भक्तप्रिय गिरीशेश वामदेव शिवाच्युत ॥ [ 2170 ]
सद्योजात महादेव देवदेव गुहाशय ।
भूतभावन भूतेश प्रणवात्मन्सदाशिव ॥
इत्यादिनामभिर्नित्यं स्तुवन्तौ शंकरं भवम् ।
हृदि कृत्वा विरूपाक्षं तपस्तेपतुरञ्जसा ॥
निर्ममौ निरहंकारौ मौनव्रतसमास्थितौ । [ 2175 ]
वर्षाणीह तदा राजन्पञ्च चक्रतुरोजसा ॥

---

$D_6$ एवं ( for देव ) — ( L 2145 ) $G_2$ शिव ( for हरि ). — ( L 2147 ) Dn $Ds_2$ $T_{1\ 4\ 4}$ $M_4$ आदधत् ( for °धात् ). — ( L 2148 ) Dn $T_{1\ 2\ 4}$ $G_{1\ 3\ 5}$ $M_{2\ 4}$ महावीर्यें ( for °वीर्यौ ) $M_{1-3}$ ते राजभार्यें गर्भिण्यौ ( for $^a$ ) Dn $Ds_2$ $T_{1\ 2,\ 4}$ $G_{1\ 3\ 5}$ $M_4$ -निर्मितौ ( for -समितौ ) — ( L 2149 ) $T_2$ $G_1$ असुवातां ( for असूयेतां ). $G_2$ कर्मणा ( for क्रमेण ) — ( L 2150 ) $D_6$ स तयो परयो राजा, $T_4$ स तयोः पुत्रयो राजन् ( for $^a$ ) Dn $D_6$ $T_{1\ 2}$ G $M_4$ नाम- ( for जात- ) — ( L 2151 ) $D_6$ $T_{2\ 4}$ $G_3$ सर्वं ( for सर्वा ) Dn $Ds_2$ $M_{1\ 3}$ विप्रेभ्योऽदान्, $G_2$ विप्रेभ्यश्च ( for विप्रसाच्च ) — ( L 2152 ) $G_3$ पुत्रो ( for विप्रो ) Dn $Ds_2$ $M_{1\ 3}$ हि लब्धवान्, $M_{2\ 4}$ प्रलब्धवान् ( for प्रजज्ञिवान् ) — ( L 2153 ) M विप्रात्मना ( for पुत्रा° ) — ( L 2154 ) Dn $Ds_2$ $T_{1\ 2\ 4}$ $G_{1,\ 3-5}$ $M_4$ ब्राह्मण ( for करण ) $D_6$ $G_2$ अकरोद्द्विजसत्तम ( for $^b$ ) — ( L 2155 ) $G_2$ तत्कुमारद्वयं सोऽपि ( for $^a$ ) $M_{1-3}$ क्रमेण ( for त्रय स- ) Cal ed त्रयः सुवपुषोऽभवन् ( for $^b$ ) — ( L 2157 ) $T_4$ तथास्त्रेषु, $M_{1\ 3}$ तथा शास्त्रे ( for तथास्त्रे च ) — ( L 2158 ) $G_1$ दीपिको ( for डिभको ) — ( L 2159 ) M श्रुत- ( for स्मृत- ) — ( L 2160 ) $D_6$ $T_4$ $M_3$ अन्योन्य- ( for °यं )

COLOPHON — *Mention of the Epic* : $Ds_2$. — *Mention of Khila* Dn $Ds_2$ $D_6$ $T_{1\ 2\ 4}$ $G_{2-5}$ M — *Adhy name* Dn $Ds_2$ $T_{1\ 2\ 4}$ $G_{2-5}$ M हंसडिभकोपाख्यानम् — *Adhy. no* Dn 287, $Ds_2$ 288, $T_1$ $G_4$ 215, $T_2$ $G_2$ 217, $T_4$ 184, $G_4$ 214, $G_5$ 216, $M_{1-3}$ 180, $M_4$ 216

— ( L 2161 ) $D_6$ मही गतौ ( for महामती ) G( ed. ) हंसश्चैव तपश्चर्तुं तथा डिम्भो महानति — ( L 2162 ) $Dn_1$ $D_6$ आत्माशौ, $T_2$ आत्मेशौ ( for आत्मांशौ ) — ( L. 2163 ) $G_3$ $M_{1\ 3}$ गत्वा हिमवत- पार्श्वं ( for $^a$ ) $Dn_2$ चरतुर् ( for चक्र° ) — ( L 2165 ) $T_1$ दिव्यास्त्रे ( for वीर्यास्त्रे ). $G_3$ om lines $2166^b$–$2171^a$ —( L 2168 ) $D_6$ $G_2$ शिवेशान; $T_4$ शिवेशान, $M_{1-3}$ शिव शान्त ( for शिवानन्द ) —( L 2170 ) $Dn_2$ भक्तिप्रिय ( for भक्त° ) $D_6$ $T_2$ $G_2$ वासुदेव ( for वाम° ). — ( L 2171 ) $G_3$ गुहाच्युत ( for °शय ) — ( L 2172 ) Bom Poona eds G( ed ) देवेश ( for भूतेश ) — $G_3$ om lines 2173–74 —( L 2173 ) $M_{1\ 3}$ हरम् ( for भवम् ). —( L 2175 ) $M_{1\ 3}$ -समन्वितौ ; $M_{2\ 4}$ -परायणौ ( for -समास्थितौ ) — $G_2$ $M_{1-3}$ om line 2176 —( L 2176 ) $D_6$ महाराज ( for तदा राजन् ) $G_3$ ततश्च पञ्च वर्षाणि ( for $^a$ ) $D_6$ पञ्च जग्मतुरञ्जसा ( for $^b$ ) — $G_3$ om lines 2177–2181 — ( L. 2178 ) $G_2$ ताभ्यां ( for नैजं ) $D_2$ गज- ( for व्याघ्र- ).

ततः प्रीतोऽभवच्छर्वस्ताभ्यां संयमनेन च ।
स ददौ दर्शनं नैजं व्याघ्रचर्माम्बरो हरः ।
त्रियक्षः शंकरः शर्वः शूलपाणिरुमापतिः ॥
अग्रतः संस्थितं शर्वं चन्द्रार्धकृतशेखरम् । [ 2180 ]
तौ दृष्ट्वा प्रीतमनसौ नमश्चक्रतुरञ्जसा ॥
भगवानुवाच ।
वरं वरयतां भद्रौ यथेच्छा वां तथास्तु वै ॥
तावूचतुस्तदा राजन्प्रीतस्त्वं भगवन्यदि ।
देवासुरचमूमुख्यै रक्षोगन्धर्वदानवैः ।
आवामजेयौ सर्वास्मिन्नेष नौ प्रथमो वरः ॥ [ 2185 ]
द्वितीयो नौ विरूपाक्ष रौद्रास्त्राणां च संग्रहः ।
माहेश्वरं तथा रौद्रमस्त्रं ब्रह्मशिरो महत् ॥
अभेद्यं कवचं दिव्यमच्छेद्यं चापि कार्मुकम् ।
परशुं च तथा शर्व सदा रक्षार्थमेव च ॥
सहायौ द्वौ महादेव भूतौ युद्धे हि गच्छतोः । [ 2190 ]
एवमस्त्विति देवेश आह भृङ्गिरिटी हरः ॥
कुण्डोदरं विरूपाक्षं सर्वप्राणिहिते रतम् ।
युवामथ च भूतेशौ सहायौ सततं रणे ॥
संग्रामं गच्छतां घोरमेतयोर्बलशालिनोः ।
इत्युक्त्वा भगवाञ्शर्वस्तत्रैवान्तरधीयत ॥ [ 2195 ]

ततस्तौ वीर्यसंपन्नौ हंसो डिभक एव च ।
कृतास्त्रौ शस्त्रसंपन्नौ चापिनौ वीर्यवत्तरौ ॥
आमुक्तकवचौ वीरावजेयौ देवदानवैः ।
अत्यन्तभक्तौ देवेशे शंकरे नीललोहिते ॥
नित्योत्सवकरौ देवे भस्मोद्धूलनशोभिनौ । [ 2200 ]
कृतत्रिपुण्ड्रकौ नित्यं जटायुक्तशिरोधरौ ।
रुद्राक्षार्पितसर्वाङ्गौ व्याघ्रचर्माम्बरावृतौ ॥
नमः शिवाय शान्ताय महादेवाय धीमते ।
इत्यादिभिः सदा देवं स्तुवन्तौ नामभिः शिवम् ।
साक्षादिव महादेवौ रेजतुः शूलधारिणौ ॥ [ 2205 ]
ततः स्वभवनं गत्वा पितुः पादावगृह्णताम् ।
पितुश्च सख्युर्बलिनो मातुश्च चरणौ तदा ॥
जनार्दनोऽपि धर्मात्मा कालेन महता नृप ।
विद्यापारं महाबुद्धिर्यत्नेनासावुपेयिवान् ॥
स च विष्णुं हृषीकेशं पीनकौशेयवाससम् । [ 2210 ]
ब्रह्मतत्त्वपरो नित्यमुपास्ते विजितेन्द्रियः ॥
हंसश्च डिभकश्चैव कृतदारौ बभूवतुः ।
जनार्दनश्च धर्मात्मा कृतदारो बभूव ह ॥
सर्वे ते यज्ञपरमाः पञ्चयज्ञपरास्तथा ।
स्वदारनिरताः सर्वे गुरुशुश्रूषणे रताः । [ 2215 ]

—(L 2179) $D_6$ $T_2$ $G_2$ त्र्यक्ष' स, $T_4$ त्र्यक्षर (for त्रियक्ष) —(L 2181) $T_{1\,2}$ $G_{2\,4}$ $M_2$ प्रीति- (for प्रीत-) — $D_6$ ईश्वर (for भगवान्) —(L 2182) $T_{1\,2}$ $G_{1\,3\,4}$ वरयतं $D_6$ $T_{2\,4}$ $G_{1-4}$ भद्रं (for भद्रौ) Dn $Ds_2$ वरं वरय भद्रं वा (for $^a$) $T_4$ $G_2$ यथेच्छेना, $M_4$ °च्छेह (for °च्छा वां) $D_6$ $T_4$ $G_2$ $M_{1-3}$ वाम् (for वै) —(L 2184) $D_6$ -मुख्यौ (for -मुख्यैर्). $M_4$ यक्ष- (for रक्षो-) $M_{1\,3}$ -सत्तमै (for दानवै) —(L 2185) $D_6$ $M_{1-3}$ अजय्यौ, $D_6$ नौ समौ (for एष नौ) —(L 2188) $D_6$ $T_4$ $M_3$ देव (for दिव्यम्) —(L 2189) $G_{4\,5}$ शार्वं (for शर्व) — $T_2$ om (hapl) lines 2190–2123 —(L 2190) $M_{1\,3}$ युद्ध तु, $M_4$ युद्धस्य (for युद्धे हि) Dn $Ds_2$ $T_1$ $G_{1\,3-5}$ $M_{2\,4}$ गच्छताम् (for °तो) —(L 2191) $M_{1\,3}$ सर्वेश; $M_{2\,4}$ भूतेश (for देवेश) $D_6$ $G_{3-5}$ M भृङ्गिरिटिं; $T_4$ °रिटं, $G_1$ °रिटी (for °रिटी) —(L 2192) $D_6$ द्वितीयो नौ (for कुण्डोदरं). $D_6$ $T_4$ $G_2$ $M_{1\,3}$ त्रिरूपाक्ष. (for °पाक्ष) $D_6$ $T_{1\,4}$ $G_{2,4}$ $M_{1-3}$ रतः (for रतम्). —(L 2194) $D_6$ $T_4$ $G_2$ $M_1$ गच्छतोर्, $T_2$ $G_{1\,4\,5}$ °तं, $M_{2\,3}$ °तो (for °तां) —(L. 2194) $D_6$ कृतास्त्र- (for °स्त्रौ) $Dn_1$ $Ds_2$ शास्त्र-, M सत्त्व (for शस्त्र-) $G_3$ वीर्यवत्तमौ (for °त्तरौ) — $T_4$ om lines 2198–2201 —(L 2198) Dn $Ds_2$ $T_1$ $G_{1-4}$ $M_4$ अजय्यौ (for अजेयौ) —(L. 2199) $D_6$ $T_1$ $G_{2\,3}$ $M_4$ देवेश (for °शे). —(L 2200) $M_{1\,3}$ नित्योपासकरौ ($M_3$ °करे) देवे (for $^a$) $D_6$ भस्मोद्धूलितशोभितौ (for $^b$) —(L 2201) $T_2$ कृतत्रिपुण्ड्रौ नित्य च (for $^a$) $G_{4,5}$ -शिरोरुहौ (for °धरौ) —(L 2203) $G_2$ शंभवे (for धीमते) —(L 2204) Dn $Ds_2$ महादेवं (for सदा देवं) —(L 2205) Dn $Ds_2$ $T_1$ $G_5$ $M_3$ जल- (for शूल-) $T_2$ $G_{1\,3}$ -पाणिनौ (for -धारिणौ) —(L 2206) $T_1$ $G_{2\,3}$ अगृह्यताम्, $T_2$ $G_1$ अवन्द° (for अगृह्ण°). — $D_6$ om (hapl) lines $2208^b$–$2213^a$. —(L 2209) $G_3$ विद्याम्पारं (for °पारं) Dn $G_{2\,3\,5}$ $M_{1\,4}$ युक्तेन, Cal. ed योगेन (for यत्नेन) $T_1$ यत्नेन समुपेयिवान् (for $^b$). —(L 2210) $M_{1\,3}$ पीतवाससमच्युतम् (for $^b$). —(L

धर्म एव परं श्रेय इति ते मेनिरे नृप ॥

Colophon.

वैशंपायन उवाच ।

ततः कदाचित्तौ वीरौ मृगयां चक्रतुः किल ।
जनार्दनेन सहितौ रथैरश्वैर्गजैरपि ॥
वनं गत्वा तु तौ वीरौ सिंहव्याघ्रांश्च जघ्नतुः ।
शितैर्बाणैर्महाराज वराहानथ सर्वशः । [ 2220 ]
व्यालानन्यान्मृगान्हिंस्रान्श्वभिश्च सहितौ नृप ॥
एष आयाति विपुलो वराहो दीर्घलोचनः ।
एनं बाणेन संछिन्धि याति चायं मृगाधिपः ।
अयमन्योऽथ महिषः शृङ्गप्रोतसरीसृपः ॥
एते खलु मृगाः सार्धं शावैर्धावन्ति सर्वतः । [ 2225 ]
एतद्भ्रमति सर्वत्र भीतं शशकुलं महत् ॥
शावैस्तदन्वयैः सार्धं न हन्तव्यमिदं शुभम् ।
ग्रहीतव्यमिदं सर्वं निरुध्य श्वगणैरिह ॥
इत्यादिशब्दः सुमहान्मृगयां कुर्वतां नृप ।
क्षत्रियाणां नृपश्रेष्ठ व्याधानां चैव धावताम् ॥ [ 2230 ]
हत्वा मृगान्सुबहुशो व्याघ्रान्सिंहान्नृपोत्तमौ ।
श्रमं च जग्मतुर्वीरौ मध्यं गच्छति भास्करे ॥
अलं हि मृगयास्माकं श्रमः समुपजायते ।
इत्यूचतुर्महाराज पुष्करं जग्मतुः सरः ॥
सरःसमीपमागम्य मुनिसिद्धनिषेवितम् । [ 2235 ]
वीजन्मारुतसानूपं श्रमात्तत्र सुखं स्थितौ ॥
ततो जनाः सरः सर्वे विगाह्य श्रमकर्शिताः ।
बिसान्प्रवालान्पद्मानां भक्षयामासुरार्तवत् ॥
जनार्दनेन सहितौ हंसो डिभक एव च ।
सरः कंचित्समाश्रित्य श्रमं संत्यज्य तिष्ठतः ॥ [ 2240 ]
विश्रम्य सरसस्तीरे तदासाते सुखं नृपौ ।
अशृण्वतां परं ब्रह्म मुनिमुख्यैः समीरितम् ।
माध्यंदिनं तथा सर्वैः सवनं सस्वरं नृपौ ॥
ततः प्रीतौ नृपौ भूत्वा श्रुत्वा वेदध्वनिं तदा ।
ऐच्छेतां तौ तदा द्रष्टुं यज्ञं मुनिकृतं तदा ॥ [ 2245 ]
स्थापयित्वा ततः सेनां सर्वां मृगसमन्विताम् ।
आदाय च महाचापे शरान्कतिचिदेव च ॥
जनार्दनस्तदा वीरो हंसो डिभक एव च ।
पदातिनौ महाराज जग्मतुश्चाश्रमं किल ॥

---

2211 ) $G_2$ नियतेन्द्रिय· ; M सयते° ( for विजिते° ). — ( L 2213 ) Dn $Ds_2$ $T_1$ $G_{2,\,3\,5}$ ऽपि ( for च ). ( L 2214 ) Dn $Ds_2$ -निरता· ( for परमा ) $D_6$ $M_{1-3}$ पाक- ( for पञ्च- ) $G_2$ -परायणा· ; $M_4$ रतास्तथा ( for -परास्तथा ) — ( L 2216 ) $M_3$ ज्ञेय ( for श्रेय ) $G_4$ नृपा·

COLOPHON — *Mention of the Epic* $Ds_2$ — *Mention of Khila* Dn $Ds_2$ $D_6$ $T_{1\,2\,4}$ G M — *Adhy name* Dn $Ds_2$ $G_4$ हसडिभकोपाख्यानम् , $T_1$ $G_3$ हंसडिबकोपाख्याने वरप्राप्ति· , $T_2$ $G_1$ हंसडिबकवरप्राप्ति· , $M_4$ हंसडिभकस् — *Adhy no* Dn 288 , $Ds_2$ 289 , $T_1$ $G_3$ 216 , $T_2$ $G_1$ 218 , $T_4$ 185 ; $G_2$ 211 , $G_4$ 215 , $G_5$ 217 , $M_{1-3}$ 181 , $M_4$ 217

$T_2$ om the ref — ( L 2217 ) $Dn_2$ $Ds_2$ $T_{1\,2}$ $G_{1\,3\,4}$ अटतु· ; $Dn_1$ अटत· , $D_6$ $G_3$ जग्मतु· ( for चक्रतु ) $G_2$ तदा ( for किल ) — ( L 2218 ) Poona ed अश्व- ( for अश्वैर् ) — ( L 2219 ) $M_1$ सिंहान् ( for सिंह- ) — ( L 2220 ) $M_1$ शरैर् ( for शितैर् ) $D_6$ $T_4$ $G_2$ च सहस्रश ( for [अ]थ सर्वश ) — ( L 2221 ) $D_6$ सिंहान् ( for हिंस्रान् ) — ( L 2222 ) $T_{1\,2}$ $G_{1\,3\,4}$ M पृथुलो , $G_2$ वेगेन ( for विपुलो ) $G_2$ विपुलो ( for वराहो ). — ( L 2223 ) $D_6$ $G_2$ पार्श्वतो ; $T_4$ यात्यतो ; $M_{1\,3}$ चान्यतो , $M_4$ अन्यतो ( for याति च ) — ( L 2224 ) $D_6$ शृङ्गेतर- ( for °प्रोत- ) — ( L 2225 ) $Ds_2$ बाधन्ति ( for धावन्ति ) Dn $Ds_2$ $T_1$ $G_{3\,4}$ $M_{3\,4}$ सर्वश ( for °त ) — ( L 2227 ) $T_{1\,2}$ स्तनंधयै ( for तदन्वयै ) Bom Poona eds G( ed ) शावं स्तनं पिबत्साधु ( for $^a$ ) — ( L 2229 ) $T_{1\,2}$ $G_{2\,3}$ कुर्वतो , $T_4$ °ते ( for °तां ) $G_{4\,5}$ सदा ( for नृप ) — ( L 2231 ) $G_2$ $G_2$ सर्वान् ( for सिंहान् ) — ( L 2232 ) $M_1$ गच्छतुर् ( for जग्मतुर् ) Dn $Ds_2$ $G_5$ मध्यं याते दिवाकरे ( for $^b$ ) — ( L 2236 ) $T_1$ व्रजन् ; $G_2$ कूजन् ( for वीजन् ) $M_{1\,3}$ -सवीतं ( for -सानूपं ) — ( L 2238 ) $D_6$ सर्वान् ( for बिसान् ) $D_6$ M पद्मांश्च ( for पद्मानां ). $Dn_2$ विश्रम्य सरसस्तीरे ( for $^a$ ). — ( L 2239 ) — For line 2240, $D_6$ $T_4$ $G_2$ subst ·

19** विगाह्य· तत्सर स्वादु शीतं पीत्वा जलं च तौ ।

— ( L 2241 ) $D_6$ $T_4$ $G_2$ समाश्रित्य सरस्तीरे ( for $^a$ ). $D_6$ $T_4$ $G_2$ नृपोत्तमौ ( for सुखं नृपौ ) — ( L 2243 ) $D_6$ मध्यदिने ( for माध्यंदिनं ) — ( L 2244 ) $D_6$ तत प्रीतो महाबाहु· ( for $^a$ ) — ( L 2246 ) $D_6$ $T_{1\,4}$ $G_{2\,3}$ $M_2$ सर्वां सेनां ( by transp ) $Dn_1$ -समन्वितौ ( for °ताम् ) — ( L·

नित्ययुक्तं विरूपाक्षं भूताधारमनामयम् । [ 2280 ]
ध्यायन्तं सर्वदा देवं मनसा सर्वतोमुखम् ॥
दुर्वाससं सदोपास्यं वेदान्तैकरसं गुरुम् ।
तर्कनिश्चिततत्त्वार्थज्ञाननिर्मलचेतसः ॥
हंसाः परमहंसाश्च शिष्या दुर्वाससः प्रभो ।
गत्वा तत्र महात्मानौ दृष्ट्वा तानूर्ध्वरेतसः ॥ [ 2285 ]
दुर्वाससं महाबुद्धिं विचिन्वानं परं पदम् ।
क्रुद्धो यदि स दुर्वासा दग्धुं लोकानिमान्क्षमः ॥
देवा अपि च यं द्रष्टुं क्रुद्धं चेन्न क्षमाः सदा ।
रोषमूर्तिः सदा यस्तु विश्वात्मा विश्वरूपधृक् ॥
रक्तकौपीनवसनो हंसः परम एव च । [ 2290 ]
दृष्ट्वैनं च तयोरेवं बुद्धिरासीन्महामते ॥
को नामासौ महाभूतः काषायी वर्णवित्तमः ।
कश्चायमाश्रमो नाम विहाय च गृहाश्रमम् ॥
गृहस्थ एव धर्मात्मा गृहस्थो धर्मवित्तमः ।
गृहस्थो धर्मरूपस्तु गृहस्थः स्वर्ग एव च ॥ [ 2295 ]
गृहस्थश्च सदा माता प्राणिनां जीवनं सदा ।
तं विनान्येन रूपेण वर्तते यो हि मूर्खवत् ॥
उन्मत्तोऽयं विरूपोऽयमथ वा मूर्ख एव च ।
ध्यायन्निव सदा चायमास्ते वञ्चयितापि वा ॥
किमेते प्राकृतज्ञाना ध्यायन्त इव किंचन । [ 2300 ]
वयमेतान्दुरारोहानाश्रमान्तरकल्पितान् ॥
स्थापयिष्यामहे सर्वान्मन्दबुद्धीनिमान्गृहे ।
बलादेव द्विजानेतान्मूढविज्ञानतत्परान् ।
असद्ग्राहगृहीतांश्च बालिशान्दुर्मतीनिमान् ॥
एषां शास्ता च को मूढो न विद्मो वयमत्र ह । [ 2305 ]
धर्म्ये वर्त्मनि संस्थाप्य पुनर्यास्याव निर्वृतौ ॥
इति संचिन्त्य तौ वीरौ विप्रेण सहितौ नृप ।
जनार्दनेन राजानौ मोहाद्भाग्यक्षयान्नृप ॥
समीपं तस्य राजेन्द्र यतेः संशितचेतसः ।
गत्वा च प्रोचतुरुभौ दुर्वाससमतीन्द्रियम् । [ 2310 ]
यतींश्च नियतान्क्रुद्धौ राजानौ राजसत्तम ॥

Colophon.

शिवम् ) — ( L. 2278 ) Dn $Ds_2$ $D_6$ $T_4$ शुभं, $T_{1\ 2}$ G विभुं ( for शिवं ) — $T_{1.2}$ $G_{1\ 3-5}$ om. ( hapl ) lines 2279-2281. — ( L 2279 ) $D_6$ विभुम् ( for शिवम् ) — ( L. 2280 ) $D_6$ $T_4$ $M_{1-3}$ विभुं बभ्रुं ( for विरूपाक्षं ) — ( L 2281 ) $Dn_2$ $D_6$ $M_{1-3}$ ध्यायन्तः ( for °न्तं ) $M_{1\ 3}$ अनन्तं ( for मनसा ) — ( L 2282 ) Dn $Ds_2$ $T_{1\ 2}$ G $M_4$ दुर्वाससा ( for °ससं ) $Dn_2$ -परं ( for -रसं ) — ( L 2283 ) Cal.- सुवि- ( for -ज्ञान- ). — $G_4$ om lines 2284-2285 $G_5$ om line 2284 — ( L 2285 ) $T_1$ $G_3$ $M_4$ रेतसम् ( for °सः ). Dn $Ds_2$ $G_{1\ 5}$ तौ दृष्ट्वा तूर्ध्वरेतसम् ( for $^b$ ) — ( L. 2288 ) Dn $Ds_2$ $T_1$ $G_{1-3}$ वै ( for चेन् ) — ( L 2289 ) $D_6$ $T_4$ $G_2$ लोक- ( for रोष- ) Dn $Ds_2$ $T_1$ रुद्रात्मा ( for विश्वात्मा ) — ( L 2291 ) $D_6$ एकं, $T_4$ देवं ( for एवं ) — ( L 2292 ) $G_2$ स, $M_{1\ 2\ 4}$ [अ]य (for [अ]सौ) — ( L 2295 ) Dn $Ds_2$ $T_{1\ 2\ 4}$ $G_{1\ 3\ 5}$ वर्णं, $G_4$ धर्मं ( for स्वर्गं ). $Ds_2$ सः, $M_{2\ 4}$ हि ( for च ). — ( L 2296 ) $M_{1\ 3}$ जीवदः ( for °नं ) $G_4$ धनम् ( for सदा ) — ( L 2297 ) $G_5$ तेन ( for [अ]न्येन ). — ( L 2299 ) $T_4$ यदा, $G_5$ सदा ( for [अ]पि वा ) — ( L 2301 ) Dn $Ds_2$ $T_4$ $G_2$ M -कल्पकान्; $G_3$ -कर्शितान् ( for -कल्पितान् ) — ( L 2303 ) $G_3$ विद्वानेतद् ( for बलादेव ). — ( L 2304 ) $D_6$ $T_4$ $G_2$ असद्गृहीतास्तु सदा ( for $^a$ ) $D_6$ बालस्कन्दमतीनिमान्, $T_4$ $G_2$ $M_{1-3}$ बालान्मन्दमतीनिमान् ( for $^b$ ) — ( L 2305 ) $G_2$ मूर्खौ ( for मूढो ) $Dn_1$ विप्रो ( for विद्मो ) — ( L. 2306 ) Dn धर्म-; $Ds_2$ $T_1$ $G_{4\ 5}$ $M_{1\ 4}$ धर्मे ( for धर्म्ये ) $D_6$ $G_2$ धर्मे ह्येतान्समास्थाप्य ( for $^a$ ) $D_3$ $T_{2\ 4}$ $M_{1\ 2\ 4}$ यास्याम ( for °व ) $D_6$ $T_{2\ 4}$ $G_2$ $M_{1\ 3\ 4}$ निर्वृता ( for °तौ ) — ( L 2309 ) Dn $Ds_2$ $T_1$ $G_{1.4\ 5}$ संयत- ( for संशित- ) — ( L 2310 ) $D_6$ गत्वा विप्रैश्चतुर्भद्रौ, $T_4$ गत्वा च भ्रूचतुर्भद्रौ ( sic ); $G_2$ गत्वा प्रोचुतुरेवाग्रे ( for $^a$ ) — ( L 2311 ) $D_6$ $G_4$ -सत्तमा., $T_2$ °मौ ( for °म ).

Colophon — *Mention of the Epic* $Ds_2$ — *Mention of Khila* Dn $Ds_2$ $D_6$ $T_{1\ 2\ 4}$ G M — *Sub-parvan* $T_2$ भाविष्यपर्व — *Adhy name* Dn $Ds_2$ $T_2$ हंसडिभकोपाख्यानम्; $T_1$ $G_2$ मुनिसंदर्शनम्; $T_4$ $M_{2\ 4}$ हंसडिभकम्; $G_1$ हंसडिभकोपाख्याने मुनिसंदर्शनम् — *Adhy. no* Dn $Ds_2$ 291; $T_1$ $G_3$ 218, $T_2$ 107; $T_4$ 170, $G_1$ 220, $G_2$ 213, $G_4$ 217, $G_5$ $M_4$ 219, $M_{1-3}$ 103.

Before the ref, $T_{1.4}$ $G_{2-4}$ ins also वैशंपायनः $G_1$ om. lines 2312-2351 $G_2$ reads line 2312 twice — ( L 2312 ) $T_1$ ज्ञानलेश-. $D_6$ $M_{1.2}$ विनीतात्मन् ( for विहीना° ).

हंसडिभकावूचतुः ।
ज्ञानलेशाद्विहीनात्मन्कि ते व्यवसितं द्विज ।
कश्चायमाश्रमो विप्र भवता यः समाश्रितः ॥
गृहमेधं परित्यज्य किं त्वया साधितं पदम् ।
दम्भ एव भवान्व्यक्त शङ्के नान्यत्र कारणम् ॥ [ 2315 ]
लोकांश्चेमान्सदा मूढ नाशयिष्यसि निर्वृतः ।
एतान्सर्वान्विनेतासि नरके पातयिष्यसि ॥
स्वयं नष्टः परान्मूर्ख नाशयिष्यसि यत्नतः ।
अहो शास्ता कथं नास्ति तव मन्दमते द्विज ॥
सर्वथा त्वद्विनेता च पापं नास्त्यत्र संशयः । [ 2320 ]
त्यक्त्वेममाश्रमं विप्र गृही भव यतात्मवान् ॥
पञ्च यज्ञान्सदा विप्र कुरु यत्नपरो भव ।
ततः स्वर्गं परं गन्ता स्वर्गे हि सुमहत्सुखम् ।
एष श्रेयःपथो विप्र जीविते चेत्स्पृहा तव ॥
इत्युक्तवन्तौ धर्मात्मा श्रुत्वा विप्रो जनार्दनः । [ 2325 ]
उवाच च यतिं दृष्ट्वा प्रणम्यासौ सुभीतवत् ॥
मा ब्रूतामीदृशं वाक्यं राजानौ मन्दचेतसौ ।
अश्राव्यमीदृशं घोरं लोकयोरुभयोरपि ॥
को वक्तुमीशो मन्दात्मा यदि जीवेत्सबान्धवः ।
सर्वथा काल एवायं युवयोर्मन्दचेतसोः । [ 2330 ]
समाप्त आयुषः शेषो ब्रह्मदण्डहतौ युवाम् ॥
एते हि यतयः शुद्धा ज्ञानदीपितचेतसः ।
ज्ञानाग्निदग्धकर्माणः प्राणान्प्राणेषु जुह्वति ॥
ऋते वामीदृशं वाक्यं कः समर्थो ह्यनुब्रुवन् ।
सर्वथा ज्ञातमस्माभिः समाप्तमिह जीवितम् ॥ [ 2335 ]
चत्वार आश्रमाः पूर्वमृषिभिर्विहिता नृपौ ।
ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ॥
तेषामग्र्यश्चतुर्थोऽयमाश्रमो भिक्षुकः स्मृतः ।
आस्ते तस्मिन्महाबुद्धिः स हि पुण्यतमः स्मृतः ॥
नोपासिता भवद्भ्यां च वृद्धाः सम्यग्विनीतवत् । [ 2340 ]
ज्ञानं नाप्तं ततस्तेभ्यस्तथा चैवं वदेत कः ॥
अश्राव्यमीदृशं घोरं मया प्राणभृता नृप ।
किं करिष्यामि मन्दात्मन्मित्रत्वाद्भवतोर्नृपौ ॥
ज्ञानं यदाप्तं भवता गुरुभ्य-
स्तदत्र दुःखाय हि केवलं नः । [ 2345 ]
ज्ञानं हि धर्मप्रभवं यथेष्टं
बलाद्धि पापस्य विधातृरूपम् ॥
युवां विहाय यास्ये वा पतेयं वा शिलातले ।

---

$G_2$ ( first time ) किमर्थं च विजानीत ( for $^a$ ) $D_6$ नृप ( for द्विज ) — ( L 2314 ) M गृहाश्रमं ( for गृहमेधं ) $M_{1-3}$ वद , $M_4$ धनम् ( for पदम् ) — ( L. 2315 ) $G_5$ हंस ( for दम्भ ) $D_6$ तवात्युक्तं ( for भवान्व्यक्तं ) — ( L 2316 ) $G_2$ मूर्ख ( for मूढ ) $D_6$ $T_4$ $G_2$ सुव्रत ( for निर्वृत. ) — ( L 2319 ) $T_4$ $M_{1\ 3}$ मन्दमतेर् ( for °मते ) — ( L 2320 ) $D_6$ $G_2$ $M_{1-3}$ विनेतारौ ; $T_4$ °तारो ( for °ता च ) $D_6$ $G_2$ $M_{1-3}$ भावां , Bom Poona eds पापो ( for पापं ) — ( L 2323 ) $D_6$ कथं , M भवान् ( for परं ) Dn $Ds_2$ $G_{2\ 3}$ गत्वा ( for गन्ता ) — ( L 2324 ) $T_1$ एवं ( for एष ) $D_6$ तथा , $T_2$ पथं ; Cal ed परो ( for पथो ) — $G_2$ om line 2326. — ( L 2326 ) $M_{2-4}$ स भीतवत् , Bom Poona eds. G( ed. ) सुनी° ( for सुभी° ) — ( L 2327 ) $T_4$ $M_4$ ब्रूत ( for ब्रूताम् ). $M_{1.3}$ वाचं ( for वाक्यं ) $T_2$ -चेतनौ ; Bom Poona eds. G(ed.) -तेजसौ ( for -चेतसौ ). — ( L 2329 ) $T_2$ वस्तुम् ( for वक्तुम् ) $D_6$ $M_{1.2.4}$ को वक्तुमीदृशो मन्दो ( for $^a$ ). $D_6$ $T_4$ $M_3$ जीवन् ( for जीवेत् ) — ( L 2331 ) $D_6$ ब्रह्मदण्डहतो भवान् ; $G_2$ °ण्डहतात्मवान् , $G_3$ °ण्डायुधो हतम् ; $M_{1-3}$ °ण्डहतस्य वाम् ; $M_4$ °ण्डहतस्य व ( for $^b$ ) — $G_3$ om line 2332. — ( L. 2332 ) $M_{1\ 3}$ ज्ञाननिर्धूतकल्मषा, ( for $^b$ ) — ( L. 2334 ) $D_6$ $T_4$ $G_2$ नरेश्वर , $T_2$ $G_{3-5}$ मम ब्रुवन् ; M मनुब्रुवः ( for ह्यनुब्रुवन् ) — ( L 2336 ) $G_5$ प्रोक्ता ( for पूर्वम् ). $T_{1\ 2}$ $G_{2\ 3}$ नृप ( for नृपौ ) $D_6$ ऋषिभिर्विजिता नृप , $T_4$ °भिर्विह्वला नृप , G१ °भिर्वेदपारगै , $M_{1-3}$ °भि॰ कल्पिता नृप ( for $^b$ ) — ( L 2339 ) $G_{2.5}$ पुण्यतरः ( for °तम ). $G_4$ स हि पुण्यसमावृत ( for $^b$ ) — ( L 2340 ) $D_6$ $T_{1.2.4}$ $G_{2\ 5}$ $M_{1\ 3}$ उपासिता , $M_{2\ 4}$ उपास्याश्च ( for नोपासिता ). — ( L 2341 ) $D_6$ $T_{1\ 2}$ $G_2$ $M_{1-3}$ चाप्तं ( for नाप्तं ) — $Dn_1$ om ( hapl ) lines 2341–2343 — ( L. 2341 ) $Dn_2$ $T_{2\ 4}$ $G_{2.5}$ $M_4$ तपस्विभ्यस् ( for ततस्तेभ्यस् ) — ( L. 2342 ) $D_6$ $T_1$ प्राणभृतां ( for °भृता ) — ( L 2343 ) $D_6$ $T_{2.4}$ $M_{1-3}$ मन्दात्मा ( for मन्दात्मन् ) $M_4$ मित्रार्थी ( for मित्रत्वाद् ) $Dn_2$ $Ds_2$ $T_1$ $M_{1\ 3\ 4}$ भवतो नृप ( for °तोर्नृपौ ) — ( L. 2344 ) $T_{2\ 4}$ $G_{4.5}$ $M_{1\ 3}$ भवतो ( for °ता ). — ( L. 2345 ) Dn $Ds_2$ $M_4$ केवलं नृप , $T_1$ °लं वहेः ; $T_2$ °लान्नः , $G_2$ °लाय ( for °लं नः ) — ( L 2346 ) $T_1$ -प्रवरं ( for -प्रभव ) ;

पिबेयं वा विषं घोरं पतेयं वा महोर्मिषु ॥
आत्मानं वात्र संत्यक्ष्ये शृण्वतां पश्यतां नृपौ । [ 2350 ]
इत्युक्त्वा विललापैवं मा ब्रूतेति सदा वदन् ॥

Colophon

वैशंपायन उवाच ।

ततः क्रुद्धोऽथ दुर्वासा धक्ष्यन्निव तयोरसून् ।
एकेनाक्ष्णाथ दुर्वासा रौद्रेणाग्नियुजा सदा ॥
पश्यंस्तौ च दुरात्मानौ रोषव्याकुलितेन्द्रियः ।
कुर्वन्निव तदा लोकान्भस्मभूतानिमान्नृप ॥ [ 2355 ]
ब्राह्मणं चक्षुषा पश्यन्सौम्येनान्येन केवलम् ।
उवाच वचनं राजन्ध्वंसत ध्वंसतेति ह ॥
इतो गच्छत राजानौ किं विलम्बथ माचिरम् ।
न वां वचनसंभूतं रोषं धारयितुं क्षमः ॥
अन्यथा वो महीपालान्सर्वान्दग्धुमहं क्षमः । [ 2360 ]
किमतः साहसं वक्तुं कश्च शक्नोति मत्पुरः ॥
दर्पं वां लोकविख्यातः शङ्खचक्रगदाधरः ।
व्यपनेष्यति मन्दज्ञौ किं वा वक्ष्यामि सांप्रतम् ॥
तत उत्थाय धर्मात्मा गन्तुमैच्छद्यतीश्वरः ।
ततो निषेद्धुं हंसस्तं यतते स यतीश्वरम् ॥ [ 2365 ]
तस्य बाहुं समादाय हंसो नृपवरोत्तमः ।
कौपीनं चिच्छिदे क्रूरः कृतान्त इव सत्तम ॥
यतयोऽन्ये पलायन्ति दिशो दश विचेतसः ॥
कष्टं हेति वदन्विप्रो मित्रभावाज्जनार्दनः ।
न्यवारयद्यथाशक्ति किमिदं साहसं त्विति ॥ [ 2370 ]
दुर्वासाः सत्यधर्मस्तु हन्तुमीशोऽपि तं ततः ।
मन्दं मन्दमुवाचेदं हंसं डिभकमेव च ॥
शापेनाहं समर्थोऽपि हन्तुं राजकुलाधमौ ।
तथापि न करोम्येवं यतयो ह्यत्र ते वयम् ॥
यो हि देवो जगन्नाथः केशवो यादवेश्वरः । [ 2375 ]
शङ्खचक्रगदापाणिर्गर्वं वां व्यपनेष्यति ॥
लोके तस्मिन्यदुश्रेष्ठे रक्षत्येव जगत्पतौ ।
युवयोः सर्वथा जीवः सुजीव इति मे मतिः ॥
जरासंधोऽपि वां बन्धुः स च वक्तुं न चेच्छति ।
ईदृशं लोकविद्विष्टं स हि धर्मपथे सदा ॥ [ 2380 ]

---

$M_3$ यदिष्टं ( for यथेष्टं ) — ( L 2347 ) $D_6$ $T_4$ $G_{2-4}$ $M_{1-3}$ कालस्य ( for पापस्य ) $T_{1\ 2}$ $G_{3\ 5}$ $M_{1\ 4}$ -पापम् ( for -रूपम् ) — ( L 2348 ) $D_6$ यास्यावो, $T_3$ यास्येऽहं ( for यास्ये वा ) $D_{s2}$ शिलातलम् ( for °तले ) — ( L. 2350 ) Dn $D_{s2}$ $G_2$ पुन., $T_{1\ 4}$ $G_4$ पुर , $G_3$ पुरा, $G_5$ तदा ( for नृपौ ) — ( L 2351 ) $D_6$ ब्रुवन् ( for वदन् ) Dn $D_{s2}$ $T_2$ $G_{3-5}$ मा ब्रूतमिति तौ ( $G_4$ तं ) वदन्; $T_1$ तूष्णीमास जनार्दन ( for [b] )

COLOPHON — *Mention of the Epic* : $D_{s2}$ — *Mention of Khila* Dn $D_{s2}$ $D_6$ $T_{1\ 2\ 4}$ $G_{2-5}$ M — *Adhy. name* : Dn $D_{s2}$ $T_{1,\ 2}$ $G_4$ हंसडिभकोपाख्यनम्, $D_6$ M हंसडिभकम् — *Adhy. no* $Dn_2$ 291; $D_{s2}$ 292, $T_1$ 219; $T_2$ 221, $T_4$ 181, $G_2$ 214; $G_3$ 219; $G_4$ 218, $G_5$ 220, $M_{1-3}$ 184, $M_4$ 204

( L 2353 ) $D_6$ $M_{1-2}$ स ( for [अ]थ ) M रौद्रेणारुणवर्चसा ( for [b] ). — ( L 2355 ) $D_6$ $M_{1\ 2}$ भस्मीभूतान् ( for भस्म° ) — ( L 2356 ) $D_6$ $T_4$ $G_2$ सदा सौम्येन केवलम् ( for ( for [b] ) — ( L 2358 ) $D_{s2}$ ततो ( for इतो ) $Dn_1$ $D_{s2}$ $M_{2,\ 3}$ विलम्बत ( for °थ ) — ( L 2359 ) M भवद्वचनसंभूतं ( for [a] ). Dn $D_{s2}$ $G_3$ क्षमे, $T_2$ $G_{4\ 5}$ $M_4$ क्षमम् ( for क्षम ) — ( L 2361 ) $G_2$ शक्तो हि ( for शक्नोति ) — ( L 2363 ) $D_6$ $T_4$ M मन्दात्मन् ( for मन्दज्ञौ ) $D_6$ वां, $T_{1\ 4}$ M वो ( for वा ) — $D_6$ om lines 2364–2366 — ( L 2364 ) $G_2$ मन्दात्मा ( for धर्मात्मा ) $G_2$ यतीश्वरम् ( for °श्वर ) — ( L 2366 ) $M_1$ बाह्वो , $M_3$ बाहो ( for बाहुं ) $M_{1\ 2}$ -वरोत्तम ( for °म ) $T_2$ हसो वरनृपोत्तम ( for [b] ) — ( L 2367 ) $T_4$ $G_{2\ 4}$ सत्तम — ( L 2371 ) $D_6$ $M_{3\ 4}$ सत्यसंधस् ( for °धर्मस् ) $G_2$ न तं जनम्, $G_3$ ऽपि सत्तम ; $M_{1-3}$ न तत्कृतम् ( for ऽपि तं तत ) — ( L 2372 ) $D_6$ हंसो ( for हंसं ). — ( L 2373 ) $D_6$ $M_1$ ऽस्मि ( for ऽपि ). — ( L 2374 ) Dn $D_{s2}$ $T_1$ $G_{2\ 3\ 5}$ [अ]न्त, $T_4$ $M_{1,\ 2\ 4}$ [ए]तद् ( for [ए]वं ). $M_3$ तथापि तत्क्षमे राजन् ( for [a] ). — ( L. 2376 ) $D_6$ $T_4$ M दर्पं ( for गर्वं ). $D_6$ $M_{1-3}$ वो ; Cal. ed ते ( for वां ) — ( L 2377 ) $T_{2\ 4}$ $G_{1\ 2\ 4\ 5}$ $M_{1-3}$ लोकं ( for लोके ) $D_6$ यदुश्रेष्ठो ; $T_2$ $G_1$ नृपश्रेष्ठ, $G_{4\ 5}$ नृपश्रेष्ठे ; $M_4$ यदुश्रेष्ठं ( for °श्रेष्ठे ) $D_6$ जगत्यसौ ( for °त्पतौ ). — ( L 2378 ) $G_1$ सज्जीव ( for सुजीव ) $M_3$ इति मे निश्चिता मति. ( for [b] ) — ( L 2379 ) $T_1$ om ( hapl ) 2379[b]–2381[a] $D_6$ $T_4$ $G_2$ $M_{1-3}$ स च नेच्छ( $D_6$ °ष्य )ति केवलम् ( for [b] ) — $G_2$ om lines 2380–2384 $T_2$ $G_{1\ 3}$ om. line 2380 — ( L 2380 ) $D_6$ $G_{4\ 5}$ धर्म- ( for लोक- ). $D_6$ $T_4$ धर्मरत , $G_{4\ 5}$ M धर्मपथः ( for °पथे ). — ( L. 2381 ) Dn $D_{s2}$ $T_{1,\ 2,\ 4}$ $G_{1,\ 3}$ न हि, $G_{4,\ 5}$ स हि ( for न स ),

एतावता स वां बन्धुर्न स भूयो भविष्यति ।
विद्वेषो ह्यस्तु वां तस्य मागधस्य महीपतेः ॥
श्रुत्वेदं घोररूपं तु स हि बन्धुः सहेत चेत् ।
धर्मनाशो भवेत्तस्य नात्र कार्या विचारणा ॥
इत्युक्त्वा गच्छ गच्छेति हंसं प्राह पुनः पुनः । [ 2385 ]
जनार्दनमुवाचेदं दुर्वासा यतिसत्तमः ॥
स्वस्त्यस्तु तव विप्रेन्द्र भक्तिरस्तु जनार्दने ।
संगतिस्तव तस्यास्तु शङ्खचक्रगदाभृतः ।
अद्य श्वो वा परश्वो वा साधुरेव सदा भवान् ॥
न हि साधोर्विनाशोऽस्ति लोकयोरुभयोरपि । [ 2390 ]
गच्छ सर्वं पितुर्ब्रूहि ज्ञात्वा वृत्तं यथाखिलम् ॥

Colophon.

वैशंपायन उवाच ।

ततस्तौ हंसडिभकौ क्रुद्धौ कालेन चोदितौ ।
शिक्यं कमण्डलुं चैव विदलं दारुमेव च ॥
दण्डान्पात्रविशेषांश्च छित्त्वा भित्त्वा च सर्वशः ।
तस्मिन्देशे महाराज व्याधैर्मांसान्यदीदहन् । [ 2395 ]
भक्षयित्वा ततो देशात्स्वपुरं तौ प्रजग्मतुः ॥
जनार्दनश्च धर्मात्मा स्नेहादनुययौ तयोः ।
नष्टाविमाविति तदा स मेने दुःखितः परम् ॥
गतेषु तेषु सर्वेषु दुर्वासा यतिसत्तमः ।
पलायनपरान्सर्वानिदमाह यतीश्वरान् ॥ [ 2400 ]
इतो देशाद्विनिर्गत्य पुष्करात्पुण्यसंयुतात् ।
मन्दं मन्दं समाश्वस्य विश्रम्य च ततस्ततः ।
प्रविश्य द्वारकां देवं शङ्खचक्रगदाधरम् ।
दृष्ट्वा च तस्मै प्रभवे वक्ष्यामो यतिसत्तमाः ॥
स हि रक्षञ्जगदिदं धर्मवर्त्मनि संस्थितः । [ 2405 ]
आद्यो लोकगुरुर्विष्णुर्यतात्मा तत्त्वविद्प्रियः ।
उद्धृत्य कण्टकान्सर्वाञ्शशास पृथिवीमिमाम् ॥
स च पापान्महाघोरान्सर्वान्पापकृतान्प्रभुः ।
रक्षेन्नः सकलान्सर्वाञ्ज्ञानेषु नियतात्मनः ।
इदमद्य क्षमं विप्रा यानमद्य विधीयताम् ॥ [ 2410 ]
साहसं यत्कृतं ताभ्यां पात्रभेदादि सत्तमाः ।
एतत्सर्वमशेषेण दर्शयाम जनार्दनम् ॥
तथेति ते प्रतिज्ञाय यतयो ज्ञानचक्षुषः ।
छिन्नांस्ताभ्यां समादाय शिक्यं दारुमयं तथा ॥
द्विदलं कर्पटं चैव कौपीनमथ वल्कलम् । [ 2415 ]
कमण्डलुं तथा राजन्नर्धप्रोतकपालकम् ।

— (L 2383) D6 T4 M1 3 सहेद्यदि, M2.4 भवेद्यदि (for सहेत चेत्). — (L 2385) D6 हंसं प्राहुर्मुनीश्वरा (for [b]) — (2391) Dn1 Ds2 सर्वं (for सर्वं) D6 T2 G1 ब्रूया (for ब्रूहि) D6 T4 M ज्ञानमस्तु तवाखिलम् (for [b])

Colophon. — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 T1 2 4 G M — *Adhy. name* Dn Ds2 हंसडिभकोपाख्यानम्, T1.2 G1 3 हंसडिभकदुर्वासदर्शनम्, M हंसडिभकम्. — *Adhy no* Dn 292; Ds2 293, T1 G3 220, T2 G1 222; T4 189, G2 215; G4 219; G5 M4 221; M1–3 185

(L 2393) Dn Ds2 T1 2 G1 3–5 द्विदलं, G2 वल्कलं (for विदलं) T1 2 G1 3–5 तरुम्, T4 धाम (for दारुम्) — (L 2395) D6 T4 G2 M1–3 मांसम् (for मांसानि). — (L 2396) Dn Ds2 G4 स्वपुरीं (for °रं) — (L 2397) G2 ताभ्याम् (for स्नेहाद्) — (L. 2398) D6 दुःखितं — (L 2399) G1 3 दुःखितो (for दुर्वासा) M2 4 मुनि- (for यति-) — (L 2400) T1 G1.1 प्राह (for आह). — (L. 2401) G2 इदमाह (for इतो देशाद्). T2 G1 -संचयात् (for -संयुतात्) T1 G3 M1 पुष्करान्पुण्यसंयुतान् (for [b]). — (L 2402) D6 T2 समाश्वास्य (for °श्वस्य) G4 5 विश्वस्य (for विश्रम्य) G5 स्थित (for ततः) — (L 2405) Ds2 T2–4 M2 धर्मे, M3 धर्म्ये (for धर्म-) — (L. 2406) G2 आर्यो (for आद्यो) D6 G2 साक्षात् (for विष्णुर्) D6 T2.4 G1–3 M स्वस्थात्मा (for यतात्मा) D6 M स्वस्थवित्; T4 सर्व° (for तत्त्व°) — (L 2407) T1 दुष्टकान् (for कण्टकान्). — (L. 2408) D6 M1–3 महाघोराद् (for °रान्). D6 अस्माद्द्य; M1–3 अस्मात्क्षत्र-, Cal ed पापकर्म- (for सर्वान्पाप-) D6 T4 G2 बहु (for प्रभु) — (L 2409) T2 G1 3 सत्यवान् (for सकलान्) G2 लोकान् (for सर्वान्) G2 एष निश्चितमात्मनः, G3 ज्ञानेषु नियतात्मवान् (for [b]) — (L. 2410) G1 क्षणं (for क्षमं) D6 T4 G2 यन्मयात्र, T1 M यानमत्र; T2 G1 3 यात्रामत्र (for यानमद्य) — (L 2411) M1–3 वस्त्र-, M4 वस्तु- (for पात्र-). — (L. 2412) D6 G2 जनार्दने. — (L 2414) T2 G2 4 5 छिन्नं, G1 भिन्नं, M4 भिन्नांस् (for छिन्नांस्) M1–3 महाराज (for समादाय) — (L. 2415) Ds M1 3 विदलं (for द्विदलं). — (L. 2417) D6

एतानन्यान्समादाय द्रष्टुं केशवमाययुः ॥
पञ्च चैव सहस्राणि पुरस्कृत्य महामुनिम् ।
दुर्वाससं तपोयोनिमीश्वरस्यात्मसंभवम् ॥
अहोरात्रेण ते सर्वे द्वारकां कृष्णपालिताम् । [ 2420 ]
ययुर्दान्ता महात्मानो लोमशाः केशवर्जिताः ॥
प्रातः प्रविश्य राजेन्द्र वापिकायां यतीश्वराः ।
स्नात्वोपस्पृश्य शुचयो यत्नेन महता तदा ॥
द्रष्टुमभ्युद्यता विष्णुं कण्टकोद्धृतितत्परम् ।
एकरूपं समास्थाय सुधर्माद्वारमाययुः ॥ [ 2425 ]

Colophon

वैशंपायन उवाच ।

अथ सर्वेश्वरो विष्णुः पद्मकिञ्जल्कलोचनः ।
श्यामः पीताम्बरः श्रीमान्प्रलम्बाम्बरभूषणः ॥
किरीटी श्रीपतिः कृष्णो नीलकुञ्चितमूर्धजः ।
अव्यक्तः शाश्वतो देवः सकलो निष्कलः शिवः ॥
क्रीडाविहारोपगतः कदाचिद्भवद्धरिः । [ 2430 ]
कुमारैरपरैः सार्धं सात्यकिप्रमुखैर्नृप ॥
गोलक्रीडां सुधर्मायां मध्ये यादवसत्तमः ।
चकार प्रियकृत्कृष्णो युयुधानेन केशवः ॥
ममायं प्रथमो गोलस्तव पश्चाद्भविष्यति ।
इति ब्रुवंस्तदा विष्णुः सात्यकिं कमलेक्षणः ॥ [ 2435 ]
पार्श्वस्था यादवास्तस्य वसुदेवपुरोगमाः ।
उद्धवप्रमुखा राजन्नासेदुः कचिदत्र वै ॥
अन्यव्यापाररहितो भूतात्मा भूतभावनः ।
विजहार यथा रामः सुग्रीवेण पुरा नृप ॥
मध्यंदिने महाविष्णुः शैनेयेन सहाच्युतः । [ 2440 ]
विक्रीड्य सुचिरं कृष्ण उपारंसीत्सयादवः ॥
द्वाःस्थेन वारिताः पूर्वं द्वार्येव च समास्थिताः ।
इदमन्तरमित्येव विविशुस्तां सभां नृप ॥
यतयो दीर्घतपसः पुरस्कृत्य तपोधनम् ।
दुर्वाससं सुमनसो ददृशुर्यादवेश्वरम् ॥ [ 2445 ]
गोलक्रीडासमायुक्तं करसंस्थितगोलकम् ।
विक्षिपन्तं जगन्नाथं पादाङ्गुष्ठेन गोलकम् ॥
पद्मपत्रविशालाक्षं वीक्षन्तं सात्यकिं हरिम् ।
एकेनाक्ष्णा छादयन्तं परेणालोक्य गोलकम् ॥
यतयश्च महाराज प्रत्यदृश्यन्त तत्पुरः । [ 2450 ]
वृष्णयः पुण्डरीकाक्षः सात्यकिर्बलभद्रकः ।
वसुदेवस्तथाक्रूर उग्रसेनस्तथा नृपः ॥
अन्ये च यादवाः सर्वे सम्भ्रमं प्रतिपेदिरे ।
इदं किमिदमित्येवं व्यासक्तमनसोऽभवन् ॥
पृष्ठतोऽप्यनुगच्छन्तं दिधक्षन्तं जगत्त्रयम् । [ 2455 ]
अर्धकौपीनवसनं स्मरन्तं कमपि द्विजम् ॥

---

सर्वान् ( for अन्यान् ) — ( L. 2418 ) T4 पञ्च ( for चैव ) G4 5 नमस्कृत्य ( for पुर° ). Dn Ds2 T1 G2 महामुनीन्; G4. 5 M3 °मुनि. ( for °मुनीन् ). — ( L 2421 ) T4 G3. 5 M1–3 शान्ता; G2 क्रान्ता ( for दान्ता ) D6 केशवार्चिताः ( for °वर्जिता. ). — ( L. 2423 ) D6 [उ]पश्रुत्य; T4 G2 °सृत्य ( for °स्पृश्य ). — ( L 2425 ) T1 G3–5 सुधर्मायामवस्थितम् ( for $^b$ )

Colophon — *Mention of the Epic* Ds2. — *Mention of Khila* Dn Ds2 D6 T1 2 4 G M. — *Adhy name* Dn Ds2 हंसडिभकोपाख्यानम्; T1 G3 यतीनां द्वारकाप्रवेश, M हसडिभकम्, — *Adhy no* · Dn 293; Ds3 294; T1 G3 221, T2 G1 223, T4 190, G2 216, G4 220; G5 222, M1–3 186

( L 2427 ) D6 श्यामः पीताम्बरधरः ( for $^a$ ) — ( L. 2431 ) T2 G1, 4 नृपैः ( for नृप ). — ( L 2433 ) D6 T4 G2 चकार प्रियवत्तुष्टो ( for $^a$ ) — ( L. 2436 ) G4 सर्वे ( for तस्य ). — ( L 2440 ) G2 M1–3 मध्यंदिनान् ( for °दिने ). — ( L 2442 ) D6 T4 [आ]वेदिता ( for वारिता ) D6 द्वारे चैव ( for द्वार्येव च ) M समाश्रिता ( for °स्थिताः ) — ( L. 2446 ) Ds2 G3 M -समासक्तं ( for °युक्तं ) — Dn Ds2 om. line 2447 — ( L 2448 ) Dn Ds2 M4 विष्णुं तं ( for वीक्षन्तं ). — ( L 2449 ) D6 M3 छादयुतं, T4 M1 2 °यता ( for $^b$यन्तं ) Dn T1 2 G [अ]न्येन, Ds2 [अ]नेन ( for [आ]लोक्य ). G2 प्रत्यदृशंस्ततस्ततः ( for $^b$ ) — ( L 2451 ) T2 G5 M4 वृष्णिप. ( for वृष्णय ) T1 2 4 G1 2 4 5 M4 पुण्डरीकाक्षं ( for °क्ष ) — ( L 2452 ) D6 दृष्ट्वा, M1–3 कह्व ( for [अ]क्रूर ) — ( L 2453 ) T4 G2 एते ( for अन्ये ) M1–3 संप्रपेदिरे ( for प्रति° ) — ( L 2455 ) G1 T1 3 पृष्ठतोऽप्यनुसर्पन्तं ( G1 °न्ति ); G2 °तो व्यनुसर्पन्त; G4. 5 °तो व्यवसर्पन्ति; M3 °तोऽप्यनुगच्छन्ति ( for $^a$ ) G3 जनार्दनम् ( for जगत्त्र-

अन्तस्तापसमायुक्तं छिन्नदण्डधरं यतिम् ।
अतिज्वलन्तं रोषेण हंसासादितकल्मषम् ॥
नेत्रोत्थितमहावह्निं प्रेक्षन्तं यादवेश्वरम् ।
दुर्वाससं ते ददृशुर्भीता यादवसत्तमाः ॥ [ 2460 ]
किं करिष्यत्यसौ क्रुद्धः किं वा वक्ष्यति नः प्रभुः ।
इति प्राञ्जलयः सर्वे यादवाः संप्रपेदिरे ।
इदमासनमित्येवं किंचिदूचुश्च वृष्णयः ॥
ततः कृष्णो हृषीकेशः किंचिदुत्प्लुत्य तत्पुरः ।
इदमासनमित्येव स्थीयतामिह निर्वृतः । [ 2465 ]
अहमत्र स्थितो विप्र किं करोमीति चाब्रवीत् ॥
ततः किंचिदिवासीन आसने यतिविग्रहः ॥
आसने संस्थिते तस्मिन्यतयो वीतमत्सराः ।
आसनानि यथायोगं भेजिरे निर्वृताः किल ॥
अर्घ्यादिसमुदाचारं चक्रे कृष्णः किरीटभृत् । [ 2470 ]
आह भूयो हृषीकेशो यतिं दुर्वाससं प्रभुम् ।
किमर्थं ब्रूहि विप्रेन्द्र अस्मिन्प्रत्यागमो हि वः ॥
दृष्टं वाप्यथ वा किंचित्कारणं वोऽस्ति वा महत् ।
संन्यासिनो द्विजश्रेष्ठा यूयं विगतकल्मषाः ॥
निःस्पृहाश्च सदा यूयमस्मत्तो द्विजपुंगवाः । [ 2475 ]
प्रार्थ्यं नाम न चैवास्ति स्पृहा नैवास्ति वो यतः ॥
स्पृहाप्रेरितकर्माणः क्षत्रियान्यान्ति सुव्रताः ।
निरूप्यमाणमस्माभिर्विप्र किंचिन्न दृश्यते ॥

न जाने कारणं ब्रह्मन्युष्मदागमनं प्रति ।
एतावता चानुमेयं किंचित्कारणमस्ति हि । [ 2480 ]
तद्ब्रूहि यदि विद्येत त्वत्तो ज्ञास्यामहे वयम् ॥
इत्युक्तवति देवेशे चक्रपाणौ जनार्दने ।
तस्यापि राजन्विप्रस्य भूयः कोपो महानभूत् ।
तस्मादभ्यधिकः पूर्वात्कोपः संजायते महान् ॥
दिधक्षन्निव लोकांस्त्रीन्भक्षयन्निव पश्यतः । [ 2485 ]
रोषरक्तेक्षणः क्रुद्धो हसन्निव दहन्निव ।
उवाच वचनं विष्णुं दुर्वासाः क्रोधमूर्छितः ॥
न जान इति कस्मात्त्वं ब्रूषे नो यादवेश्वर ।
जानामि त्वामहं देव वञ्चयन्निव भाषसे ।
पुरातना वयं विष्णो पूर्ववृत्तान्तवेदिनः ॥ [ 2490 ]
तथा हि देवदेवोऽसि मायामानुषदेहवान् ।
निगूहसे प्रभुरतः कस्मान्नो जगतीपते ॥
सोऽसि ब्रह्मविदां मूर्तिस्तदेतत्परमं पदम् ।
यदव्यक्तं परं ब्रह्म यच्च ज्ञाता वयं पुरा ॥
यतो विश्वमिदं भूतं तदेतत्परमं पदम् । [ 2495 ]
यच्च स्थूलं विजानन्ति पुरा तत्त्वेन चेतसा ॥
पुराविदोऽथ विश्वेश तदेतत्परमं वपुः ।
कर्मणा प्राप्यते यत्तु यत्स्मृत्वा निर्वृता वयम् ॥
प्रत्यक्षमपि यद्रूपं नैव जानन्ति मानुषाः ।
न हि मूढधियो देव न वयं तादृशा हरे ॥ [ 2500 ]

---

यम् ) —( L 2458 ) Dn $Ds_2$ $T_{1\ 2\ 4}$ G अन्तर्ज्वलन्तं ( for अतिज्व° ). $D_6$ -कश्मलम् ( for -कल्मषम् ) $T_1$ $G_5$ हंसस्मारितकल्मषम्, $T_4$ $G_5$ हंससादित° ( for $^b$ ) —( L. 2459 ) $G_2$ नेत्रोद्भूत ( for °त्थित- ) —( L. 2461 ) $D_6$ $T_4$ संक्रुद्ध ; $G_2$ [अ]संक्रुद्ध ( for [अ]सौ क्रुद्धः ) —( L 2462 ) Dn $Ds_2$ $T_{1\ 2}$ $G_{1\ 3-5}$ प्रतिपेदिरे ( for संप्र° ). —( L 2464 ) $D_6$ $G_2$ उत्पत्य ( for उत्प्लुत्य ) $T_4$ $G_{2\ 3}$ तत्पर ( for तत्पुर ) —( L 2465 ) $D_6$ $G_1$ इति ( for इह ) —( L. 2466 ) $M_{2\ 4}$ अद्य ( for अत्र ) Dn $Ds_2$ $D_6$ $T_{1\ 2,\ 4}$ G किंकरोऽस्मि ( for किं करोमि ) —( L 2469 ) $Ds_2$ यथायोग्यं ( for °योगं ) —( L 2470 ) $G_5$ भूय॰ ( for कृष्ण. ). —( L 2471 ) $G_3$ $M_{1-3}$ प्रभु ( for प्रभुम् ) —( L 2472 ) $M_{1,\ 2}$ अस्मान् ( for अस्मिन् ). $G_2$ नृप ( for हि व॰ ). —( L 2473 ) $D_6$ $T_3$ $G_2$ [अ]भवत् ( for महत् ) —( L 2474 ) $D_6$ $M_1$ -मत्सरा ( for -कल्मषाः ). —( L. 2475 ) $D_6$ $T_4$ $M_{1-3}$ -पुंगव ( for °वा ). —( L. 2476 ) $D_6$ $T_4$ $G_2$ प्रार्थ्यं ( for प्रार्थ्यं ) — $D_6$ om lines 2477–2481 —( L 2477 ) M -धर्माण॰ ( for -कर्माण॰ ). —( L 2478 ) $G_4$ विद्यते ( for दृश्यते ) —( L 2479 ) $G_2$ $M_{1-3}$ मया ( for प्रति ). —( L. 2484 ) $D_6$ $T_4$ $G_2$ M स्म ह ( for महान् ). —( L 2486 ) $M_3$ दुर्वासाथ हसन्निव ( for $^b$ ) —( L. 2489 ) Dn $Ds_2$ $T_{1,\ 2,\ 4}$ $G_{1\ 3\ 5}$ देवं ( for देव ). —( L. 2491 ) $T_1$ -देवेशो ( for देवोऽसि ). —( L 2493 ) $T_{1\ 4}$ $G_{1,\ 4\ 5}$ तवैतत् ( for तदेतत् ) —( L 2494 ) Dn यद्रा भाव्यं पुरा ब्रह्मा ; $Ds_2$ $T_{1,\ 2,\ 4}$ G $M_4$ यदभ्यर्च्य पुरा ( $T_1$ परं ) ब्रह्मा, $D_6$ यदभ्यर्चत्पुरा ब्रह्मा ( for $^a$ ). —( L. 2497 ) $D_6$ $T_4$ पदम् ( for वपु ) —( L.

न जान इति कस्मात्त्वं किमतः साहसं वचः ।
ये हि मूलं विजानन्ति तेषां पत्रविवेचनम् ॥
कुर्वतः किं फलं देव तव केशिनिषूदन ।
वेदान्ते प्रथितं तेजस्तव चेदं विभाव्यते ॥
यच्च विज्ञानतृप्तास्तु योगिनो वीतकल्मषाः । [ 2505 ]
पश्यन्ति हृत्सरोजे हि तदेवेदं वपुः प्रभो ॥
वेदैर्यद्गीयते तेजो ब्रह्मेति प्रविभज्यते ।
तदेवेदं विजानेऽहं रूपमैश्वरमीश्वर ॥
वैष्णवं परमं तेज इति वेदेषु पठ्यते ।
अवगच्छाम्यहं विष्णो तदेवेदं वपुस्तव ॥ [ 2510 ]
य ओमित्युच्यते शब्दो यस्य वागिति गीयते ।
स एवासि प्रभो विष्णो न जान इति मा वद ॥
परोक्षं यदि किंचित्स्यात्तव वक्तुं प्रयुज्यते ।
न जान इति गोविन्द मा वदीः साहसं हरे ॥
विश्वं यतः प्रादुरासीद्यस्मिँल्लीनं क्षये सति । [ 2515 ]
इदं तदैश्वरं तेजस्त्ववगच्छामि केशव ॥
कर्ता त्वं भूतभव्येश प्रतिभासि सदा हृदि ।
यद्यद्रूपं स्मरेन्नित्यं तत्तदेवासि मे हृदि ॥
वायुरेव सदा विष्णुरिति मे धीयते मतिः ।
तदा तद्रूपमेवासि हृन्मध्ये संस्थितो विभो ॥ [ 2520 ]
आकाशो विष्णुरित्येव कदाचिद्धीयते मतिः ।
तदा तद्रूपमेवासि हृन्मध्ये संस्थितो विभो ॥
पृथिवी विष्णुरित्येतत्कदाचिद्धीयते मतिः ।
तदा पार्थिवरूपोऽसि प्रतिभासि सदा मम ॥
रसोऽयं देव इत्येव कदाचिच्चिन्त्यते मया । [ 2525 ]
तदा रसात्मना विष्णो हृन्मध्ये संस्थितो विभो ॥
यदा त्वं तेज इत्येव स्मर्ता स्यां पुरुषोत्तम ।
यदा तद्रूपसंपन्नः प्रतिभासि सदा हृदि ॥
चन्द्रमा हरिरित्येव तदा चान्द्रमसं वपुः ।
निरीक्षंश्चक्षुषा देव ततः प्रीतोऽस्मि केशव ॥ [ 2530 ]
यदा सौरं वपुरिति स्मर्ता स्यां जगतीपते ।
तदा तद्भावनायोगात्सूर्य एव विराजसे ॥
तस्मात्सर्वं त्वमेवासि निश्चिता मतिरीदृशी ।
अतो न जानेऽहमिति वक्तुं नेशो जनार्दन ॥
इत्यर्थे संस्थितो विष्णो पीडां नो नैव चिन्त्यसे । [ 2535 ]
अत्यन्तदुःखिता विष्णो वयं त्वामनु संस्थिताः ॥
ईदृशीयमवस्था नो नैनां स्मर्तासि केशव ।
तत्पुनर्भागधेयं नो नष्टमित्येव चिन्तये ।

---

2499 ) D6 T4 G2 तव ( for अपि ) D9 न च, T4 G2 M1-3 तव ( for नैव ) — D6 T1 om lines 2500-2505 —( L 2501 ) Dn T2 G1-3 5 M4 जाने ( for जान ) Dn Ds2 यद्रूपे ( for कस्मात्त्वं ). — ( L 2502 ) T2 -विचेतनम्, M3 -विमोच° ( for -विवेच° ) —( L. 2503 ) M1-3 पुंस· ( for तव ). —( L 2504 ) M1. 3 तदेव ( for तव च ) Dn Ds2 T2 G1 4 5 विचार्यंते ( for विभाव्यते ). G3 सर्वतेजो विचार्यते ( for [b] ). —( L. 2505 ) Dn Ds2 T4 ये ( for यच् ) —( L 2506 ) D6 तव वेदं ( for तदेवेदं ) —( L 2507 ) M1 3 वेदे ( for वेदैर् ) G2 क्रियते ( for गीयते ) Dn Ds2 D6 T2. 4 G1. 3-5 ब्रह्मेति प्रतिपाद्य वै, T1 °ति प्रतिपाद्यते, G2 °ति प्रविभज्य वै ( for [b] ). — ( L 2508 ) D6 T4 [इ]ह ( for [इ]दं ) Dn Ds2 G2 एव च ( for ईश्वर ) D6 परमैश्वर्यमीश्वर ( for [b] ) —( L 2509 ) G2 न वैष्णव परं तेज ( for [a] ) — ( L 2510 ) G3 5 तदा ( for तव ). —( L 2512 ) T1 भवांस्त्वं ( for एवासि ) D6 G2 M वदी ( for वद ) — M4 om lines 2513-2515. —( L 2513 ) Cal ed परोक्षे ( for °क्षं ) —( L 2514 ) G1 2 4 5 M1 वादी ( for वदीः ) T2 मा वादी. सहसा हरि. ( for [b] ) — ( L 2517 ) D6 T4 G2 M1-3 स्मर्ता ( for कर्ता ). G2 [अ]हं ( for त्वं ) — D6 om line 2518. G5 om ( hapl ) lines 2520-2525 —( L 2520 ) D6 M2 तन्मध्ये ( for हृन्मध्ये ) D6 T2 G5 संस्थिते, G1 °तं ( for °तो ). — D6 M om ( hapl ) lines 2521-2523 —( L 2522 ) T1 [आ]हुर् ( for [अ]सि ) —( L 2523 ) Dn D6 T4 G1-3 M4 [इ]व, M1-3 [ए]वं ( for [ए]तत् ). — ( L 2524 ) Dn Ds2 T1 G2 5 M4 त्वं ( for ऽसि ). — ( L 2525 ) T2 हरिः ( for मया ) — G3 om line 3526 — ( L 2526 ) D6 तन्मध्ये ( for हृन्मध्ये ) T2 4 G1 4 संस्थिते ( for °तो ). — ( L. 2227 ) D6 T2 4 G1 3 5 M त्वां ( for त्वं ). M4 त्वं ( for स्यां ) — ( L 2528 ) D6 -संपन्न, T1 M3 -संभिन्न· ( for ( for संपन्न ) —( L 2530 ) Dn Ds2 D6 T1 2 4 G M4 निरीक्ष्य ( for °क्षंश्च ) — ( L 2532 ) G3 संभावना- ( for तद्भावना- ) — ( L 2533 ) D6 विजानासि ( for त्वमेवासि ). — ( L 2534 ) G3 तव वक्तुं ( for वक्तु नेशो ) —( L 2535 ) T2 G1 4 इत्यर्थे, G3 इत्युक्त ( for इत्यर्थे ) T1 पिता, M3 पीडा ( for पीडां ) —( L 2536 ) T1 वय ते मनसे स्थिताः

मन्दभाग्या वयं विष्णो यतो नो न स्मरेः प्रभो ॥
कौचित्क्षत्रियदायादौ गिरीशवरगर्वितौ । [ 2540 ]
नाम्ना च हंसडिभकौ बाधेते नो जनार्दन ।
गार्हस्थ्यं हि सदा श्रेयो वदन्ताविति केशव ॥
इतश्चेतश्च धावन्तौ वदन्तौ बहु किल्बिषम् ।
अयुक्तं बहु भाषन्तौ धर्षयन्तौ च नः सदा ॥
इदमन्यत्कृतं देव असह्यं पापमुच्यते । [ 2545 ]
पश्येदं बहुधा देव भिन्नं भिन्नं सहस्रशः ।
शिक्यं च दारवं पात्रं द्विदलान्वेणुकान्बहून् ॥
इदमप्यपरं पश्य तयोः साहसचेष्टितम् ।
कौपीनं बहुधा छिन्नं तदस्माकं महद्धनम् ।
कृतं कपालमात्रेण कमण्डलु जगद्गुरो ॥ [ 2550 ]
त्वं तु नो रक्षसे नित्यं क्षात्रवृत्तं समाश्रितः ।
चित्रं चित्रमिदं देव रक्षस्येव दिवानिशम् ॥
किं करिष्यामि मन्दात्मा मन्दभाग्या वयं विभो ।
किं नः शरणमद्यैव तद्ब्रूहि जगतीपते ॥
जीवन्तौ तौ यदि स्यातां नष्टा लोका इमे त्रयः । [ 2555 ]
न विप्रा न च राजानो न वैश्या न च पादजाः ॥
अत्यन्तबलिनौ मत्तौ तीक्ष्णदण्डधरौ नृपौ ।
न तयोः पुरतः स्थातुं शक्ता देवाः सवासवाः ॥
न च भीष्मो न वा राजा बाह्लीको भीमविक्रमः ।
यो हि वीरो जरासंधः क्षत्रियाणां भयंकरः ॥ [ 2560 ]
नैव च प्रायशः स्थातुं गिरीशवरदर्पिणोः ।
तयोः शक्तो हरे कृष्ण नित्यमप्रतिसङ्गिनोः ॥
तस्मात्त्वं जहि तौ वीरौ रक्ष लोकानिमान्प्रभो ।
अन्यथा रक्षसीत्येवं शब्दो व्यर्थोऽत्र जायते ॥
बहुनात्र किमुक्तेन रक्ष रक्ष जगत्त्रयम् । [ 2565 ]
इत्युक्त्वा विरराभैव दुर्वासाः क्रोधमूर्छितः ॥

Colophon

वैशंपायन उवाच ।

यतेर्वचनमाकर्ण्य मन्दमुच्छ्वस्य केशवः ।
दुर्वाससं समालोक्य बभाषे यादवेश्वरः ॥
क्षन्तव्यं भवता पूर्वं दोष एष ममैव हि ।
शृणु वाक्यं ममैतत्तु श्रुत्वा क्षमपरो भव ॥ [ 2570 ]
जेष्यामि तौ रणे विप्र हंसं डिभकमेव च ।
गिरीशो वा वरं दद्याच्छक्रो वा धनदोऽपि वा ॥
यमो वा वरुणो वापि ब्रह्मा वाथ चतुर्मुखः ।
सबलौ सानुगौ हत्वा पुनर्दास्यामि वो रतिम् ॥

---

(for $^b$) —(L 2537) Dn $Ds_2$ $G_3$ [ए]तां (for [ए]नां). Dn $Ds_2$ $G_{2,3,5}$ $M_4$ स्मरसि (for स्मर्तासि) — $M_{2,4}$ om line 2541 —(L 2543) $T_1$ om lines $2543^b$–$2544^a$ $G_4$ किल्बिषौ (for °षम्) —(L 2544) $D_6$ $T_4$ $G_2$ वनजाक्ष- वच॰ सदा (for $^b$) —(L 2545) $Dn_1$ $Ds_2$ असभ्यं, $T_2$ $G_{3-5}$ त्वसह्यं (for °अ) $T_2$ $G_3$ $M_{2,3}$ अच्युत (for उच्यते) —(L 2546) $M_{2-4}$ बहुशो (for °धा) $D_6$ पश्येदं बहु देवेश (for $^a$) $T_2$ छिन्नं (for the first भिन्नं). —(L 2547) $D_6$ $G_2$ दारुकं (for दारवं) $D_6$ विदलद्, $M_3$ विदलं (for द्विदलान्) —(L 2550) M -मात्रं तु (for -मात्रेण). Dn $Ds_2$ जगत्प्रभो (for °द्गुरो) —(L 2551) $T_4$ $G_2$ $M_{1-3}$ समास्थितः (for °श्रित). Dn $Ds_2$ $T_{1,2}$ $G_{1,3-5}$ क्षात्रं वै व्रत- ($T_2$ वृत्त)मास्थितः (for $^b$) —(L 2552) Dn $Ds_2$ $G_{1,4,5}$ $M_4$ सदानिशम् (for दिवा°) —(L 2554) $D_6$ इत्येव; $G_2$ अद्यैतत् (for अद्यैव). Dn $G_{4,5}$ ब्रूहि तज्जगतां पते; $G_2$ किं त्वं ब्रूहि जगत्पते (for $^b$). —(L 2556) च विप्रा (for विप्रा न). $D_6$ $T_4$ राजेन्द्रा (for राजानो). M विशो (for वैश्या) —$T_1$ om lines 2557–2558. —(L. 2557) $D_6$ मल्लिनौ (for -ब°) Dn $Ds_2$ $D_6$ $T_{2,4}$ G $M_4$ नृप (for नृपौ) —(L 2558) $G_2$ सदानवा; $G_4$ सबान्धवा (for सवासवा) —(L 2559) $G_4$ बाह्लीको ब्रह्मवित्तम (for $^b$) —(L 2561) $G_2$ $M_1$ -गर्विणो., $M_3$ -गर्विणौ, $M_4$ गर्विता (for -दर्पिणो.). —(L 2562) Dn $Ds_2$ $T_4$ $M_{1,3}$ कृष्ण, $G_5$ शक्ता (for शक्तो). Dn $Ds_2$ $T_4$ $M_{1,3}$ शक्तो (for कृष्ण) $G_2$ -शङ्किनो. (for -सङ्गिनो.) —(L 2563) $D_6$ $T_2$ $G_2$ $M_{1-3}$ वीर (for वीरौ) $G_2$ रक्ष चैव स्वकानिमान् (for $^b$).

COLOPHON —*Mention of the Epic* $Ds_2$. —*Mention of Khila* Dn $Ds_2$ $D_6$ $T_{2,4}$ G M. —*Adhy name* Dn $Ds_2$ हंसडिभकोपाख्याने दुर्वासस॰ समागम, $D_6$ $M_4$ हंसडिभकम्, $T_2$ $G_1$ हंसडिबकोपाख्याने वासुदेवदुर्वास॰संगमः, $G_3$ वासुदेवदुर्वाससंगम॰ —*Adhy no.* Dn 294, $Ds_2$ 295; $T_2$ $G_1$ 224, $T_4$ 191, $G_2$ 217; $G_3$ 222, $G_4$ 121; $G_5$ $M_4$ 223, $M_{1-3}$ 187

$G_5$ om. the ref. —(L. 2569) Dn M सर्वं (for पूर्वं). $Dn_2$ $Ds_2$ $D_6$ $T_{2,4}$ G $M_3$ एव (for एष). —(L, 2570)

सत्येनैव शपाम्यद्य मा रोषवशमन्वगाः । [ 2575 ]
रक्षां वोऽहं करिष्यामि हत्वा तौ च नृपाधमौ ॥
जानामि तौ दुरात्मानौ युष्मद्दोषकरौ हि तौ ।
श्रुतं च पूर्वमस्माभिस्तीक्ष्णदण्डधराविति ॥
अत्यन्तबलिनौ मत्तौ गिरीशवरदर्पितौ ।
नाल्पप्रयत्नसंसाध्यौ जरासंधहितैषिणौ ॥ [ 2580 ]
प्राणानपि तयो राजा दास्यत्येव न संशयः ।
जरासंधो महीपालो विनानेन यतेमहि ॥
जये तयोर्विप्रवर्य तत्र श्रेयो भवेत नः ।
यत्र यत्र च तौ गत्वा स्थितावित्यनुशुश्रुम ।
तत्र तत्र च हन्ताहं नात्र कार्या विचारणा ॥ [ 2585 ]
गच्छध्वं यतयः स्वैरं निजकार्यपरायणाः ।
अचिरेणैव कालेन जेष्यामि रणपुंगवौ ॥
ततः प्रीतः प्रसन्नात्मा यादवेश्वरमाह सः ।
स्वस्त्यस्तु भवते कृष्ण जगतां स्वस्ति सर्वदा ॥
किं नु नाम जगन्नाथ दुःसाध्यं तव केशव । [ 2590 ]
त्रिलोकेश त्रिधामासि सर्गसंहारकारकः ॥
देवानामपि देवेश सर्वत्र समदर्शनः ।
विष्णो देव हरे कृष्ण नमस्ते चक्रपाणये ॥
नमः स्वभावशुद्धाय शुद्धाय नियताय च ।
शब्दागोचर देवेश नमस्ते भक्तवत्सल । [ 2595 ]
अज्ञानादथ वा ज्ञानाद्यन्मयोक्तं क्षमस्व तत् ॥
त्वमेवाहं जगन्नाथ नावयोरन्तरं पृथक् ।
अतः क्षमस्व भगवन्क्षमासारा हि साधवः ॥

भगवानुवाच ।

क्षन्तव्यं भवता विप्र क्षमासारा वयं सदा ।
संन्यासिनः क्षमासाराः क्षमा तेषां परं बलम् ॥ [ 2600 ]
क्षमा मोक्षकरी नित्यं तत्त्वज्ञानमिव द्विज ।
क्षमा धर्मः क्षमा सत्यं क्षमा दानं क्षमा यशः ॥
क्षमा स्वर्गस्य सोपानमिति वेदविदो विदुः ।
तस्मात्सर्वप्रयत्नेन क्षमां पालयत स्वकाम् ॥
प्रत्यक्षज्ञानसंयुक्ता यूयं सर्वे यतीश्वराः । [ 2605 ]
एते ते यतयो विप्राः पूजनीया मयाद्य वै ॥
भोक्तव्या यतयो विप्रा भिक्षुकाः सर्व एव हि ।
तथेति ते प्रतिज्ञाय भोक्तुमैच्छन्हरेर्गृहे ॥
ततः स्वभवनं विष्णुः प्रविश्य हरिरीश्वरः ।
चतुर्विधं तदाहारं कारयित्वा यथाविधि । [ 2610 ]
भोजयामास तान्सर्वान्यतीन्यतिवरार्चितः ॥
छित्त्वा छित्त्वा च देवेशो दुकूलानि मृदूनि सः ।
ददौ तेभ्यस्तदा विष्णुः सर्वेभ्यो जनमेजय ।
ते च प्रीता यथायोगं यतः पूर्वं ततो गताः ॥

Colophon.

---

Dn Ds2 क्षमापरो, G1 शान्ति° (for क्षम°) — (L 2573) D6 T4 G2 ब्रह्मा वा चतुरानन (for $^{b}$) — (L 2574) Ds2 G3 M1 3 सानुजौ (for °गौ) — (L 2575) M2 4 [अ]त्र (for [अ]द्य). Dn Ds2 T2 4 G1. 3–5 मा रोषवशगो भव (for $^{b}$) — (L 2577) D6 T4 युष्मद्द्वेष- (for °द्दोष-) D6 T4 वने; T2 G3 M1–3 यते (for हि तौ) — (L 2579) D6 T1. 2 G2–4 M -गर्वितौ (for -दर्पितौ) — (L. 2580) M1 -साध्यौ तौ (for -संसाध्यौ). — (L 2582) Dn D6 T4 G2 M1–3 तेन (for [अ]नेन) Bom. Poona eds G(ed) विना तौ जयते महीम् (for $^{b}$) — (L 2583) D6 G2 ताभ्यां (for तयोर्) M4 भविष्यति, Bom Poona eds G(ed) भवेत्तत· (for भवेत न·). — (L 2585) D6 T4 गन्ता (for हन्ता). — (L 2587) G2 नर- (for रण-) — (L 2588) G2 प्रीतौ (for प्रीत·) — (L. 2589) Dn Ds2 T1. 2 G1 3–5 M4 कुर्वते (for सर्वदा). — (L. 2591) D6 T2 G2 सर्व- (for सर्ग-) M4 -कारण (for कारक) — (L. 2595) Dn Ds2 D6 T1 2 G2 4 5 M1 शब्दगोचर (for शब्दा°) — D6 कृष्ण (for भगवान्) — (L 2602) Cal ed कर्म (for सत्यं) and सत्यं (for दानं) — (L 2605) D6 G2 नित्यं यूयं (for यूयं सर्वे) — (L 2606) Dn1 Ds2 त एते (by transp.), Dn2 Ds2 M4 य एते D6 G5 M1 2 4 विप्र (for विप्राः). D6 T4 प्रसाद्य, T1 G4 5 ममाद्य (for मयाद्य). — (L. 2607) D6 T2 M2 विप्र — (L. 2611) D6 T4 G2 विप्रान् (for सर्वान्) Dn2 -सुरार्चित (for -वरा°) — (L 2612) T2 G1 4 भित्त्वा भित्त्वा, T4 छित्त्वा भित्त्वा (for छित्त्वा छित्त्वा). D6 बहूनि (for मृदूनि). — (L 2614) T2 G1 4 2 M1. 3 यथा (for यत.) G2 यतयस्तत्र ते गता (for $^{b}$)

Colophon. — *Mention of the Epic* Ds2. — *Mention of Khila* Dn Ds2 D6 T1 2 4 G M — *Adhy name:* Dn Ds2 T1 हंसडिभकोपाख्यानम्, D6 M4 हंसडिभकम्; T2

वैशंपायन उवाच ।

दुर्वासास्त्वथ तत्रैव नारदेन सहायवान् । [2615]
चिन्तयन्ब्रह्मणस्तत्त्वं विजहार यथासुखम् ।
भगवानपि गोविन्दस्तयोर्वधममन्यत ॥
ततस्तौ हंसडिभकौ तस्मिन्काले महीपते ।
ब्रह्मदत्तं महीपालं पितरं वीर्यशालिनम् ।
प्रावोचतामिदं वाक्यं सामन्तजनसंसदि ॥ [2620]
राजसूयं महायज्ञं पितः कुरु सुयन्त्रितः ।
अस्मिन्मासि नृपश्रेष्ठ यतामो यज्ञसिद्धये ॥
आवां तेऽद्य महाराज दिशां विजयतत्परौ ।
यतिष्यावो बलैः सार्धं रथैरश्वैर्गजैरपि ॥
संभारा यज्ञसिद्ध्यर्थमानेतव्या नृपोत्तम । [2625]
तथेति स महाराजो ब्रह्मदत्तोऽब्रवीत्तदा ॥
जनार्दनस्तु विप्रेन्द्रो दृष्ट्वा साहसतत्परौ ।
अशक्यमिति मन्वानो वयस्यं हंसमब्रवीत् ॥
शृणु हंस वचो मह्यं श्रुत्वा निश्चित्य वीर्यवान् ।
आयुष्मन्साहसं कर्तुं निश्चितोऽसि नृपोत्तम ॥ [2630]
स्थिते भीष्मे जरासंधे बाह्लीके च नृपोत्तमे ।
किं च वीरेषु सर्वेषु यादवेषु नृपोत्तम ॥
भीष्मो हि बलवान्वृद्धः सत्यसंधो जितेन्द्रियः ।
त्रिःसप्तकृत्वः पृथिवीं यो जिगाय भृगूत्तमः ।
तं युद्धे जितवान्भीष्मः सर्वक्षत्रस्य पश्यतः ॥ [2635]
जरासंधस्य यद्वीर्यं तद्भवान्वेत्ति संयुगे ।
वृष्णिवीरास्तु ते सर्वे कृतास्त्रा युद्धदुर्मदाः ॥
तत्र कृष्णो हृषीकेशो जितशत्रुः कृती सदा ।
जरासंधेन सहितः सदा युद्धे जितश्रमः ।
प्रमुखे तस्य न स्थातुं शक्तो जीवन्नृपोत्तम ॥ [2640]
बलभद्रस्तथा मत्तः क्रुद्धो यदि भवेद्बली ।
लोकानिमान्समाहर्तुं शक्नोतीति मतिर्मम ॥
तथा च सात्यकिर्वीरः शक्तो जेतुं रणे रिपून् ।
तथान्ये यादवाः सर्वे कृष्णमाश्रित्य दंशिताः ॥
अस्माभिश्च कृतः पूर्वं विरोधो यतिभिः सह । [2645]
दुर्वासा यतिभिः सार्धं गतो द्रष्टुं स केशवम् ॥
इति श्रुतं नृपश्रेष्ठ ब्राह्मणाद्भोक्तुमागतान् ।
तथा सति यथा सिध्येत्तथा चिन्त्यं च मन्त्रिभिः ।
ततः पश्चाद्विधास्यामो राजसूयं महाक्रतुम् ॥

हंस उवाच ।

को नाम भीष्मो मन्दात्मा वृद्धो हीनबलः सदा । [2650]
आवयोः पुरतः स्थातुं शक्तः किल स वृद्धकः ॥
यादवा इति चित्रं नः शक्ताः स्थातुं रणे द्विज ।
कश्च कृष्णः पुरः स्थातुं बलदेवश्च मत्तकः ॥
शैनेयश्चापि विप्रेन्द्र स्थातुं नालं विचित्रता ।

---

G1 हंसडिबकम्, G3 हंसडिबके यतिभोजनम् — *Adhy no* Dn1 294; Ds2 296, T1 G4 222; T2 G1 225, T4 192; G2 218; G3 223, G5 M4 224, M1-3 188.

(L 2615) Dn Ds2 T1.2 G1-3 5 महामना (for सहायवान्) — Before lines 2617, G3 ins वैशंपायन — (L 2617) Dn Ds2 T1 2 G1 3-5 M3 वासम्, D6 विघ्नम् (for वधम्) — (L 2618.) Ds2 G1 4 महीपतौ, Bom Poona eds G(ed) °पतिम् (for °पते) — (L 2620) Dn प्रवोचताम्, Ds2 D6 प्रोवाच तम्; M1 2 प्रोवाच ताम्, M3 प्रोवाचेताम् (for प्रावोच°) Dn Ds2 G1 3 5 समन्ताज् (for सामन्त-) — (L. 2621) Dn Ds2 सुयत्नतः, D6 संयन्त्रितः, T2 सुमन्त्रितः (for सुयन्त्रितः) — (L. 2622) Dn Ds2 T1.2 4 G1 3-5 यतावो (for °मो) — (L 2623) M1-3 दिशो (for दिशा). — G2 om (hapl) lines 2624–2627. — (L. 2624) D6 T4 प्रयतावो (for यतिष्यावो). — (L 2626) Dn Ds2 G3 महाबाहो, T1 4 M3 °राज (for °राजो) — (L 2629) T1 2 G1 3-5 नित्यं (for मह्यं). D6 T2 4 G1 4 5 M निश्चिनु (for °त्य) — (L. 2630) Dn Ds2 उद्यतो (for निश्चितो) — (L 2634) M2-4 भृगूद्वहः (for °त्तम) D6 T4 G2 जिगाय भृगुनन्दनः (for $^b$) — (L. 2635) T2 युद्धेषु (for तं युद्धे). — G5 om lines 2636–2639. — (L 2639) G1 कृतश्रम. (foo जित°) — — (L 2640) D6 T4 M3.4 क (for न) T4 G1.2 4 5 M1 3.4 नृपोत्तमः. — (L 2641) D6 सदा (for तथा) — (L. 2644) M2 4 गर्विता (for दंशिताः). — (L 2645) D6 यदुभिः (for यतिभि) — (L 2646) T4 यदुभि (for यतिभिः). — (L 2647) D6 श्रुत्वा (for श्रुतं). D6 G1 5 M1 3 ब्राह्मणान्भोक्तुमागतान् (for $^b$) — (L 2652) T2 G1 रणाजिरे (for रणे द्विज) — (L 2653) G2 कश्च सः (for मत्तक.) — (L. 2654) D6 राजेन्द्र (for विप्रेन्द्र). Dn Ds2

जरासंधस्तु धर्मात्मा बन्धुरेव सदा मम ॥ [2655]
गच्छ विप्र यदुश्रेष्ठं ब्रूहि मद्वचनात्त्वरन् ।
दीयतां करसर्वस्वं यज्ञार्थं लवणं बहु ॥
लवणानि बहून्याशु गृह्य केशव माचिरम् ।
आगच्छ त्वरितं कृष्ण न ते कार्यं विलम्बनम् ।
इति ब्रूहि यदुश्रेष्ठं याहि त्वरितविक्रमः ॥ [2660]
न ब्रूयाश्चोत्तरं विप्र शपेयं त्वां प्रियोऽसि मे ।
मित्रभावादिदं ब्रूहि शपामि त्वां पुनः पुनः ॥
इति संचोदितो विप्रो नोत्तरं प्रत्यभाषत ।
मित्रभावात्तथा राजन्स्नेहाच्च जनमेजय ॥
जनार्दनस्तु धर्मात्मा नित्यं गन्तुं समुद्यतः । [2665]
अद्य श्वो वा परश्वो वा गच्छामीति यतेत सः ॥
देवं द्रष्टुं जगद्योनिं शङ्खचक्रगदाधरम् ।
एक एव च धर्मात्मा हयमारुह्य सत्वरम् ॥
प्रातरेव जगामाशु द्रष्टुं द्वारवतीं द्विजः ।
हरिं कृष्णं हृषीकेशं मनसा संस्मरन्द्विजः ॥ [2670]

Colophon

वैशंपायन उवाच ।

ततः प्रायाद्धरिं द्रष्टुं ब्राह्मणो ब्रह्मवित्तमः ।
हयेनैकेन राजेन्द्र त्वरितं स ययौ नृप ॥
यथा निदाघसमये सूर्यांशुपरिपीडितः ।
पान्थो याति जलं दृष्ट्वा त्वरितं तत्पिपासया ।
धावत्येव तथा विप्रो हरिं द्रष्टुं जनार्दनम् ॥ [2675]
गच्छन्स चिन्तयामास चोदयन्हयमुत्तमम् ।
हंस एव यथा नित्यं कुर्यात्प्रियहितं मम ।
तथा हि प्रेषितस्तेन हरिं पश्येत्यहं प्रभुम् ॥
अहमेव सदा धन्यो मत्तो ह्यभ्यधिको न च ।
यतो द्रक्ष्याम्यहं विष्णुं वसन्तं द्वारकापुरे ॥ [2680]
सा हि मे जननी धन्या हरिं दृष्ट्वा पुनर्गतम् ।
कृतार्थं सर्वथा पुत्रं द्रक्ष्यत्येषा मनस्विनी ॥
मुखमुन्निद्रहेमाब्जकिञ्जल्कसदृशप्रभम् ।
द्रक्ष्यामि देवदेवस्य चक्रिणः शार्ङ्गधन्वनः ॥
वपुर्द्रक्ष्याम्यहं विष्णोर्नीलोत्पलदलच्छवि । [2685]
शङ्खचक्रगदाशार्ङ्गवनमालाविभूषितम् ॥
नेत्रे ते देवदेवस्य पद्मकिञ्जल्कसप्रभे ।
पश्याम्यहमदीनात्मा नष्टदुःखोऽस्मि निर्वृतः ॥
अपि द्रक्ष्यति योगात्मा सौम्येनैव स्वचक्षुषा ।
अपि वा मत्प्रियं ब्रूयात्स्वस्ति चेति च वा वदेत् । [2690]

---

T2 स्थातुं न इति चिन्तय, T1 G1 3–5 M4 स्थातुं न इति चिन्तना (for $^{b}$) — (L 2657) Dn Ds2 सुन्दरं (for लवणं) — (L 2658) Bom Poona eds G(ed.) [अ]द्य (for [आ]शु). — (L 2659) T1 2 4 G M2 4 न ते कार्या विलम्बना (for $^{b}$). — (L 2660) D6 T1 2 G2. 5 M3 -विक्रम (for °म.). — (L 2661) M2 शपेऽहं (for °यं). — (L 2662) D6 G2 ब्रवीम्येतच्, M इदं वच्मि (for इदं ब्रूहि) Dn2 Ds2 G1 4 5 M4 पश्यामि (for शपामि). — (L 2666) D6 T4 वदस्तु (for यतेत) — (L. 2668) M3 उद्यम्य (for आरुह्य) — (L 2669) M1 3 हरिम् (for द्विज) — T2 om line 2670 — (L 2670) M3 कृष्णं विष्णुं (for हरिं कृष्ण). — After line 2670, G4 ins.

20** प्रभुं कृष्णं हृषीकेशं मनसा संस्मरन्हरिम् ।

Colophon — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 D6 T1 2 4 G M — *Adhy name* Dn Ds2 T1 2 G1 4 हंसडिभकोपाख्याने जनार्दनगमनम्, T4 भविष्यपर्वणि हंसडिभकम्, G5 जनार्दनगमनम्, M हंसडिभकम् — *Adhy. no* Dn2 296, Ds2 297; T1 G3 224, T2 G1 226; T4 193, G2 219, G4 223; M1–3 189, M4 225.

(L 2671) Dn Ds2 T4 G3 विष्णुं (for द्रष्टु) — (L. 2672) M त्वरितं पुण्यवानयम् (for $^{b}$) — (L 2673) D6 G2 -दीपित (for -पीडित) M सूर्यांशुप्रतिदीपित. (for $^{b}$) — (L 2674) M1–3 ऽमलं (for याति). G2 त्वरितो हि पिपासया (for $^{b}$) — (L 2675) Ds2 D6 T2 4 G3 4 M जनार्दन· — (L 2677) Dn Ds2 G2 M प्रियो मह्यं; D6 यथा सत्यं, G1 तथा नित्यं (for यथा नित्यं). D6 M1 3 4 कुर्वन् (for कुर्यात्) — (L. 2678) Dn Ds2 D6 G2 3 पश्याम्यह (for पश्येत्यहं) — (L 2679) G2 सत्यो (for धन्यो) G2 भुवि (for न च) — D6 T2 G2 om. lines 2680$^{b}$–2685$^{a}$ — (L 2682) Dn Ds2 T2 G1 3–5 देवी; T2 देव (for पुत्रं) — (L 2684) Dn Ds2 T2 G4 M3 -धन्विनः (for धन्वन·) — (L. 2686) D6 G2 -खड्ग- (for -शार्ङ्ग-) — (L 2687) G3 M2 4 -सन्निभे (for -सप्रभे). — (L 2689) M1–3 द्रक्ष्यसि (for °ति). — (L 2690) G4 मां (for वा) — (L 2691) D6 देवम्, T4 G2 देहं (for वर्ष्मं) Bom Poona eds. G(ed) ततस् (for

द्रक्ष्यामि चक्रिणो वर्ष्म अन्तस्त्रैलोक्यसंयुतम् ।
पादाब्जं चक्रिणो द्रष्टुं त्वरयत्येव मां मनः ॥
वक्षःस्थलं सदा विष्णोः स्फुरद्रत्नप्रभायुतम् ।
पश्यन्निव च गच्छामि स्मरन्ननिशमीश्वरम् ॥
पीतकौशेयवसनं लम्बहारविभूषितम् । [ 2695 ]
ईषत्स्मिताधरं विष्णुं पश्यामि च पुनः पुनः ॥
स्मरतश्च हरे रूपं लोमहर्षोऽयमीदृशः ।
गच्छतश्च पुरो भाति शङ्खचक्रगदासिमान् ॥
यातीव च पुरो भाति मह्यं देवो जगद्गुरुः ।
एषोऽयमिति मे वक्तुं जिह्वा प्रस्फुरतीव तम् ॥ [ 2700 ]
इदं दुःखतरं मन्ये करं देहीति यद्वचः ।
इदं तत्साहसं मन्ये यद्वचस्तस्य भूपतेः ॥
हंसस्य करदो विष्णुस्तदाज्ञापरिचारकः ।
तस्य सर्वं पुरो गत्वा वक्ताहं किल निर्दयः ॥
मूढानामग्रणीरस्मि निर्लज्जश्च तथा वदन् । [ 2705 ]
करं देहि हरे विष्णो हंसस्य यदुपुंगव ॥
लवणानि बहून्याशु दातव्यानि करात्मना ।
इति वक्तुं न मे युक्तं पुरतस्तस्य शार्ङ्गिणः ॥
तथापि मित्रभावात्तु वक्तव्यं घोरमीदृशम् ।
कष्टो ह्ययं मित्रभावो मनुष्याणां कृतात्मनाम् ॥ [ 2710 ]
अथ वा सर्वविद्विष्णुः सर्वस्य हृदि संस्थितम् ।
जानात्येव सदा भावं प्राणिनां शोभने रतः ॥

तथा सति न मे दोषो मित्रभावो यतो ह्ययम् ।
सर्वथा रक्षतां विष्णुर्घोरं वक्तुं यतस्य मे ॥
द्रक्ष्याम्यहं जगन्नाथं नीलकुञ्चितमूर्धजम् । [ 2715 ]
कम्बुग्रीवाधरं विष्णुं श्रीवत्साच्छादितोरसम् ॥
स्फुरत्पद्ममहाबाहुं रत्नच्छायाविराजितम् ।
द्रक्ष्यामि चक्रिणं विष्णुं केशवं यादवेश्वरम् ।
अचिन्त्यविभवं देवं भूतभव्यभवत्प्रभुम् ।
आत्ममायं जगन्मायं द्रक्ष्यामि जलशायिनम् ॥ [ 2720 ]
कृतार्थः सर्वथा चाहं भवामि विगतज्वरः ।
अद्य मे सफलं जन्म साक्षात्कृतवतो हरिम् ॥
अद्य मे सफला यज्ञा साक्षात्कृतवतो हरिम् ।
नेत्रे मे सफले विष्णुं पश्यतश्च जगन्मयम् ॥
प्रीतिमानस्तु मे विष्णुर्वक्तुर्घोरस्य कर्मणः । [ 2725 ]
उन्मिषन्नेत्रयुग्मेन द्रक्ष्याम्यसकृदीश्वरम् ॥
आमूलमस्तकं विष्णुं पश्यामि च पुनः पुनः ।
पिबामि नेत्रयुग्मेन वपुः कृष्णस्य केवलम् ॥
धारयिष्याम्यहं पांशुं तत्पादप्रभवं शिवम् ।
ततः कृतार्थतां यास्ये स्वर्गमार्गो हि तद्रजः ॥ [ 2730 ]
मेघगम्भीरनिर्घोषं श्रोष्यामि च हरेः स्वरम् ।
पादाब्जं चक्रिणो विष्णोः पश्यामि च जगत्पतेः ॥
पश्यामीव हरेर्वक्त्रं पूर्णेन्दुसदृशप्रभम् ।
हरेरिदं जगद्रूपं पश्यामीव च सर्वतः ॥

अन्तस्). Dn Ds2 -संनिभम्, G2 -संस्थितम् (for -संयुतम्) — (L 2692) T2 G2 मे (for मा). Dn Ds2 D6 T1 G1 M4 त्वरत्येव च मे मन· (for $^{b}$) — (L 2693) Cal ed -समायुतम् (for -प्रभा°) — (L 2694) Dn Ds2 T1 चानिशम् (for अनि°). — (L 2699) D6 अतीव (for यातिव). — (L 2700) प्रभुम् (for [इ]व तम्). — (L. 2701) D6 T4 G2 दुःखमहं (for °तरं) G1 om (hapl.) lines 2701$^{b}$–2702$^{a}$ Dn Ds2 तद्वच (for यद्वचः). — (L 2703) D6 T4 G2 4 -पालक, M3 -चारिक (for -चारक) — (L 2705) G2 विष्णुं (for अस्मि) D6 निर्जरश् (for निर्लज्जश्). — (L 2706) G2 हरेर्मन्ये (for हरे विष्णो) — (L 2708) D6 T4 भूपते (for शार्ङ्गिणः) — (L 2710) M3, 4 दुरात्मानम् (for कृता°). — (L 2711) D6 T4 B3 4 संस्थितः (for °तम्). — (L. 2713) G2 मित्रभावे यतोऽस्म्यहम् (for $^{b}$) — (L 2714) D6 M1 2 क्षमतां (for रक्षतां) — (L 2716) T2 4 G1 3 5 M1 4 दिव्य- (for कम्बु-). G2 श्रीवत्साच्छादितं हरिम् (for $^{b}$) — (L 2717) G3 -विभूषितम् (for -विराजितम्) — (L. 2718) Dn Ds2 केशवं (for चक्रिणं) and चक्रिणं (for केशवं). — (L 2719) D6 भव्यं (for देवं) — (L 2720) D6 M4 आत्मेच्छया (for आत्ममायं). Dn Ds2 T1 2 4 G आत्मेच्छया जगद्रक्ष (T4 °च्छायं) (for $^{a}$) — (L 2722) M1–3 दृष्टवतो (for कृत°). — (L 2725) D6 कर्तुर्, T1 वक्तुं (for वक्तुर्) — (L 2726) M3 -युग्मे तु (for युग्मेन). Dn Ds2 T1, 2 G1–3, 5 सकृद् (for [अ]सकृद्) — (L 2727) Dn Ds2 D6 T1 2 4 G M3 आमूलमसकृद्विष्णुं (for $^{a}$). — (L 2731) T2 हरीश्वरम् (for हरेः स्वरम्) — Ds2 om. lines 2735–2738 — (L 2736) Dn D6 T1, 2, 4 G2–5 M1

प्रसीदतु सदा विष्णुरयुक्तं वक्तुमिच्छतः ॥ [ 2735 ]
आलोलकुण्डलयुगं हरिचन्दनचर्चितम् ।
स्फुरत्केयूररत्नार्चिर्बाहुद्वयविराजितम् ॥
सव्योद्धृतमहाशङ्खं रश्मिजालविराजितम् ।
प्रोद्यद्भास्करवर्णाभं चक्रज्वालावभासितम् ॥
प्रोज्ज्वलत्कङ्कणयुतं तप्तजाम्बूनदाङ्गदम् । [ 2740 ]
पीतकौशेयवसनं विस्तीर्णोरस्कमच्युतम् ॥
कदा द्रक्ष्यामि देवेशमिदानीमथ वान्यदा ।
सर्वथा कृतकृत्योऽहं यद्वपुर्द्रष्टुमुद्यतः ॥
नमो मह्यं नमो मह्यं यतो द्रष्टुमहं हरिम् ।
उद्यतोऽस्मि जगन्नाथं बलभद्रकृतास्पदम् । [ 2745 ]
द्रक्ष्याम्यवश्यमद्यैव विष्णुं जिष्णुं जगद्गुरुम् ॥

श्रीहारकौस्तुभरुचिस्फुरितोरुवक्षः
पीताम्बरं मकरकुण्डलपङ्कजाक्षम् ।
कृष्णं किरीटदरचक्रगदोर्ध्वहस्तं
तेजोमयं मम हरेर्वपुरस्तु भूत्यै ॥ [ 2750 ]
वेदोदधौ विविधशास्त्रमहाभियोग-
निष्णातशुद्धमतिमन्दरमथ्यमाने ।
उद्द्योतमानममरैरनिशं निषेव्यं
नारायणाख्यममृतं प्रपिबामि चाद्यम् ॥
ध्येयं मुमुक्षुभिरमेयमनाद्यनन्तं [ 2755 ]
स्थूलं सुसूक्ष्मतरमेकमनेकमाद्यम् ।
ज्योतिस्त्रिलोकजनकं त्रिदशैकवन्द्य-
मक्ष्णोर्ममास्तु सततं हृदयेऽच्युताख्यम् ॥

चिन्तयन्निति विप्रेन्द्रो ययौ द्वारवती पुरीम् ।
मत्वा कृतार्थमात्मानं वाहयन्हयमुत्तमम् । [ 2760 ]

Colophon.

वैशंपायन उवाच ।

स निवेदितसर्वस्वो द्वाःस्थेन हि जनार्दनः ।
अथ प्रविश्य धर्मात्मा सुधर्मां वै द्विजोत्तमः ॥
अपश्यद्देवदेवेशं सुधर्माकृतिसंस्थितम् ।
बलभद्रेण संयुक्तमध्यासितमहासनम् ॥
अग्रतःस्थितशैनेयं पार्श्वतःस्थितनारदम् । [ 2765 ]
दुर्वाससा कृतकथमुग्रसेनपुरःसरम् ॥
गायद्गन्धर्वमुख्यैश्च नृत्यदप्सरसां गणैः ।
सेव्यमानं महाराज सूतमागधबन्दिभिः ॥
उद्गीयमानयशसं माधवं मधुसूदनम् ।
उद्गीयमानं विप्रैश्च सामभिः सामगैर्हरिम् ॥ [ 2770 ]
दृष्ट्वा प्रीतमना विष्णुं प्रोवाच पुलकच्छविः ।
नाम्ना जनार्दनोऽस्मीति ननाम चरणौ हरेः ।

---

-युतं ( for -युगं ). — ( L 2737 ) D6 G2 स्फुरत्किरीटकेयूररत्नार्चिर्बहुराजितम् — T1 om lines 2738–2739. D6 T4 G2 om line 2738 — ( L. 2738 ) Dn G3. 5 सव्ये द्योतन्; T2 G1. 4 सव्योद्यत- ( for सव्योद्धृत- ) T2 M1–3 -महाशङ्ख- ( for °ङ्खं ). — ( L 2739 ) Dn Ds2 T1 G1. 3–5 M1 चक्रज्वालाविराजितम्, D6 °प्रभासितम्, G2 °महासितम् ( for °ऽ ). — ( L. 2742 ) M1 3 गोविन्दम् ( for देवेशम् ) — ( L 2747 ) Dn T1 2 G श्रीकौस्तुभोद्भवरुचि- ( for श्रीहारकौस्तुभ- ) — ( L 2748 ) D6 T4 -पङ्कजालम्, G2 °जाङ्गम् ( for °जाक्षम् ) — ( L 2749 ) Dn Ds2 T2 G1 2 4 5 M2 -वर-, T1 -धर- ( for -दर- ) D6 T4 G2 -कृतोर्ध्वहस्तम् ( for -गदोर्ध्व° ). — Ds2 om lines 2751–2772 — ( L 2751 ) Dn विशद- ( for विविध- ) T2 -योगे ( for -योग- ) — ( L 2754 ) D6 प्रविशामि ( for प्रपिबामि ) Dn D6 वाद्य, T1 2 4 G1–4 चाद्य ( for चाद्यम् ) — ( L. 2755 ) D6 अनन्तमीड्य; T4 अनन्तमाद्यं ( for अनाद्यनन्तं ). — ( L. 2757 ) M2. 4 -जननं ( for °कं ) — ( L. 2758 ) G2 क्षेमं ( for अक्ष्णोर् ) D6 T4 हृदये ( for सततं ). D6 T4 अनिशम्, M2 घृतम् ( for हृदये ) — ( L 2760 ) D6 G2 कृत्वा ( for मत्वा ) M1 3 चोदयन् ( for वाह° ) D6 हरिम् ( for हयम् )

Colophon om in Ds2 —*Mention of Khila* Dn Ds2 T1 2 4 G1–4 M — *Adhy name* Dn हंसडिभकोपाख्यानम्, T1 2 G1 M4 हंसडिभकोपाख्याने जनार्दनकृतार्थताबुद्धि, T4 हंसडिभकोपाख्याने विप्रस्य द्वारवतीगमनम्, G3 जनार्दनकृतार्थताबुद्धि. — *Adhy no* Dn 297; T1 G3 225; G2 220, G4 224, M1–3 190, M4 226

G2 om the ref — ( L 2761 ) D6 T4 G2 ततो निवेदितः सद्यो ( for ° ) T4 G4 स ( for हि ) — ( L 2763 ) M4 अथ प्रविश्य देवेशं ( for ° ) D6 T1 4 G3 M1 4 -कृत-; M1. 3 -मध्य- ( for -कृति- ). — G3 om lines 2766–2770 — ( L 2766 ) Dn T1 2 G4 4 5 -पुरस्कृतम् ( for -पुर सरम् ). — ( L. 2769 ) D6 G2 M उत्कथ्यमानयशसं ( for ° ) — ( L. 2770 )

बलभद्रं ततो भूयो ववन्दे शिरसा द्विजः ॥
दूतोऽस्मि देवदेवेश हंसस्य डिभकस्य च ।
इति ब्रुवाणं विप्रेन्द्रमिदमाह स माधवः ॥ [ 2775 ]
आस्स्वेदं विष्टरं पूर्वं पश्चाद्ब्रूहि प्रयोजनम् ।
तथेति चाब्रवीद्विप्रो महदासनमास्थितः ॥
वाचा संपूज्य विप्रेन्द्रमपृच्छत्कुशलं हरिः ।
ब्रह्मदत्तस्य राजेन्द्र हंसस्य डिभकस्य च ॥
श्रुतं चापि तयोर्वीर्यं ततः प्रीतो द्विजोत्तम । [ 2780 ]
अपि वा कुशलं विप्र पितुस्तव जनार्दन ॥
संगतिश्च गिरीशात्तु श्रुता मे वीर्यतस्तयोः ।
इति श्रुत्वा गिरं विष्णोस्तथेत्याह जनार्दनः ॥
कुशलं ब्रह्मदत्तस्य पितुश्च मम केशव ।
तयोरेव जगन्नाथ हंसस्य डिभकस्य च ॥ [ 2785 ]

भगवानुवाच ।

किमाहतुर्महीपालौ तौ हंसडिभकौ नृपौ ।
ब्रूहि सर्वमशेषेण नात्र शङ्का द्विजोत्तम ॥
वाच्यं वाप्यथ वावाच्यं कर्तव्यमथ वेतरत् ।
श्रुत्वा तस्य विधास्यामो युक्तरूपं द्विजोत्तम ॥
दूतस्य सर्वथा विप्र न वाच्यावाच्यकल्पना । [ 2790 ]
यत्कर्म राजनिर्दिष्टं तद्वाच्यं दूतजन्मना ॥
नात्र शङ्का त्वया कार्या वक्तव्यस्येतरस्य वा ।
अतो वद यथाप्रोक्तं ताभ्यां मम जनार्दन ॥
केशवेनैवमुक्तस्तु प्रोवाचाथो जनार्दनः ।
अजानन्निव किं ब्रूषे सर्वं प्रत्यक्षदर्शिवान् ॥ [ 2795 ]
न चास्ति ते परोक्षं तु जगद्वृत्तान्तमच्युत ।
सर्वं हि मनसा पश्यन्कि त्वमात्थ वदेति माम् ॥
विद्वद्भिर्गीयसे विष्णो त्वमेव जगतीपते ।
इच्छया सर्वमाप्नोषि दृष्टादृष्टविवेचनम् ॥
त्वमेवेदं जगत्सर्वं जगच्च त्वयि तिष्ठति । [ 2800 ]
न त्वया रहितो ह्येकः पदार्थः सचराचरः ॥
नास्ति किंचिदवेद्यं ते सर्वगोऽसि जगत्पते ।
त्वमिन्द्रः सर्वभूतानां रुद्रः संहारकर्मकृत् ॥
रक्षितासि सदा विष्णो सर्वलोकस्य माधव ।
संसारस्य भवान्स्रष्टा किं त्वमात्थ वदेति माम् ॥ [ 2805 ]
विद्वद्भिर्गीयसे विष्णो ज्ञानात्मेति च माधव ।
प्राणं प्राणविदः प्राहुस्त्वामेव पुरुषोत्तम ॥

---

$D_6$ $G_{2\ 4}$ सामगै सामभिर्हरिम् ( for $^b$ ). — ( L 2772 ) Cal. ed. चरणे ( for चरणौ ) — ( L 2773 ) Dn $T_{1, 2}$ G $M_{2\ 4}$ देवं, $Ds_2$ कृष्णं ( for भूयो ) $Ds_2$ सहसा ( for शिरसा ) — $M_1$ om lines 2775–2776 — ( L 2775 ) $D_6$ $G_2$ यादव ( for माधव. ) — ( L 2779 ) $M_{1, 3}$ विप्रेन्द्र ( for राजेन्द्र ) $D_6$ ब्राह्मणस्तस्य राजेन्द्र ( for $^a$ ) — ( L 2780 ) $T_{1, 2\ 4}$ $G_{1\ 3, 4}$ $M_{2\ 4}$ अत. ( for तत ). Dn $G_5$ प्रयोजनमतो द्विज ( for $^b$ ) — After line 2781, $G_5$ ins :

21** इति श्रुत्वा गिरं विष्णोस्तथेत्याह जनार्दनः ।

— Dn om ( hapl ) lines 2782–2783 — ( L 2782 ) $D_6$ $T_{2\ 4}$ $G_3$ गिरीशस्य ( for °शात्तु ) $T_1$ पतिश्च गिरिशस्तस्य, $G_1$ M संगतिं च गिरीशस्य ( for $^a$ ) $T_1$ श्रुतो; $T_2$ कृता, $G_{1\ 2}$ M श्रुतं ( for श्रुता ) — Before line 2784, $Dn_2$ $D_6$ ins जनार्दन उवाच $T_2$ om lines 2784–2785 $G_2$ om line 2784. $D_6$ कृष्ण, $G_2$ om ( for भगवान् ) — ( L 2786 ) $D_6$ $M_{1, 3}$ उभौ ( for नृपौ ) — ( L 2787 ) $Ds_2$ ह्यविशङ्को, $G_6$ नात्र कार्या ( for नात्र शङ्का ) — $D_6$ om ( hapl ) lines 2788–2789. — ( L 2788 ) $Ds_2$ यदि ( for [अ]प्यथ ). $Dn_2$ $T_{2, 4}$ G $M_1$ चेतरत्; $M_4$ नेतरम् ( for वेतरत् ) — ( L. 2789 ) $Ds_2$ M तत्र ( for तस्य ) — ( L 2790 ) Dn $D_6$ $T_{1\ 2\ 4}$ G $M_{2\ 4}$ दूतोऽसि ( for दूतस्य ) — ( L 2791 ) $G_2$ धिक् ( for यत् ) Dn $T_{1, 2}$ $G_{1\ 3-5}$ राज्ञा ( for राज- ) Bom Poona eds G( ed ) यत्कर्मकारनिर्दिष्टं ( for $^a$ ) — ( L 2792 ) $D_6$ $G_2$ तत्र किं हि, $T_5$ न युक्तं हि ( for नात्र शङ्का ) $D_6$ $T_4$ कार्यं ( for कार्या ) — ( L 2793 ) $M_4$ अतोऽवदद्यथोक्तं तत् ( for $^a$ ) Dn $T_{1, 2}$ G इह, $D_6$ $T_4$ $M_{2\ 4}$ अथ ( for मम ) — $T_{1\ 4}$ om ( hapl ) line 2794 — ( L 2794 ) Dn $T_2$ G स; $D_6$ M [अ]थ ( for [अ]थो ) — ( L 2795 ) $T_1$ किमिदं ( for इव किं ) M सर्वं- ( for सर्वं ) — ( L 2797 ) $Ds_2$ त्वमद्य, $G_1$ माधव ( for त्वमात्थ ) — ( L 2798 ) $D_6$ ब्रह्मेव ( for त्वमेव ) $Ds_2$ -पति ( for -पते ) — $G_3$ om ( hapl ) lines 2799–2802 — ( L 2799 ) $T_2$ $G_2$ आप्नोति ( for °षि ) — ( L 2801 ) $D_6$ नास्ति, $T_4$ ह्यस्ति; $M_3$ ऽप्यस्ति ( for ह्येकः ) $Ds_2$ $M_{1\ 2}$ न ते विरह ( $M_2$ रहित ) एवैष ( for $^a$ ) $D_6$ पदार्थः स चराचरे ( for $^b$ ) — ( L 2802 ) $G_2$ सर्वथा हि ( for °गोऽसि ) — ( L 2804 ) $Ds_2$ ब्रह्मासि त्वं ( for रक्षितासि ) Dn $D_6$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_2$ विष्णु- ( for विष्णो ) — $Ds_2$ $G_3$ $M_{1\ 3\ 4}$ om. ( hapl ) lines 2806–2809. — ( L. 2806 )

शब्दं शब्दविदः प्राहुस्त्वामेव पुरुषोत्तम ।
तथा सति हृषीकेश किं त्वमात्थ वदेति माम् ॥
तथापि शृणु देवेश चोदितोऽसि यतस्त्वया । [ 2810 ]
वदेत्यसकृदेवैतत्तस्माद्वक्ष्यामि माधव ॥
राजसूयेन यागेन ब्रह्मदत्तोऽद्य यक्ष्यति ।
तदर्थं प्रेषितस्ताभ्यां हंसेन डिभकेन च ॥
करार्थं यदुमुख्येभ्यस्तव चामन्त्रणाय च ।
लवणं बहु देयं ते यज्ञार्थं तस्य केशव ॥ [ 2815 ]
इत्यर्थं प्रेषितस्ताभ्यां करं देहि तदाज्ञया ।
इदमप्यपरं ताभ्यामुक्तं शृणु जगत्पते ॥
लवणानि बहून्याशु प्रगृह्य त्वरितो भवान् ।
आगच्छतु तयो राज्ञोः सेयं केशव वाग्विभो ॥
इत्युक्तवति विप्रेन्द्रे दूते तत्र तयोर्नृप । [ 2820 ]
प्रहस्य सुचिरं कृष्णो बभाषे दूतमीश्वरः ॥
शृणु दूत वचो मह्यं युक्तमुक्तं द्विजोत्तम ।
करं ददामि ताभ्यां तु करदोऽस्मि यतो नृप ॥
धाष्टर्यमेतत्तयोर्विप्र मत्तो यत्तु करग्रहः ।
अहो धाष्टर्यमहो धाष्टर्यं तयोः क्षत्रियबीजयोः [ 2825 ]
इदमश्रुतपूर्वं मे मत्तो यस्तु करग्रहः ।
इत्युक्त्वा केशवो दूतमिदमाह स यादवान् ॥
हास्यमेतद्यदुश्रेष्ठा मत्तो यत्तु करग्रहः ।
यष्टासौ राजसूयस्य ब्रह्मदत्तो महीपतिः ॥
तौ तं याजयितारौ च हंसो डिभक एव च । [ 2830 ]
वोढा किल यदुश्रेष्ठा लवणस्य दुरात्मनोः ॥
करदो वासुदेवोऽहं जीवामि यदुसत्तमाः ।
हास्यं हास्यमिदं हास्यं शृणुध्वं यादवा वचः ॥
इत्युक्तवति दाशार्हे बलभद्रपुरोगमाः ।
यादवाः सर्व एवैते हासाय समवस्थिताः ॥ [ 2835 ]
करदः कृष्ण इत्येवं ब्रुवन्तः सर्वसात्वताः ।
हासं मुमुचुरत्यर्थं तलं दत्त्वा परस्परम् ।
तलशब्दो हास्यशब्दो रोदसी पर्यपूरयत् ॥
स च विप्रो नृपश्रेष्ठ निन्दयन्मैत्रमात्मनः ।
अहो कष्टमहो कष्टं दौत्यं यत्कृतवानहम् । [ 2840 ]
इति लज्जासमाविष्टस्तूष्णीमासीदवाङ्मुखः ॥

Colophon.

---

Dn $T_1$ $G_{1, 5}$ नित्यं ( for विष्णो ) $M_2$ ज्ञानात्मेतीह केशव ( for $^b$ ). — $G_2$ om ( hapl ) lines 2807-2811 — ( L. 2807 ) $T_2$ प्राणमिदं ( for °विद॰ ) $D_6$ $T_{2, 4}$ $M_2$ प्रोचुस् ( for प्राहुस् ) $M_2$ त्वामेव जगतीपते ( for $^b$ ) — ( L 2810 ) $D_6$ $T_4$ यथा ( for यतस् ) $Ds_2$ तथापि श्रूयतां देव ( for $^a$ ). — ( L 2812 ) $Ds_2$ $D_6$ देवेश ; $T_4$ देवेन , $G_2$ M यज्ञेन ( for यागेन ) $G_2$ ऽत्र ( for ऽद्य ) Dn $T_{2, 4}$ $G_{1, 2}$ $M_4$ यक्ष्यते ( for °ति ) — ( L. 2813 ) $D_6$ $G_2$ ततोऽहं , $T_4$ तयाहं ( for तदर्थं ) $Dn_2$ $Ds_2$ om lines $2813^b$–$2816^a$. — ( L 2817 ) Dn $T_{1, 2}$ G M त्वम् ( for अपि ) — ( L. 2819 ) $D_6$ $T_4$ तयोराज्ञां ( for तयो राज्ञो ) — ( L 2820 ) इत्युक्ते तत्र विप्रेन्द्रे ( for $^a$ ). — ( L. 2823 ) $M_{1, 2}$ नृपे ( for नृप ) — ( L 2824 ) $Ds_2$ अन्यत् ; $T_4$ एव ( for एतत् ). $T_{1, 2}$ $G_{1, 2, 4, 5}$ यस्तु ( for यत्तु ) — ( L 2825 ) $D_6$ वीर्यं ( for the second धाष्टर्यं ) $Dn_2$ Cal ed -वीरयो ( for -बीजयो ) — ( L 2826 ) $Ds_2$ यच्च , $D_6$ $M_2$ यत्तु ( for यस्तु ) — $M_4$ om ( hapl ) lines 2827-2828 $T_4$ om line 2827 — ( L 2827 ) $Dn_2$ $Ds_2$ $D_6$ यादवः ( for °वान् ) — $G_1$ $M_4$ om. ( hapl ) line 2828 — ( L 2829 ) $Ds_2$ राजसूयेन ( for °यस्य ) — ( L. 2831 ) Dn $T_1$, $G_{2, 4}$ $M_{3, 4}$ यदुश्रेष्ठो ( for °ष्ठा ) $Ds_2$ $G_{1, 5}$ दुरात्मनः. — ( L 2832 ) Dn $T_{1, 2}$ $G_{1, 3–5}$ जितोऽस्मि ( for जीवामि ) $M_3$ नृप- ( for यदु- ) — $M_4$ om lines 2833-2834 — ( L 2833 ) $T_2$ अस्य ( for the first हास्यं ) Dn $Ds_3$ $D_6$ $T_{1, 2, 4}$ $M_{1–3}$ भूय॰ ( for the third हास्यं ) — ( L 2834 ) Dn $T_{1, 2}$ $G_{1, 3–5}$ $M_2$ देवेशे ( for दाशार्हे ) — ( L 2835 ) $Ds_2$ शमाच्च ( for हासाय ) — ( L 2837 ) $Ds_2$ हास्यं ( for हासं ) $Ds_2$ तालान् ( for तलं ) — ( L 2838 ) बलदर्पा॰ ( for तलं दत्त्वा ) — ( L 2839 ) $Ds_2$ स विप्रो नृपतिश्रेष्ठ ( for $^a$ ) $G_{1, 2, 4}$ $M_4$ नन्दयन् , $G_3$ निदधन् , $G_5$ निन्दया ( for निन्दयन् ) Dn $Ds_2$ $D_6$ $T_{1, 2, 4}$ G $M_4$ मित्रम् ( for मैत्रम् ) — ( L 2841 ) $G_2$ -समायुक्तस् ( for °विष्टस् ). $M_1$ अधोमुख ( for अवाङ्मुख ).

Colophon :— *Mention of the Epic* $Ds_2$ — *Mention of Khila* Dn $Ds_2$ $D_6$ $T_{1, 2, 4}$ G M — *Adhy name* : Dn $Ds_2$ $T_{1, 2}$ $G_1$ हंसडिभकोपाख्याने वासुदेववाक्यम् , $G_3$ वासुदेववाक्यम् , M हंसडिभकम्. — *Adhy no* Dn 299, $Ds_2$ 298 , $T_1$ $G_3$ 226 ; $T_2$ $G_1$ 228 , $T_4$ 195 ; $G_4$ 121 ; $G_4$ 225 ; $G_5$ 227 , M 191.

वैशंपायन उवाच ।

हासं कुर्वत्सु तेष्वेवं केशवः केशिसूदनः ।
उवाच वचनं दूतं गच्छ मद्वचनाद्द्विज ।
तावित्थं हंसडिभकौ ब्रूहि त्वरितविक्रम ॥
बाणैर्दास्यामि निशितैः शार्ङ्गमुक्तैः शिलाशितैः । [ 2845 ]
नवनीताक्तकुसुमै. कङ्कपत्रैः सुवाजितैः ॥
असिना वाथ दास्यामि निशितेन महात्मनोः ।
शिरो वश्छेत्स्यते चक्रं मत्करप्रहितं बलि ॥
यो वरं दत्तवाञ्शर्वो युवयोर्धार्ष्ट्यकारणम् ।
स एव रक्षिता वां स्यात्तं जित्वा वा निहन्म्यहम् ॥ [ 2850 ]
देशोऽयं संविधातव्यो यत्र नः संगतिर्भवेत् ।
तत्र गन्ता तथा चास्मि सबलः सहसैनिकः ॥
भवन्तौ निर्भयौ भूत्वा गच्छेतां सबलौ नृपौ ।
पुष्करे वा प्रयागे वा मथुरायामथापि वा ।
तत्राहं सबलो याता नात्र कार्या विचारणा ॥ [ 2855 ]
अथ वा मित्रभावाच्च वक्तुमेवं त्वमक्षमः ।
न शक्यं यत्त्वया वक्तुं तत्तु वक्ष्यति सात्यकिः ।
त्वया सह ततो गत्वा साक्षिभूतो भव द्विज ॥
इदं च जाने विप्रेन्द्र स्नेहो मम सदा त्वयि ।
तेन त्वं विजयी भूयाः संसारे दुःखसंकुले । [ 2860 ]
मत्कथापरमो नित्यं सदा भव जनार्दन ॥

Colophon

वैशंपायन उवाच ।

इत्युक्त्वा ब्राह्मणं कृष्णः सात्यकिं पुनराह च ।
गच्छ शैनेय विप्रेण ब्रूहि मद्वचनात्तयोः ॥
यन्मयोक्तमशेषेण वद गत्वा तयोर्यदो ।
यथा नः संगतिर्युद्धे तथा वद बलाद्यदो ॥ [ 2865 ]
धनुरादाय गच्छ त्वं बद्धगोधाङ्गुलित्रवान् ।
एकेनाश्वेन गच्छ त्वमसहायो यदूत्तम ॥
सात्यकिस्तं तथेत्युक्त्वा हयमारुह्य शीघ्रगम् ।
गन्तुमैच्छत्ततो राजन्नसहायः स सात्यकिः ॥
जनार्दनं विसृज्याशु दूतं तं यादवेश्वरः । [ 2870 ]
अहो धार्ष्ट्यमहो धार्ष्ट्यमित्युवाच जनार्दनः ॥
नमस्कृत्य ततो दूतो माधवं यादवेश्वरम् ।
स ययौ साल्वनगरं शैनेयेन सह द्विजः ॥
ततः प्रविश्य धर्मात्मा ब्राह्मणो ब्रह्मवित्तमः ।
आसनं महदास्थाय विसृज्य यदवे पुनः । [ 2875 ]
आस्ते यथासुखं विप्रः शैनेयेन समन्वितः ॥
अथ तं हंसडिभयोर्दर्शयामास सात्यकिम् ।
दूतोऽयं सात्यकिः प्राप्तः सव्यो बाहुरयं हरेः ॥

---

( L. 2842 ) Ds2 T4 G2 हास्यं ( for हासं ).— ( L 2843 ) Dn1 Ds2 D6 T4 G2 4 M1–3 वद ( for द्विज ) — Dn Ds2 om line 2846 —( L 2846 ) D6 M1–2 -सुमुखै ( for -कुसुमै ). T1 नवनीतार्द्रकुसुमै ( for ᵃ ) —( L 2847 ) Ds2 महामते ; D6 T1 4 G2 M1–3 °त्मना ( for °त्मनो ) — ( L. 2848 ) Ds2 मत्करात् ( for °र- ) Ds2 तयो , D6 बलात् , T2 G1 M1 4 बलिम् ( for बलि ) —( L 2849 ) Dn T1, 2 4 G1 4 5 रुद्रो ( for शर्वो ) Ds2 वर दत्तं च शर्वेण ( for ᵃ ). — ( L 2852 ) T4 गत्वा ( for गन्ता ) Dn T1 2 G1, 3 5 -वाहन ( for सैनिक ) — ( L 2855 ) Ds2 यामि ( for याता ) —( L 2856 ) Dn T1 2 G1–3 5 न ते क्षमम् , D6 T4 M1 न च क्षम॰ , G4 न च क्षमम् ( for त्वमक्षम ) — ( L 2859 ) Ds2 इदं हि वक्ष्यते विप्र ( for ᵃ ) M1 3 तव ( for त्वयि ). — ( L 2860 ) Dn Dn G1, 2 4 M4 भूत्वा ; Ds2 भूतः ( for भूया. )

Colophon. — *Mention of the Epic* Ds2 — *Mention of Khila* . Ds2 D6 T1, 2 4 G M — *Adhy. name* Dn2 G4 M1–3 हसडिभकोपाख्यानम् Ds2 M4 हंसडिभकम् ; T1, 2 G1 हंसडिबकोपाख्याने वासुदेवकथनम् , G3 वासुदेवकोपकथनम् — *Adhy no* Dn Ds2 299 , T1 G2 227 ; T2 G1 219 , T4 196 , G2 222 , G4 126 , G5 228 , M 192

Dn1 G2 om ; Ds2 भगवान् ( for वैशंपायन ). — ( L. 2862 ) M1, 3 विष्णु ( for कृष्ण. ) Dn2 इत्युक्त्वा भगवान्विष्णु ( for ᵃ ) Dn G1, 4 5 स ( for च ) — ( L 2863 ) Dn G1 3–5 गत्वा , G4 हत्वा ( for गच्छ ) — ( L 2864 ) G1 5 [अ]नयोर् ( for तयोर् ) Dn Ds2 G4 पुर॰ , D6 यथा , T4 G2 यदा ( for यदो ). — ( L. 2865 ) Dn तदा ; T4 यदा ( for यदो ) — ( L. 2871 ) M3 [उ]क्त्वा च ( for [उ]वाच ). M4 जनार्दनम् — T2 G1 3 om lines 2872–2876 — ( L. 2872) Dn T1 G5 M4 तदा दूतो , Ds2 D6 T2 G2 जगन्नाथं ( for ततो दूतो ). Dn Ds2 D6 T1, 4 G2 4 M माधवं माधवेश्वरम् ( for ᵇ ) —( L 2873 ) Dn D6 समन्वित॰ ( for सह द्विज॰ ). — D6 om ( hapl ) lines 2874–2876. — ( L. 2875 ) Dn Ds2 T1, 4 G2, 4 यादवे ( for य° ). —( L 2876 )

तस्य तद्वचनं श्रुत्वा हंसः प्राह वचस्तदा ।
श्रुत्या समागतः पूर्वमद्य दृष्टो मया त्वसौ ॥ [ 2880 ]
धनुर्वेदे च वेदे च शस्त्रशास्त्रे तथैव च ।
निपुणोऽयं सदा शूर इत्येवमनुशुश्रुमः ।
अद्य दृष्टिपथं प्राप्तः प्रीतिं मे विदधात्यसौ ॥
कुशलं वासुदेवस्य बलदेवस्य चापि वा ।
कुशलाः सात्वताः सर्वे उग्रसेनपुरोगमाः ॥ [ 2885 ]
तथेति सात्यकिः प्राह मन्दमुन्मिषिताननः ।
ततो जनार्दनं प्राह हंसो वाक्यविशारदः ॥
अपि दृष्टस्त्वया चक्री सिद्धं नः कार्यमीहितम् ।
वद सर्वमशेषेण मा वृथा कालमत्यगाः ॥

Colophon.

वैशंपायन उवाच ।
इत्युक्तवति हंसे च धर्मात्माथ जनार्दनः । [ 2890 ]
उवाच प्रसहन्वीरः स्तुवन्नारायणं तदा ॥
अद्राक्षमद्राक्षमहं जनार्दनं
करस्थचक्रं वरशङ्खधारिणम् ।
आतप्तजाम्बूनदभूषिताङ्गं
स्फुरत्प्रभाद्योतितरत्नधारिणम् ॥ [ 2895 ]
अद्राक्षमेनं यदुभिः पुरोगतं
संसेव्यमानं मुनिवृन्दमुख्यैः ।
संस्तूयमानं प्रभुबन्दिमागधैः
स्मितप्रवालारुणपल्लवाधरम् ॥
अद्राक्षमेनं कविभिः पुरातनै- [ 2900 ]
र्विविच्य वेद्यं विधिवत्सहामरैः ।
प्रफुल्लनीलोत्पलशोभितश्रियं
विनिद्रहेमाब्जविराजितोदरम् ॥
भूयोऽहमद्राक्षमजं जगद्गुरुं
प्रसादयन्तं वचनेन यादवान् । [ 2905 ]
निरूपयन्तं विधिवन्मुनीश्वरैः
प्रवृद्धवेदार्थविधि पुरातनैः ॥
अद्राक्षमद्राक्षमहं पुनः पुनः

---

Dn T1 G2 4 सुखं यदा ( for यथासुखं ) — ( L 2877 ) D6 T1 G3 M1–3 अथ हंसडिबकयोर् ( for ᵃ ) —( L 2878 ) T2 ऽहं ( for ऽयं ). D6 T4 G2 असौ ( for अयं ) — ( L 2880 ) Dn2 Ds2 G2 M4 श्रुत , T1 G3 5 दूत्या ,T2 G1 4 दूत्यं ( for श्रुत्या ) G1 समागतं, G2 M4 °गम. ( for °गतः ) — ( L 2881 ) G5 शास्त्रे ( for वेदे ). Dn T1 2 G1 3 M4 शास्त्रे शस्त्रे, Ds2 शास्त्रे शास्त्रे, G5 वेदशास्त्रे ( for शस्त्रशास्त्रे ) — ( L. 2882 ) Dn यः ( for ऽयं ) Ds2 M4 धीर ; D6 T4 M1–3 वीर ( for शूर ) — ( L. 2883 ) Dn T1 3 G1 ततो ; Ds2 D6 T4 M4 अथो, G2 अहो, M3 अतो ( for अद्य ) T2 प्राप्य ( for प्राप्त· ). Ds2 नो, Bom Poona eds G(ed) नौ ( for मे ). —( L 2884 ) Ds2 D6 T4 G M बलभद्रस्य ( for °देवस्य ) Ds2 वा पुनः (for चापि वा ) —( L 2886 ) G2 ततो हि ( for तथेति ) Ds2 G2, 3 5 मन्दमुन्मथिताननः ( for ᵇ ). —( L 2888 ) G4 संनद्धः ( for सिद्धं नः ) — ( L 2889 ) T2 अत्यगात् ( for °गाः )

Colophon — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 T1 2 4 G M — *Adhy name* Dn Ds2 T1 2 G1 हंसडिभकोपाख्याने हंसवाक्यम्; G3 हंसवाक्यम्, M2 4 हंसडिभकम् — *Adhy no* Dn Ds2 300, T1 G3 228, T2 G1 230, T4 197, G2 123, G4 227; G5 229; M 193.

D6 T1, 2, 4 G1, 2, 4, 5 M om. lines 2890–2891 with the ref Before, line 2892, Dn1 T2 4 G3 M ins जनार्दनः. —( L 2892 ) T3 G1 महाधन ( for जनार्दनं ). —( L 2893 ) Ds2 T1 4 G2 3 M हस्तस्थ· ( for करस्थ- ) T2 G1 4 5 -शङ्खं ( for -चक्रं ) Ds2 T1 2 4 G M -चक्र· ( for शङ्ख- ). — After line 2895, D6 ins :

22** अद्राक्षमेनं यदुभिः पुरातनै-
र्विविच्य वेद्यं विधिवत्सहामरैः ॥
प्रफुल्लनीलोत्पलशोभितश्रियं
विनिद्रहेमाब्जविराजितोदरम् ॥

—( L. 2896 ) Dn T1 2 G1 3–5 यतिभि , M4 कविभिः ( for यदुभि ) Dn Ds2 G2 M4 पुरातनै , D6 पुरागतैः ; T4 G4 पुरोगतै ( for °गतं ) —( L 2898 ) Ds2 प्रभुसूतमागधैः ; T4 G2 प्रभवादि°, G1 प्रभुभि स°, G4 5 मुनिवृन्दमुख्यैः ( for प्रभुवन्दिमागधैः ) —( L 2899 ) D5 लसत्· ( for स्मित- ). Ds2 G3 -प्रवालाधर ( for °रुण- ) Ds2 -पल्लवारुणम् ( for °धरम् ) — D6 om. lines 2900–2903. —( L 2900 ) M1–3 कृतिभि· ( for कविभिः ). —( L 2902 ) Dn G2 5 -शोभितं श्रिया ( for -शोभितश्रियं ) —( L 2904 ) D6 M1–3 अमुं, G3 इमं ( for अजं ) —( L 2905 ) Ds2 G2 प्रमोदयन्तं ( for प्रसाद° ) —( L 2906 ) T2 विविधं ( for विधि ; -वन् ) —( L 2907 ) Ds2 G1 4 5 प्रवृत्त-, D6 T4 प्रबद्ध- G2 प्रबुद्ध-, M1, 2 विवृद्ध-, M3 वेदान्त- ( for प्रवृद्ध- ). T2

समस्तलोकैकहितं प्रभुं हरिम् ।
वसन्तमस्मिञ्जगतो हिताय [ 2910 ]
जगन्मयं तं परिभूय शत्रून् ॥
भूयोऽप्यपश्यं सह यादवेश्वरै-
र्विक्रीड्य विक्रीड्य विहारकाले ।
रमन्तमीडयं रमयन्तमीश्वरा-
न्यदूत्तमान्यादवमुख्यमीश्वरम् ॥ [ 2915 ]
भूयोऽप्यपश्यं सरसीरुहेक्षणं
सार्धं तया भीष्मतनूजया हरिम् ।
वसन्तमम्भोनिधिशायिनं विभुं
भक्तप्रियं भक्तजनास्पदं हरिम् ॥
अद्राक्षमद्राक्षमहं सुनिर्वृतः [ 2920 ]
पिबन्पिबंस्तस्य वपुः पुनः पुनः ।
नेत्रेण मीलद्विवरेण केवलं
धन्योऽहमेवेति तदा व्यचिन्तयम् ॥
अद्राक्षमम्भोजयुगं दधानं
प्रभुं विभुं भूतभवप्रभावनम् । [ 2925 ]
आद्यं ककुद्मानमुरुं विभावसुं
संस्मृत्य संस्मृत्य तमेव निर्वृतः ॥

अद्राक्षं जगतामीशं वक्षोराजितकौस्तुभम् ।
वीज्यमानं हरिं कृष्णं चामराणां शतैः सदा ॥
युवां विद्वेषयुक्तेन चेतसा यादवेश्वरम् । [ 2930 ]
स्मरन्तं सर्वदा विष्णुं क्व वा तौ क्व च वेति वा ॥
कुतो द्रक्ष्यामि तौ मन्दौ कुतो वा मत्पुरोगतौ ।
ध्यायन्तमित्थं देवेशं करसंश्रवणात्तदा ॥
हसन्तमेवमद्राक्षं करं देहीत्यतः परम् ।
वदन्तं नारदे वाचं दुर्वाससि यतीश्वरे ॥ [ 2935 ]
ब्रह्मसूत्रपदां वाणीं दापयन्तं मुनीश्वरान् ।
दृष्ट्वा दृष्ट्वा हरिं देवं पुनः पुनरचिन्तयम् ॥
असाध्यमिदमारब्धं ताभ्यामिति नृपोत्तम ।
नारब्धव्यमिदं कार्यमितःप्रभृति भूमिप ॥
निवृत्ता सा कथा हंस यत्करग्रहणं तव । [ 2940 ]
एष तेऽशेषमखिलं वक्ष्यत्येव हि सात्यकिः ॥
एतद्वचनमाकर्ण्य हंसः क्रुद्धोऽब्रवीद्वचः ।
अरे ब्राह्मणदायाद का नाम तव वागियम् ।
आवयोः पुरतो वक्तुं त्रैलोक्यं जेतुमिच्छतोः ॥
मायया त्वां भ्रमत्येष कृष्णो लीलाविधानवित् । [ 2945 ]
तं दृष्ट्वा भ्रम एवैष तव संजायते महान् ॥

---

$G_{1.3-5}$ $M_{1-3}$ -निधिं (for -विधिं) — (L 2908) $G_2$ पुरातनं (for पुन पुन.) — (L 2909) $Ds_2$ $D_6$ $T_4$ $G_2$ -हितैषिणं (for हितं प्रभुं) — (L 2911) $Ds_2$ $G_{1.2.4.5}$ $M_4$ तान् (for तं) — $G_2$ om lines 2912–2915. — (L 2913) $T_4$ $G_4$ विक्रीड्यमानं च (for °ड्य विक्रीड्य) — (L 2914) $M_{1.2}$ ईशान् (for ईश्वरान्) — (L 2917) $Ds_2$ $T_4$ $G_{1.4.5}$ समेतया (for सार्धं तया) — (L 2918) $Dn_2$ $D_6$ $T_4$ हरिं (for विभुं) — (L 2919) $Dn_2$ विभुम्, $Ds_2$ $D_6$ $T_4$ $G_2$ M शिवम् (for हरिम्). — $M_1$ om lines 2920–2923 — (L 2921) $Ds_2$ $D_6$ $T_4$ $G_2$ पुरातनम् (for पुन· पुनः). — (L. 2922) $Ds_2$ मौलिभ्रमरेण, $M_{2.3}$ मीलविरहेण (for मीलद्विवरेण). — (L 2923) Dn $Ds_2$ $T_2$ $G_2$ $M_4$ आसि (for एव) $T_1$ $G_{1.3}$ विचिन्तयन् (for व्यचिन्तयम्) — (L 2924) $T_1$ सनातनं (for दधानं) — (L 2925) $D_6$ भवं (for विभुं). $Ds_2$ भूतमयं विभावनम्; $D_6$ $M_{1-3}$ °भवविभावनम्, $T_1$ °भवं च भव्यम्, $G_2$ °भवाय भाविनम् (for °भवप्रभावनम्) — (L, 2928) $Ds_2$ चकोरीचक्रकौस्तुभम् (for $^b$). —(L 2930) $M_{1.2}$ युष्मद्विद्वेषयुक्तेन (for $^a$). —(L 2931) $Ds_2$ स्मरन्तौ, $T_2$ $G_2$ °तां (for °न्त) Bom Poona eds. G(ed) क्व चैवं क्व च वेत्ति क्व (for $^b$) —(L 2932) $Ds_2$ $D_6$ $T_4$ $G_2$ M क्व च, $T_1$ क्व तु (for कुतो) — (L 2933) $D_6$ गायन्तम् (for ध्याय°) $Ds_2$ इव, $D_6$ अर्थं (for इत्थं) $M_{1-3}$ तव (for तदा) $Ds_2$ $G_2$ करे शङ्ख (G2 शत्रु) वहं सदा (for $^b$). — (L 2934) $Ds_2$ $T_1$ $G_{1.2}$ $M_4$ एनम् (for एवम्) — (L 2935) $D_6$ यतीश्वरैः (for °श्वरे) — (L 2936) $Ds_2$ दीपयन्तं, $D_6$ $T_4$ गाय° (for दाप°) Dn $Ds_2$ $G_{1.2.4.5}$ मुनीश्वरम्, $D_6$ $T_4$ यतीश्वरान् (for मुनी°). — (L 2937) $Dn_2$ $G_4$ $M_{1.3}$ [अ]हं त, $D_6$ $T_4$ चाह (for the second दृष्ट्वा). $M_1$ विष्णुं (for देवं) $Ds_2$ अवीवदम् (for अचिन्तयम्) — (L 2940) $Ds_2$ निवृत्तोऽस्मि (for °त्ता सा). Bom Poona eds G(ed) [अ]चिन्तयद्, Cal ed यत्कथा- (for यत्कर-) — (L 2941) Dn ते सर्वम्, $Ds_2$ तद्वृत्तम् (for तेऽशेषम्). Bom Poona eds G(ed) तद्वृत्तमखिलं सर्वं (for $^a$) $Ds_2$ वदिष्यति (for वक्ष्यत्येव) — Before line 2943, Dn $Ds_2$ ins हंस उवाच — (L 2943) $M_{1.2}$ रे रे (for अरे). $Ds_2$ G(ed) तन्मा मातेव वाचि तत् (for $^b$).

शङ्खचक्रगदाशार्ङ्गवनमालाविभूषितम् ।
वृष्णिवीरसमावेशसमुद्धृतयशोधरम् ॥
सूतमागधसंस्तावप्रकटद्वीरबाहुकम् ।
अत्यद्भुतयशोराशिविलसच्छ्लोकमण्डलम् ॥ [ 2950 ]
चतुर्भुजबलाक्रान्तवृष्णियादवसंसदम् ।
अहोऽद्य भ्रम एवैष दर्शनात्तस्य चक्रिणः ॥
इदानीं च महात्मासौ भ्रामयत्येव केशवः ।
त्वामेव विप्र मन्दात्मन्निन्द्रजालकृता हि सा ॥
चापल्यमिदमेवैतत्त्वेव विप्र समुद्भवम् । [ 2955 ]
अहो नु खलु सादृश्यं कर्तव्यं भवता मम ॥
अहमेतत्त्वया विप्र मर्षयेऽत्रोदितं वचः ।
सखिभावाद्द्विजश्रेष्ठ अन्यथा कः सहेदिदम् ॥
गच्छ मन्दमते विप्र यथेष्टं सांप्रतं त्वितः ।
गच्छ गच्छ यथेष्टं त्वं पृथिवी पृथिवी तव ॥ [ 2960 ]
जित्वा गोपालदायादं हत्वा यादवकान्बहून् ।
एष नः प्रथमः कल्पो जेष्याम इति यादवान् ।
गच्छ नेच्छामि विप्र त्वां द्रष्टुं परुषवादिनम् ॥
शत्रुपक्षस्तुतिपरं सह भुक्त्वा सदा मया ।
न मे विप्रवधः कार्यः कष्टायामपि चापदि ॥ [ 2965 ]
इत्युक्त्वा ब्राह्मणं हंसो भूयः सात्यकिमब्रवीत् ।
अरे यादवदायाद किमर्थं प्राप्तवानिह ।
किमब्रवीन्नन्दसुतः किं वा मे नादिशत्करम् ॥

सात्यकिरुवाच ।

इदं तस्य वचो हंस शङ्खचक्रगदाभृतः ।
शरैर्निशितधाराग्रैः शार्ङ्गमुक्तैः शिलाशितैः ॥ [ 2970 ]
दास्यामि करसर्वस्वमसिना वा शितेन च ।
शिरश्छेत्स्यामि ते हंस करदानस्य संग्रहम् ॥
धाष्ट्यं हि तव मन्दात्मन्किमतोऽपि नृपाधम ।
देवदेवाज्जगन्नाथात्करमिच्छति यो नृपः ।
तस्यैष करसंक्षेपो जिह्वाच्छेदो नराधम ॥ [ 2975 ]
तस्य शार्ङ्गरवं श्रुत्वा शङ्खस्य च हरेः पुनः ।
को नाम जीवितं काङ्क्षंस्तिष्ठेदानीं त्वमद्य वै ।

— (L 2944) Ds2 इच्छति (for °तोः) — (L 2945) G3 भ्रमयति, M3 °त्येव (for °त्येष) Ds2 मायया भ्रामयत्येष, T1 2, 4 G1 2 4 °या त्वां भ्रमयति, M1 2 4 °या त्वां भ्रामयति (for $^a$) — (L 2948) Dn G4 5 -समावेशे (for समावेश-) Ds2 G2 M4 वृष्णिवीरं समावेश्य (for $^a$) Ds2 G2 M4 -समुच्छ्रित-, G4 °द्धृत (for °द्धृत-). Dn M4 -यशोधनम् (for °धरम्) — (L 2949) Ds2 T2 G1 2 4 5 -द्वारबाहुकम् (for -वीर°) — (L 2950) Ds2 D6 T1 2 G M4 -राशिं (for -राशि-) Ds2 G2 विक्रमाल्ल् (for -विलसल्ल्) Ds2 -मण्डनम् (for °लम्) — (L 2951) Ds2 T4 G2 चतुर्भुजं Dn1 Ds2 T1 2 -बलाक्रान्तं, T4 -भुजाक्रान्त-; G2 च वि° (for -बला°). G1, 5 चतुर्भुजं बलाक्रान्तं (for $^a$) Dn1 -संमदम्; Ds2 G1 2 -संमतम्, T1 -नन्दनम् (for -संसदम्). — (L 2952) G2 3 तव (for तस्य) — (L 2953) Ds2 महाराज, D6 G2 3 M °त्मा सः, T1 2 °त्मानं (for °त्मासौ) T1 G3 [ए]-ष (for [ए]व) Ds2 दुर्मति. (for केशव·). — (L 2954) Dn G2, 5 या, Ds2 ते (for सा) Dn G2 4 M1 ऐन्द्रजालिकता हि सा; D6 T1 2 G1 3 M2 3 इन्द्रजालिकता हि सा (for $^b$) — (L 2955) Ds2 यद्बाल्यम् (for चाप°) Ds2 भ्रमोद्भवम् (for समु°) — (L 2956) Dn2 D6 T4 G2 न; G3 M1–3 तुं (for नु) M1–3 चापल्यं (for सादृश्य) Ds2 D6 T4 G2 M वक्तव्यं (for कर्तव्यं). — (L 2957) Dn D6 T4 G2, 3 M3 एव (for एतत्) D6 T4 चोदितं (for [अ]त्रो°). — (L 2958) M1–4 सख्यभावाद् (for सखि°) T1 G3, 5 इमम् (for इदम्) — (L 2959) D6 T3 G2 पृथिवीं (for यथेष्टं) Dn द्विज (for त्वितः) — G4 om lines 2960–2962 D6 T4 G2 om. line 2960 — (L 2960) Ds2 M4 द्विज (for the first गच्छ) — G4 om lines 2961–2962 — (L 2961) M1–3 जेष्ये (for जित्वा). Dn1 जित्वा (for हत्वा) Ds2 वै यादवान् (for यादवकान्) — (L 2963) Dn Ds2 D6 T1 2 4 G M4 गच्छेति (for नेच्छामि) Dn Ds2 T1, 2 G1, 3–5 विप्रं तं, D6 T4 विप्रेन्द्रं (for विप्र त्वां) Dn Ds2 T1 G2–5 घृष्टं; T2 G1 भ्रष्टं (for द्रष्टुं). — (L 2964) Dn -स्तुतिपरः (for °रं) Bom Poona eds G(ed) युक्त्वा (for भुक्त्वा) — (L 2965) Dn Ds2 D6 T1 2 4 G M4 कष्टादपि हि सर्वतः (for $^b$). — (L. 2967) Ds2 G2 4 भो भो, M1 2 रे रे (for अरे) M1 2 असि (for इह) — (L 2968) D6 T4 G2 नाददात्, G3, 4 आदिशत् (for नादि°) — (L 2969) Ds2 T4 G2 4 सत्यं (for तस्य) — (L 2970) T2 G1 3 -धारैश्च (for -धाराग्रैः) — (L. 2971) तव (for कर-) Ds2 T4 G1 निशितेन (for वा शि°). — (L 2972) M1 2 संग्रह — (L 2973) Dn T1, 2 G1, 3 5 धाष्ट्यं धाष्ट्यं तव महन्मन्दात्मन्किमतोऽपि वा — (L. 2974) Dn T1 G3 5 नृपाधम (for देवदेवाज्) Dn T1 2 G1, 3 5 नरः (for नृपः). — G2 om lines 2975–2978 — (L.

गिरीशवरदर्पेण ब्रूयादसदृशं वचः ॥
सहाया वयमेवैते बलभद्रपुरोगमाः ।
प्रथमो बलभद्रोऽसौ द्वितीयोऽहं स सात्यकिः ॥ [ 2980 ]
कृतवर्मा तृतीयस्तु चतुर्थो निशठो बली ।
पञ्चमोऽथ च बभ्रुस्तु षष्ठश्चैवोत्कलः स्मृतः ॥
सप्तमः सारणो धीमानस्त्रशस्त्रविशारदः ।
अष्टमस्त्वथ सारङ्गो नवमो विपृथुस्तथा ।
दशमश्चोद्धवो धीमान्वयमेते बलान्विताः ॥ [ 2985 ]
तस्यैते पुरतो गोप्तुः शङ्खचक्रगदाभृतः ।
देवदेवस्य युद्धेषु तिष्ठन्त्येव दिवानिशम् ॥
यौ हि वीरौ सुतौ तस्य स्वात्मना सदृशौ बले ।
तावेव वां क्षमौ युद्धे हन्तुं बलमदान्वितौ ॥
यो गिरीशो गिरावेव वरं दत्त्वा स तिष्ठति । [ 2990 ]
युवां हि केवलौ युद्धे तिष्ठथः सशरं धनुः ।
गृहीत्वा शत्रुभिः सार्धं युद्धं कर्तुं समुद्यतौ ॥
ईदृशेष्वथ भृत्येषु युद्धं कुर्वत्सु शत्रुभिः ।
त्रैलोक्यं रक्षतस्तस्मात्करमिच्छन्व्रजेत कः ॥
हनिष्यत्येष वां युद्धे त्रैलोक्यं योऽद्य रक्षति । [ 2995 ]
शरेण निशितेनाजौ शार्ङ्गमुक्तेन केवलम् ॥
क नः संग्राम इत्येवं पुनराह जगत्पतिः ।
पुष्करे पुण्यदे नित्यमुत गोवर्धने गिरौ ॥
मथुरायां प्रयागे वा दर्शयेतां बलानि मे ।
शङ्खचक्रधरे देवे जगत्पालनतत्परे ॥ [ 3000 ]
राजसूयं महायज्ञं यष्टुमिच्छति कः स्वयम् ।
वदन्वा स्वस्तिमान्मर्त्यस्त्वां विना को व्रजेत्सुखम् ॥
इदं जाड्यमिदं मौढ्यमिदमत्यद्भुतं वचः ।
इदमिच्छसि चेन्मूढ हास्यतां यासि भूतले ।
इत्युक्त्वा सात्यकिर्वीरो हसन्निव विभो स्थितः ॥ [ 3005 ]

Colophon.

वैशंपायन उवाच ।
ततः क्रुद्धो महाराज हंसो डिभक एव च ।
इदं प्रावोचतां वाक्यं रोषव्याकुलितेक्षणौ ॥
दिधक्षन्तौ दिशः सर्वाः सर्वान्वीक्ष्य नृपोत्तमान् ।
करं करेण निष्पीड्य स्मरन्तौ तद्वचो महत् ॥
क नु क वा नन्दसूनुः क वा रामो बलोत्कटः । [ 3010 ]
इति ब्रुवाणौ साक्षेपौ सात्यकिं सत्यसंगरम् ॥

---

2975 ) G3 नृपाधम ( for नरा° ) — ( L 2977 ) D6 को नाम जीविताकाङ्क्षी ( for ^a ) T2 G1 5 तिष्ठत्यावेलमत्र वै ( for ^b ) — ( L 2978 ) D6 M2 3 -गर्वेण ( for -दर्पेण ) Dn G2 M4 को ब्रूयादीदृशं वच ( for ^b ) — ( L 2981 ) G5 तृतीय कृत-वर्मा च ( for ^a ) — ( L 2982 ) D6 कङ्कस् ( for बभ्रुस् ). M1 [उ]न्मुख , M2–4 [उ]ल्मुकः ( for [उ]त्कल ) D6 षष्ठस्तु विपृथु स्मृत. ( for ^b ) — ( L 2983 ) Dn G3 4 तारणो ( for सा° ). D6 T4 G2 सप्तमस्तु महाराज यादव· कञ्ज एव हि — ( L. 2984 ) D6 T4 G2 नवमोऽपि विदूरथ. ( for ^b ). — ( L 2986 ) Dn Ds2 T1 2 G त एते ( for तस्यैते ) Dn2 M2 3 गोप्तुं ( for गोप्तुः ) — ( L 2987 ) D6 T4 G2 महाबला ( for दिवानिशम् ). — Dn G5 om line 2988. — ( L 2988 ) Ds2 T1. 2 G1 4 नासत्यसदृशौ बले ( for ^b ) — ( L 2989 ) D6 काङ्क्षितौ ( for वां क्षमौ ) Dn2 हन्तुं मदबलान्वितौ ( for ^b ) — ( L 2990 ) T2 G1 5 गिरा देवो, G2 हि वरदो ( for गिरा-वेव ) Dn T1 G3 [अ]धि- , T2 G1 5 [अ]थ ( for स ). — ( L 2991 ) Dn T1 G5 केवलं ( for °लौ ) — ( L 2992 ) Dn समावृतौ ( for समुद्यतौ ) — ( L 2994 ) T2 रक्षणात् ( for रक्षतस् ) — ( L 2997 ) G2 पक्ष· ( for क न· ) — ( L 2998 ) Dn G3. 5 पुण्यगे ( for °दे ). G1 सुखम् ( for गिरौ ). — ( L 2999 ) Bom Poona eds G( ed ) दर्शयन्तौ ( for °येता ) — ( L 3000 ) D6 शङ्खचक्रधरो देव ( for ^a ) — ( L 3001 ) Ds2 D6 T1 2 G1–3 5 M1 2 4 कर्तुम् ( for यष्टुम् ) — ( L 3003 ) G1 बाल्यम् ( for जाड्यम् ) T2 मौर्ख्यम् ( for मौढ्यम् ) — ( L 3004 ) Ds2 कर्तुं ( for मूढ ). — ( L 3005 ) Dn G5 भुवि , Ds2 T2 G1 4 M4 विभु , G3 बहु ( for विभो ) D3 T4 G2 जगत्पते ( for विभो स्थितः )

Colophon — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 D6 T1. 2 G M — *Adhy name* Dn Ds2 T1 2 G1 3 हंसडिभकोपाख्याने सात्यकिवाक्यम् ; M हंसडि-भकम्. — *Adhy no* Dn Ds2 301 ; T1 G3 229 ; T2 G1 231 ; G2 224 , G4 227 ; G5 230 ; M1–3 194 ; M4 193.

T2 G4 om the ref. — ( L 3006 ) Bom Cal. eds. क्रुद्धौ ( for क्रुद्धो ) — ( L 3007 ) Dn Ds2 T1 2 G1 3–5 वै प्रोचतुर् ( for प्रावोचतां ) D6 कोप- ( for रोष- ) — ( L. 3008 ) Dn2 दश दिश ( for दिशः सर्वा ) — ( L 3009 ) Ds2 T2 G1 2 5 करेण निष्पीड्य करं ( for ^a ). G2 कवचं ( for तद्वचो ). — ( L 3010 ) M1–3 नन्दसुत. ( for °सूनु ). D6 T4 क नु नन्दसुत कृष्ण· ( for ^a ). D6 G2 M1–3 मदोत्कट., T4

अरे यादवदायाद किं ब्रूषे नः पुरोगतः ।
इतो निर्गच्छ मन्दात्मन्दूतस्त्वमसि सांप्रतम् ॥
अन्यथा वध्य एव त्वं प्रलपन्परुषं वचः ।
सत्यं निर्लज्ज एवासि यद्ब्रूया ईदृशं वचः ॥ [ 3015 ]
आवामिदं जगत्सर्वं शासितुं संयतौ नृपौ ।
को नाम मानुषे लोके करदो नैव जीवति ॥
हत्वा गोपालकं संख्ये बध्वा यादवकान्बहून् ।
गृह्णीम करसर्वस्वं ततो गच्छ नराधम ॥
अवध्यो दूततां प्राप्तो बह्वबद्धं प्रभाषसे । [ 3020 ]
ईश्वरो नौ वरं दाता ब्रह्माणामपि च प्रभुः ॥
रक्षितारौ महाभूतौ संग्रामं गच्छतोश्च नौ ।
पितरं याजयिष्यावो हत्वा गोपालकान्रणे ॥
एते प्रोक्ता भृशं युद्धे कातराः सर्व एव ते ।
हत्वा तान्सबलान्युद्धे पुनर्जेष्याव केशवम् ॥ [ 3025 ]
संस्कर्तव्या महासेना प्रगृहीतशरासना ।
गृहीतप्रासमुसला गृहीतकवचा सदा ॥
आरूढरथसाहस्रगदापरिघसंकुला ।
सुप्रभूतेन्धनवती प्रभूतयवसाकुला ॥
प्रभूतबलसंयुक्ता सकुटीका सतोमरा । [ 3030 ]
सच्छत्रा सध्वजा चैव सभटा साधु साम्बरा ॥
कल्प्यतां वाहिनी घोरा बलाध्यक्षाः समन्ततः ।
अवध्य एव गच्छ त्वं न ते मरणतो भयम् ॥
संग्रामः पुष्करेऽस्माकं श्वः परश्वोऽपि वा नृप ।
ततो ज्ञास्यावहे वीर्यं केशवस्य बलस्य च । [ 3035 ]
ये त्वयोक्ता नृपाः संख्ये तेषामपि च यद्बलम् ॥

सात्यकिरुवाच ।

एष गच्छामि वां हन्तुं श्वः परश्वोऽपि वा नृपौ ।
अद्यैव हि मया वध्यौ न चेद्दूतो भवाम्यहम् ॥
न हि श्वो वा परश्वो वा युवां कटुकभाषिणौ ।
दौत्यं हि दुःखमखिलं भवत्येव सदा नृणाम् ॥ [ 3040 ]
अन्यथाहं युवां हत्वा ततो यास्यामि निर्वृतिम् ।
स्ववीर्यं बाहुदर्पं च दर्शयंश्च नृपाधमौ ॥
शङ्खचक्रगदापाणिः शार्ङ्गधन्वा किरीटभृत् ।
नीलकुञ्चितकेशाढ्यो लम्बबाहुः श्रिया वृतः ॥
स सर्वलोकप्रभवो विश्वरूपः सुरूपवान् । [ 3045 ]
दैत्यदानवहन्तासौ योगिध्येयः पुरातनः ॥

---

बलोद्धत ( for °त्कट ) — ( L 3011 ) $D_6$ $T_4$ $G_2$ $M_{1-3}$ साक्षेप ( for °पौ ) — ( L 3012 ) $T_{1\ 2}$ $G_{1\ 3-5}$ पुरो वद ; $T_4$ $G_2$ $M_4$ पुरो नृप ( for पुरोगत ). — ( L 3015 ) $D_6$ $M_3$ स त्वं ( for सत्य ) $T_4$ $G_2$ यादृशं ( for ई° ) — ( L 3016 ) $T_2$ शासितौ ( for °तुं ) $T_4$ शंसतौ, $G_2$ शासितौ ( for संयतौ ) — ( L 3017 ) $D_6$ $T_4$ $G_2$ करं मे न ( $T_4$ नो ) ददाति वै ( for $^b$ ). — ( L 3018 ) $M_1$ युद्धे ( for संख्ये ). Dn $T_{1\ 2}$ $G_{1.\ 3-5}$ हत्वा गोपालकान् सर्वान् ( for $^a$ ) $M_1$ हत्वा ( for बध्वा ). $Ds_2$ बलात् ( for बहून् ) — ( L 3019 ) $D_6$ $T_4$ $M_4$ नृपाधम ( for नरा° ). — ( L 3021 ) Dn $D_6$ $M_2$ नो ( for नौ ) $G_2$ दद्याद् ( for दाता ) — ( L 3022 ) $Ds_2$ तै. ; $T_4$ तौ ( for नौ ) — $D_6$ $T_4$ $G_4$ om lines 3023–3029 — ( L 3023 ) $Ds_2$ $G_{3.\ 5}$ M जित्वा ( for हत्वा ) $Ds_2$ $G_{1\ 3}$ $M_{1-3}$ गोपालकं ( for °कान् ). — ( L 3024 ) M नृपा ( for भृशं ) — ( L 3025 ) $Ds_2$ जेष्यामि ; $T_{1\ 2}$ $M_{1-3}$ °म ( for °व ) — ( L 3026 ) Dn $G_1$ संहर्तव्या, $T_1$ सस्म° ( for संस्क° ) — ( L 3028 ) $Ds_2$ $T_2$ $G_{.\ 3-5}$ $M_{?.\ 4}$ साहस्रा ( for साहस्र ) — ( L 3029 ) Dn $T_{1\ 2}$ $G_{1\ 3-5}$ प्रभूतबलसाधना ( for $^b$ ) — $Ds_2$ om lines 3030–3331. — ( L. 3030 ) $T_4$ $G_2$ -संपन्नौ ( for -संयुक्ता ). $D_6$ $T_4$ $G_2$ सकुठाराः ( for °टीका ) $T_4$ $G_2$ सतोमरौ. — ( L. 3031 ) $D_6$ $T_4$ $G_2$ $M_4$ वीरा ( for चैव ) $D_6$ $T_4$ $G_2$ सुभगा ( for सभटा ) $Dn_2$ $D_6$ $T_{1\ 2}$ $G_{1\ 3}$ सभटा सायुधाम्बरा ( for $^b$ ). — ( L 3032 ) $T_4$ $G_2$ चाल्यतां ( for कल्प्यता ) $M_{1-3}$ बलाध्यक्षैः ( for °क्षाः ) — ( L 3033 ) $T_4$ वध्याश्च ( for अवध्य ). $D_6$ मृत्युर्न ते ( for मरणतो ) — ( L 3035 ) $Ds_2$ $D_6$ $T_{1\ 2}$ $G_{1-4}$ M ज्ञास्यामहे ( for °वहे ) $T_2$ सर्वं ( for वीर्यं ) — ( L. 3036 ) $M_3$ सर्वे ( for संख्ये ) Cal ed मयि ( for अपि ). — $G_4$ om the ref — ( L 3037 ) $Ds_2$ हंस, $T_1$ $G_1$ हंसा ( for एष ) $T_2$ गच्छामहे ( for °मि वां ) $Ds_2$ $T_{1\ 2\ 4}$ $G_{1\ 4\ 5}$ $M_4$ नृप. ( for नृपौ ) — ( L 3040 ) $Ds_2$ $G_{1.\ 2\ 4\ 5}$ दौत्ये हि, $T_1$ भवद्भया, $T_2$ दूत्य हि ( for दौत्यं हि ) $Ds_2$ $T_{1.\ 2\ 4}$ G M अतुलं ( for अखिलं ) $Ds_2$ $G_4$ वहामि, $D_6$ सहति, $T_4$ $G_2$ M वहति ( for भवति ) $D_6$ $G_3$ नृप ( for नृणाम् ) — ( L. 3041 ) $D_6$ $T_4$ $G_2$ युद्धे हत्वा ( for हत्वा ततो ) $T_{1\ 2}$ $G_{1.\ 4}$ निर्वृंत, $G_3$ निष्कृतम् ( for निर्वृतिम् ) — ( L 3042 ) $M_4$ बल- ( for बाहु- ). $Ds_2$ $G_5$ $M_2$ दर्शयन्वां, $D_6$ $T_4$ $G_2$ °यस्व ; $T_1$ °येयं ( for °यंश्च ) $T_{1\ 2}$ $G_{1\ 3\ 4}$ नृपोत्तमौ ( for नृपाधमौ ). — ( L 3045 ) $G_2$ विरूपाक्ष ( for विश्वरूपः ). — ( L.

पद्मकिञ्जल्कवदनः श्यामलः सत्यविक्रमः ।
सृष्टिस्थितिलयस्यैकः कर्ता त्रिजगतां पतिः ॥
शरेण निशितेनाजौ दर्पं वां व्यपनेष्यति ।
इत्युक्त्वा रथमारुह्य प्रतस्थे सात्यकिः किल ॥ [ 3050 ]

Colophon

वैशंपायन उवाच ।
स प्रविश्य पुरं विष्णोः सात्यकिः शिनिपुंगवः ।
आचचक्षेऽथ कृष्णाय यथा वृत्तं तयोस्तदा ॥
ततः प्रभाते विमले केशवः केशिसूदनः ।
बलाध्यक्षानुवाचेदं कृतमङ्गलतत्परः ॥
संनह्यन्तां बलं सर्वं रथकुञ्जरवाजिमत् । [ 3055 ]
अनेकभेरीपणवप्रासासिपरिघाकुलम् ॥
सध्वजं सपताकं च सालंकारपरिच्छदम् ।
तथेति ते प्रतिश्रुत्य सर्वं चक्रुरनीकपाः ॥
आदाय सुदृढं चाप रथमारुह्य दंशिताः ।
अग्रतो जग्मुरत्यर्थं सेनायाः पुरुषोत्तमाः ॥ [ 3060 ]
वनमाली हली रामो नीलवासाः सितप्रभः ।
बभौ सैन्याग्रतो राजन्नगामेन्द्रसमप्रभः ॥
सात्यकिश्च तथा राजन्प्रगृहीतशरासनः ।
बभौ क्रोधसमायुक्तो जगामाग्रे महाबलः ॥
अन्ये च यादवाः शूराः प्रगृहीतमहायुधाः । [ 3065 ]
सिंहनादं प्रकुर्वन्तो जग्मुरत्यर्थमुत्तमाः ॥
हरिस्तु रथमारुह्य संनद्धं दारुकेण ह ।
शार्ङ्गं भारसहं घोरं गृहीत्वा सशरं धनुः ॥
चक्रपाणिस्तदा शङ्खी गदाशूलशरासिमान् ।
बद्धगोधाङ्गुलित्राणः पीतवासा जनार्दनः ॥ [ 3070 ]
पद्ममालाकृतोरस्को नीलकुञ्चितमूर्धजः ।
ययौ रथगतो विप्रैः स्तूयमानो मुदान्वितैः ॥
सूतैर्मागधपुत्रैश्च स्तूयमानस्ततस्ततः ।
आनीय सेनां सकलां ययौ काष्ठामथोत्तराम् ॥
पाञ्चजन्यं मुखे न्यस्य सर्वप्राणेन केशवः । [ 3075 ]
दध्मौ महारवं कुर्वञ्शत्रूणां भयवर्धनम् ॥
आध्मातस्तेन हरिणा स चक्रे शङ्खराट् स्वनम् ।
रवः स रोदसी राजन्पूरयामास शङ्खतः ॥

---

3046 ) G2 सतातन ( for पुरा° ) — ( L 3047 ) Ds2 T4 G2 M -नयन , G3 -सनिभ ( for -वदन ) Ds2 D6 T1 G2 M सिंह- ( for सत्य- ). — ( L 3048 ) Ds2 T2 4 G1 2 -लयेषु ( for -लयस्य ) D6 [ए]ष ( for [ए]क· ). Ds3 D6 T4 G2 M गुरु ( for पति ) G1 कर्ता त्रिजगतीपति·, Bom Poona eds G( ed ) कर्ता त्रिजगतो गुरु ( for ᵇ ) — ( L 3049 ) M4 अपनेष्यति ( for व्यप° ) — ( L 3050 ) Dn Ds2 D6 T2 G1 5 M हयम् ( for रथम् ) Dn1 प्रययौ ( for प्रतस्थे )

Colophon — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 T1 2 4 G M — *Adhy name* Dn हंसडिभकोपाख्याने सात्यकिप्रतिप्रयाणम्; Ds2 हंसडिभकोपाख्यानम्, D6 T4 M4 हंसडिम्भकम्; T1 2 G1 हंसडिम्भकोपाख्याने प्रयाणकरणम् ( T1 सात्यकिप्रयाणम् ); G3 सात्यके प्रतिप्रयाणम्. — *Adhy no* Dn Ds2 302; T1 G3 230; T2 G1 232, T4 199; G2 250, G4 228, G4 231; M1–3 195; M4 194.

T2 G1 om the ref. — ( L. 3051 ) D6 T2. 4 G2 M4 पुरी ( for पुरं ) D6 T4 G2 सात्यकि सत्यविक्रमः ( for ᵇ ). — ( L 3052 ) D6 T2 G2 ततस्तयो ( for तयोस्तदा ) — ( L. 3054 ) Bom. Poona eds G( ed ) चक्रपाणिर्गदाधरः ( for ᵇ ) — ( L 3056 ) Ds2 D6 T1 2 4 G4 -पणवं ( for -पणव- ) — ( L 3058 ) Ds2 D6 G2 ते तथेति ( by transp ) Ds2 T4 G1 2 4 5 M1–3 प्रतिज्ञाय ( for °श्रुत्य ). Dn1 Ds2 G3 अधीनगा , Dn2 T1 2 G1 4 5 अदीनगाः ( for अनीकपा ). — ( L 3059 ) D6 T4 M1–3 रथान् ( for रथम् ) T2 संस्थिता· ( for दंशिता· ) — ( L 3060 ) T1 पुरुषोत्तम. — Ds2 D6 T1 G M3 4 om lines 3063–6066 — ( L. 3065 ) M1 2 -शरासना. ( for -महायुधा· ) — ( L 3067 ) Ds2 D6 T4 G2 M3 4 सस्कृतं ( for संनद्ध ) — ( L 3068 ) D6 सदृशं ( for सशरं ) — ( L 3069 ) T2 शङ्खं ( for शङ्खी ) Ds2 T2 G1 4 5 गदाशरवरासिमान्, D6 गदाकुलिशरासिधृक् ( for ᵇ ). — ( L 3071 ) D6 T2 G2 वनमाला- ( for पद्म° ) Dn T1. 2 G1 4 5 M1 3 -वृतोरस्को ( for -कृतो° ) Dn T1 2 G नवजीमूतसंनिभ·; D6 T4 M2 4 नीलजीमूतसंनिभ ( for ᵇ ) — ( L 3072 ) D6 T4 M4 गच्छाग्निरग्रतो विप्रैः ( for ᵃ ) D5 दयान्वितैः ( for मुदा° ) — ( L 3073 ) Dn D6 T1. 4 G2 M गीयमानस् ( for स्तूय° ) — ( L 3076 ) M4 शङ्खरवं ( for महा° ). M1 2 4 अतुलं भयम्, M2 तुमुलं भयम् ( for भयवर्धनम् ) — ( L. 3077 ) D6 दध्मौ ( for चक्रे ) Dn T1 4 G2. 4. 5 M1. 3 4 ध्रुवम्; Ds2 M2 रवम्, D6 स्वयम् ( for स्वनम् ). — ( L. 3078 ) Dn Ds2 T2 G4 M4 सर्वतः, T1 G1. 2. 5

तस्मिञ्शङ्खे तथाध्माते नेदुः शङ्खाः सहस्रशः ।
भेर्यश्चापि समाध्माता मृदङ्गा बहुशो नृप । [ 3080 ]
नेदुरत्यर्थमतुलं घर्मान्ते जलदा यथा ॥
अथो ययुर्महाराज पुष्करं पुण्यवर्धनम् ।
सरसस्तस्य राजेन्द्र पुष्करस्य नृपोत्तमाः ॥
प्रतीक्ष्य हंसडिभकौ युद्धाय समुपस्थिताः ।
निवेशं कारयामासुर्यादवाः सर्व एव हि । [ 3085 ]
स्वं स्वं यथासुखं राजन्प्रगृहीतकुटीमठम् ॥
भगवानपि गोविन्दः सरो दृष्ट्वा सुशोभनम् ।
उपस्पृश्य जले तस्मिन्प्रणम्य यतिपुंगवान् ॥
तयोरागमनं लिप्सुरास्ते तीरे यथासुखम् ।
शृण्वन्वेदध्वनिं विष्णुर्ब्राह्मणानां समन्ततः ॥ [ 3090 ]

Colophon

वैशंपायन उवाच ।
अथ तौ हंसडिभकौ जग्मतुः पुष्करं प्रति ।
प्रगृहीतमहाचापौ सरथौ सध्वजौ नृप ॥
पुरःसरमहाभूतौ संहरन्ताविवोल्बणौ ।
प्रकुर्वन्तावुरुरवं भस्मना परिवेष्टितौ ॥
त्रिपुण्ड्रकललाटान्तौ रुद्राक्षपरिशोभितौ । [ 3095 ]
अन्यौ द्वाविव रुद्रौ तौ लोकसंहारकारकौ ॥
ततोऽनुजग्मुः शतशः सैन्यानि नृपसत्तम ।
अक्षौहिण्यो दशैवासंस्तयोरथ समागताः ॥
विचक्रस्तु महाराज दानवो नगसंनिभः ।
तयोरेव सखा पूर्वमासीच्च बलशालिनोः । [ 3100 ]
शक्रोऽपि यस्य पुरतः स्थातुं शक्तो न वज्रभृत् ॥
यो हि वीरो महाराज देवदैत्यसमागमे ।
देवान्निघ्नंस्तदा युद्धे देवेन्द्रमजयन्महान् ।
अकरोच्च पुरा युद्धं विष्णुना प्रभविष्णुना ॥
यो हि द्वारवतीं प्राप्य बबाधे यदुपुंगवान् । [ 3105 ]
स तदानीं महाराज श्रुत्वा युद्धमुपस्थितः ॥
अनेकशतसाहस्रैर्दानवैः परिघायुधैः ।
वृतः समभवद्दैत्यो वृष्णिद्वेषान्नृपोत्तम ।
हंसस्य डिभकस्याथ साहाय्यं कर्तुमुद्यतः ॥
विचक्रस्याथ दैत्यस्य हिडिम्बो राक्षसेश्वरः । [ 3110 ]
अतीव मित्रतां यातो दद्यात्प्राणांश्च संयति ॥
राक्षसैरपरैः सार्धं शिलाशूलासिपाणिभिः ।

---

सर्वेश ( for शङ्खत ). — ( L 3079 ) Ds2 समाध्माते ( for तथा° ) Dn Ds2 T1 2 G1 3-5 दध्मु ( for नेदु ) — ( L. 3080 ) G1 3 5 M4 समाघ्राता ( for °ध्माता ). D6 T2 G2 सुभेर्यश्चाभ्यहन्यन्त ( for $^{a}$ ) T1 2 4 G1 3-5 शतशो ( for बहुशो ). — ( L 3082 ) Dn T2 4 G M4 अथाग्ययुर् ( for अथो य° ) — ( L 3083 ) T2 G3-5 राजेन्द्राः ( for °न्द्र ) — ( L 3084 ) Dn प्रतीक्षन् ( for °क्ष्य ). Dn M1 2 4 युद्धाय समवस्थिता, D6 °य समुपस्थितौ ( for $^{b}$ ) — ( L 3086 ) Ds2 ययुः सुखं, T1 सुखं यथा ( for यथासुखं ) — ( L 3087 ) D6 स ( for सु- ). — ( L 3088 ) D6 प्रणम्य यदुपुंगवः; G1 4. 5 °म्य यदुपुंगवाः ( for $^{b}$ ) — ( L 3089 ) G5 वीप्सुर् ( for लि° ) D6 आसीत् ( for आस्ते ) Ds2 आस्ते यत्र तु तत्सरः ( for $^{b}$ )

Colophon — *Mention of the Epic* Ds2 — *Mention of Khila* · Dn Ds2 T1 2 4 G M — *Adhy. name* Dn T1 हंसडिभकोपाख्याने कृष्णस्य पुष्करप्रवेशः; Ds2 कृष्णस्य पुष्करगमनम्, D6 M हंसडिभकम्, T2 G1 हंसडिबकोपाख्याने युद्धाय कृष्णप्रवेशः, G3 युद्धाय कृष्णस्य पुरप्रवेशः, G4 हंसडिबकोपाख्यानम् — *Adhy no.* Dn Ds2 303, T1 G3 231; T2 G1 233, T4 200, G2 226, G4 319; G5 232, M1. 2. 4 195; M3 196.

T2 G1 om ref — ( L 3091 ) M1 ( *inf lin* as above ) स्वपुरं ( for पुष्करं ) — ( L. 3092 ) T1 सशरौ ( for सरथौ ) — ( L 3094 ) Dn च वसुधां, Ds2 T1 2 4 G1 3 4 सिंहरवं, D6 G2 धनुरवं ( for उरुरवं ) Ds2 D6 T1. 2. 4 M4 -लेपितौ, G3 -लेपनौ, M1-3 -लेपिनौ ( for -वेष्टितौ ) — ( L 3096 ) Dn G5 रौद्रौ तौ; D6 T4 G2 रुद्रेशौ, M3 शोभिनौ ( for रुद्रौ तौ ) — ( L 3098 ) M समाययु ( for °गताः ) T1 2 G1 3 5 जग्मतुः शतश सैन्यान्निगृह्य नृपसत्तमौ — G4 om ( hapl ) 3099$^{b}$–3102$^{a}$ — ( L 3101 ) G5 तस्य ( for यस्य ) Dn1 तत्पुर ( for पुरत ) G ( G4 om ) शक्नोति पुरतस्तस्य ( for $^{a}$ ) — ( L 3102 ) Dn महाबाहुर् ( for °राज ). — D6 T4 G2 om lines 3103–3106 — ( L 3103 ) Dn G5 तथा राजन् ( for तदा युद्धे ) — ( L. 3105 ) T2 बलादि-; M1-3 बबाध ( for बबाधे ) — ( L 3106 ) Dn1 M1 अवस्थितम्; Ds2 T1 2 G1 3 4 M2-4 उपस्थितम्, Cal. ed अवस्थित. ( for उपस्थित° ) — ( L 3108 ) Dn वृत्र. ( for वृत° ). G3 विष्णुद्वेषान्; G5 वृष्णिद्वेषो ( for °द्वेषान् ). G3 नृपोत्तमौ ( for °म ) — ( L 3110 ) T4 G4 डिबकस्य ( for विचक्रस्य ). D6 T4 G2 हिडिम्बो राक्षसोत्तमः ( for $^{b}$ ). — ( L. 3111 ) D6 T4 G2 सदा रणे ( for च संयति ). — ( L. 3112 ) D6 G2 M1-3

ययौ तस्य सहायार्थं हिडिम्बः पुरुपादकः ॥
अष्टाशीतिसहस्राणि राक्षसास्तस्य चाभवन्।
अनुयाता महाराज शिलापरिघपाणयः ॥ [ 3115 ]
तयोस्तत्र महासैन्यं गच्छतोः केशवं प्रति।
मिश्रितं दैत्यसंघैश्च राक्षसैश्च समन्ततः।
अत्यद्भुतं महारौद्रं त्रैलोक्यभयदायि च ॥
दैत्येन तेन सहितौ जग्मतुः पुष्करं प्रति।
तावेतौ हंसडिभकौ हन्तुं केशवमञ्जसा ॥ [ 3120 ]
ततः श्रुत्वा जरासंधो विग्रहं यदुपुंगवैः।
नाकरोन्नृप साहाय्यं शापो मे भवितेति ह ॥
गच्छतोः संयुगं राजन्हंसस्य डिभकस्य च।
अतित्वरितविक्रान्तास्ते ययुः पुष्करं नृप ॥
सिंहनादं विमुञ्चन्तः कथयन्तः परस्परम्। [ 3125 ]
अहमेव नृपा युद्ध करोमि प्रथमं हरेः ॥
इत्यब्रुवन्नृपा राजन्गच्छन्तः केशवं प्रति।
संप्राप्तास्ते नृपश्रेष्ठाः पुष्करं पुण्यवर्धनम् ॥
मुनिजुष्टं तपोवृद्धैर्ऋषिभिश्च निषेवितम्।
अत्यन्तभद्रं लोकेषु पुष्करं प्रथमं नृप ॥ [ 3130 ]
पुष्करं पुण्डरीकाक्षो द्वावेव जगतीपते।
दर्शनात्स्पर्शनाच्चापि किल्बिषच्छेदिनौ नृप ॥
पुष्करं पुण्डरीकाक्षो द्वावेव नृपसत्तम।
सेव्यमानौ मुनिश्रेष्ठैः सामरौघैर्महात्मभिः ॥
द्वावेव हि नरश्रेष्ठ किल्बिषौघस्य नाशकौ। [ 3135 ]
तावुभौ यत्र सहितौ तत्र ते संस्थिता नृपाः ॥
दृष्टवन्तौ हरिं विष्णुं विष्टरश्रवसं परम्।
पुष्करं पुण्यनिलयं तीर्थं ब्रह्मर्षिसेवितम् ॥
तेभ्यः कुरु नमस्कारं मनसा नृपसत्तम।
अघं निःशेषमभवत्तव भूप न संशयः ॥ [ 3140 ]
सैन्यं तत्र च संप्राप्तं दैत्यरक्षःसमाकुलम्।
अनेकभेरीपणवझर्झरीडिण्डिमाकुलम्।
तालसंमिश्रपणवं रक्षोनादसमाकुलम् ॥
प्रविश्य सरसस्तीरं पुष्करस्य विशां पते।
अदर्शयत्तत्र देवं युद्धाय समुपस्थितम् ॥ [ 3145 ]

Colophon.

शित- (for शिला) — (L 3113) G3 तत्र (for तस्य) Bom Poona eds पुरुषादप- (for °क) — (L 3114) Dn G5 तस्य रक्षांसि चाभवत् (for ⁵) — (L 3115) Ds2 M -बाहव (for -पाणयः) — (L 3116) Dn गच्छतां (for °तो) — (L 3118) D6 महाराज (for °रौद्रं). Ds2 G1 -दायकम् (for -दायि च) — (L 3119) Bom Poona eds G(ed) दैत्येन सहितौ तौ हि (for °) — (L 3121) Ds2 विग्रहं यदुभि सह (for ⁵) — (L 3122) Ds2 पापं (for शापो) — (L 3123) Dn2 गच्छतः (for °तो). D6 T4 G2 M समितिं, T2 G1 संयुगे (for °गं) — (L 3124) T2 अरींस् (for अति-) G4 5 प्र- (for ते) Dn नृपा-; Ds2 G4 प्रति (for नृप) — (L 3125) D6 G1 5 M3 प्रकुर्वन्त; T4 M1 विकुर्वन्तः (for विमुञ्चन्त-) — (L 3127) T2 G1 4 5 गच्छन्त, M2 शतश (for गच्छन्त) — (L 3128) G3 नर- (for नृप-) — (L 3129) D6 T4 G2 मुनीन्द्रैश्च (for मुनिजुष्टं) — T1 om line 3131 — (L 3132) D6 G2 M1-3 स्मरणाच् (for स्पर्शनाच्) — D6 G5 om lines 3133 — (L 3134) D6 G2 M4 सेव्यमानो (for °मानौ) T1 G4 M2 नृपश्रेष्ठै. (for मुनि°) Ds2 अमरौघैर्; T1 सानुरागैर्; Cal ed सामघोषैर् (for °रौघैर्). — (L 3135) Dn2 Ds2 D6 T1. 2 4 G M नृपश्रेष्ठ (for नर°) Dn T1 2 G1 3. 4 किल्बिषाणां च नाशकौ, Ds2 सर्वपापप्रणाशकौ, D6 T2 G2 किल्बिषौघप्रणाशकौ, G5 पुष्कराणा च नाशकौ (for ⁵) — (L 3136) Dn2 T2 G4 सहितौ (for संस्थिता-) D6 T4 G2 नृप (for नृपा) — (L 3137) Cal ed दृष्ट्वा तौ च (for दृष्टवन्तौ) D6 नृपम् (for परम्) Ds2 पुष्कर स्रोतसां परम् (for ⁵) — (L 3138) Dn T1 4 G तीर्थं ब्रह्मनिषेवितम् (for ⁵) — (L 3139) Dn G1 2 ताभ्यां (for तेभ्यः) — (L 3140) Dn Ds2 M1 4 अहो, T1 2 G3 हंसो, G5 अंहो; M2. 3 अघो (for अघं) D6 तव भूतं, G2 तत्र भूयो (for तव भूप) — (L 3141) G2 -समावृतम् (for °कुलम्) — (L 3142) Ds2 -नर्करी- (for -झर्झरी) — (L 3143) Ds2 नाना; Cal ed जाल- (for ताल-) D6 G2 M तालाप (M4 °लं प) णवसंमिश्रं (for °) Ds2 T1 G2 -विनादितम् (for -समाकुलम्). — T1 om line 3145 — (L 3145) Dn D6 T2 4 G1 3 5 दर्शयामास देवेशं; Ds2 ददर्श स च देवेशं (for °) D6 M2 4 समव- (for समुप-)

COLOPHON — *Mention of the Epic* · Ds2. — *Mention of Khila* · Dn Ds2 D6 T1 2 4 G M — *Adhy. name* Dn Ds2 हंसडिभकोपाख्यानम्; D6 M हंसडिभकम्, T2 G1 हंसडिबकोपाख्याने पुष्करयुद्धोद्योगः, G3 पुष्करे युद्धोद्योगः.

वैशंपायन उवाच ।

द्वे सेने संगते राजन्सध्वजे सपरिच्छदे ।
महापरिघसंकीर्णे गदाशक्तिसमाकुले ॥
भेरीझर्झरसंपूर्णे डिण्डिमारावसंकुले ।
प्रगृहीतमहाशस्त्रे शूलासिवरकार्मुके ।
परस्परकृतोत्साहे चक्राते युद्धमुत्तमम् ॥ [ 3150 ]
ते शराः कार्मुकोत्सृष्टा निर्भिद्याथ शरीरिणाम् ।
शरीराणि महाराज जग्मुर्दूरं सहस्रशः ॥
भटबाहुविनिर्मुक्ताः खड्गा निर्भिद्य वक्षसि ।
स्फुटिताश्च तदा राजञ्शिरांस्याहृत्य संययुः ॥
परिघाश्च तदा राज्ञां बाहुभिः परिचोदिताः । [ 3155 ]
तिलशश्चक्रुरतुलाः शरीरं नृपरक्षसाम् ।
दैत्यानां कुर्वतां नादमन्योन्यवधकाङ्क्षिणाम् ॥
दैत्या रक्षांसि राजेन्द्र राजानश्च समन्ततः ।
अन्योन्यं परिघैर्जघ्नुश्चापमुक्तैर्महाशरैः ।
शरैश्च भोगिभोगाभैस्तीक्ष्णमन्ये महाबलाः ॥ [ 3160 ]
राक्षसा दानवाश्चान्ये मत्तमातङ्गविक्रमाः ।
नागा नागैर्महाराज हयाश्चाश्वैः समन्ततः ॥
रथा रथैः समाजघ्नुः सादिनः सादिभिस्तथा ।
पट्टसासिशरव्रातैः कुन्तैः सायककर्पणैः ॥
सशक्तिपरिघप्रासपरश्वधसमाकुलैः । [ 3165 ]
भिण्डिपालैर्महारौद्रैर्जघ्नुरन्योन्यमाहवे ॥
राक्षसा दानवा राजन्क्षत्रियाश्च समन्ततः ।
इतश्चेतश्च धावन्तः कुर्वन्तो विस्वरं रवम् ।
हताः केचिन्महाराज पेतुरुर्व्यां महासिभिः ॥
केचिन्मथितमस्तिष्का गदाभिर्वीर्यवत्तमाः । [ 3170 ]
भग्नग्रीवा महाराज परिघैः परिघायुधैः ॥
यमराष्ट्रं गताः केचित्केचित्स्वर्गं समाययुः ।
अप्सरोभिः समासेदुः पश्यन्तः स्वकलेवरम् ।
केचित्स्वांश्च परांश्चैव हत्वा भ्रान्ता इवाभवन् ॥
एतस्मिन्नन्तरे राजञ्शङ्खा भेर्यः सहस्रशः । [ 3175 ]
सस्वनुः सर्वतः सैन्ये मृदङ्गा बहवस्तथा ।
मध्यंदिनगते सूर्ये तापं दधति घोरवत् ॥
ततः पिशाचा विकृताः कराला निर्णतोदराः ।
राक्षसाश्च महाघोराः पिशितं केशशाड्वलम् ।
मुदिता भक्षयामासुः पिबन्तः शोणितं बहु ॥ [ 3180 ]

— *Adhy no* · Dn Ds2 304; T1 G3 232, T2 G1 234; T4 201; G2 277; G4 230, M1-3 179, M4 215.

(L 3147) D6 T4 -संपूर्णे (for -सकीर्णे) — (L 3148) M1-3 -झर्झरि- (for °र-) — (L 3150) Dn T1 G3 5 उल्बणम्, M अद्भुतम् (for उत्तमम्) — (L 3151) D6 ते शरा· कार्मुकैर्मुक्ता (for ᵃ) D6 T4 [आ]शु (for [अ]थ). — (L 3154) Ds2 स्फुरिताश्, G1 स्फुरन्तश् (for स्फुटिताश्) M1 3 महाराज; G(ed) तथा राज्ञां (for तदा राजन्) D6 T4 G2 स्फुटिताः सहस्रशो राजन् (hypermetric) (for ᵃ) Dn T1 4 G1 3-5 [आ]हृत्य (for [आ]हृत्य) M4 खं (for सं-) Ds2 T2 G2 शिरांस्याहृत्य खं ययु. (for ᵇ). — (L 3156) Dn Ds2 T1. 2 G1 3-5 M4 अतुलं (for °ला·) D6 T4 G2 तिलशः कारयामासु. (for ᵃ) D6 शरीराण्यपि रक्षसाम् (for ᵇ) — M1-3 om line 3157 — (L 3157) Dn2 काङ्क्षिणौ (for °णाम्) — G2 om lines 3158-3162 — (L 3158) G5 राजेन्द्राश् (for राजानश्) — (L 3159) Ds2 T2 4 G1 3 M शिलाशितैः (for महाशरैः) D6 om (hapl) lines 3159ᵇ-3163ᵃ T1 चापयुक्तै शिलाशितै (for ᵇ) — Ds2 T1 4 G1. 3-5 M ins. after line 3161; Dn after line 3167.

23** अन्योन्य जघ्निरे राजंश्चापमुक्तैर्महाशरै ।
[ Dn1 D6 शिलाशितै (for महाशरै) ]

— (L 3162) G3 G(ed) हयानश्वै (for °श्चाश्वैः). — (L 3163) Ds2 G4 5 M1 2 4 समाजग्मुः (for °जघ्नु·). G2 रथै रथं समाजग्मु (for ᵃ) T4 सादिभि (for °न). M1-3 सादिभि सादिनस्तथा (for ᵇ) — (L 3164) T4 M1-3 शरव्रात-, G2 °प्रास- (for °व्रातैः) G5 कुन्त- (for कुन्तै) G4 साश्मक-, M कणय- (for सायक-) G1 -कर्षणैः (for -कर्पणै·) Dn T4 D6 कुन्तसायककर्ष(D6 °क्षेप)णै (for ᵇ). — (L 3165) M -व्रात- (for -प्रास-). — (L 3166) D6 G2 महाघोरै (for रौद्रै) D6 जिघ्नन्त्यन्योन्यमाहवे (for ᵇ) — (L 3168) D6 T4 भैरवं (for विस्वरं) Ds2 रवान् (for रवम्) G2 कुर्वन्तो भैरवस्वनम् (for ᵇ) — (L. 3171) Ds2 T1 2. 4 G M4 भिन्न (for भग्न-) Cal ed पट्टिशै· परिघैस्तथा (for ᵇ) — (L 3174) D6 स्वान्परमं, G2 स्वार्थपराश् (for स्वांश्च परांश्) — (L 3175) D6 G2 शङ्ख- (for शङ्खा). T2 G1 समन्तत· (for सहस्रश·) T4 शङ्खभेर्य· समन्तत· (for ᵇ) — (L 3176) Dn1 सैन्य, T2 सैन्यैर् (for सैन्ये). — (L. 3177) D6 T4 तावत्तपति घोरवत् (for ᵇ).

संचितानि शवान्यासन्कबन्धाः खड्गपाणयः ।
विभज्य देशं बहुशो युद्धभूमौ शवार्थिनः ॥
अथ श्येना बलाश्चैव कङ्का गृध्रास्तथापरे ।
तुण्डैः शवानि निष्कृष्य भक्षयन्ति ततस्ततः ॥
सप्ताशीतिसहस्राणि हता नागा नृपोत्तम । [ 3185 ]
त्रिंशत्सहस्रमयुतं निहता हयसत्तमाः ॥
हतं लक्षं महाराज रथानां रथिभिः सह ।
त्रिंशत्कोट्यो हतास्तत्र सादिनः सायुधा भृशम् ॥
मध्यंदिनगते सूर्ये हताः केचन निर्गताः ।
केचिच्च निहता राजन्पुष्करं प्राविशन्सरः ॥ [ 3190 ]
केचिद्भूमिं समालम्ब्य भीता इत्यब्रुवन्रणे ।
मुक्तकेशाः पतन्ति स्म रथं संत्यज्य केचन ॥
संदष्टौष्ठपुटाः केचित्स्वामिनः पुरतो हताः ।
अत्यद्भुतं महायुद्धमासीत्पुष्करतीर्थके ।
यथा देवासुरं युद्धं पूर्वमासीन्नृपोत्तम ॥ [ 3195 ]

Colophon

वैशंपायन उवाच ।

एतस्मिन्नन्तरे राजन्द्वंद्वयुद्धमवर्तत ।
विचक्रं योधयामास शार्ङ्गधन्वा गदाधरः ॥
बलभद्रोऽथ हंसेन डिभकेन च सात्यकिः ।
वासुदेवोग्रसेनाभ्यां हिडिम्बः पुरुषादकः ।
शेषाश्च शेषै राजेन्द्र चक्रुर्युद्धमदीनगाः ॥ [ 3200 ]
वासुदेवस्त्रिसप्तत्या दैत्यं वक्षस्यताडयत् ।
शरैर्निशितधाराग्रैर्विस्मय दर्शयन्रणे ॥
दानवो देवदेवेशं दृढेन निशितेन च ।
शरेणाकर्णमाकृष्य धनुःप्रवरमीश्वरम् ।
जघान स्तनयोर्मध्ये पश्यतस्तु शचीपतेः ॥ [ 3205 ]
तेन विद्धोऽथ भगवान्वक्षोदेशे जनार्दनः ।
अवमच्छोणितं विष्णुरादिकाले यथा प्रजाः ॥
ततः क्रुद्धो हृषीकेशः क्षुरप्रेणाहरद्ध्वजम् ।
अश्वांश्च चतुरो हत्वा सारथिं च शरैस्त्रिभिः ।
ततो दध्मौ शङ्खवरं यथा तारामये रणे ॥ [ 3210 ]
रथादुत्प्लुत्य सहसा दानवः क्रोधमूर्छितः ।
गदां गृह्य महाघोरां दुःसहां वीर्यशालिनीम् ॥
तया जघान दैत्येन्द्रः किरीटे केशवस्य ह ।
ललाटे च पुनर्विष्णुं सिंहनादमनीनदत् ॥

---

— (L. 3178) M1–3 कराला (for पिशाचा) Dn T4 G2 निर्णितोदरा॰, Ds3 निनतो॰; G4 5 निर्वृतो॰ (for निर्णतो॰) M पिशाचा निर्णितोदरा (for $^b$) — (L. 3179) D6 M1 2 राक्षस्यश् (for ॰साश्) Cal ed पिबन्त (for पिशितं). D6 T4 -संकुलम् (for -शाड्वलम्) G2 पिशिता. केशसकुला (for $^b$) — (L. 3181) T2 G3 संछिन्नानि (for संचितानि) D6 शिरांसि (for शवानि) Ds2 D6 T1 2 4 G1 3 M पातिता॰ (for -पाणयः). — (L. 3182) G2 विभज्य बहुशो राजन् (for (for $^a$) Ds2 D6 T4 M1–3 शवाशिन, T1 नरार्थिन, G1 शवादिनः G2 वाश्यति (sic) (for शवार्थिनः). — (L 3183) Ds2 मृगाश्, D6 बकाश् (for बलाश्) M1–3 काका (for कङ्का) — (L 3184) Ds2 D6 T1 4 G1 2 4. 5 M1–3 शवान्वि- (for ॰नि) — (L 3186) D6 त्रिंशत्साहस्रमयुतं; T2 G1 3 त्रिंशत्सहस्रनियुतं (for $^a$). — (L. 3187) M1–3 हता (for हतं) — (L 3188) D6 T4 G2 सायुधा॰ (T4 ॰धः) सुभटा भृशम् (for $^b$) — (L. 3189) D6 जिता (for हताः). — T4 G2 om lines 3190–3193. — (L 3190) Ds2 D6 T1. 2 G1 3 4 M तृषिता (for निहता). Ds2 विविशुः पुष्करं सर॰, G3 पुष्करं प्राव्रजन्सर. (for $^b$). — (L 3191) Dn Ds2 T1. 2 G1 3–5 समालिङ्ग्य (for ॰लम्ब्य) Dn हता (for भीता) — (L 3192) Dn2 Ds2 T2 G1 5 रथान्; D6 रणं (for रथं). — (L 3193) Dn D6 T1. 2 G1 3–5 M4 सादिन (for स्वामिन.).

Colophon — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 D6 T1 2 4 G M. — *Adhy. name* Dn Ds2 G4 हंसडिभकोपाख्यानम्; T1 G3 हंसडिबकोपाख्याने पुष्करे हंसडिबकयुद्धम्, G3 पुष्करे हंसडिभकयुद्धम्; M1 2 4 हंसडिभकम् — *Adhy no* Dn 304; Dn2 Ds2 305, T1 G3 233; T2 G1 285, T4 102; G2 229; G4 231; G5 234, M1 2. 4 197; M3 198

G2 om the ref — (L. 3202) D6 T4 -धारैस्तु; G3 -धारौघैर् (for -धाराग्रैर्) — (L 3204) G5 उत्तमम् (for ईश्वरम्) — (L 3205) Dn1 Ds2 D6 T4 जघान स्तनमध्ये च (for $^a$) — (L 3208) D6 T4 G2 तदा (for क्रुद्धो). Ds2 D6 T1 4 G M4 ऽहनद् (for ॰रद्) — (L 3210) Ds2 महाशङ्ख (for शङ्खवरं) G2 रामायणे (for तारामये). — (L 3211) D6 T4 रथादुत्पत्य तरसा, G2 तस्मादुत्प्लुत्य तरसा (for $^a$) — (L 3212) Dn T1 2 G3 दुर्वहां (for दुःसहां). — (L 3214) Dn अथानदत्, Ds2 G3–5 ऽयनी॰;

ततः शिलां च महतीं प्रगृह्य दनुजः किल । [ 3215 ]
भ्रामयित्वा शतगुणं प्राहरत्केशवोरसि ॥
तामापतन्तीं संप्रेक्ष्य हस्तेनादाय केशवः ।
जघान च तदा दैत्यं ताडितः स तया क्षितौ ।
गतासुरिव संजज्ञे श्वसन्निव पपात ह ॥
प्राप्य सञ्ज्ञां ततो दैत्यः क्रोधाद्द्विगुणमाबभौ । [ 3220 ]
आदाय परिघं घोरमिदमाह जनार्दनम् ॥
अनेन तव गोविन्द दर्पं जातं निहन्म्यहम् ।
विक्रमज्ञः सदा चासि मम देवासुरे रणे ॥
तावेव विपुलौ बाहू स एवासि जनार्दन ।
तथापि युध्यसे वीर ज्ञात्वा वै मामकं बलम् ॥ [ 3225 ]
वारयैनं महाबाहो परिघं बाहुनिःसृतम् ।
इत्युक्त्वा देवदेवेशं शङ्खचक्रगदाधरम् ।
चिक्षेप दैत्यो लोकेशं सर्वलोकस्य पश्यतः ॥
तं गृह्य बाहुना कृष्णो दुष्टोऽसीति वदन्हरिः ।
खण्डशः कारयामास खड्गेन निशितेन च ॥ [ 3230 ]
उत्पाट्य वृक्षं दैत्येन्द्रः शतशाखं महाशिखम् ।
तेन तं पोथयामास विष्टरश्रवसं विभुम् ।
गृह्य तं चापि खड्गेन तिलशश्च चकार ह ॥
विक्रीड्य सुचिरं कृष्णस्तेन दैत्येन माधवः ।
हन्तुमैच्छत्तदा दैत्यमादाय निशितं शरम् । [ 3235 ]
आग्नेयास्त्रेण संयोज्य जघानैनं स तेन ह ॥
प्रदह्य स शरो दैत्यं सर्वलोकस्य पश्यतः ।
यथापूर्वं जगामाशु करं भगवतः पुनः ॥
हतशिष्टास्तदा दैत्याः पलायन्त दिशो दश ।
अद्यापि न निवर्तन्ते गच्छन्तो वै महोदधिम् ॥ [ 3240 ]

Colophon.

वैशंपायन उवाच ।

बलदेवस्तु धर्मात्मा धनुरादाय सत्वरम् ।
जघान हंसं दशभिर्बाणैर्बाणभृतां वरः ।
तं प्रत्यविध्यन्नाराचैर्हंसः पञ्चभिराशुगैः ॥
तानन्तरे हली छित्त्वा नाराचैर्दशभिः पुनः ।
नाराचेनाशु विव्याध ललाटे हंसमोजसा ॥ [ 3245 ]
दृढं पतन्स नाराचस्तस्य संज्ञां समाददे ।
रथोपस्थे चिरं स्थित्वा स्थूणाकर्णं समाददे ॥
लब्ध्वा हंसः स संज्ञां तु विध्वा तेन यदूत्तमम् ।

---

( for भनी° ). — ( L 3216 ) $Ds_2$ $G_1$ दश- ( for -शत- ). $D_6$ $G_3$ प्राहिणोत् ( for प्राहरत् ) — ( L 3218 ) $Ds_2$ $D_6$ $T_4$ $G_{2\ 4\ 5}$ M तया ( for तदा ) Dn तदा क्षितौ, $G_5$ तदार्दित ( for तथा क्षितौ ) $Ds_2$ स पपातार्दित क्षितौ, $D_6$ $T_{1\ 2\ 4}$ $G_{1-4}$ M स तया ताडित. क्षितौ ( for $^b$ ) — ( L 3219 ) $T_4$ नि.संज्ञ ( for संजज्ञे ) $G_2$ स्वनम् ( for श्वसन् ) — ( L. 3222 ) Bom ed वि- ( for नि- ). — ( L 3225 ) Dn $G_3$ न ज्ञात्वा, $Ds_2$ $D_6$ $T_{1\ 2}$ $G_{1\ 2\ 4\ 5}$ $M_4$ ज्ञात्वा त्वं ; $T_4$ ज्ञात्वा त्वा ( for ज्ञात्वा वै ). — ( L 3226 ) $D_6$ धारय ( for वा° ) — ( L 3227 ) $D_6$ देवस्य ( for -देवेशं ) $Ds_2$ G( ed ) गदाँ-धरे ( for °धरम् ) — ( L 3228 ) $Ds_2$ लोकेशो ( for °शं ) — [ L 3229 ) $Dn_1$ Ds $T_{2\ 4}$ $G_{1\ 2\ 4\ 5}$ हतो ; $D_6$ $M_{1-3}$ धृष्टो ( for दुष्टो ) — ( L 3231 ) $Ds_2$ $T_1$ $G_{1,\ 3-5}$ $M_4$ दैत्येशः ( for °न्द्र. ) $T_2$ महायशा ( for °शिखम् ) — ( L 3232 ) $T_2$ रोधयामास ( for पोथ° ). Dn प्रभुम् ( for विभुम् ) — ( L 3233 ) $Ds_2$ छित्त्वा त, $T_4$ $G_4$ $M_4$ गृह्य तच् ( for गृह्य तं ). — ( L 3234 ) $Ds_2$ $D_6$ $T_{1\ 4}$ $G_{1\ 2.\ 4\ 5}$ M विष्णुस् ( for कृष्णस् ). — ( L 3236 ) $D_6$ आग्नेयेन च संयोज्य ( for $^a$ ) $Ds_2$ महान्हरि. ( for स तेन ह ). $G_2$ जघान मुसलेन ह ( for $^b$ ) — ( L 3237 ) Dn $Ds_2$ $D_6$ $T_2$ $G_{1\ 3-5}$ $M_4$ संदह्य ( for प्रदह्य ) $T_1$ संदह्य उदरं दैत्य, $T_4$ प्रसह्य शतशो दैत्यं ( for $^a$ ) — ( L 3238 ) $D_6$ $T_4$ $G_2$ शर ( for पुन. ). — ( L 3239 ) $G_1$ अथ ( for हत- ) $Ds_2$ $G_3$ पलायन्ते, $T_{1.\ 2\ 4}$ $G_{1\ 2\ 4.\ 5}$ $M_4$ °यन्तो ( for °यन्त )

Colophon — *Mention of the Epic* $Ds_2$. — *Mention of Khila* : Dn $Ds_2$ $D_6$ $T_{1\ 2,\ 4}$ G M — *Adhy name* Dn हंसडिभकोपाख्याने च( $Dn_2$ विच )क्रवध. ; $Ds_2$ हंसडिभकोपाख्यानम्, $T_{1\ 2}$ $G_{3\ 4}$ हंसडिबकयुद्धे विचक्रवधः ; $G_1$ हंसडिबकोपाख्याने हंसडिबकयुद्धे विचक्रवधः, $M_1$ हंसडिब-कम्. — *Adhy no.* Dn $Ds_2$ 306, $T_1$ $G_3$ 234 ; $T_2$ $G_1$ 236, $T_4$ 203, $G_2$ 229 ; $G_4$ 232 ; $G_5$ 235, $M_{1-3}$ 177 ; $M_4$ 198

( L 3242 ) $Ds_2$ $D_6$ $T_4$ $M_3$ -भृतां वरम्, $G_2$ $M_3$ -भृतां वर ; $M_{1-2}$ -विदां वरम् ( for -भृतां वरः ) — ( L 3244 ) Cal ed. स्तनान्तरे ( for तान° ) $D_6$ स्तनान्तरे हली भित्त्वा ( for $^a$ ) — ( L 3245 ) $D_6$ $T_4$ [अ]थ ( for [आ]शु ). $T_2$ अञ्जसा ( for ओजसा ) $D_6$ $T_4$ $G_2$ ललाटे यादवेश्वर. ( for $^b$ ) — ( L. 3246 ) $Dn_1$ $T_2$ $G_{1\ 3}$ तत्र संज्ञां, $T_4$ तत्र तत्र ( for तस्य संज्ञां ).

सिंहवद्व्यनदद्धंसो देवान्विस्मापयन्रणे ॥
ततः क्रुद्धो हली विद्धस्तेन बाणेन माधवः । [ 3250 ]
वमञ्शोणितमत्यर्थं निशश्वास रणाजिरे ।
लोहिताविष्टगात्रस्तु कुङ्कुमार्द्र इवाभवत् ॥
नाराचैः सप्तसाहस्रैरर्दयामास यादवः ।
हंसं हंसगतिं वीरं नीलवासा हलायुधः ॥
ते मुक्ता निशिता घोरा नाराचाश्च सुवाजिनः । [3255]
रथे ध्वजे तथा चापे चक्रे तूणीद्वये नृप ।
पतिताः सर्वतो राजन्व्यथां चैव तथा दधुः ॥
ततः क्रुद्धो महाराज हंसो वीर्यबलान्वितः ।
शरेण हलिनं विध्वा ध्वजं चिच्छेद केनचित् ।
शरैश्चतुर्भिरश्वांश्च सूतं प्रेताधिपे ददौ ॥ [ 3260 ]
ततः क्रुद्धो हली तस्माद्गदां गृह्य महारणे ।
आपपात महाबाहुर्हंसं शेष इव श्वसन् ॥
तया ध्वजं रथं चक्रमीषां सूतं हलायुधः ।
बभञ्ज तिलशः सर्वं ननाद च पुनः पुनः ॥
भूयश्च गदया हंसं चिक्षेप च हली किल । [ 3265 ]
सोऽपि हंसो गदां गृह्य रथात्तस्मादवापतत् ॥
ततस्तौ हंसहलिनौ युयुधाते महारणे ।
महारथौ महाबाहू लोके प्रथिततेजसौ ॥
अत्यद्भुतौ सुविक्रान्तौ परस्परवधैषिणौ ।
कृतश्रमौ महायुद्धे सिंहविक्रान्तगामिनौ ॥ [ 3270 ]
यथा देवासुरे युद्धे शक्रवृत्रौ पुराम्बरे ।
उभौ संसिक्तसर्वाङ्गौ शोणितेन महारणे ।
अत्यन्तखेदितौ युद्धे परस्परबलेन ह ॥
ततश्च दक्षिणं मार्गं बलभद्रोऽन्वगृह्णत ।
सव्यं तु हंसो राजेन्द्र व्यगृह्णात्सत्यसंगरः ॥ [ 3275 ]
पोथयांचक्रतुर्युद्धे गदाभ्यां गजविक्रमौ ।
यथाप्राणं महाबाहू जघ्नतुर्मरणाय वै ॥
अतिप्रवृद्धं संग्रामं देवासुररणोपमम् ।
विदधाते महारङ्गे पश्यतां त्रिदिवौकसाम् ॥
देवाश्च मुनयश्चैव विस्मयं परिजग्मिरे । [ 3280 ]
अहो खल्वीदृशं युद्धं दृष्टं पूर्वं न च श्रुतम् ।
इत्यूचुर्विस्मयवशाद्देवगन्धर्वकिंनराः ॥

—(L 3247) Dn Ds2 D6 T1, 2 4 G तूणाद्वाणं (for स्थूणाकर्ण) — (L 3251) Ds2 D6 T1 4 G2 M अत्युष्णं (for अत्यर्थं). Ds2 नि·श्वसंश्च (for निशश्वास) — (L 3253) Ds3 T1 4 G2 4 5 शत (for सप्त-) Dn1 Ds2 T2 G1 3–5 M1 माधव (for यादव·) Dn2 T1 दारयामास माधव. (for $^b$) — (L 3254) D6 हंसगिरिर्, T2 °गतिर् (for °गतिं). — (L 3255) M2 3 तेन मुक्ता (for ते मुक्ता नि-) T2 सुवाजिभि, M4 °ता: (for °न·) — (L. 3256) छत्रे, M3 चक्री (for चक्रे) M2 3 नृपे (for नृप) — (L 3257) Dn Ds2 T4 M तथा ददु·; D6 समादधुः (for तथा दधुः). — (L 3258) Dn Ds2 -मदान्वित. (for -बला°) — (L. 3259) Poona ed कालवत्, Bomb. ed G(ed) कालवित् (for केनचित्) — (L 3260) Ds2 D6 परैश् (for श°) M1–3 अपरैस्तु त्रिभिश्चाश्वान् (for $^a$) T4 M4 प्रेताधिपं (for °पे) — (L 3261) T2 बली (for हली) Ds2 M4 तस्मै (for तस्माद्). — (L. 3262) T1 आससाद; G2 परिवाभ-, Cal. ed. अपातयन् (for आपपात) — (L 3263) Ds2 G2 अश्वान्; (for ईषां) M1–5 गदायुध (for हला°) — (L 3264) G5 सर्वान् (for सर्वं) D6 T4 G2 जघान तिलश· सर्वान् (for $^a$) — (L. 3265) Dn बलं; G3 हलं, G4 M1 बली (for हली) G5 चिक्षेप च बली हली (for $^b$) — (L. 3266) T2 अपातयत; G1 अवातरत् (for °पतत्) — (L 3267) Dn T2 Cal. ed -बलिनौ (for -ह°) — T2 G3 om (hapl) lines 3268–3272 — (L 3268) G5 महाहासौ (for °बाहू) — (L. 3269) T1 M4 अत्यद्भुत (for °तौ) D6 T2 G2 तौ (for सु-) — (L 3270) Ds2 T4 G1 2 4 5 M4 हंस- (for सिंह-) — (L 3272) Ds2 D6 T1 G1 2 M4 संसक्त- (for संसिक्त-) — (L 3273) Ds2 T2 G M4 -खेदिनौ, D6 -रोषिणौ; T1 -खेदिते (for °तौ) D6 वधैषिणौ (for -बलेन ह). — (L. 3274) Dn M4 ऽन्वगच्छत, Ds2 D6 T4 G2 ह्यगृह्णत, T1 न्यगृह्णत, T1 न्यगृह्यत, G3 ऽन्वगृह्यत, M1–3 ऽप्यगृह्णत (for ऽन्व°) — (L 3275) Dn1 T1 4 G1 3–5 M4 राजेन्द्रो (for °द्र) Dn T1 2 G1 3–5 व्यगृह्णात्स्वयमेव हि (for $^b$) — (L. 3276) T1 क्रोधयांचक्रतुर्युद्धे (for $^a$) — (L 3277) T1 महावीर्यौ (for °बाहू) — (L 3278) Dn D6 G2 -प्रवृत्तं (for °द्धं) — (L 3279) D6 T4 व्यदधातां (for विदधाते) — After line 3250, G3 ins an addl colophon, mentioning adhy name हंसबलभद्रयुद्धम् and adhy no 235 — G3 om. lines 3280–3442 — (L 3280) G1 ऋषयश् (for मुन°). T2 सर्वे (for चैव) — (L 3282) T2 G1 -दानवा (for -किंनरा) — (L. 3283) Ds2 D6 T4 G2 उत्तमम् (for अद्भुतम्) Cal ed कृतं युद्धं तथाद्भुतम् (for $^b$).

परस्परकृतोत्साहौ चक्रतुर्युद्धमद्भुतम् ॥
अथ हंसो महारङ्गे दक्षिणं दक्षिणोत्तमः ।
व्यचरन्मार्गमत्यर्थं सव्यं तु बलवान्बली ॥ [ 3285 ]
विकुञ्च्य जानुनी पूर्वं चक्रतुर्गदया भृशम् ।
रणं रणविदां श्रेष्ठौ पश्यतां त्रिदिवौकसाम् ॥

Colophon

वैशंपायन उवाच ।

युद्धं चक्रतुरत्यर्थं ततो डिभकसात्यकी ।
तावुभौ बलिनौ वीरौ प्रख्यातौ क्षत्रियेषु वै ॥
कृतश्रमौ महायुद्धे सततं वृद्धसेविनौ । [ 3290 ]
सात्यकिर्दशभिर्वीरो डिभकं सत्यविक्रमम् ।
अविध्यन्निशितैर्बाणैः स्तनमध्ये तथोरसि ॥
स तेन विद्धो बलिना डिभकः क्षत्रियोत्तमः ।
नाराचैः पञ्चसाहस्रैर्विव्याध युधि गर्वितः ॥
तानन्तरे वृष्णिवीरो निषेध्य व्यनदद्रणे ॥ [ 3295 ]
अथ क्रुद्धो नृपवरो विध्वा सप्तभिराशुगैः ।
पुनः शतसहस्रेण प्रत्यविध्यत्स सात्यकिम् ॥
सात्यकिस्त्वथ विक्रान्तो धनुश्चिच्छेद तस्य तत् ।
अर्धचन्द्रेण तीक्ष्णेन डिभकस्य स यादवः ॥
आजघ्ने डिभको राजन्युयुधानं युधां वरम् । [ 3300 ]
क्षुरप्रेणाथ रौद्रेण तैलधौतेन विक्रमी ॥
स तेन विद्धो बाणेन वमञ्शोणितकं नृप ।
अतीव शुशुभे राजन्वसन्ते किंशुको यथा ॥
धनुश्चिच्छेद भूयस्तु यद्गृहीतं पुनर्महत् ॥
ततोऽन्यद्धनुरादाय डिभको यादवेश्वरम् । [ 3305 ]
जघान निशितैर्बाणैः सर्वक्षत्रस्य पश्यतः ॥
स धनुः पुनरत्युग्रं चिच्छेद युधि सात्यकिः ।
शरेण तीक्ष्णपुङ्खेन डिभकस्य दुरात्मनः ॥
ततोऽन्यद्धनुरादाय सत्वरं स नृपोत्तमः ।
धनुषा तेन राजेन्द्र सात्यकिं विव्यधे पुनः ॥ [ 3310 ]
एवं धनूंषि राजेन्द्र शतं पञ्च च पञ्च च ।
छित्त्वा ननाद शैनेयः सर्वक्षत्रस्य पश्यतः ॥
धनूंषि तौ समुत्सृज्य वीरौ डिभकसात्यकी ।
खड्गौ प्रगृह्य चात्युग्रौ युद्धाय समुपस्थितौ ॥
तौ हि खड्गविदां श्रेष्ठौ वीरौ डिभकसात्यकी । [ 3315 ]
दौःशासनिर्महाराज सौमदत्तिस्तथैव च ॥
अभिमन्युश्च विक्रान्तो नकुलश्च तथैव च ।
एते खड्गविदां श्रेष्ठाः कीर्तिता युधि सत्तमाः ॥

---

— (L 3284) $D_6$ दक्षिणे (for °णं) — (L 3285) $Ds_2$ बलः; $T_1$ $G_{1\ 4\ 5}$ $M_4$ हली; $T_2$ हरि. (for बली) — (L 3287) $Ds_2$ $G_{1\ 2\ 4.5}$ $M_4$ रणे (for रणं).

Colophon — *Mention of the Epic* $Ds_2$ — *Mention of Khila* Dn $Ds_2$ $D_6$ $T_{1\ 2.4}$ $G_{1\ 2.4.5}$ M — *Adhy. name* $Dn_1$ हंसडिभकोपाख्याने हंसयुद्धम्, $Dn_2$ हंसडिभकवधे हंसयुद्धम्, $Ds_2$ $G_{4\ 5}$ हसबलयुद्धम्, $T_2$ $G_1$ हंसडिबकोपाख्याने हंसबलभद्रयुद्धम् $M_{2\ 4}$ हंसडिभकम्. — *Adhy no :* Dn $Ds_2$ 307, $T_1$ 235, $T_2$ 237; $T_4$ 204, $G_1$ 227; $G_2$ 230; $G_4$ 233, $G_5$ 238, $M_{1-3}$ 200, $M_4$ 199

(L 3288) अत्यन्तं (for °र्थं) —(L 3289) $Ds_2$ $T_1$ ॰ विख्यातौ (for प्र°) —(L 3291) $D_6$ वीर; $T_4$ $M_{2-4}$ वीरं; $G_2$ बाणैर् (for वीरो) $T_2$ -विक्रमः (for °मम्) $Ds_2$ $D_6$ $T_4$ $G_2$ डिभकं वेदपारगम्, M °कं शस्त्रवित्तमम् (for $^{b}$). — (L. 3292) $Ds_2$ $T_4$ $G_2$ $M_{1\ 4}$ तेन वक्त्रे, $D_6$ $M_{2\ 3}$ स्तने वक्त्रे (for स्तनमध्ये) — (L. 3295) $T_4$ -वरो (for -वीरो) $G_2$ नृप (for रणे) Dn निषिद्धान्विनदन्भुवन्; $D_6$ $T_4$ विवि- ($T_4$ निषि)ध्य व्यनदन्नृप; $T_{1,2}$ $G_{1\ 4.5}$ M निषिध्य व्यनद-द्रुतम् (for $^{b}$) — (L 3296) $Ds_2$ $T_2$ $G_{1\ 5}$ विद्धः (for °ध्वा) $M_3$ सात्यकि (for किम्) — (L 3298) $D_6$ $G_2$ तान्निर्भिद्यान्तरे शूरो (for $^{a}$) — After line 3299, $M_3$ ins.

24** अथान्यद्धनुरादाय डिभकः शत्रुकर्शनः ।

— (L 3300) $T_4$ वीरो (for राजन्) $Ds_2$ $T_1$ चापमादाय चापरम् (for $^{b}$) — $G_1$ om lines 3304–3313 — (L. 3304) $D_6$ $T_4$ $G_4$ पुराभवत्, $G_2$ पुरा धनुः (for पुनर्महत्). $Ds_2$ $T_2$ गृहीतं यत्पुरा धनु· (for $^{b}$) — $G_2$ om (hapl.) lines $3305^{b}$–$3309^{a}$ $M_4$ om (hapl) lines 3307–3312. — (L 3307) Dn $T_{1\ 2}$ $G_4$ अत्यर्थं (for अत्युग्रं). $D_6$ $T_4$ अत्रा(for तत्रा)पि धनुरत्युग्रं (for $^{a}$). — (L. 3308) $D_6$ अतितीक्ष्णसुपुङ्खेन, $T_4$ नवतीक्ष्णसु°, $M_{1-3}$ नवीकृतसु° (for $^{a}$) — (L 3309) $D_6$ $T_4$ $G_2$ सात्यकिं (for सत्वरं). — (L 3310) $G_2$ सारथिं (for सात्यकिं) — (L. 3311) $D_6$ दश (for शतं) — (L 3312) $G_4$ भित्त्वा (for छित्त्वा) $T_4$ $G_2$ छित्त्वा च (for ननाद) $D_6$ ननाद छित्त्वा शैनेयः (for $^{a}$) $G_2$ -लोकस्य (for -क्षत्रस्य). — (L 3313) $T_4$ $G_2$ $M_4$ धनुषी (for धनूंषि). $Ds_2$ $T_{1,2}$ परित्यज्य (for

एष्वेतौ हि नृपश्रेष्ठौ खड्गे हि नृपसत्तमौ ।
तावेतावसिना युद्धं चक्रतुर्युद्धलालसौ ॥ [ 3320 ]
भ्रान्तमुद्भ्रान्तमाविद्धं प्रविद्धं बाहुनिःसृतम् ।
आकरं विकरं भिन्नं निर्मर्यादममानुषम् ॥
संकोचितं विकुचितं सव्यजानु विजानु च ।
आहितं चित्रकं क्षिप्तं कुडुम्बं लम्बनं धृतम् ॥
सव्यबाहु विनिर्बाहु सव्येतरमथोत्तरम् । [ 3325 ]
त्रिबाहुतुङ्गबाहू च सव्योन्नतमुदासि च ॥
पृष्ठतःप्रहरं चैव यौधिकं प्रथितं तथा ।
इति प्रचारान्द्वात्रिंशच्चक्रतुः खड्गयोधिनौ ॥
पुनश्च प्रहरन्तौ तौ न च श्रममुपेयतुः ।
पुष्करस्थौ महाराज युद्धाय कृतनिश्चयौ ॥ [ 3330 ]
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
तुष्टुवुस्तौ महाराज जये धृतकृतश्रमौ ।
अहो वीर्यमहो वीर्यमेतयोर्बलशालिनोः ॥
एतावेव रणे शक्तौ खड्गे धनुषि पारगौ ।
एकः शिष्यो गिरीशस्य द्रोणस्यान्यो हि धीमतः ॥ [3335]
अर्जुनः सात्यकिश्चैव वासुदेवो जगत्पतिः ।
त्रय एते महाराज प्रथिताः संगरे सदा ॥
डिभकः शक्तिभृच्छर्वस्त्रय एते महारथाः ।
प्रसिद्धाः सर्व एवैते वीर्येषु च बलेषु च ॥
इति ते देवगन्धर्वाः सिद्धा यक्षा महोरगाः । [ 3340 ]
दिवि स्थिताः समं ब्रूयुर्युद्धदर्शनलालसाः ॥

Colophon.

वैशंपायन उवाच ।

वसुदेवोग्रसेनौ च वृद्धौ युद्धेषु निर्वृतौ ।
जराजरितसर्वाङ्गौ पलिताङ्गशिरोधरौ ॥
ज्ञानविज्ञानसंपन्नौ राजमार्गविशारदौ ।
युयुधाते महारङ्गे राक्षसेन दुरात्मना ॥ [ 3345 ]
शरैरनेकसाहस्रैरर्दयामासतू रणे ।

---

समुत्सृज्य ) Dn G4 धनुषी तौ परित्यज्य ( for ᵃ ) — G5 om om lines 3315–3319 T2 G2 om lines 3316–3318 — ( L 3316 ) G2 महाभाग· ( for °राज ) Dn T4 सोमदत्त ( for सौमदत्तिस् ) — ( L 3318 ) Ds2 M1–3 सत्तम ( for °माः ) — D6 om lines 3319 — ( L 3319 ) Dn एते-ष्वेतौ ; Ds2 G( ed ) एधेतां हि , T2 एष्वेते हि , T4 G2 एवं तौ हि ( for एष्वेतौ हि ) Dn षट्सु वै , T2 G1 खड्गेषु , G2 खड्गेऽपि , G(ed ) खड्गाभ्यां ( for खड्गे हि ) Cal ed -सत्तम ( for °मौ ). — ( L 3320 ) Cal ed तत्र तावू ( for तावेताव् ) D6 तावेव चासिना युद्धं ( for ᵃ ) — ( L 3321 ) D6 T4 निबद्धं ( for प्रविद्धं ). Dn1 D6 M1–3 बहु- ( for बाहु ). — ( L 3322 ) Dn1 आकेरं , Dn2 आकारं ( for आकर ) M4 विकिरं ( for विकरं ) T2 छिन्नं ( for भिन्नं D6 आकारं विकिरं भिन्नं , G(ed ) आकरं निष्करं मित्र ( for ᵃ ) G2 अमर्यादम् ( for निर्म° ). — ( L 3323 ) D6 संकुचितं ( for संको° ) Dn T1, 4 G4 5 कुलचितं ( for विकु° ). — ( L 3324 ) T1 4 G1 4 5 M2 4 आहिकं , G2 आधिकं ( for आहितं ) Ds2 G(ed ) चक्रकं ( for चित्रक ). D6 आभिकं चित्रिकं क्षिप्त ( for ᵃ ) Dn T4 कुटुम्बं , Ds2 G4 5 कुसुम्बं ( for कुडुम्बं ). D6 कुटुम्बं लवणद्रुतम् , T1 कुसुम्भं लबकं धृतम् ; T2 कुडवं लम्बनं द्रुतम् , G2 कुटुम्बं लम्बनं मृतम् , Cal ed कुद्रवं लवण धृतम् ( for ᵇ ) — ( L 3325 ) Dn T1 G1 2, 4, 5 सर्वबाहु , D6 सव्य-बाहुं ( for °बाहु ) — ( L 3326 ) Ds2 T2, 4 G1 4 5 M4 त्रिबाहुस्तुङ्गबाहुश्च ( for ᵃ ). Ds2 सव्यानतम् ; G2 सव्येनैत्रम् ( for सव्योन्नतम् ) — ( L 3327 ) Dn G2 4 5 प्रथितं ; D6 T4 प्राहरं ( for प्र° ) T2 G1 प्रहरं ( for प्रथितं ) — ( L 3328 ) Dn Ds2 T1 2 G1 4 5 प्रकारान् ; G2 प्रचारं ( for °रान् ). — ( L 3329 ) Ds2 D6 T4 G2 5 M पुन पुन. प्रहरन्तौ ( for ᵃ ) — ( L 3331 ) T4 G2 यक्षाश् ( for सिद्धाश् ) D6 स-यक्षाश्च महर्षय ( for ᵇ ) — ( L 3332 ) Dn D6 T2 G1. 4 5 कृतपरि- , G2 जयोद्धत- ( for धृतकृत- ) — ( L 3333 ) Ds2 T1 4 G2 M धैर्यम् ( for the second वीर्यम् ) Dn G4 5 अन-योर् ( for एतयोर् ) Ds2 G4 बाहु- ( for बल- ) T1 2 G1, 2 अनयोर्बाहुशालिनो ( for ᵇ ) — ( L 3337 ) T2 एव , G2 युद्धे ( for एते ). D6 T4 G2 पृथिव्यां कृतिन सदा ( for ᵇ ). — ( L 3341 ) D6 T4 G2 अम्बरे सस्थिता ब्रूयुर् ( for ᵃ )

COLOPHON — *Mention of the Epic* · Ds2 — *Mention of Khila* . Dn Ds2 D6 T1 2 4 G1 2 4 5 M —*Adhy. name* Dn हंसडिभकवधे सात्यकिडिभकयोर्युद्धम् , Ds2 T1 4 हसडिभकोपाख्यानम् , T2 G1 हसडिबकोपाख्याने सात्यकिडिब-कयुद्धम् , M2 4 हंसडिभकम् — *Adhy no* Dn Ds2 308 , T1 236 , T2 G1 238 ; T4 205 , G2 231 , G4 230 ; G5 237 , M 200

( L 3342 ) Dn युद्धे च , Ds2 D6 G1 2 4 5 M1 3, 4 युद्धे सु ( for युद्धेषु ). M2 युद्धे वृद्धौ सुनिर्वृतौ ( for ᵇ ). — ( L 3343 ) T1 -जर्जर- ( for जरित ) Ds2 T1 2 G1, 4 5 M4 -शिरोरुहौ ( for °धरौ ) — ( L. 3345 ) T2 महावीरौ

एवं सर्वमहोरात्रं मुह्यामि परिचिन्तयन् ॥
यद्यहं समनुग्राह्यो यदि सख्यं त्वमिच्छसि ।
नयस्व चित्रलेखे मां द्रष्टुमिच्छाम्यहं प्रियाम् ॥
कामसंतापसंतप्तः प्रियासंगमकातरः ।
एषोऽञ्जलिर्मया बद्धः सत्यं स्वप्नं कुरुष्व मे ॥ [ 35 ]
तस्य तद्वचनं श्रुत्वा चित्रलेखा वराप्सराः ।
सफलोऽद्य मम क्लेशः सख्या मे यत्प्रयाचितम् ॥
ईप्सितं तस्य विज्ञाय अनिरुद्धस्य भामिनी ।
चित्रलेखा ततस्तुष्टा तथेति च तमब्रवीत् ॥

35

$K_{1.3.4}$ $\tilde{N}_{2.3}$ V B D $T_{2.4}$ G ins. after adhy 108 . $\acute{S}_1$ after adhy 109

वैशंपायन उवाच ।

यदा बाणपुरे वीरः सोऽनिरुद्धः सहोषया ।
संनिरुद्धो नरेन्द्रेण बाणेन बलिसूनुना ॥
तदा देवी स कौमारी रक्षार्थं शरणं गतः ।
यद्गीतमनिरुद्धेन देव्याः स्तोत्रमिदं शृणु ॥
अनन्तमक्षयं दिव्यमादिदेवं सनातनम् । [ 5 ]
नारायणं नमस्कृत्य प्रवरं प्रथमं प्रभुम् ॥
चण्डीं कात्यायनीं देवीमार्यां लोकनमस्कृताम् ।
वरदां कीर्तयिष्यामि नामभिर्हरिसंस्तुतैः ॥
ऋषिभिर्दैवतैश्चैव वाक्पुष्पैरर्चितां शुभाम् ।
तां देवीं सर्वदेहस्थां सर्वदेवनमस्कृताम् ॥ [ 10 ]
महेन्द्रविष्णुभगिनीं नमस्यामि हिताय वै ।
मनसा भावशुद्धेन शुचिः स्तोष्ये कृताञ्जलिः ॥
गौतमीं कंसभयदां यशोदानन्दवर्धिनीम् ।
मेध्यां गोकुलसंभूतां नन्दगोपस्य नन्दिनीम् ॥
प्रज्ञां दक्षां शिवां सौम्यां दनुपुत्रप्रमर्दिनीम् । [ 15 ]

---

मतिं ) $D_3$ तस्या सं- ( for सयोगं ) $D_6$ $G_{2.4.5}$ च रतिं ( for रुदितं ). — $K_2$ om line 31 — ( L 31 ) $D_3$ अहोरात्रमहं चैव ( for ° ) — ( L 33 ) $D_3$ तां ( for [अ]हं ) — After line 33, $\tilde{N}_3$ $Dn_2$ ins. :

3** ईप्सितं तस्य विज्ञाय सानिरुद्धस्य भाविनी ।
चित्रलेखा ततस्तुष्टा तथेति च तमब्रवीत् ॥

— $K_{2-4}$ $\tilde{N}_3$ $V_{1.2}$ $B_{1.3}$ Ds $D_{1.5}$ $G_{2-5}$ $T_4$ om lines 34–37 — (L. 34) $\tilde{N}_2$ $V_3$ -दर्शन- ( for -संगम- ) Bom. Poona eds G(ed) -कामत: ( for -कातर. ) — ( L 35 ) $\tilde{N}_2$ $V_3$ $B_2$ दत्त. ( for बद्ध ) $K_1$ $D_4$ एष क्षणो मया बद्ध ( $K_1$ °द्धा ) ( for ° ) $\tilde{N}_2$ $V_3$ तत् ( for मे ). — $\tilde{N}_2$ $V_3$ om. line 36 — ( L 37 ) $D_3$ एतत् ( for मे यत् ) $K_1$ $D_4$ सख्या मे प्रतियाचितुम् ( for ⁶ ) — Before line 38, $K_1$ $\tilde{N}_2$ $B_2$ Dn $D_{4.6}$ ins. वैशंपायन उवाच. $Dn_1$ om lines 38–39 — ( L 38 ) $K_3$ $\tilde{N}_2$ $B_{1.3}$ $Dn_1$ $D_6$ सानिरुद्धस्य ( for अनि° ) — After line 39, $D_4$ ins .

4** वार्तालापै. सुमधरै काङ्क्षितार्थोऽपि निद्रया ।
निमीलिताक्ष. सोऽभवन्नृप शार्दूलविक्रम. ॥
सुकेश्या वचन श्लाघ्यं जहार सह शय्यया ।
द्व्याधिक अयुतं भूप त्रिमुहूर्तमनवेगत:

35

$G_4$ om the ref — (L. 1) एतद् ( for यदा ) $K_3$ बद्ध:; $G_2$ धीर· ( for वीर· ) $G_{1.3}$ [उ]षया सह ( by transp ) — ( L 2 ) $D_3$ स ( for सं- ) $\acute{S}_1$ $K_1$ $\tilde{N}_2$ $V_{1.2}$ B Ds $D_{2-4.6}$ $T_2$ G ऽसुरेन्द्रेण , $V_3$ ऽनिरुद्धेन ( for नरेन्द्रेण ) — ( L 3 ) $D_{1.5}$ कोटवीं स , Bom Poona eds G(ed) कोटवतीं ( for स कौमारीं ) $\acute{S}_1$ तदा स देवीं कोवीर्यां , $B_1$ Dn Ds तदा स कोटवीं देवीं ( for ° ) $G_5$ रक्षणं ( for रक्षार्थं ) — ( L 4 ) $T_2$ $G_{1.3.5}$ यथा तथा ( for यद्गीतम् ) — ( L 5 ) $D_5$ अजयं ( for अक्षयं ). $K_3$ $V_3$ देवम् , $D_3$ वीरम् , $T_2$ $G_1$ नित्यम् ( for दिव्यम् ). — Before line 6, G(ed) ins अनिरुद्ध: — ( L 6 ) $\acute{S}_1$ प्रजाना ( for प्रवरं ) Bom Poona eds G(ed) जगतां ( for प्रथमं ) $K_1$ $\tilde{N}_2$ $V_{1.3}$ $B_{1.3}$ $D_{2-4.6}$ विभुम् ( for प्रभुम् ) $T_{2.4}$ G प्रथमं प्रवरं प्र( $T_4$ $G_2$ वि )भुम् ( for ᵇ ) — ( L 7 ) $\acute{S}_1$ चण्डां , $D_2$ भक्त्या ( for चण्डीं ) $\acute{S}_1$ परां , $K_4$ मायां , $B_1$ आर्य- ( for आर्यां ). — After line 7, G(ed) ins

1** महेन्द्रविष्णुभगिनीं सर्वदेवनमस्कृताम् ।

— $G_2$ om line 8 Before line 8, $D_2$ ins अनिरुद्ध उवाच .— (L. 8) $G_{1.3.5}$ गति- ( for हरि- ) $T_2$ G(ed) नामभिर्गीतिसंस्कृतै: ( for ᵇ ) — ( L 9 ) $\acute{S}_1$ दैवतैर्ऋषिभिश्चैव ; $T_2$ $G_{1.3.5}$ ऋग्भिर्वेदपरै° ) $K_{1.3}$ $V_1$ Dn $D_{3.4}$ राक्षसैर् , $K_4$ $D_{1.5}$ चाक्षुषैर् ( for वाक्पुष्पैर् ). $\acute{S}_1$ शुभै , $T_2$ $G_{3.5}$ शिवाम् ( for शुभाम् ) — ( L 10 ) $T_{2.4}$ G तोषयिष्यामि तां देवी ( for ° ) $\acute{S}_1$ $V_3$ $B_{1.3}$ -भूत- , $B_2$ -लोक- ( for -देव- ). — $K_3$ om ( hapl ) lines 11–16 . Before line 11, $K_{1.4}$ $\tilde{N}_2$ V B D ( except $D_2$ ) $T_4$ $G_{3.4}$ ins अनिरुद्ध उवाच. — ( L 11 ) $\acute{S}_1$ $G_2$ नमास्यात्म- ( for नमस्यामि ) — $G_3$ om lines 12–14 — ( L 12 ) $\acute{S}_1$ -शुद्धात्मा ( for -शुद्धेन ) $V_3$ $B_1$ $D_6$ मनसा शुद्धभावेन ( for ° ). $G_2$ आशु ( for शुचि ). — ( L.

तां देवीं सर्वदेहस्थां सर्वभूतनमस्कृताम् ॥
दर्शनी पूरणीं मायां शशिवक्त्रां शशिप्रभाम् ।
शान्ति ध्रुवां च जननी मोहनीं शोषणीं तथा ॥
सेव्यां देवैः सर्षिगणैः सर्वदेवनमस्कृताम् ।
कालीं कात्यायनी देवीं भयदां भयनाशनीम् ॥ [20]
कात्यायनीं कामगमां त्रिनेत्रां ब्रह्मचारिणीम् ।
सौदामिनीं मेघरवां वेताली विपुलाननाम् ॥
यूथस्थाद्यां महाभागां शकुनीं रेवतीं तथा ।
तिथीनां पञ्चमी षष्ठी पौर्णमासी चतुर्दशीम् ॥
सप्तविंशति ऋक्षाणि नद्यः सर्वा दिशो दश । [25]
नगरोपवनोद्यानद्वाराट्टालकवासिनीम् ॥
ह्रीं श्रीं गङ्गां च गान्धारीं योगिनीं योगदां सताम् ।
कीर्तिमाशां दिशं स्पर्शां नमस्यामि सरस्वतीम् ॥
वेदानां मातरं चैव सावित्री भक्तवत्सलाम् ।
तपस्विनी शान्तिकरीमेकानंशां सनातनीम् ॥ [30]
कौवेरीं मदिरां चण्डामिलां मलयवासिनीम् ।
भूतधात्री भयकरीं कूष्माण्डीं कुसुमप्रियाम् ॥
दारिणीं मदिरावासां विन्ध्यकैलासवासिनीम् ।
वराङ्गनां सिंहरथां बहुरूपां वृषध्वजाम् ॥
दुर्लभां दुर्जयां दुर्गां निशुम्भभयदर्शिनीम् । [35]
सुरप्रियां सुरां देवीं वज्रपाण्यनुजां शिवाम् ॥
किरातीं चीरवसनां चोरसेनानमस्कृताम् ।

---

13) K1 D4 G2 -घातां त्वां ( G2 तां ), K4 -भेदाय, Ñ2 V1 2 Dn -घातां च, D2 -मथनीं, D3 -पाताय, G4 5 -पातां च ( for -भयदां ) — ( L 14 ) D3 मध्ये, G4 5 मेधां ( for मेध्यां ). Ś1 गोपाल- ( for -गोकुल ) D3 -वर्धनीम् ( for नन्दिनमि् ). — ( L 15 ) B2 3 D2 T4 G2-5 प्राज्ञां ( for प्रज्ञां ) K1 Ñ2 V1 2 B1 ( marg ) 2 3 Ds D2-4 G4 5 शुभा ( for शिवां ) V3 D6 पुण्यां, B1 ( marg as above ) मुख्यां ( for साम्यां ). Ś1 प्राच्यां दिक्स्थां दिशं सौम्यां ( for $^{a}$ ) Ñ2 B2 Ds D2 4 T2 -प्रमर्दनीम्, G3 4 -विमर्दिनीम् ( for -प्र° ). Ś1 दनुपुत्रस्य मर्दनीम् ( for $^{b}$ ) — Ś1 V3 B1 3 om line 16. — ( L 16 ) D3 G5 -भूतस्थां, D4 6 -देवस्थां ( for -देहस्थां ) Ds -देव-, D6 -लोक- ( for -भूत- ) — ( L 17 ) V दशमीं ( for दर्शनीं ). D4 दर्शिं नारायणीं मायां ( for $^{a}$ ) D5 महामायां, T2 G1 3-5 शुभवक्त्रां, Bom Poona eds G(ed) वह्निसूर्य- ( for शशिवक्त्रां ) — ( L 18 ) T2 शान्तिद्रुहं ( for शान्तिं ध्रुवां ) G2 शिवां घोरां ( for च जननीं ). V1 2 शान्तिं ध्रुवाशां ( V2 °णां ) जननीं ( for $^{a}$ ). Ds2 D1, 2 G3 मोहिनीं ( for मोहनीं ) K3 Ñ2 V1 B Dn D3 6 तोषणीं ( for शो° ) Ś1 K1 4 V3 Dn1 Ds1 D4 T2 4 मोहिनीं तोषणी तथा; V2 G2 4 तोषणीं मोहनीं तथा, G3 जनानां तोषणीं तथा ( for $^{b}$ ) — T2 4 G om ( hapl ) lines 19-23. — ( L 19 ) K3 Ñ2 V3 B1 3 Dn D6 स्तव्यां, D1 सध्यां ( for सेव्यां ) Ś1 ऋषि- ( for सर्षि- ) K4 संध्यां देवैश्च सगणै., D3 संध्यां देवैर्ऋषिगणै. ( for $^{a}$ ) Ś1 Ñ2 V B2 3 Ds1 D2 -भूत-; D3 -भूतैर्, D6 लोक- ( for -देव- ). — After line 20, Dn ins

2** कन्यां कपालिनीं देवीं सौम्यां त्रिदशपूजिताम् ।

—( L 21 ) Ś1 D1 2, 5 कालरात्रीं, B1 कापालिनीं, D6 कालायनीं ( for कात्या° ). — ( L 22 ) B1 सौदामनीं ( for °मिनीं ) Ñ2 मेघबलां; V1 °वरां, D2, 5 °गमां ( for °रवां ). Ñ2 V वाचालां, B2 वातालीं ( for वे° ) — ( L 23 ) V1 B1 Ds D6 यूथस्याम्बां; B2 गुहस्याद्यां, D2 4 पृथुश्यामा, D3 सुन्दरास्यां ( for यूथस्याद्या ) Ñ2 कुशलां, V1 शकुनां ( for °नीं ) — ( L. 25 ) V3 B1 2 Ds D6 सप्तविंशतिमृक्षस्य ( for $^{a}$ ) — ( L. 26 ) G2 नगरोपवनोद्देशे ( for $^{a}$ ) V1 -द्वाराट्टालनिकेतनाम्; V3 B3 D5 -चयाट्टालनि( B3 °क )वासिनीम्, D2 -ग्रामारण्यक°; T2 G1 3 5 चत्वराट्टविलासिनीम्, G2 सदानन्दैकवा° ( for $^{b}$ ) — T2 G om ( hapl ) lines 27-33 — ( L 27 ) K4 D4 ( marg ) 5 T4 ह्री श्रीं गार्गीं च गन्धर्वीं, Ñ2 V ह्रीं श्रीं गार्गीं च गान्धर्वीं, B2 ह्री श्रीं शाङ्गीं च गान्धर्वीं ( for $^{a}$ ) Ś1 K1 3 4 Ñ2 V B D सदा ( for सताम् ) — ( L 28 ) V3 D6 नमस्येऽहं ( for नमस्यामि ). — Ñ2 om line 29 — ( L 29 ) Ś1 K1 V3 D4 T4 देवानां ( for वेदानां ) K1 V1 3 D3 4 भक्ति- ( for भक्त- ) — ( L 30 ) K1 3, 4 D4 शताननाम् ( for सनातनीम् ). — ( L 31 ) Ś1 कौटीर्यां, K3 Dn कौटवीं, D1 4, 5 कौबेर्यां ( for कौबेरीं ) K3 Dn2 D2-4 6 चण्डीम् ( for चण्डाम् ). — ( L 32 ) D3 कुम्भाण्डी ( for कूष्माण्डी ) B1 3 D6 समर- ( for कुसुम- ) Ś1 कूष्माण्डी कुसुमाश्रयाम्; V3 कुम्भाण्डीं समरप्रियाम् ( for $^{b}$ ) — ( L 33 ) K3 4 V2 मन्दरावासां ( for मदि° ) Ś1 K1 Ñ2 V1 3 B Dn Ds D2, 3 5 T1 दार- ( Ś1 Ñ2 B2 Dn1 Ds2 °रु)णी मन्दरावासां ( for $^{a}$ ) — ( L. 34 ) Ñ2 V3 B1 Ds D6 सिंहरवा; B2 D1, 5 G5 °रथीं ( for °रथां ) D3 बहुभूषा ( for °रूपां ) — ( L. 35 ) G दुर्गमां ( for दुर्जया ) Ś1 देवीं ( for दुर्गां ). B2 दुर्जयां दुर्लभां दुर्गां ( for $^{a}$ ) G2 निर्भया ( for निशुम्भ- ). Ds2 -मर्दिनीम् ( for दर्शिनीम् ) — ( L 36 ) V1 3 B D3 6 सुराप्रियां ( for सुर° ). T4 शुभाम् ( for शिवाम् ) — ( L 37 ) Dn2 चारु- ( for चीर- ). V3 किरातीं चारुसंधानां, Dn1 °तां चारुवसनां ( for $^{a}$ ), V3 Ds D6 चोरैर्नित्य-, T2 G शूरसेन- ( for चोरसेना- ).

आज्यपां सोमपां सौम्यां सर्वपर्वतवासिनीम् ॥
निशुम्भशुम्भमथनी गजकुम्भोपमस्तनीम् ।
जननी सिद्धसेनस्य सिद्धचारणसेविताम् । [ 40 ]
वरां कुमारप्रभवां पार्वतीं पर्वतात्मजाम् ॥
पञ्चाशद्देवकन्यानां पत्न्यो देवगणस्य च ।
कद्रूपुत्रसहस्रस्य पुत्रपौत्रवरस्त्रियः ॥
माता पिता जगन्मान्या दिवि देवाप्सरोगणैः ।
ऋषिपत्नीगणानां च यक्षगन्धर्वयोषिताम् ॥ [ 45 ]
विद्याधराणां नारीषु साध्वीषु मनुजासु च ।
एवमेतासु नारीषु सर्वभूताश्रया ह्यसि ॥
नमस्कृतासि त्रैलोक्ये किंनरोद्गीतसेविते ।
अचिन्त्या ह्यप्रमेयासि यासि सासि नमोऽस्तु ते ॥
एभिर्नामभिरन्यैश्च कीर्तिता ह्यसि गौतमि । [ 50 ]
त्वत्प्रसादादविघ्नेन क्षिप्रं मुच्येय बन्धनात् ॥
अवेक्षस्व विशालाक्षि पादौ ते शरणं व्रजे ।
सर्वेषामेव बन्धानां मोक्षणं कर्तुमर्हसि ॥
ब्रह्मा विष्णुश्च रुद्रश्च चन्द्रसूर्याग्निमारुताः ।
अश्विनौ वसवश्चैव धाता भूमिर्दिशो दश ॥ [ 55 ]
गावो नक्षत्रवंशाश्च ग्रहा नद्यो ह्रदास्तथा ।
सरितः सागराश्चैव नानाविद्याधरोरगाः ॥
तथा नागाः सुपर्णाश्च गन्धर्वाप्सरसां गणाः ।
कृत्स्नं जगदिदं प्रोक्तं देव्या नामानुकीर्तनात् ॥
देव्याः स्तवमिमं पुण्यं यः पठेत्सुसमाहितः । [ 60 ]
सा देवी सप्तमे मासि वरमग्र्यं प्रयच्छति ॥
अष्टादशभुजा देवी दिव्याभरणभूषिता ।
हारशोभितसर्वाङ्गी मुकुटोज्ज्वलभूषणा ॥
कात्यायनि स्तूयसे त्वं वरदे वामलोचने ।
नमोऽस्तु ते महादेवि सुप्रीता हि भजस्व माम् । [ 65 ]

— $T_4$ om line 38 — (L 38) $T_2$ $G_{1\,3\,5}$ पूज्यपां (for आ°). $Ś_1$ पूर्व-, $V_2$ सौम्यां (for सर्व-) $G_5$ सपर्वतनिवासिनीम् (for $^{b}$) — (L 39) $B_1$ -हननी (for -मथनीं) $D_3$ निशुम्भमथनी देवी (for $^{a}$) $Ś_1$ गजकुम्भोपमर्दिनीम् (for $^{b}$) — $K_3$ om line 40 — (L 40) $G_5$ महा- (for सिद्ध-) $T_3$ $G_{1\,3}$ जननी च महासेनां, $G_4$ महासेनस्य जननी (for $^{a}$) — $B_1$ om (hapl) lines 41–45 — (L 41) $G_4$ रामां (for वरां) — (L 42) $K_1$ $D_4$ -पत्नीनां (for -कन्यानां) $G_{1,3}$ या (for च) — (L 43) $V_1$ रुद्र-, $T_2$ $G_{1\,3}$ तस्य; $T_4$ भ्रातृ-; $G_2$ शत्रु-, $G_{4\,5}$ तत्र (for कद्रू-). $G_1$ -जनाश्रयम् (for वरस्त्रिय.) — (L 44) Dn जगन्माया, $D_3$ °त्सत्या (for °न्मान्या) — G om linee 45 — (L. 45) $D_6$ देव (for यक्ष) $K_{1\,3\,4}$ $Ñ_2$ $V_2$ Dn $D_{2-5}$ -सेविताम् (for -योषि°). — $V_1$ om line 47 — (L 47) $Ś_1$ पूर्वदेवाश्रया ह्यसि, $V_3$ $D_6$ सर्वभूतप्रिया ह्यसि, $T_4$ °ताश्रयासु च (for $^{b}$). — (L 49) $Ds_2$ अर्चिता (for अचिन्त्या) $K_4$ सा त्वं; $D_2$ $T_4$ $G_{3\,5}$ यासि (for सासि). — (L 50) $G_2$ एभिश्च नामभिर्मुख्यै (for $^{a}$). — (L 51) $T_2$ $G_{1\,3-5}$ शीघ्रं (for क्षिप्र) $K_4$ $D_1$ मुञ्चेय, $G_2$ मुच्येत (for °य) $Ś_1$ तत्क्षणात् (for बन्धनात्) — (L 52) $Ś_1$ अवेक्षसि (for °क्षस्व) — (L 53) $V_3$ Cal ed बद्धानां (for बन्धानां) — (L 54) G(ed) शक्रश् (for विष्णुश्) $G_{2-5}$ शक्रश् (for रुद्रश्) $T_2$ $G_1$ ब्रह्मा शिवश्च शक्रश्च (for $^{a}$) — (L 55) $Ñ_2$ $V_{1\,2}$ B Dn Ds $D_6$ विश्वे साध्यास्तथैव च (for $^{b}$) — After line 55, $Ñ_2$ $V_{1\,2}$ B Dn Ds $D_6$ ins

3** मरुतः सहपर्जन्यो धाता भूमिर्दिशो दश ।

[ $B_2$ Ds $D_6$ मरुता (for °तः) $Ñ_2$ $V_1$ -पर्जन्यै (for °न्यो) ]

— (L 56) $G_3$ भगो (for गावो) $G_5$ ग्रह (for ग्रहा) $Ś_1$ नन्दा (for नद्यो) — (L 57) $D_2$ यक्षा (for नाना). $Ś_1$ -धरास्तथा, $K_4$ धरा गणा, $V_3$ -धरा खशाः, B $D_6$ -धराः खगा (for -धरोरगा) — (L 58) $D_{1\,6}$ सुपर्वाणो (for °र्णाश्च) $K_1$ $D_4$ नागा सुपर्णाश्च तथा (for $^{a}$) — (L 59) $V_{2\,3}$ $B_2$ $D_6$ $T_2$ G प्रीतं (for प्रोक्तं) $G_2$ देवि ते ह्यनुकीर्तनम् (for $^{b}$). — $D_2$ om lines 60–62 — (L 60) $K_{3,4}$ $V_1$ $B_{1\,2}$ Dn $D_5$ इदं दिव्यं, $Ñ_2$ $V_3$ $B_4$ Ds $D_{3\,4\,6}$ इदं पुण्यं, $V_2$ $D_1$ इमं दिव्यं, $T_4$ इदं सर्वं (for इमं पुण्यं) $Ś_1$ पठेत (for पठेत्सु-) — (L 61) $K_1$ $V_3$ $B_{2\,3}$ $D_{4\,6}$ $G_2$ सा तस्मै, $K_2$ देवी सा (by transp), $V_2$ तन्मे सा, $B_1$ $T_2$ $G_{1\,3-5}$ तस्मै सा $T_4$ तस्मै सा त्वं प्रसन्नासि (for $^{a}$) $K_3$ $T_2$ $G_3$ प्रयच्छसि (for °ति) — (L 62) $Ś_1$ $G_2$ -भुजां देवीं (for -भुजा देवी) $Ś_1$ $G_2$ भूषिताम् (for °ता) — $Ś_1$ om (hapl) line 63 — (L 63) $Ñ_2$ $V_3$ $D_6$ -भूषित- (for -शोभित) $G_2$ सर्वाङ्गी — (L 64) $G_{4\,5}$ त्रायसे (for स्तू°) $K_1$ नित्यं (hypermetric), $K_3$ नित्यं (hypermetric), $V_1$ $D_1$ त्वं च (hypermetric) (for त्वं). — After line 64$^{a}$, $Ds_2$ $D_5$ Bom Poona eds G(ed) ins

4** वरमग्र्यं प्रयच्छसि ।
अतः स्तवीमि तां देवीं

[ (L 1) $D_5$ प्रयच्छ मे (for °च्छसि). — $Ds_2$ om line 2 — (L 2) $D_5$ त्वा (for ता) ]

प्रयच्छस्व वरं ह्यायुः पुष्टिं चैव क्षमां धृतिम् ॥
एवं स्तुता महादेवी दुर्गा दुर्गपराक्रमा ।
सांनिध्यं कल्पयामास अनिरुद्धस्य बन्धने ॥
अनिरुद्धहितार्थाय देवी शरणवत्सला ।
बद्धं बाणपुरे वीरमनिरुद्धं व्यमोक्षयत् ॥ [ 70 ]
सान्त्वयामास तं वीरमनिरुद्धममर्षणम् ।
प्रसादं दर्शयामास अनिरुद्धस्य बन्धने ॥
नागपाशेन बद्धस्य तस्योषाहृतचेतसः ।
स्फोटयित्वा कराग्रेण पञ्जरं वज्रसंनिभम् ॥
रुद्धं बाणपुरे वीरं सानिरुद्धमभाषत । [ 75 ]
सान्त्वयन्ती वचो देवी प्रसादाभिमुखी तदा ॥
चक्रायुधो मोक्षयितानिरुद्ध
त्वां बन्धनादाशु सहस्व कालम् ।
छित्त्वा तु बाणस्य सहस्रबाहुं
पुरीं निजां नेष्यति दैत्यसूदनः ॥ [ 80 ]
ततोऽनिरुद्धः पुनरेव देवी

— G3 om lines 65–68 — (L 65) T4 om (hapl) lines $65^b$–$67^a$ Ś1 सुप्रसीद (for सुप्रीता हि) Bom Poona eds G(ed) सदा भव (for भजस्व माम्) — Before line 66, Ś1 V ins श्रीदेव्युवाच — (L 66) Ñ2 V1 प्रयच्छामि, D4 °च्छ मे, Bom Poona eds G(ed) °च्छ त्वं (for °च्छस्व) Dn1 धरे, G2 पर (for वरं) Ś1 V3 दीर्घमायु प्रयच्छस्व (V3 °च्छासि), G1 5 परं ह्यायु॰ प्रयच्छस्व (for $^a$) Ds1 पुष्टिश्च (for पुष्टिं) — After line 66, Ds2 D6 ins

5** देवी उवाच ।
प्रयच्छामि वरं ह्यायु॰ पुष्टिं चैव क्षमां धृतिम् ।
[ D6 दीर्घमायु प्रयच्छामि (for $^a$) ]

Ds2 D6 cont Ñ2 V B Ds1 D1 2 5 ins after line 66:

6** बन्धनस्थो विमुच्येय सत्यमेतद्भवेदिति ।

D2 cont

7** श्रुत्वा कामानवाप्नोति काङ्क्षितान्मनुज॰ सदा ।

— Before line 67, some Mss ins वैशंपायन उवाच — (L 67) Ds D1–3 तदा (for महा-) — (L 68) T2 G4 5 साध्यं सं-, G1 साध्या स- (for सांनिध्य) K1 सांनिध्यमर्पयामास (for $^a$) Ñ2 सानिरुद्धस्य (for अ°). Ś1 रक्षणे, Dn1 वेधने, D2 मोक्षणे (for बन्धने) — G5 om (hapl) lines 69–72. V3 om lines 70–71 D4 om (hapl) lines $70^b$–$75^a$ — (L 70) K1 D1 2 5 विमोक्षये, G1 अभाषत (for व्यमोक्षयत्) D3 T2 G2 सानिरुद्धमभाषत (for $^b$) — D3 T2 G1 om (hapl) lines 71–75 V1 2 B1 G1.4 om line 71 — (L 71) K1.3 4 Dn D1 2 5 G2 पूजयामास (for सान्त्व°) D3 मनीषिणम् (for अमर्षणम्) Ñ2 अनिरुद्धस्य बन्धने (for $^b$) — V B1 3 ins after line 71 B2 Dn Ds1 after line 72

8** पूजयामास तां वीर सोऽनिरुद्धः प्रतापवान् ।

— B3 om line 72 — (L 72) V3 D6 सा तु वै; D2 मोक्षणे (for बन्धने) — (L 73) Ś1 नागपाशप्रबद्धस्य (for $^a$) D5 [अ]पि, G5 सा (for [उ]षा). — K4 om lines 75–96 D3 om lines 75–94 Ś1 om lines 75–76 — (L 75) K1 Ñ2 V B1 Dn Ds D1 2 5 6 T4 G2 4 5 बद्ध (for रुद्ध) K1 अनिरुद्धम् (for सानि°) — (L 76) Ñ2 V2 महा, G2 च सा (for वचो) — Before line 77, some Mss ins श्रीदेव्युवाच — (L 77) K1 मोचयिता (for मोक्ष°) Ś1 D1 G1 [अ]निरुद्ध — (L 78) T2 G1 तद् (for त्वां) — (L 79) V2 भित्त्वा (for छित्त्वा) K3–4 Ds2 D1 5 T4 G4 स, G2 [आ]शु (for तु) K1 Ñ2 V B Ds D2–4 6 T2 4 G सबाहुचक्र (for सहस्रबाहुं) — (L 80) V2 D3 G1 3 5 पुरं (for पुरीं) T2 G1 3–5 शत्रुसूदन॰ (for दैत्य°) — After line 80, K1 Ñ2 V2 B1 Ds D4 ins

9** वैशंपायन उवाच ।
चक्रायुधो बाहुसहस्रमाजौ
छित्त्वाशु चक्रेण बले सुतस्य ।

K1 Ñ2 V2 B1 Ds D4 cont B2 Dn ins after line 80:

10** वैशंपायन उवाच ।
यदानिरुद्धं सह बाणपुत्र्या
नेतुं खगेन्द्रेण हरि प्रवृत्त ।

K1 Ñ2 V2 B1 2 Dn Ds D4 cont: S1 V1 3 B3 D1. 3 5. 6 T4 G2 4 5 ins after line 80

11** महासुरे बाण उदीर्णचक्रे
न्यक्कारमासन्नतरं निशम्य ।

[ (L 1) Ś1 विन्न चक्रे, V2 महासुरो, G5 ततोऽसुरो (for महासुरे) Ś1 G5 -चक्रो (for -चक्रे). — After line 1, Ś1 ins:

11A** पितृत्वबाणस्य स बाहुचक्रम् ।
चक्रायुधो गृह्य तदानिरुद्धं
पुरे महात्माण सुपर्ण चक्रे ।
निपातितो बाहुविशीर्णगात्र

— (L. 2) T2 श्रीकृष्णम् (for न्यक्कारम्). D1 य. कारयामास *****, D3 निपातिते बाहुविशीर्णगात्रे, D4 न्यक्कारयामास पुर निरस्य, D5 य कारयामास च चक्रमोक्षम्. ]

While, D2 ins after line 80

तुष्टाव हृष्टः शशिकान्तवक्त्रः ।
नमोऽस्तु ते देवि वरप्रदे शिवे
नमोऽस्तु ते देवि सुरारिनाशिनि ॥
नमोऽस्तु ते कामचरे सदा शिवे [ 85 ]
नमोऽस्तु ते सर्वहितैषिणि प्रिये ।
नमोऽस्तु ते भीतिकरि द्विषां सदा
नमोऽस्तु ते बन्धनमोक्षकारिणि ॥
ब्रह्माणीन्द्राणि रुद्राणि भूतभव्यभवे शिवे ।
त्राहि मां सर्वदुःखेभ्यो नारायणि नमोऽस्तु ते ॥ [ 90 ]
नमोऽस्तु ते जगन्नाथे प्रिये दान्ते महाव्रते ।
प्रियभक्ते जगन्मातः शैलपुत्रि वसुंधरे ॥
त्राहि मां त्वं विशालाक्षि नारायणि नमोऽस्तु ते ।
त्रायस्व सर्वदुःखेभ्यो दानवानां भयंकरि ॥
आर्यास्तवमिमं पुण्यं यः पठेत्सुसमाहितः । [ 95 ]

---

12** दीर्घमायुः प्रयच्छामि यथेयं परमा स्तुतिः ।
बन्धनस्थो विमुच्येत सत्यमेतद्भविष्यति ॥

— Before line 81, D2 ins वैशंपायन उवाच — (L 81) B1 आह (for एव) — (L 82) G1 तुष्ट प्र- (for तुष्टाव) D2 तुष्ट. (for हृष्ट.) D1 G5 -कान्तिवक्त्रः; G1 -शान्त° (for -कान्त°) Ś1 तुष्टः प्रहृष्टोऽनुरतिं प्रयास्ये. — Before line 83, some Mss ins अनिरुद्ध उवाच. — (L 83) K1 वरप्रभे (for °दे) Ś1 K1 V1 B1 Dn Ds D2–4 T2 4 G1 4 5 शुभे (for शिवे). — Ś1 D3 T2 G om (hapl) line 84 K1 Dn T4 transp lines 84 and 85 — (L. 84) K1 नाशने, T4 -मर्दने (for -नाशिनि) — D2 om lines 85–88. — (L 85) K1 D2 ध्रुवे, V3 G3 (also as above) शुभे (for शिवे) Ś1 नमोऽस्तु ते कामलोभमहाशिवे, Dn °ऽस्तु ते कामचरी (Dn2 °वरे) सदा ध्रुवे — Ś1 D1 3 5 T2 G ins after line 85, Ñ2 V2 B2, 3 Ds D6 after line 86:

13** नमोऽस्तु ते महिषसुरारिमर्दिनि ।
[ Ś1 महिषासुरविनाशनि, Ñ2 °षासुरारिमर्दिनि; V2 3 B2 3 Ds D5 6 °षमहासुरमर्दिनि (D5 °षहे), D3 °षविनाशने ध्रुवे, G2–4 °षासुरमर्दिनि ]

— Ś1 K1 Dn D1 3–5 T2 G om (hapl) line 86 T4 om lines 87–88. — (L 87) Ñ2 D5 भयकरि (for भीति°) Ś1 नमोऽस्तु ते कामवरप्रदे सदा; K1 D4 °ऽस्तु ते भयं (D4 °य)-करि विद्विषां शुभे; V B Ds D3 6 T2 G °ऽस्तु ते भय(V2 3 B2, 3 Ds1 °यं)करि विद्विषां सदा; Dn D1 °ऽस्तु ते भयकारिणि विद्विषां सदा — Ś1 K1 Ñ2 V B Dn Ds D3 4 6 T2 G om line 88 — (L 89) Ś1 D1 2 -यशस्विनि (for -भवे शिवे) K1 Ñ1 V1 2 B2, 3 Ds D3–6 T2 4 G भूतभव्ये (K1 °वे) यशस्विनि; B1 °भाव्ये मनस्विनि, Dn °भव्यविनाशिनि (for [b]) — (L 90) D1, 5 नः (for मां). Ś1 -दुर्गेभ्यो; Ñ2 V1, 2 D1 5 -भूतेभ्यो (for -दुःखेभ्यो) B1 दानवानां भयंकरि (for [b]) — G4 5 om lines 91–94 Dn om (hapl) lines 91–93 — (L 91) T2 G1 3 जनार्दिनि (for नमोऽस्तु ते) V D3 प्रिय- (for प्रिये) B3 महाभुजे (for °व्रते) Ś1 कात्यायनि नमोऽस्तु ते, T2 G1–3 जनार्दिनि नमोऽस्तु ते (for [b]) — For line 91, B1 subst.

14** रुद्रप्रिये जगन्मातर्नारायणि नमोऽस्तु ते ।

— (L 92) Ñ2 प्रियव्रते, G1 °भक्ति-, D5 भक्तप्रिये, Poona ed भक्तिप्रिये (for प्रियभक्ते) B1 T2 G1–3 प्रियताते (B1 °ये दान्ते, G2 °योऽसि ते) जगन्नाथे, T4 प्रीयतां मे जगन्नाथ (for [a]). — Ś1 D2 3 om line 93 — (L 93) K1 Ñ2 V2, 3 B Ds D1 4–6 T2 G1–3 त्रायस्व मां (for त्राहि मां त्वं) V1 त्रायस्व सर्वभूतेभ्यो (for [a]) D3 दुर्गे देवि (for नारायणि) B1 भक्तानामार्तिनाशिनि (for [b]) — Ñ2 V2 B3 D4 om line 94 — (L 94) Ś1 दुर्गेभ्यो, D1 5 -भूतेभ्यो (for -दुःखेभ्यो) K1 D1 5 देवानामभयंकरि (for [b]) — After line 94, K1 V2 B1 Da Dn D1–3 5 ins

15** रुद्रप्रिये महाभागे भक्तानामार्तिनाशिनि ।

K1 B1 Dn D2 3 cont Ñ2 V B2 3 Ds D1 5 6 T2 4 G1–3 ins after line 93. D4 after line 92 G4 5 after line 90

16** नमामि शिरसा देवीं बन्धनस्थो विमोक्षितः ।
[ D3 शारदा (for शिरसा) K1 D4 यद्बन्धस्थो (for बन्धनस्थो) V2 B1 D2 T2 4 G विमोचित (for °क्षित) ]
K1 Ñ2 V1 3 B Ds1 D1 6 cont

17** रक्ष मां सर्वपापेभ्यो नारायणि नमोऽस्तुते ।
While V2 cont after 15**

18** नमोऽस्तु ते महादेवि शैलपुत्रि वसुंधरे ।
V2 cont V1 3 B2 Ds1 cont after 15** D2 3 cont after 16**.

19** सर्वदुःखभयत्रासात्त्राहि मां परमेश्वरि ।
[ V1 2 त्राहि मा भयनाशिनि (for [b]) ]
Ds1 cont.

20** वैशंपायन उवाच ।
तथेत्युक्त्वा रते पुत्र दुर्गा दुर्गपराक्रमा ।
तमाशु बन्धनान्मुक्त्वा क्षणादन्तरधीयत ॥

— Before line 95, some Mss ins वैशंपायन उवाच. — (L 95) Ś1 K1 Ñ2 V B D1 3 5 6 T2 4 G इदं (for इमं) — (L. 96) Ś1 D2 3 -विशुद्धात्मा (for -विनिर्मुक्तो). — K3 V2 3 B2 3 Dn Ds D1 5, 6 ins after line 96.

सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥

Colophon

36

K Ñ V2 B1. 2 Dn Ds2 D1-6 T2 4 G ins. after the first occurrence of 109 81[cd] V1 3 B3 Ds1 after 109 81 :

प्रणम्याथ वचः प्राह वैनतेयो महाबलः ।
वासुदेवं महात्मानं श्लक्ष्णं मधुरया गिरा ॥
पद्मनाभ महाबाहो किमर्थं चिन्तितो ह्यहम् ।
कृत्यं ते यदिहात्रास्ति श्रोतुमिच्छामि तत्त्वतः ॥
कस्य पक्षपरिक्षेपैर्नाशयामि पुरीं प्रभो । [5]
प्रभावात्तव गोविन्द को न विद्याद्बलं मम ॥
गदावेगं च ते वीर चक्राग्निं च महाभुज ।
नावबुध्यति मूढात्मा को दर्पान्नाशमेष्यति ॥
हलं सिंहमुखं कस्य वनमाली नियोक्ष्यति ।
कस्य देहस्तु निर्भिन्नो मेदिनीं यास्यति प्रभो ॥ [10]
कस्य शङ्खरवैः प्राणान्मोहयिष्यसि माधव ।
कोऽयं सपरिवारोऽद्य यास्यते यमसादनम् ॥
एवमुक्ते तु वचने वैनतेयेन धीमता ।
वासुदेवो वचः प्राह शृणुष्व पततां वर ॥
बलेः पुत्रेण बाणेन प्राद्युम्निरपराजितः । [15]
उषायाः कारणे बद्धो नगरे शोणिताह्वये ॥
अनिरुद्धस्तु कामार्तो बद्धो नागैर्विषोल्बणैः ।
तस्य मोक्षार्थमाहूतो मया त्वं पतगेश्वर ॥

---

D3 cont after 23**

21** बन्धनस्थो विमुच्येत सत्यमेतद्भवेदिति ।

[ K3 ब्रवीति ते , B2 3 भविष्यति ( for भवेदिति ) ]

Ds1 cont

22** देव्या. स्तोत्रमिदं दिव्यं नित्यं य पठते नरः ।
सा देवी सप्तमे मासि वरमध्यं प्रयच्छति ।

While D3 ins after line 96

23** स्वाधनं स्वायुषस्तुष्टिः पुष्टिश्चैव क्षमा धृति ।

COLOPHON om in K2 — *Mention of the Epic* Ds2 — *Mention of Khila* K1 V B Dn2 Ds1 D1 3 4. — *Adhy name* Ś1 अनिरुद्धकृतं देवीस्तोत्रम्, K1 4 V1 3 B3 Dn Ds D1 3-6 बाणयुद्धे अनिरुद्धबन्धमोक्षणे दुर्गा( V3 B3 Ds D6 आर्या )स्तव', K3 अनिरुद्धबन्धमोक्षणे दुर्गास्तव , Ñ2 बाणयुद्धे आर्यास्तवः, V2 अनिरुद्धकृतदुर्गास्तव , B1 2 अनिरुद्ध-( B2 बन्धन )मोक्षणे दुर्गास्तवः, D2 दुर्गास्तव , T2 G1 3 उषा-निरुद्धबन्धन ; G4 देवीस्तोत्रम् — *Adhy no* K3 172, V1 2 177, V3 Dn Ds2 175, D1 169, D3 193, D4 174, T2 G1 5 254, T4 223, G2 243, G3 252, G4 256.

## 36

( L. 1 ) T2 श्रुत्वा ( for प्राह ) — G2 om line 2. — Before line 3, B2 Ds2 Bom Poona eds G( ed ) ins गरुड उवाच — ( L 3 ) Bom Poona eds G(ed) संस्मृतो ( for चिन्तितो ) K Dn D1. 3-5 किमर्थं चिन्ति( D3 °र्थे वित)ता वयम् ( for [b] ) — ( L 4 ) K1 2 V3 B1 Ds2 D4 6 यदि चेहास्ति, Ñ2 यदि तत्राह ; B1 ( marg ) T2 G1-3 यदि तत्रास्ति ; B2 3 D2 यदि चात्रास्ति ; G4 5 यदि तत्रास्मिन् ( for यदिहात्रास्ति ). — ( L 5 ) Ñ2 नाशयेयं ( for °यामि ) V3 रिपुं , B1 2 D3 6 G1 3-5 पुरं ( for पुरीं ) Cal ed विभो ( for प्रभो ) — ( L 6 ) K4 प्रभावं ( for °वात् )· G3 विद्वान् ( for विद्याद् ) — G3 om lines 7-13 — ( L 7 ) K2 चक्राग्र्यं , T2 G1 2.4 5 °दीप्ति ( for °ग्निं ) — T2 G1 5 om lines 8-13 —( L. 8 ) V2 धर्मात्मा ( for मूढात्मा ) D3 नैव वेत्ति च मूढात्मा ( for [a] ). Ds2 को दर्पान्नाशयिष्यति ( for [b] ) — G4 om lines 9-13. G2 om. line 9 — ( L 9 ) D3 निधास्यति ( for नियोक्ष्यति ) — ( L. 10 ) K1 2 4 Ñ2 3 ( marg as above ) V2 3 B Dn1 Ds D1. 2. 4-6 T4 देहं ( for देहस् ) K1 2 V2 3 B Ds D6 निर्भिन्नं ; K3 4 V1 Dn1 निर्दग्धो , Ñ2 Dn2 D1 3 5 T4 निर्दग्धं ; D2 निर्भिद्य ( for °न्नो ) —( L 11 ) K1 2 D4 खड्गरवैः ; G2 शङ्ख-रवात् ( for °रवैः ) K1 D4 मोचयिष्यसि , K2 सेव° , K3 4 D1 5 मोक्ष° ( for मोह° ) G2 मोहं यास्यन्ति माधव ( for [b] ) — ( L 13 ) K3 वैनतेय प्रतापवान् ( for [b] ) — ( L 14 ) T2 श्रुत्वा ( for प्राह ) Ñ3 शृणु त्वं , D1 शृणुध्व ( for °ष्व ) K Ñ3 V1 2 D1-5 T2 4 G2 4 5 वदतां ( for पततां ) — K3 4 Ñ3 V B1 3 Dn Ds D1 5 6 T2 4 G1. 2 4 5 om lines 15[b]-16[a] — ( L 16 ) D2 कामी ( for बद्धो ) — ( L 17 ) T2 G1 नागार्तो ( for कामार्तो ) D2 मायाबलं समास्थाय ( for [a] ) T4 बाणैर् ( for नागैर् ) Ñ2 महाबलैः ; V3 B1 ( marg as above ) D6 महाविषैः ( for विषोल्बणैः ) — ( L 18 ) G2 पतगाशन ( for °गेश्वर ) — After line 18, K1 ( marg ) B1 2 D4 T2 G1 3 ins :

1** तव वेगसमो नास्ति पक्षिणां प्रवरो भवान् ।

[ B1 महान् ( for भवान् ) D4 T2 G1. 3 पक्षिणा न च ते समः ( for [b] ) ]

— T2 G1 om lines 19-32. — ( L 19 ) तमध्वानं ( for

अशक्यं च तदध्वानं गन्तुमन्येन वै द्विज ।
तत्र प्रापय मां शीघ्रं प्राद्युम्निर्यत्र तिष्ठति ॥ [20]
वैदर्भी ते स्नुषा वीर रुदते पुत्रगृद्धिनी ।
त्वत्प्रसादाद्भवत्येषा पुत्रेण सह संगता ॥
अमृतं तु हृतं वीर त्वया पन्नगनाशन ।
स मया त्वं समागम्य तस्मिन्काले महाभुज ।
भवान्मम ध्वजश्चैव त्वद्भक्ताः सर्ववृष्णयः ॥ [25]
सखित्वं मानयस्वाद्य भक्तिं च पतगेश्वर ॥
तव वेगसमो नास्ति पक्षिणां न च ते समः ।
सुपर्ण सुकृतेन त्वां शपे पन्नगनाशन ॥
दासीत्वाच्च त्वया माता मोक्षितैकाकिना पुरा ।
पक्षविक्षेपमाश्रित्य हता योधास्त्वया पुरा ॥ [30]
भवान्सुरगणान्सर्वान्पृष्ठमारोप्य विक्रमात् ।
गच्छसे ह्यगमान्देशान्विजयश्च तवाश्रयात् ॥
गुरुत्वान्मेरुतुल्यस्त्वं लघुत्वात्पवनोपमः ।
भूते भव्ये भविष्ये च न ते तुल्योऽस्ति विक्रमे ॥
सत्यसंध महाभाग वैनतेय महाद्युते । [35]
अनिरुद्धे क्षणेनास्य साहाय्यमुपकल्प्यताम् ॥

गरुड उवाच ।

अत्यद्भुतमिदं वाक्यं तव कृष्ण महाभुज ।
त्वत्प्रसादात्तु विजयः सर्वत्र मम केशव ॥
धन्योऽस्म्यनुगृहीतोऽस्मि संस्तवान्मधुसूदन ।
स्तोतव्यस्त्वं मया कृष्ण स्तौषि मां त्वं महाभुज ॥ [40]
वेदाध्यक्षः सुराध्यक्षः सर्वकामप्रदो भवान् ।
अमोघदर्शनस्त्वं हि वरार्थिषु वरप्रदः ॥
चतुर्भुजश्चतुर्मूर्तिश्चातुर्होत्रप्रवर्तकः ।
चातुराश्रम्यहोता च चतुर्नेता महाकविः ॥
धनुर्धरश्चक्रधरो भवाञ्शङ्खधरो महान् । [45]
भवान्पूर्वेषु देहेषु ख्यातो भूमिधरः प्रभो ॥
लाङ्गली मुसली चक्री देवकीतनयो भवान् ।

---

तद°) V2 अशक्यश्च स चाध्वा वै; V3 D6 °क्यश्च तदाध्वासौ, B3 °क्यश्च तदाध्वा वै (for °) K V2 3 B Dn D1 3-6 T4 G2.4.5 वै प्रभो, D2 वै खग, Bom Poona eds G(ed) काश्यप (for वै द्विज) — T4 G2 5 om line 20 — (L 20) B3 युधि (for यत्र) K3 4 Ñ2 3 V B1 2 Dn Ds D1 5 6 G4 यत्र प्राद्युम्निरावसत् (K4 °यत.) (for [b]). — (L 21) G2 वैदर्भी सा; G4 5 वैदेहीति (for वैदर्भी ते) K3 वैदर्भी तत्सुखा वीर, D2 °र्भी ते स्नुषां वीर (for [a]) K1 Dn2 D6 G4 5 रुदती (for °ते) D2 रुदन्ती पुत्रगृद्धिनीम् (for [b]) — (L. 22) K4 Ñ2 3 V B Dn1 Ds D1 3.4.6 भवतु, G4 5 भवेद् (for भवति) — (L 23) Ñ2 V3 B1 3 D5 6 पूर्वं (for वीर) — (L 24) Ñ2 3 V B Ds D2 3 6 T4 G2 4 मया सह (G2 °मं) (for स मया त्वं) — (L 25) Ñ2 अभवन्मे; V3 B1 (marg as above) 3 D6 आत्मा मे त्वं; B2 आत्मासि त्व (for भवान्मम) D3 -यादवा (for -वृष्णयः) V3 B1 (marg as above) 2 3 D6 मद्भक्तश्च महाबल (for [b]) — (L 26) G2 मम तस्य (for मानयस्व) — (L 27) D3 6 वेगे (for वेग-) Dn G3 पक्षिणो (for °णां) Dn समा (for सम) G2 पक्षिणस्तव न क्षमा (for [b]) — (L 28) K3 4 D1 5 [अ]हं (for त्वा) — (L 29) Ñ2 V3 B1 D2 3 6 T4 G2 5 दासीभावात् (for °त्वाच्च) Dn तथा (for त्वया) K4 मोक्षिता पतगेश्वर (for [b]) — (L 30) Ñ2 3 V1 3 B1 2 Ds D6 पक्षविक्षेपमात्रेण (for [a]) B1 2 जिता (for हता) B2 त्वया रणे, G2 पुरा त्वया (by transp) V3 B1 D6 जिता देवास्त्वया रणे, G5 त्वया योधा हता पुरा (for [b]) — (L 31) D2 पुरा (for भवान्) — (L 32) G5 सदा रक्षसि देवाना (for [a]) — (L 33) B3 D1 2 T2 G1 गरुत्मान् (for गुरुत्वान्) — (L 34) Ñ2 कश्चन (for विक्रमे) — (L 35) G3 महाबाहो (for °भाग) K3 सत्यसंधो महाप्राज्ञ वैनतेयो महाद्युति· — (L 36) Ñ2 3 V1 B1 3 D2, 6 क्षणमद्यानिरुद्धार्थं (for [a]) K2 -गम्यताम् (for -कल्प्य°) — (L 37) D3 अत्यद्भुततम वाक्यं (for [a]) — (L 38) D2 सर्वत्र, G2 विजयं (for °य·) Ñ2 तव प्रसादाद्विजय (for [a]) K1 2 D4 सर्वतो मे महाभुज, K3 4 Dn D1 5 T2 4 G सर्वत्र तु महाभुज (D5 °बल), D2 विजयो मे महाभुज (for [b]) —(L 40) K3 श्रौतव्यस् (for स्तोत°) G2 सदा सर्वं (for मया कृष्ण) G2 अमोघस्त्वं महाभुज (for [b]) — (L 41) G1 देवाध्यक्ष· (for वेदा°) D2 महान् (for भवान्) — (L. 42) D2 3 वरार्हेषु, T2 4 G पार्थिवेषु, Bom Poona eds G(ed) वरार्थीना (for °र्थिषु) — (L 43) Ds2 चातुर्होत्रे, D3 चारुहोत्र- (for चातुर्होत्र) — (L 44) D2 -गीतज्ञ, D3 -गाता; D5 (marg) वेत्ता (for होता) K1 2 D4 चातुर्मास्यो (for चतुर्नेता) Ñ2 3 V2 महाहरि. (for °कवि·) D2 3 चातुर्वैर्ण्यस्य रक्षिता, T2 G1 चतुर्होता महारवि· (for [b]) — D3 om. lines 45–47 — (L 45) G1 भवान् (for महान्) — (L· 46) G(ed) सर्वेषु (for पूर्वेषु) D2 पूर्वेषु देवेषु भवान् (for [a]) T2 भूतो (for ख्यातो) K1 Ñ2 V B1 2 D2.4 6 T2.4 G1 2 4 5 प्रभु, B3 विभुः (for प्रभो) — (L. 47) Ds2

चाणूरमथनश्चैव गोप्रियः कंसहा भवान् ॥
गोवर्धनधरश्चैव मल्लारिर्मल्लभावनः ।
मल्लप्रियो महामल्लो महापुरुष इत्यपि ॥ [ 50 ]
विप्रप्रियो विप्रहितो विप्रज्ञो विप्रभावनः ।
ब्रह्मण्यश्च वरेण्यश्च भवान्दामोदरः स्मृतः ॥
प्रलम्बमथनश्चैव केशिहा दानवान्तकः ।
असिलोम्नश्च हन्ता च तथा रावणनाशनः ॥
विभीषणस्य भगवान्राज्यदो वालिनाशनः । [ 55 ]
सुग्रीवराज्यदाता त्वं बलिराज्यापहारकः ॥
रत्नहर्ता महारत्नः समुद्रोदरसंभवः ।
वरुणश्च भवान्ख्यातो भवांश्च सरिदुद्भवः ॥
भवान्खड्गधरो धन्वी धनुर्धरवरो महान् ।
दाशार्ह इति विख्यातो महाधन्वा धनुःप्रियः ॥ [ 60 ]
गोविन्द इति विख्यात उदधिस्त्वं च सुव्रत ।
आकाशश्च तपश्चैव समुद्रमथनो भवान् ॥

भवान्स्वर्गो बहुफलो भवान्स्वर्गधरो महान् ।
त्वमेव च महामेघो बीजनिष्पत्तिरेव च ॥
त्रैलोक्यमथनस्त्वं च क्रोधलोभभयापहः । [ 65 ]
भवान्कामप्रदश्चैव कामः सर्वधनुर्धरः ॥
संवर्तो वर्तनश्चैव प्रलयो निलयो महान् ।
हिरण्यगर्भो रूपज्ञो रूपवान्मधुसूदनः ॥
ईशस्त्वं च महादेव असंख्येयगुणान्वितः ।
स्तोतुमिच्छसि मां देव स्तोतव्यस्त्वं यदूत्तम ॥ [ 70 ]
चक्षुषा ये त्वया घोराः प्राणिनस्तु निरीक्षिताः ।
हतास्ते यमदण्डेन तिर्यङ्निरयगामिनः ॥
ये त्वया परया प्रीत्या प्राणिनो वै निरीक्षिताः ।
इह च प्रेत्य चापापाः सर्वे ते स्वर्गगामिनः ॥
एष तेऽहं महाबाहो वशगः शासने स्थितः ॥ [ 75 ]
जयशब्दं ततः कृत्वा गरुडः प्राह केशवम् ।
अयमस्मि स्थितो वीर आरुहस्व महाबल ॥

---

D2 5 D4 महान् ( for भवान् ) V2 देवकीनन्दन· प्रभु , G3 °कार्यमनन्तरम् ( for $^{b}$ ) — G3 om lines 48–81 K3 4 D1 om line 48 — ( L 48 ) G2 om lines 48$^{b}$–49$^{a}$ Dn केशिहा ( for कंसहा ) D2 T4 महान् ( for भवान् ) K1 2 D4 गोप्रिय कंसनाशन , T2 G1 5 गोप्रिय ( G5 °पति ) कंसमर्दन· ( for $^{b}$ ) — ( L. 49 ) K Ñ2 3 B2 3 Dn1 Ds D1 2 4 6 T4 मल्लादिर्, D3 मल्लजिन् ( for मल्लारिर् ) — K1 om line 51 — ( L 52 ) K1 2 V3 B1 3 Dn2 D4 6 शरण्यश् ( for वरे° ) T2 G1 4 5 om ( hapl ) lines 52$^{b}$–58$^{a}$. — ( L 54 ) K3 -लोमनि-, K4 D1 5 -लोमस्य ( for -लोम्नश्च ) — K3 Ñ2 om ( hapl ) lines 55 — ( L 55 ) G2 च भवान् ( for भगवान् ) — ( L 56 ) K1 D4 G2 वालि- ( for बलि- ) — ( L 57 ) D5 रत्नगर्भो, T2 °भर्ता ( for °हर्ता ) Ñ2 -संनिभ ( for -संभव. ). — ( L. 58 ) K3 Dn भगवान् ( for भवांश्च ) — ( L 59 ) K1–3 Ñ2 D4 -धरो ( for -वरो ) — ( L 60 ) D2 धनुर्धर· ( for धनु.प्रिय. ) — ( L 61 ) Ñ2 विज्ञात ( for विख्यात ) Cal ed जलधिस् ( for उद° ) — ( L 62 ) Ñ2 3 V1 आकाशतपनश्चैव , Ds2 °शं तमसश्चैव , D2 °शं च तमश्चैव , G2 सत्त्वश्चैव तमश्चैव ( for $^{a}$ ) — G2 om line 63 — ( L 63 ) T2 G1 4 5 स्वर्गो बहुफलो भावाद् ( for $^{a}$ ) K3 4 D1 4 ( marg ) 5 -वरो , Ñ3 T4 -चरो ( for -धरो ) K3 B2 Dn D3 G4 5 मही ; D2 गृही , T4 वशी ( for महान् ) T2 भवान्स्वर्गधरोपम ( for $^{b}$ ) — ( L 64 ) V3 महाधारो ; T2 G1 4. 5 °बाहो ( for °मेघो ) K4 जीव- ; B3 राज- , Dn D3 बीजं ( for बीज- ) — ( L 65 ) G4 5 त्रैलोक्यं त्वमधश्च त्वं ( for $^{a}$ ) K3 4 Ñ2 3 V1 2 B1 ( marg ) Dn D1 3 5 -मनोरथ , T2 G4 5 -भयावह· ( for °पह ) — ( L. 66 ) T4 कामपरश् ( for °प्रदश् ) T2 G1 2 om ( hapl ) lines 66$^{b}$–67$^{a}$ Dn1 Ds1 ( *sup lin* ) यमः ( for काम ) D5 -धनुष्मताम् ( for -धनुर्धर· ) — ( L 67 ) V2 वरदो ( for संवर्तो ) D3 प्रलम्बो ( for प्रलयो ) G2 निर्वृतो ( for निलयो ). — ( L 68 ) K3 4 Ds1 ( *sup lin* ) D1 5 यज्ञज्ञो , Cal ed. भूगर्भो ( for रूपज्ञो ) V3 B1 रूपवान्पुरुषोत्तम ( for $^{b}$ ). — ( L 69 ) Ñ2 V1 D3 ईश्वरस्त्वं ( for ईशस्त्वं च ) Cal ed त्वमसंख्यगुणान्वित ( for $^{b}$ ) — ( L 70 ) Ñ3 V1 D3 इच्छाम्यह , G4 5 इच्छति मां ( for °सि मां ) G1 स्तोमी भवति मा देव ( for $^{a}$ ) D2 श्रोतव्यं च ( for स्तोतव्यस्त्व ) V3 B1 ( marg as above ) 3 D6 सनातन. ( B1 °न ), T2 G1 4. 5 जनार्दन ( for यदूत्तम ) — G5 om ( hapl ) lines 73–74. — ( L 73 ) V3 D6 T4 परम- ( for परया ) T2 G1 4 भक्त्या ( for प्रीत्या ) — ( L 74 ) K4 Dn Ds1 ( *sup lin* ) D1 2. 5 चोभौ ते, D3 चैवैते ( for चापापा ) — After line 75, Ñ2 B1 ins :

2** आज्ञापय महाबाहो कृतकृत्योऽस्मि सर्वथा ।

— D1 om lines 76–78, — ( L 76 ) K3. 4 Dn Ds जयस्थानं ( for °शब्दं ) D3 जयमाणमितो गत्वा ( for $^{a}$ ). — ( L. 77 ) T2 G1 4 5 आरुह त्वं ( for °हस्व ) — After line 77, Ñ2 V2 3 Ds2 D6 read 109. 81$^{cd}$ — ( L 78 ) Ñ2 V2

ततः कण्ठे परिष्वज्य माधवो गरुडं ततः ।
सखे शत्रुविनाशाय अर्घोऽयं प्रतिगृह्यताम् ॥
दत्त्वार्घ्यं परया प्रीत्या शङ्खचक्रगदासिभृत् । [ 80 ]
आरुरोह महाबाहुः सुपर्णं पुरुषोत्तमः ॥

37

After 112 32, K $\tilde{N}_{2\,3}$ V B D $T_4$ ins :

एतस्मिन्नन्तरे तत्र रुद्रपारिषदा रणे ।
मायायुद्धं समाश्रित्य प्रद्युम्नं पर्यवारयन् ॥
सर्वांस्तु निद्रावशगान्कृत्वा मकरकेतुमान् ।
दानवान्नाशयत्तत्र शरजालेन वीर्यवान् ।
प्रमाथगणभूयिष्ठांस्तत्र तत्र महाबलः ॥ [ 5 ]
ततस्तु जृम्भमाणस्य देवस्याक्लिष्टकर्मणः ।
ज्वाला प्रादुरभूद्वक्त्राद्दहन्तीव दिशो दश ॥
ततस्तु धरणी देवी पीड्यमाना महात्मभिः ।
ब्रह्माणं परमोदारं वेपमानाभ्युपागमत् ॥

पृथिव्युवाच ।

देवदेव महाबाहो पीड्यामि परमौजसा । [ 10 ]
कृष्णरुद्रभराक्रान्ता भविष्यैकार्णवा पुनः ॥
अविषह्यमिमं भारं चिन्तयस्व पितामह ।
लघ्वीभूता यथा देव धारयेयं चराचरम् ॥
ततस्तु काश्यपीं देवीं प्रत्युवाच पितामहः ।
मुहूर्तं धारयात्मानमाशु लघ्वी भविष्यसि ॥ [ 15 ]
दृष्ट्वा तु भगवान्ब्रह्मा रुद्रं वचनमब्रवीत् ।
सृष्टो महासुरवधः किं भूयः परिरक्षसे ॥
न च युद्धं महाबाहो कृष्णेन तव रोचते ।
न च बुध्यसि कृष्णं त्वमात्मानं हि द्विधाकृतम् ॥
ततः शरीरयोगाद्धि भगवानव्ययः प्रभुः । [ 20 ]

---

$B_1$ ( before corr ) $_2$ Dn $D_3$ $D_6$ $T_{2\,4}$ $G_{1\,2\,4\,5}$ प्राह ( for the first तत॰ ) $V_2$ $T_{2\,4}$ $G_{1\,4\,5}$ वच॰ ( for the second तत॰ ) — ( L 79 ) $K_{1\,2}$ $D_4$ शङ्खेन शत्रुनाशाय ( for $^a$ ) — ( L. 80 ) $\tilde{N}_{2,3}$ परम- ( for °या ) — ( L 81 ) $T_2$ $G_{1\,4\,5}$ गरुडं ( for सुपर्णं ) $D_3$ सुपर्णं पतगोत्तमम् ( for $^b$ )

37

Before line 1, $T_4$ ins

1** एवं स शूलभृत्तत्र पुनर्युद्धं प्रचक्रमे ।

— ( L 1 ) $K_{1\,3}$ $Ds_1$ $D_{1\,4}$ रुद्रस्य पार्षदा रणे, $K_2$ रुद्र पार्षतदारुणम् ( sic ), $K_4$ रुद्रपार्षदयो रणे, $D_6$ °पार्श्वचरा रणे ( for $^b$ ) — ( L 2 ) सर्वे ( for माया- ) $K_2$ $D_4$ समासाद्य ( for °श्रित्य ) $V_3$ प्रत्यवारयन् ( for पर्य° ) — ( L 3 ) $K_2$ $V_1$ $D_{1,4\,5}$ केतव ( for -केतुमान् ) $\tilde{N}_2$ कृत्वा कमलकेतन॰ ( for $^b$ ) — ( L 4 ) $K_1$ $V_1$ $B_{2\,3}$ Dn $Ds_1$ $D_{3\,4}$ नाशयंस् ( for °यत् ) $D_6$ दानवान्नाशयामास ( for $^a$ ) — ( L 5 ) $K_2$ $\tilde{N}_3$ $V_{1\,3}$ $Ds_2$ $D_{2\,4\,5}$ -भूमिष्ठं ( for °ष्ठांस् ) $D_2$ तत्र युद्धं, $D_3$ तत्क्षणात्स ( for तत्र तत्र ) Bom Poona eds महाबलान् — ( L 6 ) $\tilde{N}_2$ V $D_6$ हरस्य, $D_1$ भवस्य, $T_4$ ततो वै ( for ततस्तु ) — ( L. 7 ) $\tilde{N}_2$ $V_1$ $D_5$ प्रादुर्भवद् ( for प्रादुरभूद् ) $Dn_1$ $D_{2\,5\,6}$ दहती ( for दहन्ती ) $V_2$ दहन्ती विदिशो दश ( for $^b$ ) — ( L 8 ) $D_1$ om lines $8^b$–$10^a$ $D_6$ दीप्यमाना ( for पीड्य° ). $K_2$ $D_4$ महात्मना ( for °भिः ) — ( L 9 ) Bom. Poona eds ब्रह्माणं विश्वधातारं ( for $^a$ ) — $K_{1,3\,4}$ Dn $D_{2\,3\,6}$ om , $K_2$ देवी; $\tilde{N}_{2,3}$ $V_{1\,2}$ $B_{1\,3}$ Ds $D_4$ $T_4$ धरणी ( for पृथिवी ) — ( L 10 ) $D_3$ महादेव ( for °बाहो ) $\tilde{N}_3$ B पीड्येऽहं, Cal ed पीड्येम ( for पीड्यामि ) — ( L. 11 ) $D_2$ कृष्णभार- ( for °रुद्र- ) $K_{1\,2}$ $B_3$ $Dn_2$ $D_4$ -पराक्रान्ता, $D_3$ -शरा° ( for -भरा° ) $D_1$ भवाम्यैकार्णवात्पुन॰, $D_5$ ( by corr ) यथैवैकार्णवा पुन ( for $^b$ ) — $K_2$ om ( hapl ) lines 13–14 — ( L 13 ) $Dn_2$ लघु- ( for लघ्वी- ) $K_3$ धारयेय, $D_4$ °येऽहं ( for °येयं ) — Before line 15, $K_2$ $D_4$ ins ब्रह्मा उवाच, $D_1$ वैशंपायन उवाच — ( L 15 ) $K_4$ वारय ( for धा° ) — Before line 16, $B_3$ Bom Poona eds ins वैशंपायन उवाच — ( L 17 ) $K_1$ $D_2$ मयासुर- ( for महा° ). $K_2$ $D_4$ सृष्टा मया रुद्र धरा ( for $^a$ ) $K_2$ $D_4$ -पीड्यते, $V_3$ $D_6$ $T_4$ -रक्ष्यते ( for -रक्षसे ) — ( L 18 ) $\tilde{N}_{2\,3}$ $V_{1\,2}$ $B_1$ ( marg ) $Dn_1$ Ds $D_{1\,3}$ $T_4$ रोचये, $V_3$ $B_{1\,3}$ $D_{5\,6}$ युज्यते ( for रोचते ) — ( L 19 ) $K_2$ $D_4$ भो न ; $D_5$ नाव- ( for न च ) $K_4$ $D_4$ कृष्ण ( for कृष्णं ) — ( L 21 ) $D_3$ लोकांस् ( for कृत्स्नांस् ) $K_3$ प्रविश्य पश्य कृत्स्नांस्त्रीन्, $D_4$ °श्य पश्यन्कृष्णस्त्रीन् ( for $^a$ ) $K_2$ लोकास्त्रीन्, $D_3$ कृत्स्नांस्त्रीन्, $D_4$ लोकास्तान् ( for त्रींल्लोकान् ) — After line 21, $\tilde{N}_{2\,3}$ V B Ds $D_{5\,6}$ ins .

2** सशरं सधनुष्कं च दृष्ट्वात्मानं विजृम्भितम् ।

$\tilde{N}_{2\,3}$ V B Ds $D_{5\,6}$ cont $K_1$ $D_{1-3}$ ins after 1375*

3** प्रविश्य योगं योगात्मा वरांस्ताननुचिन्तयन् ।
द्वारवत्यां यदुक्तं च तदनुस्मृत्य सर्वशः ।
जगाद नोत्तरं किंचिन्निवृत्तोऽसौ भवत्तदा ॥

प्रविश्य पश्यते कृत्स्नांस्त्रीँल्लोकान्सचराचरान् ॥
आत्मानं कृष्णदेहस्थं पश्यते ह्येकयोनिजम् ।
ततो निःसृत्य रुद्रस्तु न्यस्तवादोऽभवन्मृधे ॥
ब्रह्माणं चाब्रवीद्रुद्रो न योत्स्ये भगवन्निति ।
कृष्णेन सह संग्रामे लघ्वी भवतु मेदिनी ॥ [ 25 ]
ततः कृष्णोऽथ रुद्रश्च परिष्वज्य परस्परम् ।
परां प्रीतिमुपागम्य संग्रामादपजग्मतुः ॥
न च तौ पश्यते कश्चिद्योगिनौ योगमागतौ ।
एको ब्रह्मा तथा कृत्वापश्यल्लोकपितामहः ॥
उवाचैतत्समुद्दिश्य मार्कण्डेयं सनारदम् । [ 30 ]
पार्श्वस्थं परिपप्रच्छ ज्ञात्वा वै दीर्घदर्शिनम् ॥
मन्दरस्य गिरेः पार्श्वे नलिन्यां भवकेशवौ ।
रात्रौ स्वप्नान्तरे ब्रह्मन्मया दृष्टौ हराच्युतौ ॥
हरिं च हररूपेण हरं च हरिरूपिणम् ।
शङ्खचक्रगदापाणिं पीताम्बरधरं हरम् ॥ [ 35 ]
त्रिशूलपट्टिसधरं व्याघ्रचर्मधरं हरिम् ।
गरुडस्थं चापि हरं हरिं च वृषभध्वजम् ॥
विस्मयो मे महान्ब्रह्मन्दृष्ट्वा तत्परमाद्भुतम् ।
एतदाचक्ष्व भगवन्याथातथ्येन सुव्रत ॥

मार्कण्डेय उवाच ।

शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे । [ 40 ]
यथान्तरं न पश्यामि तेन तौ दिशतः शिवम् ॥
अनादिमध्यनिधनमेतदक्षरमव्ययम् ।
तदेव ते प्रवक्ष्यामि रूपं हरिहरात्मकम् ॥
यो वै विष्णुः स वै रुद्रो यो रुद्रः स पितामहः ।
एका मूर्तिस्त्रयो देवा रुद्रविष्णुपितामहाः ॥ [ 45 ]
वरदा लोककर्तारो लोकनाथाः स्वयंभुवः ।
अर्धनारीश्वरास्ते तु व्रतं तीव्रं समाश्रिताः ॥
यथा जले जलं क्षिप्तं जलमेव तु तद्भवेत् ।
रुद्रं विष्णुः प्रविष्टस्तु तथा रुद्रमयो भवेत् ॥
अग्निमग्निः प्रविष्टस्तु अग्निरेव यथा भवेत् । [ 50 ]
तथा विष्णुं प्रविष्टस्तु रुद्रो विष्णुमयो भवेत् ॥
रुद्रमग्निमयं विद्याद्विष्णुः सोमात्मकः स्मृतः ।
अग्नीषोमात्मकं चैव जगत्स्थावरजंगमम् ॥

---

[ ( L 1 ) $D_3$ योगज्ञो ( for योगात्मा ) $K_1$ $D_{1\ 2}$ वर ( $D_2$ बल ) तस्यानुचिन्त्य च , $\tilde{N}_3$ V $B_{1,\ 2}$ $Ds_1$ $D_6$ वरास्तानचिन्त्य च ( for $^b$ ) — ( L 2 ) $D_2$ सत्वरम् ( for सर्वश ). $D_1$ अनुस्मृत्य च सर्वश ( for $^b$ ) — ( L 3 ) $D_1$ नारदोक्त तत किंचिन् ( for $^a$ ) $D_{2\ 3}$ निर्द्वंद्वो ( for निवृत्तो ). ]

— ( L 22 ) $K_{2-4}$ Dn $D_{1\ 3\ 4}$ ( marg as above ) $_5$ -योनिस्थं ( for -देहस्थ ) $K_1$ $D_2$ पश्यते कृष्णयोजितम् , $D_6$ ( marg ) $T_4$ पश्य देवैकयोनिजम् ( for $^b$ ) — ( L 23 ) $K_1$ ऽनुसृत्य , $K_2$ $Ds_1$ $D_5$ निश्चित्य , $V_3$ $D_6$ ऽपसृत्य , $D_3$ ऽभिसृत्य ( for निःसृत्य ) $K_{1,\ 3\ 4}$ $\tilde{N}_2$ $D_{2-5\ 6}$ ( marg ) कृष्णस्तु ; $D_1$ कृष्णात्तु ( for रुद्रस्तु ) $K_1$, $D_{2\ 5}$ ( by corr ) न्यस्तशस्त्रो , $D_3$ °चापो ( for °वादो ) — Before line 25, $K_2$ $D_4$ ins ब्रह्मोवाच — ( L 27 ) $K_2$ $D_4$ समागम्य , $B_3$ सुसं° ( for उपा° ) $K_4$ प्रीतिं तौ समुपागम्य ( for $^a$ ) $K_{3\ 4}$ $\tilde{N}_2$ $Ds_1$ $D_{1\ 3}$ -चक्रतु ( for -जग्मतु ) — After line 27, $K_2$ $D_4$ ins :

4** एतदर्थं पुरा राजन्मार्कण्डेयं तु नारद· ।

— $K_2$ $D_4$ om lines 28–29. — ( L 28 ) $\tilde{N}_3$ ( marg. ) $V_1$ दृश्यते ( for प° ) $B_3$ आस्थितौ ( for आगतौ ) — ( L 29 ) $\tilde{N}_2$ $D_5$ गत्वा , $D_6$ $T_4$ भूतौ ( for कृत्वा ) $K_3$ $D_{1\ 3\ 5}$ लोकान् ( for लोक- ). — K $\tilde{N}_{2,\ 3}$ V B Ds $D_{1-6}$ $T_4$ om lines 30–31 Dn om line 30 — ( L 30 ) Cal ed दृष्ट्वा तदद्भुतं ब्रह्मा मार्कण्डेयं महामुनिम् — Before line 32, some Mss ins पितामह उवाच ; some ब्रह्मोवाच — ( L 32 ) $D_1$ मन्दरस्योत्तरे पार्श्वे , $D_4$ मन्दरश्मिगिरे पार्श्वे ( for $^a$ ) — ( L 33 ) $D_{3\ 4}$ भवाच्युतौ ( for हरा° ) — ( L 34 ) $K_{1\ 3\ 4}$ Dn $D_{1\ 4}$ हरं च ( $K_{3\ 4}$ °रश्च ) हरिरूपेण ( for $^a$ ) $K_{1,\ 3\ 4}$ $\tilde{N}_2$ Dn $D_{1\ 4}$ हरिं च हररूपिणम् ( for $^b$ ) — ( L 35 ) $K_2$ $B_1$ $D_5$ ( marg as above ) हरिम् , $T_4$ हरः ( for हरम् ) — ( L 36 ) खट्वाङ्ग- ( for -पट्टिस- ) — ( L. 37 ) K $\tilde{N}_{2\ 3}$ V B $Dn_2$ Ds $D_{1-6}$ गरुडध्वजं च हरं , $T_4$ °डध्वजं हरं चैव ( for $^a$ ) $Ds_1$ $K_1$ $D_2$ हरिं च वृषवाहनम् ( for $^b$ ) — ( L 39 ) $D_1$ मे ब्रह्मन् , $D_3$ तत्त्वेन ( for भगवन् ). $K_{1-3}$ $\tilde{N}_{2\ 3}$ V B Dn Ds $D_{2\ 4-6}$ यथातत्त्वेन सुव्रत , $D_3$ यथा भवति सु° ( for $^b$ ) — ( L 41 ) $K_{1\ 2}$ $D_{2\ 4}$ अत्रान्तरं ; $K_{3\ 4}$ $\tilde{N}_{2\ 3}$ V B $Ds_1$ $D_{1\ 5}$ अथा° , $T_4$ येना° ( for यथा° ). $K_4$ $\tilde{N}_2$ $V_3$ B Ds $D_{1\ 5}$ $T_4$ ते ( for तौ ). $K_1$ $D_2$ तथा मे गदतः शृणु , $K_3$ $D_3$ तेन तौ विशत· स्वयम् ( for $^b$ ) — ( L 42 ) $K_{1\ 2\ 4}$ अक्षयम् ( for °रम् ) — ( L 45 ) $K_3$ ब्रह्मविष्णुमहेश्वराः ( for $^b$ ) — $D_3$ om lines 46–81 $K_2$ $D_{1\ 4}$ om. ( hapl. ) lines 50–51 — ( L. 51 ) $K_1$ रुद्रं ( for तथा ) — ( L. 52 ) $\tilde{N}_2$ सोममय. ( for सोमात्मकः ) — $B_3$ om. lines

कर्तारौ चापहर्तारौ स्थावरस्य चरस्य च ।
जगतः शुभकर्तारौ प्रभू विष्णुमहेश्वरौ ॥ [ 55 ]
कर्तृकारणकर्तारौ कर्तृकारणकारकौ ।
भूतभव्यभवौ देवौ नारायणमहेश्वरौ ॥
एते चैव प्रवर्षन्ति भान्ति वान्ति सृजन्ति च ।
एतत्परतरं गुह्यं कथितं ते पितामह ॥
यश्चैनं पठते नित्यं यश्चैनं शृणुयान्नरः । [ 60 ]
प्राप्नोति परमं स्थानं विष्णुरुद्रप्रसादजम् ॥
देवौ हरिहरौ स्तोष्ये ब्रह्मणा सह संगतौ ।
एतौ च परमौ देवौ जगतः प्रभवाप्ययौ ॥
रुद्रस्य परमो विष्णुर्विष्णोश्च परमः शिवः ।
एक एव द्विधा भूतो लोके चरति नित्यशः ॥ [ 65 ]
न विना शंकरं विष्णुर्न विना केशवं शिवः ।
तस्मादेकत्वमायातौ रुद्रोपेन्द्रौ तु तौ पुरा ॥
नमो रुद्राय कृष्णाय नमः संहतचारिणे ।
नमः षडर्धनेत्राय द्विनेत्राय च वै नमः ।
नमः पिङ्गलनेत्राय पद्मनेत्राय वै नमः ॥ [ 70 ]
नमः कुमारगुरवे प्रद्युम्नगुरवे नमः ।
नमो धरणीधराय गङ्गाधराय वै नमः ॥
नमो मयूरपिच्छाय नमः केयूरधारिणे ।
नमः कपालमालाय वनमालाय वै नमः ॥
नमस्त्रिशूलहस्ताय चक्रहस्ताय वै नमः । [ 75 ]
नमः कनकदण्डाय नमस्ते व्रतदण्डिने ॥
नमश्चर्मनिवासाय नमस्ते पीतवाससे ।
नमोऽस्तु लक्ष्मीपतये उमायाः पतये नमः ॥
नमः खट्वाङ्गधाराय नमो मुसलधारिणे ।
नमो भस्माङ्गरागाय नमः कृष्णाङ्गधारिणे ॥ [ 80 ]
नमः श्मशानवासाय नमस्त्वाश्रमवासिने ।
नमो वृषभवाहाय नमो गरुडवाहिने ॥
नमोऽस्त्वनेकरूपाय बहुरूपाय वै नमः ।
नमः प्रलयकर्त्रे च नमः सृष्टिकराय च ॥
नमोऽस्तु बहुरूपाय नमो भैरवरूपिणे । [ 85 ]
विरूपाक्षाय देवाय नमः सौम्येक्षणाय च ॥
दक्षयज्ञविनाशाय बलेर्नियमनाय च ।

---

$53^b$-$58^a$ — (L 55) T4 जगत पालकावेतौ (for $^a$) K2 D4 om (hapl) lines $55^b$–$56^a$ K1 3 4 Ñ3 V2 Dn D2 T4 प्रभविष्णू (for प्रभू विष्णु-) — (L 56) T4 -कर्तृकौ (for -कारकौ) — (L 57) K3 भव- (for भूत-) K3 नाथौ (for देवौ) — After line 57, Ñ2 3 V1 2 B1 2 Ds1 T4 ins :

5** एतौ तौ च प्रवक्तारावेतौ तौ च प्रभामयौ ।

Ñ2 V1 2 B1 2 Ds1 T4 cont , V3 Ds2 D6 ins after line 57 ·

6** जगत. पालकावेतावेतौ सृष्टिकरौ स्मृतौ ।

— T4 om line 58 — (L 59) K3 D4 (marg) महामुने (for पितामह) — (L. 60) K2 D4 शृणुयाच्चापि (D4 °च्चैव) सर्वदा (for $^b$) — (L 61) B2 3 D2 रुद्रविष्णु- (for विष्णुरुद्र-) K2 D4 विष्णो रु( D4 °ष्णुरु )द्रस्य शाश्वतम् (for $^b$) — (L 62) D4 संयुतौ (for संगतौ) — (L 63) B3 नारायणमहेश्वरौ (for $^b$) — (L 64) K3 4 D1 रुद्रश्च (for °स्य) Dn प्रभवो (for परमो) Dn1 प्रभव , Dn2 प्रभवं (for परमः) — (L. 65) K4 -भूत्वा (for -भूतो). D4 वसति (for चरति) — (L 67) Ñ2 V1 2 आपन्नौ (for आयातौ) D6 कृतौ (for तु तौ). — Before line 68, K1 D2 ins. ब्रह्मोवाच. — (L. 68) D1 नमः कृष्णाय रुद्राय (for $^a$) K2 D2 सहित , D1 स्महति- (for संहत-) T4 नमः केयूरधारिणे (for $^b$) — (L 69) Dn om (hapl) lines $69^b$–$70^a$ K1 4 Ñ2 3 V B Ds D1 2 5 6 T4 सद्रि( K1 D2 सिद्धि- , V2 D1 स्मिद्ध )नेत्राय वै नम· (for $^b$). — (L 72) K2 D4 नम. पार्वतीनाथाय , K3 नमोऽस्तु रणधीराय (for $^a$). K2 D4 धरा- (for गङ्गा-) — (L 73) D4 वैनतेयाय वै नमः (for $^b$) — K4 om (hapl) lines 74–75 — (L 74) T4 वनमालाधृते नमः (for $^b$) — (L 76) K2 D4 ब्रह्म- (for व्रत-) D1 ब्रह्मदण्डाय वै नम· (for $^b$). — (L. 77) D6 नमस्ते चर्मवासाय (for $^a$) — K3 om line 78 — (L. 78) D5 पार्वती- (for उमाया.) — (L 79) K1 D2 -हस्ताय ; K4 B1 Ds2 D1, 5 -धराय (for -धाराय) K3 T4 -पाणये (for -धारिणे) — (L 80) B1 (marg as above) 3 -रागिणे (for -धारिणे) — D3 om line 81 —(L 81) D1 om lines $81^b$–$85^a$ D5 (before corr as above) 6 सागर- (for त्वाश्रम-) — (L 84) K1 3 4 Ñ2 3 V B Dn Ds D2 5 (before corr) 6 नम. सागरशायि( B1 °वासि )ने , D3 नमस्ते सृष्टिकारिणे ; D5 (marg) T4 नमस्त्रैलोक्यधारिणे (for $^b$). — K3 om (hapl) lines 85–90 —(L 85) K2 D4 विश्व- , K4 शुभ- , Ñ2 3 V1 Dn D5 (also as above) सौम्य- (for बहु-). — (L 87) K2 D4 निर्मथनाय (for

नमः पर्वतवासाय नमः सागरवासिने ॥
नमः सुररिपुघ्नाय त्रिपुरघ्नाय वै नमः ।
नमोऽस्तु नरकघ्नाय नमः कामाङ्गनाशिने ॥ [ 90 ]
नमोऽस्त्वन्धकनाशाय नमः कैटभघातिने ।
नमः सहस्रहस्ताय नमोऽसंख्येयबाहवे ॥
नमः सहस्रशीर्षाय बहुशीर्षाय वै नमः ।
दामोदराय देवाय मुञ्जमेखलिने नमः ॥
नमस्ते भगवन्विष्णो नमस्ते भगवञ्शिव । [ 95 ]
नमस्ते भगवन्देव नमस्ते देवपूजित ॥
नमस्ते सामभिर्गीत नमस्ते यजुभिः सह ।
नमस्ते सुरशत्रुघ्न नमस्तेऽसुरपूजित ॥
नमस्ते कर्मिणां कर्म नमोऽमितपराक्रम ।
हृषीकेश नमस्तेऽस्तु स्वर्णकेश नमोऽस्तु ते ॥ [ 100 ]
इमं स्तवं यो रुद्रस्य विष्णोश्चैव महात्मनः ।
समेत्य ऋषिभिः सर्वैः स्तुतौ तौ सुमहात्मभिः ॥
व्यासेन वेदविदुषा नारदेन च धीमता ।
भारद्वाजेन गार्ग्येण विश्वामित्रेण वै तथा ।
अगस्त्येन पुलस्त्येन धौम्येन च महात्मना ॥ [ 105 ]
यश्चेदं पठते स्तोत्रं नित्यं हरिहरात्मकम् ।
अरोगो बलवांश्चैव जायते नात्र संशयः ।
श्रियं च लभते नित्यं न च स्वर्गान्निवर्तते ॥
अपुत्रो लभते पुत्रं कन्या विन्दति सत्पतिम् ।
गुर्विणी शृणुते या तु वरं पुत्रं प्रसूयते ॥ [ 110 ]
राक्षसाश्च पिशाचाश्च भूतानि च विनायकाः ।
भयं तत्र न कुर्वन्ति यत्रायं पठ्यते स्तवः ॥

Colophon

38

$K_2$ $\tilde{N}_2$ $V_{2\ 3}$ B Dn Ds $D_{3-6}$ $G_{4\ 5}$ ins. after 113. 5 : $\tilde{N}_3$ $D_{1\ 2}$ $T_{1.\ 2}$ $G_{1-3}$ after 113. 3$^c$ : $V_1$ after 113. 3 $T_4$ after 113 3$^{ab}$

ततो महाबलं देवं बलभद्रं यशस्विनम् ।
अभिवादयते हृष्टः सोऽनिरुद्धो महामनाः ॥
माधवं च महात्मानमभिवाद्य कृताञ्जलिः ।
खगोत्तमं महावीर्यं सुपर्णं चाभिवादयत् ॥

नियम° ) — ( L 88 ) $K_1$ $V_1$ $B_1$ $D_{2\ 5}$ $T_4$ -शायिने ( for -वासिने ) — ( L 89 ) $K_2$ $D_4$ त्रिनेत्राय च वै नम ( for $^b$ ) — $\tilde{N}_2$ ins after line 90 $K_1$ $D_3$ after line 94 .

7** पुष्पदन्तविनाशाय नमो मधुविघातिने ।

— ( L 91 ) $K_1$ $D_{1-3\ 6}$ नाशिने ( for -घातिने ) — $T_4$ om lines 92$^b$–93$^a$ $D_1$ om line 94 — ( L 95 ) $K_2$ $D_4$ नमस्ते शंकराय च ( for $^b$ ) — $\tilde{N}_2$ om line 96 — ( L 96 ) $K_4$ Bom ed भगवते ( for ते भगवन् ) $K_{2\ 3}$ $B_3$ $D_{1-4}$ -पूजित ; $K_4$ °ते ( for °त ) — Bom ed om line 97. — ( L 97 ) $\tilde{N}_2$ यजुषा ( for °भि. ) $K_{1\ 3}$ Ds $D_{1\ 2}$ $T_4$ स्तुत. ( for सह ). — ( L 99 ) $\tilde{N}_2$ नमस्तेऽस्ति- ( for नमोऽमित- ) $K_1$ $D_2$ नमो अमितविक्रम, $D_1$ नमस्नेऽमितवि° ( for $^b$ ) — (L. 100 ) $D_{3\ 4}$ तुभ्यं ( for तेऽस्तु ) — (L. 101 ) $K_3$ य इदं स्तुवते रुद्र; $D_3$ यदिदं स्तवनं शंभोर् ( for $^a$ ) — ( L 102 ) K $\tilde{N}_{2\ 3}$ V B Ds $D_{1\ 2\ 4-6}$ स्तौति ( for तौ सु- ) $D_3$ कृतं स्तोत्र महात्मभिः ; Bom Poona eds G(ed ) स्तुतौ स्तौति महर्षिभि ( for $^b$ ) — ( L 104 ) Bom Poona eds G(ed ) गर्गेण ( for गार्ग्येण ). $\tilde{N}_2$ $V_3$ $B_{2\ 3}$ $D_6$ वशिष्ठेन महात्मना ( for $^b$ ). — After line 104, $\tilde{N}_2$ $B_2$ $D_6$ ins .

8** विश्वामित्रेण वात्स्येन तथा चैव सुमन्तुना ।

— ( L 105 ) $T_4$ सौम्येन ( for धौ° ). — ( L. 106 ) $K_4$ $V_2$ य इदं ( for यश्चेदं ) $D_1$ om ( hapl ) lines 106$^b$–108$^a$ — ( L 107 ) $K_{2-4}$ $\tilde{N}_{2\ 3}$ V $B_{2\ 3}$ Dn Ds $D_4$ अरोगी ( for °गो ) — ( L 108 ) $K_{3\ 4}$ Dn श्रियश्च ( for श्रियं ). — ( L. 110 ) $T_4$ गर्भिणी ( for गुर्विणी ) — ( L 111 ) $D_3$ भूता ये ; Bom Poona eds G(ed ) विघ्नानि ( for भूतानि ). $K_2$ $D_4$ भयानका , $T_4$ om., Poona eds विनायक ( for °का ). — ( L 112 ) $B_1$ विद्यते ( for पठ्यते )

Colophon — *Mention of the Epic* $\tilde{N}_2$ $Ds_2$ — *Mention of Khila* : $\tilde{N}_3$ V B $Dn_2$ Ds $D_1$ — *Adhy name :* $K_2$ $D_2$ मार्कण्डेयकृत हरिहरस्तोत्रम्, $K_2$ $\tilde{N}_3$ V $B_2$ $D_{3\ 4\ 6}$ $T_4$ बाणयुद्धे हरिहरात्मकस्तवः , $K_3$ हरिहरस्तुति ; $K_4$ $\tilde{N}_2$ हरिहरात्मक ( $\tilde{N}_2$ °कम् ); $B_{1\ 3}$ Dn Ds $D_{1\ 5}$ हरिहरात्मकस्तवः. — *Adhy no.* $K_3$ 174 , $\tilde{N}_3$ 182 , $V_2$ 183 , $V_3$ $Ds_2$ 181 ; Dn $D_4$ 179 , $D_1$ 173 , $T_4$ 231 .

38

( L 1 ) $D_1$ बलदेवं ( for °भद्र ) — ( L 2 ) $K_2$ $D_4$ कृष्णं ; $B_1$ कृष्ण. ( for हृष्ट ) $\tilde{N}_{2\ 3}$ $V_1$ $D_{2\ 3}$ महायशाः , $V_3$ $B_3$ $D_6$ प्रतापवान् ( for महामनाः ) — ( L 3 ) $K_2$ $D_{2.\ 4}$ नारदं ( for माधवं ) $\tilde{N}_{2.\ 3}$ $V_1$ अभिगम्य ( for °वाद्य ). — ( L. 4 ) $K_{3.\ 4}$ Dn $D_5$ [अ]भिवाद्य च ( for [अ]भिवा-

ततो मकरकेतुं च चित्रबाणधरं प्रभुम् । [ 5 ]
पितरं सोऽभ्युपागम्य प्रद्युम्नमभिवादयत् ॥
सखीगणवृता चैव सा चोषा कुलनन्दिनी ।
बलं चातिबलं चैव वासुदेवं सुदुर्जयम् ॥
असंख्यातगतिं चैव सुपर्णमभिवाद्य च ।
पुष्पबाणधरं चैव लज्जमानाभ्यवादयत् ॥ [ 10 ]
ततः शक्रस्य वचनान्नारदः परमद्युतिः ।
वासुदेवसमीपं स प्रहसन्पुनरागतः ॥
वर्धापयति तं देवं गोविन्दं शत्रुसूदनम् ।
दिष्ट्या वर्धसि गोविन्द अनिरुद्धसमागमात् ॥
ततोऽनिरुद्धसहिता नारदं प्रणताः स्थिताः । [ 15 ]
आशीर्भिर्वर्धयित्वा च देवर्षिः कृष्णमब्रवीत् ॥
अनिरुद्धस्य वीर्याख्यो विवाहः क्रियतां विभो ।
जम्बूलमालिकां द्रष्टुं श्रद्धा हि मम जायते ॥
ततः प्रहसिताः सर्वे नारदस्य वचःश्रवात् ।
कृष्णः प्रोवाच भगवान्क्रियतामाशु माचिरम् ॥ [ 20 ]
एतस्मिन्नन्तरे तात कुम्भाण्डः समुपस्थितः ।
वैवाहिकांस्तु संभारान्गृह्य कृष्णं नमस्य च ॥

कुम्भाण्ड उवाच ।

कृष्ण कृष्ण महाबाहो भव त्वमभयप्रदः ।
शरणागतोऽस्मि ते देव प्रसीदैषोऽञ्जलिस्तव ॥
नारदस्य वचः श्रुत्वा सर्वं प्रागेव सोऽच्युतः । [ 25 ]
अभयं यच्छते तस्मै कुम्भाण्डाय महात्मने ॥
कुम्भाण्ड मन्त्रिणां श्रेष्ठ प्रीतोऽस्मि तव सुव्रत ।
सुकृतं ते विजानामि राष्ट्रिकोऽस्तु भवानिह ॥
सज्ञातिपक्षः सुसुखी निर्वृतोऽस्तु भवानिह ।
राज्यं च ते मया दत्तं चिरं जीव ममाश्रयात् ॥ [ 30 ]
एवं दत्त्वा राज्यमस्मै कुम्भाण्डाय महात्मने ।
विवाहमकरोत्तत्र सोऽनिरुद्धस्य बुद्धिमान् ॥
ततस्तु भगवान्वह्निः स्वयं तत्र उपस्थितः ।
विवाहो ह्यनिरुद्धस्य नक्षत्रे च शुभेऽभवत् ॥
ततोऽप्सरोगणास्तत्र कौतुकं कर्तुमुद्यताः । [ 35 ]
स्नातः स्वलंकृतस्तत्र सोऽनिरुद्धः स भार्यया ॥
ततः स्निग्धैः शुभैर्वाक्यैर्गन्धर्वाश्च जगुस्तदा ।
नृत्यन्त्यप्सरसश्चैव विवाहमुपशोभयन् ॥
ततो निर्वर्तयित्वा तु विवाहं शत्रुसूदनः ।

---

दयत् . — ( L 5 ) $G_1$ पुष्प- ( for चित्र- ) $B_{1, 2}$ विभुम् ; $G_5$ हरिम् ( for प्रभुम् ) — ( L 6 ) $K_{1-3}$ $\tilde{N}_2$ $V_{2, 3}$ B Ds $D_{3, 4, 6}$ $T_{1, 4}$ $G_{3, 5}$ अभ्यवादयत् , $K_4$ अभिवाद्य च , $D_1$ °दयन् ( for °दयत् ) — ( L 7 ) K Dn $D_{1-5}$ $T_{1, 2, 4}$ $G_{1, 3-5}$ सा चोषा भवने स्थिता ( for ᵇ ) — ( L 8 ) $\tilde{N}_2$ om ( hapl ) lines 8ᵇ–9ᵃ. $V_3$ $B_3$ Ds $D_6$ चतुर्भुजम् ( for सुदुर्जयम् ) $G_5$ वासुदेवस्य दुर्जयम् ( for ᵇ ) — ( L 11 ) $T_2$ भवनान् ( for वच° ) — ( L 12 ) $T_1$ $G_3$ -समीपस्थं ( for °पं स ). $K_1$ आगमत् ( for आगतः ) — ( L 13 ) $T_{1, 2}$ $G_{1, 3-5}$ विज्ञापयति ( for वर्धा° ) $D_2$ $T_4$ मधु- ( for शत्रु- ). $K_{1, 2}$ $D_{1, 4}$ -मर्दनम् , $V_2$ -नाश° ( for -सूद° ) — ( L 14 ) $K_1$ $D_1$ अनिरुद्धः समागत ( for ᵇ ) — ( L 15 ) $K_3$ $D_6$ $T_2$ $G_{1, 3, 5}$ -सहसा , $Dn_2$ $D_1$ -सहितो ( for °ता ) $K_1$ तदा ( for स्थिता. ) $D_2$ ततोऽनिरुद्ध प्रणतं सहसा नारद· स्थितम् ( sic ). — ( L 16 ) $D_3$ तान् ( for च ) — ( L 17 ) $D_{2, 4}$ वीर्याक्षो ( for °ख्यो ) $K_3$ इति ( for विभो ) — ( L 18 ) $K_{2-4}$ $D_4$ $T_4$ जाम्बूल- ; $V_3$ $D_{2, 3}$ $T_2$ $G_{1, 3-5}$ ताम्बूल- ; $D_1$ उत्सव- ( for जम्बूल- ) $T_1$ $G_3$ मल्लिकां ( for मालिकां ). ❀ $D_4$ ( marg ) जाम्बूलमालिका विवाहकाले मधूकादिफलवती जम्बूपल्लवमाला देहाभरणं दंपत्योः तां द्रष्टुम् , Cn · जम्बूलं वरपक्षस्त्रीणामुपहासवचनम् । ❀ — ( L 23 ) $T_1$ महाभागो ( for °बाहो ). $K_{1, 2}$ $D_4$ भगवन्नभयप्रद ( for ᵇ ). — ( L 24 ) $\tilde{N}_{2, 3}$ $V_1$ $B_2$ $G_1$ देवेश ( for ते देव ) — ( L 25 ) $V_2$ ( ( *sup lin* ) $T_{1, 2}$ $G_{3, 5}$ कुभाण्डस्य ( for नारदस्य ) $V_3$ $B_3$ $D_6$ प्रागेव मधुसूदनः ( for ᵇ ) — Before lines 27, $D_1$ ins श्रीकृष्णः , $T_4$ वासुदेव. — ( L 27 ) $T_4$ अद्यैव ( for कुम्भाण्ड ) — $T_1$ $G_{3, 5}$ om. lines 28–33 — ( L. 28 ) $V_2$ सुहृदं तव जानामि ( for ᵃ ). $T_2$ $G_{1, 4}$ राष्ट्र शास्तु ( for राष्ट्रिकोऽस्तु ) — ( L 29 ) Bom. eds सु- ( for स ). — ( L 30 ) $K_{1, 2}$ $D_{1, 4}$ राष्ट्रं ( for राज्यं ) $T_2$ $G_{1, 4}$ नित्यं तिष्ठेन् ( for चिरं जीव ) $K_1$ $D_{1, 4}$ मदाश्रयात् ( for ममा° ) — ( L 31 ) $V_3$ B $D_6$ [अ]भयं तस्मै , $D_2$ वरं तस्मै ( for राज्यमस्मै ). — ( L 32 ) $D_{5, 6}$ $T_4$ विवाहं कारयामास ( for ᵃ ) $\tilde{N}_{2, 3}$ $V_{1, 3}$ $B_{1, 3}$ $D_{3, 6}$ वीर्यवान् ( for बुद्धिमान् ) $D_5$ Bom Poona eds G(ed ) [अ]निरुद्धस्य जनार्दनः ( for ᵇ ) — ( L 33 ) $K_2$ रुद्रो , $D_3$ विष्णुः ( for वह्नि. ). $T_2$ $G_{1, 4}$ स्वयंवर ( for स्वयं तत्र ) — ( L 34 ) $K_{3, 4}$ $\tilde{N}_{3, 3}$ V B Dn $Ds_2$ $D_6$ $T_{1, 2}$ $G_{3, 5}$ नक्षत्र च शुभं भवेत् ( for ᵇ ). — ( L 35 ) Bom. Poona eds. G(ed.) चैव ( for तत्र ),

अनिरुद्धस्य सुप्राज्ञः सर्वैर्देवगणैर्वृतः ॥ [40]
आमन्त्र्य वरदं तत्र रुद्रं देवनमस्कृतम् ।
चकार गमने बुद्धिं कृष्णः परपुरंजयः ॥
द्वारकाभिमुखं कृष्णं ज्ञात्वा शत्रुनिषूदनम् ।
कुम्भाण्डो वचनं प्राह प्राञ्जलिर्मधुसूदनम् ॥
बाणस्य गावस्तिष्ठन्ति हस्ते तु वरुणस्य वै । [45]
यासाममृतकल्पं वै क्षीरं क्षरति माधव ।
तत्पीत्वातिबलश्चैव नरो भवति दुर्जयः ॥
कुम्भाण्डेनैवमाख्याते हरिः प्रीतमनास्तदा ।
गमनाय मतिं चक्रे गन्तव्यमिति निश्चितः ॥
ततस्तु भगवान्ब्रह्मा वर्धाप्य स तु केशवम् । [50]
जगाम ब्रह्मलोकं स वृतः स्वभवनालयैः ॥
इन्द्रो मरुद्गणैश्चैव द्वारकाभिमुखं ययौ ।
यतः कृष्णस्ततः सर्वे गच्छन्ति जयकाङ्क्षिणः ॥
वाहनेन मयूरेण सखीभिः परिवारिता ।
द्वारकाभिमुखी सोषा देव्या प्रस्थापिता ययौ ॥ [55]
ततो बलश्च कृष्णश्च प्रद्युम्नश्च महाबलः ।
आरूढवन्तो गरुडमनिरुद्धश्च वीर्यवान् ॥
प्रस्थितश्च स तेजस्वी गरुडः पक्षिणां वरः ।
उन्मूलयंस्तरुगणान्कम्पयंश्चापि मेदिनीम् ॥
आकुलाश्च दिशः सर्वा रेणुध्वस्तमिवाम्बरम् । [60]
गरुडे संप्रयातेऽभून्मन्दरश्मिर्दिवाकरः ॥

39

T1 G3-5 ins after 113.70cd · K1.2 D1 after 1536* : K3 4 Ñ2 V B Dn Ds D2-6 T2 G1 after the addl. colophon (ins. after 1536*)

वैशंपायन उवाच ।

अथाहुको महाबाहुः कृष्णं प्राह महाद्युतिम् ।
हर्षादुत्फुल्लनयनः श्रूयतां यदुनन्दन ॥
एवं गतेऽनिरुद्धस्य क्रियतां महदुत्सवः ।

---

K3 4 Dn कौतुकान् (for °कं) V3 B3 D6 आगता· (for उद्यताः). — (L 36) K1 2 D1 3-5 T1 2.4 G1 3 4 स्वभार्यया, D2 सहोषया (for स भार्यया) V3 B3 D6 [अ]निरुद्धो भार्यया सह (for b) — (L. 38) K3.4 Dn Ds D1 नृत्यन्ते, B1 नृत्यन्तो, B2 °न्त्यो (for °न्ति) V3 B3 D6 विद्याधरगणा- (B3 °णै)श्चैव (for a) — After line 38, Ñ2 Cal. ed. ins an addl colophon, Cal ed mentioning adhy name as अनिरुद्धविवाह· and adhy no as 188 Before line 39, Ñ2 Cal ed ins वैशंपायन उवाच — (L 39) K3 V2 D1 3 4 T1.2.4 G1.3-5 तं (for तु) — G3 om (hapl) lines 40-43 — (L 41) V3 B Ds D6 रुद्रं (for तत्र) V3 B Ds D6 देवी चैव गुहं च तम् (B2 तथा); D2 3 रुद्रं देवं गुहं ततः (for b) — (L 42) Ñ3 (marg as above) V1 -रिपुं- (for -पुरं-) — (L 43) D5 G4 ज्ञात्वा (for कृष्णं) Ds1 द्वारकायां सुखं कृष्णं (for a) G4 भूत्वा (for ज्ञात्वा). V3 B3 D6 -निबर्हणम् (for -निषूदनम्) — (L 44) V3 B3 Ds D6 प्रीत्यर्थं वासुदेवस्य कुम्भाण्डो वाक्यमब्रवीत् —K Ñ2 3 V B1 3 Dn Ds D2-6 T1 2.4 G1 4 5 ins after line 44: G3 after line 39

1* शृणु मे पुण्डरीकाक्ष विज्ञाप्यं मधुसूदन ।
[D3 विज्ञप्तिं (for विज्ञाप्यं).]

— (L 45) D1 गृहे तु, D3 हृतास्ता; D6 हृतास्तु (for हस्ते तु) — (L 46) G4 स्रवति (for क्षरति) — (L 47) K1.4 Ñ3 V B3 Ds1 D1-4 6 T2.4 G1.5 यत् (for तत्). K4 स- (for [अ]ति-) B3 दुर्जर (for °य) — (L 48) D3 T2 4 G1 4 आख्यातो (for °ते) — (L 49) K Ñ2 3 V1 Ds D4 5 निश्चयम् (K2 D4 °य), V2 3 B2 3 D1 3 6 निश्चितम्, D2 निश्चयात् (for निश्चित) — (L 50) G3 स (for तु) D6 (marg as above) T2 G1 4 विज्ञाप्य (for वर्धाप्य) — (L 51) V3 जगाम ब्रह्मणो लोक (for a). G5 व्रजन् (for वृत.) B3 D3 T1 G3 वृतः स्वभवनालये (for b). — (L 52) T1 2 G1 3-5 मरुद्गणाश् (for °णैश्) D3 5 सार्धं (for चैव) B2 T4 इन्द्रो मरुद्गणयुतो (for a). G4 साध्याश्च द्वारका ययौ (for b) — (L 53) V3 B2.3 Ds1 D6 प्रिय- (for जय-) — After line 53, T1 G5 ins.:

2** ततोऽनिरुद्ध प्रीतात्मा प्राञ्जलिर्वाक्यमब्रवीत् ।
देवदेव महायुद्धे जयेत्त्वां को नु सत्तमम् ॥
शक्तो न प्रमुखे स्थातुं साक्षादपि शतक्रतुः ।
आरोह गरुडं तूर्णं गच्छामो द्वारकां पुरीम् ॥

— (L 58) G5 Bom Poona eds पतता (for पक्षिणां). — (L 60) G5 -ध्वजम् (for ध्वस्तम्) — (L. 61) K Ñ2 3 V1 Dn Ds2 D1.2 4 ऽस्मिन् (for ऽभून्). V3 B2 3 D6 च भास्कर· (for दिवाकर.).

39

T1 2 G1.3 5 om the ref. — (L. 1) T1 G1.3 [आ]गतो (for [आ]हुको). K1 2 D1.4 महाबाहुं, Ñ3 (marg) V1 °भाग (for °बाहु) T2 G1.4 आह (for प्राह) K3.4 Ñ2.3

क्षेमात्प्रत्यागतं दृष्ट्वा सेव्यमानाः सहासते (?) ॥
उषापि च महाभागा सखीभिः परिवारिता । [ 5 ]
रमते परया प्रीत्या अनिरुद्धेन संगता ॥
कुम्भाण्डदुहिता रामा उषायाः सखिमण्डले ।
प्रवेश्यतां महाभागा वैदर्भी वर्धयेत्पुनः ॥
साम्बाय दीयतां रामा कुम्भाण्डदुहिता शुभा ।
शेषाश्च कन्या दीयन्तां कुमाराणां यथाक्रमम् ॥ [ 10 ]
वर्तते चोत्सवस्तत्र अनिरुद्धस्य वेश्मनि ।
गृहे श्रीधन्विनश्चैव शुभस्तत्र प्रवर्तते ॥
वादयन्ति पुरे तत्र नार्यो मदवशं गताः ।
नृत्यन्ते चापरास्तत्र गायन्ति च तथापराः ॥
काश्चित्प्रमुदितास्तत्र काश्चिदन्योन्यमब्रुवन् । [ 15 ]
नानावर्णाम्बरधराः क्रीडमानास्ततस्ततः ॥
अभियान्ति ततोऽन्योन्यं काश्चिन्मदवशात्स्वयम् ।
क्रीडन्ति काश्चिदक्षैस्तु हर्षादुत्फुल्ललोचनाः ॥
मायूरं रथमारुह्य सखीभिः परिवारिता ।
उषा संप्रेषिता देव्या रुद्राण्या प्रतिगृह्यताम् ॥ [ 20 ]
इयं चैव कुलश्लाघ्या नाम्नोषा नाम सुन्दरी ।
बाणपुत्री तव वधूः प्रतिगृह्णीष्व भामिनीम् ॥
ततः प्रतिगृहीता सा स्त्रीभिराचारमङ्गलैः ।
प्रवेशिता च सा वेश्म अनिरुद्धस्य शोभना ॥
देवकी रेवती चैव रुक्मिण्यथ विदर्भजा । [ 25 ]
दृष्ट्वानिरुद्धं रुरुदुः स्नेहहर्षसमन्विताः ॥
ततस्तूर्यप्रणादैस्ता वरनार्यः शुभाननाः ।
क्रियां चारेभिरे कर्तुमुषा च गृहसंस्थिता ॥
ततो हर्म्यतलस्था सा वृष्णिपुंगवसंश्रिता ।
रमते सर्वसदृशैरुपभोगैर्वरानना ॥ [ 30 ]
चित्रलेखा च सुश्रोणी अप्सरोरूपधारिणी ।

---

V $B_3$ Dn Ds $D_{2\ 6}$ $T_4$ $G_3$ महाद्युति-, $D_5$ °भुज- (for °द्युतिम्) — (L 2) $K_3$ प्रफुल्ल- (for उत्फुल्ल-) $D_5$ प्रहर्षोत्फुल्लनयन- (for $^a$) — (L 3) $T_{1\ 2}$ $G_{1\ 3-5}$ क्रियतामुत्सवो महान् (for $^b$) — $T_{1\ 2}$ $G_{1\ 3\ 5}$ om line 4 — (L 4) $Ñ_2$ $V_3$ $B_1$ (marg) $_{2\ 3}$ $D_6$ सेव्यमानं सहागतैः, $B_1$ $Ds_2$ °न- ($Ds_2$ °ना) समासते, $D_1$ °न सहासने (for $^b$). — (L 6) $K_2$ रमन्तां; $D_3$ °तां (for °ते) $V_3$ $B_{2,3}$ $D_{1\ 6}$ परम- (for परया) $T_{1\ 2}$ $G_{1\ 3-5}$ रमतां ($T_2$ $G_{1,3}$ °ते) परमप्रीता (for $^a$) — $T_2$ $G_{1\ 3}$ om (hapl) lines 7–13 $T_1$ $G_{4\ 5}$ om line 7. — (L 8) $B_1$ $D_5$ प्रविश्यतां (for प्रवे°) $K_2$ $D_{1\ 2\ 4}$ वैदर्भी (for °र्भी) $K_{1\ 3\ 4}$ $V_2$ $B_3$ Ds $D_4$ (marg) वैदर्भी वर्धयन्त्युत ($K_4$ °न्पुन), $Ñ_{2\ 3}$ $V_{1\ 3}$ $B_{1,2}$ Dn $D_6$ $G_4$ °र्भी ($Ñ_3$ $B_1$ Dn $G_4$ °र्भी) वर्धयत्युत; $D_3$ सखीभि परिवारिता, $T_1$ $G_5$ विवाहं वर्धयत्युत (for $^b$) — (L 9) $K_{3\ 4}$ $B_1$ रामा दीयतां ($B_1$ °त) साम्बाय (for $^a$) — (L 10) $K_{1\ 3,4}$ $Ñ_{2,3}$ V B Ds $D_{5\ 6}$ न्यस्यन्तां (for दीयन्तां) — (L. 11) $Ñ_3$ $V_{1\ 2}$ $T_1$ $G_{4\ 5}$ वर्धते (for वर्तते) — (L 12) $K_3$ शार्ङ्गधन्वनश् (for श्रीधन्विनश्) $B_3$ गृहे श्रीमन्बलं चैव (for $^a$). Dn प्रवर्तताम् (for °ते) — (L 13) $V_3$ $D_6$ [अ]परास् (for पुरे) $D_5$ यदुवश (for मद°) — (L 14) $Ñ_2$ $V_{1,2}$ Ds $T_2$ $G_{1\ 4}$ नृत्यन्ति (for °न्ते) $K_2$ अप्सरास्, $B_{2,3}$ $V_3$ $D_6$ [अ]प्सरसस्, $T_2$ $G_{1\ 3\ 4}$ च परास् (for चापरा°) $D_3$ om (hapl) $14^b$–$15^a$. $T_{1,2}$ $G_{1\ 5}$ गायन्ते (for °न्ति) — $T_{1\ 2}$ $G_{1\ 3-5}$ om lines 15–19. — (L 15) $V_3$ $D_6$ प्रक्रीडितास् (for प्रमुदि°) $K_1$ अब्रवीत्; $Ñ_2$ $V_3$ $B_3$ $D_6$ आश्रिताः (for अब्रुवन्). — (L 16) $Ñ_2$ $V_1$ $B_1$ (marg) $D_3$ -माल्याम्बर-, $V_2$ -वस्त्रा° (for -वर्णा°) — (L. 17) $K_1$ मदवशा (for °वशात्) $D_5$ काश्चिन्मदवशं गताः (for $^b$) — (L 19) $K_1$ $V_1$ $B_2$ आस्थाय (for आरुह्य) — (L 20) $G_5$ संप्रेरिता, G(ed) संतोषिता (for संप्रे°) — (L 21) $Ñ_3$ कुले (for कुल-) $Ñ_3$ $V_{1\ 2}$ [अ]सुर-, $V_3$ $B_3$ कुल-, $D_5$ चैव, $D_6$ लोक- (for नाम) $B_1$ (marg as above) नाम्नोषासुरनन्दिनी, Bom Poona eds G(ed) °षा सुन्दरी वरा (for $^b$) — (L 23) $Ñ_2$ प्रीति-, $B_3$ $D_{1\ 6}$ परि- (for प्रति-) $K_4$ कृतैर् (for स्त्रीभिर्) — (L 24) $D_3$ शोभनम्, $T_1$ $G_{3\ 5}$ योगतः, $G_{1\ 4}$ वेगित (for शोभना) $T_2$ प्रवेशितानिरुद्धस्य गृहं तस्य स्ववेश्मन — (L 25) $B_{2,3}$ Ds रोहिणी (for रेवती) — (L 26) $K_{1\ 2}$ $Ñ_3$ $V_{1\ 2}$ $B_1$ Dn Ds $D_{1-5}$ रोदन्त्यः, $K_3$ $V_3$ $B_{2\ 3}$ $D_6$ (marg as above) रोदन्ति, $G_1$ यदुषु (for रुरुदु-) — $Ñ_3$ $V_{1,3}$ $B_{2\ 3}$ $D_6$ ins after line 26 $Ñ_2$ $B_1$ $Ds_2$ after line 22

1* रेवती रुक्मिणी चैव गृहमुख्यं प्रवेशयत् ।
वधूर्वर्धसि दिष्ट्या त्वमनिरुद्धस्य दर्शनात् ॥

[(L 1) $B_1$ $Ds_2$ रेवतीं रुक्मिणीं चैव (for $^a$). $V_{1\ 3}$ B $Ds_2$ गृहमूपा, (for °मुख्यं) — $D_5$ om line 2 ]

— (L 27) $K_{1\ 2}$ $B_{2\ 3}$ $D_4$ -निनादैस् (for -प्रणा°) $Ñ_{2\ 3}$ $V_4$ $D_1$ सुशोभना (for शुभाननाः) — $T_2$ om (hapl.) lines 28–30 — (L 28) $T_1$ $G_{1\ 3-5}$ क्रीडां (for क्रियां). $K_1$ स्नुषा (for उषा) $K_{1\ 2}$ $T_1$ $G_{1\ 4\ 5}$ -संस्थिताम् $V_1$ -सश्रिता (for -संस्थिता) — (L 29) $G_{1\ 3}$ [उ]षा (for सा). $V_2$ $B_1$ Ds $D_{2\ 5}$ $G_{1\ 3}$ -संस्थिता (for -संश्रिता). $Ñ_2$

आपृच्छ्य च सखीवर्गमुषां च त्रिदिवं गता ॥
गतासु तासु सर्वासु सखीष्वसुरसुन्दरी ।
मायावत्या गृहं नीता प्रथमं सा निमन्त्रिता ॥
तासां प्रद्युम्नगृहिणी स्नुषां दृष्ट्वा सुमध्यमाम् । [ 35 ]
वासोभिरन्नपानैश्च पूजयामास सुन्दरीम् ॥
ततः क्रमेण सर्वास्ता वधूमूषां यदुस्त्रियः ।
आचारमनुपश्यन्त्यः स्वधर्मं इति चक्रिरे ॥
एतत्ते सर्वमाख्यातं मया कुरुकुलोद्वह ।
यथा बाणो जितः सख्ये जीवन्मुक्तश्च विष्णुना ॥ [ 40 ]

40

Ś1 ins after adhy 114 : K Ñ2 3 V B D T1 2 G1 3–5 M2 4 after App I (No 42B):

जनमेजय उवाच ।

भगवन्केन विधिना श्रोतव्यं भारतं बुधैः ।
फलं किं के च देवाश्च पूज्या वै पारणेष्विह ॥
देयं समाप्ते भगवन्किं च पर्वणि पर्वणि ।
वाचकः कीदृशश्चात्र एष्टव्यस्तद्ब्रवीहि मे ॥

---

वृष्णिपुंगवमास्थिता, Ñ3 B3 D3 °व आश्रिता ( for °) — ( L 30 ) V3 B2 3 T1 G1 3–5 तत्र ( for सर्व- ) K1 2 D4 वराङ्गैणे , Ñ2 D1 °ङ्गना ( for °नना ) — ( L 31 ) Ñ3 ( marg ) V B Ds D6 अप्सरा कामरूपि( for B1 °चारि-, Ds1 °धारि )णी ( for °) — ( L 32 ) K V3 B2 3 Dn D1–6 आपृष्ट्वा , V2 ( *sup lin* as above ) आमन्त्र्य ( for आपृच्छ्य ) — K D1–4 om lines 33–38 — ( L 34 ) V2 निवर्तिता ( for निमन्त्रिता ) — ( L 35 ) B3 उषा , T1 2 G1 3–5 वधूं ( for स्नुषां ) B2 T1 2 G1 3–5 सुमध्यमा ( for °माम् ) — ( L 36 ) Dn रत्नसारैश् ( for अन्नपानैश् ) — ( L 38 ) G5 -पश्यन्ति Ñ2 3 V B Dn Ds D5 6 स्वधर्ममनु( Dn °मुप )चक्रिरे ( for °) — Before line 39, some Mss ins वैशंपायन उवाच — ( L 40 ) G1 हृत ( for जित ) — After line 40, K Ñ2 3 V B D T2 G1 3 4 ins a colophon [ *Adhy name* T1 बाणासुरजयान्तरं श्रीकृष्णस्य द्वारकाप्रवेशे इन्द्रादिसकलदेवतासुयात्रा — *Adhy no* T1 264, G5 266 ]

40

Before the ref D6 T1 2 G1 3–5 M2 4 ins. .

1** शौनक उवाच ।
सौते सुमहदाख्यानं भवता परिकीर्तितम् ।
प्रजानां पतिभिः सार्धं देवानामृषिभिः सह ॥
पितृगन्धर्वभूतानां पिशाचोरगरक्षसाम् ।
दैत्यानां दानवानां च यक्षाणामथ पक्षिणाम् ॥
पाण्डूनां धृतराष्ट्राणां यदूनां वृष्णिभिः सह । [ 5 ]
ऐलेयेक्ष्वाकुवंशानां नृपाणां चरितं तथा ॥
दिव्यमानुषसंभूतः प्रादुर्भावोऽनुकीर्तितः ।
माहात्म्यं देवदेवस्य विष्णोरमिततेजसः ॥
अत्यद्भुतानि कर्माणि विक्रमा धर्मनिश्चया. ।
विचित्राश्च कथायोगा जन्म चाग्र्यमनुत्तमम् ॥ [ 10 ]
तत्कथ्यमानमस्माकं त्वया वै श्लक्ष्णया गिरा ।
मनःकर्णसुखं सूत प्रीणात्यमृतसंमितम् ॥
महाभारतमाख्यानं विधिना केन श्रूयते ।
पौराणे किं फलं चास्य तद्भवान्वक्तुमर्हति ॥
सूत उवाच ।
पर्वणां श्रवणविधिं पारणेषु च यत्फलम् । [ 15 ]
जनमेजयेन यत्पृष्टं तस्मिन्नवभृथे क्रतौ ॥
जनमेजय उवाच ।
व्यासप्रोक्तं महापुण्यं वेदार्थसमलंकृतम् ।
श्रुतमाख्यानमखिलमनेकसमयान्वितम् ॥
श्रुत्वाख्यानमिदं सम्यक्पावनं वै द्विजोत्तम ।
अतो महत्तर भूयो वक्ष्यामि विधिमुत्तमम् । [20]

[ G4 om the ref — ( L 2 ] T2 G1 M2 4 मनुभिः ( for पतिभिः ) — ( L 5 ) D6 T2 M2 4 धार्तराष्ट्राणां ( for धृत° ). — ( L 7 ) T1 2 G1 3. 5 -संभूत्या ( for °त ) — ( L 10 ) G1 पवित्राश् ( for विचि° ) — ( L 12 ) G3 -संनिभम् ( for समितम् ) — ( L 14 ) D6 प्रदाने , T2 M2 पारणे ( for पौराणे ) M4 स्यात्तत् ( for चास्य ) G4 पारायणे किं फलं तु ( for ° ). M2 तत्सर्वं वक्तुमर्हसि ( for °) — ( L 15 ) T2 पारण- ( for पर्वणां ) G4 पारण- ( for श्रवण- ) M1 पर्वणां श्रावणविधिं ( for ° ) G4 पारणे च तु ( for °णेषु च ) — ( L. 16 ) T2 M2 4 क्रतो ( for क्रतौ ) — D6 om , G3 सूत ( for जनमेजय ) — ( L 17 ) G1 M2 4 महत्पुण्य ( for महापुण्यं ). — ( L 20 ) D6 अन्ते ( for अतो ) G1 पृच्छामि ( for वक्ष्यामि ). ]

T1 2 G6 4. 5 M2 4 om the ref — ( L 1 ) D1 येन ( for केन ). K1 D4 5 भगवन्विधिना केन ( for ° ) D5 प्रोक्तव्यं ( for श्रोतव्यं ) T1 2 G1. 4 5 M2 4 नरैः ( for बुधैः ) — ( L. 2 ) G3 किं फलं ( by transp ) T1 G1. 5 M2 4 केऽत्र ; T2 अत्र ; G4 तेऽत्र ( for के च ). K2 D5 कार्यं किं देवदेवस्य ( for ° ). K2 का पूजा ( for पूज्या वै ) V1 पारणे तु ( for °णेषु ). — ( L 3 ) V3 द्विजाय ; D3 समाप्तौ ( for °प्ते ) T1. 2 G1. 3 5 किंचित् ( for किं च ). — ( L. 4 ) T1 2 G1 5 तस्मिन् ;

वैशंपायन उवाच ।

शृणु राजन्विधिमिमं फलं यच्चापि भारतात् । [ 5 ]
श्रुताद्भवति राजेन्द्र यत्त्वं मामनुपृच्छसि ॥
दिवि देवा महीपाल क्रीडार्थमवनिं गताः ।
कृत्वा कार्यमिदं चैव ततश्च दिवमागताः ॥
हन्त यत्ते प्रवक्ष्यामि तच्छृणुष्व समाहितः ।
ऋषीणां देवतानां च संभवं वसुधातले ॥ [ 10 ]
वसुरुद्रास्तथा साध्या विश्वे देवाश्च शाश्वताः ।
आदित्याश्चाश्विनौ देवौ लोकपालाः सहर्षिभिः ॥
गुह्यकाश्च सगन्धर्वा नागा विद्याधरास्तथा ।
सिद्धा धर्मः स्वयंभूश्च मुनिः कात्यायनो वरः ॥
गिरयः सागरा नद्यस्तथैवाप्सरसां गणाः । [ 15 ]
ग्रहाः संवत्सराश्चैव अयनान्यृतवस्तथा ॥
स्थावरं जंगमं चैव जगत्सर्वं सुरासुरम् ।
भारते भरतश्रेष्ठ एकस्थमिह दृश्यते ॥
तेषां श्रुत्वा प्रतिष्ठानं नामकर्मानुकीर्तनात् ।
कृत्वापि पातकं घोरं सद्यो मुच्येत मानवः ॥ [ 20 ]
इतिहासमिमं श्रुत्वा यथावदनुपूर्वशः ।
संयम्यान्तःशुचिर्भूत्वा पारं गत्वा च भारते ॥
तेषां श्रेष्ठानि देयानि श्रुत्वा भारत भारतम् ।
ब्राह्मणेभ्यो यथाशक्त्या भक्त्या च भरतर्षभ ॥
महादानानि देयानि रत्नानि विविधानि च । [ 25 ]

---

M2 4 चास्मिन् ( for चात्र ) K1 ( *sup. lin* ) 2.3 D1.3 5 प्रष्टव्यस्, D2 द्र°, D4 Bom ed य° ( for ए° ) T1 ब्रवीतु मे, G4 °मि ते ( for °हि मे ) — After the ref, D6 T1.2 G1 3 5 M2 4 ins :

2** सम्यक्पृष्टोऽस्मि राजेन्द्र त्वया बुद्धिमतां वर ।
मयापि भगवान्व्यास पृष्टो वेदविदां वर ॥
पृष्टेन तु मया गुह्य विधिरुक्तो महात्मना ।
तथा वक्ष्यामि ते सम्यक्समाधाय पुन पुनः ॥

[ D6 om line 1 — ( L 3 ) D6 पूर्वं, G3 तेन, M2 4 मह्य ( for गुह्यं ) T2 G1 पृष्ट स तु मया मह्य ( for $^a$ ) G1 पृष्टो ( for उक्तो ). — ( L 4 ) D6 मन शृणु ( for पुन पुन ) ]

— ( L. 5 ) D3 शृणुष्व राजन्विधिना ( for $^a$ ) Bom Poona eds यच्छति ( for यच्चापि ) K1 Ñ2 B1 D6 T1 G1 3–5 M2 4 भारत, K2 V1 3 °ते, T2 °तम् ( for °तात् ). — ( L 6 ) K4 Ñ2 D5 G1 M2 4 श्रुत्वा, T1 G5 कथं· G3 विधेर् ( for श्रुताद् ) G4 परि- ( for अनु- ) Ś1 B1 T1 2 G1 3 5 M2 4 यन्मा त्वं परिपृच्छसि ( for $^b$ ) — ( L 7 ) Ś1 महीपालात्, K2 3 V4 D5 °पाल ( for °पाल ) T1.2 G1 3–5 M2 4 ये च देवा महीपाला. ; G4 दिवि देव महीपालाः ( for $^a$ ) — K4 om lines 8–12 — ( L 8 ) V1 श्रुत्वा ( for कृत्वा ) G3 नृपाश् ( for इदं ) M2 4 [अ]थ ( for [ए]व ) T1 2 G1 3–5 M2.4 पुनस्त्रिदिवमाश्रिताः ( for $^b$ ) — ( L 9 ) Dn यत्तेऽत्र, D3 ते तत्प्र- ( for यत्ते प्र- ) T1 G1 4 5 हन्त ते कथयिष्यामि· T2 G3 M2 4 हन्त ते संप्रवक्ष्यामि ( for $^a$ ). D6 T1 G4 शृणुष्व सु- ( for तच्छृणुष्व ) Ś1 समासत· ( for °हित· ). — ( L. 10 ) D5 भवन्ति, T1 2 G1 3–5 M2.4 सर्वेषां ( for संभवं ). — ( L 11 ) K1–3 Ñ2 V1 3 B Dn Ds D1.2.4–6 अत्र ( for वसु- ) D3 अत्र रुद्रास्तथादित्या ; T1 G1 3–5 M2 4 अ( G1.4 5 य)त्र रुद्राश्च साध्याश्च ; T2 रुद्राश्चैव हि साध्याश्च ( for $^a$ ) D5 देवता, T1 2 G1 3–5 M2 4 भारत ( for शाश्वता· ) — ( L 12 ) T1 2 G1 4 5 M2 4 चैव ( for देवौ ) K1–3 Ñ2 V1 3 B Dn Ds D1.4 6 G3 महर्षय· ( for सहर्षिभि· ) — ( L 14 ) D4 तु काश्यपो ( for कात्यायनो ) D6 T1 2 G1 3 5 M2 4 वायु( D6 प्रापु )र्नारायणो नर ( for $^b$ ) — ( L 15 ) V3 तथैवाप्सरसो वरा ( for $^b$ ) — ( L 16 ) T2 M2 4 [अ]त्र ( for [ए]व ) D1 om ( hapl ) lines 16$^b$–17$^a$. Ś1 K2 3 Ñ2 V1 3 D6 अयना, D3 °जान्, T1 G1 5 नक्षत्रम्· T2 नक्षत्रा, G3 M2 4 नक्षत्राणि ( for अयनानि ) G4 नक्षत्रमुडुप सदा ( for $^b$ ) — ( L 17 ) Ś1 सुरेश्वरम्, K3 चराच° ; T1 2 G1 3 5 M2 4 सहासु° ( for सुरासु° ). — ( L 18 ) T1 G1 4 5 एकैकमभवत्तथा, T2 एकस्थमभवत्तथा, M2 4 एवं समभवत्तथा ( for $^b$ ) — ( L 19 ) V1 कृत्वा, G4 कर्म ( for श्रुत्वा ) Ś1 ते मा स्वर्गप्रविष्टानां, T1 2 G1 3.5 M2 4 तेषां स्वर्गप्रतिष्ठानां ( for $^a$ ) D3 -कर्मादि- ; D6 ( *sup lin* ) -कीर्त्यानु- ; D6 ( also ) -मात्रानु- ( for -कर्मानु- ) D5 -कीर्तयन्, T1 2 G1 5 M2 4 °नै ( for °नात् ). — ( L 20 ) T1 2 G1 M2 4 कृत्वापि पापकं कर्म ( for $^a$ ) Ś1 मुच्यन्ति ( for मुच्येत ). K3 पातकात् ( for मानव ) — ( L 21 ) K2 हरिवंशम् ( for इतिहासम् ). V1 इदं, D5 अमुं ( for इमं ) D2 यदा च ( for यथावद् ) Ś1 T1 2 G1 3 5 M2 4 अनसूयक· ( for अनुपूर्वश. ). — ( L 22 ) Ś1 V3 B1 3 Ds संयतात्मा, D3 T1 2 G1 3–5 M2 4 सायं प्रात. ( for संयम्यान्त - ) K2 D3–5 भारत ( for °ते ). Ś1 पारं गच्छति भारत, D6 T1 2 G1 3–5 M2 4 परं ( D6 पारं, T2 G1 पदं ) गत्वा च भारत ( for $^b$ ) — ( L 23 ) K1–3 Ñ2 V1 3 B D G3 4 श्राद्धानि ; G(ed) देयानि ( for श्रेष्ठानि ). T1.2 G1 5 M2 4 तेन श्राद्धानि देयानि, Bom. Poona eds. तेषां शृणु त्वं श्राद्धानि ( for $^a$ ) D5 पाठं श्रुत्वा च भारतम् ( for $^b$ ). — ( L 24 ) V3 G3 M2 4 यथाशक्ति ( for °शक्त्या ). K3 D6 शक्त्या ( for भक्त्या ). K2 भक्ष्यभोज्यानि दापयेत् ;

गावः कांस्योपदोहाश्च कन्याश्चैव स्वलंकृताः ॥
सर्वकामगुणोपेता यानानि विविधानि च ।
भवनानि विचित्राणि भूमिर्वासांसि काञ्चनम् ॥
वाहनानि च देयानि हया मत्ताश्च वारणाः ।
शयनं शिबिकाश्चैव स्यन्दनाश्च स्वलंकृताः ॥ [ 30 ]
यद्यद्गृहे वरं किंचिद्यद्यदस्ति महद्वसु ।
तत्तद्देयं द्विजातिभ्य आत्मा दाराश्च सूनवः ॥
श्रद्धया परया दत्तं क्रमशस्तस्य पारगः ।
शक्तितः सुमना हृष्टः शुश्रूषुरविकत्थनः ॥
सत्यार्जवरतो दान्तः शुचिः शौचसमन्वितः । [ 35 ]
श्रद्दधानो जितक्रोधो यथा सिध्यति तच्छृणु ॥
शुचिः शीलान्विताचारः शुक्लवासा जितेन्द्रियः ।
संस्कृतः सर्वशास्त्रज्ञः श्रद्दधानोऽनसूयकः ॥
रूपवान्सुभगो दान्तः सत्यवादी जितेन्द्रियः ।
दानमानगृहीतश्च कार्यो भवति वाचकः ॥ [ 40 ]
अविलम्बमनायस्तमद्रुतं धीरमूर्जितम् ।

---

D3 दद्याद्भक्त्या च भारत, T1 2 G1 3-5 M2 4 भक्त्या भरतसत्तम (for $^b$) — K2 om line 25 — (L 25) T2 G1 M4 भवनानि च देवानि (for $^a$) G3 M2 om line 25$^b$. T1 2 G4 5 M4 भूमिर्वासांसि चैव ह (for $^b$) — G4 om lines 26–28 — (L 26) Ś1 कांस्यग- (for कांस्योप-) T1 2 G1 3 M2 -देयाश् (for दोहाश्) — (L 27) T2 G1 M2 4 गुणोपेतं (for °पेता) T2 G1 M2 4 दानानि (for या°). Ś1 शयनानि (for विविधानि) — (L 28) G3 वाहनानि. D4 (marg) भोज°, Poona ed भाज° (for भव°) Ś1 T2 G1 M4 च देयानि (for विचित्राणि) D6 भूमि (for भूमिर्) Ś1 चानघ (for काञ्चनम्) — (L 29) K2 रत्नानि चैव देयानि (for $^a$). D3 देया (G1 हया) T1 दत्त्वा रत्नाश्च वारणा:, G1 3 5 दत्त्वा (G1 हया) मत्तांश्च वारणान् (for $^b$). — (L 30) D6 T2 G1 3 5 M2 4 यानानि (for शयनं) Ś1 शिबिका स्यन्दनाश्चैव (for $^a$) Ś1 गोवृषाश् (for स्यन्दनाश्) — After line 30, Ñ2 ins.:

3** वाचकाय प्रदातव्य गन्धमाल्य सवस्त्रकम् ।
कटक कुण्डलं चैव यज्ञसूत्र तथैव च ॥
छत्र चोपनहोष्णीकं कञ्चुक सविशेषत: ।
एव सपूज्य विधिवत्ततो दद्याच्च दक्षिणाम् ॥
विधिहीनं च यः कुर्यात्फलं सम्यङ्न चाप्नुयात् ॥ [ 4
कामाल्लोभात्तथा मोहाच्च कर्तव्यान्यथा नृप ।
कुर्वन्स नरकं याति विपरीतं फलं लभेत् ॥

— (L 31) K2 T1 G5 वरं गृहे (by transp) K1 वस्तु (for किंचित्) Ś1 अस्ति यच्च (for यद्यदस्ति) D4 च यद् (for महद्) D3 यदस्ति च तदद्भुतम्, T1 2 G1 3-5 M2. 4 अस्ति यच्च प्रिय वसु (for $^b$) — (L 32) T1 2 G1 5 M2 4 द्विजातीनाम् (for °तिभ्य). Ś1 ह्यात्मदानश्च पावन ; T1. 2 G1 4 5 आत्मा दारांस्तथा सुतान्, G3 आत्मा देयस्तथा सुता ; M2 4 आत्मा दारास्तथा सुताः (for $^b$) — (L 33) K2 देयं, T1 2 G1 4 5 भक्त्या; G2 M2. 4 दत्त्वा, Poona ed G(ed.) युक्त (for दत्तं) Ś1 प्राप्य (for तस्य) K3 क्रमशश्चैव भोजनम्, D5 क्रममाणस्य पारग ; T1. 2 G1 3-5 M2 4 क्रमतः (M2 °श) शास्त्रपारगे (for $^b$) — (L 34) Ś1 V1 Ds1 शक्तित सुमहा( Ds1 °सभा )हृष्ट: ; K2 शक्तितोऽष्टमहादानं ; D1 °त समताहृष्ट, D3 °त स महाहृष्ट (for $^a$) Ś1 अविकत्थक, K1 V3 D4 6 अविकल्पन · K3 Ñ2 °ल्पत ; V1 D2 3 °ल्पित, B1 3 D1 5 G4 °ल्पक, B2 G3 अविमत्सर ; Dn °कम्पन (for °कत्थन) K2 शुश्रूष्यश्चैव वाचक: (for $^b$) — (L 35) D3 T1 2 G1 3-5 M2 2 -परो (for रतो) Dn यत्त (for दान्त) K3Dn -परायण:, B2 -समाहित: (for -समन्वित). T1 2 G1 3-5 M2 4 शुचि शौचान्वितस्तथा (for $^b$) — (L 36) T2 G1 शुध्यति (for सि°) — After line 36, D6 ins :

4** श्रोतु श्रावयिता राजन्कथयामि समासतः ।

While T1 2 G1. 3-5 M2 4 ins after line 36

5** वाचके च गुणा प्रोक्ता यावन्तस्ताञ्शृणुष्व मे ।

— (L 37) D3 T1. 2 G1 3-5 M2 3 शुचि शीलान्वित प्राज्ञ: (D3 °तो धीर) (for $^a$) Dn यतेन्द्रिय: (for जि°). — Ś1 K2 D2 6 om lines 38–39 — (L 38) K3 सर्वधर्मरतः शान्त (for $^a$) — After line 38, T1 2 G1 3-5 M2. 4 ins ·

6** छन्दज्ञो लक्षणज्ञश्च सत्कविः कालवेदिक. ॥

[ G3 M2 4 छन्दोज्ञो (for छन्दज्ञो) T2 -वेदिता, G3 -वेदकः (for -वेदिक ). M2 4 सत्कवि: काव्यवेदिता (for $^b$) ]

— (L 39) T1. 2 G1 3-5 M2 4 रूपवानार्जवोपेत (for $^a$). T1 2 G3 4 M2 4 जितक्रम (for जितेन्द्रिय:) — (L 40) Dn Bom Poona eds. -ग्रहीता (for -गृहीतश्). — After line 43, D6 ins.·

7** आस्तीकश्च सदाक्रोधी लोभी चैवाजितेन्द्रिय. ।
मन्दबुद्धिरसंतोषी त्याज्यो भवति वाचक ॥

While T1 2 G1 3-5 M2 4 ins after line 40:

8** वेदार्थवित्कृती वाग्मी न्यायवान्पदवित्तमः ॥

[ G3 M2 4 वेदार्थज्ञ (for °र्थवित्) T2 G1 3 न्यायवान्पद. वित्तथा, M2 °वित्पदवित्तथा (for $^b$). ].

असंसक्ताक्षरपदं रसभावसमन्वितम् ॥
त्रिषष्टिवर्णसंयुक्तमष्टस्थानसमन्वितम् ।
वाचयेद्वाचकः स्वस्थः स्वासीनः सुसमाहितः ॥
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । [45]
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥
ईदृशाद्वाचकाद्राजञ्श्रुत्वा भारत भारतम् ।
नियमस्थः शुचिः श्रोता शृण्वन्स फलमश्नुते ॥
पारणं प्रथमं प्राप्य द्विजान्कामैश्च तर्पयेत् ।
अग्निष्टोमस्य यागस्य फलं वै लभते नरः ॥ [50]
अप्सरोगणसंकीर्णं विमानं लभते महत् ।
प्रहृष्टः स तु देवैश्च दिवं याति समाहितः ॥
द्वितीयं पारणं प्राप्य अतिरात्रफलं लभेत् ।
सर्वरत्नमयं दिव्यं विमानमधिरोहति ॥
दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः । [55]
दिव्याङ्गदधरो नित्यं देवलोके महीयते ॥
तृतीयं पारणं प्राप्य द्वादशाहफलं लभेत् ।
वसत्यमरसंकाशो वर्षाण्ययुतशो दिवि ॥
चतुर्थे वाजपेयस्य पञ्चमे द्विगुणं लभेत् ॥

---

— (L. 41) Ś1 अलम्भितम्, T1 कुलान्वितम्, T2 G1 5 M2. 4 आलम्बितम् (for अविलम्बम्) K1 अनायत्तम्, K3 V1 3 D1–3 6 °कुलम् (for °यस्तम्) K2 D5 अविलम्बितवाणीयो (for a) K3 Dn Ds1 D2 4 अद्भुत, T1 G1 3–5 अश्रुतं (for अद्भुत) Ñ2 V1 वाक्यम् (for धीरम्) K2 D5 मन्दगम्भीरमूर्जित°, V3 Ds2 D3 G4 अद्भुतं वाक्य(Ds2 घोर°, D3 G4 वीर)मूर्जितम् (for b) — (L. 42) V1 3 सुसंस्कृताक्षरपदं (for a) Dn2 Ds2 न च भाव-, Ds1 D6 स्वरभाव-, D5 तरसा च (for रसभाव-) — (L. 43) V1 -ताल- (for -स्थान-) Ś1 Dn G4 -समीरितम् (for -समन्वितम्) — (L. 44) D5 कथयेद् (for वाच°) K 2 4 Ñ2 V1 2 B1 Dn D1–6 T1 2 G1 3–5 M2 4 स्वाधीन, K3 स्वस्थान (for स्वासीन) — (L. 45) G1 नमस्कृत्वा (for °त्य) — (L. 46) K2 3 D1 3 6 T1 G1 3 5 व्यास (for चैव) T2 G1 वाचम्, M2 4 वाणीम् (for जयम्) — (L. 47) D3 भाषितम्, Dn1 भारत (for °तम्) K2 T1 G3 5 श्रुत्वा भारतमुत्तमम् (for b) — (L. 48) K2 यथोक्तं, T1 2 G1 3 5 M2 4 शृणुयात् (for शृण्वन्स) — After line 48, Ñ2 (marg.) ins.:

9** भारतं शतपर्वोक्तं मुनिना तत्त्वदर्शिना ।
दशभिर्दशभिश्चैव पर्वणां पारणं स्मृतम् ॥
सभान्तं प्रथमं प्रोक्तं द्वितीयं वनवासिकम् ।
उद्योगान्तं तृतीयं तु भीष्मान्तं च चतुर्थकम् ॥
पञ्चमं द्रोणपर्वान्तं कर्णान्तं पारणं ततः । [5]
विशोकान्तं सप्तमं तु शान्तिपर्वान्तमष्टकम् ॥
नवमं स्वर्गपर्वान्तमाश्चर्यान्तं ततः परम् ॥

केचित्तु सङ्ख्याकथनाभावात्समतानियमेन दशसहस्रश्लोकसमाप्ति पारणम् ॥ केचित्तु महाभारतस्य एकावृत्तिरेकपारणमिति च ॥

— (L. 49) Ñ2 पौराणं (for पारणं) K2 श्रुत्वा च हरिवंश वै (for a) Ś1 K1 B1. 2 Ds2 तर्पयन्, D6 पूजयेत् (for तर्प°) — (L. 50) Ś1 K2 3 D3 5 T1. 2 G1 3–5 M2 4 यज्ञस्य (for यागस्य) T1 2 G1. 3 5 M2. 4 स (for वै) — (L. 51) D3 -संकीर्णो, T1 G4 5 -संघैश्च (for -संकीर्णं) D3 नर° (for महत्) Ś1 विमानं कनकोज्ज्वलम्, T1 2 G1 3–5 M2 4 विमानं कामदं- (T2 G1 °मगं, G2 M2. 4 °ङ्गमं) शुभम् (for b) — (L. 52) K2 पूजितः (for प्रहृष्टः) T1 2 G1 3–5 M2. 4 समुपैति स देवैश्च (for a) Ś1 T1 2 G1. 3 5 M2 4 दिवि याति समान(Ś1 °लोक)ताम् (for b) — For line 52, D3 subst.:

10** हंसयुक्तं विमानं स प्रहृष्टः सह दैवतैः ।
सेव्यमानोऽमरगणैर्दिवं याति समाहितः ॥

— (L. 53) T1 2 G1 3 5 M2 4 लभते चातिरात्रकम् (T1 त्रताम्), G4 पौण्डरीकफलं भवेत् (for b) — After line 53, T1 4 G1. 3 5 M2 4 ins.:

11** सदोपनृत्यमानः सन्गन्धर्वाप्सरसां गणैः ।
तप्तहाटकनिर्यूहं विमानमधिरोहति ।
स्वर्गतश्च मुदा युक्तो रमते नन्दने वने ॥

[After line 1, T2 ins.:

11A** चन्द्ररश्मिप्रतीकाशैर्हयैर्युक्तं मनोजवैः ।

G3 om. lines 2–3]

— (L. 54) D2 4 -रोहते (for °ति) — D5 om. line 55. — (L. 55) K4 -मालाम्बर- (for -माल्या°) Ś1 T1 2 G1. 3–5 M2 4 दिव्याम्बरधरः श्रीमान् (for a) T1 2 G1 3–5 M2 4 -माल्यानु- (for -गन्धानु-) K1 D4 -धूपित (for -लेपनः) K3 4 Ñ2 V1. 3 B Dn Ds D1–3. 6 दिव्यगन्धविभूषि(K3 D2 °धूपि)त (for b) — (L. 56) Ś1 K2 D1 4 M2 4 दिव्याम्बर-, T1 5 G1 3–5 दिव्यगन्ध- (for दिव्याङ्गद-) V1. 3 दिव्य- (for देव) — After line 56, D6 ins.:

12** विमानं सुकृतं वासं सुखेनैवोपपद्यते ।
मुकुटेनाग्निवर्णेन जाम्बूनदविभूषिणा ॥

While T1 2 G1 3–4 M2. 4 ins.: after line 56:

13* दिव्याप्सरोवृतश्चैव देवगन्धर्वसेवितः ।

— G3 4 om. line 57. Ś1 transp. lines 57 and 58. — (L. 57) T1. 2 G1. 6 M2. 4 पौण्डरीक- (for द्वादशाह-).

उदितादित्यसंकाशं ज्वलन्तमनलोपमम् । [ 60 ]
विमानं विबुधैः सार्धमारुह्य दिवि गच्छति ।
वर्षायुतानि भवने शक्रस्य दिवि मोदते ॥
षष्ठे द्विगुणमस्तीति सप्तमे त्रिगुणं फलम् ।
कैलासशिखराकारं वैदूर्यमयवेदिकम् ॥
परिक्षिप्तं च बहुधा मणिविद्रुमभूषितम् । [ 65 ]
विमानं समधिष्ठाय कामगं साप्सरोगणम् ॥
सर्वाल्लँलोकान्विचरते द्वितीय इव भास्करः ॥
अष्टमे राजसूयस्य पारणे लभते फलम् ।
चन्द्रोदयनिभं रम्यं विमानमधिरोहति ॥
चन्द्ररश्मिप्रतीकाशैर्हयैर्युक्तं मनोजवैः । [ 70 ]
सेव्यमानो वरस्त्रीणां चन्द्रात्कान्ततरैर्मुखैः ॥
मेखलानां निनादेन नूपुराणां च निस्वनैः ।
अङ्के परमनारीणां सुखसुप्तो विबुध्यते ॥
नवमे क्रतुराजस्य वाजिमेधस्य भारत ।
काञ्चनस्तम्भनिर्व्यूहं वैदूर्यमयवेदिकम् । [ 75 ]
जाम्बूनदमयैर्दिव्यैर्गवाक्षैः सर्वतो वृतम् ॥
सेवितं चाप्सरःसंघैर्गन्धर्वैर्दिविचारिभिः ।
विमानं समधिष्ठाय श्रिया परमया ज्वलन् ॥
दिव्यमाल्याम्बरधरो दिव्यचन्दनभूषितः ।
मोदते दैवतैः सार्धं दिवि देव इवापरः ॥ [ 80 ]
दशमं पारणं प्राप्य द्विजातीनभिवन्द्य च ।

---

K3 द्वादशाब्दफलं भवेत् ( for ^b ) — ( L 58 ) T1 G1 3-5 चरति ( for वसति ) Ñ2 V1 3 वर्षाणामयुतं दिवि ( for ^b ) — ( L 59 ) T2 G1 M2 4 चतुर्थं ( for °र्थे ) T1 G4 5 चतुर्थे वासुदेवस्य ( for ^a ) Ś1 K1 3 4 Ñ2 V1 3 B D फलम्, G3 4 भवेत् ( for लभेत् ) T1 2 G1 5 पञ्चमं ( T1 G5 फलं च ) द्विगुणं भवेत् ( for ^b ) — After line 59, T1 2 G1 3-5 M2 4 ins :

14** फलं नरवरश्रेष्ठ पारणे पारणे सति ॥

[ G3 M2 4 पारिते ( for the second पारणे ) ]

— ( L 60 ) Ś1 T1 2 G1 4 5 M2 4 आदित्योदयसंकाशं ( for ^a ) — ( L 61 ) Ś1 विमलं ( for विमानं ) T1 2 G1 5 M2 4 [ए]व स ( for दिवि ) — ( L 62 ) T1 2 G1 3-5 M2 4 षष्टिं युगानि भवने ( for ^a ) T1 G1 5 गत स ( for शक्रस्य ) K3 शक्रस्य स विमोदते ( for ^b ) — ( L 63 ) D5 षष्ठं ( for षष्ठे ) Ś1 त्रि- ( for द्वि- ) K2 G4 आप्नोति, B3 Ds D5 ( *sup lin* ) अस्तीह ( for °ति ) K4 षष्ठे हि गुणमश्नाति, T1 2 G1 3 5 M2 4 षष्ठे त्रिगुणमाप्नोति ( for ^a ) D4 द्विगुणं ( for त्रि° ) B1 भवेत् ( for फलम् ) Ś1 T1 2 G1 3-5 M2 4 सप्तमे च च( T2 तु च , G3 तच्च )तुर्गुणम् ( for ^b ) — ( L 64 ) Ś1 T1 2 G1 3-5 M2 4 कैलासशिखरप्रख्यं ( for ^a ) Ś1 V1 2 Dn Ds2 G3 -मणि- ( for मय- ) — ( L 65 ) T1 2 G1 3-5 M2 4 हेमजालपरिक्षिप्तं ( for ^a ) K3 -वैडूर्य- ( for -विद्रुम- ) D3 -तोरणम्; M2 4 -शोभितम् ( for -भूषि° ) — ( L 66 ) D5 सागरोपमम्. T2 G1 साप्सरोगणैः ( for °गणम् ) — ( L 68 ) G4 राजसूयेन ( for °यस्य ) — ( L 69 ) Ś1 D2 3 दिव्यं, K1 चैव, T1 G3-5 M2 4 राजन् ( for रम्य ) T2 G1 चन्द्रोदयमयं राजन् ( for ^a ) — ( L 70 ) T1 G4 5 महाजवैः ( for मनो° ) — ( L 71 ) Ś1 Ds सेव्यमानं ( for °मानो ). K3 D3 T1, 2 G1, 3-5 M2 4 -स्त्रीभि ( for -स्त्रीणां ). K1 2 4 Ñ2 B1 2 Dn Ds2 D1-3 5 6 चन्द्र- ( for चन्द्रात् ) K2 चन्द्रकान्तवरैर्मुखैः , T1 2 G1 4 5 M2 4 दिव्यमाल्यविभूषितः, G3 दिव्यभूषणभूषित ( for ^b ) — ( L 72 ) D6 ( *sup lin.* ) मृदङ्गानां ( for मेखलानां ) — ( L 73 ) D3 नाके ( for अङ्के ) K2 च वर- ( for परम- ) T1 G4 5 स नित्यमप्सरस्त्रीणां ; T2 G1 3 M2 4 अङ्केषु वरनारीणां ( for ^a ) K1 B1 Dn2 Ds2 D1 4. 5 T2 G1 M4 सुखं सुप्तो, D2 सुप्तुप्तो सु- , G3 सुखं सुप्त्वा ( for सुखसुप्तो ) — ( L 74 ) Poona ed नवमं ( for °मे ) D3 यज्ञ- ( for क्रतु- ) T1 2 G1 5 राजसूयस्य , M2, 4 अश्वमेधस्य ( for वाजि° ) — After line 74, D6 T1 2 G4 3-5 M2 4 ins :

15** फलं स लभते मर्त्यो विमानं चैव कामिकम् ।

[ G5 यस्य ( for चैव ) D6 T2 G1 4 कामगम् ( for कामिकम् ) ]

— — ( L 75 ) K1 D4 निर्धूतं, K2 -निवहं, Poona ed. G(ed ) -निर्यूह- ( for -निर्व्यूह ) Ś1 -मणि-, K Ñ2 V1. 3 B Dn Ds D1 2 4-6 G3 -कृत- ( for -मय- ) D3 वैडूर्यमणितोरणम् ( for ^b ). — G3 om lines 76-77 — ( L. 76 ) K3 G4 दिव्यं ( for दिव्यैः ). K1 D4 T1 2 G1 5 M2. 4 जाम्बूनदमयं दिव्यं ( for ^a ) Dn -दिशम् ( for वृतम् ) T1 2 G1. 4 5 M2 4 गवाक्षैरभिसंस्कृ( G4 °सत्कृ-, M4 °सवृ )तम् ( for ^b ) — ( L 77 ) K3 D5 देव- ( for दिवि- ) T2 -दर्शिभि- ( for -चारिभि- ) K2 गन्धर्वैर्दिव्यचारणैः., G1 3-5 M2 °र्दिव्यदर्शिभि- ( for ^b ) — ( L 78 ) Ñ2 गच्छते च श्रिया ज्वलन् ( for ^b ) — ( L 79 ) Ś1 D5 -मालाम्बर ( for -माल्या° ). Ś1 -काञ्चन-, D3 -गन्धवि- ( for -चन्दन- ) K1 2 D4 -चर्चितः ; V1 3 B2 ( marg ) 3 T1 2 G1. 4. 5 M2 4 -रूषितः; Ds2 -भूषितैः. ( for °तः ) B3 दिव्यगन्धानुलेपन ( for ^b ). — ( L. 81 ) T2 om. lines 81^b-86^a K1 2 D4 अभिपूज्य , K3 °वाद्य ( for °वन्द्य ) Ś1 T1 G1. 3-5 M2. 4 तर्पयित्वा द्विजोत्तमान्

किंकिणीजालनिर्घोषं पताकाध्वजशोभितम् ॥
वज्रवेदिकसंकाशं वैदूर्यमणितोरणम् ।
हेमजालपरिक्षिप्तं प्रवालवलभीमुखम् ॥
गन्धर्वैर्गीतकुशलैरप्सरोभिश्च शोभितम् । [ 85 ]
विमानं विबुधावासं सुखेनैवोपपद्यते ॥
मुकुटेनाग्निवर्णेन जाम्बूनदविभूषणः ।
दिव्यचन्दनदिग्धाङ्गो दिव्यमाल्यविभूषितः ॥
दिव्याँल्लोकान्विचरति दिव्यैर्भोगैः समन्वितः ।
विबुधानां प्रसादेन श्रिया परमया युतः ॥ [ 90 ]
अथ वर्षगणानेवं स्वर्गलोके महीयते ।
ततो गन्धर्वसहितः सहस्राण्येकविंशतिम् ।
पुरंदरपुरे रम्ये शक्रेण सह मोदते ॥
दीप्यमानो विमानेषु लोकेषु विविधेषु च ।
दिव्यनारीगणाकीर्णो निवसत्यमरो यथा ॥ [ 95 ]
ततः सूर्यस्य भवने चन्द्रस्य भवने तथा ।
शिवस्य भवने राजन्विष्णोर्याति सलोकताम् ॥
एवमेतन्महाराज नात्र कार्या विचारणा ।
श्रद्दधानेन वै भाव्यमेवमाह गुरुर्मम ॥
लेखकस्य तु दातव्यं मनसा यद्यदिच्छति । [ 100 ]
हस्त्यश्वरथयानानि वाहनं च विशेषतः ।

---

(for $^{b}$) — (L 82) D2 -मालाढ्यं, G1 -संघोषं (for -निर्घोषं) K1 -सेवितम् (for -शोभि°) D6 पताकध्वजमालिनम् (for $^{b}$) — D2 5 om (hapl) lines 83–85 — (L 83) Dn रत्न- (for वज्र-) V3 B2 T1 G1 4 5 M2 4 संबाधं (for -संकाशं) Ś1 वज्रबोधितसंबाधं, K3 वज्रवेदिकसंकाशो, B1 3 Ds D1 (*sup lin*) 6 रत्न(D6 बहु)वेदिकसंबाधं, G3 वज्रवेदिसमायुक्तं (for $^{a}$). T1 G1 4 5 M2 4 वैडूर्यमयवेदिकम् (for $^{b}$) — (L 84) M2 -माला- (for -जाल-) T1 G1 3 5 M4 -परिक्षिप्त- (for °क्षिप्तं) G1 M2 4 -पुटम् (for -मुखम्) Ś1 प्रधानवलभीपुटम्, T1 G4. 5 प्रवालाभिरतिस्फुटम् (for $^{b}$) — (L 85) Ñ2 G1 M2 4 च सेवितम्, Dn2 निषेवि°; D6 D1 5 च नादि° (for च शोभि°) — (L 86) Ś1 K3. 4 Ñ2 V1 3 B Ds D1 3 5 G3 4 विमानं सुकृतावासं, Dn °नं सुकृतां वासं, D6 °नं सुकृताकारं, T1 G5 M2 4 °नं सुकृत चापि; G1 °नं सुगमं चापि (for $^{a}$) Ś1 -लभ्यते (for -पद्यते) — (L. 87) B1 3 Dn [अ]र्क-, D3 [अ]ति- (for [अ]ग्नि-) D4 नानाङ्गद- (for जाम्बूनद-) Ś1 Ds -विभूषितम्, K3 4 Ñ2 V3 B D6 °षिणा, D5 °षणैः; T1 2 G1 3–5 M2 4 °षित. (for °षण.) — T1 G1 4 5 om line 88 — (L 88) T1 M2. 4 -लिप्ताङ्गो (for -दिग्धाङ्गो) K1 3 4 Ñ2 D1 5 -चन्दन-, D2 -भूषण- (for -माल्यवि-) K2 दिव्यस्रगनुलेपन, V1 3 D6 °चन्दनरूषित (for $^{b}$) — (L 89) K1 D4 आविचरन्; K2 4 Ñ2 V1 3 B2 D1–3 5 6 V2 विचरते, B1 Dn प्रचरति, G1 विरमते (for विचरति) T1 G4 5 दिव्यान्भोगान्विरमते; M2 4 दिव्यलोकान्विचरते (for $^{a}$) K2 G3 दिव्यभोग- (for दिव्यैर्भोगै.) — (L 90) T1 2 G1 4 5 M2 4 प्रभावेन (for प्रसादेन) T1 2 G1 3–5 M2 4 ज्वलन् (for युत·) — (L 91) V1 बहु- (for अथ) K2 चैव, K4 D1–3 एव (for एवं) T1 2 G1 5 M2 4 नाग-; G3 नाक- (for स्वर्ग-) — G3 om. lines 92–93 G4 om line 92 — (L 92) B3 अथो, Ds अथ (for ततो). T1. 2 G1. 5 M2 4 -मुख्यानां (for -सहित) — After line 92$^{a}$, T1 2 G1 5 ins ·

16** निवासेषु वसेत्सुखम् ।
ततो वर्षसहस्राणा

K3 4 Dn D3 G4 M4 विंशति. (for विंशतिम्) — (L 93) K2 सह शक्रेण मोदते (for $^{b}$) — (L 94) Ś1 Ñ2 V1 B Dn Ds D2 6 T2 M2 दिव्ययान, K1 V3 G1 दीप्यमान- (for °मानो) K1 दीप्यमानविमानेन, T1 G4 5 M4 दिव्यं वर्षसहस्राणा (for $^{a}$) — (L 95) T2 G1 -समाकीर्णो (for -गणा°) — (L 96) T1 G3–5 च सूर्य- (for सूर्यस्य) T2 G1 सूर्यस्य भवने नित्यं (for $^{a}$) K1 V1 D4 (*sup lin* as above) रुद्रस्य, D3 शक्रस्य, T1 2 G1 3–5 M2 4 सोमस्य (for चन्द्रस्य) — (L 97) D2 सुरस्य, T1 2 G1 3–5 M2 4 देवस्य (for शिवस्य) — (L 99) Ś1 सेव्यमानो (for एवमाह) K2 एवमाहुर्मनीषिण·, T1 2 G1 5 M4 नित्यं (T2 G1 तुष्टिं) पुष्टिमिहेच्छेत, M2 तुष्टिं पुष्टिं पशून्प्रजाम् (for $^{b}$) — T2 G1 M2 om lines 100–104 Ś1 T1 G4 5 M4 om lines 100–102 — (L 100) K1 वाचकाय, K2 Ñ2 B1 Dn Ds2 D2 G3 वाचकस्य, D3 ब्राह्मणस्य (for लेखकस्य) — After line 100, K1 ins

17** पुस्तकं हरिवंशस्य दातव्यं दक्षिणान्वितम् ।
वेष्टनं रज्जुसंयुक्त दद्याद्वैभवसारत: ॥
पुटिके च शुभे चैव फलस्यानन्त्यहेतवे ।
वाचकाय प्रदातव्यमात्मनः पुत्रमिच्छता ॥
कांस्यपात्रं प्रदातव्यं सर्पिःसपूर्णमेव च । [ 5 ]
हिरण्यं दक्षिणा चैव सर्वपापैः प्रमुच्यते ॥

— (L 101) V1 -दानानि, Bom Poona eds -यानादि (for °नि) K1 3 D4 6 वाहनानि (for °नं च) — G3 om line 102 — (L 102) K Ñ2 V1 3 B Ds D1 2 4–6 कटकं कुण्डल चैव, D3 °कं मुकुट चैव (for $^{a}$) D6 स्वर्णसूत्रं (for ब्रह्म°) K2 च हेमकम्, D6 तत· परम् (for तथापरम्). — After line 102, K1 3. 4 Ñ2 V1, 3 B D G3 ins ;

कटके कुण्डले चैव ब्रह्मसूत्रं तथापरम् ॥
अतः परं प्रवक्ष्यामि यानि देयानि भारत ।
वाच्यमाने च विप्रेभ्यो राजन्पर्वणि पर्वणि ॥
जाति देशं च सत्त्वं च माहात्म्यं भरतर्षभ । [ 105 ]
धर्मं वृत्ति च विज्ञाय क्षत्रियाणां नराधिप ॥
स्वस्ति वाच्य द्विजानादौ ततः कार्यं प्रवर्तते ।
समाप्ते पर्वणि ततः स्वशक्त्या तर्पयेद्द्विजान् ॥
आदौ तु भरतश्रेष्ठ गन्धमाल्यार्चितान्द्विजान् ।
विधिवद्भोजयेद्राजन्मधुपायसमुत्तमम् ॥ [ 110 ]
ततो मूलफलप्रायं पायसं मधुसर्पिषा ।
आस्तिके भोजयेद्राजन्दद्याच्चैव गुडौदनम् ।
अपूपैश्चैव पूपैश्च मोदकैश्च समन्वितम् ॥
सभापर्वणि राजेन्द्र हविष्यं भोजयेद्द्विजान् ।
आरण्यके मूलफलैस्तर्पयेत द्विजोत्तमान् ॥ [ 115 ]
आरण्यपर्वमासाद्य जलकुम्भं प्रदापयेत् ।
तर्पणानि च मुख्यानि वन्यमूलफलानि च ।
सर्वकामगुणोपेतं विप्रेभ्योऽन्नं प्रदापयेत् ॥
विराटपर्वणि तथा वासांसि विविधानि च ॥

---

18** वस्त्रं चैव विचित्रं च गन्धं चैव विशेषत ।
देववत्पूजयेत्तं तु विष्णुलोकमवाप्नुयात् ॥

[ $G_3$ om line 1 —( L 1 ) $D_6$ ( *inf lin* as above ) गाश्चैव च ( for गन्धं चैव ) $D_4$ गन्धश्चैव तथैव च ( for $^b$ ) —( L 2 ) $K_3$ $D_2$ भक्त्या, $K_4$ $B_3$ तं च, Ñ$_2$ $V_3$ $D_{1\ 5}$ तस्य ( for न तु ) $B_2$ देववत्पूजयित्वा तं ( for $^a$ ) ]

While $K_2$ ins after line 102

19** दपती परिधानं च देय स्वर्णं तथा वसु ॥
पितर· पितृलोकस्था जल्पन्ति बहुशो वच ।
कोऽपि अस्मत्कुले भूयाद्धरिवंश शृणोति य ।
नूनं वै तारितास्तेन तस्य तुष्टा वरप्रदा ॥
श्रुते तु हरिवशे वै ददाम पुत्रसततिम् ।
पुत्रवान्स भवेन्नून दश जन्मानि पञ्च च ॥
पुत्रान्पवित्रानाप्नोति यज्ञकर्मकरानपि ।
वैष्णवान्विष्णुभक्ताश्च द्विजभक्तांस्तथैव च ॥
हरिवंशस्य वै श्रोता पुनात्यासप्तमं कुलम् ॥

— Before line 103, $K_2$ ins वैशंपायन उवाच —( L 103 ) $V_1$ $B_2$ Dn $D_{s1}$ $D_{1\ 4-6}$ भारते ( for °त ) —( L 104 ) $K_3$ $D_6$ विप्रेन्द्र ( for विप्रेभ्यो ) $G_3$ वाचकेभ्यश्च विप्रेभ्यो, $G_4$ वाच्यमानेषु विप्रेषु ( for $^a$ ) $K_2$ देयं भोज्यमसंशयम् ( for $^b$ ) — $K_2$ om. lines 105-107 —( L 105 ) Ñ$_2$ $B_1$ Dn $D_5$ सत्यं ( for सत्त्वं ) $T_{1\ 2}$ $G_{1\ 5}$ $M_{2\ 4}$ साम्यं च ( for माहात्म्यं ) —( L 106 ) $V_{1\ 3}$ $D_{s1}$ $D_{3-5,\ 6}$ धर्मवृत्तिं, $D_2$ धर्मवृत्त, $D_4$ ( marg as obove ) धर्मं व्युष्टं, $T_1$ $G_{1\ 3\ 5}$ $M_4$ धर्मवृद्धिं, $T_2$ धर्ममर्थं ( for धर्मवृत्तिं ) Ś$_1$ विशेषत., $B_3$ तथैव च, $G_3$ नरर्षभ ( for नराधिप ) —( L 107 ) $V_3$ Poona ed वाच्यं ( for वाच्य ) $T_2$ द्विजाश्चैव; $G_1$ द्विजाच्चैव; $G_5$ $M_{2\ 4}$ द्विजैश्चैव ( for द्विजानादौ ) $T_1$ स्वस्ति वाच्य द्विजैश्चैव, $G_3$ स्वस्तिं वाच्य द्विजान्साधून् ( for $^a$ ) $B_2$ Ds कार्ये ( for कार्यं ) Ñ$_2$ Dn $G_3$ प्रवर्तयेत्, $T_2$ $G_4$ $M_2$ °र्तनम् ( for °र्तते ) Ś$_1$ $D_6$ तत ( $D_6$ स्वस्ति ) कार्यं प्रवर्तयेत्, $T_1$ $G_{1\ 5}$ $M_4$ ततः कार्यप्रवर्तनम् ( for $^b$ ). —( L 108 ) $K_2$ समासे हरिवंशे तु ( for $^a$ ) Ś$_1$ $B_3$ Ds पूजयेत् ( for तर्प° ) — For line 109, K Ñ$_2$ $V_{1\ 3}$ B D subst

20** आदौ तु वाचकं चैव वस्त्रगन्धसमन्वितम् ॥
[ $D_3$ वस्तु- ( for वस्त्र- ) ]

While $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ ins after line 109

21** पौलोमे भरतश्रेष्ठ गन्धमाल्योज्ज्वलान्द्विजान् ।

— $M_2$ om lines 110-112 —( L 110 ) $V_1$ विप्रान् ( for राजन् ) — Dn Bom Poona eds मधुपायससंयुतम् ( for $^b$ ). —( L 111 ) Ś$_1$ -फलं राजन्, $K_3$ -फलं प्राय, $D_3$ -फलं प्राप्य ( for -फलप्रायं ) $T_1$ $G_{1\ 5}$ पयसा ( for पायसं ) —( L. 112 ) $K_2$ आस्तिक्याद्, $D_4$ G(ed.) °कान् ( for °के ). $D_3$ भोजन च द्विजेन्द्राय ( for $^a$ ) $D_{1,\ 5}$ दत्त्वा चैव ( for दद्याच्चैव ) Ñ$_2$ गुडोदकम्, $T_1$ $G_3$ गुणोदनम् ( for गुडौ° ) $K_3$ मधुपायसमुत्तमम् ( for $^b$ ) — After line 112, $T_{1\ 2}$ $G_{1,\ 3-5}$ $M_4$ ins..

22** तत· सर्वगुणोपेतमन्नं सभवपर्वणि ।

— $M_2$ om lines 113-114 —( L 113 ) Ś$_1$ [अ]पि सिद्धैश्, $D_6$ [ए]व सूपैश् ( for [ए]व पूपैश् ) $D_4$ शर्करादुग्धसंयुक्तं, $T_{1\ 2}$ $G_{1\ 3-5}$ $M_4$ फलैश्च पुष्पैश्च तथा ( for $^a$ ) $V_1$ मोदक, $D_4$ अपूपैश् ( for मोदकैश् ) — $K_2$ om lines 114–116 —( L 115 ) $T_{1\ 2}$ $G_{1\ 3\ 5}$ $M_{2\ 4}$ अरण्ये फलमूलैश्च ( for $^a$ ) $K_3$ तर्पयेच्च द्विजोत्तम, $T_{1\ 2}$ $G_{1,\ 5}$ $M_{2,\ 4}$ तर्पणं कारयेद्बुध ( $T_2$ $G_1$ $M_4$ °द्बुधान्, $G_5$ [ *sup lin* ] °द्विज ) ( for $^b$ ). —( L 116 ) $K_{1\ 4}$ Ñ$_2$ $V_3$ $B_2$ $D_{1\ 2,\ 5}$ अरणी ( for आरण्य- ). Ś$_1$ $V_1$ $B_3$ Ds आरण्यपर्वं चासाद्य, $B_1$ Dn $D_6$ अरणीपर्वं आ°; $D_6$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ अरणी( $T_2$ $G_4$ $M_4$ आरण्य )पर्वणि तथा ( for $^a$ ) Ś$_1$ $K_1$ B Dn Ds $D_{3\ 4\ 6}$ $G_4$ -कुम्भान् ( for -कुम्भं ) — G(ed ) om line 117 —( L 117 ) $K_{1\ 3}$ $D_4$ वन-, Ñ$_2$ रम्य- ( for वन्य- ) Ś$_1$ यज्ञमूलफलं तथा ( for $^b$ ). —( L 118 ) $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ अन्नं दद्याद्द्विजातिषु ( for $^b$ ). —( L 119 ) $T_{1,\ 2}$ $G_{1\ 3-5}$ $M_{3\ 4}$ वस्त्राणि ( for वासांसि ). — After line 119, $D_6$ $T_{1\ 2}$ $G_{1,\ 3-5}$ $M_{2,\ 4}$ ins..

उद्योगे भरतश्रेष्ठ सर्वकामगुणान्वितम् । [ 120 ]
भोजनं भोजयेद्विप्रान्गन्धमाल्यैरलंकृतान् ॥
भीष्मपर्वणि राजेन्द्र दत्त्वा यानमनुत्तमम् ।
ततः सर्वगुणोपेतमन्नं दद्यात्सुसंस्कृतम् ॥
द्रोणपर्वणि विप्रेभ्यो भोजनं परमार्चितम् ।
शराश्च देया राजेन्द्र चापान्यसिवरास्तथा ॥ [ 125 ]
कर्णपर्वण्यपि तथा भोजनं सार्वकामिकम् ।
शल्यपर्वणि राजेन्द्र मोदकैः सगुडौदनैः ॥
अपूपैस्तर्पणैश्चैव सर्वमन्नं प्रदापयेत् ॥
गदापर्वण्यपि तथा मुद्गमिश्रं प्रदापयेत् ॥
स्त्रीपर्वणि तथा रत्नैस्तर्पयेत द्विजोत्तमान् । [ 130 ]
घृतौदनं पुरस्ताच्च ऐषीके दापयेत्पुनः ।
ततः सर्वगुणोपेतमन्नं दद्यात्सुसंस्कृतम् ॥
शान्तिपर्वण्यपि गते हविष्यं भोजयेद्विजान् ॥
आश्वमेधिकमासाद्य भोजनं सार्वकामिकम् ।
तथाश्रमनिवासे तु हविष्यं भोजयेद्विजान् ॥ [ 135 ]
मौसले सार्वगुणिकं गन्धमाल्यानुलेपनम् ।
महाप्रस्थानिके तद्वत्सर्वकामगुणान्वितम् ॥

---

23** कांस्योपदोहना गाश्च कारणार्थं प्रदापयेत् ॥
— ( L 120 ) Ś1 D3 -गुणान्विते, D6 -समन्वितम् ( for -गुणा° ). — For line 120, K2 subst

24** सुवर्णं च तथा दद्यादुद्योगे च श्रुते तथा ।
— K2 om. line 121 — ( L 121 ) B3 T1 M2 4 भोजयेद्भोजनं विप्रान्, T2 G1 भोजने भोजने विप्रान् ( for $^a$ ) V1 अलकृत., D1 5 °कृतम्, T1 G1 5 M2 4 विभूषितान्, G4 विभूषिता. ( for अलंकृतान् ) T2 गन्धपूर्वैर्विभूषितान् ( for $^b$ ) — ( L 122 ) K2 वै दद्याद् ( for राजेन्द्र ) D6 T1 G4 5 om ( hapl ) lines $122^b$–$125^a$. Ś1 B3 D3 पानम्, K3 दानम् ( for यानम् ) K2 अन्नं यानं च भारत, V1 दत्त्वा यानसमन्वितम्; D6 अपूपांश्च वरास्तथा; T2 G1 M2 4 दद्यात्पानीयमुत्तमम्, G3 दत्त्वा पानकमुत्तमम् ( for $^b$ ) — After line 122, K2 ins :

25** भोजनं चैव मृष्टान्नमष्टौ दानानि दापयेत् ॥
— K2 D2 om lines 123-125 — ( L 124 ) K1 D4 भोजनं परमोचितम् ( for $^b$ ) — For line 124, T2 G1 M2 4 subst

26** सर्वकामगुणोपेत द्रोणपर्वणि भारत ।
— ( L 125 ) D4 ( marg as above ) यवाश् ( for शराश् ) K1 -धरस्; V3 D4 -वरस् ( for -वरास् ) — After line 125, D6 T1 2 G1, 3–5 M2, 4 ins

27** वर्मवस्त्राण्यलंकारान्पूजयेच्च द्विजोत्तमान् ।
[ D6 G4 चर्म- ( for वर्म- ) G3 [अ]लकारैर् ( for °कारान् ) G4 भोजयेच्च ( for पूज° ) ]
— ( L 126 ) K1 D4 ( marg as above ) [अ]पि सदा, K2 राजेन्द्र, D6 विविधं, T1 2 G1 3 5 M2, 4 [अ]पि गते ( for [अ]पि तथा ). K2 भोजन च सहेमकम्, G4 °येत्सार्वकालिकम् ( for $^b$ ). — After line 126, Ś1 K1 3 4 Ñ2 V1 3 B1 2 D G3 ins :

28* विप्रेभ्यः संस्कृतं सम्यग्दद्यात्संयतमानसः ।
[ B2 D4 ( marg as above ) कवचं ( for संस्कृत ) D3 प्रार्थित-, G3 सस्कृत- ( for सयत- ) ]
— B3 om line 127 — ( L 127 ) T2 G1 लड्डुकै, M2 4 मण्डकै ( for मोदकै ) D3 G4 सगुडौदकै ( for °डौदनै ) T1 G5 मण्डकै. सगुणोदनै ( for $^b$ ) — ( L 128 ) V3 T1 2 G1 3–5 M2 4 सापूपैश् ( for अ° ) K1 5 D5 सर्पिर्भिश्, B1 तर्पयेच्, Dn2 तर्प्यते, D2 सर्पिषा ( for तर्पणैश् ) V1 सापूपैस्तर्पणाद्यैश्च ( for $^a$ ) T1 2 G2 3 5 M2 4 युक्तम् ( for सर्वम् ) K1 D4 रत्नं ( for अन्नं ) K2 शक्त्या दानानि दापयेत् ( for $^b$ ) — K1 D4 G4 om line 129 — ( L 129 ) K2 मधुमिश्रं तथा वसु ( for $^b$ ) — For line 129, T1 2 G1 3–5 M2 4 subst :

29** सौप्तिके पर्वणि तथा भोजन सार्वकामिकम् ॥
— ( L 130 ) V1 स्त्रीपर्वण्यपि रत्नैश्च ( for $^a$ ) T1 2 G1, 3–5 M2 4 तर्पयित्वा ( for °येत ) Ś1 द्विजान्नर· ( for द्विजोत्तमान् ) K1 D4 रत्नैस्तर्पयते द्विजान्, K2 रत्नैश्च तर्पयेद्विजान्, Ñ2 V3 अन्नै ( V3 रत्नै. ) संतर्पयेद्विजान्, B2 तर्पयेद्विविधान्द्विजान्, D6 रत्नैस्तु तर्पयेद्विजान् ( for $^b$ ) —T1 G3–5 om line 131 — ( L 131 ) Ś1 नर, B2 T2 G2 4 बुधः ( for पुन· ) K3 ऐषीके स्वर्णमेव च ( for $^b$ ) — K2 om line 132 — ( L 132 ) V3 -गुणोत्पन्नम् ( for °पेतम् ) K3 दत्त्वा ( for दद्यात् ). — ( L 133 ) Ś1 B1 3 Ds D1 6 T1 G1 5 तथा ( for गते ) Ś1 कृसरं ( for हविष्यं ) K2 हविष्यं भोजनं वसु; G3 °ष्यं पायसान्वितम् ( for $^b$ ) — After line 133, T2 G1 M2 4 ins

30** अनुशासनिके राजन्मृष्टान्नं भोजयेद्विजान् ।
[ M2 4 पायसं ( for मृष्टान्न ) ].

— ( L 134 ) K2 आश्वमेधिके सुवर्णं वै ( hypermetric ) ( for $^a$ ) K2 om lines $134^b$–$135^a$ — ( L 135 ) D4 -निवासेषु ( for °से तु ) T1 2 G1 4 5 M2 4 तत आश्रमवासे तु ( for $^b$ ) — ( L 136 ) मौसले पर्वणि तथा ( for $^a$ ). K2 भोजनं सर्वकामिकम्, D6 गन्धमाल्यानुपनै ; T1, 2 G1, 3–5

स्वर्गपर्वण्यपि तथा हविष्यं भोजयेद्द्विजान् ॥
हरिवंशसमाप्तौ तु सहस्रं भोजयेद्द्विजान् ।
पारणे पारणे राजन्यथावद्भरतर्षभ ॥ [140]
समाप्य सर्वाः प्रयतः संहिताः शास्त्रकोविदः ।
शुभे देशे निवेश्याथ क्षौमवस्त्राभिसंवृताः ॥
शुक्लाम्बरधरः स्रग्वी शुचिर्भूत्वा स्वलंकृतः ।

---

$M_{2\,4}$ °ल्यपुरस्कृतम् ( for [b] ) — $K_{2-4}$ $D_{1\,2}$ om lines 137-139 — ( L 137 ) $Ś_1$ $V_{1\,3}$ $T_{1\,2}$ $G_{1\,3-5}$ $M_{2\,4}$ दद्यात् ( for तद्वत् ) $T_{1\,2}$ $G_{1\,4\,5}$ $M_{2\,4}$ पानीयं क्षीरमेव च, $G_3$ भोजन पायसान्वितम् ( for [b] ) — For line 137, $D_3$ subst

31** प्रस्थाने भरतश्रेष्ठ दद्याच्चोपानहौ शुभौ ।

While $D_5$ subst for line 137

32** प्रास्थानिके तथा पर्वे मिष्टान्न दापयेद्द्विजान् ॥

— For line 138, $T_{1\,2}$ $G_{1\,3-5}$ $M_{2\,4}$ subst

33** स्वर्गारोहणके दद्याद्भोजन सर्वकामिकम् ॥
[ $G_3$ भोजन पायसान्वितम् ( for [b] ) ]

— After line 138, $Ds_1$ ins

34** सुवर्णेन च सयुक्तं वाचकाय निवेदयेत् ॥

— For line 139, $Ś_1$ subst :

35** हरिवंशे तत पर्वे पायसं तत्र भोजनम् ।

While $D_6$ $T_{1\,3}$ $G_{1\,3\,5}$ $M_{2\,4}$ subst for line 139

36** हरिवंशे तु वै देयं यच्चास्य दयित गृहे ।

[ $D_6$ ( marg ) पायस तत्र भोजयेत्, $G_3$ यदन्यदधिक भवेत्, $M_{2\,4}$ यच्चान्यद्दयित गृहम् ( for [b] ) ]

—After line 139, K $Ñ_2$ $V_{1\,3}$ B Dn Ds $D_{1\,2\,4\,5}$ ins

37** हरिवंशे तथा पर्वे पायसं तत्र भोजयेत् ।

[ $K_1$ $D_4$ तथा सर्वं, $K_2$ तथा पुण्य, B Dn Ds पर्वणि च, $D_5$ तथा पर्व ( for तथा पर्वे ). $K_2$ पायसं खण्डमिश्रितम् ( for [b] ) ]

$D_4$ cont

38** निष्कमात्रसुवर्णेन पुस्तकं च प्रदापयेत् ।
श्रवणेन च दानेन पुत्रप्राप्तिर्न संशय ॥

On the other hand, Dn $Ds_2$ Bom. Poona Cal. eds G(ed) ins after line 139

39** गामेकां निष्कसंयुक्तां ब्राह्मणाय निवेदयेत् ।
तदर्धेनापि दातव्या दरिद्रेणापि पार्थिव ॥
प्रतिपर्वसमाप्तौ तु पुस्तकं वै विचक्षण ।
सुवर्णेन च संयुक्तं वाचकाय निवेदयेत् ॥
श्लोकं वा श्लोकपाद वा अक्षरं वा नृपात्मज । [5]
शृणुयादेकचित्तस्तु स विष्णुदयितो भवेत् ॥
व्यासं चैव सपत्नीकं पूजयेच्च यथाविधि ।
लक्ष्मीनारायण देवं पूजितं तच्च पूजयेत् ॥
वाचक पूजयेद्यस्तु भूमिवस्त्रसुधेनुभि ।
विष्णु सपूजितस्तेन स साक्षाद्देवकीसुत ॥

[ – After line 2, $Ds_2$ ins

39A** लक्ष्मीनारायणौ पूज्यौ गन्धपुष्पाद्यलंकृतौ ॥
उमामहेश्वर चैव तदग्रे स्थापयेत्सुधीः ।
पुस्तक पूजयित्वा तु वस्त्रगन्धाद्यलंकृतम् ।
श्रवण हरिवंशस्य कर्तव्य च यथाविधि ॥
वाचके हेमकेयूर कुण्डलाभरणादिकम् । [5]
उमामहेश्वर चैव दंपत्योश्च यथाविधि ॥
पुस्तक हरिवंशस्य वाचकाय प्रदापयेत् ॥
जुहुयाच्च दशांशेन तिलमाज्यपरिप्लुतैः ॥
एकादश वर्णनिष्का प्रदातव्या च दक्षिणा ॥ ]

— $K_2$ om line 140 — ( L 140 ) $T_{1\,2}$ $G_{1\,3-5}$ $M_{2\,4}$ पारिते ( for the second पारणे ) $T_{1\,2}$ $G_{1\,5}$ यथान्यत्पुरुषर्षभ ( for [b] ) — ( L 141 ) $Ś_1$ सर्वां ( for सर्वाः ) $K_2$ श्रुत्वा च हरिवंशं वै, $T_{1\,2}$ $G_{1\,3-5}$ $M_{2\,4}$ समापयित्वा सवृत ( for [a] ) $Ś_1$ सहिता ( for °ताः ) $T_{1\,2}$ $G_{1\,3-5}$ $M_{2\,4}$ सर्वामेव तु संहिताम् ( for [b] ) — $K_2$ om line 142 — ( L 142 ) $D_5$ दिने ( for देशे ) $Ś_1$ $K_1$ $Ñ_2$ $V_3$ $B_{2\,3}$ $Ds_2$ $D_{4\,6}$ संवृत, $K_{3\,4}$ $D_{1\,2\,5}$ -शोभिता ( for संवृता. ) $D_3$ क्षौमवस्त्रादिसंवृत ; $T_{1\,2}$ $G_{1\,3-5}$ $M_{2\,4}$ क्षौमवस्त्रेण संवृत ( for [b] ) — ( L 143 ) Dn Bom. Poona eds श्रीमान् ( for स्रग्वी ) $K_2$ प्रिया सह ( sic ) ( for स्वलंकृतः ) — After line 143, $K_2$ ins

40** पुस्तकं प्रयत पूज्य स्वर्णरत्नैर्दुकूलकैः ।
प्रार्थयेत ततो नूनं सर्वकामान्यथेप्सितान् ।
श्रीफलार्घ्यं कराभ्या च गृहीत्वा तत्र दंपती ।
( अथ प्रार्थना । )
ॐ ब्रह्मन्विष्णो महेशान पुत्रान्देहि ममानघान् ।
सावित्रीसहितो ब्रह्मल्लक्ष्मीसहित केशव ॥ [5]
पार्वतीसहितः स्वामिञ्शिव पुत्रान्ददस्व नः ॥
पुत्रदानेन देवेश पुत्रवन्तं कुरुष्व माम् ।
( इति प्रार्थना । )
प्रदक्षिणां नमस्कारो हरौ पुस्तकमेव ।
जय देवाधिदेवेश लक्ष्मीवास नमोऽस्तु ते ।
जय त्वं जगता नाथ कामना मम पूरय ॥
यं यं चिन्तयते कामं तं तमाप्नोति निश्चितम् ॥
हरिवंश श्रुतो येन तस्य हस्तगतो जयः ॥
विष्णुरेव महायोगी योगेन स्तूयते हि यः ।
स्तूयते ब्रह्मसहितैर्ऋषिभिः शंकरेण च ।
स्तूयते सर्वदेवैश्च प्रसन्नबलपौरुषैः ॥

विकारपुरुषोऽव्यक्तो ह्यरूपी रूपमाश्रितः ।
चरत्यचिन्त्यः सर्वेषु गूढोऽग्निरिव दारुषु ॥ [ 615 ]
भूतभव्योद्भवो नाथः परमेष्ठी प्रजापतिः ।
प्रभुः सर्वस्य लोकस्य नाम चास्येति तत्त्वतः ॥
अपदात्तु पदो जातस्तस्मान्नारायणोऽभवत् ।
अव्यक्तो व्यक्तिमापन्नो ब्रह्मयोगेन कामतः ॥
ब्रह्मभावेन तं विद्धि स शब्दं लब्धवान्प्रभुः । [ 620 ]
प्रभवः सर्वस्य लोकस्य स्थावरस्य चरस्य च ॥
अहं त्विति स होवाच प्रजाः स्रक्ष्यामि भारत ।
प्रभवः सर्वभूतानां यस्य तन्तुरिमाः प्रजाः ॥
स्वभावाज्जायते सर्वं स्वभावाच्च तथाभवत् ।
अहंकारस्वभावाच्च स च सर्वमिदं जगत् ॥ [ 625 ]
सर्वव्यापी निरालम्बो अग्राह्योऽथ जयो ध्रुवः ।
एष ब्रह्ममयो ज्योतिर्ब्रह्मशब्देन शब्दितः ॥
अव्यक्तो व्यक्तिमापन्नः पञ्चभिः क्रतुलक्षणैः ।
धारयन्ब्रह्मणो व्यक्ति विविधं विततश्चरन् ॥

अथ मूर्तिं समाधाय स्वभावाद्ब्रह्मचोदितः । [ 630 ]
ससर्ज सलिलं ब्रह्मा येन सर्वमिदं ततम् ॥
वायुं पूर्वमथो दृष्ट्वा यो धातुर्धातृसत्तमः ।
धारणाद्धातृशब्दं च लभते लोकसंज्ञितम् ॥
तदेतद्वायुसंभूतं कृत्स्नं जगदभूत्पुरा ।
एतद्देवैरतिक्रान्तं पूर्वमेव सरस्वति ॥ [ 635 ]
पृथक्त्वं गमितं तोयं पृथिवीशब्दमिच्छता ।
घनत्वाच्च द्रवत्वाच्च निखिलेनोपलभ्यते ॥
फलत्वात्सीदमानाच्च सलिले सलिलोद्भवः ।
व्याजहार शुभां वाणीं समन्तात्पूरयन्निव ॥
ऊर्ध्वं वै स्थातुमिच्छामि संसीदाम्युद्धरस्व माम् । [640 ]
गम्भीरतोयविवरमूर्मिविक्षोभितान्तरम् ॥
तेजोमूर्तिधरा देवी सर्वभूतप्ररोहिणी ।
यथायोगेन संभूता सर्वत्र विषयैषिणी ॥
श्रुत्वा च गदितं तस्या गिरं तां च सुभाषिताम् ।
वराहरूपमास्थाय निपपात महार्णवे ॥ [ 645 ]

—( L 614 ) $D_3$ विकारे ( for °र- ) $Ds_2$ नित्यो ( for ऽव्यक्तो ). —( L 616 ) $D_3$ बीजं ( for नाथः ) $\tilde{N}_2$ $V_1$ Ds $D_3$ पितामहः ( for प्रजापतिः ) —( L 617 ) $D_5$ प्रभु स सर्वलोकस्य ( for $^a$ ) $D_3$ नास्तीति ; $G_{3\ 4}$ चान्वेति ( for चास्येति ) $K_{1\ 2}$ $D_4$ लोकत ( for तत्त्वत ) $K_3$ तमवाप्स्यति तत्त्ववित्, $D_1$ अवाप्स्यसि च तत्त्ववित्, $D_6$ ( marg ) स्थावरस्येति तत्त्वत· ( for $^b$ ) —( L 618 ) $B_3$ [अ]पद्गो ( for पदो ) $D_3$ अपां तु यत्पदे जातस्, $D_6$ ( marg ) अयन तु यतो जातस् ( for $^a$ ) $\tilde{N}_2$ $V_3$ $B_2$ $Dn_2$ $Ds_1$ $D_6$ भवान्, $D_{2\ 4}$ भवेत् ( for ऽभवत् ) —( L. 619 ) $V_3$ $B_3$ $D_6$ ( *inf lin.* ) कामदः ( for °त ) —( L. 620 ) $K_4$ Dn $D_{1\ 2}$ -भावे च ( for -भावेन ) —( L 621 ) $K_1$ $D_4$ भूतस्य ( for लोकस्य ) $K_{3\ 4}$ $V_3$ $B_{1\ 3}$ $D_{5\ 6}$ [इ]तरस्य ( for चरस्य ) —( L 623 ) $K_{1\ 2}$ $D_4$ लोकानां ( for -भूतानां ) —( L 624 ) $K_2$ विश्वं ( for सर्वं ) —( L. 625 ) $K_{1\ 2}$ -प्रभावाच्, $Ds_1$ -स्वभावश् ( for °वाच् ) $D_1$ अहकारश्च भावश्च ( for $^a$ ) $K_4$ $D_{2\ 4}$ ( *sup lin* ) $_{5\ 6}$ तस्य ( for स च ). —( L 626 ) $D_6$ निरालम्ब ( for °लम्बो ) $D_5$ अवग्राह्यो ( for अग्राह्योऽथ ). $D_5$ ह्यजो, $G_3$ [अ]जितो ( for जयो ) —( L. 627 ) $K_4$ $B_{2\ 3}$ $D_{3\ 6}$ ब्रह्ममय ( for °मयो ) —( L 628 ) $\tilde{N}_2$ कर्तृ- ( for क्रतु- ) —( L. 629 ) Cal ed ब्रह्मणा ( for °णो ) $K_3$ $D_1$ त्रिविध विततं परम्, Dn °धं चिन्तितं त्वरन्, $G_3$ अव्यक्तं विविधश्चरन्, $G_4$ विविक्त ब्रह्मणश्चरन् ( for $^b$ ). —( L 630 ) $D_5$ चाञ्चल्याद् ( for स्वभावाद् ) $K_{1.2}$ $G_3$ स्वभावब्रह्मवादिन· ( for $^b$ ) —( L 632 ) $K_{2\ 3}$ $D_6$ $G_3$ वायुपूर्वम् ; $K_4$ वायु सर्वम्, $D_{2\ 4}$ वायु· पूर्वम् ( for वायुं पूर्वम् ) $\tilde{N}_2$ धारणाद्, $V_3$ धातृत्वाद्, $D_6$ यो धातुं, $G_3$ यो वा तद् ( for यो धातुर् ) $K_3$ $D_1$ यावन्तं धातुसत्तम. ( $D_1$ °सभव· ); $K_4$ $D_1$( marg ) $_{2\ 5}$ यो धाता नृपसत्तम, $G_4$ यो धातुर्भ्रातृसत्तमम् ( for $^b$ ). —( L 633 ) $K_4$ $D_{3\ 5}$ Cal ed धातु- ( for धातृ- ) —( L 635 ) $D_5$ एभिर् ( for देवैर् ) $D_3$ एतद्ब्रदैरुपक्रान्त ( for $^a$ ). $V_3$ सर्वम् ( for पूर्वम् ) —( L 636 ) $D_{2.3.4}$ ( marg ) $_5$ पृथुत्वं ( for पृथक्त्वं ) —( L 637 ) $V_3$ -पद्यते ; $B_3$ -लक्ष्यते ( for -लभ्यते ) —( L 638 ) $D_6$ चलत्वात् ( for फल° ) $G_4$ स्यन्दमानाच् ( for सीद° ) $\tilde{N}_2$ सलिले सीदमाना च ( for $^a$ ) —( L 640 ) $K_{1\ 3\ 4}$ $B_2$ Dn $D_{1-5}$ ऊर्ध्वोऽहं ; $G_{3\ 4}$ ऊर्ध्वो वै ( for ऊर्ध्वं वै ) $V_3$ सीदामीति ( for संसीदामि ) —( L. 641 ) $K_2$ $V_1$ $B_{2\ 3}$ $D_{1\ 4-6}$ $G_4$ गम्भीरं ( for °र- ). $G_3$ Bom Poona eds G( ed ) गम्भीरे तोयविवरे ( for $^a$ ). $B_1$ $D_5$ मूर्तिसं( $D_5$ ऊर्मिवि )क्षोभिताम्बरम् ( for $^b$ ) —( L. 642 ) $V_1$ Dn $G_3$ ततो ( for तेजो- ) $K_{1\ 2}$ ततो मूर्तिधरां देवीं ( for $^a$ ) $D_2$ -मूर्ति- ( for -भूत- ) $K_{1-3}$ $D_{1\ 3.4}$ प्ररोहिणीम् ( for °हिणी ) —( L 643 ) $K_{1-3}$ $D_{1\ 3\ 4}$ संभूतां ( for °ता ) $K_{1\ 3}$ $Ds_1$ $D_{2\ 4}$ सर्वत्र विषयैषिणीम् ( for $^b$ ). —( L 645 ) K $\tilde{N}_2$ B Dn $D_{2-4}$ वाराहं ; Ds $D_{5.6}$ वाराह-

उद्धृत्य सोऽवनिं तोयात्कृत्वा कर्म सुदुष्करम् ।
समाधौ प्रलयं गत्वा प्रलीनो न च दृश्यते ॥
यत्तद्ब्रह्ममयं ज्योतिराकाशमिति शब्दितम् ।
तत्र ब्रह्मा समुद्भूतः सर्वभूतपितामहः ॥
अद्यापि मनसा धात्रा धार्यते ब्रह्मयोनिना । [ 650 ]
ज्ञानयोगेन सूक्ष्मेण भूतानां हितकाम्यया ॥
भित्त्वा तु पृथिवीमध्यमुपयाति समुद्भवम् ।
तपनस्तूर्ध्वमातिष्ठन्रश्मिभिः प्रदहन्निव ॥
तस्य मण्डलमध्यात्तु निःसृतं प्रतिमण्डलम् ।
स सनातनजो ब्रह्मा सौम्यं सोमत्वमन्वगात् ॥ [ 655 ]
सोममण्डलपर्यन्तात्पवनः समजायत ।
तदक्षरमयं ज्योतिस्तेजस्तेजोऽभिवर्धयन् ॥
स तु योगमयाज्ज्ञानात्स्वभावाद्ब्रह्मसंभवात् ।
सृजते पुरुषं दिव्यं ब्रह्मयोनिं सनातनम् ॥
द्रवं यत्सलिलं तस्य घनं यत्पृथिवी भवत् । [ 660 ]
छिद्रं तत्र तदाकाशं ज्योतिर्यच्चक्षुरेव तत् ॥

वायुना स्पन्दते चैव संघाताज्ज्योतिसंभवः ।
पुरुषात्पुरुषो भावः पञ्चभूतमयो महान् ॥
भूतात्मा वै स मे तस्मिंस्तस्मिन्देहः सनातनः ।
गुहायां निहितं ज्ञानं योगाद्यज्ञः सनातनः ॥ [ 665 ]
तपनस्यैव तद्रूपं योऽग्निर्वसति देहिनाम् ।
शरीरे नित्यशो युक्ते धातुभिः सह संगतः ॥
स्वभावात्क्षयमायाति स्वभावाद्भवमेति च ।
स्वभावाद्विन्दते शान्तिं स्वभावाच्च न विन्दति ॥
इन्द्रियैर्व्यतिमूढात्मा मोहितो ब्रह्मणः पदे । [ 670 ]
संभवं निधनं चैव कर्मभिः प्रतिपद्यते ॥
यावत्तद्ब्रह्मविषयं नोपयातीह ज्ञानतः ।
तावत्संसारमाप्नोति संभवांश्च पुनः पुनः ॥
इन्द्रियैर्व्यतिरिक्तो वै यदा भवति योगतः ।
तदा ब्रह्मत्वमापन्नः प्रलयाग्रे प्रतिष्ठति ॥ [ 675 ]
प्रतिषिद्धममुं लोकं ब्रह्मवांश्च भवत्युत ।
न च रागव्ययैर्याति न च सज्जति कर्हिचित् ॥

---

( for व° ) — ( L 646 ) Ñ2 V3 B1.3 Ds D6 जगतीं ( for सोऽवनिं ) Ñ2 B1 3 G3 4 स्वभावतः ( for सुदुष्करम् ). — ( L 648 ) Bom ed. एतद् ( for यत्तद् ) — ( L 650 ) D1 ध्यात्वा ( for धात्रा ) K3 Dn D2 5 सर्व- ( for ब्रह्म- ) K4 D3 G4 -योगिना ( for -योनिना ) Bom Poona eds G(ed ) धार्यते सर्वयोगिना ( for $^{b}$ ) — ( L 651 ) V1 लोकानां, Dn D5 प्रजानां ( for भूतानां ) — ( L 652 ) Ds1 त्वपयाति ( for उ° ) K4 V3 D2.3 समुद्भवान्, V1 °द्भवः, D1 °द्भवे ( for °द्भवम् ) — ( L 653 ) K2 संपतंस्, D4 स तपस् ( for तपनस् ) V1.3 B3 प्रहसन्, Dn स हसन् ( for प्रदहन् ) D2 अंशुभि स दहान्निव ( for $^{b}$ ) — ( L 654 ) K1 -मध्यस्थं, K4 D1.5 -मध्यं तु ( for -मध्यात्तु ) Dn सोम- ( for प्रति- ) — ( L 655 ) K D2 3 सौम्यः ( for सौम्यं ) G3 4 सौम्यं सौम्यत्वमासवान् ( for $^{b}$ ) — D2 om lines 656–658. — ( L 656 ) Ñ2 तपन°, D3 पावक° ( for पवन. ) — ( L 657 ) Ñ2 B3 ऽभिवर्धनम्, B1 Ds1 D6 G3 विवर्धनम् ( for ऽभिवर्धयन् ) Dn D4 तेजोभिरभिवर्धयन् ( for $^{b}$ ) — ( L 658 ) K1 2 स तु योगसमाज्ञानात्, D6 तत्तु योगमयं ज्ञानात् ( for $^{a}$ ) B1 2 G4 स्वभावाज्ज्योतिरुद्भवात्; D6 °ज्ज्योतिरेव तत्, G3 संभवाज्ज्योतिरुद्भवात् ( for $^{b}$ ) — ( L 659 ) D3 सोऽसृजत् ( for सृजते ) — ( L 660 ) K2 द्रावयन्, K4 D3 द्रवयन् ( for द्रवं यत् ), K1–3 B3 Ds1 D4 6 भवेत् ( for भवत् ) G4 घना यत्पृथिवी भवेत् ( for $^{b}$ ). — ( L 662 ) D5 वायुश्च स्कन्दते चैवं ( for $^{a}$ ) Ñ2 V1.3 संघातो ( for °ताज् ) K1 B3 D4 G4 ज्योतिरुद्भव ( for °संभव. ) B2 ( marg as above ) Ds D6 संघातो ज्योतिरुद्भवः ( for $^{b}$ ) — ( L. 663 ) Ñ2 V3 B1 3 D6 पौरुषो ( for पु° ). D3 भूय. ( for भाव. ) — ( L 664 ) D5 जीवात्मा ( for भूतात्मा ) V1 3 भवेत् ( for स मे ) K3 समं वसति भूतात्मा ( for $^{a}$ ) K1 देहे चैष, K2 D4 देहे तत्र, K3 4 Dn Ds2 D2 तस्मिन्देहे, Dn देहे देहे, D3 तस्मिन्देशे, D5 वसेद्देहे ( for तस्मिन्देहे ) Ñ2 V1 3 B2.3 D6 तस्मिन्देहे ( V1 °शे ) सनातने; G4 देहे देहे सनातने ( for $^{b}$ ) — ( L 666 ) G4 योगी ( for योऽग्निर् ) — ( L 667 ) Ñ2 V1 3 B2 G4 युक्तो, D6 भुङ्क्ते ( for युक्ते ) — ( L 668 ) D5 ( marg ) अज्ञानात् ( for स्वभावात् ) V1 क्षेमम् ( for क्षयम् ) K3 आप्नोति, D2 G4 आयान्ति ( for °ति ) K1 2 4 V1.3 B1 2 Dn D4 5 G3 4 भयमेति; D3 6 भवमेव ( for °मेति ) — ( L 669 ) K2 सर्वं ( for शान्ति ) — ( L 670 ) K1 3 4 D1 2 5 ह्यति-, B1 D1 G3 4 अति- ( for व्यति- ). K2 D4 -गूढात्मा ( for -मू° ), — D1 om lines 672–675 — ( L 672 ) B2 तत्त्वतः ( for ज्ञानत ) V3 B1 3 नोपजानाति तत्त्वतः, D6 यो यज्जानाति तत्त्वत, G3 4 नोपयाति हि जानतः ( for $^{b}$ ) — ( L 673 ) Ñ2 D2 G3.4 संभवं ( for °वांश्च ) — ( L 674 ) G3.4 यदि

आगतिं च गतिं चैव निधनं संभवं तथा ।
भूतेभ्यो वेत्ति सर्वज्ञः परां सिद्धिमुपागतः ॥
आत्मनो गतयश्चैव तथा विषयगोचरम् । [ 680 ]
पुरस्तात्कर्मनिर्वृत्तेः पदे ब्राह्मे प्रतिष्ठितः ॥
चित्तग्रन्थींश्च मनसा रुन्ध्यात्पूर्वाश्च यातनाः ।
भिद्यमानाः प्रलोभेन वायुभिन्नमिवार्णवम् ॥
पच्यते हृदयं लीनं परेभ्यो ज्ञानचक्षुषा ।
ब्रह्मप्रोक्तमिहात्मा वै विमुक्तो देहबन्धनात् ॥ [ 685 ]
सृजेदपि परं लोकं संहरेदपि विद्यया ।
तेजोमूर्तिरिवाविद्धमिह लोकं च संसृजेत् ॥
तिर्यग्योनौ गतांश्चैव कर्मभिर्निरयोपमैः ।
तान्यपि प्रतिमुच्येत ब्रह्मयुक्तेन चेतसा ॥
अक्षरं च क्षरं चैव योगकर्माति विद्यते । [ 690 ]
न क्षरं विद्यते तत्र यद्ब्रह्म कर्मभिर्ध्रुवम् ॥

Colophon

वैशंपायन उवाच ।
पृथिव्यां यत्कृतं छिद्रं तपनेन विवर्धता ।
तस्मिन्न्यस्तोऽथ मेनाकः स्वभावविहितोऽचलः ॥
पर्वभिः पर्वतत्वं च लभते नामसंज्ञितम् ।
अचलादचलत्वं च स्वभावान्मेरुरेव सः ॥ [ 695 ]
तस्य पृष्ठे सुविस्तीर्णे नगस्य सुमहर्द्धिमान् ।
तस्मिन्स पुरुषो व्यक्तो वसति ज्योतिसंभवः ।
विहितश्च स्वभावेन तेनैव परमात्मना ॥
यत्तद्ब्रह्ममयं तेजो निहितं शिरसोऽन्तरे ।
तस्य ज्योतिर्मयं रूपं दीप्तं पुरुषविग्रहम् ॥ [ 700 ]
वदनादभिनिष्क्रान्तं ज्वलन्तमिव तेजसा ।
चतुर्भिर्वदनैर्युक्तं चतुर्भिश्च भुजोत्तमैः ॥
वक्त्राद्ब्रह्म समुद्भूतं ब्रह्मा ब्राह्मणपुंगवः ।
तदेवैतन्महाभूतं पुनर्भावत्वमागतम् ॥
उद्धृता पृथिवी देवी पुरस्तात्सलिलाशया । [ 705 ]

---

मुक्तो ( for व्यतिरिक्तो ) — $D_5$ om lines 675-677 — ( L 675 ) $D_3$ प्रलयाग्नौ प्रतिष्ठते ( for $^b$ ) — ( L 676 ) $B_3$ प्रतिबुद्धम् ( for °षिद्धम् ) $\tilde{N}_2$ प्रतिबुद्धमर्थल्लोके ( for $^a$ ). Dn स्म ( for च ) $K_{1\,4}$ $D_1$ [अ]भवत्पुन ( for भवत्युत ) $D_3$ ब्रह्मवान्न लभेत्पुनः ( for $^b$ ) — ( L 677 ) $K_2$ $D_4$ रोगव्ययैर् $D_3$ योगी व्यय, $D_6$ रोगैर्व्ययं, $G_3$ रागैर्व्ययं, Bom ed राग-व्ययं ( for °व्ययैर् ) $K_4$ मज्जति ( for स° ) — ( L 676 ) $D_2$ आगतं च गतं चैव ( for $^a$ ) — $D_3$ om lines 681-761. — ( L 681 ) $G_3$ परस्तात् ( for पुर° ) $\tilde{N}_2$ $V_{1\,3}$ $B_{1\,3}$ पुर-स्तात्कर्मभिर्वृत्ते ( for $^a$ ) $K_{1\,2}$ Ds ब्रह्म, $K_{3\,4}$ Dn $D_2$ ब्रह्मा ( for ब्राह्मे ). $\tilde{N}_2$ $V_{1\,3}$ B $D_{5\,6}$ पदे ब्रह्म प्रतिष्ठितम्, $G_{3\,4}$ परे ब्रह्मणि विष्ठित. ( for $^b$ ) — ( L 682 ) $K_2$ $Dn_1$ Ds $D_1$ -ग्रन्थि च ( for -ग्रन्थीश्च ) $K_{2-4}$ $\tilde{N}_2$ $V_{1\,3}$ $B_{2\,3}$ $Ds_1$ $D_{1\,4}$ ऋद्ध्वा, Dn रुन्ध्यात्, $D_6$ $G_4$ रुध्वा ( for रुध्यात् ). $G_3$ रुध्वा पूर्वां च यातनाम् ( for $^b$ ) — ( L 683 ) $B_{1\,3}$ $D_6$ $G_3$ वायु-भिन्न इवार्णव. ( for $^b$ ) — ( L 684 ) $K_{1\,4}$ $D_6$ पश्यते ( for पच्यते ) $G_{3\,4}$ दृश्यते हृदय नीलं ( for $^a$ ). — ( L 685 ) $K_3$ ब्रह्मप्राप्तेर्, $V_1$ °णोक्तम् ( for °प्रोक्तम् ) $G_3$ ब्रह्मणोक्त इवात्मा वै ( for $^a$ ) — ( L 686 ) $V_3$ मायया ( for विद्यया ) — ( L 687 ) $D_6$ तेजोमूर्तिमदाविद्धम् ( for $^a$ ) — ( L 688 ) $B_{1\,3}$ $D_6$ $G_{3.4}$ गतानां च ( for गतांश्चैव ) $K_{3\,4}$ $V_{1\,3}$ $B_{2\,3}$ Dn $D_5$ $G_{3\,4}$ नियमोपमै ( for निरयो° ) — ( L 690 ) Cal. ed. क्षरैश् ( for क्षरं ) $K_4$ वर्तते ( for विद्यते ) $V_{1\,3}$ योगकर्माभि-पद्यते; B $D_6$ $G_{3\,4}$ °भिविन्दति; Dn $D_2$ °भिविद्यते, Cal. ed योगं कर्मभिर्विन्दति ( for $^b$ ) — ( L 691 ) $G_4$ अक्षरं ( for न क्षरं ) $K_{1\,2}$ $D_{1\,4}$ तत्र यद्ब्रह्म सततं ( for $^a$ ). $K_{1,2}$ $D_{1,4}$ प्राप्तव्यं ( for यद्ब्रह्म )

Colophon om. in $D_3$ — *Mention of the Epic* $Ds_2$ $D_5$ — *Mention of Khila* · $K_1$ $V_{1\,3}$ B Ds $D_1$ — *Sub-parvan* K $V_1$ B Ds $D_{1\,2\,5.6}$ पौष्करम्, $V_3$ Dn $D_4$ पौ( Dn पु )ष्करप्रादुर्भावः — *Adhy no* $K_3$ $D_1$ 90; $V_3$ 202, Dn 10, $Ds_2$ 201, $D_4$ 197, $G_3$ 343, $G_4$ 341

( L 692 ) $G_3$ विवर्धितम् ( for °र्धता ) — ( L 693 ) $V_3$ आस्ते, $D_1$ पार्श्वे ( for न्यस्तो ) — ( L. 695 ) $D_2$ प्रभा-वान् ( for स्व° ) — ( L 696 ) $G_4$ स्थानं तस्य ( for नगस्य सु- ) $Ds_2$ -महर्द्धिमत् ( for °मान् ) $D_5$ नगरस्य महर्द्धिमत्; $G_3$ स्थानं तस्य महर्द्धिमत् ( for $^b$ ) — ( L 697 ) $K_2$ $D_{1.4}$ वसते; $V_1$ रमति ( for वसति ) B Ds $D_6$ $G_{3\,4}$ वसति ज्योति-रुद्भव ( for $^b$ ) — ( L 699 ) $K_4$ ज्योतिर् ( for तेजो ). $K_1$ $\tilde{N}_2$ $D_{1\,4}$ विहितं ( for नि° ) $K_2$ विहितं शिरसोत्तरे, $D_2$ निहितं शिखरोत्तरे ( for $^b$ ) — ( L 700 ) $Ds_1$ तस्य ज्योति-रूपमयं ( for $^a$ ) — ( L. 702 ) Dn द्विजोत्तमैः ( for भु° ). — ( L 703 ) $\tilde{N}_2$ om line 703$^a$. $K_{3\,4}$ $V_1$ $B_{2.3}$ Dn $D_{2\,5}$ $G_4$ ब्रह्म वक्त्र, $D_2$ ( marg ) व्यक्तं ब्रह्म; $V_3$ ब्रह्मवक्त्र- ( for वक्त्राद्ब्रह्म ) $B_2$ ( marg ) पद्मगर्भसमुद्भूतो ( for $^a$ ). — ( L. 704 ) $G_{3\,4}$ एतच्च ( for एवैतन् ). $D_5$ तदेव तन्म-हद्भूतं ( for $^a$ ) $G_3$ भूतत्वम् ( for भाव° ). — ( L. 705 )

ब्रह्मत्वं ब्रह्मणः स्थानादलोको लोकतां गतः ॥
पदसंधौ ब्रह्मलोकं शृङ्गं मेरोस्तदाभवत् ।
उच्छ्रितं योजनशतं सहस्रशतमेव च ॥
एवमेव च विस्तारं चतुर्भिर्गुणितं गुणैः ।
अथ वा नैव संख्यातुं शक्यं भूतेन केनचित् । [ 710 ]
समासहस्रैर्बहुभिरपि दिव्येन चेतसा ॥
चतुर्भिः पार्श्वविस्तारैः शिलाभिरभिसंवृतैः ।
नगस्य यस्य राजेन्द्र विस्तारैः शतयोजनैः ॥
कोटिकोटीशतगुणैर्गुणितं ब्रह्मवादिभिः ।
योगयुक्तैः सदा सिद्धैर्नित्यं ब्रह्मपरायणैः ॥ [ 715 ]
मरुद्भिः सह देवेन्द्रै रुद्रैर्वसुभिरेव च ।
आदित्यैर्विश्वसहितै ररक्ष वसुधाधिपान् ॥
ररक्ष पृथिवीं चैव भगवान्विष्णुना सह ।
विवस्वद्वरुणाभ्यां च संघातं गमितां नृप ॥
तेन ब्राह्मेण वपुषा ब्रह्मप्राप्तेन भारत । [ 720 ]
यत्तद्विष्णुमयं तेजः सर्वत्र समतां गतम् ॥
यत्तद्ब्रह्मेति वै प्रोक्तं ब्राह्मणैर्वेदपारगैः ।
नियमैर्बहुभिः प्राप्तैः सत्यव्रतपरायणैः ॥
एवमेते त्रयो लोका ब्राह्मेऽहनि समाहिताः ।
अहनि ब्रह्म चाव्यक्तं व्यक्तं प्राणे प्रतिष्ठितम् ॥ [ 725 ]
ब्रह्मणो नियतं कर्म प्रभावेन प्रचोदितम् ।
प्रवर्तमानं भावेन शश्वदच्छलवादिनाम् ॥
एतद्धितमिति प्रोक्तं ब्राह्मणैर्वेदपारगैः ।
यदेकं ब्रह्म निर्दिष्टं विश्वतां गमितं पदम् ॥
बहुत्वाद्धि प्रभावानां विश्वशब्दः प्रयुज्यते । [ 730 ]
ब्राह्मणैर्ब्रह्मभूतात्मा सत्यव्रतपरायणैः ॥
विश्वरूपं मनोरूपं बुद्धिरूपत्वमानयन् ।
एवं द्वंद्वं स भगवान्प्रथमं मिथुनं सृजत् ॥
स एव भगवान्विश्वो देव्या सह सनातनः ।
विधाय विपुलान्भोगान्ब्रह्मा चरति सानुगः ॥ [ 735 ]
स एष भगवान्ब्रह्मा नित्यं ब्रह्मविदां वरः ।
निर्वाणपथगामीनामकिंचनपथैषिणाम् ॥

---

$Ds_2$ उद्धृता प्रथमं देवीं ( for $^a$ ) $K_1$ $Ñ_2$ $V_{1\,3}$ $D_4$ सलिलाश्रया ( for °शया ) — After line 705, Ds ins

45** पञ्चाशत्कोटिविस्तीर्णा सेह पूर्वा महीपते ।
सहैवाण्डकटाहेन सशैलवनकानना ॥

— ( L 706 ) $G_4$ अलोके ( for °को ). $D_6$ अलोके लोकतां गतम् ( for $^b$ ) — ( L 707 ) $K_{3,4}$ $D_5$ यस्य संधौ ( for पदसंधौ ) $Ñ_2$ $B_{1\,3}$ $D_6$ -लोके ; $D_1$ -लोको ( for -लोकं ) $K_3$ यदासिद्धौ ब्रह्मलोके ( for $^a$ ) — ( L 708 ) $K_4$ $B_2$ $D_{1,6}$ $G_4$ सहस्रं ( for °स्र- ) — ( L 709 ) $Dn_2$ विस्तारै., Ds °रे ( for °रं ) $K_{1\,2}$ $D_{1\,4}$ विस्तारं तस्य तु पुनश् ( for $^a$ ) — ( L 710 ) Dn संख्यान ( for °तु ) — ( L 711 ) $Ñ_2$ Dn तेजसा, $B_2$ Ds $G_{3\,4}$ चक्षुषा ( for चेतसा ) — ( L 712 ) $B_{1\,3}$ Ds $D_6$ -संवृत ( for °तै. ) $Ñ_2$ $V_{1\,3}$ शिरोभिरभिसंवृत ( for $^b$ ) — ( L 713 ) $D_1$ जगतो ( for नगस्य ) — ( L 714 ) $G_{3\,4}$ कोटीशतगुणैर्दिव्यैर् ( for $^a$ ) — ( L 715 ) $K_2$ शुद्धैर् ( for सि° ) $V_1$ धर्म-, $B_2$ वेद- ( for ब्रह्म- ) — $V_3$ om lines 716–722 — ( L 717 ) वसु- ( for विश्व- ) $K_3$ $V_1$ ररक्षुर् ( for °क्ष ) $D_1$ चाक्षुषैर्वसुधाधिपै, $D_2$ ररक्ष वसुधाधिप ( for $^b$ ) — ( L 718 ) $K_4$ $B_3$ जिष्णुना, $B_1$ आत्मना ( for विष्णुना ) — ( L 719 ) $K_3$ धनेशवरुणाभ्यां च ( for $^a$ ) $Ñ_2$ $V_1$ $B_1$ Ds $D_2$ गमिता ( for °ता ) $K_4$ संघातं गमिता नृपाः ( for $^b$ ) — ( L. 721 ) $D_{1,5}$ ब्रह्ममयं ( for विष्णु° ) $D_1$ यद्यद्विष्णुमयं ज्योतिः ( for $^a$ ) $D_5$ सर्वत्र समुपागतम् ( for $^b$ ) — $K_2$ $D_4$ om lines 723–728. — ( L 723 ) $D_5$ ब्राह्मणैर्ब्रह्मभूतात्मा ( for $^a$ ) — $G_3$ om ( hapl ) lines 724–731 — ( L 724 ) Cal ed प्रतिष्ठिताः ( for समाहिताः ) — ( L 725 ) $K_1$ घ्राणे, $D_2$ $G_4$ प्राणैः ( for प्राणे ) — $G_4$ om line 726 — ( L 726 ) $B_3$ निहितं ( for नियतं ) Ds $D_{5\,6}$ स्वभावेन ( for प्र° ). $K_1$ प्रनोदितः ; $K_3$ $D_1$ प्रणोदितम्, $K_4$ प्रचोदित. ( for °तम् ) — ( L 728 ) $K_3$ $D_1$ दिनम्, $B_1$ छिद्रम् ( for हितम् ). — ( L 729 ) $K_3$ $D_2$ यदेकं ब्राह्मणपदं, $K_4$ $Ñ_2$ $V_{1\,3}$ B Dn Ds $D_{5\,6}$ °कं ब्रह्मण पादं, $G_4$ °कं ब्रह्मणि पदम् ( for $^a$ ) $K_1$ विश्वगं, $K_{3\,4}$ $B_2$ $D_2$ विश्वत्वं, Dn $D_5$ दिष्टत्व, $D_1$ यदिष्ट ( for विश्वतां ). $Ñ_2$ $V_{1\,3}$ $B_{1\,2}$ Ds $D_6$ विश्वत्व ( Ds $D_6$ °शुद्धं ) गमितं परम् ( for $^b$ ) — For line 729, $D_6$ ( marg ) subst

46** यत्तद्विष्णुमयं तेजो विश्वत्वं गमितं परम् ।

— ( L 730 ) $V_3$ $B_3$ $D_6$ ( marg as above ) हि प्रभावानां ; $D_2$ विप्रभावाद्यं ( for °नां ) $K_{1\,2}$ $D_4$ प्रमुच्यते ( for प्रयुज्यते ). — ( L 731 ) $V_1$ विश्व- ( for ब्रह्म- ) $B_1$ -भूतानां ( for °त्मा ). — ( L 732 ) Dn बुद्धिरूपं च मानयन् ( for $^b$ ). — ( L. 733 ) $Ds_2$ Cal ed मिथुने ( for °न ) — ( L 734 ) $V_1$ $Ds_2$ $D_1$ विष्णु ( for विश्वो ) $G_3$ देवै. ( for देव्या ) — ( L. 735 ) $K_4$ विहाय ( for विधाय ) $K_3$ सानुजः ; $K_4$ नित्यशः

सोमात्सोमः समुत्पन्नो धारासलिलविग्रहात् ।
यथाभिषिक्तो भूतानां सेनापत्ये महेश्वरः ॥
अभिषिच्य च भूतेशं कृत्वा कर्म स्वभावत । [ 740 ]
नदति स्म तदा नादं तेन सा ह्युच्यते नदी ॥
सा ब्रह्मलोकं संभाव्यमभिभूय सहस्रधा ।
गां गता गगनाद्देवी सप्तधा प्रससार ह ॥
सहस्रधा च राजेन्द्र बहुधा च पुनः पुनः ।
इमं लोकममुं चैव भावयन्क्षरसंभवम् ॥ [ 745 ]
ततो भूतानि रोहन्ति महाभूतफलानि च ।
ततः सर्वे क्रियारम्भाः प्रावर्तन्त मनीषिणाम् ॥
चतुर्भिर्वदनैस्तस्य मुखपद्माद्विनिःसृता ।
तदाक्षरमयी सिद्धिरीशत्वं समुपागता ॥
तस्य ज्ञानमयं पुण्यं चतुष्पादं सनातनम् । [ 750 ]
पतित्वेनाभवद्देवो ब्रह्मा चात्र पितामहः ॥
पादा धर्मस्य चत्वारो यैरिदं धार्यते जगत् ।
ब्रह्मचर्येण व्यक्तेन गृहस्थेन च पावने ॥
गुरुभावेन वाक्येन गुह्यमार्गानुगामिना ।
इत्येते धर्मपादाः स्युः स्वर्गहेतोः प्रचोदिताः ॥ [ 755 ]
न्यायाद्धर्मेण गुह्येन सोमो वर्धति मण्डले ।
ब्रह्मा सब्रह्मचरणा वेदा वर्तन्ति शाश्वताः ॥
गृहस्थानमिवाक्येन तृप्यन्ति पितरस्तदा ।
ऋषयोऽपि च धर्मेण नगस्य शिरसि स्थिताः ॥
नगस्य तस्य संपश्य मेरोः शिखरमुत्तमम् । [ 760 ]
पद्भ्यां संपीड्य वृषणावृषिभिस्तैर्विचार्यते ॥
ग्रीवां निगृह्य पृष्ठं च विनाम्य प्रहसन्निव ।
नाभिदेशे करौ न्यस्य सर्वशोऽङ्गानि संक्षिपन् ॥
मूर्ध्नि ब्रह्म समुत्क्षिप्य मनसा स पितामहः ।
असृजन्मनसा विष्णुं योगाद्योगेश्वरस्य च ॥ [ 765 ]
व्यतिरिक्तेन्द्रियो विष्णुर्बिम्बाद्बिम्बमिवोद्धृतः ।
तेजोमूर्तिधरो देवो नभसीन्दुरिवोदितः ॥
रराज ब्रह्मयोगेन सहस्रांशुरिवापरः ।
विराजन्नभसो मध्ये प्रभाभिरतुलं प्रभुः ॥
नोपलभ्यति मूढात्मा प्रत्यक्षं ब्रह्म शाश्वतम् । [ 770 ]
ललाटमध्ये तिष्ठन्तं द्विधाभूतं क्रियां प्रति ॥

---

( for सानुग ) — ( L 737 ) Ñ2 B D6 -गन्तृणाम् ( for -गामीना ) K1 2 D4 निर्वाणमगमन्तृणाम्, V1 2 Ds G3 4 °णपदगन्तृणाम्, Bom Poona eds G( ed ) °णभयगन्तृणाम् ( for $^a$ ) K5 G3 -पदैषिणाम् ( for पथै° ) — ( L 738 ) G3 सोमार्काग्नि ( for सोमात्सोमः ). — ( L 739 ) G3 4 देवाना ( for भूताना ) B3 Cal ed सैनापत्ये, Dn आधि° ( for सेना° ) G5 गुहो वर ( for महेश्वर ) — ( L 741 ) K3 G3 महानादं, K4 महानादांस् ( for तदा नादं ) K1 4 D4 सा क्षुभ्यते, Ds1 सा श्रूयते, D2 सत्युच्यते ( for सा ह्यु° ) — ( L 742 ) B1 2 Dn D2 G3 संभाव्य ( for °व्यम् ) — ( L 743 ) सा ( for गां ) — ( L 744 ) K1 Ñ2 V1 3 B1 3 Ds G3 4 सहस्रधारा राजेन्द्र ( for $^a$ ) Ñ2 V3 बहुधारा, V1 ब्रह्मधारा D1 वसुधा च ( for बहुधा च ) — ( L 745 ) K2 D4 भवाय क्षरसंभव ( for $^b$ ) — ( L. 747 ) Ñ2 फलारम्भा ( for क्रिया° ) Dn D1 2 6 G3 प्रवर्तन्ते महर्षिणाम् ( for $^b$ ). — ( L 748 ) K1 2 विनि सृतम् ( for °ता ) — ( L 749 ) Ds1 सिद्धिं ( for सिद्धिर् ) K3 D1 सत्यत्वं, D6 विंशत्वं ( for ई° ) — ( L 751 ) D6 [अ]नयद्देवं ( for [अ]भवद्देवो ) B1 D6 सर्वं चात्र, G3 4 ऊर्ध्वबाहु, Cal ed ब्रह्मा चापि ( for ब्रह्मा चात्र ) — ( L 753 ) K1 3 D2 4 धीमता, V3 पालने, B3 Ds1 G4 याचने ( G4 °ते ), D1 यावता, D6 पाल्यते ( for पावने ). — ( L. 754 ) K3 गुह्येनागमगामिना ( for $^b$ ) — ( L 755 ) D1 2 4. 5 प्रणोदिता ( for प्रचो° ) — K4 D1 om lines 756–757. — ( L 756 ) Ñ2 V1 G4 न्याय- ( for न्यायाद् ) V3 न्यायवर्त्मेन गुह्येन ( for $^a$ ) — ( L 757 ) B2 3 Dn D2 6 G3 ब्रह्मणो ब्रह्मचरणाद् ( for $^a$ ) G4 वर्धन्ति ( for वर्तन्ति ) V3 नित्यश, D5 निश्चला ( for शाश्वता ) — ( L 758 ) K1 Ñ2 Ds D6 ( *sup lin* as above ) G4 -याज्येन, D1 पातेन ( for -वाक्येन ) V3 गृहस्थेनाभियाज्येन ; B1 °स्थानपि वाक्येन, G3 °स्थानतियाज्येन ( for $^a$ ) — ( L 759 ) B1 2 D6 G3 शिखरे ( for शिरसि ) — ( L 760 ) K2 Cal ed सस्पृश्य, Ñ2 B Ds1 D5 ( marg ) 6 G3 4 संगम्य ( for संपश्य ). — ( L 761 ) K3 विचार्यं च, B D4 6 विधार्यते ( for विचा° ). — ( L. 762 ) G3 विनम्य ( for निगृह्य ) D2 विभाव्य, D6 विनम्य ( for विनाम्य ) — ( L 765 ) V1 3 विष्णुर् ( for विष्णुं ) D3 योगाद्योगेश्वर स्वयम् ( for $^b$ ) — ( L 766 ) K1 B1 3 Ds D4. 6 G3 4 [उ]त्थित ( for [उ]द्धृतः ) D1 5 विश्वाद्विश्वमिवोद्धृतः ( for $^b$ ) — ( L 767 ) V1 Cal ed [उ]त्थित ( for [उ]दितः ). — ( L 768 ) K1, 3 Ñ2 V1 3 B Ds D1 6 G3 -योगात्स, K2 -संयोगात्, D3 -योगाच्च, ( for -योगेन ) K4 [अ]ह्नि च ( for [अ]परः ) — ( L 769 ) G3 4 अमल- ( for अतुल ) K3 D1 प्रभाभिरतुलप्रभः ( for $^b$ ). — D1 om. lines

ज्योतिश्चक्षुषि संबद्धं बिम्बं भास्करसोमयोः ।
बुद्ध्यापूर्वं तु पश्यन्ति अध्यात्मविषये रताः ॥
ब्राह्मणा वेदविद्वांसः सत्यव्रतपरायणाः ।
नेतरे जातु पश्यन्ति अध्यात्मं नावबुध्यते ॥ [ 775 ]
हिंसायोगैरयोगात्मा सर्वप्राणधरैर्नृप ।
भूतयो भुवि भूतेशो मोहप्राप्तेन चेतसा ॥
कर्मभिः कुत्सितैरन्यैः सर्वप्राणवधैषिणाम् ।
नराणां योगमाधाय स्वेषु गात्रेषु भारत ॥
समाहितमना ब्रह्मा मोक्षप्राप्तेन हेतुना । [ 780 ]
चन्द्रमण्डलसंस्थानं ज्योतिस्तेजो महत्तदा ॥
प्रविश्य हृदयं क्षिप्रं गायत्र्या नयनान्तरे ।
गर्भस्य संभवो यश्च चतुर्धा पुरुषात्मकः ॥
ब्रह्मतेजोमयोऽव्यक्तः शाश्वतोऽथ ध्रुवोऽव्ययः ।
न चेन्द्रियगुणैर्युक्तो युक्तस्तेजोगुणेन च ॥ [ 785 ]
चन्द्रांशुविमलप्रख्यो भ्राजिष्णुर्ब्रह्मसंस्थितः ।
नेत्राभ्यां जनयद्देवो ऋग्वेदं यजुषा सह ॥
सामवेदं च जिह्वाग्रादथर्वाणं च मूर्धतः ।
जातमात्रास्तु ते वेदाः क्षेत्रं विन्दन्ति तत्त्वतः ॥
तेन वेदत्वमापन्ना यस्माद्विन्दन्ति तत्पदम् । [ 790 ]
ते सृजन्ति तदा वेदा ब्रह्म पूर्वं सनातनम् ॥
पुरुषं दिव्यरूपाभं स्वैः स्वैर्भावैर्मनोभवैः ।
अथर्वणस्तु यो भागः शीर्षं यज्ञस्य तत्स्मृतम् ॥
ग्रीवाबाह्वन्तरं चैव ऋग्भागः स भवेत्ततः ।
हृदयं चैव पार्श्वं च सामभागस्तु निर्मितः । [795 ]
बस्तिशीर्षं कटीदेशं जङ्घोरुचरणैः सह ॥
एवमेष यजुर्भागः संघातो यज्ञकल्पितः ।
पुरुषो दिव्यरूपाभः संभूतो ह्यमरात्पदात् ॥
स हि वेदमयो यज्ञः सर्वभूतसुखावहः ।
उभयोर्लोकयोस्तात हिंसावर्ज्यः सनातनः ॥ [ 800 ]
योगारम्भं कर्मसाध्यं ब्रह्मचर्यं सनातनम् ।
प्रभवं सर्वभूतानां यो विन्दति स वेदवित् ॥
स सिद्धः प्रोच्यते लोके सिद्धिरेव न संशयः ।
निर्मुक्तैः सर्वकर्मभ्यो मुनिभिर्वेदपारगैः ॥
वैष्णवं यज्ञमित्येवं ब्रुवते वेदपारगाः । [ 805 ]

770-771 — ( L 770 ) $B_1$ Dn मूढानां, $D_6$ भूतात्मा ( for मूढात्मा ) — ( L 771 ) $K_3$ दीप्यन्त ( for तिष्ठन्तं ) — ( L 773 ) $D_3$ $G_{3\ 4}$ बुद्धि- ( for बुद्ध्या ) — ( L 775 ) $\tilde{N}_2$ [ए]व, $G_{3\ 4}$ [अ]नु- ( for [अ]व- ) — ( L 776 ) अयुक्तात्मा ( for अयोगात्मा ) $K_3$ $D_1$ सत्य- ( for सर्व- ) $\tilde{N}_2$ $V_1$ B Ds $D_{2\ 6}$ $G_4$ -प्राणहरैर्; $V_3$ °चरो Dn °चरैर्, $G_3$ -प्राणिहरैर् ( for प्राणधरैर् ) — ( L 777 ) $D_2$ भूतयोर्, $D_3$ रूपतो, $D_5$ भूतये ( for °यो ) $K_1$ विश्वेशो, $V_3$ $B_3$ Ds भूतेशं ( for °शो ) $K_2$ $\tilde{N}_2$ $D_4$ भूतयोर्भुवि विश्वेशो ( for ᵃ ) — ( L 779 ) $B_{1\ 2}$ Ds $D_{5\ 6}$ आस्थाय, $G_{3\ 4}$ आदाय ( for आधाय ) $B_2$ ( marg ) योगेषु ( for गात्रेषु ) — ( L 780 ) $K_{1\ 2\ 4}$ Dn $D_{1\ 2\ 4}$ $G_3$ ब्रह्मन् ( for ब्रह्मा ) — ( L 781 ) $K_{1\ 2}$ $\tilde{N}_2$ $V_{1\ 3}$ B Dn Ds $D_{1\ 3\ 4}$ ( marg. ) $_6$ $G_{3\ 4}$ -संस्थानाज् ( for °नं ) $K_3$ $D_{2\ 4}$ चन्द्र-, Dn चान्द्रं ( for तेजो ) $G_{3\ 4}$ ज्योतिस्थानां म( $G_3$ बृ )-हत्तदा ( for ᵇ ) — ( L 782 ) $B_3$ ( marg as above ) गायत्र्या नयनात्तदा ( for ᵇ ) — ( L 784 ) $Dn_2$ युक्त ( for ऽव्यक्त. ) $G_4$ ध्रुवेन्द्रिय ( for ध्रुवोऽव्ययः ) $D_3$ शाश्वतो ध्रुवमव्यय ( for ᵇ ) — ( L 785 ) $\tilde{N}_2$ $B_{1\ 2}$ Ds $D_5$ यश् ( for न ) $V_1$ सर्वेन्द्रियगुणैर्युक्तो ( for ᵃ ) — ( L 786 ) $V_3$ चन्द्रांशुसलिलप्रख्यैर् ( for ᵃ ) $K_{1\ 2}$ $\tilde{N}_2$ $V_{1\ 3}$ B Dn Ds $D_{1,3,4,6}$ वर्ण-, $D_6$ ( marg ) बल-; $G_4$ जल- ( for ब्रह्म- ). — ( L 787 ) $B_2$ ऋत्विजं ( for ऋग्वेदं ). — ( L 790 ) $B_3$ तत्त्वत ( for तत्पदम् ) — ( L 792 ) $K_3$ मनोमयै, $B_3$ °हरै, $Ds_1$ $D_6$ °रमै., $D_1$ °गतै ( for °भवैः ). $D_3$ तैर्भावैश्च मनोरमै ( for ᵇ ) — ( L 793 ) Dn $G_{3\ 4}$ योग· ( for भागः ) — ( L 794 ) $K_2$ $D_4$ -कण्ठान्तरे, $D_3$ -नाभ्यन्तरं, $D_6$ -बाह्वन्तरे ( for °न्तरं ) $K_{1\ 2}$ $D_4$ ऋग्भागसंभवं ततः, $K_3$ °ग संभवेत्तदा, $G_{2\ 4}$ °गस्तु प्रकीर्तित ( for ᵇ ) — ( L 795 ) $\tilde{N}_2$ $V_{1\ 3}$ पार्श्वौ ( for पार्श्वं ). — ( L 796 ) $B_2$ बस्तिनाभि-, $G_4$ यस्मिञ्शीर्ष- ( for बस्तिशीर्ष ) — ( L 797 ) $G_3$ लोक- ( for यज्ञ- ) $G_4$ संभूतो लोककल्पित ( for ᵇ ) — ( L 798 ) $D_6$ यज्ञ- ( for दिव्य- ) $K_3$ $D_1$ -रूपस्तु ( for -रूपाभः ). $Dn_2$ $D_2$ सभ्भूतो ( for सभूतो ) $K_4$ संभूतो हिमवत्पदात्, $G_{3\ 4}$ संभूतो ह्य( $G_4$ °तोऽप्य )जरात्परात् ( for ᵇ ) — ( L 799 ) $B_3$ Cal ed -सत्त्व ( for -भूत- ). — ( L 801 ) Ds ब्रह्मभूतं; $D_1$ °बोध्यं, $D_3$ पुरुषं च, Bom ed. G( ed. ) ब्रह्मचर्ये ( for °चर्यं ) — ( L 803 ) $K_3$ सद्भिरेव, $D_3$ सिद्धैरेवं ( for सिद्धिरेव ) — ( L 804 ) $K_4$ $\tilde{N}_2$ $B_3$ Ds $D_6$ निर्मुक्त· ( for °क्तै ) $D_5$ -कामेभ्यो, $G_3$ पापेभ्यो ( for -कर्मभ्यो ). $B_2$ विमुक्त· सर्वपापेभ्यो ( for ᵃ ) — Before line 805, $G_{3.4}$ ins जनमेजय. — ( L 805 ) $D_3$ वैष्णवो यज्ञ इत्येवं ( for ᵃ ) $D_2$ $G_3$ स्तुवन्ते ( for ब्रुवते ). — ( L. 806 )

ब्राह्मणा नियमश्रान्ता वेदोपनिषदे पदे ॥

जनमेजय उवाच ।

चेतसस्तूपलम्भो हि मनोग्राह्यस्य कामतः ।
कारणं श्रोतुमिच्छामि यथातत्त्व महामुने ॥

वैशंपायन उवाच ।

न ह्यस्य कारणं किंचिद्ग्राह्यं भवति भारत ।
अन्तर्गतं कारणं तु शारीरं मानसं नृप । [ 810 ]
येन वेद्यं विदुर्मर्त्या ब्राह्मणा. संशितव्रताः ॥
अवेद्यमपि वेद्यं च शक्यं वेत्तुं न कर्मणा ।
ब्राह्मणेन विनीतेन सदा ब्रह्मनिषेविणा ।
सदा विदिततत्त्वेन सिद्धिहेतोर्महीपते ॥
सदा चैव शुचिर्भूत्वा नियतो ब्रह्मकर्मणा । [ 815 ]
उपतिष्ठेत स गुरुं बद्धाञ्जलिपुटो द्विजः ॥
सायं प्रातश्च तत्त्वज्ञो मोक्षकर्माणि कारयेत् ।
विनीतो ब्रह्मभावेन समाहितमतिर्मुनिः ॥
संप्रपद्येत मनसा वैष्णवं पदमुत्तमम् ।
ध्यायन्नेव प्रसीदेत समाहितमतिर्द्विजः ॥ [ 820 ]
स गच्छेत्परमं ब्रह्म निर्विकारेण चेतसा ।
अपुनर्भवभावज्ञो निर्ममो भावबन्धनात् ॥
तदेवाक्षरमित्याहुर्यत्तद्ब्रह्म सनातनम् ।
न हि तत्कर्मयोगेन विद्यायोगेन दर्शितम् ॥
ब्राह्मणानां विनीतानां वैष्णवे पदसंचये । [ 825 ]
सर्वद्रव्यातिरिक्तानां कामयोगविगर्हिणाम् ॥
अपुनर्भाविनां लोकाः कर्मयोगप्रतिष्ठिताः ।
अनादानेन मनसा राजन्कर्मणि कर्मणि ॥
आदानाद्बध्यते जन्तुर्निरादानात्प्रमुच्यते ।
ब्राह्मणेभ्यः क्रियाप्राप्तिर्जन्तोः पूर्वाज्जनाधिप ॥ [ 830 ]
मुक्तश्चेन्द्रियबन्धेन प्राप्तश्च परमं पदम् ।
न भूयः पुनरायाति मानुषं देहविग्रहम् ॥

Colophon

जनमेजय उवाच ।

उपसर्गं च योगं च ध्यातव्यं चैव यत्पदम् ।
सिद्धिं सिद्धिगुणांश्चैव श्रोतुमिच्छामि तत्त्वतः ॥

वैशंपायन उवाच ।

शृणु विस्तरतः सर्वं यथा पृच्छसि मेधया । [ 835 ]

---

$K_{1\ 2}$ $D_3$ ब्राह्मणा नियता शान्ता ( for $^a$ ).– After line 806, $B_2$ ins. an addl colophon mentioning पौष्करम् as sub-parvan — $G_3$ om the ref — ( L 807 ) Bom ed मनोग्राहस्य कामत ( for $^b$ ) — ( L 808 ) $Ds_1$ यथातथ्यं ( for °तत्त्व ) $B_2$ Dn यथा त्वं मन्यसे मुने ( for $^b$ ) — ( L 809 ) $K_{1\ 2}$ $D_4$ वाक्य भवति कारणम् ( for $^b$ ). — $K_2$ $G_{3\ 4}$ om ( hapl ) lines 813–815 — ( L 813 ) $D_1$ सदा चैव शुचिर्भूत्वा ( for $^a$ ) $K_1$ $V_3$ $D_4$ -निषेवता ; $D_2$ -निवेदिना ( for -निषेविणा ). — ( L 816 ) $B_{1\ 3}$ Cal ed उपतिष्ठेच्च ( for °ष्ठेत ). $D_1$ सतत ( for स गुरुं ) $Dn_2$ G(ed ) -परो ( for पुटो ) — ( L 817 ) मोक्षकर्म च कारयन् ( for $^b$ ) — $D_5$ om. ( hapl ) lines 819–820. — ( L 820 ) $K_4$ ध्यायते च , $\tilde{N}_2$ $B_{2\ 3}$ ध्यानेन च ( for ध्यायन्नेव ) — ( L. 822 ) $B_{1\ 3}$ -तत्त्वज्ञो ( for भावज्ञो ) $K_3$ भव- ( for भाव- ) — ( L 824 ) $K_1$ Dn $D_2$ तर्हि तत् ; B निहितं ( for न हि तत् ) $D_3$ -त्यागेन ( for यो° ) $K_4$ ब्रह्म केनापि दार्शितम् ( for $^b$ ). — ( L 825 ) $G_3$ च सर्वेषां ( for विनीतानां ) — ( L. 826 ) $V_3$ सर्वदस्भातिरिक्तानां , $B_{2\ 3}$ सर्वत्र व्यतिरि° ( for $^a$ ), $B_2$ कर्म- , Cal. ed. काल- ( for काम- ) $V_1$ $D_1$ -विगर्हिताम् , Ds विगर्ह( $Ds_2$ °र्हि )णम् ( for -विगर्हिणाम् ). — ( L 827 ) $V_1$ अपुनर्बोधिताल्लोकान् , $D_3$ °र्भविणां लोकाः ( for $^a$ ) $K_3$ कर्माङ्गेन , $B_2$ कर्मयोगा , Dn Ds $D_{3\ 6}$ °योगे ( for °योग- ) — ( L 828 ) $D_3$ आच्छादितेन मनसा ( for $^a$ ). — ( L 829 ) Cal ed अनादानात् ( for निरा° ) — ( L. 830 ) $V_1$ $B_1$ Dn $D_{2\ 5}$ क्रियावाप्तिर् ( for °प्राप्तिर् ) $K_2$ सर्वो , $K_3$ $D_1$ प्राप्ता , $B_2$ $D_5$ पूर्वा , $D_4$ पूर्वो , $D_6$ पूर्वं ( for पूर्वाज् ) $K_1$ $\tilde{N}_2$ $V_3$ $G_4$ जन्तो पूर्वान्नराधिप , $V_1$ $G_3$ जन्तोः पूर्वं नरा° ( for $^b$ ) — ( L 832 ) $K_2$ $D_1$ मानुषं कर्मबन्धनम् ; $G_3$ मानुषेष्वेव विग्रहम् ( for $^b$ )

COLOPHON — *Mention of the Epic* $Ds_2$ $D_5$. — *Mention of Khila* $K_1$ $V_{1\ 3}$ B $Ds_1$ $D_1$ — *Sub-parvan* $K_1$ $V_{1\ 3}$ B Ds $D_{1\ 2\ 5,\ 6}$ पौष्करम् ; Dn $D_4$ पु( $D_4$ पौ )ष्करप्रादुर्भाव· — *Adhy no* $K_3$ $D_1$ ( marg ) 91 , $V_{1\ 3}$ 293 , Dn 11 , $Ds_2$ 202 , $D_3$ 218 , $D_4$ 128 ; $G_3$ 344 , $G_4$ 342

( L 833 ) $G_3$ उपसर्गश्च योगश्च ( for $^a$ ). $K_4$ ज्ञातव्य ( for ध्या° ) $K_2$ सत्पदम् ( for यत्प° ) $G_3$ ध्यातव्यश्चैव यत्परः ( for $^b$ ) — After line 833, $B_1$ Bom, Poona eds,

उपपन्नेन मनसा ब्रह्मादीनामनेकधा ॥
पञ्चेन्द्रियगुणांस्त्यक्त्वा पश्यतो ब्रह्मणो नृप ।
योगयुक्तेन मनसा पञ्चेन्द्रियनिवासिनः ॥
ब्रह्मणश्चिन्तयानस्य ब्रह्मयज्ञं सनातनम् ।
बहुरूपमनैश्वर्यात्प्रवक्ष्यामि निबोध तत् ॥ [ 840 ]
पञ्चेन्द्रियस्य ग्रामस्य नवद्वारस्य भारत ।
कामक्रोधनिरुद्धस्य संनिरुद्धस्य मेधया ॥
तेजसा मूर्ध्नि चाधाय धूमो दोधूयते महान् ।
नीललोहितवर्णाभः पीतैः श्वेतैश्च धातुभिः ॥
मञ्जिष्ठारागवर्णाभैः कपोतसदृशैस्तथा । [ 845 ]
शुद्धवैदूर्यवर्णाभः पद्मवर्णदलप्रभैः ॥
स्फाटिकैर्मणिवर्णाभैर्नागेन्द्रसदृशैस्तथा ।
इन्द्रगोपकवर्णाभैश्चन्द्रांशुसलिलप्रभैः ॥
बहुवर्णैः सधूमौघैरिन्द्रायुधसमप्रभैः ।
संपतद्भिश्च युगपन्मेघैरिव समागमे ॥ [ 850 ]
निरुध्यन्त इवाकाशं पक्षवद्भिरिवाद्रिभिः ।
ते धूमवर्णसंघाता घनाः सलिलधारिणः ।
निर्वेमुश्चैव तोयौघान्विविशुर्वसुधातलम् ॥
मूर्ध्नि चैव महानग्निर्मानसो धूयते प्रभुः ।
युक्तः परमयोगेन शतशोऽर्चिभिरावृतः ॥ [ 855 ]
तस्याग्नेर्विस्फुलिङ्गानां सहस्राणि शतानि च ।
विसस्रुः सर्वगात्रेभ्यो ज्वलन्तीव युगाग्नयः ॥
यावन्त्यो वर्षधाराश्च तावन्त्योऽर्च्योऽनलस्य तु ।
समेयुर्वारिधाराभिर्विपुले वसुधातले ॥
वर्णाभ्यां युज्यमानश्च वायुर्दोधूयते महान् । [ 860 ]
दिव्यसिद्धगुणोद्भूतः सूक्ष्मः प्राणविवर्धनः ॥
वेगवान्भीमनिर्घोषो बलवान्प्राणगोचरः ।
तैरेव चाग्निसंघातैर्धातुभिः सह संगतः ॥
सहस्रशोऽथ शतशो मूर्तिं कृत्वा पृथग्विधाम् ।
अग्निर्वायुर्जलं भूमिर्धातवो ब्रह्मचोदिताः ॥ [ 865 ]
समवायत्वमापन्ना बीजभूता महीपते ।
संघातं ब्रह्मवेगेन धातवो गमिता नृप ॥

---

G(ed) repeat line 832 — Bom ed om line 834 — (L 834) $D_{s1}$ Poona ed -गुणाश् (for -गुणांश्) — (L 835) $K_4$ $V_3$ $B_2$ Ds विस्तरश (for °रत) $Ñ_2$ $V_3$ $B_1$ $D_6$ $G_4$ यन्मां, $D_{s1}$ यत्त्वं, $D_{s2}$ यस्त्वं (for यथा) — (L 837) $K_{3\ 4}$ $V_{1\ 3}$ Dn $D_{1-3\ 5\ 6}$ (marg) पञ्चसिद्धि- (for पञ्चेन्द्रिय-) $K_2$ पश्यतां (for पश्यतो) — (L 838) $D_6$ -निवासिना, $G_3$ समप्रभ (for निवासिन) — (L 839) $K_{1\ 2}$ ब्रह्माण; $G_3$ ब्रह्मणा (for °णश्) — (L 840) $V_3$ $G_3$ ब्रह्म- (for बहु) $K_3$ प्रवर्तन्ते निबोध तान्, $K_4$ °र्तन्ति निबोधत, $V_1$ °र्तन्ति निबोधत, $V_3$ Dn $D_{1-3\ 5}$ °र्तन्ति निरोधनम्, $D_6$ °र्तन्ति निबोध यत् (for $^b$) — (L 842) $K_{1\ 2\ 4}$ $V_{1\ 3}$ $D_{2\ 4-6}$ $G_{3-4}$ -क्रोधाव- (for क्रोधनि-) $Ñ_2$ $B_{1\ 3}$ Ds कामक्रोधस्य मोहस्य, Dn °क्रोधस्य लोभस्य, $D_3$ °क्रोधस्य रुद्धस्य (for $^a$) $K_2$ निरोधस्य च मेधया, $D_4$ निरुद्धस्य च मे° (for $^b$) — (L 843) $K_1$ $D_{s2}$ आघ्राय, $V_1$ $D_{s1}$ आदाय (for आधाय) $D_6$ तेजो मूर्धनि चाघ्राय (for $^a$) — (L 844) $K_{1\ 2}$ $Ñ_2$ B Ds $D_{3\ 4\ 6}$ $G_{3\ 4}$ -वर्णाभैः (for °भः) $K_2$ om lines $844^b$–$847^a$, $D_6$ om line $844^b$–$846^a$ Ds पद्मरागसमप्रभैः (for $^b$) — (L 845) $B_2$ Dn माञ्जिष्ठ- (for मञ्जिष्ठा-) $V_1$ -वर्णैश्च (for -वर्णाभैः) $G_{3\ 4}$ मञ्जिष्ठागरुवर्णाभैः (for $^a$) $G_4$ om lines $845^b$–$846^a$ $D_3$ नागेन्द्र- (for कपोत-) $B_2$ कपोतसदृशप्रभैः (for $^b$) — (L 846) $K_1$ $D_4$ पत्रदल-, $Ñ_2$ $V_3$ $B_{1,3}$ Ds $D_5$ -रागसम-, $V_1$ -वर्णसम (for -वर्णदल-) $D_3$ चन्द्रार्कसदृशप्रभैः (for $^b$) — $B_1$ om. (hapl) lines 847–849 $K_3$ $D_{1\ 3}$ om (hapl) lines 847–848 — (L 849) $Ñ_2$ -रक्तैः (for -वर्णैः). $D_{s1}$ धूमौघैश्च; $D_6$ सधूमाभैर् (for सधूमौघैर्) $D_2$ शक्रायुध- (for इन्द्रा°). $G_3$ -समुद्भवैः (for -समप्रभैः) — (L 850) $D_3$ संनदद्भिश् (for संपत°) $K_3$ $D_1$ घनागमे, $B_2$ $D_3$ समागतैः, Ds °गमैः (for °गमे) — (L 852) $Ñ_2$ B Dn Ds $D_5$ $G_3$ -वर्णा (for वर्ण-) — (L 854) $D_6$ (marg) मूर्धस् (for मूर्ध्नि) $D_3$ सधूमोऽग्निर् (for महानग्निर्) — (L 855) $D_1$ -युक्तेन (for -योगेन) $D_4$ युक्तं परमया योगं (for $^a$) — (L 856) $D_{n1}$ तस्यार्चैर्विस्फुलिङ्गानि (for $^a$) — (L 857) $K_4$ $D_{2,5}$ विविशुः, $D_3$ निजग्मुः (for विसस्रुः) $Ñ_2$ ज्वलन्निव हुताशनः; $D_3$ योगिनो नृपसत्तमः (for $^b$) — (L 858) $K_2$ $D_5$ -धारासु, Dn धारास्ता (for °श्च) $Ñ_2$ यावन्ति पुरराष्ट्राणि, $B_{2\ 3}$ °न्ति वर्षराष्ट्राणि (for $^a$) $V_3$ तावन्त्यौर्वानलस्य तु, $D_{1\ 6}$ तावन्तो ह्यनलस्य च, $D_2$ °न्तश्चानिलस्य च (for $^b$). — (L 859) $G_3$ प्रवेशुर् (for समेयुर्) Dn विविशुर् (for विपुले). — (L 860) $D_3$ उभाभ्यां (for वर्णाभ्यां) — (L 861) $D_3$ एष (for दिव्य-). $Ñ_2$ $V_1$ Ds -सिद्धि- (for -सिद्ध-) $D_3$ सूक्ष्मजीवप्रवर्धन (for $^b$). — (L 862) $V_1$ रसवान् (for बल°) $V_3$ -वर्धन (for -गोचरः) — (L. 863) $K_{1-3}$ $D_{1\ 4}$ -संपातैर्, $Ñ_2$ -संभू° (for -संघा°) $K_{1\ 3}$ $D_{1,4\ 6}$ संगतैः (for °तः) — (L 865) $K_3$ $D_1$ वापि, $K_4$

यद्ब्रह्म चक्षुषोर्मध्ये स सूक्ष्मः पुरुषो विराट् ।
तयोरन्यान्बहून्सूक्ष्मान्ससृजे पुरुषोत्तमः ॥
स एष भगवान्विष्णुर्व्यक्ताव्यक्तः सनातनः । [ 870 ]
आधारः सर्वभूतानां प्रलये प्रलयान्तकृत् ॥
तं मूर्ध्नि धातुभिर्बद्धं विशन्ति ब्रह्मचोदिताः ।
तेऽन्तरा पुरुषाः सर्वे ज्ञातारः सुखदुःखयोः ॥
अथ चेष्टितुमारब्धा मूर्तयो ब्रह्मसंमिताः ।
भित्त्वा च धरणीं देवीं प्रपद्यन्ते दिशो दश ॥ [ 875 ]
इत्येते पार्थिवाः सर्वे ऋषयो ब्रह्मनिर्मिताः ।
तत्रैव प्रलयं याता भूमित्वमुपयान्ति च ॥
कर्मक्षयाद्विमुच्यन्ते धातुभिः कर्मबन्धनैः ।
कर्मक्षयाद्विमुक्तत्वादिन्द्रियाणां च बन्धनात् ।
तामेव प्रकृतिं यान्ति अज्ञातां कर्मगोचरैः ॥ [ 880 ]
क्षराद्धूममक्षयं चैव अग्निगर्भास्तपोमयाः ।
येन तन्तुरिव च्छन्नो भावाभावः प्रवर्तते ॥
धूमादभ्रास्तु संभूता अभ्रात्तोयं सुनिर्मलम् ।
जगती जलात्तु संभूता जगत्येव च यत्फलम् ॥
फलाद्रसश्च संजज्ञे रसात्प्राणश्च देहिनाम् । [ 885 ]
रसस्तु तन्मयो जज्ञे यत्तद्ब्रह्म सनातनम् ॥
प्रधानं ब्रह्म उद्दिष्टं बहुभिः कारणान्तरैः ।
ब्राह्मणैस्तपसि श्रान्तैः सत्यव्रतपरायणैः ॥
अव्यक्ताद्व्यक्तिमापन्नं स्वेन भावेन भारत ।
अन्तःस्थं सर्वभूतेषु चरन्तं विद्यया सह ॥ [ 890 ]
कर्म कर्तेति राजेन्द्र विषयस्थमनेकधा ।
नोपलभ्यति चक्षुर्भ्यां तपसा दग्धकिल्बिषैः ॥
उपलभ्यति चक्षुर्भ्यां ज्ञानिभिर्ब्रह्मवादिभिः ।
निःसृतस्तु भ्रुवोर्मध्यान्मेघमुक्त इवांशुमान् ॥
चरद्भिः पक्षिवल्लोके निर्द्वंद्वैर्निष्परिग्रहैः । [ 895 ]
योगधर्मेण कौरव्य ध्रुवमासाद्यते फलम् ॥
प्रादुर्भावं क्षयं चैव भूतस्य निधनं तथा ।
विधत्ते शतशो ब्रह्मा संक्षये च भवेत्तथा ॥
कर्मणः कर्मयोगज्ञो भूतेभ्ज्ञो नात्र संशयः ।
अविनाशाय लोकस्य धर्मस्याप्यायनेन च ॥ [ 900 ]
युगं द्वादशसाहस्रं सहस्रयुगसंज्ञितम् ।
एतद्ब्रह्मयुगं नाम युगानां प्रथमं युगम् ॥
सहस्रयुगयोरन्ते संहारः प्रलयान्तकृत् ।
सूक्ष्मं भवति लोकानां निर्विकारमचेतनम् ॥
तथा प्रलयमापन्नं जगत्सर्वं सनातनम् । [ 905 ]

---

$V_{1\ 3}$ $D_5$ वायुर् ( for भूमिर् ) $K_3$ ( marg ) $D_{1\ 4}$ -नोदिता ( for -चो° ) — ( L 866 ) $\tilde{N}_2$ जीव ( for बीज- ) $V_1$ $B_{1\ 4}$ $D_s$ महीतले ( for °पते ) — ( L 867 ) $K_3$ $D_1$ संहता ( for संघातं ) — ( L 868 ) $G_3$ परमो ( for पुरुषो ) — ( L 869 ) $K_{1\ 3}$ $D_{1\ 4}$ असृजत्, $D_5$ सोऽसृजत् ( for ससृजे ) — ( L. 870 ) $K_3$ $D_1$ कृष्णो ( for विष्णु° ) $\tilde{N}_2$ $B_1$ ( marg ) $_3$ $D_{s2}$ प्रजापति· ( for सनातन ) Cal ed व्यक्तोऽव्यक्तः प्रजापति° ( for $^b$ ) — ( L 871 ) $K_4$ $\tilde{N}_2$ $V_{1\ 3}$ $D_n$ $D_s$ $D_{2,\ 5}$ -विद्यानां ( for -भूतानां ) — ( L 872 ) $K_4$ $B_1$ $D_n$ $D_{2\ 3\ 5}$ $G_{3\ 4}$ नद्धं ( for बद्धं ) $K_4$ -समिता° ( for -चोदिता° ) — ( L 875 ) $\tilde{N}_2$ $V_{1\ 3}$ B $D_s$ $D_6$ $G_{3\ 4}$ प्रापद्यन्त ( for प्रपद्यन्ते ). — ( L 876 ) $D_3$ $G_3$ पार्थवा ( for पार्थिवा° ) $G_4$ जले ते पार्थवा° सर्वे ( for $^a$ ) $D_3$ -संमिता ( for निर्मिता ). — ( L 877 ) $K_3$ $D_1$ यान्ति ( for याता ) $G_4$ भूमिं समुपयान्ति च ( for $^b$ ) — ( L 878 ) $D_{s1}$ -बन्धनात् ( for °नैः ). — ( L. 879 ) $D_3$ नि- ( for च ) — ( L 880 ) $K_3$ $D_1$ ज्ञातार ( for अज्ञातां ) — ( L 881 ) Cal ed. जातं ( for धूम- ) $V_2$ क्षरत्वमक्षयं चैव ; $G_3$ क्षयाद्धूमक्षयश्चैव ( for $^a$ ).

— ( L 882 ) $D_3$ भावाद्भाव: ( for भावाभाव° ) — ( L. 883 ) $K_3$ $D_1$ समुद्भूता ( for $_4$ संभूता ) $K_{1,\ 2}$ $V_3$ $B_{1\ 3}$ $D_s$ $D_4$ $G_3$ धूमादभ्रं तु संभूतम्, $D_3$ धूम्रा धूम्राभ्रसंभूतिम्, $D_6$ धूमादभ्रं समुद्भूतम् ( for $^a$ ). — ( L 885 ) $D_3$ संज्ञेयो ( for संजज्ञे ) $D_{n2}$ फलाद्ब्रह्मरसं जज्ञे ( for $^a$ ). — ( L. 887 ) $B_{1,\ 3}$ Cal ed ब्रह्मोद्दिष्टं प्रधानं तु ( for $^a$ ). — ( L 888 ) $D_{2,\ 3\ 6}$ -धर्म- ( for -व्रत- ) — ( L 891 ) G(ed.) विषयस्थान् ( for °स्थम् ) — ( L 892 ) $K_{1\ 4}$ B $D_n$ $D_{2,\ 5}$ $G_{3\ 4}$ -लभ्येत ( for -लभ्यति ) $\tilde{N}_2$ चक्षुर्भ्यां नोपलप्स्यन्ति ( for $^a$ ) — ( L. 893 ) $B_1$ $G_4$ Cal ed यतिभिर् ( for ज्ञानि° ) — ( L 894 ) $B_3$ Cal ed मध्ये ( for मध्यान् ). — ( L. 895 ) $G_3$ पक्षिभिर् ( for पक्षिवल् ) $B_3$ निर्ग्रन्थैर् ( for निर्द्वंद्वैर् ) — ( L 896 ) $K_{1\ 2}$ परम्, $K_3$ $D_1$ पदम् ( for फलम् ). — $K_4$ om ( hapl. ) line 898 — ( L 898 ) $K_2$ $D_4$ संक्षय ( for °ये ) $D_6$ चोद्भवे ( for च भवेत् ) — ( L. 899 ) $\tilde{N}_2$ ब्रह्मण, $D_1$ कर्मणा ( for °णः ) $G_4$ -योगस्थो ( for °ज्ञो ). $G_3$ कर्मणां कर्मभोगस्थो ( for $^a$ ). — ( L. 901 ) $K_3$ $D_2$ संमितम्; $K_4$ $\tilde{N}_2$ $V_1$ $D_n$ $D_{1,\ 5\ 6}$ $G_3$ सहि° ( for -सञ्ज्ञि° ). — ( L. 903 ) $V_{1\ 3}$ $D_s$ सहस्रयुगपर्यन्ते;

ब्रह्म संपद्यते सूक्ष्मं निर्मितं कारणैर्गुणैः ॥

Colophon

जनमेजय उवाच ।

प्राग्वंशं श्रोतुमिच्छामि विस्तरेण महामुने ।
आद्ययोर्युगयोर्ब्रह्मन्ब्रह्मप्राप्तस्य सर्वशः ॥

वैशंपायन उवाच ।

शृणु विस्तरश. सर्व यन्मां पृच्छसि मेधया ।
उपपन्नेन मनसा दैवप्रत्ययसाधिना ॥ [ 910 ]
ऋद्धिं प्राप्तस्तु भगवान्योगात्मा ब्रह्मसंभवः ।
भूतानां बहुलत्वं च चकारेहेश्वरः प्रभुः ॥
स्थितो ब्रह्मासने ब्रह्माविक्षिप्तः सहसा प्रभुः ।
अचलेनैव भावेन स्थाणुभूतेन भारत ॥
रक्तश्च मोक्षविषये सर्वज्ञानमये पदे । [ 915 ]
यस्मात्पदसहस्राणि भवन्ति न भवन्ति च ॥
ब्रह्मयज्ञं तु यजते योगाद्वेदात्मकं सदा ।
ब्रह्मणो विपुलं ज्ञानमैश्वर्यं च प्रजायते ॥
ततः प्रथममैश्वर्यं युञ्जानेन प्रवर्तितम् ।
ब्रह्मणा ब्रह्मभूतेन भूतानां हितमिच्छता ॥ [ 920 ]
यदा त्वाकाशमैश्वर्य युञ्जानस्य प्रवर्तते ।
ब्रह्मणो ब्रह्मभूतस्य निर्विकारेण कर्मणा ॥
तदान्तरिक्षं संप्राप्तं निर्मलं ब्रह्म चाव्ययम् ।
संहारः सर्वभूतानां चराणां ब्रह्मवादिनाम् ।
ध्रुवमैश्वर्ययोगानां प्रतिपद्यन्ति देहिनः ॥ [ 925 ]
आकाशैश्वर्यभूतेन संयोगे ब्रह्मवादिनाम् ।
प्रवर्तमानमैश्वर्य वायुभूतं करोति च ।
विकारैर्बहुभिः प्राप्तैः संपतद्भिर्महाबलैः ॥
एतैर्विकारैः संवृत्तैर्निरुद्धैश्च समन्ततः ।
ध्रुवमैश्वर्यमापन्नः सिद्धो भवति ब्राह्मणः ॥ [ 930 ]
शरीरादभिनिष्क्रम्य आकाशेन प्रधावति ।
निरालम्बो निरालम्बानालम्ब्य मनसा ततः ॥
ऐश्वर्यभूतो भूतात्मा चरन्दिवि न दृश्यते ।
चक्षुर्भिर्बहुभिर्लोके पुरंदरसमैरपि ॥

---

B D3 6 G3 4 एव युगसहस्रान्ते ( for $^a$ ) B3 Cal ed प्रलयोऽन्तकृत, D5 °यान्तकः ( for °यान्तकृत् ) — D1 om lines $904^b$–$906^a$ Ñ2 G3 4 om ( hapl ) lines 905. — ( L 906 ) Ñ2 B2 Ds निर्मुक्तं, B1 3 Dn2 निमित्त ( for निर्मितं )

Colophon. — *Mention of the Epic* Ds2 — *Mention of Khila :* K1 V1 3 B Ds1 D1 3 4 — *Sub-parvan* K2 4 V1 3 B Ds2 D1 2 5. 6 G3 पौष्करम् ; K3 पुष्करम्, Dn D4 Dn पुष्करप्रादुर्भाव· — *Adhy no.* K3 D1 91 ; V3 204, Dn 12, Ds2 203, D3 219, D4 199, G3 345, G4 340

( L. 907 ) D3 तपोधन ( for महामुने ) — G3 om the ref — ( L 909 ) D3 पूर्वं ( for सर्वं ) B1 D3 यन्मां त्वं परिपृच्छसि ( for $^b$ ) — ( L 910 ) K3 V3 D5 देवप्रत्यक्षसाधिना ( K3 °नाम् ), D1 दैवप्रत्यक्षसंधिना ( for $^b$ ) — ( L 911 ) G3 बुद्धिं ( for ऋद्धिं ) Ñ2 विश्व-, D3 5 योग- ( for ब्रह्म- ). — ( L 912 ) V1 3 सुबहुत्वं ( for बहुलत्वं ) G3 स चकार ( for चकारेह ) K3. 4 चकारेह ( K4 °मं ) महेश्वर, B3 चकार ईश्वर प्रभुः, D3 चक्रे योगेश्वरः प्रभु ( for $^b$ ) — G4 om line 913 — ( L. 915 ) B2 Dn G3 स च ( for सर्वं- ) — ( L 916 ) K1 2 D4 भवन्ति प्र-, K4 Dn D2 5 6 प्रभवन्ति ( for भवन्ति न ) Ñ2 V1. 3 B Ds D3 प्रभवन्त्युद्भवन्ति च, G3. 4 प्रभुवन्त्युत्पतन्ति च ( for $^b$ ). — ( L. 917 ) K2 B2 Ds D4 यजतो ; K3 योगात्मा, D1 यज्ञान्ते ( for यजते ) B1 स ब्रह्मयज्ञ यजते ( for $^a$ ) K3 D1 6 वेदात्मकः, Ds2 विश्वात्मकं ( for वेदा° ). — ( L 918 ) K4 Ñ2 V1. 3 B Dn Ds D2 3 5 G3 4 प्रवर्तते ( for प्रजायते ) — ( L 919 ) D3 प्रज्ञानेन ( for युञ्जानेन ) K1–3 D1 प्रकीर्तितम् ( for प्रव° ) — ( L 920 ) G3 om lines $920^b$–$924^a$ D3 भूतानां हितकाम्यया ( for $^b$ ) — ( L 921 ) B1 om lines $921^b$–$927^a$ D3 यजानस्य ( for युञ्जा° ) K3 D2 प्रवार्तितम् ( for °र्तते ) — D2 om line 922 — ( L. 922 ) V1 ब्रह्मणा ब्रह्मभूतेन ( for $^a$ ) D3 चेतसा ( for कर्मणा ) — ( L 923 ) Ñ2 V1 3 B3 Ds ब्रह्म निर्मलमव्ययम् ( for $^b$ ) — ( L 924 ) K4 वर्णानां, B3 Dn Ds2 D2 3 G4 नराणां ( for च° ) — ( L 925 ) V3 -भूतानां ( for -योगानां ) Ds देहिनम्, G3 4 योगिन ( for देहिनः ) — ( L 926 ) K3 -संभूतै, G3 -भूतानां ( for -भूतेन ) V3 D6 G4 संयुगे ( for सयोगे ) K4 V1 Dn D2 5 G3 संयुगे ब्रह्मवादिना ( for $^b$ ). — ( L 929 ) Cal ed [ए]व सर्वश ( for समन्तत ) — ( L. 930 ) D6 ध्रुवमैश्वर्यसंपन्न ( for $^a$ ) — ( L 932 ) K4 निरालम्बाद्, Ñ2 V1 G3 °लम्बम्, D3 °लम्बे ( for °लम्बान् ) D1 6 आलक्ष्य, D3 नालभ्यो ( for आलम्ब्य ) — ( L 933 ) D5 भूतानां ( for °त्मा ) K2 भूतैर् ( for चरन् ) — ( L 934 ) B1. 3 G3 4 लोकै ( for लोके ) K3 D1 -शतैर् ( for -समैर् ) — ( L 935 ) K1. 2 D1. 4 अधीयन्ति, Ds1 विधीयन्ते ( for त्वधी° ),

ओकारं ये त्वधीयन्ते मनसा ब्रह्मसत्तमाः । [ 935 ]
विभक्ताः सर्वकामेभ्यस्ते तं पश्यन्ति साधवः ॥
एतद्धि परमं ब्रह्म ब्राह्मणानां मनीषिणाम् ।
अन्तश्चरति भूतानां विद्धि चेतनया सह ॥
एष शब्दो महानादः पुराणो ब्रह्मसंभवः ।
वायुभूतोऽक्षरं प्राप्तो वदन्त्येवं द्विजातयः ॥ [ 940 ]
अरूपी रूपसंपन्नो धातुभिः सह संगतः ।
अन्तश्चरति भूतेषु कामकारकरो वशी ॥
ततः पूर्वमनुध्याय मनसा पूरयन्निव ।
वेदात्मकं तदा यज्ञं चिन्तयन्तो मनीषिणः ॥
ब्राह्मणाः शुचयो दान्ता यशोऽयुञ्जंस्तदन्वयाः । [ 945 ]
ब्रह्मलोकं काङ्क्षमाणा वैष्णवं पदमुत्तमम् ॥
यस्य हेतोः क्रियाः सर्वाः कुर्वन्ति विगतज्वराः ।
न ह्येते प्रसवादाने भवमिच्छन्ति भारत ॥
माल्योपहारैश्च त्रिभिः प्रतिभानैश्च वै द्विजाः ।
यजन्ति परमात्मानं विष्णुं सत्यपराक्रमम् ॥ [ 950 ]
यजनं विक्रमं चैव ब्रह्मपूर्वाः प्रचक्रिरे ।
ब्रह्मा च वैष्णवं तेजो वेदोक्तैर्वचनैर्नृप ॥
ब्राह्मणैर्वेदविद्भिश्च ब्रह्मज्ञैर्ब्रह्मवादिभिः ।
शुचिभिः कर्मुनिर्मुक्तैः सत्यव्रतपरायणैः ॥
धातुभिर्मोक्षकाले च महात्मा संप्रदृश्यते । [ 955 ]
तदेव परमं ब्रह्म वैष्णवं परमाद्भुतम् ॥
रसात्मकं तदैश्वर्यं विकारान्ते प्रदृश्यते ।
घोररूपा विकारास्ते व्यथयन्ति महात्मनः ॥
संछाद्यातीव तोयेन क्षुभ्यमाणो विचेतनः ।
ऊर्मिभिश्छाद्यते चैव शीतोष्णाभिर्विकारतः ॥ [ 960 ]
महार्णवगतश्चैव दह्यते न च सज्जते ।
भग्नाश्चैव महानद्यः सलिले चैव सीदति ॥
सीदमानश्च सलिले स शीते पात्यते बलात् ।
अशनाच्छादनाच्चापि युज्यमानो विचेतनः ॥
श्वभ्रे प्रपद्यमानश्च तोयेन परिषिच्यते । [ 965 ]
शुक्लवर्णेन बहुना स्रोतसा मूर्ध्नि सर्वशः ॥

---

$V_1$ -वादिना ( for -सत्तमा ) — ( L 936 ) $K_{1\ 2}$ वियुक्ता , $K_3$ $V_3$ $D_{1\ 4\ 6}$ विमुक्ता ( for विभक्ता ) $B_1$ $G_4$ -कर्मभ्यस् ( for -कामेभ्यस् ) $K_4$ $\tilde{N}_2$ $V_1$ $B_{2\ 3}$ Dn $Ds_1$ $D_{2\ 3\ 5}$ $G_3$ विमु( $D_2$ °यु)क्ता सर्वकर्मभ्यस् ( for $^{a}$ ) Dn यं ( for तं ) — ( L 938 ) $D_5$ अन्ते चरन्ति भूताना ( for $^{a}$ ) — ( L 939 ) Ds एक ( for एष ) $K_3$ $V_{1\ 3}$ $B_1$ Ds $D_1$ पुराणे ( for °णो ). — ( L 940 ) $V_1$ क्षय ( for ऽक्षरं ) — ( L 941 ) $B_2$ ( marg as above ) रूपमापन्नो ( for रूपसं° ) $Ds_1$ चतुर्भि. ( for धातुभि ) — ( L 942 ) $K_1$ भूतानां ( for भूतेषु ) $\tilde{N}_2$ बली ( for वशी ) — ( L 943 ) $K_3$ $D_1$ तत्र पूर्वम्, $K_4$ $D_2$ $G_3$ एतत्सर्वम् , $\tilde{N}_2$ $V_{1\ 3}$ B Dn Ds ( marg ) $G_4$ एतत्पूर्वम् , Cal ed तत. परम् ( for ततः पूर्वम् ) $K_2$ $D_4$ अभिध्याय ( for अनु° ). $V_1$ मनसा पूजयन्निव , $D_6$ °सा पूजयन्ति च ( for $^{b}$ ) — ( L 944 ) $K_3$ $D_2$ चिन्तयन्ते ( for °यन्तो ) — ( L 945 ) $K_2$ यश पुञ्जास् , $D_6$ योगयुक्तास् ( for यशोऽयुञ्जंस् ). $G_4$ तदाश्रया ( for तदन्वया ) $D_3$ यश प्राप्ताः सदान्वया. , $G_3$ युगयुक्तास्तदाश्रया ( for $^{b}$ ) — ( L. 946 ) $Ds_2$ वैष्णवं परम पदम् ( for $^{b}$ ) — ( L 947 ) $K_{1\ 2\ 4}$ $V_{1\ 3}$ B $G_{3\ 4}$ पद- ( for यस्य ) — ( L 948 ) $K_2$ $D_6$ प्रभगादाने , $K_4$ प्रसवादानैर् ( for °दाने ) — ( L 949 ) $\tilde{N}_2$ $V_1$ Ds चिन्वाद्भिः , $V_3$ शुचिभि , $D_6$ स्तुतिभि ( for च त्रिभि ) B Dn $D_3$ $G_3$ त्रिभि( $D_3$ चित्रै )र्माल्योपहारैश्च , $D_2$ माल्योपकारैश्चरुभिः ( for $^{a}$ ) $K_{1\ 2}$ $B_3$ प्रतिभागैश् , $K_3$ $Dn_1$ $D_2$ °भावैश् , $V_1$ °मानैश् , $V_3$ $B_{1\ 2}$ प्रविभागैश् ( for °प्रतिभानैश् ). $D_3$ भाव्यमानैर्द्विजातय. ( for $^{b}$ ) — ( L 950 ) $B_{2\ 3}$ Ds युञ्जन्ति ( for यजन्ति ) Ds -परायणम् ( for °क्रमम् ) — ( L 951 ) $B_{2\ 3}$ $G_3$ युञ्जाना ( for यजनं ) $D_3$ वैष्णवं ( for विक्रमं ) $B_1$ Cal ed ब्रह्माद्या सं- ( for ब्रह्मपूर्वा ) — ( L 953 ) $B_2$ Bom Poona Cal eds G(ed) ब्रह्म- ( for वेद- ) $K_{1-3}$ $D_{1\ 4\ 6}$ -विद्भिर्हि ( for -विद्भिश्च ) $D_3$ ब्रह्मविद्भिश्च ब्राह्मणै ( for $^{b}$ ). — ( L 955 ) $K_1$ $D_3$ धातुनिर्मोक्षकाले च ( for $^{a}$ ) $G_4$ -पत्स्यते ( for -दृश्यते ) $G_3$ महात्मानं प्रपत्स्यते ( for $^{b}$ ) — $K_4$ om lines 956-957 — ( L 956 ) $D_1$ न वेद ( for तदेव ) $K_3$ न वेद परमं धर्मं , $D_6$ एतदेव परं ब्रह्म ( for $^{a}$ ) $\tilde{N}_2$ $V_{1\ 3}$ $Ds_2$ वैष्णवं पदमद्भुतम् , $Ds_1$ °वं पदमुत्तमम् , $D_3$ °वं परमं ध्रुवम् ; ( for $^{b}$ ) — ( L 959 ) $V_1$ योगेन ( for तोयेन ). — $G_4$ om ( hapl ) lines 960–964 — ( L 960 ) Dn विकारितः ( for °रत ) — ( L 961 ) $V_{1\ 3}$ $D_3$ $G_3$ मज्जते ( for स° ). — ( L 962 ) $K_{1\ 2}$ Dn $D_{2-4\ 6}$ $G_3$ मग्नश्चैव महानद्या ( $K_1$ $D_6$ °द्यां ) ( for $^{a}$ ) — ( L 963 ) $K_3$ $D_1$ सलिलैः ( for °ले ) $K_2$ $D_4$ स सीदन् , $K_{3\ 4}$ स शीत ; $\tilde{N}_2$ B $Ds_2$ स शीतात् , $D_6$ शीतात्सं- ( for स शीते ) — ( L 964 ) $K_1$ $\tilde{N}_2$ $V_{1,\ 3}$ $B_2$ $Dn_1$ $Ds_1$ $D_{1\ 3\ 6}$ $G_3$ आसनाच् ( for अश° ) $K_3$ आसनाच्छादनैश्चापि ( for $^{b}$ ). $B_3$ $G_3$ मुह्यमानो

ऊर्ध्वज्योतिरवेक्ष्यश्च शुभ्रैः पीतैश्च छाद्यते ।
वारिपूर्णैः सुगम्भीरैर्विद्युद्भिरिव भासितैः ॥
एतैर्विकारैः संवृत्तैर्निरुद्धैश्चैव सर्वशः ।
ध्रुवैश्वर्यमथासाद्य सिद्धो भवति ब्राह्मणः ॥ [ 970 ]
रसात्मकं तदैश्वर्यं जिह्वाग्रादभिनिःसृतम् ।
सहस्रधारं विततं मेघत्वं समुपागतम् ॥
रसांश्च विविधान्योगान्स सिद्धः सृजते प्रभुः ।
धात्वर्थं सर्वभूतानां योगप्राप्तेन हेतुना ॥
तेजसो रूपमैश्वर्यं विकारैः सह वर्धते । [ 975 ]
आत्मनो विघ्नजननं स्वस्थो ब्राह्मणकारणे ॥
उग्ररूपैर्विकारैश्च हन्यते दण्डपाणिभिः ।
घोररूपैः सुगम्भीरैः पिङ्गाक्षैर्नरविग्रहैः ॥
नेत्रं समुद्धरन्भीमं जिह्वाग्रं चास्य विन्दति ।
नदन्ति युगपन्नादाञ्जृम्भमाणाः पुनः पुनः ॥ [ 980 ]
पुनरेव तदा भूत्वा बहुरूपास्तदाभवन् ।
नृत्यमानाः प्रगायन्ति तर्पयन्तो विशेषतः ॥
स्त्रीभूताश्च समं सर्वे युञ्जानाश्चावलम्बिरे ।
कण्ठेषु बहुरूपत्वाद्विघ्नैश्चैव प्रलोभयन् ॥
मधुरैरभिधानैश्च व्याहरन्ति नमीतवत् । [ 985 ]
पतन्ति युगपत्सर्वे पादयोर्मूर्धभिर्नताः ॥
प्रसादं काङ्क्षमाणाश्च योगस्यान्तरविघ्नतः ।
बहुप्रकारं कथयन्नृत्यन्ति च रमन्ति च ॥
एतैर्विकारैः संवृत्तैर्निरुद्धैश्चैव सर्वशः ।
ध्रुवमैश्वर्यमासाद्य सिद्धो भवति ब्राह्मणः ॥ [ 990 ]
तदर्चिष इवाग्नेया आदित्यस्येव रश्मयः ।
तेजोरूपकमैश्वर्यं जनिता जलबिन्दवः ॥
ज्योतींषि चैव संवृत्ता आकाशे गुणसंवृताः ।
चरन्ति सततं लोके सूर्याचन्द्रमसोर्गतिम् ॥
चन्द्रसूर्यात्मकं दिव्यं ज्योतिष्मद्घनमुत्तमम् । [ 995 ]
एतद्विभ्राजते लोके कालचक्रं ध्रुवं चरन् ॥
अर्धमासाश्च मासाश्च ऋतुसंवत्सराण्यथ ।
क्षणा लवा मुहूर्ताश्च कलाः काष्ठास्तथैव च ॥
अहोरात्रप्रमाणं च निमेषोन्मेषणं तथा ।
ताराणां गतयश्चैव ग्रहाणां च विशेषतः ॥ [ 1000 ]
अथ पार्थिवमैश्वर्यं विकारग्रहसंभवम् ।
योगयुक्तास्त्वभिग्रस्ताः पात्यन्ते ह्यचलासनात् ॥

---

( for युज्य° ) — $D_4$ om. ( hapl ) lines 967–969 — ( L 967 ) $G_3$ अवेक्ष्याशु ( for °क्ष्यश्च ) $K_4$ $B_1$ $D_2$ शुभ्रै , $Dn_2$ $B_2$ $G_4$ शुक्लै° ( for शुभ्रैः ) — ( L 968 ) $D_2$ वायु- ( for वारि- ) $G_3$ तोयदै. ( for भासितै ) — ( L 970 ) $K_4$ $\tilde{N}_2$ $V_{1\,3}$ B Dn Ds $D_{2-6}$ $K_{3\,4}$ ध्रुवमैश्वर्यमासाद्य ( for $^a$ ) $D_{2\,6}$ शुद्धो ( for सिद्धो ) $G_3$ वै द्विज ( for ब्राह्मण ) — $G_3$ om ( hapl ) lines 971–990. — ( L 971 ) $K_{1\,3}$ जिह्वाया ( for °ग्राद् ). — ( L. 972 ) $\tilde{N}_2$ सततं ( for विततं ) — ( L 973 ) $K_{1\,3}$ B Dn $D_{3\,5}$ $G_4$ योगात्, $D_{s1}$ सर्वान् ( for योगान् ) $K_{3\,4}$ $\tilde{N}_2$ $V_1$ $B_{1\,4}$ Dn $Ds_2$ $D_{1\,2\,6}$ $G_4$ सं- ( for स ). — ( L 974 ) $V_{1\,3}$ धात्वर्थं सर्वभूतात्मा ( for $^a$ ) — ( L 975 ) $K_2$ विश्वाकारै प्रवर्तते ( for $^b$ ) — ( L 976 ) $D_6$ -कारणै ( for °णे ) $G_4$ स्वास्थ्यं ब्राह्मणकारणम् ( for $^b$ ) — ( L 977 ) $B_3$ Ds $G_4$ विरूपैश् ( for विकारैश् ) — ( L 978 ) $D_4$ -रूप ( for -रूपैः ) $K_2$ घोररूपः स गम्भीरैः ( for $^a$ ). — ( L 979 ) Ds नेत्रे ( for नेत्रं ) $K_3$ $D_1$ समुद्वहन् ( for °द्धरन् ) — ( L 980 ) $D_3$ युगपत्कुर्वते नादान् ( for $^a$ ). $D_5$ भञ्जमाना: ( for जृम्भमाणा ) — ( L 981 ) Poona ed G(ed ) वायुरूपस् ( for बहुरूपास् ) — ( L 983 ) $K_{1-3}$ $D_4$ ( *sup lin* as above ) चाश्रमं , $B_{1\,3}$ $G_4$ च ततः , $D_1$ स्वाश्रमं ( for च समं ). — ( L 984 ) $K_4$ Dn $D_{2\,5}$ कण्ठे तु , $D_6$ ( marg ) कर्णेषु ( for कण्ठेषु ) — ( L 985 ) $D_5$ व्याहरन्तो ( for °रन्ति ) — ( L 986 ) $\tilde{N}_2$ नतान्, $B_2$ युता. ( for नताः ). — ( L 987 ) $B_3$ योगस्यान्ते ह्यविघ्नत ( for $^b$ ) — ( L 988 ) $K_4$ $D_{2\,5}$ चरन्ति , Dn G(ed ) तरन्ति ( for रमन्ति ) — ( L 989 ) $V_3$ एभिर् ( for एतैर् ) $B_3$ बहुभिर्, $D_4$ संघृतैर् ( for संवृत्तैर् ) $B_1$ Cal ed एभिर्विकारैर्बहुभिर् ( for $^a$ ) — ( L 990 ) $\tilde{N}_2$ $V_{1\,3}$ हि द्विजः ; $G_4$ वै द्विज ( for ब्राह्मणः ) — Before line 991, $D_1$ ins वैशंपायन — ( L 991 ) $Ds_1$ $D_2$ $G_3$ ज्ञेया ( for [आ]ग्नेया ) $K_2$ तदर्चिषवता ज्ञेया ( for $^a$ ) — ( L 992 ) $D_3$ तेजोरूपं तमैश्वर्यं ( for $^a$ ) B Ds $G_4$ जातास्ते ( for जनिता ) $V_{1\,3}$ Dn $D_{2\,4}$ ( *sup lin* ) $_5$ तेज ( for जल- ) — ( L 993 ) $B_2$ $D_6$ ज्योतिषा ( for ज्योतींषि ) $K_2$ -संवृत्य ( for °त्ता ) G(ed ) आकाशमुपसंगता ( for $^b$ ) — ( L 995 ) $B_1$ बलम् , $B_3$ गणम् ( for घनम् ) $K_4$ Dn $G_{3\,4}$ ज्योति. सघनमुत्तमम् ; $V_3$ ज्योतिः संज्ञान° , $D_2$ ज्योतिस्तद्वारमु° ( for $^b$ ) — ( L 996 ) $B_{1,3}$ Cal. ed. विराजते ( for विभ्रा° ). — ( L. 997 ) $K_{1,3}$ $D_{1,4,6}$

अलोभाच्छिद्यते सद्यो वेपमानोऽनुकीर्त्यते ।
सीदते वसुधामध्ये भिद्यमानः पुनः पुनः ॥
भूतानां बहुरूपैश्च अन्यैश्च तलवासिभिः । [1005]
विषयैर्युज्यते क्षिप्रं संक्षेपात्संप्ररुध्यते ॥
मूर्तिमद्भिश्च बहुधा धातुभिः स च हन्यते ।
शक्तितोमरनिस्त्रिंशैर्गदाभिश्चाप्यनेकशः ॥
असिभिः पात्यते चैव क्षुरधारैः सहस्रशः ।
भिद्यते चैव बाणाग्रैः सुतीक्ष्णैर्मर्मभेदिभिः ॥ [1010]
एभिर्विकारैः सकलैर्निरुद्धैश्चापि सर्वशः ।
ध्रुवमैश्वर्यमापन्नः सिद्धो भवति ब्राह्मणः ॥
ततः पार्थिवमैश्वर्यं निर्मुक्तस्य विकारतः ।
प्रादुर्भवति युञ्जाने समाधौ प्रलयं गते ॥
दिव्यं तन्द्गधमाघ्राति दिव्यार्थांस्ताञ्शृणोति च । [1015]
दिव्यरूपैश्च पुरुषैर्भिद्यते न च छिद्यते ।
गच्छन्प्रकृतितोऽनन्तः प्रधानात्मा क्षरन्निव ॥

Colophon.

वैशंपायन उवाच ।

ततोऽन्यां धारणां गत्वा मनसा स पितामहः ।
ब्रह्मकर्मसमारम्भं निर्मुक्तेनान्तरात्मना ॥
सर्वाङ्गधारणां कृत्वा मनसा प्रहसन्निव । [1020]
ब्रह्मयोगेन योगज्ञः सृजते मनसा प्रजाः ॥
मनसा रूपसंपन्ना ह्यप्सराः सृजते प्रभुः ।
नासिकाग्राच्च गन्धर्वान्सुचित्राम्बरवाससः ॥
तुम्बुरुप्रमुखान्सर्वाञ्शतशोऽथ सहस्रशः ।
नृत्यवादित्रकुशलान्कुशलान्सामगीतये । [1025]
ब्रह्मयोगेन योगज्ञः स्वयंभूर्भगवान्प्रभुः ॥
चारुनेत्रां सुकेशान्तां सुभ्रूं चारुनिभाननाम् ।
पद्मेन शतपत्रेण चारुणा सुविराजिताम् ।

---

ऋतवो ( K3 D1 अयने ) वत्सराण्यथ ( for $^b$ ) — ( L 998 ) D3 कला काष्ठा ( for कला. काष्ठास् ) — ( L 1001 ) G3 सविकारं ससमवम् ( for $^b$ ) — ( L 1002 ) D6 ( marg ) योगयुक्तो विकारैस्तै ( for $^a$ ) K1 यान्त्यन्ते ह्यबलाशनात्, D2 पच्यन्ते ह्यबलासनात् ( for $^b$ ) — ( L 1003 ) B3 Cal ed. लोके ( for सद्यो ) V1 3 अलोकाच्छिद्यते लोके ( for $^a$ ). — ( L 1005 ) K1-3 बल-, V3 D3 वन- ; D4 बलि-, G4 जल- ( for तल- ) — ( L 1006 ) K3 बुध्यते, D1 बाध्यते ( for युज्यते ) — After line 1006, K1 2 Ñ2 B1. 2 D4 6 ins :

47** ततः पार्थिवमैश्वर्यं सेवमानश्च सर्वत. ।

— B3 om lines 1007-1012 K2 om ( hapl ) lines 1009$^a$-1011$^a$ — ( L 1109 ) K1 3 Dn Ds1 D1 6 पाठ्यते ( for पात्यते ) Ñ2 V1. 3 D6 तीक्ष्ण- ( for क्षुर- ) — D6 om ( hapl ) lines 1010-1011. — ( L. 1010 ) Ds बाणौघैः ( for बाणाग्रैः ) — ( L 1011 ) K4 V1 3 B1 Dn D2 3 5 G3 4 निर्वृत्तैर्, B2 संवृत्तैर्, Ds निवृत्तैर् ( for सकलैर् ) Dn संवृतश् ( for निरुद्धैश् ) — V3 om line 1013 —( L 1013 ) K2 3 D1 4 नियुक्तस्य, D3 विमु° ( for निर्मु° ) — ( L 1014 ) K3 D1 6 युक्तात्मा, Dn D2 संजाते, D5 युञ्जानो ( for °ने ) — ( L 1015 ) Dn Bom Poona eds G(ed) दिव्यं गन्ध समाघ्राय ( Dn °ति ) ( for $^a$ ) — ( L 1016 ) B1 3 G3 4 विविधैर् ( for पुरुषैर् ) Ñ2 विद्यते न च भिद्यते, V1 3 छिद्यते न स भिद्यते, D3 भज्यते न च भिद्यते ( for $^b$ ).— ( L 1017 ) K3 D1 गच्छता प्रकृतिं चोक्तः, K4 Dn D5 गच्छन्सुकृतिना चान्त , D3 गच्छन्ति प्रकृतेरन्त, D6 गच्छंश्च प्रकृतिं स्वां तु ( for $^a$ ). K3 D1 क्षय गतः ( for क्षरन्निव )

Colophon. — *Mention of the Epic* Ds2 — *Mention of Khila* K1 V1 3 B Ds D1 4 — *Sub-parvan* K1. 2 D4 5 पौष्करप्रादुर्भाव , K3 Dn2 पुष्करम् ; K4 V3 प्रादुर्भाव , Ñ3 V1 B Ds D2 3 6 G3 पौष्करम्, Dn1 D1 पुष्करप्रादुर्भावः — *Adhy no* K3 ( marg ) D1 93 , V3 206 , Dn 13 , Ds2 204 , D3 4 220 , G3 346 , G4 144

( L 1019 ) Dn1 Ds1 D3 6 Cal ed समारम्भ- ( for °रम्भं ). K1 2 D4 नियुक्तेन, Cal ed निर्यु° ( for निर्मु° ) — G4 om line 1020 — ( L 1020 ) G3 सर्वां च ( for सर्वाङ्ग ) B1 Ds D1 -धारणं ( for °णा ) Ñ2 V1 गत्वा ( for कृत्वा ). V3 सर्वाङ्गे धारणं कृत्वा ; D3 सर्वाः स धारणा गत्वा ( for $^a$ ) — ( L 1021 ) K4 Ñ2 B3 ब्रह्मज्ञ. ( K4 °ज्ञं ); Dn च ब्रह्मा, D2 ब्रह्मात्मा, D3 ब्रह्मस्थः ( for योगज्ञः ) — ( L 1022 ) K1 2 B2 3 Dn Ds2 D4 ( marg as above ) G3 चक्षुषा , D3 6 G4 चक्षुषो ( for मनसा ) D5 मनसा ( marg. चक्षुषा ) रूपमापन्ना ( for $^a$ ) Ñ2 om lines 1022$^b$-1023$^a$. — ( L 1023 ) Ds1 नासिकायां, G3 °कायाश् ( for °काग्राच् ) K3 4 D1 संपन्ना , D2 संपन्नान् ( for गन्धर्वान् ) D5 नासिकाग्रात्सुसंपन्ना ( for $^a$ ) — ( L 1025 ) V3 -गन्धर्वान्, D5 -कुशला. ( for °लान् ) K1 2 B2 Dn D4 G3 4 -गीतिषु ; D6 -गायने ( for -गीतये ) Ñ2 सामगा गीतये तदा, V1 सामगा-

धर्म्यां शुचिगिरं सेव्यां ब्राह्मीं मूर्तिमतीं श्रियम् ॥
ससृजे मनसा ब्रह्मा सम्यक्प्रोक्तेन चेतसा । [ 1030 ]
भावयोगेन भूतात्मा सर्वप्राणभृतां नृप ॥
चक्षुषा रूपसंपन्नाः सृजन्सोऽप्सरसः प्रभुः ।
नासिकाग्राच्च गन्धर्वान्सुवाचः सुप्रवादितान् ॥
गानप्रभाषं सचक्रे गन्धर्वाणां विशेषतः ।
अन्येषां चैव विप्राणां गानं ब्रह्मप्रभावितम् ॥ [ 1035 ]
पद्भ्यां सृजति भूतानि गतिमन्ति ध्रुवाणि च ।
नरकिंनरयक्षांश्च पिशाचोरगराक्षसान् ॥
गजान्सिंहांश्च व्याघ्रांश्च मृगांश्चैव सहस्रशः ।
तृणजातीश्च बहुधा भावहेतोश्चतुष्पदान् ॥
ये तु हस्तान्निखादन्ति कर्मप्राप्तेन हेतुना । [ 1040 ]
हस्तेभ्यः कर्म स सृजन्मन्तव्यं मनसा तथा ॥
पायुना स विसर्गं च भूतानां सुखमिच्छताम् ।
उपस्थेन तथानन्दं पञ्चेन्द्रियसमाधिना ॥
हृदयादसृजद्गावो बाहुना पक्षिणस्तथा ।
अन्यानि चैव सत्त्वानि तैस्तैर्वेषैः पृथग्विधैः ॥ [ 1045 ]
ऋषिं त्वङ्गिरसं चैव मुनिं ज्वलिततेजसम् ।
ब्रह्मवंशकरं दिव्यं व्यतिरिक्तषडिन्द्रियम् ॥
भ्रुवोऽन्तरे जनयते योगाद्योगीश्वरः प्रभुः ।
ब्रह्मवंशकरं दिव्यं भृगुं परमधार्मिकम् ॥
ललाटदेशादसृजन्नारदं प्रियविग्रहम् । [ 1050 ]
सनत्कुमारं मूर्ध्नश्च महायोगी पितामहः ॥
अभिषिक्तं च सोमं च यौवराज्ये पितामहः ।
ब्राह्मणानां च राजानं शाश्वतं रजनीचरम् ॥
तपसा महता युक्तो ग्रहैः सह पुरःसरः ।

---

न्साम गीयते ( for $^b$ ) — ( L 1026 ) V3 सृजते मनसा प्रजा- ( for $^b$ ) — ( L 1027 ) K1 2 D4 सुभ्रुं पद्म-, D3 शुभा चारु-, D6 ( marg ) सुभ्रूं शशि-, G3 पूर्णचन्द्र, G(ed) सुभ्रूं चन्द्र- ( for सुभ्रू चारु ) K3 सुभ्रूं चारुतराननाम् ( for $^b$ ) — ( L 1028 ) D3 शुभ्र- ( for शत- ) K2 D4 करेण ( for चारुणा ) V3 सुविभूषिताम्, B1 3 च विराजि°, D1 सुविराजता ( for °जिताम् ) — ( L 1029 ) K4 B2 Dn स्वक्षां, D3 रम्या ( for धर्म्यां ) D2 5 स्वक्षा शुचिगिरां सेव्या, G3 4 रम्या शुचिस्मिता सेव्या ( for $^a$ ) — K2 om lines 1030–1036 — ( L 1030 ) K3 D1 6 सोऽसृजन्, K4 सृजते, B1 3 G3 असृजन्, Ds स सृजन् ( for ससृजे ) — ( L 1031 ) G3 योगात्मा ( for भूतात्मा ) G3 4 वर ( for नृप ) — ( L 1032 ) B2 Dn G4 चक्षुषो ( for °षा ) V1 3 D6 सृष्ट्वा ( for सृजन् ) Ñ2 ससृजे सोऽप्सराः प्रभुः, D3 सृजतेऽप्सरस पुनः, D6 असृजत्सोऽप्सरां प्रभु ( for $^b$ ). — ( L 1033 ) संपन्नान् ( for गन्धर्वान् ) Dn Bom Poona eds G(ed) सुवासः ( for °च ) K3 D1 4 6 सुप्रवादिनः ; D2 सुप्रसा( *sup lin* °वा )दितान् ( for सुप्रवा° ) G3 असृजत्सप्त सादिन ( for $^b$ ) — ( L 1034 ) K1 Ds1 D3 -प्रभाव, Ñ2 B2 °षां, B3 Cal ed °स ( for °षं ) V1 3 गानप्रभाषा चक्रे च, Ds1 D6 गानं प्रभावं ( D6 °षां ) संचक्रे ; D2 गानप्रभाषणं चक्रे, G3 गानप्रशंसां चक्रे वै ( for $^a$ ). Dn Bom Poona eds G(ed) अशेषत. ( for विशे° ) — ( L 1035 ) K1 अन्योन्यं ( for अन्येषां ) G4 ज्ञान ( for गान ) B2 विप्र- ( for ब्रह्म- ) K3 D4 6 ( marg ) -सुभाषितम्, B1 3 Ds -प्रकाशि° ( for -प्रभावि° ) — ( L 1038 ) K4 विशेषत ( for सहस्रश. ). — ( L 1039 ) Ñ2 Ds बहुला ( for °धा ). — ( L. 1040 ) D1 6 G3 हस्तेन ( for हस्तान्नि ) — ( L 1041 ) D3 हस्तेन ( for °भ्य ) Ñ2 सृजते, V3 B3 Dn D6 ससृजे ( for स सृजन् ) B1 हस्तेभ्य संसृजन्कर्म, Ds °भ्य· कर्ममसृजत् ; G3 4 °न कर्म ससृजे ( for $^a$ ) K3 सुरूपं, G3 कर्तव्यं ( for मन्तव्यं ), — ( L 1042 ) K4 विसर्गंस्, Dn2 °र्गं च ( for °र्गं च ) Ñ2 वायूनामविसर्गं च, D3 पायुना स विसर्गांश्च ( for $^a$ ) — ( L 1043 ) K1 2 D4 समानन्दं, Ñ2 B2 D3 6 G3 4 तदा° ( for तथा° ) K3 उपास्थिते तदानन्दे, K4 D2 5 उपस्थं च ( K4 °स्थानं ) तदानन्द, Dn D3 Bom Poona eds G(ed) उपतस्थे ( D3 °स्थेन ) तदा°, D1 °स्थितवदानन्दं D1 ( marg ) °स्थाने तथा नादं ( for $^a$ ) G3 4 -समाधिमान् ( for °धिना ). — ( L 1044 ) V1 3 B Ds गा वै ( for गावो ). V3 B1 3 बाहुभ्यां, D1 °त· ( for °ना ) — ( L 1045 ) K1. 4 Ñ2 V1 B Dn2 Ds D2 5 6 ( marg ) अब्जानि, K3 आत्मना ( for अन्यानि ) D3 सर्वाणि ( for सत्त्वानि ) K3 विषयैस्तैः, K4 तैस्तैर्बोधै., V1 3 तैस्तैर्देशै., D3 तैर्विशेषै ( for तैस्तैर्वेषै ) B1 वेषैस्तैस्तै पृथग्विधै. ( for $^b$ ) — ( L 1046 ) Ñ2 V1 3 Dn D3 ज्वलन ( for ज्वलित ) — ( L 1047 ) K4 B1 om ( hapl. ) lines 1047$^b$–1049$^a$ Bom Poona eds G(ed) व्यतिषिक्त- ( for °रिक्त- ) — ( L 1048 ) K1 V1 Ds1 भ्रुवोरन्तरे जनयते ( hympermetric ), K3 °रन्तरजनयद्, B2 D1 °रन्तरेण जनयद् ( hypermetric ), D3 भ्रुवोऽन्तरेण जनयन् ( for $^a$ ) K3 V1 B2 3 Dn D3 6 G3 4 योगेश्वरः ( for योगी° ) — ( L 1050 ) K3 4 Ñ2 V1 3 B Dn Ds D1–3 5 6 G3. 4 -मध्याद् ( for -देशाद् ) K3 D1 दर्शनम् ( for विग्रहम् ). G3 4 नारदं विग्रहप्रियम् ( for $^b$ ).—( L 1051 ) K2 D1. 3 मूर्ध्नि

चचार नभसो मध्ये प्रभाभिर्भासयञ्जगत् ॥ [ 1055 ]
स गात्रैर्मनसा योगान्भगवान्सिद्धिमागतः ।
सृष्टवान्सर्वभूतानि स्थावराणि चराणि च ॥
तत्र स्थानानि भूतानां योगांश्चैव पृथग्विधान् ।
व्यधत्त शतशो ब्रह्मा सर्वभूतपितामहः ॥
एष ब्रह्ममयो यज्ञो योगः सांख्यश्च तत्त्वतः । [ 1060 ]
विज्ञानं च स्वभावं च क्षेत्रं क्षेत्रज्ञमेव च ॥
एकत्वं च पृथक्त्वं च संभवो निधनं तथा ।
कालः कालक्षयश्चैव ज्ञेयो विज्ञानमेव च ॥

Colophon

जनमेजय उवाच ।

श्रुतं ब्रह्मयुगं ब्रह्मन्युगानां प्रथमं युगम् ।
क्षत्रस्यापि युगं ब्रह्मञ्श्रोतुमिच्छाम्यहं प्रभो ॥ [ 1065 ]
ससंक्षेपं सविस्तारं नियमैर्बहुभिश्चितम् ।
उपायज्ञैश्च कथितं क्रतुभिश्चैव शोभितम् ॥

वैशंपायन उवाच ।

एतत्ते कथयिष्यामि यज्ञकर्मभिरर्चितम् ।
दानधर्मैश्च विविधैः प्रजाभिरुपशोभितम् ॥
तेऽङ्गुष्ठमात्रा मुनय आदत्ताः सूर्यरश्मिभिः । [ 1070 ]
मोक्षप्राप्तेन विधिना निराबाधेन कर्मणा ॥
प्रवृत्ते चाप्रवृत्ते च नित्यं ब्रह्मपरायणाः ।[1]
परायणस्य संगम्य ब्रह्मणस्तु महीपते ॥
श्रीवृताः पावनाश्चैव ब्राह्मणाश्च महीपते ।
चरितब्रह्मचर्याश्च ब्रह्मज्ञानेन बोधिताः ॥ [ 1075 ]
पूर्णे युगसहस्रान्ते पूर्वं ये प्रलयं गताः ।
ब्राह्मणा वृत्तसंपन्ना ज्ञानसिद्धाः समाहिताः ॥
व्यतिरिक्तेन्द्रियो विष्णुर्योगात्मा ब्रह्मसंभवः ।
दक्षः प्रजापतिर्भूत्वा सृजते विमलाः प्रजाः ॥
अक्षराद्ब्राह्मणाः सौम्याः क्षरात्क्षत्रियबान्धवाः । [ 1080 ]
वैश्या विकारतश्चैव शूद्रा धूमविकारतः ॥

---

च, $K_4$ $D_{2\ 5}$ च मूर्ध्नि, $\tilde{N}_2$ $V_1$ $Dn_2$ मूर्ध्ना च ( for मूर्ध्नश्च ). —( L 1052 ) $K_1$ $D_{4\ 6}$ Cal ed अभिषिच्य ( for °षिक्त ) $K_2$ अभिषिच्यत सोमं च, $D_{1\ 5}$ °क्तवान्सोमं च ( for $^a$ ) —$B_1$ om ( hapl ) lines 1053–1059 —( L 1053 ) Ds $D_3$ रजनीकरम्, Bom Poona eds G(ed) °नीश्वरम् ( for °नचिरम् ). —( L 1054 ) $Ds_1$ G(ed) ग्रह- ( for सह ) $K_{1\ 4}$ Dn $D_{2\ 4\ 5}$ निशाकर, $K_3$ $V_{1\ 3}$ $D_1$ पुरंदर, $D_6$ पुर सरम् ( for °सर ) $Ds_2$ निर्जगाम ग्रहै सह ( for $^b$ ) —( L 1056 ) $K_{2\ 4}$ $D_{2\ 5}$ अथातो ( for स गात्रैर् ) $D_3$ अन्यान् ( for योगान् ) $Dn_2$ स्वगात्रैर्भगवान्वेगान् ( for $^a$ ) —( L 1057 ) $K_4$ Dn $D_{2,5}$ ससृजे, $D_3$ सृष्ट्वा च ( for सृष्टवान् ) —( L 1059 ) $K_{1-3}$ $D_{1\ 4\ 6}$ व्यदधच्; $B_3$ विधत्ते ( for व्यधत्त ) Dn $D_2$ -लोक- ( for -भूत- ) —( L 1062 ) Cal ed संभव ( for °वो ). —( L 1063 ) G(ed) कालविदां ( for °क्षयश् ) $D_1$ G(ed) ज्ञेयं ( for ज्ञेयो ).

Colophon — *Mention of the Epic* $Ds_2$. — *Mention of Khila* $K_1$ $V_{1\ 3}$ B Ds $D_{1\ 3\ 4}$ — *Sub parvan* $K_{1\ 2\ 4}$ $\tilde{N}_2$ $V_{1\ 3}$ B Dn $D_{2\ 4\ 6}$ $G_3$ पौष्करम्, $K_3$ पुष्करम्, $D_{1\ 3\ 5}$ पौ( $D_1$ पु )ष्करप्रादुर्भावः — *Adhy no* $K_3$ $D_1$ 94; $V_3$ 206, Dn 14, $Ds_2$ 205, $D_3$ 221, $D_4$ 201, $G_3$ 347, $G_4$ 345

( L 1064 ) $D_4$ ब्रह्ममयं, $D_6$ ( marg ) °पुरं ( for °युगं ) $D_2$ परमं ( for प्रथमं ). —( L 1065 ) $B_{1\ 3}$ Ds $D_6$ तत्त्वत ( for [अ]हं प्रभो ) —( L 1066 ) $D_2$ ससंख्येयं ( for °क्षेप ) $V_3$ ससंहारं ( for सविस्तारं ) $K_3$ $D_1$ नियमैर्ब्रह्मभिः श्रुतम्; $G_3$ °मे बहु चिन्तितम् ( for $^b$ ) — $G_4$ om ( hapl ) line 1067 —( L 1067 ) B $D_6$ Cal ed [उ]प- ( for [ए]व ). $V_3$ क्रतुभिश्चोपसेवितम् ( for $^b$ ) — $K_3$ om ( hapl ) lines 1068–1069 with the ref $G_4$ om the ref —( L. 1068 ) $G_4$ अन्वितम् ( for अर्चि° ) —( L 1069 ) Ds बहुभिः ( for विविधै ) —( L 1070 ) $K_3$ भुज्यमाना ( for ऽङ्गुष्ठमात्रा ) $V_{1\ 3}$ आयाता; $D_3$ आवृताः; $D_4$ ( marg as above ) आदित्या, Bom ed अर्दिता ( for आदत्ताः ) —( L 1071 ) $K_4$ धर्मिणा ( for कर्मणा ) —( L 1072 ) $K_3$ $D_{1\ 5}$ निवृत्ते ( for [अ]प्र° ) $K_4$ $D_{2\ 5}$ यज्ञ- ( for ब्रह्म- ) —( L 1073 ) $K_2$ $D_{1\ 4}$ परायणं च, Ds $D_5$ °णस्तु ( for °णस्य ) $D_6$ संगत्या ( for °म्य ) — $K_{1\ 2\ 4}$ $D_{1\ 2\ 4\ 5}$ om ( hapl. ) line 1074. —( L 1074 ) $B_2$ Ds $D_3$ $G_4$ श्रीवृत्ताः ( for °ताः ) $\tilde{N}_2$ $V_{1,3}$ श्राविता ( $\tilde{N}_2$ सुवृत्ता ) मुनयश्चैव, $D_6$ श्री( *inf lin* स्त्री )वृत्ताः परमाश्चैव, $G_3$ श्रीवृत्ता ब्राह्मणाश्चैव ( for $^a$ ) —( L 1075 ) $K_{1,4}$ $B_2$ G(ed) चरित, Cal. ed चारित- ( for च° ) $B_2$ ज्ञानाव ( for -ज्ञानेन ) $K_3$ $D_1$ तोषिता., $D_3$ शोधिता ( for बो° ) —( L 1076 ) $V_{1\ 3}$ B Ds $D_{3\ 6}$ $G_{3\ 4}$ प्रभावे ( for पूर्वं ये ) $K_{2\ 3}$ $D_{1\ 4}$ प्रभावे विलय गता., $\tilde{N}_2$ प्रभावे प्रलयं गते ( for $^b$ ) —( L 1077 ) Bom Poona eds G(ed) वित्त ( for वृत्त- ) $D_6$ ब्रह्मणा चि( *sup lin.* वृ )त्तसंपन्ना ( for $^a$ ) $\tilde{N}_2$ सिद्धा वृद्धा, $V_3$ $G_{3\ 4}$ ज्ञानवृद्धाः ( for °सिद्धाः ). —( L 1078 ) $\tilde{N}_2$ व्यतिरिक्तेन्द्रियैर्विष्णुर् ( for $^a$ ). — $K_3$

श्वेतलोहितकैर्वर्णैः पीतैर्नीलैश्च ब्राह्मणाः ।
अभिनिर्वर्तिता वर्णाश्चिन्तयानेन विष्णुना ॥
ततो वर्णत्वमापन्नाः प्रजा लोके चतुर्विधा ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव महीपते ॥ [ 1085 ]
एकलिङ्गाः पृथग्धर्मा द्विपदाः परमाद्भुताः ।
यातनायाभिसंपन्ना गतिज्ञाः सर्वकर्मसु ॥
त्रयाणां वर्णजातानां वेदप्रोक्ताः क्रियाः स्मृताः ।
तेन वा ब्रह्मयोगेन वैष्णवेन महीपते ॥
प्रज्ञया तेजसा योगात्तेन प्राचेतसः प्रभुः । [ 1090 ]
विष्णुरेव महायोगी कर्मणामन्तरं गतः ॥
ततो निर्माणसंभूताः शूद्राः कर्मविवर्जिताः ।
तस्मान्नार्हन्ति संस्कारं न ह्यत्र ब्रह्म विद्यते ॥
यथाग्नौ धूमसंघातो ह्यरण्या मथ्यमानया ।
प्रादुर्भूतो विसर्पन्वै नोपयुज्यति कर्मणि ॥ [ 1095 ]
एवं शूद्रा विसर्पन्ते भुवि कार्त्स्न्येन जन्मना ।
नासंस्कृतेन धर्मेण वेदप्रोक्तेन कर्मणा ॥
ततोऽन्ये दक्षपुत्रास्तु संभूता धर्मयोनयः ।
बलवन्तो महोत्साहा महावीर्या महौजसः ॥
पित्रा प्रोक्ता महात्मानो दक्षेणायज्ञकर्मणा । [ 1100 ]
अन्तमिच्छाम्यहं श्रोतुं धात्र्याः पुत्रोऽबलो ह्यहम् ॥
ततो विधास्ये तत्त्वज्ञः प्रजानां विपुलं बलम् ।
विपुलत्वाद्धि क्षेत्राणां ममापि विपुलाः प्रजाः ॥
न तेषां दर्शयेद्देवी चक्षुषा रूपमात्मनः ।
प्रजापतिसुतानां वै विपुलं सारमिच्छताम् ॥ [ 1105 ]
आत्मनो भावनिर्वृत्ते भाव्ये कृतयुगे तदा ।
जनित्री सर्वभूतानामण्डजानुद्भिदांस्तथा ॥
संवेदजननी धात्री चेति मात्रा प्रचोदिता ।
अणुतां तनुतां चैव जन्तूनां कर्मभागिनाम् ॥

Colophon.

D4 om lines 1079–1080 — (L 1079) Ñ2 V1 3 B D6 G3 4 विपुला (for विमलाः) D3 ससृजे विविधा. प्रजा (for $^{b}$) — (L 1080) K1 अक्षरा (for °राद्) K1 Ñ2 V1 3 Dn1 Ds2 D2 3 5 -संभवा (for -बान्धवा) K3 Ds1 D1 क्षत्रा (Ds1 °राः) क्षत्रियसंभवा (for $^{b}$) — (L 1081) K2 D4 [अ]धिकारतश्, D3 विकारजाश् (for °तश्). V1 3 Ds2 D1 3 धर्म- (for धूम-) — (L 1085) D3 विशां पते (for महीपते) — (L 1086) Ñ2 Ds Cal ed द्विपादा. (for द्विपदा) — (L 1087) K1 2 D1 4 यातनाभि. सुसंपन्ना (for $^{a}$) Ds1 प्रभिज्ञाः, D3 तितिक्षाः, D4 ज्ञातिज्ञा (for ग°) — (L 1088) K1 2 B2 D2–4 -जातीनां (for जातानां) — (L 1089) K1 Ñ2 V1 3 B Ds D2 3 6 ब्राह्मण-; Dn वो ब्रह्म-, G3 [ए]व ब्रह्म (for वा ब्रह्म-) — (L 1090) B1 चेतसा (for तेजसा). Ñ2 B3 युक्ता, D6 युक्तस्, G3 यत्तस् (for योगात्) K2 (before corr) स्मृतः; D3 प्रजा (for प्रभु) — (L. 1092) V1, 3 निर्वार्य; D4 निर्याण-, G3 द्युमणि- (for निर्माण-) — (L 1093) K1 2 Ñ2 V1 3 B2 3 D2 4–6 G4 सत्कारं; K4 सत्कर्म (for संस्कारं) Ds2 तस्मान्नार्हति सत्कार (for $^{a}$) B2 3 क्षत्रे (for ह्यत्र) K3 D1 क्षत्रं ब्रह्म च विद्यते (for $^{b}$) — (L 1095) G3 Bom Poona eds G(ed) -युञ्जन्ति (for -युज्यति) D1 कर्मणा (for °णि) — (L 1096) K4 विमुच्यन्ते, Ñ2 B1 2 Dn D3, 4 विसर्पन्तो (for °र्पन्ते) V1 तेजसा, V2 कर्मणा (for जन्मना) — (L 1099) K3 D1 महादक्षा (for महोत्साहा). — (L. 1100) K3 D1 महातेजा (for °त्मानो) K1 4 D1 3 6 यज्ञ- (for [अ]यज्ञ-) K3 दाक्षिणा याज्ञिया गिरा, Dn Ds1 D4 5 G3 4 दक्षिणा यज्ञकर्मणा, D3 दक्षेण यज्ञकर्मणि (for $^{b}$). — (L 1101) B1 3 Ds1 D3 6 G3 4 अन्यद् (for अन्तम्) K3 धातु (for धात्र्या). K1 2 4 B2 Dn Ds2 D1, 4 G3 4 पुत्रा (for पुत्रो) K4 धात्र्याः पुत्रा बलादहम्, B1 धात्रा यत्राचलो ह्यहम्, D5 धात्र्या पुत्र्याचलो ह्यहम्, D4 धात्र्याः पुत्रोऽबलो ह्यहम् (marg विलोक्यताम्) — (L 1102) K4 विधाय (for °स्ये) G3 4 तत्त्वज्ञाः (for °ज्ञ.) D5 ततो विधाय तत्त्वज्ञा (for $^{a}$) — Ds om line 1103 — (L 1104) K1-3 Ñ2 V1 3 Ds D1 3 4 दर्शनं, Dn D5 G3 4 दर्शयद् (for °येद्) — (L 1105) K1 2 Ñ2 V1, 3 B2(marg) 3 Dn D1 2 4–6 विपुलासारम्, B1 2 Ds Cal ed °लामानम्, G4 °लं घोरम् (for °लं सारम्). K4 विपुलासारमिच्छता (for $^{b}$) — (L 1106) Ñ2 V3 Dn भावे, D3 5 भव्ये (for भाव्ये) — (L 1107) B1 D3 जननी (for जनित्री) K4 Ñ2 B Dn Ds2 D4–6 उद्भिजांस् (for °दांस्) D3 असृजन्त द्विजांस्तदा, G3 अण्डजानां ततो हिता. (for $^{b}$) — (L 1108) K1, 3 V1, 3 Ds D1 G4 संस्वेद- D3 तां वेद- (for संवेद-). Ñ2 Ds D2 चेति धात्रा; D3 चिन्त्यमाना (for चेति मात्रा) K3 प्रकीर्तिता (for प्रचोदिता) — (L 1109) K1 D4 अण्डतां K3 अत्र तां, V1 अन्वेतां, V3 अथैतां; D1 अत्रैतां (for अणुतां) K2 अण्डतां चातुलां चैव (for $^{a}$). V1 जनुषां, G3 जनित्री (for जन्तूना) K1–3 D1, 4 -भाजिनाम्, B1 Dn

जनमेजय उवाच ।

साध्वहं श्रोतुमिच्छामि त्रेतायां ब्राह्मणोत्तम । [ 1110 ]

यं ज्ञात्वा सर्वविद्यानां परं पश्येयमव्ययम् ॥

वैशंपायन उवाच ।

दक्षस्तु पुनरालम्ब्य स्त्रीभाव पुरुषोत्तमः ।

योगाद्योगेश्वरात्मानं निषण्णो गिरिमूर्धनि ॥

सुजानुः पीनजघना सुभ्रूः पद्मनिभानना ।

रक्तान्तनयना कान्ता सर्वभूतमनोरमा ॥ [ 1115 ]

दक्षः प्राचेतसस्तस्यां कन्यायां जनयत्प्रभुः ।

देहाद्धि योगविधिना कन्याः पद्मनिभाननाः ॥

दक्षः पुरुषरूपेण स्त्रीरूपमपहाय च ।

दर्शने सर्वभूतानां कान्तः कान्ततरोऽभवत् ॥

ताः कन्याः प्रददौ दक्षः स्वयं प्राचेतसः प्रभुः । [ 1120 ]

ब्रह्मदेयेन विधिना ब्रह्मप्राप्तेन भारत ॥

प्रददौ दश धर्माय कश्यपाय त्रयोदश ।

सप्तविंशति सोमाय पत्नीहेतोः समाहितः ॥

दक्षो दत्त्वाथ ताः कन्या ब्रह्मक्षेत्रं प्रपद्यत ।

ब्रह्मणाध्युषितं पुण्यं समाहितमना मुनिः ॥ [ 1125 ]

तप्यमानो मृगैः सार्धं चचार वसुधां नृप ।

तृणमूलफलैर्वृद्धो वृद्धश्च तपसासकृत् ॥

मृगास्तु तस्य मोदन्ति फलं मोदन्ति ब्राह्मणाः ।

दीक्षिताः पुण्यकर्माणस्तपसा दग्धकिल्बिषाः ॥

संग्रामकाले कालज्ञः शरीराधिपतिर्मुनिः । [ 1130 ]

कर्मयज्ञकृतां तात सिद्धिं पश्यति लक्षणाम् ॥

दानमानप्रवीराश्च निरुद्वेगा निरामिषाः ।

मृगैः सह जरां यान्ति सपत्नीकाः सपुत्रिणः ॥

ब्राह्मणाः स्तोत्रसंसिद्धा जनित्रे प्रथमे पदे ।

ब्राह्मणाध्युषितत्वाच्च ब्रह्मक्षेत्रमिहोच्यते ॥ [ 1135 ]

यतिभिः कर्मनिर्मुक्तैर्जितक्रोधैर्जितेन्द्रियैः ।

चरद्भिर्वसुधां विप्रैर्निष्किंचनपथैषिभिः ॥

---

-भोगिनाम्, $B_2$ Poona ed -योगि° ( for -भा° )

Colophon om in $D_1$ — *Mention of the Epic* $Ds_2$. — *Mention of Khila* $K_1$ $V_{1\,3}$ B $Ds_1$ $D_4$ — *Sub-parvan* $K_{1\,2\,4}$ $\tilde{N}_2$ $V_{1\,3}$ B $Ds_2$ $D_{2\,3\,5\,6}$ $G_3$ पौष्करम्; $K_3$ $Dn_2$ पुष्करम्, $Dn_1$ पुष्करप्रादुर्भाव, $Ds_1$ $D_4$ पौष्करप्रादुर्भाव· — *Adhy no* $K_3$ (marg) 95, $V_3$ 207, Dn 15, $Ds_2$ 206, $D_3$ 222, $D_4$ 292, $G_3$ 341, $G_4$ 346

(L 1110) $K_1$ त्रेतां च ब्रह्मणोत्तमम्, $D_3$ त्रेतायां ब्राह्मणोत्तमान् (for $^b$) — (L 1111) $K_{2\,3}$ $D_{2\,6}$ $G_{3\,4}$ यज् (for य) $K_4$ $V_1$ $D_5$ -भूतानां (for -विद्यानां) $D_3$ यज्ञार्थं सर्वभूतानां (for $^a$) $V_3$ $D_6$ पारं (for परं) Cal ed अव्यय (for °यम्) $D_3$ परं पश्येद्यथाव्ययम्, $D_5$ विद्याना परमव्ययम् (for $^b$) — (L 1113) $D_3$ योगात्मना तथात्मान; $D_6$ योगाद्योगेश्वरात्मा हि (for $^a$) $K_2$ निष्पन्नो, $V_3$ $B_{2\,3}$ Dn $D_2$ विषण्णो (for नि°) $\tilde{N}_2$ -सानुषु (for -मूर्धनि) — (L 1114) $K_3$ $D_1$ सुजात- (for °नु·). $K_2$ $D_4$ शुभ्रा (for सुभ्रू) — (L 1115) $D_3$ $G_3$ -मनोहरा, $D_6$ हिते रता (for -मनोरमा) — After line 1115, $D_6$ ins

48** मनोरमा महाभागा चिन्तयात्मानमात्मना ।

— (L 1116) $Dn_2$ $Ds_1$ जनयन् (for °यत्) $K_3$ $D_1$ कन्यामजनत्प्रभु (for $^b$) — (L 1117) Dn $D_{2\,3}$ देहार्धे- (for °द्धि) $G_{3\,4}$ -निभेक्षणा. (for -निभानना·) — (L 1118) $K_3$ दक्षस्तु पुरुषो राजन् (for $^a$) $D_3$ अपहार्य (for °हाय) — (L 1119) $V_1$ $B_1$ $D_{5\,6}$ कान्तात् (for कान्त·) — (L. 1121) $D_3$ ब्रह्मज्ञो येन विधिना (for $^a$) $D_3$ $G_{3\,4}$ चेतसा (for भारत) — (L 1122) $D_3$ ददौ स (for प्रददौ) — (L 1123) $K_3$ चतस्रोऽरिष्टनेमिने (for $^b$) — (L 1124) $K_{2.4}$ $V_{1\,3}$ $B_3$ Ds $D_{2\,4\,6}$ प्रपद्य च, $\tilde{N}_2$ °द्य ह, $B_2$ $D_1$ °द्यते (for °द्यत). $K_3$ $B_1$ Dn $G_{3\,4}$ ब्रह्मक्षेत्रं प्रपद्य च, $D_3$ °क्षेत्रं प्रयुज्य च (for $^b$) — $G_2$ om (hapl) lines 1126–1130 — (L. 1127) G(ed) वृतश् (for वृद्धश्) — (L 1128) $K_{1.2}$ $D_4$ तस्याव- (for तु तस्य) Cal ed चरितं (for मोदन्ति) $D_3$ तथा; $D_6$ फलैर् (for फलं) — (L 1130) Dn $D_{2\,5}$ शरीरादि- (for °राधि-) $D_3$ नृप (for मुनिः) Cal ed शशिनाद्रियते मुनि (for $^b$) — (L 1131) $D_4$ तां च; $D_6$ तां तु (for तात) $K_1$ $D_3$ कर्म यज्ञः कृतां तां तां ($D_3$ °तं कर्म); $\tilde{N}_2$ धर्मयज्ञकृतां सिद्धिं (for $^a$) $V_{1\,3}$ Ds $D_{2\,4-6}$ पश्यन्ति; $G_3$ $G_3$ पश्यन्त्रि- (for पश्यति). $K_3$ लक्षणा· (for °णाम्). $K_{1\,2.4}$ $D_1$ सिद्धिं पश्यन्ति लक्षणात्, $\tilde{N}_2$ परां पश्यन्ति लक्षणाम् (for $^b$) — (L 1132) $K_4$ -प्रवीणाश्, $\tilde{N}_2$ $V_3$ -शरीराश् (for -प्रवीराश्) $K_1$ $D_4$ निरुद्धाङ्गा (for °द्वेगा) $K_3$ निराशिषः (for °मिषा·) $D_1$ निरुद्विग्ना निराशिष, $D_3$ °द्धाङ्गा निरामयाः (for $^b$) — (L 1133) $K_1$ सपुत्रिकाः, $\tilde{N}_2$ $V_{1\,3}$ $B_{1\,2}$ $D_{3.6}$ सपुत्रिण, Dn तपस्विन, $D_4$ सपुत्रका· (for °त्रिण). — (L. 1134) $D_3$ क्षुभिते (for जनित्रे) $\tilde{N}_2$ $V_{1\,3}$ जनिते प्रथमे तदा (for $^b$). — (L 1137) $V_3$ प्रीतैर् (for विप्रैर्). B Dn $D_{2.3\,5\,6}$ अकिंचन- (for निष्किं°) $K_4$ $\tilde{N}_2$ $V_{1.3}$ $D_3$

या प्रजा पूर्वमारूढा मानसी ब्रह्मचारिणी ।
सैवैषा व्यक्तिमापन्ना स्वभावदुरतिक्रमा ।
व्यक्ताव्यक्तगतिश्चैषा कालधर्मान्महीपते ॥ [ 1140 ]
स्थावरा जङ्गमाश्चैव स्थूलाः सूक्ष्माश्च भारत ।
कालयोगेन योगज्ञा भवन्ति न भवन्ति च ॥
एताश्चैताः प्रजाः सर्वा दक्षकन्यासु जज्ञिरे ।
कश्यपेनाव्ययेनेह संयुक्ताः कालधर्मणा ॥
आदित्या वसवो रुद्रा विश्वे च समरुद्गणाः । [ 1145 ]
नागाश्चानेकशिरसः साध्या वै पन्नगास्तथा ॥
गन्धर्वाः किनरा यक्षाः सुपर्णाश्च तथापरे ।
गरुत्मान्सह यक्षैश्च किनराश्च सुवाससः ॥
गावः पशुगणैः सार्धं नराश्च वसुधाधिप ।
धराधराश्च वसुधा धातारश्च धराधराः । [ 1150 ]
गजाः सिंहाश्च व्याघ्राश्च हयाः पक्षधरास्तथा ॥
खड्गा विषाणिनश्चैव वृषभाश्च मृगास्तथा ॥
चतुर्विषाणा नागेन्द्राः पद्माभा वर्णतः शुभाः ।
सर्वलक्षणसंपन्ना प्राणिनः कामरूपिणः ॥
तथारूपैस्तथागात्रैस्तैः शीलैस्तैः पराक्रमैः । [ 1155 ]
मुनयः पुनरुद्भूता धर्मक्षेत्रे सनातने ॥
क्षेत्रज्ञा मानुषे लोके धर्मिणो वेदगोचराः ।
यत्रोद्भूताः सुराः सर्वे दिवि लोके प्रतिष्ठिताः ॥
ये चान्ये तपसा सिद्धा गृहस्था मनुजाधिप ।
ब्रह्मचर्येण संसिद्धाः परिचर्या गता गुरोः ॥ [ 1160 ]
ये च योगगतिं प्राप्ताः सिद्धिहेतोर्महीपते ।
क्लेशाधिकैः कर्मजन्यैर्वृत्तिं लप्स्यन्ति वै द्विजाः ॥
शिलोञ्छवृत्तयः क्षान्ताः सपत्नीका दृढव्रताः ।
सर्वे त्वेते दिविचरा भवन्ति चरितव्रताः ॥

Colophon.

G3 4 अकिंचनपथैषिण ( V1 °दैषिण°, G3 °दैषिभि ) ( for $^{b}$ ) — ( L 1138 ) Ñ2 V1 3 B1 Dn Ds2 D6 G4 **सर्वम्** ( for **पूर्वम्** ) D2 **या प्रजा सर्वदा मूढा**, D3 **या प्रजा सर्गमारूढा** ( for $^{a}$ ) — ( L 1139 ) Ñ2 V1 3 **सा चैषा**, G4 **नैष्ठिका** ( for **सैवैषा** ) Dn **सर्वम्** ( for **व्यक्तिम्** ) D3 **स्वभावाद्दुरतिक्रमात्** ( for $^{b}$ ) — After line 1139, K3 4 Ñ2 B2 3 Dn Ds2 D1 2 4 6 G3 ins :

49** **अव्यक्ता व्यक्तिमापन्ना स्वभावाद्दुरतिक्रमा** ॥

[ D4 सैवैषा ( for अव्यक्ता ) K3 D1 व्यक्ताव्यक्तसमापन्ना, B2 व्यक्ता व्यक्तित्वमा° ( for $^{a}$ ) K4 Ñ2 B2 3 D2 4 6 स्वभाव ( for °वाद् ) ]

— ( L 1140 ) D1 om line 1140$^{a}$ K1 2 D4 **-समैवैषा**, V3 B3 **-गतिश्चैव**, B2 **-गतिस्त्वेषा**, Ds1 **-गमैरेषा**, D6 **-गतिं चैषां** ( for **गतिश्चैषा** ) K4 D5 Cal ed **व्यक्ताव्यक्तं गमित्वै-** ( K4 °त्ये )**षा**, Ds2 °**द्व्यक्तगमैरेषां**, D2 °**व्यक्तं गतिस्त्वेषां**, D3 **व्यक्तव्यक्तिगता त्वेषा** ( for $^{a}$ ) D3 G4 **-धर्मे** ( for **-धर्मान्** ). — ( L 1142 ) K2 D4 **-वेगेन** ( for **-यो°** ) B2 3 D1 6 G3 **कालज्ञा** ( for **योगज्ञा** ) K4 **वि-** ( for **न** ) — ( L 1143 ) K1 2 V1, 3 D3 **-कन्याश्च**, G3 **-कन्या वि-** ( for **-कन्यासु** ) K3 K3 D1 **दक्षकन्या व्यजज्ञिरे** ( for $^{b}$ ) — ( L 1144 ) D6 **कालेन महता तास्तु** ( for $^{a}$ ) — ( L. 1145 ) K1 3 Dn D2 G1 **विश्वे देवा**, D1 **विश्वे चैव** ( for **विश्वे च स-** ) G4 **विश्वे च मरुतां गणा** ( for $^{b}$ ) — ( L. 1147 ) K3 **राक्षसा**, D1 **पन्नगा** ( for **किनरा** ) — ( L 1148 ) Dn2 **सुरासुराः**, D3 G3 4 **सवासवा** ( for **सुवाससः** ) — ( L 1150 ) K4 V1 B2 Dn D4, 5 ( *inf lin* ) 6 G3 **चराचराश्च**, V3 B3 Ds **धाराधराश्च**, D1 2 **धराधरश्च**, G4 °**चराश्च** ( for °**धराश्च** ) Dn2 G3 **धर्तारश्च**, D6 **धातवश्च** ( for **धातारश्च** ). D3 **नराधिपा** ( for **धराधरा** ) — ( L 1152 ) G3 4 **खगा** ( for **खड्गा** ) D3 **पद्मवर्णानिभा शुभा** ( for $^{b}$ ) — ( L 1154 ) V1 **-संपूर्णा** ( for **-संपन्ना** ) — ( L 1155 ) K4 **तथाशीलैः** ( for **तैः शीलैस्तैः** ) — ( L 1156 ) K3 **-यज्ञे** ( for **क्षेत्रे** ) D1 **धर्मज्ञैस्तैः सनातनैः** ( for $^{b}$ ) — ( L 1157 ) K3 **मानसा**, K4 Ñ2 V1, 3 B Dn D1 3 6 G3 4 **मानसे** ( for **मानुषे** ) Ds Cal ed **क्षेत्रज्ञमानसे** ( Cal ed °**सो** ) **लोके** ( for $^{a}$ ) G4 **-पारगाः** ( for **-गोचराः** ) D4 **धर्मिष्ठा वेदगोचरे** ( for $^{b}$ ) — ( L 1159 ) K4 **युक्ता** ( for **सिद्धा** ) — ( L 1160 ) G3 **गुरौ** ( for **गुरोः** ) — ( L 1161 ) G3 **सिद्धा योगे** ( for **सिद्धिहेतोर्** ) — ( L 1162 ) **नश्यन्ति** ( for **लप्स्यन्ति** ) — ( L 1163 ) K1 2 4 D3 4 G3 **शान्ता**, K3 D2 **सर्वे**, G4 Bom Poona eds G(ed) **ख्याता** ( for **क्षान्ता** ) — ( L 1164 ) B2 **सर्वत्र ते**, D3 **ते च सर्वे** ( for **सर्वे त्वेते** ). K3 D1 **सर्वे च ते द्विजवराः** ( for $^{a}$ )

Colophon — *Mention of the Epic* Ds2 G4 — *Mention of Khila* K1 V1 3 B Ds1 D1 4 — *Sub-parvan* : K1 2 4 Ñ2 V1 3 B Ds D2 3 5 6 G3 **पौष्करम्**, K3 Dn1 D1 **पुष्करम्**, Dn2 D4 **पौ**( D4 **पु** )**ष्करप्रादुर्भाव** — *Adhy name*. K3 96, V3 208; Dn 16, Ds2 207, D1 95;

वैशंपायन उवाच ।

पितामहं पुरस्कृत्य मेरुपृष्ठे समाहिताः । [ 1165 ]
जटाजिनधरा विप्रास्त्यक्तक्रोधा जितेन्द्रियाः ॥
पर्वतान्तरसंसिद्धे बहुपादपसंवृते ।
धातुसंरञ्जितशिले समे निस्तृणकण्टके ॥
त्रयाणां ब्रह्मवेदानां पञ्चस्वरविराजिते ।
मन्त्रयज्ञपरा नित्यं नित्यं व्रतहिते रताः [ 1170 ]
एकमेवाग्निमाधाय सर्वे ब्राह्मणपुंगवाः ।
बिभिदुर्मन्त्रविषयैः सुसमाहितमानसाः ॥
त्रिधा प्रणीतो ज्वलनो मुनिभिर्वेदपारगैः ।
अतस्ते त्रित्वमापन्ना यदेकस्त्रिविधः कृतः ॥
एक एव महानग्निर्हविषा संप्रवर्तते । [ 1175 ]
स्वधाकारेण मन्त्रज्ञा मन्त्राणां कार्यसिद्धये ॥
स्वयं च दक्षः संप्राप्तो भगवान्भूतसत्कृतः ।
ब्रह्मा ब्राह्मणनिर्माता सर्वभूतपितामहः ॥
दण्डी चर्मी शरी खड्गी शिखी पद्मनिभाननः ।
अभवन्न्यस्तसंतापो जितक्रोधो जितेन्द्रियः ॥ [ 1180 ]
यजते पुष्करे ब्रह्मा मेधया सह सगतः ।
इन्द्रप्रोक्तानि सामानि गीयन्ते ब्रह्मवादिभिः ॥
घृतं क्षीरं यवा व्रीहिः सर्वं परमकं हविः ।
वेदप्रोक्तं मखे न्यस्तं कल्पितं ब्रह्मणः पदे ॥
निर्मथ्यारणिमाग्नेयीं शमीगर्भसमुत्थिताम् । [ 1185 ]
स ब्रह्मा प्रथमं तस्मिन्नग्निमन्यं प्रवर्तयत् ॥
न ह्यन्यद्विहितं द्रव्यं यथाग्निर्यज्ञकर्मणि ।
प्रवर्तयेद्विभागैर्वा हुतहव्यमयं बलम् ॥
फलानि तैः प्रयुक्तानि हवींषि विततेऽध्वरे ।
प्रयुञ्जते प्रयोगज्ञा मुनयो ब्रह्मवादिनः ॥ [ 1190 ]
षण्मासांश्चतुरो वेदान्संबभाषे बृहस्पतिः ।
ब्रह्मज्ञो ब्रह्मणो यज्ञे परया वर्णसंपदा ॥
शिक्षास्वरसमेताया मधुरायाः समन्ततः ।

---

D8 223 · D4 203, G3 349, G4 347

(L 1166) D3 वराजिन (for जटा°) D3 जित- (for त्यक्त-) — (L 1167) Ds2 रूपादि- (for -पादप-) V1 -सेविते (for -संवृते) K3 D1 बहुरूपोदसंस्कृते (for [b]) — (L 1168) D3 धातुभी (for धातुसं-) K1 2 D4 5 धातु-संरञ्जिते शैले (for [a]) D5 संकटे (for -कण्टके) — (L 1169) K1 3 Ñ2 V B1 3 D1 -विराजितम्, K4 °जितै, G3 4 °जिता. (for °जिते) D3 मन्त्रस्वरविराजिता (for [b]) — (L 1170) Ñ1 सत्र- (for मन्त्र) B2 4 D6 G4 Cal ed G (ed) ब्रह्म- (for व्रत-) — (L 1171) D3 Bom ed G(ed) एक (for एकम्) G4 एवमेवाग्निमादाय (for [a]) — (L 1173) K1 त्रिधा प्रणीते ज्वलने (for [a]) — (L 1174) K4 Ñ2 V1 3 B Dn D2 5 G3 4 तत्त्वम् (for त्रित्वम्) D3 ततस्तु त्रित्वमापन्नो (for [a]) K1 3 D1 4 पावकस् (for यदे°) — (L 1175) K1 B1 Ds D1 4 G3 संप्रवर्धते (for °र्तते) — (L 1176) D3 स्वाहाकारेण (for स्वधा°) K4 D6 मन्त्रज्ञो, B Dn D2 G4 °ज्ञ (for °ज्ञा) D6 Cal ed स्वाहाकारेण धर्म(D6 [marg] मन्त्र)ज्ञ. (for [a]) — (L 1177) B2 [इ]हाक्षर (for दक्ष सं) K4 (before corr) -भावन. (for सत्कृत) — (L 1178) K3 -मन्त्रज्ञ (for -निर्माता). — (L. 1179) D3 शरी शङ्खी; D4 च खड्गी च (for शरी खड्गी) K1 दण्डी च वर्मी खड्गी च, K2 दमी चर्मी च खड्गी च (for [a]) D3 खड्गी (for शिखी) — (L. 1180) Ds नष्ट- (for न्यस्त-). — (L. 1184) G4 सुखे (for मखे) — (L 1185) K4 -समन्विताम् (for समुत्थि°) — (L 1186) K3 D1 परमं (for प्रथमं) K1 2 V3 D3 प्रवर्तयन् (for °यत्) — (L 1187) K1-3 V3 [अ]न्य, K4 B1 Dn2 D2 5 [अ]ल्प-, Dn1 Cn [अ]ल्पं (for [अ]न्यद्) G4 न ह्यन्यविहित दिव्यं (for [a]) — (L 1188) K1 2 D4 प्रवर्धयद्, K4 D2 5 प्रवृत्तये, B2 Ds प्रवर्तयद्, G3 निवर्तयेद् (for प्रव°) K3 D1 प्रवर्तेत रुचिर्भागैर् (for [a]) K4 B2 Dn D2 4 5 -द्रव्यमयं (for -हव्य°) K1 Ñ2 V1 3 B1 (marg) D6 फलम्, K3 B1 G4 बलिम्, D3 लिहन् (for बलम्) G3 हुत हव्यमय बलिम् (for [b]) — (L 1189) G3 प्रवृत्तानि (for प्रयुक्तानि) G3 तु ततो (for वितते) — (L 1190) B1 3 G3 4 Cal ed. विशेषज्ञा (for प्रयोगज्ञा) — G3 4 om line 1191 — (L. 1191) K4 D2 4 (marg) 5 पद्मायाश्, Ñ2 B3 D6 षडङ्गांश्, Ñ2 (also) याज्ञयाश्, D3 यज्ञार्थं (for षण्मासाश्) Ñ2 आ- (for सं) — (L 1192) D1 ब्रह्मणो (for °ज्ञो). Ñ2 ब्राह्मणैर्, B2 3 G4 Cal ed ब्रह्मणे (for °णो) K3 ब्रह्मणो ब्रह्मयज्ञस्य, V1 3 ब्रह्मज्ञैर्ब्राह्मणैर्यज्ञे, Dn °णो वितते यज्ञे, D2 °ज्ञो ब्राह्मणो जज्ञे (for [a]) Ñ2 V1 B Dn Ds1 D6 G3, 4 ब्रह्म-, Ds2 यज्ञ- (for वर्ण-) — K2 D4 om lines 1193–1194 — (L 1193) B2 -समेतानां (for °या) B2 D6 मधुरायां (for °या) — (L 1194) K1 4 B3 Dn D2 5 6 -रामाया, Ñ2 V3 -मात्राया; B2 रागाया (for -रागाया). K3 सानुस्वारस्वरान्ताया, Ds1 °स्वारतरा गम्या (for [a])

सानुस्वरितरागायाः सरस्वत्याः प्रभाषते ॥
तेन ब्राह्मणशब्देन ब्रह्मप्रोक्तेन भारत । [ 1195 ]
विभाति स मखो व्यक्तं ब्रह्मलोक इवापरः ॥
मखो ब्रह्ममुखोत्तीर्णो ब्रह्मशब्दैरनामयैः ।
प्रयोगैः संप्रयुक्तस्य जल्पन्निव स वर्धते ॥
समिद्भिः सोमकलशैः पात्रैश्चैव सविस्तरैः ।
यवैर्व्रीहिभिराज्यैश्च पूर्णैश्च जलभाजनैः ॥ [ 1200 ]
क्रमप्राप्तैश्च वसुभिः कर्मभिश्चापराजितैः ।
गोभिः पयस्विनीभिश्च परिवत्सैश्च कोमलैः ॥
ब्रह्मवृद्धो वयोवृद्धस्तपोवृद्धश्च भारत ।
ब्रह्मज्ञानमयो देवो विद्यया सह संगतः ॥
मानसैश्च क्रियामूर्तिर्ये च भूताः स्वयं नृप । [1205]
ब्रह्मा जुहोति तांस्तस्मान्मरुद्भिः सहितस्तदा ॥
तेजोमूर्तिधरै रूपैर्न च तत्कर्मणास्पृशत् ।
वेदप्रोक्तेन विधिना सर्वप्राणभृतां नृप ॥
निर्मथ्यारणिमाग्नेयीं शमीगर्भसमुत्थिताम् ।
यजते क्रतुना पूर्वमग्निष्टोमेन स प्रभुः । [ 1210 ]
सदस्यैस्तत्सदो व्यक्तं शुशुभे यज्ञकर्मणि ।
जल्पन्ति मधुरा वाचः सानुस्वाराः क्रियास्ततः ॥
कर्मभिश्च तपोयुक्तैर्वेदवेदाङ्गपारगैः ।
सूर्येन्दुसदृशै राजन्विरराज महाक्रतुः ।
ब्रह्मघोषेण महता ब्रह्मवास इवापरः ॥ [ 1215 ]
वसुधामिव संप्राप्तैः सर्वैरेव दिवौकसैः ।
वेदवेदाङ्गविद्भिश्च विनीतैर्ब्रह्मवादिभिः ।
गतागतैस्तपःश्रान्तैः स्वर्गलोके महीयते ॥
ज्वलद्भिरिव विप्रैस्तैस्त्रिभिरेवाध्वरेऽग्निभिः ।
ब्रह्मलोक इवाभाति ब्रह्मणः स महाक्रतुः ॥ [ 1220 ]
इन्द्रप्रोक्तानि सामानि गीयन्ते ब्रह्मवादिभिः ।
वचनानि प्रमुक्तानि यजूंषि विततेऽध्वरे ॥
तपःश्रान्ता ब्रह्मपराः सत्यव्रतसमाहिताः ।
आययुर्मनयः सर्वे मनोभिः श्रोत्रवादिभिः ॥
होता चात्राभवद्राजन्ब्रह्मत्वे च बृहस्पतिः । [ 1225 ]

---

D2 सरस्वत्यां, Dn G3 °स्वत्या (for °स्वत्याः) V3 प्रतायते, Ds1 प्रकाशते (for प्रभाषते) — (L. 1195) V3 -युक्तेन (for -प्रो°) — (L 1196) K4 D2 सुमुखो (for स मखो) Ñ2 (marg as above) नित्य (for व्यक्तं) — (L 1197) V3 सखा ब्रह्मसखोत्तीर्णो, Cal ed मुखैर्ब्रह्मा मखोत्तीर्णो (for [a]) K1-3 D1 4 निरामयै (for अना°) — (L 1198) Cal ed -युक्तैश्च (for -युक्तस्य) D2 3 G3 ज्वलन् (for जल्पन्). B1 Bom Poona eds G(ed) विवर्धते, Cal ed. प्रवर्तते (for स वर्धते) — (L 1199) G4 तोय- (for सोम-) K4 V3 Dn Ds D2 3 बर्हिश्चरै, V1 B2 हविश्चरै, Bom Poona eds, G(ed) बर्हिःखलैः (for सविस्तरै) Ñ2 B1. 3 D6 G3 4 पात्रैश्च बहुविस्तरैः (for [b]) — (L 1200) V3 D1 आद्यैश् (for आज्यैश्) K3 D1 द्रव्यपूर्णैश्च तैर्द्विजैः (for [b]) — (L 1201) Dn कर्म- (for क्रम-) K3 4 V3 B1 2 Ds D1 3 5 6 G3 पशुभिः, B3 पश्यद्भिः, G4 बहुभिः (for वसुभिः) K1 Ñ2 V1 D2 कर्मप्राप्तैश्च पशुभिः (for [a]) K4 B2 3 Dn [अ]परान्वितै, Ñ2 V1 3 B1 Ds D2 5 6 G3 4 परान्वितै; D3 पराक्रमै (for [अ]पराजितैः) — (L 1202) K1 Ñ2 V1. 3 B2 D4 पारिवत्सैश्, K2 पारिवासैश्, Ds D6 पारिवंशैश्, D3 पारिबर्हैश्, Bom ed G(ed) परिवंशैश्, Poona ed परिवेशैश् (for °वत्सैश्) K4 D5 परिवंशैश्च केवलैः (for [b]) — For line 1203, K3 D1 subst

50** ब्रह्मवृद्धा वयोवृद्धास्तपोवृद्धाश्च भारत ।

— (L 1204) Ñ2 दिव्यो (for देवो) — (L 1205) K3 V3 Ds -मूर्तैर्, Ñ2 -सूक्तैर्, Cal ed -मूर्ता (for -मूर्तिर्). — (L 1206) D3 तान्सर्वान्, G3 तस्मात्स (for तांस्तस्मान्) — (L 1307) G4 मूर्तिधरो (for °धरैर्) K1. 2 4 Ñ2 V1 3 Ds D4 G4 स्पृशन् (for [अ]स्पृशत्). — (L 1208) Ñ2 Dn D1 वर (for नृप) — (L 1209) V1 Dn -समुद्भवाम्, G3 4 समाहितः (for -समुत्थिताम्) K4 B3 Ds शमीगर्भं समुत्थितं (for [b]) — (L 1210) Bom Poona eds G(ed) क्रतुना यजते पूर्णम् (for [a]) — (L 1211) Dn1 सदस्यैस्तु; Ds °स्येतत् (for °स्यैस्तत्) — (L 1212) G3 ज्वलन्ति (for जल्पन्ति) Ds1 वाणीः (for वाचः) D3 जल्पन्ते मनुजा वाच (for [a]). B3 सानुस्वरक्रियास्तथा (for [b]) — (L 1218) D6 ब्रह्म- (for स्वर्ग-) K4 V1 महीपते (for °यते) D3 स्वर्गलोकान्मही गतै (for [b]) — (L 1219) विप्रेन्द्रैस् (for विप्रैस्तैस्) — G3 om. lines 1220–1224. Ñ2 om line 1120[a] — (L 1221) ब्रह्म- (for इन्द्र-). Ñ2 V3 B1 3 Ds D6 G4 गायन्ति (Ds सामानि) ब्रह्मवादिन (for [b]) — (L 1223) B1 D3 G(ed) तपःशान्ता (for °श्रान्ता) K? व्रत- (for -ब्रह्म-) K2 D4 -परा हिता; K3 Ñ2 V3 B2 Ds -परायणा (for -समाहिता). — (L. 1224) D3 आबभुर् (for आययुर्) G4 तत्त्व- (for श्रोत्र-). D3 वचोभि श्रौतवादिभि (for [b]) — (L. 1225) D3 धाता (for चात्र) V1 Dn2 ब्रह्मा चैव (for ब्रह्मत्वे च). — (L.

सर्वधर्मविदां श्रेष्ठः पुराणो ब्रह्मसंभवः ॥
यजमानश्च यज्ञान्ते विष्णोः पूजां प्रयुज्य च ।
अदित्याः पश्चिमे गर्भे तपसा संभृते नृप ॥
पदं विष्णुरजो ब्रह्मा निर्द्वंद्वो निष्परिग्रहः ।
यतः पदसहस्राणि भविष्यन्त्युद्भवन्ति च ॥ [1230]
अवन्ध्यं चाप्रमेयं च व्यतिरिक्तं च कर्मभिः ।
आत्मापि यस्य मुनयो भवन्ति निष्परिग्रहाः ॥
परिग्रहाश्च विषया दोषप्राप्ता महीपते ।
दोषांश्च युगपत्सर्वे छादयन्ति मनोबलात् ॥
इन्द्रियग्रामविषये चरन्तो निष्परिग्रहाः । [1235]
परिग्रहं शुभं धर्ममविद्यालक्षणं नृप ॥
विद्यालक्षणसयोगान्न मनश्छाद्यते नृप ।
यदि चेन्मुनिशब्देन गृह्यते ब्रह्मवादिभिः ॥
वेदविद्याव्रतस्नातैर्नियतै कुरुसत्तम ।
दिवि लोकः सतां स्थानं लोकानां लोक उच्यते ॥ [1240]
यत्र देवा हव्यपुष्टा न क्षयं यान्ति भारत ।
यजमानश्च भागैः स्वैः कर्मप्राप्तोदिते पदे ।
मोदते सह पत्नीभिर्विज्वरो वसुधाधिप ॥
यज्ञावसाने शैलेन्द्रं द्विजेभ्यः प्रददौ प्रभुः ।
ददौ च सर्वभूतानां निर्मलेनान्तरात्मना ॥ [1245]
तं शैलं सर्वगात्राणि परस्परविशेपिणः ।
न शेकुः प्रविभागार्थं भेत्तुं सर्वोद्यमैरपि ॥
ततस्ते ब्राह्मणगणा निषेदुर्वसुधातले ।
श्रमेणाभिहताः सर्वे विवर्णवदना नृप ॥
सुपार्श्वो गिरिमुख्यस्तु वाग्भिर्मधुरभाषिता । [1250]
अब्रवीत्प्रणतः सर्वाञ्शिरसा तान्द्विजोत्तमान् ॥
न हि शक्यो बलाद्भेत्तु युष्माभिरसुसङ्गिभि. ।
अपि वर्षशतैर्दिव्यैः परस्परविरोधिभिः ॥
एकीभूता यदा सर्वे भविष्यथ समाहिताः ।
अविरोधेन युगपद्विभजिष्यथ निर्वृताः ॥ [1255]
बलं हि रागद्वेपाभ्यां वर्धते ब्रह्मसत्तमाः ।
विमुक्तं रागदोषाभ्यां ब्रह्म वर्धति शाश्वतम् ॥
यदाहं भेदयिष्यामि स्वर्गभिन्नैः शिलाशितैः ।
धातुभिश्च विसर्पद्भिः शिखरैश्चानुपातिभिः ॥

---

1226) $K_3$ $D_1$ $G_3$ धर्मभृता, $\tilde{N}_2$ $V_3$ -ब्रह्मविदा, $V_1$ -वेद° (for -धर्म°) $B_1$ (marg as above) संमत (for संभव) —(L 1228) $K_{1\ 2}$ $\tilde{N}_2$ $B_{1\ 3}$ Ds $D_{1\ 6}$ $G_3$ संवृते (for संभृते) $V_3$ तपसा संवृतेऽनघ, $D_3$ °सा सवृतो नृप (for $^b$) —(L 1229) $G_4$ परं (for पदं) $K_{1\ 2\ 4}$ $\tilde{N}_2$ $V_{1\ 3}$ Dn $D_{1\ 2\ 4\ 5}$ निर्द्वंद्वं निष्परिग्रहम् (for $^b$) —(L 1230) $K_1$ भवन्ति हि, $K_2$ $D_4$ प्रभवन्ति, $D_3$ विनश्यन्ति, $D_5$ भवन्त्येव (for भविष्यन्ति) —(L 1231) $D_3$ अव्यक्तं, $G_3$ अपत्यं (for अवन्ध्यं) —(L 1232) $D_3$ भवेयुर्न परिग्रहा (for $^b$) — $D_{2\ 4}$ om. (hapl) lines 1233–1235 —(L 1233) $V_{1,3}$ $B_2$ -प्राप्तौ (for -प्राप्ता) —(L. 1234) $K_{1\ 2\ 4}$ $\tilde{N}_2$ $V_{1\ 3}$ B Dn $D_{2\ 3\ 6}$ दोषाश् (for दोषांश्) $G_{3\ 4}$ दोषाश्च बहव सर्वे (for $^a$) $V_1$ $D_3$ तपो- (for मनो-) —(L 1235) $V_3$ -वलये, $D_6$ -विषयैश् (for °ये) $D_3$ नि सङ्गा (for चरन्तो) —(L. 1236) $D_3$ सुख (for शुभ) $K_2$ $D_4$ कर्म (for धर्मम्) Bom. Poona Cal eds G(ed) विदु (for नृप) $K_3$ $D_1$ विद्यया-लंकृतं नृप (for $^b$) —(L 1237) $G_{3\ 4}$ मनसा (for न मनश्) $D_3$ छाद्यन्ते तमसा न ते (for $^b$) —(L. 1238) $D_2$ युज्यते (for गृह्यते) —(L 1239) $D_3$ -व्रतस्थैश्च (for °स्नातैर्) —(L. 1240) $K_3$ देवलोक; $\tilde{N}_2$ $V_{1\ 3}$ $B_2$ $G_3$ दिवि लोके, Dn $D_{2.5}$ दिवि लोका·; $D_3$ यदि लोके, $G_4$ दिव्यलोके (for दिवि लोक) G(ed) देवाना (for लोकानां) —(L 1241) $B_1$ लोका (for देवा) $K_2$ $B_3$ $D_4$ हव्यजुष्टा; $D_3$ सत्ययुक्ता, Cal ed हव्ययुक्ता (for °पुष्टा) —(L. 1242) $K_1$ भागैस्तै, $K_2$ $\tilde{N}_2$ $V_1$ B Dn $D_{3\ 5}$ भोगै स्वै; $G_{3\ 4}$ भोगैस्तै (for भागै स्वै) $K_3$ $V_3$ $D_{1\ 4}$ यजमानैश्च भागस्थै ($V_3$ भोगै स्वै, $D_4$ भागैस्तै), $D_2$ °मानस्य भाग्यै स्वै (for $^a$) Cal ed. -प्राप्तोऽमृते (for °दिते) —(L. 1244) $K_3$ $B_1$ Cal ed विभु·, $D_1$ द्विज, $D_4$ प्रभुम् (for प्रभु) $D_3$ द्विजेभ्य प्रवरो द्विज (for $^b$) —(L 1245) $K_4$ $D_{2\ 3}$ ददौ स, $\tilde{N}_2$ $B_2$ $G_{3\ 4}$ प्रदाय, $B_{1\ 3}$ Dn Ds $D_6$ दयया, $D_5$ प्रददौ (for ददौ च) —(L 1246) $K_{1,2}$ -गात्रेषु, $D_3$ -गोत्राणि (for गा°) $\tilde{N}_2$ -वधैषिण (for -विशे°). —(L 1247) $K_3$ $D_1$ क्रतु (for भेत्तुं) —(L. 1248) $K_{1\ 2}$ $\tilde{N}_2$ $V_{1\ 3}$ $D_4$ ततस्ते ब्राह्मणा शान्ता (for $^a$) —(L 1250) $D_2$ चाग्निर्, $D_6$ वाग्मी (for वाग्भिर्) $D_1$ G(ed) -भाषितै (for °ता) — $D_4$ om (hapl) line 1253. —(L 1253) $B_2$ -वधैषिभि (for -विरोधिभि) —(L. 1255) $K_3$ अविभक्ता विनिर्मिताः (for $^b$) — $K_{1-3}$ $Dn_1$ $D_{1\ 4}$ om line 1256 —(L 1256) $Ds_1$ $D_3$ द्विज- (for ब्रह्म-) $G_3$ -वित्तमा (for स°) — $B_1$ om line 1257. —(L 1257) $V_{1,3}$ निर्मुक्तं (for विमुक्तं). $\tilde{N}_2$ निर्मुक्तं रागद्वे-

विशीर्णैः पार्श्वविवरैर्नागैश्चागलितैर्भुवि । [ 1260 ]
बहुभिर्व्यालरूपैश्च चोद्यमानो गुहाशयैः ॥
प्रतिगृह्य तु तद्वाक्यं शैलेन्द्रस्य सुभाषितम् ।
तूष्णीं बभूवुस्ते सर्वे तदा ब्राह्मणसत्तमाः ॥

Colophon.

वैशंपायन उवाच ।

बलिर्होमाश्च वर्धन्ते अहन्यहनि भारत ।
द्विजानां तपसाढ्यानां गृहधर्मे प्रतिष्ठताम् ॥ [ 1265 ]
देवताद्याश्च पूज्यन्ते तदाप्रभृति भारत ।
तेषां ब्रह्मविदां राजन्पृथिव्यां ब्रह्मवादिभिः ॥
तत्रैव ब्रह्मसदने समे निस्तृणकण्टके ।
प्राज्येन्धनतृणे देशे पुण्ये पर्वतरोधसि ॥
वासं यत्र प्रकुर्वन्ति दृष्ट्वा भगवतः क्रियाम् । [ 1270 ]
तपोर्थिनो महाभागा ब्रह्मचर्यव्रते स्थिताः ॥
गृहस्थधर्मनिरता दानप्राप्तेन चेतसा ।
यतयश्चापि काङ्क्षन्ति धर्मेण हरिकाङ्क्षिणः ॥
अन्ये कर्मफले चैव रता ब्राह्मणपुंगवाः ।
अग्निहोत्रव्रतस्नाता जितक्रोधाः समाहिताः ॥ [ 1275 ]
दैवयुक्तेन वा युक्ताः कर्मणा ब्रह्मसत्तमाः ।
चीरवल्कलसंवीता नियता नियतेन्द्रियाः ॥
चरन्तो ब्रह्मचर्यं च यत्नमास्थाय दारुणम् ।
अनेन विधिना राजन्क्रमप्राप्तेन सर्वशः ॥
क्रमाद्ये वेदसंस्कारं पुण्यं प्राप्ताः सनातनम् । [ 1280 ]
पूर्वैराचरितं राजन्मुनिभिर्ब्रह्मवादिभिः ॥
नावेदविद्वानागच्छेन्नापि रौद्रं व्रतं चरेत् ।
न च त्यागेन गच्छेत गृहधर्मं च न त्यजेत् ॥

---

षाभ्या, Dn2 बल हि रागदो° (for $^{a}$) — (L 1258) B1 विमुक्त (for यदाहं) K1 2 यदाहं भेदमिच्छामि (for $^{a}$) Ñ2 B1 3 Ds2 D6 स्वयंभिन्नै, D3 स्थान° (for स्वर्ग°) K3 D1 4 शिलाशतै, B1 2 D3 Cal ed °तलै (for °शितै) V1 शङ्कुभिन्नै शिलातलै, Ds1 स्वय भिन्नै शिलाशतै (for $^{b}$) — D2 om. lines 1260–1261 — (L 1260) K1 2 D4 विस्तीर्ण-, D1 विस्तीर्णै (for विशीर्णै) V1 [अ]गणितैर् (for [अ]गलितैर्) B1 G4 नागैश्च गलितैरपि (G4 °तैर्नृप); D3 नागैश्चास्खलितैरपि (for $^{b}$) — (L 1261) K1 तोद्यमानो, K3 D4 नोद्य°, V1 चोच्य°, D3 भिद्य°, D6 वाद्य° (for चोद्य°) — (L 1262) Ñ2 V1 3 प्रत्यगृह्णन्त तद्वाक्यं (for $^{a}$) D6 G3 शैलेन्द्रेण (for °न्द्रस्य) Ñ2 च (for सु-) — (L 1263) तुष्टा (for तूष्णीं) K4 वै ब्रह्म- (for ब्राह्मण-)

COLOPHON — *Mention of the Epic* Ds2 — *Mention of Khila* K1 V1 3 B Ds D1 4 — *Sub-parvan* K1 2 4 Ñ2 V1 3 B Dn Ds D1–3 5 6 G3 पौष्करम्, K3 पुष्करम्, D4 पुष्करप्रादुर्भाव — *Adhy no* K3 (marg) 97, V3 209, Dn 17, Ds2 208, D1 96, D3 224, D4 204, G3 350, G4 348

(L. 1264) K2 4 V1 3 Ds D3 4 बलि- (for बलिर्) —(L. 1265) V3 B Dn D2 3 6 -धर्मेषु (for -धर्मे प्र-). Ñ2 V1 गृहरत्ने (V1 वर्मे)ष्वतिष्ठताम् (for $^{b}$). —(L 1266) K4 Ñ2 Dn D2 5 G3 देवतार्चाश्च (for °द्याश्च) D3 देवताश्चापि पूज्यन्ते, G4 °चर्याश्च युज्यन्ते (for $^{a}$) D3 अहन्यहनि भारत (for $^{b}$) —(L 1267) धर्म- (for ब्रह्म-) D3 -वादिनाम् (for °भि.). —(L 1269) प्राज्ये नव-, K2 प्राज्ये घन-, K4 प्राज्ये वन- (for प्राज्येन्धन-) — (L 1270) K2 D4 तं तत्र (for यत्र प्र-) Ñ2 B3 G4 भगवती, B2 D6 भागवती (for भगवत) V1 3 B2 Ds क्रिया. (for क्रियाम्) —(L 1271) Ds1 पये (for -व्रते) D1 ब्रह्मचर्ये प्रतिष्ठिता: (for $^{b}$) — (L 1272) K3 D1 गृहस्था (for °स्थ-) D1 (*sup lin*) ध्यान-, D6 ज्ञान- (for दान-) Dn G(ed) जितक्रोधा समाहिता (for $^{b}$) —(L 1273) K1–3 D1 काङ्क्षतो, K4 कारस्न्येन, B2 3 काङ्क्षेण, D3 6 G3 4 काङ्क्षन्ते (for काङ्क्षन्ति) Ñ1 V1 3 B1 Ds यतयश्चाधि(B1 Ds °वि)-काङ्क्षेण (for $^{a}$) K4 D1(*sup lin*) 5 ह विकाङ्क्षिणः, Ñ2 V3 B2 Dn Ds D2 [इ]ह वि°, B1 D6 [अ]वधिका° G3 भुवि का° G4 हविकाङ्क्षिणी (for हरिकाङ्क्षिणः) ❀ Cn विकाक्षिण विशेषेण काक्षा इच्छा तद्वन्त. । इह वस्तुमित्यर्थ. ❀ —(L 1274) K2D4 वाक्ये, Ñ2 V3 B2 D3 वन्ये (for अन्ये) V1 -फलैरेव (for फले चैव) K1 वाक्ये कर्मफलैश्चैव; K3 D1 धन्ये धर्मफले चैव, K4 धन्यैश्चैव फलैश्चैव, Dn D2 5 6 G3 4 वन्यै कर्मफलैश्चैव (for $^{a}$) D3 -सत्तमा (for -पुंगवाः) —(L 1275) V1 Ds1 व्रता, D3 -व्रते (for व्रत-) G3 समावृताः (for °हिता) —(L 1276) Dn2 ब्रह्मणा (for कर्मणा). B1 -वित्तमा (for -स°) K4 कर्म ब्राह्मणसत्तमा. (for $^{b}$) —(L 1277) D3 चेरुर् (for चीर-) —(L 1278) Dn2 Bom Poona Cal eds G(ed) व्रतम् (for यत्नम्) —(L 1279) K4 D2 कर्म (for क्रम-) —(L 1280) K1–3 D1 4 एव च (for ये वेद-) Ñ2 क्रमार्थे वेदसंस्कारं, V1 धर्मार्थे वेदसंभारं (for $^{a}$) V1 पुन (for पुण्यं) Ñ2 D3 सनातना (for °तनम्) —(L 1282) D3 नावेदविद्यां वा गच्छेत्; Cal ed अवेदविद्यो नागच्छेत् (for $^{a}$). —(L. 1283) V1

एवं न गच्छेदुत्थानमप्राप्तो वेदसंचयम् ।
ऋचश्च सचयः पूर्वः सामगानां च भारत ॥ [ 1285 ]
ये चापि पुत्रिणो न स्युः श्रुत्वापि प्राप्नुयुः फलम् ।
ब्राह्मणास्तपसा श्रान्ता गुरोश्च परिचर्यया ॥
यस्य नैवं श्रुतं ब्रह्मन्न गृहीतं विशां पते ।
कामं तं धार्मिको राजा शूद्रकर्माणि कारयेत् ॥
अथ वा नैव विद्येत यद्ब्रह्म नाद्रियेद्द्विजः । [ 1290 ]
द्वाभ्यां तु श्रोत्रविषये मनः पूर्वं समाहिते ॥
एवं सर्वेन्द्रियारम्भान्वेदपूर्वान्समारभेत् ।
ब्राह्मणो भूतिसंपन्नो य इच्छेद्भूतिमात्मनः ॥

Colophon

वैशंपायन उवाच ।

ते तु गोब्राह्मणांस्तांश्च चन्द्रादित्यपुरस्कृताः ।
ब्राह्मणान्पूजयन्राजन्वसुभिर्ब्रह्मसंभवैः ॥ [ 1295 ]
नारदप्रमुखाश्चैव गन्धर्वा ऋषयो नृप ।
कुर्वन्ति सततं यज्ञैः क्रमप्राप्तैः पितामहम् ॥
वचोभिर्मधुराभाषैः पञ्चेन्द्रियनिवासिभिः ।
सर्वभूतप्रियकरैः सर्वभूतहितैषिभिः ॥
स्तूयमानश्च यज्ञान्ते पञ्चेन्द्रियसमाहितैः । [ 1300 ]
प्रोवाच भगवान्ब्रह्म दिष्ट्या दिष्ट्येति भारत ॥
ततः कश्यपमाभाष्य प्रोवाच भगवान्प्रभुः ।
भवानपि सुतैः सार्धं यक्ष्यते वसुधातले ॥
क्रतुभिः परमप्राप्तैः संपूर्णवरदक्षिणैः ।
यक्षाः सुराश्च ते सर्वे यथाप्रतिगुणैः प्रभो ॥ [ 1305 ]
वयं यक्ष्यामहे सर्वे पूर्वं यक्ष्यामहे वयम् ।
एवमन्योन्यसंरम्भाद्द्विद्यन्ते बलदर्पिताः ॥

---

समाचरेत् ( for च न त्यजेत् ) — ( L 1284 ) B3 एकार्थं, Dn1 नैव स ( for एवं न ) B1 Dn2 नैव ( Dn2 °वं ) गच्छेत दुःस्थानम्, D8 पूतेन गच्छेत्पन्थानम्, G4 एतं न गच्छेदध्वानम् ( for ᵃ ) — ( L 1285 ) K4 सर्वश्, G8 वयं ( for ऋचश् ) V1 3 B1 2 संचया ( for °य ) Ñ2 K V B Dn1 Ds D1-4 6 B1 सर्व॰, Dn2 पूर्वा ( for पूर्वः ) D5 धर्मश्च संचय सर्वं ( for ᵃ ) D2 सागमानां, Cal ed सामगानं ( for °गानां ) — For line 1285, D9 subst

51** असंचयश्च संचय च सामगानं च भारत ॥

— ( L 1286 ) D8 ये पुत्रिणो नरा न स्यु ( for ᵃ ) — ( L 1287 ) D6 G9 ब्राह्मणास्तु परि(G3 तप )श्रान्ता ( for ᵃ ) B1 3 D6 परिचर्याणता गुरो ( for ᵇ ). — ( L 1288 ) G3 धर्मं ( for ब्रह्मन ) Ds प्रगृहीत, D9 गृहीत च ( for न गृहीत ) — ( L 1289 ) D8 काम तान्धार्मिको राजन् ( for ᵃ ) D8 यज्ञ-, Cal ed दास- ( for शूद्र- ) —G9 om lines 1290–1292 — ( L 1290 ) B3 D6 Cal ed यो ब्रह्म ( for यद्ब्रह्म ) K3 4 V3 D1 यद्ब्रह्मन्नापि मे द्विज , Ñ2 यो ब्रह्मन्नापि चेद्द्विज , V1 यद्ब्रह्मन्नपि चेद्द्विज , B2 यद्ब्रह्मणापि स द्विज ( for ᵇ ) — ( L 1291 ) K3 4 Dn1 D2 6 द्वाभ्यां श्रोत्रमविषये ( Dn1 °शेषे ), Cal ed श्रोत्रादीनामवि° ( for ᵃ ) V9 सर्वं ( for पूर्वं ) K4 Dn2 D2 G4 समाहितम्, Cal ed °हरेत् ( for °हिते ) Dn मनः पूर्वं समाहितम् ( for ᵇ ) — ( L 1292 ) Ñ2 एवं सर्वक्रियारम्भान् ( for ᵃ ) K1 2 D1 4 -पूर्णान् ( for पूर्वान् ) K4 Ñ2 V1 3 B2 Dn Ds2 D2 3 समाचरेत् ( for °रभेत् ) B1 3 D5 6 G2 वेद- ( D5 देव )पूर्वं समाचरेत् ( for ᵇ ). — K3 om line 1293 — ( L 1293 ) Ñ2 V1 3 Ds G3 4 वेद-, Bom Poona eds भूत- ( for भूति ). D1 ब्रह्मा भूतिसमुत्पन्नो ( for ᵃ ).

Colophon — *Mention of the Epic* Ds2 G4 — *Mention of Khila* V1 3 B Ds2 D1 3 — *Sub-parvan* K Ñ2 V1 3 B Dn D9 D1-3 5 6 G4 पौ(K3 पु)ष्करम्, D4 पुष्करप्रादुर्भाव — *Adhy no* K3 ( marg ) 98, V3 210, Dn 18, Ds2 209, D1 97, D3 225, D4 205, G3 351, G4 349

G4 om lines 1294–1324 — ( L 1294 ) D3 ये ( for ते ) K4 B Dn D2 5 6 G3 ते तु गोब्राह्मणा नागाश्, Ñ2 V1 3 D8 D3 ते तु गोब्राह्मणानां च ( for ᵃ ) ❀ Cn नागाश्—नास्ति भागो विध्यपराधो येषु ते नागा रज प्रकृतिभावा । ❀ B2 G2 -पुरस्कृतान् ( for °ता ) — ( L 1295 ) Dn2 G3 Cn देवान्; Ds सर्वे ( for राजन् ) D3 ब्राह्मणानसृजद्ब्रह्मा ( for ᵃ ) Ñ2 मुनिभिर् ( for वसु° ) V1 -विस्तरैः ( for -संभवैः ) K2 ब्रह्मर्षिब्रह्मसंभव ( for ᵇ ) — ( L 1296 ) K4 D5 गन्धर्व-, Ds °र्वान् ( for °र्वा ) K3 D1 नृपा ( for नृप ) — ( L 1297 ) K3 Ñ2 D1 यजन्ति; D3 स्तुवन्ति ( for कुर्वन्ति ) K4 D2 5 यज्ञे ( for यज्ञैः ). Dn गन्धर्वा सतत यज्ञे ( for ᵃ ). K4 Ñ2 V1 B Dn D2 3 5 6 G3 क्रम( K4 D2 कर्म)प्राप्तं ( for °प्राप्तैः ) — ( L 1298 ) D3 मधुरालापे ( for °भाषैः ) — B3 om line 1299 — ( L 1299 ) Ñ2 om line 1299ᵃ G3 -हिते रतैः ( for हितैषिभिः ) — ( L 1300 ) D6 स्तूयमानैश् ( for °नश् ) V3 सस्तूयमानो यज्ञान्ते ( for ᵃ ) B3 Cal ed निवासिभि ( for -समाहितैः ) — ( L 1302 ) Ñ2 V1 3 Ds काश्यपं मुनिमाभाष्य ( for ᵃ ) — ( L 1303 ) K2 D4 सुरैः ( for सुतैः ) — ( L 1305 ) K1 2 Ñ2 V1 3 Dn D4 ये सर्वे, K4 D2 5 नागाश्च ( for ते सर्वे ). B2 भूतगणैः ( for -प्रतिगुणैः ) — ( L. 1306 ) V3 ईक्षामहे

दैतेयाश्चाप्यदैतेयाः परस्परजयैषिणः ।
युद्धायैव प्रतिष्ठन्ति प्रगृह्य विपुलौ भुजौ ॥
निवार्यमाणा ऋषिभिस्तपसा दग्धकिल्बिषैः । [ 1310 ]
अन्यैश्च बहुभिर्विप्रैर्वेदवेदाङ्गपारगैः ।
निवार्यमाणा युध्यन्ति वृषभा इव गोकुले ॥
ते युद्धारम्भसंक्रुद्धाः सर्वप्राणिजयैषिणः ।
पश्यतां सर्वभूतानां मृत्योर्विषयमागताः ॥
ततः शब्देन महता परं कृत्वा महाबलाः । [ 1315 ]
रुन्धन्ति बाहुभिः क्रुद्धाः सपक्षा इव पक्षिणः ॥
चचाल वसुधा चैव पादाक्रान्ता च रोषिभिः ।
नौर्यथा पुरुषाक्रान्ता भाराक्रान्तावसीदति ।
पर्वताश्च विशीर्यन्ते नर्दमाना वृषा इव ॥
चुक्षुभुश्च महानद्यस्ताडिता मातरिश्वना । [ 1320 ]
ततः समभवद्युद्धं मधोर्विष्णोश्च भारत ॥
युगान्तकरणं घोरं सर्वप्राणिभयंकरम् ।
प्रममाथ बलं विष्णुः समग्रबलपौरुषम् ।
वह्नेरिव बलं दीप्तं शमयत्यम्बुना यथा ॥

Colophon.

वैशपायन उवाच ।

बलवान्स तु दैतेयो मधुर्भीमपराक्रमः । [ 1325 ]
बबन्ध पाशैर्निशितैर्महेन्द्रं पर्वतान्तरे ॥
तं वै प्रह्लादवचनाल्लक्षणज्ञश्च भारत ।
ऐश्वर्यमैन्द्रमाकाङ्क्षन्भविष्यं बुद्धिसंक्षयात् ॥
बध्वेन्द्रं सहसा मध्ये पाशैर्मर्मविवर्जितैः ।
आयसैर्बहुभिश्चित्रैर्बलवद्भिर्विदारणैः ॥ [ 1330 ]
विष्णुमेवाग्रणीरुग्रमाह्वयद्युद्धकोविदः ।
मध्ये गणानां सर्वेषां कालस्य वशमागतः ॥
द्वैधीभूताः काश्यपेया मधोर्वशमुपागताः ।
युद्धार्थमभ्यधावन्त प्रगृह्य विपुला गदाः ॥
गन्धर्वाः किंनराश्चैव वाद्ये गीते च कोविदाः । [1335]
प्रनृत्यन्ति प्रगायन्ति प्रहसन्ति च सर्वशः ॥
तन्त्रीभिः सुप्रयुक्ताभिर्मधुराभिः स्वभावतः ।

---

( for यक्ष्या° ) K3 पूर्वे ( for सर्वे ) — ( L 1307 ) K1 2 D4 6 संभाराद् ( for सरम्भाद् ) V1 B1 2 Dn2 D3 G3 विद्यन्ते, D6 बिभ्यते ( for भिद्यन्ते ) — ( L 1308 ) D3 [अ]देवेया ( for [अ]दैतेया ) G3 तथा देवाश्च दैतेया ( for $^{a}$ ) — G3 om lines 1311-1313 — ( L 1311 ) B1 Bom Poona eds G(ed) विविधैर् ( for बहुभिर् ) — ( L 1313) K4 Ñ2 V1 3 B Ds D1-3 5 6 प्रयुद्धारम्भसंक्रान्ता ( V1 °भारा , D3 °आन्ता ), Dn प्रयुद्धायुद्धसंक्रान्ता ( for $^{a}$ ) K1 V1 3 B2 3 D1 3 4 6 सर्वप्राणैर्, Ñ2 सर्वे प्राणैर्, B1 Dn2 D5 सर्वे प्राण- ( for सर्वप्राणि- ) — ( L 1315 ) K4 V3 B1 D3 5 Poona ed महाबलः ( for °बला ) — ( L 1316 ) D1 2 5 युध्यन्ति ( for रुन्धन्ति ) G3 बहव ( for बाहुभि ) K3 B2 D3 पर्वता , D2 (*sup lin* as above ) पत्रिण ( for पक्षिण ) — ( L 1317 ) B1 3 रोधिभि , Dn2 रोचिभि. ( for रोषिभि· ) K4 Dn1 D1 पा( D1 प )दाक्रान्तावरोधिभि , D3 पदाक्रान्ता विरोधिभि ( for $^{b}$ ) — D1 om lines 1318-1319 — ( L 1318 ) Ñ2 V3 B Ds D6 निषीदति महाजले ( for $^{b}$ ). — ( L 1319 ) Bom Poona eds. G(ed) गजा ( for वृषा ) — ( L 1323 ) K2 4 D4 प्रमथ्य स ( for °माथ ) V1 3 बलाद् ( for बलं ) K4 B1 D6 -पौरुष ( for °षम् ). — ( L. 1324 ) K3 शमं याति ( for शमयति ) Ds D1 6 G3 शमयन्नम्बुना यथा ( for $^{b}$ ) — After line 1324, Ñ2 B1 2 ins :

52** तथा प्रशामितं तेन भगवत्यपकारिणा ।

[ B1 2 यथा प्रकाशि( B2 °शासि )त तेन ( for $^{a}$ ) B2 भगवन्न्यायकारिणा ( for $^{b}$ ) ]

Colophon om in K3 — *Mention of the Epic* Ds2 — *Mention of Khila* · V1 3 B Ds2 D1 4 — *Sub-parvan* K1 2 4 Ñ2 V1 3 B Dn1 Ds D1 2 5 6 G3 पौष्करम् , Dn2 पुष्करप्रादुर्भाव , D3 4 पौष्करप्रादुर्भावः — *Adhy no* V3 211 , Dn 19 ; Ds2 210 , D1 98 , D3 225 ; D4 206 , G3 352

( L 1327 ) Dn स ( for वै ) D2 तत्क्षणज्ञश् ( for लक्ष° ) — ( L 1329 ) K4 तच्च ( for बध्वा ) K1 2 D4 [आ]साद्य ( for मध्ये ) Ñ2 V1, 3 शर्म- ( for मर्म ) Ds D3 5, 6 -विसर्जितै· , D6 ( *inf lin* ) G4 -विघट्टनै. ( for -विवर्जितैः ) ❀ Cn मर्मविवर्जितै = भेदस्थानरहितैरभेद्यैरित्यर्थ. । ❀ — ( L 1331 ) K4 V1 B2 Ds2 D2 4 5 G3 रुद्रम् ( for उग्रम् ) K D1 2 4 5 आह्वयन् ( for °यद् ) Dn -दुर्मद ( for -कोविद· ) — D2 om lines 1332-1332 — ( L 1335 ) G(ed ) मृधे ( for मध्ये ) — ( L 1333 ) K1 2 द्वेषीभूताः ; G4 द्वैधीभूतं ( for °भूता ) K3 मृत्योर् ( for मधोर् ) B2 मनोर्वंशविवर्धनाः ; D1 मानार्थं समुपागता ( for $^{b}$ ) — ( L 1334 ) B2 विपुलायुधान् , D1 °लां गदाम् , G3 4 °लान्भुजान् ( for °ला गदा. ) — ( L. 1335 ) K2 om ( hapl ) lines 1335$^{b}$–1340$^{a}$. K3, 4

विरामनियमे प्राप्ते तूष्णींभूता बभूव ह ।
न वाचमीरयेद्देवी नियमात्सत्यवादिनी ॥
अथ भूतानि सर्वाणि तूष्णीभूतानि सर्वशः ।
न शेकुरभिधानार्थं व्याहर्तुं वदनैर्बलात् ॥ [ 1665 ]
विभज्य योगं मनसा सर्वभूतेष्वनुग्रहम् ।
सरस्वती स्वरयुता व्याजहार महास्वनम् ॥
सरस्वत्या समायुक्तां शिक्षां गृह्णन्ति देहिनः ।
तस्मिन्नेवाथ ते सर्वे गानं गायन्ति शिक्षया ॥
आदित्या वसवो रुद्रा मरुतश्चाश्विभिः सह । [ 1670 ]
जटिलाश्चीरवसना मुञ्जमेखलधारिणः ॥
गन्धर्वाः किंनराश्चैव सनागाः सह चाम्भसः ।
तपश्चरन्ति सहिताः पुष्करेषु मनीषिणः ॥
अपि कीटपतंगैश्च सह सर्वैः सरीसृपैः ।
शोषयन्ति शरीराणि तपसोग्रेण यत्नतः ॥ [ 1675 ]
विष्णुर्विष्णुत्वमापन्नो देहान्तरं विसृष्टवान् ।
संरक्षति महायोगी सर्वास्तान्सहचारिणः ॥
पुष्करे रमते विष्णुर्विष्णुरेव द्विधा कृतः ।
दीप्यमानः स्वतेजोभिर्विधूम इव पावकः ॥
सोऽग्निर्मनःसमुद्भूतः पृथिवीं तापयन्निव । [ 1680 ]
प्रधावति समं तेन मण्डलं दशयोजनम् ॥
विरराजार्चिभिर्दीप्तैः पृष्ठतश्चावलम्बिभिः ।
विस्तीर्णपर्णविभवैर्मयूखैरिव दीपितः ॥
तस्याग्नेर्विस्फुलिङ्गानां न शेकुर्लङ्घने रताः ।
विप्रकीर्णस्य बहुधा मर्यादामिव भास्करः ॥ [ 1685 ]
सोऽग्निर्दीप्य विभज्यांशून्विधूम इव पावकः ।
ऋत्विग्भिर्ज्वलनप्रख्यैर्विक्रीयत इवाध्वरे ॥
सोऽग्निर्धूमगतस्तत्र तिष्ठते विपुलस्तदा ।
यावद्विष्णुः क्रमप्राप्तो नियमस्य समापनात् ॥
रक्षां कृत्वा न तं विद्याद्विष्णुर्विष्णुपराक्रमः । [ 1690 ]
भूत्वा शतशरीरो वै नागो बालाहकोऽभवत् ॥
तमग्निमात्मसंसृष्टं लेलिहानं महामतिः ।
अतिप्रवृद्धं तेजोभिर्भूतानां हितकाम्यया ॥

शृण्वते, $D_s$ °मैश्च न शृण्वते (for $^{b}$) — (L 1661) $K_1$ $\tilde{N}_2$ $V_{1\,3}$ B $D_s$ $D_{3\,4.6}$ मन्दराग्र (for °ग्रे) $\tilde{N}_2$ $V_{1\,3}$ $B_1$ $D_s$ $G_{3\,4}$ सर्वम् (for कृत्स्नम्) — (L 1662) $K_1$ $D_4$ -नियमं, $D_{2.5}$ °म- (for °मे) $K_2$ विरामं नियमं प्रोक्तं: $D_3$ °मनियमै प्राप्तैः (for $^{a}$) — (L 1664) $K_2$ $D_1$ अद्य (for अथ). — (L 1665) $D_3$ वचनं (for वदनैर्) — (L 1666) $K_1$ $D_4$ विभिद्य (for विभज्य). — (L 1667) $K_3$ Dn $D_{2\,4}$ Cn तीरयुता, $V_1$ $D_3$ सुरसुता (for स्वरयुता) $D_5$ सरस्वती स्वरयुतां (for $^{a}$) $K_2$ $B_2$ Dn $D_3$ महास्वना, $K_{3\,4}$ $D_{2.4\,5}$ °स्मनाम् (for °स्वनम्) — (L 1568) $D_3$ महाशुक्लां (for समायुक्तां) $D_4$ सरस्वत्यां स्वरयुतां (for $^{a}$) $V_3$ देहिनम् (for °न) — (L. 1769) $K_1$ [आ]श्रिते, $K_4$ [आ]सते, $D_{n2}$ [उ]च्यते, $D_4$ श्रिते (for [अ]थ ते) $V_3$ शिक्षिता (for शिक्षया) — (L. 1670) $G_3$ om lines 1670$^{b}$–1673$^{a}$ $K_2$ वसुभिश् (for मरुतश्). $D_3$ चर्षिभि, $G_1$ चाग्निभिः (for चाश्विभिः) — (L 1671) $K_2$ मुण्डा, $D_{n1}$ मुण्ड- (for मुञ्ज-) — $D_3$ om (hapl) lines 1672–1673 — (L 1672) $K_2$ $D_4$ सहनागा सचाम्भस (for $^{b}$) — For line 1672, $B_2$ subst:

55** गन्धर्वाश्चीरवसना किंनराश्चैव सर्वशः ।

— (L. 1674) $K_1$ $D_4$ -पतंगाश् (for °गैश्). — (L. 1676) $D_5$ देहान्तर- (for °रं) — (1677) $D_3$ महायोगात् (for °योगी) — (L 1678) $\tilde{N}_2$ वसते (for रमते) B $D_s$ $D_6$ $G_{3\,4}$ पुनर् (for the second विष्णुर्) $D_3$ एको (for एव) — (L 1681) $D_s$ समत्वेन (for समं तेन) — (L 1682) $G_3$ शतरङ्गार्चिभिर्दीप्तै (for $^{a}$) — (L 1683) $\tilde{N}_2$ $B_3$ $D_3$ विशीर्ण- (for विस्तीर्ण-) $K_3$ Dn $D_2$ विशीर्णपार्थि(Dn $D_2$ °र्थं)विभवैर्, $K_4$ $V_{1\,3}$ $B_1$ $D_s$ $D_{5\,6}$ विशीर्णप($D_{s1}$ °र्णं प)र्वैवि°, $B_2$ $G_3$ विशीर्णवर्णवि° (for $^{a}$). — (L 1685) $K_{3\,4}$ $V_3$ $B_1$ Dn $D_{2\,5}$ $G_3$ Cn वसुधा- (for बहुधा) $K_{2\,4}$ Dn $D_{1-3\,5}$ $G_3$ भास्करम् (for °रः) — (L 1686) $K_{2-4}$ $V_4$ B $D_{1\,4}$ सोऽग्नि दीप्यति शय्यासु ($K_3$ दीप्तांशुर्; $K_4$ तीव्रांशुर्, $B_{1\,3}$ सह्यांशुर्; $B_2$ सूर्यांशुर्, $D_4$ सर्वांशुर्); $D_s$ $D_6$ सोग्निर्दीप्य- त्यसह्यांशुर् (for $^{a}$) — (L 1687) $K_2$ $V_3$ $D_{1\,4}$ विहियन्त; $K_4$ $V_1$ B $D_s$ $D_{2\,3\,5}$ विक्रीयन्त, $D_6$ (marg) भूषयन्त (for विक्रीयत). $K_1$ विहियन्त इवाम्बरे, Cal ed विकृतो वा महाध्वरे (for $^{b}$) — (L 1688) $D_4$ धूमसखम् (for °गतस्) $K_2$ विपुलं सदा; $K_3$ $V_3$ $B_1$ Dn $D_2$ $G_3$ °लं त($K_3$ स)दा (for °लस्तदा) — (L 1689) $D_{s1}$ क्रमात्प्राप्तो, $D_2$ क्रमं प्राप्तो (for क्रमप्राप्तो). $D_3$ यावद्विष्णुत्वमाप्नोति (for $^{a}$). Bom Poona eds G(ed) स्थितं (for न तं). $D_5$ (marg.) सत्य- (for विष्णु-). — (L. 1691) $B_2$ (marg,

वारिणा सुखशीतेन प्राणिनां प्राणवर्धनः ।
न्यषिञ्चद्दहनं तत्र नागो बालाहकस्तदा ॥ [ 1695 ]
ततः सिद्धगणैर्जुष्टः पुष्करे तप्यते तपः ।
संहृत्य मनसात्मानं महायोगी महाबलः ॥
संहृत्य पादगात्राणि मनो मूर्ध्नि विधारयन् ।
अचलं स्थानमासाद्य तूष्णीभूतो बभूव ह ॥
एष धर्मो हि धर्माणां नोपधानविकल्पितः । [ 1700 ]
हितः सर्वेषु भूतेषु इह चामुत्र चोभयोः ॥
अथ दैत्या हतास्तत्र समागम्योद्यतायुधाः ।
मायाप्राप्तैर्बहुविधैर्नगैररभिसंवृताः ॥
अग्निं दैत्याः पर्वताग्रैरभिघ्नन्ति परंतप ।
ज्वलन्तं ज्वलनप्रख्या महाकाया महाबलाः ॥ [ 1705 ]
मेघीभूताश्च मायाभिर्वर्षन्ति बलदर्पिताः ।
तस्मिन्नेवाग्निसंघाते संघातं तन्महाबलम् ॥
ते शैलास्त्वर्चिषा दग्धाः शतशोऽथ सहस्रशः ।
युगान्ते प्रभुरादित्यः प्रजा इव दिधक्षिवान् ॥
न शेकुरग्निं दैत्यास्ते मायाभिमुखमुद्यतम् । [ 1710 ]
आदित्यमिव दीप्यन्तं नभः सूर्योदये यथा ॥
विहतैरुद्यमैः सर्वैर्दैत्या भग्नपराक्रमाः ।
गन्धमादनमासाद्य निषण्णा गिरिमूर्धनि ॥
स चाग्निर्वैष्णवे लोके विद्युद्भिरिव संगतः ।
अन्तरिक्षचरान्दैत्यान्निर्दहन्विचरन्दिवि ॥ [ 1715 ]
नागो बालाहकश्चैव मेघैः संघातमागतः ।
मुमोच सलिलं भूमौ पर्जन्य इव वृष्टिमान् ॥
मन्त्रैः संचोदितो नागो द्विजेभ्यो वदनोद्गतैः ।
मुमोच तोयसंघातं मानयन्विप्रजं जनम् ॥

Colophon

जनमेजय उवाच ।

संयुज्य तपसा देवाः किमकुर्वंस्ततः परम् । [ 1720 ]
न हि तद्विद्यते लोके तपसा यन्न लभ्यते ॥

---

as above ) बहु- ( for शत- ) K2–4 D2 4 भवेत् ( for ऽभवत् ) K1 D1 नागो बलाहको भवेत् ( for b ) — ( L. 1692 ) B Dn2 Ds D6 महामतिम्, G3 °द्युतिम् ( for °मति ) — ( L 1695 ) D2 ऐरावणस् ( for बालाहकस् ) — ( L 1696 ) V3 हृष्टः, D3 तत्र ( for जुष्ट ) — ( L 1698 ) Ñ2 D6 पादौ ( for पाद- ) D5 संहृत्य पद्मपत्राणि ( for a ) K2 D1 विचारणात्, K3 निधाय च, Ds1 विधारय, D3 विधारयत् ( for °यन् ) — ( L. 1700 ) K2 D1 [उ]पधर्मं ( for °धान- ) — ( L 1701 ) इहामुत्र स चोभयो ( for b ) — ( L 1703 ) K1 D1 धर्म- ( for माया- ) — ( L 1704 ) K1 पर्वताग्रे ( for °ग्रैर् ) — ( L. 1705 ) K4 ज्वलनं, D3 °न्ति ( for °न्तं ) — ( L 1706 ) V1 मेघीकृताश्च, G3 मेघभू° ( for मेघीभू° ) — ( L. 1707 ) B2 Dn G3 [अ]भि- ( for [अ]ग्नि- ) K4 B3 D3 -संघातं, D5 °तै ( for °ते ) D3 दारुणं तु, G3 ससंघात ( for संघातं तन् ) K4 संघातं हि महाबल. ( for b ) — ( L 1709 ) K1 D1 दिधक्षया, V3 D2 दिधिक्षिवान्, B1 3 D6 G3 दिधक्षति, D3 दिधक्षयन् ( for °क्षिवान् ) Cal ed जनानिव दिधक्षति ( for b ) — ( L 1710 ) Ds1 अग्निदग्धास् ( for अग्निं दैत्यास् ) D4 मायाभिरनिवर्तितुम् ( for b ). — ( L 1711 ) K4 B2 D2 दीप्यन्ते ( for °न्तं ) K2 D1 G3 आदित्या ( G3 °त्य ) इव दीप्यन्ते ( for a ). D4 तम. ( for नभः ). — ( L 1712 ) K V1 3 B1 2 Ds1 D3 4 G3 विहितैर् ( for विहृ° ). Dn D2 विहितैरुद्यतै सर्वैर्, D1 निहतैरधमैः सर्वैर् ( for a ) — ( L. 1713 ) B3 D6 G3 नग- ( for गिरि- ) — ( L 1714 ) K1 3 4 Ñ3 V1 3 B Dn Ds2 D2 4 5 G3 स चाग्निर्वैष्णवैर्लोकैर् ( for a ) B1 D6 G3 सह ( for इव ) Ñ2 V1 B3 Ds1 संवृत ( for संगत ) — K3 om ( hapl ) lines 1715–1716 — ( L 1715 ) B1 D4 -गतान् ( for -चरान् ) V1 D5 व्यचरद् ( for विचरन् ) D3 G3 विर्दहन्निव सन्ति ये ( G3 तेजसा ) ( for b ) — ( L 1716 ) K2 D1 नागैर्बलाहक( D4 °कै )श्चैव ( for a ) — ( L 1718 ) K1–3 D1 4 सनोदितो ( for संचो° ) K2 D1 वचनोद्गतै°, D5 वचनाद्गतैः ( for वदनोद्गतै ) — After line 1718, B3 ins

56** जुहुवुर्मन्त्रविधिना ब्राह्मणा मन्त्रचोदिता. ।
हविषा मन्त्रपूतेन यथा वै विधिरेव च ॥

— ( L 1719 ) Dn4 -संपातं, D4 -संघातान् ( for °तं ) B1 सोमजं ( for विप्रजं ) K1 Ñ2 V1 जलम् ( for जनम् ) K4 मानयित्वा प्रजं जनम्, V3 B2 Ds1 °यन्विपुलं जलम्; Ds2 आनयन्विप्रजं बलम्, D2. 3 °यन्विप्रजम्भितम् ( D3 °संगमम् ). ( for b )

COLOPHON — *Mention of the Epic* K2 Ds2 D5. — *Mention of Khila* K1 V1 3 B Ds1 D1–4. — *Sub-parvan* K Ñ2 V1 3 B Dn Ds D1 2 5 6 G3 पौ( K3 D1 पु )ष्करम्, D3 4 पौष्करप्रादुर्भाव. — *Adhy no* · K3 1, V3 214, Dn, Ds2 213, D1 201, D3 229, D4 209, G3 355

( L 1720 ) K3. 4 Dn1 संपूज्य, D3 प्रयुज्य ( for सं° ).

वैशंपायन उवाच ।

अथ दीक्षां समास्थाय सर्वे विष्णुमया गणाः ।
पुष्करादग्निमुद्धृत्य प्रणीय च यथाविधि ॥
जुहुवुर्मन्त्रविधिना ब्राह्मणा मन्त्रचोदिताः ।
हविषा मन्त्रपूतेन यथा वै विधिरेव च ॥ [ 1725 ]
स चाग्निर्विधिवत्तत्र वर्धते ब्रह्मतेजसा ।
तेजोभिर्बहुलीभूतः प्रभुः पुरुषविग्रहः ॥
ब्रह्मदण्ड इति ख्यातो वपुषा निर्दहन्निव ।
दिव्यरूपप्रहरणो ह्यसिचर्मधनुर्धरः ॥
गदी च लाङ्गली चक्री शरी चर्मी परश्वधी । [ 1730 ]
शूली वज्री खड्गपाणिः शक्तिमान्वरकार्मुकी ॥
विष्णुश्चक्रधरः खड्गी मुसली लाङ्गलायुधः ।
नरो लाङ्गलमालम्ब्य मुसलं च महाबलः ।
वज्रमिन्द्रस्तपोयोगाच्छतपर्वाणमाक्षिपत् ।
रुद्रः शूलं पिनाकं च मनसाधारयत्प्रभुः ॥ [ 1735 ]
मृत्युर्दण्डं सपाशं च कालः शक्तिमगृह्णत ।
जग्राह परशुं त्वष्टा कुबेरश्च परश्वधम् ॥
निर्विकारैः समायुक्ताः शतशोऽथ सहस्रशः ।
विश्वकर्मा च त्वष्टा च चक्राते ह्यायुधानि तु ॥
इन्द्रायाग्नी रथं प्रादात्सूर्याय च प्रतापिने । [ 1740 ]
परमात्मा ददौ विष्णू रुद्राय च महात्मने ॥
छन्दोभिरेव त्वष्टा तु स चकाराथ वाहिनीम् ।
विश्वकर्मा विमानानि चकार बहुभिः क्रमैः ॥
शरीरांशं समुद्धृत्य विष्णुः सत्यपराक्रमः ।
पुष्करात्पर्वणि घनान्पृतनार्थं प्रकल्पयत् ॥ [ 1745 ]
द्यां चैव सूर्यऋक्षाणां त्वरया समकल्पयत् ।
ययाभियुज्य संग्रामे शत्रुं निर्बिभिदे रणे ॥
स तं दण्डं समुचितं निर्विकारं समाहितम् ।
ब्रह्मा जग्राह विधिना अन्तर्धानगतः प्रभुः ॥
स्वैः प्रभावैश्च बहुधा सोऽस्त्रग्रामं चतुर्विधम् । [ 1750 ]
ऐन्द्रमाग्नेयवायव्यं रौद्रं रौद्रेण वर्चसा ॥
एभिर्विकारैः संयुक्ता दितेः पुत्रा महाबलाः ।

---

B1 3 Ds2 Cal ed किं कुर्वन्त, D3 कर्म कुर्वंस् ( for किमकु° ) K1 2 D4 परस्परम्, K4 अत परम् ( for तत प° ). —( L 1721 ) B3 अनु- ( for यत्न ) K3 विद्यते ( for लभ्यते ) —( L 1722 ) V1 समासाद्य ( for °स्थाय ) K1 2 D4 सर्वे विष्णुपरायणाः ( for $^{b}$ ). —( L 1724 ) Ñ2 om line 1724$^{a}$ K1-3 D4 -नोदिता ( for चो° ) —( L 1725 ) D3 स ( for च ) G3 यथाविधि हुतेन च ( for $^{b}$ ) —( L 1726 ) Dn1 -तेजसः, G3 -चेतसा ( for -तेजसा ) —( L. 1728 ) Bom ed -दण्डी ( for -दण्ड ) D3 विमुखान् ( for वपुषा ) —( L 1730 ) K4 V3 D1 2 गदया, Ñ2 गदावान्, V1 B Ds D5 6 G3 सगदो ( for गदी च ) K2 शूली ( for शरी ) V1 3 वर्मी, D3 चर्म- ( for चर्मी ) —( L 1731 ) K1 Ds D6 चक्री ( for वज्री ) D4 शूली खड्गी वज्रपाणि ( for $^{a}$ ) Bom Poona eds G(ed) -कार्मुक ( °की ) —( L 1732 ) Ñ2 V3 स्वामी ( for खड्गी ) Ds2 D3 मुसली लाङ्गलायुध ( for $^{b}$ ) —( L 1733 ) D3 रराज हलमासाद्य ( for $^{a}$ ). G3 हलायुधः ( for महाबल ) —( L 1734 ) K2 चतु पर्वं समाक्षिपत ( for $^{b}$ ) —( L 1735 ) Bom Poona eds G(ed.) भुवि ( for प्रभु ). —( L 1736 ) K3 4 Dn D1 3 5 पाशमापः; D2 पाशमयं, D3 ( by corr ) च पाशं च ( for सपाशं च ) —( L 1737 ) G3 धनुर्महत् ( for परश्वधम् ) —( L 1738 ) D3 आदित्य इव दीप्यन्ते ( for $^{a}$ ) —( L 1739 ) K2 B D6 [आ]युधं बहु ( K2 धनु. ) ( for [आ]युधानि तु ) —( L. 1740 ) B1 Dn D5 6 G3 [अ]ग्नि- ( for [अ]ग्नी ) K1 D4 स सूर्याय ( for सूर्याय च ) —( L 1741 ) K1 2 D4 विष्णो; K3 4 D1 2 5 G3 कृष्णो ( for विष्णू ) —( L. 1742 ) G3 चकार रथवाहिनीम् ( for $^{b}$ ) —( L 4744 ) Bom. Poona eds तमुत्पत्य, G(ed) समुत्पत्य ( for समुद्धृत्य ). K2 वरान्पृथगकल्मषान् ( for $^{b}$ ) —( L 1745 ) K1 B2 D2 G3 Cn वनात्, Ñ2 V1 3 B1 3 Dn Ds D2 5 6 घनात् ( for घनान् ) K1 3 4 Ñ2 B2 Dn1 Ds2 D1-5 प्रकल्पयन्, B1 D6 प्रवर्तयन्, B3 प्रवर्तत, Ds1 G3 प्रकल्पयेत् ( for °यत् ). —( L. 1746 ) V1 3 D5 ज्यां, Dn1 या ( for द्यां ) D4 सर्व- ( for सूर्य- ) D4 ( marg as above ) -सेन्द्राणां ( for -ऋक्षाणां ) K1 या चैव सूर्यसेन्द्राणां, K2 नद्यां स देववत्सूर्यौ, D6 ज्यां ( marg. यां ) चैव सूर्ययक्षाणां ( for $^{a}$ ) K1 D4 रक्षार्थं; D6 त्वचा च; Bom Poona eds G(ed ) वाचा वै ( for त्वरया ). K2 रक्षणार्थमकल्पयत्, V3 त्वचा समवकल्पयत्; Ds1 त्वचया समकल्पयेत्, D3 त्वष्टा वै समकल्पयन् ( for $^{b}$ ) — D3 om lines 1547-1548 —( L 1547 ) K2 ते पूज्य, K3 D2 [अ]भिपूज्य; K4 °युक्त-, Dn1 D1 5 [अ]भिपूज्यः D4 संयुज्य ( for [अ]भियुज्य ). K1 यथा संयुज्य सग्रामे, Dn2 ययाभिपूज्य सग्रामे ( for $^{a}$ ) K1 Ñ2 B1 D4 G3 शत्रून् ( for शत्रुं ) —( L 1748 ) K1 3 स तु, K2 4 D1 शत- ( for स तं ) —( L 1749 ) B2 बहुधा ( for विधिना ) —( L 1750 ) D5 स्वभावैश्च ( for प्र° ) B1 3 D6 विधिना, D4 बहुना ( for °धा ). K1

तपसा शिक्षया चैव अस्त्रैः प्रहरणैस्तथा ॥
बलेन चतुरङ्गेण वीर्येण च समाहिताः ।
अप्रधृष्या रणे सर्वे क्षणेनैवाभवंस्तदा ॥ [ 1755 ]
ते विहाय गुहामध्ये सभाण्डोपस्करे रथे ।
मन्दरस्य गिरेः पादे विचेरुर्वसुधातले ॥
चतुरङ्गं बलं सर्वं संहृत्य तमसः प्रभुः ।
विष्णुरेव महायोगी चचार वसुधातले ॥
भूयोऽन्यत्तप आसेदुश्चरन्तो ब्राह्मणैः सह । [ 1760 ]
तैश्च सर्वैः सुरगणैश्चर्मचीरनिवासिभिः ॥

Colophon.

जनमेजय उवाच ।

ब्रह्मन्खिले वर्तमाने निर्मर्यादे महाग्रहे ।
अविनाशे च भूतानां कथमासन्प्रजास्तदा ॥

वैशंपायन उवाच ।

अभ्यषिञ्चत्पृथुं वैन्यं पुरा राज्ये प्रजापतिः ।
राज्याय ऋषिभिः सार्धं प्रजाधर्मपरायणः ॥ [ 1765 ]
एष वः परमो राजा अनुरागादजायत ।
त्रेतायां संप्रवृत्तायामन्योन्यमनुजल्पिरे ॥
एष नो वृत्तिदाता च शिल्पानां च समर्पिता ।
निर्माता सर्वभूतानां सत्यप्राप्तेन कर्मणा ॥
एतस्मिन्नन्तरे देवा गन्धमादनसानुषु । [ 1770 ]
बहुभिर्नियमैः श्रान्ता निषण्णा गिरिसानुषु ॥
अथ गन्धं समासाद्य समन्ताद्देवदानवाः ।
माधवे समये प्राप्ते तेन गन्धेन दर्पिताः ॥
पुष्पमात्रस्य यद्वीर्यं मारुतेन विसर्पितम् ।
मनोग्राहि सुखं सर्वं पार्थिवं गन्धमुत्तमम् ॥ [ 1775 ]
ते दैत्यास्तेन गन्धेन किंचिद्विस्मयमागताः ।
प्रसन्नमनसो भूत्वा परं सौख्यमुपागताः ॥
ऊचुश्च सहिताः सर्वे तेन गन्धेन दर्पिताः ।
पुष्पमात्रस्य यद्वीर्यं कि तस्य फलतो भवेत् ॥

---

Ds D4 शस्त्र- ( for स्रोऽस्त्र- ) —( L 1751 ) V3 आदाय ( for आग्नेय- ) G3 -वायव्ये ( for °व्यं ) D3 तेजसा ( for वर्चसा ) —( L 1752 ) Ds1 प्रकारैः ( for वि° ) —( L 1753 ) Bom ed स्वस्त्रै , Poona eds G(ed) स्वास्त्रै ( for अस्त्रै. ) G3 बहुविधैस् ( for प्रहरणैस् ) Ds1 शस्त्रै प्रहरणेन च ( for $^{b}$ ) —( L 1755 ) K3 4 Dn D1 2 5 ( marg as above ) क्षणेन समपद्यत , Bom. Poona eds G(ed) समपद्यन्त वै तदा ( for $^{b}$ ) —( L 1756 ) V1 3 गुहां मध्ये , Ds G3 सभामध्ये , D1 5 गुहामध्यं ( for °ध्ये ) K1 रणे , K2 तथा ( for रथे ) K4 सभाण्डोपस्करै रथै. , D6 °पस्करं रथम् ( for $^{b}$ ) —( L 1757 ) B1 बहुधा ( for वसुधा- ) —( L. 1758 ) K1 D3 तमसा , K3 V1 3 B1 2 Ds तपस , D6 G3 तपसा ( for तमसः ) —( L. 1759 ) Bom ed G(ed) महायोगश्च, Poona ed °योगांश्च ( for °योगी ) —( L 1760 ) G3 ब्रह्मणा ( for ब्राह्मणै ) G3 Bom Poona ed G(ed) धर्म- ( for चर्म- )

Colophon —*Mention of the Epic* K4 Ds2 D1 5. —*Mention of Khila* V1 3 B Ds1 D1 4 —*Sub-parvan* K Ñ2 V1 3 B Dn1 Ds D1-2 5 6 G3 पौ( K3 पु)ष्करम्, Dn1 D4 पु( D4 पौ )ष्करप्रादुर्भाव· —*Adhy. no* . K3 ( marg ) 2 , V3 216 , Dn 23 , Ds2 214; D1 202 , D4 210 , G3 356

( L 1762 ) V3 भगवन् ( hypermetric ) ( for ब्रह्मन् ) K [अ]खिले ( hypermetric ), D2 निखिले ( hypermetric ) ( for खिले ) Ñ2 V1 3 Ds परिग्रहे ( for महा° ) —( L 1763 ) K1 D4 विनाशे सर्वभूतानां, K2 अचिरात्सर्वभू° ; K4 D1 2 5 अवि( D1 5 °भि )नाशेन भू° ( for $^{a}$ ) —( L 1764 ) K1 अभिषिच्य ( for अभ्यषिञ्चत् ) K3 राज्ये ( for वैन्य )· —For line 1764, Ñ2 V1 3 B1 3 Ds D3 6 G3 subst ·

57** पृथुं वैन्य प्रजापालमभ्यषिञ्चन्प्रजापति ॥

—( L 1765 ) K2 यज्ञाय , K3 D1 2 5 ( *sup lin* as above ) याज्याय , K4 V1 Ds न्यायाय , D3 यज्ञार्थ , D6 G3 शशास ; D6 ( *inf lin* ) राष्ट्राय ( for राज्याय ) — D3 om. lines 1766-1767. —( L 1766 ) V1 B1 3 D6 ( *sup lin* ) न· ( for व ) B1 3 D6 Cal ed सा( B3 अ)नुरागो ऽय( D6 °गोऽभ्य)जायत ( for $^{b}$ ) —( L 1767 ) V1 G3 अभि- , D2 अपि ( for अनु- ) K1 अन्योन्यमुपजग्मिरे , K3 °न्यं ते जजल्पिरे ( for $^{b}$ ). —( L 1768 ) K1 D4 वो ( for नो ) Ñ2 V1 3 B3 Ds D3 प्रवर्तिता ( for समर्पिता ) Bom Poona eds G(ed) विप्राणां च प्रवर्तिता ( for $^{b}$ ). —( L 1769 ) Dn D1 निर्मिता ( for निर्माता ) D3 यज्ञ ( for सत्य- ) —( L. 1770 ) Ds गन्धमादनमुत्तमम् ( for $^{b}$ ) — K2 G3 om ( hapl. ) line 1771· —( L 1771 ) D4 बहुभिर्विषयैः शान्ता ( for $^{a}$ ) —( L. 1772 ) Dn -मानवा ( for -दा° ) —( L 1773 ) Ñ2 Dn D2 समयं ( for °ये ) K1 3 4 V1 D1 5 मानवे समये ( K3 4 D1 5 °य ) प्राप्ते ( for $^{a}$ ) Ñ2 V1 3 B3 तर्पिता· ( for द° ). — G3 om ( hapl ) lines 1774–1777 K2 om. ( hapl.

अनुमानेन विज्ञेया विविधाः कर्मबुद्धयः । [ 1780 ]
शुभाश्चैवाशुभाश्चैव बुद्धिप्राणेन देहिनाम् ॥
तस्माद्वयं पयोमध्ये ओषधीर्निर्मथामहे ।
मन्दरेण विशालेन बलिना कामरूपिणा ॥
समुद्रमभिसंरम्भान्मथ्नीमः सोमजं जलम् ।
पीत्वा च सहिताः सर्वे प्रस्थिताः कामरूपिणः ॥ [ 1785 ]
विष्णुरेवाग्रणीस्तेषां भविष्यति महाबलः ।
दिवं च वसुधां चैव भोक्ष्यामः सह शत्रुभिः ॥
समूलपत्रशाखाश्च सपुष्पाः सफलाशिनः ।
सर्वग्रहांश्च गृह्णीमः सुधां च वसुधातले ॥
उद्धृत्य गिरिपादेभ्यो गन्धमादनसानुजान् । [ 1790 ]
प्रभाष्य वचनं देवा मन्दरस्य प्रकम्पने ॥
समुद्धर्तुं प्रधावन्ति कम्पयन्ति स्म मेदिनीम् ।
निश्चयेन महावीर्या बाहुभिः परिणाहयन् ॥
न शेकुस्ते समुद्धर्तुं शैलेन्द्रं दनुवंशजाः ।
निपेतुर्जानुभिर्जुष्टा विपुले पर्वतान्तरे ॥ [ 1795 ]
समाधायात्मनात्मानं तपसा दग्धकिल्बिषाः ।
पितामहं प्रपद्यन्त शिरोभिः कामरूपिणः ॥
तेषां मनोभिलषितं ब्रह्मा सर्वत्रगो वशी ।
ज्ञात्वा बहुविधैर्वाक्यैर्व्याजहार सरस्वतीम् ॥
अशरीरां शरीरस्थां परया वर्णसंपदा । [ 1800 ]
सर्वलोकपतिर्ब्रह्मा लोकानां हितकाम्यया ॥
आदित्यैर्वसुभिश्चैव रुद्रैश्च समरुद्गणैः ।
देवैर्यक्षैः सगन्धर्वैः किंनरैश्च प्रगाथिभिः ॥
समेत्य सहितैः सर्वैः शक्य उद्धरितुं गिरिः ।
अमृतार्थे महातेजा धातुभिः समरञ्जितः ॥ [ 1805 ]
सुरासुरगणाः सर्वे समुत्पाट्य महागिरिम् ।
हस्तारूढाः प्रपश्यन्ति वीरुधो हिमवद्रसम् ॥
एतच्छ्रुत्वा च वचनं सर्वेषामन्तिके तदा ।
दैतेया बाहुबलिनो मनोभिर्वाग्भिरेव च ॥
विक्रीडभूता वसुधा बभूव लवणाम्भसः । [ 1810 ]
यत्र पुष्कर विन्यस्तं सहितैर्देवदानवैः ॥

lines 1774-1776 — (L 1774) $K_4$ $B_2$ $D_1$ समर्पितम् (for विस°) — (L 1777) $K_1$ $D_4$ -वदना (for -मनसो) $\tilde{N}_2$ $V_{1\ 3}$ $D_8$ सर्वे (for भूत्वा) $V_3$ om (hapl) line 1778 — (L 1778) $\tilde{N}_2$ तर्पिता (for द°) — (L 1780) $K_3$ $D_{3,5}$ विज्ञाय (for विज्ञेया) $K_{1\ 2}$ $D_4$ $G_3$ -वृत्तय., $V_3$ -भूमय (for बुद्धय.) — (L 1781) $K_2$ वृत्ति, $D_4$ बुद्धि (for बुद्धि-) $K_4$ बुद्धि. प्रायेण देहिनाम् (for $^{b}$) — (L 1782) $B_1$ $Dn_1$ $D_{1\ 2\ 5}$ ओषध्यो, $Dn_2$ Bom. ed औषध्यो (for ओषधीर्) — $K_4$ om (hapl) lines 1784–1785 — (L 1784) $B_{1\ 3}$ $D_8$ $D_6$ (marg) संरब्धा (for °म्भान्) $Dn_1$ जले; $D_8$ गणा, $D_3$ बलम् (for जलम्) — (L 1787) $D_5$ (marg) $G_3$ शक्तिभि (for शत्रुभि.) — (L. 1788) $K_2$ सपुष्पा॰ फलसंस्थिता, $B_4$ Dn $G_3$ °ष्पा. फलशालिनः (for $^{b}$) — (L 1789) $B_2$ $Dn_2$ $G_3$ सर्वे (for सर्व-) $D_3$ -ग्राह (for -ग्रहाश्) $K_3$ $\tilde{N}_2$ $V_{1\ 3}$ B $D_8$ $D_4$ वसुधां, $K_3$ सुखं च (for सुधां च) — (L 1790) $K_2$ -सानुषु, $K_4$ $B_3$ °गान् (for °जान्) — (L 1791) $D_3$ च वचो (for वचन). $K_1$ देवो, $K_{3\ 4}$ Dn $D_{1\ 2\ 4}$ (marg) $_5$ $G_3$ दैत्या (for देवा) $K_2$ प्रतार्य वचनं देवो (for $^{a}$) $V_3$ $B_2$ प्रकल्पने (for °म्पने) — (L 1292) $Dn_1$ G(ed) प्रधावन्त, $Dn_2$ प्रयाचन्ति (for प्रधावन्ति) — (L 1793) $K_1$ $D_4$ निश्वसन्तो (for निश्चयेन) $K_1$ $\tilde{N}_2$ $V_1$ B $Dn_2$ $D_8$ $D_{2,4,6}$ $G_3$ Cn परिणाहिभिः (for °हयन्) $Dn_1$ $D_4$ बहुभि परिणा($D_4$ °वा)हिभि॰ (for $^{b}$) — (L 1794) Bom Poona eds G(ed) शक्नुस् (for शेकुस्) — (L 1795) $K_2$ $\tilde{N}_2$ $V_1$ B Dn $D_8$ $D_3$ $G_3$ घृष्टा; $V_3$ घृष्टा (for जुष्टा) — (L 1797) $K_{1\ 4}$ $D_4$ प्रपद्यन्तः, $K_2$ प्रापतन्त, $B_2$ Dn $D_{1\ 5}$ $G_3$ Cn प्रपद्यन्ते, $Ds_1$ °द्येत (for -द्यन्त) $K_{2,4}$ $\tilde{N}_2$ $V_{1,3}$ $B_{2\ 3}$ Dn $D_8$ $D_{2\ 3\ 6}$ $G_3$ Cn °रूपिभि (for °ण) — (L 1800) B Dn $D_8$ $D_6$ $G_3$ शरीरस्थः (for °रस्थां) — (L 1801) $G_3$ Poona ed -मतिर् (for -पतिर्) $K_2$ (before corr) लोकानां च पितामहः (for $^{b}$) — (L 1804) $K_1$ $D_4$ उद्वर्तितुं (for उद्धरितुं). $K_{2\ 5}$ $D_{1\ 5}$ शक्यमुद्धरि($K_2$ °द्वर्ति)तुं हरिम्, $\tilde{N}_3$ $V_{1\ 3}$ $B_{2\ 3}$ $D_8$ $D_6$ $G_3$ उद्धर्तुं शक्यते गिरि ($B_{2\ 3}$ °रिम्), $B_1$ उद्धर्तुं धरितुं गिरि., $D_2$ उद्धर्तुं तं महागिरिम् (for $^{b}$) — (L 1807) Cal ed. हि नवं (for हिमवद्) $D_2$ भयम् (for रसम्) $K_2$ $D_4$ विबुधा हि महद्भृशम्; $D_4$ (marg.) वीरुधो हि महद्रथम् (for $^{b}$) — (L 1810) $\tilde{N}_2$ आक्रीडभूता (for वि°) $K_{1\ 3\ 4}$ Dn $D_{1\ 2\ 5}$ $G_3$ बहुधा (for वसुधा) $B_1$ Dn $D_{1\ 2,5}$ बभूवुर् (for °व). $D_3$ $G_3$ लवणाम्भसि (for °स) — After line 1810, $\tilde{N}_2$ ins.:

58** न च केचित्पिबन्त्यन्ये देवा नैव च दानवा॰ ।

— $G_3$ om. lines 1811–1815. — (L. 1811) Dn Bom.

सुरासुरगणाः सर्वे सहिता लवणाम्भसः ।
मन्दरं पुष्करं कृत्वा नेत्रं वासुकिमेव च ॥
समाः सहस्रं मथितं जलमोषधिभिः सह ।
क्षीरभूतं समायोगादमृतं समपद्यत । [ 1815 ]
तज्जह्रुरसुराः पूर्वमाक्रान्ता लोभमन्युना ॥
धन्वन्तरिस्तथा मद्यं श्रीर्देवी कौस्तुभो मणिः ।
शशाङ्को विमलश्चापि समुत्तस्थुः समन्ततः ।
उच्चैःश्रवा हयो रम्यः पीयूषं तदनन्तरम् ॥
पश्चाद्देवास्तदादातुमुद्यता राहुमब्रुवन् । [ 1820 ]
न तु केचित्पिबन्त्येते दैत्या नैव च दानवाः ॥
चिच्छेदाथ हरिः संख्ये राहोश्चक्रेण कं तदा ।
अनिर्भुक्तं पितृगणैर्मुनिभिश्च सनातनैः ॥
तन्द्रिहस्तादमृतं जहार पृथिवी स्वयम् ।
जहारान्तर्गता देवी ब्रह्मवाक्यप्रचोदिता ॥ [ 1825 ]

Colophon.

जनमेजय उवाच ।

निहते दैत्यसंघाते विष्णोश्चातिपराक्रमे ।
दैतेया दानवेयाश्च किमिच्छन्ति पराक्रमात् ॥

वैशंपायन उवाच ।

दानवा राज्यमिच्छन्ति पराक्रम्य महाबलाः ।
तप इच्छन्ति सहिता देवाः सत्यपराक्रमाः ॥
अथ कालस्य महतो हिरण्यकशिपुस्तदा । [ 1830 ]
यजते ब्रह्मणः क्षेत्रे प्राप्तैश्वर्यः स कामदः ॥
यजेद्बहुसुवर्णेन राजसूयेन पार्थिवः ।
क्रतुना दानवश्रेष्ठो वसुधायां महाबलः ॥
गङ्गायमुनयोर्मध्ये यद्भूद्विपुलं तपः ।

---

Poona eds G(ed) विन्यस्त॰ (for °स्तं) — (L 1813) D8 नेत्रं कृत्वा तु वासुकिम् (for $^{b}$) — After line 1813, Ñ2 V1 3 ins

59** कूर्मपृष्ठं तत प्राप्य मन्दरं न्यस्तवांस्तदा ।
विष्णुरेव महाबाहु पर्वतं यत्नवत्ततः ॥
ततो मथितुमारेभे देवदैत्यसमागमे ।
यत पुच्छं ततो देवा असुरा मस्तके स्थिताः ॥
एतस्य ह सनिश्वासा उक्षिता असुरास्तदा ॥ [5]

[(L 2) V3 महायोगी (for °बाहु) V1 धृत (for तत) — (L 5) V1 ते तस्य फणिन श्वासा, V3 ते तस्य फलविश्वासाच् (for $^{a}$) V3 शुष्किता (for उक्षिता) ]

— (L 1814) B2 ममन्थुर् (for मथितं) — After line 1815, Ñ2 V3 ins

60** क्षीरादधः समभवन्नवनीतं समुद्धृतम् ।
मथ्यमाने ततस्तस्य समुत्पत्ति क्रमेण सः ॥
उच्चैश्रवास्तथाश्वश्च ऐरावतमनन्तरम् ।
ततो लक्ष्मी समद्भूता विष्णुवक्षःस्थलाश्रया ॥
ततो धन्वन्तरिर्देव उद्भूत कलशान्वित ।
कलशात्तत्समुद्भूतममृतं तत्र दृष्टवान् ॥

— (L 1816) Ds1 उज्जह्रुर् (for तज्जह्रुर्) K4 Ñ2 V3 D4 5 सर्वम्; D3 सर्वे (for पूर्वम्) K2 V1 ते जह्रुरसुरा सर्वम् (for $^{a}$) V3 बल- (for लोभ-) — Ñ2 B G3 ins after line 1816 V1 after line 1817

61** तदा पश्चाज्जह्रुर्देवाः कामतेजोबलान्विताः ।

— V3 om line 1817. — (L 1817) V1 सद्य; Ds2 सुरा (for मद्यं) — (L 1818) समुद्भूत (for समुत्तस्थु). — V3 om lines 1819-1820 V1 om line 1819 — (L 1819) D3 चैव (for रम्य) — (L. 1820) K1 2 4 तथा पातुम्, Ñ2 V1 B1 3 D6 तदा पातुम् (for तदादातुम्). — For line 1820, D3 subst

62** दृष्ट्वा दैत्यं स्थितं पातुं मध्ये तं राहुमव्ययम् ।

— (L 1821) K1. 2 B D3-6 [अ]न्ये, Ñ2 V1 3 Ds [ए]व; Dn G3 स्म (for [ए]ते) — (L 1822) K3 om lines 1822$^{b}$–1824$^{a}$ K1. 2 4 Ñ2 V1 3 B Ds D1 2 4-6 कं मृधे; Dn वै तदा, D3 कंधरम् (for कं तदा) — (L 1823) Ñ2 मुनिर्मितं, V1 3 मुनिर्मुक्तं, D3 अविभक्तं, Cal ed अभियुक्तं (for अनिर्भुक्त) B1 समाहितै, D3 समन्तत (for सनातनै). — Ds om line 1825 — (L 1825) Dn [अ]ङ्कगता (for [अ]न्तर्गता) K1 2 Ñ2 V1 3 B D3 4 6 G3 जगामादर्शनं देवी (for $^{a}$) K1-3 D4 -प्रणोदिता (for -प्रचो°)

COLOPHON — *Mention of the Epic* K4 Ds2 D1 5. — *Mention of Khila* V1. 3 B Ds2 D1 4 — *Sub-parvan* K Ñ2 V1 3 B Dn Ds D1-3 5 6 G4 पौष्करम्; Dn D4 पु(D4 पौ)ष्करप्रादुर्भाव. — *Adhy no* K3 3; V3 216, Dn 24, Ds2 215, D1 203; D3 231; D4 211; G3 357

(L 1826) D6 -पराक्रमै. (for °मे). — (L. 1827) K3 V1 3 B2 Ds दैतेया दानवाश्चैव (for $^{a}$). D3 ऐच्छन्त (for इच्छन्ति) — (L 1829) Ds1 सहसा (for सहिता) — (L. 1830) Ñ2 B Dn Ds कथं (for अथ). K1 2 V1 3 कथं का- (K2 प्रश्नका)मस्य महतो, D6 G3 कथं काम(G3 °ल)स्य

समेयुस्तत्र सहिता यजमाने महासुरे ॥ [ 1835 ]
ब्राह्मणा वेदविद्वांसो महाव्रतपरायणाः ।
यतयश्चापरे सिद्धा योगधर्मेण भारत ॥
मुनयो वालखिल्याश्च धन्या धर्मेण शोधिताः ।
बहवो हि द्विजा मुख्या नित्यं धर्मपरायणाः ॥
ऋषयश्च महाभागा विप्रैः पूज्याः सहस्रशः । [ 1840 ]
विपुलै रत्नविभवैर्ह्रियमाणैस्ततस्ततः ॥
शुक्रस्तु सह पुत्रेण दैत्यं याजयते प्रभुः ।
हिरण्यकशिपुर्मध्ये गणानां ज्वलनप्रभः ॥
हिरण्यकशिपुश्चैव व्याजहार सरस्वतीम् ।
कामाद्वरं ददानीति तद्वै संप्रतिपद्यताम् ॥ [ 1845 ]
विष्णुर्वामनरूपेण भिक्षां तां प्रत्यगृह्णत ।
हिरण्यकशिपोर्हस्ताद्वै पदे पदमेव च ॥
ततः क्रमितुमारेभे विष्णुः सत्यपराक्रमः ।
त्रीँल्लोकांस्त्रिपदैः क्रान्त्वा दिव्यं वपुरधारयत् ॥
हृतराज्याश्च दैतेयाः पातालविवरं ययुः । [ 1850 ]
ससैन्यगणसंबद्धाः सप्रासाः सासितोमराः ॥
सयन्त्रलगुडाश्चैव सपताकारथध्वजाः ।
सचर्मवर्मकोशाश्च सायुधाः सपरश्वधाः ॥
तथेन्द्रविष्णुसहिताः सद्यस्तेऽभ्युत्थिता गणाः ।
अभ्यषिञ्चन्प्रमुदिता लोकानामधिपं सुराः ॥ [ 1855 ]
स तान्स्वधामृतेनाशु पितॄन्वै समतर्पयत् ॥
ब्रह्मा तदमृतं दिव्यं महेन्द्राय प्रयच्छति ।
अक्षयश्चाव्ययश्चैव संवृतस्तेन कर्मणा ॥
ततः शङ्खमुपध्मासीद्धृषितां लोमहर्षणम् ।
पितामहकरोद्भूतं जनित्रे प्रथमे पदे ॥ [ 1860 ]
तं श्रुत्वा शङ्खशब्दं तु त्रयो लोकाः समाहिताः ।
निर्वृतिं परमां प्राप्ता इन्द्रं नाथमवाप्य च ॥

---

सहितो ( for [a] ) — ( L 1831 ) D8 कामत्त ( for कामद ) — ( L 1832 ) K3 पार्थिव. स महासुर. ( for [b] ) — ( L 1833 ) Bom ed G(ed) महाफल· ( for °बल ) — ( L 1834 ) K2 V3 D4 विमलं ( for विपुलं ) D6 ( inf lin ) तदा , G3 सद ( for तप· ) K1 यदभूद्विमलं यश ( for [b] ) — ( L 1837 ) D8 -युक्तेन ( for -धर्मेण ) — ( L 1838 ) D6 नाना- ( for धन्या ) K1 2 B3 D4 G3 शोभिता ; K3 4 B2 Dn D1, 2, 5 शोषिता , D6 ( marg as above ) तोषिता: ( for शोधिता ) Ñ2 नानाधर्मेण शोभिता· , V3 नानाधर्मोपशोभिता: , D3 योगधर्मेण पोषिता. ( for [b] ) — ( L 1839 ) K1-3 B2 Dn D1 नित्या , D2 3 नित्य- ( for नित्यं ) — ( L 1840 ) D3 महाभाग ( for °भागा ) — ( L 1841 ) Dn D2 G3 अत्र ( for रत्न- ) K1 2 D4 -शोभैश्च ( for -विभवैर् ) V1 3 B D8 विपुले रत्नवि( V1 3 °त्ने वि )भवे ( for [a] ) K3 ह्रियमाणस् V1, 3 D D0 °माणे ( for °माणैस् ) D8 क्रियमाणा इतस्तत: ( for [b] ) — ( L 1842 ) G(ed) योजयते ( tor या° ) D1 प्रभुम् ( for प्रभु· ) — K4 om ( hapl ) lines 1843 — ( L 1843 ) K1 2 B Dn D1 4 G3 हिरण्यकाशिपुं ( for °पुर् ) G3 दैत्याना ( for गणानां ) K1 2 D4 -प्रभम् , K3 V3 B2 ( marg as above ) 3 D1 5 -प्रभु ( for -प्रभ ) Dn गणानां प्रभवं प्रभु ( for [b] ). — ( L 1845 ) K1 2 B1 3 D1-5 ददामि ; K4 Ds1 G3 °ति ( for °नि ) — ( L 1846 ) D8 वसुधां ( for भिक्षां तां ) K2-4 Dn D1 2 G3 Cn प्रतिगृह्णति K3 B2 ( marg ) प्रतिगृह्णाति ( for प्रत्यगृह्णत ). — ( L 1849 ) B2 मुनिभिः ( for त्रिपदै ). K1 क्राम्य , G3 कृत्वा ( for क्रान्त्वा ) K3, 4 B3 Dn D1, 5 त्रीँल्लोकान्मुनिभि· क्रान्तैर् , D2 °कान्मुनिभि संक्रान्ते ( hypermetric ), D3 °कांस्त्रिपदे क्रान्ते ( for [a] ) — ( L 1850 ) G(ed) ते दैत्या ( for दैतेयाः ) Dn पातालं ( for °ल- ) — K1 2 D4 -विवरे ( for °रं ) — ( L 1851 ) B2 3 D6 -संनद्धाः ( for -संबद्धा. ) D3 समेत्य गणसंनद्धाः ( for [a] ) Ñ2 सित ( for सासि- ) — ( L. 1852 ) D3 पताकाश्चैव सध्वजा. ( for [b] ) — ( L 1853 ) V1 D3 -काष्ठाश् ( for -कोशाश् ) D6 -परिच्छदाः ( for -परश्वधाः ). — ( L 1854 ) K3 तथैव , N2 V1 2 Dn2 D6 तथैन्द्रं ; B3 तत्रेन्द्रं , G3 अथेन्द्रं ( for तथेन्द्र- ) K3 om line 1854[b] . K1 साध्यास् ( for सद्यस् ). B3 D3 ऽभ्युद्यता , D6 G3 ह्युत्थिता ( for ऽभ्यु° ) K2 D4 साध्यास्तेऽप्युत्थिता गुणा ( for [b] ) — ( L 1856 ) Ñ2 V3 D8 D5 [अ]थ , D3 [ए]व , D6 [अ]शन् ( for [आ]शु ) K2 सनातनस्वधामृतै· ( for [a] ) B1 3 Dn2 Ds1 पितृत्वे ( for पितॄन्वै ). K4 D1 समतर्पयन् , D4 °तर्पत ( for °तर्पयत ), K4 Dn1 पितृत्वे समकल्पयत् ( Dn1 °तर्पयन् ) ( for [b] ) — ( L 1858 ) K1 2 D4 अजयश्चाप्ययश्चैव , K4 D1 5 अक्षयं चाव्ययं चैव ( for [a] ) K3 4 Dn Ds1 D1-3 संवृत्तस् , D6 सद्वृत्तस् ( for संवृतस् ) Ds2 संवृत्त· स्वेन कर्मणा ( for [b] ) — ( L 1859 ) D2 उपाध्माय ( for °ध्मासीद् ) — ( L 1860 ) K3 -करोन्मुक्तं ( for °द्भूतं ) V1 B2 3 D8 जनिते , D3 पतिते , G3 Bom Poona eds G(ed) जनितृ- ( for °त्रे ) — ( L. 1861 ) V3 श्रुत्वा शङ्खस्य शब्द च ( for [a] ) — ( L 1862 ) D6 प्राप्य ( for प्राप्ता ) G(ed) प्राप्यम् ( for नाथम् ) — ( L 1863 ) B3 अग्नि- ( for वह्नि- ) Ñ2 V1, 3 D8 संप्रयुक्तानि संभवै ; D6 संसक्ता अग्निसंभवै. ( for [b] ) — ( L 1864 ) G3 सहितैर् ( for विह° ).

सर्वैः प्रहरणैश्चैव संयुक्ता वह्निसंभवैः ।
मन्दराभ्रेषु विद्युतैर्ज्वलद्भिरिव पावकैः ॥

Colophon.

वैशंपायन उवाच ।

ततो महति वृत्तान्ते स्थिते राज्ये महोदये ।　[ 1865 ]
देवानां मानुषाणां च सहवासोऽभवत्तदा ॥
एकतः समधीयन्ते सहिताः प्ररुदन्ति च ।
स्वयं च भागं गृह्णन्ति यज्ञकर्मणि भारत ॥
प्राचेतसं ततो दक्षं दीक्षित्वा वै बृहस्पतिः ।
वाजिमेधाय भगवानृषिभिः परिवारितः ॥　[ 1870 ]
तस्मिन्पैतामहे यज्ञे दक्षस्य विदितात्मनः ।
शामित्रमकरोद्रुद्रो भागार्थे सह नन्दिना ॥
रुद्रस्यैव हि तद्रूपं द्विधाभूतं तदीप्सया ।
जातः परमधर्मात्मा नन्दी पुरुषविग्रहः ॥
तेन योगेन राजेन्द्र यत्तद्ब्रह्म सनातनम् ।　[ 1875 ]
विहितं सत्यवचनैस्तेनैव परमात्मना ॥
सरूपैश्चाप्यरूपैश्च विरूपाक्षैर्घटोदरैः ।
ऊर्ध्वनेत्रैर्महाकायैर्विकटैर्वामनैस्तथा ॥
शिखिभिर्जटिभिश्चैव त्र्यक्षैर्वै शङ्कुकर्णिभिः ।
चीरिभिश्चर्मिभिश्चैव कूटमुद्गरपाणिभिः ॥　[ 1880 ]
सघण्टाचीरिभिश्चैव मुञ्जमेखलधारिभिः ।
सहस्रकटकैश्चापि स्वर्णकुण्डलधारिभिः ॥
सडिण्डिमैः सभेरीकैः समृदङ्गैः सवेणुभिः ।
एतैः परिवृतो देवो मखं तं समुपारुजत् ॥
सशङ्खमुरजैश्चापि सतालतलपाणिभिः ।　[ 1885 ]
उग्रायुधधरो देवः सपिनाक इवान्तकः ॥

---

Colophon — *Mention of the Epic* K1 Ds2 D2 — *Mention of Khila* V1 3 B Ds D1 3 — *Sub-parvan* K Ñ2 V1 3 B Dn1 Ds D1 2 5 6 G3 पौ(K1 पु)ष्करम्, Dn2 D3 4 पौ( Dn2 पु)ष्करप्रादुर्भाव· — *Adhy no* . K3 4; V3 217, Dn 25, Ds2 216, D1 204, D3 232, D4 212, G3 358

( L 1865 ) G3 यज्ञ- ( for राज्ये ) — ( L 1866 ) K3 दानवानां ( for मानुषाणां ) Dn Bom Poona eds. G(ed ) दे- ( Dn दै )वतानां मनुष्याणा, D3 G3 देवानां च मनुष्याणा- ( G3 °हासत्रे ) ( for *a* ) — ( L 1867 ) K3 V1 3 B1 3 Ds1 D6 समधीयन्ति, D3 °वर्धन्त ( for °धीयन्ते ) K3 प्रहसन्ति, Ñ2 B2 D4 प्रवदन्ति, D3 प्रचलन्ति, D5 प्रमुदन्ति ( for प्ररु° ) — For line 1867, G3 subst

63** एकतो वेदघोषांश्च प्रवदन्ति महर्षय. ॥

— G3 om. lines 1868 — ( L 1869 ) D3 G3 दीक्षयित्वा ( for दीक्षित्वा वै ) V3 प्रजापति ( for बृहस्पति ) — ( L 1870 ) G3 ऋषिभिर्विदधे क्रतुम् ( for *b* ) — ( L 1871 ) Ñ2 V1, 3 B Dn Ds D6 मातामहे, D1 पिता°, G3 पैतामहं ( for °महे ) K3 Bom Poona eds यज्ञं ( for यज्ञे ) D3 तस्मिन्गतो महायज्ञे ( for *a* ) K1 Dn [अ]विदितात्मनः, K3 B3 विहि° ( for विदि° ) — ( L. 1872 ) Ñ2 B3 Ds D6 भागार्थं, V1 भगवान् ( for भागार्थे ) — ( L 1873 ) K3 D4 यदीप्सया, Ñ2 V1 3 Ds तदिच्छया ( for तदीप्सया ) K1 द्विधाभूय यदीप्सया ( for *b* ) — ( L 1874 ) D3 ययौ ( for जात· ) — ( L. 1876 ) K1, 2 4 Ñ2 V3 B1 3 D1 5 6 -वचने ( for °नैस् ). G3 विहितं च द्विधाभूतं ( for *a* ) — After line 1876, G3 ins :

64** एवभूतो महादेव शामित्रमकरोत्प्रभुः ॥
एवं कर्मणि निर्वृत्ते वाजिमेधात्मके तदा ।
देवाश्च भागं गृह्णन्ति दक्षस्य च महात्मनः ॥
तत क्रुद्धो महादेवश्चापमुद्यम्य वीर्यवान् ।
नन्दिना सह भूतैश्च समुत्तस्थौ सभान्तरे ॥ [5]

— ( L 1877 ) K1–3 Ñ2 V1 3 B D4 स्वरूपैश्, Ds अरू°, D6 G3 सुरू° ( for सरू° ) Dn1 विरूपाक्षैर् ( for [अ]प्यरूपैश् ) G3 सुरूपैश्च विरूपैश्च ( for *a* ) K1 2 V2 जटाधरैः ( for घटोदरै ) D3 जटाजूटैरलंकृतः ( for *b* ) — ( L 1878 ) V3 विकचैर्, B2 विराटैर्, D2 विकारैर् ( for विकटैर् ) D3 चाननैस् ( for वाम° ) — ( L 1879 ) D3 ऋषिभिर् ( for शिखि° ) D5 जाटिलैश् ( for जटिभिश् ) Ds शिखाभिर्जटिलैश्चैव ( for *a* ) D3 त्रिनेत्रै· ( for त्र्यक्षैर्वै ) — D3 om ( hapl ) line 1880 — ( L 1880 ) Ñ2 V3 -धारिभिः ( for -पाणिभि ) — V1 3 om ( hapl ) line 1881 — ( L. 1881 ) B2 सघण्टैश्, G3 सुपर्ण- ( for सघण्टा- ) K1 Dn -चारिभिश्, B1 Ds -धारि° ( for -चीरि° ) D2 सवादनादिभिश्चैव, D2 ( also marg ) संघट्टनादि°, D3 बलिभिर्वर्म° ( for *a* ). — K1 2 D4 om ( hapl ) line 1882 — ( L 1882 ) B Ds D2 6 G3 स्वहस्त-, D3 सकच्छ- ( for सहस्र- ) — K1 om ( hapl ) lines 1883–1885 — ( L 1883 ) Poona ed. सभेरीयैः ( for °रीकै. ) K4 डिण्डिमैर्भैरकैश्चैव ( for *a* ) — ( L. 1884 ) K2 D4 समुपागमत्, D2 ( marg ) °द्रवत्, G3 °भजत् ( for °रुजत् ) — ( L 1885 ) D3 सशब्दैः पूरणैश्चैव ( for *a* ) D2 चचाल ( for सताल- ) G3 Bom Poona Cal. eds G(ed ) -फल ( for -तल- ) — ( L 1887 ) K1 2 D4 मखो ; K4 Ñ2 V1 3 B1 Dn2 Ds2 D1, 5, 6 G3 मखे ( for मखैर् )

विरराजार्चिभिर्दीप्तैर्मखैर्मखवतां वरः ।
कालाग्निरिव दीप्तार्चिर्जगद्दग्धुमिवोद्यतः ॥
नन्दी पिनाकपाणिश्च जघ्नतुर्मखमुत्तमम् ।
युगान्त इव कालाग्निः क्षिप्रं दग्धुमिवोद्यतः ॥ [1890]
यूपमुत्क्षिप्य धावन्ति निशाचरगणास्ततः ।
त्रासयन्मुनिसंघांश्च चीरचर्मनिवासिनः ॥
हवींष्यन्ये पिबन्त्येव जिह्वाभिस्ताम्रलोचनाः ।
भक्षयन्ति पशूनन्ये रसनान्तैः प्रलम्बिभिः ॥
मुमुचुश्चापरे यूपान्प्रसभं प्रहरन्ति च । [1895]
वह्निमन्ये प्रसिञ्चन्ति वारिभिः प्रहसन्ति च ॥
सोममन्ये जहुः केचिन्नेत्रैस्ताम्रजपोपमैः ।
दर्भान्केचिद्विलुम्पन्ति हस्तैः पद्मदलप्रभैः ॥
बभञ्जिरे च शाला[खा]ग्रान्कलशांश्चापविद्धिरे (?) ।
चिच्छिदुः काञ्चनान्वृक्षाञ्शोभार्थमुपकल्पितान् ॥[1900]
बिभिदुश्चैव बाणैश्च मुमुचुश्च हिरण्मयान् ।
लुलुपुश्चैव पात्राणि ममन्थुश्चारणीमथ ॥
आरुजंश्चैव प्राग्वंशाल्लुँलुलुपुश्च समाहिताः ।
चखादिरे पुरोडाशान्नखाग्रैश्च चकर्तिरे ॥
एवं दिवा च रात्रौ च भिद्यमानो महामखः । [1905]
चुक्रोश च महानादान्भिद्यमान इवार्णवः ॥
धनुः सशरमादाय पूर्वदत्तं स्वयंभुवा ।
कृतं कीचकवेणुभ्यां सशरं सुमहद्बलम् ॥
प्रतिगृह्य महादेवः स शरे समयोजयत् ।
धनुर्विगृह्य जानुभ्यां जघान स महाक्रतुम् ॥ [1910]
स विद्धस्तेन बाणेन खं समुत्पतितः क्रतुः ।
मृगो भूत्वा नर्दमानो ब्रह्माणमुपधावति ॥
शरेणाभिहतस्त्राणं न लेभे प्रशमं भुवि ।
शरणार्थी ह्यहं प्राप्तः शरेणान्तर्गतेन च ॥
तमुवाच मृगं ब्रह्मा शुभं सानुनयं वचः । [1915]
स्वरेणोत्तमवीर्येण गम्भीरेण सुभाषिणा ।

---

$D_3$ मखभृतां ( for °वतां ) — (L 1888) $K_2$ हर्तुम्, $D_4$ भत्तुम् ( for दग्धुम् ) — $D_6$ om (hapl) lines 1889–1890 — (L 1889) $\tilde{N}_2$ $V_3$ जग्मतुर् ( for जघ्न° ) $K_3$ यज्ञम् ( for मखम् ) — (L 1890) $\tilde{N}_2$ संप्र-, $D_2$ ( before corr as above ) क्षेप्तुं ( for क्षिप्रं ) —(L 1891) $\tilde{N}_2$ $V_{1\ 3}$ $D_s$ आक्षिप्य ( for उत्क्षिप्य ) — (L 1892) $G_3$ मृग- ( for मुनि- ) $D_3$ निशाचरगणास्तदा ( for $^b$ ) — (L 1893) $K_2$ हविष्याणि पिबन्त्यन्ये ( for $^a$ ) — (L 1894) $K_{1\ 2}$ B $D_{4\ 6}$ रसनाग्रै ( for °नान्तै ) $D_{n2}$ Bom Poona eds G(ed) रसनान्तावलम्बिभि [ G(ed) °न ] ( for $^b$ ) — $G_3$ om line 1895 — (L 1895) $K_{1\ 3\ 4}$ $D_n$ $D_{1\ 2\ 5}$ पशवः ( for प्रसभं ) $K_2$ प्रभवन्ति हसन्ति च, $D_4$ प्रसभं प्रहसन्ति च ( for $^b$ ) — (L 1896) $D_s$ वह्निमध्ये ( for °न्ये ) $K_{1\ 2}$ $D_4$ नाशयन्ति, $K_3$ $D_n$ $D_{1-3\ 5}$ $G_3$ शमयन्ति ( for प्रसिञ्चन्ति ) $D_1$ $G_3$ प्रहरन्ति ( for °सन्ति ) — (L. 1897) $K_3$ $D_{1\ 2\ 5}$ मखे जहु, $D_6$ जहु केचिद्, $D_3$ पपु के° ( for जहु के° ) $K_{1\ 2\ 4}$ $\tilde{N}_2$ $V_{1\ 3}$ $B_2$ $D_s$ $D_{2\ 4}$ $G_3$ नेत्रै( $D_3$ वक्त्रै )स्ताम्रान्तलोचनै, $K_3$ नेत्रै पश्यन्ति चोत्कटम्, $D_{1\ 2\ 5}$ केचिन्नेत्रान्तलोचनै ( for $^b$ ) — $D_3$ om line 1898 — (L 1899) $\tilde{N}_2$ $V_{1\ 3}$ B $D_s$ $D_6$ ( marg ) $G_3$ यूपाग्रान् ( for शाला° ). $K_{1\ 2}$ $\tilde{N}_2$ $V_1$ $B_{1\ 2}$ $D_s$ $D_4$ $G_2$ [अ]पि चिक्षिपु ; $V_3$ [अ]पि चिच्छिदु, $B_3$ $D_6$ [ए]व चिक्षिपु, $D_3$ [अ]पजिह्निरे ( for °विद्धिरे ) $K_3$ कलशान्विव्यधिरेऽपि च ( for $^b$ ) — (L 1900) $D_3$ दिव्याञ् ( for वृक्षाञ् ) $B_{2\ 3}$ $D_6$ संप्र- ( for उप- ) $\tilde{N}_2$ सोमार्थं समकल्पितान् ( for $^b$ ) — (L 1901) $G_3$ Bom ed G(ed) ते ( for the third च ) — (L 1902) $G_3$ मुमुचुश् ( for लुलुपुश् ) $D_n$ मुमुचुश् ( for ममन्थुश् ) — (L 1903) $K_{3\ 4}$ $D_n$ $D_s$ $D_{1-3\ 5}$ प्राग्वंशं ( for °शाल्लूँ ). $\tilde{N}_2$ $V_{1,3}$ अ( $V_1$ आ )रुजंश्चापि प्राग्वंशं, B $D_6$ $G_3$ अरुजश्चैव प्राग्वंशं ( for $^a$ ) $D_3$ लुलुबु परिमोहिता ( for $^b$ ) — (L 1904) $B_1$ यथा दिवि ( for चखादिरे ) $\tilde{N}_2$ $V_{1\ 3}$ $B_2$ $D_n$ $D_{s2}$ $D_6$ [अ]वकर्तिरे, $B_1$ [अ]नुक°, $G_3$ बभञ्जिरे ( for चकर्तिरे ) — (L 1906) $D_6$ Cal ed महानादं ( for °दान् ). $V_3$ चुक्रोशाथ महानादं ( for $^a$ ) — (L 1907) $K_1$ -वृत्तं ( for -दत्तं ) — (L 1908) $K_{1\ 4}$ $D_4$ वेणूनां ( for -वेणुभ्यां ) $K_{1\ 2}$ $D_4$ सुस्वर, $\tilde{N}_2$ अजरं, $D_s$ $D_5$ समरे ( for सशरं ) $B_{1\ 3}$ समरेषु महाबल, $D_n$ सशरं सुमहद्बली, $G_3$ °रं स महाबलम्, Bom Poona eds G(ed) समरे सुमहारथ ( for $^b$ ) — (L 1909) $K_{1\ 2}$ समरे, $V_1$ $D_5$ सशरं, B $D_s$ $D_{3\ 6}$ स शरै ; $G_3$ शरेण ( for स शरे ) — (L 1910) $G_3$ विक्रम्य ( for विगृह्य ) — (L 1911) $V_1$ $B_2$ समुत्पतति ( for° तित ) — (L 1912) $D_3$ मनोवेगो ( for नर्दमानो ). — (L 1913) $D_6$ ( marg as above ) G(ed) स सुखं ( for प्रशम ) $D_6$ ( marg ) मुनिः ( for भुवि ) — (L 1914) $K_{1\ 2}$ $D_4$ शरणार्थं ( for र्थी ). $D_3$ गृहं ( for ह्यहं ). — (L. 1916) $\tilde{N}_2$ $V_{1,3}$ $D_s$ $G_3$ [उ]दात्त ( for [उ]त्तम- ).

एवंरूपो नभसि त्वं भविष्यसि महामृग ॥
विजितश्च त्रिपर्वेण शरेणानतपर्वणा ।
तिष्ठन्नक्षत्रशिरसि सह रुद्रेण नित्यशः ॥
सोमेन सह संयुक्तो ह्यक्षयेणाव्ययेन च । [ 1920 ]
दिवि सचारभूतश्च ताराभिः सह संगतः ॥
ज्योतिषां ज्योतिभूतस्त्वं ध्रुवश्चैव महाध्रुवः ॥
यच्चैतद्रुधिरं दिव्यं क्षतात्समभिनिःसृतम् ।
नभस्युत्पतितं चैव प्रवेगेन प्रधावतः ॥
क्षतजं बहुवर्णं च क्षेत्रमण्डलसंज्ञितम् । [ 1925 ]
निमित्तभूतं भूतानां वर्षे वर्षप्रदं तथा ॥
सुखं दुःखं च भूतानां दर्शने संप्रवर्तते ।
इन्द्रियश्रवणाच्चैव नभसीन्द्रायुधोऽभवत् ॥
चक्षुषी मानुषे राजन्विस्मयात्समवेक्षितुम् ।
अद्भुतं बहुचित्रं च मनसा संप्रकल्पितम् ॥ [ 1930 ]
न तु रात्रौ प्रदृश्येत खे तु सव्रणसंज्ञितम् ।
दिनस्यैव सदा त्वग्रे महत्कार्यं प्रदृश्यते ।

भूमावेव समुत्तिष्ठेदाकाशे प्रविलीयते ॥
शतशश्च समं सर्वे प्रधावन्ति प्रचेतसः ।
भयाद्रुद्रस्य महतो धन्विनो बाणपाणयः ॥ [ 1935 ]
नन्दी रुद्रगणैः सार्धं पिनाकी समतिष्ठत ।
युगान्तकाले ज्वलितो ब्रह्मदण्ड इवोद्यतः ॥
विष्णुः शृङ्गाग्रसंभूतं प्रगृह्य विपुलं धनुः ।
प्रातिष्ठत महाबाहुः पाणिना चक्रमादधत् ॥
गदां सघण्टामन्येन खड्गमन्येन पाणिना । [ 1940 ]
प्रगृह्याप्यग्रतोऽतिष्ठद्रुद्रायोद्यतपाणये ॥
ततः शृङ्गाग्रसंभूतं प्रगृह्य विपुलं धनुः ।
शङ्खं चाप्रतिमं लोके शरांश्च नतपर्वणः ॥
विष्णुरग्रे स्थितो भाति सबल. सहताञ्जलिः ।
बद्धगोधाङ्गुलित्राणः सचन्द्र इव तोयदः ॥ [ 1945 ]
आदित्या वसवश्चैव दिव्यैः प्रहरणैः सह ।
विष्णुमेवाभितः सर्वे तिष्ठन्ति ज्वलनप्रभाः ॥
मरुतश्चैव विश्वे च रुद्रमेवाभिपेदिरे ।

— ( L 1917 ) K2 Ñ2 V1 3 B Ds D3-6 G3 महामृगः ( for °मृग ) — ( L 1918 ) K2 D4 ( marg ) त्रिपर्णेन, Dn त्रिवर्णेन, Ds1 विपर्णेन, Ds2 त्रिवर्गेण ( for त्रिपर्वेण ). K4 विजितश्चित्रपर्वेण ( before corr °र्णेन ) ( for $^{a}$ ) — ( L 1919 ) K1 2 Ds2 D3 6 तिष्ठ ( for तिष्ठन् ) — ( L 1920 ) D6 [अ]क्षरेण ( for °येण ). — ( L 1921 ) K1 2 Ñ2 V1 3 B D4 G3 -भूताभिः, Ds -भूतानि ( for -भूतश्च ) K2 D4 अप्सरोभि सहान्वितः ( for $^{b}$ ) — ( L 1922 ) D3 ज्योतिर्भूत. स ऋक्षेषु for $^{a}$ ) G3 ततो भव ( for महाध्रुवः ) V3 B2 5 Ds D3 ध्रुवस्त्वं शाश्वतो भव ( D6 °तोऽव्यय ) ( for $^{b}$ ). — ( L 1923 ) K2 D4 यत्किंचिद्रुधिरं रूक्षं ( for $^{a}$ ) K Dn D1 2 4 5 क्षतजादभिनि.सृतम्, D3 तत्क्षणाद° ( for $^{b}$ ) — ( L 1924 ) K1 2 D4 दिव्य ( for चैव ) — ( L 1925 ) K3 बभ्रु- ( for बहु- ) Ñ2 V3 B Ds D3 6 केतु-; Dn2 G3 क्षेत्रं, D1 5 क्षेत्रे ( for क्षेत्र ) V1 Cal ed केतुमण्डलसंस्थितम् ( for $^{b}$ ). — ( L. 1926 ) Ds देवानां ( for भूतानां ) D3 om. ( hapl ) lines 1926$^{b}$-1927$^{a}$ — ( L 1927 ) B Ds D6 दर्शनात् ( for °ने ). — ( L. 1928 ) इन्द्रस्य प्रीणनाच्चैव ( for $^{a}$ ) — ( L 1929 ) D3 चक्षुषोर्मनसो राजन ( for $^{a}$ ) K3 Dn D1 2. 5 समवैक्षत ; D1 5 °वैक्षतम्, G3 °वैक्ष्यते ( for °वेक्षितुम् ) — ( L 1930 ) B1 रत्न- ( for बहु- ) K3 मनसा सकल्पितं न तु (hypermetric) ( for $^{b}$ ). — ( L. 1931 ) D3 ते तु रात्रौ प्रदृश्यन्ते ( for $^{a}$ ).

D3 om lines 1931$^{b}$-1934$^{a}$ K1-3 V3 B2 D1 2 4 6 ( marg ) ब्रह्मणि ( for सव्रण- ) K4 Dn Ds श्वेतव्र( Dn खे सव्र-, Ds खे खं व्र )ह्मणि सज्ञितम्, D2 4 खे ब्रह्मणि स° ; D5 खे ब्रह्मणि च सं°, G1 ह्येतद्व्रणसमुत्थितम् ( for $^{b}$ ) — ( L. 1932 ) D2 G3 कार्ये ( for कार्यं ) — ( L 1933 ) K V1 3 Dn Ds D1 2 4 6 समुत्थेति, Ñ2 °त्थेहि, D5 समभ्येति ( for समुत्तिष्ठेद् ) G3 भूमावथ समन्वेति ( for $^{a}$ ) Ds1 तथाकाशे प्रतीयते, Ds2 D6 तत्राकाशे प्रली°, D2 गुह्यकोशे प्रली° ( for $^{b}$ ) — ( L. 1934 ) K1 2 D4 समन्ताद्धि ( for सम सर्वे ) G3 ततश्च शतशः सर्वे ( for $^{a}$ ) K1 2 D4 वि- ( for प्र- ) — ( L 1936 , K1 2 D4 -दृश्यत, D3 -पद्यत ( for -तिष्ठत ). — ( L 1938 ) V1 Bom Poona eds G(ed ) संग्राम- ( for शृङ्गाग्र- ) — ( L 1939 ) K4 प्रगृह्य च ( for प्रातिष्ठत ) V1 शङ्खम् ( for चक्रम् ) Dn आददात् ( for °धत् ). — ( L 1940 ) K1 2 D4 च घण्टाम्, K3 संघट्टम् ( for सघण्टाम् ) D3 गदामादाय चान्येन ( for $^{a}$ ) — ( L 1941 ) K1 2 B D4 6 G1 सो, V1 [अ]थ, Ds [अ]थो ( for [अ]पि ) K3 V3 प्रगृह्याप्य( V1 °था )ग्रतस्तिष्ठेद्, K4 Ñ2 Dn D2 °ह्याथाग्रतस्तिष्ठन्; D3 °ह्यार्थोऽग्रतस्तिष्ठ, D5 °ह्य अग्रतस्तिष्ठन् ( for $^{a}$ ) K3 Dn1 उग्राय ( for रुद्राय ) — K1 2 D4 om line 1942 — ( L 1944 ) D3 ततो ( for भाति ) B1 विष्णुरेवाग्रतो भाति ( for $^{a}$ ). G3 सदेवैः ( for सबल ). D3 संहताङ्गुलिः ( for °ञ्जलिः ).

गन्धर्वकिंनराश्चैव नागा यक्षाः सपन्नगाः ॥
ऋषयो न्यस्तदण्डाश्च उभयोः पक्षयोर्हिताः । [ 1950 ]
ज्वलन्तः शान्तये नित्यं लोकानां हितकाम्यया ॥
रुद्रः शरेणाभ्यहनद्विष्णुमेवाग्रणी रणे ।
हृदि सर्वाङ्गसंधीषु तीक्ष्णाग्रेण सुपत्रिणा ॥
न चकम्पे तदा विष्णुः सर्वात्मा सर्वसंभवः ।
न च रोषमना नित्यं वृतः सर्वैः षडिन्द्रियैः ॥ [ 1955 ]
विष्णुश्च धनुरादाय शरेण समयोजयत् ।
जत्रुदेशे मुमोचाशु ब्रह्मदण्डमिबोद्यतम् ॥
स विद्धस्तेन बाणेन महादेवो न कम्पते ।
वज्रेणेव महासंधिर्मन्दरस्य विचाल्यते ॥
ततः प्रसभमाप्लुत्य रुद्रं विष्णुः सनातनम् । [ 1960 ]
कण्ठे जग्राह भगवान्नीलकण्ठस्ततोऽभवत् ॥
अनादिनिधनो देवः क्षमतां भगवन्मम ।
सर्वभूतागमाचार्यो मम कर्ता च कर्मणाम् ॥
कर्मणां च प्रकर्ता च विकर्ता चैव भारत ।
अरोषत्वाच भूतानां सर्वभूतेषु चोत्तमः ॥ [ 1965 ]
स्वयमेव हि यत्कर्म विधत्ते कर्मयोनिषु ।
तयोः शुभतमो राजन्स्वयमेवं तथाकरोत् ॥
अन्तरिक्षाच्छुभा वाचः श्रूयन्ते परमाद्भुताः ।
सिद्धानां वदनोन्मुक्ताः सनातन नमोऽस्तु ते ॥
नन्दी पिनाकमुद्यम्य बलवान्रुद्रसंभवः । [ 1970 ]
मूर्धन्यभिजघानाजौ विष्णुं क्रोधेन मूर्छितः ॥
ततः प्रहसितो विष्णुर्नन्दी दृष्ट्वा सुरोत्तमः ।
स्तम्भयामास भगवान्सर्वभूतपतिर्हरिः ॥
विष्णुर्ब्रह्मसमो भूत्वा तेजसा प्रज्वलन्निव ।
क्षमया च समायुक्तः स्थितः स्थाणुरिवाचलः ॥ [ 1975 ]
अचिन्त्यश्चाप्रमेयश्च अजेयश्चाप्यरिंदमः ।
युगान्ताग्निसमो भूत्वा शान्तात्मा हरिरव्ययः ॥
प्रसन्नः कल्पयामास भागं रुद्राय धीमते ।

---

— ( L 1947 ) $D_3$ [अ]भ्ययु. ( for [अ]भित ) $B_{1\ 3}$ अतिष्ठन् ( for तिष्ठन्ति ) — ( L 1949 ) $D_{s1}$ $G_3$ सकिंनरा ( for सपन्नगा ). — ( L 1950 ) $K_{3\ 4}$ Dn $D_{1-3\ 5\ 6}$ ( marg ) विषये ( for ऋषयो ) $D_3$ -शस्त्राश् ( for -दण्डाश् ) — ( L 1951 ) $K_{1,2}$ $V_3$ Dn Ds $D_4$ ज्वलन्ति, $\tilde{N}_2$ B $D_6$ जपन्ति, $V_1$ जुह्वन्ति, $D_2$ ज्वलन्त ( for °न्त ). $D_3$ ज्वलन्ति स्म तपोनित्या ( for $^{a}$ ) — ( L 1952 ) $B_{1\ 3}$ $D_6$ शरेण हतवान्रुद्रो ( for $^{a}$ ) $K_1$ [अ]ग्रणी, $D_2$ °तो ( for °णी ) — ( L 1953 ) $K_4$ -देशेषु ( for -संधीषु ) $D_2$ विशिखैर्विविधै सर्वै, $D_3$ हृदि शर्वेण चाविद्धस् ( for $^{a}$ ) $V_1$ $D_3$ सुपर्वणा, Bom Poona eds G(ed.) सुयत्रिणा ( for सुपत्रिणा ) — ( L 1954 ) $V_3$ चकाशे ( for चकम्पे ) $K_{1\ 2}$ $V_1$ B Ds $D_{3\ 4\ 6}$ $G_3$ ब्रह्म-, $B_2$ ( marg ) विश्व- ( for सर्व- ) — ( L 1955 ) $D_3$ रोषगतो ( for °मना ) $D_3$ हृत. सर्वै., Cal ed वृतं बिभ्रत् ( for वृत· सर्वै ) $B_2$ Poona ed षडिन्द्रिय , $Dn_2$ सदिन्द्रियै ( for षडि° ) — ( L 1956 ) $K_2$ $\tilde{N}_2$ $V_3$ आयस्य, $K_3$ $B_2$ Ds $D_{1\ 2\ 4}$ आयम्य, $K_4$ $V_1$ Dn $D_5$ आनम्य ( for आदाय ) — ( L 1957 ) $K_3$ $D_3$ [अ]थ, $G_3$ [अ]स्य ( for [आ]शु ) — ( L 1958 ) $K_{3\ 4}$ $D_2$ कम्पयन्, $D_1$ °त ( for °ते ) — ( L 1959 ) $D_3$ वप्रेणेव महाशृङ्ग ( for $^{a}$ ) $\tilde{N}_2$ $V_{1\ 3}$ B Ds $D_6$ $G_3$ न ( for वि- ) — ( L 1960 ) $B_3$ आद्रुत्य ( for आप्लुत्य ) $K_{1\ 2}$ रुद्रो विष्णु ( for रुद्रं विष्णु ) $K_2$ $B_{1\ 2}$ Ds $D_{3\ 6}$ सनातन· ( for °नम् ) — ( L 1961 ) $G_3$ Cn उमापति ( for ततोऽभवत् ) — ( L. 1962 ) $K_{1\ 2}$ $D_4$ क्षम्यता ( for क्षमतां ) $K_4$ $V_1$ $B_2$ Dn $D_{2\ 5}$ हि भवान्, $B_{1\ 3}$ Ds $D_6$ भगवान् ( for °वन् ). $K_3$ $V_3$ $D_1$ क्षम्यतां हि भवान्मम, $\tilde{N}_2$ $D_3$ $G_3$ क्ष( $\tilde{N}_2$ क्षा )म्यतां भगवान्मम ( for $^{b}$ ) — ( L. 1963 ) $B_1$ सर्वभूतोद्गमाचार्यं; $B_{2\ 3}$ $D_{5\ 6}$ °भूताङ्गमाचार्यं ( $B_2$ $D_6$ °दाय ), $D_3$ °भूतमयाश्चर्यं ( for $^{a}$ ) $K_{1-3}$ $\tilde{N}_2$ B Ds $D_4$ अचलत्वाच् ; $K_4$ $D_1$ $G_3$ अव- ( $G_3$ °प )कर्ता, $V_1$ अचलत्वं ; $D_5$ एव कर्ता ( for मम कर्ता ). $V_3$ $D_6$ अचलत्वाच्च कर्मणा, $D_2$ तव कर्ता विकर्मणाम्, $D_3$ अवलम्ब्याथ कर्मणा, Cal ed कर्मणा च न चाल्यते ( for $^{b}$ ). — ( L 1964 ) $B_1$ -हर्ता ( for कर्ता ) $K_{1\ 2}$ $D_4$ प्रतिहर्ता च भारत ( for $^{b}$ ) — ( L 1965 ) $V_1$ Dn $G_3$ अशेषत्वाच् ( for अरो° ) — ( L 1966 ) $K_{3\ 4}$ $D_{1\ 2\ 5}$ विधाने ( for विधत्ते ). $D_3$ क्रियते सर्वयोनिषु ( for $^{b}$ ) — For line 1966, $G_3$ subst

65** असत्कर्म च सत्कर्म निधत्ते सर्वयोनिषु ॥

— ( L 1967 ) $D_3$ तप ( for तयो ) -तमं कर्म ( for -तमो राजन् ) $G_3$ सदा कुरु ( for तथाकरोत् ) — ( L 1968 ) $K_2$ शुभाचारा ; $D_3$ श्रुता वाच ( for शुभा वाच ) $V_3$ अन्तरीक्षचरा वाच ( for $^{a}$ ) $B_{1\ 3}$ $D_6$ Cal ed श्रूयन्ते मधुराक्षरा: ( for $^{b}$ ) — ( L 1969 ) $D_3$ देवदेव नमस्तुभ्यं ( for $^{a}$ ) — ( L 1972 ) $D_2$ नन्दिमुक्त्वा ( for नन्दीं दृष्ट्वा ) $D_{1\ 5}$ सुरोत्तमम् ( for °त्तम ) — ( L 1073 ) $G_3$ जृम्भणास्त्रेण तं हरिः ( for $^{b}$ ). — ( L 1974 ) $B_1$ $D_{5\ 6}$ ब्रह्मपरो ( for °समो ) $D_{s1}$ विष्णुर्भूत्वा ब्रह्मसमो ( for $^{a}$ ) — ( L 1976 ) $D_3$ आर्चितश् ( for अचिन्त्यश् ). — ( L 1979 ) $K_{1\ 2}$ $D_4$ ब्रह्म-, $D_{s1}$ धर्मात्

विष्णुर्धर्मपरो नित्यं त्यक्तकामः सुरर्षभः ॥
विष्णुना चैव राजेन्द्र स यज्ञः संधितः पुनः । [ 1980 ]
यथापक्षं च ते सर्वे गणा आसन्महीपते ।
तस्मिन्युद्धे महाघोरे विष्णो रुद्रस्य चैव ह ॥
पक्षं पक्षं भवद्युद्धं दक्षयज्ञविनाशने ।
विनाशश्चैव यज्ञस्य तदा लोके प्रतिष्ठितः ॥
सर्वभूतेषु राजेन्द्र हितो यज्ञः सनातनः । [ 1985 ]
दक्षो यज्ञफलं चैव प्राप्तवान्स प्रजापतिः ॥
इमां दक्षाध्वरां दिव्यां कथाममितबुद्धिमान् ।
श्रावयेद्यस्तु विप्रेभ्यः शुचिः प्रयतमानसः ।
अधीत्य सर्वमध्यात्मं देवलोके महीयते ॥

Colophon.

42

K $\tilde{N}_2$ $V_{1\ 3}$ B D $G_{3\ 4}$ cont after App. I ( No 41 ) : $\tilde{N}_1$ cont after adhy. 118 $T_{1\ 2}$ $G_{1,\ 5}$ $M_{2\ 4}$ cont after line 574 of App. I ( No. 41 )

जनमेजय उवाच ।

प्रादुर्भावः पुराणेषु विष्णोरमिततेजसः ।
सतां कथयतां विप्र वाराह इति नः श्रुतः ॥
न जाने त्वस्य चरितं निखिलं च सविस्तरम् ।
न धर्मगुणसंस्थानं न हेतुं न मनीषितम् ॥
किमात्मको वराहोऽसौ किंवीर्यः कास्य देवता । [ 5 ]
किमाचारः किंप्रभावः किं वा तेन पुरा कृतम् ॥
एतन्मे शंस तत्त्वेन वाराहं श्रुतिविस्तरम् ।
यज्ञार्थं च समेतानां द्विजातीनां महात्मनाम् ॥

---

( for धर्म- ) $\tilde{N}_2$ $V_3$ $B_{1\ 3}$ Ds $D_{3\ 6}$ -क्रोध. ( for -काम ) $K_3$ Dn $D_2$ $D_3$ सुरोत्तम. ( for सुरर्षभ ) — $G_3$ om ( hapl ) lines $1980^b$–$1985^a$ — ( L 4983 ) $K_{1\ 2}$ Dn $D_4$ यथा- ( for the first पक्षं ) $\tilde{N}_2$ $V_{1\ 3}$ B Ds $D_{5\ 6}$ यथापक्षं भवेद्युद्ध , $D_3$ यथाप्रागभवद्युद्धं ( for $^a$ ) — ( L 1984 ) $K_4$ $D_{1\ 2\ 5}$ लोकै , $V_3$ लोकं ( for लोके ) — ( L 1985 ) $V_3$ स्थितो , $D_3$ हरेर् ( for हितो ) — ( L 1987 ) $K_{3\ 4}$ $\tilde{N}_2$ $V_{1\ 3}$ B Dn Ds $D_{1\ 2\ 5\ 6}$ $G_3$ चोदाहृतां ( for दक्षाध्वरां ) $D_3$ इमां चोदाहृतां योग्या ( for $^a$ ) $D_3$ कथामखिलबुद्धिना ( for $^b$ ) — ( L 1988 ) $V_1$ विधिना ( for विप्रेभ्य ) — After line 1989, $K_{1\ 2}$ $\tilde{N}_2$ $V_{1\ 3}$ $B_2$ Dn $D_4$ ins

66** एष पौष्करको नाम प्रादुर्भावो महात्मन. ।

COLOPHON — *Mention of the Epic* $K_4$ $\tilde{N}_2$ $V_{1\ 3}$ Dn $Ds_2$ $D_1$ — *Mention of Khila* $\tilde{N}_2$ $V_{1\ 3}$ $B_{2\ 3}$ Ds $D_{1-4}$. — *Sub-parvan* · $K_1$ पौष्कर., $K_2$ Dn $D_{4\ 6}$ पौ( Dn $D_6$ पु )ष्करप्रादुर्भाव , $K_{3\ 4}$ $V_{1\ 3}$ $B_{2\ 3}$ Ds $D_{1-3\ 5}$ पु( $V_1$ $B_{2\ 2}$ Ds $D_{3\ 5}$ पौ )ष्करप्रादुर्भावः, $\tilde{N}_2$ पारिजाते पौष्करप्रादुर्भावः — *Adhy name* $G_3$ दक्षाध्वरे रुद्रकोपानन्तरं विष्णुना यज्ञसमाप्तिकरणम् — *Adhy no* $K_3$ 5, $V_3$ 218, Dn 26, $Ds_2$ 217, $D_1$ 217, $D_3$ 233, $D_4$ 213, $G_3$ 359 — After the colophon, $G_3$ reads App I ( No 43 ).

42

( L. 1 ) K प्रादुर्भावान् ( for °व. ) $\tilde{N}_2$ $V_{1,\ 3}$ $B_1$ Ds अतुल- ( for अमित- ) — ( L 2 ) $V_3$ $D_3$ $G_2$ वराह ( for वा° ) $G_{3\ 5}$ वि- ( for नः ) K $\tilde{N}_{1\ 2}$ $V_{1\ 3}$ B Dn Ds $D_{1\ 2,\ 4-6}$ $T_1$ $G_4$ $M_4$ श्रुतम् ( for श्रुत ) — ( L 3 ) $K_{1-3}$ $\tilde{N}_2$ $V_{1\ 3}$ $B_{2\ 3}$ D जाने तस्य , $K_3$ ज्ञातं तस्य , $B_1$ Bom. Poona eds G(ed ) जानतेऽस्य ( for जाने त्वस्य ). $G_{4\ 5}$ निखिलेन ( for लं च ) $K_{1\ 2}$ $D_4$ विधिं नैव च निस्तरम् , $K_{3\ 4}$ $\tilde{N}_{1\ 2}$ $V_{1\ 3}$ B Dn Ds $D_{1-3\ 5\ 6}$ न विधि नैव ( $K_4$ $V_3$ °धिनैव , $\tilde{N}_1$ $B_3$ $D_{3\ 6}$ °धि न च ) वि° , $M_2$ न खिल न च वि° , $M_4$ नाखिलं नैव वि° ( for $^b$ ) — ( L 4 ) K $\tilde{N}_{1\ 2}$ $V_{1\ 3}$ B D न कर्मगुणसतानं ( $K_{1-3}$ $D_{3-4}$ °सद्भावं , $K_4$ Dn $D_5$ °वद्भावं , $\tilde{N}_1$ °संस्तुष्टं ) ( for $^a$ ) $M_{2\ 4}$ न हेत्वन्त मनीषिण. ( for $^b$ ) — ( L 5 ) $T_2$ $G_{1\ 4}$ कामात्मको ( for किं° ) K $\tilde{N}_2$ $V_{1\ 3}$ B Dn Ds $D_{1-6}$ $T_2$ का मूर्ति , $\tilde{N}_1$ किंमूर्ति ( for किंवीर्य ) $G_{1\ 4}$ किंवीर्यं का च दैवतम् ( for $^b$ ) — ( L 6 ) $T_1$ $M_{2,\ 4}$ किमात्मक ( for °चार ) $D_1$ $G_{1\ 4}$ $M_2$ किंप्रभव ( for °भाव ) $D_3$ किंभावश्च किमाचार ( for $^a$ ) — ( L 7 ) $\tilde{N}_{1\ 2}$ B Dn $T_3$ $M_2$ एतन्मे सशयत्वेन ; $V_{1\ 3}$ तन्मे संशयतत्त्वेन ( for $^a$ ) — ( L. 8 ) $K_{1-3}$ $\tilde{N}_2$ $V_{1\ 3}$ $Ds_1$ $D_{4\ 6}$ यज्ञार्थं समवेताना , $K_4$ यागार्थं समजातानां ( for $^a$ ) $K_{1\ 2}$ द्विजानां च ( for °तीना ). — After line 8, $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ ins

1** ज्ञातीना चापि सर्वेषामृषीणां मोक्षकाङ्क्षिणाम् ।
प्रमाणार्थं द्विजश्रेष्ठ तन्मे वद महामुने ॥

— ( L 9 ) $K_4$ $B_1$ $Ds_2$ $D_{1\ 2,\ 4}$ $G_3$ एतत् ( for हन्त ) $K_{1\ 2}$ $D_4$ धर्म- , $K_{3\ 4}$ $\tilde{N}_{1,\ 2}$ $V_{1\ 3}$ B Dn Ds $D_{1-3\ 5\ 6}$ ब्रह्म- ( for वेद- ) K Dn $D_{1\ 2\ 4\ 5}$ -निर्मितम् ( for -संमि° ). — After line 9, $\tilde{N}_2$ B Dn Ds $D_{3,\ 5}$ ins.

देवा ऊचुः ।

त्वत्प्रसादेन भगवंस्तव बाहुबलेन च ।
जीवामोऽद्य महाबाहो निष्क्रान्ताश्चान्तकाननात् ॥
त्वच्छासनाद्धि भगवन्कि कुर्वन्त्वदितेः सुताः । [ 615 ]
इच्छामः पादशुश्रूषां तव कर्तुं सनातन ॥
तच्छ्रुत्वा वचनं तेषां पुण्डरीकनिभेक्षणः ।
उवाच वचनं देवान्मुदा युक्तो हतद्विषः ॥
योऽयं स भवतां लोको मयैव विहितः पुरा ।
पाल्यतां स तु यत्नेन प्राधान्येन क्वचित्क्वचित् ॥ [ 620 ]
ऐश्वर्यं प्रतिपन्नाः स्थ क्रतुभागपुरस्कृतम् ।
मयैव पूर्वं निर्दिष्टो नियोगः परिपाल्यताम् ॥
शक्रं प्रोवाच भगवान्वचनं दुंदुभिस्वनः ।
इदं यथावत्कर्तव्यं सत्सु चासत्सु च त्वया ॥
गच्छन्तु तपसा स्वर्गं मुनयः संशितव्रताः । [ 625 ]
यज्ञैरिष्ट्वा यायजूकाः फलं ते प्राप्नुवन्तु च ॥
भावः स्वधर्मशीलानामभावः पापकर्मणाम् ।
सन्तः स्वर्गजितः सन्तु सर्वाश्रमनिवासिनः ॥
सत्यशूरा दानशूरा रणशूराश्च ये नराः ।
ते स्वर्गफलमश्नन्तु सदा ये चानसूयकाः ॥ [ 630 ]
अश्रद्दधानाः पुरुषाः कामिनोऽर्थपराः शठाः ।
अब्रह्मण्या नास्तिकाश्च नरकं यान्तु मानवाः ॥
एतावत्क्रियतां वाक्यं मयोक्तं त्रिदशेश्वराः ।
ततो मयि स्थिते सर्वान्बाधिष्यन्ते न चारयः ॥
इत्युक्त्वान्तर्हितो देवः शङ्खचक्रगदाधरः । [ 635 ]

---

4 ) D6 सर्वलोकनमस्कृत ( for ᵇ ) — ( L 5 ) M2 जलेश ( for अर्चित ) T2 G1 4 भुवनेश जलेश्वरम् ( for ᵇ ) — ( L 6 ) D6 -सश्रितम् ( for -सत्तमम् ) — ( L 7 ) T1 G3 M2 सदा तव ( for सनातन ) — ( L 8 ) D6 आद्यबीजाय नाथाय ( for ᵃ ). — ( L 10 ) T2 G1 5 हन्त्रे ( for हर्त्रे ) — ( L 11 ) D6 पोत्रे, T2 G1 4 धात्रे ( for स्थात्रे ) — ( L 13 ) D6 नम ( for तुभ्य ) G5 जगन्नाथ ( for प्रधानात्मन् ). — D3 T1 om line 15 ]

— ( L 614 ) V3 निर्मुक्ताश्, B1 D6 विमुक्ताश् ( for निष्क्रान्ताश् ) — ( L 615 ) Ñ1. 2 V1 3 B1 Ds त्वच्छासनेऽद्य भगवन्, T2 G1 3-5 M2 4 त्वच्छासनपराः सर्वे ( for ᵃ ) T2 G1 3-5 M2. 4 किं नु ( T2 G1 4 5 तु ) कुर्वन्तु ( G3 M2 °न्ति ) देवताः ( for ᵇ ) — ( L 616 ) M2 इच्छामहे च शुश्रूषां ( for ᵃ ) — Before line 617, Ñ2 V1 3 B Ds D3 5 6 T2 G1 4 5 M2. 4 ins वैशंपायन उवाच. — ( L 617 ) G5 M2. 4 पुण्डरीकेक्षणः प्रभु ( for ᵇ ). — ( L 618 ) D2 देवो; G5 तान्वै; M2 4 तांस्तु ( for देवान् ) K3 G4 M2. 4 युक्तान्, G5 युक्ता ( for युक्तो ) — Ñ1 D1 T2 G1 3-5 M2 4 om lines 619-620 K2 om line 619 — ( L 619 ) D3 योऽसौ ( for ऽयं स ) D3 लोके Ñ2 यो यो भगवतां लोको, Bom Poona eds G(ed ) यो यस्य भवतो लोको ( for ᵃ ) — ( L 620 ) Poona ed. यज्ञेन ( for यत्नेन ). K4 Dn D2 नियोगश्च; Bom ed वियोगश्च ( for प्राधान्येन ). — ( L 621 ) K4 क्रतुभागे. T2 G1. 4 5 M4 -पुरस्कृताः — ( L 622 ) K3 यथैव पूर्वनिर्दिष्टा ( for ᵃ ) D5 नियोगः पाल्यतां सुराः ( for ᵇ ). — ( L 623 ) V1 स्वनम्, D1 2 -स्वनैः ( for -स्वनः ) — ( L 624 ) D5 त्वया च ( for यथावत् ) T1 G3-5 वा प्रभो, T2 वा स्वयम् ( for च त्वया ) K3 D5 शक्र मद्वचनात्त्वया ( D5 °नं शृणु ) ( for ᵇ ) — After line 625, Ñ2 Dn Ds ins :

34** तव लोकं सुरश्रेष्ठ सर्वकामदुघं सदा ॥
यायजूकाश्च ये केचिद्ब्राह्मणाः क्षत्रिया विशः ।
तेषां कामदुघा लोकाः स्वर्गमादिमनोहराः ॥

[ ( L 3 ) Ñ Ds तेषां कामदुघाल्लोकान् ( for ᵃ ) Ñ2 सुस्थानादि- ( for स्वर्गमादि ) Ds1 स्वर्गामोदमनोहरान् ( for ᵇ ). ]

— ( L 626 ) T1 G3 5 M2 4 च मामेव ( for यायजूकाः ). T1 2 G1 3 5 M2 4 तत्फलं ( for फलं ते ). B2 T1 2 G1 प्राप्नुवन्ति च, Ds °न्त्युत ( for °न्तु च ). — ( L. 627 ) K4 Ñ1 V3 B Dn D1 2 4 T2 M2. 4 भाव सद्धर्मशीलानाम्; Ñ2 भावश्च धर्म°, Ds तावत्सधर्म°; D3 भाग सधर्म° ( for ᵃ ). — ( L. 629 ) K1 2. 4 Ñ2 V1 3 B2 D ( except D6 ) रणे ( for दान- ). K1 2 4 Ñ2 V1 3 B2 3 D ( except D6 ) दान-, Ñ1 B1 रणे ( for रण- ) K3 सत्यधर्मपराः शूराः संग्रामे चापलायिनः. — ( L. 630 ) T1 G3 नराः स्वर्गम् ( for स्वर्गफलम् ) K2. 3 Ñ1. 2 V1 3 B Ds D3-6 T1. 2 G1. 3-5 M2 4 [अ]नसूयवः ( for °काः ) — ( L 631 ) D4 -परायणाः ( for -पराः शठाः ), D5 कृपणार्थपरायणाः ( for ᵇ ). — ( L 632 ) K2 मा स्वर्गं यान्त्वसाधवः : D4 मा स्वर्गं यान्तु मानवाः ( for ᵇ ). — After line 632, T1. 2 G1. 3-5 M2. 4 ins .

35** योगिनो मां तु ये देवं भजन्ते योगतत्पराः ।
नमस्कार्यास्त्वया शक्र भक्तप्रवणचेतसा ॥
सदा मां ध्याहि देवेश श्रेयस्तव भविष्यति ।
मत्परो भव देवेश मां नमस्कुरु यत्नतः ।
इदमेव परं श्रेयो नात्र कार्या विचारणा ॥

— ( L. 633 ) Ds2 D2 ( marg as above ) मयोक्तं त्रिदिवेश्वराः ( for ᵇ ). — ( L 634 ) D5 स्थितान् ( for स्थिते ). B1.

देवतानां च सर्वेषामभवद्विस्मयो महान् ॥
एतदत्यद्भुतं दृष्ट्वा वराहचरितं सुराः ।
नमस्कृत्वा वराहाय नाकपृष्ठमितो गताः ॥
ततः स्वान्याधिपत्यानि प्रतिपन्नानि दैवतैः ।
सर्वलोकाधिपत्ये च प्रतिष्ठां वासवो गतः । [ 640 ]
विमुक्ता दानवगणैः प्रकृतिं धरणी गता ॥
स्थैर्यहेतोर्धरण्यास्तु ज्ञात्वा चागस्कृतान्गिरीन् ।
स्वेषु स्थानेषु संस्थाप्य पर्वतानां पुरंदरः ।
चिच्छेद भगवान्पक्षान्वज्रेण शतपर्वणा ॥
सर्वेषामेव पक्षा वै छिन्नाः शक्रेण धीमता । [ 645 ]
एकः सपक्षो मैनाकः सुरैस्तत्समयः कृतः ॥
एष नारायणस्याद्यः प्रादुर्भावो महात्मनः ।
वाराह इति विप्रेन्द्रैः पुराणे परिकीर्तितः ॥
कृष्णद्वैपायनमतं नानाश्रुतिसमाहितम् ।
नाशुचेर्न कृतघ्नाय नृशंसाय न कीर्तयेत् ॥ [ 650 ]

आयुष्कामैर्यशस्कामैर्महीकामैश्च मानवैः ।
जयैषिभिश्च श्रोतव्यो देवानामेष वै जयः ॥
पुराणो वेदसंबद्धः शिवः स्वस्त्ययनो महान् ।
पावनः सर्वभूतानां सात्त्विको विजयंकरः ॥
एष कौरव्य तत्त्वेन कथितस्तेऽनुपूर्वशः । [ 655 ]
वराहस्य नरश्रेष्ठ प्रादुर्भावो महात्मनः ॥
ये यजन्ति मखैः पुण्यैर्दैवतानि पितॄनपि ।
आत्मानमात्मना नित्यं विष्णुमेव यजन्ति ते ॥
लोकायनाय त्रिदशायनाय
ब्रह्मायनायात्मभवायनाय । [ 660 ]
नारायणायात्महितायनाय
महावराहाय नमस्कुरुष्व ॥

Colophon

---

Cal. ed. वो बाधिष्यन्ति नारयः, G5 बाधिष्यन्ति न चाधय· ( for ᵇ ) — ( L 635 ) K1 3 D4 [अ]न्तर्दधे ( for °र्हितो ) — ( L. 636 ) T1 2 G1 3–5 M2 त्रिदशानां ( for देवतानां ) D3 देवानां चैव सर्वेषाम् ( for ᵃ ) — ( L 640 ) Ñ2 V1 3 D3 सर्वलोकाधिपत्यं च ( for ᵃ ) — ( L 642 ) Ñ2 T2 G1. 4. 5 M2 4 धैर्यहेतोर्, D3 तत्स्थैर्यं तु ( for स्थैर्यहेतोर् ) K3 चोपस्थितान्, K4 Ñ1 V1. 3 D1 2 4 5 चावस्थितान् ( for चागस्कृतान् ) D3 संज्ञायावस्थितान्गिरीन् ( for ᵇ ) — ( L 643 ) K4 D2 3 संप्राप्य ( for संस्थाप्य ) — D3 om lines 644–645 — ( L 644 ) T1 2 G1 3–5 M2. 4 चिच्छेद पक्षान्वज्रेण ( for ᵃ ) T1. 2 G1. 3–5 M2 4 महेन्द्रः ( for वज्रेण ) — ( L 645 ) G1 4 भिन्ना ( for छिन्ना ) V3 चक्रेण ( for श° ) — ( L 646 ) K3 तत्राभय· ; B2 D5. 6 तत्समये ( for °यः ) B1 सुरैस्तत्समये पुन·, T1. 2 G1 3–5 M2. 4 सुरै· समयतो धृत· ( for ᵇ ) — ( L 647 ) Bom Poona eds G(ed) [अ]र्यं ( for [आ]द्य ) D4 एष नारायणः साक्षात् ( for ᵃ ) — ( L 648 ) K3 Ñ1 Ds D5. 6 पुराणै. ( for °णे ) B1 -गीयते ( for -कीर्तितः ). K1 2 D4 पुराणज्ञै· प्रकीर्तितः ( for ᵇ ) — ( L 650 ) Ñ1 T1 G3 5 M2 4 नाशुचेर्नापि पापाय ; B1 3 D6 नाशुचये न पापाय, D6 ( marg ) नास्तिकाय कृतघ्नाय, T2 G1 4 नास्तिकाय न पापाय ( for ᵃ ). — After line 650, Ñ2 Bom Poona eds G(ed) ins

36** न क्षुद्राय न नीचाय न गुरुद्वेषकारिणे ।
नाशिष्याय तथा राजन्न कृतघ्नाय चैव हि ॥
[ ( L 2 ) Ñ2 पापिष्ठाय न चैव हि ( for ᵇ ) ]

— ( L 651 ) K3 नराधिपै ( for च मानवै· ) — ( L 652 ) T1 2 G1 3–5 M2 4 देवानां विजयो महान् ( for ᵇ ) — ( L. 653 ) D3 पुराणबद्धः शिवद सर्वविस्मयनो महान् — ( L 654 ) K4 Ñ2 V1 3 Dn Ds D1 2 T2 G1 4 -सत्त्वानां ; Ñ1 -यज्ञानां ; M2. 4 -पापानां ( for -भूतानां ) B D6 T1 सात्त्विको विजयप्रदः ( for ᵇ ) — ( L 656 ) V1 T1 2 G1 4 नृप- ( for नर- ) — ( L 657 ) D3 मखै पूर्णैर्, T1 2 G1 3–5 M2 4 सदा यज्ञैर् ( for मखै पुण्यैर् ) T2 G1 4 5 M2 4 देवानथ ( for दैवतानि ) — ( L. 658 ) T1 G3 5 स्वात्मना ; M2. 4 चा° ( for आ° ) — ( L 659 ) D4 त्रिदशाननाय ( for °यनाय ). — ( L 661 ) D3 नारायणायामितविक्रमाय ; T1 G3 5 सर्वायनायाप्यसकृन्नरेन्द्र ; T2 G1 4 गोभूमिदेवार्तिहराय नित्यं — ( L. 662 ) D2 करोमि ( for कुरुष्व )

Colophon — *Mention of the Epic* · K4 V1 Dn2 Ds2 D1 5 —*Mention of Khila* K3 4 Ñ1 V1. 3 B Dn Ds D1–3 5 — *Sub-parvan* V1 Ds D3 पारिजातम्, D5 पारिजातहरणम् — *Adhy name* K Ñ1. 3 V1 3 B D T2 G1 3 5 M2 4 वाराहप्रादुर्भावः, T2 G1 हिरण्याक्षवधे देवेन्द्रादिस्तोत्रम् — *Adhy no* K3 13 ; V3 226, Dn Ds2 225 ; D1 213, D3 241 ; D4 221, T1 G3 281 ; G1 282, G4 284, G5 283 ; M2. 4 10.

## 42A

$K$ $\tilde{N}_{1.2}$ $V_{1.3}$ $B$ $D$ $T_{1.2}$ $G_{1.3-5}$ $M_{2.4}$ cont. :

वैशंपायन उवाच ।

वाराह एष कथितो नारसिंहमत. शृणु ।
यत्र भूत्वा मृगेन्द्रेण हिरण्यकशिपुर्हतः ॥
पुरा कृतयुगे राजन्हिरण्यकशिपुः प्रभुः ।
दैत्यानामादिपुरुषश्चकार सुमहत्तपः ॥
दशवर्षसहस्राणि शतानि दश पञ्च च । [ 5 ]
जलवासी समभवत्स्थानमौनधृतव्रतः ॥
ततः शमदमाभ्यां च ब्रह्मचर्येण चैव ह ।
ब्रह्मा प्रीतोऽभवत्तस्य तपसा नियमेन च ॥
ततः स्वयंभूर्भगवान्स्वयमागत्य तत्र ह ।
विमानेनार्कवर्णेन हंसयुक्तेन भास्वता ॥ [ 10 ]
आदित्यैर्वसुभिः साध्यैर्मरुद्भिर्दैवतैः सह ।
रुद्रैर्विश्वसहायैश्च यक्षराक्षसकिंनरैः ॥
दिग्भिश्चापि विदिग्भिश्च नदीभिः सागरैस्तथा ।
नक्षत्रैश्च मुहूर्तैश्च खेचरैश्च महाग्रहैः ॥
देवैर्ब्रह्मर्षिभिः सार्धं सिद्धैः सप्तर्षिभिस्तथा । [ 15 ]
राजर्षिभिः पुण्यकृद्भिर्गन्धर्वैरप्सरोगणैः ॥
चराचरगुरुः श्रीमान्वृतो देवगणैः सह ।
ब्रह्मा ब्रह्मविदां श्रेष्ठो दैत्यं वचनमब्रवीत् ॥
प्रीतोऽस्मि तव भक्तस्य तपसानेन सुव्रत ।
वरं वरय भद्रं ते यथेष्टं काममाप्नुहि ॥ [ 20 ]

हिरण्यकशिपुरुवाच ।

न देवासुरगन्धर्वा न यक्षोरगराक्षसाः ।
न मानुषाः पिशाचाश्च निहन्युर्मां कथंचन ॥
ऋषयो नैव मां क्रुद्धाः सर्वलोकपितामह ।
शपेयुस्तपसा युक्ता वर एष वृतो मया ॥
न शस्त्रेण न चास्त्रेण गिरिणा पादपेन वा । [ 25 ]
न शुष्केण न चार्द्रेण न चान्येनापि मे वधः ॥
न स्वर्गेऽप्यथ पाताले नाकाशे नावनिस्थले ।
न चाभ्यन्तररात्र्यह्नोर्न चाप्यन्येन मे वधः ॥

---

### 42A

Before the ref , $D_6$ $T_1$ $G_{3-5}$ $M_{2.4}$ ins ·

1** जनमेजय उवाच ।

वाराह एष कथितो नारसिंहमत· परम्।
कथयस्व महाभाग हिरण्यकशिपोर्वधम् ॥

—(L. 1) $V_1$ $D_6$ $T_1$ $G_3$ $M_{2.4}$ (last four *inf lin* as above) परम् (for शृणु) — (L. 3) $\tilde{N}_1$ तात (for राजन्) $B_3$ हिरण्यकशिपु प्रभुम् (for $^{b}$).— (L 4) $T_{1.2}$ $G_{1.3-5}$ $M_{2.4}$ चकार तप उत्तमम् (for $^{b}$) — (L 5) $T_{1.2}$ $G_{1.3-5}$ $M_{2.4}$ दशवर्षशतानि च (for $^{b}$) — (L 6) $K_1$ $Ds_1$ $D_1$ ध्यान- ; $K_3$ स्थाणुर्, $V_{1.3}$ $T_2$ $G_{1.4.5}$ स्नान- (for स्थान-) $K_{1-3}$ $Dn$ $D_{1.2}$ -व्रतस्थितः, $K_4$ $\tilde{N}_2$ $V_{1.3}$ $B_2$ $Ds$ $D_{3.4}$ -व्रते स्थितः ; $B_{1.3}$ $D_6$ -दृढव्रत (for -धृत°). — (L 8) $D_8$ विनयेन ; $D_5$ निश्चयेन (for नियमेन) — (L 10) $G_5$ सुवर्णेन (for [अ]र्क°) $Ds_1$ सिंह- (for हंस-) $K_2$ भारत (for भास्वता).— $\tilde{N}_1$ om line 11. — (L 12) $V_1$ विष्णु-, $D_3$ $T_2$ $G_{1.4}$ विश्वैः (for विश्व-) $V_1$ -पन्नगै (for -किंनरै).—(L 13) $T_{1.2}$ $G_{1.3-5}$ $M_{2.4}$ दिग्भिर्विदिग्भिश्च तदा सरिद्भिश्च स- ($T_2$ $G_1$ °द्भिः सह )सागरैः. — $V_3$ om. (hapl ) 14–15 — (L. 14) $K_3$ ऋषिभिश् (for खेचरैश्) — (L. 15) $K_3$ सिद्धैः साध्यैश्च देवतै (for $^{b}$).— (L. 17) $K_4$ चचार च (for चराचर-). $D_4$ चचार गुरुभिः श्रीमान् (for $^{a}$) $B_3$ $T_2$ $G_{1.3-5}$ $M_{2.4}$ वृत सर्वैर्द्युवासिभिः , $D_6$ $T_1$ वृतः सर्वैः सुरैस्तथा (for $^{b}$). — Before line 19, $\tilde{N}_2$ $B_{1.2}$ Bom Poona Cal eds. G(ed) ins ब्रह्मोवाच. — After line 20, $\tilde{N}_2$ $V_1$ $B$ $Dn$ $Ds$ $D_6$ ins

2** ततो हिरण्यकशिपु· प्रीतात्मा दानवोत्तमः।
कृताञ्जलिपुट श्रीमान्वचनं चेदमब्रवीत् ॥
[ (L 1) $V_1$ श्रीमान्दानवसत्तम (for $^{b}$) ]

— (L 22) $D_5$ ये पिशाचा (for पिशाचाश्च) $T_{1.2}$ $G_{1.3-5}$ $M_{2.4}$ हन्युर्मां देवसत्तम (for $^{b}$). — (L. 23) $K_2$ $D_4$ मुनयो (for ऋषयो) $T_{1.2}$ $G_{1.3-5}$ $M_{2.4}$ ऋषयोऽपि न मां शापैः शपेयु प्रपितामह — (L. 24) $T_{1.2}$ $G_{1.3-5}$ $M_{2.4}$ यदि मे भगवान्प्रीतो (for $^{a}$) $T_{1.2}$ $G_{1.3-5}$ मतो मम (for वृतो मया) — (L 26) $\tilde{N}_2$ $B_{1.3}$ $Dn$ $D_6$ स्यान्न चान्येन मे वधः (for $^{b}$). — After line 26, $T_1$ $G_{3.5}$ ins

3** नाकाशे वा न भूमौ वा रात्रौ वा दिवसेऽपि वा।
नान्तर्धाने बहिर्वापि स्याद्वधो मे पितामह।
पशुभिर्वा मृगैर्न स्यात्पक्षिभिर्वा सरीसृपै ॥

$T_1$ $G_{3.5}$ cont $G_4$ ins, after line 30. $M_{2.4}$ after line 26.

4** न केनचिद्भवेद्ब्रह्मन्मृत्युर्मे लोकभावन ।

पाणिप्रहारेणैकेन सभृत्यबलवाहनम् ।
यो मां नाशयितुं शक्तः स मे मृत्युर्भविष्यति ॥ [ 30 ]
भवेयमहमेवार्कः सोमो वायुर्हुताशनः ।
सलिलं चान्तरिक्षं च नक्षत्राणि दिशो दश ॥
अहं क्रोधश्च कामश्च वरुणो वासवो यमः ।
धनदश्च धनाध्यक्षो यक्षः किंपुरुषाधिपः ॥
मूर्तिमन्ति च दिव्यानि ममास्त्राणि महाहवे । [ 35 ]
उपतिष्ठन्तु देवेश सर्वलोकपितामह ॥

ब्रह्मोवाच ।

एते दिव्या वरास्तात मया दत्तास्तवाद्भुताः ।
सर्वकामप्रदा वत्स प्राप्स्यसे तान्न संशयः ॥

वैशंपायन उवाच ।

एवमुक्त्वा स भगवाञ्जगामाकाशमेव च ।
वैराजं ब्रह्मसदनं ब्रह्मर्षिगणसेवितम् ॥ [ 40 ]
ततो देवाश्च नागाश्च गन्धर्वा ऋषिभिः सह ।
वरप्रदानं श्रुत्वैव पितामहमुपस्थिताः ॥

देवा ऊचुः ।

वरेणानेन भगवन्वधिष्यति स नोऽसुरः ।
तत्प्रसीदस्व भगवन्वधोऽप्यस्य विचिन्त्यताम् ॥

वैशंपायन उवाच ।

भगवान्सर्वभूतानामादिकर्ता स्वयंप्रभुः । [ 45 ]
स्रष्टा च हव्यकव्यानामव्यक्तः प्रकृतिर्ध्रुवः ॥
सर्वलोकहितं वाक्यं श्रुत्वा देवः प्रजापतिः ।
आश्वासयामास सुरान्सुशीतैर्वचनाम्बुभिः ॥
अवश्यं त्रिदशास्तेन प्राप्तव्यं तपसः फलम् ।
तपसोऽन्तेऽस्य भगवान्वधं विष्णुः करिष्यति ॥ [ 50 ]
एतच्छ्रुत्वा सुराः सर्वे वाक्यं पङ्कजजन्मनः ।
स्वानि स्थानानि दिव्यानि प्रतिजग्मुर्मुदान्विताः ॥
लब्धमात्रे वरे तस्मिन्सर्वाः सोऽबाधत प्रजाः ।
हिरण्यकशिपुर्दैत्यो वरदानेन दर्पितः ॥

— $M_{2\ 4}$ om lines 27–30 $K_3$ Ñ$_1$ $G_5$ om lines 27–28 — (L 27) $D_1$ -स्थिते (for -स्थले) $D_3$ नाकाशे नावनीतले (for $^b$) — (L 28) $K_2$ $D_4$ न चाभ्यन्तर्न रात्र्यह्नो, $D_8$ न चाल्पेन न रात्र्याह्ने, $T_2$ $G_1$ न बाह्येऽभ्यन्तरे रात्रौ (for $^a$) $T_2$ $G_{1,4}$ [अ]हनि (for [अ]न्येन). — (L 33) $G_{4\ 5}$ वामश्च (for का°) — $M_4$ om lines 34–36 — (L 34) $D_6$ यम (for यक्ष) — $M_2$ om. lines 35–36 — (L 35) $D_3$ ममास्त्राणि (for च दिव्यानि) $D_8$ दिव्यानि च, $D_5$ $T_2$ $G_{1\ 4}$ महास्त्राणि; $G_5$ सहस्राणि (for ममास्त्राणि) — (L 36) $B_{1\ 3}$ $G_{1\ 4}$ मां देव (for देवेश) Ds $D_3$ सर्वभूत- (for °लोक-) — After lines 36, $T_1$ $G_{3-5}$ ins :

5** ददासि चेद्वरानेतान्देवदेव वृणोम्यहम् ।

— Ñ$_2$ $B_2$ पितामहः, $Ds_2$ $G_4$ om (for ब्रह्मा) — (L 37) $T_1$ [अ]द्य हि (for [अ]द्भुता) — (L 38) Ñ$_2$ $V_1$ B Dn $D_6$ सर्वान्कामान्सत्प्र( Bom Poona Cal eds G(ed) °नल्प )भावात् ( $V_1$ °सादात् ) (for $^a$) $K_{1\ 2\ 4}$ Ñ$_1$ $V_3$ $B_2$ $Dn_1$ Ds $D_{1\ 3-5}$ दुर्लभास्त्वति( $D_3$ °स्ते ह्य )मानुषाः ( $D_5$ °नवै ), $K_3$ दुर्लभा. देवदानवैः; Ñ$_2$ $V_1$ $B_{1\ 3}$ $Dn_1$ $D_6$ प्रा-( $V_1$ आ )प्स्यसि त्वं न संशय (for $^b$) — $B_3$ om. (hapl) lines 39–44 K $D_{1\ 2\ 4\ 5}$ $T_2$ om the ref — (L. 41) $T_1$ Bom Poona eds G(ed) मुनिभि· (for ऋषिभिः) — (L. 42) $T_1$ [इ]दं (for [ए]व). — (L 43) $T_{1\ 2}$ $G_{1\ 3-5}$ $M_2$ वरप्रदानाद्भगवन् ( $T_1$ $M_2$ °द्भवतो ) (for $^a$). Ñ$_2$ $Dn_2$ Ds $D_{3\ 5}$ $T_{1\ 2}$ $G_{1\ 3\ 4}$ $M_2$ बाधिष्यति (for वधि°) $D_4$ बाधयिष्यति नोऽसुर. (for $^b$) — (L. 44) $T_{1\ 2}$ $G_{1\ 3-5}$ $M_2$ प्रसीद नस्त्वं भगवन् (for $^a$) $K_{1\ 2}$ $D_4$ वधोपायो, $T_2$ वधोऽस्य हि, $G_{3\ 5}$ वधोऽस्य प्र-, $M_2$ वधोऽस्यैव (for वधोऽप्यस्य) $T_1$ वधः स्यात्तत्प्रचिन्त्यताम् (for $^b$) — $D_6$ om lines 45–46. — (L 45) $D_3$ भगवन् (for °वान्) $B_{1\ 3}$ -लोकानाम् (for -भूता°) Ñ$_1$ स्वयंभुव., $Ds_1$ स्वयं विभु (for स्वयं प्रभु.). — (L. 46) Ñ$_{1\ 2}$ $V_3$ $B_{1\ 2}$ Dn $D_{2\ 4}$ $T_1$ $G_3$ $M_{2\ 4}$ अव्यक्त-; $D_5$ °क्तं (for °क्त) $K_4$ $D_{1\ 2}$ बुध· (for ध्रुवः) — $B_1$ Cal ed om line 47 — (L. 47) $B_2$ (marg) $T_1$ $G_{3\ 5}$ $M_4$ पितामह· (for प्रजापति) $T_2$ $G_{1\ 4}$ $M_2$ श्रुत्वा लोक( $M_2$ देव )-पितामह (for $^b$) — (L 48) Ñ$_2$ $B_1$ Dn $T_{1,2}$ $G_1$ सशीतैर्, $V_3$ सुप्री° (for सुशी°) — (L 51) $T_{1,2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ श्रुत्वैतत्त्रि( $T_1$ $M_{2\ 4}$ °व त्रि )दशास्तथ्यं (for $^a$). Ñ$_1$ कमल-, $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ अम्भोज- (for पङ्कज-). $D_5$ सर्वलोकहितं वाक्यं श्रुत्वा देवा प्रजापते (= var line 47) — (L 52) $V_3$ [अ]नीकानि, $G_5$ ते सर्वे (for दिव्यानि) Ñ$_1$ $B_1$ $Ds_1$ $D_6$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_2$ मुदा युता. (for मुदान्विता). — Before line 53, K $V_{1\ 3}$ $B_1$ Ds $D_{1-6}$ ins वैशंपायन उवाच — (L. 53) $T_2$ $G_{1\ 3-5}$ $M_{2\ 4}$ सोऽथ (for तस्मिन्). Ñ$_1$ बाधति वै, $T_1$ $G_{1\ 5}$ संबाधते (for सोऽबाधत) $D_8$ सर्वशोऽबाधत प्रजा, $T_2$ सर्वान्वैऽबाधत प्रजा, $G_{1,4}$ सर्वान्बाधयत प्रजा (for $^b$) — (L 55) $K_2$ $D_4$ (marg as above) पुनः सर्वान्, $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2,5}$ महाभागान् (for मुनीन्सर्वान्).

आश्रमेषु मुनीन्सर्वान्ब्राह्मणान्संशितव्रतान् । [ 55 ]
सत्यधर्मरतान्दान्तान्धर्षयामास वीर्यवान् ॥
देवांस्त्रिभुवनस्थांश्च पराजित्य महासुरः ।
त्रैलोक्यं वशमानीय स्वर्गे वसति दानवः ॥
यदा वरमदोन्मत्तश्चोदितः कालधर्मणा ।
यज्ञियानकरोद्दैत्यान्देवांश्चैवाप्ययज्ञियान् ॥ [ 60 ]
अथादित्याश्च साध्याश्च विश्वे च वसवस्तथा ।
रुद्रा देवगणा यक्षा देवद्विजमहर्षयः ।
शरण्यं शरणं विष्णुमुपतस्थुर्महाबलम् ।
देवं देवमयं यज्ञं ब्रह्मदेवं सनातनम् ॥
भूतं भव्यं भविष्यं च प्रजालोकनमस्कृतम् । [ 65 ]
नारायणं महादेवं देवास्त्वां शरणं गताः ॥
त्वं हि न परमो धाता त्वं हि नः परमो गुरुः ।
त्वं हि नः परमो देवो ब्रह्मादीनां सुरोत्तम ।
त्वं फुल्लामलपत्राक्ष शत्रुपक्षक्षयावह ।
क्षयाय दितिवंशस्य शरणं भव नः प्रभो ॥ [ 70 ]

---

T1 2 G1 3-5 M2 4 महर्षीन् ( for ब्राह्मणान् ) — K2 3 D4 T1 om line 56 — ( L 56 ) Ñ2 om line 56ᵃ K4 सत्य-व्रत- ( for °धर्म- ). D3 -व्रतान् ( for -रतान् ) D3 6 शान्तान् ( for दा° ) G1 3-5 M2 4 तान्द्विजान् ( for वीर्यवान् ) — T2 G1 3-5 M2 4 ins after line 56 T1 after line 55

6** स्वर्गश्रेणी समालोक्य गृहीत्वैरावतं बलात् ।
इन्द्रं च पोथयामास बबाधे स तु संयुगे ॥
स तु स्वर्गं परित्यज्य गत शक्र शचीपति ॥
यमलोकं समागम्य यमं वैवस्वतं रणे ।
पराजित्य महायुद्धे कालमृत्युं तथैव च । [ 5 ]
याम्यानथ समाजघ्ने दैत्यो दानवसंवृत. ॥
नरकस्थान्समानीय स्वर्गस्थांस्तांश्चकार ह ॥
ततोऽथ वरुणं देवं पराजित्य महारणे ।
वारुणांश्च तथा पाशाञ्छित्त्वा दानवपुंगव. ।
दानवान्स्थापयामास यथेष्टं दानवेश्वर. ॥ [ 10 ]
सौम्यां दिशमथो गत्वा कुबेरमथ संयुगे ।
गृहीत्वा सबलं त तु पद्मशङ्खौ समाददे ।
अलकायां तथा दैत्यान्स्थापयामास दानव ॥

[ ( L 1 ) G3 M2 समालोड्य ( for °क्य ) — ( L 11 ) T2 G1. 4 M2. 4 यात्वा ( for गत्वा ) ]

— M2 om. lines 57–60 — ( L 58 ) Ñ1 B1 3 D6 दैत्य-राट् ( for दानव ). — ( L 59 ) V1 M4 बल- ( for वर- ). B1 3 D5 6 T1 G3-5 -मदोत्सिक्तश् ( for °न्मत्तश् ) Ñ1 यदा मदबलोन्मत्तश्; T2 G1 यदा मदबलोत्सिक्तश् ( for ᵃ ) K2 D1 4 -कर्मणा, M4 -नीतिभिः ( for -धर्मणा ) — ( L 60 ) T1 G3 आग्ने( G3 याज्ञी )या नरका दैत्या ( for ᵃ ) K3 देवतांश्च ( for देवांश्चैव ) K4 Ñ1 2 V1 3 Ds D2 3 5 दै( V1 3 दे )-वतानप्यय( V3 D2 °या )ज्ञियान्, B D6 दे( B2 3 दै )वताश्चा-प्ययज्ञियाः; Dn दैवतांश्चाप्ययाज्ञियान्, T1 न चाग्नेयाश्च देवताः; T2 G1 3-5 M4 न य( G3 या )ज्ञीयांश्च देवता ( for ᵇ ). — After line 60, T1 2 G1 3-5 M2 4 ins

7** यथेष्टं बुभुजे लोकान्दानवो विगतज्वर ।
अनेककाल· सुमहान्व्यतीयाद्दानवस्य ह ॥

— After the above, T1 2 G1 3-5 M2 4 ins an addl colophon [ *Sub parvan* T1 2 G1 3, 5 M2 4 नृसिंह-प्रादुर्भाव· — *Adhy name* T2 G1 5 हिरण्यकशिपुवरप्रदाने त्रैलोक्यबाधनम् — *Adhy. no* T1 282, T2 G3 5 284, G1 283, G4 285, M2 4 1 ]

— Before line 61, T1 2 G1. 3-5 M2 4 ins वैशंपायनः. — ( L 61 ) T1 G3 तथा सिद्धाश् ( for अथादित्याश् ) — ( L. 62 ) D5 -गणाध्यक्षा ( for -गणा यक्षा ) — After line 62, T1 2 G1 3-5 M2. 4 ins

8** जितास्तेन महाराज दैत्येन च महौजसा ।
[ G1 दैत्येन प्रथितौजसा ( for ᵇ ) ]

— ( L 64 ) K3 वेदयज्ञमयं देवा ( for ᵃ ) K3 ब्रह्मभूतं, Ñ1 Bom Poona eds G(ed) °दैवं, B1 °यज्ञ, D4 °वेदं, D5 °देव ( for °देवं ) — Ñ1 D5 T1 G3 5 M2 4 om. line 65 Before line 65, K Ñ2 Dn D1-4 ins देवा ऊचुः. — ( L 65 ) D5 भवद् ( for भव्यं ) T2 G1 भविष्यच् ( for °ष्यं ) D3 भूतभव्यभविष्यज्ञ ( for ᵃ ) G4 प्रभुं ( for प्रजा- ) — Before line 66, K3 V1 B Ds D6 T1 G3 5 M2 4 ins देवा ऊचु· — ( L 66 ) K1 D2 T1 महाभागं, D3 °भीमं ( for °देवं ). K3 4 Ñ1 V1 B2 Dn Ds D1 5 6 T2 G1 M2 4 नारायण महाभाग ( T2 G1 M2 °देव ) ( for ᵃ ). K1 2 Ñ1 D1 G3 देव ( for देवास् ) — ( L 69 ) K2 D4 पुष्पपद्म-; K3 Ñ2 V1 B3 D6 T1 2 G1 3-5 M2 4 पद्मामल- ( for फुल्लामल- ). B1 प्रोत्फुल्लामलपत्राक्ष, D3 प्रफुल्लपद्म° ( for ᵃ ). K1 2 Ñ1. 2 Ds2 D4. 5 G5 M4 -भयावह ( for -क्षया° ). — ( L 70 ) Bom. Poona eds G(ed) क्षयाय ( for शरणं ) D6 हिरण्यं हन वै प्रभो, T1 G3 5 M2 4 शरणं त्वं भवस्व न, T2 G1 °णं भ( T2 त )व न प्रभो ( for ᵇ ) — K4 Ñ2 V1 3 B1 3 Dn Ds D1-3 ins after line 70. Dn2 D3 ins after the addl. ref. before line 65 Ñ1 Ds2 D6 T1, 2 G1, 3-5 M2, 4 after line 66

9** त्रायस्व जहि दैत्येन्द्रं हिरण्यकशिपुं प्रभो ।
[ T1 G1 रक्ष नो ( for त्रायस्व ) D3 प्रभुम् ( for प्रभो ). ]

विष्णुरुवाच ।

भयं त्यजध्वममरा अभयं वो ददाम्यहम् ।
तथैव त्रिदिवं देवाः प्रतिपत्स्यथ माचिरम् ॥
एषोऽहं सगणं दैत्यं वरदानेन दर्पितम् ।
अवध्यममरेन्द्राणां दानवेन्द्रं निहन्म्यहम् ॥

वैशंपायन उवाच ।

एवमुक्त्वा तु भगवान्विसृज्य त्रिदिवौकसः । [75]
वधं संकल्पयित्वा तु हिरण्यकशिपोः प्रभुः ।
सहायं तु महाबाहुर्जग्राहोंकारमेव च ॥
अथोंकारसहायोऽसौ भगवान्विष्णुरच्युतः ।
हिरण्यकशिपोः स्थानं जगाम प्रभुरीश्वरः ॥
तेजसा भास्कर इव कान्त्या चन्द्र इवापरः । [80]
नरस्य कृत्वार्धतनुं सिंहस्यार्धतनुं प्रभुः ।
नारसिंहेन वपुषा पाणिं संस्पृश्य पाणिना ॥
ततोऽपश्यत्सुविस्तीर्णां दिव्यां रम्यां मनोरमाम् ।
सर्वकामयुतां शुभ्रां हिरण्यकशिपोः सभाम् ॥
विस्तीर्णां योजनशतं शतमध्यर्धमायताम् । [85]
वैहायसीं कामगमां पञ्चयोजनमुच्छ्रिताम् ॥
जराशोकक्लमत्यक्तां निष्प्रकम्पां शिवां शुभाम् ।
शुभ्रासनवतीं रम्यां ज्वलन्तीमिव तेजसा ॥
अन्तःसलिलसंयुक्तां विहितां विश्वकर्मणा ।
दिव्यरत्नमयैर्वृक्षैः फलपुष्पप्रदैर्युताम् ॥ [90]

— T1 2 G1 3–5 M2 4 श्रीभगवान् ( for विष्णुर् ) — ( L 71 ) Ñ1 भयं त्यजत भद्र वै ( for $^{a}$ ) K2 नयामि ( for ददामि ) — ( L 72 ) K1 Dn D3–5 प्रतिपद्यथ, V3 °लप्स्यथ, D8 °पत्स्यत ( for °पत्स्यथ ) K4 प्रतिपद्य यथाचिरम्, B1 3 D6 अचिरात्प्रतिपत्स्यथ ; M2, 4 प्रतिपत्स्यध्वमाशु वै ( for $^{b}$ ). — ( L 73 ) K Ñ2 V1, 3 D G1 4 त ( for ऽहं ) T1 M2 गर्वितम् ( for दर्पि° ) — ( L. 74 ) T2 अमरेन्द्रेण ( for °न्द्राणा ) T1 G3–5 M2 4 तम् ( for [अ]हम् ) — ( L 75 ) B3 D1, 5 स ( for तु ). K3 विससर्ज दिवौकसः, B1 D6 T2 G2 4 M2 विसृज्य त्रिदशेश्वरान्, B3 T1 G3 5 M4 °ज्य त्रिदिवेश्वरान् ( for $^{b}$ ) — ( L 76 ) B1 3 D5 6 वधं संकल्पयामास, T1 2 G3–5 M2, 4 वधं संकल्प्य च विभुर् ( for $^{a}$ ) D2 प्रभो ; T2 G1 4 पुरः, G3, 5 M2 4 पुरा ( for प्रभु· ) — After line 76, K3 B1 2 Dn Ds D3 5 6 ins

10** सोऽचिरेणैव कालेन हिमवत्पार्श्वमागत ॥
किं नु रूपं समास्थाय निहन्म्येनं महासुरम् ।
यत्सिद्धिकरमाशु स्याद्वधाय विबुधद्विषः ॥
अनुत्पन्नं ततश्चक्रे सोऽत्यन्तं रूपमीश्वर ।
नारसिंहमनाधृष्यं दैत्यदानवरक्षसाम् ॥ [5]

[ ( L 2 ) B2 निहन्मि दानवोत्तमम् ( for $^{b}$ ) — ( L 3 ) K3 यत्सिद्धिकारण रूप ( for $^{a}$ ) K3 वधे वै, B1 वधेऽस्य ( for वधाय ) — ( L 4 ) D3 अनुत्पन्न, D6 °त्पाद्य ( for °त्पन्न ) K3 अन्तरिक्षे मनश्चक्रे, D5 अनुत्पन्नतनुं चक्रे ( for $^{a}$ ). K3 Dn2 Ds सोत्पन्न, D5 सोऽनन्त, D6 दैत्यान्त ( for सोऽत्यन्त ). Ñ2 परम् ( for रूपम् ) B1 2 ईदृशम्, Bom Poona eds G(ed.) आस्थित ( for ईश्वर ) — ( L 5 ) Dn1 Ds देव- ( for दैत्य- ) K3 -राक्षसै ( for -रक्षसाम् ) ]

— ( L 77 ) D3 सभायां ( for सहायं ) K1 तं, D4 स ( for तु ). T1, 2 G1 3–5 M2, 4 ओंकारं गृह्य सत्वरम् ( for $^{b}$ ). — ( L 78 ) Ñ1 सह ( for अथ ) T1 2 G1 3–5 M2, 4 -मयो योगी ( for -सहायोऽसौ ) K1 2 V3 D3 5 अव्यय ( for अच्युत ) — ( L 79 ) T1 2 G1 3–5 M2 4 हरिर् ( for प्रभुर् ) — ( L 80 ) K4 Ñ1 2 V1 3 B D ( except D4, 5 ) T1 2 G1 3–5 M2 4 तेजसा भास्कराकार ( for $^{a}$ ) T1 G3 M2 शशी कान्त्यैव चापर, T2 G1, 4 5 M4 शशिकान्त्ये( G4 °न्त्यै )व चापरः ( for $^{b}$ ) — K2 D4 om line 81 — ( L. 81 ) K1 T1 2 G1 3–5 M2 4 नरस्या( K1 सिंहीम )र्धतनुं कृत्वा ( for $^{a}$ ) K1 नरस्य ( for सिंहस्य ) Ñ2 V3 G5 M2 विभु, B3 तथा; D3 प्रभुम्, T1 G3 M4 पुन ( for प्रभुः ). — ( L 82 ) D3 पाणिसंपिष्टपाणिना ( for $^{b}$ ). — ( L 83 ) K4 Ñ1 2 V1 3 B Dn Ds2 D1–3, 5 T2 G1 ततोऽपश्यत वि( K4 °द्धि वि-, Ds2 °ति वि-, D5 त्सवि )स्तीर्णां ( for $^{a}$ ) T1 G4 5 दिव्यरत्न- ( for दिव्यां रम्यां ) V1 D6 मनोहराम् ( for °रमाम् ). G3 M2, 4 दिव्वरत्नां म( G3 °त्नम )नोजवाम् ( for $^{b}$ ) — ( L 84 ) K1 2 D4 दिव्या, Ds1 शुद्धां ( for शुभ्रां ) K4 नानाश्चर्यसमन्विताम् ( for $^{b}$ ) — K4 om ( hapl ) lines 85–87 — ( L 85 ) M2 विस्तीर्णयोजनशता ( for $^{a}$ ) Bom Poona eds. G(ed ) उच्छ्रिताम् ( for आय° ). B3 D5 6 पञ्चयोजनमुच्छ्रिताम्, D4 शतमप्यर्धमायतम् ( for $^{b}$ ) — ( L 86 ) D3 आयताम् ( for उच्छ्रि° ) B1 3 D6 शतमध्यर्धमायताम्, D5 मध्येऽर्धशतमायताम् ( for $^{b}$ ) — After line 86, D5 ins

11** सर्वलोकगुणोपेतां दिव्यां गन्धवहां शुभाम् ।

— ( L 87 ) K4 D5 -परित्यक्तां, T1 2 G1 3–5 M2, 4 -क्लमहरां ( for -क्लमत्यक्तां ) T1 2 G1 3–5 M2 4 निष्प्रकम्प्यां ( for °म्पां ) — ( L 88 ) V1, 3 B1 D2 शुभासन- : T1 2 G1, 3–5 M2 4 शय्या° ( for शुभ्रा° ) — ( L 90 ) D5 -युतैरपि ( for -प्रदैर्युताम् ) — ( L 91 ) B1 -पीतारुण-, T2 G1 M2 -पीतासितैः, G4 5 -पीतसितै ( for -पीतासित- ). B1 3 श्वेतैर्; G4

नीलपीतासितश्यामैः सितैर्लोहितकैरपि ।
अवतानैस्तथा गुल्मैर्मञ्जरीशतधारिभिः ॥
सिताभ्रघनसंकाशा प्लवन्तीवाप्सु दृश्यते ।
शय्यासनवती रम्या ज्वलन्तीव च तेजसा ॥
प्रभावती भासुरा च दिव्यगन्धा मनोरमा । [ 95 ]
नासुखा न च दुःखा सा न शीता न च घर्मदा ॥
न क्षुत्पिपासे ग्लानिं वा प्राप्य तां प्राप्नुवन्ति ह ।
नानारूपैर्विरचिता विचित्रैरतिभास्वरैः ॥
स्तम्भैर्मणिमयैर्दिव्यैः शाश्वती चाक्षया च या ।
अति चन्द्रं च सूर्यं च पावकं च स्वयंप्रभा । [ 100 ]
दीप्यते नाकपृष्ठस्था भर्त्सयन्तीव भास्करम् ॥
सर्वे च कामाः प्रचुरा ये दिव्या ये च मानुषाः ।
रसवन्तः प्रभूताश्च भक्ष्यं भोज्यं तथाक्षयम् ॥
पुण्यगन्धाः स्रजस्तत्र नित्यपुष्पफलद्रुमाः ।
उष्णे शीतानि तोयानि शीते चोष्णानि सन्ति वै । [ 105 ]
पुष्पिताग्रा महाशाखाः प्रवालाङ्कुरधारिणः ॥
लतावितानसंछन्नाः सरःसु च सरित्सु च ।
मनोहरांश्च विविधान्ददर्श स तदा प्रभुः ॥
द्रुमान्बहुविधांस्तत्र मृगेन्द्रो ददृशे प्रभुः ।
गन्धवन्ति च पुष्पाणि रसवन्ति फलानि च ॥ [ 110 ]
तानि शीतानि तोयानि तत्र तत्र सरांसि च ।
अपश्यत्सर्वतीर्थानि सभायां तस्य वै प्रभुः ॥
नलिनैः पुण्डरीकैश्च शतपत्रैः सुगन्धिभिः ।
रक्तैः कुवलयैर्नीलैः कुमुदैः संततानि च ॥

---

स्थितैर् ( for -सितैर् ) $K_3$ $D_1$ लोकहितैर् ( for लोहितकैर् ). — ( L 92 ) $\tilde{N}_1$ $D_6$ $T_{1\,2}$ $G_{1\,3-5}$ अवदातैस्, $B_3$ तरुणैश्च ( for अवतानैस् ) $T_{1\,2}$ $G_{1\,3-5}$ $M_{2\,4}$ रक्तमञ्जरिधारिभिः ( for $^b$ ) — ( L 93 ) $K_{1\,2}$ $D_4$ -संकाशैः, $K_3$ °शां ( for °शा ) $K_{1\,3}$ $B_2$ व्यदृश्यत, $B_1$ [अ]भ्यतिष्ठत, $D_3$ नु दृश्यते ( for [अ]प्सु दृश्यते ). — After line 93, $G_{3\,5}$ $M_{2\,4}$ ins

12** भास्वरा दिव्यगन्धा च रश्मिमत्यपि चातुला ।

— $M_{2\,4}$ om line 94 — ( L 94 ) $K_4$ $\tilde{N}_{1\,2}$ $V_{1\,3}$ Dn $D_8$ $D_{1\,2}$ $T_1$ $G_{1\,3\,5}$ धन्यास( $Dn_2$ °ज-; $G_{3\,5}$ °ध )नवती, $B_2$ धन्या जल° ( for शय्यासन° ) $K_3$ $D_5$ शय्यासनवतीं रम्यां, $B_{1\,3}$ $D_6$ $T_2$ $G_4$ धन्या( $B_1$ रम्या )सनवती हृद्या ( for $^a$ ). $T_2$ $G_{1,\,4}$ द्योतमाना ( for ज्वलन्तीव ) $B_{1\,3}$ $D_6$ द्योतमाना च सा शुभा ( for $^b$ ). — ( L 95 ) $K_3$ प्रभावतीं भास्वरां; $M_{2\,4}$ रश्मिव( $M_4$ म° )ती भास्वती च ( for $^a$ ). $K_{1\,2}$ $D_4$ दिव्यरूपा, $\tilde{N}_{1.\,2}$ $D_3$ $T_1$ $G_3$ °गन्ध- ( for °गन्धा ) $V_3$ मनोहरा ( for °रमा ) $K_3$ दिव्यरूपां मनोरमाम् ( for $^b$ ) — ( L 96 ) $K_4$ $\tilde{N}_1$ $D_{2\,5}$ न सुखा, $\tilde{N}_2$ $V_1$ $B_3$ Dn Ds $D_6$ $T_{1\,2}$ $G_{1\,3.\,4}$ सुसुखा; $D_3$ सा सुखा ( for नासुखा ) $V_3$ सुमुखा च सुदुःखा सा; $G_5$ सुसुखा च न दुःखा सा ( for $^a$ ). $T_1$ नर्मदा ( for घ° ) $D_3$ न च शीता न घर्मदा ( for $^b$ ). — ( L 97 ) $K_{2\,3}$ $\tilde{N}_{1\,2}$ $V_3$ Ds $D_{3\,6}$ ग्लानिर्वा, $D_4$ $G_3$ न ग्लानिं ( for ग्लानिं वा ) $D_3$ प्राप्यते यत्रवासिभि ( for $^b$ ) — ( L 98 ) $K_{1-3}$ $\tilde{N}_1$ $D_5$ विरचितां, $K_4$ विरोचन्ती; $T_1$ $G_{3\,5}$ इङ्गितैस्तैर्, $M_{2\,4}$ इवाक्रान्ता ( for विरचिता ) — ( L 99 ) $D_5$ सूत्रैर् ( for स्तम्भैर् ) $T_1$ $G_{1\,3-5}$ $M_2$ स्तम्भैर्न विधृता सा वै, $T_2$ सुस्तम्भैर्विधृता सा वै, $M_4$ स्तम्भैर्न च धृता सा वै ( for $^a$ ) $K_{1\,2}$ $\tilde{N}_2$ $V_{1.\,3}$ $B_2$ Dn Ds $D_{1\,4}$ च सा; $K_3$ $D_3$ शुभा; $K_4$ $D_2$ वरा ( for च या ) $\tilde{N}_1$ $T_1$ $G_{1,\,3.\,5}$ $M_{2\,4}$ शाश्वती न च साक्षरा; $B_{1\,3}$ $D_6$ °ती चान्यया च सा, $T_2$ °ती चाक्षयाय सा; $G_4$ °ती याक्षया च सा ( for $^b$ ) — ( L 100 ) $T_1$ सूर्यमग्निं ( for च सूर्यं च ) $T_2$ $G_{1\,3-5}$ अतीत्य सूर्यमग्निं ( $T_2$ $G_4$ °र्यं वह्निं ) च, $M_{2\,4}$ अति सूर्यं च वह्निं च ( for $^a$ ). $T_{1\,2}$ $G_{1.\,3-5}$ $M_{2\,4}$ शशिनं ( for पावक ) $\tilde{N}_2$ पावकस्य समप्रभा ( for $^b$ ) — ( L 101 ) $V_1$ $D_6$ आदीप्य ( for दीप्यते ) $T_{1\,2}$ $G_{1.\,3-5}$ $M_{2\,4}$ भासयन्ती ( for भर्त्स° ) $D_3$ भासुराः ( for भास्करम् ) — ( L 102 ) $K_2$ $D_{4\,6}$ प्रवरा ( for प्रचुराः ). — ( L 103 ) $K_2$ प्रस्रुताश्, $V_1$ प्रवृत्ताश्, $B_3$ $D_{2\,4\,5}$ प्रसूताश् ( for प्रभू° ) $T_1$ $G_{3\,5}$ भक्ष्यभोज्यास्तथाक्षया ( for $^b$ ) — ( L 104 ) $D_3$ पुष्पज पुण्यगन्धश्च ( for $^a$ ) $T_{1.\,2}$ $G_{1\,3-5}$ $M_{2\,4}$ -काम- ( for -पुष्प- ) — ( L 105 ) $T_2$ $G_1$ तेषा ( for शीते ) — ( L 106 ) $K_1$ पुष्पिताश्च ( for °ताग्रा ) $V_1$ B $Dn_2$ $D_{2\,3\,6}$ $T_{1\,2}$ $G_{1.\,3-5}$ $M_{2\,4}$ पुष्पिताग्रान्म( $D_2$ °ग्रा म )हाशाखान् ( for $^a$ ) — ( L 107 ) $\tilde{N}_2$ $B_{1\,2}$ $D_{5\,6}$ $T_{1\,2}$ $G_{1\,3-5}$ $M_{2\,4}$ -सछन्नान् ( for °न्नाः ). $K_3$ $\tilde{N}_1$ $B_3$ $D_{1\,3}$ लतावतानसछन्ना. ( $V_1$ $B_3$ °न्नान् ) ( for $^a$ ). $B_1$ $D_6$ $M_2$ नदीषु ( for सरित्सु ) — $D_1$ om lines 108–111. $V_1$ $B_{1\,3}$ $D_6$ $T_{1\,2}$ $G_{1\,3-5}$ $M_{2\,4}$ om ( hapl. ) line 108. — ( L 109 ) $T_{1\,2}$ $G_{1,\,3-5}$ $M_{2\,4}$ वृक्षान् ( for द्रुमान् ). $\tilde{N}_1$ $D_3$ केसरी, $Ds_1$ दृश्यते ( for ददृशे ) $K_{1\,3.\,4}$ $\tilde{N}_2$ Dn ऽद्भुतम्, $K_2$ $V_{1\,3}$ $D_4$ ऽद्भुत, $B_2$ ऽद्भुतान्; $B_3$ विभु; $D_2$ द्रुतम् ( for प्रभुः ) — ( L 111 ) $K_4$ शीतोष्ण- ( for शीतानि ) $K_{1\,2}$ $D_5$ रम्याणि, $D_4$ नोष्णानि ( for तोयानि ). $K_3$ नातिशीतानि रम्याणि, $B_1$ $T_{1\,2}$ $G_{1\,3-5}$ $M_2$ न शीतानि न चोष्णानि ( for $^a$ ) — ( L 112 ) $T_2$ $G_{4\,5}$ $M_2$ सम- ( for सर्व- ) $K_4$ $B_2$ $D_{1\,2.\,5}$ सभायां शततो ( $D_{2\,5}$ °शो ) विभु ( for $^b$ ) — ( L 113 ) $D_3$ संलीन- ( for नलिनै ),

सकान्तैर्धार्तराष्ट्रैश्च राजहंसैः सरःप्रियैः । [ 115 ]
कादम्बैश्चक्रवाकैश्च सारसैः कुररैरपि ॥
विमलस्फटिकाभानि पाण्डुरच्छदनानि च ।
कलहंसोपगीतानि सारसाभिरुतानि च ॥
गन्धवत्यः शुभास्तत्र पुष्पमञ्जरिधारिणीः ।
दृष्टवान्पादपाग्रेषु नानापुष्पधरा लताः ॥ [ 120 ]
केतकाशोकसरलाः पुन्नागतिलकार्जुनाः ।
चूता नीपा नागपुष्पाः कदम्बा बकुला धवाः ॥
प्रियङ्गुपाटला वृक्षाः शाल्मल्यः सहरिद्रवाः ।
सालास्तालाः प्रियालाश्च चम्पकाश्च मनोहराः ॥
तथैवान्ये व्यराजन्त सभायां पुष्पिता द्रुमाः । [ 125 ]
विद्रुमाश्च द्रुमानीका दावाग्निज्वलितप्रभाः ।
स्कन्धवन्तः सुशाखाश्च बहुतालसमुच्छ्रयाः ॥
अञ्जनाशोकवर्णाभा भान्ति वञ्जुलका द्रुमाः ।
वरणा वत्सनाभाश्च असनाः स्यन्दनैः सह ॥
नीलाः सुमनसश्चैव पीताः साश्वत्थतिन्दुकाः ॥ [ 130 ]
प्राचीनामलका लोध्रा मल्लिका भद्रदारवः ।
आम्रातकास्तथा जम्बूर्लकुचाश्चैलवालुकाः ॥
सर्जरसाः कुन्दरवाः पतङ्गाः कुटजास्तथा ।
रक्ताः कुरबकाश्चैव नीपाश्चागुरुभिः सह ॥
कदम्बाश्चैव भव्याश्च दाडिमा बीजपूरकाः । [ 135 ]
कालीयका दुकूलाश्च हिङ्गवस्तैलपर्णिकाः ॥

---

K1. 2 Ds1 पुण्डरीकाक्षै· (for °कैश्च) — (L 114) D4 नालै.; T1 नीपै (for नीलै) D5 संयुतानि, T1 2 G1. 3–5 M2. 4 संवृ° (for संत°) — D2 om (hapl) lines 115–117. — (L. 115) D3 संकीर्णैर्, T2 G3 संक्रान्तैर् (for सका°) T1 G3–5 M2 4 धृतराष्ट्रैश् (for धार्त°) — (L 116) B1 D6 T1 कारण्डैश् (for कादम्बैश्) K3 B3 D3 T2 G1 4 5 M2 4 कारण्डवैश्चक्रवाकै (for $^a$). Ñ1 कामगैः (for सारसै) Ds1 शतपत्रैः सुगन्धिभिः (for $^b$) — (L. 117) T1 G3 पाण्डुरैश्चन्दनैर्द्विजै, T2 G1 4 5 M2 4 पाण्डरच्छदनैर्द्विजै· (for $^b$). — (L 118) K2 ब्रह्म-, T2 G1 3 5 M3 4 बहु- (for कल-) Ñ2 V1 3 Ds सारसोप-, T1 G3 Bom Poona eds सारिकाभि- (for सारसाभि-) — (L 119) B D6 गन्धयुक्ता; Ds1 °वतीः, Ds2 D3 °वन्तीः (for °वत्य.) T1 2 G1 3–5 M2 4 शुभगन्धवती तत्र (for $^a$) — (L 120) T1 2 G3–5 M2 4 दृष्टवान्पर्वताग्रेषु, G1 °न्पर्वतश्रेष्ठ (for $^a$) — (L 121) K1 2 Ñ1 -तरला; V1 Ds -शबलाः, B1 D6 -बकुला, B3 -बहुला.; D5 शरणाः (for -सरला) D3 केतकीसर्जसरला· (for $^a$) G5 पुन्नागमरलार्जुनाः (for $^b$) — (L 122) T1 2 G1 3–5 M2 नाग(T2 ताल)-वृक्षा· (for नागपुष्पा) K3 चूताश्च नागपुष्पाश्च, B1 3 D6 चूतनीपकदम्बाश्च, D5 चूताश्च नीपा पुष्पाश्च (for $^a$). B1. 3 D6 नागपुष्पा· प्रियंगव· (for $^b$) — (L 123) B1 3 शाल्मल्यः (for प्रियङ्गु-) B1 3 D6 म(B1 व)ञ्जुला. पा(B3 प)रिभद्रका. (for $^b$) — (L 124) K2 D3 T1 2 G1 3–5 M2 4 तमालाश्, D4 पिप्प° (for प्रिया°) Ñ2 V1. 3 B1 3 Ds D3 T1. 2 G1 3–5 M2 4 मनोरमा. (for °हरा) — B3 om lines 125–128 — (L 125) B1 तथान्ये विविधा रम्या (for $^a$). — (L 126) K1 3 4 V3 Dn Ds D1–5 वैद्रुमाश् (for वि°). Ñ2 V1 B1 2 D6 द्रुमा दिव्या; G3 M2 द्रुमोद्रेका; G4 द्रुमानेकान्; (for °नीका) Ñ1 V1 B1 2 D6 वैद्रुमाश्च द्रुमा दिव्या (for $^a$). B1 D6 T1 G1. 3–5 M2. 4 ज्वलिता(G1 °लना)ग्निसमप्रभाः (for $^b$) — (L 127) T1 सुस्निग्धा सुप्रभाश्चैव; T3 G4 M2 4 सुस्कन्धशाखान्द(M2 4 °खा द)दृशे, G1 सुस्कन्धछाया ददृशे, G3 5 स्निग्धच्छायासु ददृशे (for $^a$). D3 बहुद्विजसमाश्रया· (for $^b$) — (L 128) V1 -बकुला; D5 पर्णाभा, T1 G1 3–5 M2 4 -वृक्षाश्च, T2 -वृक्षांश्च (for -वर्णाभा). T1 2 G1 3–5 M2 4 बहवश्चन्दनद्रुमा (for $^b$). — (L. 129) V1 बलाभाश्, D2 T1 G3 वत्सनागाश् (for °नाभाश्) Ds चन्दनैः (for स्य°) B1 3 D6 पनसाश्चन्दनैः सह; T1 2 G1 4, 5 M2 4 पनसा· सह चूतकै· (for $^b$) — K1 om lines 130–131. — (L 130) D3 दिव्या (for नीला) T1 च बर्बराश् (for सुमनसश्) G9 M4 om line $130^b$ T1 वृक्षा; G3 M2 निम्बाः (for पीताः) Ñ1 2 V1 3 B1. 3 Ds D2. 6 पीताम्राश्वत्थतिन्दुकाः, B2 पलाशा°; D3 पीताम्राश्च सुतिन्दुकाः; D5 प्रीताशाखाश्च ति°, T2 G1. 4 पीताश्मन्त(G4 °श्मात)कति° (for $^b$) — T1. 2 G1. 4 M2 ins after line 130; G3. 5 after line $134^b$ M4 after line $130^a$

13** निम्बाश्च बर्बराश्चैव वृक्षाः साश्वत्थतिन्दुकाः ।
अङ्कोलोदुम्बराश्चैव किंशुका भूर्जपत्रका ॥

— K1 om line 131 — (L 131) T1 2 G1 3–5 M2 4 पारिजाताश्च लोध्राश्च (for $^a$) — (L. 132) T2 G1 4 2 M2 लिकुचाश्, G3 नि°; G(ed) वि° (for ल°) B1 पर्णिका; D3 -बाहुका (for -वालुका·) — (L 133) D6 कुञ्जरकाः (for कुन्दरवा) K1 2 T2 G1 सज्ज(K1 °र्जा-; K2 °र्ज)रसाः कुन्दरवा (for $^a$) T1 om lines $133^b$–$135^a$ B1. 3 D6 G3 पुन्नागा. (for पतङ्गा·) K2 कुन्दजास्, V3 कूटकास् (for कुटजास्) — M1 om lines $134^b$–$136^a$ — (L 135) K3 रुच्याश् (for भव्याश्) — (L 136) T1. 2 G3–5 M2 कालके-(M2 °की)या (for कालीयका) K1. 2 कालीयाः कामकुलाश्च (for $^a$). K -पल्लिकाः, Ñ1 -वर्णिकाः (for -पर्णिका). D5

खर्जूरा नारिकेलाश्च धर्मवृक्षा हरीतकी ।
मधुकाः सप्तपर्णाश्च बिल्वाः पारावतास्तथा ॥
पनसाश्च तमालाश्च नानागुल्मलतावृताः ।
लताश्च विविधाकाराः पुष्पपत्रफलोपगाः ॥ [ 140 ]
एते चान्ये च बहवस्तत्र काननजा द्रुमाः ।
नानापुष्पफलोपेता व्यराजन्त समन्ततः ॥
चकोराः शतपत्राश्च मत्तकोकिलसारिकाः ।
पुष्पितान्पुष्पिताग्रांश्च संपतन्ति महाद्रुमान् ॥
रक्तपीतारुणास्तत्र पादपाग्रगता द्विजाः । [ 145 ]
परस्परमवैक्षन्त प्रहृष्टा जीवजीवकाः ।

Colophon.

वैशंपायन उवाच ।

तस्यां सभायां दैत्येन्द्रो हिरण्यकशिपुस्तदा ।
आसीन आसने चित्रे नल्वमात्रे प्रमाणतः ॥
दिवाकरनिभे दिव्ये दिव्यास्तरणसंवृते ।
रराज सुचिरं राजञ्ज्वलत्काञ्चनकुण्डलः ॥ [ 150 ]
तस्य दैत्यपतेर्मन्दं विरजस्कः समन्ततः ।
दिव्यगन्धवहस्तत्र मारुतः सुसुखो ववौ ॥
तत्र देवाः सगन्धर्वा गणैरप्सरसां वृताः ।
दिव्यतालेन दिव्यानि जगुर्गीतानि गायनाः ॥
विश्वाची सहजन्या च प्रम्लोचेत्यभिविश्रुताः । [ 155 ]
दिव्या च सौरभेयी च समीची पुञ्जिकस्थला ॥
मिश्रकेशी च रम्भा च चित्रसेना शुचिस्मिता ।
चारुनेत्रा घृताची च मेनका चोर्वशी तथा ॥
एताः सहस्रशश्चान्या नृत्यवादित्रकोविदाः ।
उपतिष्ठन्ति राजानं हिरण्यकशिपुं तदा ॥ [ 160 ]

---

हिङ्गुलास्तिलपर्णिका., T2 G5 M2 4 हिङ्गवश्चैव वर्णकाः ( for $^{b}$ ). — ( L 137 ) B1 3 D5 6 हरि( D5 °री )तक्यो नारिकेलाः ( for $^{a}$ ) K2 कर्मवृक्षा, B2 चर्म°, Dn वसु°, Bom Poona eds G(ed.) पूग° ( for धर्म° ) B1 3 D5 6 खर्जूराश्च( D5 °रा ध )र्मपाद( B1 °रीत )पा, T1 2 G1 4 शमीपत्रा ( T1 °वृक्षा ) बिभीतका ; G3 5 M2 4 चम्पवृक्षा विभीतका ( for $^{b}$ ) — ( L. 138 ) D6 सप्तपर्णाश्च बिल्वाश्च मधुरा विततास्तथा — ( L 139 ) Ñ1 D5 G5 M2 4 अ( D5 आ )सनाश्च ( for पनसाश्च ) D5 -पुष्प- ( for -गुल्म- ) — ( L 140 ) T2 नानापुष्प- ( for पुष्पपत्र- ) K2 Ñ5 D6 -फलोपमा ; K4 -फलागमा, Dn -फलोत्तमा, D1 -फलापगा, T2 G1 4 -फलैर्वृताः ( for -फलोपगा ) — ( L. 142 ) T2 G1 4 छायाप्रधानाः सफला ( for $^{a}$ ) —B3 om lines 143–146 — ( L. 143 ) K3 मत्ताः ( for मत्त- ). D5 -सारसा ( for -सारिका ) — ( L 144 ) K2, 3 पुष्पिता. पुष्पिताग्राश्च ; Ñ1 G5 M4 °तान्पुष्पितास्तांस्तान् ; V1 B1, 2 D6 T2 G4 M2 °तान्फलितांस्तांस्तान् ; Dn °तान्फलिताग्राश्च, D3 °ताः फलिताग्राश्च ( for $^{a}$ ) K1 G1 5 महाद्रुमा. ( for °द्रुमान् ) — ( L 145 ) G1 विचित्राभरणाम्बरा ( for $^{b}$ ) —( L 146 ) D5 G1 4 उदैक्षन्त ( for अवै° ) Ds1 प्रकृष्टा ( for प्रहृष्टा ).

Colophon om in Ñ1 B3 T1 2 G1, 3–5 M2 4 — *Mention of the Epic* K4 V1 Dn Ds2 D1 2 — *Mention of Khila*. V3 B1 2 Dn Ds D1 3–5 — *Subparvan* K1 2 4 Ñ2 V3 B2 Dn1 Ds D1–4 6 नारासिंहम् ; V1 आश्चर्यम्. — *Adhy name* K3 नारासिंहप्रादुर्भाव. ; B1 D5 6 हिरण्यकशिपुसभावर्णनम्, B2 सभावर्णनम्. — *Adhy no* V3 227, Dn1 Ds2 226, D1 214, D3 242 ; D4 221

Ñ1 T1 2 G1, 3–5 M2 4 om the ref —( L 147 ) D3 दिव्यायां ( for दैत्येन्द्रो ) B3 D6 6 प्रभु ( for तदा ) — ( L. 148 ) K1 V3 D3 आसीनम् ( for °न ) B1 3 D5, 6 रम्ये ; T1 2 G1 3–5 शुभ्रे ( for चित्रे ) T1 अल्पमात्र- ; G3 M3 4 दशनल्व- ( M2 4 °ल्वे ) ( for नल्वमात्रे ) —( L 149 ) B1, 3 Ds, 6 दीप्ते, T1 G3 रम्ये ( for दिव्ये ) K1 T1 -संभृते ; D6 -सयुते ( for संवृते ) — Ñ1 V3 M2 om lines 150–151. — ( L 150 ) K4 लसत्काञ्चन- ( for ज्वल° ). — G4 om. lines 151–152 — ( L 151 ) D5 मन्दो ( for मन्दं ) K B1 Dn D2 4 T1 2 G1 3 5 विरजस्कं ( for °स्कः ) — ( L 152 ) K1 Ñ1 V3 D2 5 G1 3–5 M4 सुमुखो, D4 ससुखो ( for सु° ). — ( L 153 ) T2 G1, 4 दिव्याश्च, G3 M2 दिव्या स- ( for देवाः स- ) G3 गणैः ( for वृता. ) Ñ1 गणैः संवृतमावृताः, T1, 2 G1 4 5 M2, 4 दिव्यै( T1 देवै )रप्सरसां गणै ( for $^{b}$ ). — ( L. 154 ) K3 V1 D3 D5 6 -तानेन, Ñ1 -तालेषु ; T1 -तानानि ; T2 G1 4 5 ताळानि ( for -तालेन ). M3, 4 दिव्यताळे( M4 °ने )षु गीतानि ( for $^{a}$ ). M2 4 दिव्यानि ( for गीतानि ) K2 D1, 2 ( *sup lin* as above ) T1 G1 3, 4 M2, 4 गायकाः ( for °नाः ). —( L. 155 ) T1 2 G1, 3–5 M2 4 प्रम्लोचन्ती च ( G1 °न्तीति ) विश्रुताः ( for $^{b}$ ). —( L 156 ) K3 दिव्यवस्त्रेण दिव्या च ( for $^{a}$ ) — K1 2 D4 om ( hapl ) lines 157$^{b}$–158$^{a}$ —( L 159 ) D3 गीत- ( for नृत्य- ). V1 B1 3 D5 6 T1 2 G1, 3–5 M2 4 नृत्यगीतविशारदाः ( for $^{b}$ ). —( L. 160 ) B1, 3 D1 -तिष्ठन्त ( for -तिष्ठन्ति ). Ds2 उपातिष्ठन्त

हिरण्यकशिपुस्तत्र विचित्राभरणाम्बरः ।
स्त्रीसहस्रैः परिवृतस्तस्थौ ज्वलितकुण्डलः ॥
तत्रासीनं महाबाहुं हिरण्यकशिपुं प्रभुम् ।
उपासन्त दितेः पुत्राः सर्वे लब्धवराः पुरा ॥
बलिर्विरोचनस्तत्र नरकः पृथिवीजयः । [ 165 ]
प्रह्लादो विप्रचित्तिश्च गविष्ठश्च महासुरः ॥
चक्रहन्ता क्रोधहन्ता सुमनाः सुमतिस्वनः ।
घटोदरो महापार्श्वः क्रथनः पिठरस्तथा ॥
विश्वरूपः सुरूपश्च विरूपश्च महाद्युतिः ।
दशग्रीवश्च वाली च मेघवासा महारवः ॥ [ 170 ]
घटाभो विकटाभश्च संह्रादश्चेन्द्रतापनः ।
दैत्यदानवसंघाश्च सर्वे ज्वलितकुण्डलाः ॥
स्रग्विणो वाग्मिनः सर्वे सर्वे सुचरितव्रताः ।
सर्वे लब्धवराः शूराः सर्वे विगतमृत्यवः ॥
एते चान्ये च बहवो हिरण्यकशिपुं प्रभुम् । [ 175 ]
उपासन्ते महात्मानं सर्वे दिव्यपरिच्छदाः ॥
विमानैर्विविधैरग्र्यैर्भ्राजमानैरिवार्चिभिः ।
स्रग्विणो भूषिताः सर्वे यान्ति चायान्ति चापरे ॥
महेन्द्रचापसंकाशैर्विचित्रैरङ्गदैर्वरैः ।
भूषिताङ्गा दितेः पुत्रास्तमुपासन्त सर्वशः ॥ [ 180 ]
तस्यां सभायां दिव्यायामसुराः पर्वतोपमाः ।
हिरण्यमुकुटाः सर्वे दिवाकरकरप्रभाः ॥
कनकमणिविचित्रवेदिकाया-
मुपहितवेदिसवज्रवीथिकायाम् ।

---

राजानं ( for $^a$ ) $K_2$ प्रभुम् ( for तदा ). — $T_{1\,2}$ $G_{1\,3.5}$ $M_{2\,4}$ subst for line 160 · $G_4$ ins after line 160:

14** उपचेरुरिमं दैत्यं हिरण्यकशिपुं प्रभुम् ।

[ $T_1$ $G_1$ प्रचेरुरेन दैत्येन्द्रा , $G_4$ उपचेरुश्च दैत्येन्द्रो ; $M_{2.4}$ °रुरेन दैत्येन्द्र ( hypermetric ) ( for $^a$ ). $T_2$ $G_{1.4.5}$ तदा ( for प्रभुम् ) . ]

— ( L. 161 ) $G_3$ विचित्राभरणार्थवत् ( for $^b$ ) — ( L 162 ) $B_{1\,3}$ वृत शूरस् ( for परिवृतस् ).— ( L 165 ) $\tilde{N}_1$ $V_1$ $B_{1\,2}$ $D_6$ $T_1$ $G_3$ वैरोचन( $B_{1\,3}$ $V_1$ $D_6$ °नि )स् ( for °विरो ). — ( L. 166 ) $T_1$ वरिष्ठश् ( for गवि° ) $M_2$ महारथ· ( for °सुरः ) — ( L 167 ) $\tilde{N}_2$ $V_{1\,3}$ $B_{2\,3}$ $D_3$ $D_6$ $T_2$ $G_{1\,4}$ चन्द्रहन्ता ; $D_5$ शक्र° ( for चक्र° ). $K_{3\,4}$ $\tilde{N}_1$ $B_1$ $D_n$ $D_{1-3}$ अहन्ता क्रोध- ( $\tilde{N}_2$ दु.ख )हन्ता च , $T_1$ $G_{3.5}$ $M_{2\,4}$ आ( $T_1$ अ )हर्ता दु ख- हन्ता च ( for $^a$ ) $K_3$ सुमनाः सुगति. स्वरः , $\tilde{N}_1$ सुनामाः सुमतिः स्वन· ; $V_{1\,3}$ $D_{s2}$ क्रोधवर्धन एव च ; $B_{1\,3}$ $D_6$ $T_{1\,2}$ $G_{1.3-5}$ $M_{2\,4}$ सुनामा ( $T_3$ $G_{1\,4}$ °मना ) सुवपु( $B_1$ $D_6$ °मति- , $M_2$ °वसु )स्तथा ( for $^b$ ) — ( L 168 ) $G_1$ खनकः ( for क्रथन ) $D_2$ काठिनः पठिरस्तथा ; $T_1$ $G_{3\,5}$ $M_2$ कुनखी ( $M_2$ °खः ) पीवर° ( for $^b$ ) — ( L 169 ) $K_1$ वि- , $D_n$ $D_2$ स- , $D_{1\,3\,5}$ च ( for सु- ) $K_3$ बहुरूपो ( for विरूपश्च ) $\tilde{N}_1$ महामतिः ; $B_{1\,3}$ $D_{5.6}$ $T_{1\,2}$ $G_{1.3-5}$ $M_{2.4}$ °बल ( for °द्युति· ) — ( L 170 ) $G_{1\,4\,5}$ माली ( for वाली ). $D_3$ नयवासा , $T_1$ $G_3$ $M_{2\,4}$ दर्प° ( for मेघ° ) $\tilde{N}_2$ $V_{1\,3}$ $B_{1.2}$ $D_3$ $M_2$ महाबलः ; $D_3$ °मख. , $T_{1.2}$ $G_{1.3.4}$ $M_4$ °रथ ( for °रवः ). — ( L 171 ) $K_4$ $D_n$ $D_{1\,2}$ कटाभो ( for घ° ) $D_3$ घटांसो विघटसश्च ; $T_{1\,2}$ $G_{1\,3-5}$ $M_{2\,4}$ विड्रुभ( $G_5$ °सुम्भ- ; $M_2$ °धूम- ; $M_4$ °धूप )श्च घटाभश्च ( for $^a$ ). $T_1$ $G_{1\,4}$ तपनश् ; $G_{3,5}$ $M_{2\,4}$ प्रतापश् ( for संह्रादश् ) $\tilde{N}_1$ प्रवाहश्च हुताशन ( for $^b$ ) — ( L 173 ) $B_3$ भूषिताः , $T_{1\,2}$ $G_{1.3-5}$ $M_{2\,4}$ वर्मिण ( for वाग्मिन ). $T_1$ om ( hapl ) 173$^b$–178$^a$ — ( L 174 ) $V_1$ $B_{1\,2}$ -मन्यत्र ( for -मृत्यव· ). $\tilde{N}_1$ सर्वे वेदविदां वराः ( for $^b$ ) — $M_4$ om lines 175–179. — ( L. 176 ) $K_{1\,2\,4}$ $\tilde{N}_{1\,2}$ $V_{1\,3}$ $B_{1\,3}$ $D_n$ $D_s$ $D_{3\,4}$ $M_2$ उपासन्त ; $K_3$ °न्ति ; $D_{5.6}$ $T_2$ $G_{1\,4.5}$ °न्ते ( for °न्ते ) $D_2$ -परिग्रहाः ( for °च्छदा ) — ( L 177 ) $K_{1-3}$ $D_s$ $D_{3\,4}$ उग्रैर् ; $V_1$ रम्यैर् ; $B_2$ दिव्यैर् ; ( for अग्र्यैर् ). $B_{1\,3}$ $D_{5\,6}$ $G_{1\,3\,5}$ $M_2$ विमानैर्विविधाकारैर् ( for $^a$ ) $V_1$ $B_{1\,3}$ $D_6$ $T_2$ $G_{1.3-5}$ $M_2$ [अ]ग्निभि· ( for [अ]र्चिभि ). — $G_5$ om lines 178–179. — ( L 178 ) $G_1$ Bom Poona eds G(ed ) स्रग्विणो भूषणधरा , $G_3$ °णो भूषिण सर्वे ( for $^a$ ) Bom Poona eds, G(ed ) हेलया ( for चापरे ) $B_{1.3}$ $D_{5\,6}$ गमनागमने रताः , $M_2$ समुपेत्याभिदर्पिता ( for $^b$ ) — After line 178, $\tilde{N}_2$ $V_1$ B $D_6$ ins :

15** विचित्राभरणोपेता विचित्रवसनास्तथा ।
विचित्रशस्त्रकवचा विचित्रध्वजवाहना. ॥

[ ( L. 2 ) $B_2$ विचित्रकवचोपेता ( for $^a$ ). ]

— ( L 179 ) $B_{1\,3}$ $D_6$ -सदृशैर् ( for -संकाशैर् ) $T_{1.2}$ $G_{1\,3\,4}$ $M_2$ महेन्द्रवपुष सर्वे ( for $^a$ ). $T_{1\,2}$ $G_{1\,3\,4}$ $M_2$ विचित्राङ्गदबाहवः ( for $^b$ ). — ( L 180 ) $\tilde{N}_2$ $V_3$ भारत , $V_1$ संघशः ; $B_1$ $D_{5\,6}$ नित्यश ( for सर्वशः ) $B_3$ तमुपासन्ति नित्यश· ( for $^b$ ) — ( L 181 ) $G_{1\,5}$ पर्वतोत्तमम् ( for °पमा ) $V_1$ असुरं पर्वतोत्तमम् ( for $^b$ ) — ( L. 182 ) $T_{1\,2}$ $G_{1\,3-5}$ $M_{2\,4}$ -वपुष ( for -मुकुटा ). $D_6$ सर्वे दिन- ( for दिवाकर- ) $K_{3\,4}$ $\tilde{N}_1$ $V_1$ $B_2$ $D_5$ $T_{1\,2}$ $G_{1\,3.5}$ $M_{2\,4}$ -सम· प्रभा ( for कर° ) — ( L 183 ) $K_3$ मणिविचित्राणि ; $T_1$ $M_5$ -रजतचित्र°- , $G_{4.5}$ $M_2$ -रचित° ( for मणिवि° ). — ( L 184 )

स ददर्श मृगाधिपः सभायां [ 185 ]
सुरुचिरदन्तगवाक्षसंवृतायाम् ॥
कनककमलहारभूषिताङ्गं
दितितनयं स मृगाधिपो ददर्श ।
दिवसकरकरप्रभं ज्वलन्त-
मसुरसहस्रगणैर्निषेव्यमाणम् ॥ [ 190 ]

Colophon.

वैशंपायन उवाच ।

ततो दृष्ट्वा महाबाहुं कालचक्रमिवागतम् ।
नारसिंहवपुश्छन्नं भस्मच्छन्नमिवानलम् ॥
विकुञ्चितसटान्तस्य नारसिंहस्य भारत ।
रूपौदार्यं बभौ तत्र समस्तं शशिसंनिभम् ॥
अहो रूपमिदं चित्रं शङ्खकुन्देन्दुसंनिभम् । [ 195 ]
अब्रुवन्दानवाः सर्वे हिरण्यकशिपुश्च सः ॥
एवं हि ब्रुवतां तेषां निर्दग्धानां महात्मनाम् ।
नारसिंहेन चक्षुर्भ्यां चोदिताः कालधर्मणा ॥
हिरण्यकशिपोः पुत्रः प्रह्लादो नाम वीर्यवान् ।
दिव्येन चक्षुषा सिंहमपश्यद्देवमागतम् ॥ [ 200 ]
तं दृष्ट्वा रुक्मशैलाभमपूर्वां तनुमास्थितम् ।
विस्मिता दानवाः सर्वे हिरण्यकशिपुश्च सः ॥

प्रह्लाद उवाच ।

महाराज महाबाहो दैत्यानामादिसंभव ।
न श्रुतं नैव नो दृष्टं नारसिंहमिदं वपुः ॥
अव्यक्तप्रभवं दिव्यं किमिदं रूपमद्भुतम् । [ 205 ]
दैत्यान्तकरणं घोरं शंसतीव मनांसि नः ॥
अस्य देवाः शरीरस्थाः सागराः सरितस्तथा ।

---

K3 D1 2 परिहृत-, Ñ1 2 V3 Ds2 परिवृत-, G3 उपहृत- (for °हित-) Ñ1 -वेदिसवेदि-, Ñ2 V3 B Ds2 D5 -निर्मलवज्र-, V1 Dn रत्नसहस्र- (for वेदिसवज्र) D1 2 -वेदिकायाम् (for -वीथि°) K4 परिहृतवेदनवज्रवेदिकायाम्, D3 6 T1 2 G1 3-5 उपहि(G5 °हृ)तनिर्मलवज्रपीठि° (D3 °कर्णि°), M2 4 परिहृतवीथि(M2 °ति)सवज्रवेदि° — (L 185) K1 2 V1 3 B Ds D4-6 स तु मृगपतिरी(V1 B1 Ds °वी, D6 °निरी)क्षित सभायां — (L 186) V3 -तुङ्ग-, D1 3 -रत्न- (for -दन्त-) D6 (marg as above) -संहितायाम्, G3 -वेदिका° (for -संवृता°) K3 विविधरुचिमादित्य नृपेन्द्रम् — (L 187) Ñ1 B D1. 3 6 T1 G1-5 -विमल (for -क°) M2 -भूषितायां (for °ङ्गं) — (L. 189) T1 Poona ed दिन- (for दिवस-). T1 -घनप्रभं, T2 -कुल°, G3 5 -सहस्रभा (for -करप्रभं) — (L 190) B1 3 D5 6 -दितिज- (for असुर-) T2 G1 3-5 M1. 4 शतैर् (for -गणैर्)

Colophon — *Mention of the Epic* K4 Ds2 D1 2. — *Mention of Khila* V1 3 B Ds D1. 3-5. — *Subparvan* K Ñ1 2 V1 3 B Dn D1 2 4 नारसिंहम्; D3 पारिजातम्, T2 G1 3 M2 4 नारसिंहप्रादुर्भाव; G5 नृसिंहाविर्भाव — *Adhy name* B1 3 हिरण्यकशिपुदर्शनम्, D3 नारसिंहप्रादुर्भावे हिरण्यकशिपुसभावर्णनम्, D5 6 हिरण्यकशिपुदर्शनम्, T2 G1 हिरण्यकशिपुसभावर्णनम्. — *Adhy no* : K3 15, V3 B2 228; Dn Ds2 227, D1 215, D3 243; D4 222, T1 283, T2 G1 284; G3 5 285; G4 286; M3 4 2

(L. 191) T2 महाबाहु- (for °हुं) D6 [उ]दितम् (for [आ]ग°). — (L 192) K1 D4 सधुक्षन्तम्, B1 T1 G3 भस्मा-च्छन्नम् (for भस्म°) Ñ1 [अ]चलम् (for [अ]न°) — M2 4 om. lines 193-198 — (L 193) K1 V3 Ds D2-4 निकुञ्चित- (for वि°) Ñ1 2 V3 B Dn Ds D5 6 T1 2 G1 3 Col -सटं तस्य (for सटान्तस्य) — (L 494) Ñ2 D3 तस्य (for तत्र) B2 Dn2 G5 सहस्र-, D2 समग्रं (for समस्तं). — D6 om (hapl) line 195 — (L 195) तस्य (for अहो) Ñ1 D5 दृष्ट (for चित्रं) V1 B3 T1 G3 5 -सप्रभम् (for -संनि°) Ñ1 शङ्खवर्णसमप्रभम्, Ds1 शङ्खदुन्दुभिनिस्वनम् (for [b]) — (L 196) G1 4 पुन (for च सः) D3 विस्मयाविष्टमानसाः, T2 हिरण्यकशिपो. पुन. (for [b]). — D3 om lines 197-198 — (L 197) V3 निर्गन्धानां (for निर्दग्धानां) D2 च संसदि (for महात्मनाम्). — (L. 198) D3 4 नोदिता, D6 T2 G1 4 युक्ताना (for चोदिताः). T1 G3 5 कालयुक्तेन क(G5 ध)र्मणा (for [b]) — After line 199, T1 2 G1 3-5 M2 4 ins.

16** साक्षाद्योगेश्वरो योगी तन्मयस्तत्परायणः ।

— (L 200) Ñ1 V3 वपुषा (for चक्षुषा). T3 G1 4. 5 देवम् (for सिंहम्) T1 स्वयम्, T2 G1 4 सिंहम्, M2 दिव्यम् (for देवम्) — (L 201) T1 2 G1 3 4 M2 4 रूप्य- (for रुक्म-) V1 -शृङ्गाभम् (for -शैला°) T1 2 G1 3-5 आश्रितम् (for आस्थि°). — (L 204) K1-3 D4. 5 श्रुतं च, D2 अश्रुतं (for न श्रुतं) D3 दृष्टं मे, Bom Poona eds दृष्टं च (for नो दृष्टं) — (L 205) K1-3 D5 रूपम् (for दिव्यम्). T1 2 G3-5 M2 आगतम् (for अद्भु°). K1-3 D5 अद्भुतं (D3 °व्यक्तं) लोमहर्षणम् (for [b]) — (L 206) D6 सीदन्ति (for शंसन्ति). — (L. 207) T1 2 G1. 3-5 M2 4 च याः (for तथा) — (L. 208) T1 G3 3 ये चान्ये पर्वतोत्तमा. (for [b]). — (L. 209)

हिमवान्पारियात्रश्च ये चान्ये कुलपर्वताः ॥
चन्द्रमाः सह नक्षत्रैरादित्याश्चाग्निना सह ।
धनदो वरुणश्चैव यमः शक्रः शचीपतिः ॥ [210]
मरुतो देवगन्धर्वा ऋषयश्च तपोधनाः ।
नागा यक्षाः पिशाचाश्च राक्षसा भीमविक्रमाः ॥
ब्रह्मा देवः पशुपतिर्ललाटस्था विभान्ति वै ।
स्थावराणि च भूतानि जङ्गमानि तथैव च ॥
भवांश्च सहितोऽस्माभिः सर्वदैत्यगणैर्वृतः । [215]
विमानशतसंकीर्णा तथाभ्यन्तरजा सभा ॥
सर्वं त्रिभुवनं राजँल्लोकधर्मश्च शाश्वतः ।
दृश्यते नारसिंहेऽस्मिन्यथेन्दौ विमले जगत् ॥

प्रजापतिश्चात्र मनुर्महात्मा
ग्रहाश्च यागाश्च मही नभश्च । [220]
उत्पातकालश्च धृतिः स्मृतिश्च
रजश्च सत्त्वं च तमो दमश्च ॥
सनत्कुमारश्च महानुभावो
विश्वे च देवा वसवश्च सर्वे ।
क्रोधश्च कामश्च तथैव हर्षो [225]
दर्पश्च मोहः पितरश्च सर्वे ॥

Colophon.

K Ñ2 V1 2 B2 D (except D6) [अ]श्विनौ तथा, T1 [अ]श्वभिस्तथा, T2 G1 3-5 M2 4 [अ]श्विभिः सह (for [अ]ग्निना सह) — (L 210) G5 धर्म. (for यम.) — (L 211) G3 Bom Poona eds G(ed) मुनयश् (for ऋष°) — (L 213) T1 महा- (for ब्रह्मा) K1 V1 B Ds D4 6 ललाटस्थो; T1 2 G1 3-5 M2 4 अस्य कुक्षौ (for ललाटस्था) — (L 215) K3.4 Ñ1 V1 B Dn Ds2 D1-3 6 सर्वैर्दैत्य-, V3 सर्वैर्दैवै; T1 G4 सर्वैर्देव-, T2 G1 5 M2 4 सर्वदेव- (for °दैत्य-) T1 सह (for वृतः) — (L 216) K4 -गण- (for -शत-). B1 तथैवान्तरजाः सभाः, B3 D6 T1 2 G1 3-5 M2 4 तथै(T1 °दे)वाभ्यन्तरे (B3 D6 °रा) सभा (T2 शुभा) (for $^{b}$) — (L 217) Ñ2 Dn2 D3 5 लोकधर्माश्च शाश्वता (for $^{b}$) — (L. 218) Ds1 D6 G1 विमलं (for °ले) T1 2 G3-5 M2 4 तथेदम (T1 °देदम-, T2 °देतद) खिलं जगत् (for $^{b}$). — (L 220) K D1.2 4 5 नागाश्, Ñ1 2 V1 3 B Dn Ds D3 6 T1 G1.3 M2 यो° (for या°) — (L 221) T1 2 G1 3-5 M2 मतिश् (for स्मृ°) — (L 222) K2 D4 रतिश्, K4 सत्त्वं (for रजश्). K4 तत्त्वं (for सत्त्वं) K2 4 V1 D4 शमो, V3 B D1-3 5 6 G2 M2 तपो (for तमो). B1 Ds1 D2 मदश् (for दमश्) — (L 224) K Ñ1 B1.2 Dn D1-5 [अ]प्सरसश्, T1 2 G1 3-5 M2 4 ऋषयश् (for वसवश्) — (L 225) K3 हर्षश्; D6 मोदश् (for कामश्) K3 लोभस् (for हर्षो) — (L 226) K V1 3 B2 3 Dn D2-4 तमश्, Ñ1 दमश् (for दर्पश्) Ñ1 देहे (for सर्वे) — After line 226, B2 Dn Ds D3 ins

17** इत्येवमुक्त्वा स च दैत्यराजं
हिरण्यनामानमविस्मयेन ।
दध्यौ च दैत्येश्वरपुत्र उग्रं
महामतिः किंचिदधोमुखः प्राक् ॥

[(L. 3) B2 D3 तस्थौ (for दध्यौ) B2 स (for च) B2 मुख्यो (for उग्रं)]

While, D4 ins after line 226:

18** पाहि तीव्र महाराज कालरूपो हि दृश्यते ।
एवं ब्रुवति वै पुत्रे रोषाक्रान्तभयस्तदा ॥

Finally, D6 T1 2 G1.3-5 M4 ins after line 226:

19** यः प्राण सर्वभूतानां यः क्रतु स्वयमेव ह ।
प्रणव. सर्ववेदाना सोऽयं विष्णुः सनातन ॥
प्रमाणैरपरिच्छेद्य. प्रमाणं यः प्रचक्षते ।
आदिदेव· सहस्राक्षुः सामगः सामवाचक ॥
ऋग्ध्यायोऽयं पुराणात्मा यज्ञरूप. सनातनः । [5]
योगिध्येय सदा दान्तः पूज्यो हि सततं प्रभो ॥
सुखद सर्वदो नित्यमादिकर्ता जनार्दन ।
नमस्कुरुष्व यत्नेन भूयो भूयः पितः कुरु ॥

[T1 om line 3-8 M2 om line 3-5 — (L 3) G3 अपरिच्छेद्यै (for °द्य) D6 प्रमाणमपरिच्छेद्यं (for $^{a}$) D6 G(ed) य (for य) — (L 4) D6 सागर (for सामग) — (L 5) D6 ऋषयो (for ऋग्ध्यायो) T2 G4 यजुरूप (for यज्ञ°) — (L 6) M2 तात (for दान्त) M2 प्रभु (for प्रभो) — M2 om lines 7-8 — (L 7) D6 सुसुख (for सुखद·) T2 G1 3 5 सर्वदा (for °दो) G3 नित्य (for नित्यम्) — (L. 8) D6 नमस्कुरु प्रयत्नेन (for $^{a}$) D6 नमस् (for पितः)]

COLOPHON om in T1 2 G1 3 5 M4 — *Mention of the Epic* K4 Dn Ds2 D1 2 5. — *Mention of Khila:* V1 3 B Dn Ds1 D1.5 — *Sub-parvan* K1 2.4 Ñ1.2 V1 3 B2 3 Dn Ds D1 2 4 6 नारसिंहम् — *Adhy. name:* K3 M2 नारसिंहप्रादुर्भाव, B D6 प्रह्लादवाक्यम्; D3 नारसिंहरूपवर्णनम्, D5 नारसिंहाख्यानम्. — *Adhy no.* V3 229; Dn Ds2 228; D3 244, D4 223; G4 287; M2 3.

वररथिनामनुजग्मुरूर्जितानाम् । [ 195 ]
अशुरगणशतानि गच्छमानं
त्रिदशगणा इव वासवं प्रयान्तम् ॥
प्रह्लादस्तु महाप्राज्ञः सर्वशास्त्रविशारदः ।
सर्वमायाधरः श्रीमान्यष्टा क्रतुशतैरपि ॥
समनह्यत तेजस्वी पावकार्चिःसमप्रभः । [ 200 ]
रथानीकेन महता दुर्दिनाम्भोदनादिना ॥
शूरेणामितवीर्येण हेमकुण्डलधारिणा ।
वृतो दैत्यसहस्रेण देवैरिव पितामहः ॥
स्ववीर्यादग्रणीर्दृप्तो मत्तवारणविक्रमः ।
सुरसैन्यस्य सर्वस्य प्रतिरोध इव स्थितः ॥ [ 205 ]
स धैर्येणोदधेस्तुल्यो वपुषाग्निरिव ज्वलन् ।
तेजसा भास्कराकारः क्षमया पृथिवीसमः ॥
तालध्वजेन दीप्तेन रथेनातिविराजता ।
तं यान्तमनुयान्ति स्म दानवाः शतसंघशः ॥
सर्वे हिरण्यकवचाः सर्वे रत्नविभूषिताः । [ 210 ]
दिव्याङ्गरागाभरणाः समरेष्वनिवर्तिनः ॥
जाम्बूनदविचित्राङ्गा वैदूर्यविकृताङ्गदाः ।
दिव्यस्यन्दनमध्यस्थाः खस्था इव महाग्रहाः ॥
आचारवांश्चैव जितेन्द्रियश्च
धर्मे रतः सत्यपरोऽनसूयः । [ 215 ]
स्थितोऽग्नितोयाम्बुदवायुकल्पो
रूपी यथा सर्वहरः कृतान्तः ॥
शम्बरस्तु महामायो दैत्यानां रथयूथपः ।
आरुरोह रथं दिव्यं सर्वयुद्धविशारदः ॥
लोहिताक्षो महाबाहुः प्रतप्तोत्तमकुण्डलः । [ 220 ]
जीमूतघनसंकाशो दिव्यस्रगनुलेपनः ॥
विद्युद्द्योतनिकाशेन मुकुटेनार्कवर्चसा ।
मणिरत्नविचित्रेण वैदूर्यान्तरशोभिना ॥
तापनीयेन महता कवचेन विराजता ।
संध्याभ्रेणेव संछन्नः श्रीमानस्तशिलोच्चयः ॥ [ 225 ]
त्रिंशच्छतसहस्राणि दैत्यानां चित्रयोधिनाम् ।
बलिनां कालकल्पानामन्वयुः शम्बरं तदा ॥
युक्तं हयसहस्रेण शुकवर्णेन राजता ।

---

B2 शोभता, B3 D5 D6 T1 2 G1. 3–5 M2 4 राजता, D3 भास्वता (for शोभिना) — (L 193) T1 2 G1 3–5 M2 4 प्रवालान्तरशोभिना (for ^b) — (L 194) M2 Bom Poona eds G(ed) -पराक्रमाकृतीना (for °मद्युतीनां) — (L 195) K3 अति-, D2 सुर- (for वर-) T1 G3 5 उत्थितानाम् (for ऊर्जि°) T2 ** रथेनानुजग्मुरूर्जितानाम् — (L 196) T1 G3 M2 Bom Poona eds G(ed) -गणशताभि- (for °नि) —Before line 198, Ñ1 ins वैशपायन उवाच — (L 198) K1 2 महाप्राज्ञ, Cal. ed °प्रज्ञः (for °प्राज्ञः) T1. 2 G1 3–5 M2. 4 ज्ञान- (for -शास्त्र-) — (L 199) -शस्त्र- (for -माया-) B1 विभु, B3 D6 प्रभु (for अपि) — (L 200) K1 V1 D3 4 स संनह्यत तेजस्वी, B1 समनह्य च ते°, T1 G3 संनह्य तु महातेजा, T2 G1 4 5 M2. 4 संनह्यत (G1 °ह्य स) महातेजाः (for ^a) T2 G1. 4 समद्युतिः (for °प्रभ) — (L 201) D5 G(ed) रथाम्भोदेन महता (for ^a) — (L 204) K3 स्ववीर्येण (for °र्याद्) B3 D6 दीप्तो (for दृप्तो) D3 स्ववीर्योदयेन दृप्तो; T1 G1 3–5 °र्यादात्त(G1 °दीप्त)संनाहो; T2 स सवीर्यो दीप्तदीप्तिर्; M2 स्ववीर्योदात्तवीर्यश्च, M4 °र्यादात्तवीर्यश्च (for ^a). T1 G3 5 M2 -मातङ्ग- (for -वारण-) — K3 om lines 205–206. — (L. 205) D5 [अ]परः; T1. 2 G3–5 M2 4 [उ]त्थित (for स्थितः). — (L 206) K1 2 4 Ñ1 2 B2 Dn D1 2 4 5 M4 स्ववीर्येण; V3 T1 G3–5 स्वधै° (for स धै°) K4 Dn2 D1 2 5 T2 G4 प्रदीप्ताग्निर् (for वपुषा°) T1 2 G1 3 5 M2 4 स्वयम् (for ज्वलन्). — (L 208) K3 बाल-, D3 नील- (for ताल-). — (L 209) T1 यान्तं समनुयान्ति स्म (for ^a) K1–3 D4 दैत्या शतसहस्रशः (for ^b) — (L 211) K3 सङ्गरेषु; T1 समरे हि (for °रेषु) — (L 212) B1 3 D6 वैदूर्यरचिताङ्गदा, T1 2 G1. 3–5 M2–4 °कृतभूषणा (for ^b) — (L. 213) दिव्या (for खस्था) — (L 215) T2 G1. 4 धर्मे रतः सत्यपरोत्तमश्च — (L. 216) D6 (*inf lin* as above) T1 2 G1 3–5 M2 4 -तोयाम्बर- (for °म्बुद-) D5 स्थितोऽग्नितोयाम्बुवरस्य कल्पो — (L 217) K3 D4 रूपी कृतान्तः समरेऽतिकोविदः, D3 लये यथा प्राणहर कृतान्तः. — (L 218) K4 Dn D1 2 रथयूथपयूथपः (for ^b). — (L 219) T1 G3 5 शीघ्रं, T2 G1 4 सज्जं (for दिव्यं) K4 सर्वायुध- (for सर्वयुद्ध-) K2 D4 -विशारदम् (for °दः) — (L 220) G1 M2 प्रदी(M2 °क्लृ)प्तोत्तमकुण्डल, G3 4 प्रतप्तमणिकु° (for ^b). — (L 221) T1 2 G1 3 5 M2 4 -गण (for -घन-) — (L. 222) B2 G1 4 विद्युज्ज्योतिर् (for विद्युद्द्योत-). Ñ2 V1. 3 -निकायेन, D5 6 -विकासेन, T1 -निभेनापि (for -निकाशेन). Ñ2 -तेजसा (for -वर्चसा). T1. 2 G1. 3–5 M2. 4 किरीटेनोत्तमौ-

क्रौञ्चध्वजेन दीप्तेन रथेनाहवशोभिना ॥
व्यासक्तवैदूर्यसुवर्णजालं [ 230 ]
नानाविहंगैरपि भक्तिचित्रम् ।
विद्युत्प्रभं भीमरथं सुवेगं
रथं समारुह्य रराज दैत्यः ॥

Colophon.

वैशंपायन उवाच ।
अनुह्लादस्तु तत्रैव दैत्यः परमदुर्जयः ।
हिरण्यकशिपोः पुत्रः प्रययौ युद्धलालसः ॥ [ 235 ]
चतुश्चक्रेण यानेन त्रिनल्वप्रतिमेन तु ।
युक्तेनाश्वैर्महावीर्यैः सिंहवक्त्रैरजिह्मगैः ॥
भीमगम्भीरनादेन नेमिघोषेण वीर्यवान् ।
चालयन्वसुधां सर्वां सशैलवनकाननाम् ॥
विनर्दमाना दैत्यौघा अनुह्लादं ययुः शुभाः । [ 240 ]
शतं शतसहस्राणां रथानां हेममालिनाम् ॥
परिघैर्भिण्डिपालैश्च भल्लैः प्रासैः परश्वधैः ।
विविधायुधहस्तास्ते शूलमुद्गरपाणयः ॥
सुवर्णजालनिर्मुक्तैर्वर्मभिश्च समलंकृताः ।
रथैश्चक्रैश्च कवचैः सज्जमाना महासुराः ॥ [ 245 ]
तदा विशालोच्छ्रितशैलरूपे
बभौ रथे काञ्चनचित्रिताङ्गे ।
दैत्याधिपः सर्वबलानुरूपे
समास्थितस्त्वप्रतिमे सुरूपे ॥
विरोचनश्च बलवान्वैश्वानरसमद्युतिः । [ 250 ]
महता रथवंशेन सर्वास्त्रकुशलः शुचिः ॥
व्यूहानां विनियोगज्ञो ज्ञानविज्ञानतत्त्ववित् ।

---

जसा ( for [b] ) —(L 223) Bom Poona eds G(ed) वैडूर्यवरशोभिना ( for [b] ) — B1 om line 227 —(L 228) K3 D1 रथ-, B3 D6 हरि- (for हय-) K1 V1 3 B2 3 Ds D6 T1 G1 3–5 शुक्ल-, D3 T2 शुक्र ( for शुक- ). B1 लम्बकेशरवर्चसा ( for [b] ) —B1 om lines 229–233 —(L 230) K1 2 D4 आसक्त- ( for व्या° ) — (L 231) B2 3 Ds D6 -विहंगोज्वल-; T1. 2 G1 3 5 M2 4 °गाकृति- ( for °गैरपि ) G3 नानाविहंगाकृतिभित्तिचित्रम् — (L 232) T1 G3 5 सु( G5 स )भीमं ( for सुवेगं ) D3 विद्युत्प्रभं भैरवमुग्रवेगं — (L 233) D3 स दैत्यराज. ( for रराज दैत्यः )

Colophon — *Mention of the Epic* K4 Ds2 D1 5 — *Mention of Khila* Ñ1 V1 3 Dn Ds D1 3–5 — *Subparvn*. K1–3 Ñ1 2 V1 3 B2 3 Ds D4–6 वामनम्, K4 B1 Dn D1–3 T2 G1 3 M2 4 वामनप्रादुर्भाव.. — *Adhy. name* K4 Dn2 D1 2 मयशम्बरादिदैत्यसंनहनम्, B3 शम्बरसंनहनम्; Dn1 मयशम्बरादिदैत्यराजसहनम्; D6 शम्बरदैत्यसंहननम्, G3 पुलोमाहयग्रीवप्रह्लादशम्बरयुद्धसंनाहः — *Adhy no* · K3 23; V1 190; V3 Ds2 236; B2 237, D1 22. D3 248, D4 230, T1 292; G1 4 288, G3 5 294, M2 4 4

(L 234) B1 3 Ds दैत्य. परपुरंजयः ( for [b] ). — (L. 235) G5 -दुर्मद ( for लालस· ) — (L 236) G1 अनल्प- ( for त्रिनल्व- ) — (L 237) महावेगैः; D3 °दीप्त· ( for °वीर्यैः ). — For line 237, T1 2 G1 3–5 M2 4 subst :

13 ** युक्तेनोष्ट्रमुखैरश्वैर्हेमजालपरिच्छदैः ।

— (L 238) B2 3 D6 T1 G3 5 M2 4 -घोषेण, T2 G1 4 -वेगेन ( for -नादेन ) K3 D5 मेघ- ( for नेमि ) B1. 3 D6 T1. 2 G1. 3–5 M2. 4 वल्गुना ( for वीर्यवान् ). — (L. 240) K1 दैत्याश्च, D4 दैत्येन्द्रा, Cal ed दैत्यास्तं ( for दैत्यौघा ). Ds1 तदा ( for शुभाः ) B1 3 D6 समन्तात्पर्यवारयन् ( for [b] ) — For line 240, T1 2 G1 3–5 M2 4 subst

14 ** अनुह्लादं विनर्दन्तो दैत्यौघा पर्यवारयन् ॥

—(L 241) T1 2 G1 3–5 M2. 4 -वर्चसाम् ( for -मालिनाम् ) — (L 242) K1–3 Ñ1. 2 V1 3 Ds D1 4 भल्लै· पाशैः; B1. 3 D5 6 प्रासैः पाशैः ( for भल्लै· प्रासै· ) — (L 244) T1 G5 Cal ed -निर्युक्तैर् ( for -निर्मु° ) — (L 245) T2 Bom. Poona eds. चित्रैश् ( for चक्रैश् ) Ñ1 T1 G1. 3–5 M2. 4 रथै. कवचिनश्चान्ये, B1 3 रथैः कवचिभिश्चान्ये ( B1 °न्यैः ); Dn D6 रथैश्च कवचैश्चैव ; D3 रथैश्च विविधैश्चित्रैः ( for [a] ) Ñ1 B1. 3 D5 6 शोभमाना, D3 गर्ज°, T1 G1 3–5 M2 4 नर्द° ( for सज्ज° ) — (L 246) K5 -दिव्यरूपो, K4 Ñ2 V1 3 B1 2 Dn D1 3 -शैलरूपो, Ñ1 तुल्यरूपे, T2 M2 4 -चारुकूबरे; G3 -जीवरूपे ( for शैल° ). — (L 247) Ñ2 B1. 3 D6 -रत्नचित्रे, V1 -चित्रिताङ्गः, T1 2 G1 3–5 M2 4 -चित्ररूपे ( for -चित्रिताङ्गे ) —K4 D4 om lines 248–249 — (L 248) Ñ2 V1 Dn Ds T1 G3 सत्त्व- ( for सर्व- ) K3 D2 -बलानुरूपैः ( for °पे ) B1. 3 D5 6 दैत्याधिप सत्त्वबलानुरूप — (L 249) M4 ऽनुरूपे ( for सु° ) V3 D3 समास्थितस्त्वप्रतिम( D3 °मा )स्वरूपे, B D6 °प्रतिमेयरूपे, T1 G3 5 °प्रतिमानरूपे — (L 250) T1 G1 4 5 M2 4 विरोचन- ( for वैश्वानर- ) G3 विरोचनसमुद्यतः ( for [b] ) — (L 251) K1 2 D4 -शब्देन; Ñ2 V3 Ds D2 -वेगेन ( for -वंशेन ) — (L 252) T2 G1 4 सेनानी ( for व्यूहानां ) K1 2 D5 -ज्ञानयोगवित्, K4 °वित्तम ( for °तत्त्ववित् ) K3 सर्वास्त्रकुशलो युधि ( for [b] ) — (L 253) बलिः सुरासुरवरः ( for [a] ) — (L. 254) K1 Ñ1 V3 Dn D1. 2. 4. 5

बले: पितासुरवरः सुराणामिव वासवः ॥
सर्वायुधवरोपेतं किंकिणीजालभूषितम् ।
युक्तानां वाजिमुख्यानां सहस्रेणाशुगामिनाम् ॥ [ 255 ]
रथमारुह्य दैत्येन्द्रो बभौ मेरुरिवापरः ।
किंकिणीजालपर्यन्तं गजेन्द्रध्वजशोभितम् ।
संध्याभ्रसमवर्णाभिः पताकाभिरलंकृतम् ॥
प्रवालजाम्बूनदभक्तिचित्रं
व्यालं विमुक्तान्तरनेमिघोषम् । [ 260 ]
रथं समारुह्य किरीटमाली
ययौ स युद्धाय महासुरेन्द्रः ॥
विरोचनानुजश्चैव कुजम्भो नाम दानवः ।
स्यन्दनैर्बहुसाहस्रैर्मणिकाञ्चनभूषितैः ॥
वृतो मदबलोत्सिक्तैर्देवारिररिमर्दनः । [ 265 ]
प्रासपाशगदाहस्तैर्दानवैर्युद्धकाङ्क्षिभिः ॥
स पर्वतनिभाकारो भिन्नाञ्जनचयप्रभः ।
महता भ्राजमानेन किरीटेन सुवर्चसा ॥
सर्वरत्नविचित्रेण कवचेन च संवृतः ।
महता दीप्तवपुषा रथेनेन्दुरिवांशुमान् ॥ [ 270 ]
शातकौम्भेन महता तालवृक्षेण केतुना ।
रराज रथमध्यस्थो मेरुस्थ इव भास्करः ॥
असिलोमा च तत्रैव दानवः पर्वतायुधः ।
दारुणं वपुरास्थाय दारुणो दारुणाननः ॥
रौद्रः शकटचक्राक्षो महामायो महाबलः । [ 275 ]
कृष्णवासा महादंष्ट्रो रक्ताक्षो लोहिताननः ॥
वृतो दैत्यसहस्रौघैर्गिरिपादपयोधिभिः ।
नानारूपधरैर्दीप्तैर्दैत्यैस्त्रिदशशत्रुभिः ॥

-समोपेतं, Ñ$_{2}$ -बलो॰, B$_{3}$ D$_{3}$ -धरो॰ ( for -वरो॰ ) T$_{1.2}$ G$_{1\ 3-5}$ M$_{2\ 4}$ समस्तायुधसंपन्न ( for $^{a}$ ) K$_{1.3}$ D$_{5}$ M$_{2\ 4}$ -मण्डितम्· T$_{1}$ G$_{3\ 5}$ -संयु॰, T$_{2}$ G$_{1\ 4}$ सुच्छि॰ ( for -भूषि॰ ) — ( L 255 ) Ñ$_{2}$ B$_{2\ 3}$ G$_{3\ 5}$ M$_{2}$ संयुक्तं, V$_{1}$ B$_{1}$ D$_{6}$ T$_{1\ 2}$ G$_{1\ 4}$ सुयुक्तं, Dn युक्ताङ्गं ( for ॰ना ) M$_{2}$ Cal ed -गामिना ( for ॰नाम् ) — ( L 257 ) T$_{1}$ G$_{3-5}$ -संयुक्तं ( for -पर्यन्तं ) Ds$_{1}$ -सेवितम्, T$_{1}$ G$_{3\ 5}$ -भूषि॰ ( for -शोभि॰ ) D$_{3}$ गजेन्द्रमिव शोभितम् ( for $^{b}$ ) — ( L. 258 ) K$_{3}$ -भीम-, T$_{1\ 2}$ G$_{1\ 3-5}$ M$_{2\ 4}$ -जाल- ( for -सम- ) — ( L 259 ) K$_{4}$ प्रकृष्ट-, B$_{3}$ पुराण- ( for प्रवाल- ) T$_{2}$ G$_{1\ 3}$ -भित्तिचित्र, G$_{4}$ -जालपाङ्क्ति ( for -भक्तिचित्रं ).— ( L 260 ) K$_{2}$ D$_{4}$ व्यालम्बि- ( for व्यालं वि- ) K$_{3.4}$ Ñ$_{1}$ D$_{1-3\ 5}$ व्यालं वि( D$_{3}$ महान्ध )कारान्तरनेमिघोषम्, Ñ$_{2}$ V$_{1\ 3}$ B Ds D$_{6}$ व्यालं वि( D$_{6}$ व्यालम्बि )-मुक्तान्तर( B$_{2\ 3}$ ॰फल )शोभितं च, Dn D$_{3}$ व्यालम्बिमुक्ताफलशोभिताङ्गम्, T$_{1}$ G$_{3}$ व्यालं च मुक्तासरशोभितं च; T$_{2}$ G$_{1\ 4}$ व्यालायुधानामविचित्रभाक्ति( G$_{1}$ ॰भित्ति-; G$_{4}$ ॰पत्ति )म् G$_{5}$ व्यालम्बिमुक्तासरशोभितं च, M$_{2\ 4}$ व्यालायुधागारविचित्रभक्तिम् — ( L 261 ) V$_{3}$ समास्थाय ( for ॰रुह्य ) K Ñ$_{1.2}$ V$_{3}$ D$_{1\ 3-5}$ -मौलिर् ( for -माली ) — ( L 262 ) B$_{2}$ सुरेन्द्राय, D$_{2\ 3}$ सुयुद्धाय ( for स यु॰ ). B$_{1\ 3}$ D$_{6}$ Cal. ed ययौ स युद्धाभिमुखोऽसुरेन्द्र·. — ( L 263 ) T$_{1\ 2}$ G$_{1\ 3-5}$ M$_{2}$ अनुह्लादानुजश्चैव ( for $^{a}$ ) D$_{2}$ कुम्भाण्डो; D$_{3}$ निकुम्भो, T$_{1}$ सुजम्भो, ( for कुजम्भो ) B$_{1\ 3}$ D$_{6}$ Cal ed वीर्यवान् ( for दानव ). T$_{2}$ G$_{1\ 4}$ जम्भो नाम स दानव. ( for $^{b}$ ) — ( L 264 ) G$_{1}$ -भूषणै., T$_{1}$ G$_{3\ 5}$ चित्रितै ( for -भूषितैः ) — ( L 265 ) K$_{2}$ D$_{4}$ -बलोत्क्षिप्तैर् ( for ॰त्सिक्तैर् ) K$_{1-3}$ Ñ$_{1}$ V$_{1.3}$ B Ds D$_{3\ 6}$ देवादिभिरारिंदम ( for $^{b}$ ). — For line 265, T$_{1\ 2}$ G$_{1.\ 3-5}$ M$_{2-4}$ subst

15 ** वरदानमदोत्सिक्तैर्देवतानां च शत्रुभि· ॥
[ देवदानवशत्रुभि ( for $^{b}$ ) ]

— ( L 266 ) D$_{1}$ पाशै ( for प्रास- ) — ( L 267 ) Dn भग्नाञ्जन- ( for भिन्ना॰ ). D$_{1.2}$ -सम- ( for -चय- ) — ( L 268 ) B Ds D$_{4}$ T$_{1\ 2}$ G$_{1\ 3-5}$ M$_{2\ 4}$ [अ]र्क- ( for सु- ). — ( L 270 ) Ñ$_{2}$ B$_{1\ 3}$ Ds D$_{6}$ ( marg as above ) T$_{1.2}$ G$_{1\ 3-5}$ M$_{2-4}$ स्वर्गद्वार ( for रथेनेन्दुर् ). — ( L 272 ) T$_{1.2}$ G$_{1\ 3-5}$ M$_{2\ 4}$ मेघस्थ ( for मेरुस्थ ) — After line 272, K$_{1\ 2}$ Ñ$_{2}$ V$_{1.3}$ B Dn Ds D$_{4-6}$ T$_{1\ 2}$ G$_{1\ 3-5}$ M$_{2\ 4}$ ins.:

16 ** रणपटुरतिवीर्यसत्त्वबुद्धि·
सुरसमराभिमुख. प्रयाति तूर्णम् ।
असुरगणसमावृत कुजम्भ-
स्त्रिदशगणैरिव वृत्रहामरेन्द्र ॥

[ ( L 1 ) V$_{3}$ -सत्य- ( for -सत्त्व- ) Ds$_{1}$ -वृद्धिः ( for -बुद्धि. ). — ( L 2 ) Ñ$_{2}$ V$_{1\ 3}$ D$_{6}$ -सेनाभिरत ( for -समराभिमुख ). — ( L. 3 ) T$_{1\ 2}$ G$_{1\ 3-5}$ M$_{2\ 4}$ असुरगणसहस्रसवृतोऽसौ — ( L. 4 ) Ñ$_{2}$ V$_{3}$ Ds सुरेन्द्र, B$_{1}$ D$_{6}$ नरेन्द्र, T$_{1}$ G$_{3}$ M$_{2}$ महेन्द्रः ( for [अ]मरेन्द्र ) ]

— ( L 274 ) D$_{1\ 4}$ दानवं ( for दारुणं ). D$_{3}$ रथम् ( for वपुर् ) D$_{1\ 2}$ दानवो ( for दारुणो ) V$_{1\ 3}$ दारुणोऽनलः ( for ॰णानन. ) — D$_{3}$ om om (hapl.) lines 275–276. — ( L 275 ) K$_{1}$ Ñ$_{1\ 2}$ B$_{1\ 3}$ D$_{6}$ G$_{1\ 3.4}$ महाकायो ( for ॰मायो ) Ds महासुर ( for ॰बल. ) — ( L 276 ) K$_{4}$ Ñ$_{2}$ V$_{1\ 3}$ B Dn Ds D$_{1\ 2\ 6}$ किरीटी ( for रक्ताक्षो ) Ñ$_{1}$ T$_{1\ 2}$ G$_{1\ 3-5}$ M$_{3\ 4}$ किरीटी लोहिताङ्गद ( for $^{b}$ ). — ( L. 277 ) Dn D$_{1.2}$

ते शूलहस्ता गगने चरन्त
इतस्ततस्तोयदवृन्दनादाः । [ 280 ]
खं छादयन्तस्तपनीयनिष्का
यथोत्थिताः प्रावृषि कालमेघाः ॥
अनायुषायाः पुत्रस्तु वृत्रो नाम महासुरः ।
देवशत्रुर्महाकायस्ताम्रास्यो निर्णतोदरः ॥
दीप्तजिह्वो हरिश्मश्रुरूर्ध्वरोमा महाहनुः । [ 285 ]
नीलाङ्गो लोहितग्रीवः किरीटी लोहिताङ्गदः ॥
आजानुबाहुर्विकृतः श्वेतदंष्ट्रो विभीषणः ।
महामायो महाभीमो हेमकेयूरभूषणः ॥
महता मणिचित्रेण कवचेन सुसंवृतः ।
हेममालाधरो रौद्रश्चक्रकेतुरमर्षणः ॥ [ 290 ]
किंकिणीशतसंघुष्टं तपनीयविभूषितम् ।
युक्तं हयसहस्रेण रक्तध्वजपताकिना ॥
रथानीकेन महता युद्धायाभिमुखो ययौ ।
दिव्यं स्यन्दनमास्थाय दैत्यानां नन्दिवर्धनः ॥
तपितकनकबिन्दुपिङ्गलाक्षो [ 295 ]
दितितनयोऽसुरसैन्ययुद्धनेता ।
विकसितकमलाभचारुवक्त्रः
सितदशनः शुशुभे रथासनस्थः ॥
एकचक्रस्तु तत्रैव सूर्यचक्र इवोदितः ।
कालचक्रसमो रौद्रश्चक्रायुध इवोद्यतः । [ 300 ]
सर्वायुधमयं दिव्यं रथमास्थाय भास्वरम् ।
वृतो दैत्यगणैर्दृप्तैः कालायसशिलायुधैः ॥
तस्याशीतिसहस्राणि रथानां चित्रयोधिनाम् ।
सर्वे कालान्तकप्रख्या रुधिराक्षा महाबलाः ॥
आयसैः काञ्चनैश्चैव संनद्धा वरवर्मिणः । [ 305 ]
व्यराजन्तान्तरिक्षस्था नीला इव पयोधराः ॥

---

रथ- ( for दैत्य- ) $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ -सहस्रेण ( for °स्त्रौघैर् ) $T_2$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ गिरि पृथ्वीधरैरिव ( for $^b$ ) —$K_2$ $D_3$ om ( hapl ) line 278 — ( L 278 ) $\tilde{N}_{1\ 2}$ $V_3$ B $Dn_1$ $Ds_1$ $D_{1\ 2\ 6}$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ दृप्तैर् , $Ds_2$ दैत्यैर् ( for दीप्तैर् ) $K_{1\ 3}$ $D_4$ नानारूपैर्वृतो दृप्तै( $K_3$ दुष्टै )र् ( for $^a$ ) Ds दृप्तैस् ( for दैत्यैस् ) — ( L 279 ) $G_1$ $M_4$ शैल- ( for शूल- ) — ( L. 280 ) $\tilde{N}_1$ $G_{1\ 4}$ $M_4$ -वृन्दनीला , $B_3$ $D_6$ -भीमनादा , Bom Poona eds G(ed ) -वृन्दतुल्या ( for °नादा ) $T_{1\ 2}$ $G_{3.\ 5}$ $M_2$ ततस्ततस्तोयदवृन्दनीलाः ( $T_1$ °तुल्या. , $G_3$ °शीला ) — ( L. 281 ) $T_{1.\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ आ- ( for खं ) $K_3$ खं तापयन्तस्तपनीयजिह्वा — ( L 282 ) $K_4$ यथोदिताः , Bom Poona eds G(ed.) °न्नता ( for °त्थिता ) $T_2$ $G_{3\ 5}$ $M_{2\ 4}$ मेघसघाः ( for कालमेघा ) $T_1$ $G_1$ यथोन्नताः प्रावृषि मेघसंघा — ( L. 283 ) $\tilde{N}_1$ बलो ( for वृत्रो ) — ( L. 284 ) $D_3$ ताम्राक्षो ( for °स्यो ) $K_4$ $Dn_1$ $D_{1\ 4}$ निम्नितोदर ; $Ds_1$ निहतो° , $Ds_2$ निह्नुतो° ( for निर्णतो° ) — ( L 285 ) $G_{1\ 4\ 5}$ $M_{2\ 4}$ दीर्घ- ( for दीप्त- ) $Ds_2$ महाश्मश्रुर् ( for हरि° ). $B_{1\ 3}$ Ds $D_6$ महाबल , $D_3$ °नन ( for °हनु ) $M_2$ दीर्घरोमा महासुर ( for $^b$ ) — ( L 286 ) $K_4$ Dn $D_{1.\ 2}$ $T_2$ -मुख ( for -ग्रीवः ) $\tilde{N}_1$ $B_{1.\ 3}$ $D_6$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ लोहिताम्बरः ( for °ङ्गद ) — $K_4$ $D_{1\ 2}$ om ( hapl ) line 288 — ( L 288 ) $\tilde{N}_1$ $B_{1\ 3}$ Dn Ds $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ महामायाधरो भीमो , $\tilde{N}_2$ $V_{1\ 3}$ $B_2$ Ds $D_{3-5}$ °मायामयो भीमो ( for $^a$ ) — ( L. 290 ) $T_1$ हेममालाधरं रौद्रं ( for $^a$ ) $K_2$ $Ds_1$ $D_{2.\ 4}$ चित्रकेतुर् , $V_1$ चन्द्र° ( for चक्र° ). — ( L. 291 ) $K_2$ $V_3$ $D_4$ संजुष्टं , $T_{1.\ 2}$ $G_{1\ 3-5}$ $M_2$ -निर्घोषं ( for -संघुष्टं ) $B_{1\ 3}$ $D_6$ $T_2$ $G_{1.\ 4}$ $M_{2\ 4}$ -परिष्कृतम् ( for -विभूषि° ) — ( L 292 ) $\tilde{N}_1$ $D_{1\ 2}$ $T_{1.\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ -पताकिनम् ( for °ना ) — ( L 293 ) $B_3$ स्थित ( for ययौ ) — ( L 295 ) $D_3$ $G_{3\ 5}$ तपन- , $T_1$ कदन- ( for तपित- ) $T_2$ $G_1$ $M_{2\ 4}$ -चारु- ( for -बिन्दु- ). $G_4$ तपनकिरणचारुपिङ्गलाक्षो . — ( L 296 ) $\tilde{N}_1$ $V_1$ $B_3$ $D_6$ -वृषभो ( for -तनयो ) $T_{1\ 2}$ $G_{1.\ 3-5}$ $M_{2\ 4}$ दितिवृषभो भुजगत्वगुग्रवासा. — ( L 297 ) $D_1$ $T_1$ चारुचक्षुः ( for °वक्त्र. ) — ( L 298 ) $V_1$ B $D_6$ $T_{1\ 2}$ $G_{1.\ 3-5}$ $M_{2.\ 4}$ तदा रथस्थः ( for रथासनस्थ. ). — ( L 299 ) $K_2$ $D_4$ स्थित. सूर्य ; $D_3$ सूर्यचन्द्र ( for °चक्र ). $K_4$ Dn $D_5$ [उ]द्यतः ( for [उ]दित ) $\tilde{N}_1$ सूर्यचन्द्र इवोद्यत ( for $^b$ ) — ( L 300 ) $B_{1.\ 3}$ $D_6$ $M_4$ Cal ed -चक्रोपमो ( for -चक्रसमो ). $T_{1\ 2}$ $G_{1,\ 3-5}$ कालचक्रोपमौ दैत्यश् ( for $^a$ ) $T_1$ सदा युद्ध ( for चक्रायुध ) $\tilde{N}_1$ [उ]र्जितः ( for [उ]द्यत. ) $\tilde{N}_1$ चक्रायुधधरो मतः ( for $^b$ ) — ( L 301 ) K $\tilde{N}_2$ $V_{1.\ 3}$ B $Dn_2$ Ds $D_{1\ 3-6}$ सर्वायस- ( for °युध- ) $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ रौद्र ( for दिव्यं ). $T_1$ $G_{3\ 5}$ सत्वरम् ( for भास्व° ) — ( L 302 ) $T_1$ $G_3$ $M_2$ चक्रायुध- ( for कालायस- ) $K_3$ -निभाननैः , $Dn_2$ -शिलायुधः ; $D_3$ -वरायुधै ( for -शिला° ) $T_2$ $G_{1\ 4.\ 5}$ $M_4$ चक्रायस( $G_5$ °युध )शिलाधरै ( for $^b$ ) — ( L 303 ) $\tilde{N}_1$ $B_{1\ 3}$ $D_6$ $T_2$ $G_{1\ 4}$ $M_2$ रथिनां ( for रथानां ) $T_1$ $G_{3\ 5}$ रथिनश्चित्रयोधिनः ( for $^b$ ) — $B_1$ $D_6$ $M_2$ om line 304. — ( L 304 ) $Dn_2$ महाकाया ( for रुधिराक्षा ). — ( L 305 ) $T_{1.\ 2}$ $G_{1\ 3-5}$ $M_{2-4}$ चर्म वर्म( $T_1$ $G_3$ $M_2$ °र्मि )भि. , Bom. Poona eds,

सर्वे कालान्तकप्रख्या वीराः समरदुर्जयाः ।
सागरोदरगम्भीरा नीलवक्त्रा दुरासदाः ।
रेजुर्यान्तोऽसुरवरा वेलातीता इवार्णवाः ॥
ते भीममायाः सुसमृद्धकायाः [ 310 ]
किरीटिनः काञ्चनभूषिताङ्गाः ।
ययुस्तदा स्वायुधदीप्तहस्ता
नभः सपक्षा इव पर्वतेन्द्राः ॥
संदिष्टो बलिपुत्रेण वृत्रभ्राता महासुरः ।
वधाय सुरसैन्यस्य संनह्यस्वेति वीर्यवान् ॥ [ 315 ]
हेममाली महादंष्ट्रः स्रग्वी रुचिरकुण्डलः ।
रक्तमाल्याम्बरधरश्चण्डः समरदुर्जयः ॥
महाविवृत्तनयनः स किरीटी धनुर्धरः ।
प्रभिन्न इव मातङ्गः शार्दूलसमविक्रमः ॥
महातालनिभं चापं महारुचिरसायकम् । [ 320 ]
विस्फारयन्महावेगं वज्रनिष्पेपनिस्वनम् ।
रथेन खरयुक्तेन ध्वजेन भुजगेन च ।
शुशुभे स्यन्दनस्थः स संध्यागत इवांशुमान् ॥
रथैस्तु बहुसाहस्रैर्हेमपट्टविभूषितैः ।
शूलमुद्गरसंपूर्णैस्तोयपूर्णैरिवाम्बुदैः । [ 325 ]
स दैत्येन्द्रोऽभिचक्राम तस्मिन्युद्ध उपस्थिते ॥
पवनसमगतिर्विशालवक्षा
विकसितपङ्कजचारुगर्भगौरः ।
प्रवररथगतो ययौ स तूर्णं
त्रिदशगणैरभिलक्षितप्रभावः ॥ [ 330 ]

---

G(ed) वरवर्णिन॰ (for °वर्मिण ) — (L 306) $K_3$ पयोमुच (for °धरा ) — After line 306, $\tilde{N}_2$ $V_{2\ 3}$ $B_{1\ 2}$ Ds ins

17** संदष्टौष्ठपुटा घोरा महाकाया महोदराः ।
वधाय सुरसैन्यस्य संनह्यन्त महाबलाः ॥

[ (L 1) $B_1$ Poona ed Cal ed महासुरा (for महोदरा ) — (L 2) $Ds_2$ सनह्यत महाबल (for $^b$) ]

— $T_{1\ 2}$ $G_{1\ 3-5}$ om line 337 — (L 307) $D_3$ लोकान्तक- (for काला° ). $D_5$ सर्वे कालान्तसदृशा (for $^a$) $B_{1,3}$ $D_6$ $M_{2\ 4}$ रुधिराक्षा महाबला (for $^b$) — (L 308) $G_{1\ 3\ 4}$ नीलवस्त्रा (for °वक्त्रा ) $T_1$ नीलवस्त्राकुला. सदा (for $^b$) — $D_3$ om line 309. — (L 309) $B_{1\ 3}$ Cal ed नेदुर्, $T_2$ $G_{1\ 4}$ $M_{2\ 4}$ बभुर् (for रेजुर् ) $B_1$ $Ds_1$ वेलालोला (for °तीता ). — (L 310) $\tilde{N}_2$ भीमवेगा ; $D_2$ °काया , $T_2$ $G_{1\ 4}$ $M_2$ भूरिमाया (for भीम° ) $K_{1\ 2}$ $D_4$ सुविनद्ध-, $K_3$ $\tilde{N}_1$ $V_3$ $B_2$ $Ds_2$ $D_{3\ 6}$ सु( $\tilde{N}_1$ प्र )विवृद्ध- (for सुसमृद्ध-) $V_1$ ते भीमकायाः सुविवृद्धकामाः, $T_1$ $G_{3\ 5}$ ते भूरिमाया॰ सुसमृद्धकोपा. — (L 311) $V_3$ -चित्रिताङ्गा॰ (for -भूषि° ) — (L 312) $B_3$ $Ds_2$ आयुध-, $D_2$ $T_1$ $G_{3\ 5}$ $M_2$ सा° (for स्वा° ) — (L 313) $K_3$ अलून-, $D_1$ तत स- (for नभ स-) — After line 313, $T_{1\ 2}$ $G_{1,3-5}$ $M_2$ ins an additionl colophon [ *Sub-parvan* $T_2$ $G_{1\ 3}$ $M_{2\ 4}$ वामनप्रादुर्भावः — *Adhy name* $G_3$ अनुह्रादविरोचनजम्भासिलोमवृत्रचक्रासुराणां मरणसंनाह. — *Adhy no* $T_1$ 293, $G_1$ 289; $G_{3\ 5}$ 295, $G_4$ 279, $M_{2\ 4}$ 5 ]

— $M_4$ om lines 314-315. Before line 314, $T_{1\ 3}$ $G_{1\ 3,5}$ $M_2$ ins वैशंपायन॰ — (L 314) $T_{1,2}$ $G_{1,3-5}$ $M_2$ संदिष्टो ( $T_1$ °दृष्ट्वा ) बलित्तेन्द्रेण (for $^a$) $B_{1\ 3}$ $Ds_2$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_2$ बलोऽसुर (for महासुरः ) — (L 315) $K_3$ संनद्धश्चाति-, $D_2$ °ह्यास्तेति-, $T_{1,2}$ $G_{1,3-5}$ $M_2$ समनह्यत (for संनह्यस्वेति ) $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ मेघनादी ( $T_2$ $G_1$ °दो ), Bom. Poona eds G(ed) हेमताली (for °माली ) — (L 317) $Ds_2$ -दुर्जरः (for -दुर्जयः ) — (L. 318) $K_{1\ 4}$ $D_2$ महावृत्त॰ सुनयन , $K_2$ $D_4$ स महावृत्तन°. $B_{1\ 3}$ $D_1$ सुमहावृत्तन° , $D_6$ महावित्रस्तन° , $T_1$ $G_{1\ 3-5}$ $M_2$ महान्विवृत्तन° (for $^a$) $K_{2\ 3}$ $D_4$ किरीटी च; $K_4$ $V_{1,3}$ $B_3$ $Dn_1$ Ds $D_1$ स( $V_{1,3}$ सु )किरीटो , $\tilde{N}_1$ $Dn_2$ किरीटीव (for स किरीटी ) $D_3$ किरीटी धृतमुद्गर (for $^b$) — (L. 319) $K_2$ $D_2$ प्रमत्त (for प्रभिन्न ) — (L 320) $D_5$ $M_4$ तथा (for महा-) — (L 321) $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ स वेगेन (for महावेगं ) $K_2$ $D_4$ चक्र- (for वज्र-). $T_1$ $G_{3,5}$ -निर्घात ; $T_2$ $G_{1,4}$ $M_{2\ 4}$ -निर्घोष- (for -निष्पेष-) — (L. 322) $M_{2\ 4}$ खड्ग- (for खर-) $D_6$ (marg) खड्गेन (for ध्वजेन ) — (L 323) $T_{1\ 2}$ $G_{1\ 3-5}$ $M_2$ शुशुभे रथमध्यस्थ॰ (for $^a$). — (L. 324) $D_4$ $T_2$ $G_{1\ 4}$ -वज्र- (for -पट्ट-) — (L 325) $D_3$ हेम-; Bom Poona eds G(ed) कूट- (for शूल ) $T_1$ $G_{3\ 5}$ पट्टस- (for -मुद्गर-) $\tilde{N}_1$ $D_6$ -संकीर्णैर् ; $B_3$ -संकाशैस् (for -संपूर्णैस् ) $K_3$ $M_3$ जलपूर्णैर् , $K_4$ तोयवर्णैर् ; $\tilde{N}_1$ $T_{1,2}$ $G_{1\ 3-5}$ $M_2$ अम्बुपू° , Ds तोयहस्तैर् (for °पूर्णैर् ). $D_3$ [अ]म्बुद. (for °दै ) — After line 325, $T_{1\ 2}$ $G_{1\ 3,5}$ $M_{2\ 4}$ ins. :

18** संदष्टौष्ठपुटः क्रुद्धो गर्जमानोऽतिभैरवम् ॥

[ $G_{3\ 5}$ -भैरव (for °वम् ). ]

— (L. 326) $K_4$ एवंभूत॰ स दैत्येन्द्रस् (for $^a$) $B_{1,3}$ $D_6$ Cal ed युद्धकाल , $Ds_1$ $D_2$ तस्मिन्युद्धम् (for °द्ध ) — (L 327) $K_2$ $D_5$ -वक्त्रो (for -वक्षा). — (L. 328) $B_3$ -चारुगर्भ-;

सिंहिकातनयश्चैव राहुर्नाम महासुरः ।
विकटः पर्वताकारः शतशीर्षः शतोदरः ॥
पीतमाल्याम्बरधरो जाम्बूनदविभूषितः ।
स्निग्धवैदूर्यसंकाशः पद्मपत्रनिभेक्षणः ॥
सर्वकाञ्चनसंयुक्तं मणिजालपरिष्कृतम् । [ 335 ]
पताकाशतसंकीर्णं युक्तं परमवाजिभिः ॥
आरुरोह रथं दिव्यं दैत्यः परमवीर्यवान् ।
ननाद च महानादं कम्पयन्वसुधातलम् ॥
मयेन विहितो दिव्यस्तस्य केतुर्हिरण्मयः ।
मयूरं सूर्यसंकाशं कवचं चायसप्रभम् ॥ [ 340 ]
भीमवेगरवैश्चान्यै रथैर्दिव्यैः सुभासुरैः ।
नानाप्रहरणाकीर्णैः सेव्यमानो महाबलः ॥
असुरगणपतिर्गजेन्द्रगामी
गतिरभवत्सुगतिर्महासुराणाम् ।
अरिगणमभितो विभुः प्रयातो [ 345 ]
गिरिवरमस्तमिवांशुमान्प्रयातः ॥
विप्रचित्तिस्तु तत्रैव दनोर्वंशविवर्धनः ।
कश्यपस्यात्मजः श्रीमान्ब्रह्मणस्तेजसा समः ॥
यष्टा क्रतुसहस्राणां वेदवित्तपसान्वितः ।
स्वयंभुवा दत्तवरो वरदश्च स्वयंप्रभुः । [ 350 ]
ईशित्वं च वशित्वं च महत्त्वं च महाद्युतेः ॥
ऐश्वर्यगुणसंपन्नो ब्रह्मेव स्वयमूर्जितः ।
सार्धं पुत्रैश्च पौत्रैश्च संनह्यत महाबलः ॥
सर्वे मायाधराः शूराः कृतास्त्रा रणदुर्जयाः ।
सर्वे कमलवर्णाभा हेमकूटोच्छ्रयोच्छ्रिताः ॥ [ 355 ]
सर्वे रजतसंकाशाः कैलासशिखरोपमाः ।
मयेन निर्मितास्तेषां सर्वे मायामया रथाः ॥
विचरन्तो व्यराजन्त शारदा इव तोयदाः ।
सर्वे हंसध्वजाः श्वेताः श्वेतदण्डसमुच्छ्रयाः ॥
श्वेताम्बरधरा दैत्याः श्वेतमाल्यविभूषिताः । [ 360 ]

---

T1 चारुगर्भसारः ( for °गौर ) — ( L 330 ) K3 -संस्तुत-, D2 -भूषित- ( for -लक्षित- ) M2 -प्रताप ( for -प्रभावः ). — ( L 332 ) K1 D2 4 T2 G1 4 M4 शतशीर्षा ( for °शीर्ष° ). — ( L 333 ) K2 D4 -विभूषण° ( for °षित° ). — ( L. 335 ) T2 G1, 3, 4 M2 4 -निर्युक्तं ( for -संयुक्तं ). G5 तप्तकाञ्चननिर्मुक्तं ( for $^{a}$ ) T1, 2 G1, 3–5 M2, 4 -पुरस्कृतम् ( for -परिष्कृ° ) — ( L. 336 ) B1 3 D3 6 -संबाधं ( for -संकीर्णं ). T1 2 G1 3 5 M2, 4 पताकाध्वजसपूर्णं ( for $^{a}$ ) — ( L. 337 ) Ñ1 B1, 3 Cal ed तूर्णं ( for दिव्यं ). D3 -कोपन ( for -वीर्यवान् ) T1 2 G1 3–5 M2 4 दैत्यः परपुरंजय. ( for $^{b}$ ) — ( L 338 ) Cal ed. महाघोर ( for °नादं ) — ( L 339 ) D5 कल्पितो ( for विहितो ) — ( L 340 ) Ñ1, 2 Dn Ds2 M2 मयूर- ; V1 मायूरं ( for म° ) B D6 मयूरपक्षसंकाशं ; D3 T2 G1, 5 मयूरः सू( D3 °रसू )र्यसंकाशः ( for $^{a}$ ) K2 Dn2 D4 वायस- ( for चा° ) B Ds D6 T1 2 G1 3–5 M2 4 कवचं चायसं महत् ( for $^{b}$ ) — ( L 341 ) B1 D6 प्रभास्वरै° ( D6 °नैः ), B3 सुभासुर°, D3 प्रभासुरैः ( for सुभा° ). — ( L 342 ) D3 नानाप्रहरणै पूर्णैः, T2 G4 °रणैश्चान्यै ( for $^{a}$ ) D3 महासुर°, T1 G3 °रथ° ( for °बल° ) — ( L. 343 ) M2 -कल्पो ( for -गामी ). — ( L 344 ) Ñ1 T1 अतिरभसगतिर् ; Ds गतिरभवत्सगतिर्, T2 G1 3, 4 M2 4 °द्युतिमान् ( for °त्सुगतिर् ) — ( L 345 ) G1 अभिभूर् ( for अभितो ) Ds1 ( marg. as above ) गुरुः ; T2 G4 M2 4 ऽभिभूः ( for विभु. ). D6 प्रयाति ( for °तो ). — ( L 346 ) K1 2 4 Ñ1 2 V1 B Dn D1 2 4 6 सुदीप्त ; K3 V3 D3 T2 G1, 4 M2 4 प्रदीप्तः ( for प्रयातः ) — ( L. 347 ) G3 5 -समुद्भवः ( for -विवर्धन ) — ( L 348 ) T1 2 G1, 3–5 M2, 4 -सहस्रस्य ( for °स्राणां° ) D5 युतः ( for [अ]न्वितः ) — ( L. 350 ) G3 वरमत्तः ( for °दश्च ) K4 Ñ1 B2 Dn D1, 2, 5 स्वयंभुवः ( for °प्रभुः ) G5 वरमत्त° स्वयंभुव ( for $^{b}$ ). — K4 Dn1 D1 2 om line 351 — ( L 351 ) K2 Ds1 D3–5 ईशत्वं ( for ईशित्वं ) G4 Bom Poona eds महत्त्वं ( for वशित्वं ) B2 वशित्वं ( for महत्त्वं ). B3 Ds महाद्युति, T1 G3, 5 गतिः स्वयम् ( for महाद्युते ) K1, 2 D4 प्राकाम्यं च महाद्युतिः ; G4 माहात्म्यं च गतः स्वयम् ( for $^{b}$ ) — ( L 352 ) T1, 2 G1, 3–5 M2 4 ब्रह्मे( G5 °ह्मै )व हि सनातनः ( for $^{b}$ ). — Ñ2 om. lines 353$^{a}$–357$^{a}$. — ( L. 353 ) B3 D6 Cal ed समनह्यन् ( for सनह्यत ) T1 2 G1 3–5 M2 4 समनह्यत दुर्जयः ( for $^{b}$ ). — ( L 354 ) D3 क्रूराः ( for शूरा ) Dn कृतार्था ( for °स्त्रा ) T1, 2 G1 3–5 M2 4 कृतास्त्रा युद्धदुर्मदा ( for $^{b}$ ). — ( L. 355 ) B3 T2 G1 3–5 M2 4 -गर्भाभा ( for वर्णाभा ). T1 सर्वे शुभाङ्गगर्भाभा ( for $^{a}$ ) K1–3 Ñ1 B2 Dn D1 2 4 5 हेमकूटोच्छ्रयोच्छ्रयाः ( Dn °पमा° ), K4 °च्छ्रितोच्छ्रिता°, V1 3 B1 3 Ds2 D6 हेम- ( B3 D6 मेरु )शृङ्गोच्छयोच्छ्रिता, T1 मेरुशृङ्ग इवो°, T2 G1, 3–5 M2 4 मेरुशृङ्गमिवो° ( for $^{b}$ ) — ( L 357 ) K1 2 D4 सर्वे मायामहारथाः ; B1 3 D6 T2 G1, 3–5 M2 4 रथाः पररथारुजः ; T1 रथाः परमदारुणा° ( for $^{b}$ ) — ( L 358 ) V3 विचरन्ते ; Dn2 विरोचन्तो ( for विचरन्तो ). K4 G5 विराजन्ते, Ñ1

श्वेतातपत्राः सर्वे ते श्वेतकुण्डलमण्डिताः ॥
मुक्ताहारवृतोरस्का भान्ति नागेश्वरा इव ।
महाग्रहनिभाकाराः शत्रूणां लोमहर्षणाः ।
रक्तचित्राम्बरधराश्चित्राभरणभूषिताः ॥
त्रैलोक्यविजयं नाम रथमास्थाय वीर्यवान् । [ 365 ]
कैलासशिखराकारमष्टनल्वायतान्तरम् ॥
युक्तं वाजिसहस्रेण सितेन शशिवर्चसा ।
पताकाशतसंछन्नं नानायुधविकल्पितम् ॥
हंसांशुकुन्दप्रतिमं विशालं
सितातपत्रं दनुजेश्वरस्य । [ 370 ]
विभाति तस्योपरि धार्यमाणं
श्वेताद्रिमूर्धावगतः शशाङ्कः ॥
केशी दानवमुख्यस्तु जिह्मस्ताम्राक्षदर्शनः ।
नीलमेघचयप्रख्यः कालः पुरुषविग्रहः ॥
महाग्रहनिभाकारः शत्रूणां लोमहर्षणः । [ 375 ]
चित्रमाल्याम्बरधरो रक्ताभरणभूषितः ॥
शताक्षः शतबाहुश्च हरिश्मश्रुर्महाबलः ।
शङ्कुकर्णो महानादो वपुषा रौद्रदर्शनः ॥
युक्तं महिषकैर्दिव्यैर्घण्टाकोटिकृतस्वनम् ।
महावारिधराकारमास्थाय रथमुत्तमम् ॥ [ 380 ]
ध्वजेनोष्ट्रेण महता नीलकेसरवर्चसा ।
नानारागविचित्राभिः पताकाभिर्विभूषितम् ॥
द्विपञ्चाशत्सहस्राणि रथानामुग्रतेजसाम् ।
ययुस्तस्यासुरेन्द्रस्य प्रयातस्य सुरान्प्रति ॥
भान्ति भिन्नाञ्जननिभाः प्रयातस्य महात्मनः । [ 385 ]
दंष्ट्रार्धचन्द्रवदनाः सबलाका इवाम्बुदाः ॥
तत्तस्य वैदूर्यसुवर्णचित्रं
विद्युत्प्रभं भास्कररश्मितुल्यम् ।
किरीटमाभात्यसुरोत्तमस्य
दावाग्निदीप्तं शिखरं यथाद्रेः ॥ [ 390 ]

---

विभान्तीव ( for व्यराजन्त ) — ( L 359 ) $D_5$ शुभ्रा., $T_{1.2}$ $G_{1.3-5}$ $M_{2.4}$ शूरा ( for श्वेताः ) — ( L 360 ) $Ñ_2$ om ( hapl ) lines $360^b$–$361^a$ $T_{1.2}$ $G_{1.3-5}$ $M_{2.4}$ श्वेतमाल्यानुलेपना ( for $^b$ ) — ( L 361 ) $T_2$ $G_{1.4}$ $M_2$ हेम- ( for श्वेत- ). $K_4$ $D_3$ $T_1$ -भूषिताः ( for -मण्डिताः ) $G_{3-5}$ $M_4$ हेमकुण्डलभूषिता ( for $^b$ ). — ( L 362 ) $Ñ_1$ B Dn Ds $D_{4-6}$ नाकेश्वरा ( for नागे° ) — ( L 363 ) $D_2$ महागज-, $D_6$ °ग्राह- ( for °ग्रह- ) $G_1$ -निभा शूरा ( for -निभाकाराः ) $Dn_2$ शूराणां ( for शत्रूणां ). — ( L 364 ) $T_{1.2}$ $G_{3-5}$ $M_2$ -चित्राङ्गद- ( for °म्बर- ) $Ñ_2$ रक्ताम्बरधराश्चित्राश्, $M_4$ रत्नचित्राङ्गदधराश् ( for $^a$ ) $T_2$ चित्राम्बरविभूषिता ( for $^b$ ) — $T_{1.2}$ $G_{1.3-5}$ $M_{2.4}$ om ( hapl ) lines 365–376 — ( L 366 ) $D_5$ अष्टनल्वायुतं बलम् ( for $^b$ ) — ( L 367 ) $K_{1.4}$ $B_2$ $D_2$ शिव-, $Ñ_1$ $D_3$ सित-, ( for शशि- ) — ( L 368 ) $D_3$ -संक्षुण्णं ( for -संछन्नं ). — ( L. 369 ) $K_3$ $Dn_2$ $D_{2-5}$ हंसेन्दु-; $B_2$ $D_6$ हिमांशु-, $Dn_1$ हेमेन्दु- ( for हंसांशु- ). $K_2$ सहस्रांशुकुन्दप्रतिभं विशाल, Ds हंसाशुशुक्लप्रतिमं वि° — ( L 370 ) $Ñ_1$ $B_{1.3}$ $D_6$ श्वेतातपत्रं ( for सिता° ). — ( L 372 ) $K_1$ $Ñ_1$ $V_{1.3}$ $D_4$ -मूर्ध्नीव गतः, $K_2$ -मूर्ध्नि च गत, $K_4$ $D_6$ -मूर्ध्नो वितत, $Ñ_2$ $B_{1.2}$ $Ds_2$ -मूर्धोपगत, $D_1$ -मूर्धाप° ( for -मूर्धाव° ) — ( L 373 ) $B_{1.3}$ $D_6$ दीप्तताम्रविलोचन ( for $^b$ ) — ( L 375 ) $D_3$ सुराणां ( for शत्रूणां ). $K_3$ $D_5$ शत्रूणां घोग्र( $D_5$ मेघ )दर्शन. ( for $^b$ ) — ( L 376 ) $K_4$ रक्त- ( for चित्र- ) — ( L. 377 ) $T_2$ $G_1$ शतात्मा ( for °क्षः ). — ( L 378 ) $G_5$ विकृतास्यो ( for शङ्कुकर्णो ) $Ñ_1$ महापादो; $T_1$ $G_{3.5}$ °पार्श्वो, $T_2$ $G_{1.4}$ $M_{2.4}$ °बाहुर् ( for °नादो ). $T_1$ $G_3$ ( both marg ) विकृतास्यो महानासो ( for $^a$ ) B वपुष्मान्, $T_2$ $G_1$ $M_{2.4}$ चतुष्पाद् ( for वपुषा ) Bom. Poona eds G(ed) घोर- ( for रौद्र- ) $T_1$ $G_{3-5}$ चतुष्पात्क्रूरदर्शन ( for $^b$ ) — ( L 379 ) $V_3$ युक्तैर् ( for युक्त ) $Ñ_1$ युक्तं दिव्यमहिषकैर्, $B_{1.3}$ $D_6$ संयुक्तैर्दिव्यमहिषैर्, $T_{1.2}$ $G_{1.3-5}$ $M_{2-4}$ सयुक्तं महिषैर्दिव्यैर् ( for $^a$ ) $D_3$ -समस्वरम् ( for -कृतस्वनम् ) — ( L 380 ) $T_2$ $G_{1.4}$ घोरं वारि-, $G_{3.5}$ $M_{2.4}$ रथ वारि- ( for महावारि- ) $T_1$ आस्थितो ( for आस्थाय ). $K_{1-3}$ $D_{4.5}$ रथमास्थाय चोत्तमम्, $Ñ_2$ आस्थाय नरसत्तम., $T_2$ $G_{1.3-5}$ $M_{2.4}$ आस्थितो रथसत्तम ( $T_2$ $G_4$ °मम् ) — ( L. 381 ) $K_{1.3}$ $D_{1.5}$ $G_1$ सिंह- ( for नील- ). — ( L. 382 ) $D_3$ अलंकृतम् ( for विभूषि° ) — ( L. 383 ) $T_1$ $G_{1.4}$ -वर्चसाम् ( for तेज° ) $T_2$ $G_{3.5}$ $M_{2.4}$ रथिनामुग्रवर्चसाम् ( for $^b$ ) — $T_1$ om. lines 385–386 — ( L 386 ) $D_6$ $G_3$ -नयना ( for वदना ). $Ñ_1$ दष्ट्राग्रमुग्रनयनाः ( for $^a$ ) — ( L 388 ) $B_{1.3}$ $D_5$ $T_2$ $G_{1.3-5}$ $M_{2.4}$ -संनिकाशम् ( for -रश्मितुल्यम् ) $T_1$ विद्युत्प्रभं चाशनिसंनिकाशम् — ( L 389 ) $B_{1.3}$ $D_6$ $T_{1.2}$ $G_{1.3-5}$ $M_{2.4}$ [अ]सुरेश्वरस्य ( for °रोत्तमस्य ) — ( L. 390 ) $K_{1.2}$ $D_4$ -दग्धं ( for -दीप्तं ) — After line 390, $T_{1.2}$ $G_{1.3-5}$ $M_{2.4}$ ins an addl colophon [ *Sub-parvan* $T_{1.2}$ $G_{1.3-5}$ $M_{2.4}$ वामनप्रादुर्भाव — *Adhy. name* $G_{2.5}$ बलासुरराहुविप्रचित्तीनां युद्धसंनाह — *Adhy. no* $T_1$ 294, $G_1$

वृषपर्वासुरश्चैव श्रीमान्सुरनिषूदनः ।
आरुरोह रथं दिव्यं मेरुशृङ्गमिवांशुमान् ॥
प्रवालजाम्बूनदचित्रकूबरं
महारथं भारसहं महार्हम् ।
स्वलंकृतं राजतहेममण्डलं [ 395 ]
गभस्तिनक्षत्रतडिन्निकाशम् ॥
केयूरयुक्ताङ्गदनद्धबाहुः
सहस्रतारेण च चर्मणा सः ।
सांग्रामिकैराभरणैश्च चित्रै-
र्मध्याह्नसूर्यप्रतिमो बभूव ॥ [ 400 ]
महाबलो बद्धतलाङ्गुलित्रो
बलोत्कटः किंशुकलोहिताक्षः ।
प्रगृह्य चामीकरचारुचित्रं
चापं स्थितो वृत्तविशालनेत्रः ॥

महासुरेन्द्रश्च महासुरैर्वृतो [ 405 ]
बलिस्तदा स्यन्दनमारुरोह ।
वैदूर्यहेमोपचितं विशालं
विद्युत्प्रभं षोडशनल्वमात्रम् ॥
युक्तं सहस्रेण दितेः सुतानां
गजाननानां विकृताननानाम् । [ 410 ]
चामीकरोरःस्थलभूषितानां
प्रनर्दतां प्रावृषि चाम्बुदानाम् ॥
महारथं देवरथप्रकाशं
सहस्रमायेन मयेन सृष्टम् ।
ईहामृगाक्रीडितभक्तिचित्रं [ 415 ]
दिव्यं रथं वीररथानुयातम् ॥
साकिकिणीकं विमल सुविस्तृतं
हिरण्मयैः पद्मशतैरलंकृतम् ।

---

290, G2 5 296, G4 284, M2 4 6] — Before line 391, T1 2 G1 3–5 M2 4 ins वैशपायन· — (L 391) D1 4 असुरसूदन, Bom Poona eds G(ed) च सूरसू° (for सुरानिषू°) — (L 392) K1–3 Ñ1 V1 3 B Ds D3–6 दीप्तं (for दिव्य) — (L. 393) K1 B1 3 D5 6 प्रतप्त- (for प्रवाल-). Ds2 -चित्रकूटं, T1 -जालकुञ्जरं, T2 G1 3 5 M2 4 -जालकूबरं (for -चित्र°) — (L 394) K1 (marg) रथोत्तमम् (for महार्हम्) — (L 395) Bom Poona eds G(ed) -कुण्डलं (for -म°) Ñ2 V1 3 B Ds D6 T1 2 G1.3–5 M2 4 अलंकृतं राजतनेमिमण्डलं — (L 396) K1 Ñ2 B1 3 D3.6 T1.2 G1 3–5 M2 4 -तडित्प्रकाशम् (for -तडिन्नि°) — (L 397) K1.2 V3 B1 3 Dn Ds D1 4 6 -मुक्ताङ्गद-, Ñ2 -चित्रा°, D2 -शुक्ला°, T2 G1 4.5 नद्धा° (for -युक्ता°) D1 नद्धबाहुं; D3 °गात्रो (for °बाहुः) T1 G3 M4 केयूरनद्धा(G3 °चित्रा)ङ्गदचित्रबाहुः, M2 °रनद्धाङ्गविचित्रबाहु — D3 om. lines 398–404 — (L 398) K2 2 B2 3 Ds D1.4 5 वर्मणा सः, Ñ2 V3 चर्मणा य, V1 वर्मणा य·, T1 G3 चर्मणा सह (for °णा यः) — (L 401) K3 महारवो, T1 2 G1 3 5 M2 4 दैत्याधिपो (for महाबलो) G4 दैत्याधिपो विद्धतलाङ्गुलित्रो — (L. 402) V1 B3 रणोत्कट., V3 बलोत्कटै, T1 2 G1.3 4 M2 मदोत्कटः (for बलो°) — (L 403) B1 3 D6 विकृष्य (for प्रगृह्य) T1 2 G1 3–5 M2 4 विकृष्य चा(M2 विचित्रचा)मीकरचारुनद्धं — (L. 404) D5 स्थितो महावृत्तविलासनेत्रः. — After line 404, T1.2 G1 3–5 M2 4 ins

19** सैन्येषु संनाहविधानवत्सु
भटेषु योग्येषु रणाय भूपते ।
रथेषु चित्रीकृतकूबरेषु
नागेषु यत्तेषु रणाय पत्तिभिः ॥

[(L. 1) T1 G3 सैन्येन (for °षु) — (L 2) G1 3 भद्रेषु युग्येषु रणाय भूते — (L. 4) G4 यातेषु, M2 युक्तेषु (for यत्तेषु)]

— (L 405) K4 T1 2 G1 3–5 M2.4 महासुरेन्द्रोऽपि (K4 °न्द्रश्च) महासुरेन्द्रैर् — (L. 406) K4 T1.2 G1 3–5 M2.4 वृतो बलि (for बलिस्तदा). — (L 407) Ñ2 V3 G3 -वज्रोपचित (for -हेमो°) — (L 409) K1 2 D4 5 युक्तं सहस्रैर्दितिनन्दनानां — (L 410) G3 महागजानां (for गजाननाना) K1 2 B Dn D4 6 विकृताकृती(K2 °ता)नाम् (for °ताननानाम्. — (L 411) V1 B Ds T1 G3 चामीकरोरश्छदभूषितानां; T2 G1 4 M2 4 चामीकराच्छादनभू° — (L 412) T1 विनर्दतां चैव तु तोयदानाम्, T2 G1 3–5 M2.4 विनर्दतां प्रावृषि तोय° — (L 413) T2 G1 4 तं समरे (for देवरथ-). — (L 414) Ñ1 निर्मितम् (for सृष्टम्). — (L 415) T1.2 G1 4 5 M2 4 ईहामृगाक्रीडन- (for °डित-) — (L 416) G5 M2 4 भीम-, Bom Poona eds G(ed) दिव्य- (for वीर-). T2 G1 4 दिव्यं रथं भीमरथं सुवेगम् — After line 416, D3 ins

20** सर्वास्त्रपूर्णं च समीरवेगम् ।

— (L 417) K3 D5 सुचित्र (for सुविस्तृतं) K1.2 B D4.6 T1.2 G1.3–5 M2.4 साकिंकिणीकां विमलां सुविस्तृतां (B D6

अभ्याददे वैजयन्तीं जयाय
    स्रजं बलिर्हेमविचित्रपुष्पाम् ॥ [ 420 ]
आबध्य मालां प्रबभौ विचित्रां
    बलिस्तदा भाति भुजैर्विशालैः ।
रराज तैः सर्वसमृद्धियुक्तै-
    र्महार्चिषा सूर्य इवाम्बरस्थः ॥
स्रजं तदा बध्यति चास्य दुर्गा [ 425 ]
    सर्वासुराणामिव हारभूताम् ।
वैरोचनिः सर्वश्रियाभिजुष्टो
    विभ्राजतेऽसौ शरदीव चन्द्रः ॥
मेरोस्तटैः काञ्चनरागरक्तै-
    रादित्यसंसक्तमिवाभ्रनीलम् । [ 430 ]
प्रासाश्च पाशाश्च हिरण्यनद्धा-
    श्चर्माणि खड्गाश्च परश्वधाश्च ॥
धनूंषि वज्रायुधसप्रभाणि
    दिव्या गदा वज्रमुखाश्च शक्त्यः ।
दिव्याश्च खड्गा विशिखाश्च दीप्ता [ 435 ]
    नाराचपूर्णा विविधाश्च तूणाः ।
धृता रथे दैत्यवृषस्य तस्य
    चकाशिरे प्रज्वलिता यथोल्काः ॥
तं चामरापीडधराः सुदंष्ट्राः
    सुवर्णमुक्तामणिहेमचित्राः । [ 440 ]
वीजन्ति वालव्यजनैर्विनीताः
    स्वलंकृताः स्यन्दनवेदिकास्थाः ॥
अयःशिरा अश्वशिरा दुरापः
    शिबिर्मतङ्गो विकटः शताक्षः ।
अजो निकुम्भः कुपथश्च दानवो [ 445 ]
    ररक्षुरेते दश दानवाधिपम् ॥

---

M2 सुचित्रां ) — ( L. 418 ) K1 2 B1 3 D4 6 T1 2 G1. 3–5 M2. 4 अलंकृताम् ( for °तम् ) — ( L 419 ) K1 2 Ñ2 V1 3 B Da Ds D1 4–6 T1 M2 वैजयिकी, K3 4 G5 °यकीं ( for °यन्तीं ) D3 अभ्याददे वैजयिकं जयार्थं — ( L 421 ) Ds आमुच्य ( for आबध्य ). K1 2 तां च ( for मालां ) K3 प्रययौ, B2 D1. 5 प्रभया, T1 2 G1 3–5 M2 विबभौ ( for प्र° ) Ñ2 B1 आबध्यमानां प्रबभौ ( B1 °भया ) विचित्रां, B3 आमुच्यमानां प्रभया वि°, D6 आमुच्य मालां प्रभया वि° — ( L. 422 ) K1 4 दीर्घ-, T1 G5 [अ]तीव ( for भाति ) Ñ1 काषायवासोऽतिभुजैर्विशालै — Ñ1 T2 G1 4 M2. 4 om lines 423–428 — ( L 423 ) T1 G3 5 एष ( for सर्व- ) — ( L. 425 ) K4 B3 Ds D1 G4 चास्य दुर्गा, V1. 3 भास्वदग्रां, Dn चारुभुग्नां ( for चास्य दुर्गा ) D3 स्रज तदाबध्य सुचारुरूपां, T1 G3–5 स्रजं तदा बध्यतु पद्म( T1 रत्न )-चित्रां. — ( L 426 ) K4 D1 2 भारभूताम्, Ñ2 V1. 3 हारभूषाम्, T1 G3. 5 सारभूताम् ( for हार° ) — ( L 427 ) B3 सूर्य- ( for सर्व- ) T1 G3 5 -समृद्धि- ( for -श्रियाभि- ) — ( L 428 ) G3. 5 चन्द्रमाः ( for चन्द्र. ) — ( L 429 ) K Ñ1. 2 V3 D1 2 4 5 मेरोस्तटैर्वा ज्वलनप्रकाशैर्; V1 °टैर्वाप्यनलप्रकाशैर्, D3 °टैर्ज्वलिनिकप्रकाशैर्, T1. 2 G1 3–5 M2 4 मेरोस्तटे पावकरागमु( T1 G3 5 °र )क्तैर् — ( L. 430 ) K4 D1 2 -संयुक्तम् ( for -संस° ) K1–3 Ñ2 V1 B Dn Ds D4–6 -जालम् ( for नीलम् ) T1 2 G1 3–5 M2 4 आदित्यसंक्लिष्टमिवाभ्रजालम् — ( L 431 ) K3 गदाश्च प्रासाश्च ( for प्रासाश्च पाशाश्च ) K2, 4 V1, 3 B2 Dn D1 2 -बद्धाश् ( for -नद्धाश् ). — ( L 432 ) T1 2 G1 3–5 M2 4 शूलानि ( for खड्गाश्च ) — ( L. 433 ) B1 3 D6 T1 2 G1 3 M4 चेन्द्रायुध- ; M2 सेन्द्रा° ( for वज्रा° ) — ( L 434 ) T2 G4 शक्ती ( for शक्त्य. ) D6 दिव्यायुधा वज्रमुखाश्च शक्त्य . — V1 om lines 435–436 — ( L 435 ) B1 3 D6 शूला ( for खड्गा ) D3 [अ]ग्निशिखाव- ; T1 G3 5 विविधाश्च ( for विशिखाश्च ) K4 राजन् ( for दीप्ता ) — ( L 437 ) D4 5 वृ( D5 धृ )ता रथैर् ( for धृता रथे ) T2 G1 3–5 M2 4 -वरस्य ( for -वृषस्य ) T1 धृते रथे दैत्यवरस्य तस्य — ( L 438 ) K4 V1 3 प्रकाशिरे ( for च° ). — ( L 439 ) Dn2 G1 ते ( for त ) K2 D4 सुरेन्द्रा. ( for सुदंष्ट्रा. ) — ( L. 440 ) K4 सुवर्णचित्रा मणिहेमभूषा. , D3 मुक्तामणिश्रीयुतहेमचित्रा — ( L 442 ) Dn2 D2 T1 महासुरा ( for स्वलंकृता ) K4 Dn1 D1 महासुराः स्यन्दनवेदिकस्था — ( L 443 ) K2 3 D1 3 अजाशिरा ( for अय शिरा ). B1 3 D6 T1 G5 वाजिशिरा, D5 गोश्व°, G3 वज्र° ( for अश्व° ). Ñ1 [अ]सुराधिप , G(ed) दुरालपः ( for दुरापः ) K4 अजाशिरा दुराप. खराननः , D2 4 अजाशिरा अश्वशिरा दुरापा — ( L. 444 ) K4 V1 3 B Ds2 D1–4 6 विकच , Bom Poona eds. G(ed) विशिरा. ( for विकट. ) K3 D5 शिबिर्मतङ्गो विकचः सिताक्ष. , T2 G1 3–5 M2 4 शिबी ( G3 शङ्खी, G4 M2 शिखी ) मतङ्गो विकच. शताक्षः — ( L 445 ) Ñ1 2 V1 Dn D1 T1 अयो , B1. 3 Ds D6 जयो ( for अजो ) K4 D1 2 क्रयथश् ; D3 करुषश्, T1 G3 M2 क्रथनश् ( for कुपथश् ) — ( L 446 ) K2–4 D1 2 M2 ररक्षिरे ते ( for °क्षुरेते ) T1 2 G1 3–5 M4 ररक्षिरे ते दश दानवेश्वरा. ( T1 M4 °रम् ). — ( L. 447 ) Ñ1, 2 B1

पुरःसराश्चैव सहस्रशोऽसुराः
पदातयो दानवराजरक्षिणः ।
शतघ्निचक्राशनिशक्तिपाणयः
प्रजग्मुरग्रेऽनिलतुल्यवेगिनः ॥ [ 450 ]
घण्टासुशब्दास्तपनीयनद्धा
आडम्बरा झर्झरडिण्डिमाश्च ।
महारवा दुन्दुभयश्च नेदू
रथप्रयाणे दितिजेश्वरस्य ॥
तस्योच्छ्रितः काञ्चनवेदिकाढ्यो [ 455 ]
हिरण्मयो दिव्यमहापताकः ।
महाध्वजो वै तपनीयनद्धो
रराज वीरस्य यथा विवस्वान् ॥
समुच्छ्रितं काञ्चनमातपत्रं
स्रक्काञ्चनी वक्षसि चास्य भाति । [ 460 ]
समन्ततश्चैनमुपाचरन्ति
दैत्यर्षयः प्राञ्जलयो यजन्ति ॥

पुरोहिताः शत्रुवधे समाहिता-
स्तथैव चान्ये श्रुतशीलवृद्धाः ।
जपैश्च मन्त्रैश्च तथौषधीभि- [ 465 ]
र्महात्मनः स्वस्त्ययनं प्रचक्रुः ॥
स तत्र वस्त्राणि शुभाश्च गावः
फलानि पुष्पाणि तथैव निष्कान् ।
बलिर्दैत्यो ब्राह्मणेभ्यः प्रयच्छ-
न्विराजतेऽतीव यथा धनेशः ॥ [ 470 ]
सहस्रसूर्यो बहुकिंकिणीकः
परार्ध्यजाम्बूनदहेमचित्रः ।
सहस्रचन्द्रायुततारकश्च
रथो बलेरग्निरिवावभाति ॥
तमास्थितो दानवसंगृहीतं [ 475 ]
महाबलः कार्मुकधृक्सबाणः ।
उद्वर्तयिष्यंस्त्रिदशेन्द्रसेना-
मतीव रौद्रं स बिभर्ति रूपम् ॥

---

Dn D3 T2 G1 5 पुरश्चराश् ( for पुरःस° ) — K4 om lines 448–449 — ( L 448 ) D2 -रागिण ( for -रक्षिण ) — B3 om lines 449–454 — ( L 449 ) K2 D4 शक्राशनि- ( for चक्रा° ) T2 G3 M3 4 -वज्र- ( for -शक्ति- ). — ( L 450 ) Cal ed मंजग्मुर् ( for प्र° ) V3 B1 एतेऽनिल- , D3 अर्कानिल- , T2 G1 3–5 अग्नेऽशनि- , M2 अन्येऽनिल- ( for अग्रेऽनिल- ) Ñ1 -विक्रमा ( for -वेगिनः ) — ( L 451 ) K3 -सुदीप्तास् , Ñ1 सशब्दास् , V3 सुतप्तास् , D6 T1 2 G1 3–5 M2 -सशङ्खास् ( for -सुशब्दास् ) K4 Dn D5 D1 2 5 -बद्धा ( for -नद्धा ) B1 M4 घण्टा सशङ्खास्तपनीयबद्धा ; D8 घण्टावनद्धास्तपनीयबद्धा — K3 om ( hapl ) lines 452–457 — ( L 452 ) T1 कालाम्बरा ; T2 G1 3–5 M2 4 साड° ( for आड° ) K4 भूरि च , Ñ1 D5 M2 झर्झरि- ; B2 D3 डुर्डुर्- , Dn1 संसर- , D1 M4 गर्गर- , D7 कर्कर- ( for झर्झर- ) T2 G1 4 -डिम्बराश् ( for -डिण्डिमाश् ) — ( L 453 ) T1. 2 G1 3–5 M2. 4 सगोमुखा दुन्दुभयश्च भेर्यो — ( L 454 ) D6 Cal ed प्रयाणकाले ; T1 2 G1 3–5 M2 4 गर्जन्ति याने ( for रथप्रयाणे ). — ( L 455 ) K1 Ñ1 2 Dn Ds1 तस्योत्थितः ; D2 तथोच्छ्रित· ( for तस्यो° ) V3 T1 G3 5 तस्यो( V3 °थो )-च्छ्रितः काञ्चनवेदिकस्थो . — ( L 457 ) K4 Ñ2 V3 Dn D1 -बद्धो ( for -नद्धो ) — ( L 459 ) D4 समुद्धृतं ( for °च्छ्रितं ) — ( L. 460 ) D1. 2 तत्काञ्चनं , T1 स्रक्काञ्चनं ( for °नी ).

— ( L 461 ) K1 4 Dn D1 2 [अ]प्यसुराश् ; K2. 3 Ñ1. 2 V1 D4 5 [ए]व सुराश् , Ds2 T1 [ए]वमुपा- ( for [ए]नमुपा- ). T2 -गताश्च ( for -चरन्ति ) V3 D3 समन्ततश्चैव सुराश्च भा( D3 °स्तव )न्ति — ( L 462 ) K1 4 Ñ1 2 V1 D1. 3. 5 जयन्ति ; K3 जपन्ति , V3 D6 गृणन्ति , B2 3 D8 M2 जपन्तः ; Dn जयन्त. , G3 5 M4 ब्रुवन्त ( for यजन्ति ). B1 T1 2 G1. 4 दैत्यर्षभा प्राञ्जलयो ब्रुव( B1 जप )न्त.. — ( L. 463 ) T1. 2 G1 3–5 M2 4 पुरोहिता शत्रुवधं ( M2 °जयं ) ब्रुवाणास् — ( L. 465 ) V1 3 जाप्यैश् ; D5 D8 जप्यैश् ( for जपैश् ) B1 Cal. ed. महौषधीभिर् , T2 G1 4 M2 तथौषधैश्च ; M4 °धीश्च ( for °धीभिर् ). B3 D6 जप्यैश्च मन्त्रैश्च महौषधीभिर् . — ( L 466 ) V3 प्रकुर्युः , D2 च चक्रु ( for प्रचक्रु ) — ( L 467 ) K3 रथाश्च , D3 शुभानि ( for °श्च ) B1 3 D5 D6 गा वै ( for गावः ). T1 तत सहस्राणि शुभाश्च गावः — ( L 468 ) B3 D6 ग्रामांश्च रत्नानि , D3 फलानि पुण्यानि ( for °नि पुष्पाणि ). K4 निष्कम् ( for निष्कान् ) — ( L 469 ) K1 2 Ñ2 V1 3 B D5 D4. 6 बलिर्द्विजेभ्यः प्रयत· ( K1 2 D4 °भ्यो दितिज ) प्रयच्छन् ; T1 2 G1 3–5 M2 4 दैत्येश्वरो ब्रह्मविदां प्र° . — ( L. 473 ) B3 D5 -चन्द्रोऽयुत- ( for -चन्द्रायुत- ). — ( L 474 ) D8 महानभिर् ( for बलेर° ). K4 B3 [आ]विभाति , Ñ1 M2 [अ]भि° ( for [अ]व° ) — ( L 475 ) K2 तमास्थितं ; Dn2 समास्थितो ; M2 तदास्थितो ( for तमा° ) — ( L 476 ) T2 G1. 4 M3

स वेगवान्वीररथौघसंकुलः
प्रयाति देवान्प्रति दैत्यसागरः । [ 480 ]
महार्णवो वीचितरंगसंकुलो
यथा जलौघैर्युगसंक्षये तथा ॥
त्रैलोक्यवित्रासकरैर्वपुर्भि-
स्तान्यग्रतो यान्ति बले रथस्य ।
महाबलान्युच्छ्रितकार्मुकाणि [ 485 ]
सपर्वतानीव वनानि राजन् ॥

Colophon

वैशंपायन उवाच ।
श्रुतस्ते दैत्यसैन्यस्य विस्तरो जनमेजय ।
भूयस्त्रिदशसैन्यस्य शृणु विस्तरमादितः ॥
सुराधिपस्तु भगवानाज्ञापयत वै सुरान् ।
मरुद्गणांस्तथादित्यान्विश्वेदेवांश्च वासवः ॥ [ 490 ]
वसूनष्टौ भृशं सर्वान्यक्षरक्षोमहोरगान् ।
विद्याधरगणान्सर्वान्गन्धर्वांश्च महाबलान् ॥
महार्णवांश्च शैलांश्च तथा रुद्रान्महौजसः ।
यमवैश्रवणौ चोभौ वरुणं च जलाधिपम् ॥
ये तु सिद्धा महात्मानः पितरश्च मनस्विनः । [ 495 ]
राजर्षीश्चापि शतशो योगसिद्धांस्तथैव च ॥
त्रिदशाज्ञापकः शक्र आज्ञापयति वीर्यवान् ।
भवन्तो दैत्यनाशाय संनह्यन्तामिति प्रभुः ॥
शक्रस्य वचनं श्रुत्वा ततः सर्वे दिवौकसः ।
संनह्यन्त महात्मानः शक्रस्य समविक्रमाः ॥ [ 500 ]
नानाकवचिनः सर्वे विचित्रकवचध्वजाः ।
नानायुधोद्यतकरा मत्ता इव महागजाः ॥
केचिदारुरुहुर्व्याघ्रान्केचिदारुरुहुर्गजान् ।
केचिदारुरुहुर्नागान्केचिदारुरुहुर्वृषान् ॥

---

महारथं ( for °बलः ) D3 महाध्वजः कार्मुकबाणहस्तः ; T1 G3-5 °रथं काञ्चनचित्रबाणम्, M4 °रथं कार्मुकधृक्सबाणम् . — ( L. 479 ) G5 वीरवरौघ-, M2 द्विरदरथौघ- ( for वीरर° ). — ( L 480 ) Ñ1 G2 सैन्य- ( for दैत्य- ) — ( L 481 ) B1 3 D3 महानिलोद्धूत-, T1. 2 G1 3 5 M4 °नलाविद्ध- ( for °र्णवो वीचि- ) — ( L 482 ) D3 4 Bom Poona eds G(ed) -संशये ( for -संक्षये ) D6 T1 2 G1 3-5 M2 4 यथार्णवो लोकविनाशनाय . — ( L 483 ) T1 2 G1 3-5 M2-4 भीमानि सं- ( G3 वि- ) ( for त्रैलोक्यवि- ) — ( L 484 ) M4 तस्य ( for तानि ) B D6 भान्ति ( for यान्ति ) D3 तान्यग्रतो भान्ति बलानि तस्य, T1 G1. 3-5 M2 तस्या( G4 °था )ग्रतो भान्ति बले रथस्य — ( L 485 ) महारथाभ्युत्थितकार्मुकानि

COLOPHON — *Mention of the Epic* · K4 V1 Dn1 Ds2 D1. 5. — *Mention of Khila* V2 B Dn Ds D1 3-5. — *Sub-parvan* · Ñ1 D1. 5 6 वामनम्, B1. 3 D3 T2 G1 3 M2. 4 वामनप्रादुर्भाव·. — *Adhy name* K Ñ2 V1 3 B2 Dn Ds D1-5 बलेरुद्योग., B1 3 दैत्यसंनहनम्, D5 दैत्येन्द्रसंहननम् ; G3 महाबलिजैत्रयात्रा, M3 सेनावर्णनम् — *Adhy no* · K3 24, V1 200; V3 Ds2 237, Dn 236; D1 223; D3 249, D4 231, T1 G4 295, G1 294, G3 5 297.

G4 om. lines 487-570. — After line 488, T1 G1 3 5 M3 4 ins ·

21** दैत्यानामथ संनाहं दूताच्छ्रुत्वा सुराधिप. ॥
[ M3 नराधिप ( for सुराधिप. ) ]

— ( L. 489 ) T1 G3 5 शचीपतिस् ( for सुराधिपस् ). K1. 2 V1. 3 Ds D3 4 आज्ञापयति ( for °यत ) B1 3 D6 Cal. ed. आज्ञापयदसौ सुरान् ( for *b* ) — ( L 490 ) K4 D3 दिव्यान् ( for [आ]दित्यान् ) B1 3 D6 T1 G1 3-5 M2 4 विश्वान्साध्यांश्; B2 Dn T1 विश्वान्देवांश्, Ds2 विश्वदे° ( for विश्वेदे° ). — For line 491, T1 2 G1 3-5 M2 4 subst .

22** अष्टौ चापि वसूंस्तूर्णं यक्षराक्षसकिंनरान् ।
[ M2 -पन्नगान् ( for -किनरान् ). ]

— ( L 492 ) सिद्धान् ( for सर्वान् ) B1 Cal ed महारथान् ( for °बलान् ) — ( L 493 ) T2 G1 द्वीपान् ( for रुद्रान् ). — ( L 494 ) D6 नराधिपम्, T1. 2 G1 3-5 M2 महाबलम्; Bom Poona eds G(ed) जनाधिपम् ( for जला° ). M4 वरुणश्च महाबलः ( for *b* ). — ( L 495 ) K1 सिद्धाश्चैव; K2 D4 सिद्धसंघा ( for ये तु सिद्धा ) K3 महाबला, V1 महात्मन. ( for मनस्विन. ) Ñ2 शक्रस्य समविक्रमा ( for *b* ). — ( L. 496 ) K4 B3 Dn D1 राजर्षयश्च, D5 °र्षयोऽपि ( for °र्षीश्चापि ). T1 G1 3 राजर्षयश्च बहुशो, T2 G5 M2 4 °र्षींश्चैव बहुशो ( for *a* ) K1. 2. 4 Ñ1. 2 V3 B1 3 Dn Ds D1 3-5 T1 2 G1 3 -सिद्धास ( for -सिद्धांस ) — ( L 497 ) B2 D3 T1 2 G1. 5 M2 4 आज्ञापयत ( for °ति ) V3 वै सुरान् ( for वीर्यवान् ). — ( L 498 ) D2 संनह्यध्वम् ( for °न्ताम् ) — ( L 500 ) D3 समनह्यन्त ( hypermatric ) ( for संनह्यन्त ) — ( L 501 ) D3 -किरीटिन ( for -कवचिन ) D3 T2 G1 3 5 -कनक- ( for -कवच- ). — T2 G1 om lines 502-505 D3 om ( hapl ) line 502. — ( L. 503 ) Ñ4 om ( hapl. ) line 503*a*. K3

हरिनेत्रो हरिश्मश्रुर्द्विरदैरावतध्वजम् । [ 505 ]
रथं हरिहयैर्युक्त्वा स प्रायात्समरं प्रति ॥
आदित्यवर्णं विरजं सुधौतं
त्वष्ट्रा स्वयं निर्मितमीश्वरार्थम् ।
जालैश्च जाम्बूनदभक्तिचित्रै-
रलंकृतं काञ्चनदामभिश्च ॥ [ 510 ]
सकूबरोपस्करबन्धुरेषं
विद्युत्प्रभाभिः कृतमाभिताभ्रम् ।
कैलासशृङ्गोपममिन्द्रयानं
सुचारुचारुप्रतिचक्रचक्रम् ॥
तारासहस्रै रुचिरैर्ज्वलद्भि- [ 515 ]
र्देवार्धमाल्यार्चितसर्वदेहम् ।
समुच्छ्रितश्रीध्वजमक्षयाक्षं
जाज्वल्यमानं वपुषोत्तमेन ॥
आस्थाय तं भास्वरमाशुवेगं
शचीपतिर्लोकपतिः सुरेशः । [ 520 ]
वज्रस्य भर्ता भुवनस्य गोप्ता
ययौ महात्मा भगवान्महेन्द्रः ॥
आमुच्य वर्माथ सहस्रतारं
हुताशनादित्यसमप्रभावम् ।
सूर्यप्रभं चामुमुचे किरीटं [ 525 ]
मालां च जाम्बूनदवैजयन्तीम् ॥
त्वष्ट्रा कृतं भास्वररश्मिदीप्तं
सुतीक्ष्णघोरामलतीक्ष्णधारम् ।
महासुराणां रुधिरार्द्रमुग्रं
प्रगृह्य वज्रं शतपर्वमुख्यम् ॥ [ 530 ]
महाशनी द्वे च महाग्रहाभे
दीप्तामभोघां च स शक्तिमुग्राम् ।
चक्रं तथैन्द्रं सुमहच्च चापं
प्रगृह्य शक्रः प्रययौ रणाय ॥
सहस्रदृग्भूतपतिः सनातनः [ 535 ]
सनातनानामपि यः सनातनः ।
प्रयाति देवाधिपतिर्महात्मा
वैयाघ्रमादाय च चर्म चित्रम् ॥

---

om line $503^b$ $T_1$ $G_{3.5}$ $M_2$ रथान् ( for गजान् ). — ( L 504 ) $B_1$ Ds $D_6$ Cal ed रथानारुरुहु केचित् ( for $^a$ ) — ( L. 505 ) $K_{1.4}$ $\tilde{N}_1$ Dn $D_1$ $T_1$ द्विरदैरावृत- ( for °वत- ) $M_2$ -ध्वज ( for -ध्वजम् ) — ( L 506 ) $K_{2-4}$ $V_3$ $B_2$ Dn $D_{3-5}$ $T_{1.2}$ $G_{1.3-5}$ युक्तं ( for युक्त्वा ) — ( L 507 ) $\tilde{N}_1$ विरजा· ; $B_2$ विमलं, $T_1$ $G_3$ $M_2$ द्विरद ( for विरजं ) Ds सुनाभं, $M_4$ सुधाभं ( for सुधौतं ) $B_{1.3}$ $D_6$ आदित्यवर्णं विपुलं सुनाभं ( $D_6$ °धामं ); $T_2$ $G_{1.5}$ °र्णं विश( $G_5$ द्विर )दं सुधाभं — ( L 508 ) $\tilde{N}_1$ $B_3$ Ds स्वयंभुवा ( for त्वष्ट्रा स्वयं ) — ( L 511 ) $V_1$ -बन्धुरं रथं ( for -बन्धुरेषं ). $D_3$ शुक्लाम्बरोपस्करबन्धुरेषं. — ( L 514 ) $K_1$ $D_4$ सुचारुचारुं, $B_1$ $D_4$ तारासुनारं, $B_3$ सुचारुतारं ( for °चारु ) $T_1$ -प्रतिमं स-( for -प्रतिचक्र- ) $T_2$ $G_1$ $M_{2.4}$ सुतार( $M_4$ °चारु )तारप्रतिमं च चक्रम्, $G_{3.5}$ सुचारुताराप्रतिम सुच° — ( L. 515 ) $K_1$ $D_4$ रुचिरं, $K_3$ $T_2$ $G_1$ रचितं ; $K_4$ $\tilde{N}_1$ उचितैर् ; Ds $D_{3.6}$ $T_1$ $G_{3.5}$ खचितं ( for रुचिरैर् ). — ( L 517 ) $K_1$ $\tilde{N}_{1.2}$ Ds $D_6$ $T_1$ $G_3$ समुच्छ्रितं ( for °च्छ्रित- ) $M_{2.4}$ चारुपक्षं ( for अक्षयाक्षं ) $B_1$ समुच्छ्रितं स्वग्ध्वजमक्षयाक्षं, $T_2$ $G_1$ °तं श्रीध्वजचारुपक्षं, $G_5$ °तं श्रीध्वजमायताक्षं — ( L 518 ) $\tilde{N}_2$ $D_2$ प्रज्वाल्यमानं ( for जाज्व° ) $K_2$ $D_3$ $T_1$ $M_2$ °पुरुषोत्तमेन ( for वपु° ). $K_{3.4}$ $D_1$ प्रज्वाल्यमानं पुरुषोत्तमेन. — ( L 519 ) $K_{2.3}$ $\tilde{N}_2$ $B_{1.3}$ $G_1$ भास्करम्, $\tilde{N}_1$ $B_2$ Ds $D_5$ भासु° ( for भास्व° ), $V_3$ $D_5$ $T_{1.2}$ $G_{3.5}$ उग्रवेगं, $D_2$ आशुचारं ( for °वेगं ) — ( L 520 ) $M_2$ स श्रीपतिर् ( for शची° ). $T_2$ देव- ( for लोक- ). $M_4$ स श्रीपतिर्लोकपतिं सुरेशम्. — ( L. 521 ) $K_3$ Dn धर्ता ; $Ds_2$ गोप्ता ( for भर्ता ) — ( L 522 ) $D_1$ सुरेशः ( for महेन्द्रः ) — ( L 524 ) $G_5$ -प्रभासम् ( for °वम् ) —( L. 525 ) $D_3$ वै सुशुभे ( for चामुमुचे ). $\tilde{N}_2$ सूर्यप्रभावं मुमुचे किरीटं — ( L 527 ) $Dn_2$ $D_5$ भास्कर ( for भास्वर- ). $K_3$ दीप्ति- ( for रश्मि ). — ( L 528 ) $K_1$ $D_{1.2}$ -तीव्र-, B $D_6$ $G_{3-5}$ $M_4$ नैक- ( for the second तीक्ष्ण- ). $T_1$ सुनीक्ष्णघोरामलमेकधारम्, $T_2$ $G_1$ °घोरज्वलनैकधारम्, $M_4$ °घोरामनलैकधाराम् — ( L. 529 ) $K_{1.2}$ $D_4$ रुधिराग्रदिग्धं ; $K_3$ °रौघदीप्तं ; $B_3$ Dn °राशमुग्र, $D_1$ रुचिरार्द्र°, $D_3$ निधनप्रसक्तं ; $D_5$ रुधिराङ्गदिग्धं ( for °र्द्रमुग्रं ) — ( L 530 ) $K_{1-3}$ $D_{4.5}$ -पर्वमुग्रम् ; $V_1$ °णाख्यम्, $B_{1.2}$ Ds $T_{1.2}$ $G_{1.3.5}$ $M_{2.4}$ °भीमम् ; $D_2$ -वर्ममुख्यम् ; $D_3$ -पत्रतुल्यम् ( for -पर्वमुख्यम् ) — ( L. 531 ) $D_3$ महाप्रदीप्ते ; $T_{1.2}$ $G_{1.3-5}$ $M_{2.4}$ °प्रभावे ( for °ग्रहाभे ) — ( L. 532 ) $K_2$ $D_4$ $T_1$ वर-, $K_3$ च सु- ( for च स ). — ( L. 533 ) Bom. Poona eds सुमहत्प्रताप ( for °च्च चापं ). —( L. 534 ) $G_5$ $M_4$ चक्रं ( for शक्र· ) — ( L. 535 ) $\tilde{N}_1$ भूतभवः ( for °पतिः ). — $\tilde{N}_1$ om. line 536. — ( L. 536 ) $D_3$ अधिप

एकनिश्चयकार्याश्च त्रैलोक्यजयकाङ्क्षिणः ॥
सुरदानवसैन्यानां शब्दः समभवन्महान् । [ 875 ]
नानायुधनिहस्तानां त्वरितानां प्रधावताम् ॥
क्ष्वेडितोत्कुष्टनिनदैर्गजबृंहितनिस्वनैः ।
रथनेमिस्वनैर्घोरैस्तुमुलः सर्वतोऽभवत् ।
शङ्खदुन्दुभिनिर्घोषैर्हयहेषितनिस्वनैः ॥
हयानां हेषमाणानां दानवानां च गर्जताम् । [ 880 ]
क्ष्वेडितोत्कुष्टनिनदैः पाणिपादरवैस्तथा ॥
दानवानां परेषां च शस्त्रवन्ति महान्ति च ॥
समरे भीमकर्माणि सैन्यानि प्रचकाशिरे ॥
ततो नागा रथाश्चैव जाम्बूनदविभूषिताः ।
भ्राजमाना ह्यदृश्यन्त मेघा इव सविद्युतः ॥ [ 885 ]
ऋष्टिखड्गगदास्तीक्ष्णाः शूलशक्तिपरश्वधाः ।
चारु बिभ्राजिरे तत्र स्वेष्वनीकेषु भागशः ॥
रथा बहुविधाकाराः शतशोऽथ सहस्रशः ।
हेमसंछन्नशिखरा ज्वलन्त इव पावकाः ॥
दानवानां सुराणां च समालोक्यन्त सैनिकाः । [ 890 ]
काञ्चनैः कवचैः सर्वे ज्वलितार्कसमप्रभैः ॥
संनद्धाः समदृश्यन्त ज्योतींषि गगने यथा ।
उद्यतैरायुधैश्चित्रैस्तलबद्धाः पताकिनः ।
ऋषभाक्षाः सुरगणाश्चमूमुखगता बभुः ॥
नानावर्णाः पताकाश्च ध्वजमालाश्च संयुगे । [ 895 ]
युध्यतां रणशौण्डानामीरयामास मारुतः ॥
ध्वजालंकारवस्त्राणि वर्माणि कवचानि च ।
रश्मिभिर्भासयामास रश्मिवर्णानि रश्मिमान् ॥
उभाभ्यामप्रमेयाभ्यां बलाभ्यां पादचारिणाम् ।
रजः प्रच्छादयामास पत्रोर्णाः पाण्डुरा दिशः ॥ [ 900 ]
दिव्यायुधधराः सर्वे दीप्तायुधपरिच्छदाः ।

---

om. lines 875-877. —(L 875) K3 4 Ñ2 D2 5 T1 -दैत्यानां (for -सैन्यानां) —(L 876) D3 गर्जतां च (for त्वरितानां) —(L 877) K4 -निर्नादैर् (for -निनदैर्). T1 G5 M2 पाणिपाद(M2 °ताल)स्वनैस्तथा (for ^b) —T1 G5 om lines 878-881 M2 om line 878 —(L 878) G1. 4 -रवैर्घोषैस् (for -स्वनैर्घोरैस्) —M2 om line 880. —(L 881) B1 3 D6 संनादै. (for -निनदै) K4 Dn1 ज्वलितोत्कुष्टनिनदैः D5 क्ष्वेडितोत्कट° (for ^a) M4 -ताल- (for -पाद-). T2 G1 3 4 M4 -स्वनैस् (for -रवैस्) —(L. 882) After line 882^a, T1 2 G1 3-5 M2. 4 ins

43** भिद्यतीव नभस्थलम् ।
दैत्यानां च सुराणां च

T2 G1 4 M2. 4 om lines 882^b-883^b K3 D5 सर्वशस्त्र-, G3 शब्दवन्ति (for शस्त्र°) —K1-3 Ñ1 D4 om line 883. —(L 883) V1 प्रचकम्पिरे (for °काशिरे) —(L 884) V1 3 नाग-, M2 नाना- (for नागा) T2 G1 4 M2 4 संसक्ता दैवतैः सह (for ^b). —(L 885) K1 3 4 Ñ1. 2 V1 3 B2 Dn Ds D1-4 च (K3 स्म) दृश्यन्ते, B1 3 D6 T2 G1 4 M4 व्यदृश्यन्त, Bom Poona eds G(ed.) व्यराजन्त (for ह्यदृश्यन्त) —(L. 886) B2 ऋष्टिशक्ति-, D1 असिखड्ग- (for ऋष्टि°) B1 3 D3 D5 ऋष्टिशक्तिगदा दीप्ताः, T1 2 G1 3. 5 M4 यष्टिशक्तिगदा(G4 °महा)खड्ग-(T1 G3 M4 °ड्गा); M2 यष्टिखड्गगदाशक्ति- (for ^a). B3 D6 शूलखड्ग-, T1 2 G1. 3-5 M4 दीप्तशूल-, M2 शूलदीप्त- (for °शक्ति-) —(L. 887) K3 सेव्यमानेषु, V3 B3 D3 5 G1 4. 5 M2 तेष्वनीकेषु, T2 स्वस्वा° (for स्वेष्व°) B1 सर्वश (for भागशः). B3 D6 T1 G3 तेष्वनीकेषु सर्वशः (T1 G3 दानवाः) (for ^b) —(L 889) V3 -सवृत-, Bom Poona eds G(ed) -प्रच्छन्न- (for -सं°). K3 -शिरसो (for -शिखरा) Ñ2 V1 3 B3 Ds D3 6 पर्वता (for पावकाः) —(L. 890) V1 B2 Ds समालोक्य तु, T2 G1 3-5 M2. 4 °लोक्य च (for °लोक्यन्त). —(L. 891) K3 Ñ2 D2. 3 G5 M2. 4 ज्वलनार्क-; T2 G4 ज्वलनाग्नि- (for ज्वलितार्क-) G1 ज्वलनाग्निसमप्रभाः (for ^b). —(L. 893) K4 Ds1 D1 कपालिनः, K4 (also marg.) Ñ1 V1. 3 Dn Ds2 D5 कलापिनः; T1 2 G1. 3-5 M2 4 प्रहारिणः (for पताकिन·) D2 स्थूणबद्धा कलापिनः (for ^b). —(L. 894) D3 दैत्यर्षभा· (for ऋषभाक्षा·). T1 2 G1. 3-5 M2 4 देवासुराः क्रोधदीप्ताश् (for ^a) —(L 895) T1 रथयुक्ताश् (for ध्वजमालाश्). —(L 896) V3 युद्ध- (for रण-). G(ed.) युद्धमासीत्सुदारुणम् (for ^b) —(L 897) T2 G1. 3-5 M4 -शस्त्राणि (for -व°) T1 G3-5 कवचानि च रश्मिभिः (for ^b). —(L. 898) T1 G3. 5 Bom Poona eds G(ed) भासयामास चर्माणि (Bom Poona eds. G(ed) सर्वाणि) (for ^a). —(L 899) B1 3 Dn D6 T1 2 G1 3-5 M2 4 सर्वेषामप्रमेयाना (for ^a) Ñ2 B1 3 Dn Ds D5 6 T1 2 G1. 3-5 M2. 4 बलानां (for °भ्यां) —(L 900) K2 कौशेयं, D1 पत्रोर्णा (for °र्णाः) Ñ1 V3 Ds2 D3 5 6 पत्रोर्णं (V3 ख्यं चोर्वी; D3 वीराणा, D6 चित्रोर्णा) पाण्डुरं दिशः, T1 G3 पत्रोर्णं पाण्डरा दिशः, T2 G1 5 पत्रोर्णा· पदपाण्डरा (T2 °रम्); G4 M2. 4 पत्रोर्णा पाद(G4 पाण्डु)पाण्डरम् (for ^b). —(L 901) B2 Cal. ed दिव्याम्बर-; B3 D6 (marg.) T2 G1. 3-5 M2. 4

प्रतितस्तम्भिरेऽन्योन्यमनीकं प्रत्यनीकतः ॥
गिरिकूटोच्छ्रयाः सर्वे तदा ते देवदानवाः ।
अन्योन्यमभिनिघ्नन्तो रणस्थाश्चित्रयोधिनः ।
बाणैः सुरुचिरैस्तीक्ष्णैः पत्रवाजैर्दुरासदैः ॥ [ 905 ]
मुद्गरैर्मुसलैः शूलैरयस्तुण्डैरुलूखलैः ।
वज्रैरशनिकल्पैश्च खड्गवृक्षादिभिस्तथा ॥
तथा प्रवर्तिते तेषां विमर्देऽद्भुतविक्रमे ।
सावित्रस्य वधं प्रेप्सुर्बाणो जग्राह कार्मुकम् ॥
शरजालेन दिव्येन छादयानः सुरोत्तमम् । [ 910 ]
मन्त्रैर्हुत इवार्चिष्मान्स प्रजज्वाल तेजसा ॥
सागराभ्यां महासेनां देवानां दैत्यपुंगवः ।
संशोषयति बाणौघैरर्कांशुभिरिवार्णवम् ॥

मारुतः स महावेगः सावित्रः शक्तिमुत्तमाम् ।
चिक्षेप बलिपुत्राय शक्रोऽशनिमिवाद्रये ॥ [ 915 ]
आपतन्ती च सा शक्तिर्महोल्का ज्वलिता इव ।
द्विधा छिन्ना क्षुरप्रेण बाणेनाद्भुतकर्मणा ॥
हतायामथ शक्त्यां तु सावित्रो देवसत्तमः ।
विश्वकर्मकृतं दिव्यं सुतीक्ष्णं दानवार्दनम् ॥
सुपीतधारं विपुलं विमलं चन्द्रवर्चसम् । [ 920 ]
अगृह्णान्निशितं खड्गमाशीविषमिवोरगम् ॥
तं गृहीत्वा रणमुखे प्रज्वलन्तं महाप्रभम् ।
बाणाभ्याशे महातेजाः खड्गपाणिरवस्थितः ॥
स तं स्थितमथालक्ष्य सावित्रं बलिनन्दनः ।
लोहिताक्षं महाकायं चिक्षेप च ननाद च ॥ [ 925 ]

---

दीप्तायुध-, Cal ed दीप्ताम्बर- ( for दिव्यायुध- ) — After line 901[a], K3 ins

44 ** ते तदा देववानवाः ।
युद्धं प्रचक्रिरे रम्यं

Ñ2 B3 T2 G1 3 4 M2 -पथे स्थिताः, B1 -रथे स्थिता, , T1 -वधे स्थिताः ( for -परिच्छदा ) G5 M4 दीप्ता युद्धपथे स्थिता ( for [b] ) — T1 om line 902 — ( L 902 ) T2 G1 4 5 M4 -संरेभिरे ( for -तस्तम्भिरे ) K4 D1 परितः ( D1 व्रतिन ) स्तम्भिरेऽन्योन्यम् ( for [a] ) T2 G1 4 M4 प्रत्यनेकश , G3 5 M2 °नीकिन. ( for °नीकतः ) — ( L 903 ) K3 युद्धाय कृतनिश्चया ( for [b] ) — ( L 904 ) B1 -जघ्नुस्ते ( for -निघ्नन्तो ) T1, 2 G1 3–5 M2 4 अन्योन्यमभितो जघ्नु ( for [a] ) T1 2 G1 3–5 M2 4 संयुगे ( for रणस्थाश् ). — Ñ2 om line 905 — ( L 905 ) T1 बाणैरस्त्रैः सुतीक्ष्णैश्च ( for [a] ) K3 पत्रवाहैर्, Ñ2 V1 Ds D2 °राजैर्, V3 यन्त्रचापैर्; D5 पत्रचापैर्; D6 D8 पत्रवद्भिर्, T1 शिताभिश्च, G1 3–5 M2 4 शिलाधौतैर् ( for पत्रवाजैर् ) — T2 G1 om lines 906–908 T2 G4 M2 om line 906 — ( L. 907 ) B1 3 T1 G3–5 M2, 4 वज्रैरशनिभिश्चैव ( for [a] ) T1 G3–5 M2 4 शूलवृक्षासि( M2 °वृक्षाग्र-, M4 °मुद्गर )पट्टसै ( for [b] ) — After line 907, T1 G3–5 M2, 4 ins :

45** एवं तदभवद्युद्धं मेरुपर्वतमूर्धनि ।
सुरदानवसैन्यानां घोरं क्षयकरं महत् ॥

— ( L 908 ) T1 G4, 5 [अ]पि ग्रथिते, G3 M2 4 विग्रथिते ( for प्रवर्तिते ) T1 G5 M2 भूरि, G(ed.) द्रुत- ( for ऽद्भुत- ) B1 ( marg. ) -कर्मणि ( for -विक्रमे ) G3 विमर्दैर्भूरिविक्रमे, G4 °र्दें भूरिविस्रवे ( for [b] ) — ( L 909 ) G4 रथे ( for वधं ) — ( L. 910 ) G4 भिद्यमान. ( for छादयान ) T1 महासुर. ( for सुरोत्तमम् ) D3 T2 G1 छाद्यमानोऽसुरोत्तम, G3 छाद्यमानो महासुर, G4 भिद्यमान सुरोत्तमम्, G5 छाद्यमाने महासुरः, M2 4 छाद्यमा( M4 °दया )नोऽसुरोत्तम ( for [b] ) — ( L, 911 ) K Ñ1 D1–3 मन्त्राहुतिर् ( for मन्त्रैर्हुत ) M4 मन्त्रैरिव हुतार्चिष्मान् ( for [a] ) — ( L 912 ) Ñ1 D3 सागरान्तां ( for °राभ्यां ) Ñ1 V1 दैत्यानां ( for देवानां ). — ( L 913 ) B3 D2 G3 M4 संशोषयत, Ds1 T2 G4 M2 अशोषयत, G1 5 अशोषयच्च ( for संशोषयति ) K4 B2 Dn2 अर्कोंऽशुभिर्; M2 रक्तांशु° ( for अर्कांशु° ) — ( L 915 ) G1 4 M2, 4 [आ]हवे ( for [अ]द्रये ). T2 शक्रोऽशनिं महाहवे ( for [b] ). — ( L 916 ) T2 G1 5 M2 4 तत पतन्ती सा शक्तिर् ( for [a] ). — ( L, 919 ) T1 संदीप्तं, G3 5 M2 4 सुदीप्तं ( for सुतीक्ष्णं ). T2 G1 4 सुदीप्तं दानवापहम् ( for [b] ) — ( L 920 ) K3 सुतीक्ष्णधारं, B3 D6 सुपीनधारं ( for सुपीत° ) V1, 3 B2 Dn Ds1 D2 विमलं, T2 G1, 4 5 M2 ज्वलितं ( for विपुलं ). K1 2 D4 सुधौतं शित( K2 शत )धारं च, T1 G3 M4 सुपीनधार ( M4 °धारा ) ज्वलितं ( for [a] ). K1, 2 4 Ñ1, 2 V1, 3 B Dn Ds D2 4 5 विपुलं, K3 निर्मलं ( for विमलं ) T1, 2 G1 3–5 M2, 4 विपुल चन्द्रदर्शनम् ( for [b] ) — ( L 921 ), Ñ2 B D6 T1 2 G1 3–5 M2 4 आशीविषविषोपमम् ( for [b] ) — ( L 923 ) K3 अदृश्यत, Ds1 इव स्थित, T1 2 G1, 3–5 M2 4 व्यतिष्ठत ( for अवस्थित ) — ( L 924 ) तत्र ( for स तं ) B1 3 D6 तत्र स्थितं समालक्ष्य, T1 2 G1 3–5 M2, 4 तत्र तं स्थित( T2 G1 4 5 संस्थित )तमालोक्य ( for [a] ) — ( L 925 ) B1 3 D3 6 T1 2 G1, 3–5 M2 4 लोहिताक्षो महाबाहु ( B1, 3 D6 °काय.; D3 °काले ) ( for [a] ) D5 चिच्छेद; T1 2 G1 3 4 M2, 4 व्याक्षिपच् ( for चिक्षेप ) — ( L 926 ) K1 स्थिरान्; K2 D1 3 4 स्थितान्; K4 B1 3 Ds T2 G1 4 M2, 4 शरान्; D6 चितान् ( for शितान् ). Dn अशनिप्रतिमाङ्कितान् ( for [b] ),

ततोऽर्ककिरणाकारानशनिप्रतिमाञ्शितान् ।
संदधे चाशु बाणौघानाशीविषसमान्बली ॥
रुक्मपुङ्खान्प्रदीप्ताग्रानुग्रवेगानलंकृतान् ।
आकर्णपूर्णांश्चिक्षेप शरानुग्रान्समन्ततः ॥
दृढचापप्रमुक्तास्ते शरा वैश्वानरप्रभाः । [ 930 ]
सावित्रं छादयामासुः कैलासमिव तोयदाः ॥
संछाद्यमानः शरौघैर्बाणेन बलिसूनुना ।
पराङ्मुखः सुरवरः प्रयातः सरथध्वजः ॥
पराजित्य च सावित्रं बाणः परमहर्षितः ।
प्रगृह्य कार्मुकं घोरं गतः शक्ररथं प्रति ॥ [ 935 ]
बलश्चाप्यसुरश्रेष्ठः प्रगृह्य महतीं गदाम् ।
ध्रुवाय वसवे मूर्ध्नि रौद्रां चिक्षेप दानवः ॥
तस्य निर्मथितो देहो हेमचित्रं च वर्म वै ।
गदावेगेन भीमेन ध्रुवस्य समरे तदा ॥
शेषाश्च वसवः सर्वे दिव्यास्त्रैर्घोरदर्शनैः । [ 940 ]
प्राच्छादयन्रणे दैत्यमादित्यमिव तोयदाः ॥
ततः सोऽमर्षितो बाणैर्बलो दानवसत्तमः ।
अवातरद्रथात्तस्माद्गदामुद्यम्य वेगवान् ॥
पातयामास शत्रूणां समाविध्य महासुरः ।
दिशः प्राद्रावयत्सर्वांस्त्रिदशान्सा महागदा । [ 945 ]
इन्द्राशनिरिवेन्द्रेण प्रवृद्धाः सुमहास्वनाः ॥
तस्याः सुविद्युद्घोषायास्तेन शब्देन वेजिताः ।
व्यद्रवन्त परिभ्रष्टा रथेभ्यो रथिनस्तदा ॥
तदुदीर्णं रथानीकं सूर्याभं मेघनिस्वनम् ।
देवानां शरधाराभिः समन्तादभ्यवर्षत । [ 950 ]
क्षुरप्रैर्विशिखैर्भल्लैर्वत्सदन्तैः शिलीमुखैः ॥

---

— (L 927) K1 2 -विषोषमान्, K8 -समप्रभान्; K4 Dn D1-3 5 -शिलीमुखान्, T1 2 G1 3-5 M2 -समान्वरान् (for °न्बली). D4 तीक्ष्णानाशीविषोपमान् (for $^{b}$) — (L. 928) B2 T2 G1 4 सुदीप्ताग्रान्, D3 तु तीक्ष्णा°, M4 प्रसन्ना° (for प्रदीप्ता°) — (L. 929) K4 V1 3 Dn2 D1 5 -पूरांश् (for -पूर्णांश्) B3 अग्र्यान् (for उग्रान्) — (L. 930) K4 Ñ1 2 V1. 3 B Dn Ds D1-3 -प्रयुक्तास्, D5 G1. 4 -विमु° (for -प्रमु°). M2 दृढचक्रप्रयुक्तास्ते (for $^{a}$). — (L 932) V1 सताड्यमानः, B1 Dn D6 स छाद्यमानः (for सछा°) V3 बलेन (for बाणेन) — (L 934) B1. 3 D6 T1 2 G1 3-5 M2 4 तं पराजित्य; Bom Poona eds. G(ed) पराजित्य स (for °त्य च). K3 स पराजित्य सावित्र्यं (for $^{a}$) B3 बाणः परममर्षितः (for $^{b}$). — (L 936) D2 प्रबलश्च, D3 बलवांश्च, T2 G1 4 M4 बलिश्चापि (for बल°) D3 T1 G3 5 विपुलां (for महतीं) — D3 om lines 937-938 — (L. 937) V1. 3 Ds समरे (for वसवे) T1 2 G1 3-5 M2. 4 शीघ्रं (for मूर्ध्नि) T1 2 G1 3-5 M2 4 दर्पितः (for दानवः). — (L 938) B1. 3 D6 ध्वंसो (for देहो) T3 G1 4 M2 4 तस्य निर्मथिता वाहा; G3 तस्य निर्मथितं ध्वंसे (for $^{a}$) — (L. 940) V1 3 बहवः (for वसव) D3 सुराश्च बहवः सर्वे, T1. 2 G1 3-5 ततः शेषास्तु वसवो (for $^{a}$) T1 भीम- (for घोर-). B3 D6 -दर्शना (for °नै) — (L 941) T2 G2. 4 प्राच्छादयत तान्सर्वान् (for $^{a}$) Ñ1 तोयदै (for °दा) — (L. 942) K1 Ñ1 D1-3 T2 G1 3-5 M2 4 समर्पितो; K2 D4 5 G4 स मर्षितो, T1 Bom Poona eds G(ed) संमर्षितो (for सोऽमर्षितो). K3 ततः समर्पितो राजा (marg बाणैर्); K4 ततः समर्थितो बाणो (for $^{a}$). D3 बाणो; T2 बलाद्; M4 बली (for बलो). — (L 943) K1 2 Ñ2 Ds2 D4. 5 वीर्यवान्, G1 वेगितः (for वेगवान्) — After line 943, T2 G1 3-5 M2 4 ins :

46** सर्वायसमयीं दिव्यां हेमचित्रां गदोत्तमाम् ।

— (L 944) B2 महास्वनः, G3 शिरांस्युत (for महासुरः). — For line 944, B1 3 Ds D6 subst

47** शिरःसु पातयामास शत्रूणां तां गदां तदा ।

— (L. 945) D3 घोरांस् (for सर्वांस्) K1-3 D4 5 त्रिदशांस्तान्; Ñ1 °शानां (for °शान्सा) D3 त्रिदशानां महाचमूम् (for $^{b}$) — (L 946) T1 2 G1 3-5 M2 4 वज्राशनिर् (for इन्द्रा°) T1 2 G1 3-5 M2 4 प्राविद्धा सा महाबला (for $^{b}$). — (L 947) K1 तस्याः सुविद्युद्घोषो यस्; D4 तस्यास्तु विद्युतो घोषास्; T2 G1 3 M2 तस्या विद्युत्सघोषायास् (for $^{a}$) K1 T1 वेपिताः; K2-4 Ñ2 Dn D1. 2. 4 5 G3-5 M2 4 वै जिताः; Ñ1 ते जिताः, V1 3 B2 रेजिताः, T2 G1 वेगिताः (for वेजिता) — (L 948) B1 D5 परित्रस्ता (for °भ्रष्टा). T1 2 G1 4 5 M2 4 रथेभ्यो रथिनां वराः (for $^{b}$) — (L. 949) V1 तद्विकीर्णं (for तदुदीर्णं) — (L 950) T2 G1 M2 4 देवाः सायकधाराभिः (for $^{a}$) D5 पर्यवर्तयत्, T3 G1 M2 4 अभ्यवीवृषन् (M4 °षत्) (for °वर्षत). B1. 3 D6 Cal ed अभ्यवर्षत्समन्ततः (for $^{b}$) — (L 951) K1 G3 क्षुरकैर्, K3-4 Ñ1 2 V1 3 B3 Dn Ds D1 2 4 5 M2 क्षुद्रकैर्; T2 G1 क्षुरप्र- (for °प्रैर्) G5 विविधैर् (for विशिखैर्). T1 M4 क्षुर(M4 °द्र)कैर्विविधैर्भल्लैर् (for $^{a}$). — (L 952) T1 2 G1. 3-5 M2 4 महावीर्याः (for °तेजाः). Ñ1 G5 महासुराः, Ñ3 B1 D5 °सुरम्, Dn D6 T1, 2 G1 M3. 4 °सुरान्

मुहुर्मुहुर्महातेजाः प्रत्यविध्यन्महासुरः ।
बलस्तु स गदापाणिर्व्यादितास्य इवान्तकः ॥
तडिद्गुणार्कसदृशो वैश्वानर इवापरः ।
पिबन्निव शरौघांस्तान्देवचापसमुत्थितान् ॥ [ 955 ]
अभ्यद्रवत दैत्येन्द्रो महार्णव इवापरः ।
अवस्फूर्जन्दिशः सर्वाः स्वेन वीर्येण दानवः ॥
अरुजंस्त्रिदशान्दैत्यः सिन्धुवेगो नगानिव ।
समृद्धस्तरसा देवान्वायुर्वृक्षानिवौजसा ।
शमयंश्च महेष्वासान्वसुभ्यां समसज्जत ॥ [ 960 ]
आपश्चैवानिलश्चैव ववर्षतुररिंदमौ ।
शरवर्षाणि दीप्तानि मेघाविव परंतपौ ।
क्षिप्रांस्तान्विशिखान्दीप्तानन्तरिक्षे स चिच्छिदे ॥ .
अमृष्यमाणस्तत्कर्म ध्रुवस्तमभिदुद्रुवे ।
तौ पृथक्शरवर्षाभ्यामन्योन्यमभिजघ्नतुः ॥ [ 965 ]
उत्तमाभिजनौ शूरौ देवदैत्ययशस्करौ ।
तौ नखैरिव शार्दूलौ दन्तैरिव महाद्विपौ ।
रथशक्तिभिरन्योन्यं विशिखैश्चाभ्यकृन्तताम् ॥
निर्भिन्दन्तौ च गात्राणि विलिखन्तौ च सायकैः ।
स्तम्भयन्तौ च बलिनौ प्रतुदन्तौ स्थितौ रणे । [ 970 ]
चरन्तौ विविधान्मार्गान्मण्डलानि च भागशः ॥
मुद्गरैर्जघ्नतुः क्रुद्धावन्योन्यमभिमानिनौ ।
असिभ्यां चर्मणी दिव्ये विपुले च शरासने ।
निकृत्याचलसंकाशौ बाहुयुद्धं प्रचक्रतुः ॥
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ । [ 975 ]
बाहुभिः समसज्जेतामायसैः परिघैरिव ॥
तयोरासीद्भुजाघातनिग्रहः प्रग्रहस्तथा ।
अतीव भीमः संह्रादो वज्रपर्वतयोरिव ॥
द्विपाविव विषाणाग्रैः शृङ्गैरिव महावृषौ ।
अन्योन्यमभिसंरब्धौ मुहूर्तं पर्यकर्षताम् ॥ [ 980 ]
ततः पराजितो देवो बलकेन तदा ध्रुवः ।

( for °सुर ) — ( L 953 ) K2 D4 बलवांस्तु, Ñ1 2 D2 बलाकस्तु ( for बलस्तु स ) B1 3 D6 बलक( D6 °वां )स्तु महाबाहुर्, T1 2 G1 3–5 M2 बलकस्तु ( T2 G1 °लोऽपि च ) महावीर्यो ( for ᵃ ) — ( L 954 ) Ñ1 Dn1 D1 3 5 6 T1 2 G1 4 तडिद्गुणार्क- ( for तडिद्गु° ) G5 -सदृशान् ( for °शो ) G3 तडिद्गुणार्कसदृशान् ( for ᵃ ) B1 समप्रभ., B3 -समद्युति, D6 -गणप्रभः, T1 2 G1 3–5 M2 4 -समप्रभान् ( for इवापर ) — D4 om ( hapl ) lines 955–956 — ( L 955 ) D4 -समुद्भवान्, ( for °स्थितान् ). K1 D5 वधाय समुपस्थितान्, Ñ1 देवचापमुपस्थितान् ( for ᵇ ) — K3 om line 956 — ( L 956 ) T1 2 G1 3–5 M2 4 अभ्यवर्तत ( for °द्रवत् ) — ( L 957 ) K1–3 D4 अवस्फुर्य, G5 °पूर्य ( for °स्फूर्जन् ) — ( L. 958 ) K3 सर्वान् ( for दैत्यः ) K4 D2 सिन्धुवेगान्नगा इव, D4 सिंहवेगो गजानिव ( for ᵇ ) — ( L 959 ) Ñ1 G3 समुद्रस्, Ñ2 Dn2 D1 4 T1 स मृद्नंस्; B1 3 अमृद्नात्, T3 G1 M4 प्रमृद्नंस् ( for समृद्धस् ). K1 देवो ( for देवान् ) V3 अरुजत्तरसा दैत्यान्, Ds2 स मृद्नन्नुरसा देवान् ( for ᵃ ) T2 G1 साधु ( for वायुर् ) — ( L 960 ) V1 B2 D3 महेष्वासो ( for °ष्वासान् ) — ( L 961 ) K1–3 V1 T3 G1 4 5 [अ]नलश्च for ) [अ]नि° ) T1. 2 G1 3–5 M2. 4 शत्रुसाहाववर्( T1 °म )र्षताम् ( for ᵇ ). — ( L 962 ) T1 2 G1 3–5 M3 4 दिव्यानि ( for दीप्तानि ) — T1 G1 om lines 963–967 — ( L 963 ) Ds वि- ( for स ) B1. 3 D6 चिच्छेद सं नभस्तले ( for ᵇ ) — For line 963, G4 subst .

48** प्रासादान्विविधान्दीप्तानन्तरिक्षे च चिच्छिदु- ।
— ( L 964 ) Ds1 सर्वं ( for कर्म ) — ( L. 965 ) B1 समौ; B3 Ds समं ( for पृथक् ) K3 क्षुर- ( for शर- ) — ( L 966 ) K4 B1 T1 G3–5 वीरौ ( for शूरौ ) D3 द्वा उत्तमाभिजननौ ( for ᵃ ). B1 3 D3 M2- 4 देवदैत्यौ ( for °त्य- ) T1 G3 5 देवदैत्यौ यशस्विनौ ( for ᵇ ). — ( L. 967 ) K3 B3 महागजौ ( for °द्विपौ ). — ( L 968 ) Dn न्यकृन्तताम्, T2 G1. 4 व्यकृन्त°, G3 [अ]प्यकृष्य° ( for [अ]भ्यकृन्त° ) — ( L 969 ) V3 निच्छिन्दन्तौ, D2 निर्भिद्यन्तौ ( for °न्दन्तौ ) — ( L. 970 ) K1 D4 विनदन्तौ, K3 विनिन्दन्तौ, D1 2 3 6 ( *inf lin* ) M2 प्रणुदन्तौ, D2 प्रनर्दन्तौ ( for प्रतुदन्तौ ). T2 G3. 4 रथस्थितौ, G1 रथे रणे ( for स्थितौ रणे ) V1. 3 प्रतर्दन्तौ रथे ( V3 °णे ) स्थितौ, B2 Ds प्रणदन्तौ रणे स्थितौ; M4 प्रणुदन्तौ रथस्थितौ ( for ᵇ ) — In D6, lines 671–1305 are lost on missing folios — ( L. 971 ) K1. 2 D4. 5 विविधानि च मार्गाणि ( for ᵃ ) — ( L 972 ) K4 Ñ1 V1. 3 B1 2 D1 2. 5 T2 G1 4 5 M2 4 मुहुरा- ( for मुद्गरैर् ). B3 मुहुराजघ्नतुः क्रूराव् ( for ᵃ ) M4 -मर्षिणौ ( for -मानिनौ ) T1 2 G1 3–5 M2 तावन्योन्यममर्षिणौ ( for ᵇ ). — ( L 974 ) D3 विकृष्य; G5 निकृत्वा ( for °त्य ). — ( L 975 ) G3 दिव्यभुजौ ( for दीर्घ° ) — K2 om. lines 977–982. G5 om lines 977–981 — ( L 977 ) K1 Ñ2 T1 3 G1. 4 भुजाघातैर्, B1 2 D5 M4 °घातो; D2 4 °घातं ( for °घात- ). G3 M2 तयोरास्तां भुजाघातो ( for ᵃ ). — ( L. 980 ) D5

रथं त्यक्त्वा भयात्तस्य प्रनष्टः प्राङ्मुखो वसुः ॥
पुनरेव च तत्रासीन्महद्युद्धं सुदारुणम् ।
क्रुद्धस्य नमुचेश्चैव धरस्य च महात्मनः ॥
संरब्धौ च महाबाहू महेष्वासावरिंदमौ । [ 985 ]
परस्परमुदीक्षेतां दहन्ताविव लोचनैः ॥
विस्फार्य च महच्चापं हेमपृष्ठं दुरासदम् ।
संरम्भात्स वसुश्रेष्ठस्त्यक्त्वा प्राणानयुध्यत ॥
स सायकमयैर्जालैर्वृतो दैत्यरथं प्रति ।
भानुमद्भिः शिलाधौतैर्भानोः प्रच्छादयत्प्रभाम् ॥ [990]
ततः प्रहस्य नमुचिर्धरस्य च शिलाशितान् ।
असृजत्सायकान्दीप्तान्भीमवेगान्दुरासदान् ॥
महातेजा महाबाहुर्महावेगो महारथः ।
विव्याधातिरथो दैत्यो नवभिर्निशितैः शरैः ॥
स तोत्रैरिव मातङ्गो दार्यमाणः पतत्रिभिः । [ 995 ]
अभ्यधावत संक्रुद्धो नमुचिं वसुसत्तमः ॥
तमापतन्तं वेगेन संरम्भान्नमुची रणे ।
दैत्यः प्रत्यसरद्देवं मत्तो मत्तमिव द्विपम् ॥
ततः प्राध्मापयच्छङ्खं भेरीशतनिनादितम् ।
विक्षोभ्य तद्बलं हर्षादुद्धूतार्णवसप्रभम् ॥ [ 1000 ]
अश्वानृक्षसवर्णाभान्हंसवर्णैः सुवाजिभिः ।
मिश्रयन्समरे दैत्यो वसुं प्राच्छादयच्छरैः ॥
समाश्लिष्टावथान्योन्यं वसुदानवयो रथौ ।
दृष्ट्वा प्राकम्पत मुहुस्त्रिदशानां महद्बलम् ॥
क्रोधसंरक्तताम्राक्षौ प्रेक्षमाणौ मुहुर्मुहुः । [ 1005 ]

---

D5 -धावन्तौ ( for -संरब्धौ ). D5 पर्यधावताम् ( for °कर्षताम् ). T1 G3. 5 बाहुभिः समकर्षताम् ( for $^{b}$ ) — ( L 981 ) Ñ1 तदा पराजितौ दैत्यौ ( for $^{a}$ ). Ñ1, 2 B2 G1 बलाकेन ( for बल° ). — ( L 982 ) Dn2 भुक्त्वा ( for त्यक्त्वा ). D3 [अ]नुयातश्च , T1 G3–5 भयार्तश्च ( for °त्तस्य ) Ñ2 B1 D5 T2 G1 4. 5 प्रतस्थे ; T1 प्रयातः ( for प्रनष्ट ). M2 ध्रुव· ( for वसुः ). — After line 982, K1 Ñ3 V1 3 B Ds D5 ins an addl colophon [ *Sub-parvan* K1 Ñ2 V1. 3 B2 वामनः ; B1. 3 Dn Ds D5 वामनप्रादुर्भाव — *Adhy no* . V1 230 , V3 D2s 240 ; Dn 239 ].

— Before line 983, K1 4 Ñ1 2 V1. 3 B Dn Ds D1–5 ins वैशंपायन· — ( L 983 ) K3 Dn महायुद्धं ( for महद्युद्धं ). T2 G1 4 तदा रणे , G5 M2 4 महारणे ( for सुदारुणम् ). — ( L. 984 ) T1 2 G3–5 M2 4 क्रुद्धयोर् ( for °स्य ) D1 तस्य ( for चैव ). V1 B3 ध्रुवस्य ( for धरस्य ). — ( L 985 ) K3 संनद्धौ च ; T2 संरब्धेन ( for °ब्धौ च ). — ( L. 986 ) Ñ1 B1 2 Dn1 Ds D2 T1 G1 3–5 उदैक्षेतां , D3 उदीक्षन्तौ ( for °क्षेतां ). — ( L 987 ) Ñ2 V1 3 विस्फारयन् , D3 °र्यं सु- ( for °र्यं च ) K1–3 Dn D5 T1 G3. 5 महाचापं ( for महच्चाप ). Ds विस्फारयन्महाचापं ( for $^{a}$ ) K3 हेमावृत्तं ( for हेमपृष्ठ ). G3 M2 4 दुरानमम् ( for °सदम् ). — ( L 988 ) G3 5 M2. 4 संरब्ध· ( for संरम्भात् ) K3 V1 सुरश्रेष्ठस् ( for वसु° ) V3 सरब्धात्स सुरश्रेष्ठस ; D3 संरम्भात्त्रिदशश्रेष्ठस् ( for $^{a}$ ) T2 G1 4 M2 4 ततो रणे ( for अयुध्यत ) — ( L 989 ) K2 यानैर् , K4 बाणैर् ( for जालैर् ) B3 om. lines 989$^{b}$–993$^{a}$. K4 Ñ2 V3 B1 2 Ds D1 2 T1. 2 G1 3–5 M2 4 धरो , V1 ध्रुवो ; Dn क्षिप्तैर् ( for वृतो ). — ( L. 990 ) K2 3 D1. 4 5 T1. 2 G1. 3 प्रच्छादयन् ; K4 V1 B1, 2 Ds2 D2 M2 प्राच्छादयत् ( for प्र° ) D3 भित्त्वा प्राच्छादयत्प्रभाम् ( for $^{b}$ ) — ( L 991 ) T1. 2 G1 3–5 M2 4 प्रगृह्य ( for प्रहस्य ) V1 ध्रुवस्य च , T1 G1 3–5 M2 तूर्णं तूर्णाच् , T2 तूर्णं तूणी- , M4 तूर्णं तूर्ण- ( for धरस्य च ) K4 -शतान् ( for -शितान् ) — ( L. 992 ) D3 तीक्ष्णान् , T1 2 G3–5 M2 4 चैव ( for दीप्तान् ) — ( L 993 ) T1 G3 महावेगैर् ( for °वेगो ) G5 M2 4 महावेगैर्महारथम् ( for $^{b}$ ). — ( L 995 ) K2 दन्तैर् ( for तोत्रैर् ) T1 G3–5 भुक्तैरतिजवैस्तेन ( for $^{a}$ ) Ñ2 V1 2 B1 3 Dn1 Ds वार्यमाणः ; दीर्य° , T1 G3 धार्य° ( for दार्य° ) — ( L 996 ) K1 अभ्यधावत्स ; K2 D4 °त्सु- , G3 Bom Poona eds G(ed) °न्त ( for °त ) G1 M2 4 सुर- ( for वसु- ) — ( L 997 ) K2 D4 संरब्धो , T2 G1, 3–5 M2 4 सहसा ( for संरम्भान् ) Ñ1 D3 नमुचिं रभसं रणे , B1 3 नमुची रभसाद्रणे ( for $^{b}$ ) — ( L. 998 ) K4 अभ्यसरद् ( for प्रत्य° ). G1 मत्तो मत्तमिव द्विप· ( for $^{b}$ ) — ( L 999 ) K3 Ñ2 D5 T1 -निनादिनम् ; T2 G1 3 4 M2 4 -विनादित( G3 °न )म् ( for -निनादितम् ) G5 भेरीनादविनादितम् ( for $^{b}$ ) — ( L. 1000 ) Ds1 उद्वृत्तार्णव- ; D3 उद्धता° ( for उद्धूता° ) K2 V1 -संप्रभम् , G3. 5 M2 -संनिभम् ) ( for -सप्रभम् ) B3 Ds2 D5 उद्धूतार्णवसंप्रभम् ; T1. 2 G1 4 M4 उद्धू( M4 °द्धृ )तार्णवसनि° ( for $^{b}$ ) — ( L. 1001 ) Dn दिव्यसु- ( for ऋक्षस- ) B1. 5 Ds D5 -वर्णांश्च ; T1 G5 M4 -वर्णांस्तु ( for -वर्णाभान् ) T2 G1 3 M2 अश्वान्दृष्ट्वा सवर्णांस्तु ( for $^{a}$ ) T2 G1 M2. 4 सवर्णिभि. ( for सुवाजिभिः ). Ñ2 हंसयुक्तैः सवाजिभि. ( for $^{b}$ ) — ( L. 1003 ) B3 Cal. ed समाश्लिष्टा ( Cal. ed °ष्टौ ) तथान्योन्यं ; Ds समाश्लिष्य तथा° ( for $^{a}$ ) K4 तयो ( for रथौ ). — ( L 1004 ) स्वर्गस् ( for मुहुस् ) T1 G3 5 महाचमूः , G1 M2 महाबलम् ( for महद्ब° ) — ( L. 1005 ) Ñ1, 2 B3 -संरम्भ- ( for -संरक्त- ).

गर्जन्ताविव शार्दूलौ प्रभिन्नाविव वारणौ ॥
महामेघोपमं रौद्रमासीदायोधनं तयोः ।
रथाश्वनरसंबाधं मत्तवारणसंकुलम् ॥
समाजमिव तं दृष्ट्वा प्रेक्षमाणौ महारथौ ।
आशंसन्ते जयं ताभ्यां योधास्ते गणशः स्थिताः ॥
तयोः प्रैक्षन्त समरं संनिकृष्टं महास्त्रयोः ।
सिद्धगन्धर्वमुनयो देववदानवयोस्तदा ॥
तौ छादयन्तावन्योन्यं समरे निशितैः शरैः ।
शरजालावृतं व्योम चक्रतुस्तौ महाबलौ ॥
तावन्योन्यं जिघांसन्तौ शरैस्तीक्ष्णैर्महारथौ । [ 1015 ]
प्रेक्षणीयतरावास्तां वृष्टिमन्ताविवाम्बुदौ ॥
सुवर्णविकृतान्बाणान्प्रमुञ्चन्तावरिंदमौ ।
भास्कराभं तदाकाशमुल्काभिरिव चक्रतुः ॥
तयोः शराः प्रकाशन्ते देवदानवयोस्तदा ।
पङ्क्त्यः शरदि मत्तानां सारसानामिवाम्बरे ॥ [ 1020 ]
त्रिदशाश्वगजानां हि शरीरैर्गतजीवितैः ।
क्षणेन संवृता भूमिर्मेघैरिव नभस्तलम् ॥
ततः सुधारं ज्वलितं सूर्यमण्डलसंनिभम् ।
धराय वसवे मुक्तं चक्रं नमुचिना रणे ॥
पतता तेन चक्रेण धरस्य स्यन्दनोत्तमः । [ 1025 ]
सध्वजः सपताकश्च दग्धोऽर्ककिरणप्रभः ॥
स त्यक्त्वा स्यन्दनं देवः प्रदीप्तं चक्रतेजसा ।
भयात्तस्यासुरेन्द्रस्य गतः स्वगृहमुत्तमम् ॥
पराजित्य सुरं दैत्यो नमुचिर्बलदर्पितः ।

---

T2 G4 M2 -रक्ताक्षाव्, G3 5 M4 -नयनाव् ( for -ताम्राक्षौ ) B3 T1 G1 क्रोधसंरम्भरक्ताक्षाव् ( T1 °नयनाव् ) ( for ᵃ ) K1 3 D4 समन्तत , B1 3 Ds परस्परम् ( for मुहुर्मुहु. ) T1 G3 M2 4 अन्योन्यं समवैक्षताम्, T2 G1 4 5 अन्योन्य समुदैक्षत ( G5 °ताम् ) ( for ᵇ ) — ( L 1006 ) T1 गर्जिताव् ( for गर्जन्ताव् ) — ( L 1007 ) K3 Ñ2 B3 यमराष्ट्रोपमं रौद्रम्, T1 M2 4 महार( T1 °शृ )ङ्गोपमं रौ°, T2 G1 °रम्भोपमं रौ°, G3 5 महारङ्गोपमे तस्मिन् ( for ᵃ ) — ( L 1008 ) K2 D4 -भर-, T1 3 G1 3 5 M2 4 -वर-, G4 -पत्ति- ( for नर- ) B1 3 Cal ed नराश्वरथसंबाध ( for ᵃ ) D3 -मातङ्ग- ( for -वारण- ) D1 अकृत्वा रणसंकुलम् ( for ᵇ ). — ( L 1009 ) V1. 3 संसक्तम् ( for समाजम् ) B1 3 Ds D5 G3 5 प्रेक्षमाणा महारथाः ( for ᵇ ) — ( L 1010 ) K1 2 Ñ2 V1 3 Dn D3 4 T2 M4 आशंसन्तौ, K3. 4 Ñ1 B Ds D1 2 5 T1 G3 °सन्तो ( for °सन्ते ) K4 D1 योधाश्चैवैकतोऽश्रयन्, Ñ1 योधा नैवैकमाश्रया , B2 योधा नैकैकतोऽश्रयन्, Dn योधा नैकत्र संश्रया· ; D2 योधा नैवैकत. श्रियम्, D5 योधास्ते गणसंस्थिताः, T1 G3. 5 योधास्तु गणशस्तदा, T1 G1 4 M2 4 परस्परसमाश्रयम् ( for ᵇ ). — After line 1010, T1 G3 5 ins

49** परस्परं प्रार्थयन्त परस्परसमाश्रयाः ।

— D3 om line 1011 — ( L 1011 ) K3 ऐक्षन्त ( for प्रै° ) K4 Ñ1 2 V1 3 B2 Dn D1 2 5 T1 2 G1. 3–5 M2 संरम्भं ( for समर ) M4 तयोर्वैक्षन्त संरम्भं ( for ᵃ ) K4 D1 2 संनिकृष्टमहाभया· ( for ᵇ ) — ( L 1012 ) D5 देवता सुरराक्षसाः ( for ᵇ ). — For line 1012, Ñ1 subst :

50** सिद्धचारणगन्धर्वमुनयो दानवास्तथा ॥

— ( L. 1015 ) K1 महारथैः, Ñ1 °बलौ, T1 शितै· शरै· ( for महारथौ ). G3–5 रणे च निशितैः शरैः ( for ᵇ ). — For line 1015, T2 G1 M2 4 subst

51** आसादयेतामन्योन्यं तौ रणे निशितैः शरैः ॥

— ( L 1016 ) D2 T1 2 G1 3 प्रेक्षणीयतमावास्तां ( for ᵃ ). D3 वृष्टिवाताव् ( for °मन्ताव् ) — ( L 1017 ) K4 मुञ्चतौ ताव्, T1 2 G1 3–5 M4 विमुञ्चन्ताव् ( for प्रमु° ). — ( L. — ( L 1018 ) T1 2 G1 4 5 M2 4 रणे प्रकाशमाकाशम्; G3 रणे प्रकाशमुल्काभिर् ( for ᵃ ) K1 उल्काभम् ( for उल्काभिर् ). M2 तयोश्चैवाविचक्रतु ( for ᵇ ) — ( L 1020 ) Ñ1 [अ]म्बुदे· ( for [अ]म्बरे ). — ( L 1022 ) T2 संभृता ( for संवृता ). — ( L 1023 ) D5 विमलं, T1 G1. 4 M2. 4 विपुलं ( for ज्वलितं ) G5 तत सुधांशुविपुलं ( for ᵃ ) — ( L 1024 ) B1 वधाय ( for धराय ) V1 वधाय समरे मुक्तं ( for ᵃ ). — ( L 1025 ) D3 तेन मुक्तेन चक्रेण ( for ᵃ ). T1 2 G1. 3–5 M2 4 धरस्य स रथोत्तमः ( for ᵇ ) — ( L 1026 ) K1 D4 सध्वज सपताकाश्वो ; V3 B1 3 °ज सायुधः साग्नो, T1 2 G1 3–5 M2 4 सपताकध्वज साश्वो ( for ᵃ ) K1 दीप्तार्क-, V3 दग्धोऽत्र, Ds1 दग्धार्क- ( for दग्धोऽर्क- ). — ( L 1027 ) B1 3 तं रथं ( for स्यन्दनं ) T1 2 G1. 3–5 M2 4 संत्यज्य तं रथं देव ( for ᵃ ) K1 प्रतप्तं, G4 प्रदग्धं ( for प्रदीप्तं ) — ( L 1028 ) B1 3 गतः खं वसुसत्तम· ; T1 2 G1 3–5 M2 4 गतः शक्ररथं प्रति ( for ᵇ ) — ( L 1029 ) D5 [अ]मरं, G3 5 धरं, M2 वसुं ( for सुरं ) T2 देवं ; M4 देवो ( for दैत्यो ) B1 3 पराजित्यासुरो देवं ( for ᵃ ). K1 2 Ñ1. 2 Ds D4 5 T1. 2 G1 3–5 M2 4 -गर्वितः ( for -दर्पितः ) — ( L 1030 ) D3 M4 ऽसुर ( for स्वेन ). K1–3 D4 5 स्वेन सैन्येन स ययौ ( for ᵃ ) D3 इन्द्ररथं ; T2 G1. 4 स च चमूं ( for सुरचमूं ) — After line 1030, T1. 2 G1, 3–5 M2 4 ins an addl. colophon [ *Sub parvan* T2

प्रयातः स्वेन सैन्येन भूयः सुरचमूं प्रति ॥ [1030]
यौ तौ मयश्च त्वष्टा च देवदैत्येषु विश्रुतौ ।
प्रवरौ विश्वकर्माणौ मायाशतविशारदौ ॥
घोरस्तयोः संप्रहारः प्रावर्तत सुदारुणः ।
अन्योन्यस्पर्धिनोस्तत्र चिरात्प्रभृति संयुगे ॥
त्वष्टा तु निशितैर्बाणैर्दैत्यं तु बलदर्पितम् । [1035]
पराक्रान्तं पराक्रम्य विव्याध त्रिशता शरैः ॥
मयस्तु प्रतिविव्याध त्वष्टारं निशितैः शरैः ।
सुधौतैः सुप्रसन्नाग्रैः शातकुम्भविभूषितैः ॥
ननाद दितिजश्रेष्ठो हतस्त्वष्टुः शरैर्मयः ॥
संक्रुद्धो दैत्यसैन्यस्य विचिन्वन्निव जीवितम् । [1040]
शक्तिं कनकचित्राक्षां चित्रदण्डां महाप्रभाम् ।
देवो गृहीत्वा समरे दैत्येन्द्रे संन्यपातयत् ।
भीमां सर्वायसीं त्वष्टा पुरंदर इवाशनिम् ॥
तां त्वष्टुर्भुजनिर्मुक्तामर्कवैश्वानरप्रभाम् ।
मयश्चिच्छेद तीक्ष्णाग्रैस्तूर्णं सप्तभिराशुगैः ॥ [1045]
ततः क्षिण्वन्निव प्राणांस्त्वष्टुः कोपान्महासुरः ।
प्रेषयामास संरब्धः शरान्बर्हिणवाससः ॥
चिच्छेद बाणांस्त्वष्टा ताञ्ज्वलितैर्नतपर्वभिः ।
दैत्यस्य सुमहावेगैः सुवर्णविकृतैः शरैः ॥
तौ वृषाविव नर्दन्तौ बलिनौ वाशितान्तरे । [1050]
शार्दूलाविव चान्योन्यं प्रसक्तावभिजघ्नतुः ॥
अन्योन्यं प्रतिविध्यन्तावन्योन्यवधकाङ्क्षिणौ ।
अन्योन्यमभिवीक्षन्तौ क्रुद्धावाशीविषाविव ॥

---

G1. 3 5 M2 4 वामनप्रादुर्भावः — *Adhy name* G3 देवासुरद्वन्द्वयुद्धम् — *Adhy no* T1 G4 301, G1 297; G3 5 M3 5 303, M2 4 13 ]

— Before line 1031, B2 Ds T1 G1 3–5 M2 4 ins वैशंपायन उवाच. — (L 1031) B1 3 T1 2 G1 3–5 M2 4 अथ त्वष्टा मयश्चैव (for ᵃ). — (L 1032) Ñ1 T1 G3. 5 M2. 4 प्रयुद्धौ, T2 G1. 4 प्रसिद्धौ (for प्रवरौ) T1 2 G1. 3–5 M2 4 -सृजौ तदा (for -विशारदौ) — (L 1033) Ñ1 आसीत (for घोरस्) — For line 1033, B1 3 T1 2 G1. 3–5 M2 4 subst :

52** तयो· प्राणहरस्त्वासीत्संप्रहारो महात्मनो: ।
[ B1 प्रहरतोस् (for प्राणहरस्). ]

— (L 1034) K1 2 D1 4 -स्पर्धिनौ, D5 °तौ (for °नोस्) Ñ1 अन्योन्यस्य विना तत्र, D3 °न्यस्पर्धिनौ तौ तु (for ᵃ) Ñ1 दीप्तिमान्, B1 3 दीप्तयो (for सयुगे) — For line 1034, T1 2 G1 3–5 M2 4 subst :

53** चिरात्प्रभृति संरम्भादन्योन्यस्पर्धिनौ रणे ।
[ T1 सरब्धाव् (for °म्भाद्) ]

— (L. 1035) Ñ2 D5 दैत्येन्द्रं, V3 Dn D1 2 दैत्यं तं; T1 G1. 3–5 M2 4 आयान्तं (for दैत्यं तु) D4 -दर्पित· (for °तम्). Ñ1 V1 B1 3 D3 दैत्यं तं बलगर्वितम्, D5 दैत्येषु बलदर्पित: (for ᵇ) — (L 1036) K3 त्रिंशतै, B3 बहुभि, D1 5 निशितैः (for त्रिंशता) — K4 om (hapl) line 1037 — (L 1037) Ñ1 त्रिंशता; V3 T2 G1 4 M2 4 बहुभि: (for निशितै·) — (L 1038) B T1 2 G1 3–5 M4 महावेगै: (for सुधौतैः सु-) M2 महावेगै प्रधानाग्रै· (for ᵃ) G1 om. lines 1038ᵇ–1039ᵃ. — T2 M2 4 om line 1039 — (L 1039) V1 ननन्द (for ननाद). B Ds1 D3 -श्रेष्ठं (for -श्रेष्ठो) K1 2 4 Dn D1 2 4 5 G4 हत्वा त्वष्टु·, Ñ1 D3 हत्वा त्वाष्टं, V1 हत्वा त्वष्टा (for हतस्त्वष्टु·) Ñ2 B Ds हत्वा त्वष्टा शरैर्मयम्, T1 G3 5 हतस्त्व(G5 °त्वा त्व)ष्टु· शरान्मयः (for ᵇ) — (L 1040) V3 सुसंक्रुद्धो मयो दैत्यो; T1 2 G3 5 M2 4 संक्रुद्धो मयदैत्यस्य (T1 °स्तु) (for ᵃ). — (L. 1041) B5 चिक्षेप (for कनक-) K1 D4 -चित्राख्या, K3 Ñ1 B1 3 T2 G1 -वैडूर्य-, V1 -चित्राभां, B2 °ङ्गीं, D3 °भा; T1 G3. 5 M2. 4 वैडूर्यैश् (for -चित्राक्षां) T2 G1 M2. 4 अयस्मयीम् (for महाप्रभाम्) T1 चित्रा घोरामयोमयाम्, G3–5 चित्रां घोरामयस्मयीम् (for ᵇ) — K4 om (hapl.) lines 1042–1044 — (L. 1042) Ñ1 B1 3 T1 2 G1 3–5 M2. 4 दैत्येन्द्रं (B1 3 °न्द्रे) प्रत्यवासृजत्; Bom Poona eds. G(ed) °न्द्रं समपातयत् (for ᵇ) — (L 1043) B1 D5 T1. 2 G1 3 4 दृष्ट्वा (foo त्वष्टा) D1 2 पुरंदरम्, G1 4 पुरुरूप (for पुरंदर) — (L 1044) D3 दृष्ट्वा, T2 G4. 5 M2. 4 सूर्य- (for अर्क-). — (L. 1045) B1 3 T1 G3 M2. 4 शीघ्रं (for तूर्णं) — G1 om. lines 1046–1048. — (L. 1046) K1. 2 चिन्वन्, Ñ2 V1 3 B2 D3 G3 4 क्षिपन्, D3 T1 क्षुण्वन्, G5 क्षपन् (for क्षिण्वन्) — (L 1047) T2 G3. 5 M2. 4 संक्रुद्ध: (for संरब्ध·) — (L 1048) V3 बाणैस् (for बाणांस्). — (L 1049) M2 -महाघोरै: (for °वेगै:). — (L. 1050) K2 बलिनावितरेतरम् (for ᵇ) — (L. 1051) Ñ1 प्रसक्तम्; B3 प्रमत्ताव्, T1 2 G1 3–5 M2 4 असक्तम् (for प्रसक्ताव्). K3 4 Dn इव (for अभि-) D3 प्रसक्ताविव जग्मतु: (for ᵇ). — (L 1052) K1–3 Ñ2 B1 D4 5 युध्यन्ताव्, D1 -वध्य° (for -विध्य°). T1 2 G1 3–5 M2. 4 अन्तरं प्रवि(T2 G4 3 °ति)चिन्वन्ताव् (for ᵃ) Ñ2 B1 3 T1 2 G1 3–5 M2 4 अन्योन्यस्यान्तरेषिणौ (for ᵇ). — (L 1053) B3 G5 M2. 4 -वीक्षेतां (for

महागजाविवासाद्य विषाणाग्रैः परस्परम् ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ [ 1055 ]
ततः स विपुलां दीप्तां मयो रुक्माङ्गदां गदाम् ।
त्वष्टुः सम्प्राहिणोत्क्रुद्धः सर्वप्राणहरां रणे ॥
तया जघानातिरथस्त्वष्टुरुत्तमवाजिन ।
गदया दानवः क्रुद्धो वज्रेणेन्द्र इवाचलान् ॥
ततः क्रुद्धो महादैत्यः क्षुराभ्यां तस्य संयुगे । [ 1060 ]
ध्वजं त्वष्टुरथ च्छित्त्वा सूतं निन्ये यमक्षयम् ॥
दृष्ट्वा त्वष्टा हतं सूतं क्षुराभ्यां विनिपातितम् ।
हताश्वं रथमुत्सृज्य सूतं च पतितं भुवि ।
विस्फारयन्महाचापं स्थितो भूमौ महाबलः ॥

हताश्वसूतं विरथं दृष्ट्वा रिपुमवस्थितम् । [1065]
जयश्रिया सेव्यमानो दीप्यमान इवाचलः ॥
मयः कालान्तकप्रख्यश्चापपाणिरिवान्तकः ।
प्रादहद्देवसैन्यानि दावाग्निरिव काननम् ॥
त्वष्टुः सोऽक्षिपतात्युग्रान्नाराचांस्तिग्मतेजसः ।
चतुर्दश शिलाधौतान्सायकान्विविधाकृतीन् ॥ [ 1070 ]
ते पपुस्तस्य देवस्य शोणितं रुक्मभूषणाः ।
आशीविषा इव क्रुद्धा भुजगाः कालचोदिताः ॥
ते क्षितिं समवर्तन्त शोभन्ते रुधिरोक्षिताः ।
अर्धप्रविष्टाः सरब्धा बिलानीव महोरगाः ॥
ते प्रकाशन्त नाराचाः प्रविशन्तो वसुंधराम् । [ 1075 ]

---

-वीक्षन्तौ ) $K_{2}$ $D_{4}$ सर्पाद्, $D_{3}$ क्षुब्धा (for क्रुद्धाव्) —(L 1054) $K_{4}$ $Dn_{2}$ $D_{1\,2}$ [आ]सन्नो (for [आ]साद्य) $\tilde{N}_{2}$ $V_{1\,3}$ $D_{5}$ गजाविव समासाद्य (for [a]) —(L 1055) $K_{1\,2}$ $D_{4}$ शरैः पूर्णायतोत्क्षिप्तैर् (for [a]) — $K_{2}$ om lines 1056-1057 —(L 1056) $T_{1\,2}$ $G_{1\,3-5}$ $M_{2\,4}$ मयस्तु (for ततः स) $T_{1\,2}$ $G_{3-5}$ $M_{2\,4}$ ततो (for मयो) $\tilde{N}_{1}$ $D_{5}$ $G_{1}$ रुक्माङ्गदो, $M_{4}$ रुक्ममयीं (for रुक्माङ्गदां) $V_{1}$ शुभाम्; $V_{3}$ हताम् (for गदाम्) —(L 1057) $K_{3}$ त्वष्टा स, $\tilde{N}_{1}$ $V_{3}$ $D_{2-4}$ त्वष्टुः स; $B_{1}$ $D_{3}$ $G_{3}$ त्वष्टरि, $B_{3}$ त्वष्टारं, $T_{1\,2}$ $G_{1\,4\,5}$ $M_{2\,4}$ त्वष्ट्रे स (for त्वष्टुः सं-) $D_{4}$ -प्रहरणां (for -प्राणहरां). —(L 1058) $\tilde{N}_{1}$ -वाजिषु (for °नः) —(L 1059) $D_{3}$ स तया (for गदया) $K_{3}$ गदया दानवश्रेष्ठो (for [a]). $K_{4}$ $\tilde{N}_{1}$ $T_{2}$ $G_{4}$ $M_{2\,4}$ [अ]चलम् (for °लान्). — After line 1060, K $\tilde{N}_{1.2}$ $V_{1\,3}$ B D ($D_{6}$ missing) ins :

54** पुनर्द्वाभ्यां शराभ्यां तु निशिताभ्यां महारणे ।
[ $K_{1.2}$ $D_{4}$ क्षुराभ्या (for श°).]

—(L 1061) $T_{1\,2}$ $G_{1\,3-5}$ $M_{2\,4}$ त्वष्टुः पुनश्च (for त्वष्टुरथ). $D_{1}$ ध्वजस्त्वष्टुरथ छित्त्वा (for [a]) $K_{4}$ $\tilde{N}_{2}$ $V_{1}$ $Ds_{1}$ $D_{2}$ प्रेक्ष्य; $D_{1}$ प्रेष्य (for निन्ये) — After line 1061, K $\tilde{N}_{1\,2}$ V B D ($D_{6}$ missing) ins :

55** महाबलान्महावेगान्सदश्वान्गदयाहनत् ।
[ $K_{3}$ महाबलो, $B_{1\,3}$ °कायान् (for °बलान्) $K_{3}$ वेगवत (for महावेगान्) $K_{1}$ हृतान्, $K_{2\,3}$ $V_{3}$ $D_{3\,4}$ हतान् (for [अ]हनत्).]

—(L 1062) $K_{1}$ $D_{4}$ च तं सूतं, $K_{3}$ ध्वजं सूतं; $B_{1.3}$ तु समरे (for हतं सूतं). $D_{5}$ दृष्ट्वा ध्वज च सूतं च; $T_{1\,2}$ $G_{1.3-5}$ $M_{2.4}$ त्वष्टा दृष्ट्वा तु समरे (for [a]) $B_{1\,3}$ ध्वजं सूतं च पातितम्, $D_{5}$ क्षुरप्राभ्यां निपातितम्, $T_{1.2}$ $G_{1.3-5}$ $M_{2.4}$ सूतमश्वांश्च पातितान्, Bom Poona eds G(ed) अश्वांश्च विनिपातितान् (for [b]) —(L 1063) $D_{5}$ हृताश्व- (for हताश्वं). $D_{1}$ हतम्; $T_{2}$ $G_{1\,4\,5}$ $M_{4}$ सुतम् (for रथम्) $B_{1\,3}$ $D_{5}$ $T_{1}$ $G_{3}$ $M_{2}$ हताश्वसूतमुत्सृज्य (for [a]) $B_{1\,3}$ $D_{5}$ $M_{2}$ रथं भूमौ व्यवस्थित, $T_{1\,2}$ $G_{1\,3-5}$ $M_{4}$ रथं भूमौ व्यतिष्ठत (for [b]). —(L 1064) $B_{1\,3}$ विस्फार्य सुमहच्चापं (for [a]) $T_{1}$ इवाचलः (for महाबल.) $B_{1\,3}$ $T_{2}$ $G_{1\,3-5}$ $M_{2\,4}$ युद्धाय कृतनिश्चय. (for [b]) — $K_{1\,2}$ $D_{4}$ om line 1065 —(L 1065) $B_{3}$ Cal ed कृत्वा रिपुमवस्थित (for [b]) —(L 1066) $K_{1-3}$ $\tilde{N}_{1}$ $B_{1\,2}$ $D_{4\,5}$ $T_{1}$ $G_{1\,3-5}$ $M_{4}$ [अ]नलः (for [अ]चल.). —(L 1067) $K_{3}$ अवस्थितः, $B_{1\,3}$ $T_{1\,2}$ $G_{1\,3-5}$ $M_{2\,4}$ अदृश्यत (for इवान्तक·) —(L 1068) $K_{4}$ $\tilde{N}_{1\,2}$ $V_{1\,3}$ $D_{3}$ $D_{2.5}$ प्रदहन्. $B_{1}$ $T_{1\,2}$ $G_{1\,3-5}$ $M_{2\,4}$ निर्दहन्, $D_{3}$ प्रहरन् (for प्रादहद्) $B_{3}$ निर्दहन्सर्वसैन्यानि (for [a]) $V_{3}$ $T_{1}$ $G_{1.3-5}$ $M_{4}$ पर्वतान् (for काननम्) $\tilde{N}_{2}$ कालाग्निरिव पर्वतम्, $Ds_{1}$ $M_{2}$ दवाग्निरिव पर्वतान् (for [b]) —(L 1069) $K_{3}$ त्वष्टासाव् (for त्वष्टुः सो) $D_{2}$ $T_{2}$ $G_{1\,4\,5}$ $M_{2\,3}$ ऽक्षिपद् (for ऽक्षिपत) $B_{1\,3}$ $D_{5}$ [अ]त्युग्रो (for [अ]त्युग्रान्) —(L 1070) $B_{2}$ $D_{3}$ आयसान् (for सायकान्). $T_{1\,2}$ $G_{1\,3-5}$ $M_{2.4}$ आयसा($M_{2}$ °युधा)न्विश्वकर्मण· (for [b]) —(L. 1071) $K_{1\,2\,4}$ $\tilde{N}_{1\,2}$ $V_{3}$ Dn $D_{1\,4}$ $G_{3}$ सैन्यस्य; $K_{3}$ दैत्यस्य, $D_{3}$ देहस्य (for देवस्य) $Dn_{2}$ रक्त- (for रुक्म-). $Dn_{1}$ -भूषणम् (for °णाः) —(L 1072) $K_{1\,2\,5}$ -नोदिता. (for चोदिताः). $K_{3}$ $D_{4}$ भुजंगाः कालनोदिताः (for [b]) —(L. 1073) $V_{3}$ $B_{1\,3}$ ते तु क्षितिं समासाद्य (for [a]). $B_{1\,3}$ स्वासृगोक्षिताः (for रुधिरो°) — For line 1073, $T_{1\,2}$ $G_{1\,3-5}$ $M_{2.4}$ subst :

56** ते पतन्त· क्षितितले दृश्यन्ते स्वासृगुक्षिताः ।

— $T_{2}$ $G_{1}$ om lines 1075-1076 —(L. 1075) $B_{1.3}$

अस्तं गच्छन्तमादित्यं प्रविशन्त इवांशवः ॥
तं प्रत्यविध्यत्त्वष्टा तु जाम्बूनदविभूषितैः ।
चतुर्दशभिरत्युग्रैर्नाराचैरभिदारयन् ॥
ते तस्य दैत्यस्य भुजं सव्यं निर्भिद्य पत्रिणः ।
विदार्य विविशुर्भूमिं भुजगा इव वेगिताः ॥ [ 1080 ]
मयस्त्रिभिरथानर्च्छत्त्वष्टारं तु पतत्रिभिः ।
सपत्रवेगैर्विकृतैर्ज्वलद्भिः प्राणनाशनैः ॥
त्वष्टाथ मयनिर्मुक्तैः सायकैरर्दितः प्रभुः ॥
अपयातो रणं हित्वा व्रीडयाभिसमन्वितः ॥
तं तत्र हतसूताश्वं भुजंगमिव निर्विषम् । [ 1085 ]
त्वष्टारं विरथं दृष्ट्वा मुदितः स तु दानवः ॥
विस्फारयन्सुरुचिरं चापं रुक्माङ्गदं दृढम् ।
रणेऽभ्यतिष्ठद्दैत्येन्द्रो ज्वलन्निव हुताशनः ॥
पुलोमा तु बलश्लाघी दृप्तो दानवसत्तमः ।
रणे श्वेताश्वयुक्तेन रथेन प्रत्यदृश्यत ॥ [ 1090 ]
सर्वेषामेव भूतानां यः प्राणः कथ्यते द्विजैः ।
बलिना कालकल्पेन वायुना सह संगतः ॥
पुलोम्नस्तत्र पवनः श्रुत्वा ज्यातलनिस्वनम् ।
नामृष्यत यथा मत्तो गजः प्रतिगजस्वनम् ॥
दैत्यचापच्युतैर्बाणैः प्राच्छादयन्त दिशो दश । [ 1095 ]
रश्मिजालैरिवार्कस्य विततं साम्बरं जगत् ॥
स ताम्रनयनः क्रुद्धः श्वसन्निव महोरगः ।
वृतो दैत्यशतैर्वायू रश्मिवानिव भास्करः ॥
दैत्यचापभुजोत्सृष्टाः शरा बर्हिणवाससः ।

---

व्यकाशन्त ( for प्र° ) $D_{s1}$ महीधरान्, $G_5$ $M_4$ रसातलम् ( for वसुंधराम् ) — ( L. 1076 ) $D_5$ च रश्मय. ( for इवांशवः ). — $K_1$ $\tilde{N}_1$ $V_1$ $D_{1\ 2\ 5}$ om line 1077 — ( L. 1077 ) $D_8$ तं प्रतिविव्याध त्वष्टा ( for $^{a}$ ) — ( L 1078 ) $T_1$ $G_1$ om lines $1078^{b}$–$1081^{a}$. $V_1$ आभि दानवान्, $D_2$ अभ्यदारयत् ( for आभिदारयन् ) — ( L 1079 ) $D_3$ सर्वें ( for सव्यं ) $K_3$ निर्भिद्य तु पतत्रिण ( for $^{b}$ ) — ( L 1080 ) $B_{1\ 3}$ Cal. ed प्राविशन् ( for विविशुर् ) $D_5$ वेगिनः ; $M_4$ चोदिता. ( for वेगिताः ) $T_1$ $G_3$ पन्नगा इव चोदिताः ( $G_3$ वेगत ) ; $G_{4.5}$ $M_2$ भुजंगा इव चोदिताः ( for $^{b}$ ) — ( L 1081 ) $\tilde{N}_1$ पुनस् ( for मयस् ). $K_2$ [अ]भ्यर्च्य ( for [आ]नर्च्छत् ) $B_{1\ 3}$ $D_3$ $T_1$ $G_{3-5}$ $M_{2.4}$ मयस्तु त्रिभिरत्युग्रैस् ( for $^{a}$ ) $T_2$ $G_{1\ 3-5}$ $M_{2.4}$ त्वष्टारं नतपर्वभि ( for $^{b}$ ) — ( L 1082 ) $K_{1\ 2}$ $D_4$ पतत्रि- ; $\tilde{N}_2$ $V_1$ सुवर्ण-, $V_3$ $B_2$ सुपर्ण- ( for सपत्र- ) $K_3$ -रागैर् ( for -वेगैर् ) $D_3$ अर्दयामास दैत्येन्द्रो ( for $^{a}$ ) $D_3$ -नाशन ( for °नै. ). — For line 1082, $B_{1.3}$ $T_{1\ 2}$ $G_{3-5}$ $M_{2\ 4}$ subst :

57** अर्दयामास दैत्येन्द्रो ज्वलितैः शोणिताशनै· ।

[ $B_1$ ज्वलद्भि , $T_1$ $G_{3-5}$ विशिखै ( for ज्वलितै ) ]

— ( L 1083 ) $B_{1\ 3}$ $D_8$ भृशम्, $T_2$ $G_{1\ 3-5}$ $M_{2\ 4}$ तदा ( for प्रभुः ). $T_1$ सायुधैरर्दितस्तदा ( for $^{b}$ ) — ( L 1084 ) $V_1$ बलं ( for रणं ) $K_3$ त्यक्त्वा ( for हित्वा ), $B_{1\ 3}$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ अपायाच्चाप( $B_{1\ 3}$ °द्रथ )मुत्सृज्य ( for $^{a}$ ). $T_{1\ 2}$ $G_{1.3-5}$ $M_{2\ 4}$ व्रीडया समभिप्लुत· ( for $^{b}$ ) — ( L. 1085 ) Bom. Poona eds G(ed) सूतं च ( for -सूताश्वं ) — ( L 1086 ) $\tilde{N}_1$ निहतं, $D_3$ तं गतं ( for विरथं ) B $T_{1\ 2}$ $G_{1.3-5}$ $M_{2\ 4}$ कृत्वा ( for दृष्ट्वा ) $M_3$ रथस्थ ( for मुदितः ) $T_1$ $G_5$ मुदितो दानवेश्वर· ; $T_2$ $G_{1\ 4}$ $M_2$ °तो दानवोत्तम ; $G_3$ °तो मानवेश्वरः ( for $^{b}$ ). — ( L. 1087 ) $K_{1\ 2\ 4}$ Dn $D_{1.2.4}$ विस्फा( $Dn_1$ °स्फो)रमाणो रुचिरं, $\tilde{N}_{1\ 2}$ $V_{1\ 3}$ $B_2$ $D_8$ $D_{3.5}$ °र्यमाणो रुचिर, $T_{1.2}$ $G_{1,3-5}$ $M_{2\ 4}$ विष्फारयानो विपुलं ( for $^{a}$ ). $D_3$ जातरूपाङ्गदं शुभम्, $M_4$ जातरुक्मविभूषितम् ( for $^{b}$ ). — ( L 1088 ) $K_4$ $\tilde{N}_2$ $B_2$ Dn $D_2$ $G_2$ व्यतिष्ठद् ; $T_1$ $G_5$ $M_{2.4}$ ऽवतस्थे, $T_2$ $G_{1\ 4}$ ऽवतस्थौ ( for ऽभ्यतिष्ठद् ). — After line 1085 $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ ins an. addl colophon [ *Sub-parvan* $T_2$ $G_{1\ 3}$ $M_{2\ 4}$ वामनप्रादुर्भाव — *Adhy. no* $T_1$ $G_4$ 802, $G_1$ 298 ; $G_{3\ 5}$ 304 ; $M_{2\ 4}$ 14 ].
— Before line 1089, $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ ins. वैशंपायन उवाच· — ( L 1089 ) $V_{1\ 3}$ $B_3$ रण- ; $M_4$ जय- ( for बल- ) $K_{1.2}$ दीप्तो ( for दृप्तो ) — ( L 1090 ) $K_{1.2\ 4}$ $\tilde{N}_1$ $B_2$ $D_{1.2.4.5}$ रथे श्वेतहयेनेह, $K_3$ श्वेताश्वरथयुक्तेन, $\tilde{N}_2$ $V_{1\ 3}$ $D_8$ रणे श्वेतहयेनेह, Dn रथे श्वेतहये तिष्ठन् ( for $^{a}$ ) $K_{1\ 2\ 4}$ $V_{1.3}$ $B_2$ Dn $D_{1-5}$ सार्धं युध्यति वायुना ( $V_3$ दानवः ); $K_3$ [अ]नेहसा समयुध्यत ( for $^{b}$ ). — After line 1090, $B_{1\ 3}$ $D_8$ $T_{1\ 2}$ $G_{1.3-5}$ $M_{2\ 4}$ ins .

58** ततो वै सर्वभूतानां शरीरान्तरचारिणाम् ।

[ $T_{1.2}$ $G_3$ $M_2$ तत्रासौ, $G_{1\ 4\ 5}$ $M_4$ तत्रासन् ( for ततो वै ). ]

— $B_{1\ 3}$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ om line 1091 — ( L 1091 ) $\tilde{N}_2$ $V_3$ $D_5$ कीर्त्यते ( for कथ्यते ) $V_1$ बुधै ( for द्विजैः ). — ( L 1092 ) $B_{1\ 3}$ $D_8$ सहायुध्यत वायुना ( for $^{b}$ ). — ( L. 1093 ) $T_1$ $G_3$ घात- ( for -तल- ) — $D_8$ om ( hapl ) line 1094 — ( L 1094 ) $K_2$ $D_4$ [अ]तृप्यत ( for [अ]मृष्यत ). — ( L 1096 ) $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ विततैरग्निसंनिभै. ( $T_1$ °धौ ) ( for $^{b}$ ) — ( L 1097 ) $T_1$ $G_3$ $M_2$ संरक्त- ; $T_2$ $G_{1\ 4.5}$ $M_4$ सरक्त- ( for स ताम्र- ) — ( L 1098 ) $T_2$ $G_3$ $M_{2.4}$ बभौ ( for वृतो ) $K_4$ Dn $D_{1-3}$ दैत्यशरैर् ( for °शतैर् ). $K_3$ $B_{1.3}$ $T_2$ $G_{1\ 4\ 5}$ बभौ दैत्य( $K_3$ तीक्ष्ण )शरैर्वायू ( for $^{a}$ ). $T_2$

रुक्मपुङ्खा व्यराजन्त हंसाः श्रेणीकृता इव ॥ [ 1100 ]
चापध्वजपताकाभ्यः शङ्खा दीप्तमुखाश्च्युताः ।
प्रपतन्तः स्म दृश्यन्ते दैत्यस्यायुतशः शराः ॥
एवं सुतीक्ष्णान्खचराञ्शलभानिव पावके ।
सुवर्णविकृतांश्चित्रान्मुमोच दितिजः शरान् ॥
तमन्तकमिव क्रुद्धमापतन्तं स मारुतः । [ 1105 ]
त्यक्त्वा प्राणानतिक्रम्य विव्याध नवभिः शरैः ॥
तस्य वेगमसंहार्यं दृष्ट्वा वायुः सनातनः ।
उत्तमं जवमास्थाय व्यधमत्सायकव्रजान् ॥
ततो विधम्य बलवाञ्शरजालानि मारुतः ।
विव्याध दैत्यं विंशत्या विशिखैर्नतपर्वभिः ॥ [ 1110 ]
मरुद्गणानां प्रवरा दश दिव्या महौजसः ।
साधु साध्विति वेगेन सिंहनादं प्रचक्रिरे ॥
तस्मिन्समुत्थिते शब्दे तुमुले लोमहर्षणे ।
अभ्यधावन्त दितिजाः पौलोमाः क्रोधमूर्छिताः ॥
ते समासाद्य पवनं समावृण्वञ्शरोत्तमैः । [ 1115 ]
पर्वतं वारिधाराभिः प्रावृषीव बलाहकाः ॥
ते पीडयन्तः पवनं क्रुद्धाः सप्त महारथाः ।
प्रजासंहरणे घोराः सोमं सप्त ग्रहा इव ॥
ततो दक्षिणमक्षोभ्यं नानारत्नविभूषितम् ।
करं गजकराकारमुद्यम्य युधि मारुतः ॥ [ 1120 ]
तेषां मूर्धसु दैत्यानां पातयामास वीर्यवान् ।
निहता वायुवेगेन सप्त तेन महारथाः ॥
त्यक्त्वा प्राणान्पुलोमा तु विव्याध नवभिः शरैः ।
तस्यापि तमसंहार्यं दृष्ट्वा वायुः सनातनः ।
असंचिन्त्य शरौघांस्ताञ्ज्वलितान्वै पुलोमतः ॥ [ 1125 ]
तेषां विदार्य तेजांसि दानवानां महात्मनाम् ।
शोणितक्लिन्नमुकुटा गैरिकार्द्रा इवाद्रयः ॥

---

रश्मिमाली ( for °वान् ) — ( L 1099 ) $T_1$ -समुत्सृष्टा·, $G_5$ -गुणो° ( for भुजो° ) — ( L 1100 ) $K_{1\ 2\ 4}$ $\tilde{N}_{1\ 2}$ $V_{1\ 3}$ $B_{2\ 3}$ Dn Ds $D_{1\ 3}$ व्यकाशन्त, $T_1$ $G_{3\ 5}$ प्रकाशन्ते, $T_2$ $G_{1\ 4}$ $M_{2\ 4}$ प्रविबभुर् ( for व्यराजन्त ) $T_1$ $G_5$ श्रेणीगता ( for °कृता ) — ( L. 1101 ) $T_1$ -पताकेषु, $T_2$ $G_{1\ 3-5}$ $M_{2\ 4}$ °कासु ( for °काभ्य· ) $B_2$ तथा ( for शङ्खा ) $B_1$ -मुखाद्युगात् ( for °श्च्युताः ) $B_3$ Cal ed छत्रादीषामुखाद्युगात्, $D_3$ छत्रेषायुगचक्रतः; $T_1$ $G_3$ $M_2$ छत्रेषु युगवाजिषु, $T_2$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ छत्रेष्वयुगपायुषु ( for $^b$ ) — ( L 1102 ) $B_3$ आपतन्त स्म, $D_1$ प्रास्रवन्तश्च ( for प्रपतन्त· स्म ) $K_4$ $D_{1\ 2}$ $G_3$ [आ]पतत· ( for [अ]युतश ) $D_3$ दैत्यचापच्युता शराः ( for $^b$ ) — ( L. 1103 ) $T_1$ $G_3$ वायवे ( for पावके ) — ( L 1104 ) $T_{1\ 2}$ $G_{1.\ 3-5}$ $M_{2\ 4}$ प्राहिणोन्निशितान्शरान् ( for $^b$ ) — ( L 1105 ) $T_{1.\ 2}$ $G_{1\ 3-5}$ $M_4$ समन्तत· ( for स मारुत ) — ( L. 1106 ) $\tilde{N}_1$ $D_3$ $T_1$ $G_{3\ 5}$ निशितैः, $V_1$ बहुभि ( for नवभिः ). — ( L. 1107 ) $D_5$ तस्य वेगमहाश्चर्यं ( for $^a$ ) — ( L. 1108 ) $T_{1.\ 2}$ $G_{1.\ 2-5}$ $M_{2\ 4}$ वेगम् ( for जवम् ) $K_2$ $D_4$ विव्याध ( for व्यधमत् ) $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ सायकान्शितान्, $G_3$ °कान्शरान् ( for °कव्रजान् ) — ( L. 1109 ) Bom Poona eds. G(ed.) तेजो ( for ततो ) $K_2$ विधाय, $D_5$ विधुन्वन्, $T_{1\ 2}$ $G_{1\ 3-5}$ विमथ्य ( for विधम्य ) $T_{1.\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ शलभानिव मारुत· ( $G_{1.\ 3-5}$ पावक· ) ( for $^b$ ) — After line 1109, $D_3$ ins ·

59** विव्याधोरसि तीक्ष्णाग्रैः शरै शक्तिभिरायसैः ।

— ( L 1110 ) $T_2$ $G_{1.\ 3.\ 4}$ $M_{2.\ 4}$ विंशद्भिर् ( for °त्या ) $B_2$ विव्याधोरसि तीक्ष्णाभिः, $D_3$ तमन्तकनिभप्रख्यैर् ( for $^a$ ) $B_2$ शरशक्तिभिरायसै ( for $^b$ ) — ( L 1111 ) $G_3$ प्रथमं; $G_5$ प्रथमा ( for प्रवरा ) $D_3$ -दिक्षु-, $D_5$ दिव्यान् ( for दिव्या ) $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ महारथाः ( for महौजस ). — ( L 1112 ) Bom ed योगेन ( for वेगेन ). — ( L. 1113 ) $K_2$ $D_4$ समुदिते ( for °त्थिते ) — ( L 1114 ) $D_8$ अभ्यद्रवन्त ( for °धावन्त ) — For line 1115, $B_{1\ 3}$ $D_8$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ subst

60** तत प्रच्छादयामासु पवनं शरवृष्टिभि ।

— ( L 1117 ) $B_3$ शतश· ( for पवनं ) — ( L 1118 ) $D_8$ रेजु ( for प्रजा- ) $D_5$ -संग्रहणे ( for -संहरणे ) $T_{1\ 2}$ $G_{1.\ 3-5}$ $M_{2\ 4}$ प्रतिया( $G_{1\ 4\ 5}$ $M_2$ °त्तिय )ता रणे घोरे ( for $^a$ ). $D_{s2}$ महाग्रहा ( for ग्रहा इव ) — ( L 1120 ) $V_3$ B Ds $D_3$ करि· ( for गज- ) — ( L 1122 ) $K_{3\ 4}$ $\tilde{N}_1$ Dn $D_{2\ 3}$ निहिता ( for निहता ) $T_2$ $G_{1\ 3-5}$ $M_4$ बाहु-, $M_2$ बाण- ( for वायु- ). $G_{1\ 4\ 5}$ हते सप्त ( for सप्त तेन ) — $T_2$ $G_{1\ 4}$ $M_{2\ 4}$ om lines 1124–1126 — ( L 1124 ) $K_4$ $D_1$ तदर्पितम्; $\tilde{N}_2$ तस्य वै तम्; $D_3$ तस्यार्पितम्, $T_1$ $G_{3\ 5}$ तस्य वेगम्, Bom Poona eds G(ed ) प्रदर्पितम् ( for तस्यापि तम् ) $B_2$ दृष्ट्वा वेगं स मारुतः, $D_5$ Bom Poona eds G(ed ) दृष्ट्वा वायुं सनातनम् ( for $^b$ ). — ( L 1125 ) नाचिन्तयच् ( for असंचिन्त्य ). Bom Poona eds G(ed ) सुरौघांस् ( for श° ) $T_1$ संछिद्य च सुरौघांस्ताञ्, $G_3$ स संछिद्य सु° ( for $^a$ ) $\tilde{N}_2$ $D_{n2}$ $D_1$ क्ष्वेडितान्वै पुलोमनः ( for $^b$ ) — ( L 1126 ) $T_1$ $G_{3.\ 5}$ तेषां विदारयामास ( for $^a$ ). $T_1$ $G_{3.\ 5}$ वपूंषि स ( for महा-

ते भिन्नवर्मास्थिभुजाः पतन्तो भान्ति दानवाः ।
मातङ्गयूथसंरुग्णाः पुष्पिता इव पादपाः ॥
तेषां विदारितैर्देहैर्दानवानां महात्मनाम् । [ 1130 ]
ततः प्रावर्तत नदी रौद्ररूपा भयावहा ॥
प्रस्रवन्ती रणे रक्तं भीरूणां भयवर्धिनी ।
देवदैत्यगणैश्चैव रुधिरौघपरिप्लुता ।
रणभूमिरभूद्रौद्रा तत्र तत्र सहस्रशः ॥
संभृता गतसत्त्वैश्च यक्षराक्षसखेचरैः । [ 1135 ]
सानुकर्षपताकैश्च सोपासङ्गैर्ध्वजै रथैः ॥
शीर्णकुम्भैस्तथा नागैर्घण्टाभिः सुविभूषितैः ।
सुवर्णपुङ्खैर्ज्वलितैर्नाराचैस्तिग्मतेजसैः ॥
देवदानवनिर्मुक्तैः सविषैरुरगैरिव ।
प्रासतोमरनाराचैः शक्तिखड्गपरश्वधैः ॥ [ 1140 ]
सुवर्णविकृतैश्चापैर्गदामुसलपट्टिसैः ।
कनकाङ्गदकेयूरैर्मणिभिश्च सकुण्डलैः ॥
तनुत्रैः सतलत्रैश्च हारैर्निष्कैश्च शोभनैः ।
हतैश्च दितिजैस्तत्र शस्त्रस्यन्दनवर्जितैः ॥
पतितैरपविद्धैश्च शतशोऽथ सहस्रशः । [ 1145 ]
निपातितध्वजरथो हतवाजिरथद्विपः ।
विमर्दो देवसैन्यानां सदृशः कर्मणां बभौ ॥
अथ दैत्यसहस्रेण पौलोमेन महारथः ।
संवृतः पवनः श्रीमान्गदामुसलपाणिना ॥
ते जघ्नुः शतसाहस्राः पवनं दानवोत्तमाः । [ 1150 ]
तैर्वध्यमानः स बभौ समन्तादर्पितैः शरैः ॥

---

त्मनाम् ) — ( L 1127 ) K$_{1\ 4}$ Ñ$_{1\ 2}$ V$_{1\ 3}$ B Dn Ds D$_{3\ 5}$ गैरिकाक्ता, K$_{2}$ D$_{4}$ °काख्या, D$_{1}$ °कान्ता ( for °कार्द्रा ). — ( L 1128 ) D$_{1\ 2}$ -चर्मास्थि- ( for -व° ) D$_{4}$ ते मर्मास्थि भुजां सर्वे ( for $^{a}$ ) T$_{2}$ G$_{1\ 4}$ द्रवन्तो दानवा रणे ( for $^{b}$ ) — ( L 1129 ) Ñ$_{1}$ -युद्ध- ( for -यूथ- ) K$_{4}$ -संतुल्या., Ñ$_{2}$ V$_{1\ 3}$ Ds D$_{5}$ संभग्ना ( for -संरुग्णा ) T$_{1\ 2}$ G$_{1\ 3-5}$ M$_{2\ 4}$ मातङ्गयूथपै रुग्णा ( for $^{a}$ ). T$_{1\ 2}$ G$_{1\ 3-5}$ M$_{2.4}$ किंशुका ( for पादपा. ) — ( L 1131 ) M$_{2\ 4}$ घोर- ( for रौद्र- ) Ñ$_{1}$ T$_{1}$ G$_{3}$ भयानका ( for °वहा ) T$_{2}$ G$_{1\ 4\ 5}$ घोररूपा भयानका ( for $^{b}$ ) — T$_{2}$ G$_{1\ 4}$ M$_{2\ 4}$ om line 1133 — ( L 1133 ) G(ed ) देवैर्दैत्य- ( for देवदैत्य- ) K$_{4}$ -गणाश्चैव, Ñ$_{2}$ -गजा°, B Dn T$_{1}$ G$_{3.\ 5}$ -गजाश्वाना, D$_{5}$ -गणांश्चैव ( for -गणै° ) Dn$_{1}$ -परिष्कृता ( for °प्लुता ) — ( L 1134 ) D$_{5}$ बभौ ( for अभूद् ) T$_{1}$ समाश्रयै ( for सहस्रशः ) — ( L 1135 ) K$_{1\ 2}$ Ñ$_{2}$ V$_{1\ 3}$ Ds D$_{3\ 4}$ T$_{1.\ 2}$ G$_{1\ 3-5}$ M$_{2\ 4}$ संवृता, K$_{3}$ सस्तृता ; D$_{5}$ संस्तुता, G$_{1}$ संगता ( for संभृता ) M$_{3}$ हतैश्च दितिजैश्छिन्नैर् ( for $^{a}$ ). T$_{1}$ G$_{3.\ 5}$ -दानवै. ( for खेचरैः ) — ( L 1136 ) K$_{1\ 2}$ Ñ$_{1\ 2}$ V$_{1\ 3}$ B Ds D$_{4}$ सानुषङ्ग-, K$_{4}$ Dn D$_{1\ 2\ 6}$ T$_{1}$ °गैः स- ; Ñ$_{1}$ °षङ्गैर् ( for °कर्ष- ) K$_{1\ 3}$ Ñ$_{2}$ V$_{1\ 3}$ Ds D$_{3.\ 4}$ T$_{2}$ G$_{1\ 3-5}$ M$_{4}$ सोपासङ्ग- ; B$_{1}$ Cal ed पातितैश्च ( for सोपासङ्गैर् ) D$_{5}$ M$_{2}$ सोपासङ्गरथध्वजै. ( for $^{b}$ ). — ( L 1137 ) B$_{2}$ शीर्णदण्डैस् ( for °कुम्भैस् ) T$_{1\ 2}$ G$_{1\ 3-5}$ M$_{2\ 4}$ रथध्वज- ( for घण्टाभिः सु- ) — ( L 1138 ) K$_{3}$ -रेखैर्, D$_{5}$ -पुङ्ख- ( for -पुङ्खैर् ) V$_{1}$ विकृतैर् ; D$_{3}$ पतितैर्, G$_{3\ 5}$ विशिखैर् ( for ज्वलितैर् ) K$_{3}$ om lines 1138$^{b}$–1139$^{a}$ K$_{1}$ Ñ$_{1}$ B Ds D$_{4}$ तिग्मतेजितै, T$_{2}$ स्निग्धतेजनै, G$_{4\ 5}$ M$_{2\ 4}$ तिग्मतेजनैः ( for °सै ) — ( L 1139 ) T$_{2}$ G$_{3-5}$ M$_{2\ 4}$ ज्वलद्भिर् ( for सविषैर् ) D$_{5}$ भुजगैर् ( for उरगैर् ). — ( L. 1140 ) B$_{1.\ 3}$ Ds -भल्लैश्च, T$_{1}$ G$_{3-5}$ M$_{2.\ 4}$ -शक्तीभि., T$_{2}$ G$_{1}$ -शक्त्यष्टि- ( for -नाराचै ) T$_{1\ 2}$ G$_{1\ 3-5}$ M$_{2\ 4}$ खड्गैश्च स- ( for शक्तिखड्ग- ) — ( L 1142 ) D$_{2}$ काञ्चनाङ्गदकेयूरैर् ( for $^{a}$ ). Dn मुकुटैश् ( for मणिभिश् ) K$_{3}$ च सकुलै, D$_{3}$ स संकुलै ( for सकुण्डलै. ) Ñ$_{1}$ B$_{1\ 3}$ मुकुटै ( Ñ$_{1}$ मणिभि ) कुण्डलै. शुभै ; T$_{1\ 2}$ G$_{1\ 3-5}$ M$_{2\ 4}$ कुण्डलैर्हैमभूषितै ( for $^{b}$ ). — ( L 1143 ) B$_{3}$ तलत्रै, T$_{1}$ सभुजै ( for तनुत्रैः ) V$_{1\ 3}$ स( V$_{3}$ सु )तनुत्रैश्, Ds सुतल° ( for सतल° ) K$_{1\ 2}$ D$_{4}$ तनुत्रैः सुतलैश्चैव, D$_{3}$ तलत्रै. सतनुत्रैश्च ( for $^{a}$ ) D$_{5}$ दिव्यैश् ( for निष्कैश् ) K$_{3}$ B$_{3}$ शोभितै ( for शोभनैः ). — ( L 1144 ) B$_{1}$ भिन्नैः, T$_{1\ 2}$ G$_{1\ 3-5}$ M$_{2}$ छिन्नैः ( for तत्र ) B$_{3}$ हतैश्चादितिजैर्भिन्नै ; M$_{4}$ हतैश्च निशितैश्छिन्नै ( for $^{a}$ ) K$_{2}$ D$_{5}$ गज- ; T$_{1}$ चित्र, G$_{1\ 3\ 4}$ M$_{2}$ छत्र- ( for शस्त्र ) D$_{3}$ -वल्गितै, D$_{3}$ -वाहनै ( for -वर्जितै ) K$_{1}$ D$_{4}$ गजस्यन्दनवल्गितै, T$_{2}$ G$_{5}$ छत्रस्यन्दनदार्शि( G$_{5}$ °वाजि )तैः ( for $^{b}$ ) — ( L. 1145 ) D$_{3}$ अपरैर्विद्धैः ( for अपविद्धैश्च ) B T$_{1\ 2}$ G$_{1\ 3-5}$ M$_{2\ 4}$ भूर्बं( B प्रब )भौ द्यौरिव ग्रहै ; D$_{2}$ हारैर्निष्कैश्च शोभनै ( for $^{b}$ ). — ( L 1146 ) निनादित- ( for निपातित- ) D$_{4}$ निपातिते ध्वजरथे ( for $^{a}$ ) T$_{2}$ G$_{1\ 4\ 5}$ M$_{4}$ -सुर- ( for -रथ- ). B$_{3}$ -ध्वजः ( for -द्विप ) — For line 1146, D$_{3}$ subst. :

61** निपातितैर्ध्वजरथै रथैर्निहतवाजिभिः ।

— ( L. 1147 ) D$_{4}$ ऽभूच्च ( for देव- ) K$_{3}$ Ñ$_{1}$ B Dn Ds D$_{4}$ कर्मणा ( for °णां ) T$_{1\ 2}$ G$_{1\ 3-5}$ M$_{2.\ 4}$ विपाक कर्मणामिव ( for $^{b}$ ). — ( L 1148 ) T$_{1}$ G$_{3\ 5}$ महाबल, T$_{2}$ M$_{2.\ 4}$ समन्वित, G$_{1\ 4}$ समन्ततः, Bom Poona eds G(ed.) महासुरः ( for °रथः ) — ( L 1149 ) D$_{5}$ संवृत्य, G$_{1}$ सुवृतः ( for सं° ). B$_{3}$ T$_{1}$ G$_{3\ 5}$ M$_{2\ 4}$ -मुद्गर- ( for -मुसल- ). K$_{3}$ -पाणिभिः ( for °ना ). D$_{3}$ महामुसलपाणिना ( for $^{b}$ ). — ( L. 1151 )

रुधिरौघा महावेगा महानद्यः प्रसुस्रुवुः ॥
दानवः समरे रुद्र नीलाञ्जनचयोपमः ।
निर्बिभेद शरैस्तीक्ष्णैर्मेरुं सूर्य इवांशुभिः ॥
हतैर्दानवमुख्यैश्च शक्तिशूलपरश्वधैः । [ 1710 ]
पतितैः पर्वताभैश्च दानवैः कामरूपिभिः ॥
वर्तमाने महाघोरे संग्रामे लोमहर्षणे ।
महाभेरीमृदङ्गानां पणवानां च निस्वनैः ॥
शङ्खवेणुस्वनोन्मिश्रः संबभूवाद्भुतोपमः ।
हतानां स्वनतां तत्र दैत्यानां चापि निस्वनैः । [ 1715 ]
सुराणामसुराणां च संबभूव महास्वनः ॥
तुरंगमखुरोत्कीर्णं रथनेमिसमुद्धतम् ।
रुरोध मार्गं योधानां चक्षूंषि च धरारजः ॥
शस्त्रपुष्पोपहारा सा तत्रासीद्युद्धमेदिनी ।
दुर्दर्शा दुर्विगाह्या च मांसशोणितकर्दमा ॥ [ 1720 ]
भग्नैः खड्गैर्गदाभिश्च शक्तितोमरपट्टिशैः ।
अपविद्धैश्च भग्नैश्च रथैः सांग्रामिकैर्हतैः ॥
निहतैः कुञ्जरैर्मत्तैस्तथा त्रिदशदानवैः ।
चक्राक्षयुगशस्त्रैश्च भग्नैरवनिपातितैः ।
बभूवायोधनं घोरं पिशिताशनसंकुलम् ॥ [ 1725 ]
उत्पेतुश्च कवन्धानि दिक्षु सर्वासु सयुगे ।

---

$V_{1\ 3}$ $B_2$ $Ds_1$ °रोदा ( for °रौघा ) $\tilde{N}_1$ रुधिरौघपरिच्छन्ना ; $B_3$ $D_6$ °घप्रवाहिन्यो ( for $^a$ ) — ( L. 1708 ) $K_1$ $\tilde{N}_2$ $B_{2.3}$ $D_{1-4}$ $T_2$ $G_{1\ 3-5}$ -चयोपमम् , $\tilde{N}_1$ °मै ( for °म ) — ( L. 1709 ) $T_1$ प्रबिभेद शरैर्घोरैर् ( for $^a$ ) $G_5$ घनं , $M_{2\ 4}$ मेघं ( for मेरुं ) — $D_1$ om lines 1710–1711. — ( L 1710 ) $D_3$ शरशक्ति- ( for शक्तिशूल- ) — ( L. 1711 ) $K_1$ अत्युग्रै , $T_2$ $G_{1.4\ 5}$ $M_{2.4}$ निहतैः ( for पतितैः ) $D_4$ पर्वताभैश्च रौद्रैश्च ( for $^a$ ). $T_{1\ 2}$ $G_{1.3-5}$ $M_{2\ 4}$ राक्षसैः ( for दानवैः ). — After line 1711, $T_{1\ 3-5}$ $M_{2.4}$ ins :

102** तत स रुद्र समरे मुष्टिनाभिहतस्तदा ।
पपात सरथः साश्वः पुराट्ट इव भूतले ॥

— After the above, $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ ins an addl colophon [ *Sub-parvan* . $T_2$ $G_1$ $M_{2\ 4}$ वामनप्रादुर्भाव . — *Adhy name* · $G_3$ चक्रसाध्यबलमृगव्याधराह्वजएकपाद्बुन्द्व-युद्धम् . — *Adhy no.* . $T_1$ $G_4$ 309 , $G_1$ 350 , $G_{3\ 5}$ 311 ; $M_2$ 21 ].

— $K_{1-3}$ om line 1712 — ( L 1712 ) $T_2$ $G_{1\ 4.5}$ $M_{2.4}$ तथा रौद्रे ; $G_2$ महारौद्रे ( for °घोरे ) — After line 1712, $K_{1-3}$ Dn $D_{4\ 6}$ ins :

103** विरेजुस्ते तदा दैत्या पुष्पिता इव किंशुकाः ।

While, $T_{1.2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ ins. afrer line 1712 ·

104** रुधिरोदा महावेगा महानद्यः प्रसुस्रुवुः ।

[ $T_2$ रुधिरौघा ( for °रोदा ) $T_1$ $G_3$ रुधिरौघप्रवाहिन्यो ( for $^a$ ) ]

— ( L. 1714 ) $K_{1-3}$ $D_4$ -स्वनोन्मिश्रै ( for °श्रः ) $B_{1\ 3}$ $D_6$ $T_2$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ शङ्खानां पटहानां च ( for $^a$ ). $B_{1\ 3}$ $D_6$ महास्वन ( foı [अ]द्भुतोपमः ) $T_1$ $G_3$ बभूव सुमहास्वन , $T_2$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ संबभूवुर्महास्वना. ( for $^b$ ) — ( L 1715 ) $K_4$ $V_{1.3}$ $D_3$ स्तनतां ( for स्व° ) $K_{2\ 3}$ $D_6$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ हतानां हन्यमानानां , $B_3$ °नां स्तनमानानां , $D_4$ °नां पतमानानां ( for $^a$ ) — $D_3$ om ( hapl ) line 1716 — ( L. 1716 ) $B_{1\ 3}$ $D_6$ देवानां च तथा तत्र , $B_2$ सुराणां वध्यमानानां , $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ नर्दतां त्रिदशानां च ( for $^a$ ) $B_2$ महारणे ( for °स्वनः ). $B_{1\ 3}$ $T_1$ $G_3$ शुश्रुवे दारुणो महान् , $T_2$ $G_{1.4.5}$ $M_{2\ 4}$ संयुगेऽत्र सुदारुणम् ( for $^b$ ). — ( L. 1717 ) $K_{1.4}$ $\tilde{N}_1$ $V_1$ Dn -खु- ( $K_1$ -ख )रोद्गीर्णं ; $Ds_1$ -खुरैर्दीर्णं , $T_1$ रथोत्कीर्णं ( for -खुरो° ). $Ds_2$ $T_2$ $G_{1.5}$ तुरंगमुखरोत्कीर्ण ( for $^a$ ). $K_1$ $D_{2\ 5}$ -स्वनोद्धतम् , $K_2$ -स्वनोद्भवम् ; $K_4$ -समुद्भवम् , $B_{1\ 2}$ $D_6$ $G_5$ -समुद्धृतम् ; $D_1$ -स्वनोद्धूतम् ; $T_3$ $G_{1.3}$ समुत्थितम् ( for °द्धतम् ). — ( L. 1718 ) $K_{2.3}$ वर्त्म ; $B_2$ $M_2$ कण्ठं , $T_2$ $G_{1.4}$ $M_4$ कर्णं , $G_5$ कान्तिं ( for मार्गं ). $T_1$ $G_3$ चक्षुषां समरे रजः , $T_2$ $G_{1\ 4\ 5}$ $M_{2.4}$ धनूंषि च रजस्तु तत् ( for $^b$ ). — ( L. 1719 ) $K_4$ $\tilde{N}_2$ $V_3$ $D_3$ $D_2$ अस्त्र- ; $D_1$ अश्व- ( for शस्त्र- ) $D_3$ शस्त्रव्रजैर्महाराज , $T_1$ अस्त्रपुष्पमहाभासा ; $G_{3.5}$ शतपुष्पोत्कराभासा ( for $^a$ ) — After line 1719, $K_1$ ins

105** आसीत्प्रतिभयं रौद्रं वीराणां जयमिच्छताम् ॥
देवदानवदेहैस्तु दुस्तराभूद्रणोत्कटा ।
शरीरसहने रूढा प्रसृता लोहिता नदी ॥

— ( L 1720 ) $T_2$ $G_{1.4}$ दुस्तरा ( for दुर्दर्शा ). $D_3$ शत्रु- ( for मांस ). — ( L 1721 ) $B_2$ ( marg ) $D_3$ भल्लैः ( for भग्नैः ). — For line 1721, $T_2$ $G_{1.4.5}$ $M_{2\ 4}$ subst. :

106** भग्नैः खड्गगदाशक्तितोमरासिपरश्वधैः ।

— ( L 1722 ) B $D_3$ $D_6$ शतशो , $D_3$ प्रासैश्च ; $T_2$ $G_{1\ 4\ 5}$ $M_2$ सहसा ( for भग्नैश्च ) $V_1$ $D_3$ हयै ; $T_{1.2}$ $G_{1\ 3-5}$ $M_{2.4}$ अपि ( for हतै. ). — ( L 1724 ) $K_{2\ 3}$ चित्राक्ष- ( for चक्राक्ष- ) $K_{1\ 3}$ $\tilde{N}_2$ $D_4$ -हस्तैश् ( for -शस्त्रैश् ). $V_{1\ 3}$ $Ds_2$ भल्लैर् ( for भग्नैर् ) $K_{2\ 3}$ च रथ- ( for अवनि- ). $B_{1\ 2}$ ( marg ) $_3$ $D_6$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ भग्नैरवनिमाश्रि( $T_2$ $G_{1.4}$ °स्थि )तै ( for $^b$ ) — ( L. 1725 ) $T_{1\ 2}$ $G_{1.3-5}$ $M_{2.4}$ गोमायुवळ( $T_1$ °गण )संकुलम् ( for $^b$ ). — After line 1725,

अन्योन्यबद्धवैराणां दैत्यानां जयगृद्धिनाम् ।
संप्रहारस्तदा युद्धे वर्ततेऽतिभयंकरः ॥
सैन्यानां संप्रयुक्तानां शूराणामनिवर्तिनाम् ।
अजस्य चैकपादस्य राहोश्चैव महात्मनः ॥ [ 1730 ]
तेषां तु तत्र पततां क्रुद्धानामतिनिस्वनः ।
उद्वर्त इव भूतानां समुद्राणां च शुश्रुवे ॥
तत्रैकस्तु सधूम्राक्षः श्रीमान्रुद्रो मुनीश्वरः ।
बिभेद केशिनं शक्त्या गदापट्टिसशूलधृक् ॥
नानाप्रहरणा घोरा भीमाक्षा भीमदर्शनाः । [ 1735 ]
निपेतू रुद्रदयिता महापारिषदास्तदा ॥
रथमास्थाय च श्रीमांस्तप्तकाञ्चनकुण्डलः ।
दानवैः संवृतः केशी युध्यते युधि दुर्जयैः ॥
तस्य संग्रामशौण्डस्य संग्रामाग्रे युयुत्सवः ।
निष्पेतुरुग्रवीर्यस्य ज्वाला हि प्रसृता मुखात् ॥ [ 1740 ]
स तु सिंहाञ्चितस्कन्धः शार्दूलसमविक्रमः ।
महाजलदसंकाशो मृदङ्गध्वनिनिस्वनः ॥
तस्य निष्पतमानस्य दानवैः संवृतस्य वै ।
बभूव सुमहानादः क्षोभयंस्त्रिदिवं तदा ॥
तेन शब्देन वित्रस्ता त्रिदशानां महाचमूः । [ 1745 ]
द्रुमशैलप्रहरणा योद्धुमेवाभ्यवर्तत ॥
तेषां युद्धं महाघोरं संजज्ञे लोमहर्षणम् ।
देवदानवसंघानां प्राणांस्त्यक्त्वा महाहवे ॥
सर्वे ह्यतिबलाः शूराः सर्वे पर्वतसंनिभाः ।
त्रिदशा दानवाश्चैव परस्परजिघांसवः ॥ [ 1750 ]

---

T1 2 G1 3–5 M2 4 ins

107** अष्टाशीतिसहस्राणि रथास्तत्र हताः किल ।
नागा लक्ष हता राजन्नश्वा लक्षत्रयं नृप ॥

— ( L 1727 ) Ñ1 असुराणां दुष्टबुद्धिनाम् ( hypermetric ), B1 3 D6 T1 2 G1 3–5 M2 4 शूराणां जयमिच्छताम् ( for ᵇ ) — ( L 1728 ) T1 G3 5 M2 4 स सप्रहारस्तुमुलः , T2 G1 5 प्रहारैस्तुमुलं युद्धं ( for ᵃ ). T1 G3 प्रावर्तत भयंकर , T2 G1 4 5 M2 4 प्रा( G5 प्र )वर्तत महाहवे ( for ᵇ ) — ( L 1729 ) K1 2 D4 सु- ( for सं- ) K2 4 Ñ1 2 V1 3 B2 3 Dn Ds D1–3 युद्धाना ( for युक्तानां ). K3 सैन्यानां सुरयुक्तानां , B1 D6 T2 G1 3–5 M2 4 ससैन्यानां प्रयु( G2 5 M4 °वृ )द्धानां , T1 सैन्यानां प्रतियुद्धानां ( for ᵃ ) — ( L 1730 ) T2 G1 4 अजैकपादस्य तदा ( for ᵃ ) — ( L 1731 ) D3 T1 2 G1 4 M2 4 नत्राभि- ( for तु तत्र ) B1 D6 सैन्यानाम् ( for क्रुद्धा° ) T1 2 G1 4, 5 M2 4 सैन्यानामभिनिस्वनः ( T1 °शुश्रुवे ), G3 सैन्यानामथ शुश्रुवे ( for ᵇ ) — B1 om line 1732 — ( L. 1732 ) K2, 3 संवर्त ( for उद्वर्तं ). B3 Ds D6 T1 2 G1 3–5 M2 4 उद्वर्ततामन्तकाले ( for ᵃ ). B2 D6 T1 G3 4 M2 4 इव स्वनः ; T2 G1 5 इव ध्वनि· ( for च शुश्रुवे ). — ( L 1733 ) K1 B1, 2 D3 G4 M2 4 सुधूम्राक्ष· , K2 स धूमाक्षः , V3 सहस्राक्ष ( for स धूम्राक्ष ) Ñ1 V1 B2 महाबलः ( for मुनीश्वरः ). B1 3 Ds D6 भीमो रुद्रो महाबल. ; T1 G3 भीमो रौद्रो महासुरः ( for ᵇ ) — ( L 1734 ) T2 G1, 4 5 M2 4 दैत्यो बिभेद शूलेन ( for ᵃ ) Ñ1 D1 परिघ- , ( for -पट्टिस- ) T2 G1, 4 5 देवान्पट्टसवृष्टिभि ( for ᵇ ). — ( L 1735 ) Ñ2 V1 सैन्यानां सप्रयुद्धा( V1 °क्ता )नां , B1, 3 D6 T2 G1 4 5 M2 घोरा नानाप्रहणा ( for ᵃ ) K4 Bom. Poona eds. G(ed) भीमाख्या ( for °क्षा ) D3 6 -विक्रमा. ( for -दर्शनाः ). — ( L 1736 ) V3 -सहिता ( for -दयिता ) — ( L 1737 ) T1 G3–5 M2 4 -भूषण ( for -कुण्डलः ) — ( L 1738 ) D5 युद्धः ( for युधि ) K1 Ñ1 V1 3 B1 2 Ds D3 4 T1 2 G1 3–5 M2, 4 दुर्जयः ( for °यै ) B3 युध्यते युद्धदुर्जय ( for ᵇ ) — ( L. 1739 ) K4 V1 D1–3 M2 सग्रामेषु ( for °माग्रे ) Ds2 संग्रामे प्रयुयुत्सव. ( for ᵇ ) — Ñ2 om ( hapl ) lines 1740–1759. — ( L. 1740 ) K B3 Dn Ds2 D1 2 4 T2 G1 निपेतुर् ( for निष्पे° ) K4 D1 2 प्रतिसृता , T1 G3 वै विवृता ( for हि प्रसृता ) Ñ1 V3 Dn D3 ज्वालाः ( V3 °ला ) प्रविसृता मुखात् ; B Ds D6 ज्वाला· ( B2 D6 °ला ) प्रवितता मुखात् , T2 G1, 4 M2 4 ज्वाला वै निकृतोन्मुखात् , G5 ज्वाला वै विकृताननात् ( for ᵇ ) — ( L 1741 ) K1 4 सिंहाचित ; Ñ1 V1 T1 G1 4 सिंहर्षभ- , Dn M2 सिंहोचित- , D3 सिंहनिभ- ( for सिंहाञ्चित- ) — ( L 1742 ) K2 3 B1 3 Ds D6 -सम- ( for -ध्वनि- ) V1 G1 1–5 M3 4 महाजलदनिस्वनः ( for ᵇ ). — V1 om ( hapl ) lines 1744–1763. — ( L. 1744 ) G3 5 त्रिदशांस् ( for त्रिदिवं ). — ( L 1745 ) K1 D4 T1, 2 G3–5 M2, 4 दृप्तानां , G1 दीप्तानां ( for वित्रस्ता ). K2, 3 दानवानां , D4 देवतानां ( for त्रिदशानां ). — ( L. 1746 ) K1–3 D4 शीघ्रम् ( for योद्धुम् ) K1 D4 T1, 2 G1 3–5 M2 4 योद्धु समभिवर्तते ( T1 G5 °त ) ( for ᵇ ). — After line 1746, B Bom Poona eds G(ed.) ins.:

108** तेषां च देवदैत्यानां युयुत्सूनां परस्परम् ।
संनिपात सुतुमुलो रौद्रो लोकभयावहः ॥

— ( L. 1747 ) T1, 2 G1 3–5 M2 4 संजज्ञे भीमनिस्व( M2 4 °दर्श )नम् ( for ᵇ ) — After line 1749, B Ds D2, 3 6 ins.:

109** सर्वे सर्वास्त्रविद्वांस· सर्वे सर्वायुधोद्यता· ।
[ B2 -विदुष· ( for -विद्वांस· ). D3 सर्वे सर्वायुधाश्चैव ( for ᵃ ). ]

तेषां निनदतां शब्दः संयुगे मेघनिस्वनः ।
शुश्रुवेऽतिमहाघोरश्चरस्थावरकम्पनः ॥
रेणुश्चारुणसकाशः सुभीमः समपद्यत ।
उद्धूतो देवदैत्यौघैः संरुरोध दिशो दश ॥
अन्योन्यं रजसा तेन कौशेयारुणपाण्डुना । [ 1755 ]
संवृता बहुरूपेण ददृशुर्न स्म किंचन ॥
न ध्वजो न पताका वा न वर्म तुरगोऽपि वा ।
आयुधं स्यन्दनं वापि दृश्यते नैव सारथिः ॥
स शब्दस्तुमुलस्तेषामन्योन्यमभिधावताम् ।
निपेतुरुग्रवीर्यस्य ज्वाला हि प्रसृता मुखात् ॥ [ 1760 ]
स तु सिंहर्षभस्कन्धः शार्दूलसमविक्रमः ।
महाजलदसंकाशो महाजलदनिस्वनः ॥
तस्य निष्पतमानस्य दानवैः संवृतस्य च ।
श्रूयते तुमुलः शब्दो न रूपाणि चकाशिरे ॥
दानवास्तत्र संक्रुद्धा दानवानेव जघ्निरे । [ 1765 ]
त्रिदशास्त्रिदशांश्चैव निजघ्नुस्तुमुले तदा ॥
ते परांश्च विनिघ्नन्तः स्वांश्च युद्धे महासुरान् ।
रुधिरार्द्रां तथा चक्रुर्मेदिनीमसुराः सुराः ॥
ततस्तु रुधिरौघेण संसिक्तं मृदितं रजः ।
शरीरशतसंकीर्णं बभूव सुमहारणम् ॥ [ 1770 ]
शूलशक्तिगदाखड्गपरिघप्रासतोमरैः ।
त्रिदशा दानवाश्चैव जघ्नुरन्योन्यमाहवे ॥
बाहुभिः परिघाकारैर्निघ्नन्तः पर्वतैस्तदा ।
रुद्रपारिषदान्सर्वान्सूदयन्ति स्म दानवाः ॥
रुद्रपारिषदाश्चैव महाद्रुममहाश्मभिः । [ 1775 ]
व्यदारयन्नतिक्रम्य शस्त्रैश्चादित्यवर्चसैः ॥
एतस्मिन्नन्तरे क्रुद्धः केशी दानवसत्तमः ।
संग्राममर्षी घोरः स स्वान्यनीकानि हर्षयन् ।
तेषां परमसंक्रुद्धो वज्रमस्त्रमुदीरयत् ॥
वज्रेणास्त्रेण दिव्येन शस्त्रेण च महात्मना । [ 1780 ]
महापारिषदाः सर्वे निहता युधि दुर्जयाः ॥
वज्रास्त्रपीडिता भ्रान्ता रुद्रपारिषदा युधि ।

---

— (L 1751) $T_{1\ 2}$ $G_{1\ 3-5}$ संयुगेऽतितरस्विनाम् (for $^{b}$). — After 1751 $D_{3}$ ins ·
110** शुश्रुवेऽतिमहाघोषो गरुडस्येव गच्छतः ।
— (L 1752) $K_{2\ 3}$ स्थाणुजंगमकम्पन. (for $^{b}$) — (L 1754) $T_{1}$ निरन्तरम्, $G_{3}$ दिगन्तरम् (for दिशो दश) — (L. 1755) $D_{3}$ कौशिकारुणपाण्डुना (for $^{b}$) — (L 1756) $\tilde{N}_{1}$ $B_{1\ 3}$ $D_{6}$ $T_{1\ 2}$ $G_{1,3-5}$ $M_{2\ 4}$ ददृशुर्नैव संयुगे (for $^{b}$) — (L 1758) $B_{1\ 3}$ $D_{6}$ $M_{2}$ नायुधं (for आ°) $\tilde{N}_{1}$ B $D_{2\ 6}$ $T_{1}$ $G_{3}$ $M_{4}$ स्यन्दनो (for °नं). $T_{2}$ $G_{1\ 4\ 5}$ $M_{4}$ नायुधस्यन्दनो वापि (for $^{b}$) $V_{3}$ युधि (for नैव) $\tilde{N}_{1}$ $B_{1}$ $D_{6}$ $T_{2}$ $G_{1\ 5}$ $M_{2\ 4}$ ददृशे ($B_{1}$ दृश्यते) संयुगे तदा; $B_{2}$ $T_{1}$ $G_{3\ 5}$ ददृशे न तु संयुगे (for $^{b}$). — (L. 1759) $M_{2}$ Bom. Poona eds G(ed) सम- (for अभि-). $D_{3}$ -गर्जताम् (for -धाव°). — $K_{2\ 3}$ $B_{1,2}$ $D_{6}$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ om lines 1760–1763 —(L 1761) $D_{3}$ सिंहनिभ (for °र्षभ-) — $K_{1}$ $\tilde{N}_{2}$ $B_{3}$ $D_{4}$ om line 1762 — (L. 1764) $D_{5}$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ श्रूयते तुमुले युद्धे (for $^{a}$) — (L 1765) $B_{1,3}$ $D_{6}$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ संरब्धा (for संक्रुद्धा) $B_{1\ 3}$ $D_{6}$ $T_{1\ 2}$ $G_{1,4\ 5}$ $M_{2}$ दानवाञ्जघ्नुराहवे (for $^{b}$) — (L 1766) $K_{2\ 3}$ निजघ्नुरितरेतरम् (for $^{b}$) — (L 1767) $\tilde{N}_{1\ 2}$ $V_{1,3}$ $D_{5}$ महासुराः (for °सुरान्). — (L 1768) $\tilde{N}_{1}$ $B_{3}$ मेदिनीं च महासुरा. ($B_{3}$ °रणे); $B_{1}$ °नीं ससुरासुरान्, $D_{3}$ $D_{6}$ मेरुशीर्षे महारणे; $T_{1\ 2}$ $G_{1,3-5}$ $M_{2\ 4}$ मेदिनीं देवदानवाः (for $^{b}$). — (L 1769) $T_{1}$ $G_{5}$ संसिक्तमृदितध्वजम्; $T_{2}$ $G_{1\ 4\ 5}$ सरक्ता मृदितध्वजाः (for $^{b}$). — (L. 1770) $K_{4}$ $B_{2}$ Dn $D_{1\ 2}$ बभूव धरणी($B_{2}$ वसुधा)-तलम् ($Dn_{1}$ °ले), $\tilde{N}_{1}$ $V_{1}$ $B_{1\ 3}$ $D_{3}$ $D_{6}$ °व स महारणः; $D_{2}$ °व तु वसुधरा, $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ °वायोधनं महत् (for $^{b}$). — (L. 1773) Bom Poona eds G(ed) परिघैस् (for पर्वतैस्) — $T_{1}$ om (hapl) line 1774 — (L. 1774) $\tilde{N}_{1}$ $B_{3}$ $D_{5}$ $D_{6}$ $T_{2}$ $G_{1\ 4\ 5}$ $M_{2}$ रुद्रपारिषदा सर्वे, $D_{1\ 4}$ रुद्रश्च ($D_{4}$ °स्य) पार्षदान्सर्वान् (for $^{a}$) $B_{1\ 3}$ $D_{3}$ $D_{6}$ $T_{2}$ $G_{1,4\ 5}$ $M_{2\ 4}$ दानवान् (for °वा) — (L 1775) $T_{2}$ $G_{1\ 4}$ वृक्षैश्चापि ;$G_{5}$ महारौद्रान् (for °द्रुम-) $K_{3}$ -शिलादिभि· (for -महाश्मभि) $K_{1}$ $D_{4}$ महाबलपराक्रमान् (for $^{b}$) — (L 1776) B $D_{5}$ $D_{6}$ निजघ्नु समभि(B °ति)क्रम्य, $D_{4}$ अतिवारानति°; $T_{2}$ $G_{1,4,5}$ $M_{2}$ विचेरु. समति° (for $^{a}$) $K_{2\ 4}$ $T_{1}$ $G_{3}$ -संनिभैः (for -वर्चसै·) $B_{1,3}$ $D_{5}$ $D_{3\ 6}$ $T_{2}$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ शस्त्रैश्चाप्याद्य दानवा (for $^{b}$) — $T_{2}$ $G_{1\ 4\ 5}$ $M_{2,4}$ om line 1778 — (L 1778) $K_{4}$ संग्राममर्ष, Dn $G_{3}$ °महर्षी, $D_{3}$ $D_{2\ 6}$ °मामर्षी (for °ममर्षी) — (L- 1779) $T_{2}$ $G_{1\ 4,5}$ $M_{2\ 4}$ -संरब्धो (for -सक्रुद्धो). $K_{4}$ $\tilde{N}_{2}$ $V_{1\ 3}$ $D_{1\ 2\ 4}$ $G_{5}$ उदीरयन् (for °यत्). — (L 1780) $B_{1\ 3}$ $D_{5}$ $D_{3}$ दैत्येन सु- (for शस्त्रेण च) — (L 1781) $D_{4}$ ते महापार्षदाः सर्वे (for $^{a}$). $B_{3}$ $D_{6}$ $T_{2}$ $G_{1,4,5}$ $M_{2,4}$ हता युधि सुदुर्जया· (for $^{a}$)

विप्रकीर्णद्रुमाः पेतुः शैला वज्रहता इव ॥
एवं तत्तुमुलं युद्धमभवल्लोमहर्षणम् ।
केशिनः सह रुद्रेण तदद्भुतमिवाभवत् ॥ [ 1785 ]

Colophon

वैशंपायन उवाच ।

वृषपर्वा तु दैत्येन्द्रो विश्वमद्भुतदर्शनम् ।
निष्कुम्भं योधयामास लोहितार्कसमद्युतिम् ॥
क्रोधमूर्छितवक्त्रस्तु धुन्वन्परमकार्मुकम् ।
ध्वजिनीं प्रेक्ष्य शत्रूणां सारथिं त्वरितोऽब्रवीत् ॥
अत्रैव तावत्त्वरितं नयेमं सारथे रथम् । [ 1790 ]
एते हि देवाः सहिता घ्नन्ति नः समरे बलम् ॥
एतान्निहन्तुमिच्छामि समरश्लाघिनो रणे ।
एतैर्हि दानवानीकं कृतच्छिद्रमिदं महत् ॥
ततः प्रजविताश्वेन रथेन रथिनां वरः ।
अरीनभ्यहनत्क्रुद्धः शरजालैर्महासुरः ॥ [ 1795 ]
न स्थातुं देवताः शक्ताः किं पुनर्योद्धुमाहवे ।
वृषपर्वविनिर्भिन्नाः सर्व एवाभिदुद्रुवुः ॥
तान्मृत्युवशमापन्नान्वैवस्वतवशं गतान् ।
समीक्ष्य निहताञ्ज्ञातीनवतस्थे महासुरः ॥
निष्कुम्भं तत्र तं दृष्ट्वा सर्वे ते त्रिदशोत्तमाः । [ 1800 ]
समेत्य सहिताः सर्वे तं द्रुतं पर्यवारयन् ॥
व्यवस्थितं च निष्कुम्भं तं दृष्ट्वा त्रिदशोत्तमाः ।
बभूवुर्बलवन्तो वै तस्यास्त्रबलतेजसा ॥
वृषपर्वा तु शैलाभं निष्कुम्भं समरे स्थितम् ।
महेन्द्र इव धाराभिः शरवर्षैरवाकिरत् ॥ [ 1805 ]
अचिन्तयित्वा तु शराञ्शरीरे पतितान्बहून् ।

---

— ( L 1782 ) T2 G1 -निहता ( for पीडिता ) Ñ2 हता युधि सुदुर्जया , Ds1 रुद्रपारिषदैस्तदा , D4 ते रुद्रपार्षदा युधि ( for $^{b}$ ) — ( L 1783 ) Dn D2 विकीर्णाः सद्रुमा पेतुः ( for $^{a}$ ) — ( L 1784 ) T1 2 G1 3–5 M2 4 अभवद् ( for तुमुलं ) B1 3 D6 अभवद्भीमदर्शनम् , T1 2 G1 3–5 M2 4 उभयो ( T1 G3 तुमुलं ) रोमहर्षणम् ( for $^{b}$ )

Colophon — *Mention of the Epic* K4 Ds2 D1 — *Mention of Khila* V1 3 B1 3 Dn Ds D1 3 4 *Sup-parvan* K Ñ1 2 V1 3 B Dn D1 2 4 6 वामनम् , D3 T1 2 G1 3 M2 4 वामनप्रादुर्भाव. — *Adhy name* B1 Ds2 देवासुरसंग्रामः ; B2 Ds1 D6 देवासुरयुद्धम् , G3 केशिधूम्राक्षद्वन्द्वयुद्धम् — *Adhy. no* K3 31 , V1 26 , V3 244, Dn1 243, Dn2 234; Ds1 242, D1 228, D3 225, G1 306 , G3. 5 312 , G4 310 , M2 4 22

( L 1786 ) G3 4 नित्यम् ( for विश्वम् ) K1 V1 D4 6 G3 -विक्रमम् ( G3 °मः ), T1. 2 G1. 4 5 M2 4 -कर्मकृत ( for -दर्शनम् ) — K3 om lines 1787$^{a}$–1790$^{a}$ — ( L 1787 ) K1. 2. 4 D1 2 4 निकुम्भं ; G1 5 निष्कळं , G3 निष्कम्पं ( for निष्कुम्भं ). Ds D4 T2 G4 -समद्युति.; D3 -महाद्युतिः ( for -समद्युतिम् ) T1 G1 5 M2 4 लोहिताङ्गस( T1 G5 °तेन स )-मद्युतिः ( for $^{b}$ ) — ( L 1788 ) D3 वेगस् ( for -वक्त्रस् ) D2 विधुन्वन्परकार्मुकम् ( for $^{b}$ ) — ( L 1789 ) Bom Poona eds G(ed.) धनूंषि ( for ध्वजिनीं ) — ( L. 1790 ) K1. 4 Ñ1 2 V1. 3 B Dn Ds D1–3 6 मे ( for [इ]मं ) — ( L 1791 ) D3 इन्द्रेण सहिता देवा , Bom. Poona eds G(ed ) एते देवाश्च सहिता ( for $^{a}$ ). — ( L 1793 ) K1 Ñ2 V1 3 B Ds2 D6 दानवानीके ; Ds1 D4 T1. 2 G1. 5 M2. 4 °नीकैः ( for °नीकं ) — ( L 1795 ) Ñ1 अनीकिनीमभ्यहनत् ( for $^{a}$ ) Ñ1 -वर्षैर् ( for -जालैर् ) T1 2 G1 4 5 M2 4 महारथः ( for °सुर. ) — After line 1795, T1 2 G1 3–5 M2. 4 ins :

111** तस्य विक्रमत सख्ये दानवेन्द्रस्य धीमत ।

— ( L 1796 ) T2 दानवा ( for देवता ). — After line 1796, T1 2 G1 3–5 M2. 4 ins :

112** अत्यर्थं वै रणे शूरा संग्रामेष्वनिवर्तिन ।

— ( L 1797 ) B3 Ds D6 G3 4 -पर्वेषु- ( for पर्ववि- ) B1 2 वृषपर्वेषुभिर्भिन्नाः ( for $^{a}$ ) — After line 1797, T2 G1 4 5 M2 ins

113** वृषपर्वविनिर्भिण्णा विनेदुश्चात्र सर्वश ।

[ G1 विनेदु सर्वतो दिश ( for $^{b}$ ). M2 वृषपवेषुभिभिन्ना ननदुर्हि सर्वश ( submetric ). ]

— ( L 1798 ) T1 2 G1 5 M2 4 पथम् ( for -वशम् ) —( L. 1799 ) K3 प्रसमीक्ष्य निकुम्भोऽथ , V1 स वीक्ष्य निष्कम्भुर्ज्ञातीन् , V3 B2 T1 2 G1 3–5 M2 4 ज्ञातीन्समीक्ष्य निष्कम्भुर् ( for $^{a}$ ) K3 स्वान्ज्ञातीश्च ( for अवतस्थे ) B1 2 T1 2 G1. 3–5 M2 4 महाबल· ( for °सुर ) — ( L 1800 ) Ñ2 निहत ( for तत्र त ) G3 तं तु तत्रैव निष्कम्पं ( for $^{a}$ ) G3 दृष्ट्वा ते ( for सर्वे ते ) T1 2 G1 4 M2 4 त्रिदशेश्वरा ( for °शोत्तमा. ) —D3 om ( hapl ) lines 1801–1802 — ( L. 1801 ) D2 द्रवन्तं ( for तं द्रुतं ) Ñ1 समरे प्रत्यवारयन् ( for $^{b}$ ). — ( L. 1802 ) T1 2 G1 4 5 M2 4 निष्कम्भुं सुस्थितं दृष्ट्वा ( for $^{a}$ ) T2 G1. 4 M4 हृ( G1 सृ )ष्टास्त्रिदशपुगवा ( M4 °विक्रमाः ) ( for $^{b}$ ). — ( L 1803 ) Ñ1 बभूवुर्बलमास्थाय ( for $^{a}$ ) G3 स्वकास्त्र- ( for तस्यास्त्र- ) — ( L 1804 ) K2. 3 शैलं तं ( for शैलाभं ).

स्थितश्च प्रमुखे श्रीमान्ससैन्यः स महाबलः ॥
स प्रहस्य महातेजा वृषपर्वाणमाहवे ।
अभिदुद्राव वेगेन कम्पयन्निव मेदिनीम् ॥
तस्य त्वाधावमानस्य दीप्यमानस्य तेजसा । [ 1810 ]
बभूव रूपं दुर्धर्षं दीप्तस्येव विभावसोः ॥
रथं त्यक्त्वा स तु श्रीमान्सक्रोधः कमलेक्षणः ।
वृक्षमुत्पाटयामास महाशाखं महोच्छ्रयम् ।
ततश्चिक्षेप तं वृक्षं निष्कुम्भो वृषपर्वणः ॥
तं गृहीत्वा महावृक्षं पाणिनैकेन दानवः । [ 1815 ]
विनद्य सुमहानादं भ्रामयित्वा च वीर्यवान् ॥
सगजान्सगजारोहान्सरथान्रथिनस्तथा ॥
जघान दानवस्तेन शाखिना त्रिदशांस्तदा ॥
तमन्तकमिव क्रुद्धं समरे प्राणहारिणम् ।
वृषपर्वाणमासाद्य त्रिदशा विप्रदुद्रुवुः ॥ [ 1820 ]

तमापतन्तं संक्रुद्धं त्रिदशानां भयावहम् ।
आलोक्य धन्वी निष्कुम्भश्चुक्रोध च ननाद च ॥
स तत्र निशितैर्बाणैर्विंशद्भिर्मर्मवेधिभिः ।
निर्बिभेद महावीर्यो निष्कुम्भो दानवाधिपम् ।
शरशक्तिभिरुग्राभिर्दैत्यानामधिपं प्रभुम् । [ 1825 ]
विद्धः समरमध्यस्थो रुधिरं प्रास्रवद्बहु ॥
उद्विग्ना मुक्तकेशाश्च भग्नदर्पाः पराजिताः ।
श्वसन्तो दुद्रुवुः सर्वे भयार्ता वृषपर्वणः ॥
अन्योन्यं प्रममन्थुस्ते त्रासिता वृषपर्वणा ।
पृष्ठतस्त्राससंविग्नाः प्रेक्षमाणा मुहुर्मुहुः ॥ [ 1830 ]
त्यक्तप्रहरणाः सर्वे कृतास्ते वृषपर्वणा ।
संग्रामे युद्धशौण्डेन तदा निष्कुम्भसैनिकाः ॥
तत्रैव तु महावीर्यः प्रह्लादः कालमाहवे ।
योधयामास रक्ताक्षो हिरण्यकशिपोः सुतः ॥

— ( L 1806 ) B1 3 D6 M2 4 बाणांस्ताञ्; T1, 2 G1, 3–5 तान्बाणाञ् ( f0r तु शराञ् ) T1, 2 G4 5 M2 4 पततो ( for पतितान् ) D3 शरीरे पतत शितान् ( for ᵇ ). — ( L. 1807 ) K1 2 V1 B1 Dn Ds D4 चमूमुखे ( for च प्र° ) — ( L 1808 ) K1 Ñ1 2 V1 3 B3 D3, 4 T1 G3 5 वृषपर्वा महाहवे ( for ᵇ ) — ( L 1810 ) T1, 2 G1 4 5 M2 4 आधावतस्तदा तस्य ( for ᵃ ). — ( L. 1812 ) Bom. Poona eds G(ed ) महातेजा. ( for स तु श्रीमान् ) Bom. Poona eds. G(ed ) सक्रोधः समपद्यत ( for ᵇ ) — ( L 1813 ) T1 2 G1, 3–5 M2 4 शैलशृङ्ग( T2 G1 4 महाचल )मिवोच्छ्रितम् ( for ᵇ ). — ( L 1814 ) D2, 3 G2 om ( hapl. ) lines 1814ᵇ–1815ᵃ K2 D6 T1 2 G1 4 5 M2 4 निष्कम्भो वृषपर्वणे, B2 ( marg as above ) महाबलपराक्रम ( for ᵇ ). — ( L 1815 ) B2 ( marg as above ) दैत्याधिपतये तूर्णं ( for ᵃ ) — ( L 1816 ) T2 G1 3–5 M2 4 भ्रामयामास वीर्यवान् ( for ᵇ ) — ( L 1817 ) D2 सकलान्स-, D4 स जघान ; D6 सगजाश्वान् ( for °जान्स- ). K2 3 सारोहान् ( for सरथान् ) — ( L 1818 ) K4 D1 2 कोपितस् ( for त्रिदशांस् ) T2 शाखिना त्रिदशाग्रणी ( for ᵇ ) — K4 om ( hapl ) lines 1819ᵇ–1921ᵃ. — ( L 1820 ) D1 त्रिदशास्ते विदुद्रुवु ( for ᵇ ) — ( L 1821 ) K8 T2 G1 संक्रुद्ध. ( for °द्धं ) K2 3 T1 2 G1 4 5 भयंकरम् ( for भयावहम् ) — ( L 1822 ) B1 3 D6 T1 2 G1, 4, 5 M2 4 ददर्श वीरो ( B1 देवो ) निष्कम्भुश्; G3 तदा संप्रेक्ष्य निष्कम्पश् ( for ᵃ ) B1, 3 Ds D6 चुकोप ( for चुक्रोध ) — ( L 1823 ) B Ds D6 त्रिंशता, D2 विंशत्या ( for विंशद्भिर् ). G3 देह- ( for मर्म ). — ( L. 1824 ) K2, 3 निकुम्भो दानवोत्तम. ( for ᵇ ). — ( L 1825 ) K2 दैत्यनाथो निकुम्भक., Ñ2 दैत्यानामन्तको बली, G3 दैत्येनाभिहता सुराः ( for ᵇ ) — K1 V1 3 B Dn Ds D3, 4 6 T1, 2 G1 4 5 M2, 4 subst for line 1825. Ñ2 cont after 115**

114** दैत्यानामथ निष्कम्भु शरशक्तिभिरर्दितः ।
[ T1 2 G1 4, 5 M2 4 उग्राभि शरवृष्टि( T1 G1, 4 5 °शक्ति )भि ( for ᵇ ). ]

While Ñ2 ins after line 1825 :

115** ततो दैत्योऽभवत्क्रुद्धो दानवानां चमूमुखे ।
बिभेद निशितैर्बाणै निष्कुम्भं दानवोत्तम ॥

— ( L 1826 ) Ds D6 मूर्धस्थो ( for मध्यस्थो ) B1 विद्धपरममूर्धस्थो, T1 2 G1 4 5 M2 4 विद्धस्तु समरे मूर्ध्नि ( for ᵃ ) T1 2 G1 4 5 M2 4 प्रस्रवन्रु( M2 °द्रु )धिर बहु ( for ᵇ ). — ( L 1827 ) G1 4 -कण्ठाश् ( for केशाश् ) — D1 om ( hapl ) line 1828 — ( L 1829 ) D3 अन्योन्यं प्रशशंसुस्ते ( for ᵃ ) — ( L 1830 ) V3 -वक्रासु, B1, 3 Ds T1 G3–5 M2 4 -संमूढा· ( for संविग्ना ) K B2 Dn D1 2 4 पृष्ठवक्त्राः सुसंविग्नाः, V1 °वक्त्रा· समुद्विग्ना, D3 °वक्त्राश्च संभग्ना ; G1 °तस्तु सुसंमूढा· ( for ᵃ ) — ( L 1831 ) D3 क्षतास् ( for कृतास् ) — ( L. 1832 ) Ds संग्राम- ( for °मे ). — After line 1832, K3 T1 G3, 5 M2 4 ins an addl. colophon [ *Sup-parvan* T1 M2, 4 वामनप्रादुर्भावः. — *Adhy. name*. K3 निकुम्भवृषपर्वसंग्रामः; G3 वृषपर्वनिष्कम्पयुद्धम् — *Adhy. no* K2 32; T1 311; G3, 5 313, M2, 4 23 ].

तस्य दानववीरस्य युद्धकाले जयक्रियाः । [ 1835 ]
चकार त्वरया युक्तो भार्गवो विजयावहाः ॥
हुताशनं तर्पयतो ब्राह्मणांश्च नमस्यतः ।
आज्यगन्धप्रतिवहो मारुतः सुरभिर्ववौ ॥
स्रजश्च विविधाश्चित्रा जयार्थमभिमन्त्रिताः ।
प्रह्लादस्य शुभे मूर्ध्नि आबबन्धोशनाः स्वयम् । [ 1840 ]
कालेन सह संग्रामे प्रयुद्धः स महासुरः ॥
प्रह्लादस्यातिवीर्यस्य शान्तिं चक्रे स भार्गवः ।
दश शिष्यसहस्राणि भार्गवस्य महात्मनः ।
तानि दानववीराणां जेपुः शान्तिमनुत्तमाम् ॥
अथर्वाणमथो दिव्यं ब्रह्मसंस्तवचोदितम् । [ 1845 ]
रणप्रवेशसदृशं कर्म वैजयिकं कृतम् ॥
ततः सर्वास्त्रविदुषः समरेष्वनिवर्तिनः ।
विद्यातपःसमायुक्ताः कृतस्वस्त्ययनक्रियाः ॥
धनुर्हस्ताः कवचिनो वेगेनाप्लुत्य दानवाः ।
बलिमभ्यर्च्य राजानं प्रह्लादं पर्यवारयन् ॥ [ 1850 ]
आस्थाय विपुलं दिव्यं रथं पररथारुजम् ।
नानाप्रहरणाकीर्णं सचक्रमिव पर्वतम् ॥
तद्बभूव मुहूर्तेन क्ष्वेडितास्फोटिताकुलम् ।
मेरोः शिखरमाकीर्णं द्यौरिवाम्बुधरागमे ॥
स्रजः पद्मपलाशानामामुच्य सुविभूषिताः । [ 1855 ]
बान्धवान्संपरित्यज्य निपतन्ति रणप्रियाः ॥
महायुधधरः श्रीमाञ्शुभवर्मधरः प्रभुः ।
शिरस्त्राणतनुत्राणी धन्वी परमदुर्जय. ॥
सिंहशार्दूलदर्पाणां नदतां किंकिणीकिनाम् ।
तस्य दैत्यसहस्राणि प्रयान्त्यग्रे महारणे ॥ [ 1860 ]
सैन्यपक्षहतास्तस्य रथाः परमदुर्जया. ।
सप्ततिर्वै सहस्राणि गजास्तावन्त एव च ॥
मध्ये व्यूहोदरस्थस्तु कालनेमिर्महासुरः ।
धनुर्विस्फारयन्घोरं ननाद प्रजहास च ॥

---

— ( L. 1833 ) K Ñ1 2 V1 3 B2 Dn D1–4 T1 2 G1. 3–5 M2 महायुद्धे ( for °वीर्ये. ) — ( L 1835 ) T1 G5 -राजस्य ( for -वीरस्य ) T1 2 G1 3–5 M2 4 भक्तस्य जगत पतौ ( for ᵇ ) — Afer line 1835, T1. 2 G1 3–5 M2 4 ins :

116** लोकनाथे हरौ विष्णौ ज्ञानगम्ये जगन्मये ।
तस्य दानवराजस्य युद्धकालक्षमा. क्रिया ॥

— ( L 1836 ) T1 2 G1. 3–5 M2 4 समरे ( for त्वरया ) D8 शुक्रो ( for युक्तो ). D4 चकार तत्र त्वरया ( for ᵃ ) — ( L. 1837 ) T2 2 G1 5 M2 4 नर्पयतां ( for °यतो ). K3 नमस्यते, T1 2 G1 4 5 M2 4 °स्यताम् ( for °स्यत. ). —( L. 1938 ) Ds2 G4 -प्रतिवहन् ( for °वहो ) B3 D91 D6 T1 G5 M2. 4 आज्यगन्धं प्रतिवहन् ( for ᵃ ) K4 V1 B1 बभौ ( for ववौ ). — ( L 1839 ) B1. 3 D6 T1 2 G1 4 5 M2. 4 विविधाकारा, G3 °कारं ( for °श्चित्रा ) V3 शब्दिताः ( for -मन्त्रिताः ). —( L 1841 ) Ñ1 2 V1. 3 B Dn Ds D6 T1 2 G1 3–5 M2 4 प्रयुद्धस्य महात्मन ( Ñ1 °सुर ) ( for ᵇ ) — ( L 1843 ) K1 D4 शत ( for दश ). — ( L. 1844 ) B1. 3 D6 -मुखानां ( for -वीराणां ). D6 चक्रु ( for जेपुः ). — ( L 1845 ) G5 M2 आथर्वणम् ( for °र्वाणम् ). K1 D4 अथोद्दिष्टं; D8 अथादिश्य ( for अथो दिव्यं ) K1 -संश्राव-, V1 3 -संभव- ( for -संस्तव- ). — K2. 3 D4 ins after line 1845 : K1 after line 1846

117** रणप्रवेशशान्तिं ते क्रमाच्चक्रुश्च दानवाः ।

— K2 3 D4 om line 1846. — ( L 1847 ) Ds2 [अ]नुवर्तिन.; D6 [अ]निवर्तकः ( for °र्तिन ). — ( L. 1848 ) B1 3 Ds1 D6 T1 G1 4 5 विद्याव्रत-, T2 G3 M2 4 °वृत्त- ( for °तप.- ) Bom Poona eds G(ed) विद्यया तपसा युक्ता ( for ᵃ ) D2 कृता, T1 G5 युक्त- ( for कृत- ). — ( L 1849 ) Ds [उ]त्प्लुत्य ( for [आ]प्लुत्य ). K2 3 दारुणाः ( for दानवाः ) — ( L 1850 ) D4 बलिनाभ्यर्चिता राजन्; D6 बलिनं दैत्यराजान ( for ᵃ ) — ( L 1851 ) Bom. Poona eds G(ed) परमं ( for विपुल ) — ( L 1852 ) Ñ1 B2 D1 2 सवज्रम्, D8 सवर्णम् ( for सचक्रम् ) — ( L. 1854 ) B1 3 D6 T1 G1 3–5 M2 4 आपूर्णं ( for आकीर्णं ). — ( L 1855 ) D4 पलाश च ( f01 पलाशानाम् ) K2 3 आमुच्य रचितां शुभाम् ( for ᵇ ) — ( L 1856 ) K Ñ2 V1 3 B2 3 Dn D1–4 6 T1 2 G1 3–5 M2 4 -परिष्वज्य ( for °त्यज्य ) B3 Ds D6 संपतन्ति ( for निप° ). — ( L. 1857 ) T1 2 G1 3–5 M4 मायायुद्ध- ( for महायुध- ) G5 -रतः ( for -धर ) G3 शुभ्रवस्त्र-, M4 शुभ्रवर्म- ( for शुभ° ). T2 G1. 4 अभवन्मन्दरप्रभ ( for ᵇ ) — ( L 1858 ) B1 3 Ds D6 सतल( B5 °नु )त्रशिरस्त्राणो, T1 2 G1 3–5 M2. 4 विनिबद्धतलत्राणो ( for ᵃ ). — ( L 1860 ) B1 3 Ds T1 2 G1. 3–5 M2. 4 तस्य सैन्य-, D8 रथानां च ( for तस्य दैत्य ) K2. 3 रणाजिरे, T1 2 G1 3–5 M2 4 महारणम् ( for °रणे ). — ( L. 1861 ) D4 दैत्य- ( for सैन्य- ) V1. 3 B Ds D6 G3 M2. 4 -गतास् ( for -हतास् ). — ( L 1862 ) V3 Dn1 D2 सप्तर्ति वै; D8 सप्तैव च ( for सप्ततिर्वै ) Cal ed महाभाग ( for सहस्राणि ) — ( L 1863 ) K2 3 व्यूहमध्ये रथस्थस्तु, D6 मध्ये

तस्मिञ्शतसहस्राणि पुरो यान्ति महाद्युतेः । [ 1865 ]
दानवानां बलवतां शक्रप्रतिमतेजसाम् ॥
स समं वर्तमानस्तु पक्षाभ्यां विस्तृतो महान् ।
अभवद्दानवव्यूहो दुर्भेद्यः सर्वदैवतैः ॥
षष्टिं रथसहस्राणि दानवानां धनुर्भृताम् ।
नानाप्रहरणानां च परिमाणं न विद्यते ॥ [ 1870 ]
गदापरिघनिस्त्रिंशशूलमुद्गरपट्टिसैः ।
प्रगृहीतैर्व्यराजन्त दानवाः पर्वतोपमाः ॥
गर्जन्तो विनदन्तश्च विक्रोशन्तः पुनः पुनः ।
अयुध्यन्त महावीर्याः समरेष्वनिवर्तिनः ॥
तत्र तूर्यसहस्राणां संजज्ञे निस्वनो महान् । [ 1875 ]
हयानां च गजानां च गर्जतामभितौजसाम् ॥
दुंदुभीनां च निर्घोषः पर्जन्यनिनदोपमः ।
शुश्रुवे शङ्खशब्दश्च पटहानां च निस्वनः ॥
तेन शङ्खनिनादेन भेरीतूर्यरवेण च ।
निर्घोषेण रथानां च क्रोशतीव नभःस्थलम् ॥ [ 1880 ]
सागरप्रतिमौघेन बलेन महता वृतः ।
प्रह्लादोऽयुध्यत क्रुद्धः कालान्तकयमोपमः ॥
तस्य नादेन रौद्रेण घोरेणाप्रतिमौजसः ।
विनेदुः सर्वभूतानि त्रैलोक्यविसृतैः स्वरैः ॥
अन्तरिक्षात्पपातोल्का वायुश्च परुषो ववौ । [ 1885 ]
वमन्त्यः पावकं घोरं शिवाश्चैव ववाशिरे ॥
प्रह्लादस्तु महावीर्यः प्रहसन्युद्धदुर्मदः ।
उवाच वचनं श्रीमांस्तत्कालक्षमसुत्तमम् ।
अद्याहं दर्शयिष्यामि स्वबाहुबलमूर्जितम् ।
अद्य मद्बाणनिहतान्देवान्द्रक्ष्यथ संयुगे ॥ [ 1890 ]
बान्धवा निहता येषां त्रिदशैरिह संयुगे ।
अद्य ते निर्वपिष्यन्ति शत्रुमांसानि दानवाः ॥
इममद्य समुद्धूतं रेणुं समरमूर्धनि ।
अहं संशमयिष्यामि शत्रुशोणितविस्रवैः ॥
तिमिरौघहतार्कं च सैन्यरेण्वरुणीकृतम् । [ 1895 ]
आकाशं संपतिष्यन्ति खद्योता इव मे शराः ॥
हृष्टाः संपरिमोदध्वं देवेभ्यस्त्यज्यतां भयम् ।
अद्याहं निहनिष्यामि कालेन्द्रं धनुषा रणे ॥
तोषयिष्यामि राजानं बालिं बलवतां बरम् ।
त्रिदशान्सगणाम्हत्वा रणे चान्तकसंनिभान् ॥ [ 1900 ]

---

व्यूहोदरे चैव (for $^{a}$) — (L 1864) Bom. Poona eds. G(ed) धनुर्विस्फारयामास (for $^{a}$) — $\tilde{N}_{1}$ $T_{2}$ $G_{1\ 4}$ $M_{2\ 4}$ om lines 1865–1866. $K_{2}$ $D_{8}$ om (hapl.) lines 1865$^{b}$–1869$^{a}$ — (L 1867) Ds वर्धमानस् (for वर्त°) $K_{1\ 4}$ संवर्तमानस्तु तदा, $T_{2}$ $G_{1\ 3\ 4}$ $M_{2\ 4}$ जयश्रीवर्धमानस्तु (for $^{a}$) $G_{3}$ ऽभवत् (for महान्) $D_{4}$ युयुधे दानवो महान् (for $^{b}$). — (L 1869) $B_{3}$ $Ds_{1}$ $G_{3}$ $M_{4}$ ततः शत-, $T_{2}$ $G_{1,4}$ शतं शत- (for षष्टिं रथ-). — (L. 1872) $B_{1,3}$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ दानवा पर्वता इव (for $^{b}$) — (L 1873) $D_{2}$ विक्रान्ताश्च, $D_{4}$ शक्रशत्रु (for विक्रोशन्तः) $B_{1\ 3}$ $D_{6}$ च दानवाः, $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ च भैरवम् (for पुनः पुनः) — (L 1875) K $\tilde{N}_{1\ 2}$ $V_{1,3}$ $B_{2}$ $D_{1-4}$ भेरीशङ्खरवाणि च, Dn भेरीणां च महास्वनः (for $^{b}$) — (L 1876) $K_{2\ 3}$ $\tilde{N}_{1,2}$ $V_{1\ 3}$ B Ds $D_{3\ 6}$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ गर्जतामतिवेगिताम् (for $^{b}$) — $\tilde{N}_{1}$ om line 1878 — (L 1881) $G_{3}$ सागरप्रतिमेनाथ (for $^{a}$) — (L 1882) $Ds_{2}$ रणे (for क्रुद्ध.) — (L 1884) $K_{4}$ $Dn_{1}$ -विस्तृतैः, $B_{1\ 3}$ -विकृतैः (for -विसृतैः) $K_{2\ 3}$ त्रैलोक्यं विस्मितं शनैः, $\tilde{N}_{1}$ °क्यसहितास्तदा, $V_{3}$ $D_{1\ 3\ 4}$ °क्यवि($D_{1\ 3}$ °क्ये वि)स्तृतैः स्वनैः; $B_{2}$ $T_{1,2}$ $G_{1,3-5}$ $M_{2,4}$ °क्यवि($M_{4}$ °क्ये वि)कृतैः स्वनैः; $Ds_{1}$ $D_{6}$ °क्ये विकृतैः स्वरैः (for $^{b}$) — (L 1885) Bom. Poona eds G(ed) परं त्यक्त्वा (for पपातोल्का). — (L 1886) $K_{1,4}$ $D_{1\ 2,4}$ नदन्ति च (for ववाशिरे) — (L 1888) $D_{4}$ योधांस्; $T_{2}$ $G_{3\ 5}$ $M_{2}$ धीमांस् (for श्री°) — $V_{3}$ $D_{8}$ $T_{1}$ $G_{3\ 5}$ om (hapl) line 1891 — (L. 1891) Cal ed. संगरे (for संयुगे) $D_{6}$ त्रिदशैरथ संगरे (for $^{b}$) — (L. 1892) $K_{1\ 2}$ $Dn_{1}$ Ds $D_{3\ 4}$ अद्य निर्वर्तयिष्यन्ति, $K_{4}$ $D_{1}$ अद्य ते वर्तयि°, $T_{2}$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ अद्य निर्वापयिष्यन्ति($M_{4}$ °ष्यामि), $G_{3}$ अद्य वै भक्षयिष्यन्ति (for $^{a}$) $K_{2\ 3}$ शतशस्तानि दानवा., $T_{1\ 2}$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ शत्रुमांसैर्नि($G_{5}$ $M_{4}$ °सं नि)-शाचरा. (for $^{b}$) — $V_{3}$ om line 1893 — (L 1893) $K_{4}$ $D_{2}$ रजः (for रेणु) $K_{2\ 3}$ चरण- (for समर-). — $T_{2}$ $G_{1,4}$ om (hapl) lines 1894$^{b}$–1898$^{a}$ — (L 1895) $T_{1}$ $G_{3\ 5}$ $M_{2\ 4}$ तिमिरोप($G_{3}$ °रोम-, $M_{4}$ °रौघ)हताभ्रेव (for $^{a}$). — (L 1897) $T_{1}$ $G_{5}$ $M_{2}$ आकाशे (for °शं). $K_{1}$ $D_{4}$ खेचराः (for मे शराः) — (L 1196) $K_{2,3}$ $D_{4}$ दृष्ट्वा (for हृष्टाः) $K_{2\ 3}$ तदारिं (for संपरि) $K_{2\ 3}$ हे दैत्यास् (for देवेभ्यस्). — (L 1898) $G_{5}$ निष्पतिष्यामि (for निहनि°). $T_{1,2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ कालं स्व- (for कालेन्द्रं). — (L. 1899) $D_{8}$ राजेन्द्रं (for राजानं). Bom. Poona eds. G(ed.) रणे (for

अक्षयाः सन्ति मे तूणाः शराश्चाशीविषोपमाः ।
स्थातुं मे पुरतः शक्ताः के रणे जीवितेप्सवः ॥
हत्वा रिपुगणांस्तुष्टिरनुरागश्च राजसु ।
हतस्य त्रिदिवे वासो नास्ति युद्धसमा गतिः ॥
ते भयं पृष्ठतः कृत्वा रणे दानवसत्तमाः । [ 1905 ]
निहत्येमानरीन्सर्वान्मोदध्वं नन्दने वने ॥
एवमुक्त्वा महासैन्यं प्रह्लादो दानवोत्तमः ।
कालसैन्यं महारौद्रं तरसामर्दतासुरः ॥
सर्वास्त्रविद्वाञ्शूरश्च नित्यं चाप्यपराजितः ।
युद्धेष्वभिमुखो नित्यं स्वबाहुबलदर्पितः ॥ [ 1910 ]
षष्टिं रथसहस्राणि विविधायुधधारिणाम् ।
प्रह्लादस्यातिवीर्यस्य ये तस्य तनया निजाः ॥
तैस्तु क्रतुशतैरिष्टं विपुलैराप्तदक्षिणैः ।
क्षान्ता धर्मपरा नित्यं सत्यव्रतपरायणाः ॥
दातारः प्रियवक्तारो वक्तारः शास्त्रवस्तुषु । [ 1915 ]
स्वदारनिरता नित्यं ब्रह्मण्याः सत्यसंगराः ॥
यष्टारः क्रतुभिर्नित्यं नित्यं चाध्ययने रताः ।
इष्वस्त्रकुशलाः सर्वे बहुशो दृष्टविक्रमाः ॥
मत्तवारणविक्रान्ताः शत्रुसैन्यप्रमर्दकाः ।
दारयन्तः पदाक्षेपैः सुघोरान्वातरेचकान् ॥ [ 1920 ]
युद्धोत्सुकधियो नित्यं क्रोधरञ्जितलोचनाः ।
संदष्टौष्ठपुटा दैत्या विनेदुर्भीमविक्रमाः ॥
क्ष्वेडितास्फोटितरवैरन्योन्यं समहर्षयन् ।
वेणुशङ्खरवैश्चैव सिंहनादैश्च पुष्कलैः ॥
आप्लुत्याप्लुत्य सहसा रणे वव्रुरनेकशः । [ 1925 ]
तालमात्राणि चापानि विकृष्य सुमहाबलाः ॥
अमृष्यमाणाः सहसा दानवा बाणपाणयः ।
महासुरैरप्यजिता योधयन्ति रणेऽन्तकम् ॥
प्रतप्तहेमाभरणाः सर्वे ते श्वेतवाससः ।
दानवा मानिनः सर्वे सर्वे स्वर्गाभिकाङ्क्षिणः ॥ [ 1930 ]

---

वरम्). —(L 1900) $T_{1\ 2}$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ सबलान् (for सगणान्). $B_{1\ 3}$ $D_{s}$ $D_{6}$ त्रिदशान्समरे जित्वा (for $^{a}$). K $\tilde{N}_{1}$ $B_{3}$ $D_{1\ 2\ 4}$ $T_{1\ 2}$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ रणे चान्तकमन्तिकात्, $B_{1\ 3}$ $D_{s}$ $D_{6}$ $G_{3}$ बाणैरन्तकसंनिभै (for $^{b}$) —(L 1902) $K_{2\ 3}$ $\tilde{N}_{1\ 2}$ $V_{1\ 3}$ $D_{3}$ समरे (for पुरत) —(L. 1904) $K_{2}$ हतश्च त्रिदशे वासो (for $^{a}$) $K_{1\ 4}$ $\tilde{N}_{1}$ $D_{2}$ रति. (for गतिः) —(L 1905) $T_{1}$ $G_{1}$ Bom Poona eds तद् (for ते) —(L 1906) $T_{2}$ $G_{5}$ निघ्नत (for निहत्य) Dn $D_{6}$ [ए]तान् (for [इ]मान्) $D_{3}$ (also as above) रिपून् (for अरीन्) —(L 1908) $K_{2\ 3}$ -घोरं (for -रौद्रं) $B_{1\ 3}$ $D_{s}$ $D_{6}$ $T_{1\ 2}$ $G_{3-5}$ $M_{2\ 4}$ कालस्य समरे सैन्यं (for $^{a}$) $K_{2\ 3}$ ममर्द तरसासुर (for $^{b}$). —(L 1909) $K_{1\ 4}$ असुरो; Bom. Poona eds G(ed) वीरश्च (for शू°) $\tilde{N}_{1, 2}$ $B_{2, 3}$ Dn $D_{s}$ $D_{6}$ $T_{1, 2}$ $G_{1, 3-5}$ $M_{2\ 4}$ सर्वास्त्रविश्च ($\tilde{N}_{1\ 2}$ Dn °विद्यः) शूरश्च (for $^{a}$) $D_{4}$ न त्वं चापि पराजितः (for $^{b}$) —(L 1810) $K_{3}$ om (hapl) lines 1910$^{b}$–1914$^{a}$ $V_{3}$ स्वबाहुबलमूर्जितः; $T_{1}$ $G_{3\ 5}$ °माश्रितः (for $^{b}$) —(L 1911) $K_{1, 4}$ -सहस्राणां (for °णि) —(L 1912) $D_{2, 4}$ जिताः; $T_{2}$ [अ]नुजाः (for निजाः). $K_{3}$ तनया निर्ययुस्तत (for $^{b}$). —(L 1913) $T_{2}$ $G_{1, 4, 5}$ सर्वैः क्रतुवरैरिष्टं (for $^{a}$). $T_{1}$ $G_{5}$ विविधैर् (for विपुलैर्). $K_{3}$ समाप्तवरदक्षिणैः (for $^{b}$). — $T_{1, 2}$ $G_{1\ 4, 5}$ $M_{2\ 4}$ om lines 1914–1915 —(L 1914) $K_{1}$ $D_{4}$ क्षत्र-, $K_{3}$ ख्याता (for क्षान्ता). $D_{1}$ om (hapl.) lines 1914$^{b}$–1916$^{a}$ $B_{3}$ $D_{6}$ नित्यं (for सत्य). —$\tilde{N}_{1}$ $V_{1\ 3}$ om lines 1916 —(L 1916) $\tilde{N}_{2}$ B $D_{s}$ $D_{6}$ दान्ता; Dn शान्ता (for नित्यं) $T_{1, 2}$ $G_{1\ 3-5}$ $M_{2, 4}$ -वादिनः (for -संगराः) — $T_{1\ 2}$ $G_{1\ 4\ 5}$ $M_{2, 4}$ om. lines 1917–1926 —(L 1918) $D_{4}$ इज्यासु (for इष्वस्त्र-). $K_{1\ 2}$ $\tilde{N}_{1\ 2}$ B $Dn_{2}$ $Ds_{2}$ $D_{1, 6}$ दृढ- (for दृष्ट-). — $\tilde{N}_{1}$ $V_{1}$ om (hapl) lines 1919–1922. —(L 1919) $\tilde{N}_{2}$ $B_{1}$ $D_{s}$ $D_{6}$ -विमर्दकाः, $Dn_{1}$ -प्रमर्दनाः, $D_{2}$ प्रवर्तकाः (for -प्रमर्दकाः). —(L 1920) $K_{1, 4}$ $\tilde{N}_{2}$ B Dn $D_{s}$ $D_{1, 2\ 4\ 6}$ $G_{3}$ ईरयन्तः (for दार°) $K_{2\ 3}$ परानीकान् (for पदाक्षेपैः) $K_{4}$ सुघोरास्ते विरेचकाः; $D_{2}$ °न्वा रणेचरान् (for $^{b}$). —(L 1921) Bom Poona eds G(ed) धिया (for -धियो) $K_{1\ 4}$ $D_{1\ 2\ 4}$ युद्धोत्सुका($D_{1}$ °त्सवा)श्च ये नित्यं; $\tilde{N}_{2}$ °द्यतधियो नित्यं (for $^{a}$). $K_{2\ 3}$ क्रोधारक्तविलोचनाः (for $^{b}$). —(L 1922) $K_{2, 3}$ सिंह- (for भीम-) —(L. 1923) $B_{1\ 3}$ $D_{s}$ $D_{6}$ हर्षयन्त परस्परम् (for $^{b}$). —(L. 1924) $K_{2\ 3}$ वेणुवंश- (for °शङ्ख-) —(L. 1925) $K_{2\ 3}$ धावन्, $G_{3}$ जग्मुर् (for वव्रुर्) —(L 1926) $\tilde{N}_{1}$ $B_{1\ 3}$ $D_{6}$ सुमहाभुजाः (for °बलाः) —(L 1927) $K_{4}$ $D_{1, 2}$ शस्त्र-; Dn चाप-; $T_{1\ 2}$ $G_{1\ 4, 5}$ $M_{2, 4}$ प्रास- (for बाण-). —(L. 1928) B $D_{6}$ $T_{1, 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ सुरासुरैर् (for महा°). $V_{1, 3}$ B $D_{3\ 6}$ $T_{2}$ $G_{1\ 3\ 4}$ $M_{2}$ [अ]जितं (for °ता) $D_{2}$ ऽन्वहम् (for ऽन्तकम्) —(L 1930) $D_{s}$ $D_{6}$ युद्धाभि- (for स्वर्गाभि-). — After line 1930, $\tilde{N}_{2}$ B $D_{s}$ $D_{6}$ ins.:

शुशुभे सा चमूर्दीप्ता पताकाध्वजमालिनी ।
गजाश्वरथसंबाधा स्वर्गमार्गाभिकाङ्क्षिणी ॥
ततः कालस्तु निर्यातो भीमो भीमपराक्रमः ।
विनदन्सुमहाकायो व्याधिभिर्बहुभिर्वृतः ॥
ददर्श महतीं सेनां दानवानां बलीयसाम् । [ 1935 ]
अभिसंजातहर्षाणां कालं समभिगर्जताम् ॥
आपतन्तं तदानीकं दानवानां तरस्विनाम् ।
प्रतिलोमं चकाराशु व्याधिभिः सहितोऽन्तकः ॥
प्रविश्य ध्वजिनीं चैषां घातयामास वीर्यवान् ।
कालो रुधिररक्ताक्षः स्वेनानीकेन संवृतः ॥ [ 1940 ]
प्रह्रादबलमत्युग्रं प्रह्रादं च महाबलम् ।
आजघान रणे कालो दण्डमुद्गरपट्टिसैः ॥
शरशक्त्यृष्टिखड्गांश्च शूलानि मुसलानि च ।
गदाश्च परिघाश्चैव विविधाश्च परश्वधाः ॥
धनूंषि च विचित्राणि शतघ्नीश्च स्थिरायसीः । [ 1945 ]
पात्यन्ते व्याधिभिर्युद्धे दानवानां चमूमुखे ॥
बहवो व्याधयो युद्धे बहूनसुरपुंगवान् ।
व्याधीनपि च दैत्यौघा निजघ्नुर्बहवो बहून् ॥
शूलैः प्रमथिताः केचित्केचिच्छिन्नाः परश्वधैः ।
परिघैराहताः केचित्केचिच्च परमायुधैः ॥ [ 1950 ]
केचिद्द्विधाकृताः खड्गैः स्फुरन्तः पतिता भुवि ।
व्याधयो दानवैरेवं नानाशस्त्रैर्विदारिताः ॥
ते चापि व्याधिभिः सर्वे विविधैरायुधोत्तमैः ।
खड्गैश्च विपुलैस्तीक्ष्णैः प्रासतोमरमुद्गरैः ।
भिन्नाश्च दानवाः शूलैर्निकृत्ताश्च परश्वधैः ॥ [ 1955 ]
मुद्गरैः पट्टिसैश्चैव व्याधिभिश्च महाबलैः ।
क्षताः शस्त्रैरनेकैश्च मुष्टिभिश्च महामृधे ॥
वेमुः शोणितमक्षोभ्यं विष्टब्धदशनेक्षणाः ॥

---

117** सर्वे जयैषिणो वीरा सर्वे शत्रुवधोद्यता ।
— ( L 1831 ) Ñ2 V3 B3 Ds D6 T1 2 G1 3 4 M2 दृप्ता ; B1 हृष्टा ( for दीप्ता ) — ( L 1933 ) D2 करालो , T1 G5 M2 4 कालोऽभि- ; Bom Poona eds. G(ed ) कालः सु- ( for कालस्तु ) — ( L 1934 ) K2 3 व्यनदत्सु- , K4 Ñ1 2 V1 B1 3 Ds2 D1 2 6 G3 निनदन्सु- , D8 विविधास्त्रो ( for विनदन्सु- ) — ( L. 1936 ) Ñ2 रणे ( for अभि- ) K Ñ2 V1. 3 B2 Dn Ds D1–4 -दर्पाणां ( for हर्षाणां ) T1. 2 G1 3–5 M2. 4 काले ( for कालं ) — ( L 1937 ) Ñ1 Dn तमायान्तं ; B2 तदापतत् , Bom Poona eds G(ed ) तदायान्त ( for आपतन्तं ) K4 D1 2 महानीकं ( for तदा° ) — ( L 1939 ) Ds T1 G3 तेषां ; G3 एकां , M2 चैनां ( for चैषां ) . Ñ2 V1. 3 Dn1 Ds D1. 3 T1 2 G1 3–5 M2 4 पातयामास ( for घात° ) . K4 Ñ1 2 V1. 3 B2 Dn D1–3 6 T1 2 G1 3–5 M2 4 दानवान् ( for वीर्य° ) . —( L. 1941 ) D3 om 1941ᵇ-1942ᵃ Ñ1 B1 D6 महासुरम् ( for °बलम् ) . — ( L 1944 ) K Ñ1 2 V1. 3 B Dn Ds D1–4 6 G3 विचित्राश् ( for विविधाश् ) — ( L 1945 ) Ñ2 V1 3 G3 स्थिरायसाः ( for °सीः ) B2 3 Ds शतघ्न्यश्च स्थिरायसा , T2 G5 विविधाश्चायुधा शिता , T2 G1 शतघ्नीश्चायसाश्चि( G2 °स्थि )ता ; G4 M2 4 °घ्न्यश्चायसा शिता ( for ᵇ ) . — Dn2 om ( hapl. ) lines 1946ᵇ-1947ᵃ — After line 1946, T1 2 G1. 3–5 M2 4 ins :

118** अतिसारा ज्वराश्चैव यक्ष्माण श्लेष्मजा रुजा. ।
शिरोरोगाक्षिरोगाश्च औदरीकाश्च येऽगदा ॥
[ ( L. 1 ) T3 शोफजा ( for श्लेष्मजा ) . G3 औदारिकाश् , M2 औदरीयाश् ( for °काश् ) ]

— ( L 1947 ) Ñ1 निहन्ति स्म रणे सुरान् ( for ᵇ ) — ( L. 1948 ) T1 G3 5 समरे , M4 बहुशो ( for बहवो ) — ( L. 1949 ) V3 शैलैः प्र , B1 3 D6 शूलेन ( for शूलैः प्र- ) . T2 G3 शूलै प्रमुदि( G3 °लैर्विदारि )ता केचित् ( for ᵃ ) . T1 2 G1 3 5 M2 केचिच्च परिघैरपि ( for ᵇ ) — K2 3 om (hapl.) line 1950 — ( L 1950 ) T1 2 G1. 3–5 M2. 4 परमासिभिः ( for °युधैः ) . — ( L 1951 ) D1 विद्राविताः ( for द्विधाकृताः ) D6 तीक्ष्णैः ( for खड्गैः ) . T1 G5 पतन्तः ( for स्फुरन्तः ) . G3 स्फुटन्तः पतिता युधि ( for ᵇ ) — ( L 1953 ) D6 T2 G1 4 M2 4 सख्ये ( for सर्वे ) B1 D6 M2 तथैव प्रासतोमरैः ; T1 2 G1 4 5 विविधैश्चोत्तमायुधै ( for ᵇ ) — ( L 1954 ) B1 D3 6 G3–5 विविधैस् , B3 T2 G1 M2. 4 विमलैस् ; T1 मुस° ( for विपु° ) B1 D6 T2 G1 3–5 M2 4 तथैव प्रासतोमरै ( for ᵇ ) — ( L. 1955 ) B3 T2 G1 3. 4 M2. 4 विभिन्ना ; D2 छिन्नाश्च , D6 निर्भिन्ना ( for भिन्नाश्च ) K4 D1 2 T1 सर्वे ; D6 घोरा ( for शूलैर् ) . G5 विभिन्ना दानवैः शूरै ( for ᵃ ) . — ( L 1956 ) T1 2 G1 3–5 M2 4 मुसलैश् ( for पट्टिसैश् ) B1 3 D6 हता भृशम् ( for महाबलैः ) . — ( L 1957 ) K2 Ñ2 Dn1 D3 कृता. , K3 4 Dn2 कृत्ताः ( for क्षताः ) K1 B Ds D4 6 T1 2 G1 3–5 M2 4 हता भृशम् ( for महामृधे ) . — ( L 1958 ) K Ñ1 2 V1 3 B2 Dn D1–4 वेमुः शोणितमन्योन्यं ( B2 °मास्येभ्यो ) , T1 2 G1 4 5 M2 4 वमन्त शोणितं वक्त्रैर् ( T2 G1 °क्त्राद् ) ( for ᵃ ) T1 2 G1. 5 M2 4 -वदनेक्षणाः ( for -दशने° ) . — ( L. 1959 ) M2 रुदतां ( for नदतां ) .

आर्तस्वरं च नदतां सिंहनादांश्च गर्जताम् ।
बभूव तुमुलः शब्दः संग्रामे लोमहर्षणः ॥ [ 1960 ]
मुष्टिभिश्चोत्तमाङ्गानि तलैर्गात्राणि चासकृत् ।
सादितानि मही जग्मुस्तिष्ठतामेव संयुगे ॥
अस्त्रफेना ध्वजावर्ता छिन्नबाहुमहोरगा ।
शूलशक्तिमहामत्स्या चापग्राहसमाकुला ॥
रथेषूपलसंबाधा ध्वजद्रुमसमावृता । [ 1965 ]
सशब्दघोरविस्तारा लोहितोदाभवन्नदी ॥
स्वधनुःशक्रधनुषौ काञ्चनाङ्गदविद्युतौ ।
तौ दैत्यकालजलदौ शरधारां व्यमुञ्चताम् ॥
तौ महामेघसंकाशौ रथनागगतौ तदा ।
बभूवतुरतिक्रुद्धौ साम्बुगर्भाविवाम्बुदौ ॥ [ 1970 ]
तप्तकाञ्चनसंनाहौ दिव्यहारविभूषितौ ।
तौ विरेजतुरायस्तौ सूर्यवैश्वानरोपमौ ॥

तौ महाचलसंकाशावन्योन्यस्य चमूमुखे ।
वज्राशनिसमस्पर्शैर्बाणैर्जघ्नतुराहवे ॥
परस्परं समासाद्य तयोर्युधि दुरासदम् । [ 1975 ]
नाशंसन्त तदा योधा जीवितान्यपि संयुगे ॥
शरनिर्भिन्नसर्वाङ्गा युधि प्रक्षीणजीविताः ।
निपेतुर्योधमुख्यास्तु रुधिरोक्षितवक्षसः ॥
पतितैर्निपतद्भिश्च पात्यमानैश्च संयुगे ।
बभूव भूः समाकीर्णा योधैरुद्गतजीवितैः । [ 1980 ]
न गृह्णतोः शरान्घोरान्न च संदधतोस्तयोः ।
अन्तरं ददृशे कश्चित्प्रयत्नादपि संयुगे ॥
लघुत्वाच्च महाबाहू युद्धशौण्डौ महाबलौ ।
मण्डलीभूतधनुषौ सकृदेव बभूवतुः ॥
प्रह्लादस्य च बाणौघैर्दुद्रावान्तकवाहिनी । [ 1985 ]
तुद्यमाना बलवता वायुनेवाभ्रमण्डलम् ॥

---

$\tilde{N}_2$ सिंहनादं च कुर्वताम्, $T_1$ $G_{1\ 3-5}$ $M_{2\ 4}$ °नादं विनर्दताम्, $T_2$ °नादान्विनर्दताम् ( for $^b$ ) — ( L 1960 ) $T_1$ $G_3$ संग्रामो ( for °मे ) $K_{1\ 3\ 4}$ $\tilde{N}_{1\ 2}$ $V_{1\ 2}$ B Dn Ds $D_{1-4\ 6}$ -हर्षणे ( for °ण ) — $K_3$ om lines 1961–2023 — ( L 1961 ) $\tilde{N}_1$ भल्लैर्दिव्यानि चासकृत् ( for $^b$ ). — ( L 1962 ) $T_2$ $G_{1\ 4}$ ताडितानि, $G_5$ त्रासि° ( for सादि° ) — ( L 1963 ) $K_1$ $\tilde{N}_{1\ 2}$ $V_{1\ 3}$ $Dn_2$ Ds $D_{2\ 4\ 6}$ अस्त्रफेना, B $Dn_1$ वस्त्र°, $M_{2\ 4}$ शस्त्र° ( for अस्त्र° ) $T_{1\ 2}$ $G_{1\ 3-5}$ शस्त्रफेना रथावर्ता ( for $^a$ ). — ( L 1964 ) $T_{1\ 2}$ $G_{1\ 3-5}$ -गदा ( for -महा- ) $T_1$ $G_{3\ 5}$ द्विपग्रा( $T_1$ °ग्र )ह-, $T_2$ $G_{1\ 4}$ चापग्रह- ( for °ग्राह ) — ( L 1965 ) $K_2$ $V_3$ रथे शै( $V_3$ °थशै )वलसंबाधा, $K_4$ रथैश्चोपलसं°; $\tilde{N}_1$ रथेनाचलसंबद्धा, $\tilde{N}_2$ रथाश्च गणसंबाधा, $B_{1\ 3}$ $Dn_2$ $Ds_2$ $D_6$ रथेषोपल°, $D_3$ शकटोपलसंबद्धा, $T_1$ $G_{3-5}$ $M_2$ रथेषाचलसंबाधा; $T_2$ $G_1$ रथेषु जलसबन्धा ( for $^a$ ) $K_1$ $D_4$ -वंश- ( for -द्रुम- ) $K_2$ -समाकुला, Dn -लतावृता ( for -समा° ). — ( L 1966 ) $T_1$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ सशब्दा ( for सशब्द- ) $B_1$ $D_3$ -घोष-, $G_{1\ 4}$ भोग- ( for -घोर- ) $V_3$ महानदी ( for [अ]भवन्नदी ). — ( L 1967 ) $D_3$ सबाणधनुषौ वीरौ ( for $^a$ ) $V_1$ -भूषितौ; $V_3$ -भूषणौ ( for -विद्युतौ ) — $D_3$ om ( hapl. ) lines 1968–1972 $G_4$ om ( hapl ) lines 1968–1971 — ( L 1968 ) $B_{1\ 3}$ $Ds_2$ ववर्षतु ( for व्यमुञ्चताम् ) $Ds_1$ $D_6$ शरधारा ववर्षतु, $T_{1\ 2}$ $G_{1\ 3\ 5}$ $M_{2\ 4}$ शरतोय( $T_2$ °या )मवर्षताम् ( for $^b$ ) — ( L 1970 ) $K_{1\ 2\ 4}$ $\tilde{N}_{1\ 2}$ $V_1$ Dn $D_{1\ 2}$ $T_2$ $G_1$ $M_{2\ 4}$ अभिक्रुद्धौ ( for अति° ) — ( L 1971 ) $T_2$ $G_{1\ 3}$ दिव्याभरणभूषितौ ( for $^b$ ) — ( L 1972 ) $V_3$ विचेरतुर् ( for विरेजतुर् ) $\tilde{N}_1$ $B_{2\ 3}$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ आयत्तौ, $V_3$ आयान्तौ ( for आयस्तौ ) — ( L 1973 ) $V_3$ $B_1$ $G_1$ महामेघ- ( for °चल ) $B_{1\ 3}$ Ds Ds चमूं तदा, $B_2$ चमूस्तथा ( for °मुखे ) — ( L 1974 ) $K_2$ $\tilde{N}_1$ शक्राशनि- ( for वज्रा° ) $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2,4}$ समै( $T_1$ -शरै-, $G_5$ शितै )र्बाणैर् ( for -समस्पर्शैर् ) $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ जघ्नतुः कालदानवौ ( for $^b$ ) — ( L 1975 ) $T_{1\ 2}$ $G_{1\ 5}$ $M_2$ ( *inf lin.* as above ) शरस्पर्शं ( for परस्पर ) Bom ed G(ed ) समाद्यन्त ( for °साद्य ) $K_1$ युद्धं, $D_{3\ 4}$ $G_3$ युद्धे ( for युधि ) $\tilde{N}_2$ दुरासदौ, $D_6$ $T_2$ $G_1$ °सदे; $T_1$ $G_5$ $M_4$ सुदारुणे, $M_2$ ( *inf lin* as above ) सुदारुणम् ( for दुरासदम् ) $K_4$ Dn $D_2$ तयोर्युद्धे दुरासदे ; $T_{1\ 2}$ $G_{1\ 4\ 5}$ °द्धे सुदारुणे ( for $^b$ ) — ( L 1976 ) $D_3$ $T_{1\ 2}$ $G_{1\ 4,\ 5}$ $M_4$ नाशशसुः ( for नाशंसन्त ) $K_1$ योद्धा, $T_{1\ 2}$ $G_{1\ 3\ 5}$ $M_4$ ह्याजौ ( for योधा ) $T_{1\ 2}$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ जीवितेभ्योऽपि संयुगे ( for $^b$ ). — ( L 1977 ) $V_1$ $B_1$ $M_{2\ 4}$ शरैर्विभिन्नसर्वाङ्गा ( for $^a$ ). Bom Poona eds. G(ed ) बान्धवाः ( for जीविता° ). — ( L 1978 ) $T_{1\ 2}$ $G_{1,\ 3-5}$ $M_{2\ 4}$ -वाससः ( for -वक्षस ). — ( L 1979 ) $B_1$ विनदद्भिश् ( for निपत° ) $T_1$ $G_{1,\ 5}$ पला- ( $G_5$ पाल )यद्भिश्, $T_2$ $G_{3\ 4}$ $M_{2\ 4}$ पतिष्यद्भिश् ( for पात्यमानैश् ) — ( L 1983 ) $K_2$ लघुहस्तौ ( for °त्वाच्च ) — ( L. 1984 ) $B_{1\ 3}$ Ds $D_6$ मण्डलीकृतचापौ तु ( for $^a$ ) — ( L. 1986 ) $K_{1\ 2\ 4}$ $\tilde{N}_{1\ 2}$ $V_3$ Dn $D_{1-4\ 6}$ उ( $\tilde{N}_2$ द )ह्यमाना; Ds ताड्यमाना, $G_3$ वध्य° ( for तुद्य° ) $D_3$ बलाबद्धा ( for बलवता ) $K_{1\ 4}$ $D_{1-3}$ -मण्डली ( for °लम् ) — After 1986, $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ ins

119** ततो मुद्गरमादाय प्रह्लादो दानवोत्तमः ।
अन्तकाय प्रचिक्षेप तेन भग्नस्तदान्तकः ।

हतदर्पं तु विज्ञाय प्रह्लादः कालमाहवे ।
अपयातं च समराद्द्विषन्तं संप्रतर्क्य तम् ॥
मत्वा वशगतं चैव प्रह्लादो युद्धदुर्मदः ।
तत्रैवान्यां चमूं भूयः स ममर्द महासुरः ॥ [ 1990 ]
कालप्रह्लादयो युद्धमभवद्यादृशं पुरा ।
तादृशं सर्वलोकेषु न भूतं न भविष्यति ॥
एवमद्भुतवीर्यौजा महारणकृतव्रणः ।
प्रह्लादः परिवृद्धोऽत्र कालस्त्वपसृतो रणात् ॥

Colophon.

वैशंपायन उवाच ।

धनाध्यक्षमनुह्लादः प्रह्लादस्यानुजो बली । [ 1995 ]
ससैन्यो योधयामास क्षोभयन्यक्षवाहिनीम् ॥
महता च बलौघेन अनुह्लादोऽसुरोत्तमः ।
अर्दयामास संक्रुद्धो धनाध्यक्षं प्रतापवान् ॥
अमृष्यमाणस्त्रिदशानाहवस्थानुदायुधान् ।
चकार कदनं घोरं धनुष्पाणिर्महासुरः ॥ [ 2000 ]
आवर्त इव संजज्ञे बलस्य महतो महान् ।
क्षुभितस्याप्रमेयस्य सागरस्येव संप्लवः ॥
त्रिदशानां शरीरैस्तु दानवानां च मेदिनी ।
बभूव निचिता घोरैः पर्वतैरिव संप्लवे ॥
मेरुपृष्ठं तु रक्तेन रञ्जितं संप्रकाशते । [ 2005 ]
सर्वतो माधवे मासि पुष्पितैरिव किंशुकैः ॥
हतैर्वीरैर्गजैरश्वैः प्रावर्तत महानदी ।
शोणितौघमहातोया यमराष्ट्रविवर्धनी ॥
शकृन्मेदोमहापङ्का विप्रकीर्णान्त्रशैवला ।
छिन्नकायशिरोमीना अङ्गावयवशाड्वला ॥ [ 2010 ]
गृध्रहंससमाकीर्णा कङ्कसारसनादिता ।
वसाफेनसमाकीर्णा प्रोत्क्रुष्टस्तनितस्वना ॥
तां कापुरुषदुस्तारां युद्धभूमौ महानदीम् ।
नदीमिव जलापाये हंससार्थोपशोभिताम् ॥

---

प्राणसंशयमापन्नो निपपात महीतले ॥

— (L 1987) $K_2$ नि प्रयत्नं, $T_1$ $G_5$ हतगर्वं (for °दर्पं). — (L 1988) $G_5$ विषण्णं (for द्विषन्तं) — After line 1988, $T_{1\,2}$ $G_{1\,4\,5}$ $M_{2\,4}$ ins·

120** तनूज शार्ङ्गिण इति भीतं नाम तृणाननम् ।

— (L 1992) $V_{1,3}$ $B_{1\,3}$ $D_6$ $T_{1,2}$ $G_{1\,3-5}$ $M_{2\,4}$ -भूतेषु (for -लोकेषु) — (L. 1993) $D_3$ -वीर्याणां, $T_2$ $G_{1\,4}$ -वीर्यौ तौ (for -वीर्यौजा) $T_2$ $G_{1\,4}$ व्रणौ, $G_5$ -व्रणम् (for व्रण) — (L 1994) Bom Poona eds G(ed) त्वथ (for परि-).

COLOPHON[1] — *Mention of the Epic* $K_4$ Dn $Ds_2$ $D_1$ — *Mention of khila*· $V_{1\,3}$ B Dn Ds $D_{1\,3}$ — *Sub-parvan* $K_{1\,2}$ $Ñ_{1\,2}$ $V_{1\,3}$ B Dn Ds $D_{1\,2\,4}$ वामनम्, $D_3$ $T_{1\,2}$ $G_{1\,3}$ $M_{2\,4}$ वामनप्रादुर्भावः — *Adhy name* $B_1$ देवासुरसंग्रामे प्रह्लादकालयोर्युद्धम्, $B_2$ $D_{3\,6}$ प्रह्लादकालयोर्युद्धम्, Ds कालप्रह्लादयुद्धम्, $G_3$ प्रह्लादकालयोर्द्वन्द्वयुद्धम्, $M_{2\,4}$ कालपराजयः — *Adhy no* $K_2$ 229, $V_1$ 270, $V_3$ 245, Dn 244, $Ds_2$ 243, $D_3$ 256, $D_4$ 236; $T_1$ 312, $G_1$ 307, $G_{3\,5}$ 314, $G_4$ 311, $M_{2\,4}$ 24

(L 1996) $K_4$ $Ñ_{1\,2}$ Dn $D_{1\,2}$ ससैन्यं (for °न्यो) — (L 1997) $T_{1\,2}$ $G_{1\,3-5}$ $M_{2\,4}$ अनुह्लाद (for °ह्लादो) $B_{1\,3}$ $D_6$ ऽसुरोत्तमम् (for °म) — (L 1998) $V_3$ $T_{1,2}$ $G_{1,3-5}$ $M_{2\,4}$ धनाध्यक्षः (for °क्ष) — (L 1999) $K_{1\,2}$ $Dn_1$ $D_3$ $G_{3,4}$ अमृष्यमाणास्; $B_1$ °णांस् (for °णस्) — (L 2000) $Ñ_2$ $B_1$ महाबल (for °सुरः) — (L. 2002) $Ñ_2$ om lines 2002[b]–2009[a] $Ñ_2$ Ds $D_{3\,6}$ संप्लवे (for °व) — (L 2004) $V_3$ $D_5$ घोरा, $B_{1\,3}$ Ds $D_6$ $T_2$ सर्वा (for घोरैः) $T_1$ $G_{1\,3-5}$ $M_{2\,4}$ विभाति निचिता सर्वा (for [a]) $B_3$ Ds $D_6$ संवृता, $T_{1\,2}$ $G_{1\,3\,4}$ $M_{2\,4}$ काञ्चनैः; $G_5$ मेदिनी (for संप्लवे) — (L 2006) $T_2$ $G_{1\,3-5}$ $M_{2\,4}$ वनानि (for सर्वतो) $Ñ_1$ Poona ed किंशुक. (for कैः). — (L 2008) $K_{1\,4}$ शोणितौघा (for °तौघ-) $Dn_2$ -महाघोरा (for °तोया) $Ñ_1$ $B_{1\,3}$ Ds $D_6$ $G_3$ शोणितोघा ($B_{1\,3}$ °तोदा) महाघोरा (for [a]) — (L 2009) $K_2$ यन्कृन्मेदो-; $D_2$ $T_{1,2}$ $G_{1\,3-5}$ $M_2$ असृङ्मेदो- (for शकृन्मेदो-) $K_4$ प्रकीर्णा चान्त्रशैवला; $Dn_2$ संप्रकीर्णान्त्र°, $T_2$ $G_{1\,3-5}$ $M_{2\,4}$ विनिकीर्णान्त्र° (for [b]) — (L. 2010) $D_3$ छिन्नबाहु-, $T_{1\,2}$ $G_{1\,4\,5}$ $M_{2\,4}$ भिन्नकाय- (for छिन्न°). $V_{1\,3}$ B Ds $D_6$ -शर्करा (for -शाड्वला) — (L 2011) $T_{1\,2}$ $G_{1\,3-5}$ $M_{2\,4}$ -कङ्क- (for -हंस-) $B_3$ $D_6$ -गणाकीर्णा (for -समा°) $G_6$ om (hapl) lines 2011[b]–2012[a] $T_2$ $M_{2\,4}$ काक-, $G_{1\,4}$ केकि-, $G_3$ हंस- (for कङ्क). $B_{1\,3}$ $D_6$ $M_{2\,4}$ -नादिनी (for °ता) $Ñ_1$ प्रोत्कृष्टस्तनितस्वरा (for [b]) — (L 2012) $T_{1\,2}$ $G_3$ -चयाकीर्णा (for -समा°) $K_3$ प्रावर्तत महानदी, $K_4$ $M_{2\,4}$ प्रोत्कृष्टस्तननिस्वना (for [b]) — (L 2013) $Ñ_1$ $B_{1\,3}$ Ds $D_6$ -दुर्धर्षा (for दुस्तारां) — (L. 2014) $K_1$ $V_{1\,3}$ B Ds $D_{4\,6}$ [आ]तपापाये, $G_3$ वना° (for जला°). B Dn $D_{3,6}$

वैशंपायन उवाच ।
बृहस्पतेस्तु वचनं श्रुत्वाग्निः सत्यमीरितम् ।
भूयः प्रजज्वाल रणे हविषेव महामखे ॥
हतास्तु माया दैत्यानां संप्रदीप्ताग्निना रणे ।
हतमाया हतबला बलि ते समुपस्थिताः ॥
पराजितेषु दैत्येषु वह्निनाद्भुतकर्मणा । [2320]
प्रह्लादस्तूत्तरं वाक्यमाह दैत्यपतिं बलिम् ॥
भवानग्निश्च वायुश्च भास्करः सलिलं शशी ।
नक्षत्राणि दिशो व्योम भूश्च दानवसत्तम ॥
भविष्यं चैव भूतं च भवच्चासुरसत्तम ।
दत्तं हि ते भगवता वरहेतोः स्वयंभुवा ॥ [2325]
इन्द्रत्वं चामरत्वं च युद्धे चाप्यपराजयः ।
ईशित्वं च वशित्वं च बलं चैवामितं तव ।
सर्वभूतेश्वरत्वं च प्रभुत्वं च सदा तव ।
महायोगीश्वरत्वं च शूरत्वं च महामृधे ॥
अमितत्वं लघुत्वं च ये चान्ये सात्त्विका गुणाः ॥
तत्पराजय देवेन्द्रं देवान्सर्वांश्च सानुगान् ।
यथोक्तं ब्रह्मणा राजंस्तत्तथा न तदन्यथा ॥
तस्य तद्वचनं श्रुत्वा प्रह्लादस्य महात्मनः ।
बलिः परमसंहृष्टो गतः शत्रुरथो यतः ॥
ततः प्रयान्तं त्रिदशेन्द्रसंनिधौ [2335]
महासुरेन्द्रं बलिमुत्तमश्रियम् ।
तमञ्जसा चक्रुरभिप्रदक्षिणं
द्विजाश्च मुख्याः पशवश्च मङ्गलाः ॥
महाजटाभारधरास्तपस्विन-
स्तदा तमाहुर्विधिमन्त्रमङ्गलैः । [2340]

---

(L 2316) $K_4$ Dn $D_{1\ 2}$ श्रुत्वा सत्यं समीरितम्, $B_2$ श्रुत्वा चाग्निसमी° (for $^b$) — (L 2317) $D_4$ भयात् (for भूय) G(ed) प्रजज्वाल रणे वह्निर् (for $^a$) $D_3$ महाहवे (for °मखे) — (L 2318) $K_1$ $D_3$ हता सु-; $D_5$ न्यस्ताश्च; $M_4$ हता तु (for हतास्तु) $D_1$ हतां तु मायां दैत्यानां (for $^a$) $V_1$ [आ]हवे (for रणे) $K_4$ B Ds $D_{1\ 2}$ $T_{1\ 2}$ $G_{1.4\ 5}$ $M_{2\ 4}$ प्रदीप्तेनाग्निना रणे (for $^b$) —(L 2319) $T_{1\ 2}$ $G_{1\ 4.5}$ $M_{2\ 4}$ ततो दैत्या (for हतमाया) $\tilde{N}_1$ ततो मायाबलहता; $D_1$ हतमायां हतबलां (for $^a$) $D_3$ बलिनं; $D_5$ बलिं च (for बलिं ते) $T_{1\ 2}$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ बलिं दैत्यमुपागता. (for $^b$) — (L 2320) $T_{1\ 2}$ $G_1$ $M_{2\ 4}$ एवं (for परा-) — Before line 2321, $K_3$ ins प्रह्लाद — (L 2321) $B_1$ Ds तु परं, $D_4$ तु ततो, $G_3$ सत्वरं (for तूत्तरं) $T_2$ $G_{1.4}$ $M_{2\ 4}$ प्रह्लादस्तूपसंह्य( $M_{2\ 4}$ °वा )र्थं, $G_5$ °पसंवाह्य (for $^a$) $K_{2\ 3}$ प्राह (for आह). $\tilde{N}_1$ दैत्यासुरं, $M_4$ दैत्येश्वरं (for दैत्यपतिं) $D_2$ आददेऽश्वपतिं बलिम्, $D_5$ महादैत्यपतिर्बलिः ,$T_{1\ 2}$ $G_{1\ 4.5}$ $M_2$ प्राह दैत्येश्वरं बलिम् (for $^b$). — $K_{2\ 3}$ $\tilde{N}_2$ $V_3$ $D_6$ om line 2324 — (L 2324) $D_4$ भविष्यश्च, $T_{1\ 2}$ $G_{1\ 3\ 4}$ $M_{2\ 4}$ °ष्यच् (for °ष्य). — (L 2325) $K_{1\ 3}$ $\tilde{N}_2$ $V_{1\ 3}$ $B_1$ Dn Ds $D_4$ $M_4$ चैतद्, $D_3$ वै तद्, $T_{1\ 2}$ $G_{1\ 3-5}$ $M_2$ च ते (for हि ते) $D_6$ बलवता (for भग°) $K_{1\ 4}$ $\tilde{N}_1$ B $D_{1.2}$ $G_3$ $M_{2\ 4}$ वरदेन, $K_{2\ 3}$ $D_4$ वरार्हेण; $D_5$ यज्वहेतोः, $T_{1.2}$ $G_{1\ 4\ 5}$ वरदाने (for °हेतोः) — (L 2326) $B_3$ Ds च मरुत्त्वं, $D_5$ वामरत्वं; $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ अ°(for चा°) $D_6$ सङ्ग्रामेषु (for युद्धे चापि) $K_{1\ 3}$ $\tilde{N}_2$ $V_{1\ 3}$ B Ds $D_{4\ 5}$ [अ]-पराजयम् (for °यः) — (L 2327) $K_{1-3}$ $D_4$ ईशत्वं (for ईशित्वं). $K_4$ $\tilde{N}_1$ $B_2$ Dn $D_{1-3.6}$ $T_{1.2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ शुभम् (for तव) — $K_3$ $\tilde{N}_1$ $B_{1\ 3}$ $T_{1.2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ om line 2328 — (L 2328) $K_{1\ 4}$ Ds $D_{1\ 2\ 6}$ दैत्यराज, $\tilde{N}_2$ $V_{1.3}$ इन्द्रत्वं च, $D_4$ सप्रभुत्व (for प्रभुत्वं च) — (L 2329) $T_{1\ 2}$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ महोयोगेश्वरत्वं च (for $^a$) $V_2$ om. $2329^b$–$2330^a$. $T_{1\ 2}$ $G_{1\ 4.5}$ $M_{2\ 4}$ तथा दृढम् (for महामृधे). $G_3$ प्रभुत्वं च सदा तव (for $^b$) — (L 2330) $K_4$ $B_2$ (marg) $D_{1.2.6}$ अणिमा लघिमा चैव; $G_3$ अणुत्वमलघुत्वं च (for $^a$). — (L 2331) $K_4$ Dn $D_{1\ 2}$ $T_2$ $G_{3-5}$ $M_4$ दैत्येन्द्र (for देवेन्द्रं) $K_1$ $D_4$ तत पराजयस्वेन्द्रं, $K_{2\ 3}$ ततः पराजिताश्चेन्द्रं, $G_1$ Bom Poona eds G(ed) तत्पराजित्य दैत्येन्द्र (for $^a$) $K_2$ सात्त्विकान्; $K_3$ साग्निकान् (for सानुगान्). — (L 2332) $B_2$ $G_3$ यदुक्तं (for यथोक्तं) Dn तेन (for राजंस्). $K_{1-3}$ $\tilde{N}_2$ $V_{1.3}$ Ds $D_{3-5}$ यदुक्तं ब्रह्मणा तेन ($D_5$ तात) (for $^a$) $\tilde{N}_1$ तथा तच्चान्यथाभवत्, $T_1$ $G_{1\ 5}$ तथा ते नान्यथा भवेत्, $T_2$ $G_4$ $M_{2\ 4}$ तथा तच्चान्यथा भवेत् (for $^b$). —(L 2334) संक्रुद्धो, $Dn_1$ -संतुष्टो (for -संहृष्टो) $K_1$ $V_{1.3}$ $B_{2\ 3}$ Ds $D_5$ शक्र- (for शत्रु-). $K_4$ $\tilde{N}_1$ $B_1$ Dn $D_{1-3}$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ प्रायाच्छक्ररथं प्रति ($\tilde{N}_1$ प्रभुः), $\tilde{N}_2$ $D_6$ गतः शक्ररथं प्रति (for $^b$) — (L. 2335) $K_{2\ 3}$ $T_{1\ 2}$ $M_{2\ 4}$ त्रिदशेश- (for °न्द्र-) — (L. 2336) $G_3$ महासुरं त (for °सुरेन्द्रं) G(ed) बलम् (for बलिम्) $T_{1\ 2}$ $G_{1\ 4\ 5}$ $M_{2.4}$ महासुरं ह्यप्रतिमोत्तमश्रियम् — (L 2337) $K_4$ $V_1$ $D_{1\ 2\ 6}$ $T_{1.2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ जग्मुर् (for चक्रुर्) — (L 2338) $K_4$ $D_{1\ 2\ 6}$ $T_{1\ 2}$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ द्विजाश्च पुण्याः; $V_{1\ 3}$ °प्रमुख्याः (for °श्च मुख्या) $K_{2\ 3}$ च मङ्गलम्; $K_4$ $D_{1\ 2}$ च सत्तमाः; $\tilde{N}_1$ $D_6$ च संमताः; $D_5$ सुमङ्गलाः (for च म°) $T_{1.2}$ $G_{1.3-5}$ $M_{2.4}$ द्विजाश्च पुण्यास्त्वपरे तपस्विनः. — $B_1$ om. lines

अभिष्टुवन्तः कवयः स्वलंकृतं
बलिं प्रयान्तं रणमूर्धनि स्थितम् ॥
प्रतप्तजाम्बूनदचित्रभूषणै-
र्दिव्यैश्च रत्नैर्विविधैरलंकृतः ।
विराजमानः परमेण वर्चसा [ 2345 ]
रणे विभात्यग्निशिखेव दानवः ॥
स वै तदा शत्रुबलार्दितं बलं
बलिर्ददर्शोत्तमवीर्यविक्रमः ।
जलागमे श्रीमदिवाभ्रमण्डलं
विकीर्यमाणं नभसीव वायुना ॥ [ 2350 ]
ततो ददर्शाथ बलानि सर्वतो
रणे सुगुप्तानि हुताशनेन वै ।
समुत्थितान्युत्तमवीर्यवन्ति
समुद्रवेगानिव पर्वसंधिषु ॥
स शूलशक्त्यृष्टिगदासिसायका- [ 2355 ]
न्क्षिपन्रिपूणां समुदग्रतेजाः ।
ननाद सिंहर्षभमत्तनागव-
ज्जलागमे तोयदवच्च वीर्यवान् ॥
दिव्यास्त्रधूमः सुभुजौघवायु-
र्महाबलः पौरुषविक्रमेन्धनः । [ 2360 ]
प्रजा दिधक्षन्निव कालवह्निः
सुघोररूपो विबभौ रणे बलिः ॥

Colophon.

वैशंपायन उवाच ।

बलिना तु सुराः सर्वे वर्जयित्वा सुराधिपम् ।
रणे शरशतैर्भिन्नाः ससैन्या वै पराजिताः ॥

---

2339–2348 — (L 2339) $D_3$ तपोराशि- (for -जटाभार-) — (L. 2340) $D_2$ विविधै सु-, $D_3$ विविधैश्च (for विधिमन्त्र-) $K_3$ -मन्त्रै- (for मङ्गलै) — (L 2341) $V_1$ सुमङ्गलं, $T_1$ ऽप्यलंकृता, $M_{2\ 4}$ ह्यलंकृता (for स्वलंकृत). — (L. 2342) $\tilde{N}_1$ $V_{1\ 3}$ $B_3$ $D_8$ $D_5$ $G_{1\ 3}$ स्थिताः (for स्थितम्). — After line 2342, $T_{1\ 2}$ $G_{1\ 3.4}$ $M_{2.4}$ ins.:

145** जयाय मन्त्र कवयस्त्वलकृतं
बालिं समेत्योचुरथाग्रतः स्थितम् ।

— (L 2343) $K_{2.3}$ $\tilde{N}_2$ $V_{1\ 3}$ $D_5$ -भूषणं (for °णैर्) — (L 2344) $T_{1\ 2}$ $G_{3\ 4}$ $M_2$ वरैश्च (for दिव्यैश्च). $K_1$ $D_4$ स्वलंकृत., $K_{2\ 3}$ स्वलंकृतम्, $\tilde{N}_2$ $V_{1\ 3}$ $Dn_2$ $D_{3\ 5\ 6}$ $T_1$ $M_{2\ 4}$ अलंकृतम्, $G_1$ °कृतै (for °कृतः). — $T_1$ $G_5$ om. lines 2345–2348. — (L. 2345) $\tilde{N}_2$ $V_1$ $D_8$ $D_{2.5}$ $M_2$ विराजमानं (for °मान.) $K_{2\ 3}$ विराजमानं परमेण तेजसा. —(L. 2346) $K_4$ $D_1$ [अ]र्क- (for [अ]ग्नि-) $\tilde{N}_1$ $B_{2.3}$ $T_2$ $G_{1\ 3.4}$ $M_{2\ 4}$ रणे विभात्यग्निनिभोऽसु( $B_2$ $T_2$ $G_1$ °रिवासु )रेश्वरः. — (L 2347) $\tilde{N}_1$ $T_2$ $G_{1\ 3\ 4}$ $M_{2\ 4}$ स दानवः (for स वै तदा) $D_4$ $G_3$ शक्र- (for शत्रु-) — (L. 2348) $K_4$ $D_{2.6}$ -सत्त्ववीर्यवान्, $\tilde{N}_1$ $B_2$ -वीर्यसत्त्ववान्, $T_2$ $G_{1.4}$ $M_2$ (marg.) -बन्धनीकृतम् (for -वीर्यविक्रम-) $D_5$ बालिं ददृशुरनुत्तमवीर्यविक्रमा, $G_3$ बलिर्ददर्शोन्नतसत्त्ववीर्यवान् — (L 2349) $T_1$ $M_2$ ऽभ्यर्दितम्, $T_2$ $G_{1\ 4\ 5}$ ह्यर्दितम्, $M_4$ ऽभ्युद्यतम् (for श्रीमदिव) $D_8$ जलागमे चैव महाभ्रमण्डलं — (L 2350) $\tilde{N}_1$ $Dn_2$ $M_2$ विशीर्यमाणं (for विकीर्य°) — (L. 2351) $\tilde{N}_1$ $T_{1\ 2}$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ अपश्यदग्नेश्च (for ततो ददर्शाथ). — (L. 2352) $K_{2.3}$ $D_8$ रणेषु गुप्तानि; $K_4$ $V_3$ $B_2$ $D_{1\ 2}$ रणे प्र( $V_3$ स्व )गु°, $B_3$ $D_8$ रणे सु( $D_3$ प्र )तप्तानि (for रणे सुगु°) — (L 2353) $K_{1-3}$ $V_{1\ 3}$ $B_2$ $D_4$ समुच्छ्रितानि (for °त्थितानि) $K_4$ $D_{2\ 6}$ [उ]ग्रतराणि तत्र (for [उ]त्तमवीर्यवन्ति) $\tilde{N}_1$ $B_{1\ 3}$ $D_8$ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_{2.4}$ समुच्छ्रितान्युग्रत( $T_2$ $G_{1\ 3}$ $M_4$ °श )राणि तत्र वै —(L 2354) $\tilde{N}_2$ $V_{1\ 3}$ -वेलाम् (for -वेगान्). $T_{1\ 2}$ $G_{1.4\ 5}$ $M_{2\ 4}$ समिद्ध-( $G_{4.5}$ °मुद्र )वेगानि बहूं( $M_2$ °हि )श्च संयुगे — (L. 2355) $D_3$ -महासि- (for -गदासि-) — (L 2356) $K_4$ $\tilde{N}_{1\ 2}$ $V_{1.3}$ B $Ds_1$ $D_{1.2}$ समरे महात्मनाम्; $D_3$ समुदग्रतेजसाम् (for °तेजा ). $Ds_2$ क्षिप्रं रिपूणां समरे महात्मनाम्; $T_1$ $G_{3-5}$ क्षिपंश्च शूलानि बलिश्च संयुगे, $T_2$ $M_{2\ 4}$ क्षिपञ्च्छिशूलांश्च बलिस्तदा रणे; $G_1$ क्षिपंश्च शूलानि बलिस्तदा रणे — (L 2358) $K_1$ $\tilde{N}_2$ $V_3$ तोयदवर्च-; $T_{1\ 2}$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ वीर्यमदाच्च (for तोयदवच्च) — (L 2359) $\tilde{N}_1$ $B_{1\ 3}$ $D_8$ $D_6$ $G_3$ भुजवेग-, $\tilde{N}_2$ Dn स्वभुजौघ-; $V_3$ सबलौघ-; $D_2$ Bom Poona eds G(ed) सुभुजोग्र-, $D_3$ °जोत्थ- (for °जौघ-). $T_{1\ 2}$ $G_{3-5}$ $M_{2\ 4}$ चित्रास्त्रहस्तो भुजवेगवायुर् — (L. 2362) महाबलि (for रणे बलिः).

Colophon — *Mention of the Epic*: $K_4$ Dn $Ds_2$ $D_{1\ 5}$. — *Mention of Khila*. $\tilde{N}_1$ $V_{1\ 3}$ B Dn $D_8$ $D_{1.3.4}$. — *Sub-parvan*. $K_{1-3}$ $\tilde{N}_2$ $V_3$ B $D_{4-6}$ वामनः; $K_4$ $\tilde{N}_1$ Dn $D_8$ $D_{1-3}$ $T_1$ $G_3$ $M_{2.4}$ वामनप्रादुर्भाव. — *Adhy. name* $D_8$ देवासुरयुद्धम्, $G_3$ प्रह्लादस्तुत्यनन्तरं महाबलिप्रस्थानम् — *Adhy. no* $K_3$ 36, $V_1$ 310, $V_3$ 249, $B_3$ 250, Dn 248, $Ds_2$ 247, $D_1$ 233; $D_8$ 260, $D_4$ 240, $T_1$ 316, $G_1$ 311, $G_{3.5}$ 318; $G_4$ 315, $M_{2.4}$ 28.

विमुखा सा तु दैत्येन्द्रैर्वध्यमाना महाचमूः । [ 2365 ]
जिताश्च बलिना देवाः शक्रमाहुर्महाबलम् ॥
भवानिन्द्रश्च धाता च लोकानां प्रभुरव्ययः ।
त्वमप्रतिमकर्मा च तथैवानुपमद्युतिः ॥
विद्रुतानीह सैन्यानि सहास्माभिः सुरेश्वर ।
रथचक्रध्वजाक्षाणि विभिन्नानि महासुरैः ॥ [ 2370 ]
रथहस्त्यश्वयोधाश्च पदाताश्च सहस्रशः ।
भिन्नाश्छिन्नाश्च शतशो गदामुसलपट्टिसैः ॥
महाभैरवरूपं हि दैत्येन्द्रेण कृतं रणे ।
किमुपेक्षसि दैत्येन्द्रैर्हन्यमानां महाचमूम् ।
त्रायस्व त्रिदशश्रेष्ठ शरण्य शरणागतान् ॥ [ 2375 ]
श्रुत्वा तु वचनं तेषां देवानाममराधिपः ।
संवर्तकमिव क्रुद्धः सर्वान्दहति दानवान् ॥

दिवाकरकराकारं किरीटं धारयन्प्रभुः ।
वैदूर्यवर्णसंकाशो नानारत्नचिताङ्गदः ।
मयूरलोमा धूम्राक्षः शतबाहुः सहस्रदृक् ॥ [ 2380 ]
हरिकेशो हरिश्मश्रुर्नागकेतुर्महाबलः ।
वज्रप्रहरणः श्रीमान्योगी शतशिरोधरः ॥
स धनुर्बद्धसंनाहः शतादित्यसमप्रभः ।
देवगन्धर्वयक्षौघैरनुयातः सहस्रशः ॥
सामगैः सुजपैश्चापि स्तूयमानो महर्षिभिः । [ 2385 ]
शतपर्वं महारौद्रं स्फोटनं सर्वतोमुखम् ॥
प्रगृह्य रुचिरं वज्रं दीप्तं रौद्राट्टहासिनम् ।
दैत्यानयोधयत्सर्वान्महेन्द्रः पाकशासनः ।
अधृष्यः सर्वभूतानामदित्या दयितः सुतः ॥
ततः प्रवृत्तः संग्रामो बलिवासवयोस्तदा । [ 2390 ]

(L 2363) T1 2 G1 4 5 M2 4 सुरेश्वरम् (for सुराधिपम्) — (L 2364) T1 2 G1 3–5 M2 4 विद्धा (for भिन्ना) Ñ1 T1 2 G1 4 5 M2 4 सह सैन्यैः (for ससैन्या वै) G3 सह सैन्यैः पराजिताः (for ᵇ) — Ñ1 T1 2 G1 3–5 M2 4 om line 2365 — (L 2365) K4 D1 2 याति (for सा तु) K2 3 विमुखा तु स दैत्येन्द्रेण (hypermetric) (for ᵃ) — Before line 2367, K Ñ2 V1 3 B D ins देवा ऊचुः — (L. 2367) K1 D4 देवानां (for लोकानां) Ñ1 T1 2 G1 4 5 M2 4 ईश्वर (for अव्यय) — Ñ1 T1 2 G1 4 5 M2 4 om line 2368 — (L 2368) D6 सुमहाद्युति (for [अ]नुपम°) — Ñ1 T1 2 G1 4 5 M2 4 om lines 2369–2373 — (L 2370) B1 D5 -ध्वजाग्राणि, B3 Cal ed °ग्र्याणि (for °क्षाणि) Ñ1 V1 3 D5 निर्भिन्नानि (for विभि°) — (L 2371) K1, 4 B Dn Ds पादाताश्, D5 प्रया° (for पदा°). — (L. 2373) G3 हि निर्मितम् (for कृतं रणे) — (L 2374) T1 2 G1 3–5 M2 4 किमद्योपेक्षसे दैत्यं (for ᵃ). T1 G3–5 मथ्यमानामिमां चमूम्, D5 हन्यमाना महाचमूः (for ᵇ) — (L 2375) D4 त्रायस्व त्रिदशान्सर्वान् (for ᵃ) Ñ1 D5 T1 G1 3 5 M2 4 शरण्यं, Ñ2 V1 B2 Ds D1 6 T2 G4 शरण्य, D3 खिन्नाश्च (for शरण्य) D3 शरणं शरणे गतान् M2 °ण्यं शरणं गता. (for ᵇ). — Before line 2736, D6 ins वैशंपायन . — (L 2376) Ñ1 T1 2 G1 3–5 M2 4 देवानां देवसत्तमः, Ñ2 °नामसुराधिपः, D5 °नां च सुराधिपः (for ᵇ) — (L 2377) K1 V1 3 B2 3 Dn Ds D4 संवर्तकाग्निवत्क्रुद्ध, Ñ1 2 B1 D3, 5 5 T2 G1 3 5 M2 °र्ताग्निरिव क्रुद्धः (for ᵃ) D5 हन्ति स्म (for दहति) B1 Cal ed सर्वानदहतासुरान्, B3 T1, 2 G1 3–5 M4 सर्वानग्रगतान्सु(G3 4 °सतासु)रान् (for ᵇ).

— K3 om lines 2378–2379 — (L 2378) T2 -कराभं च (for °कार) — (L 2379) K3 D3 4 वैदूर्यरत्न-, Ñ1 T1 G4 5 M2 4 °र्योत्कीर्ण-, B1 3 °र्योत्कर-, D1 °र्यपूर्ण-, T2 G1 °र्याकीर्ण- (for °र्यवर्ण-) — (L 2380) K1–3 D4 ताम्राक्षः, Bom Poona eds G(ed.) रक्ताक्ष (for धूम्राक्ष°) — (L 2381) M4 Bom Poona eds G(ed) हरिरेको (for °केशो) K4 D2 6 G4 M4 नाना- (for नाग-) — (L 2382) K2 3 -शिरोरुह, Ñ2 V1 D5 °दर° (for °धर) — (L 2383) V3 -धनुर्धर-, D3 °वज्र- (for -बद्ध-) Ñ1 M2 शतादित्य इवाम्बर; B1 °त्य इवोदित, T1 2 G1 4 5 °त्य इवाम्बरम् (for ᵇ) —(L. 2385) Ñ1 G5 M2 4 स्वागमैः (for सामगैः) K1 सजपैश्; K2 3 सहजैश्, K4 Ñ2 V1 3 B Dn Ds D2–4 G3 सजपैश्, D5 6 सहजैश् (for सुजपैश्) T1 2 G4 स्वागमैः सुगमैः(T1 °जवैः)श्चापि, G1 सागमैः सुगमैश्चापि (for ᵃ). T1 2 G1 4 5 M2 4 सुरर्षिभिः (for मह°) — (L 2386) K1 Ñ1 2 B Dn2 D1 2 6 T2 G3 4 M2 शतपर्वं (for °पर्वं) K4 D1 2 स्फुटितं, Ñ1 स्फोटन्तं, D3 °न., D5 स्फारणं (for स्फोटनं) — (L 2387) B T1 2 G1 3–5 M2 4 विकृतं (for रुचिरं) Ds प्रगृह्य विकृतं रौद्रं (for ᵃ) V1 3 D5 दीप्त- (for दीप्तं) G4 उग्राट्ट- (for रौद्राट्ट) K2 3 दीप्तं रौद्रं दहासिनम्, Ñ1 T2 G3 M2 4 दीप्तं रौद्रा(T2 G3 °समुग्रा)ट्टहासि वै; G1 5 दीप्तमुग्र ददासि वै (for ᵇ) — (2388) D2 स योधयन्; T1 G5 अरोधयत्, G3 अपोथयत् (for अयोध°) T2 G1 4 श्रीमान् (for सर्वान्) — (L 2389) Ñ2 V1, 3 D4 5 अधृष्टः, D1 2 अदृश्य-, D3 अवध्यः, G3 अदृष्टः (for अधृष्य) —(L. 2390) Ñ2 B1 2 (marg). 3 Ds T1 2 G1 3 5 M2 4 बलेर्देवेश्वरस्य च (for ᵇ) — T1, 2 G1, 3–5 M2, 4 om. lines 2391.

उभाभ्यां देवदैत्याभ्यामचिरान्महदद्भुतः ।
अतिवीर्यबलोदग्रस्तुमुलो लोमहर्षणः ॥
महादेवस्तुतिशतैः कर्मभिर्जयसंमितैः ।
प्रबोधितो दैत्यपतिरग्निरिद्ध इवाबभौ ॥
सुरासुरेन्द्रयोर्दृष्ट्वा संग्रामं लोमहर्षणम् । [ 2395 ]
देवानां दानवानां च भूयो युद्धमभूत्तदा ॥
ततोऽविध्यन्महेन्द्रस्तं बलिं शस्त्रैर्महाबलः ।
तान्यस्त्राणि महाबाहुश्चिच्छेद शतधा रणे ॥
ततः क्रुद्धः पुनस्तत्र निजघ्ने दानवं महत् ।
आग्नेयमथ शत्रुघ्नं चिक्षेपेन्द्रो महाबलः । [ 2400 ]
शातयामास तच्चैन्द्रं वारुणास्त्रेण धीमता ॥
संक्रुद्धो मघवा वज्रमगृह्णात्पर्वतोपमम् ।
हन्तुकामो बलश्लाघी बलिं दैत्याधिपं रणे ॥
ततः शुश्राव देवेन्द्रः कौशिको हरिवाहनः ।

— ( L 2391 ) Ñ1 B1. 3 D8 उभाभ्यामतिवीर्याभ्यां ( for $^a$ ) Ñ1 D8 om lines 2391$^b$–2392$^a$ V3 अचिन्त्यो ( for अचिरान् ) K2 सुमहाद्भुत ; B2 D3 महदद्भुतम् ( for °तः ). V1 अचिन्त्यं मदद्भुत B1 3 तुमुलो लोमहर्षण. ( for $^b$ ) — ( L. 2392 ) K2 V1 B D8 G3 -बलोदग्रं ( for °ग्रस् ) K2. 3 V3 अनिवा( V3 °वती )र्यबलोदग्रं, D6 T1 2 G1. 4 5 M2 4 अनिवार्यातिबलयोस् ( for $^a$ ) K4 अतुलो ( for तुमुलो ) K1–3 V1. 3 B D1. 3 5 तुमु( D1 अतु )लं रोमहर्षणम् ( for $^b$ ). — D6 T1. 2 G1. 4. 5 M2 4 ins after line 2392 ; G3 after line 2397 :

146** शरैरनेकसाहस्रैरर्दयामास वासव ।
बलिं बलवतां श्रेष्ठं बलिश्चापि सुरेश्वरम् ॥
उभौ तौ लोकविख्यातौ बलिवासवशब्दितौ ॥
ततः क्रुद्धो बलिर्दैत्य शक्रं हन्तुं महामृधे ।
नारायणं महारौद्रमस्त्रमादाय दानव । [ 5 ]
सिंहनादं विनद्याशु तिष्ठेत्यसकृदब्रवीत् ॥
शक्रोऽपि तेन देवेशो वारयित्वा समुद्यतम् ।
पर्जन्यमथ माहेन्द्रं वारुणं वायुसंज्ञितम् ।
चत्वार्येतानि संगृह्य शक्रस्तिष्ठेति चाब्रवीत् ॥
तैस्तानि च समाहत्य ननाद विपुलं बलिः । [ 10 ]
स पाशुपतमादाय बलिर्बलवतां वरः ।
अनेन त्वां हनिष्यामि बलिराह शतक्रतुम् ॥
तेनैव तत्समाहत्य शक्रो दीप्तत्वमाययौ ॥
अस्त्रे पाशुपते चैव निर्भग्ने वैष्णवे तदा ।
कृत्ये चैव तदा मूढे शक्रो वज्रं समाददे ॥ [ 15 ]
भ्रामयित्वा शतगुणं मोक्तुमैच्छच्छतक्रतुः ।
ततो हाहाकृतं सर्वं जगदासीज्जगत्पते ॥
ततो बलिर्महातेजा ब्रह्मास्त्रं च समाददे ।
तेन तत्प्रहतं घोरं वज्रमस्त्रं महारणे ॥
इत्थं वृत्ते महाघोरे संग्रामे देवदैत्ययोः । [ 20 ]
उभौ तौ कृत्यसंमूढौ वीर्यवन्तौ महारणे ।
विजेतुकामावन्योन्यमीश्वरौ लोकविश्रुतौ ॥
उभाभ्यां देवदैत्याभ्यामचिरान्महदद्भुतः ।

[ ( L. 2 ) D6 M2 श्रेष्ठो ( for श्रेष्ठं ) G3 रणेश्वरम् ( for सुरे° ) — ( L 3 ) T1 G3. 5 अयुध्येतां महामृधे ( for $^b$ ) — ( L 6 ) T1 G3 5 [उ]च्चैस् ( for [आ]शु ). — ( L 7 ) G1 4 M4 देवेश ( for °शो ) D6 M2 4 तमुद्यतम् ( for स° ) — ( L 8 ) D6 T1 2 G3 M2 पार्जन्यम् ( for प° ) — ( L 10 ) T2 G1 समासाद्य ( for °हत्य ) — ( L 13 ) T1 G1 3–5 शक्रो दीप्त समाययौ ( for $^b$ ) — G3 om line 15 — ( L 15 ) D6 M2 मूढः ( for मूढे ) — ( L 16 ) G3 मोक्तुकामै. ( for °मैच्छत् ) — ( L 19 ) T2 प्रहत ( for प्रहृत ) D6 तेनापि तत्प्रहर्तव्यं ; G3 ब्रह्मास्त्रेण प्रतिहत ( for $^a$ ) D6 घोरं वज्र ( for वज्रमस्त्र ) — ( L 21 ) D6 T1 वीर्य- ( for कृत्य- ) — ( L 22 ) T1 G1 4 5 M4 विजेय- ( for °तु- ) ]

— Ñ1 T1 2 G1 4 5 M2 4 om lines 2393–2403 — ( L. 2393 ) B2 D2 5 G3 -संमतैः , Dn -संस्तुतैः , D3 -शंसिभि ( for -संमितैः ). — ( L. 2394 ) K4 D1. 2 6 प्रचोदितो ( for प्रबोधितो ) D5 और्व ( for इद्ध ) — ( L 2395 ) Ñ2 दृष्टं ( for दृष्ट्वा ) — ( L 2397 ) Dn2 D6 अस्त्रैर् ( for शस्त्रैर् ) G3 महासुरम् ( for °बल ). B2. 3 D8 Cal ed बलिमस्त्रैर्महासुरम् , Bom Poona eds बलिमस्त्रैर्महाबलम् ( for $^b$ ) — ( L 2398 ) G3 तानि शस्त्राणि दिव्यानि ( for $^a$ ). D2 चिच्छिदे ( for चिच्छेद ). K1 दशधा , V3 बहुधा ( for शतधा ) Ñ2 B Dn D8 बलिः ( for रणे ). G3 चिच्छेद शतशोऽसुरः ( for $^b$ ) — ( L. 2399 ) K2 3 D2 क्रुद्धं ( for क्रुद्धः ). K4 शक्रो ( for तत्र ). B D8 D3 6 सोऽस्त्रं दुर्वारणं महत् ( D3 रणे ), D5 निजघ्ने दानवो महान् ( for $^b$ ). — ( L. 2400 ) V1 3 Dn D3 5 अस्त्रं ( for अथ ). — After line 2400, K1 Ñ2 V1 3 B D8 D4 6 G3 ins :

147** तं दृष्ट्वा खे समागच्छत्प्रलयानलसंनिभम् ।

[ V3 समायान्त ( for °गच्छत् ) B2 दृष्ट्वा खे समुपागच्छत् ( for $^a$ ). ]

— ( L 2401 ) K1 D4 पातयामास , V3 D5 शमया° , D3 वारया° ( for पातया° ). Ñ2 V3 G3 वारयामास दैत्येन्द्रो , B D8 शमयामास दैत्येन्द्रो , D6 शान्तयामास दैत्येन्द्रो ( for $^a$ ) K1 D4 धीमतः , Dn दानव. , Cal ed बुद्धिमान् ( for धीमता ). — G3 om. line 2402 — ( L 2402 ) Cal ed. अग्रहीत् ( for अगृह्णात् ). — ( L 2403 ) K4 बलं सर्वं ; V1. 3 B3 रणश्लाघी ( for बल° ) — ( L. 2404 ) K2 चाकाशे ;

अशरीरां शुभां वाणीं तस्मिन्महति वैशसे ॥ [ 2405 ]
निवर्तस्व महाबाहो सुराणां नन्दिवर्धन ।
पुरंदर सुरश्रेष्ठ न जेष्यसि बलिं रणे ॥
तपसा ह्युत्तमो दैत्यो वरदानेन चाधिकः ।
स्वयंभूपरितोषाच्च सत्यधर्माच्च वासव ।
नैष शक्यस्त्वया जेतुं त्रिदशैर्वा सुरेश्वर ॥ [ 2410 ]
यो ह्यस्य जेता भगवांस्तं शृणुष्व समाहितः ।
ब्रह्मणः स हि सर्वस्वं देवानां चैव सा गतिः ॥
परं रहस्यं धर्मस्य परस्य च परा गतिः ।
परात्परतरः श्रीमान्परावरगतिः प्रभुः ॥
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । [ 2415 ]
शङ्खचक्रगदापाणिः पीतवासाः सुरारिहा ।
जेताजेयो जयः श्रीमान्सोऽस्य जेता भविष्यति ॥
श्रुत्वा दिव्यां तु मधुरां वाणीं तामशरीरिणीम् ।
अपयातो रणाच्छक्रः सार्धं सर्वैर्मरुद्गणैः ॥
अपयाते तु देवेन्द्रे कौशिके हरिवाहने । [ 2420 ]
सिंहनादो महानासीद्दानवानां महामृधे ॥
ततः किलकिलाशब्दः क्ष्वेडितास्फोटितस्वनः ।
शङ्खानां निनदश्चात्र योधानां वल्गितस्वनः ॥
वादित्राणां च निर्घोषस्तुमुलश्चाभवत्तदा ।
जयशब्दरवश्चैव देवानां तु पराजये ॥ [ 2425 ]
ससैन्यो दैत्यराजस्तु स्तूयमानः सुहृद्गणैः ।
बलिरिन्द्रो बभौ दैत्यो हिरण्यकशिपुर्यथा ॥

Colophon

---

$K_3$ $\tilde{N}_2$ $V_3$ दैत्येन्द्र॰ ( for देवेन्द्र ) $K_2$ बलवान्, $D_8$ कुपितो ( for कौशिको ) — ( L 2405 ) $\tilde{N}_1$ $T_{1\ 2}$ $G_{1\ 4\ 5}$ $M_{2,4}$ तस्मिन्युद्ध उपस्थिते ( for $^b$ ). — $T_{1\ 2}$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ om line 2406 — ( L 2407 ) $T_{1\ 2}$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ निवर्तस्व ( for पुरंदर ) — ( L. 2408 ) $K_4$ $\tilde{N}_{1\ 2}$ $B_1$ Dn $D_2$ $T_{1\ 2}$ $G_{1\ 4\ 5}$ [अ]त्युत्तमो ( for ह्यु॰ ) — ( L 2409 ) $K_{2\ 3}$ स्वयंभूपरितोषार्थं ( for $^a$ ) $V_{1\ 3}$ $B_3$ Ds $T_{1\ 2}$ $G_{1\ 3-5}$ $M_4$ सत्याद् ( for सत्य॰ ) — ( L 2410 ) $\tilde{N}_1$ $G_3$ कुतोऽन्यैस्त्रिदिवा( $G_3$ ॰दशा )लयैः ( for $^b$ ) — For line 2410, $T_{1\ 2}$ $G_{1\ 4\ 5}$ $M_{2\ 4}$ subst

148** न शक्यो भवता जेतुं कुतोऽन्यैस्त्रिदशालयैः ।

[ $M_2$ त्रिदिवालयैः ( for त्रिदशा॰ ) ]

— ( L 2411 ) $K_4$ $V_3$ $D_1$ $G_3$ तच् ( for तं ) $\tilde{N}_1$ $B_{1\ 3}$ $T_{1\ 2}$ $G_{1,4,5}$ $M_{2\ 4}$ तं शृणु ( $G_4$ तच्छृणु ) त्व सनातनम्, $D_5$ परस्परपरां गति ( for $^b$ ) — $D_5$ om lines 2412–2413 — ( L 2412 ) $K_2$ त्वं, $B_{1\ 3}$ Cal ed यो ( for स ). $B_{1\ 3}$ वै परा॰; $T_{1\ 2}$ $G_{1,3-5}$ $M_{2\ 4}$ च स वै ( for चैव सा ) — $\tilde{N}_2$ $B_3$ om. line 2413. — ( L 2413 ) $D_1$ परस्पर॰, $D_3$ धर्मस्य च ( for परस्य च ) — ( L 2414 ) $G_1$ परगति॰ ( for ॰तर॰ ) $B_1$ $D_3$ $T_{1,2}$ $G_{4\ 5}$ $M_2$ पराप( $D_3$ ॰व )रगतिः श्रीमान् ( for $^a$ ) $\tilde{N}_1$ $D_5$ परात्पर, $V_{1,3}$ परापर॰, $T_{1\ 2}$ $G_{1\ 4\ 5}$ $M_2$ धराधर॰ ( for परावर॰ ) — After line 2414, K $V_{1\ 3}$ $B_2$ Dn Ds $D_{1-6}$ $T_{1,2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ ins .

149** व्यक्ताव्यक्तमहाभूतो भूतभव्यभवत्प्रभुः ।

[ $T_{1\ 2}$ $G_{1\ 3-5}$ $M_4$ ॰महाभूत ( for ॰भूतो ). $M_2$ व्यक्ताव्यक्तं महद्भूतं ( for $^a$ ) $T_{1\ 2}$ $G_{1,3-5}$ $M_{2,4}$ भूत भ( $M_2$ ॰तभ )व्यभवो विभुः ( for $^b$ ) ]

— ( L 2415 ) $V_3$ $B_1$ Ds $G_5$ Cal ed. ॰शीर्षं ( for ॰शीर्षा ) $\tilde{N}_2$ सहस्रास्य ( for ॰स्राक्ष ) — $K_{2\ 3}$ $\tilde{N}_1$ $D_3$ om line 2416 — ( L 2416 ) $T_2$ $G_1$ परात्पर॰, $G_4$ परतपः ( for सुरारिहा ) — ( L 2417 ) $K_4$ $D_1$ तेजो जयो, $V_{1\ 3}$ Ds $D_{4-6}$ जेता जयो, $B_1$ $T_2$ $G_{3-5}$ $M_{2\ 4}$ जेताजितो, $G_1$ जिताजितो ( for जेताजेयो ) $D_3$ जेता जयोऽनय. श्रीमान् ( for $^a$ ). — ( L 2418 ) $\tilde{N}_1$ $B_3$ $T_{1,2}$ $G_{1\ 3-5}$ $M_{2\ 4}$ तु परमां; $Dn_2$ सुमधुरा ( for तु म॰ ) $T_{1\ 2}$ $G_{1,4\ 5}$ अमृतोपमाम् ( for अशरीरिणीम् ) — ( L 2419 ) $K_{2\ 3}$ om lines $2419^b$–$2420^a$. $B_3$ Dn Cal ed सह ( for सार्धं ) $V_3$ देवैर्, $D_3$ सर्वं॰ ( for सर्वैर् ). Bom Poona eds G(ed) सुरोत्तमैः ( for मरुद्गणैः ). — ( L 2420 ) $\tilde{N}_2$ दैत्येन्द्रे ( for देवेन्द्रे ) Dn अपयाति तु दैत्येन्द्रे ( for $^a$ ) $D_5$ नर॰, $G_3$ मेघ॰, $G_5$ हत॰ ( for हरि॰ ). $K_{2\ 3}$ कौशिको हरिवाहन ( for $^b$ ). — $G_5$ ins after line 2420 : $T_{1\ 2}$ $G_{1\ 3\ 4}$ $M_{2\ 4}$ after line 2421

150** जितं त्रिभुवनं सर्वं बलिनेति महामृधे ।

— $G_5$ om lines 2421–2427 $\tilde{N}_2$ $T_2$ $G_{1\ 4}$ $M_{2\ 4}$ om. lines 2422–2427 — ( L 2422 ) Ds ॰ध्वनिः ( for ॰स्वनः ) $K_2$ $D_6$ क्ष्वेडितास्फोटितारव॰, $B_1$ $G_3$ Cal ed क्ष्वेडितास्फोटनिस्वनः, $D_5$ क्रीडितास्फोटितस्वन ( for $^b$ ). — ( L 2423 ) $K_{3\ 4}$ वलित॰, $D_4$ चापि स॰, $D_5$ च स्थितः, $G_3$ जनित॰ ( for वल्गित॰ ) $D_3$ स्वनैर् ( for ॰स्वन॰ ) — ( L. 2425 ) $B_3$ Dn $G_3$ Cal ed ॰रवैश् ( for रवश् ) $K_{2,3}$ $D_4$ पराजय॰ ( for ॰ये ) — ( L. 2426 ) $K_4$ $V_3$ $Dn_2$ $D_{1\ 2}$ देव॰ ( for दैत्य॰ ) $B_3$ Cal ed प्रयात स ( for स्तूयमान ). $K_4$ $V_3$ मरुद्गणैः ( for सुहृ॰ ) — ( L 2427 ) $K_{1-3}$ $\tilde{N}_2$ $V_{1,3}$ $B_{1,3}$ Dn Ds $D_{3-5}$ बलीन्द्रो वि॰ ( for बलिरिन्द्रो )

COLOPHON. — *Mention of the Epic* . $K_4$ $Dn_2$ $Ds_2$ $D_1$,

वैशंपायन उवाच ।

निष्प्रयत्नेषु देवेषु त्रैलोक्ये दैत्यपालिते ।
जये बलेर्बलवतो मयशम्बरयोस्तथा ॥
शुद्धासु दिक्षु सर्वासु प्रवृत्ते धर्मकर्मणि । [ 2430 ]
अपावृते देवपथे अयनस्थे दिवाकरे ॥
प्रह्लादशम्बरमयैरनुह्लादेन चैव हि ।
दिक्षु सर्वासु गुप्तासु गगने दैत्यपालिते ॥
देवेषु मखशोभाश्च स्वर्गार्थं दर्शयत्सु च ।
प्रकृतिस्थे तदा लोके वर्तमाने च सत्पथे ॥ [ 2435 ]
अभावे सर्वपापानां भावे चैव तथा स्थिते ।
भावे तपसि सिद्धानां सर्वत्राश्रमरक्षिषु ॥
चतुष्पादे स्थिते धर्मे अधर्मे पादविग्रहे ।
प्रजापालनयुक्तेषु भ्राजमानेषु राजसु ॥
स्वधर्मसंप्रयुक्तेषु सर्वाश्रमनिवासिषु । [ 2440 ]
अभिषिक्तोऽसुरैः सर्वैर्दैवराज्ये बलिस्तदा ॥
हृष्टेष्वसुरसंघेषु नदत्सु मुदितेषु च ।
अथाभ्युपगता लक्ष्मीर्बलिं पद्मासने स्थिता ।
पद्मोद्यतकरा देवी वरदासुरसेविनी ॥

श्रीरुवाच ।

बले बलवतां श्रेष्ठ महाराज महाद्युते । [ 2445 ]
प्रीतास्मि तव भद्रं ते देवतानां पराजये ॥
यत्त्वया युधि विक्रम्य देवराजः पराजितः ।

— *Mention of Khila* K4 Ñ1 V1.3 B1 3 Dn Ds D1.4 — *Sub-parvan* K2-4 Ñ2 V3 B Dn Ds D1-6 वामन॰, T1 2 G1 3 वामनप्रादुर्भावः — *Adhy. name* K D2-6 देवासुरसंग्राम, Ñ2 V1 देवासुरयुद्धम्, V3 T2 G1 M2 4 बलिविजयः, B शक्रापयानम्, Ds देवासुरसग्रामे बलेरिन्द्रप्राप्तिः; D1 बलियुद्धम्, G3 बलिना इन्द्रपराजय॰ — *Adhy no* K3 (marg ) 37, V1 320, V3 250, B2 251; Dn 249, Ds2 248, D1 234, D3 261, D4 241, T1 G4 317, G1 312, G3 5 319, M2 4 29

(L 2428) K2 Ds2 T1 G4 दैत्येषु, D2 सर्वेषु (for देवेषु). — (L 2429) K1 B1 Ds D6 मयशम्बरघोषिते; D4 मयस्य स्वरघोषिते (for ᵇ) — (L. 2430) Ñ1 Bom Poona eds G(ed) सुधासु, D5 ततस्तु (for शुद्धासु) ❀ Cn : सुधासु =अमृतमयीषु। ❀ T1 G3 सर्व- G(ed) नर्म- (for धर्म-). — (L 2431) K1 B2 3 Dn2 Ds D4 चन्द्रमसि, K4 Dn1 D1.2 धर्मपथे, Ñ1 D5 तु दैतेये, Ñ2 चन्द्रपथे; V1 ॰दैत्य॰ (for देव॰). B1 D6 अपवृत्ते चन्द्रमसि (D6 धर्मपथे); D3 T1 G1.4 5 M2 4 अपावृते दैत्यपथे (for ᵃ) ❀ Cn अपवृत्ते = उद्धरिते। ❀ — (L 2433) T1.2 G1 3-5 M2.4 भुवने (for गगने) — (L 2434) K1-3 Ñ2 V1 B2 Dn2 D2-4 6 दैत्येषु, Dn1 दैत्ये तु (for देवेषु) T1 2 G1 5 M2 4 -जाताश्च (for शोभाश्च) K4 दैत्येषु गर्वशोभाश्च, V3 दैत्येषु मखशोभासु, B1 3 दैत्येषु मखशोभी च, D1 दैत्येषु अश्वशोभाश्च, D5 दैत्येषु मखभागेषु, G3.4 वेदेषु मखजातां च (for ᵃ) — (L. 2435) K1-3 D2 T1 G5 M2.4 सत्पथि, V3 तत्पथे (for सत्पथे) —D5 om lines 2436-2437 —(L 2436) K1 Dn D4 -भावानां, K2 Ñ2 V1.3 भूतानां, K4 D1 2 -देवानां (for -पापानां) T1 G5 पापे (for भावे). B3 Cal. ed. स्थिरे (for स्थिते). — Ñ1 T1.2 G1.4 5 M2 4 om. line 2437. — (L 2437) K2 सिद्धार्थाश्रय-, Ñ2 V1 सद्धर्माश्रय-, V3 सद्वृत्ताश्रय-, B1 D6 सद्वार्ताश्रय-, B2 (marg.) Ds1 सद्धर्माश्रम-, D2 सर्वाश्रमसु-, D4 सिद्धार्थे नय- (for सर्वत्राश्रम-) Dn Cal. ed अभावे पापकर्मणाम् (for ᵇ) — For line 2437, G3 subst

151** भावे च कार्यसिद्धीनां सद्वार्तानयशीलिषु ।

— K1 D4 om (hapl ) lines 2438-2440. — (L. 2438) K2-4 V1 3 Dn T1 2 G1 5 चतुष्पाद-, D3 चतुःपदे, G4 चतुष्पथ- (for ॰ष्पादे). D5 धर्मे त्रिपादमात्रर्थे (for ᵃ) — (L. 2439) D5 भजमानेषु (for भ्राज॰). — (L. 2440) K3 स्वधर्मे सं-, D3 सम्यग्धर्मे-, D6 स्वधर्मे सं- (for ॰र्मसं-) T1.2 G1. 3-5 -प्रवृत्तेषु (for प्रयुक्तेषु) M2 4 स्वधर्मे संप्रवृत्तेषु (for ᵃ). — K3 om lines 2441-2448 — (L 2441) K1 Ñ1 V3 D3-5 G1 M4 देवराजो, K4 V1 B2 3 D3 D1 2 T1 2 दैत्यराजो, Dn2 दैत्यराज्ये (for देव॰) Ñ2 दैत्यराज्ये बलिं तदा (for ᵇ) — (L 2442) K4 V3 B1 सुर (for [अ]सुर-). D1 हृष्टेषु सुरसंघेषु (for ᵃ) D3 नर्दत्सु सुदिनेषु च (for ᵇ). — (L 2443) D1 [अ]भ्युपागमत्, G5 चाभ्युदिता (for [अ]भ्युपगता) D5 T2 G1 M2 4 पद्मासन- (for ॰सने) Ñ2 D1 स्थितम् (for स्थिता) — (L 2444) Dn चञ्चला, D4 शारदा (for वरदा) V1.3 B2 D2 3 T1 G3 5 M2.4 शूर- (for ऽसुर-) K2 D6 -सेविता, K4 D1 -मेदिनी, Bom. Poona eds G(ed.) -मोहिनी (for -सेविनी) — After line 2444, B2 ins

152** श्रीरुवाचासुरपतिं सुप्रसन्नमुखी तदा ।

— (L. 2445) K1 Ñ1 B2 3 D4 T1.2 G3-5 M2 4 दैत्यराज; G(ed) महाभाग (for ॰राज). — (L 2446) Ñ1 B2 देवराज- (for ॰तानां) T1 2 G1.3-5 M2.4 पराजयात् (for ᵇ). — (L. 2447) K4 Ñ1.2 B3 Ds2 D1.3 T1 G3 यस् (for

दृष्ट्वा ते परमं सत्त्वं ततोऽहं स्वयमागता ॥
नाश्चर्यं दानवश्रेष्ठ हिरण्यकशिपोः कुले ।
प्रसूतस्यासुरेन्द्रस्य तव कर्मेदमीदृशम् ॥ [ 2450 ]
विशेषितस्त्वया राजन्दैत्येन्द्रः स पितामहः ।
येन भुक्तं हि निखिलं त्रैलोक्यमिदमव्ययम् ॥
एवमुक्त्वा हि सा देवी लक्ष्मीर्दैत्यपतिं बलिम् ।
प्रविष्टा वरदा सौम्या सर्वभूतमनोरमा ॥
शिष्टाश्च देव्यः प्रवरा ह्रीः कीर्तिर्द्युतिरेव च । [ 2455 ]
प्रभा धृतिः क्षमा भूतिर्नीतिर्विद्या दया मतिः ॥
स्मृतिर्मेधा तथा लज्जा लक्ष्मीरीडा गतिस्तथा ।
श्रुतिः प्रीतिस्तथा कान्तिः शान्तिः पुष्टिः क्रिया तथा ॥
सर्वाश्चाप्सरसो दिव्या नृत्यगीतविशारदाः ।
उपतस्थुर्महात्मानं बलिमिन्द्रं महारथम् ॥ [ 2460 ]
प्रतिपन्नं तु दैतेयैस्त्रैलोक्यं सचराचरम् ।
प्राप्तमैश्वर्यममितं बलिना ब्रह्मवादिना ॥

Colophon.

---

यत् ) Ñ1 T1 2 G1 4 5 M2 4 स देवो देवराड् जित ( for ᵇ ) — ( L 2448 ) M4 विस्मयम् ( for ऽहं स्वयम् ) V3 समुपागता ( for स्वयमा° ) — ( L 2449 ) T1 2 G1.4 5 -व्याघ्र- ( for -श्रेष्ठ ) M2 4 आश्चर्यं दानवव्याघ्र ( for ᵃ ) — ( L 2450 ) K2 4 [अ]सुरश्रेष्ठ, T1 2 G1 3-5 [अ]सुरेन्द्राद्य ( for °न्द्रस्य ). — ( L 2451 ) K2-4 Dn1 D1 3 6 T1 2 G1 3-5 M2 4 विशेषतस् ( for °षितस् ). D5 दैत्येन्द्र ( for °न्द्रः ). Ñ1 T1 2 G1 5 M2 4 दैतेय प्रपितामह°, Dn1 D2 G3 4 दैत्येन्द्र प्रपि° ( for ᵇ ) — After line 2451, D4 ins .

153** रसो दिव्या नृत्यसीमा स्वर्गस्था सर्वसपद° ।

— ( L 2452 ) D2 [इ]ह भुक्तं, D6 युक्तं हि ( for भुक्तं हि ). — After line 2452, K1.4 Ñ2 B Ds D1 2 4 6 ins :

154** विशेषतस्तव विभो सर्वो धर्म स्थित पथि ।
तेन त्रैलोक्यमक्षय्य भोक्ष्यस्यमितविक्रम ॥

[ ( L 1 ) B2 धर्मे ( for धर्म ) D1 2 6 पथे स्थित ( for स्थित पथि ) — ( L 2 ) D4 6 आखिल ( for अक्षय्य ) K4 D1 तेन त्रैलोक्यमुख्येन ( for ᵃ ) K4 D1 2 6 भुक्त्वा च, D4 अवासि ( for भोक्ष्यासि ) ]

— Before line 2453, M2 4 ins वैशंपायन.. — ( L 2453 ) Ñ1 2 V1.3 B Dn Ds दैत्यवृषं; D1 2 6 °नृप ( for °पतिं ). — ( L 2455 ) K4 सख्यश्च; T2 G1 M2 4 दृष्ट्वा ( for ( for शिष्टाश्च ). D5 शिष्टांश्च देवप्रवरान् ( for ᵃ ) T2 G1 4 M2 श्री ( for ह्रीः ) D1 श्री कीर्तिः कान्तिरेव च ( for ᵇ ) —T1 G5 om lines 2456-2458 — ( L 2456 ) V1 द्युतिर्, D5 भूतिर् ( for भूतिर् ) K3 Ñ1 D5 विद्या च या, T2 M2 दिव्यौ च या ( for विद्या दया ) D3 [अ]पि च, Bom. Poona eds. G(ed) स्मृति. ( for मति ) K2 नीतिर्विद्या च या धृतिः ( for ᵇ ). — K2 3 B1.3 D3 5 T2 G1 4 M2.4 om line 2457 — ( L. 2457 ) V1 शक्तिर्; V3 Ds D4 मुक्तिर्, B2 Dn कीर्तिर् ( for लज्जा ) Ñ1 कृतिर्लज्जा तथा मेधा, Ñ2 कृतिर्मेधा तथा युक्तिर्, G3 स्मृतिर्धर्मे तथा तुष्टिर् ( for ᵃ ). K4 Ñ1 D1 इहा ( for इडा ). D2 मतिस् ( for गतिस् ) K1 D4 तुष्टिः पुष्टिस्तथैव च, Ñ2 V1.3 Ds पुष्टिरिष्टिस्तथैव च, B2 Dn वपुः ( Dn तुष्टि ) पुष्टिस्तथैव च, D6 लक्ष्मीरीहा मतिस्तथा; G3 पुष्टि. कान्तिस्तथा क्रिया, Cal ed पुष्टिर्मुक्तिस्तथैव च ( for ᵇ ) — D4 om lines 2458-2462 — ( L 2458 ) K3 धृति. ( for श्रुति ) K1 इवोदारा, Ñ2 D2 G5 इला कीर्तिः; V1 3 B Dn Ds2 D3 6 इला ( B Dn °डा ) कान्ति ( for तथा कान्ति ) Ñ1 श्रुतिर्लक्ष्मीरिला कान्तिः Ds1 श्रुतिः प्रीतिरिला कान्तिः, T2 G1 M2 4 श्रुति स्मृतिरिला कान्ति° ( for ᵃ ) V3 बुद्धि°, D5 वृद्धि ( for पुष्टि ) K4 D2 क्रियास्तथा, D6 कृपास्तथा, G1 तथा प्रिया ( for क्रिया तथा ) K1-3 तुष्टि ( K2 कान्ति ) पुष्टि क्रियास्तथा, B2 शान्तिर्वृद्धिस्तथा क्रिया, Dn शान्तिर्वृद्धि क्रियास्तथा, D1 कान्तिः शान्ति क्रियास्तथा, D5 तुष्टि पुष्टिर्यथा तथा ( for ᵇ ). — After line 2458, T G1 3 4 M2 4 ins

155** अनुप्रविष्टास्ता सर्वा दैत्यनाथं महाबलम् ॥

— ( L 2459 ) D6 देव्यो ( for दिव्या ) — K Ñ1 2 V1.3 B3 D1-5 om line 2460 — ( L 2460 ) B1 3 T1 2 G1 3-5 M2 4 महासत्त्वं ( for °त्मानं ) D6 महासुरम्, T1 G5 °बलम् ( for °रथम् ). — ( L 2461 ) Dn Ds D6 प्रतिप्राप्तं ( for °पन्नं ) —K1 4 D1 पतिं प्राप्तास्तु ( D1 °स्ते ) दैतेय, K2 3 Ñ2 V1 3 D3 प्रतिप्राप्तास्तु दैत्येन्द्र ( K2 3 °तेयं ), D2 पतिं प्राप्तास्तु दैत्येन्द्रं, D5 प्रीतिप्राप्तास्तु दैत्येन ( for ᵃ ) K Ñ2 V1 3 D1-3 5 त्रैलोक्ये सचराचरे ( for ᵇ ) — ( L 2462 ) Ñ1 V1 3 B Ds D3 अतुलं; D5 अन्विच्छन् ( for अमितं ). K2 3 Ñ2 V1.3 Dn D1 3-5 बलिना ब्रह्मणा यथा ( for ᵇ )

Colophon om in D4 — *Mention of the Epic* . K1 4 Ds2 D1. — *Mention of Akhila* . K1 4 Ñ1 V1 3 B Dn Ds D1 3 — *Sub-parvan* K V1 B3 Dn Ds D1 2 5 6 वामन., Ñ1 B1 2 D3 T1 2 G1 3 M2.4 वामनप्रादुर्भावः. — *Adhy name* V1 3 B देवासुरसग्राम ; Dn बलिवासवसंग्रामः; Ds बलेर्लक्ष्मीसमागम., G3 महाबलेस्त्रैलोक्याधिपत्यम् — *Adhy no* K3 ( marg ) 38, V1 33; V3 251, B2 252, Dn 250; Ds2 249; D1 235; D3 262; T1 G4 318; T2 G1 313, G3 5 320 M2 4 30,

जनमेजय उवाच ।

पराजिताः सुरा दैत्यैः किमकुर्वत वै मुने ।
कथं च त्रिदिवं लब्धं भूयो देवैर्द्विजोत्तम ॥

वैशंपायन उवाच ।

श्रुत्वा वाणीं तु तां दिव्यां सह देवैः सुराधिपः ।[2465]
प्राग्दिशं प्रस्थितः श्रीमानदित्यालयमुत्तमम् ॥
प्राप्यादित्यालयं शक्रः कथयामास तां गिरम् ।
अदित्या सा यथा युद्धे तेन वाणी पुरा श्रुता ॥

अदितिरुवाच ।

यद्येवं पुत्र युष्माभिर्न शक्यो हन्तुमाहवे ।
बलिर्विरोचनसुतः सर्वैश्चैव मरुद्गणैः ॥ [ 2470 ]
सहस्रशिरसा हन्तुं केवलं शक्यतेऽसुरः ।
तेनैकेन सहस्राक्ष न ह्यन्येन शतक्रतो ॥
तद्वः पृच्छामि पितरं कश्यपं सत्यवादिनम् ।
पराजयार्थं दैत्यस्य बलेस्तस्य महात्मनः ॥
ततोऽदित्या सह सुराः संप्राप्ताः कश्यपान्तिकम् ।[2475]
अपश्यन्कश्यपं तत्र मुनिं दीप्ततपोनिधिम् ॥
आद्यं देवगुरुं दिव्यं क्लिन्नं त्रिषवणाम्बुभिः ।
तेजसा भास्कराकारं गौरमग्निशिखाप्रभम् ॥
न्यस्तदण्डं तपोयुक्तं बद्धकृष्णाजिनोत्तरम् ।
वल्कलाजिनसंवीतं प्रदीप्तं ब्रह्मवर्चसा ॥ [2480]
हुताशमिव दीप्यन्तमाज्यमन्त्रपुरस्कृतम् ।
स्वाध्यायनिरतं नित्यं वपुष्मन्तमिवानलम् ॥
तं ब्रह्मवादिनां श्रेष्ठं सुरासुरगुरुं प्रभुम् ।
प्रतपन्तमिवादित्यं मारीचं दीप्ततेजसम् ॥
यः स्रष्टा सर्वभूतानां प्रजानां पतिरुत्तमः । [ 2485 ]

---

$D_4$ om line 2463 with the ref $D_5$ om lines 2463–2464. — ( L 2464 ) $D_3$ त्रिविष्टप ( for च त्रिदिवं ) $K_{2, 3}$ प्राप्त ; $G_5$ सर्वं ( for लब्धं ). $T_{1, 2}$ $G_{1, 5}$ $M_{2, 4}$ भूयस्तैर्द्विजसत्तम ( for $^b$ ). — $D_5$ om the ref — ( L 2465 ) $\tilde{N}_1$ $T_{1, 2}$ $G_{1, 3-5}$ $M_{2, 4}$ पुरंदरः ( for सुराधिपः ) — $M_4$ om line 2466 — ( L 2466 ) $T_{1, 2}$ $G_{1, 3-5}$ $M_2$ अदित्या निलयं शुभम् ( for $^b$ ) — After line 2466, $T_{1, 2}$ $G_{1, 3-5}$ $M_2$ ins. :

156** देवमातुः सुरश्रेष्ठो देवैः सह पुरंदरः ।

— ( L 2467 ) $\tilde{N}_1$ $T_{1, 2}$ $G_{1, 3-5}$ $M_{2, 4}$ समीपं प्राप्य मातुस्तु ( for $^a$ ). $D_4$ तां गतिम्, $T_2$ $G_1$ वै तदा ( for तां गिरम् ) — ( L 2468 ) B अदित्यायास्तदा युद्धे , $D_4$ $G_3$ °त्याः स युवा ( $G_3$ तदा ) युद्धे ( for $^a$ ) $B_3$ Cal. ed दिव्या ( for वाणी ) $\tilde{N}_1$ $T_{1, 2}$ $G_{1, 3-5}$ $M_2$ श्रुताभवत्, $D_3$ यथा श्रुता ( for पुरा श्रुता ). — ( L 2469 ) Dn अद्यैवं , $D_5$ यं पुरा ( for यद्येव ). $\tilde{N}_1$ शक्यं ( for शक्यो ) — ( L 2471 ) $D_5$ देव ( for हन्तुं ) $\tilde{N}_1$ स हि ; $D_4$ सुतः ( for ऽसुरः ). $T_{1, 2}$ $G_{1, 3, 5}$ केवलं शक्य एव हि ( for $^b$ ) — ( L 2472 ) $D_3$ न तु ह्यन्येन शक्यते ( for $^b$ ) — ( L 2473 ) $B_2$ Bom Poona eds. G(ed ) पृच्छस्व ( for पृच्छामि ) $\tilde{N}_1$ $B_{1, 2}$ ( marg ) $G_{3, 4}$ ब्रह्म- ( for सत्य- ). — For line 2473, $T_{1, 2}$ $G_{1, 5}$ $M_{2, 4}$ subst .

157** तद्गच्छ पितरं पृच्छ काश्यपं ब्रह्मवादिनम् ॥

— ( L 2474 ) $K_{2, 3}$ Dn $D_{3, 5, 6}$ पराजयार्थं ( for °र्थं ) — Before line 2475, $T_2$ $G_1$ $M_{2, 5}$ ins वैशंपायन . — ( L 2475 ) $K_3$ देव्या ( for ऽदित्या ) $\tilde{N}_2$ ततोऽदितिः सह सुरैः ( for $^a$ ). — ( L 2476 ) $\tilde{N}_1$ $T_{1, 2}$ $G_{1, 5}$ $M_{2, 4}$ तत्राप( $G_5$ °तोऽप )- श्यन्त मारीचं ; $D_5$ अवश्यं कश्यपस्तत्र ( for $^a$ ). $K_3$ दिव्यं ; $D_2$ $T_1$ $G_{3-5}$ $M_{2, 4}$ दिव्य- ( for दीप्त- ) $G_4$ मुनिं दीप्तं तपोधनम् ( for $^b$ ). — ( L 2477 ) $K_3$ विप्रं ; $\tilde{N}_1$ दीप्तं ( for दिव्यं ) — ( L 2478 ) $G_3$ भास्करनिभं ( for °राकारं ). Dn $D_3$ -शिखोपमम् ( for -शिखाप्रभम् ). — ( L 2479 ) $K_4$ $\tilde{N}_1$ $D_2$ -कृष्णाजिनोत्तमम् , $B_2$ $T_2$ $G_{1, 3-4}$ $M_{2, 4}$ °नाम्बरम् , $D_3$ °नोपमम् , $T_1$ $G_5$ -कक्ष्याजिनाम्बरम् ( for कृष्णाजिनोत्त° ) — ( L 2480 ) $K_3$ $\tilde{N}_1$ $V_3$ $D_{1, 3}$ $G_4$ -वर्चसम् ; Dn -तेजसा ( for -वर्चसा ) $B_{1, 3}$ $D_3$ Cal. ed. जटामण्डलभूषितम् ( for $^b$ ) — After line 2480, $T_{1, 2}$ $G_{1, 3-5}$ $M_{2, 4}$ ins :

158** सवेष्टितजटाभारं प्रदीप्तमिव पावकम् ।
[ $T_2$ $G_1$ $M_{2, 4}$ प्रदीप्त ब्रह्मतेजसा , $G_{3, 4}$ उपविष्टं वरा( $G_4$ कुशा)सने ( for $^b$ ) ]

— ( L 2481 ) $D_5$ $T_{1, 2}$ $G_1$ $M_{2, 4}$ हुताशनमिवादीप्तम् ; $D_6$ °शननिभं दीप्तम् , $G_5$ °शनमतिज्वालम् ( for $^a$ ) $B_3$ साज्यमन्त्र- , $D_4$ अग्नित्रय- , $D_6$ साज्यं मन्त्र- ( for आज्यमन्त्र- ). $D_5$ आद्यमन्त्रपुरस्करम् , $T_1$ $G_5$ आद्यन्त पुरत स्थितम् ( for $^b$ ). — ( L 2482 ) $K_1$ Dn $D_6$ शान्तं ( for नित्यं ) $K_{2, 3}$ $\tilde{N}_1$ $D_5$ $T_{1, 2}$ $G_{1, 5}$ $M_{2, 4}$ [अ]र्णवम् , $V_1$ [अ]चलम् ( for [अ]नलम् ) — ( L 2483 ) $T_1$ $G_5$ सत्यवाचं ब्रह्मगुरुं ; $T_2$ $G_{1, 3, 4}$ $M_{2, 4}$ सत्यवाचं ब्रह्मविद ( $G_{3, 4}$ °पौत्रं ) ( for $^a$ ) — After line 2483, $T_{1, 2}$ $G_{1, 5}$ $M_{2, 4}$ ins.

159** ब्रह्मवादी सत्यवादी सुरासुरगुरुश्च स ।

— ( L 2484 ) $D_5$ प्रभवन्तम् ( for °प्रतप° ) — For line 2484, $\tilde{N}_1$ $T_{1, 2}$ $G_{1, 3-5}$ $M_{2, 4}$ subst :

160** त्रैलोक्येऽप्रतिमं लक्ष्म्या काश्यपं दीप्ततेजसम् ।
[ $\tilde{N}_1$ ब्रह्माण्डप्रतिमं लक्ष्म्या ( for $^a$ ). ]

आत्मभावविशेषेण तृतीयो यः प्रजापतिः ॥
ततः प्रणम्य ते वीराः सहादित्या सुरर्षभाः ।
ऊचुः प्राञ्जलयः सर्वे ब्रह्माणमिव मानसाः ॥
यच्छ्रुतं युधि शक्रेण सरस्वत्या समीरितम् ।
अजेयस्त्रिदशैः सर्वैर्बलिर्दानवसत्तमः ॥ [ 2490 ]
श्रुत्वा तु वचनं तेषां पुत्राणां कश्यपस्तदा ।
चकार गमने बुद्धिं ब्रह्मलोकाय लोककृत् ॥

कश्यप उवाच ।

गच्छाम ब्रह्मसदनं ब्रह्मघोषनिनादितम् ।
यथाश्रुतं च तत्रैव ब्रह्मणे वदतानघाः ॥
ततोऽदित्या सह सुरा यान्तं कश्यपमन्वयुः । [ 2495 ]
प्रस्थितं ब्रह्मसदनं देवर्षिगणसेवितम् ॥
ते मुहूर्तेन संप्राप्ता ब्रह्मलोकं दिवौकसः ।
दिव्यैः कामगमैर्यानैर्महार्हैः सुमनोहरैः ॥
दिदृक्षवस्ते ब्रह्माणं तपसो राशिमव्ययम् ।
अभ्यगच्छन्त विस्तीर्णां ब्रह्मणः परमां सभाम् ॥ [ 2500 ]
षट्पदोद्गीतनिनदां सामगीतविमिश्रिताम् ।
शुश्रुवुर्मधुरां देवा ब्रह्मणः सदने स्थिताः ॥
ऋचो बह्वृचमुख्यैश्च प्रेर्यमाणैः पदक्रमैः ।
शुश्रुवुस्तेऽमरव्याघ्रा विततेषु च कर्मसु ॥

---

— ( L 2485 ) D3 श्रेष्ठ (for स्रष्टा) Ñ1 T1 2 G1 3–5 M2, 4 लोकानां ( for -भूतानां ) K1 D4 प्रजापतिरनुत्तम (for $^{b}$) — ( L 2486 ) G3 4 M2 4 प्रजापते ( for °पति ). — ( L 2488 ) G3 4 मानवाः ( for °सा ) — ( L 2489 ) Dn2 Ds2 Bom Poona Cal eds G(ed) तच्छ्रुतं ( for य° ) Ñ1 यच्छ्रुत्वा युधि शक्रस्य ( for $^{a}$ ) — ( L 2490 ) Ñ1 B1, 3 T1, 2 G1 3–5 M2 4 बलिर्दानव इत्युत ( for $^{b}$ ) — ( L 2491 ) Ñ1 B2 ( marg as above ) T1 2 G1 3–5 M2 4 प्रभु ( for तदा ) — ( L 2492 ) D5 चकार बुद्धिं च तदा ( for $^{a}$ ) K1 D4 ब्रह्मकृत्; V1 लोकधृक् ( for °कृत् ) D5 गमने ब्रह्मलोककृत् ( for $^{b}$ ) — ( L 2493 ) T1 2 G1 3–5 M2 4 पुत्राः ( for ब्रह्म- ) K1 D4 गच्छाम सदनं ब्राह्म, Ñ1 B D6 G4 पुत्रा ( Ñ1 D6 G4 °त्र ) गच्छाम सदनं, D3 गच्छामो देवसदनं ( for $^{a}$ ) K1 -लोकवि- ( for -घोषनि ) Ñ1 B1 3 T1 2 G1 3–5 M2, 4 ब्रह्मणः परमाद्भुतम् ( for $^{b}$ ) — ( L 2494 ) Ñ1 T1, 2 तत्सर्वं, B2 ( marg ) निखिलं ( for तत्रैव ) K2 3 ब्रह्मणो ( for °णे ) Ñ1 T1 2 G1 5 M2 4 ब्रह्मणे ( Ñ1 °ण. ) ख्यात पुत्रकाः ( for $^{b}$ ) — Before line 2495, Ñ2 B Ds G1 ins वैशंपायन उवाच — ( L. 2495 ) Ñ1 T1, 2 G1 5 M2 4 सह्रा- ( M2, 4 ते चा )दित्या ततो देव्या ( for $^{a}$ ) — ( L 2496 ) K4 Ñ1 D3 देव- ( for ब्रह्म- ) Ñ1 T2 G1, 3–5 M2 4 ब्रह्मर्षि- ( for देवर्षि- ) — ( L 2497 ) Ñ1 T1, 2 G1 5 M2 4 सुवर्चसः ( for दिवौकसः ). — ( L 2498 ) B1 T1 2 G1 सुमहाबला, G4 °नोरमैः ( for °नोहरैः ) Ñ1 B3 G5 M2 4 यथार्हैः ( B3 °र्हैं ) सुमहाबला ( for $^{b}$ ). — Ñ1 om line 2499. — ( L 2499 ) B T1, 2 G1 5 M2 4 ब्रह्माणं द्रष्टुमिच्छन्तस् ( for $^{a}$ ) D4 T2 G1 4 तपसां ( for °सो ). — ( L 2500 ) D2 अन्वगच्छन्त, T1, 2 G1 3 5 M2 4 अभ्य( M2 4 °न्व )गच्छन्सु- ( for °च्छन्त ) — T1 2 G1 3–5 M4 ins after line 2500: G4 M2 after line 2501

161** षट्पदोद्गीतिनिनदां सामगैः समुदीरिताम् ।
यजुर्वदार्थतत्त्वज्ञैरावृतां वेदपारगैः ।
अध्वर्युवृषभैश्चैव नादिता सर्वतः शुभाम् ॥
ऋचो बह्वृचमुख्यैश्च प्रोक्ता. पुण्यपराक्षरा ।

[ G4 M2 om line 1 — ( L 2 ) G4 आस्थिता ( for आवृता ) — ( L 3 ) G4 नादिता ( for °ता ) G4 सभाम् ( for शुभाम् ) — M2 om. line 4. — ( L 4 ) ऋषिभिर्ब्रह्म-मुख्यैश्च ( for $^{a}$ ) G1 -पदाक्षरा, G3 -पराक्षरैः ( for °क्षरा ). G4 प्रोक्ता प्राणपदाक्षराम् ( for $^{b}$ ) ]

— G3 om line 2501 — ( L 2501 ) K3 G5 षट्पदोद्गीति- ( for °द्गीत- ) B1 3 D3 6 ( marg ) -मधुरां ( for -निनदां ). V3 -गीति-, D2 -गीर्भिर् ( for -गीत- ) K2 3 विनिसृताम् ( for -विमिश्रि° ) T2 G1 5 M2 4 सामगस्वननादिताम्; G4 °गैश्च समावृताम् ( for $^{b}$ ). — K1 Ñ1 V1 3 B Ds D4 6 T1 2 G1 5 M2 4 ins after line 2501; Ñ2 after line 2502 :

162** श्रेयस्करीममित्रघ्नीं दृष्ट्वा सजहृषुर्मुदा ॥

[ ( M4 अमित्रघ्ना ( for °घ्नीं ) T2 श्रेयस्तराममित्रघ्ना ( for $^{a}$ ). V1 3 श्रुत्वा, Ds1 तृष्णा ( for दृष्ट्वा ) K1 D4 तदा ( for मुदा ) ]
T1 2 G1, 5 M2 4 cont :

163** सर्वकामदुघां दिव्यां शीतान्ते घर्मदामिव ।

— T1 2 G1 3–5 M2, 4 om lines 2502–2503 Ñ1 V1 B1, 3 Ds D6 om line 2502 — ( L 2502 ) K1 V3 D4 दिव्यां ( for देवा ) K4 B3 Dn D1–3 5 शुश्रुवुर्मधुरा दिव्या; Ñ2 °रं दिव्यं ( for $^{a}$ ). K1 D4 सदनेरिताम्, K4 Ñ2 B2 Dn D1, 2 5 °नेरिता, ( Ñ2 °तम् ), V3 °ने गिरम्, D3 वदनेरिताः ( for सदने स्थिताः ) — After line 2502, K1 V1, 3 B D3 D4 6 ins :

164** ब्राह्मणैश्च महाभागैर्वेदवेदाङ्गपारगैः ।

While Ñ2 ins after line 2502.

165** श्रेयस्करीममित्रघ्नीं श्रुत्वा संजहृषुर्मुदा ।

— ( L 2503 ) D4 अवोचद्देवमुख्यैश्च ( for $^{a}$ ) Ñ1 M2 om.

यज्ञवेदाङ्गविद्भिश्च क्रमशिक्षाविशारदैः । [ 2505 ]
घोषेण परमर्षीणां सा बभूव विनादिता ॥
यज्ञसंस्तवविद्भिश्च शिक्षाविद्भिस्तथा द्विजैः ।
शब्दनिर्वचनार्थज्ञैः सर्वविद्याविशारदैः ।
वाक्यैर्नानार्थसंयोगैः समवायविशारदैः ।
हृष्टपुष्टस्वरैस्तत्र द्विजेन्द्रैर्वल्गुवादिभिः । [ 2510 ]
नादितं ब्रह्मसदनं प्रवरं देवसद्मवत् ॥
ते तत्र समनुप्राप्य शृण्वन्तो वै ध्वनिं सुराः ।
पूतान्यात्मशरीराणि मेनिरे ते न संशयः ॥
तूष्णीभूता एकचित्ता ब्रह्मण्यगतमानसाः ।
विस्मयोत्फुल्लनयना निरीक्षन्तः परस्परम् ॥ [ 2515 ]
नमस्कुर्वन्ति च पुनर्गुरुं लोकगुरुं प्रभुम् ।
मनसैव सुरश्रेष्ठाः पुरस्कृत्य तु कश्यपम् ॥
पुनः प्रहृष्टाः परमं वेदोच्चारणनिस्वनम् ।
गम्भीरोदारमधुरं सुस्वरं हंसगद्गदम् ॥
लोकायतिकमुख्यैश्च शुश्रुवुः स्वनमीरितम् ॥ [ 2520 ]
तत्र तत्र च विप्रेन्द्रान्नियतान्संशितव्रतान् ।
जपहोमपरान्मुख्यान्ददृशुः कश्यपात्मजाः ॥
तस्यां सभायामास्ते स्म ब्रह्मा लोकपितामहः ।
सुरासुरगुरुः श्रीमान्विधिवद्देवमायया ॥

---

line 2503^b K4 V1 3 B1 D3 प्रेर्यमाणाः ( for °माणैः ) B2 3 पू( B3 प्रे )र्यमाणपदाक्षराः, Dn D6 Bom Poona eds शिक्षा-( D6 लीला )विद्भिस्तथा द्विजै , D6 प्रेर्यमाणामनुक्रमै. ( for ^b ) — After line 2503, Ñ1 B3 Dn M3 ins :

166** शब्दनिर्वचनार्थं च प्रेर्यमाणपदाक्षरा ।

[ Ñ2 M2 om ^a Ñ2 M2 प्रोक्ता पुण्य- ( for प्रेर्यमाण- ) Dn D6 प्रेर्यमाणै पदक्रमै ( for ^b ) ]

— B2 om lines 2504–2507 — ( L 2504 ) K2–4 Ñ2 V1 3 Dn D1 3 5 ततस्ते वै; Ds तुष्टुवुस्ते, D2 ततस्तेषु ( for शुश्रुवुस्ते ) Ñ2 ऽसुरव्याघ्रा , B2 ऽमरश्रेष्ठा , B3 °व्याघ्रा; T1. 2 G1 5 सुरा सर्वे , G3 4 सुरा व्यग्रा ( for ऽमरव्याघ्रा ) K2. 3 चिन्तितेषु ( for वित° ) K1 D4 विवृतेष्विव कर्मसु , Ñ1 वितते सुरक° ( for ^b ). — ( L 2505 ) B2 3 Ds D6 G3 4 -विदुषा ( for विद्भिश्च ) Ñ1 T1 2 G1 5 M2. 4 यज्ञविद्यावेदविदां ( for ^a ) D3 om ( hapl ) lines 2505^b–2507^a T2 G1 पदक्रम- ( for क्रमशिक्षा ) Ñ1 B2. 3 Ds D6 T2 G3–5 M2 4 पदक्रमविदां तथा ( D6 °दामथ ), D5 शिक्षाविद्भिस्तथा द्विजै ( for ^b ) — ( L 2506 ) B3 T1 2 G1 3 4 M2 4 Cal ed ब्रह्मर्षीणा च घोषेण ( for ^a ) B3 निनादिता ( for वि° ) T1 2 G1 M2 4 समन्तादनुनादिता ( for ^b ) — D5 om line 2507. — ( L 2507 ) K4 -संभ्रम- ; V1 -संभव- ; D4 -सचय- ; T1 -संस्कार- , G3 -विस्तर- , M2 -सस्तर- ( for -संस्तव ) K1 ब्रह्मविद्भिस्, D4 विद्वद्भिस्तु ( for शिक्षाविद्भिस् ) G4 जनै ( for द्विजै ) — ( L 2508 ) V3 Dn शब्दनिर्वचनानुज्ञै ( Dn °नार्थं तै. ), T1 2 G1 5 M2 4 °निर्णयतत्त्वज्ञैः ( for ^a ) — T1 2 G1 5 om lines 2509–2519 K2 Dn D3 6 om 2509 — ( L 2509 ) Ñ1 2 B3 Ds2 G3 4 M2 4 मीमांसाहेतु( Ñ2 °हित )वाक्य( G4 °द )ज्ञै , B1 मीमांसावाक्यहेतुज्ञ ( for ^a ) Ñ1 2 B1 G3 4 सर्ववाद- , B3 G(ed.) सर्वविद्या- , Ds2 सर्वशास्त्र- ; M2. 4 सर्ववेद- ( for समवाय- ) — Ñ1 M2 4 om lines 2510–2519. G3 4 om. lines 2510-2511 — ( L 2510 ) K1 4 V1 Dn1 D1 2 6 -सुरैस् , V3 Ds2 -स्वनैस् ( for -स्वरैस् ) V1 वर्ण- , V3 ब्रह्म- ( for वल्गु- ) Ñ2 -नादितै , B1 3 Ds -भाषितै ( for -वादिभि ) K1–3 D4 द्विजेन्द्रैर्वर्णदर्शिभि ( for ^b ) — ( L 2511 ) D4 नृप- ( for देव ) D2 प्रचुरं देवसंघवत् ( for ^b ). — ( L 2512 ) V1 B1 3 Ds समनुप्राप्ता. ( for °प्राप्य ) D3 शृण्वन्तो ध्वनिमुत्तमम् ( for ^b ) — ( L 2513 ) D2 3 शुभानि ( for पूतानि ) K2 3 मेनिरे ते दिवौकस ( for ^b ) — ( L 2514 ) K1 2 4 Ñ2 V1 3 Ds2 D1 4 5 ब्रह्मणो , B Ds1 D6 °णे , D2 °ण्ये , D3 ब्रह्माणं ( for ब्रह्मण्य- ) K3 ब्रह्मणो मानसा. सुताः , G3 4 ब्रह्मण्यास्थितमानसः ( for ^b ) — ( L 2515 ) D5 -वदना ( for -नयना ) V3 B1 3 Ds निरैक्षन्त ; G3 उदैक्षन्त ( for निरीक्षन्त ). — ( L 2516 ) D6 नमस्कृत्वाथ , G3 4 नम प्रकुर्वन्ति ( for नमस्कुर्वन्ति च ) K4 D1. 6 स्वयं ( for गुरुं ) B3 Ds Cal ed ब्रह्माणं परम प्रभुम् ( for ^b ). — ( L 2517 ) K1 नमस्कृत्य ( for पुर° ) — G3 4 om. lines 2518-2519. – ( L 2518 ) Ñ2 V3 B Ds1 D6 संघुष्ट- ( Ds1 °ष्ट ); Dn संपूज्य , D6 प्रहृष्य ( for °ष्टाः ) K2 3 -पूर्वकम् , D3 -निस्वनैः ( for °नम् ) V3 वेदोद्धारणनिस्वन. , Ds1 Cal ed °द्धरणनिस्वनम् ( for ^b ) — ( L 2519 ) B1 -परमं ( for -मधुरं ) D3 -गह्वरम् ( for -गद्गदम् ) — After line 2519, K1 B Ds D4 6 Bom Poona ed. G(ed ) ins :

167** मीमांसाहेतुवाक्यज्ञै सर्ववादविशारदै ।

[ D6 -वाक्यैश्च ( for -वाक्यज्ञै ) B1 3 Ds समवाय- , D6 सर्वशास्त्र- ( for सर्ववाद- ) ]

— ( L 2520 ) D3 शुश्रुवु सुसमीरितम् ( for ^b ) — ( L. 2521 ) V3 नियता ब्रह्मचारिण ( for ^b ) — ( L. 2523 ) K2–4 V3 ब्रह्मलोक ( K4 °के ) ( for ब्रह्मा लोक- ) — ( L. 2524 ) Ñ1 D4 विदधन् , V1 B3 G4 विदधे , D3 वेदविद् ( for

उपासते च तत्रैनं प्रजानां पतयः प्रभुम् । [ 2525 ]
दक्षः प्रचेताः पुलहो मरीचिश्च द्विजोत्तमः ॥
भृगुरत्रिर्वसिष्ठश्च गोतमो नारदस्तथा ।
मनो द्यौरन्तरिक्षं च वायुस्तेजो जलं मही ॥
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
प्रकृतिश्च विकारश्च यच्चान्यत्कारणं महत् ॥ [ 2530 ]
साङ्गोपाङ्गाश्चतुर्वेदाः सरहस्यपदक्रमाः ।
क्रियाश्च क्रतवश्चैव संकल्पः प्राण एव च ॥
एते चान्ये च बहवः स्वयंभुवमुपस्थिताः ।
अर्थो धर्मश्च कामश्च द्वेषो हर्षश्च नित्यदा ॥
शुको बृहस्पतिश्चैव सवर्तो बुध एव च । [ 2535 ]
शनैश्चरश्च राहुश्च ग्रहाः सर्वे ह्यशेषतः ॥
मरुतो विश्वकर्मा च नक्षत्राणि च भारत ।
दिवाकरश्च सोमश्च ब्रह्माणं समुपासते ।
सावित्री दुर्गतरणी वाणी सप्तविधा तथा ॥
सर्वाणि श्रुतिशास्त्राणि गाथाश्च नियमास्तथा । [ 2540 ]
भाष्याणि सर्वशास्त्राणि देहवन्ति विशां पते ॥
क्षणा लवा मुहूर्ताश्च दिवा रात्रिश्च भारत ।
अर्धमासाश्च मासाश्च ऋतवः षट् तथैव च ॥
संवत्सराश्चतुर्युगं मासा रात्रिश्चतुर्विधाः ।
कालचक्रं च यद्दिव्यं नित्यमध्रुवमव्ययम् ॥ [ 2545 ]
एते चान्ये च बहवः स्वयंभुवमुपस्थिताः ।
ते प्रविष्टाः सभां दिव्यां ब्रह्मणः सर्वकामदाम् ॥
कश्यपस्त्रिदशैः सार्धं पुत्रैर्धर्मविशारदैः ।
सर्वतेजोमयीं दिव्यां ब्रह्मर्षिगणसेविताम् ॥
ब्राह्म्या श्रिया दीप्यमानमचिन्त्यं विगतक्लमम् । [ 2550 ]
ब्रह्माणं वीक्ष्य ते सर्वे आसीनं परमासने ।
जग्मुर्मूर्ध्ना शुभौ पादौ ब्रह्मणस्ते दिवौकसः ॥

---

विधिवद् ) K3 मरीच्यादिभिरन्वित , D5 विदधे देवमञ्जसा ; T1 G5 M2 4 विविधाद्भुतकर्मकृत , T2 G1 द्विविधात्मककर्मकृत् ( for $^{b}$ ) — K3 om lines 2528–2530 — ( L 2528 ) K1 नभो द्यौर् , K2 D5 मनो द्याम् ; Ñ1 2 B2 Ds D6 T2 G1 M2 4 विद्या मनो , V3 G4 विद्यमानो , B1 Dn मनुर्द्यौर् , G3 5 विद्याधरो ( for मनो द्यौर् ) D4 हीनमम्भोऽन्तरिक्षश्च , T1 विद्याधरोऽन्तरिक्षश्च ( for $^{a}$ ) Ñ1 G3 M2 बल ( for जलं ) — ( L 2529 ) Bom Poona eds G(ed ) शब्दस्पर्शौ ( for शब्द. स्पर्शश् ) — ( L 2530 ) K1 Ñ2 V1 3 B1 D3–6 भुव , K2 भुवि ( for महत् ) — ( L 2531 ) Ñ1 T1 2 G5 M2, 4 च चत्वारो , D5 च धर्मश्च ( for चतुर्वेदाः ) Ñ1 वेदा लोकपतेस्तदा , T1, 2 G5 M2 4 वेदा लोकपतिं तदा ( for $^{b}$ ). — ( L. 2532 ) Ñ1 नयाश् ( for क्रि° ) G3 4 G(ed ) कल्प प्रणव एव च ( for $^{b}$ ) — ( L 2533 ) T1 2 G1 3 5 M2 4 उपासते ( for उपस्थिता ). — ( L 2534 ) D6 कीर्तिश् ( for कामश् ) D4 अपवर्गश् , Bom Poona eds G(ed ) द्वेषो दर्पश् ( for द्वेषो हर्षश् ) T1 G5 हर्षो वेगस्तथैव च , T2 G1 M2 4 हर्षोद्वेग- ( M2 4 °द्वेष )स्तथैव च ( for $^{b}$ ) — T1 G5 om lines 2535–2539 — ( L 2535 ) K1 Ñ1 B1 3 D2 G3 4 शुक्रो ( for शुको ) D3 सावर्णो ( for संवर्तो ) — ( L 2536 ) B1 3 T2 G1 3 4 M2 4 तथैव च ( for ह्यशेषत· ) — ( L 2537 ) Ñ1 वातपाश्चापि भारत ; T2 G1 3 4 M2, 4 वरुणश्च महायशा· ( for $^{b}$ ) — ( L ›538 ) D5 समुपास्महे ( for °सते ) — ( L 2539 ) K4 गायत्री ( for सावित्री ). D4 भद्रासप्त- ( for वाणी सप्त ) — ( L. 2540 ) Ñ1 V1, 3 B2 D1, 4 स्तुति- , Ñ2 B1 Ds G3 स्मृति- ( for श्रुति- ) Dn सर्वाणि स्तुतशास्त्राणि ( for $^{a}$ ) K2 om ( hapl ) lines 2540$^{b}$–2541$^{a}$. V1 विविधास् ; B निगमास् ( for निय° ) — ( L. 2541 ) Ñ1 M2 -शास्त्राणां ( for °णि ) — K3 om lines 2543–2544 — ( L 2543 ) Ñ1 T1 2 G1 5 M2 4 च सर्वश., G2 4 च व( G4 सव )त्सराः ( for तथैव च ) — Ñ1. T1 2 G1 3–5 M2 4 om lines 2544–2546 — ( L 2544 ) B1 3 D4 पञ्चयुगं ; D6 चातुर्युगं ; D6 च युगपन् ( for चतुर्युगं ) K2 संवत्सरश्चातुर्युगं ( for $^{a}$ ), B1 3 Cal ed संध्या- , D4 श्यामा ( for मासा ). — ( L. 2545 ) K2 दिव्यं च ( for यद्दिव्यं ) K4 D1 2 6 अनित्यं ध्रुवम् , Ñ2 च नित्यं ध्रुवम् , B3 Ds नित्यगं ध्रुवम् ( for नित्यमध्रुवम् ) B1 नित्यगं ध्रुवमक्षयम् , G3, 4 ब्रह्माणं नित्यमव्ययम् ( for $^{b}$ ) — D1 om lines 2546–2547. — ( L. 2546 ) G4 व्रजेशं समुपास्थिता ( for $^{b}$ ) — ( L 2548 ) K1 D4 -विशारद· , Ñ1 T1 2 G1, 3–5 M2 4 भृतां वरः , B1 3 Cal ed. -विदां वर. ( for -विशारदैः ). — ( L 2549 ) D3 -रत्नमयीं ( for तेजो° ). B Dn D6 T1 G1, 3 4 M2 4 सर्वतेजोमयं दिव्यं ( for $^{a}$ ) — D4 om line 2550 — ( L. 2550 ) K2 D5 T1 G5 ब्रह्म- , B3 ब्राह्म- , D2 ब्राह्म्य- ( for ब्राह्म्या ). V3 सेव्यमानम् ( for दीप्य° ) D5 ब्रह्मश्रिया दीप्यमानाम् ( for $^{a}$ ). K2 -ज्वरम् ( for -क्लमम् ) K3 Ñ1 अचिन्त्यां विगतज्वरा( Ñ1 °क्लमा )म् — ( L 2551 ) T1 2 G1 5 M2 प्रेक्ष्य ( for वीक्ष्य ). K1 D4 ब्रह्माणमीक्षते सर्वे ( for $^{a}$ ) Ñ1 B1, 3 T1 2 G1, 3–5 M2 4 परमासनमास्थितम् ( for $^{b}$ ) — After line 2551, Ñ1 B T1 2 G1, 3–5 M2, 4 ins ,

# APPENDIX II

## ( शेषधर्मप्रकरणम् )

The App. No II to the Critical Edition of the Harivaṃśa contains a long passage called *Śesadharmaprakarana* found in few isolated Mss of the text and in a few independent Mss as well as in a separate printed edition called G(ed) here It should be noted that the G(ed) used for this App II is *not a part* of the printed edition of HV in Grantha script used for our Critical text and passages printed in App I In fact, G(ed) here is our independent printed tract of this passage only The text of this Appendix No. II is the latest or youngest addition to the Mahābhārata, presumbly made to it and to HV called Āścarya Parvan by South Indian Paṇḍits perhaps coming from regions where Grantha and Malayālam scripts were current There is only a single Devanāgarī Ms of this passage No Telugu Ms was available I give below the description of the printed edition and Mss used for constituting the text of the passage :

G(ed) = The printed edition of the passage in Grantha script

D1 This Ms, No 257 of 1895-1902, belongs to Government MSS collection formerly deposited in the Deccan College, Poona, but now transferred to the Bhandarkar Oriental Research Institute, Poona. It is a paper Ms containing 118 folios with 14 lines to page and about 35 letters to a line The writer of this Ms is रामचद्र यशवत The text is divided into 58 adhys It is not a part of any HV Ms and is undated

G1— This Ms belongs to the Oriental Research Institute, Mysore The script is Grantha It is a palm-leaf Ms with 334 folios It has 14 to 15 lines to a folio and about 70 letters to a line It is not dated and is a continuation of HV Ms

G2— This Ms belongs to the Government Oriental Mss Library, Madras It bears No 8257 It is a palm-leaf Ms The script is Grantha, and has 355 folios with 11 lines to a page and about 103 letters to a line The scribe's name is रामन् of कावेरीनगरम् The above passage in the Ms is a continuation of HV

M1— This MS bslongs to Avanapparampu Mana Library and has no number It contains only this passage. It is also a palm-leaf Ms. containing folios 94 with 9 to 13 lines to a folio and 64-68 letters to a line It has 75 adhys It mentions no date nor the name of its scribe

---

अथ ते मुनय· सर्वे शौनकाद्या महौजसः ।
सूतं धर्मविदां श्रेष्ठं पप्रच्छुरिदमादृता· ॥
सूत सूत महाभाग सर्वशास्त्रविशारद ।
व्यासप्रसादात्सर्वं त्व वेत्सि धर्ममशेषत ॥
भारतीयानि शास्त्राणि विचित्रफलवन्ति च । [5]
विचित्रकथयोपेता भारतीया· श्रुता कथा ॥
श्रीकृष्णचरिते दिव्ये हरिवंशे यदद्भुतम् ।
धर्मं धर्मविदां श्रेष्ठ तं न· शंसितुमर्हसि ॥

---

D1 begins with

श्रीगणेशाय नम ॥ हरि ॐ,

G2 begins with ·

1** शुक्लाम्बरधर विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदन ध्यायेत्सर्वविघ्नोपशान्तये ॥
वेदव्यसितनाथाय पराशरसुताय च ।
सुखायानन्दरूपाय तस्मै व्यासाय ते नम ॥
श्रीकृष्णाय नम· ॥ अविघ्नमस्तु ॥

M1 begins with

हरि । श्रीगणपतये नम । स्वस्ति श्रीवेदव्यासाय नमः ॥

( L. 1 ) G1 अत्र ( for अथ ). M1 महर्षय ( for महौजस ). — ( L 2 ) G1 G(ed ) धर्मभृतां ( for °विदा ). — Before line 3, M1 ins ऋषय ऊचु — ( L 3 ) G2 सर्वतत्त्वार्थकोविद ( for ⁵ ) — ( L 4 ) D1 सकल ( for सर्वं त्व ) G(ed.) विशेषत ( for अ° ). D1 वेत्सि त्व तु विशेषत ( for ⁵ ). — ( L 6 ) वैकुण्ठचरितोपेता ( for ᵃ ). — ( L. 8 ) G1 G(ed.) धर्मभृतां

सूत उवाच ।

एतदर्थं महाप्राज्ञो जनमेजयभूपतिः ।
पृष्टवान्मुनिशार्दूलं वैशपायनमर्थवित् ॥ [ 10 ]

जनमेजय उवाच ।

भारते सर्वशास्त्राणि श्रुतानि विविधानि च ।
धर्माणि च विचित्राणि प्रथितानि महात्मनाम् ॥
पाण्डूनां कौरवेन्द्राणां कथा· पुण्यार्थदायिका ।
यादवेन्द्रस्य कृष्णस्य चरितं महदद्भुतम् ॥
हरिवंशे भगवता पितृदेवोद्भवा. कथाः । [ 15 ]
यादवेन्द्रस्य चरितं भौमकंसनिबर्हणम् ॥
कैलासयात्राप्रमुखाश्चरिता· सर्वत· शुभा ।
प्रोक्ताश्च बहवो धर्मा श्रुता· परमपावना. ॥
अनुक्त भवता तत्र किंचिच्छेष भवेद्यदि ।
विमृश्य च भवान्नूनं सूक्ष्मं धर्म्यं बहुप्रदम् । [ 20 ]
ब्रूहि मे कृपया विप्र लोकस्यास्य विशुद्धये ॥
यद्यद्रहस्यमाचष्ट पाण्डूनां वृष्णिनन्दनः ।
तत्तत्संगृह्य कृपया वद मे भूसुरोत्तम ॥

सूत उवाच ।

इत्युक्तो राजसिंहेन भारतेन महात्मना ।
ध्यात्वा मुहूर्तं विप्रेन्द्रो ह्यपश्यद्धर्मसंहिताम् ॥ [ 25 ]

वैशंपायन उवाच ।

शृणु राजन्महाश्चर्यं गदितं धर्मवित्तमैः ॥
कृष्णामृतमिति ख्यातं साक्षाद्भगवतोदितम् ॥
धर्माणि च विचित्राणि सर्वेषां सुलभानि च ।
नरकाणि च सर्वाणि यातना बहुविस्तराः ॥
देवदेवस्य कर्माणि विष्णो सर्वात्मनः प्रभोः । [ 30 ]
मुक्तिप्रदानि भक्तानां चरितानि महात्मनाम् ॥
अन्नगोभूमिदानानि सत्सङ्गात्प्राप्यते तु यत् ।
साळग्रामशिलायां तु यत्फलं प्रोच्यते बुधैः ॥
एकादशीव्रते चैव गङ्गास्नाने च यत्फलम् ॥
अन्नपानीयदाने तु ह्यतिथीनां च पूजने । [ 35 ]
विष्णो प्रदक्षिणे यच्च नमस्कारे महात्मनाम् ॥
गर्भे जनन्या यद्घोरं संसारस्य च कष्टताम् ।
ऋणिनां धनिनां चैव नरकं स्वर्गमेव च ॥
कावेर्या महिमां चैव पम्पाया फलमुत्तमम् ॥
कुम्भकोणे च कावेर्याश्चन्द्रपुष्करिणीतटे ॥ [ 40 ]
रङ्गनाथस्य माहात्म्यं कावेर्या स्नानवैभवम् ॥
श्रीशैलशिखरे यच्च वेङ्कटाद्रौ महागिरौ ।
श्रीहस्तिशिखरे पुण्यं प्रविष्टानां महात्मनाम् ॥
सिंहाद्रौ हेमकूटे च विरूपाक्षस्य दर्शने ।
जयन्त्या महिमा चैव नवम्या महिमा तथा । [ 45 ]
शिवार्चनेन यत्पुण्यं शिवरात्रिव्रते तथा ।
चातुर्मास्यव्रते पुण्यं चैत्रादौ मासि यत्फलम् ॥
रवीन्दुवारयोः पुण्यं धनुर्मासप्रपूजनम् ।
पूजने यत्तु महतां यतीनां ब्रह्मचारिणाम् ॥
विचित्राणि च दानानि फलानि विविधानि च । [ 50 ]
मार्गाणि नरकाम्भोधे· पापिनां दुर्गगामिनाम् ।
पथि भोगं च यानानि मार्गाणि स्वर्गगामिनाम् ॥
एतानन्यान्महाभागो धर्मपुत्र सहानुजः ।
द्रौपद्या सह धर्मात्मा यादवेन्द्रात्प्रशुश्रुवे ॥
देवतानामृषीणां च द्विजानां यज्ञशीलिनाम् । [ 55 ]
मध्ये धर्मान्प्रशुश्राव कृष्णे वदति धर्मवित् ॥

जनमेजय उवाच ।

कदा प्रोवाच भगवान्कस्मिन्देशे यदूत्तमः ॥
एतदाचक्ष्व विप्रेन्द्र कृष्णवाक्यामृतं हि मे ॥

---

( for °विदां ) D1 त्व ( for तं ). — ( L. 9 ) G1 इमम् ( for एतद् ). G(ed ) इममर्थं पुरा प्राज्ञो ( for ᵃ ) —( L 12 ) G1 G(ed.) चरितानि ( for प्रथि° ), — ( L 13 ) D1 M1 पाण्डूना कौरवाणां च ( for ᵃ ). D1 G1 M1 चरित्रा पुण्यदायका ( for ᵇ ). — ( L 14 ) M1 तु महाद्भुतम् ( for महद° ) — ( L. 15 ) G(ed.) ऽपि कथिता· ( for भगवता ) — ( L 16 ) D1 M1 -निबर्हणा· ( for °णम् ). — ( L. 17 ) G1 G(ed ) M1 कैलासाद्रिप्रभृतयश्च ( hypermetric ) ( for ᵃ ) G1 गिरय , G(ed.) विषया· ( for चरिता ). — ( L. 19 ) D1 G1 M1 किंचिच् ( for तत्र ) D1 G1 M1 शेष तेष्वखिल महत् ( for ᵇ ) — ( L 20 ) G(ed ) विमृश्य तद्भवान्सम्यक् ( for ᵃ ).— ( L 22 ) G1 G(ed ) -वल्लभ ( for -नन्दन ) — G2 om the ref. — ( L 25 ) G2 -संहतिम् ( for -सहिताम् ) — ( L. 26 ) G2 सर्वभूतहित त्विदम् ( for ᵇ ). – ( L. 29 ) G(ed ) नरकाश्चैव विविधान् ( for ᵃ ). G1 यातनाबहुलानि च ( for ᵇ ) —( L 30 ) D1 सर्वाणि, G1 धर्माणि ( for क° ). — ( L 33 ) G(ed ) सालग्रामस्य पूजायाम् ( for ᵃ ) —( L 35 ) G1 G(ed.) प्र- ( for च ). — ( L 36 ) G1 G(ed.) गवां ( for विष्णो· ). — ( L. 37 ) G2 जनन्यां ( for °न्या ) G(ed ) सकटम् ( for कष्टताम् ) — ( L 38 ) G2 मोक्षम् ( for स्वर्गम् ). — For line 38, G(ed ) subst

2** ऋणिनामृणदातॄणा हीनोत्तमगतिस्तथा ।

— ( L 39 ) G1 कावेरीमहिमा चैव, G(ed ) कावेर्याः सुप्रभावं च ( for ᵃ ). G(ed ) पम्पाया· सरसस्तथा ( for ᵇ ) — ( L. 40 ) G(ed ) कुम्भघोणे ( for °कोणे ) G1, 2 कुम्भघोणे च कावेर्यां ( for ᵃ ) — ( L 42 ) M1 वेङ्कटाख्ये ( for °द्रौ ). — ( L. 43 ) M1 रम्ये ( for पुण्यं ) — ( L 44 ) G(ed.) हिमाद्रौ ( for सिंहाद्रौ ) — For line 45, G(ed ) subst

3** श्रीजयन्त्या· प्रभाव च नवम्याश्च तथैव च ।

—( L. 47 ) D1 चातुर्मास्ये ( for °स्य- ) G2 चातुर्मास्ये तु यत्पुण्यं ( for ᵃ ) G(ed ) चित्रादावपि यत्फलम् ( for ᵇ ). — ( L. 48 ) D1 -वारे यत्, G(ed ) -व्रतयो ( for -वारयो ) G1 रवीन्दुवारव्रते पुण्यं ( hypermetric ), M1 इन्दुवारव्रते पुण्य ( for ᵃ ). D1 धनुर्मासे ( for °मास- ) M1 G(ed ) -प्रपूजने ( for °नम् ). -- For line 49, G(ed ) subst.

4** पूजने यत्तु देवाना यत्पुण्यं लभते नर· ।

— ( L 51 ) D1 मार्गाश्च, G(ed.) मार्गाश्च ( for मार्गाणि ).

वैशंपायन उवाच

राज्याद्भ्रष्टो महातेजा धर्मपुत्र सहानुज ।
पाञ्चाल्या सह धर्मात्मा काम्यकं वनमाविशत् ॥ [60]
दु खिते समनुप्राप्ते धर्मपुत्रे महावनम् ।
एतज्ज्ञात्वा यदुश्रेष्ठो ह्यन्तर्यामी जगत्पति ॥
पत्तीनां शतसाहस्रै काञ्चनाढ्यैर्महारथै ।
नियुतै. पताकसयुक्तै' किंकिणीदामशोभितै ॥
सप्तभि: सप्तसाहस्रैरश्वै काश्मीरजैर्वृत । [65]
नीलजीमूतसंकाशैर्मत्तद्विरदकोटिभि ॥
सैन्यैस्तु संवृत शूर' श्याममूर्ति प्रतापवान् ।
आययौ हस्तिनपुर विदुरेण समागत. ॥
समागतं हरि ज्ञात्वा भीष्मो वै भीतिसंयुत: ।
द्रुतमागत्य भवनात्स्वगृह समुपानयत् । [70]
कल्पयित्कल्पयामास ह्यर्घं पाद्यं महात्मने ॥
स्वागतं ते जगन्नाथ कृतार्थोऽहं तवागमात् ।
तव संस्मरणादेव सर्वपापक्षयो भवेत् ।
असंस्तवे वा स्वप्ने वा कीर्तिस्तव सुखप्रदा ॥
दृष्टमात्रे जगद्योनौ किं सपन्नं भवेन्मम । [75]
तवैव चरणाम्भोज योगिनामपि दुर्लभम् ॥
पुरा संचितपुण्येन लब्धमेतन्मयानघ ।'
भवान्तरेऽहं निष्पापो भवेयं जगदीश्वर ।
अन्यथा दुर्लभं ह्यद्य कथं त्वद्दर्शनं मम ॥
इत्येवं प्रभुरव्यक्त. स्वप्रकाशो निरञ्जन । [80]
गाङ्गेयेन महाभागो बभाषे वदतां वर: ॥
उभाभ्यां सत्कृतो नाथो लोकानां प्रभुरव्ययः ।
भासयन्तं दिशो भाभिर्विचित्रमणिमण्डपम् ॥
सस्मितं विदुरं दृष्ट्वा भीष्मं चेदमुवाच ह ।
गाङ्गेय शृणु मद्वाक्यं पाण्डवा धर्मतत्परा ॥ [95]
स्थितेऽपि त्वयि धर्मिष्ठे किमर्थं वनवासिन: ।
मद्भक्तान्पाण्डवान्विद्धि तेषां स्युः कथमापद' ।
साधूनां वै कृत' क्लेशस्तेषा भवति शाश्वतम् ॥
इत्युक्त्वा तूर्णमुत्थाय गृहीत्वा करपल्लवम् ।
भीष्मस्य भीतिमुत्पाद्य गान्धार्यास्तनयस्य च ॥ [90]
आपृच्छ्य विदुरं कृष्ण प्रययौ काम्यकं वनम् ।
गाङ्गेयसहितो धीमान्कृष्णो यदुकुलोत्तमः ॥
अपश्याद्भ्रातृभिर्दीप्तैं सेव्यमानं युधिष्ठिरम् ।
एकत्रस्थमुदाराङ्ग यज्वभि परिवेष्टितम् ॥
ऋषिविप्रगणै सार्धैर्धर्मसवादतत्परै: । [95]
पुराणधर्मशास्त्रज्ञैस्तथा वेदान्तवेदिभि ॥
शाब्दिकैस्तार्किकैश्चैव ज्योति शास्त्रविशारदै ।
ऋग्यजु'सामाथर्वज्ञै श्रौतस्मार्तविशारदै' ॥
काव्यालंकारतत्त्वज्ञै षड्भाषानिरतैर्द्विजै ।
काव्यकर्तृभिरन्यैश्च नाटकेषु विशारदै ॥ [100]
गान्धर्वशास्त्रनिपुणैर्लक्षणज्ञैर्महात्मभि: ।
एतैरन्यैर्महाभागै. सेव्यमान ददर्श ह ॥
तस्मिन्नवसरे धीमान्धर्मपुत्र: प्रतापवान् ।
भ्रातृभिर्बोधितो दृप्तैर्बलिभिर्युद्धकाङ्क्षिभि: ॥
युद्धमेव वरं ज्ञात्वा कौरवेन्द्रेण शत्रुणा । [105]

---

— (L. 52) G(ed) मार्गाश्च (for मार्गाणि) — (L 53) M1 धर्मान् (for अन्यान्) — (L. 55) G1 -शीलिनाम्, G2 G2 शिल्पि° (for -शालि°). — (L 58) G2 मे ब्रह्मन् (for विप्रेन्द्र) — (L 59) G1 महाराज (for °तेजा) — (L 62) G2 तत्स- (for एतज्) — (L. 63) G1 2 M1 G(ed) पत्तीनां (for पत्तीनां) M1 युतै पताकासयुक्तै (for $^a$) — (L 64) G1 -नाद- (for -दाम-) — For line 64, G(ed) subst

5** ध्वजयष्टिपताकाढ्यै किङ्किणीनादशोभितै ।

— (L 65) G(ed) अपि काम्भोजजैर्वृत (for $^b$) — (L. 67) M1 श्रीमान् (for शूर') D1 सैन्यैस्तु सभृत श्रीमान् (for $^a$). G(ed.) साधु- (for श्याम-). — (L 69) D1 G2 M1 सम गत (for समागतं). — (L. 73) D1 G1 2 M1 सदर्शनाद् (for संस्मरणाद्). — G(ed.) om line 74 — (L 74) D1 शुभ- (for सुख-) — (L 75) M1 जगद्योने, G(ed.) त्वयि श्रीमन् (for जगद्योनौ) G1 कि सिद्धिर्न; M1 का सपन्ना; G(ed) का सिद्धिर्न (for कि संपन्न) — (L 76) G(ed) [ए]तच् (for [ए]व) G(ed) शरणं योगिनामपि (for $^b$) — (L 77) G2 -कृतेन (for सचित-) G1 2 M1 एव (for एतन्) D1 लब्धमेव मयाधुना (for $^b$). — After line 77, G(ed) ins

6** मामुद्धर जगन्नाथ भवाम्भोधेर्महाभयात् ।
देहि मे ह्यचला भक्ति तव पादाब्जयो· सदा ॥

— G(ed) om lines 78-79 — (L 79) G1 कथंचिद्दर्शन मम (for $^b$) — (L. 80) G(ed) [उ]क्त (for [ए]व) M1 अव्यग्र' (for °क्त) — G(ed) om line 82 — (L 83) D1 G1 2 G(ed) भासयन्दन्तशोभाभिर् (for $^a$) — Before line 85, D1 ins श्रीभगवान् — (L 85) M1 पाण्डवान्धर्मतत्परान् (for $^b$). — (L 88) G2 कृता क्लेशास् (for कृत क्लेशस्) D1 साधूना यत्कृत क्लेश (for $^a$) G1 M1 शाश्वत (for °तम्) G(ed) स्वाहितायोपकल्पते (for $^b$) — (L 90) G1 2 G(ed) तु सुतस्य (for तनयस्य) — (L 91) G1 2 M1 प्रति (for वनम्) — (L 92) G2 -कुलोद्वह (for °त्तम) —(L. 93) G(ed) तत्र (for दीप्तै) — (L 94) G(ed) शान्तं दान्तम् (for एकत्रस्थम्) — (L 95) ऋषिभिर्विप्रवर्यैश्च (for $^a$) — (L 96) M1 पुराणशास्त्रतत्त्वज्ञैस्, G(ed) °संप्रदायज्ञैर् (for $^a$) D1 -पारगै, M1 -वादिभि (for -वे°) G1 वेदान्तनिरतैर्द्विजै (for $^b$) — G1 om lines 97-99. — (L 97) D1 G2 M1 शब्दतार्किकमुख्यैश्च (for $^a$) —(L 99) D1 षडङ्ग- (for षड्भाषा) — For lines $99^b$–$100^b$, G(ed) subst .

7** कुशलैर्भाषणे तथा ।
बन्दिमागधमुख्यैश्च गायकैर्वैणिकैरपि ॥

— (L 101) G5 निचय- (for निपुणैर्) — (L 102) सुदर्शनम्, G2 ददर्शतु (for °र्श ह). — (L 103) G(ed) तु समये

दिग्दन्तिसदृशैः शूरैः खड्गशूलधरैः शुभैः ।
रक्ताक्षैर्भीमवदनैर्गदादण्डभयंकरैः ॥
सुयोधनमहं हन्मि पास्यामि रुधिरं भृशम् ।
इति वादिभिरत्युग्रैर्भ्रातृभिः सहितोत्थितः ।
गमनाय मतिं चक्रे धर्मपुत्रः प्रतापवान् ॥ [ 110 ]
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ।
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ॥
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ।
एतज्ज्ञात्वा तु मतिमान् सङ्गं परिहरेद्बुधः ॥
श्रीकृष्ण जगतामीश धर्मबन्धो महेश्वर । [ 115 ]
पाहि सत्यं प्रतिज्ञा च लोकनाथ नमोऽस्तु ते ॥
इत्येव धर्मज्ञो विद्वान्धर्मलोपभयात्सुधीः ।
चिन्तयामास गोविन्दं सर्वगं भक्तवत्सलम् ॥
तर्षस्तथा हि सुकृतान्न लोपयति किंचन ।
सुरवृक्षो यथा काममीप्सितानां प्रयच्छति ॥ [ 120 ]
दूरे निवेशितदलौ कृष्णगङ्गासुतावुभौ ।
ददर्श धर्मज श्रीमान्सुकृती भ्रातृभिः सह ॥
तदा विप्रान्पुरस्कृत्य कन्दमूलफलैः सह ।
आलिङ्गनं नमस्कारमर्घ्यपाद्यं चकार ह ॥
मध्ये तु पर्णशालायामुपवेश्य तु विष्टरे । [ 125 ]
पप्रच्छ कुशलं राजा कृष्णगङ्गासुतावुभौ ॥
स्वागतं ते यदुश्रेष्ठ किमिहागमनं प्रभो ।
बन्धुहीनान्कृशानस्मान्बन्धुभिः परिवर्जितान् ।
पश्य कृष्ण महाभाग प्रीतिर्ननु तवैव हि ॥
सकामो भविता तत्र प्रज्ञाचक्षुस्तदात्मजा । [ 130 ]
तात प्रियमिदं सर्वमस्माकं चरितं तव ॥
एवमुक्त्वा धर्मसुतो बाष्पव्याकुललोचनः ।
कृष्णं तु सर्वगं ज्ञात्वा तन्मायां च दुरत्ययाम् ।
अतिष्ठन्मौनमाश्रित्य भ्रातृभिः परिवेष्टितः ॥
कृष्णो भक्तप्रिय श्रीमान्भक्तानां दुःखनाशनः । [ 135 ]
भक्तानां चरितं दृष्ट्वा प्राह भीष्मं महामनाः ॥
पश्य भीष्म महाभागान्सत्यशीलान्दृढव्रतान् ।
मत्प्रियान्धर्मनिरतान्मयि संसक्तमानसान् ।
निरसूयापरानेतानहंकारविवर्जितान् ॥
भीष्म उवाच ।
किमाश्चर्यमिदं देव त्वद्भक्तानां महात्मनाम् । [ 140 ]
त्वय्यावेशितचित्तानामाश्रमाचारचारिणाम् ॥
त्वां विना देवदेवेश गतिरन्या न लक्ष्यते ।
तस्मादेतान्महाभाग रक्ष त्वं भक्तवत्सल ॥
कृशानामपि भक्तानां सायुज्यं हि प्रयच्छसि ।
तेजस्विनामभक्तानां ध्रुवं निरयमेव हि ॥ [ 145 ]
श्रीभगवानुवाच ।
भीष्म त्वमेतानाश्वास्य सत्यशीलान्महाबलान् ।
बोधयस्व मम ज्ञानं मयि भक्तिं सुखप्रदाम् ॥

---

( for अवसरे ) G1 2 श्रीमान् ( for धी° ) — ( L 104 ) M1 बोधितैर् ) ( for °तो ) M1 वहुभिर् ( for वालिभिर् ) — G(ed ) om line 105 — ( L 106 ) M1 क्रूरै ( for शूरै ). G(ed ) तथा ( for शुभै ) — ( L 107 ) G(ed ) आहोपुरुषिकावृतै ( for $^b$ ). — For line 108, G(ed ) subst .

8** सुयोधनमुखान्सर्वाञ्जेष्यामस्तव पश्यतः ।

— ( L. 109 ) G(ed ) तु स ( [उ]त्थितः ). — After line 109, G(ed.) ins .

9** युद्धमेव परं मत्वा कौरवेन्द्रेण शत्रुणा ।

— ( L 111 ) G(ed ) वर्धते ( for जायते ). — ( L 114 ) D1 G1 M1 सुधी ( for बुधः ) — For line 114, G(ed ) subst.:

10** एवं ज्ञात्वा स धर्मात्मा कृष्णमेवानुचिन्तयत् ।

— ( L 116 ) D1 सत्य- ( for सत्य ) G1 भो ( for च ) G(ed ) पाहि सत्यप्रतिज्ञा मे ( for $^a$ ). — After line 117, G(ed ) ins

11** ततो ज्ञानबलात्तत्र निश्चितात्मा नराधिप ।

— ( L. 118 ) G1 देवेश ( for सर्वग ). — G( ed ) om. lines 119-120 — ( L 119 ) G1 यदि मे सुकृतोद्भवो ( for $^a$ ) — ( L 120 ) D1 आश्रितानां ( for ईप्सि° ). — For line 122, G(ed.) subst

12** तौ ददर्श ततस्तत्र धर्मजो भ्रातृभिः सदा ॥

— ( L. 124 ) G(ed.) आलिङ्ग्य विनतो भूत्वा ( for $^a$ ) — ( L. 125 ) D1 उपविष्ट ( for °वेश्य ) — For lines 125-126, G(ed ) subst

13** तत आनीय विनयान्मध्येशालं तु विष्टरे ।
समावेश्याथ तावेवमप्राक्षीत्कुशलं नृप ॥

— G(ed.) om line 126 — ( L. 128 ) G( ed ) प्रीतेस्तव फलं त्विदम् ( for $^b$ ) — ( L. 130 ) D1 सहात्मजा , G(ed.) सदा° ( for तदा° ) — ( L 131 ) G(ed) अस्मदाचरितं तव ( for $^b$ ) — ( L 133 ) G1 चिन्तामाप ( for तन्मायां च ) ( L 134 ) G2 -वारित ( for -वेष्टित ) — ( L. 135 ) D1 G2 M1 G(ed ) वृष्णिवर. ( for भक्तप्रियः ) — ( L 136 ) D1 G1 2 M1 भृत्यानां ( for भक्तानां ). G1. 2 M1 महात्मनाम्, G(ed ) हसंस्तदा ( for महामना ) — ( L. 137 ) G1 सुसवृतान् ( for दृढव्र° ) — ( L. 138 ) G(ed ) सन्यस्त- ( for संसक्त- ) ( L 139 ) G(ed ) आपत्स्वप्यविचलितान् ( for $^b$ ) — ( L 140 ) G(ed ) भगवन्देवदेवेश ( for $^a$ ) — ( L 141 ) G1 2 M1 आश्रयाचारचा(G1 °का )रिणाम्, G(ed ) त्वदेकशरणैरपि ( for $^b$ ) — ( L 142 ) G(ed.) त्वां विना सर्वदातार ( for $^a$ ) — ( L 143 ) D1 G2 M1 महाभाग ( for भागान् ). — For line 144, G(ed.) subst

14** अकिंचनानां भक्तानां सायुज्यं हि प्रयच्छसि ।

— ( L 145 ) G(ed ) ध्रुवं निरयदो ह्यसि ( for $^b$ ) — G2 श्रीकृष्ण ( for श्रीभगवान् ) — For line 146, G(ed.) subst. :

15** भीष्म त्वमेको मा वेत्सि नान्यो वै प्राकृतो जनः ।

मन्निवेशितचित्तानां मय्यावेशितकर्मणाम् ।
इह लोके परत्रापि नास्ति नास्ति महद्भयम् ॥

वैशंपायन उवाच ।

ततस्तु लोकस्य चराचरस्य [ 150 ]
त्रातारमीशं प्रभुमप्रमेयम् ।
सृष्ट्यन्तकं तं प्रणमय्य मूर्ध्ना
गङ्गासुतो वक्तुमुपक्रमे च ॥

Colophon

वैशंपायन उवाच ।

सुरसिन्धुसुत श्रीमानाज्ञप्तो वै मुरारिणा ।
आत्मना त नमस्कृत्य प्राञ्जलिर्वाक्यमब्रवीत् ॥ [ 155 ]

भीष्म उवाच ।

विद्धि पाण्डव देवेशं सर्वदातारमच्युतम् ।
लोकत्राणाय संभूत कृष्णं साक्षाज्जगद्गुरुम् ॥
आधारं सर्वभूताना पालयन्तमशेषकम् ।
हरन्तं सर्वसंतापं कृष्णं विद्धि जगद्गुरुम् ॥
धर्मं धर्मभृतां पार्थ ह्यर्थमर्थवतां प्रभुम् । [ 160 ]
सत्यं सत्यवतां कृष्णं कामदं विद्धि कामिनाम् ।
सुखदु.खस्य कर्तासौ भक्तानामसतामपि ॥
अयमेव परो मन्त्रो ह्ययमेव परं तप ।
अयमेव पर ज्ञानमयमेव परा गति ॥
अयमेव परो बन्धुरयमेव सुहृत्तम. । [ 165 ]
तस्माद्भजस्व कौन्तेय सर्वसंपद्भवेत्तव ॥

युधिष्ठिर उवाच ।

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
कृष्णे धर्मे च मे भक्तिर्यथा स्याद्धि तथा वद ॥
श्रोतुकामा अमी पार्था ऋषयश्च तपोधना. । [ 170 ]
यज्वानो देवताः सर्वास्तथा देवा दिवि स्थिता ॥

भीष्म उवाच ।

शृणु पाण्डव वक्ष्यामि हरिभक्तिं सुदुर्लभाम् ।
श्रोतॄणा सर्वपापघ्नी वदता च युधिष्ठिर ॥
नारायणं जगद्योनिं सच्चिदानन्दविग्रहम् ।
यजस्व नरशार्दूल कृष्णं ब्रह्मस्वरूपिणम् ॥ [ 175 ]
रिपवस्तं न हिंसन्ति न बाधन्ते ग्रहाश्च तम् ।
राक्षसाश्च न खादन्ते ह्येनं कृष्णपरायणम् ॥
भक्तिर्दृढा भवेद्यस्य देवदेवे जनार्दने ।
श्रेयांसि तस्य सिध्यन्ति भक्तिमानधिकस्ततः ॥
तौ पादौ सफलौ पुंसां विष्ण्वायतनगामिनौ । [ 180 ]
तौ करौ भाग्यनिलयौ विष्णुपूजापरायणौ ॥
ते च नेत्रे महाभागे पश्यतो ये जनार्दनम् ।
सा जिह्वा प्रोच्यते सद्भिर्हरिनामपरायणा ॥
सत्यं सत्यं पुन सत्यमुत्क्षिप्य भुजमुच्यते ।
वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम् ॥ [ 185 ]
सत्यं वच्मि हित वच्मि सारं वच्मि पुन. पुन ।
असारे दग्धसंसारे सारं यद्विष्णुपूजनम् ॥
सर्वभूतदयायुक्तो विष्णुपूजापरायणः ।
मातापित्रोश्च शुश्रूषुस्तस्य तुष्टो जनार्दन ॥
सत्कथायां च रमते सत्कथां च करोति य. । [ 190 ]
सत्यवाङ् निरहंकारस्तस्य प्रीतो रमापति. ॥
नामसंकीर्तनं विष्णो क्षुतप्रस्खलनादिषु ।
करोति सततं पार्थ तस्य विष्णु· प्रसीदति ॥
या तु नारी पतिप्राणा पतिपूजापरायणा ।
तस्यास्तुष्टो जगन्नाथ कृष्णो लोकहिते रतः ॥ [ 195 ]
तस्माच्छृणुष्व कौन्तेय यजस्व सततं विभुम् ।
मा कुरु त्वमहंकारं विद्युल्लोला श्रियो यत ॥

---

—( L 147 ) G1 महाप्राज्ञान्, G1 M1 ममाज्ञा वै ( for मम ज्ञान ) G(ed.) तद्वेयैतान्वर्मज्ञ ( for $^{a}$ ) —( L. 149 ) G(ed ) कदाचिन्नास्ति वै भयम् ( for $^{b}$ ) —( L 152 ) G2 सृष्ट्यन्तनाश ( for °क त ) G2 प्रणिपत्य ( for प्रणमय्य ) G(ed.) सर्वस्य दातारमनीशभाद्य — ( L 153 ) G(ed ) भीष्मो नमस्कृत्य तदाब्रवीदिदम्

Colophon — *Mention of the Epic* : G1 G(ed.) —*Sub-parvan* D1 महाश्चर्यपर्व , G1 M1 G(ed ) आश्चर्यपर्व — *Adhy. name* G1 2 M1 शेषधर्मा , G(ed ) श्रीकृष्णयुधिष्ठिरसवाद.. — *Adhy no* D1 G1 2 M1 G(ed ) 1

( L 154 ) G(ed) गङ्गातनूभव श्रीमान् ( for $^{a}$ ). —( L 156 ) G1 M1 -धातारम् ( for दा° ). —( L 157 ) G1 G(ed ) जगत्प्रभुम् ( for जगद्गुरुम् ) —( L 158) D1 धातार ( for आधार ) G1 2 G(ed ) अकल्मषम् ( for अशेषकम् ). —( L 160 ) G2 G(ed ) धर्मवता ( for °भृता ). G(ed) वरम् ( for प्रभुम् ) G1 ह्यर्थं ह्यर्थभृता वरम् ( for $^{b}$ ) —( L 161 ) G1 कामं तं ( for कामद ). — ( L. 162 ) G1 कर्तारं ( for °सौ ) —( L 166 ) D1 G1 2 G(ed ) इम ( for तस्माद् ). —( L. 169 ) G2 कुरु ( for वद ) —( L 170 ) G1 G(ed ) श्रोतु-कामास्त्वमी पार्थ ( for $^{a}$ ) —( L 171 ) G1 2 M1 G(ed ) सर्वे ( for सर्वास् ) —( L 173 ) G1 2 M2 G(ed ) -पापघ्न ( for °घ्नी ) —( L 175 ) G1 G(ed ) राज ( for नर- ) D1 G1 2 M1 कृष्ण दयदभीप्सितम् ( G1 °प्ससि ) ( for $^{b}$ ) —( L. 177 ) G1 G(ed ) बाधन्ते ( for खादन्ते ) G1 G(ed ) [अ]मुं ( for [ए]न ) —( L 181 ) G1 G(ed ) हरि- ( for विष्णु- ). —( L 182 ) D1 G1 2 M1 पश्येते ( for पश्यतो ) —( L. 183 ) G1. 2 विप्रैर् ( for सद्भिर् ) G(ed ) विष्णु- ( for हरि- ). —( L 185 ) G(ed ) प्रमाण नापरं वेदान् ( for $^{a}$ ) D1 न देवः केशवात्पर ( for $^{b}$ ) —( L. 186 ) M1 बुद्धि ( for सार ). —( L 191 ) G(ed ) सत्य- ( for तस्य ) D1 तुष्टो ( for प्रीतो ) G2 जनार्दन ( for रमापति ) —( L 193 ) G(ed ) य. करोति सदा पार्थ ( for $^{a}$ ) —( L 195 ) G1 2 G(ed) तुष्टे ( for तुष्टो ) —( L 196 ) G(ed ) यजध्व ( for °स्व ) G2 यजध्व सततं हरिम् ( for $^{b}$ ). —( L. 197 ) D1 G1 कुरुध्वम्; G2 M1

शरीरं मृत्युसंयुक्त जीवितं चापि चञ्चलम् ।
बलाधिकैर्धनं ग्राह्यं संपद. क्षणभङ्गुरा. ॥
तस्माद्भजस्व कौन्तेय पुण्डरीकाक्षमव्ययम् ॥ [200]
हे पार्थाः किं न जानीध्वमायुषोऽर्धं तु निद्रया ।
हृतं च भोजनाद्यैश्च कियदायु' समाहृतम् ॥
कियदायुर्बालभावात्कियदायुश्च वार्धकात् ।
कियद्विषयभोगैश्च कदा धर्मं करिष्यथ ॥
बालभावे च वृद्धत्वे न घटेताच्युतार्चनम् । [205]
वयस्येव च धर्मान्वै कुरुध्वमनहकृता. ।
शरीरं रोगनिलयं मलाद्यै' परिदूषितम् ।
किमर्थं शाश्वतधिया पापं कुर्वन्ति मानवा: ॥
असारभूते संसारे नानादु.खसमन्विते ।
विश्वासो नात्र कर्तव्यो निश्चितं नाशमेष्यति ॥ [210]
शृणुध्वं पाण्डवश्रेष्ठा· सत्यमेव मयोच्यते ।
काय संनिहितापाय' पूज्य एव जनार्दनः ॥
मानं त्यजथाहंकारं कामक्रोधादिसंयुतम् ।
यजध्वं सततं विष्णु मानुष्यमतिदुर्लभम् ॥
कोटिजन्मसहस्रेषु स्थावरादिषु पाण्डव । [215]
संभ्रान्तस्य च मानुष्यं कथचित्परिलभ्यते ॥
तत्रापि देवताबुद्धिर्दानबुद्धिश्च पाण्डव ।
भोगबुद्धिस्तदा नृणां जन्मान्तरतप फलम् ॥
मानुष्यं दुर्लभ प्राप्य यो हरिं नार्चयेत्सकृत् ।
मूर्खः परतर पार्थ कोऽन्यस्तस्मादचेतस' ॥ [220]
आराधितो जगन्नाथो ददात्यभिहित फलम् ।
कस्तं न पूजयेद्विद्वान्सम्साराग्निप्रपीडित ।
यस्मिंस्तुष्टे जगत्तुष्टं यत सर्वगतो हरि' ॥
यथा हस्तिपदे सर्वं पादमात्रं प्रलीयते ।
आकाशेन यथा व्याप्तं जगत्स्थावरजङ्गमम् । [225]
तथैव हरिणा व्याप्तं जगत्स्थावरजङ्गमम् ॥
जनने मरणं पार्थ मरणे जन्मसाधनम् ।
उभे ते निकटे नृणां तन्नाशो हरिसेवया ।
ध्यात स्मृत. पूजितो वा स्तुतो वा नमितोऽपि वा ।
संसारपाशविच्छेदी कस्तं न प्रतिपूजयेत् । [230]
यन्नामोच्चारणादेव महापातकनाशनम् ।
यं समभ्यर्च्य राजेन्द्र पदं मोक्षमवाप्स्यथ ॥
अहो चित्रमहो चित्रमहो चित्रं हि पाण्डव ।
हरिनाम्नि स्थिते लोक संसारे वर्तते पुनः ॥
यावन्नेन्द्रियवैकल्यं यावद्व्याधिर्न बाधते । [235]
तावदेवार्चयेन्नित्यं यदि मुक्तिरतो नृप ॥
भूयो भूयो हितं वच्मि भुजमुद्धृत्य पाण्डव ।
कृष्णोऽयं सर्वथा पूज्यो भुक्तिमुक्तिप्रदो नृणाम् ॥
क्रोधमूलं मनः पार्थ क्रोध संसारसाधनम् ।
धर्मक्षयकर क्रोधस्तस्मात्तं परिवर्जयेत् ॥ [240]
मन एव मनुष्याणा कारणं बन्धमोक्षयो ।

---

कृणुध्वम् ( for कुरु त्वम् ). $G_2$ विद्युल्लोला ( for विद्युल्लोला ). $D_1$ विद्धि लोला श्रिय यथा ( for $^{b}$ ). — $D_1$ om line 198. — ( L. 199 ) $D_1$ $G_1$ बाध्य ( for ग्राह्य ). — ( L 200 ) $G_1$ G(ed.) यजस्व ( for भ° ). — ( L. 201 ) G(ed.) हे पार्थ किं न जानीषे ( for $^{a}$ ) — $G_1$ G(ed ) om line 203. — ( L 203 ) $G_2$ $M_1$ स( $M_1$ म )माहृतम् ( for च वार्धकात् ) — ( L. 204 ) $M_1$ कर्म ( for धर्म ) G(ed. ) चरिष्यासि ( for करिष्यथ ) — ( L. 205 ) $D_1$ $G_{1,2}$ $M_1$ वार्धक्ये ( for वृद्धत्वे ). $G_1$ यौवने च ( for न घटेत ) — ( L 206 ) $G_{1,2}$ G(ed.) [ए]व ( for [इ]व ). $D_1$ यौवने चैव धर्मान्वै ( for $^{a}$ ) — ( L 207 ) $M_1$ भोग- ( for रोग- ). $G_2$ अपि ( for परि- ) $G_1$ -पूरितम् ( for -दूषि° ). — ( L 208 ) $D_1$ सर्वदा ( for मानवा ) $G_{1,2}$ $M_1$ पाप कुरुत ( $M_1$ °र्वन्तु ) सर्वदा ( for $^{b}$ ). — ( L 210 ) $M_1$ निश्चय ( for निश्चित ) G(ed ) नाशो निश्चित एव हि ( for $^{b}$ ). — ( L. 211 ) G(ed ) शृणु त्वं पाण्डवश्रेष्ठ ( for $^{a}$ ) — After line 212$^{a}$, $D_1$ ins

16** सपदोऽपि च चञ्चला ।
यौवन क्षणविध्वांसि·

G(ed.) इति निश्चिनु सर्वदा ( for $^{b}$ ) — ( L 213 ) G(ed ) त्यजन् ( for त्यजथ ) — ( L 214 ) G(ed ) यजस्व ( for °ध्वं ). $D_1$ $G_2$ $M_1$ कृष्णं ( for विष्णु ) G(ed ) गतिरन्या न विद्यते ( for $^{b}$ ) — ( L 217 ) G(ed ) -भक्तिश् ( for -बुद्धिश् ) — ( L, 218 ) $G_{1,2}$ G(ed.) योग- ( for भोग- ). $D_1$ $G_2$ $M_1$ -फलप्रदा ( for -तप फलम् ) — ( L 220 ) $G_1$ स पतित·; G(ed.) पापरत ( for परतर ) — ( L 221 ) $G_2$ दद्याद् ( for ददाति ). $G_1$ G(ed ) [अ]भिमत ( for °हित ) — ( L 222 ) $D_1$ $G_2$ -प्रदीपित', $M_1$ -प्रतापित ( for -प्रपीडित ) — ( L. 223 ) $D_1$ $M_1$ सर्वमयो ( for °गतो ) — ( L 224 ) $G_1$ G(ed ) पदमात्र तु लीयते ( for $^{b}$ ) — For line 226, G(ed ) subst

17** तथा व्याप्त भगवता विष्णुना प्रभविष्णुना ।

— ( L 227 ) G(ed ) मरणे जनन तथा ( for $^{b}$ ). — ( L. 228 ) G(ed ) उभे ते सन्निकृष्टे हि ( for $^{a}$ ) $D_1$ ते नष्टे ( for तन्नाशो ) — ( L 229 ) $D_1$ ज्ञात ( for ध्यात. ). G(ed.) स्तुत ( for स्मृत. ) $M_1$ कीर्तितो ( for पूजितो ) $D_1$ ध्यातो वा; $G_1$ दृष्टो वा, $M_1$ पूजितो ( for स्तुतो वा ). G(ed.) दृष्टो वा स स्मृतोऽपि वा ( for $^{b}$ ) — ( L. 230 ) $G_1$ $M_1$ -दूर ( for -पाश- ). $D_1$ -विच्छेत्ता ( for °दी ) G(ed ) य' क्षणाद्भवविच्छेदी ( for $^{a}$ ). G(ed ) देवं न ( for न प्रति- ) — ( L 231 ) $D_1$ यन्नामस्मरणादेव ( for $^{a}$ ) — For lines 231–232, G(ed.) subst. .

18** प्रायश्चित्त भवेत्सद्य कर्मलोपे सदा नृणाम् ।
तमर्चय महाबाहो मनोवाक्कायकर्मभिः ॥

— ( L 234 ) $G_2$ G(ed ) लोके ( for लोक. ). G(ed ) संसारो ( for °रे ). — ( L 235 ) $D_1$ $G_2$ $M_1$ बाध्यते ( for बाधते ). — ( L 236 ) $G_1$ [अ]र्चन ( for [अ]र्चयेन् ). G(ed.) तावदेवार्चनीयो हि ( for $^{a}$ ) G(ed ) सम्यग्योगेश्वरेश्वर ( for $^{b}$ ). — ( L. 238 ) $M_1$ G(ed.) सर्वदा ( for °था ). $G_2$ -मुक्तिप्रदं

तस्मात्तदेव संयोज्य तस्मिन्कृष्णे सुखी भव ॥
अनाराध्य जगन्नाथं सर्वकामफलप्रदम् ।
संसारसागरे मग्ना कथं पारं गमिष्यथ ॥
अच्युतानन्तगोविन्दनामोच्चारणभेषजात् । [245]
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥
हरिश्रद्धावतां पुंसां न सुतैर्नापि बान्धवैः ।
तस्माच्च सर्वदेवेशे भक्तिं कुरुत पाण्डवा ॥
बन्धुमत्त्वं धनाढ्यत्वं पुत्रवत्त्वं च पाण्डव ।
विष्णुभक्तिमतां नृणां भवेज्जन्मनि जन्मनि ॥ [250]
इहामुत्रफलं लिप्सुः पूजयेत्सततं हरिः ।
इहामुत्रफलं नेच्छन्परनिन्दापरो भवेत् ॥
न नमेद्विष्णवे यस्य शरीरं कर्मभेदिने ।
पापानामाकरं तद्धि ज्ञेयं कुरुकुलोत्तम ॥
तस्माच्छृणुत राजेन्द्र हरिभक्तिपरायणाः । [255]
श्रेष्ठाः सर्वत्र विख्याता ह्यतो भक्तिः सुदुर्लभा ॥
असूयारहिता ये च विप्रत्राणपरायणाः ।
कामादिरहिता ये च तेषां तुष्यति केशव ॥
तस्मात्संसारतप्तानां हरिरेव परा गतिः ।
यन्नामश्रवणादेव प्रयाति परमं पदम् ॥ [260]
यादवेन्द्रममुं विद्धि कृष्णं लोकेश्वरं हरिम् ।
अस्य प्रसादात्ते सर्वं भविष्यति न संशयः ॥
स्रष्टा पालयिता हन्ता कृष्णो हि जगतीपतिः ।
अस्माद्वै सकलान्धर्माञ्छृणुष्व च सुखी भव ॥

वैशंपायन उवाच ।

इति देवव्रतेनोक्तं निशम्य कुरुनन्दनः । [265]
संतुष्टमानसो भूत्वा श्रोतुकामोऽभवत्तदा ॥
य इदं कीर्तयेन्नित्यं पुण्यं पापप्रणाशनम् ।
हरिभक्तिकरं नृणां स्मृतानामघनाशनम् ।
ब्राह्मणानां समाजे च तथा विष्ण्वालये पठेत् ।
परं विमानमारूढो विष्णुलोकं स गच्छति ॥ [270]

Colophon.

वैशंपायन उवाच ।

एवं प्रबोधितस्तेन भागीरथ्यात्मजेन वै ।
धर्मपुत्रो महाप्राज्ञो यादवेन्द्रमभाषत ॥

युधिष्ठिर उवाच ।

देवदेवारविन्दाक्ष मायातीत जगत्पते ।
त्वद्भक्तिः शाश्वती मेऽस्तु तथा मोक्षो भवेद्ध्रुवम् ॥
राज्यभ्रष्टा वयं सर्वे त्वत्पादकमलं गताः । [275]
पाह्यस्मान्पुण्डरीकाक्ष धर्मशास्त्रोपदेशतः ॥
त्वां धर्मं सत्यमित्याहुः सर्वशास्त्रविशारदाः ।
प्राणभूतं मनुष्याणां जन्तूनामपि सर्वशः ॥
त्वमेव बन्धुश्च गुरुस्त्वमेव
त्वमेव विद्या द्रविणं त्वमेव । [280]
त्वमेव माता च पिता त्वमेव
त्वमेव साक्षान्मम जीवितं च ॥
बलानि सर्वाणि तुरंगमाद्या
नागा रथाः शास्त्रभृतः सुहृच्च ।
सर्वे च राष्ट्रा गिरिदुर्गमाश्च [285]
कृपास्ति चेत्सन्ति तथैव नाथ ॥
त्वदाज्ञां किं नु लङ्घेयमहमव्यय मुक्तिद ।

(for °दो). — (L 239) $D_1$ क्रोधो मूलमनर्थाना (for $^a$). $G_2$ $M_1$ कारणम् (for -साधनम्) — (L 243) $G_1$ -लोक-, G(ed) -कर्म- (for -काम-) — (L 247) $G_2$ नयनैर्, $M_1$ न धनं (for न सुतैर्). $D_1$ नयनैर्न च बान्धवै (for $^b$). — For line 247, G(ed) subst

19** हरिभक्त्या जिता लोका जितं सर्वं तथैव हि ।

— (L 251) $G_2$ ईप्सु (for लिप्सुः). — After line 251, G(ed) ins

20** ध्यायेच्च संस्मरेच्चैव सर्वसिद्धिर्भवेद्ध्रुवम् ॥

— G(ed.) om. line 252. — (L. 253) $G_1$ G(ed.) शरीर सर्व( $G_1$ काम )दायिने (for $^b$) — (L 254) $D_1$ विद्धि (for तद्धि) $D_1$ सोऽय कुरुकुलोद्वह, $M_1$ विज्ञेय कुरुकुलोद्वह (hypermetric), G(ed.) ज्ञेय मलकरण्डकम् (for $^b$) — G(ed) om. lines 255–257 $G_2$ om lines $257^b$–$858^a$ — (L 260) $D_1$ सयाति, G(ed) प्राप्यते (for प्रयाति) $G_2$ प्रयाति परमा गतिम् (for $^b$). — (L 261) $G_1$ G(ed) विष्णु (for विद्धि) $G_2$ योगेश्वर (for लोके°). $G_1$ G(ed.) प्रभुम् (for हरिम्). — (L. 263) $D_1$ विष्णुर् (for कृष्णो). — After line 263, G(ed) ins. :

21** अस्मात्परतर नास्ति सत्य सत्य वदाम्यहम् ॥

— G(ed) om line 264 — (L 268) G(ed) सर्वपापप्रणाशनम् (for $^b$) — (L. 270) G(ed) वर (for पर) — After line 270, G(ed) ins

22** सर्वदा सस्मरेद्यस्तु वासुदेव रमापतिम् ।
सर्वबन्धविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥

Colophon — *Sub parvan* $D_1$ $G_1$ G(ed) आश्चर्यपर्व ; $G_2$ भाविष्यपर्व — *Adhy name* $G_1$ हरिभक्तिकथनम्, $M_1$ शेषधर्माः, G(ed) शातनवप्रतिपादितहरिभक्तिमाहात्म्यकथनम्. — *Adhy no* $D_1$ $G_1$, 1 $M_1$ G(ed.) 2

$G_1$ om. the ref G(ed) धर्मराज (for युधिष्ठिर) — (L. 273) $G_{1,2}$ G(ed) महामते (for जगत्पते) — (L. 275) $G_1$ राज्याद्भ्रष्टा (for राज्यभ्रष्टा) — G(ed) om lines 277–288 — (L 277) $G_2$ $M_1$ सर्व- (for धर्म-) — After line 277, $G_2$ ins

23** त्वा धर्मसत्यमित्याहु सर्वशास्त्रविशारदम् ।

— (L 282) $D_1$ (marg.) त्वमेव सर्वं मम देवदेव — (L. 285) $D_1$ -दुर्गकाश् (for °माश्) — (L 286) $D_1$ तवैव नान्यथा (for तथैव नाथ). — (L 287) $D_1$ मुक्तिदाम् (for

किमर्थं पुण्डरीकाक्ष कटाक्षैरपि नेक्षसे ॥
रक्ष मां देवदेवेश धर्मेण जगदीश्वर ॥
श्रीकामो यो हि योगीन्द्र यद्दत्त्वा विन्दते श्रियम् । [290]
प्राप्नोति विपुलान्कामान्रक्ष रक्ष महामते ॥
त्वया नाविदितं किंचित्त्रिषु लोकेषु सुव्रत ।
सर्वान्धर्मान्ममाचक्ष्व कृपा मयि तवास्ति चेत् ॥
सुव्रतानि च सर्वाणि तीर्थानि च विशेषतः ।
धर्माधर्माणि सर्वाणि क्षेत्राणि फलवन्ति च । [295]
धर्मानन्यान्ममाचक्ष्व देवदेव नमोऽस्तु ते ॥
इत्युक्त्वा योगिनां नाथं कृष्णं कमललोचनम् ।
धर्मपुत्रो महाप्राज्ञस्तूष्णीमास्ते सतां प्रिय ॥
तस्य चित्तं समाज्ञाय ऋषीणामग्रजन्मनाम् ।
प्रोवाच वचनं धीमान्धर्मश्रवणमिच्छताम् ॥ [300]

श्रीभगवानुवाच ।

साधु साधु महाप्राज्ञ मतिस्ते विमलोज्ज्वला ।
यस्माद्धर्मे सदा भक्तिर्वर्तते तव सुव्रत ॥
धर्मे श्रुते सदा भक्त्या मनुजैर्मनुजेश्वर ।
प्रापयन्ते सदा साधूञ्छ्रोतॄन्वै धर्मतत्परान् ॥
शृणु पाण्डव वक्ष्यामि दानानामुत्तमं वरम् । [305]
भूमिदानं वरं ज्ञेयं भुक्तिमुक्तिफलप्रदम् ॥
भूमिदानात्तु सर्वाणि संभवन्ति न संशयः ।
तस्माद्भूमिप्रदो राजन्सर्वद प्रोच्यते बुधैः ॥
भूमिं सर्वगुणोपेतां यो दद्यात्सस्यशालिनीम् ।
न तस्य लोकाः क्षीयन्ते यावदाचन्द्रतारकम् ॥ [310]
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वापि बहुदक्षिणैः ।
न तत्फलमवाप्नोति भूमिदानाद्यदश्नुते ॥
तपस्विनोऽथ यज्वान सत्यवन्तो बहुश्रुताः ।
गुरुदेवरताश्चैव नातिक्रामन्ति भूमिदम् ॥
दिवि देवाः प्रशंसन्ति सिद्धाश्च परमर्षयः । [315]
भूमिदानं प्रशंसन्ति तस्माद्भूमिप्रदो वर ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
श्रोतॄणां सर्वपापघ्नमायुरारोग्यवर्धनम् ॥
पुरा कृतयुगे राजन्ब्राह्मणो योगभूषणः ।
सर्ववेदार्थतत्त्वज्ञः सदा दान्तश्च शीलवान् ॥ [320]
अध्यात्मविद्यानिरतो निर्धनो ब्रह्मवित्तम ।
निष्किंचनत्वात्सुभृशं बाध्यते चानिशं सुतैः ।
तथापि मन्युं न प्राप शून्यजन्मान्तरप्रदः ॥
कदाचिद्वैश्वदेवान्ते बलिं दत्त्वा गृहाङ्गणे ।
आयान्तं तं द्विजं प्राह कल्याणी तत्प्रिया सती ॥ [325]
एते तवात्मजा नाथ क्षुधिताः पतिता भुवि ।
लुठन्ति भृशदुःखार्ता रुदन्तो रोदयन्ति माम् ॥
त्वं निरीक्षयसे नैताञ्जठराग्निप्रपीडितान् ।
अशक्ता रक्षणे चैषां किं करोमि च तद्वद ॥
पानीयमेव पीत्वाहं वर्तेयं शाकमेव वा । [330]
त्वद्भुक्तशेषं भुञ्जन्ति ह्येते वै तव सूनवः ॥
पुत्रग्राहसमायुक्तां पतिधिक्कारशङ्किनीम् ।

---

°द ) — ( L 288 ) $D_1$ $G_1$ २ किमह ( for किमर्थं ) — After line 289, G(ed.) ins

24** श्रीकामस्तुष्टिकामो वा पुष्टिकामोऽथ वा नरः ।
यजते श्रद्धया यस्तु तां तां प्राप्नोत्यसंशयम् ॥

— G(ed) om lines 290–291 — ( L 291 ) $D_1$ तान्वदस्व, $M_1$ तद्वदस्व ( for रक्ष रक्ष ). — ( L 292 ) $D_1$ विद्यते ( for सुव्रत ) — $D_1$ om ( hapl ) line 294$^{b}$ — ( L 296 ) $G_1$ $M_1$ G(ed) सर्वान् ( for धर्मान् ) — After line 296, G (ed) ins.

25** त्वद्भक्तिरचला मेऽस्तु सर्वाघौघविनाशिनी ॥
त्वमेव स्रष्टासि चराचराणां
त्वं सर्वगोप्तासि जनार्दनस्त्वम् ।
त्वं रुद्ररूपोऽसि विनाशहेतु-
स्त्रिमूर्तिरूपाय नमो नमस्ते ॥

— Before line 297, $D_1$ $M_1$ ins वैशंपायन — ( L 297 ) $G_2$ जगतां ( for योगिनां ) — ( L 298 ) $G_2$ महातेजास् ( for °प्राज्ञस् ) $M_1$ आसीत् ( for आस्ते ) G(ed) तूष्णीभूतोऽभवत्सदा ( for $^{b}$ ) — ( L 299 ) G(ed) ऋषीणामुग्रतेजसाम् ( for $^{b}$ ) — ( L 300 ) $G_1$ श्रीमान् ( for धी° ) — ( L 301 ) G(ed.) मतिस्ते साधुसमता ( for $^{b}$ ) — ( L 303 ) $G_1$ G(ed.) धर्मं श्रुत ( for धर्मे श्रुते ) $D_1$ मनुजाधिप ( for °जेश्वर ) — ( L 304 ) $G_2$ G(ed.) स प्राप यदि तान्साधून् ( for $^{a}$ ). G(ed.) मत्पादसलिलं यथा ( for $^{b}$ ) — ( L 305 ) G(ed) दानानामुत्तमोत्तमम् ( for $^{b}$ ) — After line 305, G(ed) ins

26** सर्वेषामेव भूतानां भुक्तिमुक्तिफलप्रदम् ।
भूमिर्विश्वंभरा धात्री वसुधेति च कथ्यते ॥

— ( L 306 ) $D_1$ $G_1$ भूदानं परमं ज्ञेयं ( for $^{a}$ ) — G(ed) om. line 307. — ( L 309 ) $G_2$ यो दद्याद्धान्यमालिनीम् ( for $^{b}$ ). — ( L. 311 ) $G_2$ इष्ट्वा बहुसुवर्णकैः, $M_1$ इष्ट्वा बहुलदक्षिणैः ( for $^{b}$ ) — After line 313, G(ed) ins. .

27** भूमिदातृफलांशांशकलां नैव भजन्ति ते ॥

— G(ed) om line 314 — After line 315, G(ed.) ins

28** भूदानादेव देवत्व लब्धमित्यहो ॥

— G(ed) om line 316 — ( L. 316 ) $G_1$ भूदान सं- ( for भूमिदान ) — ( L 320 ) $D_1$ सर्वदा दानशीलवान् ( for $^{b}$ ). — ( L. 321 ) $D_1$ -सेवी च ( for -निरतो ). $G_2$ अध्यात्मविद्या वर्तेत, $M_1$ °विद्या वृत्तिश्च ( for $^{a}$ ) — ( L 322 ) $G_1$ G(ed.) स भृशं ( for सु° ). — ( L 323 ) $G_2$ आन्त्य- ( for शून्य- ). G(ed) ज्ञात्वा तान्स्वकृत द्विज ( for $^{b}$ ). — ( L 325 ) $D_1$ आचान्त ( for आयान्त ) — ( L 326 ) G(ed) त्वदात्मजा ( for तवा° ). $G_2$ एते तव सुताः सर्वे ( for $^{b}$ ). — ( L. 327 ) $G_1$ G(ed.) भूरि- ( for भृश- ) — ( L. 328 ) $G_2$ स त्वं निरी-

दारिद्र्यवारिधौ मग्नां धिङ् मां निर्घृणवल्लभाम् ॥
अन्या गृहिण्यस्तिष्ठन्ति निष्ककण्ठ्यो धनान्विता ।
वर्तन्ते गोधनैश्चान्या धान्यैर्माहिषिकै परा । [ 335 ]
दीर्घशृङ्गैरनडुद्भि शकटैर्दासिभि परा ॥
दासै: परिकरै क्षेत्रैर्बन्धुभि सहिता परे ।
मादृश्यो नैव दृश्यन्ते त्वादृशा गृहमेधिन ।
आत्मजा इव दृश्यन्ते कुत्रचिन्न च दु खिता ॥
एवमुक्त्वा तदा चण्डी जठरं प्रत्यताडयत् । [ 340 ]
प्रकीर्य कबरी चण्डी क्षुपलेन शिरोऽहनत् ॥
आक्रोशन्ती रुदन्तीं तामात्मजै परिवेष्टिताम्।
आश्वास्य धीमान्विप्रेन्द्र इद वचनमब्रवीत् ॥
किमर्थं कोपसंयुक्ता भद्रे रोदिषि कोपने ।
न ह्यसंचितपुण्यानामेकं शोकं हि शोभने ॥ [ 345 ]
सत्पात्रे ये प्रयच्छन्ति स्वल्पामपि वसुंधराम् ।
ते नेक्षन्ते ह्यलक्ष्मी च दु खां नरकयातनाम् ॥
तस्मात्किं शोचसे मूढे यत्कृतं तत्प्रभुज्यते ।
त्वया मया च यत्किंचिन्न दत्तं पूर्वजन्मनि ॥
मासमात्र क्षमस्व त्वं पुत्रान्सरक्ष शोभने । [ 350 ]
आहरिष्ये श्रिय गेहे तपसा साधु रम्यताम् ॥
आश्वास्य धीमान्विप्रेन्द्रस्तपसे कृतनिश्चय ।
श्लोकमेकं जगौ सारं सत्यवाक्प्रियदर्शन ॥
दारिद्र्याय नमस्तुभ्य सिद्धोऽहं त्वत्प्रसादत ।
अह तु सर्वान्पश्यामि मां च कोऽपि न पश्यति ॥ [ 355 ]
इत्युक्त्वा सोऽपि विप्रेन्द्रो जगाम तपसे वनम् ।
तत्र चाग्निं प्रतिष्ठाप्य चचार तप उत्तमम् ॥

ग्रीष्मे पञ्चाग्निमध्यस्थो वायुभक्षो जितेन्द्रिय: ।
निरुध्य हृदये वायुमात्माकाशं समागत ।
बाह्यस्थान्विषयान्किंचिन्न विवेद स योगवित् ॥ [ 360 ]
शङ्खचक्रगदापाणि खड्गशार्ङ्गधरं शुभम् ।
कौस्तुभेन विराजन्तं श्रीवत्साङ्कितवक्षसम् ॥
पीताम्बरधर देव वनमालाविराजितम् ।
कालमेघनिभ देवं विद्युच्चञ्चललोचनम् ॥
ध्यायन्स्तुवन्नमस्यंश्च मनसा कृतनिश्चय । [ 365 ]
मद्भक्तो भारतश्रेष्ठ तस्मिन्नास्ते तपोवने ॥
सुरैस्तु तत्तपोविघ्नै रम्भामेनादिभि कृतम् ।
तपोविघ्नं कुरुश्रेष्ठ यद्यत्तन्न च वेद स: ॥
पक्षमात्रे गते तस्मिन्ब्रह्मनाडीसमुद्भव ।
ददाह पावको लोकान्संत्रस्ता ससुरासुरा ॥ [ 370 ]
ततो देवपतिर्भीतो ब्राह्मणोद्योगशङ्कया ।
ब्रह्मलोक ययौ देवैर्दिक्पालै सह धर्मज ॥
तुष्टाव देव लोकानामीश्वरं प्रपितामहम् ।
नत्वा पूर्वमपूर्वार्थं नत्वा पूर्वमरिदम ॥

देव उवाच ।

नमो विश्वाय देवाय ईश्वराय कपर्दिने । [ 375 ]
शम्भवे ब्रह्मणे तुभ्य मायिने विष्णुरूपिणे ॥
देवाय देवरूपाय वेदान्ताय नमो नम ।
सर्वज्ञाय स्वरूपाय पुराणाय नमो नम ॥
यमाय यमरूपाय धर्मरूपाय ते नम ।
मृत्यवे शत्रुरूपाय नमस्ते जलमूर्तये ॥ [ 380 ]

---

क्षसे नैतान् ( for $^a$ ) D1 G2 M2 पति( D1 पीडि )ताञ्जाठरा-ग्निना ( G2 °पु ) ( for $^b$ ).— ( L 332 ) G1 2 M1 G(ed ) द्युति-( M1 वर )धिक्कारभङ्गिनी ( for $^b$ ) — ( L 335 ) G2 [अ]न्यैर् ( for [अ]न्या ) G1 G(ed ) वर्त( G1 °र्ध )न्ते गोधनाश्वाद्यैर् ( for $^a$ ) G1 G(ed ) धान्यैर्माहिषिकादिभि ( for $^b$ ) — ( L 336 ) G1(ed ) अनडुहै ( for °द्भि ). D1 सगुणैश्च सुरूपेण ( for $^a$ ). G1 G(ed ) शकटैर्दासिकादिभि ( for $^b$ ) — ( L 338 ) D1 G(ed ) मादृशा ( for °श्यो ) — ( L 339 ) G(ed ) अपि ( for इव ) G(ed ) कुताश्चिन् ( for कुत्रचिन् ) — ( L 340 ) G(ed ) दु सा ( for तदा ). G1 उदर ( for जठर ) G(ed ) रुरोद भृश-दु खिता ( for $^b$ ) — ( L 341 ) G(ed ) स्वस्य ( for चण्डी ). — ( L 342 ) G2 G(ed ) लुठन्ती ( for रुदन्ती ) — ( L 344 ) G1 किमर्थं शोकसंतप्ता , G2 G(ed ) °र्थं शोकसंयुक्ते ( G2 °क्ता ) ( for $^a$ ) — ( L 345 ) D1 शोको , M1 कोप ( for शोकं ) G(ed ) ऋद्धिर्भवति शाश्वती ( for $^b$ ) — ( L 347 ) G2 [अ]लक्ष्मं ( for °क्ष्मी ) — ( L 348 ) G(ed ) यत्कृत ( for °तं ) — ( L 350 ) G(ed ) कंचित्काल ( for मासमात्रं ) — ( L 351 ) G(ed ) पश्य माम् ( for रम्यताम् ) G2 तपसा साधुरुध्य-ताम् ( for $^b$ ) — ( L 352 ) G(ed.) [ए]व स ( for धीमान् ) — ( L 359 ) G2 M1 वागन् ( for वायु ). — ( L. 364 ) G2 विद्युच्चपल-, M1 °ज्ज्वलित- ( for °च्चञ्चल ) — After line 365, G(ed ) ins

29** चचार स तपो घोर दुष्कर सर्वमानवै ।

— ( L 367 ) G(ed.) सुरैस्तत्तपसोद्विग्नै ( for $^a$ ) — ( L. 368 ) G1 मद्भक्तो न विवेद च ( for $^b$ ) — ( L 369 ) D1 क्षण-मात्रं ( for पक्ष° ) G(ed ) एव तपस्यतस्तस्य ( for $^a$ ) — ( L 370 ) D1 सत्रस्ता सासुरा सुरा , G1 G(ed ) °स्ता सुरसत्तमा ( for $^b$ ) — ( L 371 ) D1 G2 M1 ब्राह्मणान्भोगसक्षयात ( G2 °शङ्कया ), G(ed ) ब्राह्मण मनसा स्मरन् ( for $^b$ ) — ( L 372 ) D1 गतो ( for ययौ ) — ( L 373 ) D1 सर्वे ( for देव ). — ( L 374 ) G1 M1 अपूर्वार्थैर् ( for °र्थं ) — For lines 373–374, G(ed ) subst

30** तुष्टाव देवराजोऽसौ ब्रह्माण पद्मसभवम् ।
तेन सार्धं तदा देवास्तुष्टुवुर्विविधै: स्तवै ।

— G1 om the ref. — ( L 377 ) D1 वेदाय ( for देवाय ). G1 G(ed ) वेदाय वेदरूपाय ( for $^a$ ) — After line 377, D1 ins

31** मन्त्राणा पतये तुभ्य व्रताना पतये नम ।

— ( L 378 ) G1 सर्वयज्ञ- ( for सर्वज्ञाय ) G(ed.) नमस्तुभ्य ( for स्वरूपाय ). G(ed ) भास्कराय ( for पुराणाय ). — ( L. 379 )

नमः पङ्कजनेत्राय हिरण्यपतये नमः ।
सर्वोपनिषदर्थाय वेदानां पतये नमः ॥
क्रतूना पतये तुभ्यं व्रतानां पतये नमः ।
हिरण्यरेतसे तुभ्यं वेदराशे नमोऽस्तु ते ॥
आर्तानां दुःखनाशाय देवानां प्रपितामह । [385]
करोषि यत्नं देवेश भूयो भूयो नमोऽस्तु ते ॥

ब्रह्मोवाच ।

अहो हि भगवान्विष्णुरन्तर्यामी जगद्गुरुः ।
महाविष्णुः प्रसन्नात्मा कर्मणां फलदायकः ॥
तमृते पुण्डरीकाक्षं सर्गस्थित्यन्तकारिणम् ।
कर्मणां फलदाता हि कः समर्थो महीतले ॥ [390]
तमेव शरणं गत्वा ते सर्वे सर्वतोमुखम् ।
प्रार्थयामो वयं देवा इति चिन्तापरोऽभवत् ॥
तस्मिंश्चिन्ताकुले पार्थ प्रविष्टो भगवान्हरिः ।
चोदयामास तद्वृत्तं फलं तस्मै न्यवेदयत् ॥
ततो हर्षाकुलो ब्रह्मा कृपया मुरवैरिणः ॥ [395]
प्रत्युवाच च तान्देवाञ्शतक्रतुपुरोगमान् ॥
मा भैषीर्देवराज त्वं स्तोत्रेण परितोषितः ।
ददातु भगवान्विष्णुर्यद्यच्चेतसि वर्तते ॥

इन्द्र उवाच ।

तपसा योगभूषस्य सतप्तं हि जगत्त्रयम् ।
तस्य चित्तगतं कामं ज्ञात्वा चेष्टं ददस्व ह ॥ [400]

वैशंपायन उवाच ।

तथेति ब्रह्मा सर्वात्मा देवैः सार्धमरिंदम ।
तं देशमगमद्विद्वान्वरं दातुं महात्मने ॥
तपश्चरन्तं विप्रेन्द्र संप्रेक्ष्य च पितामह ।
पिधाय ब्रह्मनाडीं तामिदं वचनमब्रवीत् ॥
योगभूषण मद्वाक्यं तपसा तोषितः शृणु । [405]
वरं वरय भद्रं ते ब्रह्माणं विद्धि मामिह ॥
निवृत्तयोगो विप्रेन्द्रो विस्मयोत्फुल्ललोचनः ।
बद्धाञ्जलिर्नमस्कृत्य वचनं चेदमब्रवीत् ॥
ऐश्वर्यं देहि मे ब्रह्मन्दारिद्र्याद्भृशदुःखितः ।
अष्टैश्वर्यं ददस्व त्वमन्यापेक्षा यथा न मे ॥ [410]

ब्रह्मोवाच ।

तथास्तु ब्राह्मणश्रेष्ठ मद्दत्तां द्रव्यसंपदम् ।
ब्राह्मणेभ्यो ददस्व त्वं भूयो वृद्धिमवाप्स्यसि ॥
इत्युक्त्वान्तर्दधे देवो देवैः सार्धं पितामहः ।
स्वपुरं प्राप्तवान्राजन्ब्राह्मणश्च गृहं गतः ॥

Colophon

युधिष्ठिर उवाच ।

संप्राप्तश्रीर्द्विजवरः किं चकार गृहे स्वके । [415]
तत्सर्वं वद तत्त्वेन देवदेव जगत्पते ॥

---

G1 धर्माय धर्मरूपाय (for ᵃ) — (L. 380) G1 G(ed.) शत-; G2 शान्त-, M1 ऽश्त्रु- (for शत्रु-). G(ed.) मूल (for जल-) — After line 380, M1 ins

32** सर्वेशाय स्वरूपाय पुराणाय नमो नमः ।

— (L. 382) G(ed.) देवाना (for वेदानां) — D1 om. line 383 — (L. 383) M1 पशूनां (for क्रतूना). — (L. 384) D1 M1 हिरण्यरिपवे, G1 2 °पतये (for °रेतसे) G1 नमः (for ऽस्तु ते) M1 देवेशाय नमो नमः (for ᵇ). — (L. 385) G(ed.) देवानां पतये नमः (for ᵇ) — (L. 386) D1 कुरुष्व (for करोषि). G1 कुरुष्व यत्नं भूतेश; G(ed.) पाह्यस्मान्सर्वलोकेश (for ᵃ) D1 M1 नमः (for ऽस्तु ते). — (L. 387) G1 G(ed.) जगन्मय (for °द्गुरुः). — (L. 390) G(ed.) जगत्त्रये (for महीतले). — For lines 391–392, G(ed.) subst:

33** तस्मात्तमेव शरणं गच्छामो वयमञ्जसा ।
इत्युक्त्वा स सुरैः सार्धं विष्णुमेवान्वचिन्तयत् ॥

— (L. 393) G1 प्राप्ते (for पार्थ). G(ed.) तस्मिन्ध्यानपरे तत्र (for ᵃ). — (L. 394) G1 M1 तच्चित्त (for तद्वृत्त) D1 M1 निवेद्य च (for न्यवेदयत्) G1 फलमस्मै निवेद्य (for ᵇ) — For line 394, G(ed.) subst

34** तत्र संचोदयामास सर्वं कुर्विति तं तदा ।

— (L. 395) G(ed.) सुर- (for मुर-). — (L. 396) G1 2 M1 ततो; G(ed.) स तान् (for च तान्). — (L. 397) G(ed.) स्तोत्रैर्वै (for स्तोत्रेण). — (L. 398) G(ed.) मामेवाज्ञापयद्विष्णुर् (for ᵃ). D1 यथा (for यद्यच्). — G1 M1 om. the ref — (L. 400) G(ed.) [अ]भीष्टं (for चेष्टं) — (L. 401) G1 G(ed.) वेधा (for ब्रह्मा) M1 तथेति ब्रह्मणा सर्व- (for ᵃ). — (L. 402) G(ed.) शीघ्राद् (for विद्वान्) — (L. 404) D1 विहाय (for पिधाय) G1 -नाडीकाम्, G(ed.) -नाडीं स (for -नाडीं ताम्) — (L. 405) G1 तोषित (for °तः). — For line 405, G(ed.) subst

35** योगभूषण तुष्टोऽस्मि तपसा ते तपोनिधे ।

— (L. 406) G(ed.) मा भैषीर्मम संनिधौ (for ᵇ). — Before line 409, G(ed.) ins योगभूषण. — After line 409ᵃ, G(ed.) ins

36** यदि प्रीतो मयि ध्रुवम् ।
दारिद्र्यादहमत्युग्रात्पीडितोऽस्मि पितामह ॥

— (L. 410) D1 M1 अत्यैश्वर्य (for अष्टै°). G2 G(ed.) ददं सत्यम् (for ददस्व त्वम्). D1 न मे भवेत् (for यथा न मे). — (L. 411) D1 मद्दत्तद्रव्यसंपदाम्; G1 दत्त दिव्यस्य संपदः; M1 मद्दत्ता दिव्यसंपदः, G(ed.) तव दत्ता हि संपदः (for ᵇ). — For line 412, G(ed.) subst:

37** तद्वृद्धिर्भवता कार्या ब्राह्मणेषु समर्पणात् ॥

— (L. 414) M1 दिवं (for गृहं) — For line 414, G(ed.) subst:

38** ततो जगाम स्वं लोकं ब्राह्मणोऽपि गृहं गतः ॥

Colophon — *Sub-parvan*: D1 आश्चर्यपर्व; G1 2 भविष्यपर्व. — *Adhy. name*: G1 भूदानप्रशंसनम्, G(ed.) भूदानमाहात्म्यवर्णनम्. — *Adhy. no.*: D1 G1. 2 M1 G(ed.) 3.

श्रीभगवानुवाच ।

ब्राह्मणेऽभ्यागते तस्मिन्वरादानसमुत्सुके ।
हेमप्राकारनिचयं हेमतोरणमण्डितम् ।
शरच्चन्द्रनिभैः सौधैः क्रीडाशालैर्विराजितम् ॥
दीर्घिकाभिर्विचित्राभिश्चन्द्रोपलविनिर्मितैः । [ 420 ]
दासीभिर्दासवर्गैश्च सेवकैश्च पुरोहितैः ।
रमणीयं गृहं दृष्ट्वा मुदमाप द्विजोत्तमः ॥
समागतं द्विजं ज्ञात्वा कल्याणी तत्प्रिया सती ।
नीराजनपुरोगाभिः कामिनीभिः पुरो दधे ॥
निष्ककण्ठी स्वकां भार्यां काञ्चीदामविभूषिताम् । [ 425 ]
मुक्तादामविचित्राङ्गीं कर्णपत्रविराजिताम् ॥
वज्रवैडूर्यवलयैरङ्गदैरुपशोभिताम् ।
एवंभूतां विचित्राङ्गीं दृष्ट्वा विस्मयमागतः ॥
गृहं विवेश धर्मात्मा सत्यवाग्विजितेन्द्रियः ।
चित्रैर्विषयभोगैश्च ह्यनुभूय द्विजोत्तमः । [ 430 ]
उपविष्टां स्वकां भार्यां वचनं चेदमब्रवीत् ॥
मद्वाक्यं श्रूयतां भद्रे धर्मे बुद्धिं सदा कुरु ।
अन्नदानमहोरात्रं ब्राह्मणानां ददस्व ह ॥
मया कृतानां धर्माणामानुकूल्यं सदा कुरु ।
प्रातिकूल्येन न श्रेयः सर्वं वै नाशमेष्यति ॥ [ 435 ]
पतिवाक्यमिदं श्रुत्वा ब्राह्मणी क्रोधमूर्छिता ।
रक्ताक्षी भीमवदना वचनं चेदमब्रवीत् ॥
न दास्ये किंचिद्विप्राणां बन्धूनां च विशेषतः ।
पुत्रान्संप्रति वर्धिष्ये पुत्रा एव परा गतिः ॥
को वा बन्धुजनो नाथ मां पूर्वं प्रत्यपालयत् । [ 440 ]
भवन्तमात्मजान्वापि तं वदस्व महामते ॥
मूढवत्प्रतिभासि त्वं भवानद्य हि धर्मकृत् ।
भुक्त्वा गृहे मदीये तु तूष्णीं तिष्ठ मदाज्ञया ॥
इत्युक्त्वा सा मदोन्मत्ता निपीड्य करसंपुटम् ।
आगतानतिथीन्बन्धून्भर्त्सयामास सत्वरम् ॥ [ 445 ]
यथाकामं स्वयं भुक्त्वा पतिवाक्यविरोधिनी ।
विनिन्दन्ती स्वकान्बन्धूनास्ते तत्र गृहोत्तमे ॥
ब्राह्मणावज्ञया चैव बन्धूनां परिवर्जनात् ।
क्षयं प्रयाता धर्मात्मन्दग्धारण्यमिव ध्रुवम् ॥
नष्टश्रियं तदा दृष्ट्वा सर्वशास्त्रार्थतत्त्ववित् । [ 450 ]
सर्वनीतिमयीं प्राज्ञ इमां गीतिमगायत ॥
वश्या सुता वृत्तकरी च विद्या
नीरोगता सज्जनसंगतिश्च ।
इष्टा च भार्या वशवर्तिनी च
दुःखस्य मूलोद्धरणानि पञ्च ॥ [ 455 ]
अनुकूला प्रिया भार्या यस्य नास्ति कुटुम्बिनः ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥
धर्मविघ्नकरी भार्या यस्य तिष्ठति मन्दिरे ।
मर्तव्यं तेन विदुषा न चेद्दुःखोदधिं व्रजेत् ॥
अत्युन्नतपदारूढः पूज्यान्नैवावमानयेत् । [ 460 ]
नहुषः शक्रतां प्राप्य च्युतोऽगस्त्यावमाननात् ॥
इत्युक्त्वा ब्राह्मणश्रेष्ठः स्वकां पत्नीमभाषत ।
त्वया कृतमिदं दोषं पश्य मूर्खे फलं त्विदम् ।
गृहं दग्धं विशेषेण चौरैरपहृतं धनम् ॥
अनाकर्ण्य तु मद्वाक्यमास्ये भस्म न्यनिष्पतत् । [ 465 ]
तत्फलं भुङ्क्ष्व यास्यामि अत्र स्थातुं न शक्यते ॥
पतिवाक्यं तदा श्रुत्वा दुःखिता वाक्यमब्रवीत् ।
यत्करोषि हि धर्मात्मंस्तत्करोमि ददामि च ॥
त्वद्दास्या यत्कृतं नाथ कर्म तत्क्षम्यतामिति ॥

---

(L. 415) D1 M1 वसन् (for स्वके) — G1 2 lines 417-420. — (L. 417) M1 ऽत्यगमद् (for ऽभ्यागते) M1 -समुत्सुकी (for °के) — (L. 419) M1 क्रीडामौधैर् (for °शालैर्) — (L. 421) D1 सेवकैरुपशोभिनम् (for $^{b}$) —(L. 422) M1 पुरं दृष्ट्वा, G(ed) स्वभवनं (for गृहं दृष्ट्वा) G(ed) दृष्ट्वा मुदमवाप स. (for $^{b}$) —(L. 424) D1 ययौ (for दधे) — For line 424, G° subst.

39** गृहान्निर्गत्य कल्याणी नीराजनमथाकरोत् ।

— (L. 426) G2 G(ed) मुक्तादामैर् (for °दाम-). — D1 M1 om. line 430 — (L. 431) D1 उपविष्टः, G(ed.) °रिष्टात् (for °विष्टां). — (L. 433) G(ed) सदा कुरु (for ददस्व ह) — (L. 434) G(ed) अनुकूला सदा भव (for $^{b}$). — (L. 435) D1 G1 प्रातिकूल्यं न च (G1 न) श्रेयः (for $^{a}$). —(L. 436) G(ed) तु सा (for इदं). D1 M1 -सयुना (for °मूर्छिता) —(L. 437) G1 2 रक्ताक्षा (for °क्षी). G1, 2 M1 G(ed) अनु(G1 2 मान)भूतं मया पुरा (for $^{b}$). —(L. 440) G1 G(ed) पर्यपालयत्, G2 प्रतिपाल° (for प्रत्य°). —(L. 446) G1 भुङ्क्ते (for भुक्त्वा). M1 यथा स्वयं धनं भुक्त्वा (for $^{a}$) —(L. 447) G(ed) विनिन्दती (for °न्ती) —(L. 449) G1 च्येयाय, G2 ह्याय (for प्रयाता) D1 क्षयं निनाय धर्मात्मा, G(ed) क्षयं प्राप्ता सदा संपद् (for $^{a}$) D1 [अ]भवत् (for ध्रुवम्) G1 2 दण्डारण्यमिव द्रुतम् (G2 °मिवाभवत्), G(ed) दण्डारण्यमिव द्रुमः (for $^{b}$) — (L. 450) G1 G(ed) नष्टा (for नष्ट-) — (L. 451) G1 गिरम् (for गीतिम्). — For line 451, G(ed) subst.

40** नीतियुक्तां गिरं प्राज्ञः स्त्रियं तां प्रत्यभाषत ।

— Before line 452, G(ed) ins ब्राह्मण — (L. 452) G(ed) वित्तकारी (for वृत्त°) — (L. 453) G1 -संनतिश्, G2 -सगती (for °तिश्) — (L. 458) G(ed) सद्गृहे (for मन्दिरे) — (L. 459) D1 G(ed) गन्तव्यं; M1 न ग्राह्या (for मर्तव्यं) G2 दुःखाधिकं (for दुःखोदधिं) — (L. 460) G1 पूज्यश्चैवावमाननं, G2 M1 पूज्यानेवावमानयेत्, G(ed) सर्वदेवैः सुपूजितः (for $^{b}$) — (L. 461) M1 एवाव- (for ऽगस्त्याव). —(L. 463) G1 2 देवि (for दोषं). G(ed) त्वया कृतेन दोषेण (for $^{a}$). G(ed) निरन्तरम् (for फलं त्विदम्). — (L. 465) G1, 2 M1 विनिष्पतत्, G(ed.) निवेशितम् (for

इत्युक्त्वा पतिता मूलं पादयोर्ब्राह्मणस्य सा । [470]
क्षमस्वेति पुनर्नम्रा धर्मकार्यरताभवत् ॥
तदाप्रभृति सा चण्डी भर्तृशुश्रूषणोद्यता ।
अवशिष्टैस्त्वसौ विप्रो द्रव्यैर्दानपरोऽभवत् ॥
अवशिष्टं तु सौवर्णं रत्नानि विविधानि च ।
द्विजेभ्यो ब्राह्मणो वाक्य विसृज्यान्नं ददौ च सः ॥ [475]
गृहक्षेत्रमृते सर्वं वस्त्रधान्यानि धर्मज ।
ब्राह्मणाना तु सर्वेषां पात्रसादकरोद्द्विजः ॥
एवं भूते तदा विप्रे वागुवाचाशरीरिणी ।
किमिदं ब्राह्मणश्रेष्ठ निर्वेदमधिगच्छसि ॥
भूदानं कुरु विप्राणां श्रोत्रियाणा महात्मनाम् । [480]
अचिरात्प्राप्य सौभाग्यं पूर्ववत्सुखमेष्यसि ।
ऋषिदेवगणास्तात भूदान प्रार्थयन्ति हि ॥
इति खे संगता वाणीं श्रुत्वा प्रीतो द्विजोत्तम ।
गृहं क्षेत्राणि सर्वाणि ब्राह्मणेभ्यः प्रदत्तवान् ॥
कृपया ब्राह्मणानां वै श्रोत्रियाणा महात्मनाम् । [485]
अचिरात्प्राप्य सौभाग्यं मुमुदे भार्यया सह ॥
अन्नगोभूमिदानानि लिङ्गकृष्णाजिनानि च ।
शालग्रामशिलादीनि कुर्वन्नास्ते द्विजोत्तमः ॥
तस्मात्त्वमपि राजेन्द्र भूदानं कुरु सर्वथा ।
श्रोत्रियाणा दरिद्राणा दीक्षितानां महात्मनाम् ॥ [490]
अश्वमेधसहस्राणि वाजपेयशतानि च ।
कृत्वा यत्फलमाप्नोति भूमिदानात्तदश्नुते ॥
सर्वभाग्यकरं पुण्यमायुर्वर्धनकारणम् ।
स्वर्गदं पुत्रदं पार्थ भूदानं कवयो विदु ॥
मन्निवेशितचित्तस्तु ममैवैति ददाति यत् । [495]
ददामि तस्य सायुज्यं सोऽहं पार्थ न संशय ॥
दानहोमादिकाले तु भोजने च विशेषत ।
मां ध्यायन्कारयेद्यस्तु तस्याहं मुक्तिदो नृप ॥

युधिष्ठिर उवाच ।

काँल्लोकान्समवाप्नोति स विप्रो भुवनेश्वर ।
एतदाचक्ष्व योगीन्द्र त्वद्भक्तस्य नमोऽस्तु ते ॥ [500]
चराचराणां भूतानामन्तर्यामिन्यदूत्तम ।
त्वया न विदित किंचित्सर्वलोकेषु सुव्रत ॥

श्रीभगवानुवाच ।

स विप्रो योगयुक्तात्मा सर्वलोकेषु मां स्मरन् ।
बुभुजे विषयान्सर्वान्सत्यवागनहंकृती ॥
वर्षाणामयुतं श्रीमान्स्थित्वा योगबलेन वै । [505]
अन्ते जगाम मल्लोकं देवर्षिगणसेवितम् ॥
भूदानस्य प्रभावेन मदनुध्यानसंपदा ।
भविष्यति हि ते पार्थ मल्लोकं चोत्तमोत्तमम् ॥
एतत्ते कथितं पार्थ भूदानस्य फलं महत् ।
ब्रवीमि सर्व ते धर्मं किं भूय. श्रोतुमिच्छसि ॥ [510]
धर्मं श्रुतो वा दृष्टो वा कृतो वा कथितोऽपि वा ।
अनुमोदितो वा राजेन्द्र नयतीन्द्रपुरं नरम् ॥
य इदं पुण्यमाख्यानं शृणोति श्रद्धयान्वित ।
सर्वपापविनिर्मुक्त स्वर्गलोकं स गच्छति ॥
ब्राह्मणानां समाजे च तथा देवालये पठेत् । [515]

---

व्यन्निष्पतत्) — (L. 466) G1 2 M1 वस्तु (for स्यातु) G(ed) नात्र स्यातु ममोचितम् (for [b]) — (L 468) G(ed) यत्कर्तव्य मया ब्रह्मस (for [a]) G1 वस्तु तत्तद्दरव न, G2 वस्तु यद्यद्दासि च; M1 अस्तु तत्ते ददानि च, G(ed) तद्ददस्वाद्य तत्त्वतः (for [b]) — (L. 469) G(ed) कर्म तत्क्षन्तुमर्हसि (for [b]). — (L. 470) G(ed) सा तु (for मूल). — (L 471) G1 नत्वा (for नम्रा) G1 -परा- (for -रता-) — For line 471, G(ed.) subst

41** ततस्तेन समादिष्टा धर्ममाचर्य सत्वरम् ।

— (L 472) G1 G(ed) भर्तृशुश्रूषणे रता (for [b]) — (L. 473) G(ed) अवशिष्टस् (for °ष्टैस्) D1 तु स द्रव्यै; G2 तु सो विप्रो (for त्वसौ विप्रो). M1 अविशिष्टैस्तु विप्रोऽसौ (for [a]) D1 पुनर् (for द्रव्यैर्) — (L. 475) D1 G1 वाक्याद् (for वाक्य) G(ed) द्विजेभ्यो ब्राह्मणी चापि (for [a]) D1 G2 सा (for स.) G(ed) दातु समुपचक्रमे (for [b]) — (L 476) D1 गृह क्षेत्रमृते सर्वं (for [a]). M1 -धान्यादि (for °नि). D1 धर्मवित् (for °ज) G(ed) वस्त्रधान्यादिक तथा (for [b]) — For line 477, G(ed) subst

42** ब्राह्मणाना दरिद्राणा भक्त्या विप्र समर्पयत् ।

— (L. 478) D1 गते निर्वेदने तस्मिन्, G1, 2 दत्ते (G2 गते) तस्मिन्द्विजवरे, M1 गते तस्मिश्च राजेन्द्र (for [a]). D1 G1, 2 ख्यु- (G2 ऽभ्यु) च्चचार वचोऽम्बरे, M1 उच्चैरुश्च गिरोऽम्बरे (for [b]). — (L 480) D1 G1 ब्राह्मणाना (for श्रोत्रियाणा). — (L 481) G2 M1 ऽप्स्यसि (for एष्यसि). — (L. 482) D1 ते तु; G2 तत्र (for तात) G(ed) ऋषयो देवता सर्वा (for [a]). — For line 483, G° subst.

43** इति खे सगता वाणी तच्छ्रुत्वा प्रीतगेद्विज (?) ।

— (L 484) D1 G2 M1 G(ed) गृह- (for गृहं) — (L 492) G2 भूमिदान (for °दानात्). — (L 498) G(ed) मा स्मरन्कुरुते यस्तु (for [a]) — (L 500) M1 त्वद्भक्तस्य (for त्वद्भृत्यस्य) — For lines 499-500, G(ed.) ins. :

44** कान्लोकानभजत्पुण्यान्स विप्रः पुण्यकृत्तम ।
तत्सर्वं मे समाचक्ष्व कृपया मुनिसत्तम ।

— (L 502) G1 G(ed) ह्यविदित (for न वि°). D1 विश्रुते (for सुव्रत) — (L 503) M1 -युक्त य (for -युक्तात्मा). — (L 508) G(ed) स्वपद (for मल्लोक) D1 मल्लोकश्चोत्तमोत्त (for [b]). — (L 510) G(ed.) ब्रवीमि सर्वांस्ते धर्मान् (for [a]) — (L. 511) G(ed) पालितो (for कथितो). — (L. 512) Hypermetric G(ed) अङ्गीकृतो वा राजेन्द्र (for [a]). M1 -पद (for -पुर) — (L. 513) D1 M1 नरः (for [अ]न्वित.). — (L 514) G1 G(ed.) नर. (for सर्व-). M1 गमिष्यति (for स गच्छति). — (L. 515) G(ed.) सदा (for

शृण्वता वदतां चैव मल्लोको भवति ध्रुवम् ॥

Colophon

युधिष्ठिर उवाच ।

गोदान हि महत्पुण्यमिति चाहुर्महर्षय ।
विस्तरेण जगन्नाथ तन्मे त्वं कृपया वद ॥
केन चादौ पुरा दत्ता प्राप्यते सुमहत्फलम् ।
तत्सर्वं हि भवान्वेत्ति कृपया वद सुव्रत ॥ [ 520 ]

श्रीभगवानुवाच ।

शृणु पाण्डव वक्ष्यामि श्रोतॄणामघनाशनम् ।
सुशर्मणस्तु चरित सर्वं मङ्गलदायकम् ॥
सुशर्मा नाम विप्रेन्द्रो ब्राह्मणो वेदपारग ।
शान्तो जितेन्द्रियो राजन्सर्वसंपत्समायुत ॥
सर्वक्रतु सदा यज्वा विशेषेण मम प्रिय । [ 525 ]
नित्यं दानरतो नित्यं सदा सर्वहिते रत ।
पुराणवक्ता कौन्तेय बन्धूना हितकृत्सदा ॥
एवं प्रवर्तमानस्य बहुपुत्रस्य धीमत ।
जरा प्राप्ता तदा राजन्सपत्नीव नृपात्मज ॥
पलितं तु स्वक देहं दृष्ट्वा राजेन्द्र स द्विज । [ 530 ]
वनं विवेश धर्मात्मा मुनिवृन्दनिषेवितम् ॥
तत्राराध्य परं देवं वासुदेवाख्यमव्ययम् ।
जगाम तपसा स्वर्गं संशोषितकलेवर ॥
तत्र तिष्ठति धर्मिष्ठे विप्रवर्ये युधिष्ठिर ।
वृत्रारेर्निकटं प्राप्ता देवदूता महाबला ॥ [ 535 ]
ऊचु ससंभ्रमं राजन्देवराजं पुरंदरम् ।
बलभिच्छ्रूयतां देव यदर्थमिह चागता ॥
यमदूता महात्मान पाशहस्ता भयंकरा ।
स्वर्गार्हान्मनुजान्नाथ ह्यस्माकं वशवर्तिन ।
निरुध्य पथि ते दूता. प्रापयन्ति यमालयम् ॥ [ 540 ]
तै सार्धं बहुधायुध्य ह्यशक्तास्त्वामुपागता ।
तदुपाय वदस्व त्वं येनेदं प्राप्नुवन्ति ते ॥

इन्द्र उवाच ।

दिवं ममाज्ञया यान्तु धर्मिष्ठा मनुजोत्तमा ।
पापिनां नरकं ज्ञेयं धर्मिष्ठाना त्रिविष्टपम् ॥
सर्वेषां गोप्रदानेन पापराशि प्रणश्यति । [ 545 ]
तत्पर यान्तु धर्मिष्ठा गोदानाद्धूतकल्मषा ।
तदाप्रभृति धर्मिष्ठा दृष्ट्वा यान्ति यमं दिवम् ॥
तदद्भुतमिदं दृष्ट्वा ब्राह्मणो देवसंनिधौ ।
उपदेष्टुं स्वकान्पुत्रानियेष द्विजसत्तमः ॥
पुत्राणा तत्सकाशं तु विमानेन समेत्य च । [ 550 ]
पुत्रा शृणुत मद्वाक्यं यूयं स्वर्गं यदीप्सथ ।
दातव्यं गोप्रदान हि युष्माभिस्तु प्रयत्नत ॥
अशरीरं वच श्रुत्वा पुत्रा बन्धुजना अपि ।
आश्चर्यं परमं जग्मुर्घोषयन्ति स्म नित्यश ॥
तच्छ्रुत्वा विस्मिता सर्वे द्विजा गोदानतत्परा. । [ 555 ]
अभवन्नन्त्यकालेऽपि निश्रेय इति सर्वत ॥
तस्माद्ददध्वं गोदानमपमृत्युविदारकम् ।

---

तथा ) —( L 516 ) $D_1$ ददता ( for व° ) $G_2$ शृण्वतामपि सर्वेपा ( for $^{a}$ ) G(ed.) मत्पद ( for मल्लोको )

Colophon — *Sub-parvan* $D_1$ आश्चर्यपर्व , — *Adhy. name* $D_1$ भूदानप्रशसा , $G_1$ भूदानप्रशसनम् , $G_2$ भूमिदान-प्रशसा , $M_1$ भूदानवर्णनम् ; G(ed ) भूदानमाहात्म्यकथनम्. — *Adhy. no* $D_1$ $G_{1,2}$ $M_1$ G(ed.) 4.

( L 517 ) G(ed ) महापुण्यम् ( for महत्पु° ) $D_1$ मनीपिण ( for महर्षय. ). — ( L 519 ) $D_1$ [इ]यं ( for [आ]दौ ) $M_1$ दत्त ( for दत्ता ) $D_1$ प्राप्यत च , G(ed ) प्राप्त केन ( for प्राप्यते सु- ).—( L 520 ) $G_2$ भगवान् ( for हि भवान् ) —( L. 521 ) $G_2$ पार्थ प्र- ( for पाण्डव ). — After line 522, $G_2$ ins. :

45** अत्रैवोदाहरन्तीमामितिहास पुरातनम् ।

—( L 524 ) $G_1$ दान्तो ( for शान्तो ) G(ed ) -समन्वित ( for -समायुत ). — ( L. 525 ) G(ed.) -क्रतुपरो ( for -क्रतु सदा ). — ( L. 526 ) $G_1$ G(ed.) ऽतीव ( for the second नित्यं ). $G_2$ धर्मे ( for र्वे ) —( L. 527 ) $D_1$ कौरव्य ( for कौन्तेय ) — ( L 529 ) $G_{1,2}$ $M_1$ G(ed ) समभवद् ( for प्राप्ता तदा ). — ( L. 532 ) G(ed.) प्रभुं ( for पर ) — ( L 534 ) G(ed.) अत्र ( for तत्र ). — ( L 535 ) $M_1$ प्राप्य ( for प्राप्ता ) — ( L. 537 ) $G_2$ भवद्भि: ( for बलभिच् ). $M_1$ राजन् ( for देव ). — ( L. 541 ) $D_1$ G(ed.) युध्वा ( for युध्य ). — ( L. 542 ) $G_{1,2}$ केन ( for येन ) — ( L 543 ) $G_{1,2}$ $M_2$ यमाज्ञया ( for म° ). $G_1$ धर्मिष्ठा मनुजेश्वरा , G(ed ) °ष्ठा खलु ते नरा ( for $^{b}$ ) — For line 544, G(ed ) subst

46** पापिना नरक स्थान न तु पुण्यकृता हि स. ।

— After line 545$^{a}$, G(ed ) ins

47** सुरलोक: कथस्थित ॥
तस्मात्ते गोप्रदातारो भुवि पापरता अपि ।
आयान्तु मत्पद शीघ्र नात्र कार्या विचारणा ॥
अज्ञानाद्यमदूतैस्ते गृहीता न तु धर्मत ।
इत्युक्त्वा यमराजाय तानानायत माचिरम् ॥
एवमुक्तास्तदा दूताश्चक्रुरिन्द्राज्ञया तदा ।

—G(ed ) om. lines 545$^{b}$–547$^{a}$. — ( L 546 ) $M_1$ तत्पापिनस्तु धर्मिष्ठा ( for $^{a}$ ) $D_1$ धौत- ( for धूत- ) — ( L. 547 ) $G_2$ दिवि ( for दिवम् ). $D_1$ सर्वे गोदानतत्परा ( for $^{b}$ ), — ( L. 548 ) $G_2$ G(ed ) इम ( for इद ) —( L 550 ) $D_2$ च सकाश , G(ed ) स स° ( for तत्स° ). — After line 550, $D_1$ ins .

48** उवाच वचन धीमान्धर्मपुत्रो महाबल: ।

— ( L 551 ) G(ed.) शृणुध्व ( for °त ) — ( 553 ) $G_{1,2}$ G(ed ) अशरीर- ( for °रं ) — ( L. 554 ) $D_1$ G(ed ) अपर ( for परम ) $D_1$ $G_2$ $M_1$ सर्वश. ( for नित्यश ) — ( L 556 ) $G_2$ अन्त ( for अन्त्य- ). $D_1$ अभूवन्नन्तकालेऽपि ( for $^{a}$ ). $D_1$

स्वर्गदं स्वर्गकामानां श्रीकरं श्रियमिच्छताम् ॥
तदाप्रभृति धर्मिष्ठा यमेन परिपूजिता ।
गोप्रदानरता मर्त्या दिवं यान्ति स्ववंशजैः ॥ [560]
एका च दशगुर्दद्याद्दश दद्याच्च गोशती ।
शतं सहस्रगुर्दद्यात्सममेतत्त्रयं फलम् ।
गोदानात्परमं दानं नैव किंचिज्जगत्त्रये ।
सा गौर्न्यायार्जिता दत्ता कृत्स्नं तारयते कुलम् ॥
अमृतं वै गवां क्षीरमित्युवाच प्रजापतिः । [565]
तस्माद्ददाति यो राजन्नमृतत्वं च गच्छति ॥
वृद्धाय यूने यो दद्यात्तथैव ब्रह्मचारिणे ।
गा दद्याच्छ्रुतविद्याय दरिद्राय कुटुम्बिने ॥
पौराणिकाय भूपाल श्रोत्रियायाहिताग्नये ।
वृत्तिहीनाय वै देयं गोदानं स्वर्गमिच्छता ॥ [570]
पुण्यक्षेत्रे पुण्यकाले मातापितृदिने तथा ।
चन्द्रसूर्योपरागे च दातव्या गौः प्रयत्नतः ॥
संक्रान्तौ जन्मनक्षत्रे ह्ययने विषुवे तथा ।
प्रेताहे च सपिण्डे च व्यतिपाते महालये ।
यो ददाति गवां दानं मम लोकं स गच्छति ॥ [575]
गवामभावे सौवर्णं द्विनिष्कं पुष्पपूजितम् ।
मत्संनिधौ च मां ध्यात्वा दद्याद्गच्छेन्ममालयम् ।
यत्र वै ब्राह्मणं पश्येच्छ्रोत्रियं नियतेन्द्रियम् ।
एतत्कालमहं मन्ये परमं श्राद्धदानयोः ॥
श्रियमायुष्करं दानं पुत्रपौत्रप्रवर्धनम् । [580]
गोदानात्परमं दानं नास्ति किंचिज्जगत्त्रये ।
नित्यं ददस्व भूपाल यदि स्वर्गं त्वमिच्छसि ।
श्रियं च विपुलां लोके गमिष्यसि न संशयः ॥
इत्येतच्छृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
स्वर्लोकं समवाप्नोति गोप्रदानफलं लभेत् ॥ [585]

Colophon

वैशंपायन उवाच ।
गोदानस्य फलं श्रुत्वा धर्मराजो महामतिः ।
पुनरेवापरं धर्मं पप्रच्छ द्विजसंसदि ॥

युधिष्ठिर उवाच ।
लोकनाथ नमस्तेऽस्तु नमस्ते भक्तवत्सल ।
त्राहि मां पुण्डरीकाक्ष धर्मशास्त्रोपदेशतः ॥
सर्वेषामेव दानानां यद्दानं सुमहत्फलम् । [590]
सद्यस्तुष्टिकरं चैव सर्वपापप्रणाशनम् ॥
त्वमेव वेत्सि तत्सर्वं लोकनाथ यदुत्तम ।
त्वद्भक्त्यान्पाहि धर्मात्मन्सत्कथाश्रवणेन च ॥

श्रीभगवानुवाच ।
वक्ष्यामि पाण्डवश्रेष्ठ दानानामुत्तमं वरम् ।
सद्यस्तुष्टिकर पुण्यमायुरारोग्यवर्धनम् ॥ [595]
अन्नदानात्परं दानं नास्ति किंचिज्जगत्त्रये ।
अन्नेन जायते लोको ह्यन्ने प्राणाः प्रतिष्ठिताः ।
तस्मादन्नात्परं दानं नास्ति पार्थ हि मे मतम् ॥
अद्य तेऽहं प्रवक्ष्यामि इतिहासं पुरातनम् ।
शृण्वतां सर्वपापघ्नं भुक्तिमुक्तिफलप्रदम् ॥ [600]
पुरा किल महाराज ब्राह्मणो वेदभूषणः ।
सर्वशास्त्रार्थसंपन्नो बहुपुत्रो महाधनी ॥
अतिथिप्रियकृन्नित्यं बन्धूनां हितकृन्नृप ।
अन्नमेव परं दानमित्युक्त्वासौ करोति च ॥

---

G1 M1 न॰ (for नि-) G1 सद्युना (for सर्वतः). — (L. 557) D1 G(ed) ददस्व (for °स्व). G(ed.) -विदारकम् (for °णम्). — (L 558) G1 द्विजाना (for श्रीकरं). — (L 562) G(ed) फलात् (for फलम्). — (L. 566) सोऽसृतत्व (for अमृ°) G1 G(ed.) स (for च). — (L. 567) D1 G(ed.) नो (for यो). — (L. 569) D1 विदुषे (for भूपाल) — (L. 571) D1 -मृते दिने; G1 -दिने नृप; M1 -मृतौ नृप (for दिने तथा) — (L. 573) D4 ह्ययनेषु च पर्वणि, G2 G(ed) °ने विष्णुपर्वसु (G2 °णि) (for $^{b}$) — (L. 574) G2 मताहे च साविण्डयौ च (for $^{a}$). — (L 576) D1 G2 -पूरितम् (for पूजि°) — (L 577) G(ed) विशेषेण (for तु मा ध्यात्वा). — (L 579) G1 G(ed) एत (for एतत्). — After line 579, G(ed) ins :

49** गोदानाग्निर्ज्वलत्पापतूलराशि प्रधक्ष्यति ।

— G(ed.) om line 580 — (L 581) G2 दानात् (for दान) — For line 581, G(ed) subst. :

50** तस्माद्गोदानसदृशं दान नास्ति जगत्त्रये ।

— (L 583) G3 निमला (for विपुला). D1 श्रियं च विपुलान्भोगान् (for $^{a}$) — (L. 585) D1 गोदानस्य (for गोप्रदान-).

COLOPHON. — *Sub-parvan* D1 G1.2 M1 G(ed) आश्चर्यपर्व — *Adhy name* G1 गोप्रदानप्रशंसनम्, G2 गोदानम्, M1 गोदानप्रशंसनम्, G(ed) गोदानप्रशंसा. — *Adhy. no* · D1 G1 2 M1 G(ed) 5.

(L 586) M1 धर्मपुत्रो (for °राजो). G1 महीपतिः, G(ed.) युधिष्ठिरः (for महामतिः) — (L 587) G(ed.) अपृच्छद् (for पप्रच्छ) G1 G(ed) जन- (for द्विज-) — (L. 594) G1 वदामि (for वक्ष्यामि). G1 M1 परम्, G(ed) शृणु (for वरम्). — (L 595) D1 -पुष्टिदम् (for -वर्धनम्). — After line 595, D1 ins .

51** गजतुरगसहस्रं गोकुलानां सहस्रं
कनकरजतपात्रं मेदिनीसागरान्तम् ।
उभयकुलविशुद्धं कोटिकन्याप्रदानं
न भवति समदानमन्नदानस्य लोके ॥

— (L. 597) G(ed.) लोका जायन्ते (for जायते लोको). — (L 598) G(ed.) पार्थ नास्तीति मे मतिः (for $^{b}$). — (L. 600) M1 शृणु त्वं (for शृण्वतां). — (L. 601) D1 G(ed.) खलु (for किल) — (L 602) G1 G(ed.) तत्त्वज्ञो (for -संपन्नो) — (L. 603) D1 -प्रियकरो (hypermetric)

दुर्भिक्षे वा सुभिक्षे वा ह्यन्नमेव सदा ददत् । [605]
द्विजशूद्रान्तवर्णानां प्रमृष्टान्नं ददाति च ॥
अन्नदानं दृढं कृत्वा स्थिते तस्मिन्महात्मनि ।
सुरलोकेऽथ गन्धर्वा कीर्तयन्ति स्म त द्विजम् ॥
एतच्छ्रुत्वा देवपति. परीक्षायां समुत्सुकः ।
आजगामाथ विप्रस्य मन्दिरं ब्रह्मपूजितम् ॥ [610]
संदिश्य च महामेघान्पुष्कलावर्तकान्द्रुतम् ।
वृष्टिमुत्पादयामास सप्तरात्रं निरन्तरम् ॥
जलाकुलमभूत्सर्वं दशयोजनमात्रकम् ।
तस्मिन्कालेऽप्यसौ देवश्चाययौ विप्ररूपधृत् ॥
कृश· खञ्जो यष्टिहस्त सूक्ष्मदृष्टि क्षुधातुर । [615]
स्वस्तीत्युक्त्वा ययाचेऽन्नं घर्घराघोषसंयुतः ॥
विप्ररूपधरं देवं दृष्ट्वा राजेन्द्र धर्मवित् ।
प्रत्युत्थानाभिवादाभ्यां पादौ चापि प्रपीड्य च ॥
उवाच मतिमान्धर्मी ब्राह्मणेषु दृढव्रत ।
कृतार्थोऽस्मि महाभाग भवदागमनेन हि ॥ [620]
कुल वित्तं श्रुत गेह पुत्रपौत्रादय. सुहृत् ।
सर्वे ते मम पत्न्यश्च धन्या एव त्वदागमे ॥
पितरो मे महाभाग गावो मे जन्म चैव हि ।
धन्या एवाद्यय· सर्वा भूत्वा जन्मान्तराणि च ॥
इदानी सुदिनं जातं जीवितं च सुजीवितम् ॥ [625]
एवं वदति विप्रेन्द्रे तस्मिन्धाराकुले दिने ।
अग्निं प्रज्वाल्य यत्नेन साध्वी पाकमथाकरोत् ॥
तत प्रक्षाल्य विप्रेन्द्र. पादौ तस्य द्विजस्य च ।
तदन्नं पात्रसात्कृत्वा विष्णुबुद्ध्या ननाम ह ॥
तास्मिन्नवसरे शक्रो ब्रह्मरूपी सुरेश्वर· । [630]
मनसाचिन्तयद्देवांस्तेऽपि तत्र समागताः ॥
ब्रह्मरूपा महात्मानो ज्वलनार्कसमप्रभाः ।
अन्नं ययाचिरे विप्रं स्वस्तीत्युक्त्वा समुच्छ्रिता ॥
भोक्तु समुद्यत· शक्र श्रुत्वा तु करुणां गिरम् ।
सुराणा तु समाहूय वचनं चेदमब्रवीत् ॥ [635]
शृणुष्व मद्वचो विप्र ते सर्वे क्षुधिता भृशम् ।
तैश्च सार्धमह भोक्तुमिच्छामि न च तैर्विना ॥
तच्छ्रुत्वा वचनं तस्य ब्राह्मणोऽतिथिवत्सल ।
कुरु पाकं क्षणेन त्वमिति पत्नीमभाषत ॥

ब्राह्मण्युवाच ।

किं करोमि च धर्मात्मन्निन्धनं नास्ति मद्गृहे । [640]
क्षुधिता ब्राह्मणश्रेष्ठा यदुपायं वदस्व तत् ।

ब्राह्मण उवाच ।

वस्त्राणि च बहून्यत्र घृततैलघटास्तथा ।
संयोज्य वर्तिका तेषु दीपयस्व समृद्धवत् ॥

वैशंपायन उवाच ।

भर्तृवाक्यं तथा श्रुत्वा वस्त्रमेकं यथा भवेत् ।
घृतं तैलं तु नि शेषं तथा साध्वी चकार ह ॥ [645]
सर्वाभावे पतिं प्राह श्रूयतां वचनं प्रभो ।
वस्त्राज्यतैलं निःशेष मा भूत्कि करवाण्यहम् ।
पाकश्च नाभवद्विद्वन्कर्तव्यं किमत परम् ॥

श्रीभगवानुवाच ।

श्रुत्वा वच पुनस्तस्या कोपात्संरक्तलोचन ।
अब्रवीत्परुषं वाक्यं साक्षाद्दैवेन चोदित· । [650]
दु खिताश्चैव तिष्ठन्ति क्षुधिता ब्राह्मणोत्तमा. ।
पादौ प्रसार्य ते चाग्नौ कुरु पाकं हि दुर्जने ॥
पतिवाक्यं तदा श्रुत्वा प्रीता साध्वी नृपोत्तम ।

---

( for प्रियकृन् ) $G_2$ प्रिय ( for हित- ) — ( L 604 ) $G_{1,2}$ अनेन परम दा($G_1$ ज्ञा.नम् ( for $^{a}$ ). $D_1$ मत्वा , $G_1$ G(ed) [उ]क्त्वा हि ( for [उ]क्त्वासौ ) — ( L 605 ) $G_2$ $M_1$ ह्यन्न वै सर्वदा ददत् ; G(ed ) ह्यन्नमेव ददाति स ( for $^{b}$ ) — ( L 606 ) $G_1$ G(ed ) प्रहृष्टोऽन्न ( for प्रमृष्टान्न ). — ( L. 607 ) G(ed ) अन्नदाने मतिं कृत्वा ( for $^{a}$ ). — ( L 608 ) $G_1$ पर- ( for सुर- ) $G_1$ सदा , G(ed ) हित ( for स्म त ). — ( L 609 ) $D_1$ $G_2$ परीक्षार्थं ( for °या ) $G_1$ महामति· ( for समुत्सुकः ). — ( L. 610 ) $D_1$ $G_{1,2}$ G(ed ) पूरितम् ( for -पूजि° ). — ( L 611 ) $G_{1,2}$ G(ed ) तदा ( for महा- ) — ( L 614 ) $G_2$ $M_2$ हि ( for ऽपि ) $D_1$ $G_2$ ऽपि , $M_1$ हि ( for च ). $G_1$ $M_1$ वृद्धरूपभाक् ( $M_1$ °धृक् ) ( for °धृत ) — ( L. 615 ) $G_1$ G(ed ) -धर ( for -हस्त ) — ( L 616 ) $G_1$ -सयुतम् ( for °त ). — ( L. 617 ) $M_1$ दृष्ट्वा ( for देवं ) $M_1$ देवराज च धर्मवित् ( for $^{b}$ ). — ( L. 619 ) G(ed ) धर्म ( for धर्मी ) — ( L 621 ) $G_1$ श्रुत ( for कुल ) G(ed.) हि न ( for वित्त ) $D_1$ वयं ( for श्रुत ). — ( L. 623 ) $M_1$ भावो मे जन्म एव च , G(ed ) ह्यागामिनि न जन्मानि ( for $^{b}$ ). — $M_1$ एवान्तराणि ( for जन्मा° ). — ( L 626 ) $D_1$ $G_2$ $M_1$ -वादिनि ( for वदति ) $G_2$ क्षणे ( for दिने ). — ( L 627 ) $G_2$ परम् ( for पाकम् ) — ( L 629 ) $G_2$ -कृत्य ( for कृत्वा ) — ( L 633 ) $D_1$ $G_1$ समूर्छिता· , $M_1$ समर्चिता , G(ed ) सुमूर्छिता ( for समुच्छ्रिता· ) — ( L 634 ) G(ed ) तत् ( for सु- ) — ( L 635 ) तमजमा ( for सुराणां तु ) — ( L 637 ) $G_1$ G(ed ) सावम् ( for सार्धम् ) — ( L 638 ) G(ed ) ब्राह्मणो बाढमित्यथ ( for $^{b}$ ) — ( L 640 ) G(ed ) वै गृहे ( for मद्गृहे ) — ( L. 641 ) G(ed ) आसते वेदिकान्तरे ( for $^{b}$ ) — ( L 642 ) $D_1$ घृतानि च ( for घटास्तथा ). — ( L 643 ) $D_1$ समृद्धिमत् , $M_1$ °द्धिवत् , यथामति ( for समृद्धवत् ) — $G_{1,2}$ om the ref — ( L 647 ) अभूत् ( for मा भूत् ) — For lines $644^{b}$–$647^{b}$, G(ed ) subst .

52** तदा प्राज्वालयत्सती ।
वस्त्राण्यनल्पमूलानि तैलाक्तान्यतिभक्तित ।
तथापि पाकपूर्तिर्हि न जातेन्द्रप्रभावत ॥
ब्राह्मणी ।
वस्त्राण्यनल्पमूलानि भस्मसात्कृतवत्यहम् ।

— ( L. 650 ) $D_1$ दैवेन ( for दे° ). — ( L. 653 ) $G_1$ प्रीता

तथाकरोत्स्वपादौ च तैलसेचनचर्चितौ ॥
पाकस्तदाभवच्छीघ्रं जङ्घाकाण्डेन वह्निना । [ 655 ]
सा साध्वी वेद नाकिंचिन्नैव विन्दति नादुनोत् ॥
पतिस्तु पाककर्ता च कृत्वा पाकाननेकश. ।
तत: प्रक्षाल्य पादौ च पूजयामास चाक्षतैः ॥
प्रसार्य भाजनं दीर्घं स्थापयित्वा स धर्मवित् ।
दातुमन्नं समारेभे संभ्रमादविचारयन् ॥ [ 660 ]
तत पुरंदर प्राह ब्राह्मणं विगतस्पृहम् ।
पत्नी समानयस्वेति ह्यन्नं सा दातुमर्हति ॥
पत्न्या विरहिते गेहे वस्तुमद्य न शक्यते ।
भोक्तुं किमुत विप्रेन्द्र गृहिणी गृहमुच्यते ॥
यस्य भार्या गृहे नास्ति सद्वृत्ता धर्मचारिणी । [ 665 ]
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥
पत्न्या विरहिते गेहे भर्तुः सौख्यं न विद्यते ।
तथैव द्विज सर्वेषां मद्विधानां किमुच्यते ॥
अतिथीनां यथा साध्वी प्रीता दास्यति पुत्रवत् ।
प्रीता भवन्ति ते देवाः कर्मश्रद्धासमीप्सवः ॥ [ 670 ]
मौनं बलं हि योगीनां द्विजातीनां श्रुतं बलम् ।
पत्नी बलं गृहस्थानां पक्षौ वै पक्षिणां बलम् ॥
अन्नं बलं मनुष्याणां पुरुषाणां धनं बलम् ।
राजा बलं दुर्बलानां योधानां तु धृतिर्बलम् ॥
चक्षुर्बलं हि जन्तूनां धर्म वै संपदां बलम् । [ 675 ]
शील बलं हि नारीणां गृहिणी गृहमेधिनाम् ॥
तस्मात्त्वं बलहीनश्च किं करोषि वृथा मम ।
भार्या न चेत्तु यास्यामस्तिष्ठ त्वं तु सुखं द्विज ॥
इति देवपतेर्वाक्य श्रुत्वा भीतिसमन्वित· ।
ध्यात्वाथ मां विवेशाशु पाकशाला कुरूद्वह ॥ [ 680 ]
पारिप्लवाक्षी वेष्टन्ती भुवि दीना सुमूर्छिताम् ।
हीनजङ्घां स्वका भार्यामिदं वचनमब्रवीत् ॥
अहोऽह पापधीर्नित्यं क्रूरवाङ् निर्घृणोऽसुर ।
अनुकूलां स्वकां भार्यामीदृशी करवाणि यत् ॥
अविवेको हि सर्वेषामापदां परमं पदम् । [ 685 ]
विवेकरहितो यस्तु पशुरेव न संशयः ॥
अतर्कयन्तं विद्वांसमपि शास्त्रविशारदम् ।
प्रविशन्ति यथा नद्यो दु खानि च महार्णवम् ॥
इत्युक्त्वा त्व क्षमस्वेति मद्वच परुषाक्षरम् ।
अब्रवीत्पुनरेवाशु कल्याणीं तां पतिव्रताम् ॥ [ 690 ]
किमिदं सुव्रते साध्वि प्राकृतस्त्रीजनो यथा ।
आगतानतिथीन्सर्वान्पालयस्व च मामिह ॥
त्वया विना कथं वस्तुमुत्सहे धर्मचारिणि ।
कालो ह्ययं नैव दृष्टो नोक्तपूर्वं मयेदृशम् ॥
त्वं धर्मस्त्वं प्रिया प्राणा देवता च त्वमेव मे । [ 695 ]
अतिथीनामयं धर्मस्त्वय्येव च निवर्तते ॥
एवमुक्त्वापतद्भूमौ शोकमोहसमन्वितः ।
उत्थिता पुरुहूतस्य कृपया सा पतिव्रता ॥
विस्मिता जातजङ्घोरू जाम्बूनदविभूषिता ।
भोजयामास तान्सर्वान्ब्रह्मरूपधरान्सुरान् ॥ [ 700 ]
तृप्ताः प्रमुदिताः सर्वे सुखासीना द्विजोत्तमा· ।

---

( for श्रुत्वा ) G1 साध्वी मा च ( for प्रीता साध्वी ). — (L. 654 ) M1 सा ( for स्व- ) D1 M1 -सेकन- ( for सेचन- ) — ( L. 655 ) G1 M1 पाकं तथा ( for पाकस्तदा ) D1 तीव्रं ( for शीघ्र ) G(ed ) पाक तदाकरोच्छीघ्र ( for $^a$ ) — (L 656) D1 व हृद्दत् ( for नादुनोत् ). G(ed ) नाविन्दत्पतिभक्तित· ( for $^b$ ) — After line 656, G(ed ) ins .

53** तत आहूय तान्भक्त्या पूजयित्वा यथाविधि ।

— G(ed.) om lines 657-659 — ( L 657 ) D1 कृतपाकक्रियां सोऽथ ( for $^a$ ). D1 श्रुत्वा ( for कृत्वा ). — ( L 658 ) G2 M1 सो ( for the second च ). — ( L 659 ) G2 धर्मज ( for °वित् ) — (L 662) D1 समाह्वयस्व ( for समान° ). — ( L. 665 ) G1 2 सुव्रता ( for सद्वृत्ता ) — G1 G(ed.) om. lines 667-668 — ( L. 670 ) M1 श्रद्धा ( for श्रद्धा ). — ( L 671 ) G(ed ) बल हि योगिना मौन ( for $^a$ ). G1 G(ed ) द्विजाना तु ( for °तीना ) — ( L. 672 ) D1 G1 M1 भार्या ( for पत्नी ) G2 om lines 672$^b$-674$^a$ D1 M1 अपि ( for बलम् ) — (L 676) G(ed ) बल ज्ञान महात्मनाम् ( for $^b$ ) — ( L 678 ) G1 G(ed ) न भोक्ष्यामि कदाचन ( G1 तथा द्विज ) ( for $^b$ ) — ( L 680 ) G(ed ) क्षण ( for [अ]थ मा ) G2 [अ]थ ( for [आ]शु ) — After line 680, G(ed.) ins. :

54** तदापश्यद्वेपमाना हाहाकारेण संयुताम् ।

— G(ed ) om line 681 — ( L 681 ) M1 लुठ्यन्तीं ( for वेष्टन्ती ) G2 भुवि नीना समुच्छ्रिताम् ( for $^b$ ) — ( L 683 ) G(ed ) बत ( for अहो ) M1 दृष्टवान् ( for क्रूरवाक् ). G1 दुष्टवाग्निर्घृणोऽधुना, G(ed ) दुष्टा धृष्टश्च निर्घृण· ( for $^b$ ). — ( L 684 ) G(ed ) य साध्वीमबलां भार्याम् ( for $^a$ ). G2 ईदृश ( for °शीं ) G(ed ) ईदृशीं कृतवानहम् ( for $^b$ ) — ( L. 685 ) M1 मनुष्याणा ( for हि सर्वेषा ) and सर्वेषा ( for आपदां ). D1 जन्तूनामापदां पदम् ( for $^b$ ) — ( L 687 ) G(ed ) -विदां वरम् ( for -विशारदम् ) — ( L 688 ) G(ed ) हि दु खानि ( for यथा नद्यो ) and यथा नद्यो ( for दुःखानि च ) G2 यथार्णवम् ( for महा° ). — ( L 689 ) G2 मद्वाक्य ( for मद्वच ). G(ed.) स द्विजो भृशदु.खित ( for $^b$ ). — ( L. 692 ) G(ed ) अनादृत्येह तिष्ठसि ( for $^b$ ) — ( L 693 ) G2 M1 हीन ( for विना )· G(ed ) त्वया हीनः कथ पूजा ह्यतिथीनां भवेदिह. — After line 693, G(ed ) ins. .

55** नाह वस्तुमिहाकाङ्क्षे प्रस्थितायां दिव त्वयि ।

— G(ed.) om. line 624 — ( L. 694 ) D1 वेद् ( for दृष्टो ). — ( L 696 ) G(ed ) परि- ( for च नि- ). — ( L. 697 ) G(ed ) मूर्छितः सहसा द्विज. ( for $^b$ ). — ( L 698 ) G(ed.) ततः सा ( for उपस्थिता ). G(ed ) कृपया स्वस्तसकटा ( for $^b$ ).

भर्तारमानयस्वेति तामूचुर्धर्मनन्दन ॥
शोकार्णवे पतिं दृष्ट्वा पतितं तं सुदुःखितम् ।
किमेतदिति सा साध्वी व्याजहार सुदुःखिता ॥
किं त्वं शोचसि कल्याण नितरां प्राकृतो यथा । [705]
भुक्त्वा तुष्टा द्विजवरा करिष्यन्त्याशिषं शुभाम् ।
तेषां सकाशं गच्छ त्वं प्रार्थयस्व शुभान्द्विजान् ॥
शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥

श्रीभगवानुवाच ।

स्वप्नदृष्टेव तत्सर्वं विचिन्त्य च मुहुर्मुहुः । [710]
गत्वा प्रणम्य तान्सर्वानुवाच कुरुनन्दन ॥
अद्य मे सफलं जन्म भवत्पादाभिवन्दनात् ।
अद्य मे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवम् ॥
पत्रशाकादिदानेन क्लेशिता यूयमीदृशा ।
तत्क्लेशजातं चित्तेषु विस्मृत्य क्षन्तुमर्हथ ॥ [715]
एवमुक्त्वा ननामाशु स विप्रो वै पुनः पुनः ।
ज्योतिर्मयांस्तदा दृष्ट्वा विस्मयं परमं गतः ॥
ततो देवपतिः प्राह प्रहसन्ब्राह्मणोत्तमम् ।
तृप्तोऽस्मि देवास्तृप्यन्ति मामिन्द्रं विद्धि धर्मभृत् ॥
देवा ह्येते वयं प्राप्तास्त्वत्परीक्षाभिलिप्सवः । [720]
यावात्स्थितोऽहं स्वर्लोके तावत्त्वं स्थितिमेष्यसि ॥
तव धर्मस्य विप्रेन्द्र प्रत्यूहो न भविष्यति ।
इत्युक्त्वा तां धर्मपत्नीमभिनन्द्य मुहुर्मुहुः ।
तिरोदधे स सुत्रामा देवैः सार्धमरिंदम ॥
स विप्रो भार्यया सार्धं भुक्त्वा भोगान्यथेप्सितान् । [725]
अन्ते जगाम स्वर्लोकं भार्यया सह धर्मज्ञ ॥
तस्मात्त्वमपि राजेन्द्र ददस्वान्नं नराधिप ।
अन्नदानेन ते स्वर्गं भविष्यति न संशयः ॥
भक्त्या परमया युक्तः स्त्रिया सार्धमरिंदम ।
सपत्नीको यथा विप्रस्तथा त्वं कीर्तिमेष्यसि ॥ [730]
ईश्वरः सर्वभूतानां हृद्देशे समवस्थितः ।
तस्मादतिथयः पूज्या भोक्ता च परमेश्वरः ॥
यस्य गेहे यदा तुष्टो ह्यतिथिर्भक्ष्यभोजनैः ।
तदा देवाश्च तुष्यन्ति तस्मादन्नप्रदो वरः ॥

वैशंपायन उवाच ।

इत्येवमुक्तं यदुपुंगवेन [735]
धर्मं महात्मा कुरुनन्दनश्च ।
पुनस्तथोवाच निपत्य मूर्ध्ना
पादारविन्दं परमस्य पुंसः ।

Colophon.

युधिष्ठिर उवाच ।

देवदेवारविन्दाक्ष शरणागतपालक ।
त्वमेव संशयच्छेत्ता सर्वदा मम सुव्रत ॥ [740]
धनाढ्या देवताभक्ता ब्रह्मभक्ता बहुप्रदाः ।
सत्पात्रे दानशीलाश्च प्रयान्ति परमं पदम् ॥

---

— (L 699) G1 2 M1 -हेमाङ्गी (for -जङ्घोरू) G(ed) उत्थिता हृष्टरोमाङ्गी (for [a]) G2 जातवेद- (for जाम्बूनद-). G(ed) पतिभक्तिसमन्विता (for [b]) — (L 701) D1 भुक्ता (for तृप्ताः) G2 च तेऽमराः (for द्विजोत्तमाः) — (L 702) M2 आह्वयस्व (for आन°). — (L 704) G2 M1 ह्याजुहाव (for व्याजहार) D1 पतिं दुःखाकुलं तथा (for [b]). — (L. 706) G(ed) सर्वे (for तुष्टा) — (L 707) G(ed) शुभं (for शुभान्). — After the ref, D1 ins.:

56** इति तस्या वचः श्रुत्वा स विप्रो ज्ञानशीलवान् ।
मा पश्यन्सर्वतो गत्वा यत्रास्ते भुवि देवता. ॥

— (L 710) D1 विचिन्तयाति स द्विजः (for [b]). — For line 710, G(ed) subst.:

57** स्वप्ने दृष्ट्वा तु तत्सर्वं देवकृत्यं द्विजस्ततः ।

— (L 711) M1 स गत्वा प्रणमन्सर्वान्, G(ed.) झटित्युत्थाय तान्सर्वान् (for [a]) — (L. 714) D1 G2 ईदृशम् (for °शा) — (L. 715) D1 M1 चित्ते तु, G2 चित्तेन (for °षु) — (L 717) M1 ज्योतिर्मय (for °यास्) — For line 717, G(ed) subst.:

58** ततो ज्योतिःस्वरूपास्तु तान्दृष्ट्वा विस्मयं गतः ।

— (L 719) M1 तृप्यन्तु; G(ed) तृप्ताः स्युः (for तृप्यन्ति). G(ed.) भूसुर (for धर्मभृत्). — (L. 720) G2 वयमिह (for ह्येते वयं) — (L 721) M1 सुखम् (for स्थितिम्) — (L. 724) G(ed) तिरोहितोऽभूत्सुत्रामा (for [a]) M1 साकम् (for सार्धम्). — G2 om lines 725–726 — (L 725) M1 अभि- (for यथा) — (L 727) M1 समाहित (for नराधिप) — D1 om lines 728–729 — (L 728) M1 स्वर्गो (for स्वर्गं) — (L 731) G(ed) हृद्देशे वत्स तिष्ठति (for [b]). — (L 733) G2 भक्ति- (for भक्ष्य-) — After line 734, G(ed) ins.:

59** अद्य वेत्ति च भूतानि तस्मादन्नं तदुच्यते ।

— D1 G(ed) om the ref. — (L 735) G1 G(ed) -नन्दनेन (for -पुंगवेन). — (L 736) M1 महान्त (for महात्मा). G(ed) धर्मं समाकर्ण्य कुरुप्रवीरः. — (L 737) G1 तदा; G2 च च, M1 स च (for तथा). — After line 738, G1 G(ed) ins.:

60** य इदं पुण्यमाख्यानं शृणुयाद्देवसंनिधौ ।
ब्राह्मणानां समाजे वा स विप्रो नाकमश्नुते ।

Colophon.—*Sub-parvan*: D1 G1 आश्चर्यपर्वणि शेषधर्माः; G2 M1 G(ed) शेषधर्माः. —*Adhy. name*: D1 G1 M1 अन्नदानप्रशंसनम्; G2 अन्नदानमाहिमा, G(ed) अन्नदानप्रशंसा. —*Adhy. no.*: D1 G1.3 M1 G(ed) 6.

(L. 742) G(ed.) प्रयान्ति परमां गतिम् (for [b]). — (L.

रिक्तास्तु सर्वे मनुजा ह्यशक्ता दानकर्मसु ।
का गतिः कानि दानानि तेषां मे कृपया वद ॥

श्रीभगवानुवाच ।

शृणु पाण्डव वक्ष्यामि श्रोतॄणामघनाशनम् । [745]
यस्य श्रवणमात्रेण वाजपेयफलं भवेत् ॥
निष्किंचना हि मुनयः सर्वे धर्मपरायणाः ।
सदा सर्वहिते युक्तास्तोयदानाद्दिवं गताः ॥
काञ्चनादीनि दानानि गृह्णन्ति गृहमेधिनः ।
उपर्युपरि वाञ्छन्ति तोयात्तृप्ता भवन्ति हि ॥ [750]
दानानामुत्तमं दानमन्नदानं तथा जलम् ।
सद्यस्तुष्टिकरं दानं प्राणिनां जीवनं च यत् ॥
प्रीणनमपि सर्वेषां प्राणा वारिणि संस्थिताः ।
तज्जलं ये प्रयच्छन्ति प्राणदाः परिकीर्तिताः ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । [755]
श्रोतॄणां सर्वपापघ्नमायुरारोग्यवर्धनम् ॥
पुरा किल महाराज सुशीलो ब्राह्मणोत्तमः ।
शान्तो जितेन्द्रियो विद्वान्मद्भक्तो निःस्पृहः शुचिः ॥
वेदे च धर्मशास्त्रे च वेदान्ते परिनिष्ठितः ।
उञ्छवृत्तिः सदानन्दः सदा सर्वहिते रतः ॥ [760]
आतिथेयः सदा मौनी जलदाने सदा रतः ।
पशुपक्षिमृगादीनां मनुजानां विशेषतः ।
मां च सर्वगतं ध्यात्वा जलदानं करोति सः ॥
पुण्यवृक्षान्समारोप्य सुपुष्पानपि पादपान् ।
पशुपक्षिमृगादीनां शीतलं तोयमुत्तमम् ॥ [765]

अवग्रहेऽपि राजेन्द्र महाकूपात्समुद्धृतम् ।
जलं ददन्सर्वकालमास्ते बदरिकाश्रमे ॥
देवा यक्षास्तथा सिद्धा गुह्यका अपि चारणाः ।
तस्याश्रमपदं प्राप्य सदा क्रीडन्ति निःस्पृहाः ॥
कदाचिद्द्वलभिद्देव. शङ्कितस्तस्य कर्मणा । [770]
सहार्चिषा समागम्य ययाचे जलमार्तवत् ॥
मित्रातपातपरिक्लिष्टौ जलपानसमुत्सुकौ ।
आवाभ्यां दीयतां विप्र जलं परमशीतलम् ॥

सुशील उवाच ।

कृतार्थोऽस्मि महाभागौ युवाभ्यां तारितोऽस्म्यहम् ।
अद्य मे सफलं जन्म जीवितं च सुजीवितम् । [775]
अद्य मे वंशजाः सर्वे मुक्ता एव न संशयः ॥
एवमुक्त्वा सुशीलस्तु पादौ प्रक्षाल्य तौ द्विज ।
अद्य मे प्रीयतां विष्णुरित्युक्त्वासौ ददौ जलम् ॥
स पीत्वा तज्जलं सर्वमपि तृप्तः पुरंदरः ।
दीयतां दीयतामस्मै शीतवारि च सत्वरम् ॥ [780]
तच्छ्रुत्वा वचनं तस्य ब्राह्मणो मयि तत्परः ।
पानीयशालिकामध्ये शून्यं भाण्डं ददर्श ह ॥
किमेतच्छून्यमभवद्भाण्डं पानीयपूरितम् ।
ध्यात्वा सर्वगतं विष्णुं पाहि पाहीत्यचिन्तयत् ॥
पानीयं नैव पश्यामि पिपासुर्ब्राह्मणोत्तमः । [785]
किं करोमि जगन्नाथ पाहि मां ब्राह्मणोत्तमम् ॥
कर्ता त्वं मम धर्मस्य देवदेव जगत्पते ।
कथं धर्मं तु भृत्यस्य भङ्गीकर्तुमिहार्हसि ॥

---

743) M1 सक्तास् (for रि°). — (L. 746) D1 M1 लभेत् (for भवेत्). — (L. 747) G1.2 M1 G(ed) पूर्वे (for सर्वे). — (L. 748) G2 सर्वदा सर्वतो युक्तास् (for $^{a}$). — (L. 749) G(ed) गृह्णन्ते (for °न्ति). — (L. 750) M1 तोय- (for तोयात्). G(ed) ते (for हि). — (L. 752) G1 द्वयम् (for च यत्). D1 G2 प्राणिना जीवन(G2 °वित)द्वयम् (for $^{b}$). — (L. 754) D1 ते प्र- (for परि-). — (L. 757) G(ed) सुशीलो नाम ब्राह्मण. (for $^{b}$). — (L. 758) G2 श्रीमान् (for विद्वान्). — (L. 761) G(ed) सदा धर्मरत. सुधीः (for $^{b}$). — (L. 762) M1 मनुष्याणा (for °जाना). G(ed) om. lines 762$^{b}$–765$^{a}$. — (L. 764) D1 सुफलान् (for सुपुष्पान्). — (L. 766) G1 G(ed) महाकूपात (for ऽपि राजेन्द्र) and रज्ज्वा चैव (for महाकूपात्). — (L. 767) G(ed) सार्वकालम् (for सर्व°). — (L. 770) G1.2 ययाचे (for कदाचिद्). — (L. 771) G(ed) आदरात् (for आर्तवत्). —After line 771, G(ed) ins.:

61** विप्रावूचतु. ।
आवां विद्धि महाप्राज्ञ चण्डातपसमाहतौ ।

— (L. 772) D1 मित्रांशुतापितौ क्लिष्टौ (for $^{a}$). D1 G1.2 G(ed)) -पानात् (for -पान-). (L. 773) D1 अवश्यं (for आवाभ्यां) G1 अद्य (for विप्र) G(ed) तस्मात्त्वं दीयतां क्षिप्र (for $^{a}$). G(ed) -शीतकम (for °लम्). — After line 773, G(ed) ins.:

62** तद्दीनवचनं श्रुत्वा स विप्रो वेदवित्तमः ।
प्रोवाचातिविनीतात्मा वचनं चेदमादरात् ॥

— G1 G(ed.) om. the ref. — (L. 774) G(ed) पारितौ (for ता°). — (L. 778) D1 G2 M1 ददाति च (for ददौ जलम्). — (L. 779) M1 अपितृप्तः (for अपि तृप्तः). — For line 778, G(ed) subst.:

63** तत्पीत्वा निमिषादिन्द्रो ययाचे पुनरप्यहो ।

— (L. 780) M1 मेति, G(ed) मह्य (for अस्मै). M1 प्रोवाच न्यायविस्तरम्, G(ed) शीत वारीति सत्वरः (for $^{b}$). — (L. 781) D1 ब्राह्मणो मत्प्रियः परः, G(ed) °णो मत्परायणः (for $^{b}$). — After line 781, G(ed.) ins.:

64** मा स्मरन्नगमच्छीघ्र पानीयागारमुत्तमम् ।
तत्रापश्यद्भाण्डजातं सर्वं विरहितं जलैः ॥

— G(ed.) om. line 782. — G1.2 M1 G(ed.) -शालिकां (for °का-). — (L. 783) M1 पात्र (for भाण्डं). G(ed.) भाण्डजातमिति स ह (for $^{b}$). — (L. 786) D1 पाहि मां

पिता माता गुरुस्तीर्थं धर्मो बन्धु सुहृत्तमः ।
अतस्त्वं मम देवेश व्रतं पाहि नमोऽस्तु ते ॥ [790]
तथा वदति तस्मिन्वै ब्राह्मणे पाण्डुनन्दन ।
पूरयामास तद्ब्राण्डमन्तर्यामी जगद्गुरु ॥
शिखावान्समनुप्राप्य जलं वै सर्वतोदिशम् ।
अपिबत्सहसा राजन्कल्पान्ते वारिधि यथा ।
भूयोऽपिबद्ददस्वेति प्रार्थयित्वा स धर्मज । [795]
ययौ पुरंदरपुरं वज्रिणा सह विस्मित. ॥
आश्चर्यं परमं गत्वा स विप्रो भार्यया सह ॥
खानयामास तत्कूपं तदा पातालसंनिभम् ।
प्रार्थयामास लोकेशं मामेवं पाण्डुनन्दन ॥
नमस्ते लोकनाथाय भुक्तिमुक्तिप्रदाय च । [800]
नमस्ते वासुदेवाय देवानां मूलरूपिणे ।
पाहि मां पुण्डरीकाक्ष त्वद्भक्तं कमलापते ॥
यथा हि मम धर्मस्य ह्यन्तराया न सन्ति हि ।
तथा मा पालयस्वेति भूयो भूयो ननाम च ॥
एवं भक्त्याददत्तोयं सर्वेषां प्राणिनामिह । [805]
आस्ते तत्र च विप्रेन्द्र ऋषिसंघनिषेवित ॥
तत पुरंदरो देवैरागत्य सह धर्मज ।
पपौ तत्र जलं सर्वं ग्रीष्मे तु पथिको यथा ॥
त्रि सप्तकृत्वस्तत्रैनं परीक्ष्य च पुन. पुनः ।
तद्धर्ममपहर्तुं वै न शशाक स वृत्रहा ॥ [810]
तथा हि मम भृत्यस्य कामाल्लोके व्यपोहितुम् ।
क समर्थो महाराज ममापि च न शक्यते ॥

भक्ताधीनो ह्यहं पार्थ तेषामिष्टं ददामि च ।
ताल्लोकेऽप्यन्यथा कर्तुं क समर्थो नु पण्डितः ॥
स्वर्लोकं समनुप्राप्य शङ्कितस्तस्य कर्मणा । [815]
द्वादशाब्दं सहस्राक्षो न ववर्ष तदाश्रमे ॥
कृपया मम धर्मात्मन्वर्धितं तोयमुत्तमम् ।
ददन्वै सर्वभूतानामास्ते तत्र मम प्रिय ॥
ततस्तु प्रेषयामास ग्रहान्सर्वाञ्शचीपति. ।
ते सर्वे समनुप्राप्य पपु पानीयमुत्सुका ॥ [820]
स्थितेषु तेषु सर्वेषु ह्येकत्र कुरुनन्दन ।
वृष्टिस्तदाभवच्छीघ्र कल्पान्ते ब्रह्मणो यथा ॥

इन्द्र उवाच ।

अन्यथा चिन्तितं कार्यं दैवेन कृतमन्यथा ।
अहमन्यच्चिन्तयामि दैवमन्यत्र चिन्तयेत् ॥
एवं चिन्ताकुलो राजन्सुत्रामा तु सुरै सह । [825]
स्वर्गार्होऽयमिति ज्ञात्वा तान्ग्रहान्समचिन्तयत् ॥
अर्दितान्वृष्टिभि सम्यक्कम्पमानान्महीसुरान् ।
सुखोत्थिता ग्रहा सर्वे ह्यब्रुवन्ब्राह्मणोत्तमम् ॥
सुशील सर्वधर्मज्ञ तृप्ता. सर्वे दिवौकस ।
पितरस्तव सुप्रीता प्रशंसन्तो दिवं गता ॥ [830]
कर्मणा तव धर्मात्मल्लोका सर्वे चराचराः ।
तुष्टो हि पुण्डरीकाक्षो वेत्ति धर्मं न चेतर. ॥
त्वमद्य गच्छ स्वर्लोकमनया भार्यया सह ।
सुत्रामा प्रार्थते त्वा तु वस्तुं धर्मभृतां वर ॥
वय ग्रहा इति ख्याता सूर्यचन्द्रादयो द्विज । [835]

---

जगदीश्वर (for $^{b}$) —(L 788) G(ed) विनष्ट कर्तुमर्हसि (for $^{b}$) —(L 789) G1 -सुहृत् (for गुरुस्) D1 धर्म- (for धर्मो) —(L 790) G(ed) सर्व (for अतस्) G1 द्रुतं, G(ed.) धर्म (for व्रत). —(L. 792) G1 जगत्पति (for °द्गुरु.). — For line 792, G(ed) subst .

65** जलेन पूर्णमकरोद्ब्राण्डजात जगत्पति ॥

— After the above, G(ed) cont

66** तत' शिखावास्तत्सर्वं विलीनमकरोज्जलम् ।
देवदेवा तच्च पुन पूर्णमभूत्तदा ॥
एताच्चित्रं विलोक्येन्द्रो विप्र समान्य सत्वर ।
ययौ स्वर्गं स्वच्छन्दं विप्र साधैनामकम् ॥
तत' स विप्रप्रवरस्तत्र कूपान्बहूदकान् ।
कारयामास राजेन्द्र स्वधर्मपरिपालक ॥

— G(ed) om lines 793-798 —(L. 794) G1 जलधि (for वारिधि) —(L 795) M1 ऽपि स (for ऽपिबद्). D1 D2 तमुक्त्वा तु (for प्रार्थयित्वा) —(L 802) D1 त्वद्भृत्य (for त्वद्भक्त) —(L 804) G2 नमामि (for ननाम). —(L. 805) G(ed) बहु (for इह) —(L. 806) G(ed) सुवृत्त स च विप्रेन्द्र (for $^{a}$) D1 G2 -निषेविते (for °त'). —(L 807) G(ed) पुनः (for तत) G(ed) सार्धमागत्य धर्मज (for $^{b}$). —(L. 808) G(ed.) पपौ जलं यथापूर्वं (for $^{a}$). —(L 813) G2 M1 भृत्याधीनो (for भक्ता°) G(ed) तदभीष्टप्रदो ह्ययम् (for $^{b}$) —(L 814) M1 न पण्डित ; G(ed) महीपते (for नु पण्डित.) — After line 814, G(ed) ins

67** तस्मिन्द्वेष समुत्पाद्य सहस्राक्षोऽतिशङ्कित ।

— G(ed) om line 815 —(L 816) G(ed) तदा राजन् (for सहस्राक्षो) —(L 817) G1 वासित (for वर्धित). —(L 818) G(ed) मुमुदे तत्र स द्विज (for $^{b}$) —(L 820) G(ed) तत्र (for सर्वे) — G1 om. the ref —(L 824) D1 G1 2 M1 अहमन्यत्र चिन्तामि (for $^{a}$) G1 M1 चिन्तितम् (for चिन्तयेत्). G(ed) दैवमन्यदचिन्तयत् (for $^{b}$). —(L 825) G(ed) सुत्रामा तमृपि तदा (for $^{b}$). — For line 826, G(ed) subst

68** महाभागवत ज्ञात्वा विनयादब्रवीदिदम् ।

— G(ed.) om lines 827-828. D1 om line 827. —(L 828) G2 सुरा (for ग्रहा) —(L. 831) धर्मज्ञ (for धर्मात्मल्ँ) — After line 831, G(ed) ins .

69** सुप्रीता अभवन्विप्रा नात्र कार्या विचारणा ।

—(L 834) D1 वस्तु धर्मभृता वर (for $^{b}$). — For line 834, G(ed) subst. :

70** सुत्रामाह द्विजश्रेष्ठ तुष्टोऽसि तव धर्मत ।

विमानं सूर्यसंकाशं त्वदर्थं वै समागतम् ।
पश्यारोहतु यास्यामो भवान्भुङ्क्ष्व सुखं दिवि ॥

श्रीभगवानुवाच ।

ग्रहाणां तच्छ्रुतं वाक्यं निशम्य कुरुनन्दन ।
ययाचे लोकरक्षार्थं वरं नत्वा पुनः पुनः ॥
अत्रत्यानां तु सर्वेषामद्यप्रभृति धर्मिणाम् । [840]
दूरस्थानामपि यदि मुक्तिरत्र भविष्यति ।
नाकं भवतु लोकानां यदि मा नेतुमिच्छथ ॥
अन्यथा चेदहं ह्यत्र वसेयं तु यथासुखम् ।
नाकं गच्छथ यूयं वै प्रार्थयिष्ये रमापतिम् ।

ग्रहा ऊचुः ।

तरुगुल्मलतानां तु मृगाणामाततायिनाम् । [845]
सानिध्याल्लोकनाथस्य मुक्तिश्चापि भविष्यति ॥
इत्युक्त्वा तं समारोप्य विमाने सूर्यवर्चसि ।
सपत्नीकं समारोप्य विविशुर्नाकमव्ययम् ॥
चतुर्युगसहस्राणि भुक्त्वा भोगाननेकशः ।
ततस्तु ब्रह्मणो लोकमवाप्य सुखमश्नुते ॥ [850]
तस्मात्त्वं सर्वदा राजन्प्रपां कृत्वा सुशोभनाम् ।
पानीयं शीतलं राजन्ददस्व सततं नृणाम् ॥
दरिद्राणामयं धर्मः स्वर्गमोक्षप्रदायकः ।
सुराणां दुर्लभो ह्येष सुरलोके सुखप्रदः ॥
वरमिममितिहासं यः शृणोतीह नित्यं [855]
सकलकलुषशान्तिः सद्य एवेति विद्धि ।
सुरपतिवरलोके शृण्वतां भूसुराणां
भवति हि खलु वासो नात्र संदेहमस्ति ॥

Colophon

युधिष्ठिर उवाच ।

श्रियः पते नमस्तुभ्यं वृष्णीनां वंशवर्धन ।
त्वमेव सर्वशास्त्राणि वेदांश्चापि महामते ॥ [860]
तस्मात्त्वा प्रार्थयाम्यद्य पातुं धर्मामृतं प्रभो ।
पालयस्व च धर्मेण शास्त्रेण जगतीपते ॥
कन्यादानं प्रशंसन्ति मुनयः पुण्यदर्शिनः ।
धर्मं तं वद तत्त्वेन लोकनाथ नमोऽस्तु ते ॥
दानस्य को विधिस्तस्य कः कालः समुदाहृतः । [865]
त्वमेव वेत्सि तत्सर्वं कृष्ण संप्रति कथ्यताम् ॥
भगवंस्त्वद्वचः सत्यं हितं परमपावनम् ।
अस्माकं हितकृन्नित्यं साक्षाज्जगतः प्रभुः ॥
काल्लोकान्समवाप्नोति कन्यादाता सुरोत्तम ।
तद्भवान्वेत्ति तत्त्वेन वद संप्रति मेऽनघ ॥ [870]

श्रीभगवानुवाच ।

साधु पृष्टं महाबाहो त्वया कुरुकुलोत्तम ।
धर्मश्रवे यथाप्रीतिस्तथा ख्यातिर्भविष्यति ॥

—(L 835) एते (for वय). —(L 837) G1 G(ed) पत्नी (for पश्य). G(ed) मुने (for भवान्) G2 सुखानि च (for सुखं दिवि). —(L 838) D1 तु (for तद्) G(ed) इन्द्रेणोक्तं तु तद्वाक्य (for °) —(L 839) D1 वदन् (for वरं.) —(L 840) G1 2 अमर्त्यानां, M1 तत्रत्यानां (for अ°) D1 कर्मणा (for धर्मिणाम्) — For line 841, G(ed.) subst.

71** दूरदेशादिहागन्तृजनानां च पुरंदर ।
G(ed) cont.

72** स्वर्गप्राप्तिर्भवेन्नित्या मत्कूपजलपानतः ।
—(L 842) G2 लोकार्हं (for °नां). G(ed.) एवं वरं प्रयच्छ त्वं (for °). — For line 844, G(ed) subst

73** यूयं गच्छत वै नाकं नाहमागन्तुमुत्सहे ।
—(L 845) G(ed.) -लतादीनां (for °नां तु) — For line 846, G(ed) subst

74** भवत्कूपोदकस्पर्शान्मुक्तिश्चापि भवेद् ध्रुवम् ।
—(L 847) G(ed) समाहूय (for °रोप्य) —(L 848) G(ed) जगाम त्रिदिवं हरिं (for °) —(L. 849) G(ed) त्रिविष्टपे (for अनेकशः) —(L 850) G(ed) स (for तु). G(ed) सुखभोगभुक् (for °मश्नुते) —(L 855) G1 परम् (for वरम्) G2 M1 इदम् (for इमम्) G(ed.) भक्त्या (for नित्यं). —(L. 856) G1.2 अथ एवाभवद्धि; M1 सद्य एवाभिवृद्धिः; G(ed) धर्मबुद्धिश्च सद्य (for सद्य एवेति विद्धि). —(L 857) G1 -वरपर- (for -पतिवर-) —(L. 858) G(ed) [अ]स्ति सदेहबुद्धि (for [अ]त्र संदेहमस्ति)

COLOPHON. — *Sub-parvan* D1 G1.2 M1 G(ed.) ऐप-धर्मा, G1 2 भविष्यपर्व — *Adhy. name* D1 G1 G(ed.) पानीयदानप्रशंसा, G2 पानीयदानम्, M1 पानीयप्रशंसनम्. — *Adhy. no* D1 G1.2 M1 G(ed) 7.

(L 860) G(ed) त्वमेव वेत्सि वेदांश्च (for °). D1 वेत्सि, G1 चैव (for चापि). G(ed) वेदाङ्गानि च सर्वशः (for °). —(L 861) M1 ज्ञातुं (for पातुं) —(L. 862) G(ed) मामद्य (for धर्मेण) D1 शास्त्रेण जगतां पते; M1 °ण च महीपते, G(ed) धर्मतत्त्वोपदेशतः (for °) —(L. 863) M1 -शालिनः (for दर्शिनः). —(L 864) G1 नमः (for ऽस्तु ते). — For line 864, G(ed.) subst

75** तद्दानस्य च माहात्म्यं कृपया वद सुव्रत ।
—(L 865) G1 ऽहो लोकेश, G2 ऽहो नाथ कः (for विधिस्तस्य) M1 दानस्य लोके को नाथ (for °). — G(ed.) om. lines 866-868 —(L 868) D1 जगतां (for °तः) M1 त्वं साक्षाज्जगतीपतिः (for °). —(L 869) G1 G(ed.) -दानात्; G2 M1 -दाने (for -दाता) — G1 G(ed.) om line 870. —(L. 871) D1 G(ed) महाभाग (for °बाहो). — For line 872, G(ed.) subst.:

76** धर्मान्प्रष्टुं तथा ज्ञातुं त्वमेवार्हसि नेतरः ।

सुरूपाय सुशीलाय कुलीनाय निरोगिणे ।
कन्या दद्याच्छुभाल्लोकाल्लभते नात्र संशय ॥
सुश्रुताय दरिद्राय श्रोत्रियस्यात्मजाय च । [875]
यो दद्यात्तु स्वका कन्या ब्रह्मलोकं स गच्छति ॥
कन्याभावे धन दत्त्वा विवाह कारयेद्बुध ।
न तस्य लोका क्षीयन्ते यावदाचन्द्रतारकम् ॥
विषुवायनसंक्रान्तौ चन्द्रसूर्योपरागयो ।
पुण्यक्षेत्रे पुण्यतीर्थे कन्यादो मोक्षमश्नुते ॥ [880]
पितृदेवगणास्तात कन्यादानात्सुपूजिता ।
गन्धर्वै स्तूयमानास्ते प्रयान्ति मम मन्दिरम् ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
सर्वपापप्रशमनमायुर्वर्धनकारणम् ॥
पुरा कृतयुगे राजन्नर्मदायास्तटे शुभे । [885]
धर्मव्रतो महानासीत्कौण्डिन्यकुलसंभव ॥
शान्तो जितेन्द्रियो विद्वान्वेदवेदाङ्गपारग ।
अग्निहोत्री सदामौनी तस्मिन्नास्ते तपोवने ॥
स कदाचिन्महाभाग शिष्यैः सह जितेन्द्रिय ।
वनं जगाम धर्मात्मा ह्येधानाहर्तुमुद्यत ॥ [890]
कन्दमूलफलाकीर्णे समित्पुष्पकुशावृते ।
इन्धनार्थं विसृज्यैतान्वनमन्यदुपाविशत् ॥
महावराहनिचयै कस्तूरीमृगसेवितम् ।
शार्दूलै श्वापदैः सिंहैर्गजैरश्वैर्वृकैरपि ॥
ऋक्षजम्बूकनागैश्च वानरीचमरीगणै । [895]
डाकिन्यादिगणैः क्रूरैर्वृकनादैरनेकशः ॥
महाघोरैरजगरै राक्षसै पिशिताशनै ।
एवं बहुविधैरन्यैर्जन्तुभिः परिवारितम् ।
पश्यन्वनं भयकरं प्रविवेश महामति ॥
वनशोभां क्वचित्पश्यंस्तिष्ठन्नासीन एव च । [900]
शुश्राव च महानादं रक्ष रक्षेति चाग्रतः ॥
तेन शब्देन महता विस्मयं परमं गत ।
भयंकरे महाघोरे मन्दं मन्दं चचार ह ॥
तमन्वेष्टुमना विप्र किंचिद्दूरतरे नृप ।
वृक्षवल्लीसमाकीर्णं कूपमेकं ददर्श ह ॥ [905]
कण्टकीद्रुमसंकीर्णं द्रुमैराच्छादितं महत् ।
हुंकारनादितं घोरं महोरगनिषेवितम् ॥
तं दृष्ट्वा सहसा राजन्किंचित्साध्वससंयुतः ।
आश्रम पुनरागन्तुमुपचक्राम धर्मवित ॥
तस्मिन्नवसरे राजन्महाकूपे महास्वन । [910]
आयाहि पश्य रक्षेति तदाराद्वुत्थितो भृशम् ॥
श्रुत्वा तदद्भुताकारं पुनर्वीक्ष्य महाबलम् ।
को भवान्वद तत्त्वेन किं करोमीति चाब्रवीत् ॥
इत्याकर्ण्य वचस्तस्य तदाराद्धूम उत्थित ।
तस्मात्कूपात्समाकृष्य मा भैषीरित्युवाच तम् ॥ [915]
धर्मव्रत महाभाग ह्यस्मान्पश्य महामते ।
पितॄनेतांस्त्वदीयान्वै विद्धि तथ्यं ब्रवीमि ते ॥

धर्मव्रत उवाच ।

किमर्थमत्र स्थीयन्ते युष्माभि पितृमूर्तिभि ।
पितृलोकं विसृज्यैव सत्यमेवं ब्रुवन्तु मे ॥

पितर ऊचु ।

येनेमामीदृशी प्राप्ता गतिं गतिमतां वर । [920]
वक्ष्यामो वयमत्रैव शृणु नान्यमना हि ताम् ॥
अस्मिन्कुले महाभाग धर्मिणो नैव सन्ति हि ।
तस्मादिमामवस्था वै प्राप्ता एव न संशयः ॥
अन्नदा गृहदाश्चैव भूप्रदा गोप्रदास्तथा ।
गङ्गास्नानरता नैव गङ्गायां पिण्डदास्तथा ॥ [925]
पुण्यतीर्थरता नैव सत्पात्रे दानतत्परा ।
तिलदा घृतदा नैव अन्नदा जलदास्तथा ॥
अयने विषुसंक्रान्तौ व्यतिपाते तथाष्टके ।
सोमसूर्योपरागे च नार्चयन्ति हि किंचन ॥

—G1 om. lines 873–875 —(L. 873) G(ed) ह्यरोगिणे (for नि°).—(L 879) D1 M1 अयने विषुवि(M1 °स)क्रान्तौ (for ᵃ) —(L. 880) D1 कल्पादौ (for कन्यादो) —(L 881) M1 पितृमातृ- (for °देव-) G(ed.) तस्य (for तात). G(ed) भवन्ति हि (for कन्यादानात्). —(L 883) M1 अत्रैवोदाहरिष्येऽहम् (for ᵃ) —(L. 884) G2 आयुरारोग्यवर्धनम्, M1 °वर्धनमुत्तमम् (for ᵇ). —(L 886) G(ed) भूषण (for -संभव). —(L 889) G1 G2 M1 G(ed) महाभाग (for °भागः) —(L 891) D1 -फलान्वितम्, G1 -कुशान्विते (for °वृते). G(ed) वृक्षसंघाकुले वने (for ᵇ) —(L 892) G1 G(ed) दूरम् (for अन्यद).—(L 893) G(ed) कस्तूरीभिश्च सेवितम् (for ᵇ) —(L 894) G1 च गवयैर् (for अश्वैर्वृकैर्) —(L 895) G(ed) -हरिणैर् (for -नागैश्च) G(ed) वानरैश् (for °री-). —(L. 896) G1 G(ed) उलूकाद्यैर् (for वृकनादैर्) —(L 898) D1 परिपूरितम् (for परिवा°). —(L. 899) G(ed.) स पश्यन्वै (for पश्यन्वनं). —(L. 901) G(ed.) शु- (for च) —(L 903) M1 महारण्ये (for °घोरे) —(L 904) D1 तमन्वेष्टु समाविष्ट (for ᵃ) M1 दूरचरो, G(ed.) दूरान्तरे (for दूरतरे) —(L 906) D1 कण्टक- (for °की-) —(L. 909) G1 G(ed) आयातुम् (for आगन्तुम्) D1 M1 G(ed) धर्मज (for °वित्). —(L 911) G1 2 दु खितो (for उत्थितो) —(L 912) G(ed) महास्वनम् (for °बलम्). —(L 915) D1 समाकर्ण्य, G2 M1 G(ed) तमाकृष्य (for स°) G2 मा भैषीरिति चाब्रवीत् (for ᵇ) — Before line 916, G2 ins धूम —(L 917) G(ed) ब्रुवाम (for ब्रवीमि). G1 विद्धि तत्त्व ब्रुवाम ते (for ᵇ) —(L 918) G(ed) किमत्र ताता स्थीयन्ते (for ᵃ) —(L 919) M1 -लोकान् (for -लोक) —(L. 920) D1 एते अमीदृशीं प्राप्ता (for ᵃ). —(L. 924) D1 भूमिदाश् (for गृह°) G(ed) गृहदा (for भूप्रदा) — D1 om line 925 —(L 928) G1 2 विषुवायनसक्रान्तौ (for ᵃ) —(L 929) G(ed) नार्पयन्तीह किंचन (for ᵇ). —(L. 931) D1 -रताश् (for -पराश्). G2 साति-

न स्मरन्ति पितृस्तात कथं कुर्वन्ति तेऽधुना [ 930 ]
पञ्चयज्ञपराश्चैव ह्यातिथेया न सन्ति हि ॥
वासन्तिके तथा काले जलदा पुण्यदा न च ।
वसुदा न तु धर्मिष्ठास्तथा ताम्बूलदा न च ।
शाकमूलफलाना तु दातारो नैव सन्ति हि ।
प्रात स्नानरताश्चैव मध्याह्ने स्नानतत्पराः ॥ [ 935 ]
कार्त्तिके मासि माघे च दीपदा देववेश्मनि ।
नैव सन्ति हि यज्वानो त्वद्वते वत्स सप्रति ॥
उपवासरता नैव ह्येकादश्यां शुभे दिने ।
अनन्तफलदे माघे ह्येकभुक्तरता न च ॥
उपवासरता नैव शिवरात्रिशुभे दिने । [ 940 ]
वृषोत्सर्गं न कुर्वन्ति कार्त्तिके मासि कन्यदा. ॥
नैव सन्ति हि धर्मात्मन्नुपरागे तथान्नदाः ॥
माघस्नानरता नैव व्यतीपातव्रते परा ।
स्वकर्मनिरताश्चैव नैव सन्ति हि केचन ॥
पुराणधर्मशास्त्रज्ञा वेदवेदाङ्गपारगा । [ 945 ]
पुराणश्रवणे सक्ता क्षणमात्रमपि द्विज ॥
पुराणे भक्तिमन्तश्च श्रौतस्मार्तेषु तत्पराः ।
अर्कद्विपर्वरात्रीषु ह्येकभुक्तरता न च ॥
कन्यागते यदा सूर्ये पितृंश्च प्रीणयन्ति च ।
ज्ञानिनो विष्णुभक्ताश्च सूर्यभक्तास्तथा न च ॥ [ 950 ]
अग्निशुश्रूषवश्चैव काले काले न सन्ति हि ।
शुश्रूषवश्च महता सेवकाः केशवं प्रभुम् ॥
अभिषेकरता नैव विष्णौ रुद्रे महामते ।
रुद्रपौरुषसूक्ते च जपशीला न सन्ति हि ॥
अध्यात्मशास्त्रपठने नमस्कारे विवस्वत । [ 955 ]
सौराघ्र्यनिरता विप्रा नैव सन्ति हि मत्कुले ।
तेनेमामीदृशीं प्राप्ता गतिं धर्मभृतां वर ॥

श्रीभगवानुवाच ।

एतान्धर्मांस्तदा श्रुत्वा कम्पमानो महामति. ।
क्षमध्वमिति मत्कर्म पपात भुवि मूर्छित ॥

वैशंपायन उवाच ।

आश्वास्य विप्रं ते देवा पितृमूर्तिधराः शुभा । [ 960 ]
मैवं तेऽप्युक्तमात्रे तु विस्मितो ब्राह्मणोऽब्रवीत् ॥

ब्राह्मण उवाच ।

किं करोमि च हे तात युष्माकमपि यत्प्रियम् ।
तत्सर्वमद्य मे यूय ब्रुवन्तु ह्यविशङ्कया ॥
येन धर्मेण युष्माकं ब्रह्मलोको भविष्यति ।
तदद्य एव वः प्रीत्यै यतिष्ये कर्तुमुत्तमम् ॥ [ 965 ]

पितर ऊचुः ।

पितॄणां मोक्षदं दानमसंख्यातं महीतले ।
तथापि शृणु वक्ष्यामः सर्वदानफलात्मकम् ॥
ब्रह्मणा हि पुरा दत्तं पितॄणां मुक्तयेऽनघ ।
वक्ष्यामस्तद्वच सत्यं श्लोकरूपस्तवाग्रत ॥
दास्यन्ति यदि कन्या त्वां सर्वदानफलात्मिकाम् । [ 970 ]
युष्माकं स्वप्रसूतां वै ब्रह्मलोको भविष्यति ॥
कन्याभावे स्वकाद्द्रव्याद्विवाहं कारयन्ति ये ।
तेषामपि पितॄणा च ब्रह्मलोको भविष्यति ॥
स्वयंभुवा पुरादत्तं पितृमुक्तिकरं परम् ।
तदाप्रभृति धर्मिष्ठा वाञ्छन्ति पितरोऽनिशम् ॥ [ 975 ]
ब्रह्मलोकप्रदं ह्येतत्कन्यादानमनुत्तमम् ॥
पश्य कूपं महाभाग पूरितं विषजन्तुभिः ।
धूमाकुलान्कुशान्दीनान्प्रार्थ्यमानास्तिलोदकम् ॥

---

थेया (for ह्या°) — M1 om. lines 932–934. — (L. 933) D1 वस्त्रदा न, G2 वस्त्रदा ये (for वसुदा न) — (L. 934) G(ed.) -फलादीना (for °ना तु) — (L 935) G(ed) माध्याह्निकपरा न च (for $^b$) — (L 936) D1 G2 माघमासे (for मासि माघे) — (L 937) D1 त्वादृशा, M1 G(ed) त्वामृते (for त्वद्वते). — D1 om. lines 938-939. — (L 940) D1 -व्रता. शुभे (for -शुभे दिने). — (L 941) G(ed) पामरा. (for कन्यदा.) — (L 943) G(ed) रता (for परा) — (L 945) D1 G1 -वेदाङ्ग- (for -वेदान्त-) — (L 946) D1 पुराणश्रवणासक्ता (for $^a$). — (L 948) G1 2 रात्रौ च (for -रात्रीषु). — (L. 954) G1 -सूक्ताभ्या, G(ed) -सूक्ताना (for -सूक्ते च) G(ed.) जापका नैव सन्ति हि (for $^b$) — (L 955) G1 अध्यात्मशास्त्रोत्पन्नेन (for $^a$) G(ed) विवस्वाति (for °त.) — (L. 956) G1 सौराख्य- (for °र्घ्य-) D1 नियता (for -निरता). — For line 956, G(ed) subst

77** सौराख्यसूक्तपठने निरता नैव सन्ति हि ।

— (L. 958) G(ed.) वाच धर्म्यामिमा श्रुत्वा (for $^a$). — (L 959) G1 प्रापतद्, G(ed) सोऽपतद् (for पपात) D1 चाशु स (for मूर्छित.) — G2 श्रीभगवान् (for वैशंपायन). — After the ref, G(ed.) ins. .

78** ततस्त प्रणत भूमौ विषण्णमतिविह्वलम् ।

— After line 960, G(ed) ins .

79** उत्तिष्ठ साधो विप्रर्षे शृण्वस्मद्वाक्यमादरात् ।

— (L. 961) G1 G(ed.) एतावद् (for मैव तेऽपि). — (L. 965) G1 तदद्यैव वच. प्रीत्यै (for $^a$). — For lines 965-966, G(ed) subst.

80** तदद्यैव च संप्रीत्या वक्तुमर्हथ सादरा. ।
पितरः ।
पितृणा मोक्षदान्यत्र बहुदानानि सन्ति हि ॥

— (L 967) G1 -फलाधिकम् (for °त्मकं) G(ed.) दानं सर्वोत्तमं महत् (for $^b$) — (L. 968) G(ed.) सृष्ट (for दत्त). — (L 969) G1 G(ed) वक्ष्यामस्तव यत्कृत्य (for $^a$). G2 मोक्षरूप, M1 श्लोकरूपं (for °रूपस्त). G(ed.) कर्तव्यं श्लोकरूपतः (for $^b$). — (L 970) D1 -फलात्मकाम्; G2 °त्मकम् (for °त्मिकाम्). — (L. 971) G(ed) सुता ब्राह्मेण विधिना (for $^a$).

न कृतं चेदिदं नूनं भवद्भिर्लोकविश्रुतैः ।
अस्मिन्कूपे वयं मग्ना जीर्णदूर्वास्थिता ध्रुवम् ॥ [980]
तद्गच्छ साधो तत्सर्वं कारयस्वास्मदाज्ञया ।
स्वस्ति तेऽस्तु गमिष्याम इत्युक्त्वान्तर्दधुस्तदा ॥
ब्राह्मणो विस्मयाविष्ट प्रणम्य च मुहुर्मुहु ।
स्वाश्रमं प्राप धर्मिष्ठ शिष्यै सह महामते ॥
सर्वेषामपि विप्राणां तन्निवेद्य युधिष्ठिर । [985]
कारयामास तत्सर्वं विप्रै सर्वैर्नरैरपि ॥
तस्मात्त्वमपि राजेन्द्र बहु दत्त्वा वसु स्वकम् ।
कारयस्व विवाहं वै विप्रान्विप्रहिते रत· ॥
पितरस्तृप्तिमेष्यन्ति देवास्तृप्ता भवन्ति हि ।
कन्यादानाच्च ते वृद्धिर्भविष्यति न संशय· । [990]
सर्वदानफलं तेऽस्तु कन्यादाने युधिष्ठिर ॥
श्राद्धकाले नु यो विप्र कीर्तयेत्पितृसंनिधौ ।
पितरस्तृप्तिमेष्यन्ति सोऽपि पापै प्रमुच्यते ॥

वैशंपायन उवाच ।

इदं रहस्यं परमं पवित्रं
य श्रावयेद्ब्रह्मसभासु विद्वान् । [995]
ज्ञातैरपि ज्ञानकृतैरघौघैः
सद्यो विमुक्त सुरलोकमेति ॥

Colophon

वैशंपायन उवाच ।

मुरारेः पादकमलं धर्मपुत्र प्रणम्य च ।
पुनरेवापरं धर्मं पृष्टवान्गरुडध्वजम् ॥

युधिष्ठिर उवाच ।

सर्वेषामेव धर्माणां सत्यमाहुरनुत्तमम् । [1000]
लोकनाथ नमस्तेऽस्तु सत्यरूपं वदस्व मे ॥
येन देवा दिवं यान्ति येन सर्वं प्रतिष्ठितम् ।
येन वेदविदो यान्ति तथापि मनुजोत्तमा ॥
येन पुत्रान्प्राप्नुवन्ति ह्यद्यापि पुरुषोत्तम ।
येन बन्धुजनं विद्यां कीर्तिं च विपुलां श्रियम् । [1005]
तद्धर्मं वद तत्त्वेन लोकनाथ नमोऽस्तु ते ॥
हरिश्चन्द्रादयो भूपा धर्मिष्ठा सत्यवादिन ।
सुरलोके वासुदेव तिष्ठन्त्यद्यापि न श्रुतम् ॥
तस्मिन्नवसरे देवी द्रौपदी शुभदर्शना ।
यदूनां पतिमव्यक्तं जगौ लोकगुरुं प्रति ॥ [1010]

द्रौपद्युवाच ।

भगवन्पुण्डरीकाक्ष मायातीत महामते ।
अजातशत्रोर्व्याजेन मामुपाकर्तुमर्हसि ॥

वैशंपायन उवाच ।

उभयोस्तद्वच श्रुत्वा कृष्णस्तु जगतीपति ।
सस्मितं वचनं चेदमब्रवीद्वदतां वर ॥

श्रीभगवानुवाच ।

साधु साधु महाप्राज्ञ प्रसिद्धोऽसि जगत्त्रये । [1015]
यस्माद्धर्मे मतिस्ते वै जायते धर्मवल्लभे ॥
सत्य पिता च माता च सखा भ्राता युधिष्ठिर ।
भोक्ता पालयिता हन्ता सत्यमाहुर्विपश्चित ।
सत्येन जायते मुक्ति सत्यात्पापक्षयो भवेत् ॥

युधिष्ठिर उवाच ।

असत्यवादिनो देव स्वर्गं यान्तीति न श्रुतम् । [1020]
तत्कथं देवदेवेश भवान्वेत्तीति मे मति· ॥

श्रीभगवानुवाच ।

गोब्राह्मणार्थे चात्मार्थे स्त्र्यर्थे च भरतर्षभ ।

---

G(ed.) भवेद् ध्रुवम् (for भविष्यति). — G2 om lines 972–973. — (L. 979) G(ed) तद् (for चेद्). D1 त्वया (for इद). G1 दान (for नून) — (L 980) G(ed) जीर्णदूर्वावलम्बिन· (for [b]) — (L. 981) D1 ममाज्ञया, G1 सुता° (for [अ]स्मदा°). — (L. 984) G(ed) स्वाश्रय प्राप्य स सुधीः (for [a]) D1 महामाति· (for °मते) — (L. 985) D1 निगद्य (for निवेद्य). G(ed) यथाश्रुतम् (for युधिष्ठिर) — (L. 986) G(ed) अपि द्रुतम् (for नरैरपि). — (L 988) G(ed) विवाहान् (for °ह) — (L 989) G(ed) देवाश्च त्रिदिवौकस· (for [b]) — (L 990) G(ed) मुक्तिर् (for वृद्धिर्) — (L 991) G(ed) कृते सति (for युधिष्ठिर) — (L 993) M1 देवास्तृप्ता भवन्ति हि (for [b]) — (L 996) G(ed) अविज्ञात- (for अपि ज्ञान) G2 अमोघै (for अघौघै·) D1 ज्ञानैरविज्ञानकृतैरमोघै

COLOPHON — *Sub parvan :* D1 आश्चर्यपर्व. — *Adhy name :* D1 G1 M1 G(ed.) कन्यादानप्रशंसनम् (D1 °सा), G1 कन्यादानम् — *Adhy. no. :* D1 G1, 2 M1 G(ed.) 8

(L 999) G1 G(ed) पप्रच्छ (for पृष्टवान्) — (L 1000) D1 G1 2 M1 विपश्चित (for अनुत्तमम्) — (L 1002) G(ed) यस्मिन् (for the second येन) — G1 M1 om line 1003 — (L 1003) G2 पुत्रा दिव (for वेदविदो). — For line 1003, G(ed) subst

81** यच्च स्वर्गस्य सोपानं पारावारस्य नौरिव ।

— G(ed) om line 1004 — (L 1005) G(ed) येन बन्धुषु विख्यात· (for [a]) G(ed) प्राप्नोति (for कीर्तिं च) — (L 1009) G2 देव (for देवी) — (L 1010) G(ed) अव्यग्र (for °क्त) — (L 1013) G1 वचन (for तद्वच) — (L. 1015) D1 महाभागे, G(ed) °प्राज्ञे (for °प्राज्ञ) D1 M1 प्रसिद्धा (for °द्धो) — (L 1016) G2 ततो भक्तिर् (for मतिस्ते वै) D1 M1 यस्माद्धर्मेषु ते भक्तिर् (for [a]) G2 -वत्सल (for -वल्लभे). — (L 1019) G1, 2 M1 G(ed.) सत्यै (for सत्यात्) — (L 1020) D1 M1 देवा (for देव). G(ed) याता (for यान्ति) — (L 1021) G2 G(ed) वेत्तीह (for °ति) G(ed.) वद (for मति·) — (L. 1023) G1 तदघ तस्य

विपत्तावनृतं ब्रूयादर्थं तस्य न विद्यते ॥
एतानृते तु राजेन्द्र वदेच्चेदनृतं नरः ।
नरकं तस्य विज्ञेयं युगानामयुतं प्रभो ॥ [1025]
सत्यं ममेति संकल्प्य योऽवतिष्ठति भूतले ।
तेन पूतमिदं सर्वं जगत्स्थावरजङ्गमम् ॥
सत्येन स्थापिता पूर्वं चन्द्रसूर्यादयो ग्रहाः ।
दिवि देवगणा सर्वे सेन्द्रा दिग्दन्तिनस्तथा ॥
बहुविद्याप्रदं सत्यं बहुकीर्तिप्रदं शुभम् ॥ [1030]
पापघ्नं दुरितघ्नं च सत्यं तस्माद्वदेत्सुधीः ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
वक्ष्ये पापहरं नृणां श्रोतॄणां च सुखप्रदम् ॥
सुमतिर्नाम विप्रेन्द्रो वेदवेदाङ्गपारगः ।
व्याघ्रस्य काञ्चनाक्षस्य सत्यमुक्त्वा दिवं गतः ॥ [1035]

युधिष्ठिर उवाच ।

सुमतिव्याघ्रयोः सत्यं कथं जातं महामते ।
कुत्र स्थितौ महात्मानौ सर्वं तत्कथयस्व मे ॥

श्रीभगवानुवाच ।

पुरा कृतयुगे राजन्कावेर्याः सरितस्तटे ।
शङ्खतीर्थमिति ख्यातं सर्वसिद्धनिषेवितम् ॥
यक्षगन्धर्वनिचयैर्मुनिवृन्दैर्निषेवितम् । [1040]
चम्पकाश्वत्थपुंनागपनसैः फलमण्डितैः ॥
कपित्थचूतबिल्वैश्च कदलीजम्बुनिम्बकैः ।
एतैरन्यैः पुण्यवृक्षैर्नानामृगगणैरपि ।
मयूरैः परभृताभिश्च चक्रवाकोपशोभितम् ॥
तत्रासीत्सुमतिर्नाम ब्राह्मणो वेदपारगः । [1045]
शिष्यैः प्रशिष्यैस्तच्छिष्यैः साक्षादिव पितामहः ॥
एकदा तु महाराज शिष्यैः परिवृतो वशी ।
कन्दमूलफलान्येधांस्याहर्तुं वनमाविशत् ॥
आहूय सर्वान्मतिमाञ्शिष्यान्प्राज्ञान्सुशीलवान् ।
अब्रवीच्च तदा वाक्यमेकैकं प्रति धर्मज्ञ ॥ [1050]
शृण्वन्तु मद्वचः शिष्या यदर्थं वयमागताः ।
कन्दमूलफलान्येधांस्यानयध्वं ममान्तिकम् ॥
तावदत्र समित्पुष्पमाहरिष्ये कुशानपि ।
व्याघ्रचोरभयं नास्ति युष्माकं तु वने द्विजाः ॥
इत्युक्त्वा तु महातेजाः सर्वांस्तान्पर्यमोचयत् । [1055]
पश्यन्वनानि पुण्यार्थमेक एवाचरत्तदा ॥
विषोल्बणैर्महानागैर्वृकजम्बुकसंकुले ।
ऋक्षव्याघ्रसमूहैश्च वृकनादैर्भयंकरम् ॥
वनमेवं बहुविधं पश्यन्सुमतिरात्मवान् ।
ध्यायन्सर्वगतं मा च विचचार नृपोत्तम ॥ [1060]
एतस्मिन्नन्तरे मूर्खो व्याघ्रो वै मांसलोलुपः ।
उड्डीयोड्डीय वेगेन द्विजस्य निकटं गतः ॥
ब्राह्मणो विस्मयाविष्टो दिशो दश विलोकयन् ।
पश्यन्व्याघ्रं भयकरं गन्तुं समुपचक्रमे ॥
गच्छन्तं ब्राह्मणं प्रेक्ष्य लाङ्गूलं विनिहत्य च । [1065]
समुल्लिखन्पदाभ्यां तु जगृहे दक्षिणं भुजम् ॥
हन्तुं कृतमतिं व्याघ्रं ब्राह्मणो गतभीस्तदा ।
रक्ताक्षं दीर्घलाङ्गूलं दीर्घदंष्ट्रं तदाब्रवीत् ॥
भो भो साधो वृथा मां त्वं हनिष्यसि निरागसम् ।
मया किमपराधं ते कृतं व्याघ्र वदस्व तत् ॥ [1070]
कृतापराधिनं लोके शिक्षां कुर्वन्ति भूमिपाः ।
न हिंसन्ति वृथा सौम्य सज्जना अपि प्राणिनम् ॥
अस्मिञ्जन्मनि हे व्याघ्र मया कस्यापि विप्रियम् ॥
न कृतं पूर्वजनने ह्यस्ति चेत्तद्वदस्व मे ॥
कन्दमूलफलाहारैर्वर्तयन्तमनागसम् । [1075]
मां वृथा बाधसे व्याघ्र व्रतैः कृच्छ्रादिभिः कृशम् ॥
ग्रीष्मे पञ्चाग्निमध्यस्थं हेमन्ते जलवासिनम् ।
वर्षर्तौ पतितां वृष्टिं मेघवृन्दात्समन्ततः ॥
सहिष्णुं सर्वदा शुद्धं मुकुन्दप्रियदर्शनम् ।
मां वृथा बाधसे व्याघ्र निर्मांसं मांसलोलुपः ॥ [1080]
परपीडापरं नित्यं परनिन्दापरायणम् ।
असत्यनिरतं मूर्खं देवब्राह्मणनिन्दकम् ॥
गुरुनिन्दं दुराचारं धर्मविक्रयिणं खलम् ।
पञ्चयज्ञविहीनं च प्रातःस्नानविवर्जितम् ॥
जपोपासनहीनं च संध्यावन्दनवर्जितम् । [1085]
राक्षसाश्च पिशाचाश्च बाधन्ते त्वादृशा अपि ॥

---

विद्यते (for [b]) —(L. 1026) $G_1$ यावत्; $G_2$ यो वा (for योऽव-) —(L. 1029) $G_1$ प्रभो (for तथा). —(L. 1031) G(ed) दुःखनाशं (for दुरितघ्नं). $G_1$ कृत्स्नं (for सत्यं) —$G_1$ om lines 1032–1033 $G_2$ G(ed) om line 1033. —(L. 1037) $G_1$ G(ed) कुत्र स्थितो महात्मासौ, $G_2$ कुत्रत्य को महात्मासौ (for [a]) —(L. 1039) $G_{1, 2}$ G(ed) -सिद्धि (for -सिद्ध-) —(L. 1043) $G_1$ G(ed) पुष्प- (for पुण्य-). —(L. 1044) Hypermetric $D_1$ परभृद्भिश्च, $M_1$ °पुष्टाभिश् (for °भृताभिश्च) $D_1$ G(ed) चक्रवाकैश्च शोभि($D_1$ सेवि)-तम् (for [b]) —(L. 1046) G(ed) शिष्यवृन्दान्वितो नित्य (for [a]) —(L. 1048) $G_{1, 2}$ corrupt; G(ed) फलादीनि हि (for °न्येधांसि). —(L. 1049) $M_1$ आदाय (for आहूय). $D_1$ धृतिमान् (for मति°). G(ed) सुशीलतः (for-°वान्) —(L. 1051) $D_1$ $G_{1, 2}$ $M_1$ पुत्रा (for शिष्या). —(L. 1052) G(ed) एतान् (for °एधांसि). —(L. 1054) $M_1$ G(ed) सुताः (for द्विजाः). $D_1$ $G_1$ युष्माक शृणु तद्वचः; $G_2$ °क शृण्वता सुता (for [b]) —(L. 1056) G(ed) चित्राणि हि (for पुण्यार्थम्). $G_2$ चरन् (for [अ]चरत्). —(L. 1058) $G_2$ -वराहैश् (for -समू°) $M_1$ सूकराद्यैर् (for वृकनादैर्). G(ed.) तथा नादैर्भयंकरै (for [b]). —(L. 1066) $D_1$ समुल्लिख्य (for °खन्). —(L. 1070) G(ed.) अपराद्धं (for °धं). $G_2$ मे (for तत्). —(L. 1072) G(ed.) दुर्जना अप्यपापिनम् (for [b]). —G(ed) om. (hapl.) lines 1076[b]–1080[a]. —(L. 1081) $G_1$ G(ed.) -करं (for -परं). $G_2$ -बाधा-, G(ed) पीडा- (for -निन्दा-). —(L. 1082). $G_1$ -हिंसकम् (for -निन्द°). —(L. 1083) G(ed.) गुरुनिन्दा-

शुचिं गोविन्दभक्तं मां वृथा त्वं बाधसेऽधुना ।
शुष्केनानेन देहेन तव चेन्न प्रयोजनम् ॥

वैशंपायन उवाच ।

निशम्य वचन तस्य ब्राह्मणस्य नृपोत्तम ।
व्याघ्रोऽवदन्महाघोरो ब्राह्मणं विगतस्पृहम् ॥ [1090]
शृणुष्व विप्रशार्दूल क्षुधितस्य च मद्वच ।
अस्थि वापि त्वचं वापि भक्षिष्ये त्वत्कलेवरम् ॥
महापापानि कृत्वापि परपीडामथापि वा ।
आत्मा संरक्षणीयो हि सर्वथा सर्वदेहिनाम् ॥
एवं निशम्य वचनं घोरं व्याघ्रस्य धर्मज्ञ । [1095]
प्रहसन्ब्राह्मणोऽप्याह व्याघ्रं प्रति सुनिर्भय ॥
मांसमूत्रमलैश्चैव पूरित श्लेष्मराशिभि. ।
पित्तास्थिनिचयै पूर्णमेतद्दग्धं कलेवरम् ॥
रजस्वलमनित्यं च दुर्गन्धपरिचर्चितम् ।
ईदृक्शरीरक व्यर्थमस्वतन्त्र विनिन्दितम् ॥ [1100]
प्रयोजनविहीनेन शुष्कास्थिनिचयेन मे ।
तव तृप्तिर्यदि भवेन्मत्त कोऽप्यधिको भुवि ॥
कृतार्थोऽस्मि महाभाग ह्यात्मान ते ददाम्यहम् ।
आत्मा हि परितुष्ट्यर्थं भवेद्यदि मम प्रियम् ॥
मद्वाक्यं श्रूयता व्याघ्र सत्यं परमपावनम् । [1105]
गत्वा ममाश्रमं तूर्णमागमिष्ये तवान्तिकम् ॥

व्याघ्र उवाच ।

बान्धवैर्विप्रकृष्टस्य मृत्युवक्त्रगतस्य ते ।
किं कार्यमाश्रमे ब्रह्मन्नस्ति चेत्तद्वदस्व मे ॥

सुमतिरुवाच ।

समारोप्य कृतानग्नीनग्निहोत्रगृहं गतान् ।
शिष्यानाश्वास्य पश्चात्त्वागमिष्ये तवान्तिकम ॥ [1110]

व्याघ्र उवाच ।

अनागते यदि त्वं तु ब्रह्मन्भूयो समान्तिकम् ।
तदुपायं वद त्वं मे तप्येऽहं जाठराग्निना ॥

सुमतिरुवाच ।

करोमि तेऽहं शपथं येन चित्तं सुनिश्चितम् ।
यथा भवेत्तव व्याघ्र तद्ब्रवीमि हि संप्रति ॥
ब्रह्महा च सुरापी च स्तेयी च गुरुतल्पग । [1115]
महापातकिनश्चैते तत्संयोगी च पञ्चम ॥
मातृहा पितृहा चैव ह्यात्महा भ्रूणहा तथा ।
गोहन्ता वीरहन्ता च अश्वहा नृपहा तथा ॥
स्त्रीहन्ता पुत्रहन्ता च भ्रातृहा भार्यहा तथा ।
यां गतिं प्राप्नुवन्त्येते महापातकिनोऽधमा । [1120]
अनागतश्चेद्भवतु सा गति सर्वथा मम ॥
यन्मातृगमने पापं भगिन्या गमने तथा ।
पुत्रिकागमने यत्तु स्नुषाया गमने तथा ॥
व्याधस्त्रीगमने यत्तु पुल्कसागमने तथा ।
विश्वस्तागमने यत्तु यज्ञपत्न्यास्तु संगमे ॥ [1125]
विधवागमने यत्तु उदक्यागमने तथा ।
एतासां गमने यत्तु तत्पापं तु भवेन्मम ॥
पति त्यक्त्वा तु या नारी अन्यसगमतत्परा ।
प्रतिकूला पतौ या तु बहुभाषी विरोधिनी ॥
सदा कलहशीला च सदा निष्ठुरभाषिणी । [1130]
सदा रोदनशीला या सदा द्वारपुर स्थिता ॥
पुत्रताडनशीला या पुत्रद्वेषपराकृता ।
दानविघ्नकरा या तु सदा मलिनमूर्धजा ॥
सदा मलिनवस्त्रा च सदा कार्पण्यभाषिणी ।
आत्मनिन्दापरा या तु परनिन्दापरा तु या ॥ [1135]
श्वशुरं श्वशुरी चैव विनिन्दन्ती स्वकं शिशुम् ।
भर्तृबन्धुषु या नारी ह्यौदासीन्यपरा तु या ॥
भर्तारं वञ्चयित्वा या संचितार्थपरा सती ।
अन्यसंभाषणपरा ह्यन्यवेश्मनि या स्थिता ॥

---

परं दार- (for °). — D1 om line 1085 — (L 1088) G1 नास्ति (for चेन्न). G(ed) कि भवेत्तव तद्वद (for ᵇ) — (L 1089) G(ed.) सत्य (for तस्य) — (L 1097) G1 -पुरीषैश् (for मलैश्चैश्). — For line 1103, G(ed) subst.

82** भगवान्सर्वसाक्षी यश्चकारैतन्मम प्रियम्।

— (L 1105) G1 2 G(ed) नित्य (for सत्य) — (L 1106) G1 G(ed.) [आ]श्रमपदम् (for [आ]श्रम तूर्णम्) — (L. 1109) G1 M1 G(ed) तु तान् (for कृतान्) — (L 1110) G1 2 शिष्यास्तान्बोधयित्वा च; G(ed) शिष्यान्सुतान्बोधयित्वा (for °) — (L. 1111) M1 G(ed.) अनागतो (for °गते) — (L 1112) M1 G(ed.) वदस्व त्वं (for वद त्व मे). — (L. 1115) M1 च सुरापश्; G(ed) मद्यपायी (for च सुरापी) — (L 1118) G2 नृप- (for वीर-), G2 गजहा (for नृपहा) M1 भ्रातृहन्ता यथा तथा, G(ed) °हन्तार्यहा तथा (for ᵇ) — After line 1119, G(ed) ins.

83** परदारपरद्रव्यक्षेत्राण्यपहरन्ति ये ।
विश्वासघातका ये च दीनाना दुःखदास्तथा ॥
असत्यवादिनो ये च पिशुना गरदास्तथा ।
हव्यकव्यविहीनाश्च अग्निदाश्च तथा परे ॥

— D1 G2 om line 1123 — (L 1123) G1 M1 पुत्रस्त्रीगमने यत्तु (for °) G1 ह्यात्मजा-, M1 पुष्पिता- (for स्नुषाया) — (L 1124) M1 बान्धवी- (for व्याधस्त्री-) M1 पुल्कस्या; G(ed) °स्त्री- (for °सा-). — (L 1125) G2 विश्वास- (for विश्वस्ता-) — After line 1126, G(ed) ins

84** शूद्रस्त्रीगमने यत्तु भ्रष्टस्त्रीगमने तथा।

— (L 1129) G(ed) धवे (for पतौ) — After line 1199, D1 ins

85** गन्धानुलेपनैर्हीना सदा ताम्बूलवर्जिता ।

— (L 1131) G1 दानविघ्नकरी या तु, G(ed) सदा विघ्नकरी या तु (for °) — (L. 1132) G1 -परा तु या; M1 -करा तु या;

मलिनाङ्गी तु या नारी वेश्यालावण्यकारिणी । [1140]
होमकाले विप्रयुक्ता या नारी शयने तथा ॥
अनुत्थिता तु या नारी तल्पाच्चैव पते पुरः ।
भर्तुं पूर्वं स्वपन्ती या दीर्घनिद्रापरा तु या ॥
पुंश्चली दीर्घनिद्रा च ऋतुकालमदर्शिनी ।
आत्मताडनशीला या कुटिला दुःखभाषिणी ॥ [1145]
असूयायां परा या तु विधवासहचारिणी ।
परप्रेष्यपरा या तु या नारी पितृनिन्दका ॥
भ्रातृस्त्रीभ्रातृनिन्दा च मातृनिन्दात्मजांस्तथा ।
अग्रभोजनशीला या स्वकृतं पाकसंचयम् ॥
सदा कलहकल्याणी चोरवृत्तिपरा दृढा । [1150]
अग्निदा गरदा या तु रज्जुभिर्मरणं गता ॥
कूपान्ते पतिता या तु तटाके देहनाशिनी ।
विषं पीत्वा मृता या तु अग्निदग्धा स्वयं रुषा ॥
आसां तु पतिपत्नीनां नरकं यद्विदुर्बुधा ।
अनागते यदि मयि तन्मे भवतु शाश्वतम् ॥ [1155]
किं तु वक्ष्यामि शार्दूल वैधव्ये दुष्टचारिणी ।
स्नानहीना तु या नारी विधवा सङ्गलोलुपा ॥
हरिसेवाविहीना या विधवा केशधारिणी ।
उपवासविहीना या व्रतहीनातिदुःखिता ॥
कामादिकलहैर्युक्ता सदाताम्बूलभक्षिणी । [1160]
सदामण्डनशीला च विधवा कामचारिणी ॥
सदारोदनशीला या सदामलिनवस्त्रका ।
उष्णोदकेन या स्नाति सदा तु जपवर्जिता ॥
नामत्रयविहीना या मातृवाक्यविरोधिनी ।
विप्रपादोदकं या तु शिरसा नैव धारिणी । [1165]
प्रदक्षिणानमस्कारविहीना देवतागृहे ॥
पूर्वभागे तु या भुङ्क्ते दिवसस्य पदे पदे ।
बहुभाषी स्तोत्रहीना व्रतहीना ह्यनिर्मला ॥
गर्भिणी विधवा या तु तद्भीत्या मरणं गता ।
काषायवस्त्रहीना या नीलीवस्त्रधरा तु या ॥ [1170]
द्विभुक्तानिरता या तु भक्ष्यभोज्यरता तु या ।
तैलनिर्मलदेहा तु शिरस्तैलं तु धारिणी ॥
अलंकाररता या तु भूषणादिसुवस्त्रकैः ।
सुतीर्थविमुखा या तु सत्पात्रे दानवर्जिता ॥
पाददृष्टिविहीना या तिर्यग्दृष्टिरता तु या । [1175]
सदा कर्मविहीना या सदा सलापतत्परा ॥
यां गतिं प्राप्नुवन्त्येताः सा मे भवतु शाश्वती ।
न दास्ये यदि मद्देहस्तव तृप्त्यै मृगाधिप ॥

श्रीभगवानुवाच ।

तां वाचं सत्यसंयुक्तां निशम्य कुरुनन्दन ।
नमस्कृत्य द्विजवरं गच्छ सौम्येत्यथाब्रवीत् ॥ [1180]
गत्वा स्वमाश्रमपदं पुनरेव महामते ।
आगच्छ मम तृप्त्यर्थं प्राणान्रक्ष नमोऽस्तु ते ॥
ब्राह्मणो दक्षिणकरं दत्त्वा व्याघ्रस्य मूर्धनि ।
मा भैषीरुक्तवान्राजन्निर्भयः स्वाश्रमं ययौ ॥

Colophon.

G(ed) -परायणा (for °कृता). —D1 om lines 1133–1134 —(L. 1135) G(ed) पर- (for पति-). —(L 1137) D1 -परायणा, G(ed) -परा सदा (for परा तु या) G2 ह्युदासीनपरायणा (for $^{\delta}$). —(L 1138) D1 -परा तु या; G2 परायणा (for परा सती). G(ed) संचिनोत्यर्थसंचयम् (for $^{\delta}$). —(L 1142) G(ed) तल्पात्पत्यौ समुत्थिते (for $^{\delta}$) — For lines 1143–1144, G(ed) subst.

86** स्वभर्तुं पुरतो या तु सपत्नी गाढनिद्रया ।
पुंश्चली सङ्गनिरता या नारी पतिवर्जिता ॥

—(L 1146) G1, 2 M1 अन्या(G2 °न्य)सूयापरा ये तु, G(ed) सदासूयापरा ये तु (for $^{\alpha}$) —(L 1147) D1 M1 -प्रेष्यरता (for °परा) G2 विप्र- (for पितृ-) G(ed) -दूषिणी (for -निन्दका) —(L 1148) G1 -परा (for [आ]त्मजास्) G(ed) भ्रातृस्त्रीभ्रातृमात्रादिनिन्दाया रमते तु या —(L. 1149) D1 G1 2 M1 पाप- (for पाक-) —(L 1150) M1 -कार्याणि, G(ed.) -शीला या (for -कल्याणी). G(ed) शठा (for दृढा) —(L. 1152) G1 कूपान्त-; G2 कूपे नि-, G(ed) कूपान्त (for °न्ते) G(ed) तटाके पतिताथ वा (for $^{\delta}$) —(L. 1153) G1 2 M1 विषपीत- (for विषं पीत्वा) —(L. 1154) G(ed.) दुष्ट- (for पति-). G2 आसा च मृगशार्दूल (for $^{\alpha}$). —(L. 1156) G2 M1 -चारिणाम् (for °णी). — G2 om. lines 1159–1162 G1 om lines 1159–1161 —(L. 1160) G(ed) कामार्ता कलहे युक्ता (for $^{\alpha}$). —(L 1162) G1 G(ed) विमल- (for मलिन-) —(L 1163) G1 G(ed) सदा जपविवर्जिता (for $^{\delta}$) — G2 om line 1167. —(L. 1167) D1 G1 च सस्मिता (for पदे पदे) —(L. 1168) G(ed) वृत्त- (for व्रत-) G2 च कल्मषा (for ह्यनिर्मला). D1 पितृवाक्याविरोधिनी (for $^{\delta}$). — For line 1169, G(ed.) subst ·

87** विधवा गर्भिणी या तु गर्भं भित्त्वा मृता तु या ।

—(L. 1170) G1 2 M1 G(ed.) शुक्ल- (for नीली-). — G2 om. line 1173 —(L 1176) G(ed) -धर्म- (for -कर्म-). —(L. 1177) D1 G2 M1 शाश्वतम् (for °ती) — After line 1177, G2 ins. :

88** कृच्छ्रलब्धधनं क्षेत्रमन्यायेन बलाद्धरेत् ।
योऽतिघोरेण पापेन लिप्येयं मय्यनागते ॥

—(L. 1178) G(ed.) भयंकर (for मृगाधिप). —(L. 1179) G1 G(ed.) -युक्ता च (for -संयुक्ता) —(L. 1181) G2 तु स्वाश्रम- (for स्वमा°) —(L. 1182) G2 मृग- (for मम). —(L 1184) G1, 2 [इ]त्युक्तवान् (for उक्तवान्) M1 मा भैरित्युक्तवान्राजन्; G(ed.) मा भैषीरित्यवोचत्स (for $^{\alpha}$).

COLOPHON.—*Sub-parvan :* D1 G1, 2 G(ed.) आश्चर्यपर्वणि

युधिष्ठिर उवाच ।

गत्वा स्वमाश्रमपदं ब्राह्मणो बन्धुवत्सल । [1185]
किमब्रवीन्महाभाग भार्यां चैव स्वपुत्रकान् ॥
सत्यवाक्यः पुनर्ज्ञात्वा व्याघ्रपार्श्वं कथं गत । 
तन्मे कथय सर्वेश पाण्डूना हितकृत्तम ॥

श्रीभगवानुवाच ।

मां ध्यायन्सर्वलोकेशं सृष्टिस्थित्यन्तकारिणम् ।
मामकं पौरुषं सूक्तं जपन्नाश्रममाययौ ॥ [1190]
आश्रमस्थान्स्वकाञ्शिष्यानाहूय ब्रह्मवित्तमः ।
स्वपत्नीमात्मजांश्चैव इदं वचनमब्रवीत् ।
शृण्वन्तु मद्वचः पुत्रा सत्यं ब्रूयां हिताय च ॥
वेदे च धर्मशास्त्रे च यो धर्मः प्रोच्यते बुधैः ।
तमेव सर्वकालेषु कुरुध्वमविशङ्कया ॥ [1195]
चराचरात्मकं विश्वं देवतिर्यङ्नरादिकम् ।
विष्णुरूपमिदं सर्वं पश्यध्वमविशङ्कया ॥
वाङ्मन कर्मभिर्नित्यं हीनैश्च द्रव्यसंचयैः ।
मा वृत्तिं सर्वथा हीना कुरुध्वमविशङ्कया ॥
सर्वधर्ममयं सारं वक्ष्यामि च हिताय व । [1200]
परदारान्परद्रव्यं स्वप्ने वा न स्मरिष्यथ ॥
इत्युक्त्वा ब्राह्मणश्रेष्ठ सत्यवागनहंकृतिः ।
अग्निहोत्रगृहं विद्वानासमादातिहर्षित ॥
अग्नौ हुत्वा सदारस्तु प्रणम्य प्रयतेन्द्रियः ।
समारोपयदग्नीस्तान्स्वस्यात्मनि मदाश्रये ॥ [1205]
स्वकां पुत्रवती भार्यां साध्वी ता प्रियवादिनीम् ।
आहूय वचनं वाग्मी प्रोवाच भरतर्षभ ॥
हे प्रिये शृणु मद्वाक्यं कल्याणि ह्यतिथिप्रिये ।
पुत्रान्संरक्ष धर्मेण परं श्रेयो गमिष्यसि ॥
धर्मं भजस्व सततं भूतहिंसां सदा त्यज । [1210]
जहि कामान्स्वदेहस्थान्साधुसङ्ग सदा कुरु ॥
हरिमर्चय भद्रे त्वं सत्यशीला तथा भव ।
देहेऽस्मिन्बुद्बुदाकारे ममतां त्यज सर्वदा ॥
इति वादिनि धार्मिष्ठे भार्या तस्य प्रिया सती ।
शिरसाञ्जलिमाधाय दुःखिता वाक्यमब्रवीत् ॥ [1215]
भगवन्नीदृशी वाणी नोक्तपूर्वा त्वयानघ ।
साशङ्का इव मे भाति कथं वक्तुं त्वमर्हसि ॥

सुमतिरुवाच ।

समित्पुष्पकुशार्थं तु ह्यागतस्य तनुर्मम ।
व्याघ्रस्य दत्ता तृप्त्यर्थं क्षुधितस्य मयानघे ।
तन्निमित्तमहं वच्मि तत्सकाश व्रजाम्यहम् ॥ [1220]
एवमुक्ता तदा साध्वी ब्राह्मणी शोककर्शिता ।
पपात सहसा भूमौ हा हतास्मीति दुःखिता ॥
समुत्थाप्य तदा साध्वी ब्राह्मणो ब्रह्मवित्तम ।
निःस्पृह सर्वकामेषु तदा वाक्यमभाषत ॥
मद्वच श्रूयता भीरु धर्मबुद्धि सदा कुरु । [1225]
धर्ममार्गपराणा तु धर्म एव परा गति ॥
पतिवाक्यरताना तु स्त्रीणां चैव सुशोभने ।
स्त्रीजन्म नास्ति नास्त्येव देवा एवं वदन्ति हि ॥
धर्मनिष्ठा तपोनिष्ठा सत्यनिष्ठा सदा भव ।
मदर्थं कुरु कल्याणि यत्किंचिद्दै ददासि च ॥ [1230]
एवमुक्ता तदा साध्वी ब्राह्मणी धर्मनन्दन ।
तथा करोमीत्युटजं प्रविवेश सुतान्विता ॥
ध्यायन्ती पर्णशालायां सर्वधातारमच्युतम् ।

---

शेषधर्मा॰, $M_1$ शेषधर्मा॰. —*Adhy name* $D_1$ व्याघ्रद्विजसवाद, $G_1$ सत्यप्रनिशा; G(ed.) सत्यव्रतप्रशसाया द्विजव्याघ्रसवाद. — *Adhy. no.*: $D_1$ $G_{7,2}$ $M_1$ G(ed) 9

( L. 1185 ) $G_2$ G(ed.) धर्म- ( for बन्धु- ). — ( L. 1186 ) G(ed) स्वभार्यां च ( for भार्यां चैव ) — ( L 1187 ) $G_{1,2}$ $M_1$ -वाक्यात् ( for -वाक्य ) — For line 1187, G(ed.) subst.

89** स सत्यवचनो धीमान्पुनर्व्याघ्रं कथं गतः ।

—( L. 1188 ) $G_2$ तत्त्वेन ( for सर्वेश ). — ( L. 1189 ) $D_1$ -कारणम्; $G_2$ -कारकम् ( for -कारिणम् ). — ( L. 1191 ) $M_1$ सर्वांश्च ब्राह्मणोत्तमः ( for $^b$ ). — Before line 1193, $D_1$ $M_1$ ins. सुमतिरुवाच — ( L 1193 ) $G_2$ शृणुध्व ( for शृण्वन्तु ). $G_1$ G(ed) ब्रूत, $G_2$ वच्मि ( for ब्रूयां ) — ( L 1194 ) $G_{1,2}$ ये धर्माः ( for यो धर्मः ). — ( L. 1195 ) $G_2$ तान् ( for तम् ) $M_1$ -लोकेषु ( for -कालेषु ). $D_1$ शृणुध्वम् ( for कुरु॰ ) — ( L 1196 ) $G_2$ पक्षितिर्यग्जनादिकम् ( for $^b$ ). —( L. 1197 ) G(ed) विश्व ( for सर्वं ). — $G_2$ om. line 1198–1199 —( L 1198 ) $G_1$ धनैश्चैव कलेवरैः ( for $^b$ ). — ( L. 1199 ) परतुष्टि सदा यूय ( for $^a$ ). — ( L. 1200 ) $G_2$ -तत्त्व- ( for -धर्म- ). — ( L. 1201 ) G(ed) परार्थान्वै ( for परद्रव्य ) — ( L 1202 ) $G_2$ $M_1$ अनहङ्कृत ( for ॰ति ). — ( L 1203 ) G(ed) स्मरन्विभुम् ( for [अ]तिहर्षित ) — ( L 1204 ) G(ed) तदारात्तु, $G_2$ [आ]हुतीर्धीमान्, $M_1$ चादरात्तु ( for सदारस्तु ) G(ed) विजितेन्द्रिय ( for प्रय॰ ) — ( L 1205 ) $D_1$ मदाश्रयः ( for ॰ये ). — ( L. 1206 ) $G_1$ $M_1$ ब्रह्म- ( for प्रिय- ) — ( L. 1207 ) G(ed) सोऽथ ( for वाग्मी ) —( L 1209 ) G(ed) भविष्यति ( for गमिष्यसि ) —( L 1210 ) $G_1$ G(ed) समुत्सृज, $G_2$ परित्यज ( for सदा त्यज ) — ( L 1215 ) $D_1$ $D_2$ आस्थाय ( for आधाय ). — Before line 1216, $D_1$ $M_1$ ins ब्राह्मणी उवाच — ( L. 1216 ) $D_1$ कथ त्वम् ( for भगवन् ). $G_{1,2}$ $M_1$ ईदृशा ( for ॰शी ). $D_1$ $G_2$ -पूर्वं ( for पूर्वा ). — For line 1217, G(ed) subst

90** किमकाण्डे प्रवक्तुं वै कारण वद मानद ।

— $D_1$ ब्राह्मण ( for सुमतिर् ) — ( L. 1218 ) $G_2$ $M_1$ -फलार्थं ( for -कुशार्थं ) G(ed) वन यातस्य मे तनुः ( for $^b$ ). — ( L. 1220 ) $D_1$ $G_1$ व्रजामि च; $G_2$ $M_1$ प्रयामि च ( for व्रजाम्यहम् ) — ( L 1225 ) $M_1$ धर्मबुद्धि सदा भव ( for $^b$ ). —( L. 1227 ) G(ed.) स्त्रीणामिव सुशोभनम् ( for $^b$ ). —( L. 1233 )

तुष्टाव पुण्डरीकाक्षं योगिध्येयमरिंदमम् ॥

ब्राह्मणी उवाच ।

लक्ष्मीपते नमस्तुभ्यं सृष्टिस्थित्यन्तकारिणे । [1235]
चिरकालं ममानन्तं सौमङ्गल्यं ददस्व ह ॥
अनाथबन्धो देवेश पाहि मां पतिदानतः ।
त्वत्पादकमलादन्या गतिर्मम न विद्यते ॥
कालात्मन्सर्वभूतात्मन्बालापत्यां तपस्विनीम् ।
पाहि मां सर्वलोकेश पतिदानात्प्रजापते ॥ [1240]
शिष्येषु वा मयि सुते कृपा यदि तवास्ति चेत् ।
सौमङ्गल्यं ददस्व त्वं भूयो भूयो नमोऽस्तु ते ॥
ध्यायन्ती देवदेवेशमिति नत्वा पुनः पुनः ।
अध्यास्ते पर्णशाला तु गतशोका पतिव्रता ॥
ब्राह्मणो गतवांस्तूर्णं शिष्यैः परिवृतो वशी । [1245]
व्याघ्रो मृगारिर्यत्रास्ते तं देशं पाण्डुनन्दन ॥
स्थाप्य दूरे स्वकाञ्शिष्याञ्शान्तिसूक्त निवेद्य च ।
व्याघ्रस्य संमुखं चागाद्गतभीः कीर्तिवर्धनः ॥
तस्मिन्नवसरे शिष्या जप्त्वा सूक्तानि पौरुषान् ।
दिशां पतीन्नमस्कृत्य प्रार्थयामासुरव्ययान् ॥ [1250]
नताः स्म देवराज त्वा पाहि लोकपते प्रभो ।
यज्ञांशभागिने तुभ्यमस्मद्गुरुमकल्मषम् ॥
वैवस्वत नताः स्म त्वां धर्मरूप सतां पते ।
अपमृत्युभयात्पाहि गुरुं नो लोकवन्दितम् ॥
अपां पते नताः स्म त्वां पाहि नः पाशधारिणे । [1255]
व्याघ्रचोरभयाद्देव गुरुं निष्कल्मषं प्रभो ॥
निधीश निःस्पृहं शान्तं पाहि नो गुरुमव्ययम् ।
त्वत्पादं तु वयं सर्वे प्रपन्ना एव धर्मप ॥
इति स्तुता दिक्पतयो देवगन्धर्वकोटिभिः ।
उद्गीयमानाः सर्वत्र तं देशमगमन्नृप ॥ [1260]
पिण्डीकृतां तनुं दृष्ट्वा ब्राह्मणस्य नृपोत्तम ।
विस्मयं परमं जग्मुर्देवाः सर्वे दिवि स्थिताः ॥
भक्ष्यता भक्ष्यतां व्याघ्र क्षुधितोऽसि तनुर्मम ।
इत्याकर्ण्य वचस्तस्य सर्वे विस्मयमागताः ॥
सर्वे दिवौकसो राजन्सर्वशास्त्रविशारदम् । [1265]
पुरस्कृत्य गुरुं श्रेष्ठं सुत्रामाणं बभाषिरे ॥
तृप्तिमस्मै प्रयच्छ त्वं व्याघ्राय त्रिदशेश्वर ।
त्रिविष्टपं ददस्व त्वं ब्राह्मणाय महात्मने ॥
तथेति च समाहूय ब्राह्मणं विगतस्पृहम् ।
दिवस्पतिरुवाचेदं सर्वभूतहिते रतम् ॥ [1270]
सुमते ब्राह्मणश्रेष्ठ व्रज स्वर्गं ददामि ते ।
सत्यप्रतिज्ञा दृष्टा हि मयैव हि तवैव हि ॥
सुरलोके तथा सौख्यं तेन सत्येन सुव्रत ।
भुङ्क्ष्व भोगान्विचित्रान्वै यानमारोह तेऽर्पितम् ॥
दिवस्पतिवचः श्रुत्वा सुमतिर्ब्राह्मणोत्तमः । [1275]
दृष्ट्वा देवान्दिविस्थान्वै ननाम च सुविस्मितः ॥

सुमतिरुवाच ।

शिष्याणां चैव सर्वेषां भार्यायाश्च दिवस्पते ।
यदि नाकं ददासि त्वं व्याघ्रस्य च तथास्तु मे ॥
सुमतेस्तु वचः श्रुत्वा तदा देवपतिः प्रभुः ।
अब्रवीन्मधुरं वाक्यं ब्राह्मणं गतकल्मषम् ॥ [1280]
भुक्त्वा भोगान्यथेष्टं त्वं सशिष्यैर्भार्यया सह ।
दिवं गच्छ महाभाग कीर्तिस्ते शाश्वती भवेत् ॥
शत्रौ ते मित्रताबुद्धिर्दृष्टा नान्येषु सुव्रत ।
तस्मात्तवेप्सितं सर्वं प्रदास्यामि वरं द्विज ॥
परीक्षार्थपरा सर्वे ह्येते त्रिदशपुंगवाः । [1285]

---

G(ed) -दातारम् (for -धा°) — (L 1234) G2 अनुत्तमम् (for अरिंद°) — G1 G(ed) om. the ref. — (L 1235) D1 -कारणम् (for कारिणे) — (L. 1236) D1 [आ]नन्द (for [अ]नन्त). — (L. 1240) D1 G1 -कालेषु, M1 -कामेषु; G(ed) -कार्येषु (for -लोकेश). — (L 1241) G(ed) मयि (for यदि) — (L 1245) G(ed) शीघ्र (for तूर्णं) — (L 1247) G(ed) -सूक्तान् (for सूक्त) G1 जपन्द्विज॰ (for निवेद्य च) — (L. 1248) G1 2 G(ed) यायात् (for चागात्) — (L 1249) M1 G(ed.) सूक्तांश्च (for सूक्तानि). D1 जप्त्वा सूक्तान्हि वैष्णवान् (for [b]). — (L 1251) G(ed) नमस्कुर्मो देवराज (for [a]). — For line 1252, G(ed) subst.

91** यज्ञांशभागी भगवानस्मद्गुरुरकल्मषः ।

— (L 1253) G(ed) नमस्तुभ्य (for नताः स त्वा) G1 M1 -रूपिन् (for रूप) — (L 1254) G(ed.) -विश्रुतम् (for -वन्दि°) G2 गुरुनो लोकवन्दित (for [b]). — (L 1255) G(ed.) पाहि नः परमं गुरुम् (for [b]) — (L. 1256) D1 G2 एव (for देव) — For line 1256, G(ed) subst.

92** पाहि व्याघ्रभयादस्मात्पाशहस्त महाप्रभो ।

— (L 1257) G(ed) निधीश (for °श). M1 निधीश भयात्पाहि गुरुं (hypermetric) (for [a]) — (L. 1258) G1 धर्मज, G(ed) सर्वदा (for धर्मप) — (L 1261) G(ed.) -कृत- (for -कृता). D1 ब्राह्मण सुरसत्तमा (for [b]). — (L. 1266) D1 नमस्कृत्य (for पु°) M1 सख॰ (for श्रेष्ठं). — (L. 1267) D1 G(ed) त्रिदिवेश्वर (for त्रिदशे°) — (L. 1268) G(ed.) महामत (for °त्मने). — (L. 1269) G1 समाशाय; G2 तमाहूय, G(ed) समाधाय (for °हूय) G(ed.) -ज्वरम् (for -स्पृहम्) — (L 1270) G(ed.) रतः (for रतम्). 1272) G1 त्वय्येव च न मानवे; G2 M1 त्वयेव न च मानव; G(ed.) त्वयेव च न सशयः (for [b]) — (L. 1273) G(ed.) मया सार्धं (for तथा सौख्य) — (L. 1277) D1 M1 महामते (for दिवस्पते) — (L 1278) G(ed) दिवस्पते (for तथास्तु मे) — After line 1278, G(ed.) ins.

93** तदा मे जायते तुष्टिरन्यथा नोत्सहे दिवम् ।

— (L. 1280) G1 -किल्बिषम (for -कल्म°). — (L. 1283) M1 शत्रौ समानं च ते बुद्धिः; G(ed.) शत्रौ ते मित्रबुद्धिश्च (for [a]). — (L. 1285) G(ed.) परीक्षार्थं सुराः सर्वे (for [a]). G(ed.)

व्याघ्रव्याजेन सुप्रीतास्तवान्तिकमुपागता ॥
इत्युक्त्वान्तर्दधे पार्थ गोत्रभित्सपुरोहित. ।
विमाने व्याघ्रमारोप्य ह्यादितेया दिवं गता ॥
ब्राह्मणो विस्मयाविष्ट शिष्यै. सह युधिष्ठिर ।
आश्रमं प्राप धर्मज्ञो भार्यायास्तद्‌न्यवेदयत् ॥ [1290]
कर्मकाण्डमशेषेण कृत्वा शिष्यान्विवाह्य च ।
भुक्त्वा भोगान्यथेष्टं तु शिष्यैः सह दिवं गत ॥
तस्मात्सत्यं परं धर्म दैवतैरपि दुर्लभम् ।
स्वर्गलोकप्रद पार्थ सत्यमेव वदन्ति हि ॥
सत्यशीलो भव त्वं च धृतिं मा मुञ्च संप्रति । [1295]
सत्येन ते भवेत्स्वर्गस्त्वमप्येवं समाचर ॥
य इद पुण्यमाख्यानं शृणोति श्रद्धया नरः ।
स विधूयेह पापानि स्वर्गलोके महीयते ॥

Colophon

युधिष्ठिर उवाच ।

प्राणिनां रक्षणे पुण्यं सर्वलोकप्रदायकम् ।
एवं वदन्ति धर्मिष्ठं मुनयो मुनिकीर्तन ॥ [1300]
तस्य धर्मफलं देव दर्शयाद्य यदूत्तम ।
मम प्रीत्या वद श्रीमन्भूयो भूयो नमाम्यहम् ॥

श्रीभगवानुवाच ।

यो ददात्यभय भूप भयविह्वलचेतसाम् ।
तस्य पुण्यफलं वक्तुं नालं वर्षशतैरपि ॥
एकत. क्रतवः सर्वे समग्रवरदक्षिणाः । [1305]
एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥
संरक्षति महीपाल भयविह्वलचेतसम् ।
स स्नातोऽब्दशतं साग्रं गङ्गायां नात्र संशयः ॥
कपोतस्याभयं दत्त्वा शिबिर्नाम जनेश्वर ।
प्राप्तवान्वैष्णव लोकं सत्यं सत्यं मयोदितम् ॥ [1310]

युधिष्ठिर उवाच ।

शिबिर्नाम महातेजा राजा धर्मपरायण ।
कपोतस्याभयं दत्त्वा कथ मुक्तिमवाप्तवान् ॥
त्वमेव वेत्सि तत्सर्वं लोकनाथ नमोऽस्तु ते ।
मयि कारुण्यभावेन कृष्ण संप्रति कथ्यताम् ॥

श्रीभगवानुवाच ।

आसीत्पुरा महाराज सत्यवादी दृढव्रत । [1315]
शिबिर्नाम महातेजा सर्वैश्वर्यसमन्वित ॥
वर्तमाने महायज्ञे शिबेस्तस्य महात्मन ।
देवलोकेऽथ गन्धर्वा गायन्ति स्म हि तद्यशः ॥
तत्परीक्षां करोमीति वृत्रारि समचिन्तयत् ।
सखायं वरयामास वैश्वानरमरिंदम । [1320]
इन्द्र श्येन कपोतोऽग्निर्भूत्वा तत्रोपजग्मतु ॥
कपोतो भीतिसंयुक्त श्येनात्तस्मान्महामते ।
राजानं शरणं गत्वा प्रणिपत्येदमब्रवीत् ॥
भो भो राजन्महाराज शोभनं चरित तव ।
श्येनो हिंसितुमुद्युक्तो मा पालय कृपालय ॥ [1325]
इत्युक्त्वा सहसा राजन्राजानं शरणं ययौ ।
राजापि भयसंविग्न कम्पमानं वचोऽब्रवीत् ॥
इत एहि कपोत त्व भयशोकौ विमुञ्च ह ।
मृत्युतोऽपि भयं नास्ति मत्समीपे स्थितस्य ते ।
किमुतान्यन्महाबुद्धे त्यज कम्पं सुखी भव ॥ [1330]
एवमुक्ते तु राजेन्द्रे श्येनरूपी सुरेश्वरः ।
आजगाम नृपस्याशु यज्ञवाटं महामते ।

-सभवा. ( for -पुंगवा ). —$D_1$ om lines 1287–1288. —( L. 1287 ) G(ed ) बलभित् ( for गोत्र° ) — ( L 1289 ) $D_1$ तदा गत ( for युधिष्ठिर ). — ( L. 1290 ) G(ed ) धर्मिष्ठो ( for धर्मज्ञो ) $G_1$ आश्रम प्राप्य धर्मिष्ठो ( for $^a$ ) — For lines 1293–1294, G(ed ) subst ·

94** तस्मात्सत्य परो धर्म सत्ये सर्वं प्रतिष्ठितम् ।
तदेव नाकसोपान पारावारस्य नौर्यथा ॥

— ( L 1295 ) G(ed ) सुव्रत ( for संप्रति ). — ( L 1297 ) $D_1$ G(ed.) [अ]न्वित. ( for नरः ). — ( L. 1298 ) $M_1$ G(ed.) सत्य- ( for स्वर्ग- ) — After line 1299 G(ed ) ins. :

95** सत्यं सत्यमहं वच्मि नात्र कार्या विचारणा ।

Colophon — *Sub-parvan* $D_1$ $G_{1\ 2}$ $M_1$ आश्चर्यपर्व — *Adhy. name* $D_1$ $M_1$ सत्यप्रशंसनम्, $G_{1\ 2}$ सत्यप्रशसा, G(ed ) सत्यव्रतप्रशसाया विप्रव्याघ्रसंवादपरिसमाप्ति —*Adhy. no* · $D_1$ $G_{1\ 2}$ $M_1$ G(ed ) 10

( L 1299 ) G(ed.) रक्षण ( for °णे ) G(ed ) स्वर्ग- ( for सर्व- ). —( L 1300 ) G(ed.) सर्वे ( for एव ) $M_1$ धर्मिष्ठा ( for °ष्ठं ). $D_1$ -कीर्तित ( for -कीर्तन ). —( L. 1301 ) G(ed ) पुण्य- ( for धर्म- ). $G_2$ तस्य धर्मस्य रूपं हि ( for $^a$ ). G(ed.) श्रवणात्पापनाशनम् ( for $^b$ ) — ( L 1302 ) G(ed ) मयि ( for मम ) $G_1$ G(ed ) नमोऽस्तु ते ( for नमाम्यहम् ) — $D_1$ om lines 1304–1307 — ( L 1304 ) G(ed ) नाह शक्तो नराधिप ( for $^b$ ) — ( L 1308 ) $D_1$ $G_1$ G(ed ) स स्नाते; $G_2$ सुस्नाते ( for स स्नातो ). — ( L 1309 ) G(ed ) नराधिप ( for जनेश्वर ) —( L 1310 ) $G_1$ [ई]रितम् ( for [उ]दितम् ) G(ed ) सर्वदेवै सुपूजित ( for $^b$ ) — ( L 1312 ) $D_1$ अवाप्नुयात् ( for °प्तवान् ) — After the ref, $D_1$ ins

96** अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
श्रवणात्सर्वपापघ्न यशस्य पुण्यवर्धनम् ॥

— ( L 1316 ) G(ed ) शिबिर्नामातिविख्यात ( for $^a$ ). — ( L. 1318 ) $D_1$ $M_1$ -लोकेषु ( for लोकेऽथ ) $D_1$ $G_2$ महामते ( for हि तद्यश ) — ( L 1320 ) $G_1$ G(ed ) सहाय ( for सखाय ). $D_1$ सहाय कारयामास ( for $^a$ ) — ( L 1322 ) $D_1$ श्येनार्तस्तु, $G_1$ °त्त स ( for °त्तस्मात् ) — ( L. 1325 ) $G_1$ कृपानिधे ( for °लय ) — ( L 1326 ) $G_1$ G(ed.) गत ( for ययौ ). — ( L 1327 ) G(ed ) -सत्रस्तः ( for संविग्नं ). — ( L 1328 ) $G_2$ एह्येहि च ( for इत एहि ). $D_1$ भयशोक ( for °कौ ) — For line 1330, G(ed.) subst. :

नृपस्य निकटं प्राप्य इदं वचनमब्रवीत् ॥
राजन्धर्मभृता श्रेष्ठ प्रसिद्धोऽसि जगत्त्रये ।
कथं धर्मविरुद्धं त्वं कर्म कर्तुमिहार्हसि ॥ [ 1335 ]
कपोतोऽयं ममाहारस्त्वया संरक्षित खलु ।
क्षुधया पीडितोऽहं वै मोचयस्व कपोतकम् ॥
न मुञ्चसि यदि त्वं तु राजन्द्विजमनुत्तमम् ।
मम प्राणा हि यास्यन्ति प्राणान्रक्ष नृपोत्तम ॥

राजोवाच ।

प्राणार्थी रक्ष रक्षेति कपोत शरणं गतः । [ 1340 ]
कथं त्यजेयमेनं ते वद द्विजकुलोत्तम ॥
शरणागतं तु यो राजा विसृजेत्स तु पातकी ।
प्रायश्चित्तं न तस्याहु शरणागतघातिनः ॥
ब्रह्महत्यादिपापानां कथंचिन्निष्कृतिर्भवेत् ।
शरणागतहन्तुस्तु नेहामुत्र च निष्कृति. ॥ [ 1345 ]
अन्यद्यथेष्टं मांसं ते दास्ये खगकुलोत्तम ।
तन्मांसं भक्षय त्वं हि पुत्रपौत्रैर्यथासुखम् ॥

श्येन उवाच ।

कपोतोऽयं ममाहारो ह्यन्यापेक्षा न मे नृप ।
श्येना· कपोतान्खादन्ति श्रुतिरेषा सनातनी ॥
ब्रह्मणा हि पुरा सृष्टं श्येनानां तु कपोतकम् । [ 1350 ]
तस्मादेनं ददस्व त्वं मा पालय सबान्धवम् ॥
किं प्रयोजनमस्तीह यज्ञैर्विपुलदक्षिणैः ।
प्राणिनां रक्षणं श्रेष्ठं देहं त्यक्त्वापि मानद ॥
एकं रक्षति बह्वर्थे स मूढो यो नृपोत्तम ।
एकं हित्वा तथा राजन्बहून्रक्षन्सुखी भवेत् ॥ [ 1355 ]
तस्मात्त्वं राजशार्दूल पुत्रपौत्रादिसंयुतम् ।
मां रक्ष त्यज्यतामेष लोके कीर्तिं गमिष्यसि ॥

राजोवाच ।

धनराज्यशरीरेच्छा पुत्रदारस्पृहा न च ।
यथैकस्य तु रक्षार्थे स्पृहा गुरुतरायते ॥
शरीरं वापि संत्यक्ष्ये दुस्त्यजं सर्वदेहिनाम् । [ 1360 ]
शरणागतमेनं तु न त्यजेयं खगोत्तम ॥

श्येन उवाच ।

तथा कुरु महाभाग तदभावे स्वका तनुम् ।
कपोतदेहमात्रं त्वं प्रयच्छ तुलया धृतम् ॥

राजोवाच ।

कृतार्थोऽस्मि महाभाग आत्ममांसं ददामि ते ।
आत्मा हि परतुष्ट्यर्थमभूदिति महत्प्रियम् ॥ [ 1365 ]
एवमुक्त्वा महाराज राजा सत्यपरायण ।
प्रगृह्य विपुलं खड्गं स देहं प्रत्यकृन्तत ॥
प्रगृह्य मांसं बहुशोणितस्रवं
तुलान्तरे चैव समागतस्य ।
समं द्विजस्य प्रददौ महात्मा [ 1370 ]
तृणं करोतीति महान्महत्सुखम् ॥
कपोतेन स्थितं पार्श्वे तन्मात्रादतिरिच्यते ।
पुनश्चोत्कृत्य मांसानि तुलायामक्षिपत्प्रभुः ॥
अधिकं तेन मांसेन कपोतस्तुलया धृत· ।
मांसाभावे निरीक्ष्यैनां स्वयमेव तुलां गत । [ 1375 ]
त्यक्त्वा कपोतरूपं तु तदाराद्भिरास्थित. ॥

इन्द्र उवाच ।

साधु साधु महाराज धैर्यं ते ह्यन्यदुर्लभम् ।
त्वय्येव दृष्टमेतद्धि न दृष्टं प्राकृतेषु च ॥
इन्द्रोऽहं खलु राजेन्द्र कपोतो हव्यवाडयम् ।
त्वत्परीक्षापरौ राजंस्तव दास्यावहे वयम् । [ 1380 ]
वरं वृणीष्व धर्मज्ञ कीर्तिस्ते शाश्वती भवेत् ॥

राजोवाच ।

युष्मत्सेवापरोऽहं वै दानयज्ञादिसंभवः ।
यो धर्मो विद्यते मेऽद्य तत्सर्वं सफलं कुरु· ॥
दिवस्पते त्वदर्थं तु ह्ययं यज्ञ· प्रवर्तते ।
अविघ्नं कुरु कल्याण भूयो भूयो नमाम्यहम् ॥ [ 1385 ]

---

97** अन्यस्माकिमुत श्येनाज्जहि कम्प सुखी भव ।

— ( L 1336 ) $D_1$ सवर्धित· ( for सराक्षितः ). — ( L 1337 ) $D_1$ $G_2$ क्षुधा च ; G(ed ) क्षुधा स- ( for क्षुधया ) — ( L. 1339 ) $D_1$ मम देह प्रतप्तोऽद्य ( for $^a$ ). — ( L. 1341 ) G(ed ) त्यजेऽहम् ( for त्यजेयम् ) — ( L. 1342 ) G(ed ) यो राजा शरण प्राप्तं ( for $^a$ ) – ( L 1347 ) $G_{1,2}$ G(ed ) त मास भक्षयित्वा हि ( for $^a$ ) — ( L. 1350 ) G(ed ) श्येनाहार· कपोतक ( for $^b$ ) — ( G 1351 ) G(ed ) शुभप्रद ( for सबान्धवम् ) — ( L 1355 ) $G_1$ बहून्राजन् , $M_1$ G(ed ) महाराज ( for तथा राजन् ) $D_1$ $G_2$ बहूनि सुकृती भवेत् ( for $^b$ ) — $G_2$ G(ed ) om the ref — ( L 1360 ) G(ed ) [अ]हं ( for सं- ) $G_{1,2}$ दुर्जयं ( for दुस्त्यज ) — Before line 1361, $G_{1,2}$ ins. राजा . — ( L 1362 ) $M_1$ स्वकामिषम् ; G(ed ) तवामिषम् ( for स्वका तनुम् ). — ( L 1363 ) $D_1$ कपोतमात्र त्वं भारं ( for $^a$ ) — ( L. 1364 ) $D_1$ $M_1$ खगेत्याह ( for महाभाग ) $D_1$ om lines $1364^b$–$1366^a$. — ( L. 1365 ) G(ed.) आत्मन ( for आत्मा हि ). $G_1$ G(ed.) मम ( for महत् ). — For line 1365, $M_1$ subst. :

98** आत्मा हि तुष्ट्यर्थमभूदिति च मे महाप्रियम् ।

— ( L. 1370 ) G(ed ) मत्वा तृणैरतुल्यमतीव कायम् . — ( L. 1374 ) $M_1$ अथ कृत्तेन , G(ed ) अधिकस्तेन ( for °कं तेन ). $D_1$ $G_2$ कपोत तुलया धृतान् ( for $^b$ ). — After line 1374, $D_1$ ins :

99** एवं तु बहुशो राजन्राजा सत्यपराक्रम· ।

— ( L. 1375 ) $D_1$ G(ed ) [ए]नं ( for [ए]नां ). — After line 1375, $D_1$ $G_1$ G(ed ) ins. .

100** तस्मिन्क्षणे महाराज तुलामौशीनरे गते ।

विभावसो नमस्तेऽस्तु गृह्यतां मन्त्रवद्धविः ।
काले पुण्ये महाभाग पालयस्व नमोऽस्तु ते ॥
कर्मण्योर्यजमानस्य वाचं श्रुत्वा मनोरमाम् ।
प्रादादग्निश्च शक्रश्च वरं लोके बहुश्रुतम् ॥
यावत्कालं चन्द्रसूर्यौ दिवि देवनिषेवितौ । [1390]
तावत्ते कीर्तिरतुला लोके ख्यातिं गमिष्यति ॥
दिव्यरूपधरो भूत्वा भुक्त्वा भोगान्यथेच्छया ।
ब्रह्मलोकं व्रज श्रीमन्नित्युक्त्वान्तरधीयत ॥
तस्मात्त्वमपि राजेन्द्र पौरुषं कुरु सर्वदा ।
पुरुषार्थाद्दिवं यान्ति बहवोऽन्ये नरोत्तमाः ॥ [1395]
प्राणेन मनसा वाचा कर्मणा कुरुनन्दन ।
परेषां दुःखितानां तु साहाय्यं कुरु सर्वदा ॥
अप्यहं भक्तवर्गाणां मयि संन्यस्तकर्मणाम् ।
करोम्यहर्निशं पार्थ योगक्षेमं महात्मनाम् ॥
परेषां हितकृन्नित्यं यो वा को वापि भूपते । [1400]
सद्भृत्यः स हि विज्ञेयस्तस्याहं सुलभोऽनिशम् ॥
य इदं पुण्यमाख्यानं शृणुयाद्भक्तिमान्नरः ।
यथा ययौ शिबिर्लोकं ब्रह्मणोऽभ्येति सोऽपि च ॥

Colophon

युधिष्ठिर उवाच ।

श्रियः पते नमस्तेऽस्तु सर्वलोकस्य कारण ।
त्वत्पादाम्बुजनिष्ठस्य सर्वसंपत्प्रदायक ॥ [1405]
अष्टादशपुराणेषु यो धर्मः प्रोच्यते बुधैः ।
तत्सर्वं भगवान्वेत्ति स्वयं धर्मेश्वरो यतः ॥
सूक्ष्मधर्ममनेकार्थं बहुलोकप्रदं ध्रुवम् ।
सुलभं सर्वजन्तूनां मादृशामपि कामदम् ॥
पुण्यदं पुण्यशीलानां स्वर्गदं स्वर्गगामिनाम् । [1410]
मोक्षदं मोक्षकामानां पुत्रदं पुत्रकामिनाम् ॥
पापघ्नं पापजन्तूनां स्वत्पादाद्धर्मादपीश्वर ।
सर्वयज्ञफलं तात सर्वतीर्थफलप्रदम् ॥
शिवमायुष्करं देव कीर्तनीयं स्वदाश्रयम् ।
ज्ञानदं भक्तिदं नाथ त्वत्प्रियं परमेष्ठिन ॥ [1415]
प्रियं शक्रस्य धर्मस्य वरुणस्य तथा प्रियम् ।
धनदस्य च शर्वस्य तथा वै चन्द्रसूर्ययोः ॥
नक्षत्राणां च सर्वेषां गन्धर्वाप्सरसामपि ।
देवतानामृषीणां च ब्राह्मणानां प्रियं च यत् ॥
पुण्यदेशं पुण्यकालं पुण्ययोगं तथा क्षयम् । [1420]
एतान्सर्वान्महाभाग विस्तराद्वक्तुमर्हसि ॥
अस्माकं त्वद्वचः पथ्यं पवित्रं पापनाशनम् ।
श्रोतुकामा अमी विप्रा यज्वानो ऋषयस्तथा ।
भ्रातरो मे महाभाग पाञ्चाली पापवर्जिता ॥
नताः स्म सर्वे जगतां निवास [1425]
पाण्डोः सुतानां प्रियकृत्सुरेश ।
त्वत्पादमूलं तु वयं हि सर्वे
गताः स्म पाहीति तमित्यवोचत् ॥

वैशंपायन उवाच ।

भक्तिं विज्ञाय भृत्यानां पाण्डूनां हितकृद्धरिः ।
उवाच मधुरं वाक्यं प्रीणयन्सर्वमानसः ॥ [1430]

श्रीभगवानुवाच ।

साधु साधु महाप्राज्ञ मतिस्ते विमलोज्ज्वला ।
धर्मे ते वर्तते बुद्धिस्तस्मात्त्वं लोकविश्रुतः ॥
शृणु पार्थ महाभाग सर्वशास्त्रविशारद ।
वक्ष्यामि तव संप्रीत्यै धर्मसारसमुच्चयम् ।
नारदाय पुरा गीतं नैमिषारण्यवासिने ॥ [1435]
मरुत्वन्तं दिवि स्थाप्य बदरीवनवासिना ।
विस्तराद्वदितुं नालं मया वर्षशतैरपि ॥
तस्मात्समासतो वक्ष्ये शृणु नान्यमनाः प्रभो ।
यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥
धर्मः श्रुतो वा दृष्टो वा कृतो वा कारितोऽपि वा । [1440]
अनुमोदितो वा राजेन्द्र नयतीन्द्रपुरं महत् ॥

---

देवदुन्दुभयो नेदुर्दिव्या कुसुमवृष्टयः ।
श्येनरूपी सहस्राक्षः स्वदेहं प्राप्तवांस्तदा ॥
— (L. 1379) D1 G2 हव्यवाहन (for °ड्यम्). — (L 1380) M1 G(ed.) वरम् (for वयम्). — (L 1381) D1 M1 धर्मिष्ठ; G1 भद्रं ते (for धर्मज्ञ). — G2 om line 1383 — (L 1387) G(ed) मा पालय (for पालयस्व) — (L. 1389) D1 वराल्लोके बहुश्रुतान् (for ᵃ) — (L 1390) G2 -निषेविते (for °तौ) — (L 1392) D1 यथेप्सितम्, G1 °प्सितान् (for °च्छया) — (L. 1395) D1 G(ed) नृपोत्तम. (for नरो°) — (L 1396) G(ed) कायेन (for प्राणेन). — (L 1398) D1 G(ed) भृत्य-, G1 2 भ्रातृ- (for भक्त-).

COLOPHON. — *Sub-parvan* D1 G1 2 आश्चर्यपर्व. — *Adhy name*: D1 अभयदानप्रशंसनम्, G1 अभयप्रदानम्, M1 G(ed) अभयप्रदानप्रशंसनम् — *Adhy no*: D1 G1. 2 M1 G(ed,) 11.

— (L 1407) G(ed) तु भवान् (for भगवान्). G1 G(ed) सर्वलोकेश्वरो यतः (for ᵇ) — (L 1408) G3 G(ed) यच्च सूक्ष्मम् (for सूक्ष्मधर्मम्) — (L 1410) M1 -लोकिनाम्; G(ed) -कामि° (for गामि°) — (L 1413) D1 -यज्ञ- (for -तीर्थ-) — (L 1414) D1 श्रियम्, G2 दीर्घम् (for शिवम्). — (L 1416) D1 सोमस्य (for धर्मस्य) D1 धर्मस्य वरुणस्य च (for ᵇ) — (L 1421) G1 एतान्धर्मान्, G(ed) एतत्सर्वं (for एतान्सर्वान्) — (L 1424) G(ed) पाञ्चाली भृशमाकुला (for ᵇ) — Before line 1425, D1 ins वैशंपायन उवाच. — (L 1425) G1 M1 G(ed) अधीश (for निवास) — (L. 1428) G(ed) [उ]वाच (for [अ]वोचत्) — D1 om the ref — (L 1430) D1 -भूसुरान्, G1 -मानसम् (for °सः). — (L 1433) D1 महाप्राज्ञ, G2 °राज (for °भाग) — (L. 1434) M1 G(ed) सु- (for स-). D1 धर्मसारमनुत्तमम् (for ᵇ). — (L. 1439) D1 G3 स्मरण- (for श्रवण-). — (L. 1440)

धर्मा बहुविधा प्रोक्ताः पुण्यलोकप्रदायकाः ।
तेषां मध्ये यदेकैकं कृतवान्नाकमश्नुते ॥
तनूना मम सर्वासां ब्राह्मणो हि विशिष्यते ।
तत्राप्यध्यात्मविदुषे दत्तं भवति चाक्षयम् ॥ [1445]
कलत्रिणं वा शास्त्रज्ञं श्रोत्रियं वा गुणान्वितम् ।
यो दत्त्वा स्थापयेद्वृत्तिं तस्य पुण्यफलं शृणु ॥
मातृतः पितृतश्चैव द्विकोटिकुलसंयुतः ।
मम लोकमवाप्नोति यत्र गत्वा न शोचति ॥
गण्यन्ते पांसवो भूमेर्गण्यन्ते वर्षबिन्दवः । [1450]
न गण्यते विधात्रापि ब्रह्मसंस्थापने फलम् ॥
समस्तदेवतारूपो ब्राह्मणः परिकीर्तितः ।
जीवनं ददतस्तस्य कः पुण्यं गदितुं क्षमः ॥
देवपूजासु सक्ताय पुराणश्रवणे तथा ।
देयं प्रयत्नतो राजन्पुराणपठकाय च ॥ [1455]
यो विप्रहितकृन्नित्यं स सर्वान्कृतवान्मखान् ।
स स्नातः सर्वतीर्थेषु तप्तं तेनाखिलं तपः ॥
यो ददस्वेति विप्राणां जीवनं प्रोच्यते नरः ।
सोऽपि तत्फलमाप्नोति किमन्यैर्बहुभाषितैः ॥
भूमिदानसमं दानं सर्वलोकेषु नो नृप । [1460]
परं निर्वाणमाप्नोति भूमिदो नात्र संशयः ॥
भूमिदः सर्वदः प्रोक्तो भूमिदो मोक्षभाग्भवेत् ।
भूमिदानं तु यो दद्यात्सर्वपापैः प्रमुच्यते ॥
द्विजस्य वृत्तिहीनस्य सदाचाररतस्य च ।
जीवनार्थं महीं दत्त्वा तस्य पुण्यफलं शृणु ॥ [1465]
गङ्गातीरेऽश्वमेधानां शतानि विधिवन्नरः ।
कृत्वा यत्फलमाप्नोति भूमिदस्तु तदश्नुते ॥
भूमिदानं महादानमतिदानं प्रकीर्तितम् ।
सर्वपापप्रशमनमपवर्गफलप्रदम् ॥
तस्मात्त्वमपि राजेन्द्र भूदानं कुरु सर्वदा । [1470]
पुराणवेदशास्त्राणां वक्तृणा त्वं ददस्व ह ॥
तटाकं कारयेद्यस्तु स्वयमेव करोति वा ।
तस्यैव वंशजाः सर्वे ब्रह्मलोकं व्रजन्ति हि ॥
कर्तुं तटाकं यो मर्त्यः प्रारम्भं कुरुते यदि ।
सोऽपि तत्फलमाप्नोति तदुपायप्रदश्च यः ॥ [1475]
मृदं तु भारमात्रं यस्तत्तटाकाद्बहिः क्षिपेत् ।
त्रिविष्टपमवाप्नोति यावदाचन्द्रतारकम् ॥
तटाकार्धफलं राजन्कासारे परिकीर्तितम् ।
कूपं पादफलं ज्ञेयं कुल्यायां तच्छतोत्तरम् ॥
देवालयं तटाकं वा ग्रामं वा पालयेत्तु यः । [1480]
तेषां शतगुणं ज्ञेयं कर्तृभ्योऽपि महीयते ॥
देवतायतनं यस्तु कुरुते कारयत्यपि ।
स चन्द्रधवलैर्यानैर्मम लोके सुखी भवेत् ॥
शिवस्य वा हरेर्वापि यः करोति महालयम् ।
ब्रह्मलोकादिकान्भुक्त्वा तदन्ते मामुपैति सः ॥ [1485]
दृषद्भिः कारयेद्यस्तु धनाढ्यो देवतागृहम् ।
मृदा दरिद्रः कुरुते समपुण्यं प्रकीर्तितम् ॥
आरामं कारयेद्यस्तु बहुजन्तूपकारकम् ।
स चन्द्रधवलैर्यानैर्मम लोकं हि गच्छति ॥
स्थापयेद्वृक्षमेकं वा दरिद्रो लोकसाधनम् । [1490]
स याति ब्रह्मणो लोकं यमेन परिपूजितः ॥
गावो वा ब्राह्मणो वापि पथिको वा नृपोत्तम ।
क्षणार्धमपि तच्छाया तिष्ठन्नाकं नयत्यमुम् ॥
पुरोपकण्ठे पथि च वृक्षाराममप्रवर्तकः ।
तत्र यावन्ति पर्णानि बीजानि कुसुमानि च । [1495]
तावत्कालं वसन्नाके शतकोटिकुलान्वितः ॥
तुलसीरोपणं ये तु कुर्वन्ति मनुजोत्तमाः ।

D1 G2 कथितो (for कारितो) —(L 1441) Hypermetric G(ed) प्र- (for अनु-) D1 जनान्, G1 G(ed) जनम् (for महत्). M1 स याति परमां गतिम् (for [b]) —(L 1442) G(ed) च बहुधा (for बहुविधा). —(L. 1444) G1, 2 दानानामपि सर्वेषां (for [a]). —(L 1450) G2 भूमौ (for भूमे). G(ed) वृष्टि (for वर्ष-). —(L 1453) D1 च ददस् (for ददतस्) —After line 1453, D1 M1 G(ed) ins:

101** सर्वेषामेव वर्णानां ब्राह्मणः परमो गुरुः ।
तस्य देयानि दानानि स तारयति पण्डितः ॥
सत्कर्मनिरतायैव श्रोत्रियायाहिताग्नये ।
वृत्तिहीनाय वै देयं दरिद्राय कुटुम्बिने ॥
[(L. 2) D1 M1 नारकान् (for पण्डितः) ]

—(L 1456) G1, 2 G(ed) सर्वं (for सर्वान्) G2 मखम् (for मखान्) —(L 1458) G1 M1 G(ed) जीवनं वक्ति मानवः (for [b]) —(L 1460) D1 M1 त्रिषु (for सर्व) —(L. 1461) D1 भूमिदानान्न संशयः, G2 °दानं न संशयः (for [b]). —(L 1463) G1, 2 G(ed) सर्वपापप्रणाशनम् (for [b]) —(L. 1465) G(ed) दयायुक्तः (for महीं दत्त्वा) —(L. 1466) D1 विधिना (for विधिवन्) — G2 om. lines 1471-1472. —(L. 1471) G(ed) -धर्म- (for -वेद-). —(L 1473) G1, 2 तव (for तस्य) D1 M1 मम (for ब्रह्म-). —After line 1473, D1 G(ed) ins.

102** यः कश्चिदध्वगो वापि तटाकेषु जलं पिबेत् ।
कर्तुः सर्वाणि पापानि नाशयति न संशयः ॥
एकाहमपि कौन्तेय भूमिस्थमुदकं कुरु ।
[(L. 1) D1 राजस् (for वापि) —(L. 3) D1 भूमिष्ठमधिकं कुरु (for [b]). ]

—(L. 1475) G2 M1 तत्क्षणम् (for तत्फलम्) —(L. 1476) G(ed.) मात्रा (for -मात्र) D1 तटाकाच्च (for तत्तटाकाद्). G(ed) तटाकात्प्रक्षिपेद्बहिः (for [b]) —(L. 1478) M1 कासार (for °रे) G3 कासारं परिकीर्तितं (for [b]). —(L 1479) G(ed) कूपे (for कू.) M1 वा फलदं (for पादफल). —(L. 1480) D1 M1 मठं ग्रामं च पालयेत् (for [b]). —(L. 1485) G2 मम लोकं स गच्छति (for [b]). —(L. 1488) G1 सर्व- (for

सर्वान्वंशान्ममुद्धृत्य यमेन परिपूजिता. ।
तप्तहाटकवर्णैश्च यामैर्यान्ति ममालयम् ॥
ऊर्ध्वपुण्ड्रकरो यस्तु तुलसीमूलमृत्कणै । [1500]
तत्रैव नेत्रं तत्रासीन्मूर्ध्नीन्दोर्बिभृयात्कलाम् ॥
तृणानि तुलसीमूलाद्यावदुत्पाटितानि वै ।
तावती ब्रह्महत्या वै च्छिनत्त्येव न संशय ॥
तुलसी सेचयेद्यस्तु चुलुकोदकमात्रकम् ।
पितरस्तृप्तिमेष्यन्ति ब्रह्मलोकं व्रजन्ति हि ॥ [1505]
ददाति ब्राह्मणाना यस्तुलसीदलकोमलम् ।
यमेन पूजितो याति मम लोकं च शाश्वतम् ॥
तुलसीकाष्ठमणिना निर्मितेन प्रयत्नत ।
गायत्र्यादिजपं कुर्यात्तस्य नास्ति महद्भयम् ॥
सदा संधारयेद्यस्तु तुलसीमणिमालिकाम् । [1510]
भूतप्रेतपिशाचैस्तु न दृष्टो वर्तते सुखी ॥
कण्ठे भुजद्वये यस्तु धारयेत्तुलसीमणिम् ।
यमदूता महात्मानो नमस्यन्ति हि तं द्विजम् ॥
कण्टकावरणं वापि प्राकारं वापि भूपते ।
तुलस्या कुरुते यस्तु मम लोकं स गच्छति ॥ [1515]
योऽर्चयेद्धरिपादाब्ज तुलसीकोमलैर्दलैः ।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कदाचन ॥
तुलसीकाननं यत्र यत्र पद्मवनानि च ।
वसन्ति वैष्णवा यत्र तत्र संनिहितो हरि ॥
तुलसीमञ्जरीभिस्तु पितॄनर्चन्ति ये नराः । [1520]
प्रहृष्टा पितर सर्वे मम लोकं व्रजन्ति हि ॥
गङ्गा तु तुलसीं चैव सर्वकालेषु संस्मरेत् ।
दु स्वप्ने दुर्निमित्ते च दुष्टभावे क्षुते खले ॥
तस्मात्त्वं पितृकार्येषु पितॄनर्चय मा स्मरन् ।
पितरस्ते प्रदास्यन्ति यत्ते मनसि रोचते ॥ [1525]
ब्रह्मा देवास्तथा सिद्धा यक्षगन्धर्वकिनरा ।
पितरो लोकपालाश्च पार्थैता मम मूर्तय· ॥
अमृतांशु कठोरांशुराकाशो भूमिरेव च ।
आप पर्वतजालानि विद्धि पार्थ ममांशव ॥
महानद्यो महाभाग वायुरग्निश्च सागर । [1530]
अव्यक्त व्यक्तरूप च विद्धि मां पाण्डुनन्दन ॥
अर्च्यो वन्द्यस्तथा ध्येयो जप्य स्तुत्यः परा गतिः ।
मामेवं विद्धि भूपाल मयि सर्वं प्रतिष्ठितम् ॥
ममार्चनपरो नित्यं मामेव समुपैष्यसि ।
तव देहाभिमानस्य कर्ताह सर्वदानघ ॥ [1535]
किं तु वक्ष्याम्यहं पार्थ यत्ते मनसि वर्तते ।
तदाचक्ष्व विचार्य त्वमत्र मुञ्चसि साध्वसम् ॥

वैशंपायन उवाच ।

इत्युक्तो देवदेवेन धर्मपुत्रो महामतिः ।
मति चक्रे पुनर्धर्माञ्श्रोतुं देवे जनार्दने ॥
इद भगवता प्रोक्तं देवदेवेन चक्रिणा । [1540]
य श्रृणोति सदा भक्त्या पातकेभ्य स मुच्यते ।

Colophon.

वैशंपायन उवाच ।

कृपां विज्ञाय देवस्य धर्मराजो महामति ।
पुनरेवापरं धर्मं पप्रच्छ द्विजसंसदि ॥

---

बहु ). — ( L. 1492 ) G(ed ) गौर्वापि ( for गावो वा ) — ( L 1493 ) G(ed ) क्षणार्थं वातच्छायाया ( for $^a$ ) $D_1$ तिष्ठन्तोके ( for °न्नाक ) — ( L 1497 ) $D_1$ मनुजोत्तम ( for °मा ) — ( L. 1498 ) G(ed ) सर्वान्लोकान्समुत्तीर्य ( for $^a$ ) — ( L 1500 ) $G_1$ G(ed ) धरो ( for करो ) $D_1$ -मृत्तिका , $G_2$ -मृद्गणै ( for मृत्कणै. ). — ( L 1501 ) $G_1$ धन्यस्य , $M_1$ तस्य स्यान् , G(ed ) शिरासि ( for तत्रासीन् ). $D_1$ तस्येव पत्र तत्रस्थो ( for $^a$ ) G(ed ) कला चन्द्रस्य धारयेत् ( for $^b$ ). — ( L 1502 ) $D_1$ G(ed ) यावन्त्यु( $D_1$ °न्त्य )पहृतानि वै , $G_1$ °न्त्युत्पाटयान्ति वै ( for $^b$ ). — ( L. 1504 ) G(ed ) -मात्रत. ( for °कम् ). — ( L 1506 ) G(ed.) यो ददाति ब्राह्मणाय ( for $^a$ ). $D_1$ $M_1$ G(ed ) तुलस्या कोमलं दलम् ( for $^a$ ). — ( L. 1507 ) G(ed ) सनातनम् ( for च शाश्वतम् ) — ( L 1509 ) $G_2$ कुर्वन् ( for कुर्यात् ) G(ed ) तस्य स्थानं ममालय ( for $^b$ ) — ( L 1511 ) G(ed ) स्पृष्टो ( for दृष्टो ). — ( L 1512 ) After line $1512^a$, G(ed ) ins

103** कर्णयोर्वा शिरस्यथ ।
धारयेद्यस्तु तुलसीमणिमाला नरोत्तम ॥

— ( L 1513 ) G(ed ) महात्मानं ( for °नो ) — ( L 1514 ) $D_1$ भूतले ( for भूपते ). — ( L 1520 ) $D_1$ मानवा· ( for ये नरा· ). — ( L. 1521 ) G(ed ) तुष्यन्ति पितरस्तस्य ( for $^a$ ). — ( L 1523 ) $M_1$ दु स्वप्ने वा दुर्निमित्ते ( for $^a$ ) $D_1$ $M_1$ क्षुतस्खले , $G_2$ क्षुधे खिले ( for क्षुते खले ) — ( L 1525 ) $G_2$ G(ed ) प्रदास्यन्ते ( for °न्ति ) — ( L 1526 ) $G_1$ यक्षा ( for सिद्धा ). $G_1$ रक्षो ( for यक्ष- ) — ( L. 1529 ) G(ed ) [ए]ते वै ( for पार्थ ) $D_1$ $G_1$ $M_1$ ममांशका ( for °व· ) — ( L 1530 ) G(ed ) सागरा ( for °र ) — For line 1531, $D_1$ subst.

104** आद्यो वन्द्य श्रिया ध्येयो सदा जप्यपरा गति· ।

— ( L. 1535 ) कर्ताहं पाण्डुनन्दन ( for $^b$ ) — ( L 1538 ) G(ed ) महात्मना ( for °मति ) — ( L 1539 ) $M_1$ तथा ( for पुनर् ) G(ed.) ध्यात्वा ( for धर्मान् ) G(ed ) श्रोतु धर्माञ्जनार्दनात् ( for $^b$ ) — ( L 1541 ) $G_1$ पातकैस्तु , $G_2$ °कैस्तद् ( for °केभ्य ). $M_1$ पातकै स तु मुच्यते ( for $^b$ )

Colophon — *Sub-parvan* $D_1$ $G_1$ $M_1$ आश्चर्यपर्व , $G_2$ $M_1$ G(ed ) शेषधर्मा — *Adhy name* $D_1$ शेषधर्मे सकळधर्मप्रशमनम् , G(ed ) नानाधर्मप्रशंसा — *Adhy no* $D_1$ $G_{1,2}$ $M_1$ G(ed ) 12.

$D_1$ $G_2$ युधिष्ठिर ( for वैशंपायन ). — ( L. 1542 ) G(ed ) धर्मपुत्रो ( for °राजो ). — ( L. 1543 ) G(ed.) पृष्टवान्गरुड-

युधिष्ठिर उवाच ।

यज्ञमूर्ते सहस्राक्ष धर्ममूर्ते नमोऽस्तु ते ।
पूजाभिषेककर्माणि कथयस्व ममानघ ॥ [ 1545 ]

श्रीभगवानुवाच ।

शृणु पार्थ प्रवक्ष्यामि पुण्यकालं च पूजनम् ।
पूजाद्रव्यं च धर्मं च ब्राह्मणानां प्रपूजनम् ॥
द्वादश्यां पौर्णमास्यां च एकादश्यां नृपोत्तम ।
सोमसूर्योपरागे च संक्रान्तावयने शुभे ।
सिद्धयोगे पुण्यदिने व्यतीपाते च वैधृतौ ॥ [ 1550 ]
पुण्यक्षेत्रे पुण्यकाले पुण्यर्क्षे पाण्डुनन्दन ॥
शन्यश्विन्यां बुधाश्विन्यां माघमासे नृपात्मज ।
वस्त्रपूतेन पयसा तथा पञ्चामृतेन च ।
पुष्पगन्धोदकैश्चैव य स्नापयति केशवम् ॥
नैवेद्यैर्विविधाकारैर्भक्ष्यमुख्यैर्नृपोत्तम । [ 1555 ]
यः पूजयति मां पार्थ शूलपाणिमथापि वा ॥
मातृत पितृतश्चैव प्रियाया वंशजानपि ।
सर्वान्वंशान्समुद्धृत्य देवगन्धर्वसेवित ॥
तप्तकाञ्चनसंवीतैर्नानामणिविराजितैः ।
किङ्किणीजालसंयुक्तैर्यानैर्हंसनियच्त्रितैः ॥ [ 1560 ]
अप्सरोगणसकीर्णैर्विमानैरुपशोभितः ।
याम्यादिषु च लोकेषु भुक्त्वा भोगान्यथेच्छया ।
मम लोकमनुप्राप्य तत्रैव परिमुच्यते ॥
शंकरं मां च सर्वेशं भेदबुद्धिविवर्जित ।
यः पूजयेत्सदा भक्त्या काङ्क्षितं लोकमेष्यति ॥ [ 1565 ]
केतकीकरवीराब्जचम्पकाजातिमल्लिकाः ।
अमूनि ये प्रयच्छन्ति पुष्पाणि सुरभीणि मे ॥
तां पूजां प्रतिगृह्णाति रुद्रो वै लोकशासन ।
पालकोऽहं च राजेन्द्र ह्यावयोरन्तरं न च ॥
पूजयस्व च मां पार्थ तत्र त्वं सुखमेष्यसि ॥ [ 1570 ]
तिलतैलान्वितं दीपं मम रुद्रस्य भारत ।
दत्त्वा नर सर्वकामान्संप्राप्नोति न संशय ॥
घृतदीपं तु यो दद्यान्महादेवस्य संनिधौ ।
स मुक्त॰ सर्वपापेभ्यः सर्वयज्ञफलं लभेत् ॥
यद्यदिष्टतमं भोज्यं तत्तदीशाय दापयेत् । [ 1575 ]
सर्वपापविनिर्मुक्तो मम लोकं स गच्छति ॥
कार्त्तिके मासि माघे च दीपं मम गृहे सदा ।
वर्तयस्व च कौन्तेय ब्राह्मणान्भोजयस्व ह ।
भोजिते ब्राह्मणे सृष्टं मम तृप्तिर्भवेद्ध्रुवम् ॥
यद्यदिष्टतम भोज्यं तत्तद्विप्राय दापयेत् । [ 1580 ]
स याति ब्रह्मभवनं सर्वमोहविवर्जितम् ॥
भ्रूणहाप्यन्नदानेन शुद्धो भवति भूपते ।
नान्नतोयसमं दानं त्रिषु लोकेषु विद्यते ॥
महापातकयुक्तो वा युक्तो वा सर्वपातकै ।
शृणुष्व चित्रं भूपाल शुद्ध्यत्यन्नजलप्रद॰ ॥ [ 1585 ]
शरीरमन्नज प्राहु प्राणमन्न प्रचक्षते ।
तस्मादन्नप्रदो ज्ञेयः प्राणदो नात्र संशय॰ ॥
अन्नदस्य कुले जाता आसहस्रं नृपोत्तम ।
नरकं ते न पश्यन्ति तस्मादन्नप्रदो वर ॥
पथि श्रान्तं द्विजं दृष्ट्वा यस्तु भक्त्या प्रपूजयेत् । [ 1590 ]
सर्वदेवगणाः पूर्वमन्न दत्त्वा तु धर्मज ॥
अन्नदानेन मतिमान्ब्रह्मलोकं स गच्छति ॥
आयान्मम तिथिं राजन्सर्वदेवा अनुव्रता ।
तस्मिंस्तुष्टे जगत्तुष्टं देवास्तृप्यन्ति धर्मज ॥
दिवं प्रपेदिरे मुक्तास्तस्मादन्नप्रदो वरः । [ 1595 ]
नास्तिवाक्यं स कृत्वा यो ब्राह्मणे गृहमागते ।
तस्य पापं महाघोरं रौरवं नरकं भवेत् ॥
अन्नं ददाति यो राजन्स सर्वान्कृतवान्मखान् ।
पशुराज्यधनापत्यस्वर्गमोक्षाल्लभेन्नर॰ ।
अन्नदानेन कौन्तेय तस्मादन्नप्रदो वरः ॥ [ 1600 ]
विप्ररूपेण भोक्ताहं विप्ररूपेण पूजित॰ ।
ददामि विप्ररूपेण सर्वान्कामान्नृपोत्तम ॥
पादाभ्यङ्गं भक्तियुक्तो ब्राह्मणानां करोति यः ।
स स्नातः सर्वतीर्थेषु गङ्गास्नानपुरःसरम् ॥
तैलाभ्यङ्गं महाराज ब्राह्मणानां करोति य॰ । [ 1605 ]
स स्नातोऽब्दशत साग्रं गङ्गायां नात्र संशयः ॥
उष्णोदकेन यो राजन्ब्राह्मणान्स्नापयेन्नर॰ ।
स कोटिकुलसंयुक्तो वसेद्ब्रह्मपुरे नरः ॥
कर्मणा मनसा वाचा यो रक्षेदामयान्वितम् ।

ध्वजम् ( for ⁵ ) — G2 om the ref — ( L 1548 ) M1 नराधिप ( for नृपोत्तम ). — G2 om lines 1551-1552. — ( L 1554 ) G2 G(ed) -गन्धादिभिश् ( for -गन्धोदकैश् ). — ( L 1559 ) G1 -विचित्रितै , D2 -विकुट्टिमै , M1 -विघट्टितैः ( for -विराजितै ). — ( L. 1561 ) G1 संवीतैर् ( for -सकीर्णैर् ) — ( L 1562 ) D1 सत्यादिषु ( for याम्या° ). D1 यथेप्सितान् ( for °च्छया ) — ( L. 1566 ) G1 -मल्लिकै॰ ( for °का ) — ( L 1568 ) G(ed) -नाशन॰ ( for -शासन॰ ). — ( L 1571 ) G(ed ) संनिधौ ( for भारत ) — ( L 1572 ) G2 संवृणोति ( for संप्राप्नोति ). —( L. 1573 ) G2 मम रुद्रस्य संनिधौ , M1 G(ed.) मम देवस्य सं° ( for ⁵ ) —( L. 1577 ) G(ed.) च संनिधौ ( for गृहे सदा ). — ( L 1579 ) G(ed ) भोजनं ( for भोजिते ) G(ed ) तृप्त्यै ( for तृप्तिर् ) — ( L 1580 ) ब्राह्मणेभ्यो निवेदयेत् ( for ⁵ ) — ( L 1584 ) G(ed.) -संयुक्तो ( for युक्तो वा ).—( L 1585 ) G2 शुद्ध्यर्थं च ( for शुध्यत्यन्न- ). — G1 om lines 1586-1589. — ( L 1587 ) G2 प्राणदः परिकीर्तित ( for ⁵ ) — ( L 1588 ) D1 आसाहस्रं ( for आस° ). — D1 om lines 1590-1600. — ( L 1593 ) G1 अनुद्रुता॰ ( for °व्रता ) — M1 om. ( hapl. ) lines 1596-1600. — ( L 1596 ) G1 अकृत्वा च ; G(ed.) अकृत्वा तु ( for स कृत्वा यो ). — G1 G(ed.) om line 1597. — G2 om. lines 1604-1605. —( L. 1607 ) D1 G(ed.) प्रियाम्

स याति वज्रिणो लोकं पुनरावृत्तिवर्जितम् ॥ [ 1610 ]
यो ददाति महीपाल निवासं ब्राह्मणाय च ।
दिने दिनेऽश्वमेधस्य फलं प्राप्नोति पुष्कलम् ॥
अन्येभ्य प्रतिगृह्यापि स्वां गामपि पयस्विनीम् ।
यो ददाति च विप्राय स याति ब्रह्मण पदम् ॥
कपिलां वेदविदुषे यो ददाति पयस्विनीम् । [ 1615 ]
स एव रुद्रो भूपाल सर्वदेवप्रपूजित. ॥
विप्राय ब्रह्मविदुषे दद्यादुभयतोमुखीम् ।
तस्यैव वंशजा. सर्वे मम लोके वसन्ति हि ॥
यो मृत्युकाले संप्राप्ते गां ददाति पयस्विनीम् ।
गवां दर्शितमार्गेण ब्रह्मलोकं स गच्छति ॥ [ 1620 ]
व्याधिना पीडितो यस्तु ग्रहनक्षत्रपीडया ।
अपमृत्युं च तान्सर्वान्स तीर्त्वा सुखमश्नुते ॥
अपत्यधनरत्नानि राज्यानि विविधानि च ।
गोदानात्प्राप्यते मर्त्यो निष्पापश्च दिवं व्रजेत् ॥
तस्मात्सर्वप्रयत्नेन गोदानं कुरु भूपते । [ 1625 ]
अनेन ते भवेद्वृद्धि स्वर्गमोक्षौ च सुव्रत ॥
वरिष्ठ· सर्वलोकानां गोप्रदाता नृपोत्तम ।
मत्प्रियो मम भक्तश्च पूज्यो लोकेषु विश्रुत ॥
सदा दानेषु निष्ठस्य सदा शास्त्रानुवादिनः ।
प्रियंवदस्य साधोश्च कृपा मम सदा भवेत् ॥ [ 1630 ]
सर्वलोकप्रभुं वीरं सर्वधातारमच्युतम् ।
योगीश्वर सदानन्दं विद्धि मां भरतर्षभ ॥
स्रष्टारं सर्वभूतानां रक्षितारं जगत्त्रयम् ।
संसारोत्तारणं देव विद्धि मा भरतर्षभ ॥
धर्मदं धर्मशीलानां तापसाना तपःफलम् । [ 1635 ]
ध्यातॄणां ध्यानयोगं मां विद्धि त्व धर्मनन्दन ॥
मया प्रोक्तमिमं धर्मं यः शृणोति मदाश्रय ।
ददामि तस्य वै स्वर्गं यावदाचन्द्रतारकम् ॥

Colophon

युधिष्ठिर उवाच ।

नानाद्रव्याणि देयानि वस्त्रादीनि फलानि च ।
सुगन्धश्च सुपुष्पाणि धान्यानि विविधानि च । [ 1640 ]
कस्य देयानि योगीन्द्र तन्मे त्वं कृपया वद ॥

श्रीभगवानुवाच ।

सर्वेषामपि दानानां कर्ताहं पाण्डुनन्दन ।
मम मूर्तिधरायेह विप्रायैव ददस्व ह ॥
वस्त्रं ददाति यो राजन्ब्राह्मणाय सदक्षिणम् ।
शिवलोकमवाप्नोति शतवंशसमन्वित ॥ [ 1645 ]
कौबेरं कम्बलाद्यानि कञ्चुकान्सूर्यसंनिधिम् ।
चित्राम्बरप्रदाता च स्वर्गलोकाधिपो भवेत् ॥
सुरक्तवस्त्रदश्चैव नृप माञ्जिष्ठदस्तथा ।
चीराम्बरप्रदाता च मम लोकं स गच्छति ॥
यानदश्छत्रदश्चैव पादुकां च ददाति यः । [ 1650 ]
उपानह्प्रदाता च सर्वलोकवरो भवेत् ॥
गजाश्वमहिषान्राजन्यो ददाति सदक्षिणम् ।
अपमृत्युभयान्मुक्तस्तथा मेषप्रद सुखी ॥
शत्रूञ्जयति संग्रामे राजा जयति मण्डलम् ।
तस्य भृत्यः शत्रुजन' पूज्य सर्वधनुर्भृताम् ॥ [ 1655 ]
तस्मात्त्वं भूभृता श्रेष्ठ कुरु दानं मयोदितम् ॥
अजकृष्णाजिनं दान सर्वव्याधिविनाशनम् ।
आयुष्करं प्रियं मृत्यो· स्वर्गदं स्वर्गमिच्छताम् ॥
अनड्वान्दत्तमात्रेण पापव्याधिविनाशनम् ।
दातारं ब्रह्मणो लोकं नयत्येव न संशय । [ 1660 ]
कृष्णाजिनप्रदातॄणां क्षयगुल्मादिनाशनः ॥

---

( for नर· ). — ( L. 1612 ) G(ed.) आप्नोति ( for प्रा° ). G2 मानव· ( for पुष्कलम् ). — ( L. 1613 ) D1 -गृह्णाति ( for -गृह्यापि ). G1 अन्येभ्यो ब्राह्मणेभ्यश्च ( for $^a$ ) D1 यस्तु गा हि ( for स्वा गामपि ). — ( L. 1616 ) D1 रुद्रलोके ( for एव रुद्रो ). — ( L 1617 ) D1 प्रियाय वेदविदुषे ( for $^a$ ) — ( L. 1620 ) D1 G1 G(ed.) गवा ( for गवां ). — ( L 1621 ) D1 M1 व्याध्यादि ( for व्याधिना ). D1 -पीडित' ( for -पीडया ) — ( L. 1622 ) M1 गा दत्त्वा ( for तान्सर्वान् ) — ( L. 1626 ) G(ed.) ऋद्धि ( for वृद्धि ) G2 च भारत, G(ed) सुखप्रदौ ( for च सुव्रत ). D1 स्वर्गमोक्षसुखानि च ( for $^b$ ) — ( L 1627 ) D1 गोदानं च ; G1 G(ed.) गोप्रदानाम्, M1 °दान ( for °दाता ). — ( L 1629 ) G1 दानैक-, G(ed ) दाने सु- ( for दानेषु ). G(ed ) दानेषु ( for शास्त्रानु- ) — ( L 1631 ) G(ed) -दातारम् ( for -धा° ) — ( L 1634 ) D1 संसाररोगोत्तरण, M1 G(ed ) °रोत्तारकं देवं ( for $^a$ ). — ( L 1636 ) M1 सिद्धिद पाण्डुनन्दन ( for $^b$ ).

COLOPHON. — *Sub-parvan :* D1 आश्चर्यपर्व· — *Adhy. name* D1 G(ed) शेषधर्मे दानप्रशसा, G1 2 शेषधर्माः. — *Adhy no.* D1 G1. 2 M1 G(ed ) 13

G2 om. line 1640 — ( L 1640) D1 गन्धधूप-, M1 सुगन्धानि ( for सुगन्धश्च ). — ( L. 1641 ) D1 त्वमेव ( for तन्मे त्व ) — ( L 1643 ) D1 रूप- ( for मूर्ति- ). — ( L 1646 ) G(ed ) कौशेय कम्बलादीनि ( for $^a$ ) G(ed ) कञ्चुक सूर्यसनिभम् ( for $^b$ ) — For line 1646, G(ed ) ins. ·

105** यो ददाति च विप्राय स्वर्गलोक स गच्छति ।

— ( L 1647 ) D1 स्वर्गलोक स गच्छति ( for $^b$ ). — ( L. 1649 ) M1 G(ed.) चीनाम्बर- ( for चीरा° ). — After line 1649, G(ed ) ins

106** वैशाखपौर्णमास्या च ब्राह्मणाना विशेषत ।

— ( L 1651 ) G1 लोकेश्वरो, M1 G(ed ) -लोकचरो ( for °वरो ) — ( L 1653 ) D1 G1 M1 अपमृत्यु जयत्याशु ( for $^a$ ) — ( L. 1655 ) G1 M1 पुण्यजना ; G1 G(ed.) शत्रुजनै. ( for °जन· ). D1 पूज्य· सर्वधनुर्भृत' ( for $^b$ ) — ( L 1657 ) D1 G(ed ) आर्द्र-

दारिद्र्यनाशनं राजन्नपमृत्युभयापहम् ।
दारुणा निर्मितं पात्रं पूरितं गन्धवारिणा ॥
यो राजन्सुखजेभ्यस्तु दक्षिणां च ददाति च ।
उपेन्द्रो भगवान्विष्णु. सुधामस्मै प्रयच्छति । [ 1665 ]
सुधां पिबन्रुक्मपात्रे स्वर्गलोके महीयते ॥
यो राजल्लोहपात्रं तु स्वादुपानप्रपूरितम् ।
ददाति भूसुरेभ्यस्तु तस्य पुण्यफलं शृणु ॥
मार्गे सुधां पिबन्राजन्यमलोकं स गच्छति ।
पूजितो धर्मराजेन चन्द्रलोकं स गच्छति ॥ [ 1670 ]
ताम्रपात्रं महाराज गन्धोदकसमन्वितम् ।
ददाति ब्राह्मणानां य सूर्यलोकं स गच्छति ॥
रजतं राजशार्दूल पात्रं जलसमन्वितम् ।
वेदशास्त्रविदे दद्यात्तस्य पुण्यं ब्रवीमि ते ॥
पञ्चाशद्युगपर्यन्तं चन्द्रलोके सुखी भवेत् । [ 1675 ]
ततो भूमिं समासाद्य चक्रवर्तीह जायते ॥
सौवर्णनिर्मितं पात्रं स्वादुपानप्रपूरितम् ।
श्रोत्रियाय तु यो दद्याद्दरिद्राय विशेषत· ।
तस्य पुण्यफलं चित्रं सावधानमति. शृणु ॥
यक्षकिंनरगन्धर्वैश्चारणाद्यैरभिष्टुतः । [ 1680 ]
सुधापानं प्रकुर्वाण प्रयाति मम मन्दिरम् ॥
पञ्चकोटिकुलैर्युक्तो मेरुमूर्ध्नि चिरं वसेत् ।
भूलोकं समनुप्राप्य सार्वभौमश्च जायते ॥
इष्ट्वा दिव्यक्रतून्सर्वांस्तथा जित्वा भुवःस्थलम् ।
दत्त्वा सर्वाणि दानानि मम सायुज्यमश्नुते ॥ [ 1685 ]
कांस्यपात्रं तु यो दद्याद्वस्त्रदक्षिणसंयुतम् ।
ददामि विष्णवेत्युक्त्वा यो ददाति सुवाग्मिने ।
कोटिवंशसमायुक्तः सत्यलोके सुखी भवेत् ॥
तस्मात्सर्वेषु कालेषु यत्किंचिद्वै ददाति च ।
मम बुद्ध्या महीपाल तत्सर्वं मेरुतां व्रजेत् ॥ [ 1690 ]
नव वै मृण्मयं पात्रं स्वादूदकसमन्वितम् ।
दरिद्रोऽपि च मां ध्यात्वा मम सालोक्यमश्नुते ॥
वृद्धेभ्यो ब्राह्मणेभ्यस्तु यतये योगिने नृप ।
यद्दत्तं यद्धुतं तप्तं तत्सर्वं मदनुग्रहात् ॥
कोटिकोटिगुणं राजन्स्वल्पं वापि महद्भवेत् । [ 1095 ]
अक्षय्यलोकमाप्नोति ह्यक्षय्यं सुखमश्नुते ॥
वृद्धेभ्यो ब्राह्मणेभ्यस्तु यतये रोगिणे नृप ।
वस्त्रयष्ट्यजिन पथ्यमौषधं च ददाति य ।
सर्वान्वंशान्समुद्धृत्य ब्रह्मलोकं स गच्छति ॥
हिरण्यं राजतं वापि यो दद्याद्दानमुत्तमम् । [ 1700 ]
महदैश्वर्यमाप्नोति ब्रह्मणा परिपूजित ॥
पशुपुत्रधनादीन्वै विन्देत्सौवर्णदानतः ।
पुण्यलोकानिमान्सर्वानमृतत्वं च गच्छति ॥
रजतं निष्कमात्रं तु यो दद्यात्पाण्डुनन्दन ।
शिवलोकमवाप्नोति शतवंशसमन्वितः ॥ [ 1705 ]
सीसं कांस्यं तथा ताम्रं पलत्रितयसंमितम् ॥
यो ददाति नरश्रेष्ठो रुद्रलोकं स गच्छति ॥
अयस्कान्तं(?) यतीनां तु यो दद्यात्पात्रमुत्तमम् ।
स कोटिकुलसंयुक्तो देवलोके चिरं वसेत् ॥
काषायं च तथा भैक्षं कौपीनं कम्बलं तु वा । [ 1710 ]
यो ददाति यतीनां तु स मुक्तो नात्र संशय· ॥
कार्त्तिक्यां पौर्णमास्यां वा आषाढे वापि भूपते ।
वृषभं विसृजेद्यस्तु तस्य पुण्यफलं शृणु ॥
सर्वजन्मार्जितै पापैर्विमुक्तो रुद्ररूपभाक् ।
कुलसप्ततिसंयुक्तो रुद्रेण सह मोदते ॥ [ 1715 ]
पितरस्तस्य तृप्यन्ति देवास्त्रिदशपुंगवाः ।
नरकस्था दिवं यान्ति दिविस्था ब्रह्मणः पदम् ।
ब्रह्मस्था विष्णुलोकं च सत्यं सत्यं मयोदितम् ॥
शिवलिङ्गाकृतिं कृत्वा महिषं य समुत्सृजेत् ।
यमस्य यातना तस्य नैव तत्र मयोदितम् ॥ [ 1720 ]
यमेन पूजित· सम्यक्सुरलोकं व्रजेद्ध्रुवम् ॥
अनड्वाहं चिरं कालं कर्षयित्वा नृपोत्तम ।
उत्सृजेद्वार्धके भावे तस्य पुण्यं वदामि ते ॥
इहलोके सुखं भुक्त्वा पुत्रपौत्रादिसंयुतः ।

---

( for अज- ) — $G_2$ om. lines 1660–1661.—( L 1662 ) $D_1$ अपमृत्यु प्रणश्यति, $G_1$ $M_1$ °मृत्युश्च नश्यति, G(ed) °मृत्यु च नाशयेत् ( for $^b$ ) —( L 1664 ) G(ed) स द्विजेभ्यश् ( for सुख° ) —( L 1667 ) $D_1$ -पानं प्र-; $G_2$ -पानक- ( for -पान-प्र- ) —( L 1670 ) $D_1$ $M_1$ यम- ( for धर्म- ). —( L. 1673 ) $M_1$ G(ed) राजत ( for र° ) $G_1$ पात्र जल-; $M_1$ पात्र वारि- ( for पात्रे जल- ) —( L 1675 ) $G_{1\ 2}$ ब्रह्मलोके ( for ( for चन्द्र° ) G(ed.) महीयते ( for सुखी भवेत् ) —( L. 1679 ) $D_1$ $G_2$ -मना ( for मति ) —( L 1684 ) $M_1$ दिव्यान्कुरून् ( for दिव्यक्रतून् ) G(ed) राजस् ( for सर्वांस् ) and निर्जित्य च ( for तथा जित्वा ). —( L 1685 ) $G_2$ मम लोकं स गच्छति ( for $^b$ ) —( L 1686 ) G(ed) -द्वितय- ( for -दक्षिण- ).—( L. 1687 ) G(ed.) भक्तियुक्तस्तु वाग्मिने ( for $^b$ ). —( L. 1688 ) $G_1$ महीयते ( for सुखी भवेत् ). —( L 1690 ) G(ed) मयि भक्त्या ( for मम बुद्ध्या ) — $G_{1\ 2}$ om lines 1694–1696 —( L 1702 ) $G_2$ -वस्त्र- ( for -पुत्र- ) — $D_1$ — $D_1$ om (hapl) lines 1704–1707 —( L. 1706 ) G(ed) -सगुतम् ( for -संमि° ) —( L 1707 ) $M_1$ विष्णु- ( for रुद्र- ). —( L 1708 ) $D_1$ आयरकं तु; G(ed) मृण्मयं च ( for अयस्कान्त ) —( L 1710 ) $D_1$ पादुका; $G_2$ $M_1$ चन्दन ( for च तथा ). —( L 1712 ) G(ed) आषाढ्यां ( for °ढे ) —( L 1714 ) $G_2$ $M_1$ रूपधृक् ( for °भाक् ). —( L. 1715 ) $G_2$ कुल सप्तकुलैर्युक्तो ( for $^a$ ) $M_1$ विष्णुना ( for रुद्रेण ) —( L 1718 ) G(ed) तत्रस्था ( for ब्रह्मस्था ). —( L. 1719 ) $M_1$ -लिङ्गाङ्कित ( for लिङ्गाकृति ) —( L. 1721 ) G(ed) व्रजत्यसौ ( for व्रजेद् ध्रुवम् ) —( L 1722 ) G(ed.) वृषभं य ( for अनड्वाह ) — ( L. 1723 ) G(ed) काले ( for भावे ). $G_2$ योत्सृजेद् ( for उ° ). — For line 1723, $D_1$ subst. :

सर्वान्वंशान्समुद्धृत्य मम सालोक्यमश्नुते ॥ [1725]
ददाति च सुवृत्ताय महिषीं च पयस्विनीम् ।
अपमृत्युं जयत्येव यमेन सह मोदते ॥
दर्शे प्रसूतिका गा च महिषीं च नृपोत्तम ।
अपमृत्यु दरिद्राय दत्त्वा तीर्त्वा दिवं व्रजेत् ॥
ताम्बूलं नित्यशो राजन्यो दद्याद्ब्राह्मणाय च । [1730]
तस्याहं च कुरुश्रेष्ठ ददामि श्रीयुतं पदम् ।
अष्टैश्वर्यं भवेदत्र ताम्बूलात्कुरुनन्दन ॥
क्षीरदानं शिशूना तु स्वर्गलोकप्रदं ध्रुवम् ।
शूलादिरोगयुक्ताय ब्राह्मणाय ददाति यः ॥
क्षीरोदस्योत्तरे तीरे पिबति क्षीरमुत्तमम् । [1735]
मधूनि दधितक्राणि घृतानि च नृपोत्तम ।
यो दद्याद्ब्राह्मणेभ्यस्तु तस्य नो मृत्युतो भयम् ॥
इक्षुदण्डं गुडं क्षीरं ब्राह्मणाय प्रयच्छति ।
पथि श्रान्ताय यो दद्यात्सततं मयि तत्परः ॥
सर्वलोकप्रभुश्चैव सर्वयज्ञेषु दीक्षित । [1740]
सर्वदानफल तस्य सर्वलोकं च शाश्वतम् ॥
नालिकेरफलं दद्याच्चैत्रवैशाखमासयो ।
कौबेरं लोकमाप्नोति यमेन परिपूजितः ॥
युगाना त्रिदशं स्थित्वा तत कैलासमेति च ।
तत्र पञ्चयुगं स्थित्वा ब्रह्मलोके महीयते ॥ [1745]
शर्करारससयुक्तं नालिकेरं ददाति य ।
तस्य पार्श्वे प्रसन्नोऽहं देवास्तस्य वशानुगाः ॥
एलालवङ्गकर्पूरमिश्रित शीतलं जलम् ।
ददन्मार्गे सुधां पीत्वा मम लोकं स गच्छति ॥
मार्गशीर्षे महाराज मरीचि लवणं ददन् । [1750]
सर्वपापविनिर्मुक्तो व्रजेद्रुद्रस्य मन्दिरम् ॥
इन्धनं कम्बलं वस्त्रमुपानत्कुङ्कुमं घृतम् ।
मित्रलोकमवाप्नोति सर्वसिद्धनिषेवित ॥
ज्येष्ठे तु सर्वबीजानि कृषिक्षेत्रशकृज्जलै ।
ब्राह्मणानां सहायार्थं धनैरपि च कर्मणा । [1755]
कुरुते यः सदा भक्त्या तस्य पुण्यफल शृणु ॥
मातृत पितृतश्चैव दशकोटिकुलान्वित ।
गन्धर्वै. स्तूयमानस्तु मम लोकं स गच्छति ॥
सुशीलो ब्राह्मणो भक्त. स च मे सतत प्रिय ।
तेन पूतमिदं सर्वं जगत्स्थावरजङ्गमम् ॥ [1760]

घ्नन्तं शपन्त परुषं वदन्त
यो ब्राह्मणं न प्रणमेद्यथार्हम् ।
स पापकृद्ब्रह्मदवाग्निदग्धो
दण्ड्यश्च वध्यश्च न चास्मदीय ॥
प्रियो यथा ब्राह्मणपुगवो मे [1765]
तथा न लक्ष्मी स्वपुर महात्मन् ।
त्रिविष्टपे ब्रह्मपुरे वसेत्स
त्वया हि पूज्यो गुरुदेवतात्मा ॥

तस्मात्त्वमपि राजेन्द्र ब्रह्मभक्त सदा भव ।
तस्मिंस्तुष्टे धरा सर्वा फलत्येव न संशय ॥ [1770]
एवमाद्या महाभाग धर्मा बहुविधा नृप ।
तत्र सारं प्रवक्ष्यामि धर्मं तव हिताय च ॥
मयि भक्तिर्यदि भवेद्दानकाले नृपोत्तम ।
अनन्तफलद ज्ञेयं तद्दानं सात्त्विकं भवेत् ॥
इद रहस्यमायुष्यं य शृणोति सदा नर । [1775]
सर्वदानफलं तस्य सर्वपापक्षयो भवेत् ॥

Colophon

वैशंपायन उवाच ।
श्रुत्वैवं धर्मसंवाद धर्मपुत्रो यदूत्तमात् ।

---

107** य उत्सृजेदर्द्धकेपि तस्य पुण्यफलं शृणु ।
— ( L. 1725 ) G2 मम लोक स गच्छति ( for $^{b}$ ) — D1 om. (hapl.) lines 1729-1736 — ( L 1729 ) G1 दरिद्राच, G2 G(ed.) °द्रे च ( for °द्राय ). — ( 1732 ) M1 G(ed.) अत्यैश्वर्यं ( for अष्टै° ). — ( L 1738 ) D1 G2 M1 G(ed) इक्षुक्षीरं गुड ( M1 घृतं ) दण्डं ( for $^{a}$ ). G(ed) महात्मने ( for प्रयच्छति ) — ( L 1741 ) M1 सर्वलोकश्च शाश्वत ( for $^{b}$ ) — ( L 1745 ) M1 पञ्चशत ( for °युग ). — ( L 1746 ) M1 -मधु- ( for रस- ). — ( L 1747 ) D1 देवस्तस्य च शंकर ( for $^{b}$ ). — ( L 1748 ) G2 -समितं ( for -मिश्रित ) — ( L 1750 ) G(ed ) तथा माघे ( for महाराज ) — ( L 1751 ) G2 इन्द्रस्य, M1 विष्णोश्च ( for रुद्रस्य ) D1 सनिधिम् ( for मन्दिरम् ) — ( L 1752 ) G1 छत्र ; G(ed.) चित्रं ( for वस्त्र ) D1 G2 कञ्चुकं ( for कुङ्कुम ). — ( L 1753 ) M1 -निषेवितम् ( for °त ) D1 मित्रसिद्धनिषेवितम् ( for $^{b}$ ). — After line 1753, D1 M1 ins

108** पुष्ये माघे ददन्नेतत्सर्वेषां मित्रता व्रजेत् ।
[ M1 पुष्यमासे ददत्तैलं ( for $^{a}$ ). ]

While G(ed) ins after line 1553

109** पुष्यमासे ददन्नेतान्सर्वचारित्रता व्रजेत् ।
— ( L 1755 ) G1 G(ed) ब्राह्मणव्य( G1 °णे व्य )वसायार्थं ( for $^{a}$ ) — ( L 1759) D1 तस्याहं स च मत्प्रिय , G1 मम देहाच्च स प्रिय , M1 तस्य मेऽह स च प्रिय , G(ed) यत्स्वहंकारवर्जित ( for $^{b}$ ) —( L 1763 ) G1 2 -मध्ये ( for -दग्धो ). — ( L. 1764 ) D1 G1 2 G(ed) दण्डश्च ( for दण्ड्यश्च ) — ( L 1765 ) G2 -पुंगवेन ( for °वो मे ) — ( L 1766 ) M1 च लक्ष्म्या ( for न लक्ष्मी ) D1 यथा च लक्ष्मी स्वपुर यथात्मन् , G2 मेवा च लक्ष्म्या स्वपुरे महात्मन — ( L 1770 ) G(ed) सर्वधर्मा फलन्ति ( for धरा सर्वा फलति ) —( L 1771 ) D1 G2 महाभागा , G1 °राज- ( for °भाग ) G(ed) बहुगुणा ( for °विधा ) — Before line 1775, D1 G(ed) ins वैशपायन

COLOPHON — *Sub-parvan* D1 G1 आश्चर्यपर्व , D1 G1 2 M1 G(ed) शेषधर्मा — *Adhy. name* G1 दानप्रशंसा , G(ed) नानादानप्रशंसा. — *Adhy no* D1 G1, 2 M1 G(ed.) 14.

पप्रच्छ तं नमस्कृत्य धर्मं तव पितामह ॥

युधिष्ठिर उवाच ।

शङ्खचक्रगदापाणे द्वारकानिलयाच्युत ।
गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागतम् ॥ [1780]
यानि मङ्गलपुष्पाणि फलानि रसवन्ति च ।
साळग्रामशिलादाने लिङ्गदाने च यत्फलम् ॥
पुष्पदानानि चित्राणि स्फटिकादीनि वृष्णिप ।
एषां दानेषु यत्पुण्यं तन्ममाचक्ष्व विश्वधृक् ॥

श्रीभगवानुवाच ।

माघमासं पुरस्कृत्य प्रपां कृत्वा सुशोभनाम् । [1785]
सर्वेषामेव दानानां शीतं पानीयमुत्तमम् ।
यो ददाति दयायुक्तस्तस्य पुण्यं वदामि ते ॥
इहलोके चिरं भुक्त्वा सर्वैश्वर्यसमन्वितः ।
ब्रह्मलोकमवाप्नोति सत्यं सत्यं मयोदितम् ॥
चतुष्पथे महामार्गे शालां कृत्वा सुशोभनाम् । [1790]
पानीयं च यवागूं च कृष्णधान्यमयीमपि ।
पथि श्रान्ताय यो दद्यात्तस्य पुण्यं वदामि ते ॥
शिबिकायानमारोप्य देवदूता प्रियंवदाः ।
व्यजनानि प्रधून्वन्तो विशन्ति च सुरालयम् ॥
विमाने सूर्यसंकाशे समारोप्य ममाज्ञया । [1795]
प्रविशन्ति च तं लोके ततस्तु ब्रह्मण पदम् ॥
तत्र कोटियुगं स्थित्वा द्विकोटिकुलसंयुतः ।
मम लोकमवाप्नोति तत्रैव परिमुच्यते ॥
कस्तूरीकर्पूरयुतं श्रीगन्धं तु द्विजातये ।
यो ददाति नरश्रेष्ठ सोमलोके सुखी भवेत् ॥ [1800]
कपित्थदो दिवं याति कौबेरं पनसप्रद ।
चूतजम्बूफलं दत्त्वा सूर्यलोके महीयते ॥
शर्करामधुरायुक्तं पक्वं रम्भाफलं नर ।
यो ददाति द्विजेभ्यस्तु सुरलोके सुखी भवेत् ॥
अपूपभक्ष्यभोज्यानि ददन्विप्राय भक्तिमान् । [1805]
ध्रुवलोकमवाप्नोति यावदाचन्द्रतारकम् ॥
वारुणं लोकमाप्नोति महेशं लवणप्रदः ॥
रूक्षद्रव्यप्रदानेन तिलगोधूममुद्गकान् ।
कृष्णधान्यं यवव्रीहीन्गन्धकं पिप्पलादिकम् ।
एतेषां तु प्रदानेन ब्रह्मलोकं प्रयाति वै ॥ [1810]
शाकमूलप्रदातॄणां तथा भोजनपात्रकान् ।
सुरलोकं स्थिरं राजन्मम भक्तिपरो यदि ॥
मल्लिकाजातिपुष्पाणि केतकीचम्पकानि च ।
ददामि विष्णवेत्युक्त्वा यो ददाति द्विजातये ।
तस्य चैवानिशं पार्थ योगक्षेमं वहाम्यहम् ॥ [1815]
साळग्रामशिलादाने ह्येतेषां तु फलं भवेत् ॥
साळग्रामशिलादानं यो ददाति कुरूद्वह ।
तस्य पुण्यफलं चित्रं सावधानमना शृणु ॥
चतुःसागरपर्यन्ता सशैलवनकाननाम् ।
दत्त्वा यत्फलमाप्नोति साळग्रामात्तदश्नुते ॥ [1820]
साळग्रामशिलायास्तु मम चक्रं प्रशस्यते ।
तद्दानं ये प्रयच्छन्ति मत्प्रियान्विद्धि तान्प्रभो ॥
साळग्रामशिला यत्र तत्तीर्थं तत्तपोवनम् ।
तत्रैव मुक्तिं यास्यन्ति मदर्चनपरायणाः ॥
साळग्रामशिलादानमतिदानं प्रकीर्तितम् । [1825]
सर्वेषामेव दानानामुत्तमं तत्प्रचक्षते ॥
साळग्रामं तथा लिङ्गं यो ददाति कुरूद्वह ।
मम लोकमवाप्नोति पुनरावृत्तिवर्जितम् ॥
ब्रह्माण्डकोटिदानेन यत्फलं भवति प्रभो ।
तत्फलं समवाप्नोति शिवलिङ्गप्रदानतः ॥ [1830]
यो ददाति नरो दीपं साळग्रामस्य संनिधौ ।

---

(L 1778) G2 धर्मरूप महामति (for [b]) —(L 1781) G1, 2 विविधानि (for रसवन्ति) —(L. 1783) D1 कृच्छ्राणि, M1 च विभो (for चित्राणि). D1 सुप्रसिद्धानि वृष्णिप (for [b]) —(L 1784) M1 G(ed) दाने च (for दानेषु). M1 विश्वसृट् (for °धृक्) D1 तदिहाचक्ष्व विश्वसृट् (for [b]). — D1 om. (hapl.) lines 1786–1790. —(L. 1786) G1 शीत-, G(ed) शिव (for शीतं) —(L 1788) G2 स्थिर स्थित्वा; M1 चिर स्थित्वा (for चिर भुक्त्वा) —(L 1789) G2 वदाम्यहम् (for मयोदितम्) —(L 1790) G2 महाभाग (for °मार्गे). —(L 1793) D1 M1 शिबिकाया तमारोप्य (for [a]). —(L 1794) D1 M1 प्रधुन्वन्ति (for °न्तो) —(L 1795) G1, 2 G(ed) यमाज्ञया (for म°) —(L 1796) G2 M1 प्रशंसन्ति (for प्रविशन्ति) D1 च लोकेषु, G1 च तं लोकं, G(ed) वसोर्लोके (for च तं लोके) —(L 1798) D1 तत्रैव सुखमश्नुते (for [b]) — For line 1799, G(ed) subst :

110** कर्पूरागरुकस्तूरीयुतं गन्धं द्विजातये ।

—(L. 1800) M1 महीयते (for सुखी भवेत्). —G(ed.) om. lines 1801-1802 —(L. 1803) G1 M1 शर्करामधुसंयुक्तं (for [a]). D1 रम्भापक्वफल नृप (for [b]). — For line 1804, G2 subst. :

111** यो ददन्भूसुरेभ्यस्तु सुरलोके महीयते ।

—(L. 1806) G1, 2 मम (for ध्रुव-). —(L. 1808) G(ed.) रूक्षद्रव्य प्रदत्त्वा च (for [a]) —(L. 1809) G1 G(ed.) यवान् (for यव-) G2 व्रीहिं (for व्रीहीन्) D1 कटुकं; G(ed.) ह्यादक (for गन्धक) —(L. 1810) G(ed) एतदादि- (for एतेषा तु) —(L 1811) G1 -फलादीना; G2 -प्रदा नृणां; G(ed) -प्रदाता च (for °तॄणा) D1 -पात्रकम्, G(ed) °दः (for °कान्) —(L 1812) D1 -लोकस्थितो; M1 -लोकं स्थिर) G(ed) सुरलोके स्थितिस्तस्य (for [a]) — D1 om. line 1816. —(L 1818) D1 M1 -मति. (for -मनाः). —(L. 1820) G(ed) दत्त्वा भूमिमाप्नोति (sic) (for [a]). —D1 om lines 1821–1826 —(L. 1821) G(ed.) -शिलायां तु; M1 -शिलाचक्रं (for °यास्तु) M1 अर्चनं तु (for मम चक्रं). G1 प्रदृश्यते (for प्रशस्यते). —(L. 1827) D1 साळग्राम-

योगसिद्धिर्भवेत्तस्य ज्ञानं च भुवि दुर्लभम् ॥
महतां च यतीनां च मठे दीपप्रदायकः ।
गङ्गास्नानफलं तस्य दिनेनैकेन सभवेत् ॥
रत्नान्वितसुवर्णस्य प्रदानेन नृपोत्तम । [1835]
परं मोक्षमवाप्नोति महादानं यत स्मृतम् ॥
वज्रमाणिक्यरत्नं यो ददाति नृपसत्तम ।
मम लोकमवाप्नोति पुनरावृत्तिवर्जितम् ॥
वैडूर्यविद्रुमान्राजन्ब्राह्मणाय ददाति य ।
रुद्रलोकमवाप्नोति पुष्परागप्रदश्च य ॥ [1840]
शेषरत्नप्रदानेन ह्यलंकारप्रदश्च य ।
सर्वत्र सुलभो लोक सर्वत्र सुखमश्नुते ॥
गवा तृणप्रदानेन सेवया भरतर्षभ ।
रुद्रलोकमवाप्नोति पुनरावृत्तिवर्जितम् ॥
आश्रमाचारनिरता सद्धर्मेषु सदोद्यता । [1845]
अदाम्भिका गतासूया प्रयान्ति सुरमन्दिरम् ॥
परोपदेशनिरता वीतरागा विमत्सराः ।
मम पादार्चनरताः प्रयान्ति ब्रह्मण पदम् ॥
सत्सङ्गाह्लादनिरताः सर्वभूतहिते रता ।
परापवादविमुखा. प्रयान्ति ब्रह्मण. पदम् ॥ [1850]
नित्यं हितकरो यस्तु ब्राह्मणेषु च गोषु च ।
परस्त्रीसङ्गविमुखो न पश्यति यमालयम् ॥
सत्यवादी तथा मौनी मृदुभाषी क्षमारतः ।
परापवादविमुखाः प्रयान्ति ब्रह्मण पदम् ॥
अग्निशुश्रूषवश्चैव गुरुशुश्रूषवस्तथा । [1855]
यतिशुश्रूषवश्चैव न यान्ति यमयातनाम् ॥
अनाथं विप्रकुणपं यो वहेत्कुरुसत्तम ।
पदे पदेऽश्वमेधस्य फलं प्राप्नोति पुष्कलम् ॥
पूजया रहितं विष्णु लिङ्गं वा पूजयेत्तु य ।
ब्रह्मलोके सुखं भुक्त्वा ततो मोक्षमवाप्नुयात् ॥ [1860]
देवतायतने यस्तु समार्जनपरो भवेत् ।
पांसवस्तस्य पापानि नाशयन्ति न संशय ॥
जलेन गोमयेनापि सेचनं देवतागृहे ।
करोति य सदा भक्त्या सर्वपापै प्रमुच्यते ॥
गन्धोदकेन धूपेन कर्पूरसहितेन च । [1865]
धूपसेचनकृन्मर्त्यो गच्छेच्च मम मन्दिरम् ॥
प्रदक्षिणनमस्कारं काले काले करोति य ।
सर्वपापविशुद्धात्मा वाजपेयफलं लभेत् ॥
राजन्प्रदक्षिणैकेन सर्वपापं व्यपोहति ।
द्वितीयेन दिव याति तृतीयेनेन्द्रसंपदम् ॥ [1870]
चतुर्भिर्मम लोकः स्यात्पञ्चमे सर्वलोकभाक् ।
षष्ठे तु महदैश्वर्यं सप्तमे मम किंकर. ॥
अष्टमे मम सालोक्यं सामीप्यं नवमे नृप ।
सारूप्यं दशमे विद्धि सङ्गमेकादशे तथा ॥
सायुज्य द्वादशे विद्धि सायुज्यादपरो न च ॥ [1875]
साङ्गप्रदक्षिणैकेन सर्वपापप्रणाशनम् ।
त्वग्दोष व्याधिपीडा च न च मृत्योर्भयं पुन ॥
शिवप्रदक्षिणे मर्त्यः सोमसूत्रं न लङ्घयेत् ।
लङ्घने त्वेकमेकं स्यादलङ्घये ह्ययुतत्रयम् ॥
रुद्रसूक्तेन यो विप्र प्रभाते स्नानतत्परः । [1880]
अभिषेकपरो रुद्रे शिवसालोक्यमश्नुते ॥
वामदेवादिमन्त्रेण तथा त्रैयम्बकेन च ।
अभिषेकनमस्काराच्छिवसालोक्यतां व्रजेत् ।
एककाल द्विकालं वा त्रिकालं वापि नित्यश ।
शिवदर्शनमात्रेण पातकैः परिमुच्यते ॥ [1885]
वृषस्य वृषणं स्पृष्ट्वा शृङ्गमध्ये पिनाकिनम् ।
दृष्टमात्रे नरो याति कैलासे शिवसंनिधिम् ॥

---

शिलाचक्र ( for $^{a}$ ) —(L 1829) D1 ब्रह्माण्ड ( for °ण्ड- ). —(L 1830) D1 शालग्राम- ( for शिवलिङ्ग- ) —(L. 1834) D1 -सम ( for -फल ) G1 M1 G(ed) तद्भवेत् ( for सभ° ). D1 फलसारं च संभवेत् ( for $^{b}$ ) —(L 1835) G2 रत्नश्रुति- ( for रत्नान्वित- ). —(L 1837) D1 G(ed.) -रत्नानि ( for -रत्न यो ). D1 G1 M1 G(ed) यो ददाति नृपोत्तम ( for $^{b}$ ) — For line 1838, D1 G2 subst. .

112** पर मोक्षमवाप्नोति महादान तु तत्स्मृतम् ।

—(L 1140) G2 G(ed) ब्रह्म- ( for रुद्र- ) M1 पुनरावृत्तिवर्जितम् ( for $^{b}$ ). — M1 om lines 1841–1842 G(ed) om line 1841 —(L 1842) G(ed) सर्वलोकमवाप्नोति ( for $^{a}$ ) —(L 1845) G(ed) स्वधर्मेषु सदा रता ( for $^{b}$ ) —(L 1846) G2 G(ed) मम ( for सुर- ). —(L 1848) G2 G(ed) प्रयान्ति मम मन्दिरम् ( for $^{b}$ ). —(L 1849) D1 सदागमेषु निरता , M1 सत्सङ्गाभ्यासानि° ( for $^{a}$ ) —(L. 1851) G1 नित्यं हितकरा ये तु ( for $^{a}$ ) —(L 1952) G2 M1 -विमुखाः ( for °खो ). D1 प्रयाति ब्रह्मण पदम् ( for $^{b}$ ) — G2 G(ed) om lines 1853–1854 —(L 1853) D1 M1 -भाषी ( for वादी ). M1 क्षमान्वित. ( for °रत ) — For line 1854, D1 M1 subst

113** मन्मना योगयुक्ताश्च न पश्यन्ति यमालयम् ।

—(L 1857) D1 दहेत् ( foa वहेत् ) —(L 1859) G2 च हित ( for रहित ) G(ed) शिव ( for लिङ्ग ) —(L. 1860) D1 G2 चिर भुक्त्वा , G(ed) सुखी भूत्वा ( for सुखं भुक्त्वा ) G1 अवाप्यते ( for °नुयात् ). —(L 1870) M1 G(ed) याति ( for यान्ति ) —(L 1871) G(ed) चतुर्भिर्ब्रह्मणो लोक ( for $^{a}$ ) G(ed) पञ्चभि ( for °मे ) — G2 om. lines 1872–1874 D1 om line 1874 —(L 1874) M1 सग च ( for सङ्गम् ) —(L 1875) D1 om line 1875$^{a}$. D1 अपरेण , G1 अपर न , G(ed) अधिक न ( for अपरो न ) —(L. 1876) G(ed) सर्वपाप प्रणश्यति ( for $^{b}$ ) —(L 1877) D1 त्वग्दोषव्याधिपापेभ्यो ( for $^{a}$ ) —(L 1878) M1 युक्त ( for मर्त्य ) —(L 1779) G1 G(ed) अलङ्घयम् ( for °ङ्घये ). —(L. 1883) G1 -नमस्कारै ( for °रात् ). G2 G(ed.) शिव-

मृदङ्गगीतवाद्यैश्च घण्टाकाहलशङ्खकैः ।
देवं मां सेवयेद्यस्तु स मुक्तो नात्र संशय ॥
संमार्जयित्वा प्रथम गोमयेन तु लेपयेत् । [ 1890 ]
तस्य पुण्यफल चित्रं शृणु वक्ष्यामि सुव्रत ॥
सर्वयज्ञफल प्राप्य सर्वलोकान्विजित्य च ।
कोटिविंशसमायुक्तो मम लोकं स गच्छति ॥
देवतायतने यस्तु ध्वजस्तम्भं प्रकल्पयेत् ।
तेन पुण्यप्रभावेन ध्वजी राजा भवेद्ध्रुवम् ॥ [ 1895 ]
अखण्डदीप य कुर्यान्मम रुद्रस्य संनिधौ ।
दिने दिनेऽश्वमेधस्य प्राप्नोत्यविकलं फलम् ॥
एवमाद्या महाभाग धर्मा बहुविधाः नृप ।
यस्मिन्धर्मे यस्य रुचिस्तेनैव सुखमश्नुते ॥
एतेषां धर्मकरणे प्रीतिरस्ति तवापि चेत् । [ 1900 ]
कुरुष्व नृपशार्दूल पर श्रेयो गमिष्यसि ॥
धर्मार्दर्थश्च कामश्च मोक्षश्च भरतर्षभ ।
तस्मान्मयि सदा भक्तिं कुरुष्व च ददस्व च ॥
युधिष्ठिर त्वं भुवन[illegible]गोप्ता
गन्ता पुर सर्वमहीपतीनाम् । [ 1905 ]
शृणुष्व चित्र पुनरेव वक्ष्ये
धर्मस्वरूपं परिपालनाय ॥
वैशंपायन उवाच ।
य इदं पुण्यमाख्यानं शृणोति सततं नरः ।
तस्य धर्मे स्थिरा बुद्धिर्जायते कुरुनन्दन ॥

Colophon.

वैशंपायन उवाच ।
एवमुक्तस्तु कृष्णेन धर्मपुत्रो महामति । [ 1910 ]
पुनरेव शुभं वाक्यं जगन्नाथमुवाच ह ॥
अणोरणीयांसमज पुराणं
ब्रह्माणमीशं च विशां पतीनाम् ।
भक्तप्रियं त्वां यदुनाथमीड्यं
नमामि विश्वेश्वर शेषशायिन् ॥ [ 1915 ]
दिनोदितानि कर्माणि वक्तुमर्हसि मे प्रभो ।
त्वत्पादकमलादन्यद्गतिर्मम न विद्यते ॥
श्रीभगवानुवाच ।
शृणु पार्थ महाभाग सर्वधर्मार्थकोविद ।
धर्मसारं प्रवक्ष्यामि पुनरेव महामते ॥
प्रातःकाले समुत्थाय धर्मकीर्तनतत्पर । [ 1920 ]
स्नानं करोति राजेन्द्र स गच्छेद्वै सुरालयम् ॥
याम्यं तु नरकं घोरं नित्यस्नायी न पश्यति ।
नित्यस्नानेन शुद्धात्मा प्रयाति सुरमन्दिरम् ॥
प्रात स्नानं हरेद्भूप सबाह्याभ्यन्तरं मलम् ।
मध्याह्ने वापि राजेन्द्र यो गच्छेत्सुरमन्दिरम् ॥ [ 1925 ]
स्नानाद्विना तु यो भुङ्क्ते स मलाशी न संशय ।
तस्मात्स्नात्वा तु योऽश्नीयात्स भृत्यो मम उच्यते ॥
स्नात्वा देवानृषींश्चैव पितॄनपि च तर्पयेत् ।
दिव्यनामानि मे जप्त्वा मुच्यते सर्वपातकैः ॥
धौतवस्त्रो नरश्रेष्ठ शुचिर्मौनी समाहित । [ 1930 ]
अर्घ्यं दत्त्वा च मां ध्यायन्पूज्यते च सदामरैः ॥
यदर्घ्यं यो नमस्कारो या पूजा क्रियते विभो ।
यज्जप्यं या स्तुतिर्भानोस्तन्मामेव प्रपद्यते ॥
समाधानमतिर्यस्तु जपं कुर्यात्कुरूद्वह ।
स मुक्त सर्वपापेभ्यो गङ्गास्नानफल लभेत् ॥ [ 1935 ]
अष्टोत्तरशतं यस्तु गायत्रीं वेदमातरम् ।
जपेत्प्रयत्नतो यस्तु तस्य पुण्यफलं शृणु ॥
दिने दिने च यत्किंचिज्ज्ञानाज्ञानकृतं च यत् ।
तत्सर्वं विलयं याति पातकं पापवर्जित ॥
अष्टोत्तरसहस्रं यो गायत्रीं लोकवन्दिताम् । [ 1940 ]
जपेत्तस्य फलं वक्ष्ये शृणु नान्यमना प्रभो ॥
षण्मासात्सर्वपापेभ्यो मुच्यते नात्र संशय ।
संवत्सरजपाद्राजन्सर्वान्कामान्समश्नुते ॥
अपत्यधनरत्नानि पशुक्षेत्रं च भारत ।
जपमानो लभेद्विद्वान्गायत्र्यास्तु प्रभावत ॥ [ 1945 ]
सत्कर्मणा जपानां तु स्नानं मूलं हि पाण्डव ।
प्रभाते स्नानशीलानां नास्ति नास्ति महद्भयम् ।
तस्मात्स्नात्वा तु कौन्तेय सर्वान्धर्मांस्ततः कुरु ॥

सालोक्यमश्नुते ( for $^{b}$ ) — ( L 1885 ) G(ed ) -कृन्मर्त्यं ( for -मात्रेण ) — ( L 1887 ) G1 दृष्टमात्रो , G(ed ) °क्षणान् ( for °मात्रे ) — ( L 1888 ) G2 शङ्खकाहलघण्टकै ( for $^{b}$ ) — ( L. 1889 ) D1 शिवमासेवयेद्यस्तु ( for $^{a}$ ) — ( L 1895 ) G2 ध्वजराजो , M1 महाराजो ( for ध्वजी राजा ) — ( L. 1896 ) G2 M1 आज्यदीप तु य कुर्यान् ( for $^{a}$ ) — ( L 1901 ) G1 नर- ( for नृप ) — ( L 1902 ) G1 G(ed ) धर्मश्चार्थश्च ( for धर्माद° ). — ( L 1903 ) G(ed ) भवेन् ( for तस्मान् ) D1 G2 धर्मे ( for मयि ) — ( L 1907 ) M1 पशु-, G(ed ) द्विज- ( for परि- ) G1 धर्मस्य रूप जगरक्षणेन — D1 om lines 1908–1909.

COLOPHON — *Sub-parvan* आश्चर्यपर्वणि शेषधर्मा , G2 M1 G(ed,) शेषधर्माः . — *Adhy name* . G(ed ) सर्वधर्मप्रशसा. — *Adhy no* · D1 G1, 2 M1 G(ed ) 15.

( L. 1910 ) G1 महाद्युति ; G2 युधिष्ठिरः ( for महामति ). — ( L 1911 ) अभाषत ( for उवाच ह ). — Before line 1912, D1 ins युधिष्ठिर — ( L. 1917 ) D1 अन्या ( for अन्यद् ). — ( L. 1920 ) M1 G(ed ) मम ( for धर्म- ). — ( L 1922 ) G1 2 प्रात स्नायी ( for नित्य° ). — G1 om. lines 1924–1925. — ( L 1925 ) G(ed ) स याति ( for यो गच्छेत् ) — ( L 1927 ) G(ed ) स तु भृत्यो ममोच्यते ( for $^{b}$ ). — ( L 1933 ) M1 यत् ( for या ) G2 जप्य या च स्तुतिर्गीतिस् ( for $^{a}$ ) — ( L 1934 ) G2 समाराध ( for °न- ). — ( L. 1936 ) D1 जप्त्वा ( for यस्तु ). — ( L 1937 ) G(ed.) नित्य ( for यस्तु ). — ( L. 1944 ) G2 बहु- ( for पशु- ). G(ed ) पशुं

युधिष्ठिर उवाच ।

देवदेव जगन्नाथ यदूनां कुरुवर्धन ।
काल्लोकान्समवाप्नोति गायत्र्यास्तु प्रभावत ॥ [1950]
तत्सर्वं च भवान्वेत्ति मन्त्राधीनो महामते ।
कृपया वद सर्वेश लोकनाथ नमोऽस्तु ते ॥

श्रीभगवानुवाच ।

गायत्र्यास्तु समं किंचित्रिषु लोकेषु नो नृप ॥
गायत्री मोक्षदा ज्ञेया गायत्री पापनाशिनी ।
स्वर्गलोकप्रदा देवी ब्रह्मलोकप्रदायिनी ॥ [1955]
रुद्रलोकप्रदा सैव सूर्यलोकप्रदा तु सा ।
ध्रुवलोकप्रदा देवी चन्द्रलोकप्रदा तु सा ।
मम लोकं च कौन्तेय गायत्री संप्रयच्छति ॥
स स्नात· सर्वतीर्थेषु सर्वयज्ञेषु दीक्षित· ।
गायत्री सेव्यते येन तप्तं तेनाखिलं तप. ॥ [1960]
गायत्रीं भजते यस्तु मन्मना हि महीपते ।
गन्धर्वैः स्तूयमानस्तु मम लोकं स गच्छति ॥
ब्रह्मयज्ञफलं वक्ष्ये शृणु सोमकुलोद्भव ।
ब्रह्मयज्ञं तु य. कुर्याद्ब्रह्मणो रूपमव्ययम् ।
मम सालोक्यमाप्नोति सत्यं सत्यं मयोदितम् ॥ [1965]
प्रणव व्याहृति चोक्त्वा गायत्री वेदमातरम् ।
पाद पादं जपं कुर्यात्ततो वेदं यथाक्रमम् ॥
इदं तु मन्मतं राजन्मत्प्रियं कुरु पाण्डव ।
यज्जप्त्वा सर्वपापेभ्यो मुच्यते नात्र संशय ॥
ब्रह्मयज्ञमिदं श्रौतं यः करोति स मुक्तिभाक् । [1970]
ब्रह्मयज्ञात्तपोवृद्धिर्ब्रह्मतेज. प्रवर्धते ॥
यशो बलं च कौन्तेय धर्मवृद्धिः प्रजायते ।
कुरुते यदि पापानि ह्यवधूय दिवं व्रजेत् ॥
वैश्वदेवं तत पश्चाद्बलिकर्म विधानत ।
क्रियते येन राजेन्द्र जितं तेन त्रिविष्टपम् ॥ [1975]
बलिकर्म प्रकुर्वन्ति चक्राकारं द्विजोत्तमाः ।
ते सर्वे चक्रिणो भूत्वा प्रयान्ति मम मन्दिरम् ॥
राज्यकामो ध्वजाकारं पुत्रार्थी शूर्पवन्नृप ।
चक्राकारं तु भोगार्थी वल्मीकं बहुपुत्रवान् ॥
चक्राकारप्रदातॄणामेतेषां फलदो ह्यहम् । [1980]
एवं चतुर्विधं ज्ञेयं बलिकर्म नृपोत्तम ॥
तुर्यं तव हित ज्ञेयं चक्राकारं नृपोत्तम ।
मोक्षं संप्राप्यत्याशु कामांश्च विविधान्नृप ॥
मां ध्यायन्भोजने काले मौनी संस्तुतवाग्द्विजः ।
कुरुते भोजनं यस्तु अमृतत्वं स गच्छति । [1985]
द्वात्रिंशत्कवलं यस्तु भोजनं कुरुते द्विजः ।
सुरलोकमवाप्नोति गन्धर्वैरुपसेवित ॥
मिताहारो भवेद्यस्तु नीरुजो गतकल्मष. ।
पुण्यलोकमवाप्नोति पूजितो दिवि दैवतै· ॥
पश्चिमां तु तथा संध्यां सादित्यां प्रार्थयेत्तु यः । [1990]
भानौ ह्यनुदिते पूर्वां संगच्छेत्सूर्यसंनिधिम् ॥
देवानृषींस्तु संतर्प्य रवौ मध्याह्नमागते ।
नमस्कारं प्रकुर्वीत ततोऽर्घ्यं सवितु· कुरु ॥
यद्येवं कुरुते नित्यं स मुक्तो नात्र संशयः ॥
काले काले तु यः कुर्याद्देवतापूजन गृहे । [1995]
पुरुषसूक्तविधानेन स मुक्तो नात्र संशय ॥
गृहार्चना गृहस्थस्य सर्वपापप्रणाशिनी ।
मन्मूर्तिं सर्वदा पूज्या संसारं तर्तुमिच्छता ॥

---

क्षेत्र च भारतीम् ( for $^{b}$ ) — For line 1945, G2 subst .

114** जप्यमाने भवेद्विद्वान् गायत्रीया (sic) प्रभावत ।

— G2 वैशपायन ( for युधिष्ठिर ). — ( L 1949 ) D1 कुलनन्दन , G1 कीर्तिवर्धन , M1 कुल° ( for कुरु° ). — ( L 1951 ) G(ed.) मन्त्राधीन ( for °नो ) — ( L 1956 ) D1 देवी ( for सैव ). D1 G2 -प्रदायिनी ( for -प्रदा तु सा ). — G2 om line 1957 — ( L. 1958 ) G(ed) ध्रुव- ( for मम ). G2 द्विजाना ( for गायत्री ). — ( L 1961 ) D1 जपते ( for भजते ) — ( L 1963 ) D1 -कुलोत्तम ( for °द्भव ). — ( L. 1964 ) D1 ब्रह्मणो लोकमुत्तमम् ( for $^{b}$ ) — ( L 1965 ) G1 G(ed.) मम लोकमवाप्नोति ( for $^{a}$ ) — ( L 1968 ) G2 सर्वदा ( for पाण्डव ) — ( L 1970 ) D1 मुक्तिमान् ; G2 M1 मुक्तवान् ( for मुक्तिभाक् ) — ( L 1973 ) G(ed ) व्यवधूय ( for ह्य° ) — After line 1973, D1 ins .

115** सध्या माध्याह्निकीं कुर्याच्च श्रुत्यनुकूलत ।
समभ्यर्च्य तथा देव मा क्षीरोदनिवासिनम् ।
पौरुषेण तु सूक्तेन षोडशैरुपचारकै ॥
धूपदीपादिनैवेद्यदीपपुष्पाञ्जलीनपि ।
समर्प्य देवदेवाय तद्भक्ताश्च विशेषत ॥

— ( L 1975 ) D1 यदि ( for येन ) — G(ed ) om lines 1976-1977 — ( L 1978 ) D1 भाग्यार्थी तु ( for राज्यकामो ). — ( L 1979 ) M1 G(ed ) छत्राकार ( for चक्रा° ). D1 योगार्थी ( for भो° ) D1 वल्मीकान् ( for °क ). G2 वल्मीकान्बहुपुत्रकान् ( for $^{b}$ ) — ( L 1980 ) D1 -कृता नृणाम् ( for -प्रदातॄणाम् ). — ( L 1982 ) D1 कार्यं ; M1 तुल्य ( for तुर्यं ). M1 G(ed.) नरोत्तम ( for नृपो° ) — ( L 1983 ) D1 च ; G(ed.) त्वां ( for स- ) M1 मोक्षस्थान प्रयात्याशु ( for $^{a}$ ) — ( L 1984 ) G(ed ) संरुद्धवाग् ( for संस्तुत° ). D1 मौनी सस्कृतवाग्बुध· ; G2 मौनी सस्तुतवान्नर: ( for $^{b}$ ) — ( L. 1986 ) G2 नरः ( for द्विजः ) — ( L 1987 ) G1 M1 -शोभित ( for -सेवितः ). — After line 1987, D1 ins

116** रसमास्वादयन्भुञ्जन्नातित्वराविवर्जित· ।
त्वरया भुङ्क्ते यस्तु स देवान्भोक्षयेद्ध्रुशम् ॥

— ( L 1988 ) G(ed ) निरोगो ( for नीरुजो ). — ( L 1990 ) G(ed ) सावित्री ( for सादित्या ). — ( L. 1991 ) G2 अर्के ( for भानौ ). — ( L. 1993 ) D1 स्तोत्रं तु ( for ततोऽर्घ्यं ). — ( L 1995 ) G2 G(ed.) प्रात काले ( for काले काले ). M1

कुशोदकं तु राजेन्द्र गायत्र्या ह्यभिमन्त्रितम् ।
पिबेदनुदिनं यस्तु सोऽन्नदोषैर्न लिप्यते ॥ [ 2000 ]
मृदुभाषी सदा मौनी कामक्रोधविवर्जितः ।
यः समः सर्वभूतेषु सोऽहं पार्थ न संशयः ॥
चराचरात्मकं विश्वमहमेवेति यो वदेत् ।
स एवाहं नरश्रेष्ठ त्वमप्येवं विचारय ।
तस्मात्सर्वप्रयत्नेन भज मां पाण्डुनन्दन ॥ [ 2005 ]
योगाभ्यासरता ये तु प्राणायामपरायणाः ।
जितेन्द्रिया नरा ये च परस्त्रीषु पराङ्मुखाः ।
ते नरा राजशार्दूल सर्वत्र परिपूजिताः ॥

वैशंपायन उवाच ।

एतद्भगवता प्रोक्तं धर्मं पापप्रणाशनम् ।
शृणुयाद्यो हि राजेन्द्र व्रजत्येव त्रिविष्टपम् ॥ [ 2010 ]

Colophon

वैशंपायन उवाच ।

इत्येवं दुर्लभान्धर्माञ्श्रुत्वा प्रीतो महीपतिः ।
पुनरेव शुभं वाक्यं प्रत्युवाच जगत्पतिम् ॥

युधिष्ठिर उवाच ।

नमामि पुण्डरीकाक्ष वासुदेव जगत्पते ।
त्वत्पादकमलं वन्द्यं योगिनामपि दुर्लभम् ॥
चतुर्णामपि वर्णानामाश्रमाणां च वृष्णिप । [ 2015 ]
आचारं वद धर्मेश कर्माणि जगतीपते ॥

श्रीभगवानुवाच ।

सर्वेषामपि वर्णानां ब्राह्मणः परमो गुरुः ।
श्रुतेन तपसा तात पाति लोकान्स्वकर्मणा ॥
वेदाध्ययनसंपन्नः सर्वशास्त्रविशारदः ।
पुराणवक्ता कौन्तेय पालयत्यखिलं जगत् ॥ [ 2020 ]
अग्निष्टोमादिकान्यज्ञानिष्ट्वा विहितदक्षिणान् ।
मय्यर्पितमना विद्वान्मामेव प्रतिपद्यते ॥
इतरेषां तु वर्णानां शिक्षिता धर्मतत्परः ।
सदा शास्त्ररतो विद्वान्मामेव प्रतिपद्यते ॥
निष्किंचनोऽपि राजेन्द्र वेदशास्त्राणि चाभ्यसेत् । [ 2025 ]
सन्मार्गपरिनिष्ठानां मम लोकं च शाश्वतम् ॥
विद्यामुखेन यो राजन्ब्राह्मणो वर्ततेऽनिशम् ।
स स्नातः सर्वतीर्थेषु तप्तं तेनाखिलं तपः ॥
विद्यया संचितं द्रव्यं यस्य वै संप्रयच्छति ।
स मुक्तः सर्वपापेभ्यो मेरुमूर्ध्नि चिरं वसेत् ॥ [ 2030 ]
विद्ययोपार्जितं द्रव्यं ब्राह्मणानां सुखावहम् ।
सांग्रामिकं च कृष्यंशं क्षत्रियाणां सुखप्रदम् ॥
क्रयविक्रयजं द्रव्यं वैश्यानां तत्सुखावहम् ।
कृषिभिः शूद्रजातीनां यत्तद्द्रव्यं सुखावहम् ॥
द्वितृतीयचतुर्थानां वर्णानां ब्राह्मणो गुरुः । [ 2035 ]
तस्मै देयं प्रयत्नेन ग्रहीतव्यं ततो द्विजैः ॥
श्रोत्रियान्नं तु यो भुङ्क्ते जन्मजन्मान्तरेष्वपि ।
तस्य जन्मान्यनेकानि भवन्ति ब्रह्मयोनिषु ॥
सर्वज्ञः श्रोत्रियः प्रोक्तः श्रोत्रियो वैष्णवः स्मृतः ।
विद्वान्वै श्रोत्रियः प्रोक्तो ज्ञानी श्रोत्रिय उच्यते ॥ [2040]
पुराणसंहितावक्ता श्रोत्रियो ह्यभिधीयते ॥
ममैवाज्ञेति यो राजन्पुराणानि च यो वदेत् ।
तस्यैव सर्वश्रेयांसि ददामि कुरुनन्दन ॥
एवं वाच्यं पुराणं तु शब्दभावसमन्वितम् ।
पदं पदं संविभज्य पूर्वापरविमिश्रितम् ॥ [ 2045 ]
सुव्यक्तं मधुरं राजन्गम्भीरं शास्त्रगर्भितम् ।
अथ वा रागसंयुक्तं श्रीरागमथ वा नृप ॥
मन्द्रमध्यमतारैश्च ध्वनिभिः संमितं वदेत् ।
एवं वदन्द्विजो दक्षः श्रोतॄणामघनाशनम् ।
अथ वा सर्वरागैश्च वदन्स्वर्गे महीयते ॥ [ 2050 ]
पुराणश्रवणे बुद्धिर्यस्य पुंसः प्रजायते ।
सर्वपापविनिर्मुक्तः सुरलोके महीयते ॥

---

नृप (for गृहे) —(L 1996) Hypermetric G(ed) °विधिना (for °विधानेन). —(L 1997) D1 गृहार्चनं; G(ed.) ग्रहार्चना (for गृ°). D1 प्रणाशनम् (for °शिनी). —(L 2000) D1 ह्यन्नदोषो न विद्यते (for b) —(L 2002) D1 G2 संसारं तर्तुमिच्छति (for b) — After line 2005, G(ed) ins

117** कृतकृत्योऽसि सर्वत्र प्राप्स्यसे सर्वतो जयम् ।

—(L 2009) G1 G(ed) सर्व- (for धर्मं) —(L 2010) D1 यः शृणोति (for शृणुयाद्यो) G2 व्रजेदेव (for व्रजत्येव).

COLOPHON —*Sub-parvan*: D1 G1 G(ed) आश्चर्यपर्व शेषधर्माः, G2 M1 शेषधर्माः —*Adhy no*: D1 G1,2 M1 G(ed) 16.

(L. 2013) G(ed) देवदेव (for वासु°). —(L 2017) G1 प्रथमो (for परमो). —(L. 2020) G1 M1 पावयति (for पाल°) —(L 2021) G1 M1 बहुल- (for विहित-) —For line 2021, G(ed) subst

118** अग्निष्टोमादिकैर्यज्ञैरिष्ट्वा विपुलदक्षिणैः ।

—(L 2025) G1,2 वेदशास्त्रान्समभ्यसेत् (for b). —(L. 2026) G(ed) मम लोकस्तु शाश्वतः (for b) —(L 2032) D1 तथा राजन्, G1 षड्वशं, G2 M1 कृष्यशं, G(ed) षड्भाग: (for कृष्यंशं) D1 M1 सुखावहम् (for सुखप्रदम्) —(L. 2033) D1 क्रयविक्रयद्रव्यं च (for a) D1 वैश्यानां तु सुखप्रदम्; G2 °नां तु सुखं भवेत् (for b) —(L 2036) G1,2 द्विजोत्तमैः (for ततो द्विजैः). —(L 2038) G(ed) भवेयुर् (for भवन्ति) —D1 om line 2040 —(L 2042) G(ed.) पुमान् (for च यो). —After line 2043, G(ed.) ins.:

119** सर्वपापविनिर्मुक्तः सुरलोके महीयते ।

—(L. 2045) G1 पादमध्य (for पदं पदं). —(L. 2046)

य संसारार्णवं तर्तुमुद्योगं कुरुते यदि ।
शृणुयात्स पुराणानि सत्यं सत्यं मयोदितम् ॥
सर्वधर्माणि वक्ष्यन्ति पुराणानि महामते । [2055]
तस्मात्सर्वप्रयत्नेन पुराणेषु मतिं कुरु ॥
वेदव्यासस्तु धर्मात्मा वेदशास्त्रविभागकृत् ।
प्रोक्तवान्सर्वशास्त्राणि पुराणे पाण्डुनन्दन ॥
पुरार्जितानि पापानि नाशमायान्ति यस्य वै ।
पुराणश्रवणे बुद्धिस्तस्य पुंस प्रजायते ॥ [2060]
शृण्वता वदता चैव पुराणं मोक्षदायकम् ।
तस्मात्सर्वप्रयत्नेन श्रोतव्यं जन्मभीरुभिः ॥
श्रोतॄणां सर्वपापानि पुराणं दहति ध्रुवम् ।
ज्ञानाज्ञानकृत पापं जन्मान्तरकृतं च यत् ।
पुराणश्रवणादेव तत्क्षणादेव नश्यति ॥ [2065]
गङ्गादिसर्वतीर्थेषु स्नातानां यत्फलं भवेत् ।
तत्फलं समवाप्नोति पुराणश्रवणान्नृप ॥
य शृणोति पुराणानि प्रभाते तत्कुरूद्वह ।
रजन्यां यत्कृत पापं तत्क्षणादेव नश्यति ॥
क्षपायां मद्गृह नित्य य शृणोति नृपोत्तम । [2070]
दिवाकृत तु यत्पापं तत्क्षणादेव नश्यति ॥
यः शृणोति पुराणानि नित्यं भक्तिसमन्वितः ।
विधूय सर्वपापानि ब्रह्मलोकं स गच्छति ॥
पुराणं शृण्वतां नॄणां नास्ति नास्ति महद्भयम् ।
तस्मात्पाण्डव राजेन्द्र पुराणेषु मतिं कुरु ॥ [2075]
क्षत्रियाणां सुवृत्तानां यथाशपरजीविनाम् ।
यथापराधदण्डानां ब्रह्मलोकं तु शाश्वतम् ॥
गुरुसेवापरो यस्तु ब्रह्मचारी सदा शुचिः ।
भैक्षान्ननिरत. स्नाने स याति ब्रह्मण. पदम् ॥
ऊरुजाना सुशीलानां स्वपुण्ये सत्यवादिनाम् । [2080]
महतां सेवया तात ब्रह्मलोकं तु शाश्वतम् ॥
कृषिमार्गरतानां च चतुर्थानां नृपोत्तम ।
शुश्रूषया पूर्वजानां ब्रह्मलोकस्तु शाश्वत' ॥
यज्ञैर्दानैस्तपोभिश्च गृहस्थो ब्रह्मसेवया ।
आतिथेय सत्यवादी शुचिरेति ममालयम् ॥ [2085]
षोडशग्रासनिरतो वानप्रस्थाश्रमे रत ।
वेदशास्त्ररतो नित्यं त्रिस्नायी मां च गच्छति ॥
त्रिदण्डमेकदण्डं वा सदा काषायचेलवान् ।
सदा प्रणवशीलश्च संन्यासी मां च गच्छति ॥
चराचरात्मकं विष्णुमेकमव्यक्तमक्षरम् । [2090]
ध्यायन्सर्वत्र योगीन्द्र स दु खात्परिमुच्यते ॥
तत्त्वज्ञानं तु यो दद्याद्यथा ब्रह्मवित्तम ।
स मामेव प्रपद्येत सर्वभूतहिते रत ।
पतिव्रता पतिप्राणा पतिसेवापरायणा ।
प्रियंवदा च कल्याणी नारी गच्छति मत्पदम् ॥ [2095]
पतिरेव परो बन्धु पतिरेव परो गुरु ।
पतिरेव मम प्राणा यथा संगिरतेति च ।
तया जितो ब्रह्मलोके नात्र कार्या विचारणा ॥
स्त्रीणां पुरुषमुख्यानां द्विजानामग्रजन्मनाम् ।
मनुजानां तु सर्वेषां धर्म एव परा गतिः ॥ [2100]
किमत्र बहुनोक्तेन धर्म कलिमलापह. ।
धर्मं भजस्व सततं पुराणेषु मतिं कुरु ।
पुराणधर्मशास्त्राणां कीर्तनान्नाकमश्नुते ॥
धर्ममार्गरतानां तु श्रोतॄणां धर्मसंहिताम् ।
नरकं नास्ति नास्त्येव सत्यमेव मयोदितम् ॥ [2105]
धर्मस्य कर्ता भुवनस्य गोप्ता
मन्त्रस्य कर्ता गुरुरप्रमेय ।
मोक्षस्य कर्ता पतिरीश्वराणां
सर्वान्तरात्मा ह्यहमेक एव ॥
विश्वप्रभुं विश्वसृजं कृतज्ञं [2110]
भक्तार्तिहं विश्वतनुं महान्तम् ।
भजस्व नित्यं बहुरूपभाजं
त्वं पार्थ मा सर्वजनाभिवन्द्यम् ॥
एवं तु गदितं पार्थ धर्मं धर्मभृतां वर ।
किं ते प्रीतिकरं वच्मि तद्ब्रूहि मम संप्रति ॥ [2115]

वैशंपायन उवाच ।

धर्मसारमिदं राजञ्शृणोति सततं नर' ।
स मुक्त सर्वपापेभ्यो गङ्गास्नानफलं लभेत् ॥

Colophon.

---

D1 -गूदितम्, M1 -चोर्द° (for गर्भि°) —(L 2047) G(ed.) श्रीरङ्गेणाथ वा युतम् (for [b]). —(L 2049) D1 एव वदेद्धि यो राजन् (for [a]) —(L. 2054) G2 शृणुयात्सर्वशास्त्राणि (for [a]) —(L 2057) G2 G(ed.) -शास्त्रार्थ- (for -शास्त्रवि-) G1 वेदशास्त्रार्थभाववित् (for [b]) —(L 2060) G1 बुद्धि' (for पुंस') —(L 2061) G1 G(ed) पठता (for वदता) G2 साधनम् (for -दायकम्). G1 पुराण पापमोचकम् (for [b]) —(L 2063) G1 G(ed) क्षणात् (for ध्रुवम्). —(L 2065) G1 तत्क्षणेन विनश्यति (for [b]) —D1 om (hapl) lines 2066–2071 —(L 2070) G2 कुरूद्वह (for नृपोत्तम) —(L. 2076) D1 यथासंभवजीविनाम्; G1 G(ed.) यथाक्रपरि°; G(ed) यथाश परि° (for [b]). —(L. 2077) G(ed) ब्रह्मलोकस्तु शाश्वत. (for [b]). —(L 2078) G1 -पूजारतो, M1 -सेवारतो (for °परो) —(L 2079) D1 भैक्ष्याग्निनिरतस्नायी, G1 G(ed) °न्ननिरतस्नात, M1 भिक्षान्ननिरत स्नाति (for [a]) —(L 2081) G(ed) ब्रह्मलोकस्तु शाश्वतः (for [b]) —(L 2085) ममान्तिकम् (for °लयम्). —D1 om (hapl) lines 2088–2089 —(L. 2088) G(ed) त्रिदण्डी वैकदण्डी वा (for [a]) —(L. 2090) G1 अक्षयम्; G(ed) अव्ययम् (for अक्षरम्) —(L 2095) D1 प्रियं वदति कल्याणी (for [a]) —(L 2097) D1 यथा संस्मर्यते सदा, G1 पति स्वर्गतिरेव च, G(ed) यथा सगीयतेति च (for [b]). —(L. 2101) G2 धर्मं कलिमलापहम् (for [b]). —(L. 2105) D1 तथ्यम् (for सत्यम्). —(L 2110) M1 विश्वमज (for °सृज).

युधिष्ठिर उवाच ।

श्रीमते विश्वरूपाय वासुदेवाय चक्रिणे ।
भक्तप्रियाय देवाय देवानां पतये नमः ॥
प्राणेश्वराय योगीन्द्र सर्वसंपत्कराय च । [2120]
बलाय वासुदेवाय कृष्ण विष्णो नमोऽस्तु ते ॥
भूतात्मन्भूतकृद्देव पाण्डूना हितवर्धन ।
त्वत्प्रसादात्प्रसन्नात्मन्पापैरद्य विमोचित. ॥
धर्मशास्त्रोपदेशेन कृपालो मधुसूदन ।
इदानीं श्रोतुमिच्छामि पापानां तु यदाश्रयम् ॥ [2125]
पापिनो येषु पच्यन्ते नरकेषु च संततम् ।
वदस्व मे विशालाक्ष तथा घोराश्च यातना ॥

श्रीभगवानुवाच ।

पापभेदान्प्रवक्ष्यामि तथा स्थूलाश्च यातना ।
शृणुष्व धैर्यमास्थाय रौद्रा हि नरका यत ।
यस्य पापस्य यः प्रोक्तो नरको ब्रह्मवादिभिः । [2230]
तमहं संप्रवक्ष्यामि शृणु नान्यमना नृप ॥
ब्रह्महा च सुरापी च स्तेयी च गुरुतल्पग. ।
महापातकिनश्चैव तत्संयोगी च पञ्चम. ॥
एतेषां पापबाहुल्यं प्रवक्ष्यामि यथामति ।
पञ्चानां पातकानां च तत्समानां नृपोत्तम ॥ [2135]
ब्रह्महा तपनं घोरं व्याघ्रशूलप्रमर्दनम् ।
तपने तप्यमानश्च शूले व्याघ्रैश्च भक्षितः ॥
प्रमर्दनो मर्दमानस्तिष्ठेद्वर्षायुतं नरः ।
तस्माय.पिण्डवदनो रुदन्बहुविधं मुहु ।
हा हतोऽस्मि हतोऽस्मीति रक्ष रक्षेति तिष्ठति ॥ [2140]
तत परं तमाकृष्य कुम्भीपाकेन पच्यते ।
पुनर्वर्षसहस्राणि दह्यमानो महाग्निना ॥
नरकेषु च सर्वेषु भुक्त्वा भोगाननेकशः ।
स पश्चाद्भुवमासाद्य भवति ब्रह्मराक्षसः ।
तत्र पञ्चयुगं स्थित्वा चण्डालेष्वभिजायते ॥ [2145]
सुरापस्य गतिं वक्ष्ये नारकीं शृणु पाण्डव ।
सुरापी मलमूत्रं च पिबेद्वर्षायुतं नृप ॥
तस्माय पिण्डमादाय ताडयन्ति च किंकराः ।
तस्माय:पिण्डवदनः सूचिपूरितलोचन. ॥
नखलधिषु सर्वेषु पाट्यमानश्च शङ्कुभिः । [2150]
अङ्गारशयने घोरे लुठन्युगशत बहु ॥
स्थित्वा युगाष्टकं राजन्धूमपानं व्रजेत्तत ।
तत्र तप्तसुरां पीत्वा हा हतेति रुदन्बहु ॥
पिशाचत्वमवाप्नोति तत्र स्थित्वा युगाष्टकम् ।
अनुभूय च सर्वाणि हीनजन्मानि भारत । [2155]
पौल्कसादिषु संजातो व्याधो भवति भूतले ॥
स्तेयिनस्तु गति वक्ष्ये दु खदा शृणु भूपते ।
निष्कत्रयप्रमाणं तु सौवर्णं यो हरेन्नृप ॥
स्तेयीति स हि विज्ञेय सर्वकर्मबहिष्कृत ।
प्रायश्चित्तविहीनस्य वक्ष्ये तस्य च यातनाः ॥ [2160]
मूषावस्था तथा कूपं मूषिकैः परिपूरितम् ।
हिमोत्कट शूलयन्त्रं श्वभक्षो मांसभोजनः ॥
एतान्युगशतान्पञ्च ह्यनुभूय नृपोत्तम ।
क्रकचैश्चूर्ण्यमानस्तु ताड्यमानस्तु चर्मभिः ॥
स्थावरादिषु जायेत तस्मिन्स्थित्वा युगाष्टकम् । [2165]
तत. किरातयोनीषु जायते नात्र संशयः ॥
पापिनां नरकं वक्ष्ये गुरुदाराभिगामिनाम् ।
ज्येष्ठमाता भ्रातृपत्नी. यज्ञपत्नी नृपोत्तम ॥
अध्यापकस्य या पत्नी श्वश्रुरी मातुलस्य च ।
पितृमातृष्वसा चैव माता गुरुसुता गुरोः । [2170]
गुरुतल्पसमानानामेतेषां शृणु पातकम् ॥
मन्वादिषु च शास्त्रेषु प्रायश्चित्तादिकल्पनैः ।
नैव शुध्यति य पापी तस्य पीडां वदामि ते ॥

---

D1 कृतिशं (for कृनशं) —(L. 2111) M1 -रत्नं (for तनु).

COLOPHON. — *Sub-parvan* D1 G1 आश्चर्यपर्वणि शेषधर्मा., G2 M1 G(ed) शेषधर्मा — *Adhy name* · D1 M1 पुराणप्रशंसनम्, G(ed) पुराणप्रशंसा —*Adhy. no* D1 G1, 2 M1 G(ed.) 17.

(L. 2118) D1 G1 श्रीपते (for श्रीमते). —(L 2121) G(ed) बलाय बलभद्राय (for $^a$) —(L 2123) G(ed) वियोजित (for विमोचित) —(L 2125) G(ed) पापाना च क्रमात्फलम् (for $^b$) —(L 2127) G1 2 G(ed.) वद तान् (for वदस्व). G(ed) वै (for मे) — G2 om line 2128. —(L. 2128) M1 घोराश् (for स्थूलाश्) — G2 om lines 2130–2133 —(L 2134) G2 यथामतम्; M1 °विधि (for °मति) —(L 2136) G(ed) गच्छेद् (for घोरं) —(L. 2139) G2 नर (for मुहु·) —(L. 2141) G(ed.) समाकृष्ट (for तमाकृष्य). —(L 2144) D1 पश्चाद्भवनमासाद्य (for $^a$). —(L. 2146) D1 नरकान्, G1 नारक (for °कीं).

— After line 2146, G(ed) ins.

120** विहितां धर्मराजेन रौद्ररूपा भयानकाम् ।

—(L 2147) D1 G(ed) मूत्रे (for -मूत्र) —(L 2150) D1 पीड्यमानश्, M1 ताड्य° (for पाट्य°). —(L. 2153) G1 हा हन्तेति, G(ed) हाहेति प्र- (for हा हतेति) G2 हा हन्तेति रुदन्मुहु (for $^b$) —(L 2155) G2 पार्थिव (for भारत) —(L 2157) M1 दु सह, G2 दु खिता (for दुःखदां). G1 भूतले (for भूपते). —(L 2160) D1 G1 2 G(ed) यातनाम् (for °ना). —(L 2161) D1 मूषावस्था तथा कूपे; G(ed) °स्थानक कूप (for $^a$) —(L. 2162) D1 श्वभक्षं मासभक्षणम् (for $^b$) —(L 2163) G(ed) एतान्युगशतान्यङ्ग (for $^a$) —(L 2164) D1 G2 स्वकरौ (G2 नरके) चूर्णमानस्तु (for $^a$) —(L 2166) D1 -योनौ वै (for -योनीषु) G1 सजातो (for जायते). —(L. 2168) D1 गुरु- (for यज्ञ-) —(L 2171) G(ed.) गुरुतल्पगतुल्याना (for $^a$). —(L. 2172) G1 मन्वादिकेषु शास्त्रेषु (for $^a$). G1 G(ed.)

रेतःपानं महादारं सर्वसंधिषु दाहनम् ॥
अङ्गारशयनं चैव कबन्धभ्रामयन्त्रकम् ।
क्षणिकच्छेदनं चैव तपनोत्पातने तथा ॥
पाशबन्धं धूमपानं तथा शूलानुरोहणम् ।
अस्थिभेदं पित्तपानं तथा लवणभक्षणम् ॥ [2610]
स्नायुच्छेदं शिलापीडा तथा पाषाणवारणम् ।
श्लेष्ममासमयाहारं वृक्षाग्रपतनं तथा ॥
जलान्तर्मज्जनं चैव शयनं कण्टकोपरि ।
पिपीलिकादिदशनं तथा वृश्चिकपीडनम् ॥
अस्त्रशस्त्रादिशयनं तथा महिषमर्दनम् । [2615]
सूचिप्रक्षेपणं चैव नेत्रयोर्नखसंधिषु ॥
शिश्ने च वृषणे चैव ह्ययोभारस्य बन्धनम् ।
तप्ताय·शयनं चैव तप्तशीताम्बुसेचनम् ॥
अत्युष्णसिकतास्नानं तथा दृषदि शीर्णनम् ।
व्याघ्रराक्षसपीडा च तप्तपाषाणभक्षणम् ॥ [2620]
एवमाद्या महाभाग नरका कोटिकोटिश ।
अहं वक्तुं न शक्नोमि किमुतान्यो महीपते ॥
शृणु पाण्डव वक्ष्यामि यममार्गं सुदु सहम् ।
सुखदं पुण्यशीलाना पापिना भयदायकम् ॥
षडशीतिसहस्राणि योजनानि नरेश्वर । [2625]
यमगार्गस्य विस्तारः पापिनां भयदायक ॥
ये नरा पुण्यशीलास्तु ते यान्ति सुखिनो नृप ।
गन्धर्वैः स्तूयमानाश्च अप्सरोगणसेविता. ।
सुधापानं प्रकुर्वन्तः प्रयान्ति स्वर्गमन्दिरम् ॥
धर्मशून्या नरा यान्ति दुःखेन यमयातनाम् । [2630]
प्रेतभूता विवस्त्राश्च शुष्ककण्ठोष्ठतालुकाः ।
क्रन्दन्तो विस्वरं दीना यान्ति तत्पथि पापिन· ॥
हन्यमाना यमभटै प्रतोदाद्यैस्तथायुधैः ।
इतस्तत. प्रधावन्तो यान्ति दु·खेन तत्पथि ॥
श्वानजम्बूकशब्दैश्च कम्पमाना सुदारुणै । [2635]
दंशयन्तो महानागैर्यान्ति दु खेन तत्पथि ॥
क्वचित्तापः क्वचिद्वह्नि क्वचित्संतप्तकर्दमः ।
सतप्तसैकताश्चैव तीक्ष्णधारा· शिला क्वचित् ॥
क्वचिदङ्गारवृष्टिश्च शिलावृष्टिश्च दु·सहा ।
जलोपलसमावृष्टिरुष्णाम्बुवर्षणं तथा ॥ [2640]
क्षारकर्दमवृष्टिश्च महावातान्वितो मरुत् ।
उष्णकर्दमवृष्टिश्च शिखावान्समरुत्क्वचित् ॥
क्वचित्कण्टकवृष्टिश्च दु खारोहशिला क्वचित् ।
गाढान्धकारकूपाश्च कण्टकावरणं महत् ॥
वप्राग्रारोहणं चैव कन्दरस्य प्रवेशनम् । [2645]
शर्कराश्च तथा लोष्टा सूचीतुल्याश्च कण्टका ।
शैवालं च क्वचिन्मार्गे क्वचित्कीचकपङ्कय· ॥
व्याघ्रराक्षसयूथैश्च मत्तदन्तिसमाकुले ।
वृकगोमायुसंकीर्णे ऋक्षसिंहभयाकुले ।
शुष्कपादपसंकीर्णे छायाहीने हिमोत्कटे ॥ [2650]
विषज्वालाकुलैर्नागैर्वृश्चिकै परिपूरिते ।
कङ्कवायसगृध्राणा छायायुक्ते महास्वने ॥
निरूदके महाघोरे यूथनादैर्भयंकरे ।
चण्डार्ककिरणैर्घोरे यान्ति दु खेन तत्पथि ॥
पुरोग्रै शङ्कुभिस्तीक्ष्णै खचिते भृशदारुणे । [2655]
अधोमुखा कृष्यमाणा पापिनो यान्ति तत्पथि ॥
एवं बहुविधै क्लेशैर्निरुच्छ्वासे तु तत्पथि ।
क्रोशन्तश्च रुदन्तश्च म्लानवक्त्राश्च पापिन ॥
पाशेन यन्त्रिता केचित्कृष्यमाणास्तथाङ्कुशै ।
शस्त्राग्रैस्तुद्यमानाश्च पृष्ठत पार्श्वत पथि ॥ [2660]
नासाग्रपाशकृष्टाश्च कण्ठपाशैस्तथापरे ।

---

G2 कंधरं ग्रामयन्त्रकम् ( for [b] ) —( L 2608 ) G1 2 तपनोत्पतन तथा ; M1 पतनोत्पतने तथा ( for [b] ) —( L 2610 ) D1 अस्थिच्छेद ( for °भेद ). G2 अस्थिच्छेद रक्तपान ( for [a] ) —( L 2611 ) G(ed) दारणम् ( for धा° ) —( L 2619 ) D1 हृदय-, G(ed) दृष्टिवि ( for दृषादि ) — After line 2620, G(ed) ins. ·

132** कुम्भीपाक महाघोरं क्रिमिविष्ठामयस्तथा ।

—( L 2623 ) D1 G1 M1 -मार्गस्य ( for -मार्गं सु- ). — After line 2625, G(ed) ins .

133** षडशीतिशतान्यत्र तिर्यग्वै विस्तरस्तथा ।

—( L. 2626 ) G2 शृण्वता भयदायकम् ; G(ed) एवंभूतो नराधिप ( for [b] ). —( L 2627 ) G1 सुखदा, G2 सुखिता ( for °नो ) —( L. 2629 ) G(ed) यम- ( for स्वर्ग- ) —( L. 2630 ) G2 M1 दु खेन शृणु यातना ( for [b] ) —( L. 2633 ) G2 प्रोताद्यैश्च ( for प्रतोदाद्यैस ) —( L 2634 ) D1 यान्ति तत्पथि पापिन· ( for [b] ). —( L 2636 ) G(ed) सदष्टाश्च ( for दंशयन्तो ). — G1 M1 G(ed.) ins. after line 2638 : D1 after line 2656

134** क्वचिदङ्गारराशिश्च महाधूमाकूल क्वचित् ।
क्वचिद्दु सहशीत च महावायुविशोषणम् ॥

— D1 om ( hapl ) lines 2639–2643 —( L 2640 ) M1 G(ed) क्वचिदुष्णाम्बुवर्षणम् ( for [b] ) —( L 2641 ) G(ed) महावातान्विते दक्रम् ( for [b] ) —( L 2645 ) D1 वृक्षाग्रारोहण, M1 वप्रस्या° ( for वप्राग्रा° ) —( L. 2646 ) D1 -कल्पाश् ( for -तुल्याश् ). —( L 2648 ) G2 क्रूरैरेव ( for ( मत्तदन्ति- ). —( L. 2649 ) G2 सिहवानरसकुले ( for [b] ). —( L 2654 ) G2 M1 -किरणे ( for °णैर् ) — G(ed) om ( hapl ) lines 2655–2656 —( L. 2655 ) G1 M1 खचितैर्भृशदारुणै ( for [b] ) —( L 2658 ) G1 क्लिश्यन्तश् ( for क्रोश° ) G1 ध्वनयन्तश् ( for म्लानवक्त्राश् ) M1 पापिनं प्रापयन्ति ता , G(ed) ताडिता यान्ति पापिन ( for [b] ) — M1 om line 2659. —( L 2659 ) D1 पाशैर्यान्ति नरा केचित् ( for [a] ). — After line 2659, G1 ins

135** क्रोशन्तश्च रुदन्तश्च पापिनः प्रापयन्ति हि ।

कर्णपाशैः कृष्णमाणा गले प्रोतास्तथापरे ॥
पादाग्रपाशकृष्टाश्च केचिच्छस्त्रैः प्रबाधिताः ।
वहन्तश्चायसं भारं शिश्नाग्रेण प्रयान्ति वै ॥
अधोभारद्वयं केचिन्नासाग्रेण तथापरे । [2665]
कर्णाभ्यां च तथा केचिद्वहन्तो यान्ति पापिनः ॥
केचित्पृष्ठस्थपाषाणा अश्मभिर्घट्टिताः परे ।
केचिच्छृङ्खलिता यान्ति ताड्यमानास्तथापरे ॥
निरुच्छ्वासतया केचित्केचिच्छादितलोचनाः ।
छायाजलविहीने तु पथि यान्ति सुदुःखिताः ॥ [2670]
शोचन्तः स्वानि कर्माणि रुदन्तश्च मुहुर्मुहुः ।
शूलप्रोतमुखाः केचित्प्रयान्ति यममन्दिरम् ।
प्रदीपैर्दह्यमानाश्च ह्युल्कैर्दारुणैर्भृशम् ॥
तृणैराच्छादिताः केचिद्दह्यमानाः समन्ततः ।
अधोमुखाः कृष्यमाणाः केचित्संतप्तकर्दमे ॥ [2675]
तप्तसैकतमार्गेषु केचिन्मग्नाः प्रयान्ति वै ।
बृहच्छिला वहन्तश्च शवं केचित्प्रयान्ति वै ॥
भक्ष्यमाणाः स्वमांसानि पिबन्तो रुधिरं स्वकम् ।
गळबन्धैर्महानागैर्दश्यमाना विषाग्निभिः ॥
वहन्तः कण्टकचयं श्वभिर्दष्टाः प्रयान्ति वै । [2680]
गळप्रोतैर्घटीयन्त्रैर्लम्बमानाः प्रयान्ति वै ॥
खरमारुह्य केचित्तु केचिद्वै श्वानजम्बुकौ ।
काकगृध्रं तथोलूकं सिंहं व्याघ्रं तथा वृकम् ।
आरुह्य पापिनो यान्ति यमलोकं भयावहम् ॥
खरश्वमांसनिचयं भुञ्जन्तो यान्ति पापिनः । [2685]
पुरीषमूत्रनिचयं पिबन्तः पापिनः पथि ॥
हा हतोऽस्मि हतोऽस्मीति क्रन्दमानास्तथा परे ।
तप्तायःपिण्डवदनाः सूचिपूरितलोचनाः ॥
भग्नदन्तोरुजङ्घाश्च गजदन्तैः प्रहारिताः ।
सुदुःखिताः प्रयान्त्येव पापिनः पाण्डुनन्दन ॥ [2690]
पिशाचैर्भक्षिताः केचिद्व्याघ्रैर्वृकगणैस्तथा ।
राक्षसैर्भक्षिताः केचिड्डाकिनीकुलसंकुलैः ॥
कूष्माण्डभैरवगणैर्महागजकरादिभिः ।
ऋषभैः खादिताः केचिन्महिषैः खड्गशृङ्गिभिः ।
जीर्णमांसं वहन्तश्च शुष्कास्थिनिचयानि ते ॥ [2695]
महावराहयूथैश्च दारिता यान्ति पापिनः ।
अहंकारयुता ह्यत्र तत्र राक्षसभक्षिताः ॥
परदाररता ह्यत्र तत्र शिश्नैर्वियोजिताः ।
परद्रव्यापहर्तारः कराभ्यां विनियोजिताः ॥
मग्नदेहा महाकूपे कृष्यमाणाः श्वभिस्तथा । [2700]
प्रयान्ति नरशार्दूल नरकं दारुणं भृशम् ॥
शूलैरुत्कृष्य मांसानि छिन्नदेहास्तथापरे ।
छिन्नदेहा वहन्तश्च स्वशिरः करसंपुटे ।
प्रयान्ति प्राणिनः पापा ब्रह्मघ्ना निर्घृणास्तथा ॥
स्वभुजं केचिदुत्कृत्य खादन्तो यान्ति पापिनः । [2705]
हा पुत्रेति रुदन्तश्च हा तातेति तथापरे ॥
हा अम्बेति तथा चान्ये हा सखेति तथापरे ।
प्रिये कान्ते मम सखि त्राहीत्युक्त्वा तथापरे ॥
महाराज महाभाग रक्ष मां शरणागतम् ।
त्वं पालयेति सततं प्रयान्ति प्राणलोलुपाः ॥ [2710]
विस्मृत्य स्वानि कर्माणि मूढा एवं वदन्ति हि ।
मौनमाश्रित्य यान्त्येव कर्मज्ञाः कुरुनन्दन ।
एवं बहुविधाकारं पापिनो यान्ति तत्पथि ॥
श्रुत्वैवं नरकं राजन्धर्मपुत्रो युधिष्ठिरः ।
मूर्च्छितो भ्रातृभिः सार्धं भीतभीतो व्यतिष्ठत ॥ [2515]
ज्ञात्वा तं पुण्डरीकाक्षः कम्पमानं युधिष्ठिरम् ।
मा भैषीरित्युवाचेदं त्वं राजन्धर्मतत्पर ॥

श्रीभगवानुवाच ।

धर्मिष्ठानां गतिं वक्ष्ये तव प्रीत्यै नराधिप ।
निबोधत सुरैर्जुष्टां सुखदां तत्र शाश्वतीम् ॥
धर्मिष्ठा ये नरश्रेष्ठा दानशीलाः सुबुद्धयः । [2720]
अतीव सुखसंपन्नाः प्रयान्ति यममन्दिरम् ॥
अन्नदा ये च धर्मिष्ठा भुञ्जन्तः स्वादु यान्ति वै ।

—(L. 2660) G(ed) ताड्यमानाश् (for तुद्य°). —(L. 2661) G2 M1 -पात-, G(ed) -पाशैः (for -पाश-) — D1 G(ed) om line 2662 —(L. 2662) G1 कण्ठ- (for कर्ण-). —(L. 2663) G1 पादाग्रा पादकृष्टाश्च (for [a]). —(L. 2666) M1 कर्णाग्रेण (for °भ्या च). — G2 om. lines 2672–2675 G1 M1 om line 2673 —(L. 2674) G1 तृणैराच्छादिते कूपे (for [a]) — G1 M1 om line 2675. D1 om line 2676 —(L. 2677) G2 पङ्के (for शव) — For line 2680, G1 subst

136** कण्टकैः क्रकचैर्दंष्टा प्रयान्ति यमसादनम् ।

— M1 om line 2681 — (L. 2681) D1 G(ed) दीर्घ- (for घटी-) G(ed) वध्यमानाः (for लम्ब°) —(L. 2682) G1 आरोप्य (for आरुह्य) —(L. 2683) G(ed.) सिंहव्याघ्रौ (for सिंहं व्याघ्रं) —(L. 2685) G(ed.) भक्षयन्तः प्रयान्ति वै (for [b]). — M1 om. lines 2688–2689. —(L. 2689) G(ed) -दण्डाश् (for जङ्घाश्). — M1 om. lines 2691–2695 —(L, 2691) D1 महिषैः खड्गशाङ्गिभिः (for [b]). —(L. 2692) G1 शुनकीगणसंकुलैः, G(ed.) डाकिनीगणपीडिताः (for [b]) —(L 2693) G(ed.) शाकिन्यजगरायुतैः (for [b]) — D1 om. (hapl) line 2694. —(L 2694) G1 घट्टिता, G(ed) भक्षिता (for खादिताः) —(L. 2695) G(ed) निचयानपि (for °नि ते). — D1 om (hapl) line 2699 —(L. 2705) G1 M1 उत्कृष्य (for °त्य). G2 स्वमांसं केचिदुद्धृत्य (for [a]). — For line 2707, G(ed) subst.:

137** तथा हा मातरित्यन्ये सखे हाहेति चापरे ।

—(L. 2710) G2 प्रयान्ति प्राणिनः पथि (for [b]). — Before line 2714, all Mss ins वैशंपायनः. —(L. 2714) M1 G(ed) दृढव्रत (for युधिष्ठिरः). —(L 2715) G2 पपात धरणीतले (for [b]). — M1 om the ref. —(L. 2722) M1 G(ed.) नरश्रेष्ठ (for च धर्मिष्ठा). D1 अन्नदाने तु धर्मिष्ठा (for

नीरदा ये तु सुखिन· पिबन्त· क्षीरमुत्तमम् ॥
घृतदा मधुदाश्चैव क्षीरदाश्च नृपोत्तम ।
सुधापानं प्रकुर्वन्ति प्रयान्ति यममन्दिरम् ॥ [2725]
शाकदः पायसं भुञ्जन्दीपद प्रज्वलन्दिशः ।
वस्त्रदो राजशार्दूल दिव्याम्बरधरो ययौ ॥
अलंकारप्रदो याति पूज्यमानोऽमरैः सह ।
गोदानेन नरो याति सर्वकामसमन्वित. ॥
भूमिदो गृहदश्चैव विमाने सर्वसंपदा । [2730]
अप्सरोगणसंकीर्णे क्रीडन्याति यमालयम् ॥
हयदो गजदश्चापि यानदश्च नृपोत्तम ।
यमालय विमानेन याति भोगसमन्वित. ॥
अजदोऽनड्डदश्चैव कृष्णाजिनमहीप्रद ।
फलद पुष्पदश्चैव याति संतोषसंयुत· ॥ [2735]
ताम्बूलदो नरो याति तुष्टात्मा यममन्दिरम् ।
विद्यादानरतो याति पूज्यमानोऽब्जजन्मना ॥
सर्वभूतदयायुक्त· पूज्यमानोऽमरैः सदा ।
पुराणपठको याति पूज्यमानो मुनीश्वरैः ॥
शृण्वन्ति सततं ये तु पुराणं मनुजेश्वर ॥ [2740]
ते चन्द्रधवलैर्यानैः प्रयान्ति यममन्दिरम् ॥
ज्ञानपूर्णा नरा यान्ति कृते ये तु यमालयम् ।
त्रेतायां तपसा लोकं मम प्राणेश्वरस्य ह ॥
द्वापरे यज्ञविधिना प्रयान्ति पदमव्ययम् ।
कलौ युगे नरश्रेष्ठ पुराणश्रवणान्नर· । [2745]
प्रयाति परमं स्थानं यत्र गत्वा न शोचति ॥
कलौ युगे मनुष्याणां पुराणश्रवणान्मम ।
कीर्तनाद्राजशार्दूल मम लोकं भविष्यति ॥
पुराणश्रवणान्मर्त्यं पुत्रपौत्रादिसंयुतः ।
भुक्त्वा भोगान्यथाकाम तदन्ते मामुपैति च ॥ [2750]
कलौ देवाः प्रशंसन्ति पुराणश्रवणं परम् ।
परां मुक्तिमवाप्नोति सत्यं सत्यं मयोदितम् ॥
आत्मार्थं वा परार्थं वा यो वदेद्धर्मसंहिताम् ।
प्रयाति सुखमार्गेण देवलोकं सुखावहम् ॥
धर्मशास्त्रे मतिर्यस्य वर्तते कुरुनन्दन । [2755]
गन्धर्वैः स्तूयमानस्तु स याति यममन्दिरम् ॥
उत्तमाश्वैर्नरा यान्ति केचिद्यानेन धर्मिण ।
गजोष्ट्रवृषभैर्यान्ति विमानेन च भारत ॥
चतुर्दन्तमयं यानमारूढा यान्ति तत्पथि ।
यान्ति देवगणैः सार्धं दिव्यरूपधरा दिवम् ॥ [2760]
रथं मणिमयं दिव्यं जाम्बूनदपरिष्कृतम् ।
आरुह्य सुखिता यान्ति धर्मिष्ठा· पाण्डुनन्दन ॥
केचिद्विमानमारुह्य सूर्यकान्तिसमप्रभम् ।
प्रयान्ति नरशार्दूल मम लोकं सुखप्रदम् ॥
छत्रचामरसंयुक्त सेव्यमाना·प्सरोगणैः । [2765]
ते चन्द्रधवलैर्यानैः प्रयान्ति मम मन्दिरम् ॥
चैत्रनन्दनसंकाशं वनं प्राप्य पथि प्रभो ।
क्रीडयित्वा यथाकामं प्रयान्ति मम मन्दिरम् ॥
शाङ्खिनश्चक्रिणो भूत्वा तुलसीवनरोपका ।
प्रयान्ति मम लोकं वै पुष्पारामप्रवर्तका ॥ [2770]
व्रतोपवासनिरता पञ्चयज्ञपरायणाः ।
ज्वलन्तो यान्ति राजेन्द्र सत्यलोकं बहुश्रुता ॥
ब्रह्मप्रतिष्ठाकर्तारस्तथा वैवाहधर्मदा ।
अनाथविप्रभर्तारः प्रयान्ति मम मन्दिरम् ॥
नित्यदानपरा राजन्नित्यं विप्रप्रपूजका । [2775]
विप्रपादोदकपरा ज्वलन्तो यान्ति मत्पदम् ॥
एव धर्मपरा यान्ति सुखेन मम मन्दिरम् ।
परत्रेह च राजेन्द्र धर्म एव सदा सखा ॥
य इदं पुण्यमाख्यानं धर्माधर्मं हि पाण्डव ।
शृणोति सततं भक्त्या मुच्यते सर्वपातकैः ॥ [2780]

Colophon

---

$^a$). — (L 2725) D1 प्रकुर्वन्त (for °न्ति) M1 मधुपान प्रकुर्वन्त· (for $^a$). — (L 2728) G2 M1 यश्च (for याति). G1 सदा (for सह). — For line 2728, G1 subst. .

138** अलंकारप्रदा यान्ति पूज्यमानामरैः सह ।

— (L 2732) G2 अश्वदो (for हयदो) — (L. 2734) G(ed) वृषदश्च (for ऽनड्डदश्च). — (L 2735) G(ed) याति सहृष्टमानस (for $^b$). — (L. 2736) M1 नरो भृत्यजनैर्वृत· (for $^b$) — M1 om lines 2737–2739 — (L 2737) D1 -दानप्रदो, G1 G(ed) °परो (for °रतो) — (2739) G1 G(ed) पुराणपा(G1 °प)ठका यान्ति (for $^a$) G1 G(ed.) पूज्यमाना (for °नो). — (L 2741) D1 मम (for यम-). — (L. 2742) D1 कृतौ तु न (for कृते ये तु) G1 ममालयम् (for य°) — (L. 2749) G(ed) पुत्रदारसमन्वित (for $^b$) — (L 2750) M1 यथान्यायं (for °काम). G2 भुक्त्वा भोग यथाभोज्यं (for $^a$). — (L. 2752) D1 G(ed) पुराणान्मुक्तिमाप्नोति (for $^a$) — (L 2754) G2 च शाश्वतम् (for सुखावहम्) — (L 2757) G2 याने च (for यानेन) G(ed) भारत (for धर्मिण) G1 विमानेन च भारत (for $^b$) — G1 om line 2758 — (L. 2758) D1 गजै स (for गजोष्ट्र-) G2 विमानैर्भरतर्षभ, G(ed) °नेनार्कवर्चसा (for $^b$) — (L 2763) G2 G(ed) -कान्तिमय- (for °सम-) — (L 2765) G(ed) ह्यप्सरोगणसेविताः (for $^b$) — (L 2766) G2 प्रयान्ति परमं पदम् (for $^b$) — (L. 2768) G(ed) क्रीडित्वा तु (for क्रीडयित्वा). — G(ed) om. lines 2773–2774 — (L 2777) G2 G(ed) यम- (for मम) — (L 2778) G2 परा गति (for सदा सखा) — (L. 2779) G(ed) धर्माधर्मनिरूपणम् (for $^b$)

Colophon — *Sub-parvan* D1 G1 आश्चर्यपर्व शेषधर्माः, G2 M1 G(ed) शेषधर्मा — *Adhy name* D1 धर्मसारयममार्गविस्तारः, G1 यममार्गविस्तारम्, M1 मार्गनिस्तार·, G(ed) यममार्गादिगमननिर्णय·. — *Adhy no* . D1 G1, 2 M1 G(ed.) 21.

युधिष्ठिर उवाच ।

भगवन्देवदेवेश मायातीत महामते ।
नमामि पुण्डरीकाक्ष त्वत्पादकमलं शुभम् ॥
पापिनो ये तु मनुजाः पापं कृत्वा सुदारुणम् ।
नरकं यान्ति ते नाथ मुच्यन्ते ते कथं प्रभो ॥
यदि मुक्ताः प्रयत्नेन तेषां का गतिरुच्यते । [2785]
किं भवन्ति च ते नाथ कथं गर्भं विशन्ति ते ॥
गर्भस्थाः किं नु कुर्वन्ति जातमात्रा यदूत्तम ।
वृक्षत्वे च पशुत्वे च मृगत्वे कृमियोनिषु ॥
पक्षित्वे पापकर्माणो मत्स्यत्वे च महामते ।
एतान्सर्वान्ममानन्त स्पष्टीकर्तुं त्वमर्हसि ॥ [2790]

श्रीभगवानुवाच ।

शृणु पाण्डव वक्ष्यामि नराणां पापकर्मणाम् ।
गर्भस्थानां बहिस्थानां जन्तूनां वर्तनं प्रभो ॥
नरकेषु चिरं मग्ना जन्तवो नित्यदुःखिता ।
शोचन्तः स्वानि कर्माणि बहुकालं रुदन्ति हि ॥
सर्वानेतान्महाघोरान्नरकाननुभूय च । [2795]
क्रमेण दैवयोगात्ते निर्विशन्ति महीतलम् ॥
सर्वदुःखसमायुक्ते सर्वोपद्रवसंकटे ।
स्थावरत्वे नियोज्यन्ते नश्यन्ति प्रभवन्ति च ॥
वृक्षगुल्मलतावल्लीगिरयश्च तृणानि च ।
स्थावरा इति विख्याता महामोहसमावृता ॥ [2800]
दवाग्निना हि दह्यन्ते छिद्यन्ते पापकर्मभिः ।
वेपन्ते हि महावातैः शुष्यन्ते चण्डरश्मिभिः ।
हृष्यन्ते वृष्टिभिस्तात शुष्कायन्ते ह्यवृष्टिभिः ॥
फलार्थं छिद्यमानाश्च गृहार्थं भरतर्षभ ।
चितार्थमिन्धनार्थं च महामोहसमावृताः ॥ [2805]
एवं क्लेशसमायुक्ताश्चिरं तिष्ठन्ति भूतले ।
ततः पञ्चत्वमापन्ना जायन्ते कृमियोनिषु ॥
कृमयस्ते महाभाग सदा दुःखोपजीविनः ।
क्षणार्धमुपजीवन्ति क्षणार्धं तु म्रियन्ति च ॥
बलवद्भिश्च खाद्यन्ते ह्यशक्ता ह्यात्मरक्षणे । [2810]
शीतवातातपक्लेशभूयिष्ठाः क्षुधिता भृशम् ॥
मलमूत्रादिमांसेषु संचरन्तो नृपोत्तम ।
सुखलेशमजानन्तो म्रियन्ते दुःखजीविन ॥
पक्षियोनिं ततः प्राप्य बलिभिः पक्षिभिर्हताः ।
चरणान्निधनं प्राप्ताः खादिता मांसलोलुपैः ॥ [2815]
म्रियन्ते केचिदण्डेषु द्विजाता मांसजीविन ।
केचिद्गृहाङ्गणे बद्धा नीडेषु प्रचरन्ति च ॥
पक्षैर्वियोजिताः केचिद्भक्ष्यन्ते मनुजैर्भुवि ।
केचित्परार्थमाहारमुत्पाद्य क्षुधिता भृशम् ।
बल्यर्थं निहताः केचिच्चेष्टन्ते भुवि मानवैः ॥ [2820]
केचित्तु भूभृतां गेहे भुक्त्वा ह्याहारमुत्तमम् ।
बध्यन्ते वागुरैः केचिन्म्रियन्ते मनुजैः सह ॥
मार्जारोरगदंष्ट्राद्यैः खाद्यन्ते केचिदन्यथा ।
एवं क्लेशसमायुक्ता निधनं यान्ति पाण्डव ।
पशुयोनिं तदागत्य क्लिश्यन्ते बहुधा नृप ॥ [2825]
वक्ष्ये तान्मूढधीन्मत्तानात्मपापमजानतः ।
शृङ्गिणो दंष्ट्रिण केचित्केचित्पादनखायुधाः ।
केचिद्वहन्ति मनुजान्केचिद्भारान्वहन्ति च ।
कुर्वन्ति कलहं केचिदन्योन्यं मदगर्विताः ।
केचित्पदाभ्यां शिरसा केचिद्दंष्ट्रैर्नखैः परे । [2830]
कुर्वन्ति कलहं केचिच्छृङ्गैर्मत्ता वृथा नृप ॥
कर्षन्ति केचिद्दुःखार्ता बद्धास्तिष्ठन्ति केचन ।
मांसाशिनो दुरात्मानः केचित्स्वकर्मविशेषतः ॥
भुञ्जन्ति केचिद्राजेन्द्र दुहन्ति च पिबन्ति च ।
मरणं यान्ति केचित्तु ह्यन्योन्यकलहान्नृप ॥ [2835]
महापापसमायुक्ता वर्तन्ते नृप कानने ।
पिबन्ति रुधिरं केचित्फलानि च तथापरे ॥
खादन्ति कन्दमूलानि तुषारान्विलिहन्ति च ।
खादन्ति दुर्बलान्केचिद्रमन्ते मातरं परे ।
कामयन्ते तथा चान्ये मातरं स्वसखीजनम् ॥ [2840]
जातिभेदमविज्ञाय रमन्ते काममोहिताः ।
प्राप्नुवन्ति तथा चान्ये बन्धनं त्वविशङ्कया ॥

---

$G_1$ om the ref $D_1$ राजा ( for युधिष्ठिर ) — ( L 2781 ) $D_1$ जगत्पते ( for महामते ) — ( L 2784 ) G(ed.) केन ( for नाथ ). — ( L 2787 ) $G_2$ जातमात्रे ( for °मात्रा ). — ( L 2788 ) $G_2$ $M_1$ कृमि- ( for क्रिमि- ). — After line 2788, $D_1$ ins

139** पाषाणत्वे लताभावे तृणगुल्माकृतौ हरे ।
केन दोषेण जायन्ते पुमांसस्तद्वदस्व मे ॥
वृकव्याघ्रवराहादिशशवानरयोनिषु ।
जायन्ते केन दोषेण तत्सर्वं कथ्यतां प्रभो ॥
उष्ट्रवाजीखराकारे गजसिंहादियोनिषु । [5]
कस्य पापस्य कर्तारः समुत्पन्ना महामते ॥
रक्षःपिशाचभावेषु शाकिनीडाकिनीतनौ ।
कस्माद्दोषात्प्रजायन्ते कियन्मात्रा यदूत्तम ॥

— ( L. 2799 ) $D_1$ -निश्चयश् ( for -गिर° ) — ( L 2815 ) G(ed ) चरणैर् ( for चरणान् ). $D_1$ चिरेण निधनं याताः ( for $^a$ ). $D_1$ G(ed.) खाद्यन्ते ( for खादिता ). — ( L 2816 ) $G_1$ जाता वै मांसजीविभिः ( for $^b$ ). — ( L. 2817 ) $G_1$ महाङ्गणे ( for गृहा° ) $D_1$ प्रविशन्ति ; $M_1$ प्रचलन्ति ( for °रन्ति ). $G_2$ व्याधैश्च निधनं गता ( for $^b$ ) — ( L. 2821 ) $D_1$ भ्रमन्ति द्वारमुत्तमम् ( for $^b$ ) — ( L 2825 ) G(ed.) ततः प्राप्य ( for तदागत्य ). — For line 2826, $G_1$ subst. :

140** मध्ये तान्मदमत्तानां पापजन्मपरिग्रहान् ।

— ( L 2829 ) $M_1$ केचिदन्योन्यगर्विताः ( for $^b$ ). — ( L. 2832 ) क्लिश्यन्ते ( for कर्षन्ति ) — ( L 2834 ) G(ed ) मुह्यन्ति ( for दुहन्ति ). — ( L. 2840 ) $D_1$ मातरं सुखहेतवे ( for $^b$ ). — ( L 2841 ) $G_1$ $M_1$ रमन्ते कामुका हि ताम् ( for $^b$ ).

खड्गैर्निकृत्य मांसानि भक्ष्यन्ते केन केचन ।
ताड्यन्ते रज्जुभिर्नित्यं तोत्राद्यैर्दण्डघट्टनैः ॥
शीतवातातपक्लिष्टास्तृणभक्षा सुदारुणा । [2845]
व्याधिभि पीड्यमानाश्च ह्यमेध्यामिषभोजिनः ।
प्रबलैस्ताड्यमानास्ते म्रियन्ते पाण्डुनन्दन ॥
परदेशं प्राप्नुवन्ति रुदन्त क्रयविक्रयैः ।
स्वजनैस्तु परित्यागाद्बाध्यन्ते व्यजनैरपि ॥
एवं पापा प्रलीयन्ते कर्मभि पूर्वसंचितै । [2850]
मृता पुन पुनर्जाता शतश कोटिजन्मसु ॥
तदन्ते दैवयोगेन पूर्वकर्मफलेन वै ।
मानुष्यं प्राप्नुवन्त्येते जन्तव कुरुनन्दन ॥
उत्कृष्टनीचकर्माणो जायन्ते बहुयोनिषु ।
तान्वक्ष्ये भरतश्रेष्ठ पुण्यपापविमिश्रितान् ॥ [2855]
उत्कृष्टा मुखजा प्रोक्ता मध्यमा बाहुजा. स्मृता ।
अधमाश्चोरुजा प्रोक्ता पादजा ह्यधमाधमा ॥
चित्रिण शिल्पिकर्माणः केचित्क्रूरेण कर्मणा ।
रजकाः कुम्भकाराश्च लोहकारास्तथापरे ॥
सौवर्णकाश्च राजेन्द्र कुविन्दा नटपुल्कसाः । [2860]
अन्त्याः किरातवैणाद्या घोषवस्त्रीकुलेषु च ॥
म्लेच्छास्तु पापशेषेण पुलिन्दा व्यधनाविका ।
आन्ध्रास्तुरुष्ककाम्बोजा पारसीकाश्च कोङ्कणा ॥
आम्लायकास्तु तुळुवा आर्यकर्णाटकुञ्जरा ।
लालद्राविडचोलाश्च पाण्ड्या भरतसत्तम ॥ [2865]
एवमाद्या महाभागा कर्मशेषेण निर्मिता ।
स्वेनैव कर्मशेषेण भवन्ति ह्यामयाविन ॥
अन्धा कुब्जा जडा मूका हीनाङ्गा बधिरा परे ।
खञ्जाः काणास्तथा क्लीबा कृशाङ्गाः स्थूलकायिन ॥
केचित्पुण्यावशेषेण साक्षरा प्रभवन्ति हि । [2870]
विद्यादानेषु निरता ब्राह्मणा पुण्यकर्मिणः ॥
एवं भवन्ति भूपाल अल्पविद्याप्रदा अपि ।
वेदान्तवादिनश्चैव शब्दशास्त्रविद परे ॥
काव्यालंकारशीलाश्च पुराणनिपुणाः परे ।
षडङ्गनिपुणा केचिन्मीमांसातर्कवादिन ॥ [2875]
ज्योतिषे गानभैषज्ये निपुणा नर्तका परे ।
भरते वाद्यभेदे च गणिका सेवका अपि ॥
भुञ्जन्ति मेदिनी केचिद्देशं ग्रामं तु भूप्रदाः ॥
इदं विष्णुरहं विष्णुरहं दासस्तु शार्ङ्गिण ।
अनेकजन्मसंसिद्धा केचिदेवं वदन्ति हि ॥ [2880]
ब्रह्मध्यानपरा केचिन्मोक्षशास्त्रविद. परे ।
विश्वं मामेव पश्यन्तो दण्डकाषायधारिण ॥
ज्ञानयज्ञेन चाप्यन्ये कर्मयज्ञेन चापरे ।
नमस्यन्तश्च मामेव जपन्तो मामकं जपम् ।
एवं मुमुक्षव पार्थ मय्येवार्पितमानसा ॥ [2885]
काषायधारिण केचिल्लम्पटा विषयेष्विह ।
एकदण्डास्त्रिदण्डाश्च मुण्डिनो लोकवञ्चका ॥
शिश्नोदरपराश्चान्ये वेश्यासक्तास्तथापरे ।
कपटा नास्तिका केचिद्वृथा वै वेषधारिण ॥
राजसेवां प्रकुर्वन्ति पिबन्ति रुधिर परे । [2890]
खादन्ति मांसं राजेन्द्र पिबन्ति मधु गर्विता ।
कापालिनो जटाधारा वञ्चका प्राणिहिंसका ॥
केचित्पुण्यविशेषेण प्रभव प्रभवन्ति हि ।
दरिद्रा व्याधिता मूर्खा निर्घृणा प्राणिहिंसकाः ॥
नीचसेवां प्रकुर्वन्ति ह्युत्तमा मध्यमाधमान् । [2895]
एवंभूता दुरात्मान पापिन पुण्यकर्मिणः ।
प्रहृष्टा दु खिता सर्वे प्रहसन्ति रुदन्ति च ॥

युधिष्ठिर उवाच ।

देवदेवारविन्दाक्ष पुराणपुरुषोत्तम ।
तापत्रयान्नरा सर्वे मृगमीना हि पक्षिणः ॥
बाध्यन्ते कर्मणा केन गर्भे च बहि च स्थिता । [2900]
तत्सर्वं वद तत्त्वेन यदुनाथ नमोऽस्तु ते ॥

वैशंपायन उवाच ।

धर्मसूनोरिद वाक्य श्रुत्वा भक्तिसमन्वितम् ।
भगवान्वासुदेवस्तु वक्तुं समुपचक्रमे ॥
प्रोक्तं भगवता यस्तु शृणोति श्रद्धया नरः ।

---

— (L 2845) $D_1$ -क्लिष्टास् (for -श्लि°) — (L 2846) $D_1$ $G_1$ भोजना ; $G_2$ G(ed) भोजनै (for भोजिन) — (L 2854) -जन्मानो (for -कर्माणो) $M_1$ पर- (for बहु-). — (L. 2857) $G_1$ $M_1$ ह्यवमा पादजा नृप ($M_1$ °जाधमाः) (for $^b$). — (L. 2860) G(ed) स्वर्णकाराश् (for सौवर्णकाश्). — After line 2862$^a$, $D_1$ ins

141** भवन्ति ह्यामयायिन· ।
अन्धा कुब्जा जडा मूका ·

$D_1$ $G_2$ -नापिता ($G_2$ °का) (for नाविका). — (L. 2863) $D_1$ आन्ध्रास्तु पुष्करम्भोजा (for $^a$) — (L 2864) $G_1$ G(ed) आमदादास् ; G(ed) आमलादास् (for आम्लायकास्) $D_1$ आर्या कन्नोजगुर्जराः (for $^b$). — (L. 2868) $D_1$ $G_2$ मूर्खा (for मूका). — (L 2874) $M_1$ -निरता (for -निपुणा·) — (L 2875) $G_1$ -निरता (for -निपुणा). — (L 2876) $D_1$ ज्योतिपेयाश्च भैषज्ये (for $^a$) — (L. 2881) $D_1$ -ज्ञानरताः (for -ध्यानपरा) — (L 2883) $M_1$ ज्ञान- (for कर्म-). — For line 2887, $G_2$ subst :

142** एकदण्ड्यस्त्रिदण्ड्यश्च मुण्डिन्यो लोकवञ्चका ।

— (L 2889) G(ed) कुटिला (for कपटा) — (L. 2891) $D_1$ -गर्हिता (for -गर्विता). — (L. 2892) $G_1$ कलापिनो ; $G_2$ G(ed) कपालिनो (for का°) $G_{1,2}$ वृथामुण्डाश्च वृत्तयः (for $^b$) — (L. 2895) $G_1$ G(ed) ह्युत्तमाधममध्यमा ($G_1$ °मान्) (for $^b$) — (L 2896) $D_1$ G(ed) पापिन पाण्डुनन्दन (for $^b$) — (L 2897) $G_1$ G(ed) प्रभवन्ति (for प्रहसन्ति). — (L 2900) $M_1$ गर्भे च बहिरास्थिता (for $^b$). — (L. 2901) G(ed) लोक- (for यदु-). — (L. 2904) G(ed.)

विधूय सर्वपापानि ब्रह्मलोकं स गच्छति ॥ [ 2905 ]

Colophon

श्रीभगवानुवाच ।

धर्मात्मन्धर्मिणां श्रेष्ठ जितामित्र शुभव्रत ।
आजन्ममरणान्तानि शृणु कर्माणि देहिनाम् ॥
कामेन बाधिताः सर्वे नरास्तु पशुजातयः ।
मैथुनं भावमाश्रित्य क्रीडन्ति च परस्परम् ॥
स्तनाश्रयं तु नारीणां शोणितं शुक्रवर्धनम् । [ 2910 ]
पुंसां बीजाश्रयं शुक्रं स्त्रीणां सङ्गेन वर्धते ॥
पुनश्च शुक्रवृद्ध्या च नारीशोणितवर्धनम् ।
शुक्रस्य पतने काले जीवांशः पुरुषस्य हि ॥
अन्तर्विशति तद्गर्भे शोणितेन विवर्धते ।
जीवप्रवेशात्तद्गर्भे पुरुषस्य कुरूत्तम ॥ [ 2915 ]
मयूरपिण्डवन्मांसान्मृदुत्वं प्रतिपद्यते ।
चैतन्यमुल्बमभवन्मासादुपरि पाण्डव ॥
मलमूत्रादिदोषेण बद्धो भ्रमति सर्वशः ।
पूर्णे मासद्वये पश्चान्मत्स्याकारं प्रपत्स्यते ॥
पूर्णे मासत्रये गर्भो हस्तपादैः प्रयुज्यते । [ 2920 ]
मासानां पञ्चमे वृद्धिः षष्ठे जीवप्रवेशनम् ॥
सप्तमे रोमवृद्धिः स्यादष्टमे वृद्धिमेति च ।
वर्धिष्यति यथा गर्भस्तथा मूत्रं पुरीषकम् ॥
तेनैव लिप्तसर्वाङ्गः क्लेशमेति रुदन्बहु ।
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षेण तप्यते । [ 2925 ]
भ्रमन्वै क्लेशमसहन्नास्ते गर्भे नरोत्तम ॥
पूर्वजन्मकृतं पापं स्मरन्क्लेशाद्रुदन्बहु ।
समृद्धज्ञानसंपन्नः स्वयमाश्वास्य वर्तते ॥
गर्भस्य वेदनां सोढुमशक्त प्रलपन्बहु ।
मलमूत्रादिसंबद्धो निन्दन्नास्ते कुरूद्वह ॥ [ 2930 ]

युधिष्ठिर उवाच ।

त्रैलोक्यनाथ सर्वज्ञ मायातीत महामते ।
कथं निन्दन्स्वमात्मानं कथं वै विलपन्प्रभो ।
गर्भे तिष्ठति पापेन तन्मे ब्रूहि जनार्दन ॥

श्रीभगवानुवाच ।

मलमूत्रादिसंबद्धो देही गर्भे तु यद्वदेत् ।
तं वदामि च ते प्रीत्या शृणु नान्यमनाः प्रभो ॥ [ 2935 ]

जीव उवाच ।

अहोऽह पापधीर्नित्यं जन्मकोटिशतेषु च ।
पुत्रमित्रकलत्रार्थमपहृत्य वसूनि च ॥
क्षेत्राण्यपि च साधूनामीदृशीं गर्भवेदनाम् ।
प्राप्तोऽहमीदृशः पापी कदा मोक्षो भविष्यति ॥
परेषां धर्मपत्नीनां सङ्गं कृत्वा तु मोहित । [ 2940 ]
मलमूत्रादिपङ्केषु गर्भेषु परिदुःखितः ।
पापस्य मे कदा मोक्षो भविष्यति न वा खलु ॥
एकोऽहं पापकर्मा हि स्थावरत्वमवाप्य च ।
तत्रापि दुःखं बहुलमनुभूतं मया पुरा ॥
मातुस्तापाद्दह्यमानो जरायुपरिवेष्टित । [ 2945 ]
मलपङ्कमहाब्धौ च मग्नदेहो दुनोमि च ॥
मया पोषितपुत्राद्या स्वकर्मवशवर्तिन ।
गतान्यत्र स्त्रियो मित्रं दह्याम्यत्रात्मना त्वहम् ॥
अहो दुःखमहो दुःखमहो दुःखं हि देहिनाम् ।
देहस्तु पापात्संजातास्तस्मात्पापं न कारयेत् ॥ [ 2950 ]
पुत्रमित्रकलत्रार्थमन्यद्द्रव्यं हृतं मया ।
तेन पापेन दह्यामि जरायुपरिवेष्टितः ॥
दृष्ट्वान्यस्य स्त्रिय पूर्वं संतप्तोऽहमसूयया ।
गर्भाग्निना तु दह्यामि पापात्मा पापसंभवः ॥
कायेन मनसा वाचा परपीडामकारिषम् । [ 2955 ]

---

[अ]न्वित. ( for नर. ). — After line 2904, G1 ins .

143** आजन्ममरणान्तानि सचितानि यदृच्छया ।

COLOPHON — *Sub-parvan* D1 G1 M1 G(ed) आश्चर्यपर्वणि शेषधर्मा ; G2 शेषधर्मा . — *Adhy name* G(ed) धर्मसार. — *Adhy no* D1 G1 2 M1 G(ed) 22

( L. 2906 ) D1 श्रुतव्रत ( for शुभ° ). — ( L. 2908 ) M1 कामिनो मनुजा. सर्वे ( for [a] ). G1 -वृत्तय. ( for -जातयः ) —( L 2910 ) G2 सङ्गाश्रय ( for स्तना° ) — M1 om ( hapl ) lines 2912–2914. — (L. 2912) D1 पुस शुक्रस्य वृद्धया च ( for [a] ) — ( L. 2915 ) G1 G(ed) तद्गर्भ ( for °र्भे ) D1 जीवप्रवेशस्तद्गर्भे, G2 °शनाद्गर्भे ( for [a] ). D1 G(ed) कुरूद्वह ( for °त्तम ) — ( L. 2916 ) D1 प्रसूनपिण्डवन्मासं, G1 मयूरवर्णवन्मासो, G2 मयूराकारवन्मासान्, M1 मयूरकाण्डवन्मासान् ( for [b] ) — ( L. 2918 ) G(ed) बद्धो भ्राम्यति सर्वत ( for [b] ) — ( L 2919 ) D1 M1 प्रपद्यते ( for °त्स्यते ). G1 पिण्डाकार प्रपद्यते ( for [b] ). — ( L. 2920 ) G2 पूर्णे मासे तुरीये च ( for [a] ) — ( L 2923 ) G(ed) वर्धते नवमे गर्भे ( for [a] ). — ( L. 2925 ) D1 G2 -तृष्णारूक्षैश्च ( G2 °षेण ) तप्यते ( for [b] ). — ( L. 2927 ) G1 भृशम्, M1 वदन् ( for बहु ). D1 स्मरन्क्लेशान्रुदन्भृशम् ( for [b] ). — ( L 2930 ) D1 निन्दन्नात्मनमात्मना ( for [b] ). —( L. 2934 ) G1 G(ed) -सयुक्तो ( for -सबद्धो ). D1 देही गर्भे विचिन्तयन् ( for [b] ) — M1 G(ed.) om. the ref G2 जन्तुर् ( for जीव ) — ( L 2938 ) G2 ईदृशं गर्भवेदनम् ( for [b] ). — ( L. 2945 ) M1 मनस्तापाद् ; D1 मातु कुक्षौ ( for मातुस्तापाद् ). — ( L 2946 ) D1 G2 G(ed) अग्नि-, M1 मल- ( for मग्न- ). — ( L 2947 ) M1 स्वकर्मपरिवर्तिन ( for [b] ) — ( L 2948 ) D1 गता स्त्रियस्तथा मित्रा, G(ed) गतान्यत स्त्री च मित्र ( for [a] ) D1 दह्यामि स्वात्मना त्वहम्, G(ed.) दग्धो ह्यत्र स्वकर्मणा ( for [b] ) — ( L 2950 ) D1 देहास्तु पापातसजातास्; G1 देहं पापाच्च संजात ( for [a] ). G(ed.) तु नाचरेत् ( for न कारयेत् ). — ( L. 2952) G(ed) दग्धोऽस्मि ( for दह्यामि ) and -पीडित ( for -वेष्टित ). —( L. 2953) G2 स तु दृष्ट्वा स्त्रियं

तेन पापेन दह्यामि अहमेकोऽतिदु खित ॥
अकृत्वा देवकार्याणि पितृकार्याणि लौकिकान् ।
अग्निदेवगृहान्विप्रानीदृशी यातना गत ॥
जपस्नानविहीनत्वादसद्भि सहवासनात् ।
सदा पापरतत्वाच्च प्राप्तोऽहं गर्भवेदनाम् ॥ [ 2960 ]
सदा शास्त्रविहीनोऽहं श्रवणेषु तथालस ।
अनिन्द्यान्निन्द्यमानोऽहमेवं प्राप्तो महद्भयम् ॥
एवं बहुविधं जन्तुर्विलप्य स्वयमेव हि ।
आत्मनात्मानमाश्वास्य बुद्धिं धर्मे नियुज्य च ॥
धर्मं कृत्वा यथान्यायं सत्सङ्गेषु प्रवर्त्य च । [ 2965 ]
कृत्वा देवाग्निपूजां च यास्येऽहं परमां गतिम् ॥
आराध्य तु जगन्नाथं सर्वकामार्थद प्रभुम् ।
जगद्योनिमुदाराङ्गं विश्वरूपं जगद्गुरुम् ॥
देवगन्धर्वनिचयैर्विद्याधरमुनीश्वरै ।
दिग्दन्तिभिश्च दिक्पालैश्चन्द्रसूर्यादिभिर्ग्रहै ॥ [ 2970 ]
ऋषिदेवगणैर्विप्रैरिन्द्राद्यै ससुरासुरै ।
अर्च्यमानं सदा शुद्धं सृष्टिस्थित्यन्तकारिणम् ॥
सर्वगं सर्वलोकानामीश्वरं पुरुषोत्तमम् ।
आनन्दमक्षरं नित्यं स्वप्रकाशं निरञ्जनम् ॥
सूर्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलम् । [ 2975 ]
कालमेघनिभं देवं विद्युच्चञ्चललोचनम् ॥
पीताम्बरधरं देवं शङ्खचक्रादिसेवितम् ।
लक्ष्मीपतिं विशालाक्षं सर्वालंकारशोभितम् ॥
अनन्तमजरं विष्णुं ध्यात्वा नित्यमतन्द्रित: ।
गर्भात्तु निर्गतोऽहं वै मुक्तिं यास्यामि निश्चितम् ॥ [ 2980 ]
अतिक्रमिष्ये संसारं घोरं जलधिसंनिभम् ॥
सर्वत्र हि भयं नास्ति सर्वत्र सुखमेव मे ।
इति वै चिन्तमानस्य जन्तोर्गर्भगतस्य च ।
प्रसूतिकालवायुश्च पुर स्थित्वा च कर्षति ॥
तेनैव वायुना बद्धः प्राजापत्येन पाण्डव । [ 2985 ]
मातुश्च दुःखमतुलं कुर्वन्कर्मबलेन च ।
आकृष्यमाणो निर्गच्छेद्योनियन्त्रप्रपीडित ॥
नि संज्ञं तु विचेष्टन्तं रुदन्तं च विलक्षणम् ।
उज्जीवयति तं वायुर्बाह्यवर्ती कुरूद्वह ॥
स्पर्शनाद्बाह्यवायोश्चानन्तरं स शिशुर्नृप । [ 2990 ]
नष्टस्मृतिस्तथा दु खमतुलं च प्रपद्यते ॥
दैवाद्बालत्वमापन्नो जन्तुर्दु खाद्विमुच्यते ।
वक्तुं स तु न शक्नोति किंचिच्चापि न वेद स: ॥
स्वदेहमलमूत्रैश्च लिप्ताङ्गो दुःखकर्शित ।
आध्यात्मिकादिदु खैश्च पीड्यमानो रुदन्वसेत् ॥ [ 2995 ]
क्षुत्तृड्भ्यां पीडितो नित्यं मशकैर्यूकदंशकैः ।
स्वपन्रुदश्च बहुशो वर्तते पेटके नृप ॥
क्षुधया पीडिते बाले जननी बान्धवा अपि ।
उदरे वेदनास्तीति शिशोरस्य वदन्ति हि ॥
स्तन्यं देयमहो कष्ट शिशो किंचिन्न विद्यते । [ 3000 ]
वदन्त्यौषधमन्योऽपि देयं देयमिति प्रभो ॥
एवं भोगमनुप्राप्य ह्यन्याधीनतया नृप ।
पीडितो मलदंशाद्यैर्बाल्यभावं प्रपद्यते ॥

वैशंपायन उवाच ।

एवं श्रुत्वा महाभागो धर्मपुत्रो महामतिः ।
आश्चर्यं परमं गत्वा नमस्कृत्येदमब्रवीत् ॥ [ 3005 ]

युधिष्ठिर उवाच ।

पाहि लोकपते देव वासुदेवारिमर्दन ।
त्वमेव गतिरस्माकं सर्वकाले यदूत्तम ॥
पाञ्चालीं पाण्डवान्साधून्कुन्तीं धर्मभृतां वर ।
पालयास्यनिशं भक्तानित्युवाच पुरा प्रभो ॥
तस्मात्त्वां प्रार्थयाम्यद्य त्वद्वक्त्रकमलस्तुतम् । [ 3010 ]

---

पूर्वम् ( for $^{a}$ ). D1 अन्यद्रव्य हृतं मया, G2 अन्यद्रव्यमसूयया ( for $^{a}$ ) —( L 2954 ) G(ed ) सुदग्धोऽस्मि ( for तु दह्यामि ). —( L 2955 ) G(ed ) परपीडा मया कृता ( for $^{b}$ ). —( L 2956 ) G(ed.) दग्धोऽस्मि ( for दह्यामि ) —( L. 2958 ) G1 वेदना ( for यातना ) — For line 2958, G(ed ) subst. :

**144**** ग्रहविप्राग्निपूजां च यातनामीदृशी गत ।

—( L. 2961 ) D1 -पुराणाना ( for -विहीनोऽह ) —( L. 2962 ) G2 अनिन्द्यैर् ( for °न्द्यान् ) G(ed ) अनिन्द्यान्निन्दयन्साधून् ( for $^{a}$ ). —( L 2966 ) M1 कृत्वाग्निपूजा धर्मांश्च ( for $^{a}$ ). G(ed ) प्राप्स्ये ( for यास्ये ) D1 G2 परम पदम् ( for °मां गतिम् ). —( L 2967 ) D1 आराध्य जगतां नाथ ( for $^{a}$ ) —( L 2968 ) G2 मुरारिं च ( for उदाराङ्गं ) D1 M1 -योनिं ( for -रूप ). —( L 2969 ) M1 -मनुजैर् ( for -निचयैर् ). — G2 om lines 2970–2971 —( L 2971 ) G(ed ) सिद्धयोगि- ( for ऋषिदेव- ). —( L. 2972 ) D1 सर्गस्थित्यन्तकारणम् ( for $^{b}$ ) —( L 2974 ) G(ed ) दिव्य ( for नित्य ). G2 अनन्तमक्षय नित्य ( for $^{a}$ ) —( L 2976 ) G(ed ) पीताम्बरधर विभुम् ( for $^{b}$ ) —( L 2977 ) G(ed.) अभयं वरदं शान्तं ( for $^{a}$ ) D1 -सयुतम् ( for -सेवि° ). G2 शङ्खचक्रगदाधरम्; G(ed ) °चक्रादिभिर्युतम् ( for $^{b}$ ) —( L 2979 ) D1 अचलं ( for अजरं ) —( L 2980 ) G1 गर्भात्तु निर्गम प्राप्य ( for $^{a}$ ). —( L 2982 ) D1 सुखं ( fo भय ) —( L 2983 ) G(ed.) इति चिन्तयतो नित्य ( for $^{a}$ ). —( L. 2987 ) G2 M1 -प्रपीडित ( for -निपी° ) —( L 2988 ) G1 2 M1 G(ed ) निसज्ञ भुवि वेष्टन्तं ( for $^{a}$ ). —( L 2990 ) G2 जन्तोस्तस्य च धीमत. ( for $^{b}$ ) —( L 2992 ) D1 जन्तुर्दु खं प्रपद्यते ( for $^{a}$ ). —( L 2993 ) D1 गन्तुं ( for स तु ). G(ed ) स्ववेदनाम् ( for न वेद स ). —( L. 2997 ) D1 स्वपु रुदन्सुबहुशो ( for $^{a}$ ). —( L 2998 ) G1, 2 M1 G(ed.) क्षुवा च ( for क्षुधया ). D1 क्षुधया पीडितो बालो ( for $^{a}$ ). —( L 3002 ) M1 ह्यन्याधीनस्तथा नृप ( for $^{a}$ ) —( L 3004 ) G2 G(ed ) महाभाग

पातुं धर्मामृतं नाथ यदुपुंगव संप्रति ॥
भगवन्सर्वलोकेश प्रणतार्तिप्रणाशन ।
नतोऽस्मि ते पादमूलं भक्तं मां परिपालय ॥
बाल्ये च यौवने कृष्ण वार्धके चरमेऽनघ ।
का बाधा किं सुखं तात तन्मे त्वं कृपया वद ॥ [ 3015 ]

वैशंपायन उवाच ।

एवमुक्तो जगन्नाथो योगिध्येयो मुनीश्वरः ।
प्रत्युवाच स धर्मात्मा पाण्डुपुत्रं बहुश्रुतम् ॥
गदितं धर्मराजाय वासुदेवेन विष्णुना ।
शृणोति यः सदा भक्त्या गङ्गास्नानफलं लभेत् ॥

Colophon

श्रीभगवानुवाच ।

शृणु पाण्डव वक्ष्यामि जन्तूनां पापकर्मणाम् । [ 3020 ]
बालत्वे यौवनत्वे च वृद्धत्वे यत्कृतं तु तत् ॥
बाल्ये मातरमभ्येत्य ददस्वेति फलादिकान् ।
रुदन्भूमौ लुठन्केशांस्ताडनं प्राप्यते सदा ॥
निर्धना बहुपुत्रा सा रुदन्ती पुत्रगृद्धिनी ।
उदरं तु शिरोभागं विनिहत्य ब्रवीति च ॥ [ 3025 ]
अहो दरिद्रता कष्टं तत्रापि बहुपुत्रता ।
निर्घृणस्य पतेर्भार्या तस्यापि मरणं वरम् ॥
धिग्जन्म भाग्यरहितं धिग्जन्म ख्यातिवर्जितम् ।
नरस्य बहुपुत्रस्य दरिद्रस्य च धिग्बलम् ॥
इति क्लेशं वर्धयित्वा भर्तुश्च नितरां प्रभो । [ 3030 ]
लेखकानां वशे बालं नियुज्य सुखमश्नुते ॥
गृहोपद्रवमालोक्योपाध्यायवशवर्तिनम् ।
पिता च तं सुतं धीमान्करोति च सुदुःखितम् ॥
असोढा वेदना तेषां यत्र कुत्रापि लीयते ।
अनागते शिशौ तस्मिन्रुदन्ति पितरो भृशम् ॥ [ 3035 ]
क्व गतो बालको मेऽद्य किं करोमि च संप्रति ।
कुलतन्तोर्वियोगेन ममैव मरणं ध्रुवम् ॥
न चिरायति तातोऽयमहो कष्टमुपस्थितम् ।
हा पुत्र क्व नु गन्तासि किं करोमि त्वया विना ॥
कुलं धनं गृहं क्षेत्रं वासांस्याभरणानि च । [ 3040 ]
सर्वं नष्टं त्वया हीनं हा पुत्रक करोमि किम् ॥
गौर्धेनोर्महिष्यश्च शकटं यानवाहनम् ।
कुलं चानडुहां पुत्र दासीदासकुलं हतम् ॥
घृतं धान्यं गुळं तैलं शर्करापूपसंहतिः ।
श्वेतताम्बूलकर्पूरचन्दनानि हतानि मे ॥ [ 3045 ]
वस्त्रकञ्चुककौशेयपट्टमाञ्जिष्ठकम्बला ।
त्वया हीनानि किं मेऽद्य हतानि च सुखं सुत ॥
एवं विलप्य पितरौ बन्धुभिः सह धर्मज ।
त्यक्ताहारास्त्यक्तनिद्राः सर्वे तिष्ठन्ति दुःखिताः ॥
मार्गमाणौ भृशं लब्ध्वा प्रलप्य बहु दुःखितौ । [ 3050 ]
पांसुभिर्धूलितं पुत्रं तृष्णया परिपीडितम् ।
हा हतेति तमालिङ्ग्य वर्तेते पितरः परे ॥
भक्ष्यभोज्यानि वस्त्राणि फलानि रसवन्ति च ।
दत्त्वा समृद्धं राजेन्द्र कारयेते गुरोर्वशे ॥
ताडनं कलहं कुर्वन्नत्यन्गच्छन्रुदन्स्वपन् । [ 3055 ]
पीडयन्पीडितो नित्यं गुरुणा पीडितो भृशम् ।
अक्षराणि लिखन्भूमौ वर्तते च गुरोर्वशे ॥
क्रीडनं कलहं कुर्वन्बहुव्यापारसंयुतः ।
सदाशुचित्वमापन्नो गृहे वसति वै क्षणम् ॥
एवं बहुतरं क्लेशं सुखं समनुभूय च । [ 3060 ]
ततस्तु यौवनं प्राप्य धनार्जनपरो भवेत् ॥
समुद्रलङ्घनं कृत्वा वञ्चयित्वा परानपि ।
व्यापाराच्चैव कृष्यंशाद्याचनात्प्राप्नुते धनम् ॥
रक्षणार्थं धनस्याशु बहुप्राकारसंयुतम् ।
दृढं कृत्वा प्रयत्नेन वेश्म पालयते धनम् ॥ [ 3065 ]
राजतस्करदुर्वृत्तैस्तद्धने विलयं गते ।
रुदन्बहुविधं क्लेशाज्जठरं विनिहत्य च ।

(for °भागो). G1 महाद्युतिः (for °मतिः) — D1 G2 M1 om. the ref. — (L. 3008) G1 G(ed) बन्धून् (for साधून्) — (L 3012) G(ed.) -विनाशन (for प्रणा°). — (L. 3015) D1 किं वाधिकं (for का बाधा किं)

Colophon — *Sub parvan* D1 M1 आश्चर्यपर्वणि शेषधर्माः, G1 आश्चर्यपर्व, G2 G(ed) शेषधर्माः — *Adhy name* · D1 M1 कृष्णयुधिष्ठिरसंवाद ; G1 जन्तुजननक्रम ; G(ed) पिण्डोत्पत्तिकथनम् — *Adhy no* D1 G1, 2 M1 G(ed.) 23

G(ed) om the ref. G1 श्रीकृष्ण (for श्रीभगवान्) — (L 3024) G2 -वार्धिनी, G(ed) -कर्शिता (for -गृद्धिनी). D1 कृपणा गृध्रपुत्रिणी (for $^b$) — (L 3025) G(ed) [अ]-ब्रवीदिति (for ब्रवीति च) — (L 3026) D1 G1 निर्धनता (for दरिद्रता). — (L. 3027) G(ed) च भार्यात्व (for पतेर्भार्या) — (L. 3029) D1 M1 नरस्य बहुपत्नस्य (for $^a$). — (L 3032) G(ed) स्वाध्याय- (for [उ]पाध्याय-) — (L 3033) G2 कशापातं (for पिता च तं). M1 सुख (for सुतं). — (L. 3034) D1 G2 असोढुं (for °ढा) — (L. 3035) M1 G(ed.) रुदन्तौ पितरौ भृशम् (for $^b$). — (L. 3038) G1 न विचारयिता दोषम्; G(ed.) अविचार्यं च वै दोषम् (for $^a$). — (L. 3042) D1 G2 गा (for गौर्) G(ed) चाश्व- (for यान-) — (L. 3045) G(ed) गन्ध- (for श्वेत-) G(ed) -दुकूलानि (for -चन्दनानि) — (L 3046) G1 -वस्त्र- (for -पट्ट-). M1 -कम्बलम् (for °ला) G(ed) पट्टमाञ्जिष्ठकादि च (for $^b$). — (L. 3050) G2 लब्वा (for लब्ध्वा) G(ed) विलप्य शिशुसंहतौ (for $^b$) — (L 3051) M1 लुलितं; G(ed) धूसरं (for धूलितं) — (L 3053) M1 G(ed) सर्वाणि (for वस्त्राणि). — D1 om. (hapl) lines 3055–3056. — (L. 3055) G1 G(ed.) लुठन्रुदन्, M1 रुदन्परान् (for रुदन्स्वपन्). — (L. 3056) G2 पीडयन् (for पीडितो). — (L. 3058) G2 क्रुद्ध

आस्यं शिरश्च राजेन्द्र तूष्णीमास्ते सुबोधित· ॥
तत परं समुत्थाय रुदन्भूमौ पतन्भृशम् ।
विलपन्वर्तते मोहादविज्ञाय स्वकर्म च ॥ [3070]
अहोऽहं पापधीर्नित्य सर्वै लक्ष्म्या समावृता: ।
पुरार्जितेन पापेन निर्भाग्योऽहं भवामि च ॥
बहुक्लेशसमापन्नं नष्टमासीद्धि मे धनम् ।
मत्तोऽधिकाश्च तिष्ठन्ति ममैवमभवद्धत ॥
देव एव हि जानाति पुरा येन च यत्कृतम् । [3075]
तदेव मयि दृष्टं च किमन्यैर्बहुभाषितै. ॥
गृहक्षेत्रादिकं कर्म किंचिन्नापि विचारितम् ।
समृद्धस्य कुदुम्बस्य कथं भवति जीवनम् ॥
मम मूलधनं नास्ति वृष्टिश्चापि न वर्षति ।
न लभ्यते वर्तन च राजबाधातिदु:सहा ॥ [3080]
रिपवो मां च बाधन्ते कथमन्यत्र वर्तनम् ।
व्यवसायाक्षमश्चाहं प्राप्त प्राणहरो रिपु ॥
सखिमित्रसुहृद्वर्गा मातुलश्वशुरात्मजा· ।
पोषितापि मया नूनं मा त्यजन्ति हि निर्धनम् ॥
एवं चिन्ताकुलो राजन्निवारयितुमक्षम । [3085]
आध्यात्मिकानि दु.खानि ह्यवशोऽनुभवंश्च स ॥
ततो वृद्धत्वमापन्न क्षीयमाणबलस्तदा ।
जरापलितदेहोऽसौ कम्पते सततं नृप ॥
श्वासकासादिसंयुक्त पीडितो घूर्णलोचन ।
श्लेष्मव्यावृतकण्ठत्वात्पुत्रैर्निर्भर्त्स्यते सदा ॥ [3090]
बाधसे किं वृथा मूढ त्वं वृद्धकुणप शृणु ।
जीवितं तव धिक्कष्टं कदा मरणमेष्यसि ॥
दग्ध्वारण्ये कदा यामि सौख्यं त्वां पापकर्मिणम् ।
त्वयि तिष्ठति मे किंचिद्भाग्यं नैव मृतो भव ॥
धनं विश्राण्य सर्वं त्वं वृथा त्वं शोचसे पित· । [3095]
अस्मान्वै पातयित्वा च कथं मरणमेष्यसि ॥
निर्घृणस्य तवेदानीं परं मरणमेव च ।
परलोके च ते मूढ नरकं भवति ध्रुवम् ॥
चोरयित्वा धनं सर्वं वञ्चयित्वा तु मामकान् ।
क्व गन्तासि कथं त्वां तु हनिष्ये मृत्युवद्ध्रुवम् ॥ [3100]
एतत्कष्टतरं वाक्यं पित्रादीनां रुदंस्तदा ।
श्रुत्वा करुणया वाचा प्रलपन्वदते तदा ॥
अहो कष्टमहो कष्टं वृद्धानां पापजीवनम् ।
मृतं मारयते चैव पुत्रोऽयं बाधते भृशम् ॥
कदा मरणमेष्यामि कदा तृप्तिर्भवेत्तव । [3105]
यद्दु खं मम संप्राप्तं तत्तवैव भविष्यति ॥
इत्युक्त्वा प्रलपन्मूढो ह्यज्ञानात्प्रेमबन्धनात् ।
पुत्रान्प्रति महाभाग कृपया वदते तदा ॥
गृहक्षेत्रादिक वस्तु मया नैवोपपादितम् ।
कथं वर्तनमन्यत्र शिशोरस्य भविष्यति ॥ [3110]
परस्य चेद्धन सर्वं पुत्रादीना कथं भवेत् ।
वर्तनं कि नु भविता जीविष्यन्ति च ते कथम् ॥
मम दु ख बहुतरं किं न यास्ये परा गतिम् ।
हा तात अम्ब कान्तेति रुदञ्जन्तुर्विमोहित ॥
मोहात्प्रजल्पति पुन. काले तु समुपस्थिते । [3115]
उपार्जित धनं सर्वमानयस्वेति संप्रति ॥
आस्ये चार्ध करे चार्धं भुञ्जन्मध्यं च पुत्रक ।
पूरयस्व च पाहीति लुठन्नास्ते विमोहित· ॥
एव क्लेशं बहुतर निन्दन्कुर्वन्परस्य च ।
क्षुत्तृड्भ्यां पीडितो नित्यं वदते च पुन· पुनः ॥ [3120]
देहि मे चोदकं शीतं गाढतापान्मृतोऽस्म्यहम् ।
हा हेति पर्यटन्मूर्छन्घर्घरायति धर्मज ॥
ततो बन्धुजना सर्वे निराहारातिदु खिता· ।
किमर्थं जल्पसे पापिन्नोचितं शीतलं जलम् ।
मृतवत्तिष्ठ तिष्ठेति तदा वाचा दहन्ति च ॥ [3125]
इत्येवं प्रलपञ्जन्तुर्विवश कर्मसंक्षयात् ।
निश्चैतन्यो भवेच्छीघ्र बान्धवै परिवेष्टित ॥
ततो यमभटैर्बध्वा भर्त्स्यमानो यमालयम् ।
प्राप्यते घोरमार्गेण वृकराक्षसभक्षित ।
श्वभि काकैर्गृध्रगणै शार्दूलैर्डाकिनीगणै ॥ [3130]
खड्गसूचीसमायुक्ते तप्तसैकतविस्तृते ।
तप्तपाषाणसंबाधे तप्तकर्दमसंकटे ॥
वह्निवृष्टिसमायुक्ते ह्यस्त्रवृष्टिभिरुत्कटे ।
शिलावृष्टिसमायुक्ते नानाबाधासमन्विते ॥
मार्गे महोपले घोरे कृष्यमाणो ह्यधोमुख: । [3135]
नरकं पूर्ववत्प्राप्य दु खमेव प्रपद्यते ॥
एवं ते मामविज्ञाय मूढा. संसारपाशगा ।
पुनः पुनश्च गच्छन्ति जायन्ते च पुन पुनः ॥
संसारपाशविच्छेदकारणं मां भजन्ति ये ।
ते यान्ति परमं स्थानं पुनरावृत्तिवर्जितम् ॥ [3140]
तस्मात्संसारतापार्तो ह्यभ्यसेद्योगमुत्तमम् ।

---

न्कुर्वन्सबालश्च ( for [a] ). — ( L 3059 ) G(ed.) मठे वै वसति क्षणम् ( for [b] ) — ( L. 3063 ) D1 कार्पण्याद् ( for कृष्यशाद् ). — ( L 3066 ) G(ed.) तद्धन च हृत यदि ( for [b] ) — ( L. 3868 ) M1 अध शिराश् ( for आस्यं शिरश् ) — ( L 3069 ) D1 लुठन्भृशम् ; G2 लुठन्पतन् ( for पतन्भृशम् ) — ( L. 3072 ) D1 भ्रमामि ( for भवामि ). — ( L 3074 ) D1 विभवेन समन्विता· ( for [b] ) — ( L 3075 ) G1 G(ed.) दैवम् ( for देव ). — ( L. 3076 ) D1 तदेव कथितं कर्म ( for [a] ). — ( L. 3080 ) G(ed ) सुवृत्तिश् ( for वर्तन ). — ( L 3083 ) D1 आपि मित्रसुहृद्भार्या ( for [a] ) — ( L 3086 ) D1 G(ed.) आध्यात्मिकादिदु खानि ( for [c] ) D1 बाध्यमानश्च सर्वत ( for [b] ) — ( L 3091 ) G(ed ) त्व वृद्धकुणपो यथा ( for [b] ). — G2 om lines 3099-3100 — ( L 3102 ) G2 श्रुत्वा कष्टतर वाक्यं ( for [a] ) G(ed ) वक्ति वै ( for वदते ) — ( L. 3119 ) D1 निन्दाक्लेश परस्य ह ( for [b] ). — ( L 3120 ) D1 क्षुत्तुष्णा- ( for क्षुत्तृड्भ्यां ) — ( L. 3131 ) G2 अतिघोर- ( for खड्गसूची- ).

योगाज्ज्ञानं भवेत्सम्यग्ज्ञानान्मोक्षमवाप्यते ॥
ज्ञानशून्या नरा ये तु पशव· परिकीर्तिताः ।
तस्मात्संसारमोक्षाय परं ज्ञानं समभ्यसेत् ॥
मानुष्यं जन्म संप्राप्य सर्वधर्मप्रसाधकम् । [3145]
ज्ञानं नैवाभ्यसेद्यस्तु कोऽन्यस्तस्मादचेतन ॥
अनेककोटिजन्मानि भ्रान्तस्य मनुजेश्वर ।
मानुष्यं प्राप्यते दैवाद्भुक्तिमुक्तिप्रदायकम् ॥
मानुष्ये मरणं प्राहुस्तत्तु मिथ्या हि बान्धवा· ।
ज्ञानाद्वा मयि भक्त्या वा ह्यमृतत्वं स गच्छति ॥ [3150]
सत्सङ्गेन विशुद्धात्मा याति ब्रह्म सनातनम् ।
न तस्य पुनरावृत्तिर्मम लोकात्कदाचन ॥
तस्मात्त्वमपि राजेन्द्र भज मां मुक्तिदं शुभम् ।
अस्ति चेत्तव संसाराद्भीतिर्जन्मान्तरप्रदा ।
भज मां देवदेवेशं सर्वधातारमच्युतम् ॥ [3155]
ये भजन्ति च मां नित्य सर्वसंसारभेषजम् ।
तेषामेवाचिरान्मुक्तिर्जायते धर्मनन्दन ॥

वैशंपायन उवाच ।

एवं प्रबोधितस्तेन कृष्णेन ब्रह्मरूपिणा ।
प्रहृष्टात्मा तदा पार्थो नमस्कृत्येदमब्रवीत् ॥
कृतार्थोऽस्मि महाभाग जगन्नाथ कृपाकर । [3160]
भवता पालितोऽहं वै धर्मशास्त्रोपदेशतः ॥
कृपया तव देवेश संस्थानं प्राप्य शाश्वतम् ।
त्वयोक्तान्सकलान्धर्मान्करिष्ये वचनात्तव ॥
तावत्कालमिमं देहं मनुजान्पाहि धर्मतः ।
गुणदोषं यदास्मासु तत्सर्वं त्वयि वर्तते ॥ [3165]
ते वयं न विजानीम पुण्यदोषफलं प्रभो ।
त्वत्पादाम्बुजभक्तानां रक्षिता त्वं विशेषतः ॥
त्वत्पादमूलं तु वयं हि सर्वे
गता. स्म लोकेश कविः कवीनाम् ।
ईशो विरिञ्चश्च हरिस्त्वमेव [3170]
यज्ञेश्वरो यज्ञभुजां प्रधानः ॥
पतिं पतीनां पतिदेवतानां
गतिं गुरूणां गुरुमप्रमेयम् ।
नमामि नित्य बहुरूपमीशं
तथा वधूना वरदं यदूनाम् ॥ [3175]
भक्तानिमान्संप्रति देवराज
त्वत्पादमूल सततं प्रपन्नान् ।
पातुं समर्थोऽसि सहस्रनेत्र
पुनश्च भूयोऽपि नमो नमस्ते ॥
किं नु व्रतं करिष्यामि किं नु तीर्थनिषेवणम् । [3180]
इदानीमुचितं ब्रूहि नित्यं वै लोकनायक ॥
क्षेत्राणामुत्तमं क्षेत्रं तीर्थानां च तथोत्तरम् ।
किं वासुदेव लोकेश कृपया वद सुव्रत ॥

वैशंपायन उवाच ।

इत्युक्तो वै जगन्नाथो धर्मपुत्रेण धीमता ।
विचार्य मनसा राजञ्गौ भागीरथीं प्रति ॥ [3185]

सूत उवाच ।

यः पठेदिमध्यायं नूनं वैराग्यकारणम् ।
जनने मरणे चैव तस्य नास्ति महद्भयम् ॥
शृणुयाद्य इमं नित्यमर्थतो मुनिसत्तम· ।
अचिरात्तस्य वैराग्यं जायते भक्तिरेव च ॥

Colophon

श्रीभगवानुवाच ।

तीर्थानामुत्तम तीर्थं क्षेत्राणां च तथोत्तमम् । [3190]
गङ्गायमुनयोर्योगं वदन्ति परमर्षय. ॥
सितासितोदकं तीर्थं ब्रह्माद्याः सर्वदेवताः ।
मुनयो मानवाश्चैव सेवन्ते पुण्यकाङ्क्षिण ॥
गङ्गा पुण्यनदी ज्ञेया त्रैविक्रमपदोद्भवा ।
पापहा यमुना प्रोक्ता तयोर्योगमनुत्तमम् ॥ [3195]
स्मृतार्तिनाशिनी गङ्गा नदीनां प्रवरा शुभा ।
सर्वपापक्षयकरी सर्वोपद्रवनाशिनी ॥
यानि क्षेत्राणि पुण्यानि समुद्रान्ते महीतले ।
तेषां पुण्यतमं ज्ञेयं प्रयागाख्यं महीतले ॥

---

— $D_1$ $G_2$ om. line 3134 — (L 3145) $D_1$ -काम- (for -धर्म-). $G_1$ $M_1$ सर्वकर्मप्रणाशनम् (for $^{b}$). — After line 3146, $M_2$ ins ·

145** न तस्य पुनरावृत्तिर्मम लोकात्कदाचन ।
तस्मात्त्वमपि राजेन्द्र भज मा मुक्तिद शुभम् ॥

— (L 3147) G(ed) गच्छता (for भ्रान्तस्य) — (L. 3149) $M_1$ तत्तुं मिथ्या हि पाण्डव, G(ed.) तत्तु विद्यां हि साधनम् (for $^{b}$) — $G_2$ om lines 3150–3153 — (L 3157) $D_1$ मदर्चनात् (for एवाचिरान्) — Before line 3160, G(ed) ins युधिष्ठिर.. — (L 3173) $G_1$ गुरुरप्रमेय $G_2$ गणयेऽप्रमेयम्, $M_1$ गतिमप्र° (for गुरु°) — (L 3178) $G_2$ वक्तु (for पातु) — G(ed) om lines 3180–3181. — (L 3182) $D_1$ निषेवणम्; $G_1$ $M_1$ तथोत्तमम् (for °त्तरम्). G(ed) तीर्थानामुत्तम तथा (for $^{b}$) — $D_1$ $G_1$ $M_1$ om. the ref. G(ed.) वैशपायन (for सूत) — (L. 3189) $M_1$ G(ed.) जायते मुक्तिमेव स ($M_1$ °मेष्याति (for $^{b}$).

COLOPHON — *Sub-parvan*. $D_1$ आश्चर्यपर्वणि शेषधर्माः; $G_1$ $M_1$ आश्चर्यपर्वणि हरिवंशे उपरिभागः, $G_2$ शेषधर्मा·, G(ed.) शेषधर्मे उपरिभाग· — *Adhy name*: $D_1$ अवस्थात्रयवर्णने धर्मोपदेश; $M_1$ नरकधर्मा; G(ed) नरकधर्मादिवर्णनम्. — *Adhy no*. $D_1$ $G_{1\,2}$ $M_1$ G(ed) 24.

— (L 3191) $D_1$ प्रवदन्ति मनीषिण (for $^{b}$). — (L. 3192) $M_1$ ब्राह्मणा (for ब्रह्माद्याः). — (L. 3193) G(ed.) ऋषयो (for मुनयो) — (L. 3195) G(ed.) तयोर्योगस्त्वनुत्तमः (for $^{b}$) — (L 3198) $D_1$ G(ed.) महीपते (for °तले). — (L. 3200) $D_1$ योजनाना शतैरपि, $G_2$ °नानां विदूरतः (for

गङ्गे गङ्गेति यो ब्रूयाद्योजनायुतदूरतः । [3200]
मुच्यते सर्वपापेभ्यो गङ्गास्नानफलं लभेत् ॥
मम पादोद्भवा देवी विश्वेश्वरसमीपगा ।
संसेव्या सर्वदा देवैः संसारच्छेदलिप्सुभिः ॥
तत्सैकतं ललाटे तु ध्रियते येन पाण्डव ।
तत्रैव नेत्रं शिरसि विधोरर्धं च धारयेत् ॥ [3205]
यन्मज्जनं महापुण्यं दुर्लभं ह्यकृतात्मनाम् ।
साधूनां सुलभा गङ्गा प्रीता मोक्षप्रदायिनी ॥
यत्र स्नाताः पापिनोऽपि पितृमातृकुलानि च ।
सहस्राणि समुद्धृत्य प्रयान्ति मम मन्दिरम् ॥
स स्नातः सर्वतीर्थेषु गङ्गां स्मरति यः सदा । [3210]
पुण्यक्षेत्रेषु सर्वेषु स्थितवान्नात्र संशयः ।
योजनत्रितयं गत्वा गङ्गायामिति गच्छति ॥
यत्र स्नातं नरं दृष्ट्वा नराः पापवृता अपि ।
मुच्यन्ते सर्वपापेभ्यो नात्र कार्या विचारणा ॥
यदम्भःस्पर्शमात्रेण सर्वपापविमोचितः । [3215]
यन्मृदं मस्तके धृत्वा देवेशो भवति ध्रुवम् ॥
देहेऽनुलेपनं कृत्वा देहबन्धो न जायते ॥
कदा यास्याम्यहं गङ्गा कदा यास्यामि तामहम् ।
अनुतप्यति यो नित्यं स विष्णुर्नात्र संशयः ॥
योजनत्रितयं यस्तु गङ्गायामिति गच्छति । [3220]
सर्वपापविनिर्मुक्तो गङ्गास्नानफलं भवेत् ॥
सेयं गङ्गा महापुण्या नदीरन्याः प्रविश्य वै ।
मेषादिषु च मासेषु पावयत्यखिलं जगत् ॥
गोदावरी भीमरथी कृष्णा रेवा सरस्वती ।
तुङ्गभद्रा च कावेरी कालिन्दी सरयूर्नृप ॥ [3225]
वेत्रावती ताम्रपर्णी शतद्रुश्च महानदी ।
एवमादिषु सर्वासु नदीषु सततं स्थिता ॥
या पुण्यतिथयः प्रोक्ताः शास्त्रेषु मुनिपुंगवैः ।
तासु सर्वजलस्था सा पावयत्यखिलं जगत् ॥
मकरस्थे रवौ गङ्गा जलमात्रे व्यवस्थिता । [3230]
पुनाति स्नानपानाद्यैः पावयत्यखिलं जगत् ॥
गङ्गायाः सदृशो नास्ति पापारण्यदवानलः ।
भवव्याधिहरा गङ्गा तस्मात्सेव्या प्रयत्नतः ॥
गङ्गाजलकणेनापि यः सिक्तो मनुजेश्वर ।
सर्वपापविनिर्मुक्तः स याति परमां गतिम् । [3235]
आकल्पजन्मभिः पापं संचितं यन्नरैर्नृप ।
तत्सर्वं लयमायाति प्रयागे माघमज्जनात् ॥
ब्रह्मादयः सुरा सर्वे रुद्रादित्या मरुद्गणाः ।
गन्धर्वा लोकपालाश्च यक्षगुह्यककिंनराः ॥
ब्राह्मी माहेश्वरी लक्ष्मी शुचिर्मेनादितिर्दितिः । [3240]
घृताची मेनका रम्भा ह्युर्वशी च तिलोत्तमा ॥
सर्वास्ता देवपत्न्यश्च देवाः सर्वे युधिष्ठिर ।
माघमासे च संक्रान्त्यां चन्द्रसूर्यग्रहे नृप ।
व्यतीपाते पुण्यदिने स्नातुमायान्ति देवताः ॥
अश्वमेधसहस्रेण वाजपेयायुतेन च । [3245]
यत्फलं प्राप्यते सद्भिर्गङ्गायां तद्दिने दिने ॥
किमत्र बहुनोक्तेन गङ्गायाः सदृशं भुवि ।
नास्ति नास्ति नृपश्रेष्ठ तस्मात्सेव्या प्रयत्नतः ॥
सर्वकामप्रदा देवी सर्वोपद्रवनाशिनी ।
गङ्गा सेव्या प्रयत्नेन ह्यक्षयं भोगमिच्छता ॥ [3250]

युधिष्ठिर उवाच ।

गङ्गां गन्तुमशक्तानां का गतिः पुरुषोत्तम ।
तीर्थं किं पुण्डरीकाक्ष पवित्रं पापनाशनम् ॥
लोकं पुनाति किं नाथ पूज्यं किं पुण्यकर्मणाम् ।
एतन्मे ब्रूहि लोकेश त्वदन्यः को वदेन्मुने ॥

भगवानुवाच ।

हन्त ते कथयिष्यामि पवित्रं पापनाशनम् । [3255]
सालग्रामशिलातीर्थमशक्तानां परं नृप ॥
सालग्रामार्चनाद्राजन्मानवा गतकिल्बिषाः ।
प्रयान्ति मम लोकं वै दीप्यमाना दिशो दश ॥
महद्विमानमारूढा गन्धर्वैरुपसेविताः ।
मम लोकं प्रयान्त्येव विश्वासं कुरु पाण्डव ॥ [3260]
मुमुक्षुभिरहं पार्थ पूज्य एव हि सर्वदा ।
सालग्रामशिलाचक्रे वज्रकीटविनिर्मिते ॥
यः पूजयति मां चक्रे सालग्रामे नृपोत्तम ।
राजसूयसहस्रेण तेनेष्टं प्रतिवत्सरम् ॥
अपि पापसमायुक्ता धर्मकार्यविदूषकाः । [3265]
सालग्रामार्चनात्पार्थ नैव यान्ति यमक्षयम् ॥
साळग्रामे यथा प्रीतिस्तथा लक्ष्म्यां न विद्यते ।

---

[b]). — (L. 3211) D1 तीर्थेषु (for सर्वेषु). — D1 G1 M1 G(ed.) om. line 3212 — (L. 3215) G1, 2 M1 G(ed) यदङ्ग- (for यदम्भ-). — (L 3218) G1 2 M1 G(ed.) द्रक्ष्यामि (for यास्यामि). — (L 3219) D1 विष्णुलोके महीयते (for [b]). — G2 om. line 3220 — (L. 3224) G2 G(ed) भीमनदी (for °रथी). — (L 3227) G2 पुण्यासु (for सर्वासु). — D1 om. (hapl.) lines 3228–3230. — (L 3229) G(ed) -जलस्नानात् (for °स्था सा) — (L 3233) G1 G(ed) ध्येया (for सेव्या) — (L 3238) M1 रुद्रादित्यमरुद्गणैः (for [b]). — (L 3240) G2 मेना दनुर् (for मेनादितिर्). — G2 om. lines 3244–3246. — (L. 3248) D1 क्षेत्र (for नास्ति) — (L 3250) G2 सर्वथा मनुजैः शुभैः (for [b]) — (L. 3251) G2 गङ्गाया तु च सिक्ताना (for [a]) — (L 3254) G2 त्वद्भक्तस्य महामते (for [b]). — G1 कृष्ण (for भगवान्). — (L. 3255) G2 शृणु त्वं, M1 अहं ते (for हन्त ते). — (L 3256) D1 भवेन्नृप, G1 G(ed) परंतप (for परं नृप). G2 भक्ताना परम नृप (for [b]) — G2 om. lines 3257–3260 — (L 3257) D1 M1 शालग्रामार्चका राजन् (for [a]). — After line 3264, G2 ins

146** पूजयेन्मां च विश्वेश विश्वासं कुरु पाण्डव ।

— G2 om. lines 3264–3266. — (L 3264) D1 M1 -वास-

तथा मम पुरे पार्थ सनकादिनिषेविते ॥
सागरान्तामिमां पृथ्वीं दत्त्वा विप्राय यत्फलम् ।
तत्फल समवाप्नोति सालग्रामशिलार्चनात् ॥ [3270]
सालग्रामशिलाचक्रं द्विपद्ममथ वापि वा ।
पूजयेत्परया भक्त्या तस्य पुण्यं वदामि ते ॥
गङ्गातीरेऽश्वमेधाना सहस्राणा फलं भवेत् ।
यो नित्यं पूजयेद्भक्त्या सालग्रामशिलां नृप ।
मम लोके चिरं स्थित्वा चक्रवर्तीह जायते ॥ [3275]
स स्नात सर्वतीर्थेषु सर्वयज्ञेषु दीक्षित ।
सालग्रामशिलातोयैर्योऽभिषेकं करोति च ॥
गङ्गा गोदावरी रेवा नद्यो मुक्तिप्रदास्तु या ।
निवसन्ति सदा तीर्थे सालग्रामशिलोद्भवे ॥
सालग्रामशिलाग्रे तु यः श्राद्धं कुरुते नृप । [3280]
पितरस्तस्य तुष्यन्ति यावदाचन्द्रतारकम् ॥
ये पिबन्ति नरा नित्यं सालग्रामशिलाजलम् ।
ज्ञानाज्ञानकृतैः पापैर्मुच्यन्ते नात्र संशय ॥
सालग्रामशिलाचक्रं यस्य तिष्ठन्ति मन्दिरे ।
तन्मन्दिरगता सर्वे न पश्यन्ति यमालयम् ॥ [3285]
सालग्रामशिलातोयं य पिबेद्बिन्दुमात्रकम् ।
सोऽपि दोषैर्न लिप्येत नरकेषु न मज्जति ॥
सालग्रामशिलाग्रे तु यो वा को वापि भूतले ।
मृतिं याति स धर्मात्मा सर्वलोकाधिपो भवेत् ॥
अहं पशुपतिश्चैव विश्वसृट् सकलामराः । [3290]
सालग्रामशिलाचक्रे निवसाम यथासुखम् ॥
तत्तीर्थे ये नरा राजन्पिबन्त्यनुदिनं सुखम् ।
सालोक्यं देवताना तु लभन्ते नात्र संशयः ॥
सर्वतीर्थमयी राजन्सर्वदेवमयी ननु ।
सर्वधर्ममयं सारं सालग्रामशिलामला ॥ [3295]
दर्शनात्स्पर्शनान्नृणा पूजनाद्वन्दनादिभिः ।
सालग्रामशिला राजन्सर्वपापहरा शुभा ॥

पुरुषसूक्तेन मन्त्रेण यः स्नापयति नित्यश ।
सालग्रामशिलां भूप स गच्छेद्ब्रह्मण पदम् ॥
पुरुषसूक्तविधानेन द्वारवत्या शिलायुताम् । [3300]
तुलसीशङ्खपयसा पूजको मामुपैति हि ॥
षड्भि षड्भिश्चतुर्भिश्च चतुर्विंशतिवर्णया ।
द्विर्द्वयोर्द्विर्द्वितीया च सालग्रामप्रपूजका ॥
पातकैर्बहुभिः क्रूरैर्जन्मान्तरकृतैरपि ।
मुक्ता मम पदं यान्ति पुनरावृत्तिवर्जितम् ॥ [3305]
किमत्र बहुनोक्तेन सालग्रामशिलार्चनम् ।
सदा कुरुष्व हे पार्थ सर्वतीर्थफल भवेत् ॥
गन्धर्वप्रमुखा देवा दिक्पालाश्चाप्सरोगणाः ।
वाञ्छन्ति पूजां सततं सालग्रामे मुत्र स्थले ॥

युधिष्ठिर उवाच ।

सालग्रामस्य गङ्गायास्तीर्थं तीर्थनिषेवितम् । [3310]
फलमुक्तं विशेषेण श्रुत्वाहं पावनीकृत ॥
त्वत्तोऽहं श्रोतुमिच्छामि भूय कमललोचन ।
तीर्थयोरुभयोस्तुल्यं व्रतं यत्तद्वदस्व मे ॥

श्रीभगवानुवाच ।

साधु पार्थ महाप्राज्ञ प्रसिद्धोऽसि जगत्त्रये ।
यस्माद्धर्मे सदा भक्तिर्महतामपि दुर्लभा ॥ [3315]
त्रैकालिकज्ञानविदो मुनय पूर्णदर्शनाः ।
एकादशीं प्रशंसन्ति व्रतानामुत्तमां शुभाम् ॥
एकादशीव्रतं पार्थ सर्वेषां पापनाशनम् ।
सर्वकामप्रद नृणां सर्वोपद्रवनाशनम् ॥
ब्रह्मक्षत्रविशां चैव शूद्राणां चैव योषिताम् । [3320]
मोक्षद कुर्वतां भक्त्या मम प्रियकरं प्रभो ॥
एकादश्या न भुञ्जीत पक्षयोरुभयोरपि ।
यदि भुङ्क्ते स पापी स्याद्रौरवं नरकं व्रजेत् ॥
उपवासफलं लिप्सुर्जह्याद्भुक्तिचतुष्टयम् ।
पूर्वापरदिने रात्रावहोरात्रे तु मध्यमे ॥ [3325]

---

रम् ( for वत्स° ) —( L. 3266 ) D1 M1 यमालयम् ( for यमक्ष° ) —( L 3267 ) G2 स्थिता ( for तथा ). — After line 3267, G2 ins

147** सालग्रामशिला यत्र य श्राद्ध कुरुते नर ।

— G2 om lines 3268–3279. — After line 3273, D1 G1 ins. .

148** मातृत पितृतश्चैव कुलकोटीशतान्वित ।
प्रियाया शतकोट्या च मम लोकं स गच्छति ॥

— D1 om. lines 3280–3282 G2 om lines 3282–3290 —( L. 3288 ) D1 M1 भूपते ( for भूतले ) —( L. 3291 ) G1 G(ed ) निवसामो ; G2 °मि ( for °म ) — ( L 3295 ) M1 सर्वधर्ममयी सारा ( for $^a$ ) D1 -शिलार्चनम्, G2 °जलम् ( for °मला ) — ( L 3296 ) D1 स्तवनान् ( for स्पर्श° ) G2 मुक्तिद सर्वदेहिनाम् ( for $^b$ ).— G2 om. lines 3297–3305 — After line 3299, G2 ins .

149** सालग्राम तु यो राजंस्तुलसीदलपूजनात् ।
मामुपैति नरश्रेष्ठ सत्य सत्य वदाम्यहम् ॥

—( L 3302 ) D1 G1 M1 षड्द्विषड्द्वि- ( for षड्भि षड्भिश् ). —( L. 3303 ) D1 G1 विद्यया हि तृतीया हि , M1 विद्यया द्वितृतीयाभि ( for $^a$ ) —( L 3308 ) D1 अप्सरसां ( for चाप्सरो- ) G2 सकिंनरमहोरगा ( for $^b$ ). —( L. 3309 ) G2 G(ed.) राजेन्द्र ( for सतत ) D1 शालग्रामस्य वै नृप ( for $^b$ ).—After line 3309, G2 ins. ·

150** युधिष्ठिर ।
सालग्रामशिलायास्तु गङ्गायास्तु महातले ।

— G2 om. lines 3310–3312 —( L 3310 ) M1 तीर्थानां तु विशेषित ( for $^b$ ). —( L. 3311 ) G(ed ) श्रुत्वाह पापवर्जित ( for $^b$ ). — ( L 3314 ) G(ed ) साधु ( for पार्थ ) —( L. 3316 ) D1 मुनयः पुण्यकर्मिण ( for $^b$ ) —( L 3317 ) D1 तिथीनामुत्तमा तिथिः ( for $^b$ ). —( L. 3320 ) M1 ब्राह्मणानां

एकादश्यां दिने यस्तु भोक्तुमिच्छति सुव्रत ।
स भोक्तुं सर्वपापानि स्पृहयालुर्न संशय ॥
यानि कानि च पापानि ब्रह्महत्यादिकानि च ॥
अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे ॥
महापातकयुक्तो वा युक्तो वा सर्वपातकैः । [ 3330 ]
एकादश्यां निराहारः स्थित्वा याति परां गतिम् ॥
एकादशी महापुण्या मम प्रियकरा तिथिः ।
संसेव्या सर्वदा विप्रैः संसारच्छेदलिप्सुभिः ॥
स्वर्गमोक्षप्रदा ह्येषा सर्वपापप्रणाशिनी ।
सर्वसंपत्करी ह्येषा सुकलत्रप्रदायिनी । [ 3335 ]
सुपुत्रदायिनी ह्येषा सर्वविद्याप्रदायिनी ॥
बाल्ये वयसि वार्धक्ये यौवने वा नरेश्वर ।
उपोष्यैकादशीं भक्त्या गमिष्यन्ति दिवं हि ते ॥
किमत्र बहुनोक्तेन मोक्षदं पाण्डुनन्दन ।
तस्मात्त्वं सर्वकालेषु ह्येकादश्यां व्रतं कुरु ॥ [ 3340 ]
इति ते कथितं सर्वं पुण्यमेकादशीव्रतम् ।
यच्छ्रुत्वा सर्वपापेभ्यो मुक्तोऽनन्तं समश्नुते ॥

Colophon

सूत उवाच ।

एवं वदति विप्रेन्द्रा धर्मं कृष्णे जनार्दने ।
आज्ञप्तो बलदेवेन दूतोऽभ्येत्य वचोऽब्रवीत् ॥
नमस्ते सर्वलोकेश वासुदेव जगत्पते । [ 3345 ]
शत्रुभिः पीडितान्बन्धूंस्त्वकीयान्पाहि सुव्रत ॥
द्वारवत्युपकण्ठं तु निरुद्धं पौण्ड्रकेण ते ॥
बलेन महता देव सप्तलक्षशतेन हि ।
अहं योद्धाथ वा त्वं वा किं करोमि च तद्वद ॥
सम्मुखेन भवानित्थमुक्तस्त्वं सीरपाणिना । [ 3350 ]
न शक्यमत्र वस्तुं मे यास्यामि भवदाज्ञया ।
ज्ञातुं तत्रोचितं कार्यं तद्भवान्गन्तुमर्हति ॥
एवमुक्तो जगन्नाथः प्रहृष्टः सर्ववेदिता ।
दूतेन तं सहस्वेति गाङ्गेयं प्रत्युवाच ह ॥
देवव्रत महाभाग श्रूयतां वचनं मम । [ 3355 ]
पाण्डूनां त्वं हितार्थाय शेषधर्मं वद प्रभो ॥
त्वया नाविदितं किंचिन्नारदादखिलं श्रुतम् ।
नारदाय मया पूर्वमिमं धर्मं सुविस्तरम् ॥
प्रोक्तं सुरनदीतीरे तस्मादेतत्त्वया श्रुतम् ।
तत्सर्वं वद तत्त्वेन पाण्डवेभ्यो बहुश्रुतम् ॥ [ 3360 ]
धर्मेण रक्ष तान्सर्वानिमांस्त्वं सततं प्रियान् ।
तव कीर्तिर्भवेच्छुद्धा लोकेऽद्यापि विसारिणी ।
अस्य शेषं भवान्वेत्ति पाण्डुपुत्रान्प्रबोधय ॥
इत्युक्तो वै जगन्नाथो देवदेवो यदूत्तमः ।

---

(for ब्रह्मक्षत्र-) —(L 3321) G2 मोक्षदं सर्वदाभ्यर्च्य (for $^a$) — G2 om 3324–3325 —(L 3328) G1 M1 ब्रह्महत्यासमानि च (for $^b$). — After line 3333, D1 ins

151** आशौचादौ यथा श्राद्धमाशौचान्त विधीयते ।
तथैवैकादशीश्राद्धं द्वादश्यामेव कारयेत् ॥
ग्रस्तास्तमिते सूर्ये यथा श्राद्धं परेऽहनि ।
तथैवैकादशीश्राद्धं द्वादश्यामेव कारयेत ॥
एकादश्यां न होतव्यं तिथित्रयफलेप्सुभिः [ 5 ]
जुहुयाद्यदि मूढात्मा स गोवधफलं लभेत् ॥
कर्मलोपभयाद्यस्तु व्रतभङ्गं करोति यः ।
सोभयव्रतभङ्गं हि प्राप्नोत्येव न संशय ॥
श्रुतौ हि राजधर्मश्च तिथित्रयफलेप्सुभिः ।
व्रतलोपभयाद्वापि कार्यं तत्फलदायकम् ॥ [ 10 ]
प्रायश्चित्तादिकं कर्म तथा मत्स्मरणं विभो ।
तेनैव सकलं पापं विनश्यति न संशयः ।
तस्मात्तिथित्रयं युक्ता कार्यैवैकादशी तिथिः ॥

—(L 3334) G(ed) सर्वसंपत्करी ह्येषा (for $^b$). —(L. 3335) G(ed.) सर्वमोक्षप्रदा ह्येषा (for $^a$) G1 सर्वपापप्रकाशिनी ; G(ed.) पुत्रपौत्रप्रदायिनी (for $^b$). — D1 om line 3336 —(L. 3336) G(ed) कलत्र- (for सुपुत्र-) —(L 3337) D1 यौवने च नृपोत्तम (for $^a$). — For line 3337, G(ed) subst ;

152** बाल्ययौवनकौमारवार्धक्येषु नरेश्वर ।

— After line 3340, G2 ins. .

153** सर्वकामप्रदा ह्येषा मोक्षदा मुक्तिदा विभो ।

— After line 3341, D1 G2 ins

154** श्रोतृणां सर्वपापघ्न चक्रिणां च तथा विभो ।

—(L 3342) G2 मुक्ता नाकं व्रजन्ति हि (for $^b$). — For line 3342, G(ed) subst

155** शृणोति य स पापेभ्यो मुक्त सन्नाकमश्नुते ॥

COLOPHON — *Sub-parvan* D1 G1 M1 आश्चर्यपर्वणि शेषधर्मा, G2 G(ed) शेषधर्मा — *Adhy name* · D1 तीर्थानामेकादशीवर्णनम्, G(ed) भागीरथ्यादिमाहिमावर्णनम् .— *Adhy. no* D1 G1 2 M1 G(ed) 25

— After the above, G(ed) reads lines 6550–6646. (L 3345) D1 नमोऽस्तु ते (for जगत्पते). —(L 3347) D1 पौण्ड्रकै सह, G(ed) °कादिना (for °केण ते). —(L. 3350) G2 श्रीकृष्ण सम्मुखेनोक्तं, G(ed.) संमुखे भगवन्नित्थ (for $^a$) — G2 om. lines 3352–3355 —(L. 3352) M1 वक्तुम् (for गन्तुम्). — Before line 3355, M1 ins. श्रीभगवान् · —(L 3355) D1 महाप्राज्ञ (for °भाग) —(L 3356) G(ed.) पाण्डवानां (for पाण्डूनां त्व). —(L 3358) G(ed.) अयं धर्मं (for इमं धर्मं) —(L. 3359) G(ed) प्रोक्त (for प्रोक्तं). G(ed) तस्मादेव त्वया श्रुत· (for $^b$) —(L 3361) G(ed.) धर्मं च निरतान्सर्वान् (for $^a$) G(ed) विद्धि ते (for सततं) —(L 3362) G(ed) भीष्म (for ऽद्यापि) — Before line 3364, D1 ins. सूत उवाच —(L 3365) G(ed) स्मित- (for मित-) — Before line 3366, D1 ins. श्रीभग-

प्राह धर्मसुतं धीमान्सस्मितं मितभाषिणम् ॥ [3365]
शृणु पार्थ महाभाग गाङ्गेयोऽयमरिंदम ।
यद्ब्रवीति च तत्सर्वं तस्मिन्वर्तय मा शुच ॥
भीष्मस्य चरित वेद्मि भक्तो नान्योऽस्ति कश्चन ।
स एवाहं मनस्तापं मुञ्च सत्यव्रतो भव ॥
धैर्यं विपदि कर्तव्यमुदये च क्षमा विभो । [3370]
विक्रमो युधि वै श्रेयान्व्यसनं च सदा श्रुतौ ॥
तस्माद्धर्मे मतिं कृत्वा परं श्रेयो गमिष्यसि ।
वर्तन्तां भ्रातर' सर्वे तवाज्ञां शिरसा ध्रुवम् ॥
राज्य कुरूणां सतत सदा सत्यरतस्य ते ।
भवितव्यं चिरं भोक्तुं विशालं जितकण्टकम् ॥ [3375]
धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो मनुष्याणां रक्षिता शिक्षिता सखा ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥
अदृश्यो धर्मरूपेण पालयामि च धर्मिणम् । [3380]
नाशं करोमि पापानां कर्तारं धर्मनन्दन ॥
कृष्णस्य वचनं श्रुत्वा पार्थानामग्रजो विभुः ।
आलिङ्ग्यालिङ्ग्य च पुनर्नत्वा हृदि पुनर्जगौ ॥
देवदेवारविन्दाक्ष शत्रूणामन्तकोपम ।
पाहि पाहि जगन्नाथ भक्तानस्मांस्त्वदाश्रयान् ॥ [3385]
तत्र चात्र तवानन्त नास्ति भेदो हि सर्वग ।
वक्तव्यं नास्ति मेऽनन्त सर्वावस्थासु पालय ॥

सूत उवाच ।

तथा करोमीत्युक्त्वाथ फल्गुनं मरुतात्मजम् ।
आश्वास्य च यमौ धीमान्प्रतस्थे द्वारकां प्रति ॥
ब्राह्मणेभ्यो नमस्कृत्य ऋषिभ्यो वेदवादिनाम् । [3390]
भीष्माय कुरुवृद्धाय ययौ द्वारवती प्रति ॥
मुमुहुः पाण्डवाः सर्वे विरहाच्छार्ङ्गधन्विन ।
निश्चेष्टाः सर्व एवैते निधिभ्रष्टा यथा नराः ॥
क्व पश्यामः क्व यास्यामः कृष्णं कमललोचनम् ।
इति जल्पन्ति ते सर्वे विसृष्टाः प्राणवल्लभाः ॥ [3395]
आनन्दं परमं जग्मुर्यथा बहिस्तथा हृदि ।
दृष्ट्वा हरिं ब्रह्मविदो दीक्षिताः पाण्डुनन्दना' ॥
पशव पक्षिणश्चैव मृगाद्या ब्राह्मणोत्तमाः ।
अन्धा इव च दृश्यन्ते पतिहीना यथा स्त्रिय ॥
नृपहीनो यथा देशस्तोयहीना यथा सरित । [3400]
मित्रहीना यथा लोका मातृहीनो यथा शिशु ॥
विद्याहीनो यथा विप्रो धर्महीनं यथा धनम् ।
अभ्राजमाना' सर्वे ते पाण्डवाश्च द्विजोत्तमा' ॥
दु खिताः किमिदं चेति स्वप्नं दृष्ट्वेव विस्मिताः ।
गाथा मिथ' प्रकुर्वाणास्तत्र तत्र च संस्थिताः ॥ [3405]
तस्मिन्नवसरे देवैरम्बरं समुपागतैः ।
मुक्ता पुष्पमयी वृष्टि' पपात नृपमूर्धनि ।
यादवेन्द्रस्य सेनासु द्वारवत्यां तु सर्वत' ॥
ततो ध्यात्वा हृषीकेशं प्रत्यग्रजलदच्छविम् ।
नदीसुतं नमस्कृत्य धर्मसूनुरुवाच ह ॥ [3410]
गाङ्गेय योगिनां श्रेष्ठ कृष्णभक्त महामते ।
त्वया वै दर्शन लब्धमस्माकं जगतीपते' ।
अन्यथा दर्शनं तस्य लभ्यते मादृशः कथम् ॥
अपालयद्यथा धर्मैरस्मान्वै यदुपुंगवः ।
तथैव धर्मश्रवणात्पाहि भागीरथीसुत ॥ [3415]

भीष्म उवाच ।

यादवेन्द्रो महायोगी योगेश' सर्वग' प्रभु. ।
तं ध्यात्वा सर्वकालेषु पापात्मापि विमुच्यते ॥
स्रष्टा पालयिता हन्ता जगन्मूर्तिरमूर्तिमान् ।
सूर्यमण्डलमध्यस्थ कर्मसाक्षी जगद्गुरु. ॥
इन्द्रो वसुश्च रुद्रश्च मारुतो लोकपावनः । [3420]
एतान्कृष्णमयान्विद्धि कर्मकर्तॄन्महामते ॥

युधिष्ठिर उवाच ।

कृष्णदेहांशभागेषु जज्ञिरे ये नरोत्तमा ।
ऋषिदेवगणान्राज्ञो वद संप्रति मेऽनघ ॥

भीष्म उवाच ।

कृष्णांशसंभवान्वक्ष्ये पुण्यश्लोकान्नृपोत्तम ।
तेषां तु स्मृतिमात्रेण सर्वपापक्षयो भवेत् ॥ [3425]

---

वान्. — (L. 3366) D1 गाङ्गेयोक्तम् (for ऽयम्). — (L. 3369) D1 हि संदेहं (for मनस्ताप). — (L 3371) G1 2 व्यवसायं (G2 °सनं न) तदा श्रुतम्; M1 व्यसनं तु सदा श्रुतम् (for [b]). — (L. 3373) G(ed) तवाज्ञावशवर्तिन· (for [b]). — (L 3374) G1 M1 -व्रतस्य (for -रतस्य) — (L 3375) D1 प्राप्त (for भोक्तु). G(ed.) हत- (for जित-). — For line 3376, G2 ins.

156** धर्मा एव रिपून्घ्नन्ति धर्मा रक्षन्ति रक्षितम् ।

— (L. 3381) G(ed) कर्तुर्वै (for कर्तार) G2 कर्तारं स्वेन कर्मणा (for [b]) — (L. 3383) G(ed) ध्यात्वा (for नत्वा) G1 देव, G2 नत्वा (for हृदि). — Before line 3384, D1 ins. युधिष्ठिरः. — (L 3389) M1 यमौ श्रीमान्, G(ed) यथान्याय (for यमौ धीमान्). — (L. 3390) G(ed.) ऋषिभ्यश्च गदाग्रज' (for [b]) — M1 om. lines 3396–3397. — (L 3396) G(ed) बाह्य (for बहिस्) G1 यथा बाल्ये तथा धृतिम् (for [b]). — (L 3398) D1 मृगाद्या ब्रह्मवित्तमा (for [b]). — (L. 3402) D1 M1 मित्रहीनो यथा लोको (for [a]) — (L. 3405) G2 M1 संश्रिता' (for संस्थिता.) — (L 3409) D1 नीलमेघच्छविं प्रभुम् (for [b]) — (L 3416) D1 महाभागो (for °योगी) — (L 3417) G2 G(ed) पापादपि (for °त्मापि). — (L 3420) D1 मरुतो लोकपावना (for [b]) — G2 om the ref — (L 3422) M1 -देहाङ्ग-, G(ed) -तेजोंश- (for -देहांश-). D1 कृष्णतेजोंशभागेन (for [a]). — G2 G(ed.) om the ref — (L 3424) G2 पुण्यश्लोका नृपोत्तमा (for [b]). — (L. 3427) G1 2 G(ed.) आङ्गिरो (for °रा). D1 सुमित्रश् (for सुमतिस्). — D1 om. lines 3431–3434. — (L,

अत्रिर्वसिष्ठोऽथ भृगु पुलस्त्यः पुलह क्रतुः ।
आङ्गिरा गौतमोऽगस्त्यो सुमतिस्त्वायुरात्मवान् ॥
विश्वामित्र स्थूलशिराः संवर्त प्रमतिर्दम ।
रैभ्यो बृहस्पतिर्व्यासो च्यवन काश्यपो ध्रुवः ॥
दुर्वासा जमदग्निश्च मार्कण्डेयोऽथ गालवः । [ 3430 ]
उशनाथ भरद्वाजो यवक्रीतस्त्रितस्तथा ॥
स्थूलाक्षश्च महाकक्ष कण्वो मेधातिथि कुश ।
नारद पर्वतश्चैव सुशर्मा सोमशर्मवान् ॥
मित्रो भृगु सत्यकीर्तिः शतानन्दः कृतव्रण ॥
जामदग्न्यस्तथा राम सौम्यः संवर्तकस्तथा । [ 3435 ]
मन्वादिस्मृतिकर्तारः कृष्णाज्ञान्विद्धि भारत ॥
कृष्णः सर्वगुरु साक्षाद्भक्ताना हितकृत्प्रिय ।
सर्वग सर्वभूतात्मा सर्वयोगीश्वरो विभु ॥
आदित्यश्चन्द्रमा राजन्नक्षत्राणि च भूतलम् ।
अमृत देवतानां च नराणा च नराधिप ॥ [ 3440 ]
पितॄणां च स्वधा सोम पशूनां तृणसंचयः ।
पुरुषाणां बलं रूपं धनं विद्या सुख महत् ॥
स्त्रीणा सौन्दर्यसौभाग्यं पातिव्रत्यं परं प्रिय ।
यतात्मा मुनयो योगी विबुधाश्चाप्सरोगणा ।
इन्द्राद्या लोकपालाश्च कृष्णो हि जगतीपति ॥ [ 3445 ]
यो राजा धर्मवाल्लोके यादवेन्द्र तु विद्धि तम् ॥
पुराणधर्मशास्त्रेषु निष्ठा यस्य प्रवर्तते ।
तं विद्धि भरतश्रेष्ठ वृष्णीनां पतिमव्ययम् ॥
अगोचरोऽव्ययोऽनन्तो महीभर्ता महाद्युतिः ।
तीर्थरूपी शुभाचारस्तथा पुण्यतिथिर्गुरुः ॥ [ 3450 ]
मत्स्यः कूर्मवराहश्च नारसिंहश्च वामन ।
रामो रामश्च कृष्णश्च बौद्ध कल्की कलात्मक ॥
त्रिविक्रमो नरश्चैव नारायणसुरेश्वरौ ।
कृतत्रेताद्वापराश्च धर्मनाशकरः कलि ॥
उद्धवो वासुदेवश्च सात्यकि साम्ब एव च । [ 3455 ]
अनिरुद्धो गदश्चैव प्रद्युम्नो लोकनायकः ॥
वसुदेवो नन्दगोपो अश्वत्थामा कृपश्च सः ।
द्रोणो भीष्माभिधानोऽहं कर्णशल्यौ महाबलौ ॥
धृष्टद्युम्नः शिखण्डी च द्रौपदी यज्ञसंभवा ।
भीमार्जुनौ यमौ कुन्ती विराटो विदुरस्तथा । [ 3460 ]
त्वं च सर्वे नरेन्द्राश्च कृष्ण एव न संशयः ॥
भूभारहरणार्थाय एतान्सृष्ट्वा स्वमायया ।
वसुदेवकुले जातो लोकानुग्रहकाम्यया ।
हरिष्यति भुवो भारमल्पकाले नृपोत्तम ॥
धार्तराष्ट्रानिमान्सर्वानन्यान्वै पापकर्मिण । [ 3465 ]
हरिष्यति नृपानद्य त्वदर्थं पाण्डुनन्दन ॥
महाभारतनाम्ना ते महद्युद्धं भविष्यति ।
राजंस्त्वं राज्यलाभाय कृष्ण पूजय भक्तित ॥

वैशंपायन उवाच ।

विभूतिं वासुदेवस्य श्रुत्वा प्रीतो महीपतिः ।
युद्धेप्सुभिश्च भीमाद्यैः सहितो वाक्यमब्रवीत् ॥ [ 3470 ]
किं करिष्यति गाङ्गेय कृष्णः कपटवेषधृक् ।
पालयिष्यति नो देव संहरिष्यति वा वद ॥
भवान्वेत्ति हि तत्सर्वं तस्य भृत्योऽसि सुव्रत ।
तं ममाचक्ष्व गाङ्गेय पाहि मा शत्रुपीडितम् ।

भीष्म उवाच ।

पालयिष्यति धर्मात्मा कृष्णो युष्मान्न संशयः । [ 3475 ]
तस्माद्धर्मे सदा भक्तिर्जायते ते नराधिप ॥
धर्मं भजस्व कौन्तेय सत्सङ्गं कुरु सर्वदा ।
तस्य पूजामहोरात्रं कृत्वा सिद्धिं गमिष्यसि ॥

युधिष्ठिर उवाच ।

धर्मप्रदानि तीर्थानि पुण्यक्षेत्राणि भारत ।
यानि पुण्यप्रदानीह तानि मे परिकीर्तय ॥ [ 3480 ]

भीष्म उवाच ।

पुरा सनत्कुमारेण समेत्य गजसाह्वयम् ।
प्रज्ञाचक्षोस्तु गान्धार्या ममापि विदुरस्य च ।
द्रोणस्य सकलं धर्मं प्रोक्तं तेन महात्मना ॥
पुरा भगवता प्रोक्तं लोकनाथेन विष्णुना ।
नारदाय ततस्तेन गदितं ब्रह्मसूनवे । [ 3485 ]
सनत्कुमारमुनये तस्माच्छ्रुतमिदं मया ॥
एवं परंपराप्रोक्तमिमं धर्मं हि पाण्डव ।
ततेऽहं संप्रवक्ष्यामि यदुसिंहस्य चाज्ञया ॥
स वै नारायणो देव परमात्मा जगद्गुरुः ।
अन्तर्यामी जगद्रूपी वेदराशिरतन्द्रित ॥ [ 3490 ]
तं ध्यात्वा सर्वलोकेषु नत्वा चैव पुनः पुन ।
प्रवक्ष्यामि कुरुश्रेष्ठ तदीयं धर्ममुत्तमम् ॥

वैशंपायन उवाच ।

एवं गदितुमुद्युक्तं धर्मं धर्मभृतां वराः ।

---

3433 ) M1 सुवर्ण ( for सुशर्मा ). G2 सुधर्मा च सुशर्मवान् ( for ⁶ ). — ( L. 3434 ) G2 G(ed.) शतनन्दो कृ( G2 धृ )तव्रत ( for ⁵ ). — ( L 3435 ) D1 उशना जामदग्न्योऽथ ( for ᵃ ). — ( L. 3438 ) G(ed.) प्रिय ( for विभु ) — For line 3444, D1 subst

157** यताश्च मुनयो योगा विबुधेन्द्रा स्त्रियो गणा ।

— ( L 3450 ) D1 महाचार°; G2 M1 सदा° ( for शुभा° ). — ( L 3452 ) G1, 2 M1 G(ed.) रामश्च ( for कृष्णश्च ). G1 2 G(ed.) कृष्ण ( for बौद्ध ) M1 कृष्ण कल्की जनार्दन ( for ⁵ ) — ( L 3454 ) D1 M1 कृत त्रेता द्वापरश्च ( for ᵃ ). — ( L. 3457 ) G1 उग्रसेनो, G(ed.) वासुदेवो (for व° ). — ( L. 3458 ) G2 G(ed) भीमो ( for द्रोणो ). — ( L 3460 ) D1 द्रुपदस् ( for विदुरस् ) — ( L 3463 ) G(ed ) -काङ्क्षया ( for -काम्यया ) — G2 om. the ref — Before line 3471, M1 G(ed ) ins युधिष्ठिर — ( L. 3478 ) G(ed ) पूज्य सर्वम् ( for तस्य पूजाम् ). — ( L. 3479 ) G1 क्षेत्राणि ( for तीर्थानि )

पाण्डवा श्रोतुकामास्ते प्रणम्य निभृताः स्थिताः ॥
ऋषयो द्विजमुख्याश्च दीक्षिता वनवासिन· । [3495]
संप्रहृष्टा स्थिता· सर्वे श्रोतुं धर्मकथामृतम् ॥
कृते दृष्टे श्रुते धर्मे कीर्तिते चानुमोदिते ।
नाशयेत्सर्वपापानि कृष्ण एव जगन्मयः ॥

Colophon.

वैशंपायन उवाच ।

इति संप्रणताः पार्था धर्मे कृष्णे जनार्दने ।
श्रोतुकामाश्च ते सर्वे ब्राह्मणा ब्रह्मवित्तमाः ॥ [3500]
वासुदेवं चिरं ध्यात्वा धर्मपुत्र प्रतापवान् ।
नत्वा पप्रच्छ धर्मात्मा धर्मं सुरनदीसुतम् ॥

युधिष्ठिर उवाच ।

कर्मणा येन मनुजा नरकं यान्ति दुःखिताः ।
केषां सङ्गेन वा तात लभते स्वर्गसंपदम् ॥
ऋणीनां च प्रदातॄणां ऋणस्थस्य गतिस्तु का । [3505]
तत्सर्वं वद तत्त्वेन देवव्रत महामते ॥

भीष्म उवाच ।

शृणु राजन्पुरा वृत्तमाश्चर्यं पुण्यवर्धनम् ।
भद्रकस्य तु संवादं गोवृषस्य महात्मन· ॥
काश्मीरे पुण्यदेशे तु सर्वसंपत्समायुते ।
ब्राह्मणो भद्रको नाम सर्वाचारविवर्जित ॥ [3510]
कृषिको दुःखभाङ् मूर्खो सदा वेदविरोधकृत् ।
पितृमातृकुलैस्त्यक्त· शूद्रभोजी तु कामुक. ।
राजदण्डभयाद्भीतो देशान्तरमुपागमत् ॥
तस्मिन्देशे चिरं कालं स्थित्वा राजेन्द्र दुर्मतिः ।
नीलवर्णमनड्वाहं महिषं समचोरयत् । [3515]
तौ वञ्चयित्वा तद्रात्रौ स्वदेश प्राप्तवान्पुन· ॥

वैशंपायन उवाच ।

पितामहस्य वचन श्रुत्वा विस्मयकारकम् ।
धर्मसूनुर्महाप्राज्ञ इद वचनमब्रवीत् ॥

युधिष्ठिर उवाच ।

किं कर्म कृतवांस्तात स्वदेशे ब्राह्मणाधमः ।
कया वृत्त्या प्रवृत्तोऽभूद्बान्धवेभ्यः किमब्रवीत् ॥ [3520]
तत्सर्वं वद तत्त्वेन देवव्रत महामते ।
कृष्णो यदा मे कृपया ह्यवोचदखिलेश्वरः ॥

भीष्म उवाच ।

भद्रके ह्यागते तस्मिन्बान्धवाः परिशङ्किता. ।
ऊचुः परमधर्मज्ञा पुरस्तस्यातिकोपिता ॥
किमर्थमागतो भद्र पापरूप भयंकर । [3525]
गच्छ गच्छ पुनस्तूर्णं बन्धूनामहितंकर ॥
परुष स्वजनस्येदं निशम्य वचनं तदा ।
भद्रकः प्राह तान्सर्वान्वञ्चयन्धर्मनन्दन ॥
भो भो बन्धुजनाः सर्वे शृणुध्वं वचनं मम ।
यदा भवद्भिर्निरस्तस्तदा गङ्गामुपागमम् ॥ [3530]
तत्रत्या ब्राह्मणाः सर्वे सत्कर्मपरितोषिताः ।
युग्मावेतौ महाभागा मम सर्वे ददुश्च ते ॥
तच्छ्रुत्वा बान्धवा· सर्वे वचनं चेदमब्रुवन् ।
सुखी भव महाभाग गार्हस्थ्यं वै सदा कुरु ।
गार्हस्थ्येन तु धर्मेण महच्छ्रेयो भवेद्ध्रुवम् ॥ [3535]
तानेव वञ्चयित्वा स भद्रक पापनिश्चयः ।
युगंधरौ तु तौ कृत्वा ययौ कृषिभुवं प्रति ॥
किमिदं बन्धुभिः पृष्टो गूढरूपोऽतिपापकृत् ।
प्रारम्भं करवाणीति बान्धवेभ्यस्तदाब्रवीत् ।
संभ्रमं कृतवान्राजन्भद्रक. पापनिश्चयः ॥ [3540]
ततो हलं समादाय दीर्घकूबरमद्भुतम् ।
उपानहौ चर्मरज्जुं वेणुदण्डसमन्वितम् ॥
स्कन्धे राजन्वहन्सीरं कम्बलेनावगुण्ठित ।
पूर्वपश्चिमलाङ्गूलः कौपीनपरिशोभितः ।
ययौ कृषिभुवं राजन्भद्रक पापनिश्चय ॥ [3545]
गच्छ गच्छेति पापात्मन्पास्यामि रुधिरं तव ।
इति जल्पन्स मूर्खो वै तृष्णया परिपीडितः ।
भद्रकः पापकृत्क्रूरो द्रुतं भूमिं चकर्ष सः ॥
मध्याह्नसमये श्रान्तं महिषं समपीडयत् ।
गाढदु.खं विशेषेण भानुरश्मिप्रपीडितम् ॥
आश्वास्य वेदनां स्वेन रसनालम्बिताननः । [3550]
अपतत्सहसा भूमौ मृतवद्घोरदर्शनः ॥
तं विलोक्य तृषायुक्तं विह्वलं भुवि चेष्टितम् ।

— (L. 3491) G1 M1 -कालेषु, G(ed) -लोकेश (for °षु) — G2 om the ref — (L. 3494) D1 निर्वृता (for निभृता·) — (L 3496) G2 श्रोतु धर्मामृतं द्विजा· (for $^{b}$). — (L. 3497) G(ed) दृष्टे (for धर्मे). G2 कृतधर्मे श्रुते दृष्टे (for $^{a}$).

Colophon — *Sub-parvan* D1 आश्चर्यपर्वणि शेषधर्माः; G1. 2 M1 शेषधर्मा, G(ed) आश्चर्यपर्व — *Adhy. name* · G(ed.) श्रीकृष्णमहिमा — *Adhy no* · D1 G1. 2 M1 26, G(ed) 27.

(L. 3500) G2 G(ed.) लोककामाश् (for श्रोतु°). — G1. 2 om. the ref — (L 3505) D1 G(ed) ऋणानां (for ऋणीना) — (L 3509) M1 G(ed) -समावृते (for °युते). — (L 3511) G2 -विरोधक. (for °कृत्). — (L 3512) G(ed) -भोगे (for -भोजी). — (L. 3516) G1 तद्राष्ट्रात् (for तद्रात्रौ) — (L 3517) G2 G(ed) तद्वाक्य (for वचनं). D1 श्रुत्वा विस्मयमागत (for $^{b}$). — G2 M1 om. the ref. — (L. 3519) G(ed) स्वदेशे भद्रको द्विज (for $^{b}$). — (L. 3520) M1 G(ed) प्रवर्तेन (for प्रवृत्तोऽभूद्) — (L. 3530) G(ed.) सत्यक्तस् (for निरस्तस्). G1 G(ed.) उपागतः (for °गमम्). — (L. 3532) M1 महासत्त्वौ (for °भागा). — (L.

दण्डैरघट्टयन्मूर्खो रज्जुभि काष्ठमृत्तिकै ।
अश्मभिश्च तथा शाखैः पादाभ्यां च तथाहनत् ॥
ताडयित्वा बहुविधं मुष्टिना च विशेषत । [3555]
चिन्तयामास राजेन्द्र मुहुर्नि श्वस्य दु खितः ।
सिषेवे धरणीं मूढः क्षुधा च परिपीडित ॥
ततः परं समुत्थाय कोपात्संरक्तलोचन ।
अब्रवीत्परुष वाक्यमनड्वाहं सुदु खितम् ॥
कालमेघ महावीर्यं गच्छ त्वं स्वयमेव हि । [3560]
महिषोऽयं जड पापी त्वत्समो न विचक्षण. ॥
प्रज्ञाहीनस्य तद्वाक्यं युक्तिहीन भयंकरम् ।
आकर्ण्य परितो वीक्ष्य गोपतिर्वाक्यमब्रवीत् ।
भो भो ब्राह्मणदायाद वृथा पापं करोषि हि ।
अनित्येन शरीरेण नित्यत्वमवगच्छसि ॥ [3565]
अणुमात्र त्वया मूढ न कृतं धर्मसंचयम् ।
कृतं पापं विशेषेण घोरजन्मान्तरप्रदम् ॥
लोके पातकिनः सन्ति त्वत्समो नैव पापकृत् ।
त्वया कृतेन पापेन त्वद्वंश्या निरयं गताः ॥
तानुद्धरस्व धर्मेण तपसा च दिवं व्रज । [3570]
धर्म एव मनुष्याणां स्वर्गमोक्षप्रदायक. ॥

भीष्म उवाच ।

अत्याश्चर्यतमं वाक्य श्रुत्वासौ भीतिसंयुत ।
रोमाञ्चिततनुर्भूत्वा भद्रको वाक्यमब्रवीत् ॥

भद्रक उवाच ।

पापोऽहं पापकर्माहं पापात्मा पापनिश्चयः ।
त्राहि मां कृपया देव सर्वधर्मविवर्जितम् ॥ [3575]
इत्युक्त्वा सहसा राजन्दण्डवत्प्रणिपत्य तम् ।
क्षमस्वेति वदन्भूयो भद्रको वाक्यमब्रवीत् ॥
भो स्वामिन्सर्वधर्मज्ञ धर्मरूप वदस्व मे ।
तीर्थज्ञाः परिरक्षन्ति मूढबुद्धिं सकल्मषम् ॥

भीष्म उवाच ।

अतिदीनतरं वाक्यं श्रुत्वा भद्रस्य धर्मज । [3580]
मेघगम्भीरया वाचा गोपतिर्वाक्यमब्रवीत् ॥

गौरुवाच ।

धर्माधर्मं प्रवक्ष्यामि शृणु नान्यमनाः प्रभो ।
यस्य स्मरणमात्रेण पापान्मुक्तिर्भविष्यति ॥
सर्वेषामेव दानानामन्नदानं विशिष्यते ।
तस्मादन्नप्रदो नित्यं सायुज्यं लभते हरे ॥ [3585]
गोभूतिलहिरण्यानि गाव. पृथ्वी सरस्वती ।
कन्याकनकदानानि नृणां स्वर्गप्रदानि वै ॥
साळग्रामं तथा लिङ्गं क्षेत्रं कृष्णाजिनं महत् ।
यो दद्याद्ब्राह्मणेभ्यस्तु स विष्णो पदमश्नुते ॥

भद्रक उवाच ।

दानप्रदाने योग्योऽहं नैवात्र खलु निर्धनः । [3590]
विना दानेन यत्पुण्यमस्ति चेत्तद्वदस्व मे ॥

गोपतिरुवाच ।

प्रातःकाले समुत्थाय विष्णुं सर्वात्मकं प्रभुम् ।
कीर्तयेद्यः प्रसन्नात्मा स विष्णोः पदमश्नुते ॥
स्नाने जपे तथा होमे भोजने च विशेषत. ।
पूजायां देवदेवस्य मौनी स्वर्गपदं व्रजेत् ॥ [3595]
तीर्थेऽतिथौ तथा विष्णौ मातापित्रोर्यतौ गुरौ ।
भक्तिं कुर्यात्प्रयत्नेन स गच्छेद्ब्राह्म पदम् ॥
विष्णोश्च पूजने भक्तिः पुराणश्रवणे श्रुतौ ।
धर्मशास्त्रे तथा स्नाने यस्य नित्यं स मुक्तिभाक् ॥
द्रव्येण कर्मणा वाचा दानाद्विप्रहिते रत. । [3600]
स याति ब्रह्मभवन पुनरावृत्तिवर्जितम् ॥
य सम सर्वभूतेषु तथा शत्रुसुहृत्सु च ।
सर्वत्र हितकारी य स विन्देद्वै सुरालयम् ॥
परदारपरद्रव्यपरनिन्दापराङ्मुखाः ।
सत्यवादरता ये च ते सर्वे त्रिदिवौकस ॥ [3605]

भीष्म उवाच ।

इत्यद्भुततमं वाक्यं श्रुत्वा भद्र कुरूत्तम ।
पुनरेव शुभं वाक्य नमस्कृत्येदमब्रवीत् ॥

भद्रक उवाच ।

भगवन्सर्वधर्मज्ञ सर्वशास्त्रविशारद ।
पापस्य कारण ब्रूहि यस्माच्च नरकं व्रजेत् ॥

अनड्वानुवाच ।

निर्दय सर्वभूतेषु तथानिष्ठुरवाचकः । [3610]
स पापी नारकी ज्ञेयो योऽधर्मे वर्तते चिरम् ॥

---

3535 ) G2 G(ed ) भाविष्यति ( for भवेद्ध्रुवम् ). — After line 3547, G2 ins.

158** भद्रक पापकृत्क्रूरो द्रुतं भूमि चकर्ष स ।

— ( L. 3450 ) D1 G2 वेदन ( for °नां ). — ( L. 3553 ) G(ed ) लोष्ट ( for काष्ठ- ). — ( L 3554 ) G(ed ) अश्मभिः पञ्चशाखैश्च ( for $^{a}$ ). — G2 om lines 3557–3559 — ( L. 3563 ) G2 M1 गौर्वाक्यमिदमब्रवीत् ( for $^{b}$ ). — ( L. 3564 ) G(ed ) भो भद्र ब्राह्मणेदानीं ( for $^{a}$ ).— ( L. 3566 ) G(ed ) न कृतो धर्मसंचय. ( for $^{b}$ ).— ( L 3572 ) M1 श्रुत्वा भीतिसमन्वितः ( for $^{b}$ ). — ( L. 3579 ) G(ed.) धर्मज्ञाः ( for तीर्थज्ञाः ). G(ed ) धर्महीन ( for मूढबुद्धिं ) — ( L 3580 ) D1 अतिकारुण्यवाक्यं तु , G2 °दारुणतम वाक्य ( for $^{a}$ ). G2 सुव्रत ( for धर्मज ) — ( L. 3585 ) G2 M1 नर ( for हरे. ). — After line 3589, G2 ins an addl colophon, mentioning शेषधर्म as sub-parvan and 27 as adhy no — ( L 3592 ) M1 शुभम् ( for प्रभुम् ). — ( L 3593 ) G2 सदा भक्त्या ( for प्रसन्नात्मा ) G2 सर्वपापै प्रमुच्यते ( for $^{b}$ ). — G2 om. lines 3594–3645 — ( L. 3599 ) M1 ज्ञाने यश्च स मुक्तवान् ( for $^{b}$ ). — ( L 3603 ) D1 स विन्देद्वैष्णव पदम् ( for $^{b}$ ). — ( L. 3605 ) D1 M1 ते सर्वत्राधिका ( M1 °पा ) स्मृता ( for $^{b}$ ).

स्नानहीनः सदा पापी तथा पितृविदूषकः ।
गुरुदेवान्द्विजान्बन्धूनग्निं मित्रं गवा कुलम् ।
पुराणधर्मशास्त्राणि निन्दको नरकं व्रजेत् ॥
स्नाने जपे तथा होमे भोजने देवसंनिधौ । [ 3615 ]
बहुभाषी नरो यस्तु दारुणं नरक व्रजेत् ॥
परदारपरद्रव्यपरक्षेत्रापहारका ।
परनिन्दापरा मूर्खास्ते वै निरयगामिनः ॥
ब्राह्मणेभ्य प्रतिश्रुत्य दास्यामीति धनादिकम् ।
पश्चान्नास्तीति यो ब्रूयात्तमाहुर्ब्रह्मघातकम् ॥ [ 3620 ]
नास्ति नास्तीति यो ब्रूयादतिथौ गृहमागते ।
तस्य जिह्वा समुद्धृत्य घोरास्तु यमकिंकरा ।
दहन्ति युगपर्यन्त कुम्भीपाकेऽतिदारुणे ॥
पानीयमन्नदानं च तथा ताम्बूलभोजने ।
तृणकाष्ठाग्निशाकानां ह्यदाता नरकं व्रजेत् ॥ [ 3625 ]
सर्वेषामेव पापानां पापमेक महत्तरम् ।
लाङ्गलाकर्षणं पार्थ महापापं प्रकीर्तितम् ।
यः सदा कर्षते मूर्खो ब्राह्मणो भ्रूणहा हि सः ॥
देवा पितृगणा विप्रास्तथा गन्धर्वचारणा ।
हलकर्म प्रकुर्वाणं तथा लक्ष्मीपतिः प्रभु । [ 3630 ]
शेपुस्ते तु समुद्वीक्ष्य निर्भाग्यो भव नारकी ॥
युष्मत्कुलप्रसूता ये सर्वकर्मबहिष्कृताः ।
दरिद्रा अङ्गहीनाश्च सर्वे संतानवर्जिताः ।
बन्धुभि. संपरित्यक्ता गन्तारो नरकं ध्रुवम् ॥
कुम्भीरौरवकाकोलक्षेपयन्त्रासिपत्रकम् । [ 3635 ]
तप्ततैलं तप्तकुम्भं घटीयन्त्रमधोमुखम् ॥
व्याघ्रशूल वज्रकीटं वृकराक्षसभक्षणम् ।
एतेषु नरकेष्वेते पतिष्यन्ति न संशय ॥
एवं शप्ताः पूर्वकाले स्वं स्वं धाम ययुस्तदा ।
तस्मात्सर्वेषु कालेषु कृती पापं न कारयेत् ॥ [ 3640 ]
सर्वभूतहित शान्तो दान्तः परमबुद्धिमान् ।
स्वधर्मनिरतो यो वै स याति परमां गतिम् ॥

भीष्म उवाच ।

एवं निशम्य राजेन्द्र रुदन्भूमौ पपात ह ।
पापबुद्धिं विसृज्याशु किं करोमीति चाब्रवीत् ॥
कृतकृत्योऽसि भद्रं ते गच्छ सौम्य यथासुखम् । [ 3645 ]
त्वत्प्रसादादहं मुक्तः पापात्खलु सुदारुणात् ॥

गोपतिरुवाच ।

न गच्छामि महाभाग पूर्वं तव ऋणं गतः ।
तद्धनं तव हस्ते च दत्त्वा यास्यामि निर्वृतिम् ॥

भद्रक उवाच ।

कथं त्वमृणवांस्तात महिषो वापि किं नु मे ।
ऋणप्रदः कथमहं तत्सर्वं कृपया वद ॥ [ 3650 ]

गोपतिरुवाच ।

निष्कत्रयं गृहीत्वा तु तव हस्तान्महामते ।
ईदृशं जन्म संप्राप्तं ततो घोरं भयावहम् ॥
इदानीमुचितं ब्रूहि ऋणात्तस्माद्भयंकरात् ।
मुच्येय हि कथं तात तदुपायं वदस्व ह ॥

भद्रक उवाच ।

त्वयोक्तं तद्धनं दत्त्वा मम हस्ते महामते । [ 3655 ]
महिषेण समं गच्छ ऋणान्मुक्तो न संशयः ॥

गोपतिरुवाच ।

पौरुषं कुरु विप्रेन्द्र यथातथ्यं ब्रवीमि ते ।
आवयोर्ऋणवान्कश्चिच्चतुर्थो ह्यागमिष्यति ।
निष्कत्रयं तस्य हस्ताद्गृहीत्वावां विसर्जय ॥

भीष्म उवाच ।

एवमुक्त्वा तु राजेन्द्र नमस्कृत्वा तु त द्विजम् । [ 3660 ]
तूष्णीमास्ते गवा नाथो ब्राह्मणो विस्मयं वहन् ॥
एतस्मिन्नन्तरे शूद्रोऽप्यायग्रौ विप्रसंनिधिम् ।
सोऽतीव त्वरया युक्तो वाक्यमेतदुवाच ह ॥
विप्राद्य श्रूयतामेतौ विक्रीयेते त्वया यदि ।
निष्कत्रयं प्रदास्यामि मूल्यमेतौ प्रदीयताम् ॥ [ 3665 ]

विप्र उवाच ।

तथा करोमि ते शूद्र तद्धनं च ददस्व मे ।
गोपतिं महिष चेमौ तव दास्ये न संशयः ॥

भीष्म उवाच ।

ब्राह्मणस्य वच श्रुत्वा वृषलो दत्तवान्धनम् ।
स्वगृहं प्राप्तवान्राजंस्तावादाय ततः परम् ॥
बध्वा गोष्ठे दृढं शूद्रे भुञ्जमाने सुतै सह । [ 3670 ]
अन्योन्यकलहाद्राजन्रज्जुभिः परिपीडितौ ।
अभूतां तत्क्षणादेव परासू पतितौ भुवि ॥

---

— After line 3607, D1 G1 M1 G(ed.) ins an addl colophon [ *Sub-parvan:* D1 आश्चर्यपर्वशेषधर्मा., G1 M1 G(ed.) शेषधर्मा.. — *Adhy. name* D1 G1 M1 27, G(ed.) 28 ]. — D1 गोपतिर् (for अनड्वान्) —( L 3612 ) M1 अस्नात: सर्वदा पापी (for ᵃ) — M1 om. lines 3615-3616. — ( L. 3620 ) G(ed) वक्ति (for ब्रूयाद्) G(ed.) दारुण नरक व्रजेत् (for ᵇ) — After line 3620, D1 G1 ins. :

159** पितृपूजा गृहार्चां च ह्यग्नेर्मातुर्गुरो शुभाम् ।
शिष्टबन्धुगवा पूजामकृत्वा नरक व्रजेत् ॥

—( L. 3625 ) D1 तृणकाष्ठानि शाकानि (for ᵃ) —( L. 3643 ) G1 M1 च रुदन् (for राजेन्द्र) and भूमौ भद्रः (for रुदन्भूमौ ) — Before line 3646, G2 ins. भद्रकः. — For line 3646, G2 subst

160** तद्धन्धन च निर्मुच्य गच्छ गच्छ सुदारुणात् ।

—( L 3648 ) M1 G(ed.) ऽह् ( for च ). —( L. 3652 ) D1 G(ed.) सुघोरं च ( for ततो घोरं ) —( L 3658 ) D1 ऋणतः ( for ऋणवान् ) — ( L. 3664 ) D1 विप्राहं; G2 हे विप्र (for विप्राद्य ). —( L. 3665 ) G(ed.) प्रदेहि मे ( for प्रदीयताम् ).

हा हतोऽस्मि हतोऽस्मीति बन्धुभिः परिवेष्टितः
कृत्वा तु रोदनं दुःखात्प्रपेदे धरणीतलम् ॥
एवं प्रवर्तमाने तु गोपतिर्महिषस्तथा । [3675]
दिव्यं विमानमारूढावम्बरं समुपागतौ ॥
ऊचतुर्दुःखितं शूद्रं किमर्थं रुद्यते त्वया ।
त्वं हि नः पूर्वजनने ऋणवानत्र संशय ॥
ऋणवन्तौ द्विजस्त्वावामृणाद्धि परिमोचितौ ।
मोचितश्च ऋणात्त्वं हि व्रज शीघ्रं त्रिविष्टपम् ॥ [3680]
एवं निशम्य वचनं मधुरं रोमहर्षणम् ।
सकुटुम्बो ययौ नाकं शूद्रो महिषगोपती ॥
गन्धर्वैः स्तूयमानास्ते सर्वे नाकं समाययुः ॥

युधिष्ठिर उवाच ।

किं कर्म कृतवांस्तात ब्राह्मणो वेदवर्जितः ।
तत्सर्वं श्रोतुमिच्छामि कृपया वद सुव्रत ॥ [3685]

भीष्म उवाच ।

द्रव्येणानेन विप्रोऽसौ प्रायश्चित्तं चचार ह ।
प्रायश्चित्तविशुद्धात्मा तपस्तेपे सुदुष्करम् ॥
कृष्णेति परमात्मेति सर्वलोकेश्वरेति च ।
विश्वरूप सदानन्द पाहि मां शरणागतम् ॥
एवं भक्त्या प्रार्थयन्तं ब्राह्मणं गतकल्मषम् । [3690]
हृदि स्थितो जगन्नाथस्तं प्रत्याह स्थितोऽम्बरे ॥

श्रीभगवानुवाच ।

यद्यदिष्टतमं वस्तु तत्तदेवेह भुङ्क्ष्व च ।
स्वर्गं गच्छ महाभाग सर्वान्कामानवाप्नुहि ।
इन्द्रस्य संनिधौ तिष्ठ यावदाचन्द्रतारकम् ॥
इति खे संगतां वाणीं श्रुत्वा प्रीतिसमन्वितः । [3695]
कर्मकाण्डमशेषेण यथावदकरोद्द्विजः ॥
पुत्रपौत्रैः परिवृतो बन्धुभिश्च समन्वितः ।
प्रपेदे सकलान्कामान्सत्सङ्गस्य प्रभावतः ॥
ततः परं व्योमचरैरभिष्टुतो
गन्धर्वमुख्यैरुपसेव्यमानः । [3700]
दिव्यं प्रपेदे स तु विप्रवर्यं

सत्सङ्गतो नास्ति परं नरेन्द्र ॥
तस्मात्त्वमपि राजेन्द्र सत्सङ्गं कुरु सर्वदा ।
सत्सङ्गान्मुक्तिमाप्नोति नरः पापरतोऽपि च ॥
सर्वेषामपि सङ्गानां सत्सङ्गो दुर्लभः खलु । [3705]
सत्सङ्गादिष्टकामांश्च संप्राप्नोति नरोत्तमः ॥
ऋणादाने सुखं पूर्वं प्रदाने प्राणसंकटम् ।
जनने च विपत्तौ च ऋणिनां न सुखं खलु ॥
शाकाहारं वरं पथ्यं पञ्चमेऽहनि भोजनम् ।
ऋणाद्राज्यप्रदाद्वापि निराहारोदभोजनम् ॥ [3710]
एवं कष्टमृणं राजन्निहामुत्र च जन्मसु ।
ऋणी न भूयाः सततं परं श्रेयो गमिष्यसि ॥
य इदं पुण्यमाख्यानं शृणुयाद्वै समाहितः ।
ब्रह्मलोकमवाप्नोति नारदेन प्रभाषितम् ॥
यः शृणोति ऋणी नित्यं भक्तिपूर्वं निरन्तरम् । [3715]
षण्मासश्रवणादेव ऋणान्मुच्येत भूमिप ॥
तस्मात्सर्वेषु कालेषु धर्ममेव सदा कुरु ।
धर्मेण ते भवेद्वृद्धिरिह स्वर्गे च भूमिप ॥

Colophon

वैशंपायन उवाच ।

इत्येव धर्ममाश्चर्यं सत्सङ्गस्य ऋणस्य च ।
श्रुत्वा प्रीतो महाभागो धर्मसूनुरुवाच तम् ॥ [3720]

युधिष्ठिर उवाच ।

कुरुवृद्ध नमस्तेऽस्तु वसूनामग्रयायिने ।
भक्तोऽसि देवदेवस्य समस्तजगतां पते ॥
दाता प्रतिग्रहीता च किं करिष्यति वर्तनम् ।
इह लोके ह्यभावे तु सुखदुःखं कथं भवेत् ॥
वृद्धलाभे महालाभे ह्यथ वा मूलनष्टके । [3725]
इह लोके परत्रापि किं करिष्यति तद्वद ॥

भीष्म उवाच ।

महता ब्रह्मपुत्रेण नारदेन सुधीमता ।
तदहं संप्रवक्ष्यामि शृणु नान्यमनाः प्रभो ॥
पुण्यं पवित्रमायुष्यं सर्वपापहरं शुभम् ।

---

— D1 भद्रक ; M1 ब्राह्मण ( for विप्र ). — ( L 3673 ) [इ]ति हा तात ( for हतोऽस्मीति ). — ( L 3675 ) G1 M1 गोवृषो ( for गोपतिर् ). — ( L. 3677 ) M1 दुर्मति ( for दु खित ) — ( L 3686 ) D1 द्रव्येण तु ह्यसौ विप्र॰ , G2 सोऽपि विप्रो महाभाग ( for ᵃ ) — ( L 3687 ) M1 -दुश्चरम् , G(ed ) -दारुणम् ( for -दुष्करम् ) — ( L 3691 ) G1 G(ed.) ततो ( for स्थितो ) — ( L 3695 ) M1 संगदिता ( for खे सगता ). — ( L 3697 ) D1 G2 बन्धुभि सह धर्मज ( for ᵃ ) — ( L 3704 ) G2 नर पापाद्विमुच्यते ( for ᵇ ). — ( L 3706 ) D1 न मंशय ; G(ed ) नरो नृप ( for नरोत्तम ) — ( L 3708 ) M1 G(ed.) ऋणिनो ( for °नां ) — ( L. 3710 ) D1 निराहारो वरो मत , M1 °हारादभोजनम् ; G(ed.) °हारः पर स्मृत॰ ( for ᵇ ). — ( L. 3715 ) G1 य इद शृणुयान्नित्य ( for ᵃ ) — ( L 3718 ) D1 सिद्धिर् ( for वृद्धिर् ) G(ed ) [अ]मुत्र ( for स्वर्गे ).

Colophon — *Sub-parvan* D1 आश्चर्यपर्वणि शेषधर्मा॰ ; G1 2 M1 G(ed ) शेषधर्मा — *Adhy name* ऋणप्रशसा॰ — *Adhy no* D1 G1 2 M1 28, G(ed ) 29

( L 3725 ) G1 G(ed ) महाबाहो ( for °लाभे ) — After line 3727, D1 ins

161** गादेत लोकरहसि इतिहास पुरातनम् ।

While G(ed ) ins after line 3727

162** कथित यत्पुरावृत्त मदनुग्रहकाङ्क्षया ।

—( L 3731 ) M1 [अ]दानेन ( for [अ]दत्तेन ) —( L,

ऋणमोचनकं नाम सर्वेषां पुष्टिवर्धनम् ॥ [3730]
दत्तेन धनवाँल्लोके ह्यदत्तेन च निर्धनः ।
सुकृतेन च पापेन भवत्येव न कारणम् ॥
ऋणकर्ता पिता शत्रुर्धनकर्ता पिता सखा ।
पतिव्रता च जननी ह्यसती च पिता तथा ॥
भार्या च वशिनी नित्यं पुत्रोऽपि श्रुतवान्सखा । [3735]
ऋणी दुःखी सुखी दाता परलोके च पाण्डव ॥
तस्मात्सर्वप्रयत्नेन ऋणवान्न भवेन्नृप ॥

अत्र ते कथयिष्यामि इतिहासं पुरातनम् ।
श्रोतॄणां सर्वपापघ्नं वैराग्यजननं शुभम् ॥
आसीत्पुरा कृतयुगे ब्राह्मणो बन्धुवत्सलः । [3740]
सर्वधर्मसमायुक्तः कौशिको नाम शीलवान् ॥
वसुमान्बहुपुत्रश्च श्रुतधर्मो बहुप्रदः ।
उपार्जयामास धनं विद्याकृषिमुखेन च ॥
प्रवृद्धमभवद्वित्तं विदुषो ब्राह्मणस्य हि ।
धर्मवृद्ध्या महाराज लक्षाणां तु सहस्रकम् ॥ [3745]
सत्यशीलो महानासीत्सखा तस्य युधिष्ठिर ।
दरिद्रो बहुपुत्रश्च कृशाङ्गो व्याधितो भृशम् ॥
कौशिकः स तु धर्मात्मा ददाति च धनं स्वकम् ।
अन्नाभावात्तथा स्नेहान्निर्धनत्वाच्च सर्वथा ।
सख्युः स्नेहाद्वृद्धिलोभाद्धर्मतः कुरुनन्दन ॥ [3750]
ततो बहुतिथे काले द्विजौ तौ तु क्षयं गतौ ।
ततो यमभटैर्नीतौ दर्शितौ च विशेषतः ॥
ततो दाता यमं दृष्ट्वा सत्वरं प्रणिपत्य च ।
तदा निवेदयामास धर्मराजाय सत्वरम् ।
श्रूयतां धर्मराजेदं सत्यशीलेन यत्कृतम् ॥ [3755]
दत्तापहारी भूलोके कृतघ्नो लोकदूषकः ।
अप्रदाय मया दत्तमिमं लोकमुपागतः ॥
असत्यवादी धर्मात्मन्सत्यशील इति श्रुतः ।
राजतस्करदुर्वृत्तैर्मया यत्संचितं धनम् ।
तत्सर्वं लयमायाति किं करिष्ये महामते ॥ [3760]
शृङ्खलाशतसंयुक्तः काष्ठपाषाणपीडितः ।
बहुधा भग्नमानोऽपि तदा नो दत्तवान्धनम् ॥
स्ववित्तमस्य दत्त्वा तु रिक्तोऽहमभवं प्रभो ।
पुत्रदारास्तथा भृत्याः सर्वे वै रिक्ततां गताः ॥
अयं चाप्यत्र संप्राप्तः किं करिष्यामि सूर्यज । [3765]
अस्य वेषेण विश्वासं वाचि कर्मणि चेष्टिते ॥
कुरु दीनस्य पापस्य गोमुखव्याघ्ररूपिणः ।
कुटुम्बघातकस्यास्य सदा कार्पण्यभाषिणः ।
अभावे निन्दितस्यास्य विश्वासं वाचि मा कृथाः ॥
तस्य तद्वचनं श्रुत्वा कौशिकस्य तु धर्मज । [3770]
सत्यशीलो ऋणी प्राह प्रेतराजं भयंकरम् ।
पापोऽहं पापकर्माहं पापात्मा पापसंभवः ।
त्राहि मां वचनं देव त्वदग्रे वक्तुमक्षमः ॥
पापिनो वचनं देव सर्वत्रापि विगर्हितम् ।
तथापि वक्ष्ये कार्पण्यं धर्मराजस्य तेऽग्रतः ॥ [3775]
पापिना बहुपुत्रेण निर्भाग्येन मया खलु ।
कौशिकात्तु धनं गृह्य कुटुम्बभरणं कृतम् ॥
क्षेत्रोत्पत्त्यास्य दास्येऽहमिति मत्वा ऋणं कृतम् ।
ऋणं वै धर्मसाक्ष्या च न दत्तं धर्मराज हि ॥
तस्मिन्काले महापीडा राजचोरसमुद्भवा । [3780]
आसील्लोकश्च दुर्भिक्षो व्याधिभिः परिपीडनम् ॥
कृषिभिः फलिता भूमिर्नैव दण्डधरः प्रभो ।
क्षुद्बाधा ग्रामबाधा च चोरबाधातिदुःसहा ॥
गृहक्षेत्रं व्यपहृतं सुता देशान्तरं गता ।
व्याधिना पीडितोऽहं तु ह्यपत्यानि मृतानि मे ॥ [3785]
वेश्म दग्धं विशालं मे गोधनं तस्करैर्हृतम् ।
काले काले न वृष्टिश्च कृषिं कर्तुं न हि क्षमः ॥
अनड्वाहश्च शकटास्तुरंगा दासदासिकाः ।
राजभृत्यैरपहृताः कराभावात्कथंचन ।
जीवामि भिक्षया देव व्याधिना परिपीडितः ॥ [3790]
एवं स्थिते मयि कृशे ह्यन्तकालः समागतः ।
तस्मिन्नवसरे देव त्वद्भटाश्चातिदारुणाः ॥
कालपाशैर्दृढं बध्वा प्रापयन्ति स्म मामिह ।
किं करिष्याम्यहं देव ह्यत्रार्थं मां प्रबाधते ॥
अन्यथा चिन्तितं कार्यं दैवेन कृतमन्यथा । [3795]
अहमन्यत्र चिन्तामि दैवमन्यत्र चिन्तयेत् ॥
त्वमेव चिन्तयत्वद्य कृशो दीनो विवस्त्रकः ।
शुष्ककण्ठोष्ठतालुश्च नित्यदुःख्यतिदारुणः ॥
क्षुत्क्षामोऽहं मुमूर्षुश्च बाधितस्तव किंकरैः ।

3733 ) G(ed.) अन्नकर्ता पिता सुहृत् (for $^{b}$). — For line 3734, G(ed.) subst.

163** पतिव्रता च भगिनी सती चैव सुता तथा ।

—( L 3744 ) G(ed) प्रवृद्धिमगमद्वित्तं, $G_2$ प्रवृद्धं वित्तमभवद् (for $^{a}$). $M_1$ विपुल (for विदुषो). —( L 3749 ) $D_1$ निर्धनाच्च हि सर्वदा (for $^{b}$) —( L 3751 ) G(ed) द्विजाती (for द्विजौ तौ) —( L 3757 ) $M_1$ अमुं लोकमुपागमत् (for $^{b}$) — After line 3762, $G_1$ ins ·

164** ऋणी च ब्रह्महा चैव तावुभौ तु लयं गतौ ।
कम्पिते ब्रह्महा मुक्त ऋणी तु न कदाचन ॥

—( L. 3766 ) $D_1$ $G_2$ पाप- (for वाचि ) —( L. 3778 ) G(ed ) क्षेत्रादुत्पाद्य दास्येऽहम् (for $^{b}$) —( L 3781 ) G(ed.) आसील्लोकस्य दुर्भिक्षं (for $^{a}$). —( L. 3783 ) G(ed.) राज- (for ग्राम- ) —( L. 3787 ) $M_1$ कालेन नष्टा वृष्टिश्च (for $^{a}$). —( L 3788 ) $D_1$ $G_1$ $M_1$ शकटाननडुहश्चैव (for $^{a}$), $G_2$ दासी दासश्च धर्मप (for $^{b}$). —( L 3790 ). G(ed ) भिक्षया चापि जीवामि (for $^{a}$). $G_2$ त्वद्भक्ताश्चातिदारुणाः (for $^{b}$). — $G_2$ om lines 3791–3792. — For line 3796, G(ed.) subst. .

165** चिन्तयाम्यहमन्यत्तु दैवमन्यत्त्वचिन्तयत् ।

किं करोमि च सूर्यात्मन्नृणाद्वै मोचनं कथम् ॥ [ 3800 ]
कौशिकोऽसौ महाप्राज्ञो देवतागणसेवितः ।
अप्सरोभि परिवृतो विमानशतसेविभि ।
वर्तते तव धर्मेश निकटे दीपयन्दिशः ॥
मम सख्युर्महाप्रीतिर्मयि नित्यं समाश्रिता ।
इदानीं सर्वधर्मज्ञ विपरीताभवन्मयि ॥ [ 3805 ]
वनानि दहतो वह्नेः सखा भवति मारुत ।
स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ॥

धर्मराज उवाच ।

ऋणप्रदाता धनवान्दाता पात्रविशेषवित् ।
भूर्लोके सुरलोके वा पूज्य एव धनी सदा ॥
सुशीलो बन्धुमान्वाग्मी नित्यं चातिथिपूजक । [ 3810 ]
कृतघ्नो ऋणवान्भृत्यो दुःखी सर्वत्र निन्दकः ॥
कुचेलः कुत्सितो धूर्तो दुराचारी तु कामुकः ।
श्ववृत्तिः पिशुनो जारो ऋणी सर्वत्र दुःखितः ॥
अदत्तदोषेण भवेद्दरिद्रो
दरिद्रदोषेण करोति पापम् । [ 3815 ]
पापादवश्यं नरकं प्रयाति
पुनर्दरिद्रः पुनरेव पापी ॥
न्यायसारमिदं वच्मि लोकाना युवयोः कृते ।
शृण्वन्तु पितरः सर्वे राजवर्याश्च येऽनघा ॥
ऋणी दातुश्च पुत्रत्वं दास्यापत्यं पशुत्वताम् । [ 3820 ]
अनड्वांश्च पशुत्वं च गमिष्यति न संशय ॥
ऋणाद्यावद्विमुक्तोऽसौ कृषिव्यापारजीवनैः ।
तावद्वै पुत्रदासत्वमल्पायुष्ट्वं गमिष्यति ॥
एवं निश्चित्य भगवान्ब्रह्मा लोकपितामह ।
आज्ञां दत्त्वा ममेमां तु स्वर्लोके सुप्रतिष्ठित ॥ [ 3825 ]

भीष्म उवाच ।

एवं निश्चित्य ऋणिनं विकर्तनसुतो वशी ।
पालयामास धर्मेण स्वं लोकं धर्मनन्दन ॥
एतद्विज्ञाय मतिमानृणवान्न भविष्यति ।
सुखी सर्वत्र भविता शाश्वतं लोकमेष्यति ॥
इदं पवित्रं पापघ्नं पुण्यं ऋणविमोचनम् । [ 3830 ]
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते च ऋणाद्धि सः ॥

Colophon

जनमेजय उवाच ।

आश्चर्यमतुलं धर्मं श्रुत्वा प्रीतो युधिष्ठिर ।
किमपृच्छन्मुनिश्रेष्ठ ब्रूहि तन्मे पितामहम् ॥

वैशंपायन उवाच ।

आश्चर्यं पृष्टवान्धर्मं धर्मसूनु पितामहम् ।
सर्वभाग्यकरं पुण्यं सर्वलोकेषु विश्रुतम् ॥ [ 3835 ]

युधिष्ठिर उवाच ।

केन व्रतेन मे राज्यं भविष्यति पितामह ।
तद्व्रतं तस्य माहात्म्यं वद प्रियकरं हरेः ॥
पितामह विशेषेण भक्तोऽसि जगतीपतेः ।
त्वं सदा सर्वधर्मज्ञ ब्रूहि व्रतमनुत्तमम् ॥

भीष्म उवाच ।

व्रतानामपि सर्वेषामुत्तमं यद्विदुर्बुधाः । [ 3840 ]
तद्व्रतं शृणु कौन्तेय नारदोक्तं मया श्रुतम् ॥
विख्यातं त्रिषु लोकेषु जयन्तीत्यभिधानत ।
तस्य व्रतस्य माहात्म्यं प्रवक्ष्यामि हिताय ते ॥
वक्ष्ये जयन्तीमाहात्म्यं शृणु राजकुलोत्तम ।
यस्य श्रवणमात्रेण वाजपेयफल लभेत् ॥ [ 3845 ]
पुरा सनत्कुमारेण नारदाय प्रभाषितम् ।
आश्चर्यं नित्यमाख्यातं सर्वदानफलप्रदम् ।
जयन्त्या सदृशं पुण्यं त्रिषु लोकेषु नो नृप ॥
मोक्षदं कुर्वतां भक्त्या जयन्तीव्रतमुत्तमम् ।

---

—(L 3798) M1 G(ed.) शुष्ककण्ठः शुष्कतालुश् (for [a]). —(L. 3799) G(ed.) च मूर्छैश् (for मुमूर्षुश्) —(L 3801) M1 महाभागो (for °प्राज्ञो) —(L 3802) G(ed) संतानशतसेवितः (for [b]). —(L 3803) G2 निकटे दीपदर्शन (for [b]). —(L 3807) M1 काश्ये (for कृशे) — G1 om the ref G2 यम (for धर्मराज) —(L 3810) G1 आसीन् G(ed.) श्रीमान् (for वाग्मी) — After line 3810, D1 G(ed.) ins :

166** मृदुभाषी सदा दान्तः कृपालुर्भूतसंचये ।
पुरुषो ह्यधनी यस्तु तत्राप्यत्र सुखी हि सः ॥

D1 cont. :

167** अदाता कृपणो मूर्खो शास्त्रहीनोऽतिकामुक ।

—(L. 3812) G1.2 मूर्खो (for धूर्तो) —(L 3816) G1 पाप प्रकुर्वन् (for पापादवश्यं) —(L. 3819) G1.2 नरा (for ऽनघा). —(L 3820) D1 दास्या पुत्रत्वपुत्रताम्, G(ed.) दासापत्यकलत्रताम् (for [b]) —(L 3822) G2 -जीवितै (for -जीवनै) — M1 om lines 3823-3825 —(L. 3825) D1 स्वर्लोके स-, G1 स्वर्लोकेषु ; G(ed) स्वर्गलोके (for स्वर्लोके सु-) — M1 om the ref —(L 3827) D1 G2 M1 भूलोक (for धर्मेण) D1 G2 M1 धर्मतो (for स्व लोकं). G1 पाण्डु- (for धर्म-)

COLOPHON — *Sub-parvan* D1 G1 M1 आश्चर्यपर्वणि शेषधर्माः, G2 G(ed) शेषधर्मा — *Adhy name* . D1 G1 G(ed) ऋणविमोचनम् — *Adhy no* D1 G1,2 M1 29 ; G(ed) 30.

M1 om. lines 3833-3835 G1 om (hapl) line 3834-3836 with the ref. —(L. 3834) G(ed) अतुल (for (for पृष्टवान्). —After line 3835, G(ed) ins. :

168** वासुदेवं नमस्कृत्य पृष्टवान्द्विजसंनिधौ ।

—(L 3838) M1 भक्तोऽतीव जगत्पतेः (for [b]) —(L. 3841) D1 पुरा लोकहितार्थाय (for [a]). D1 M1 नारदात्तु (for

जयन्तीं वै प्रशंसन्ति मुनय पुण्यकाङ्क्षिणः । [ 3850 ]
व्रतानां चैव सर्वेषामुत्तमं तत्प्रचक्षते ॥
ब्रह्मक्षत्रविशां चैव शूद्राणां चैव योषिताम् ।
मोक्षदं कुर्वतां भक्त्या विष्णुप्रियकरं प्रभो ॥
जयन्त्यां नैव भुञ्जीत धर्मे बुद्धिर्यदि स्थिता ।
भुङ्क्ते यदि स पापी स्याद्रौरव नरकं व्रजेत् ॥ [ 3855 ]
महापातकयुक्तो वा युक्तो वा सर्वपातकैः ।
जयन्त्यां तु निराहार स्थित्वा याति हरेः पदम् ॥
श्रीजयन्ती महापुण्या विष्णोः प्रियकरा तिथि· ।
संसेव्या सर्वदा विप्रैः संसारच्छेदलिप्सुभिः ॥
जयन्त्यां प्रातरुत्थाय निगृहीताखिलेन्द्रिय । [ 3860 ]
स्नात्वा च विधिवद्विष्णुमर्चयेत्प्रयतेन्द्रिय ॥
विष्णोः समीपे शयीत नारायणपरायण· ।
रात्रौ जागरणं कृत्वा हरिसायुज्यमश्नुते ॥
नृत्तगीतादिवाद्यैश्च पुराणश्रवणादिभिः ।
सेवां कृत्वा हरे रम्यां हरिसालोक्यमश्नुते ॥ [ 3865 ]
पुत्रकामो लभेत्पुत्रं धनकामो लभेद्धनम् ।
राज्यकामो लभेद्राज्यं जयन्त्यास्तु प्रभावत ॥
उपवासव्रतपरो धर्मकारी भवेन्नृप ।
चण्डालान्पतितान्वापि वाङ्मात्रेणापि नालपेत् ॥
श्रीजयन्त्या व्रतं ये तु कुर्वन्ति श्रद्धया नराः । [ 3870 ]
ते यान्ति विष्णुभवनं परमानन्ददायकम् ॥
अश्वमेधसहस्राणि वाजपेयशतानि च ।
कृत्वा यत्फलमाप्नोति जयन्त्यास्तत्फलं ध्रुवम् ॥
यदृच्छया कृता यैस्तु तेषां पापं छिनत्ति हि ।
सुपुत्रदायिनी ह्येषा शरीरारोग्यदायिनी । [ 3875 ]
सुकलत्रप्रदा ह्येषा विष्णुलोकप्रदायिनी ॥
जयन्त्यां कुरुते यस्तु यत्किंचिद्दानमुत्तमम् ।
स वै ब्रह्म समाप्नोति साक्षात्कृष्णमुखोदितम् ॥
तिलकन्यागवां दानं यो ददाति नृपोत्तम ।
कोटिवंशसमायुक्तो विष्णुलोकं स गच्छति ॥ [ 3880 ]
अष्टमी च जयन्ती च देवदेवस्य चक्रिण ।
शुभे ह्येते महाभाग विष्णोः प्रियकरे तिथी ।
जयन्ती मोक्षदा प्रोक्ता सर्वेषां व्रतकारिणाम् ॥
अष्टमी भुक्तिदा प्रोक्ता ब्रह्मलोकप्रदायिनी ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । [ 3885 ]
धर्मव्रतस्य चरितं सर्वमङ्गलदायकम् ॥
कुरुक्षेत्रे पुरा राजन्सोमवंशसमुद्भवः ।
धर्मव्रतो महानासीच्चन्द्रकान्तसुतः प्रभु ।
धर्मेण पालितास्तेन जना जनपदास्तथा ॥
कालिन्दीतीरमाश्रित्य स राजा जनमेजय । [ 3890 ]
राजसूयाश्वकारासौ पञ्चत्रिंशत्प्रतापवान् ।
अश्वमेधांश्च राजेन्द्र षट्त्रिंशन्नर्मदातटे ॥
पृथिवी पालिता तेन शरदामयुतं नृप ।
तावत्पुत्रसमायोगो नैवाभूत्तस्य भूपते ॥
शत्रुभिः पीडितो राजा राज्याद्भ्रष्टो महामना । [ 3895 ]
पुरीं निवेश्य सचिवे वर्जितं सर्वसंपदा ।
वनं जगाम धर्मात्मा तपस्तप्तुमपुत्रवान्
तत्राराध्य चिरं काल ब्रह्माणं भुवनेश्वरम् ।
सहस्रत्रयमब्दानामेकाहमिव सोऽभवत् ॥
ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षतौ निष्कुटी नृप । [ 3900 ]
हेमन्ते तु ह्रदेवासी कालिन्द्या सरितः प्रभो ॥
त्यक्ताहारस्त्यक्तनिद्रस्त्यक्तभोगः प्रतापवान् ।
आचरत्तप उग्रं तु रवौ संन्यस्तलोचन. ॥
तपसा तस्य राजेन्द्र देवा भीता दिवं गता· ।
रम्भातिलोत्तमाभ्यां तु निवारयितुमक्षमाः । [ 3905 ]
सत्यलोकं तदा जग्मुर्विज्ञप्तुं परमेष्ठिन ॥
तत्र स्थित्वा चिरं कालं स्तवैः स्तुत्वा पितामहम् ।
इदमूचुरनूचाना कृताञ्जलिपुटास्तदा ॥
पाहि लोकपते तात धर्मव्रतभयार्दितान् ।
वस्तुं त्रिविष्टपे शक्यं नैवास्माभिरकण्टकै. ॥ [ 3910 ]
तस्य चित्तं भवान्वेत्ति न हि विन्दामहे वयम् ।
अस्मास्वपि च ते प्रीतिरस्ति चेत्पालयस्व ह ॥
ब्रह्मोवाच ।
शृणुध्वं मद्वचः पुत्रा युष्मद्धितकरं परम् ।
धर्मव्रतस्तु राजेन्द्रो मामेव स्तुवते प्रभु· ।
तस्माद्भयमिदं नास्ति युष्माकं मम चैव हि ॥ [ 3915 ]
सर्वेषामेव देवानां मा भूद्राज्ञो महद्भयम् ।

---

°दोक्तं ) — ( L 3844 ) G1 कुलोद्भव ( for °त्तम ). — ( L. 3846 ) D1 G2 M1 पुरा सनत्कुमाराय ( for $^a$ ) D1 G2 M1 नारदेन ( for °दाय ) — ( L. 3847 ) G(ed.) आख्यान ( for °तं ) D1 आश्चर्यं पुण्यमाख्यानं ( for $^b$ ). — ( L 3849 ) D1 om. ( hapl ) lines 3849$^b$–3853$^a$ G(ed ) विष्णोः प्रियदिनं हि तत् ( for $^b$ ) — ( L. 3861 ) G(ed.) अर्चयेत्प्रयतो द्विजः ( for $^b$ ). — ( L 3864 ) M1 नृत्तगीतादिभिर्वाद्यै ( for $^a$ ). — ( L 3866 ) D1 G1 M1 हरिसालोक्यतां व्रजेत् ( for $^b$ ) — ( L. 3870 ) G1 G(ed ) [अ]न्विता ( for नरा· ) — M1 om ( hapl.) lines 3875$^b$–3876$^a$. — ( L. 3882 ) M1 उभे ह्येते महाराज ( for $^b$ ). — ( L. 3891 ) D1 G1, 2 M1 राजसूयं ( for °याश्व ). — ( L 3892 ) D1 G2 M1 अश्वमेधं ( for °धांश्च ). — ( L. 3895 ) G(ed) महीपति· ( for महामना ). — ( L. 3896 ) D1 G1 2 पुरीं निवेश्य सचिवैः ( for $^a$ ). D1 वर्जित·, G2 वञ्चितां ( for वर्जित ) — ( L. 3899 ) G(ed ) पार्थिव. ( for सोऽभवत् ). D1 G2 एकाह( G2 °म )मकरोत्तप ( for $^b$ ) — After line 3899, G(ed ) ins.

169** गमयामास राजेन्द्र पुत्रकामो महामतिः ।

—( L. 3900 ) G2 वर्षे जलनिवासक ( for $^b$ ) — ( L. 3901 ) G2 हेमन्ते जलधारायां ( for $^a$ ). M1 कालिन्द्यां सरिति प्रभो ( for $^a$ ). — ( L 3904 ) D1 दिवि स्थिता ( for दिव गता· ). — ( L. 3908 ) G(ed ) विधातारं ( for अनूचाना. ). — ( L. 3913 )

गच्छध्वं पूर्ववत्तूर्णं त्रिविष्टपमरिंदमा ॥
इत्युक्ता देवताः सर्वाश्चन्द्रादित्यमरुद्गणाः ।
त्रिविष्टपं पुनः प्रापुर्मुक्तदु खा महाबलाः ॥
तस्मिन्नवसरे धाता विश्वयोनि समाधिमान् । [3920]
आजगाम नृपस्याशु प्रदातुं वरमुत्तमम् ॥

ब्रह्मोवाच ।

धर्मव्रत महाभाग तपसा तोषितोऽस्म्यहम् ।
वरं वरय भद्रं ते वरदोऽहमिहागतः ॥

भीष्म उवाच ।

ब्रह्मणोदीरितं वाक्यं श्रुत्वा प्रीतो नृपोत्तम ।
कृताञ्जलिपुटो धीमान्नमस्कृत्वा वचोऽब्रवीत् ॥ [3925]
कृतार्थोऽस्मि महाभाग पुत्रं देहि पितामह ।
अपुत्राणां तु लोकोऽस्ति नैवेति यमतः श्रुतम् ॥
कृताञ्जलिपुटं दीनं कृशाङ्गं प्रेक्ष्य विश्वसृट् ।
स्पृशन्प्रोवाच राजेन्द्र वर्धयंस्तस्य मानसम् ॥
धर्मव्रत महाभाग पुत्रोत्पत्तेस्तु कारणम् । [3930]
दिव्यभोगप्रदं नृणा यद्व्रतं तद्वदामि ते ॥
जयन्ती भवता सेव्या विशेषेण नृपोत्तम ।
हरिप्रिया तु सा देवी जयन्ती लोकविश्रुता ।
सा दास्यति च ते पुत्रं दिव्यरूपमरिंदम ॥

धर्मव्रत उवाच ।

शत्रुभिर्हृतराज्यस्य सपुत्रस्य च मेऽनघ । [3935]
कथं वस्तुं मया शक्यं स्वपुरे देववल्लभ ॥

ब्रह्मोवाच ।

अत्युन्नतपदं राजन्काङ्क्षिणा ब्रह्मयोनिना ।
कृता मया जयन्तीयं यया प्राप्तमिदं पदम् ॥
इच्छता राज्यपुत्रौ च त्वया सेव्या प्रयत्नतः ।
जयन्ती राजशार्दूल सर्वसंपद्भवेन्नृप ॥ [3940]

इत्युक्त्वा राजशार्दूलं परमेष्ठी जगत्प्रभुः ।
स प्रहृष्टो महाराज स्वप्नं दृष्ट्वेव धर्मज ॥
तिरोदधे स भूपालो विस्मयं परमं गतः ।
उत्तस्थौ स्वपुरीं प्राप चित्रध्वजपताकिनीम् ॥
ब्रह्मणोदीरितं वाक्यं मन्त्रिवृद्धे निवेद्य च । [3945]
श्रीजयन्तीव्रत भूपो अकरोद्भार्यया सह ॥
तेन पुण्यप्रभावेन सुतं चन्द्रप्रभं किल ।
लेभे राज्यं च कोशं च शत्रूणामन्तकोऽभवत् ।
रिपून्निर्जित्य संग्रामे राज्ञां चैवाग्रतोऽभवत् ॥
तस्मात्त्वमपि राजेन्द्र पुत्रकामो यदि प्रभो । [3950]
राज्यकामोऽपि वा तात कुरु व्रतमनुत्तमम् ॥
ककुत्स्थस्य प्रिया साध्वी मागधी पद्मलोचना ।
तेन सार्धमिदं कृत्वा रघुं लेभे सुदक्षिणा ॥
आज्ञां दशरथस्यास्य रामोऽपि शिरसा वहन् ।
वैदेह्या सह धर्मात्मा सुमित्रातनयेन च । [3955]
प्रपेदे दण्डकारण्य तत्रेदमकरोत्सुधीः ॥
खरादीन्राक्षसान्हत्वा लेभे राज्यं सुतं कुशम् ।
इन्द्राणी ह्यलभत्पुत्रं जयन्तं सुरनायकम् ॥
पार्वती षण्मुखं लेभे व्रतेनानेन सुव्रत ॥
गान्धारी चैव माद्री च कुन्ती च पतिना सह । [3960]
युष्मान्वै सुषुवे कुन्ती माद्री गान्धारसंभवा ॥
पुत्रदं पुत्रकामाना राज्यदं राज्यकामिनाम् ।
जयप्रदमिदं तात पापिनामपि पापहृत् ॥
स्वर्गमोक्षप्रदं नृणां जयन्तीव्रतमुत्तमम् ।
त्वं राजन्सर्वपापघ्नं भुक्तिमुक्तिफलप्रदम् । [3965]
कुरु वृद्धिं च पुत्रांश्च अचिरात्प्राप्स्यसे ध्रुवम् ॥

वैशंपायन उवाच ।

श्रुत्वेदं पुण्यमाख्यानं प्रीतो धर्मसुतो वशी ।
नत्वा कृष्णं जगन्नाथं पुन श्रोतुं मनो दधे ॥
य इदं पुण्यमाख्यानं नारदेन प्रभाषितम् ।
श्रुत्वा पापविनिर्मुक्तो नरो नाकं समश्नुते ॥ [3970]

Colophon

---

G(ed) शुभम् (for परम्). G1 युष्मात्प्रियकरं शुभम् (for [b]). — (L. 3914) G(ed.) मामेव स्तौति वै सदा (for [b]) — (L 3918) G2 इत्युक्ता अपि ते सर्वे (for [a]) — (L. 3919) G(ed) त्यक्त- (for मुक्त-). — (L. 3920) G2 G(ed) एतस्मिन्नन्तरे धाता (for [a]). — (L. 3924) ब्रह्मणो गदितं वाक्यं (for [a]). — (L. 3925) G(ed) नमस्कृत्येदमब्रवीत् (for [b]). — After line 3926, D1 ins.

170** शत्रुभिर्हृतराज्यस्य अपुत्रस्य च मेऽनघ ।
कथं वस्तुं मया शक्य स्वपुरे देववल्लभ ॥

— (L. 3927) M1 अपुत्रिणा न लोकोऽस्ति (for [a]) D1 नैवेति श्रुतित परम्; G2 नैव चेति मया श्रुतम् (for [b]).—(L. 3929) G1 वचनं (for राजेन्द्र). G(ed.) वेद्मयह तव मानसम् (for [b]).—(L. 3930) D1 महाप्राज्ञ (for °भाग). — (L. 3931) G(ed.) सर्वकाम- (for दिव्यभोग-).—D1 om the ref before line 3935 and that before line 3937. — (L. 3940) G1 सर्वसंपत्प्रदा यथा, G(ed) °सपत्करी तव (for [b]) — (L 3943) G(ed.) सप्रहृष्टो महाराजः (for [a]). — (L 3944) G(ed) रथस्थ. स्वपुरीं प्राप (for [a]) — (L 3946) M1 जयन्तीय (for श्रीजयन्ती-) D1 जयन्तीव्रतमिद भूपो; G1 जयन्तीव्रतमेतच्च; G(ed.) स जयन्तीवदमिद (for [a]). —(L 3958) G(ed) लेभे पुत्रं तथेन्द्राणी (for [a]) —(L 3961) M1 गान्धारी चैव सुव्रता (for [b]) — M1 om line 3963 — (L 3963) G(ed.) श्रीजयन्तीव्रत तात (for [a]) G2 पापिनां पापनाशनम् (for [b]) — G2 G(ed) om. lines 3967–3968 — (L. 3970) G1 विष्णुसायुज्यमाप्नुयात् (for [b]).

Colophon — *Sub-parvan* · D1 आश्चर्यपर्वणि शेषधर्म-; G1 M1 G(ed) शेषधर्मा — *Adhy. name:* D1 G1 M1 G(ed) जयन्तीमाहात्म्यम्. — *Adhy. no* · D1 G1 1 M1 30; G(ed) 31.

वैशंपायन उवाच ।
देवदेवारविन्दाक्ष मायातीत महामते ।
त्वत्पादकमलं वन्द्यं नमामि सततं विभो ॥
इति निश्चित्य मनसा धर्मराजः पितामहम् ।
विनयावनतो भूत्वा प्राञ्जलिर्वाक्यमब्रवीत् ॥
युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ सर्वशास्त्रविशारद । [3975]
मोक्षोपायं सतां सङ्ग यन्मे तद्ब्रूहि पापहम् ॥
भीष्म उवाच ।
पापिनो मनुजस्येह सत्सङ्गान्मुक्तिरिष्यते ।
परया हरिभक्त्या च शाश्वती भवति प्रभो ॥
शृणु पार्थ महाभाग माहात्म्यं शार्ङ्गधन्विन· ।
तस्य संनिधिमात्रेण नराणां मुक्तिरव्यया ॥ [3980]
नारायणः पर ज्योतिर्ज्योतिषां ज्योतिरुत्तमम् ।
ये प्रपन्ना महात्मानस्तेषां मुक्तिर्हि शाश्वती ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
सर्वपापहरं पुण्यमायुर्वर्धनमुत्तमम् ॥
आसीत्पुरा महाराज क्षत्रियो लोककण्टक । [3985]
नक्षत्रवर्मा बलवान्मूर्खो वै लोकपीडकः ॥
परदारपरद्रव्यग्रहणे सततोद्यत ।
अधर्मनिरतो नित्यं बहुधा जनपीडकः ॥
हतवान्ब्राह्मणान्गाश्च शतशोऽथ सहस्रशः ।
देवस्वहरणे नित्यं परस्वहरणे तथा । [3990]
उद्युक्त सर्वदा राजंश्चोरव्याधैश्च सेवितः ॥
तेन पापान्यनेकानि कृतानि सुबहूनि च ।
न तेषां शक्यते वक्तुं संख्या वत्सरकोटिभिः ॥
स कदाचिन्महाभाग सर्वेषामन्तकोपम· ।
विदेहनगरं राजन्सर्वसंपत्समायुतम् ॥ [3995]
योषिद्भिर्भूषिताभिश्च पुरुषै· पद्मसायुधै· ।
सर्वमङ्गलसंयुक्तैर्विविधैश्च पदातिभिः ॥
अलंकृतं विपणिभिस्तोरणैः सर्वतोमुखैः ।
ययौ पुरं बहुविधैः पूरितं धनराशिभि ॥
तस्योपकण्ठे देवस्य मन्दिरं मणिपूरितम् । [4000]
हाटकैर्निर्मितै· कुम्भैः शलाकैः काञ्चनैश्चितम् ।
तप्तकाञ्चनसाहस्रैर्निर्मितैस्तोरणैर्युतम् ॥
एवंभूतं देवगृहं नानागोपुरशोभितम् ।
नक्षत्रवर्मा बलवान्दृष्ट्वा तत्र मुदं ययौ ॥
हराम्यत्र सुवर्णानि बहूनीति विनिश्चितः । [4005]
जगाम विष्णुभवन नक्षत्रश्चौर्यलोलुप· ॥
तत्रापश्यद्द्विजवरं शान्त तत्त्वार्थकोविदम् ।
परिचर्यापर विष्णोरुदङ्कं तपसां निधिम् ।
एकाकिनं दयालुं च नि स्पृहं ध्यानलोलुपम् ॥
दृष्ट्वा नक्षत्रवर्मासौ स्वचौर्यस्यान्तरायिनम् । [4010]
देवताद्रव्यजालं तु समादातुमना निशि ।
उदङ्कं हन्तुमारेभे विवृतासिर्मदोद्धत ॥
पादेनाक्रम्य तद्वक्षो जटां संगृह्य पाणिना ।
हन्तुं कृतमतिं क्रूरमुदङ्क· प्रेक्ष्य चाब्रवीत् ॥
भो भो साधो वृथा मा त्वं हनिष्यसि निरागसम् । [4015]
मया किमपराद्धं ते कृतं तद्ब्रूहि सुव्रत ॥
कृतापराधिनं लोके शिक्षां कुर्वन्ति यत्नत ।
न हिंसन्ति वृथा सौम्य सज्जना अपि पापिनम् ॥
विरोधिष्वपि मूर्खेषु दृष्ट्वा वै चोत्तमान्गुणान् ।
विरोध नाधिगच्छन्ति सज्जनाः शान्तचेतसः ॥ [4020]
बहुधा बाध्यमानोऽपि यो नर क्षमयान्वितः ।
तमुत्तमं नरं प्राहुर्विष्णोः प्रियकरः स्मृत· ॥
अहो विधिर्वै बलवान्बाधते विविधं जनान् ।
सर्वसङ्गविहीनोऽपि बाध्यते हि दुरात्मना ॥
अहो निष्कारणं लोके बाध्यन्ते पापिनो जनान् । [4025]
तत्रापि साधून्बाधन्ते न समानान्कथंचन ॥
अहो माया बलवती मोहयत्यखिलं जगत् ।
पुत्रमित्रकलत्रार्थं सर्वदु·खे नियोक्ष्यते ॥
परद्रव्यापहरणे कलत्रं पोषितं त्वया ।
अन्ते तत्सर्वमुत्सृज्य एक एव प्रयाति हि ॥ [4030]
मम माता मम पिता मम भार्या ममात्मजः ।
ममेदमिति जन्तूनां ममता बाधते वृथा ॥
यावदर्जयसि द्रव्यं तावदेव हि बान्धवाः ।
धर्माधर्मौ सहैवास्तां धनादीनां समार्जने ॥
यद्भावि तद्भवत्येव यन्न भावि न तद्भवेत् । [4035]

(L. 3971) G1 प्रपन्नार्तिहर प्रभो (for [b]) — D1 om the ref. — (L 3976) G(ed) शुभं मे ब्रूहि पावनम् (for [b]). — G2 om. the ref — (L 3977) G2 पापिनो मनुजाः सर्वे (for [a]) — (L. 3980) D1 स्मरण- (for सांनिधि-) — (L. 3981) D1 ब्रह्म (for ज्योति·). — (L 3984) G1 M1 आयुर्वर्धनकारणम् (for [b]). — (L. 3987) G(ed) -हरणे सततोद्यत (for [b]). — (L 3998) D1 G1 M1 G(ed) तोमरैः (for तोरणै ). — (L. 4002) G(ed) -चित्रैश्च (for -साहस्रैर्). G2 M1 वृतम् (for युतम्) — (L 4004) G(ed)) सु- (for वि ). G1 बहून्यत्र सुनिश्चित (for [b]). — (L 4006) M1 क्षत्रियश् (for नक्षत्रश्) — (L. 4009) G2 नि :स्पृहं धनलोलुप· (for [b]). — (L 4011) D1 समादातुमगान्निशि (for [b]). — (L 4014) M1 G(ed.) शूरम (for क्रूरम्). — (L. 4016) M1 कृतापराध लोके हि (for [b]) — (L. 4020) G2 साधु- (for शान्त·). — (L 4022) D1 M1 विष्णो प्रियकर नरा (for [b]) — (L. 4023) D1 G2 विदितान् (for विविध ) G1 जनम् (for जनान्). M1 बाधते विदितात्मना (for [b]). — (L 4025) G(ed) नरान् (for जनान्). G1 बाध्यन्ते विविधा जनाः (for [b]). — (L 4028) G1, 2 सर्वदु·खं (for °दु खे). D1 सर्वदुःखेन बाध्यते (for [b]) — (L 4029) M1 G(ed) कलत्र पोपयत्यपि (for [b]). — (L. 4031) D1 नृपात्मज (for ममात्मज·). — (L. 4034) D1 समं जनैः (for

इति निश्चितबुद्धीनां न चिन्ता बाधते क्वचित् ॥
अहो दुःखं मनुष्याणां ममताकुलचेतसाम् ।
महापापानि कृत्वापि परांस्तुष्यन्ति यत्नतः ॥
अर्जितं तु धनं सर्वं भुञ्जते बान्धवाः सदा ।
स्वयमेकस्तमोमूढस्तत्पापफलमश्नुते ॥ [4040]
इति ब्रुवाणं तमृषिं विमुच्य भयविह्वलः ।
नक्षत्रः प्राञ्जलिः प्राह क्षमस्वेति पुनः पुनः ॥
सतां सङ्गप्रभावेन हरिसंनिधिमात्रतः ।
गतपापो ववन्देऽथ ह्यनुतापीदमब्रवीत् ॥
मया मूढेन पापानि कृतानि सुबहूनि च । [4045]
तानि सर्वाणि नष्टानि विप्रेन्द्र तव दर्शनात् ॥
अहोऽहं पापधीर्नित्यं महापापं समाचरन् ।
कथं मे निष्कृतिर्भूयात्कं यामि शरणं प्रभो ॥
पूर्वजन्मार्जितैः पापैर्लुब्धकत्वमवाप्तवान् ।
क्षत्रियोऽपि च पापानि कृत्वा कां गतिमाप्नुयात् ॥ [4050]

अहो ममायुः क्षयमेति सर्वं
पापान्यनेकानि समार्जितानि ।
प्रतिक्रिया नापि कृता मयैषां
गतिश्च का स्यान्मम जन्म किं वा ॥
अहो विधिः पापशताकुलं मां [4055]
किं सृष्टवान्भारतरं च मह्याः ।
कृतं च पापं च मया च भोज्य
कियत्सु जन्मस्वहमुग्रजन्मा ॥

भीष्म उवाच ।

एवं विनिन्द्य चात्मानं नक्षत्रो ह्यात्मना तदा ।
अन्तस्तापाग्निना दग्धः सद्यः पञ्चत्वमागतः ॥ [4060]
उदङ्कः पतितं प्रेक्ष्य नक्षत्रं तु दयापरः ।
हरिपादोदकेनैव ह्यभ्यषिञ्चन्महामतिः ॥
हरिपादोदकस्पर्शान्नक्षत्रो गतकल्मषः ।
दिव्यं विमानमारुह्य मुनिमेनमथाब्रवीत् ॥
उदङ्क मुनिशार्दूल गुरुस्त्वं मम सुव्रत । [4065]
विमुक्तस्त्वत्प्रसादेन महापातककञ्चुकात् ॥
ज्ञानं त्वदुपदेशान्मे संजातं मुनिपुंगव ।
तेन मे पापजालानि विनष्टान्यतिवेगतः ॥
हरिपादोदकं यस्मान्मयि त्वं सिक्तवान्मुने ।
प्रापितोऽस्मि त्वया तस्मात्तद्विष्णोः परमं पदम् ॥ [4070]
त्वयाहं कृतकृत्योऽस्मि प्राप्तवानुत्तमं पदम् ।
तस्मान्नतोऽस्मि ते विद्वन्यत्कृतं तत्क्षमस्व मे ॥
इत्युक्त्वा देवकुसुमैर्मुनिमेनमवाकिरत् ।
प्रदक्षिणत्रयं कृत्वा नमस्कारं चकार ह ॥
ततो विमानमारुह्य सर्वकामसमन्वितम् । [4075]
अप्सरोगणसंकीर्णं प्रपेदे हरिमन्दिरम् ॥
एतद्दृष्ट्वा विस्मयानो ह्युदङ्कस्तपसां निधिः ।
शिरस्यञ्जलिमाधाय अस्तौषीत्कमलापतिम् ॥
लोकनाथ नमस्तेऽस्तु सर्वभूतदयापर ।
पाहि मां पुण्डरीकाक्ष संसारभृशपीडितम् ॥ [4080]
त्वयाहं तारितो देव सर्वजन्मकृतैरघैः ।
त्वत्संनिधिं प्रविष्टस्य क्षत्रबन्धोर्दुरात्मनः ।
पश्यतो मे महाभाग मुक्तिमद्य प्रदत्तवान् ।
त्वत्पादकमलादन्या गतिर्मेऽत्र न विद्यते ॥
पाहि पाहि जगन्नाथ प्रणतार्तिप्रणाशन । [4085]
त्वमेव जगतां नाथ गतिर्मे भक्तवत्सल ॥

भीष्म उवाच ।

एवं वै कृतकृत्येन मुनिना प्रार्थितो हरिः ।
दर्शयित्वा स्वकं रूपं तमादाय स्वकं पदम् ।
गत्वा तं स्थापयामास मुनिं सारूप्यतां गतम् ॥
तस्मात्त्वमपि राजेन्द्र सत्सङ्गं कुरु सर्वदा । [4090]
सत्सङ्गान्मुक्तिमाप्नोति सत्यं नारदभाषितम् ॥
त्वया सर्वेषु कालेषु सन्तः पूज्या युधिष्ठिर ।
तुष्टास्ते तु प्रदास्यन्ति भुक्तिं मुक्तिं च शाश्वतीम् ॥
य इदं पुण्यमाख्यानं नारदेन प्रभाषितम् ।
शृणोति सततं भक्त्या ब्रह्मलोकं स गच्छति ॥ [4095]
विषयेषु विरक्तिः स्याद्विष्णुभक्तिर्दृढा भवेत् ।
केशवस्य पदं गत्वा सर्वान्वंशान्समुद्धरेत् ॥

Colophon

समार्जने ). — After line 4041 D1 ins.:
171** जीवसद्भावमात्रेण कर्मभोगक्षयेण च ।
While G2 ins. after line 4042 :
172** यानि सर्वाणि तिष्ठन्ति तानि विप्रेन्द्रशासनात् ।
— ( L 4045 ) G2 G(ed) पापेन ( for पापानि ). — ( L 4047 ) D1 पापयोनित्वान् ( for °धीर्नित्यं ) D1 अकारिषम्, M1 समाचरम् ( for °रन् ) G1 मम पाप चिरं कृतम् ( for $^b$ ) — ( L. 4054 ) G1 गतिश्च काम मम जन्म उग्रम् — ( 4055 ) D1 -गतिकुलं ( for -शताकुल ). — ( L. 4056 ) M1 त्वमव्यय ( for च मह्या: ) G2 किं सृष्टवान्भारतभूमिभागे — ( L 4058 ) G1. 2 अयमुग्रजन्मना ( G2 °न्मन् ) ( for अहमुग्रजन्मा ) — Before line 4065, D1 ins. नक्षत्र:. G2 om. lines 4069$^b$–4070$^a$; M1 om. lines 4070–4071 — ( L 4070 ) तस्माद्विष्णोः परं पदम् ( for $^b$ ). — ( L 4072 ) G1 M1 यत्कृत्य तद्वदस्व मे ( for $^a$ ) — ( L 4078 ) D1 तुष्टाव ( for अस्तौषीत् ). — Before line 4079, G2 ins उदङ्क — After lines 4088, G2 ins :
173** जगाम भगवान्विष्णुर्भक्तानामिष्टदायक ।
— G2 om. lines 4089–4094, M1 om. (hapl) lines 4093–4095 — ( L 4096 ) M1 G(ed) विरक्तस्य ( for °क्तिः स्याद् ) — ( L 4097 ) G2 सर्वं पश्यन्, G(ed.) सर्वान्वंश्यान् ( for °शान् )

COLOPHON. — *Sub parvan:* D1 G1 आश्चर्यपर्वणि शेषधर्मा., G2 M1 G(ed) शेषधर्मा — *Adhy name* D1 सत्सङ्गमाहिमा; M1 G(ed.) सत्सङ्गप्रशंसा. — *Adhy. no.:* D1 G1, 2 M1

वैशंपायन उवाच ।

श्रुत्वैतत्पुण्यमाख्यानं प्रसन्नवदनो नृप ।
कृष्णं भक्तप्रियं नत्वा पाहि पाहीति चाब्रवीत् ॥

युधिष्ठिर उवाच ।

शङ्खतीर्थमिति ख्यातं कावेर्या दक्षिणे तटे । [4100]
कृष्णेन सूचितं देव तस्योत्पत्तिं वदस्व मे ॥
कावेर्याः पुण्यनद्यास्तु स्थानं यत्पुण्यवर्धनम् ।
यस्मिन्देशे ऋषिगणा देवताः सततं स्थिता ॥
पुण्याश्रमसमायुक्तमुभयोस्तीरयोरपि ।
प्रख्यातं पापहं स्थानं तात मे संप्रकीर्तय ॥ [4105]
ब्रह्मक्षत्रियवैश्यानां शूद्राणां चैव योषिताम् ।
मुक्तिप्रदेति विख्याता कावेरीं तां प्रकीर्तय ॥

भीष्म उवाच ।

ब्रह्मणा हि पुरा गीतं नारदाय महात्मने ।
तेनेदं मम धर्मात्मन्कारुण्याद्गदितं खलु ॥
भूप्रदक्षिणकाले तु मया वै सेविता पुरा । [4110]
सर्वपापहरा देवी कावेरी कलिनाशिनी ॥
त्वदर्थं सप्रवक्ष्यामि ह्यनुभूतं मया श्रुतम् ।
तृप्त्यर्थं तव वक्ष्यामि शृणु नान्यमनाः प्रभो ॥
कावेर्या दक्षिणे पार्श्वे श्रीनिवासस्य पृष्ठतः ।
शङ्खतीर्थमिति ख्यातं तीर्थानामुत्तमं परम् ॥ [4115]
पुरा सुधांशुर्धर्मात्मा चचार तप उत्तमम् ।
मधुकैटभहन्तुर्वै प्रसादात्कान्तिमाप्तवान् ॥

युधिष्ठिर उवाच ।

किमर्थं तप्यते तेन ताराणामधिपेन वै ।
तस्मै वरं कथं दत्तं विष्णुना सर्वजिष्णुना ॥
देवव्रत महाभाग कथ्यतां मे कुतूहलम् । [4120]
अस्ति चेन्मयि कारुण्यं तव देवव्रत प्रभो ॥

भीष्म उवाच ।

पुरा बृहस्पतेर्भार्यां शीतांशुः सौम्यरूपवान् ।
अपहृत्य चिरं कालं तया सार्धं मुमोद ह ॥
विज्ञाय चरितं त्वेतद्भार्यायाः शशिनः प्रभो ।
मा मेति प्रार्थयित्वा तं पश्चाच्चैनं शशाप ह ॥ [4125]
क्षयी भव दुराचारः सर्वलोकेषु निन्दित ।
इति शप्त्वा क्षमस्वेति देवैः स प्रार्थितो विभुः ।
सुरलोकं विसृज्यैव प्रपेदे ब्रह्मणः सभाम् ॥
तदाप्रभृति धर्मात्मा विसृज्य च वराननाम् ।
अस्मिन्क्षेत्रे तपश्चक्रे बृहस्पतिभयार्दितः ॥ [4130]
वर्षाणामयुतं राजंश्चचार तप उत्तमम् ।
शापाच्च तपसा चैव कृशाङ्गो भाति चन्द्रमाः ।
अवशिष्टकलामात्रो देवानामग्रभुक्तदा ॥
वागीशं तुष्टुवुर्देवाः क्षम्यतां क्षम्यतां प्रभो ।
वृद्धिं ददस्व भूयस्त्वमस्माक हितकाम्यया ॥ [4135]

भीष्म उवाच ।

तथाकरोद्देवगुरुर्देवानां हितकाम्यया ।
तपसा कृपया चैव भूयो वृद्धिमवाप्तवान् ॥
तस्मिन्काले जगन्नाथमस्तौषीत्कमलापतिम् ।
स्रष्टारं सर्वलोकानां योगिध्येयमरिंदमम् ॥

चन्द्रमा उवाच ॥

नमस्ते लोकनाथाय नमस्ते धर्मरूपिणे । [4140]
नमस्ते कमलाकान्त प्रणतार्तिप्रणाशन ॥
आद्यन्तशून्यं देवेशं सृष्टिस्थित्यन्तकारिणम् ।
वेदमूर्तिं सहस्राक्षं नौमि सर्वात्मकं हरिम् ।
जगद्रूपमुदाराङ्गं पीताम्बरधरं हरिम् ।
कौस्तुभेन विराजन्तं सर्वगं तं नमाम्यहम् ॥ [4145]
पापघ्नं सर्वभक्तानां दिव्यमालाविभूषितम् ।
नीलजीमूतसंकाशं तं नतोऽस्मि रमापतिम् ॥
आकाशमध्यगं देवमनन्तमपराजितम् ।
वासुदेवं प्रपन्नोऽस्मि सर्वपापक्षयोऽस्तु मे ।
नमस्कारप्रभावेन नश्यत्वद्यामयः प्रभो ॥ [4150]
स्तूयमानं सदा देवैर्वेदैश्च ब्रह्मवादिभिः ।
नतोऽस्मि तं हरिं सूक्ष्मं नाशं यातु च मे जरा ॥
अन्तर्यामिञ्जगत्साक्षिन्भक्तवत्सल सर्वग ।
मत्कल्मषाणि सर्वाणि यान्तु नाशं नतोऽस्मि ते ॥
इति स्तुतो जगन्नाथः सर्वसिद्धनिषेवितः । [4155]
आययौ गरुडारूढो यत्रास्ते रोहिणीपतिः ॥
ध्यायन्तं सर्वगं देवं हृदि शङ्खादिभूषितम् ।
दृष्ट्वा सर्वगतो विष्णुर्विधुमाह सविस्मयः ॥
वरं वरय भद्रं ते निशाकर सुधाकर ।
स्तोत्रेण तपसा चैव तुष्टोऽहं नितरां प्रभो ॥ [4160]

---

31 ; G(ed.) 32.

(L. 4099) D1 G1 कृष्णभक्ति- (for कृष्ण भक्त-). —(L. 4101) G(ed.) वदाथ (for वदस्व) —(L 4106) G2 ब्राह्मणक्षत्रियविशां (for °) —For lines 4106–4109, D1 subst. ·

174** भीष्म । 
तातहं सप्रवक्ष्यामि शृणु नान्यमना प्रभो ।

—(L. 4110) D1 कावेर्या दक्षिणे कूले (for °) —(L. 4122) G(ed.) काम्य- (for सौम्य-). —(L. 4127) D1 शप्तः (for शप्त्वा). —(L 4131) D1 वायुभक्षः सदा श्रीमांश्च (for °). — D1 om lines 4135–4137 —(L. 4139) D1 अरिंदम ; G1 अनुत्तमम् (for अरिंदमम्) — G1 M1 शशी (for चन्द्रमा). D1 om. line 4140. —(L. 4141) M1 नमस्ते लोकमूर्तये (for °) —(L. 4143) M1 सर्वार्थगं (for °त्मकं). —(L. 4149) D1 -क्षयं कुरु; G1 -क्षयान्मम ; G2 -क्षयो मम (for -क्षयोऽस्तु मे) —(L 4151) G(ed.) मुनिभिर् (for वेदैश्च) —(L. 4153) D1 G1, 2 अन्तर्यामी जगत्साक्षी (for °). D1 G1 M1 सर्वगो (D1 °शो) भक्तवत्सलः). G2 श्रीपते पुरुषो-

इत्युक्तो देवदेवेन सुधांशुस्तं प्रणम्य च ।
ययाचे श्रीपतिं देव वराणामुत्तमं वरम् ॥
पाहि पाहि जगन्नाथ कान्तिं मे वर्धयस्व ह ।
सौभाग्यमण्डलं देहि गुरोः शाप निवारय ॥
इत्युक्तो वै जगन्नाथ शङ्खपूतेन वारिणा । [4165]
अभिषिच्य वर तस्मै ददौ सर्वगत प्रभु ॥
तमाह शर्वरीनाथं नमन्तं सौम्यवर्चसम् ।
परिपूर्णाः कला सर्वा ह्रासवृद्ध्या भवन्तु ते ॥
शृणु सौम्य महाभाग त्वया यत्सेवितं स्थलम् ।
शङ्खतीर्थमिति ख्यातिं गमिष्यति न सशय ॥ [4170]
त्वया च यत्कृतं स्तोत्रं पठतां शृण्वतामपि ।
सर्वपापानि नश्यन्तु रोगाणि बलवन्ति च ॥
अस्मिन्वै मज्जनात्तीर्थे सर्वसंपद्भविष्यति ।
अस्नायिनां मनुष्याणां दारिद्र्य भवति ध्रुवम् ॥
एवमुक्त्वा जगन्नाथ शीतांशुं धर्मनन्दन । [4175]
अदूरे तस्य पुरत श्रीनिवासस्थलं गत ॥
स्थित्वा तत्र मुहूर्तं तु पूजितो देवतागणै ।
स्वधाम प्रययौ श्रीमान्नारदाद्यैरभिष्टुत ॥
निशाकरोऽपि धर्मात्मा मुनिभिः परिपूजित ।
तस्मादेशाद्ययौ स्वर्गं प्रपेदे च स्वकं पदम् ॥ [4180]
सर्वे ऋषिगणा विद्वन्स्तत्र चक्रुरकल्मषाः ।
यज्ञैर्यज्ञपतिं केचिज्ज्ञानयोगविचक्षणाः ।
आराध्य त चिर कालं तत्पदं ते प्रपेदिरे ॥
पौलस्त्यनिधनं कृत्वा रामचन्द्र प्रतापवान् ।
अत्र स्नात्वा कपिगणै पुनीत स्वपुरं ययौ ॥ [4185]
पुरा हि भार्गवो रामो राजवंश्यान्निहत्य च ।
स्नात्वात्रैव चिरं कालं प्रपेदे परमं पदम् ॥
सुत्रामा देवराजश्च अहल्यां काममोहित ।
गत्वा तु तत्फलं प्राप्य स्त्रीचिह्नं गौतमात्खलु ॥
तद्दोषपरिहारार्थं स्नात्वा चाब्दत्रयं प्रभो । [4190]
अत्रैव प्राप्तवान्रूपं सर्वतेजोमयं शुभम् ॥
श्रीनिवासमिदं क्षेत्रं शङ्खतीर्थात्पुरः स्थितम् ।
स्नातानां सर्वपापघ्नं भुक्तिमुक्तिफलप्रदम् ॥
कावेरीमज्जनं पुण्यं दुर्लभ ह्यकृतात्मनाम् ।
पुरा संचितपुण्यानामप्रयत्नेन लभ्यते ॥ [4195]
पुरा लोकहितार्थाय ब्रह्मणा निर्मिता त्वियम् ।
तस्मात्स्थातव्यमत्रैव नित्यशः पापभीरुभिः ॥
करोमि मज्जनं देव्यां कावेर्यां यो वदेत्सुधी ।
वदते तस्य पापौघो नाशकालो ममेति च ॥
आकल्पजन्मभिः पापं संचित यन्नरै प्रभो । [4200]
तत्सर्वं भस्मसान्माघे कावेरीमज्जनाद्भवेत् ॥
तेजोमयेषु लोकेषु भुक्त्वा भोगाननेकशः ।
पश्चान्मोक्षमवाप्नोति कावेर्यां स्नाति यो नर ॥
कावेरी तु महापुण्या स्मृता पापप्रणाशिनी ।
संसेव्या सर्वदा विप्रै संसारच्छेदलिप्सुभिः ॥ [4205]
पापक्षयकरं स्नानं सृष्टिकर्ता पितामहः ।
इय लोकहितार्थाय निर्ममे निपुण क्षितौ ॥
दक्षिणस्यां दिशि विभु कावेरीं कलिनाशिनीम् ।
गङ्गामुत्तरदिग्भागे नश्यन्ती पापिनामघम् ।
सृष्ट्वा मुदं ययौ श्रीमांस्तस्यां स्नात्वा तु नो भयम् ॥
विष्णुपादोद्भवा देवी कावेरी पापनाशिनी ।
मज्जतां सर्वपापानि छिनत्त्येव न संशय ॥
चन्द्रसूर्यग्रहे चैव संक्रान्तावयने तथा ।
सिद्धयोगे पुण्यदिने चन्द्रादित्यमरुद्गणा ॥
गन्धर्वा लोकपालाश्च यक्षविद्याधरा नृप । [4215]
ब्राह्मी माहेश्वरी लक्ष्मी शची मेनादितिर्दितिः ॥
घृताची मेनका रम्भा ह्युर्वशी च तिलोत्तमा ।
अन्याश्चाप्सरसां संघाः कावेर्यां स्नानतत्पराः ।
माघे चैतासु तिथिषु स्नात्वा यान्ति सुरालयम् ॥
भस्मानि यत्र दृश्यन्ते कावेर्यां पार्श्वयोरपि । [4220]
सुराणां तु मखस्थान विद्धि तत्रैव भारत ॥
तपः कुर्वन्ति मुनयो ह्यद्यापि मनुजेश्वर ।
शान्ता जितारिषड्वर्गा ह्यदृष्टा पापकर्मभिः ॥
स्नातव्यं यत्नतो राजन्कावेर्यां धर्ममिच्छता ।
स्नातानां तु शुभो लोको भविष्यति न सशयः ॥ [4225]
तस्मात्त्वमपि राजेन्द्र कावेरीस्नानमाचर ।
वाञ्छितार्थप्रदा देवी कावेरी पापनाशिनी ॥

वैशंपायन उवाच ।

या इदं पुण्यमाख्यानं नारदेन प्रभाषितम् ।
श्रुत्वा पापविनिर्मुक्तो ब्रह्मलोकं स गच्छति ॥

Colophon.

---

सम (for $^{b}$) —(L. 4159) D1 महामते (for सुधाकर). —(L. 4163) D1 कान्तिं मे वर्धय प्रभो (for $^{b}$) — D1 om. lines 4173–4174. —(L 4174) M1 मज्जता (for °नात्). —(L. 4479) M1 मुनिभिः पूजितस्तदा (for $^{b}$).—(L 4185) D1 G1 M1 मुनि-; G(ed.) त्वृषि- (for कपि-) —(L 4186) G(ed) निगृह्य (for निहत्य). —(L. 4188) M1 अहल्याकामलोलुपः (for $^{b}$) — G1 2 om lines 4192–4194 —(L. 4192) D1 दैवतैरपि पूजितम् (for $^{b}$) —(L 4195) G2 प्रयत्नेन हि लभ्यते (for $^{b}$). —(L 4197) G1 स्नातव्यम् (for स्था°). D1 तस्मात्संस्नाप्य मन्त्रेण (for $^{a}$). —(L. 4198) G(ed.) कावेर्यां रङ्गसंनिधौ (for $^{b}$) —(L. 4199) G1, 2 M1 G(ed.) वेपन्ते तस्य पापानि (for $^{a}$). —(L 4201) D1 M1 -स्नानतो; G2 -संगतो (for -मज्जनाद्) —(L. 4208) G1 G(ed) भुव (for विभु) —(L. 4216) G(ed.) धृतिर् (for दितिर्). G1 धृति (for दिति). G2 चण्डी मेना दितिः शुभा (for $^{b}$). — After line 4219, D1 ins : 175** स्नातव्यं सतत राजन्कावेर्यां धर्ममिच्छता । —(L 4223) D1 ते प्रशान्तारिषड्वर्गा (for $^{a}$). — D1 om. line 4224. — (L 4224) G2 सुखम् (for धर्मम्). —(L. 4229) G(ed.) शृणोति पापनिर्मुक्तो (for $^{a}$).

गमिष्ये त्वत्प्रसादेन हरिं जेतुं पितामहे ।
इत्युक्त्वा प्रययौ पार्थ क्षीरोद बलदर्पित: ॥
तत्र सर्वगतं विष्णुमदृष्ट्वा विस्मयं गत. ।
किं करोमि क यास्यामि क च पश्यामि संप्रति ॥
कर्मणा फलदो विष्णुर्भूलोके स्थितिमेष्यति । [ 4300 ]
इति निश्चित्य मनसा भूलोकं प्राप्तवान्प्रभु ॥
तस्य बुद्धिरियं जाता मदान्धस्यातिदुर्मते: ।
विवेकं नैव पश्यन्ति बलिन. कामुकाः खलु ॥
अहो हरि सर्वगतो भूमौ संप्रति संस्थित ।
पातालं नेतुमिच्छामि सप्तद्वीपां वसुंधराम् ॥ [ 4305 ]
इति निश्चित्य मनसा सागर समुपाविशत् ।
कण्ठमात्रमभूत्तोय तस्य दैत्यस्य धर्मज ॥
प्रसार्य हस्तं पाताळे वाम दक्षिणमुत्तरे ।
चालयामास पृथिवीं कल्पान्ते दिग्गजा इव ॥
वसुधा लोकमातेयं कम्पमाना पुन. पुनः । [ 4310 ]
अस्तौषीज्जगतामीश सर्वगं भक्तवत्सलम् ॥

वसुधोवाच ।

श्रीनिवास नमस्तेऽस्तु नमो विश्वकुटुम्बिने ।
नमो विश्वपते तुभ्यं नमस्ते जलशायिने ॥
नम क्षीराब्धिवासाय नमस्ते सूक्ष्मरूपिणे ।
नमो देवाधिदेवाय नमो विद्युत्प्रभाय च ॥ [ 4315 ]
नमस्ते वसुधानाथ नमस्ते भक्तवत्सल ।
शङ्खचक्रगदापाणे नमो नन्दकधारिणे ॥
पाहि मां भयसंत्रस्तां पद्मनाभाय ते नमः ।
नमश्चैतन्यरूपाय पृथ्वीधर नमोऽस्तु ते ॥
मत्स्यवामनरूपाय कूर्मरूपाय ते नमः । [ 4320 ]
नारसिंहाय रामाय नमो दामोदराय च ॥
कृष्णाय यादवेन्द्राय वासुदेवाय चक्रिणे ।
नमस्ते पुण्डरीकाक्ष पाहि लोकपते प्रभो ॥
इति स्तुतो जगन्नाथो धरण्या पाण्डुनन्दन ।
सांनिध्यमगमद्विष्णुरन्तर्यामी जगन्मय ॥ [ 4325 ]
मा भैषीत्युक्तमात्रे तु विद्युन्मण्डलवत्प्रभुः ।
चक्रमादाय चिच्छेद कैटभस्य शिरस्तदा ॥
धरामाश्वास्य विश्वात्मा तया सार्धमरिंदम ।
इद क्षेत्रं समागत्य सोऽतिष्ठत्प्रभुरव्यय ॥
अत्र स्थित हरिं ज्ञात्वा सर्वलोकधरः प्रभु । [ 4330 ]
अनन्त प्रेषयामास स्वसुतं शङ्खपालकम् ॥

अनन्त उवाच ।

शृणु पुत्रक मद्वाक्यं श्रीनिवासो जगन्मय ।
कावेर्यां दक्षिणे पार्श्वे कावेर्या च तरंगिते ॥
ऋषेरौद्दालकस्यैव ह्याश्रमे मुनिसेविते ।
सिद्धविद्याधरगणै सेविते पुण्यपादपै । [ 4335 ]
श्वेततिन्त्रिणिबिल्वैश्च श्वेतजम्बूकपित्थकै ॥
एवं भूते जगन्नाथ श्रीनिवासो जगन्मयः ।
श्रिया च वसुमत्या च सेव्यमानस्तु तिष्ठति ॥
तमेव सेवमानस्तु वर्तयस्व तदन्तिके ।
अदृष्ट. सर्वमनुजैः परां सिद्धिं गमिष्यसि ॥ [ 4340 ]
एवं प्रबोधितस्तेन ह्यनन्तेन महात्मना ।
शङ्खपालो नमस्कृत्य वचनं चेदमब्रवीत् ॥
भगवन्सर्वनागेन्द्र सर्वशास्त्रविशारद ।
किमर्थं तप्यते तेन ऋषिणा करुणात्मना ॥
तदहं श्रोतुमिच्छामि विस्तरेण महामते । [ 4345 ]
यदर्थं सर्वनागेन्द्र कृपा मयि तवास्ति चेत् ॥
इत्युक्त शङ्खपालेन शेषो लोकधर प्रभु ।
औद्दालकस्य चरितमब्रवीत्कामदं शुभम् ॥

Colophon

अनन्त उवाच ।

ऋषिरौद्दालको नाम वेदवेदाङ्गपारगः ।
शान्तो जितेन्द्रियो मौनी सदा ध्यानपरायण ॥ [ 4350 ]
अत्रैव सुचिरं कालं तपश्चक्रे महामतिः ।
चत्वारिंशद्युगं तात ह्यहोरात्रमिवाकरोत् ॥
तेनैव तपसा तुष्टो ब्रह्मा लोकपितामह ।
यत्र तिष्ठति धर्मात्मा ऋषिरौद्दालको मुनि ।
तं देशमधिगम्याशु वचनं चेदमब्रवीत् ॥ [ 4355 ]
औद्दालक महाभाग तुष्टोऽहं तपसा हि ते ।
वरं वरय भद्रं ते वरदोऽहं प्रजापतिः ॥

---

आगम्य ( for °त्य ).—( L 4294 ) $G_1$ जिताश्च लोकास्त्वत्तोऽहं ; $G_2$ $M_1$ जिता स्म लोकास्तातार्हं ( for $^a$ ) —( L 4298 ) $G_2$ दृष्ट्वा विस्मयमागत. , $G_2$ अदृष्ट्वा ध्यानमागत ( for $^b$ ). —( L 4310 ) G(ed ) मुहुर्मुहु ( for पुन पुन ). —( L 4318 ) G(ed ) -वित्रस्तां ( for -सं° ) —( L 4320 ) $G_2$ कूर्मवाराहरूपिणे , $M_1$ °रूप नमोऽस्तु ते ( for $^b$ ) —( L 4321 ) $D_1$ नमो दाशरथे नम. ( for $^b$ ) —( L 4322 ) $D_1$ वासुदेव त्रिविक्रम ( for $^b$ ). —( L 4325 ) $G_2$ अन्तर्धाम जगद्गुरु ( for $^b$ ). —( L 4326 ) G(ed ) मा भैषीरिति तामुक्त्वा ( for $^a$ ).—( L 4328 ) $M_1$ धर्मात्मा ( for विश्वात्मा ) —( L 4333 ) $D_1$ कावेर्या चतुरान्तिके ; $G_2$ पुलिने च मनोरमे ( for $^b$ ) — $G_2$ om line 4334. —( L. 4336 ) $G_2$ G(ed.) श्वेतैश्च ( $G_2$ केतकी ) तिन्त्रिणीबिल्वै ( for $^a$ ) —( L 4339 ) $D_1$ तस्य वै सेवनार्थं तु ; $G_2$ तस्य वै सेव्यमानस्य ( for $^a$ ) — ( L. 4343 ) $M_1$ कृपा मयि तवास्ति चेत् ( for $^b$ ) — ( L 4346 ) $D_1$ तत्सर्वं वद नागेन्द्र ( for $^a$ ). $M_1$ सर्वशास्त्रविशारद ( for $^b$ ). —Before line 4347, $M_1$ ins. भीष्म

COLOPHON — *Sub-parvan* $D_1$ $G_1$ G(ed.) आश्चर्यपर्वणि शेषधर्मा , $G_2$ $M_1$ शेषधर्मा — *Adhy name* G(ed ) कावेरीमाहात्म्यम्. — *Adhy no.* $D_1$ $G_{1\ 2}$ $M_1$ 33, G(ed ) 34.

$D_1$ $G_2$ $M_1$ शेष ( for अनन्त ) — ( L 4352 ). $D_1$ [अ]ग्निहोत्रम् , $G_2$ [अ]होरात्रिम् ( for °त्रम् ). —( L 4354 ) G(ed ) महान् ( for मुनि ). — Before line 4356, $M_1$ ins. ब्रह्मा. —( L 4356 ) $D_1$ $G_{1\ 2}$ तृप्तो ( for तुष्टो ) $D_2$ तव

ब्रह्मणोदीरितं वाक्य श्रुत्वा मुनिवरोऽब्रवीत् ।
भगवन्देवदेवेश कृतार्थोऽस्मि त्वदागमे ।
यथा प्रीणाति मे विष्णुस्तथा कुरु महामते ॥ [4360]
शृणुष्व मद्वचः पुत्र यत्रा लोकेश्वरो हरि ।
हनिष्यत्यसुरं मूर्खं तदा ते दर्शनं भवेत् ॥
स्थित्वात्र कतिचित्कालं श्रीनिवासो जगन्मयः ।
वेदान्तैः सेव्यमान सन्स्वं धाम सम्प्रपत्स्यति ॥
राज्ञां तु दुर्विनीतानां पौलस्त्यस्य दुरात्मनः । [4365]
कृत्वा तु निधनं तेषामत्रैव स्त्रालुमेष्यति ।
रामाख्यो भगवान्विष्णुः सत्यं सत्यं न संशयः ॥
पुरंदरमुखा देवा स्थास्यन्त्यत्रैव नित्यशः ।
श्रीनिवासमिदं क्षेत्रं लोके ख्यातिं गमिष्यति ॥
इत्युक्त्वान्तर्दधे पार्थ देवानां प्रपितामहः । [4370]
तदाप्रभृति धर्मिष्ठ ऋषिरौद्दालको बुध ।
प्रसन्नं देवदेवस्य पश्यन्नास्ते मुखं द्विजः ॥
आविर्बभूव धर्मात्मा देवोऽपि जगतीपति ।
श्रीनिवासस्य सेवार्थं गच्छ पुत्र कुरुष्व ह ॥
शेषेणैवं प्रयुक्तोऽसौ शङ्खपाल प्रतापवान् । [4375]
अमुं क्षेत्रं समागत्य परिचर्यापरो मुनिः ।
विष्णोः सर्वात्मनो राजन्नद्यापि कुरुते सुखी ॥

युधिष्ठिर उवाच ।

पातालात्कुत्र सांनिध्यमगमच्छङ्खपालक ।
देवव्रत महाभाग तं देशं मे वदस्व ह ॥

भीष्म उवाच ।

अगस्त्ये पश्चिमे तीर्थे शङ्खाख्ये तु महाह्रदे । [4380]
आविर्बभूव शेषेण चोदित शङ्खपालक ॥
तदिदं चाभवत्क्षेत्रं क्षेत्राणामुत्तमं परम् ।
तीर्थानां चैव सर्वेषामुत्तमं तत्प्रचक्षते ॥
अगस्त्यो भगवानत्र लिङ्गभूतात्तु शंकरात् ।
तपस्तप्त्वा महातेजा ह्यणिमादिगुणी ह्यभूत् ॥ [4385]

युधिष्ठिर उवाच ।

किमर्थमत्र दृश्यन्ते नैव ते द्रुमजातय ।
एको वसति बिल्वोऽसौ श्वेतः पुण्यतरुः किल ॥

भीष्म उवाच ।

कृते कपित्थस्त्रेतायां तिन्त्रिणी द्वापरे नृप ।
जम्बू कलौ युगे बिल्वो युगानां तु क्रमाद्रुताः ॥
श्रीनिवासपुरं ज्ञेयं कावेर्या दक्षिणे तटे । [4390]
युगत्रयावधिस्तस्य ततो वै लयमेष्यति ॥
देवता श्रीनिवासस्य ऋषिरौद्दालकः स्मृतः ।
स्मर्तृणां मुक्तिदं विद्धि गतानां वसतां किमु ॥
अद्यापि निर्जराः सर्वे परमस्थानकाङ्क्षया ।
वाञ्छन्ति वस्तुमत्रैव ऋषयश्च तपोधनाः । [4395]
मृतानां सर्वपापानि छित्त्वा मुक्तिं ददाति च ॥

युधिष्ठिर उवाच ।

औद्दालको मुनिश्रेष्ठ किं कार्यमकरोत्ततः ।
तस्मै वर कथं दत्तो विष्णुना प्रभविष्णुना ।
तत्सर्वं वद तत्त्वेन देवव्रत महामते ॥

भीष्म उवाच ।

तपः कुर्वति धर्मिष्ठे श्रीनिवासो जगन्मयः । [4400]
सांनिध्यमगमद्राजञ्श्रिया सार्धमरिंदम ॥
स्पृष्टस्तस्य शरीरं तु सर्वलोकेश्वरो हरि ।
ददौ वरं तमाहूय ब्राह्मणं विगतस्पृहम् ॥

श्रीभगवानुवाच ।

तुष्टोऽस्मि तव धर्मज्ञ तपो निवर्त्यतां द्विज ।
द्विवारं ते मम ब्रह्मन्दर्शनं तु भविष्यति ॥ [4405]
मम रामस्य रामस्य ततो मल्लोकमेष्यसि ।
त्वया स्थितमिदं स्थानं धर्मवृद्धिर्भविष्यति ॥
इत्युक्त्वान्तर्दधे देवो देवाना हितकृद्धरि. ।
तस्मात्त्वमपि राजेन्द्र श्रीनिवासं भजस्व ह ॥
स्नातव्यं यत्नतो जप्यं कावेर्यां हरिसंनिधौ । [4410]
श्रीनिवासमिदं क्षेत्र दुर्लभं तु कलौ युगे ।
पुरा संचितपुण्यानामप्रयत्नेन वर्धते ॥
तत्र स्नाताः पापिनोऽपि पितृमातृकुलानि च ।
सहस्राणि समुद्धृत्य विष्णुलोकं व्रजन्ति हि ॥
सर्वपापक्षयकरी सर्वोपद्रवनाशिनी । [4415]
स्मृतार्तिनाशिनी राजन्कावेरी पुण्यदायिनी ॥
दृष्टमात्रा हि कावेरी श्रीनिवासस्य संनिधौ ।
ददाति श्रीयुतं स्थानं नात्र कार्या विचारणा ॥
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
श्रीनिवासं च कावेरीं नित्यं स्मरति यो नरः ॥ [4420]
स्वर्गलोकप्रदा नृणां ब्रह्मलोकप्रदा तु सा ।

---

(for हि ते) —(L 4357). M1 उपागत (for प्रजापतिः) — Before line 4359, M1 ins औद्दालकि and before line 4361, D1 M1 ins ब्रह्मोवाच. —(L. 4361) G1 यथा योगेश्वरो हरि (for ᵇ). —(L 4365) G(ed) महात्मनः (for दुरा°) — D1 om. line 4368. —(L 4372) G(ed) -देवेश (for -देवस्य). D1 G2 G(ed) द्विजोत्तम (for मुख द्विज) —(L 4376) D1 G2 ऽभवत् (for मुनि) —(L 4379) G1 कथयस्व ; G(ed.) मे वदाद्य (for मे वदस्व) — (L 4380) G2 M1 शङ्खाह्वे (for °ख्ये).—(L. 4383) G1 G(ed) तीर्थानामुत्तम चैव (for ᵃ). G1 G(ed.) सर्वेषा (for उत्तमं). —(L. 4385) G2 महाघोर (for °तेजा). G1 M1 -गुणान्वितः ; G(ed.) -गुणान्ययौ (for -गुणी ह्यभूत्).— G2 om lines 4392-4396 —(L 4393) D1 G1 M1 स्थितानां (for स्मर्तृणां). —(L. 4401) G2 श्रीनिवासो महामते (for ᵇ). — G1 om. the ref —(L 4404) D1 तृप्तो (for तुष्टो). —(L 4405) G(ed) द्वापरान्ते (for द्विवार ते) —(L. 4406) G2 ततो लोकं गमिष्यसि, M1 ततो लोकमुपे° (for ᵇ).—(L. 4407) D1 धर्मवृद्ध, G(ed.) पुण्यवृद्धिर् (for धर्म°). —(L. 4408) M1 शुभ-

सूर्यलोकप्रदा देवी चन्द्रलोकप्रदा तथा ।
सूर्याचन्द्रमसोर्लोकं शिवलोकप्रदायिनी ॥
स्नातानां संगमे चास्या. श्रीनिवासस्य चाग्रत. ।
विष्णुलोकप्रदा नृणा साक्षात्कृष्णेन भाषितम् ॥ [ 4425 ]
षण्मासं पुत्रकामस्तु स्नाति तत्र हि यो नर ।
कृपया वासुदेवस्य पुत्रांश्च लभते ध्रुवम् ।
राज्यकामो लभेद्राज्यं धनकामो लभेद्धनम् ॥
अब्दत्रयं व्रत कृत्वा कावेर्या स्नाति यो नर ।
इह लोके सुखं भुक्त्वा वैकुण्ठे सोऽश्नुते सुखम् ॥ [ 4430 ]
एवं प्रबोधितस्तेन कावेर्या स्नानवैभवम् ।
देवव्रतेन धर्मात्मा धर्मपुत्रो महामति. ॥
प्रणम्य वैभव देव्या कावेर्या विविधं स्थलम् ।
श्रोतुकामो महातेजा गाङ्गेय पुनरब्रवीत् ॥

युधिष्ठिर उवाच ।

पितामह नमस्तेऽस्तु पीत्वा तव वचोऽमृतम् । [ 4435 ]
तृप्तिरद्य न मे जाता कावेर्यास्तीर्थसंश्रवे ॥
संगमे कपिलायास्तु कावेर्याश्च महामते ।
यत्फल तु भवेन्नृणां तन्मे त्वं कृपया वद ॥
चन्द्रार्कपुष्करिण्योस्तु वह्निपुष्करिणी तटे ।
कुम्भघोणे महाक्षेत्रे हेमवत्यास्तु संगमे ॥ [ 4440 ]
विश्वेश्वरे भृगुक्षेत्रे गजारण्यस्य वैभवम् ।
तद्वेदं तस्य विवरं ऋषीणा तत्र वर्तनम् ॥
अन्यच्चैव भवान्वेत्ति कावेर्या स्नानवैभवम् ।
कीर्तयस्व महाभाग कीर्तनादघनाशनम् ॥

सूत उवाच ।

प्रार्थितो धर्मपुत्रेण भीष्म· कुरुकुलोत्तमः । [ 4445 ]
चिरं ध्यात्वा नमस्कृत्य गङ्गां यदुकुलोत्तमम् ।
अब्रवीन्मधुरं वाक्यं धर्मसूनुमरिंदमम् ॥
परोपकारिण सन्तो धर्मार्थैं स्वकलेवरै· ।
वाचा किमुत सर्वेषां कुर्वन्ति प्रीणयन्ति च ॥
ये लोके भूसुरा विप्रा धर्मान्विक्ष्यन्त्यमिथ्यया । [ 4450 ]
ते सर्वे पापनिर्मुक्ता प्रयान्ति ब्रह्मण पदम् ॥
रात्रौ दिनमुखे विप्रा निरुद्योगमना प्रभो ।
शृण्वन्ति सत्कथा ये ते यान्ति विष्णो परं पदम् ॥
कावेर्या· कीर्तनं ये तु कुर्वन्ति ह्यनिशं नरा· ।
ते सर्वे पापनिर्मुक्ता प्रयान्ति ब्रह्मण पदम् ॥ [ 4455 ]
श्रीनिवासस्य माहात्म्यं कावेर्या स्नानवैभवम् ।
शृणोति य सदा भक्त्या सर्वान्कामान्समश्नुते ॥
य इद पुण्यमाख्यानं शृणोति श्रद्धया नरः ।
सर्वपापविमुक्तो ब्रह्मलोकं स गच्छति ॥

Colophon

वैशंपायन उवाच ।

श्रीनिवासस्य माहात्म्य श्रुत्वा प्रीतो महामतिः । [ 4460 ]
धर्मराजः पुन. प्राह कावेरी कीर्तयेति च ॥

भीष्म उवाच ।

अहो वक्ष्यामि माहात्म्य कावेर्या कुरुनन्दन ।
यस्य श्रवणमात्रेण सर्वपापै प्रमुच्यते ॥
वह्न्यर्कपुष्करिण्योश्च माहात्म्यं प्रवदामि ते ।
पुष्करिण्योस्तयोर्मध्यं पापिनामघनाशनम् ॥ [ 4465 ]
वह्निपुष्करिणी गत्वा नरा· पापावृता अपि ।
प्रयान्ति विष्णुभवनं परमानन्ददायकम् ॥
वह्निपुष्करिणीस्नानं ईश्वरस्यावलोकनम् ।
कुर्वन्ति ये नरा भक्त्या उद्यत्लार्कसमप्रभाः ।
हंसयुक्तेन यानेन यान्ति विष्णो परं पदम् ॥ [ 4470 ]
वह्निपुष्करिणी राम आदित्यकुलसंभवः ।
अकरोद्भार्यया सार्धं लक्ष्मणेन महात्मना ॥
ब्राह्मणेभ्यो धनं दत्त्वा सहरिः सविभीषण ।
गायत्र्याख्यां शिला राजन्नविरुह्य जजाप च ॥
देवानां चैव सर्वेषां मातर भुवनेश्वरीम् । [ 4475 ]
आराध्य मनसा राजन्कावेरीं वै ननाम च ॥

---

( for हित- ). — G2 om lines 4410–4414 — ( L 4410 ) G(ed.) स्नानं यद्यत्तपो जप्यं ( for $^a$ ). — ( L 4412 ) G(ed) लभ्यते ( for वर्धते ).— G2 om lines 4419–4429 M1 om. line 4422.— ( L. 4423 ) G(ed ) सकृत्स्मरणमात्रेण ( for $^a$ ). D1 शिवलोकं ददाति सा ( for $^b$ ) — ( L. 4425 ) G(ed ) विष्णुलोको भवेन्नृणां ( for $^a$ ) — ( L 4427 ) D1 M1 देवदेवस्य ( for वासु° ) — ( L 4428 ) G1 G(ed) धनलाभो ( for °कामो ) — D1 G1 2 M1 om line 4429 — After line 4430, G(ed.) ins. .

177** इह लोके सुखं भुक्त्वा वैकुण्ठ सोऽश्नुते सुखम् ।

— Before line 4431, D1 G1 ins सूत and G(ed ) वैशंपायन — — ( L 4433 ) G(ed ) शिरसा ( for वैभवं ) G1 कावेर्यां स्नानवैभवम् , G(ed.) °र्या विविधस्थलम् ( for $^b$ ) — G2 om. the ref.— ( L. 4438 ) G2 यद्भवेत्तु फलं नृणा ( for $^a$ )

— ( L 4439 ) D1 चन्द्र- ( for वह्नि- ) — ( L 4441 ) G(ed ) गजारण्ये च वैभवम् ( for $^b$ ) — ( L 4446 ) G1 हरिं ( for गङ्गा ). — ( L 4447 ) D1 अरिंदम , G1 अनुत्तमम् ( for अरिंद° ). — ( L 4448 ) D1 धनैरर्थैं ( for धनार्थैः स्व- ). — G1 M1 om ( hapl ) 4452–4455 — ( L 4452 ) D1 निरुद्योगे महात्मसु , G(ed ) °गा जितेन्द्रिया ( for $^b$ ). — ( L. 4454 ) D1 कुर्वन्तेऽहर्निशं नरा ( for $^b$ )

COLOPHON — *Sub-parvan* D1 G1 M1 आश्चर्यपर्वणि शेषधर्मा , G2 G(ed ) शेषधर्मा .— *Adhy name* M1 G(ed.) कावेरीमाहात्म्यम् — *Adhy no.* D1 G1 2 M1 34 , G(ed.) 35

( L 4460 ) G(ed) महीपाति ( for महामाति ) — ( L. 4461 ) G1 G(ed ) धर्मपुत्र ( for °राज ) — ( L 4462 ) D1 कावेर्या स्नानवैभवम् ( for $^b$ ) — ( L. 4463 ) G2 M1 नरः

आहूय सीतया सार्धं तत्र विश्रवसः सुतम् ।
अब्रवीन्मधुरं वाक्यं सर्वलोकोपकारकम् ॥
विभीषण महाभाग ब्राह्मणेभ्यो ददस्व ह ।
सौवर्णानि च रत्नानि धनानि विविधानि च ॥ [4480]
रावणो निहतः संख्ये सीतार्थं सर्वराक्षसैः ।
राक्षसाना च सर्वेषां तृप्तिरद्य भविष्यति ॥
यत्त्वया सेविता देवी कावेरी पापनाशिनी ।
निवापः क्रियतामत्र युष्मत्पितृगणं प्रति ॥
अत्र कुर्वन्ति ये श्राद्धं पितृणा मुक्तयेऽनघ । [4485]
तेषां पुरातनास्तात प्रयान्ति हरिमन्दिरम् ॥
जप कुर्वन्ति ये विप्रा ह्यत्र पापविवर्जिता ।
प्रयान्ति हरिसालोक्यं नारदात्तु मया श्रुतम् ॥
सङ्गात्तु यत्कृतं पापमग्रजेन त्वयापि वा ।
तत्सर्वं लयमायातु ह्यगस्त्यानुग्रहात्प्रभो ॥ [4490]
सत्सङ्गात्प्राप्यते स्वर्गो दुःसङ्गान्निरयो ध्रुवम् ।
तस्मात्त्वया कृत सङ्गस्तेनैव लयमेष्यति ॥
कृतकृत्यो भवानेको राक्षसानां दुरात्मनाम् ।
सत्सङ्गतोऽप्यसङ्गित्वं तव जातं महामते ॥
अगस्त्येन पुरा तात कावेरी पुण्यदायिनी । [4495]
सर्वलोकहितार्थाय निर्मिता पुण्यकर्मणा ॥
वैदेहि पश्य कावेरीं गङ्गाद्यां सर्वतोमुखाम् ।
कवेरकन्यां सर्वासां नदीनां प्रवरां शुभाम् ॥
अगस्त्यपत्नीं पापघ्नीं ब्रह्मणो मानसीं सुताम् ।
स्नातव्यमत्र वै भीरु त्वया दानानि यत्नतः ॥ [4500]
दातव्यानि च विप्रेभ्यो वासांसि विविधानि च ।
रत्नानि विप्रमुख्येभ्यो भूमिदानमनुत्तमम् ॥

भीष्म उवाच ।

राघवेन्द्रस्य तद्वाक्यं श्रुत्वा परमपावनम् ।
पौलस्त्यप्रमुखाः सर्वे स्नाताश्च कपिराक्षसाः ॥
वैदेही च महाभागा स्नात्वा दत्त्वा वसूनि च । [4505]
कान्ति लेभे स्वकां तत्र सर्वतेजोमयीं शुभाम् ॥
एतस्मिन्नन्तरे धीमान्मुनीनामग्रणीः प्रभुः ।
मुनीनामपि सर्वेषामगस्त्यो भगवानृषिः ।
सेव्यमानो मुनिगणैराययौ रामसंनिधिम् ॥
बोधायनस्तु भगवानापस्तम्बोऽथ गालव । [4510]
शातातपो मयः शङ्ख कात्यायनबृहस्पती ॥
संवर्तो यमकण्वौ च गौतम पुलहः क्रतुः ।
विश्वामित्र. स्थूलशिरा कचश्च्यवनभार्गवौ ॥
सत्याषाढ शतानन्दो देवलो लोमश प्रभुः ।
व्यास. पराशरश्चैव याज्ञवल्क्यश्च भारत ॥ [4515]
एवमाद्या महात्मानो मुनय. संशितव्रताः ।
राममालोकितुं जग्मुर्दर्शनान्मुक्तिदं प्रभुम् ।
अगस्त्यमग्रतः कृत्वा सर्वे वै मुनिपुंगवाः ॥
कृताशिषं राममुदीक्ष्य सर्वे
संत्यक्तकृच्छ्रं सह लक्ष्मणेन । [4520]
निरीक्ष्य सेनां महतीं विमानं
सविस्मयं पुष्पकमाजगाम ॥
अथ रामो महातेजा गाधश्याख्यशिलातले ।
नत्वा मुनीनां सर्वेषामर्घ्यं पाद्यं चकार ह ॥
विनयावनतो भूत्वा रामो धर्मभृता वर । [4525]
सस्मित वचन चेदमुवाच वदतां वरः ॥
कुशलं वो मुनिश्रेष्ठा. पुनीतो भवदागमे ।
सौमित्रिर्जानकी चाहं ऋक्षवानरराक्षसा ॥
अद्य मे सफलं जन्म जीवितं च सुजीवितम् ।
अद्य मे पापजालानि ध्वस्तानि भवदागमे ॥ [4530]
इत्युक्त्वा तु मुनीन्सर्वान्पुनर्नत्वा महामति ।
प्राञ्जलि सीतया सार्धमुत्तस्थे लक्ष्मणेन च ॥
गृहीतार्घ्यैर्मुनिगणैर्निषीदेत्यनुसञ्ज्ञितम् ।
अगस्त्योऽप्याह धर्मात्मा रामचन्द्रमकल्मषम् ॥
काकुत्स्थ करुणासिन्धो राम राम हितंकर । [4535]
दिष्ट्या प्राप्तोऽसि वैदेह्या लक्ष्मणेन महात्मना ॥
त्वया संरक्षितो लोको अद्य वै करुणाकर ।
निहत्य रावणं संख्ये यज्ञशत्रुं दुरासदम् ॥
ऋषीणामग्निकल्पानां रक्षितानि तपांसि ते ॥
अस्माभिर्यानि कर्माणि कृतानि सुबहूनि च । [4540]
सफलानि भवन्त्यद्य राम त्वद्दर्शनात्प्रभो ॥

---

पापात् (for सर्वपापै) — (L 4470) D1 हसयुक्तविमानेन (for ᵃ) — (L. 4471) G(ed) वह्निपुष्करिणीस्नानम् (for ᵃ) — (L 4481) M1 सीतार्थे तव राक्षसै (for ᵇ). — G2 om line 4484 — (L 4486) G2 नष्टा स्यु पापकर्मण (for ᵇ) — (L. 4488) G2 नात्र कार्या विचारणा (for ᵇ). — (L 4491) G2 दु सङ्गान्नरक व्रजेत् (for ᵇ). — G2 om lines 4492–4498 D1 om line 4494 — (L. 4500) D1 संतर्प्य चात्र वैदेहि (for ᵃ) — G2 om lines 4502–4504 M1 om the ref — (L 4507) D1 G(ed) योगिनाम् (for मुनी°) — D1 G2 M1 om line 4508 — (L 4509) D1 M1 ऋषि- (for मुनि-) — (L 4512) G2 संवर्तकश्च कण्वश्च (for ᵃ). — (L 4514) D1 सत्यायुप. (for °षाढ) — (L 4516) G2 महाभागा (for °त्मानो) D1 ऋषयश्च मुनीश्वरा. (for ᵇ), — (L 4520) M1 संत्यज्य सर्वं (for °क्तकृच्छ्रं) — (L 4522) D1 सविरिग। तस्थुरकल्मषा द्विजाः; M1 °य ते गतकल्मषा जनाः; G(ed.) °यास्तस्थुरकल्मषाः पुरः — Before line 4527, G(ed.) ins. श्रीरामः. — (L. 4527) G1 कुल च मे; M1 कुशलं वै (for °लं वो). — (L. 4529) G2 अद्य मे जन्मसाफल्यं (for ᵃ) — (L 4532) D1 उत्तस्थौ (for °स्थे) — For line 4533, G2 subst. :

178** गृहीतार्घ्ये मुनिगणे ऋषि परमपावन ।

— (L 4533) D1 [उ]क्तमञ्जसा (for [अ]नुसंज्ञितम्. — Before line 4535, D1 ins. अगस्त्य . — D1 om. (hapl ) lines 4544–4545. M1 om. (hapl.) lines 4544ᵇ–4545ᵃ. — After line 4547, D1 ins. :

हिताय सर्वलोकानां जातं रघुकुले शुभे ।
विष्णुं पुरातनं वेद्मि त्वामद्य रघुनन्दन ॥
संशास्ता सर्वलोकानां रक्षिता शिक्षितानघ ।
आवासः सर्वभूतानां त्वमेव रघुनन्दन ॥ [ 4545 ]
ब्रह्मविष्णुमहेशानां सृष्टिस्थित्यन्तकारिणम् ।
विदुस्त्वां राजशार्दूल रघुवंशविवर्धन ॥
इक्ष्वाकूणामयं वंशस्त्वया राम महामते ।
दिवो मार्गो यथा नूनं सवित्रा पावनीकृत. ॥
एव ब्रुवाणं तं रामो मुनिं नत्वा पुनः पुन । [ 4550 ]
अब्रवीन्मधुरं वाक्यं विनयावनतो नृप ॥
अगस्त्य मुनिशार्दूल ब्रह्मन्साक्षात्पिता यथा ।
संरक्षिता वयं सर्वे युष्माभिर्दण्डकावने ॥
कृपया तव विप्रेन्द्र पौलस्त्यं जितवानहम् ।
त्वया दत्तौ मुनिश्रेष्ठ तूणी चाक्षयसायकौ ॥ [ 4555 ]
खड्गो दत्तो जितामित्रो लक्ष्मणस्य महात्मनः ।
तेनैवेन्द्रजितं हत्वा त्वया संरक्षितो रणे ॥
सीता संरक्षिता तात राक्षसीगणसेविता ।
अदृष्टा राक्षसैर्मूर्खैः कृपया तव सुव्रत ॥
भूयोऽपि दर्शनं प्राप्ता त्वया मुनिवरोत्तम । [ 4560 ]
अत्र किं करणीयं मे तद्ब्रूहि करवाण्यहम् ॥

वैशंपायन उवाच ।

सुधासारमयं वाक्यं श्रुत्वा प्रीतो मुनीश्वरः ।
उवाच रामं धर्मज्ञं वदतां वरमव्ययम् ॥
गायत्र्याख्या शिला चेयं सर्वपापप्रणाशिनी ।
अस्यास्तु पुरतो राजन्कर्तव्या तु गवाकृतिः । [ 4565 ]
कुरु गोप्रसरं तस्या. कुक्षौ सिद्धिं गमिष्यसि ॥
तथेति मुनिवाक्येन प्रीतो रघुकुलोत्तमः ।
गां तु स्वर्णमयीं कृत्वा तस्या. कुक्षौ प्रविश्य च ।
दानानि च बहून्यत्र ब्राह्मणेभ्यो ददौ नृप. ॥
ऋषयोऽपि कपीन्द्राश्च राक्षसा भीमदर्शनाः । [ 4570 ]
कृत्वा गोप्रसरं सर्वे पापैस्तत्र विमोचिताः ॥
शिवलिङ्गप्रतिष्ठां च कृत्वा तत्र मुनीश्वरैः ।
पूजयित्वा तु धर्मात्मा गायत्र्याख्यां शिलां गत ॥
लक्ष्मण पूजयामास शंकर दक्षिणे तटे ।
वानराश्चैव रक्षांसि पूजयामासुरव्ययम् ॥ [ 4575 ]
दक्षिणे लक्ष्मणक्षेत्रमुत्तरे राघवस्य च ।
सेव्यमानं सदा देवैर्मुक्तिभुक्तिफलप्रदम् ॥
गायत्र्युपलमध्यस्थो रामो रघुकुलोत्तमः ।
अगस्त्यं प्राह धर्मात्मा कृताञ्जलिपुटस्तदा ॥
भगवन्सर्वधर्मज्ञ सर्वशास्त्रविशारद । [ 4580 ]
इयं शिला तु गायत्र्या नाम्ना ख्यातिं कथं ययौ ।
नूनं तत्तु भवान्वेत्ति कृपया वद सुव्रत ॥

अगस्त्य उवाच ।

पुरा वृत्रवधं कृत्वा सुत्रामा रघुनन्दन ।
तद्दोषपरिहारार्थं कावेर्यां स्नातुमागत ॥
ब्रह्मणो वचनाद्राम गायत्रीं वेदमातरम् । [ 4585 ]
अस्यां शिलायामारुह्य जजाप च चतुर्युगम् ॥
सान्निध्यमकरोद्देवी गायत्री द्विजवन्दिता ।
तमब्रवीन्महाभाग मरुत्वन्तमरिंदमम् ॥
तृप्ताहं तव सुत्रामंस्तपसा तोषितास्म्यहम् ।
वरं वरय भद्रं ते वरदाहमिहागता ॥ [ 4590 ]

इन्द्र उवाच ।

वृत्रस्य निधनाद्देवि महापापमुपस्थितम् ।
तद्दोषपरिहारार्थं त्वं मयोपासितानघे ॥
अघं मे नाशय क्षिप्रं पाहि मा स्वपुरे शुभे ।
बुद्धिस्वास्थ्यं मन स्वास्थ्यं कुरु मे सर्वमङ्गले ॥

गायत्र्युवाच ।

तथा भवतु धर्मिष्ठ त्वया या सेविता शिला । [ 4595 ]
गायत्री नामतो वज्रिँल्लोके ख्यातिं गमिष्यति ॥
महापातकयुक्तो वा युक्तो वा सर्वपातकैः ।
अत्र जप्त्वा दिवं याति गतपापो महामते ॥
इति तस्मै वरं दत्त्वा गायत्री तु तिरोदधे ।

---

179** ब्रह्माणि ब्रह्मरूपोऽसौ शिवरूप शिवे स्थित. ।
स्वय हि भगवान्विष्णु' पालयत्यखिलं जगत् ॥
— (L. 4549) D1 नृणा (for नूनं). — Before line 4550, D1 G1 G(ed.) ins. भीष्म — (L 4553) D1 त्वया वै दण्डके वने (for $^b$). — (L 4558) G1 M1 G(ed) -संवृता (for -सेविता) — (L 4559) G2 M1 रक्षिता (for अदृष्टा). — G2 om lines 4560-4561 — G2 om. the ref. G1 भीष्म (for वैशंपायन). — (L 4562) G2 -धारामृत , M1 -धारामय (for -सार°). — (L. 4563) G1 राजन् , G(ed.) वाक्य (for रामं). D1 उवाच मधुरं वाक्य (for $^a$) — For line 4563, G2 subst.

180** उवाच राजशार्दूलं धर्मज्ञं वदतां वरम् ।
— Before line 4564, D1 G1 G(ed.) ins. अगस्त्य. and before line 4567, D1 M1 ins भीष्मः — (L 4569) G2 ददौ नत्वा पुन पुन (for $^b$) — (L 4570) G2 ऋषयः कपयश्चैव (for $^a$) — (L. 4572) D1 शिवलिङ्गं प्रतिष्ठाप्य (for $^a$) — (L 4573) G(ed) पूजयामास धर्मात्मा (for $^a$). —M1 om (hapl) line 4575.— (L 4575) G(ed) ईश्वरम् (for अव्ययम्) — (L 4576) D1 दक्षिणे लक्ष्मण तीर्थम् (for $^a$) D1 उत्तरे रामतीर्थकम्, G1 M1 °रे राममव्ययम्, G(ed) °रे रामसेविते (for $^b$) — (L 4581) D1 नाम्ना सेय च गायत्र्या ; G1 नाम्ना गायत्र्याख्या चेयं (for $^a$) D1 G1 M1 कथ ख्यातिमगात्प्रभो , G2 कथ ख्यातिं गमिष्यति (for $^b$) — (L 4586) G1 आरोप्य ; G2 M1 आरूढो (for आरुह्य) — (L 4591) D1 अवास्थितम् , G(ed) समुत्थि° (for उपस्थि°) — (L.4593) G2 पाहि मा शुभदर्शने (for $^b$). — After line 4602, D1

तस्माद्राघव जप्या सा गायत्री लोकवन्दिता ॥ [4600]
ब्रह्मपुत्रो हि पौलस्त्यस्त्वया वै निहतो रणे ।
तद्दोषपहारार्थं गायत्र्यास्तु जप कुरु ॥

राम उवाच ।

तथा करोमि भगवस्त्वद्वचो मे हितं शुभम् ।
अयोध्यामृषिभि· सार्धं गन्तुमद्य त्वमर्हसि ।
यास्ये वानरमुख्यैश्च सार्धं रक्षोगणैः प्रभो ॥ [4605]

भीष्म उवाच ।

इत्युक्त्वा तं नमस्कृत्य पुन. स्नात्वा युधिष्ठिर ।
छन्दसा मातरं जह्वा पुनर्दानानि दत्तवान् ॥
अगस्त्यो भगवानाह धर्मज्ञं सत्यसंगरम् ।
हरन्तं सर्वसंतापं देहिनामीश्वरं शुभम् ॥
तथा कुरु रघुश्रेष्ठ यास्ये पश्चाद्द्विजै सह । [4610]
स्नात्वात्र ऋषिभिः सार्धं जह्वा वै वेदमातरम् ॥
इति मुनिवचनं निशम्य रामो
भुजविजितं विमानमेत्य सर्वैः ।
सपदि समुपगतवानयोध्यां
मुनिवरनिकरैरभिष्टुतात्मा ॥ [4615]
स्नाता नरा ह्यत्र महाघसंयुता
दिवं प्रयान्त्येव कुमार्गगा अपि ।
तस्मादियं पाण्डव दुर्लभा भुवि
गङ्गा यथा ह्युत्तरदेशगामिनी ॥
अश्वमेधसहस्रं हि सविता त्वजयञ्जप । [4620]
तेन पुण्यप्रभावेन सहस्रांशुरभूत्प्रभुः ॥

युधिष्ठिर उवाच ।

श्रीमता राघवेणेयं तप्तहाटकनिर्मिता ।
दृषद्रूपं समास्थाय दृश्यते धेनुरुत्तमा ।
एतन्मे कथ्यतां तात पापघ्नी पापनाशिनी ॥

भीष्म उवाच ।

क्रूराः कलौ युगे राजन्प्रभविष्यन्ति हिंसकाः । [4625]
मत्वैवं मतिमान्विद्वानगस्त्यः कृतवान्दृषत् ।
तस्मादगस्त्यशापेन दृषद्रूपमुपागता ॥
पापानां नाशिनी धेनुर्दुर्लभा पापिनां कलौ ॥
वाञ्छितार्थप्रदा देवी कावेरी पापनाशिनी ।
शिला मोक्षप्रदा ह्येषा गायत्र्याख्या युधिष्ठिर ॥ [4630]
महापातकयुक्तो वा यो वा को वा नृपोत्तम ।
मुच्यते सर्वपापेभ्यो रामलिङ्गस्य दर्शनात् ॥
य इद पुण्यमाख्यानं राघवेन्द्रस्य चेष्टितम् ।
श्रुत्वा पापविनिर्मुक्तो यानारूढो दिवं व्रजेत् ॥

Colophon

भीष्म उवाच ।

अत ऊर्ध्वं प्रवक्ष्यामि ह्यर्कपुष्करिणीं नृप । [4635]
यस्या· श्रवणमात्रेण नर पापै प्रमुच्यते ॥
अर्कपुष्करिणीतीरं गतानां सर्वदेहिनाम् ।
नश्यन्ति सर्वपापानि स्नातानां किमिहोच्यते ॥
पुरा विभावसुर्धीमांस्तपस्तेपे सुदुश्चरम् ।
तपसा तोषितो रुद्र सांनिध्यमगमत्प्रभु ॥ [4640]
तं निरीक्ष्य तपस्यन्त दिवाकरमरिंदमम् ।
प्राह गम्भीरया वाचा पार्वतीपतिरव्ययः ॥
सवित पश्य मा देवमुमापतिमरिंदमम् ।
वाञ्छितार्थप्रद विद्धि तपसा तोषितं तव ॥
एवमुक्तो महातेजाश्चण्डांशुश्च महामति· । [4645]
प्रणम्य शूलिनं देवं सविता स्तौति शंकरम् ॥

आदित्य उवाच ।

नम शिवाय रुद्राय देवाना पतये नमः ।
ईशाय विष्णुरूपाय शूलिने परमात्मने ॥
नम शर्वाय देवाय शंकराय नमो नमः ।
भूतेशाय नमस्तुभ्यं गिरीशाय नमो नमः ॥ [4650]
मृत्युंजय विरूपाक्ष नमस्ते वेदरूपिणे ।
नमः पिनाकहस्ताय कृत्तिवासाय ते नमः ॥
भूताय भूतरूपाय भूतेशाय नमो नम· ।
उग्राय भीमरूपाय श्रीकण्ठाय नमो नमः ॥

---

(marg.) ins.

181** इति तस्य वच श्रुत्वा राघवो मुनिरब्रवीत् ।

— G2 om lines $4603^b$–$4604^a$ — (L. 4604) G2 गन्तु-मर्हसि सुव्रत (for $^b$) — (L 4605) G2 अयोध्यां राक्षसैः सह (for $^b$). — G(ed.) om the ref. — (L. 4622) G2 M1 राघवेन्द्रेण (for °णेय) — (L. 4624) G2 पापघ्न पापनाशनम्, G(ed.) [illegible] (for $^b$) — (L 4625) G2 M1 शूरा (for क्रूरा) D1 तस्करा (for हिंसका) — (L. 4626) G(ed) अगस्त्यश्च शशाप गाम् (for $^b$) — G2 om. lines 4630–4632 — (L 4632) D1 G1 M1 कोटि- (for सर्व-). — (L. 4634) G2 M1 G(ed) तु पाप- (for पापवि-).

Colophon — *Sub-parvan :* D1 M1 आश्चर्यपर्वणि शेषधर्माः; G1 2 G(ed.) शेषधर्माः. — *Adhy. name :* D1 G(ed.) वह्निपुष्करिणीप्रशंसा. — *Adhy. no.* . D1 G1, 2 M1 35; G(ed.) 36.

(L 4636) G1 सर्व- (for नर·). — G2 om. lines 4637–4638. — (L. 4638) G(ed.) स्नातानां किमुतानघ (for $^b$). — (L, 4643) D1 अवस्थितम् (for अरिंदमम्). — G1 om. the ref G2 सविता (for आदित्य). — (L. 4649) G1, 2 शिवाय (for शर्वाय) — D1 om. (hapl.) line 4650· G1 M1 om (hapl.) lines 4651–4656. — (L. 4651) D1 G(ed) -मूर्तये (for -रूपिणे). — (L. 4652) D1 G(ed.) नमस्ते कृत्तिवाससे (for ). — M1 om. (hapl) lines 4653–

चन्द्रचूडामणे तुभ्यं वामदेवाय ते नमः । [4655]
कृशानुरेतसे तुभ्य सर्वज्ञाय नमो नम ॥
त्रिपुरान्तक नमस्तेऽस्तु मृत्युरूपाय ते नमः ।
धर्माय धर्मरूपाय सुधर्मपतये नम. ॥
यज्ञाय यज्ञरूपाय यज्ञानां फलदायिने ।
वेदमूर्ते नमस्तुभ्यं ब्रह्मविष्णुशिवात्मने ॥ [4660]
एवं स्तुत्वा वर वव्रे नन्दिवाहनमव्ययम् ॥
आदित्य उवाच ।
त्रयाणामपि मूर्तीनां शक्तिं मे शंकर प्रभो ।
देहि देहभृतां मोक्ष मामेव स्तुवतां सदा ॥
मया कृतमिदं स्तोत्र शृण्वतां वदतामपि ।
सर्वपापक्षयं देव कुर्वस्यास्तीरवासिनाम् ॥ [4665]
स्नातानामत्र कावेर्यामाख्यान शृण्वतामपि ।
एतान्सर्वान्पशुपते देहि मे करुणाकर ॥
इति स्तुतो महादेवो दत्त्वा तस्मै वरान्बहून् ।
तथास्त्विति तमामन्त्र्य भूतै· सह तिरोदधे ॥
स भानुस्तत्र तं देवं चिरमाराध्य भक्तित । [4670]
क्रतुं पशुपतेरिष्ट्वा ह्यश्वमेधमनेकश ॥
प्रीणयित्वा तदा देवान्पुरंदरपुरोगमान् ।
त्रिदशैः प्रार्थ्यमानोऽसौ पुरंदरपुरं ययौ ॥
सर्वतेजोमय दृष्ट्वा ह्यदितेरात्मसंभवम् ।
यष्टुं तत्र समाजग्मुः कावेर्यास्तटमुत्तमम् ॥ [4675]
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा बहुलदक्षिणै· ।
ईशानं प्रीणयित्वा ते द्योतमाना दिवं ययुः ॥
भस्मानि तत्र दृश्यन्ते ह्यद्यापि मनुजेश्वर ।
तैरालेपितसर्वाङ्गः सर्वपापै· प्रमुच्यते ॥
आराध्य तत्र वै देवं बहवो मनुजेश्वर । [4680]
स्वर्गं प्रपेदिरे पूर्वमद्यापि मनुजेश्वर ॥
शूलपाणिनमुद्दिश्य मुक्त्यर्थं मनुजोत्तमाः ।
जमदग्निर्भरद्वाजः कच कण्वो युधिष्ठिर ॥
एते वै द्विजमुख्याश्च तप· कुर्वन्ति चाधुना ।
शान्ता जितारिषड्वर्गा ह्यदृष्टा· पापकर्मभि· ॥ [4685]
करोति यः सदा स्नानमर्कपुष्करिणीतटे ।
मासमेकं नृपश्रेष्ठ तस्य मोक्षो भवेद्ध्रुवम् ॥
कावेर्यां स्नाति यो विद्वानर्कनाथस्य संनिधौ ।
सूर्यलोकमवाप्नोति ह्यादित्यकृपया नृप ॥
अत्र स्नाताः पापिनोऽपि ज्वलनार्कसमप्रभा· । [4690]
पितृमातृकुलै सार्धं ब्रह्मलोकं व्रजन्ति हि ॥
तत्र स्नानप्रभावेन तपसा परमेष्ठिना ।
प्रापिता सूर्यलोकं तु सूर्यरक्षार्थमादृताः ।
त्वं चासौ मारुतिर्भीम· सव्यसाची यमौ नृप ॥
अर्कपुष्करिणीस्नान कुरुध्व वै द्विजै· सह ॥ [4695]
प्रीतोऽसौ भास्करो देव सर्वदेवाभिपूजित ।
स्वस्थानं स्नानमात्रेण सर्वान्कामान्प्रयच्छति ॥
कलौ तु दुर्लभं नृणां पापिनां मनुजेश्वर ।
अर्कपुष्करिणीस्नानं प्राप्यते पुण्यकर्मभिः ॥
यज्ञभुक्सर्वगो विष्णु कर्मणां फलदायक· । [4700]
स्नानेन तपसा यज्ञै रवेस्तुष्टो जनार्दन ॥
कालमूर्तिधरं दिव्य ब्रह्मण कालकारकम् ।
उदयान्तकरं दिव्य वेदमण्डलमध्यगम् ॥
सप्ताश्वयुग्यं देवालिसेवितं ब्रह्मकोटिभिः ।
तप्तहाटकरत्नैश्च चित्रित ब्रह्ममूर्तिमत् ॥ [4705]
स्वरथं लोकरक्षार्थं ददौ तस्य जनार्दन· ।
स एव वेत्ति भगवान्स्नातानामत्र वै फलम् ।
न वेद्मि राजशार्दूल नारदोऽप्येवमब्रवीत् ॥
अथ वै सप्रवक्ष्यामि कावेर्यास्तीर्थमुत्तमम् ।
यस्य श्रवणमात्रेण नर· पापै प्रमुच्यते ॥ [4710]
कण्वतीर्थं प्रवक्ष्यामि कावेर्याश्चोत्तरे तटे ।
कण्वस्य चरितं राजन्सर्वमङ्गळदायकम् ॥
कण्वाश्रमसमीपे तु कावेर्यां स्नाति यो नरः ।
स मुक्त सर्वपापेभ्यो यानारूढो दिवं व्रजेत् ॥
अत्राश्चर्यतमं पुण्यमितिहासं पुरातनम् । [4715]
वक्ष्यामि भरतश्रेष्ठ सर्वपापप्रणाशनम् ॥
कावेर्यास्तु नदीतीरे हैमवत्यास्तु संगमे ।
पुरं हैमवतं नाम सर्वैश्वर्यसमन्वितम् ॥
चित्रकेतुसुत श्रीमान्व्याघ्रकेतु प्रतापवान् ।
रैवतस्य मनोर्वंशे संजातो हेमभूषण ॥ [4720]
वह्न्यर्कपुष्करिण्योऽस्तु मध्य परमपावनम् ।
यज्ञवाट चकारासौ व्याघ्रकेतुर्महामति ॥
राजसूयशतं धीमानश्वमेधशत नृप ।
अकरोद्गुणा सार्धं गुरुणा वशिना वशी ॥
कण्वाय ब्रह्मविदुषे स राजा वदतां वर । [4725]
ग्रामाणामेकपञ्चाशद्दक्षिणार्थं प्रदत्तवान् ॥
तस्य भृत्यो वसुर्नाम ब्राह्मणो वेदपारग· ।

4658. G1. 2 om (hapl) lines 4653–4656 — For line 4655, D1 subst.:
182** चन्द्रमूर्धमणे तुभ्य सर्वज्ञाय नमो नम. ।
—D1 om (hapl.) line 4656 — (L 4657) G2 त्रिपुरघ्नाय देवाय; G(ed) पुरान्तक नमस्तेऽस्तु (for $^a$) — G1 G(ed.) om. the ref G2 om lines 4665–4666 — (L 4671) D1 G2 M1 क्रतुं पशुपतिं दृष्ट्वा (G2 यज्ञम्, M1 यष्टुम्) (for $^a$). G(ed.) ह्यश्वमेधान् (for °मेधम्). — (L 4675) D1 स्नातु (for यष्टु) — (L 4676) G(ed) अश्वमेधादिभिर्यज्ञैर् (for $^a$) G2 द्योतमान दिव गताः (for $^b$). — G(ed.) om lines 4680–4681 — (L 4681) D1 मनुजोत्तमा (for °जेश्वर) — G1 om line 4682 — (L. 4687) G2 नरश्रेष्ठ G(ed) द्विज° (for नृप°) — G2 om lines 4690–4710 G1 M1 om (hapl) lines 4695$^b$–4699$^a$. — (L 4704) M1 स्थापित ब्रह्ममूर्तिमत् (for $^b$). — M1 om line 4705 — (L. 4709) D1 कावेर्याश्चोत्तरे तटे; G1 M1

बाल्यात्प्रभृति शिष्यश्च ह्यनुकूलार्थविद्बुधः ।
ग्रामाणां चैव सर्वेषामाधिपत्यं चकार ह ॥
वञ्चयित्वा मुनिवरं निष्काणां तु शतत्रयम् । [ 4730 ]
कृष्यंशैरर्जयामास सहस्रं राजसत्तम ॥
चोरतस्करदुर्वृत्तैस्तद्धन तु विनाशितम् ।
पापानां पाण्डवश्रेष्ठ पात्रमासीद्द्विजोत्तमः ।
तथापि मन्युं न प्राप कण्वो वेदविदां वर॰ ॥
स निर्जितेन्द्रियग्राम समलोष्टाश्मकाञ्चनः । [ 4735 ]
शिष्याणां चैव सर्वेषां ददौ ग्रामान्पृथक्पृथक् ।
सोऽतिष्ठत्सर्वधर्मज्ञो निर्द्वन्द्वो गतकल्मषः ॥
स वसुश्चाल्पकालेन गुरुद्रोहात्कुबुद्धिमान् ।
पञ्चत्वमगमद्राजंस्तेषु तेषु स्थितेषु च ॥
विप्रसाधारणद्रव्यग्रहणोत्पन्नपातकात् । [ 4740 ]
आदौ पपात तामिस्रे व्याघ्रशूलं तत॰ परम् ॥
तप्तकुम्भं तप्तशूलं तप्तसैकतमञ्जनम् ।
कृमिभोजनमत्युग्रं वृकराक्षसभक्षणम् ॥
एतान्सर्वान्महाघोरान्नरकाननुभूय च ।
षष्टिवर्षसहस्राणि तदन्ते ब्रह्मराक्षस ॥ [ 4745 ]
तत्रापि युगपर्यन्तं तदन्ते वृषलोऽभवत् ।
जातिस्मरणसंपन्न॰ सदा देवप्रपूजक ।
उद्युक्तः सर्वथा राजन्कण्वं पुनरथागमत् ।
नमस्कृत्य द्विजवरं प्राञ्जलिः पुरत॰ स्थितः ॥
तमब्रवीन्महाभाग पाहि मां मुनिपुंगव । [ 4750 ]
त्वत्पादकमलादन्या गतिर्मम न विद्यते ॥
रक्ष मां नरके मग्नं दैवयोगाद्विनिर्गतम् ।
दीनं कृतघ्नं दुर्वृत्तं ब्रह्मद्रव्यापहारकम् ॥

भीष्म उवाच ।

एतच्छ्रुत्वा द्विजश्रेष्ठः शूद्रस्य करुणां गिरम् ।
दृष्ट्वा तमब्रवीद्विद्वांस्तस्य निर्वेदकारणम् ॥ [ 4755 ]

कण्व उवाच ।

अवैमि तेऽधुना वृत्तं भो शूद्रः प्राकृतः खलु ।
तद्दोषपरिहारार्थमुपायं ते वदामि च ॥
ईश्वरं सर्वभूतानां कर्तारं भुवनेश्वरम् ।
अमुं पुरातनं देवं शूलपाणिमरिंदमम् ॥
त्रिकालमर्चयन्नित्यं प्रदक्षिणपुर सरम् । [ 4760 ]
जन्मान्तरशतैः पापैर्विमुक्तो ध्रुवमेष्यसि ॥

तथेति तं नमस्कृत्य नाम्ना वै शूद्रशूलकः ।
त्रिंशदब्दत्रयं राजन्कुर्वाणो देवपूजनम् ॥
स्नात्वा स्नात्वा पुन स्नात्वा कावेर्यां भक्तिमान्दृढम् ।
पूजयामास राजेन्द्र तदा निष्कल्मषोऽभवत् । [ 4765 ]
पूजयित्वा चिरं कालं धर्मतो धर्मनन्दन ॥
स्नात्वा कदाचित्कावेर्यां देवदेवस्य चाग्रतः ।
दिष्टान्तमाययौ शूद्रो नमस्कारात्प्रकाशितः ॥
दिव्यं विमानमारुह्य देवगन्धर्वसेवित॰ ।
अप्सरोगणसंकीर्णो मुनिमेनमथाब्रवीत् ॥ [ 4770 ]
भगवन्मुनिशार्दूल सिद्धोऽहं त्वत्प्रसादतः ।
ते कीर्तिर्लोकविख्याता भविष्यति नमोऽस्तु ते ॥
एकाहमपि यः कुर्वन्पूजनं तु पिनाकिन ।
स्नात्वा प्रदक्षिणं कृत्वा तस्य मोक्षो भविष्यति ॥
देवस्यास्य पुरो विद्वान्कावेर्यां स्नाति यो नरः । [ 4775 ]
तस्य मुक्तिर्भवेच्छुद्धा मया दृष्टा हि संप्रति ॥
मया वसूनि सर्वाणि पूर्वं त्वपहृतानि ते ॥
तत्सर्वं क्षम्यतां विप्र भूयो भूयो नमोऽस्तु ते ॥
इत्युक्त्वा देवकुसुमैरभिषिच्य मुनिं प्रभुम् ।
भूतसंघैः परिवृत॰ शिवसायुज्यमाप्तवान् ॥ [ 4780 ]
प्रदक्षिणनमस्कारं य॰ कुर्यात्स्नानपूर्वकम् ।
तस्य मुक्तिर्भवेत्पार्थ कावेर्यां नात्र संशय॰ ॥
वह्न्यर्कपुष्करिण्योस्तु स्नातानां तीर्थं उत्तमे ।
मुक्तिरेव भवेद्राजन्हैमवत्यास्तु संगमे ॥
संगमे हैमवत्यास्तु कावेर्याश्च महाजले । [ 4785 ]
स्नातानां ब्रह्मणो लोकं स्थिरमाह च नारदः ॥
एकवारं तु य स्नायात्कावेरीहैमसंगमे ।
जन्मान्तरकृतैः पापैर्मुच्यते नात्र संशयः ॥
यज्ञदत्त॰ पुरा विद्वान्निर्धनो ब्रह्मवित्तमः ।
सर्वतीर्थेषु स स्नात्वा पितॄन्संतर्प्य वारिणा ॥ [ 4790 ]
पितरो मे न तृप्ताः स्युरिति मत्वा सुबुद्धिमान् ।
कावेरीहैमवत्योस्तु संगमं प्राप्तवान्द्विज॰ ॥
स्नात्वा जप्त्वा तथा देवान्प्रीणयित्वा तु तर्पणैः ।
उद्दिश्य स्वपितॄंस्तत्र निवापं दत्तवान्किल ॥
गोत्रनामानि संकीर्त्य निवापे दत्तमात्रके । [ 4795 ]
मूर्तिमन्त॰ पितृगणा ह्यग्रे तस्थुश्च संगमे ॥
अब्रुवन्विप्रशार्दूलं यज्ञदत्तमकल्मषम् ।

---

°र्या॰ स्नानवैभवम् ( for $^{b}$ ). — D1 om line 4710–4711 —( L 4715 ) D1 अत्राश्चर्यमयं पुण्यम् ( for $^{a}$ ) —( L 4717 ) D1 महाभाग ( for नदीतीरे ) —( L 4727 ) G(ed ) शिष्यो ( for भृत्यो ) —( L 4740 ) M1 -कारणात् ( for पातकात् ). —( L 4754 ) G1 मुनि- ( for द्विज- ) —( L. 4759 ) G2 महेश्वरम् ( for अरिंदमम् ) —( L. 4761 ) G1 G(ed ) -कृतै ( for शतै ). G(ed ) दिवम् ( for ध्रुवम् ) —( L 4762 ) G(ed ) तदा वै स तु शूद्रक ( for $^{b}$ ) —( L 4764 ) D1 स्नात्वा च तर्पण कृत्वा ( for $^{a}$ ). D1 स्थित , G1 दृढ ( for दृढम् ) —( L 4768 ) D1 नमस्कारप्रदार्शितः ; G(ed.) °रान्प्रकाशयन् ( for $^{b}$ ) — D1 om lines 4769–4773. —( L. 4774 ) D1 च तर्पणं ( for प्रदक्षिणं ). G(ed ) भवेद् ध्रुवम् ( for भविष्यति ) —( L. 4776 ) G2 शुद्धिर् ; G(ed.) दृष्टा ( for शुद्धा ) G(ed ) सृष्टा ( for दृष्टा ) —( L 4777 ) G(ed ) पूर्वं तव हृतानि वै ( for $^{b}$ ) —( L. 4779 ) G(ed.) अभ्यर्च्य मुनिपुंगवम् ( for $^{b}$ ) — Before line 4781, G1 ins. भीष्मः. G2 om lines 4783–4788. — ( L. 4788 ) M1 -शतैः ( for -कृतैः ). — G1, 2 om. lines 4791–4793. — ( L. 4794 ) G2 निवा-

पितरः प्रीतिमापन्ना दिव्यरूपधरामला ॥
पितर ऊचु ।
अद्य तृप्ताः स्म वत्स त्वं कावेरीहेमसंगमे ।
निवापं दत्तवानस्मानुद्दिश्य हि शुभे जले ॥ [4800]
तस्मात्प्रीता स्म ते वत्स सर्वसंपद्भविष्यति ।
ब्रह्मणो लोकमायामो यत्र गत्वा न शोचति ॥
इत्युक्त्वा पितर सर्वे यज्ञदत्तमकल्मषम् ।
तिरोऽभवन्स विप्रेन्द्रो विस्मयं परमं गत ॥
देहावसानपर्यन्तं स विप्रो भार्यया सह । [4805]
पुत्रपौत्रैः परिवृत सर्वान्कामानवाप्तवान् ॥
देहावसानसमये सुरलोकेषु पूजितः ।
ततो वै भुवमासाद्य चक्रवर्ती ह्यजायत ॥
स विप्र पुत्रपौत्रैश्च भुक्त्वा स्वर्लोकमाप्तवान् ।
ततो वै भुवमासाद्य चक्रवर्तीह जायते ॥ [4810]
हेमभूषणनाम्नासौ विख्यातो भुवि भूपते ।
पुरं हैमवतं नाम चक्रे राजन्स्वनामत ॥
तत्र दिव्यक्रतूनिष्ट्वा सर्वान्देवान्प्रपूज्य च ।
वर्षाणामयुतं श्रीमान्प्रजा धर्मेण पालयत् ॥
इष्ट्वा तु विविधान्यज्ञान्प्रजा धर्मेण पालयन् । [4815]
अन्ते जगाम भवन विष्णो सर्वात्मन प्रभो ।
तत्र भोगांश्चिरं भुक्त्वा तत्रैव स्म प्रमुच्यते ॥
तस्मात्सेव्या त्वया राजन्कावेरी हैमसगमे ।
पितरस्तृप्तिमेष्यन्ति तव मुक्तिर्भविष्यति ॥
य इदं पुण्यमाख्यानं कावेरीहेमसंगमे । [4820]
श्रुत्वा पापविनिर्मुक्तो ब्रह्मलोकं स गच्छति ॥

Colophon

वैशंपायन उवाच ।
प्रहृष्टात्मा महातेजा धर्मपुत्रो महामति ।
पुनरेव शुभं वाक्य नमस्कृत्वेदमब्रवीत् ॥
ब्रूहि मे कपिलायाश्च कावेर्या संगमे फलम् ।
यस्य श्रवणमात्रेण तृप्तिर्मे भवितानघ ॥ [4825]
भीष्म उवाच ।
कावेर्या कपिलायाश्च माहात्म्यं स्नानजं फलम् ।
वक्ष्यामि तव संप्रीत्यै शृणु नान्यमनाः प्रभो ॥
कावेर्या कपिलायाश्च संगमे वासिनः प्रभो ।
श्रीकण्ठस्य शिवस्यास्य कीर्तनं प्रवदामि ते ॥
कावेरी पाविता येन नीलकण्ठेन शंभुना । [4830]
स्नातानामप्रतस्तस्य कैवल्यं भवति प्रभो ॥
कवेरकन्या कपिला स्मृता पापप्रणाशिनी ।
स्नातानां मोक्षदा देवी कपिला सर्वकामदा ॥
क्षेत्राणामुत्तम क्षेत्रं तीर्थानां च तथोत्तमम् ।
कावेरीकपिलायोगं वदन्ति परमर्षय ॥ [4835]
कावेरीकपिलातीरं ब्रह्माद्याः सर्वदेवता ।
मुनयो मानवाश्चैव सेवन्ते पुण्यकाङ्क्षिण ॥
कावेरी पुण्यदा ज्ञेया निर्मिता परमेष्ठिना ।
पापहा कपिला ज्ञेया तयोर्योगस्त्वनुत्तमः ॥
स्मृतार्तिनाशिनी देवी कावेरी पुण्यदायिनी ॥ [4840]
सर्वपापक्षयकरी सर्वोपद्रवनाशिनी ॥
यानि क्षेत्राणि पुण्यानि दक्षिणस्यां दिशि प्रभो ।
तेषां पुण्यतमं ज्ञेयं कावेरीकपिलाव्रजम् ॥
यन्मज्जनं महापुण्यं दुर्लभं ह्यकृतात्मनाम् ।
साधूनां सुलभा देवी प्रीता मोक्षप्रदायिनी ॥ [4845]
ईजे च विश्वसृग्धीमान्नीलकण्ठं प्रति प्रभो ।

---

पान् ( for °प ). — ( L. 4795 ) G2 सकल्प्य ( for सकीर्त्य ). — ( L. 4797 ) G2 अब्रुवन्राजशार्दूल ( for $^a$ ) M1 यज्ञमूर्तिम् ( for °दत्तम् ) — G1 om the ref — ( L 4802 ) D1 ब्रह्मलोकमितो यामो ( for $^a$ ) — G2 om lines 4805–4808 G1 M1 G(ed.) om line 4809 — ( L 4811 ) G2 विख्यातो भुवनत्रये ( for $^b$ ) — G1 om. lines 4813 — ( L 4814 ) G1 M1 ( also in text ) इष्ट्वा तु विविधान्यज्ञान् ( for $^a$ ). —G2 om. lines 4816–4818. — ( L 4821 ) G(ed ) शृणोति पापनिर्मुक्तो ( for $^a$ ). D1 M1 व्रजेद् ध्रुवम् ( for स गच्छति ).

COLOPHON. — *Sub-parvan* D1 M1 आश्चर्यपर्वणि शेषधर्माः, G1. 2 G(ed ) शेषधर्मा.. — *Adhy name* D1 कावेरीहैमवतीसंगमे अर्कपुष्करिणीप्रशंसा, M1 G(ed ) अर्कपुष्करिणीप्रशंसा ( M1 °सनम् ) — *Adhy. no* D1 G1 2 M1 36; G(ed.) 37

D1 om lines 4822–4823 with the ref — ( L 4822 ) G(ed ) सप्रहृष्टो ( for प्रहृष्टात्मा ). — Before line 4824, D1 ins. युधिष्ठिर — ( L 4824 ) G(ed ) प्रब्रूहि ( for ब्रूहि मे ).

D1 माहात्म्यं स्नानज फलम् ( for $^b$ ).— D1 om. lines 4826–4827. — ( L 4826 ) G(ed) स्नानवैभवम् ( for °जं फलम् ). — ( L 4830 ) G(ed) कपिला ( for पाविता ). G(ed.) भूषिता ( for शंभुना ). — ( L 4831 ) D1 M1 G(ed ) ध्रुवम् ( for प्रभो ) — G2 om lines 4832–4841 — ( L. 4832 ) G(ed ) कावेरीकपिलासगे ( for $^a$ ) — ( L 4833 ) G1 कावेरी पुण्यदायिनी ( for $^b$ ) — ( L 4834 ) G(ed ) तीर्थानामुत्तमं तीर्थं ( for $^a$ ) G(ed.) क्षेत्राणा ( for तीर्थानां ). — ( L. 4839 ) D1 M1 तयोर्योगमनुत्तमम् ( for $^b$ ). — ( L. 4842 ) G1 दिव्यानि ( for पुण्यानि ) G(ed ) यानि पुण्यानि तीर्थानि ( for $^a$ ) — After line 4842, G2 ins. :

183** तानि मुक्तिप्रदायीनि सत्य सत्य वदाम्यहम् ॥
अधुना किं प्रलापेन कावेरी सरितां वरा ।
दर्शनात्स्पर्शनात्पानात्कीर्तनस्नानमुक्तिदा ॥
अन्नादिसर्वदानानि कावेर्यास्तु तटे शुभे ।
मोक्षदायीनि सर्वाणि सत्य सत्यं मयोदितम् ।
समस्तदेवताः सर्वे ऋषिसिद्धाप्सरास्तथा ।

तथा च मुनयः सर्वे चक्रुश्च विविधान्मखान् ॥
कावेरी कपिला लोकं त्रायते पुण्यवारिणा ।
स्नातानां सर्वपापानि छित्त्वा मुक्तिं ददाति च ॥
यत्र स्नाताः पापिनोऽपि पितृमातृकुलानि च । [ 4850 ]
सहस्राणि समुद्धृत्य प्रयान्ति परमं पदम् ॥
कावेर्याः कपिलायाश्च महिमा केन गण्यते ।
नाहं शक्नोमि गदितुं स्नातानां संगमे फलम् ॥
तुलामासे महाराज गङ्गाद्याः सकलापगाः ।
कावेर्यावर्तनं तात कुर्वन्त्यात्मविशुद्धये ॥ [ 4855 ]
याः पुण्यतिथयः प्रोक्ता शास्त्रेषु मुनिपुंगवैः ।
तासु स्नाति नरो भक्त्या ब्रह्मलोकं प्रयाति वै ॥
मकरस्थे रवौ माघे संगमे स्नाति यो नरः ।
सर्वाँल्लोकान्विनिर्जित्य विष्णुलोकं व्रजेद्ध्रुवम् ॥
यस्या दर्शनमात्रेण कावेर्या संगमे नृणाम् । [ 4860 ]
सर्वपापानि नश्यन्ति जन्मान्तरकृतानि च ॥
मकरस्थे रवौ माघे यो वा स्नाति त्र्यहं नृप ।
स मुक्तः सर्वपापेभ्यो यानारूढो दिवं व्रजेत् ॥
माघमासे महाराज पक्षमात्रमतन्द्रितः ।
स्नाति यः सकलान्वंश्यानुद्धार्य स दिवं व्रजेत् ॥ [ 4865 ]
मासमात्रं नरो माघे कावेर्यां कपिलागमम् ॥
कोटिवंशसमायुक्तो ब्रह्मलोकं स गच्छति ॥
अश्वमेधसहस्राणि वाजपेयायुतानि च ।
कृत्वा यत्फलमाप्नोति स्नातानामत्र तद्भवेत् ॥
कावेरीं स्मरतो नित्यं लोकानां हितकृत्तमाम् । [4870 ]
सर्वदानफलं तस्य भवेत्तत्र स्थितस्य च ॥
ददाति संगमे यस्तु सौवर्णं रजतं तु वा ।
कोटिकोटिगुणं तस्य भवेत्फलमनुत्तमम् ॥
यो ददाति च गोदानं कावेरीकपिलातटे ।
एकस्य कोटिगुणितं फलमाप्नोति धर्मज ॥ [ 4875 ]
अन्नं ददाति यो राजन्कावेरीकपिलातटे ।
पितरस्तस्य तृप्यन्ति तृप्ताः स्युः सर्वदेवताः ॥
कन्यादानं महाराज कावेरीकपिलातटे ।
ददाति ब्राह्मणेभ्यो यः स विष्णोः पदमश्नुते ॥
जपं दानं च होमश्च सर्वं कोटिगुणं भवेत् । [ 4880 ]
कुर्वतस्तस्य कावेर्यां पापं च कुरुनन्दन ॥
चन्द्रसूर्यग्रहे चैव संक्रान्तावयने तथा ।
व्यतीपाते वैधृतौ च तथा पर्वणि धर्मज ॥
यः स्नाति संगमे देव्याः कपिलायाः शुभे दिने ।
मातृतः पितृतश्चैव तथा श्वशुरवंशतः । [ 4885 ]
त्रिकोटिकुलसंयुक्तो विष्णुलोकं स गच्छति ॥
ब्रह्मादयः सुराः सर्वे योगिनः सनकादयः ।
गन्धर्वा लोकपालाश्च ऋषयश्च तपोधनाः ।
अणिमादिगुणैर्युक्ता ये चान्ये तत्त्वदर्शिनः ॥
ब्राह्मी माहेश्वरी लक्ष्मीः शची मेनादितिर्दितिः । [ 4890 ]
घृताची मेनका रम्भा उर्वशी च तिलोत्तमा ॥
गणाश्चाप्सरसां सर्वे पितॄणां च गणास्तथा ।
स्नातुमायान्ति ते सर्वे कावेर्याः कपिलागमे ॥
किमत्र बहुनोक्तेन ब्रह्मणा निर्मिता पुरा ।
प्रजानां पापभीरूणां शुद्धये मुक्तये नृप ॥ [ 4895 ]
अत्र वर्षसहस्राणि तपः कृत्वा सुदारुणम् ।
नीलकण्ठप्रसादेन पुरा विश्रवसः सुतः ॥
धनानामाधिपत्यं च सखित्वं शूलपाणिनः ।
प्राप्तवानलकां राजन्देवगन्धर्वसेविताः ॥
चन्द्रकान्तमहामेघविजया ब्राह्मणोत्तमाः । [ 4900 ]
तपः कृत्वा चिरं कालमत्र मुक्तिं प्रपेदिरे ॥

युधिष्ठिर उवाच ।

चन्द्रकान्तमहामेघविजया ब्राह्मणोत्तमाः ।
कथं मुक्तिं गताः स्नातास्तन्मे त्वं कृपया वद ॥

भीष्म उवाच ।

याज्ञवल्क्यसुता राजन्नेते वै लोकविश्रुताः ।
चन्द्रकान्तमहामेघविजयाश्चन्द्रभूषणा ॥ [ 4905 ]
ज्येष्ठं गृहे प्रतिष्ठाप्य चन्द्रभूषमकल्मषम् ।
कावेरीकपिलामध्यवर्तिनं भुवनेश्वरम् ॥
आराध्य सुचिरं कालं तपसा ब्राह्मणोत्तमाः ।
मुक्तिकामा महात्मानस्तपः कुर्वन्ति च स्म ते ॥
चतुर्दशसहस्राणि शिष्यास्तेषां महात्मनाम् । [ 4910 ]
अद्वैतवादिनः सर्वे तपसा दीर्घदर्शिनः ॥
ध्यायन्तः पुरुषं शंभुं सृष्टिस्थित्यन्तकारिणम् ।
आराधयन्तस्तं देवमजमक्षरमव्ययम् ।
स्तुवन्ति विविधैः स्तोत्रैर्नमस्यन्ति हि केचन ॥
ध्यायन्तः पुरुषं केचित्तिष्ठन्ति च निरङ्कुशाः । [ 4915 ]
अत्युग्रमतुलं राजन्कुर्वन्तस्तप उत्तमम् ॥
पार्वतीवल्लभस्तेषां सांनिध्यमकरोत्प्रभुः ।
अष्टमूर्तिधरः श्रीमान्प्रहसन्वाक्यमब्रवीत् ॥

---

स्नातुमायान्ति भूपाल अद्यापि मनुजेश्वर ॥
— G2 om. lines 4843-4893 —(L. 4845) D1 सेव्यतां मोक्षदायिनी (for b). —(L. 4846) M1 इयाज विश्वसृग्धीमान् (for a). —(L. 4862) D1 यः स्नाति त्रिदिनं नृप (for b) —(L 4869) G1 M1 यत्फलं समवाप्नोति (for a). —(L. 4873) लभते फलमुत्तमम् (for b). — M1 om (hapl) lines 4875-4876 —(L 4884) D1 M1 शुभप्रदे (for शुभे दिने). —(L 4899) D1 -सेविताम् (for °तः) —(L 4901) D1 G1 तत्र (for अत्र) —(L. 4902) M1 तात (for स्नाता स्) —(L. 4904) G1, 2 M1 G(ed.) त्रयो (for एते).—(L. 4906) D1 गृह (for गृहे). D1 चन्द्रभूषणकल्मषम् (for b) —(L. 4907) G2 -वर्तिनं परमेष्ठिनम् (for b) —(L 4913) D1 आराधयस्तु तं देव (for a). —(L. 4915) D1 G2 M1 निराकुलाः (D1 °लम्) (for निरङ्कुशाः). —(L. 4916) G(ed.) कुर्वन्ति (for °न्तस्). G2 कुर्वन्ति स्तोत्रमुत्तमम् (for b). —(L. 4917) D1 -नन्दनस् (for -वल्ल-

किमर्थमिदमारब्धं तद्ब्रूत द्विजसत्तमा ।
दास्यामि किमहं सर्वमिति सर्वान्वचोऽब्रवीत् ॥ [ 4920 ]
सर्वे ते द्विजमुख्याश्च सशिष्या पाण्डुनन्दन ।
संसारविषवृक्षस्य छेत्ता भव महेश्वर ॥
शंकर उवाच ।
अहो वाक्यं कटुतरं युष्मद्वक्त्रात्समुत्थितम् ।
तस्माद्व क्रूररूपेण देहेन भविता मृतम् ॥
विष्णुर्दाशरथिर्भूत्वा मोक्षयिष्यति सुव्रताः । [ 4925 ]
युष्माभिर्यादृशं प्रोक्तं तादृशं स करिष्यति ।
वचसा सदृशं रूपं यूयमत्र गमिष्यथ ॥
तादृशं रूपमास्थाय पालयिष्यति स प्रभु ।
इत्युक्त्वान्तर्दधे देवो भूतैः सह महेश्वरः ॥
ततो विष्णुर्देवदेवो रामत्वमगमत्प्रभु । [ 4930 ]
चन्द्रकान्तमहामेघविजया ब्राह्मणोत्तमा ॥
खरश्च दूषणश्चैव त्रिशिरा ब्राह्मणोत्तमा ।
आसन्नेषां प्रशिष्याश्च चतुर्दशसहस्रधा ॥
तत्र रामो महातेजा महादेवप्रचोदितः ।
जटावल्कलधारी च प्रययौ दण्डकावनम् । [ 4935 ]
पैनाकं तु धनुर्गृह्य चिच्छेद सकलाञ्शरैः ॥
ते मुक्ताः पुण्यकर्माणः संसारात्पाण्डुनन्दन ।
तत्पादकमलं दिव्यं तत्क्षणात्तु प्रपेदिरे ॥
ईशस्य संगमे यस्य पूजनात्फलमीदृशम् ।
तस्मादद्यैव मुनयः स्नात्वा कपिलसंगमे । [ 4940 ]
पूजां कुर्वन्ति यत्नेन मुक्त्यर्थं भरतर्षभ ॥
कावेर्याः कपिलायाश्च संगमे भुवि दुर्लभे ।
स्नात्वा नत्वा स पापोऽपि तत्रैव परिमुच्यते ॥
दुर्लभो माघमासस्तु कावेरी च सुदुर्लभा ।
दुर्लभः शंकरो देव कपिलासंगमध्यगः ॥ [ 4945 ]

त्रयमेतन्मनुष्याणां पापिनां पाण्डुनन्दन ।
किमत्र बहुनोक्तेन कावेरी दुर्लभा कलौ ॥
य इदं पुण्यमाख्यानं नारदात्तु मया श्रुतम् ।
श्रुत्वा पापविनिर्मुक्तो ब्रह्मलोकं स गच्छति ॥

Colophon

भीष्म उवाच ।
शृणु विश्वेश्वरस्थान वक्ष्यामि भरतर्षभ । [ 4950 ]
दक्षिणे भार्गवक्षेत्रं कावेर्याः सरितः शुभम् ॥
ऐशान्ये श्रीनिवासस्य न्यूने योजनमात्रके ।
संवर्तकस्य विप्रर्षे स्थानं परमपावनम् ॥
तत्रैव चयनं चक्रे महाचयनमेव च ।
इष्टकाभिरनेकाभिर्वेदिं संस्थाप्य शाश्वतः ॥ [ 4955 ]
संवर्तकस्तु भगवानापस्तम्बसखा मुनिः ।
कात्यायनस्तु भगवानापस्तम्बसमन्वितः ।
भरद्वाजो मुनिवरो यज्ञकर्माण्यकारयत् ॥
ब्राह्मणा वृत्तसंपन्नाः कुलीना वेदपारगाः ।
राजानो धर्मशीलाश्च ते चक्रुर्विविधान्मखान् । [ 4960 ]
कारयामासुरन्यांश्च मुक्तिकामाननेकश ॥
तत्र यज्ञशिला नाम गायत्र्यास्तु शिलोपमा ।
तत्रैव तु शिलापृष्ठे नाम्ना संवर्तकस्य च ॥
लिङ्गं वै लोकविख्यातं रमणीयं नृपोत्तम ।
नलेन स्थापितं पूर्वं ऋषिनाम्ना जयेच्छया । [ 4965 ]
तमाराध्य नलो राजा राज्यं लेभे युधिष्ठिर ॥
संवर्तकस्य लिङ्गस्य दक्षिणे चोत्तरा नदीम् ।
अल्पतोयसमृद्धा च शिला परमपावनी ॥
संवर्तकस्य लिङ्गस्य त्वाग्नेय्यां दिशि सुव्रत ।
कावेरी द्विविधा भिन्ना तन्मध्ये गालवाश्रमः ॥ [ 4970 ]
दक्षिणे चोत्तरे चैव कावेरी पूर्वगामिनी ।

---

मम्). — Before line 4919, M1 ins. शंकरः. — (L. 4922) D1 छेत्ता स भव नः प्रभो; G1 2 M1 छेत्ता त्वं भुवनेश्वर (for $^{b}$). — After line 4922, G(ed.) ins.:

184** इति तेषां वचः श्रुत्वा भगवानिदमब्रवीत् ।

— G2 M1 ईश्वरः (for शंकरः). — (L. 4923) G1 G(ed.) विनिःसृतम् (for समुत्थि°). D1 युष्माकं च वचःस्थितम् (for $^{b}$). — (L. 4924) D1 G2 युतम् (for मृतम्). D1 यूयमद्य भविष्यथ (for $^{b}$). — After line 4927$^{a}$, G(ed.) ins.:

185** भूतैः सह महेश्वर ।
ततो विष्णुर्देवदेवो

— D1 om. line 4932. — (L. 4931) G(ed.) त्रिशिरा राक्षसोत्तमा (for $^{b}$). — (L. 4934) D1 महादेवो (for °तेजा). D1 ब्रह्मणा च (for महादेव-) — (L. 4935) G1 G(ed.) प्राविशद् (for प्रययौ) — (L. 4937) G2 M1 सत्सङ्गात् (for संसारात्). — (L. 4940) G(ed.) स्नात्वा तु कपिलागमे (for $^{b}$). — (L. 4942) G2 कपिला भुवि दुर्लभा (for $^{b}$). — After line 4944, D1 ins.:

186** दुर्लभं वैष्णवं ज्ञानं मुक्तिर्भक्त्या तु दुर्लभा ॥

— (L. 4946) G(ed.) पापिना दुर्लभं खलु (for $^{b}$) — (L. 4947) G(ed.) कपिला (for दुर्लभा). — After line 4947, G(ed.) ins.:

187** तत्सगमध्यगं शंभुर्मुक्तिमुक्तिप्रदः स्मृतः ॥

— (L. 4949) G(ed.) शृणोति पापनिर्मुक्तो (for $^{a}$)

COLOPHON — *Sub-parvan*: D1 G1 आश्चर्यपर्वणि शेषधर्मा, G2 M1 G(ed.) शेषधर्मा — *Adhy. name*: D1 कावेरीकपिलासंगमप्रशंसा, G(ed.) कावेरीकपिलासगमप्रभाव.. — *Adhy. no.*: D1 G1 2 M1 37, G(ed.) 38

(L. 4951) G2 स्थानं; M1 -क्षेत्रे (for -क्षेत्रं) G2 कावेरीसरितस्तटे (for $^{b}$) — (L. 4956) G1 -महामुनि (for -सखा मुनिः). — For lines 4959–4960, D1 G1, 2 M1 subst.:

188** ब्राह्मणान्वृत्तसपन्नान्कुलीनान्वेदपारगान् ।
राज्ञश्च धर्मशीलास्ते ते चक्रुर्विविधान्मखान् ।
[ (L. 2) D1 ऽन्याश्च (for ते चक्रुः). ]

— (L. 4962) G(ed.) गायत्र्याख्य- (for °त्र्यास्तु). — D1 om.

तत्रैव मुनयः सर्वे तपः कुर्वन्ति धर्मज ॥
संवर्तकस्य लिङ्गस्य पश्चिमे पुण्यमाश्रमम् ।
पादपैः फलितैर्युक्तं पनसैः फलमण्डितैः ।
कौशिकस्याश्रमो राजन्क्रोशमात्रे युधिष्ठिर ॥ [4975]
पुरा राजर्षिमुख्यश्च सेवितो ब्रह्मवादिभिः ।
चचार तप उग्रं तु कौशिको मुनिसत्तमः ॥
तत्र दीर्घशिला नाम रमणीया पवित्रदा ।
तत्र दानं जपं स्नानं कृतं कोटिगुणं भवेत् ॥
स्नानं प्रकुर्वतस्तत्र सदा तु जपशीलिनः । [4980]
भवन्ति संपदस्तस्य यस्य कस्यापि च प्रभो ॥
कुशलिङ्गमिति ख्यातं कौशिकेन प्रतिष्ठितम् ।
स्नात्वा तत्र महादेवं पूजयित्वा तु नित्यशः ।
स वै गोत्रऋषिर्लोके पूजितोऽभूद्द्विजन्मभिः ॥
वसिष्ठस्याश्रमं पश्चात्तस्याश्रमसमीपतः । [4985]
कुण्डिनो नाम विप्रेन्द्रश्चचार तप उत्तमम् ॥
तपसा तोषितो रुद्रो वृषमारुह्य सत्वरम् ।
तत्र गत्वा भूतगणैः शास्त्रं तस्योपदिष्टवान् ॥
तव गोत्रऋषिर्ब्रह्मन्ख्यातिमत्र गमिष्यसि ।
इत्युक्त्वान्तर्दधे देवः स विप्रो विस्मयं गतः ॥ [4990]
नन्दिवाहननाम्ना वै प्रतिष्ठाप्य महेश्वरम् ।
सिद्धोऽभूद्ब्राह्मणश्रेष्ठः कावेर्यां स्नानवैभवात् ॥
नन्दिवाहनलिङ्गस्य कृपया तीरवासिनाम् ।
कुशनाभस्य लिङ्गस्य तथा संवर्तकस्य च ।
स्नातानां तत्र वै काले सर्वसंपद्भविष्यति ॥ [4995]
इत्युक्त्वा देवता सोमः स्नाति नित्यं तु भक्तितः ।
संवर्तकस्य लिङ्गस्य पुरस्तात्पनसाश्रमे ॥
तत्र राजा हरिश्चन्द्रः सुरलोकस्य काङ्क्षया ।
राजसूयशतं चक्रे वसिष्ठमुनिनेरितः ॥
चक्रुश्च विविधान्यज्ञानृषयो ब्राह्मणोत्तमाः । [5000]
महाध्वरविदो विप्राः कावेर्यां स्नानतत्पराः ।
तोषयित्वा यज्ञपतिं सुरलोकं प्रपेदिरे ॥
कृतवीर्यकुमारश्च कार्तवीर्यो महामतिः ।
भौमस्याश्रममासाद्य पनसाख्यमिति श्रुतम् ।
राजसूयशतं कृत्वा मुख्योऽभूच्चक्रवर्तिनाम् ॥ [5005]
भूसुतस्तत्र तपसा यज्ञैर्विविधदक्षिणैः ।
आदावाराध्य धातारं ग्रहाणामग्रगोऽभवत् ॥
पुरस्तादस्ति कावेर्या विश्वेश्वर उमापतिः ।
बोधायनो मुनिस्तत्र तपः कुर्वन्महामतिः ॥
आराध्य तं भूतपतिं भूतेशं भक्तवत्सलम् । [5010]
आप्तवान्सर्वशास्त्राणि वेदार्थांश्च महामतिः ॥
सर्वेषां सूत्रकर्तॄणामग्रणीर्मुनिसत्तमः ।
चकार सूत्रं मतिमाञ्श्रौतस्मार्तविदां वरः ।
तद्धि विश्वेश्वरस्थानमद्यापि परिदृश्यते ॥
वटवृक्षोत्तरे भागे सर्वपुण्यफलप्रदः । [5015]
निर्मितस्तपसा तेन मुनिना धर्मनन्दन ॥
आग्नेय्यामरविन्दाक्ष दक्षिणे सरसस्तटे ।
विष्णुं सर्वगतं ध्यायन्नास्ते भृगुमुनीश्वरः ॥
तेनारोपितमश्वत्थं सेवन्ते स्वर्गकाङ्क्षिणः ।
तस्य मूले चिरं स्थित्वा चचार तप उत्तमम् ॥ [5020]
याज्ञवल्क्यो मुनिः पार्थ कृपया तस्य सुव्रत ।
अवाप योगसामर्थ्यमणिमादिगुणांस्तथा ॥
विश्वेश्वरं सदा ध्यायंस्तत्र योगेश्वरं विभुम् ।
वर्तते शास्त्रमार्गं च दर्शयन्ब्रह्मचारिणाम् ॥
अगस्त्यो भगवांस्तत्र लिङ्गं विश्वेश्वराख्यया । [5025]
प्रतिष्ठाप्य सदा भक्त्या भजते मुक्तिकाङ्क्षया ॥
शिवश्च रुद्रश्च हरिः स एव
ब्रह्मा च देव्यश्च दिशां पतिश्च ।
राजा च राज्यं च विराट् स एव
धनप्रदो वै लयकृत्स एव ॥ [5030]
बन्धुश्च विद्याविभवः स एव
स्वामी समस्तस्य गुरुः स एव ।
उर्वी शरच्चन्द्रदिवाकरौ च
तीर्थानि चाग्निर्वियदादिदेव ॥
नक्षत्रतारामुनयः स एव [5035]
ग्रहाः समुद्राश्च तदन्तराश्च ।
शैला द्रुमाः पार्थिव एव विष्णु-
स्तस्मात्परं नास्ति समस्तलोके ॥
तस्य विश्वेश्वरस्याहं नमस्कृत्य च तानृषीन् ।

---

line 4963. — (L 4967) G(ed) [उ]त्तरे (for °रा). — (L 4968) G(ed) अल्पतोया हि तत्रैव (for $^a$). — G2 om lines 4969$^b$–4981$^b$ — (L 4973) D1 पादपैः फलसंयुक्तैः (for $^a$) — (L. 4985) D1 G(ed) [आ]त्मजः (for [आ]श्रमं) — (L 4988) G2 ऋषि- (for भूत-) — For line 4989, M1 subst

189** तव गोत्रमिति ख्यातिं भवानत्र गमिष्यति ।

— (L 4990) G2 सोऽपि विस्मयमागतः (for $^b$). — After line 4990, G1, 2 ins :

190** किमत्र बहुनोक्तेन स्थानं विश्वेश्वरस्य तु ।
एवमन्ये महात्मानः नत्वा स्तुत्वा दिवं गताः ॥

— G2 om. lines 4991–5039 — (L 4995) G(ed.) कावेर्यां (for वै काले). — (L. 4997) M1 पुरस्ताद्ब्राह्मणोत्तमाः (for $^b$). — M1 om (hapl.) lines 4998–5000. — (L. 5006) G1 विपुल- (for विविध-) — (L. 5008) D1 G1 M1 विश्वेश्वरमरिंदमम् (for $^b$) — (L 5010) D1 भूतेशं (for विश्वेशं). — (L. 5013) D1 -विशारदः (for -विदां वरः) — (L. 5015) G(ed) तदुत्तरे वटतरुः (for $^a$). — M1 om. lines 5028–5032 — (L. 5029) D1 G1 हरिः (for विराट्). — After line 5039, G2 ins .

191** किमत्र बहुनोक्तेन स्थानं विश्वेश्वरस्य तु ।
एवमन्ये महात्मानो नत्वा स्तुत्वा दिवं गताः ।

गजारण्यस्य माहात्म्यं वक्ष्यामि कुरुनन्दन ॥ [5040]
आसीत्पुरा महीपाल ब्राह्मणो वृत्तिकर्शितः ।
सोमदत्त इति ख्यातो वसिष्ठस्य कुलोद्भवः ।
शंकरं तोषयामास तपोभिर्विविधैर्मखैः ॥
काशीक्षेत्रे महाराज देवर्षिगणसेविते ॥
स तुष्टोऽपि विरूपाक्षो देवो दिव्यपराक्रमः । [5045]
दर्शयित्वा स्वकं रूपं सस्मितं वाक्यमब्रवीत् ॥
सोमदत्त महाभाग तपसा तोषितोऽस्म्यहम् ।
क्रतुभिश्च विशेषेण भक्त्या चैव द्विजोत्तम ॥
एकमेव वरं दास्ये द्वितीयं तव न प्रभो ।
इत्युक्तो देवदेवेन शंभुना पाण्डुनन्दन । [5050]
ध्यात्वा चिरं त्रिकालज्ञो वचनं चेदमब्रवीत् ॥
अनेककोटिजन्मानि संभ्रान्तस्य च मे शिव ।
यद्गत्वा न निवर्तन्ते तद्ददस्व च मे शिव ॥
तथास्त्विति तमामन्त्र्य वचनं चेदमब्रवीत् ।
कावेरी कपिला यत्र संगता ब्राह्मणोत्तम । [5055]
पुरतः संगमस्यास्य योजनार्धेऽस्ति वै स्थलम् ।
गजारण्यमिति ख्यातिं सर्वसिद्धनिषेवितम् ॥
आश्रमं तद्यथोकस्य शान्तैर्मृगगणैर्वृतम् ।
तत्र ते भविता मुक्तिः शिष्याणामपि सत्तम ॥
अहं तत्र गमिष्यामि त्वं तु बन्धुजनैः सह । [5060]
दारिद्र्याद्दुःखितो ह्यत्र भुक्त्वा भोगान्यथेच्छया ॥
याहि पश्चाद्द्विजश्रेष्ठ तव मुक्तिर्भविष्यति ।
इत्युक्त्वान्तर्दधे देवो भूतैः सह युधिष्ठिर ॥
ब्राह्मणोऽपि कुरुश्रेष्ठ भुक्त्वा भोगाननेकशः ।
अनेकैर्द्विजमुख्यैश्च प्रतस्थे मुक्तिकाङ्क्षया ॥ [5065]
विन्ध्यं प्रयातो विप्रेन्द्रो द्विजानामग्रणीर्बली ।
मदोन्मत्तो महानागो ब्राह्मणांस्तानमर्दयत् ॥
मर्दिता ब्राह्मणाः सर्वे तद्भावेन समन्विताः ।
गजा जातिस्मरा जाताः प्रवृद्धबलदर्पिताः ॥
कृपया नीलकण्ठस्य तं देशं ते प्रपेदिरे ॥ [5070]
तत्र स्नात्वा जगन्नाथं प्रणतार्तिप्रणाशनम् ।
स्नात्वा स्नात्वा तु कावेर्यां जीवन्ति निरहंकृताः ॥
नीलकण्ठो महादेवो नन्दिमारुह्य तान्द्विजान् ।
आत्मन्यारोपयामास मुनीनां पश्यतां प्रभो ॥
सशरीरं गता सर्वे ब्राह्मणा गजरूपिणः । [5075]
तिरोऽभूत्तत्र देवेशस्तत्स्थानं दृश्यतेऽधुना ॥
तदाप्रभृति तत्क्षेत्रं गजारण्यमिति श्रुतम् ॥
लिङ्गं तत्रायुतं राजन्प्रतिष्ठाप्य नृपोत्तमा ।
आराध्य मुनिभिः सार्धं तत्पदं ते प्रपेदिरे ॥
गजारण्यस्य माहात्म्यमहं वक्तुं हि न क्षमः । [5080]
स एव भगवान्वेत्ति तत्फलं स्नानवैभवम् ॥
गजारण्यमिति क्षेत्रं दुर्लभं तु कलौ युगे ।
पुरा सचितपुण्यानामनायासेन लभ्यते ॥
य स्नाति वै त्र्यहं राजन्निगृहीताखिलेन्द्रियः ।
सर्वदानफलं तस्य सर्वक्रतुफलं भवेत् ॥ [5085]
गजारण्यस्य माहात्म्यं य पठेच्छृणुयादपि ।
सर्वान्कामानवाप्नोति स्वर्गलोके सुखी भवेत् ॥

Colophon

भीष्म उवाच ।

कावेरीमहिमा केन वर्ण्यते युगकोटिभिः ।
नारायणस्तु भगवान्वेत्ति नान्यो महीतले ॥
तीरयोरुभयो क्षेत्र मुनिना शुद्धचेतसाम् । [5090]
योजने योजनार्धे च क्रोशमात्रे तु चाश्रमः ॥
आ समुद्रात्तु सह्याद्रेर्मध्य देवैर्निषेवितम् ।
कावेरीमाश्रयन्त्यत्र सुगोचरजले शुभे ॥
सर्वलोकहितार्थाय सर्वत्र हितकारिण ।
ऋषयो मुनिविप्राश्च कावेरीं समुपासते ॥ [5095]
सर्वत्र सुलभस्थाने पुण्याश्रमसमन्विते ।
वसन्ति लोकरक्षार्थं कावेर्यां तु मुनीश्वरा ॥
दैत्यदानवरक्षांसि ह्यसुरा मृगजातिषु ।
उग्रेषु रूपमास्थाय चरन्ति सरितस्तटे ॥
मुख्यस्थानं प्रवक्ष्यामि कावेर्या मध्यवर्तिनाम् । [5100]
यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥
कावेर्याः पुण्यनद्यास्तु तीरयोरुभयोरपि ।
देवा ऋषिगणाश्चैव सिद्धाश्चारणगुह्यकाः ।
गन्धर्वा लोकपालाश्च सेवन्ते पुण्यकाङ्क्षया ॥

—(L. 5041) G1 M1 महाराज (for महीपाल). —(L. 5043) G1 तपोभिर्विनयोज्ज्वलैः (for $^{b}$). —(L. 5049) G(ed.) द्विज (for प्रभो). G2 द्वितीयं तपनप्रभ (for $^{b}$). —(L. —) G1 M1 om. line 5059 — For line 5059, G2 subst.:

192** याहि पूर्वं द्विजश्रेष्ठ ततो मुक्तिर्भविष्यति ।

—(L. 5062) G2 मम पादाम्बुजद्वयम् (for $^{b}$). —(L. 5071) D1 नत्वा तत्र; G(ed.) तत्र गत्वा (for तत्र स्नात्वा). —(L. 5074) G1 प्रवरः (for पश्यतां). —(L. 5075) D1 अशरीरा गणाः सर्वे (for $^{a}$). —(L. 5077) G(ed.) शिवलोकं (for तत्पदं ते). —(L 5084) D1 त्रिदिनं (for वै त्र्यहं). —(L. 5087) D1 M1 स्वर्लोके तु (for स्वर्गलोके). G2 कैलासे सुखमश्नुते (for $^{b}$).

Colophon — *Sub-parvan :* D1 G1 आश्रयपर्वणि शेषधर्मा; G2 M1 G(ed) शेषधर्मा. — *Adhy name* D1 नारदोपदेशः, G(ed) गजारण्यप्रशंसा — *Adhy. no. :* D1 G1 M1 38, G(ed) 39

After line 5092, D1 G1 M1 ins.:

193** मृगभूरुहपक्षीणा मूर्तिमद्भिर्नृणां क्वचित् ।
देवाः पर्वततीरेषु निर्जने तु महावने ॥

—(L. 5093) G2 कावेरीमाश्रयन्नित्यं (for $^{a}$). D1 अगोचरजने शुभे (for $^{b}$). —(L. 5097) G(ed.) राजिषु

तरुरूपधरा देवाश्चारणा पक्षिरूपिण । [5105]
ऋषयो विप्ररूपाश्च वर्तन्ते तीरमाश्रिताः ॥
शास्त्रज्ञा लोकविख्याताः सदा सत्कर्मशीलिनः ।
वेदशास्त्रसुसंपन्ना सदा ध्यानपरायणाः ।
कावेर्यां मरणं यान्ति ते गच्छन्ति हरे पदम् ॥
ये तत्र पापकर्माणश्चण्डालाद्या युधिष्ठिर । [5110]
दानवासुररक्षांसि तान्विद्धि भरतर्षभ ॥
पापानां लयहेतोऽस्तु सदा क्रीडन्ति राक्षसाः ।
तत्कलेवरमुत्सृज्य प्रयान्ति ब्रह्मण पदम् ॥
त्रिरात्रं जाह्नवितीरे पञ्चरात्रं तु यामुने ।
सद्यः पुनाति कावेरी पापमामरणान्तिकम् ॥ [5115]
गौतम्या सप्तरात्रं तु नर्मदाया चतुर्दिनम् ।
तुङ्गायां दशरात्रं तु हेमकूटे दशाधिकम् ॥
तुलामासे तु संप्राप्ते गङ्गाद्याः सकलापगा ।
स्नातुमायान्ति ताः सर्वा ह्यात्मदोषजिगीषया ॥
गजारण्यपुरोभागे कावेर्या योजनद्वये । [5120]
भीमेश्वरेति विख्याते सर्वसिद्धनिषेविते ॥
प्रसन्नसलिला देवी कावेरी पादपैर्वृता ।
भीमरूपी शिव साक्षात्तत्र तिष्ठति भूमिप ॥
पुरा वै कलिदोषेण नळः परमदारुणः ।
अज्ञातवासमावेदे कान्तिनिर्यासकारणात् ॥ [5125]
श्वशुरस्तस्य विख्यातो भीमराजो महामतिः ।
लब्धुं कन्यां नळं शंभुं तत्र चाराधयत्प्रभुम् ॥
नीलकण्ठप्रसादेन कावेर्या स्नानवैभवात् ।
शुद्धात्मा स्तोत्रमकरोच्छंकरं प्रति धर्मज ॥
नीलकण्ठविरूपाक्ष विश्वेशाय च शूलिने । [5130]
सदाशिवाय लोकानामीश्वराय नमो नमः ॥
मृत्युंजय सदानन्द नन्दिवाहन विश्वदृक् ।
मनोभवहरायेति सर्वज्ञाय नमो नमः ॥
भस्मोद्धूलितसर्वाङ्ग नागचर्मधराय च ।
नागभूषण लोकेश शंकराय नमो नमः ॥ [5135]
कैलासवासनिलय पार्वतीवल्लभ प्रभो ।
त्रिपुरान्तक भूतात्मन्गङ्गाधर नमोऽस्तु ते ॥
त्रिशूलपाणिने तुभ्यं कपालाभरणाय च ।
गिरीश गिरिजानाथ मृत्युंजय नमोऽस्तु ते ।
त्वमेव गतिरस्माकं पाहि पाहि जगत्पते ॥ [5140]
इति स्तुतो जगन्नाथो भीमराजेन शंकर ।
अष्टमूर्तिधरो भूत्वा राजानमिदमब्रवीत् ॥
अभीष्टसिद्धिर्भविता जामाता च तवात्मजा ।
आगमिष्यन्ति भद्रं ते तनुजा पतिमेष्यति ।
तव नाम्ना भवेल्लिङ्गमत्र वै ख्यातिमेष्यति ॥ [5145]
नामसंकीर्तनं मेऽद्य त्वया कृतमरिंदम ।
यः पठेत्सततं भक्त्या मम लोको भविष्यति ॥
भीमेश्वरमिदं स्थानं कावेर्या मध्यमं शुभम् ।
सर्वपापप्रशमन भुक्तिमुक्तिफलप्रदम् ।
अत्र स्नाताः पापिनोऽपि पितृमातृकुलानि च । [5150]
सहस्राणि समुद्धृत्य ब्रह्मलोकं प्रयान्ति वै ॥
दानं श्राद्धं तथा होमं जपं स्नानमकल्मषम् ।
य कुर्यात्पितरस्तस्य प्रविशन्ति त्रिविष्टपम् ॥
अद्य नो भविता मुक्तिरद्य नो वैष्णवं पदम् ।
भविता नः पदं शंभोर्ब्रह्मणो मरुतां पतेः ॥ [5155]
हृष्यन्त्येवं पितृगणा देवगन्धर्वकोटिभिः ।
पुण्यलोकान्प्रयान्त्येव सेविताः पितरोऽमला ॥
अत्र स्नातं नर दृष्ट्वा पापिनो वा नरेश्वर ।
पुनीता स्वर्गमायान्ति सेवितं पुण्यकर्मभिः ॥
अत्र भूतगणान्विद्धि भूरुहान्वेणुकीचकान् । [5160]
ये च कण्ठकिनो वृक्षाः पिशाचान्विद्धि पाण्डव ॥
अहमत्र चिर स्थित्वा गतानामत्र कर्मिणाम् ।
क्षयं करोमि पापानां पुण्यलोकं ददामि च ॥
अत्र स्नात्वा च मां दृष्ट्वा कावेरीमध्यवर्तिनम् ।
नत्वा दिवं नरो याति मम लोकं च शाश्वतम् ॥ [5165]
इत्युक्त्वान्तर्दधे देवो भूतैः सह सदाशिवः ।
भीमराजो महातेजा विस्मयं परमं गतः ॥
प्रणिपत्य जगन्नाथ मनसा च पुनः पुनः ।
प्रययौ नगरं पार्थ पुण्यं मित्रनिषेवितम् ॥
अत्राद्भुततमं दृष्ट्वा शंकरं लोकशंकरम् । [5170]
भृगुस्तत्र समासीनो जपन्नास्ते स्म वै मुनिः ॥
कदा पश्यामि देवेशं कदा तं नौमि निर्गुणम् ।
कदा मे जन्मसाफल्यं भविता शाश्वतं तपः ॥
इत्युक्त्वा स्नाप्य सलिलैः स्वयं स्नात्वा सदाशिवम् ।

---

(for जातिषु). —(L 5104) G(ed) मोक्ष- (for पुण्य-). G2 वसन्ते मुक्तिकाङ्क्षया (for ᵇ) — G2 om. lines 5105ᵇ–5108ᵃ —(L 5116) M1 गोदावर्यां; G(ed.) कृष्णवेण्यां (for नर्मदाया) D1 कृष्णाया तु दिनत्रयम् (for ᵇ). —(L. 5122) D1 -कमला (for -सलिला). —(L 5126) M1 महाद्युति- (for °मति) — Before line 5130, D1 ins. भीमराजोवाच M1 om lines 5132–5134. —(L. 5134) G1 नागचर्मधराव्यय (for ᵇ) — M1 om. lines 5136–5137 —(L. 5134) D1 -निरत (for -निलय).— D1 om. lines 5138–5139. —(L. 5140) G1, 2 देवदेव सदाशिव (for ᵇ) —(L 5141) G1 G(ed.) जगन्नाथ (for भूतनाथो) — D1 om lines 5142–5143. —(L. 5148) D1 इति ख्यातं; G2 इदं लिङ्गं (for इदं स्थानं). — After line 5148ᵃ, G2 ins.:

194** नत्वा स्नात्वा समाहितः ।
मम सायुज्यमाप्नोति सत्य सत्यं वदाम्यहम् ॥

— G2 om. lines 5148ᵇ–5165ᵃ. —(L 5152) D1 आद्यम् (for स्नानम्) —(L. 5153) M1 प्रशंसन्ति त्रिविष्टपे (for ᵇ). —(L 5155) M1 भवितव्य शुभं शंभोः (for ᵃ). —(L. 5162) D1 अपामत्र चिर पीत्वा (for ᵃ). — G2 om. lines

रुद्रसूक्तमहामन्त्रैस्तोषयामास शंकरम् ॥ [5175]
वैशंपायन उवाच ।
तस्मिन्नवसरे राजन्नलो नाम महामति ।
कलिना पीडित सम्यगाययौ भीमसंनिधिम् ॥
स्नात्वा नत्वा च कावेर्यां भीमनाथं तु शूलिनम् ।
जपं प्रदक्षिणं कुर्वन्संददर्श च भार्गवम् ॥
प्रणिपत्य मुनिश्रेष्ठं त्रिकालज्ञमकल्मषम् । [5180]
निवेदयामास मुने कलिबाधां सुदुःसहाम् ॥
ज्ञात्वा तदद्भुतं रूपमीदृशं घोरदर्शनम् ॥
प्रोवाच कृपया विद्वांस्तैषधं प्रति धर्मवित् ॥
राजंस्त्वेदृशं रूप कुत्सितं लोकनिन्दितम् ।
भीमेश्वरस्य कृपया स्वच्छतामेष्यति ध्रुवम् ॥ [5185]
तपसा भीमराजस्य कृपया शूलिनः प्रभोः ।
जगन्मोहनकं रूपमचिरात्त्वं समेष्यसि ॥
लोकेषु पञ्च विख्यातं सद्यः कलिमलापहम् ।
काशीभीमेश्वरमिदं तच्च पुष्करिणीत्रयम् ॥
अत्र त्वं कृतकृत्योऽसि पापैरद्य विमोचित । [5190]
नत्वा देवं विरूपाक्षं त्रिकाल स्नानमाचर ॥
ऋतुपर्णो महाराज स्नात्वात्र सुचिरं नृप ।
कृपया नीलकण्ठस्य कलिदोषहरोऽभवत् ॥
तक्षकस्य कुले जातः कार्कोटक इति श्रुतः ।
शाकल्यस्य तु शापेन महानजगरोऽभवत् ॥ [5195]
प्रापितो दैवयोगेन भीमनाथस्य संनिधिम् ।
स्नात्वा तल्लिङ्गमचलं नत्वा नत्वा तु वेष्टते ॥
अतिक्रूरतरं रूपं विहाय कृपया नृप ।
भूषणत्वमवाप्नोत्सु सर्वं च कलिदोषहा ॥
तवाङ्गस्पर्शनाद्देवी भैमी सुरसुतोपमा । [5200]
कलिदोषहरा ख्याता भविष्यति न संशयः ॥
कर्कोटकस्य नागस्य दमयन्त्या नळस्य च ।
ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ॥
स्नात्वा संपूज्य विधिवद्भीमेशमघनाशनम् ।
ऋतुपर्णपुरं गच्छ तेन स्वस्थानमेष्यसि ॥ [5205]
भीष्म उवाच ।
इत्युक्तो मुनिना तेन नळो वै गतकल्मषः ।
स्थित्वा तु कतिचित्कालं तेन सार्धं युधिष्ठिर ।
स्वस्थानं प्राप्य धर्मात्मा भैम्या सह ननन्द ह ॥
त्वं च गच्छ महाराज पूजयित्वा महेश्वरम् ।
अचिरात्प्राप्यसे स्थान मनसा यद्यदिच्छसि । [5210]

Colophon

वैशंपायन उवाच ।
श्रुत्वा राजा महातेजा कावेर्याः स्नानवैभवम् ।
चन्द्रपुष्करिणीस्नानात्फलं पप्रच्छ धर्मजः ॥
युधिष्ठिर उवाच ।
चन्द्रपुष्करिणीस्नानं कुर्वतां किं फलं प्रभो ।
कावेर्यां रङ्गनाथस्य दर्शने किं फल भवेत् ॥
चकार वासं लोकानामीश्वरः प्रभवोऽव्ययः । [5215]
नारायणो जगद्योनिर्भक्ताधीनो जगन्मयः ।
दर्शनं यत्फलं ब्रूहि पितामह महामते ॥
किमर्थं वासमकरोज्जगदानन्दकारणम् ।
एतानन्यांश्च गाङ्गेय विस्तराद्वक्तुमर्हसि ॥
भीष्म उवाच ।
चन्द्रपुष्करिणीक्षेत्रं क्षेत्राणामुत्तमं विदुः । [5220]
योगीश्वरो हरि. साक्षाद्यस्मात्प्रत्यक्षतां गतः ॥
तस्य विष्णोः प्रसन्नस्य महिमानं तु यो नरः ।
कीर्तयेत्सकलान्वंशानुद्धरिष्यति स द्रुतम् ॥
चन्द्रपुष्करिणीस्नानं रङ्गमण्डपदर्शनम् ।
मानुष्यं जन्म राजेन्द्र दुर्लभ तु कलौ त्रयम् ॥ [5225]
मनुष्यजन्म संप्राप्य रङ्गेशं ये नमन्ति नो ।
जायन्ते मरणायैव ते नरा पापकर्मिणः ॥
चन्द्रपुष्करिणीं गत्वा य स्नाति प्रयतेन्द्रियः ।
रङ्गेश्वरं नमस्कृत्वा स विष्णुपदमश्नुते ॥

5170–5175 — (L. 5171) D1 M1 महेश्वरम् (for स्म वै मुनिः). — (L. 5174) D1 G M1 पुरा शिवम् (for सदाशिवम्). — G2 om the ref. — (L. 5176) G1 महाद्युतिः, M1 महीपतिः (for महामतिः). — (L. 5178) M1 स्नानं कृत्वा (for स्नात्वा नत्वा) — (L. 5181) G2 दुरत्ययाम् M1 दुरुत्सहाम् (for सुदुःसहाम्). — Before line 5184, G(ed.) ins. भार्गवः. — (L. 5184) G2 कुत्सित घोरदर्शनम् (for [5]). — (L. 5185) G2 स्वच्छन्दमेति च ध्रुवम् (for [5]). — (L. 5192) D1 स्नात्वात्र शुचिरेव च (for [5]). — (L. 5199) G1 -दोषजम्; M1 दोषहम् (for °हा).

. Colophon. — *Sub-parvan:* D1 आश्चर्यपर्वणि शेषधर्माः. G1, 2 M1 G(ed.) शेषधर्मा . — *Adhy name*. D1 भीमेश्वरमहिमावर्णनम्; G1 भीमेश्वरमाहात्म्यम्, G(ed.) भीमेश्वरप्रशंसा — *Adhy. no.:* D1 G1, 2 M1 39, G(ed.) 40.

— (L. 5213) G2 कावेरीरङ्गनाथयोः (for [5]) — G2 om. lines 5214–5216 — (L 5216) D1 महामुनिः, G1 M1 मुनेर्मुनि (for जगन्मयः) G2 किमर्थमकरोद्व्यास (for [*]). — G2 om line 5219 — (L 5220) G2 क्षेत्राणामुत्तमोत्तमम् (for [5]), — G2 om lines 5222–5223 — (L 5222) D1 M1 निश्चितम् (for स द्रुतम्). —(L 5224) M1 -मन्दिर-; G(ed) -नाथस्य (for -मण्डप-) — G1 om lines 5225–5227. — (L. 5227) G2 जायन्ते च म्रियन्ते च (for [*]) G(ed.) -कारिण (for -कर्मिण) D1 G1 M1 G(ed) रङ्गेश्वरं तत्र नत्वा (for [*]). — After line 5229, G2 ins

195** चन्द्रपुष्करिणीतीरे देवर्षिपितृमानवा ।
स्व स्व काममभीप्सन्तो वसन्ति पितर सदा ॥
अत्र वक्ष्ये महापुण्यमादितेश्चरित महत् ।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते मानवो भुवि ॥

चन्द्रपुष्करिणीस्नानं कुर्वन्ति ह्यनिशं नराः । [5230]
गन्धर्वा लोकपालाश्च मुनयस्त्वृषयस्तथा ॥
सिद्धाश्च वसवश्चैव चन्द्रादित्यमरुद्गणाः ।
अणिमादिगुणैर्युक्ता ये चान्ये तत्त्वदर्शिन ॥
वसन्ति ह्यनिशं पार्थ ब्रह्मरूपाः सुरोत्तमाः ।
मुक्तिकामा महाराज केचिद्वै भोगकामिन· । [5235]
केचिद्वैराग्यकामाश्च वर्तन्ते भूमिलिप्सवः ।
अस्य क्षेत्रस्य माहात्म्य वक्ष्यामि कुरुपुंगव ।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र सशयः ॥
शृणु राजन्पुरा तत्र ह्याश्चर्यं पुण्यवर्धनम् ।
अतिलेश्चरितं साक्षान्नारदेन प्रभाषितम् ॥ [5240]
अदिति' पुत्रकामा तु कश्यपस्य प्रिया सती ।
धर्मिष्ठा लोकविख्याता तपश्चक्रे चिरं नृप ॥
चन्द्रपुष्करिणीतीरे ह्यनन्तमपराजितम् ।
ध्यायन्ती लोकमाता सा लोकानां हितकाम्यया ॥
अयुतत्रयमब्दाना कुर्वती तप उत्तमम् । [5245]
तत्रास्ते देवकल्याणी चन्द्रपुष्करिणीतटे ॥
विज्ञाय चरित तस्या देवदेवो जनार्दनः ।
आययौ गरुडारूढो यत्रास्ते देववल्लभा ॥
पीताम्बरधर श्रीमान्दिव्यमालाविभूषितः ।
स्वरूपं दर्शयामास योगिनामपि दुर्लभम् ॥ [5250]
स्पृशन्करेण पुण्याङ्गी बोधयित्वा पुन पुनः ।
सस्मितं वचनं चेदमुवाच मधुरं तदा ॥
किमर्थं देवि कल्याणि करोषि तप उत्तमम् ।
तुष्टोऽस्मि तपसा तेन किं ददामि तवानघे ॥

भीष्म उवाच ।

अदितिर्देवमाता सा देवदेवेन चक्रिणा । [5255]
स्पृष्टा परमकल्याणी ह्युक्ता वचनमब्रवीत् ॥

अदितिरुवाच ।

देवदेवारविन्दाक्ष पुराणपुरुषोत्तम ।
पाहि मां सर्वलोकेश भक्तानामभयंकर ॥
लक्ष्मीपते नमस्तुभ्यं निःस्पृहाय नमो नमः ।
ब्रह्मणे विष्णुरूपाय रुद्ररूपाय चक्रिणे । [5260]
आदित्याग्निस्वरूपाय चन्द्रकान्ताय ते नम. ॥
भूधराय सुवर्णाय मेरुमूर्ध्नि स्थिताय च ।
रजताद्रिनिवासाय सदा सागरवासिने ।
चन्द्रपुष्करिणीनाथ पाहि मां भक्तवत्सल ॥
इति स्तुतो देवमात्रा देवयोनिरतीन्द्रियः । [5265]
भगवान्पुण्डरीकाक्षः प्रसन्नो वाक्यमब्रवीत् ॥
स्तोत्रेण तपसानेन तुष्टो दक्षसुते शुभे ।
वरं वृणीष्व भद्रं ते वरदोऽहमिहागतः ॥
त्वया कृतमिदं स्तोत्र शृण्वतां वदतामपि ।
चन्द्रपुष्करिणीस्नानाद्यत्फलं तद्भविष्यति ॥ [5270]

अदितिरुवाच ।

पुत्रं मे त्वादृशं देहि दैत्यानां विजयक्षमम् ।
पुरंदरस्य पुत्रस्य स्वर्गं दास्यसि मेऽनघ ॥
त्रैलोक्यसंपदं देहि दैत्यानेतानध कुरु ।
एतान्सर्वान्ममानन्त तव दास्यं सुरेश्वर ॥
दातुमर्हसि भूतेश भूयो भूयो नमोऽस्तु ते ॥ [5275]
संप्रार्थितो देवमात्रा भगवान्मधुसूदन· ।
क्षणं ध्यात्वा दक्षसुतामाह लोकेश्वरो हरिः ॥
स्वपुत्रमसुरं जेतुं शक्तं ते लोकवन्दिते ।
न तं पश्यामि लोकेऽस्मिन्मामन्यत्र मनस्विनि ॥
तस्मात्तवाहं पुत्रत्वं यतिष्ये गन्तुमव्यय । [5280]
अत्रैव मे चिरं वासो भविष्यति न संशयः ॥
स्थितानामत्र कैवल्यं दिनमेकमपि क्वचित् ।
भविष्यतीति तामुक्त्वा तत्रैवान्तरधीयत ॥
देवमाता ततो देवी सती कश्यपवल्लभा ।
नत्वा हरिं जगद्योनिं स्वाश्रमं प्रययौ नृप ॥ [5285]
निवेद्य वृत्तं स्वं भर्तुं सुषुवे लोकनायकम् ।
शङ्खचक्रधरं देवं वनमालाविभूषितम् ॥
चतुर्भुजमुदाराङ्गं कोटिसूर्यसमप्रभम् ।
चन्द्रादित्यदृशं देवं वामनं जगतां पतिम् ।
वेदराशिं विशालाक्षं चन्द्रकोटिसुशीतकम् ॥ [5290]
तं दृष्ट्वा कश्यपो विष्णुं स्तुत्वा नत्वा पुनः पुनः ।
अब्रवीन्मधुरं वाक्यं कृताञ्जलिपुटो नृप ॥
देवदेव जगन्नाथ प्रणतार्तिप्रणाशन ।
पाहि देवान्समस्तांस्त्वं त्वत्पादकमलाश्रयान् ॥

भीष्म उवाच ।

प्रार्थितो देवमात्रा च विश्वयोनिर्बलेर्मखम् । [5295]
गत्वा यज्ञफलं तस्य दत्त्वा वचनमब्रवीत् ॥
कैवल्यं तव दास्यामि ह्यागच्छागच्छ सुव्रत ।

---

—( L. 5232 ) D1 ऋषयो , G1 M1 मनवो ( for सिद्धाश्च ). —( L. 5239 ) D1 -वृत्त ( for तत्र ) —( L 5248 ) G(ed) यत्रास्तेऽदितिरुत्तमा ( for [b] ) — G2 G(ed) om the ref. —( L. 5256 ) D1 दृष्ट्वा , G1 सृष्टा , G2 इष्टा , M1 दृष्टा ( for स्पृष्टा ) — G1 M1 G(ed) om the ref G1 om. lines 5261-5264 —( L 5265 ) G2 अरिंदम ( for अतीन्द्रिय· ). —( L 5267 ) G2 उग्रेण ( for स्तोत्रेण ) — G2 om lines 5269-5270. —( L. 5271 ) D1 M1 विजये , G2 निधने ( for विजय- ). —( L. 5272 ) G(ed.) अर्थदातारमञ्जसा ( for [b] ).

—( L 5280 ) G2 गमिष्यामि सुशोभने ( for [b] ). — After line 5280, G2 ins .

196** अत्रैव कुरु वासस्य इत्युक्त्वान्तर्दधे हरिः ॥
देवी स्वमाश्रमं प्राप्य भर्तुर्वृत्तं निवेदयत् ।
कालेन सुषुवे देवं शङ्खचक्रगदाधरम् ॥

— G2 om lines 5282-5290 —( L 5287 ) D1 -गदायुक्तं ( for धरं देव ) —( L. 5291 ) G2 नमस्कृत्वा ( for स्तुत्वा नत्वा ). — After line 5292, G2 ins. :

197** कृष्ण कृष्ण जगन्नाथ त्वद्भक्तान्पाहि सुव्रत ।

मम सेवापरो नित्यं मम ध्यानपरायणः ॥
चन्द्रपुष्करिणीतीरे मामर्चय सदानघ ।
आसुरं भावमुत्सृज्य ब्राह्मणी तनुमाश्रितः । [5300]
मम पूजां सदा कुर्वन्परं श्रेयो गमिष्यसि ॥
दिव्य ददामि ते चक्षुर्मम रूपमनुत्तमम् ।
पश्य पश्येति तं चोक्त्वा दर्शयामास भैरवम् ॥
ब्रह्माण्डकटहं यावत्पूरित तन्नृपोत्तम ।
तावत्कृत्वा स्तुतो देवैर्मानुष्यं रूपमाश्रितः ॥ [5305]
इक्ष्वाकुपूजितो देवो जगद्रूपी सुरेश्वरः ।
चन्द्रपुष्करिणीतीरं गन्तुं समुपचक्रमे ॥
पौलस्त्यकुलसंजातो बली दैत्यपतिर्नृप ।
विभीषणोऽभूद्धर्मात्मा भक्तानामग्रग प्रभु ॥
विष्णुर्नृणा स्वभक्तानामपवर्गप्रदो विभु । [5310]
संप्रार्थितो देवगणैर्भूत्वा रघुकुलोत्तम ।
विनिहत्य दशग्रीवमयोध्यां प्राप धर्मवित् ॥
श्रीरामचन्द्रो भगवान्सीतया लक्ष्मणेन च ।
सुग्रीवप्रमुखैर्वीरैर्वानरै स्वपुरं ययौ ॥
तत्राहूय रघुश्रेष्ठो विभीषणमरिंदमम् । [5315]
ददौ पूजा स इक्ष्वाको हरेरंशात्तु मुक्तिदाम् ॥
सोऽपि पूजां समादाय गच्छंस्तस्मै प्रणम्य च ।
चन्द्रपुष्करिणीतीरं प्राप्तवान्धर्मनन्दन ॥
तत्र शङ्कानिवृत्त्यर्थं तं देव तु शुभे तटे ।
निक्षिप्याचम्य वै गन्तुं शुद्धात्मा ह्यन्वियेष स ॥ [5320]
तमुत्थापयितुं गृह्य न शशाक विभीषण ।
पुन पुनस्तमालिङ्ग्य श्रममाप विभीषणः ॥
तस्मिंश्चिन्ताकुले नाथो देवदेवो विभीषणे ।
अदृश्यखेचरो भूत्वा तमाहूयेदमब्रवीत् ॥
विभीषण महाभाग शृणु मे परमं वच । [5325]
अत्र मेऽस्तु वने वासः कावेर्या परिवेष्टिते ॥
रक्षोभिर्दूषितं देशं नाहं गच्छामि सुव्रत ॥
अत्रैवागत्य मां नित्यमर्चयित्वा विभीषण ।
षण्मासे वापि पौलस्त्य प्रत्यब्दमथ वा कुरु ।
अस्मिञ्जन्मनि ते मुक्तिर्भविष्यति न संशयः ॥ [5330]
रङ्गस्थानमिदं विद्धि भुक्तिमुक्तिफलप्रदम् ।
अस्य क्षेत्रस्य सदृशं पृथिव्यां नास्ति किंचन ॥
इत्युक्त्वा भगवा राजन्रङ्गस्थानं प्रविश्य च ।
श्रीरङ्गशायी भगवानत्रास्ते कमलापतिः ॥
अथ पूजा प्रयत्नेन कृत्वा तं प्रणिपत्य च । [5335]
ययौ लङ्कां स पापिष्ठैर्विहीनां समलंकृताम् ॥
तदाप्रभृति देवाश्च देवमाता युधिष्ठिर ।
पूजां कुर्वन्ति यत्नेन रङ्गेशं मुक्तिकाङ्क्षया ॥
रङ्गमित्यब्रवीद्धीमान्यो वा को वा नृपोत्तम ।
मुच्यते सर्वपापेभ्यो विष्णुलोकं भजेद्ध्रुवम् ॥ [5340]
रङ्गं रङ्गमिति ब्रूयात्संप्राप्ते पापकर्मणि ।
दूरे तिष्ठन्ति पापौघा यद्येवं समुदीरयेत् ॥
चन्द्रपुष्करिणीस्नानं रङ्गमण्डपदर्शनम् ।
पुरा सचितपुण्यानामप्रयत्नेन लभ्यते ॥
ब्रह्मादय. सुराः सर्वे योगिन सनकादयः । [5345]
पूजां कुर्वन्ति यत्नेन प्रत्यब्दं पाण्डुनन्दन ॥
संसारसागरं तर्तुं य इच्छेत्पाण्डुनन्दन ।
स भजेद्रङ्गमध्यस्थं देवदेवं चतुर्भुजम् ॥
दृष्ट स्मृत पूजितो वा ध्यातो वा नमितोऽपि वा ।
तमुद्धरति रङ्गेशो दुस्तराद्भवसागरात् ॥ [5350]
रङ्गभक्तिपरा ये तु रङ्गनामपरास्तु ये ।
दुर्वृत्ता वा सुवृत्ता वा तेषा मुक्तिर्भविष्यति ॥
य इदं पुण्यमाख्यान शृणोति सततं नरः ।
रङ्गेशे विद्यते भक्ति पातकै स न लिप्यते ॥

Colophon

युधिष्ठिर उवाच ।

चन्द्रपुष्करिणी ह्येषा केनादौ सेवितानघ । [5355]
तन्मे कथय तत्त्वेन गङ्गासुत नमोऽस्तु ते ॥

भीष्म उवाच ।

चन्द्रपुष्करिणीस्नानं रङ्गेशस्य च दर्शनम् ।
दम्भाल्लोभाद्वञ्चनाद्वा यः करोति स मुक्तिमान् ॥
ते वन्द्यास्ते प्रपूज्याश्च नमस्कार्या विशेषत ।
येऽर्चयन्ति च रङ्गेशं प्रणतार्तिप्रणाशनम् ॥ [5360]

---

— ( L. 5294 ) $D_1$ त्वत्पादकमलाश्रितान् ( for $^b$ ). — $G_2$ om line 5296 — ( L. 5298 ) $D_1$ $M_1$ मदर्चन- ( for मम ध्यान- ) $G_2$ मदर्चनपरायणम् ( for $^b$ ). — $G_2$ om lines 5300–5301 — ( L. 5300 ) G(ed.) आसुरीं तनुमुत्सृज्य ( for $^a$ ) — After line 5302, $G_2$ ins .

198** बलिं बध्वा महातेजा वैकुण्ठं संप्रपद्यत ॥
पुरा दाशरथिः श्रीमान्हत्वा रावणमाहवे ।
चन्द्रपुष्करिणी स्नात्वा अयोध्यां पुनराप ह ॥

— $G_2$ om. lines 5303–5342 — ( L 5306 ) $M_1$ महेश्वर ( for सुरे° ) — ( L. 5321 ) $D_1$ उत्थापयाति तं गृह्य ( for $^a$ ) —Before line 5324, $M_1$ ins. श्रीभगवानुवाच.— ( L. 5325 ) $M_1$ शृणु मे वचनं परम् ( for $^b$ ). — ( L 5333 ) $G_1$ $M_1$ इत्युक्त्वा देवमार्गे तु ( for $^a$ ) — ( L. 5340 ) $G_1$ स गच्छति ( for भजेद् ध्रुवम् ) — ( L 5341 ) $G_1$ रङ्गरङ्गेति यो ब्रूयात् ( for $^a$ ). — ( L 5342 ) $M_1$ यदेव समुदीरयन् ( for $^a$ ). — For line 5342, $D_1$ subst.

199** दूरे तिष्ठति पापौघो यद्येव समुदीर्यते ।

— $G_2$ om lines 5345–5360 — ( L 5354 ) G(ed ) जायते ( for विद्यते ) $D_1$ पातकैस्तु न विद्यते ( for $^b$ )

COLOPHON — *Sub-parvan* $D_1G_{1,2}$ $M_1$ G(ed.) शेषधर्मा — *Adhy name*. $D_1$ $M_1$ G(ed) श्रीरङ्गमाहात्म्यम् $G_1$ रङ्गेशमाहात्म्यम्, — *Adhy no.*. $D_1$ $G_{1,2}$ $M_1$ 40;

स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
चन्द्रपुष्करिणीस्नानं यः करोति नराधिप ॥
तीर्थस्नानतपोभिश्च व्रतदानमखैरपि ।
यजन्ति कर्मयोगेन रङ्गेशं मुक्तिदं विभुम् ॥
शान्ता जितारिषड्वर्गा योगेनाप्यनहंकृता । [5365]
यजन्ति ज्ञानयोगेन रङ्गेशं मनुजेश्वर ॥
दुर्वृत्तानां भवेन्मोक्षः सुवृत्तानां किमुच्यते ।
रङ्गभूमिगतानां च सर्वेषां च नृपोत्तम ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
शृण्वतां वदतां चैव सर्वपातकनाशनम् ॥ [5370]
आसीत्पुरा महीपालः सोमवंशसमुद्भवः ।
धर्मकेतुरिति ख्यातो नारायणपरायणः ॥
चन्द्रपुष्करिणीतीरे देवेशं पूज्य भक्तितः ।
अकरोद्यज्ञसा[illegible]ं मातापित्रोश्च पूजनम् ।
हेमवस्त्रान्नदानानि गोभूतिलवराणि च ॥ [5375]
तेन पुण्यप्रभावेन सर्वैर्बन्धुजनैः सह ।
प्राप्तवान्वैष्णवं लोकं योगिनामपि दुर्लभम् ॥
तस्मिन्काले महाभाग ब्राह्मणो यज्ञवत्सलः ।
वेदवेदाङ्गतत्त्वज्ञस्तथा वै ग्रामयाजकः ॥
अयाज्ययाजकश्चैव धनार्जनपरः सदा । [5380]
पिशुनो निष्ठुरः क्रूरो ह्यपण्यानां च विक्रयी ।
निषिद्धकर्माचरणात्परित्यक्तश्च बन्धुभिः ।
कृषिको दुःखितो दीनो हीनाङ्गो व्याधिपीडितः ॥
स कदाचिद्धनार्थं तु पृथिव्यां पर्यटन्नृप ।
जगाम नर्मदातीरं श्वासकासप्रपीडितः । [5385]
तत्र पञ्चत्वमापन्नो न लेभे चौर्ध्वदेहिकम् ॥
तस्मिन्गते तस्य भार्या सुरूपा च सुयौवना ।
कामचाररता भूत्वा परित्यक्ता च बन्धुभिः ॥
तस्यां जातो महाराज चण्डालात्तु नराधमः ।
पापबुद्धिरिति ख्यातो जन्तूनामन्तकोपमः ॥ [5390]

महापापरतो नित्यं ब्रह्मद्वेषपरस्तथा ।
परदारपरद्रव्यलोलुपो बन्धुवर्जितः ॥
गावश्च बहवो नित्यं निहत्य बहुपक्षिणः ।
चतुर्लक्षसुवर्णानि बहून्यपहृतानि च ।
मद्यमांसरतो नित्यं बहुशो मार्गरोधकृत् ॥ [5395]
स कदाचिद्धनार्थं तु पृथिव्यां सचरन्नृप ।
कावेरीमध्यगां देवीं चन्द्रपुष्करिणीं गतः ॥
छादितं हेमकलशैर्दिव्यालंकारशोभितम् ।
रङ्गेशस्य निवासं तु दृष्ट्वान्निशि धर्मज ॥
त दृष्ट्वा मुदमापन्नश्चोराणामधिपो नृप । [5400]
हराम्यत्र सुवर्णानि बहूनीति मुदं ययौ ॥
स्नात्वा तत्र महाराज नत्वा तं भक्तिमानिव ।
विलोक्य बहुधा रत्नकाञ्चनानि बहूनि च ।
अपहर्तुमना रात्रौ वासं तत्राकरोन्नृप ॥
एतस्मिन्नन्तरे देवी कावेरी पापनाशिनी । [5405]
जलौघैः प्लावयामास निशि चोरांस्तटे स्थितान् ।
चौरैः सह स्वकैः सोऽपि पापबुद्धिर्लयं गतः ॥
तस्मिन्नवसरे देवा विमानानां सहस्रकम् ।
आदाय तान्समारोप्य दिवं जग्मुः सहस्रशः ॥
सेव्यमानास्तु गन्धर्वैः पूज्यमानास्तु वज्रिणा । [5410]
ब्रह्मलोकं गताश्चोरा यस्य संनिधिमात्रतः ॥
पापबुद्ध्या गता ह्येते पापिनोऽपि नरेश्वर ।
भक्त्या तु कुर्वतां नृणां सेवामात्रं किमुच्यते ॥
सहस्रयुगपर्यन्तं भुक्त्वा भोगाननेकशः ।
तस्माच्च ब्रह्मणो लोकाद्विष्णुलोकं प्रयान्ति ते । [5415]
वैष्णवे तु स वै लोके तावद्भुक्त्वा दिवं गतः ॥
प्रवृद्धज्ञानसंपन्नो बन्धुमान्नाम भूपतिः ।
सोमवंशोद्भवः श्रीमान्सप्तद्वीपैकराडभूत् ॥
आसन्पदातयश्चोराः प्रभवस्तेऽतिधर्मिणः ॥
जातिस्मरत्वमापन्नो विशेषेण हरिप्रियः । [5420]

---

G(ed) 41.

(L. 5355) G2 निर्मिता (for सेविता). G(ed.) पुरा (for [अ]नघ). — (L. 5357) G2 रङ्गनाथस्य दर्शनम् (for [b]). —(L. 5358) G2 लोभान्मोहाद् (for डम्भाल्लोभाद्).— G2 om. lines 5359–5364. — (L 5368) G(ed.) पुनर्जन्म न विद्यते (for [b]). — (L 5370) D1 G1 M1 सद्यः (for सर्व-).— (L. 5376) G1 G(ed.) स नृपः स्व- (for सर्वैर्बन्धु-) — (L. 5379) D1 -सपन्नस् (for -तत्त्वज्ञस्). — (L 5380) G1 मूर्खो (for चैव). D1 G1 2 M1 तथा च (for दुर्वृत्तो). — After line 5388, G(ed) ins. :

200** अधर्मनिरतो मूर्खो दुर्वृत्तो वृषलीपति ।

— (L. 5387) M1 सुलोचना (for सुयौवना) — (L. 5390) G2 जनानाम् (for जन्तू°). — (L, 5393) D1 G(ed) गावश्च तेन वै (D1 निहता) राजन् (for [a]). D1 G(ed) निहता (for °त्य). M1 -भक्षकः (for -पक्षिणः). —(L 5399) G1 G(ed) विमानं (for निवास). — (L. 5404) G1 G(ed.) अपहर्तुमहो-रात्रं (for [a]). — After line 5404, G1 ins. :

201** तत्र स्नानप्रभावेन चौर्यबुद्धिर्लयं गता ।
मनो विकृतिमापेदे पश्चात्स अभून्नृप ॥

— (L. 5406) M1 पूरयामास (for प्लाव°) — (L. 5407) M1 स्वसेवकैः (for सह स्वकै) D1 चोरैः स्वसेवकैः पापी (for [a]). — (L 5412) G2 दिवं गताः (for नरेश्वर). — After line 5412, D1 ins :

202** पापबुद्धिर्लयं गत्वा संप्राप्य ज्ञानमुत्तमम् ।
यस्या वै स्नानमात्रेण उत्तमा सद्गतिं ययुः ॥

— G2 om. lines 5413–5414 — (L. 5416) D1 तत्र भुक्त्वा भुवं गतः (for [b]). — For line 5416, G2 subst. :

203** विष्णुलोके बहून्भुक्त्वा भुवि राजा हि जायते ।

G2 cont. :

204** बन्धुमानिति विख्यातो सोमवंशः प्रतापवान् ।

विष्णोर्देवालये नित्यं संमार्जनपरायण ।
दीपदानरतश्चैव रङ्गेशे भक्तिमानभूत् ॥
स कदाचिन्महीपालो रङ्गेशं प्राप्य धर्मवित् ।
विचित्रकलशोपेतं प्राकारमकरोत्प्रभु ॥
तन्मध्ये मण्डपं विद्वान्विस्तीर्णं चतुरस्रकम् । [5425]
कारयामास धर्मात्मा चित्रस्थानविराजितम् ॥
तन्मध्ये पुण्डरीकाक्ष रङ्गेशं बन्धुमान्नृप ।
पूजयामास विविधैर्महारजतभूषणै ॥
चन्द्रपुष्करिणीस्नानं कावेर्याश्च तथामलम् ।
स्वभृत्यै पूजनं कुर्वंस्तत्र स परिमुच्यते ॥ [5430]
एतद्दृष्ट्वा विस्मयानो ब्रह्मपुत्रोऽथ नारदः ।
अब्रवीन्मे कृपां कृत्वा गङ्गातीरे मनोरमे ॥

वैशंपायन उवाच ।

चन्द्रपुष्करिणीस्नानं रङ्गेशस्य च दर्शनम् ।
कुर्वन्ति ये कलौ भक्त्या तेषां मुक्तिर्हि शाश्वती ॥
रङ्गेशो देवदेवेशश्चन्द्रपुष्करिणीतटे । [5435]
तिष्ठन्ददाति भूतानां मोक्षमक्षयमव्ययम् ॥
जन्मकोटिसहस्रेषु पुण्यं यै समुपार्जितम् ।
तेषां भक्तिर्भवेच्छुद्धा रङ्गेशे तत्सरोवरे ॥
जन्मकोट्ययुत पुण्यं यत्करोति नरो भुवि ।
तत्सर्वं दिनमेकं तु रङ्गेशे वसतो भवेत् ॥ [5440]
य इदं पुण्यमाख्यानं शृणोति सततं नरः ।
रङ्गेशदर्शनफलं भवेत्तस्य न संशय. ॥

Colophon

वैशंपायन उवाच ।

श्रुत्वैतद्रङ्गनाथस्य वैभवं भाग्यवर्धनम् ।
विस्मयानं महाप्राज्ञं भीष्मो धर्मसुतं जगौ ॥

भीष्म उवाच ।

अथात संप्रवक्ष्यामि रङ्गनाथस्य वैभवम् । [5445]
यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥
चन्द्रपुष्करिणी नाम शाश्वती मुक्तिदायिनी ।
तत्रास्ते जगतां नाथः सर्वकालमरिंदम ॥
तां विसृज्य च धर्मात्मा भगवानव्ययः प्रभु ।
भक्तानां कामदः श्रीमांस्तत क्वापि न गच्छति ॥ [5450]
सर्वानन्दकरी राजन्सर्वभाग्यप्रदायिनी ।
चन्द्रपुष्करिणी रम्या प्रीता सारूप्यदायिनी ॥
चन्द्रपुष्करिणी दिव्या यत्र तिष्ठति केशवः ।
स्नातानामत्र सा देवी संसारभयनाशिनी ॥
पुत्रदा पुत्रकामानां पापहा पापकारिणाम् । [5455]
क्रतूनां फलदा देवी सर्वेषां भरतर्षभ ॥
तीर्थानां भुवि मुख्यानां क्षेत्राणां च नृपोत्तम ।
चन्द्रपुष्करिणी मुख्या यत्र तिष्ठति केशव ॥
सिद्धचारणगन्धर्वयक्षविद्याधरान्वितः ।
दिव्यस्त्रीनिकरैः सेव्यो भुक्त्यर्थं च विमुक्तये ॥ [5460]
सा राजन्दुर्लभा लोके विशेषेण कलौ युगे ।
हिमांशुस्तत्र धर्मात्मा तपस्तेपे सुदुश्चरम् ।
आराध्य देवदेवेशं ग्रहाणामधिपोऽभवत् ॥

युधिष्ठिर उवाच ।

किमर्थं तप्यते तेन ताराणामधिपेन वै ।
एतन्मे विस्तराद्ब्रूहि कृपा मयि तवास्ति चेत् ॥ [5465]

भीष्म उवाच ।

आदौ तावन्महाभाग सविता च त्रयीमय ।
तपसा हरिमाराध्य लोकचक्षुस्तथाभवत् ॥
ज्ञात्वा तं सर्वभूतानां जीवभूतं दुरासदम् ।
अत्रिनेत्रोद्भवः श्रीमांतपस्तप्तुं मनो दधे ॥
तपसा लोकविख्यातो देवान्सेन्द्रानकम्पयत् । [5470]
वायुभक्षो निराहारो जितक्रोधो महामतिः ॥
चन्द्रमा देवदेवेशं चन्द्रपुष्करिणीतटे ।
ध्यायन्स्तुवन्नमस्यंश्च चचार तप उत्तमम् ॥
ग्रीष्मे पञ्चाग्निमध्यस्थं हेमन्ते जलवासिनम् ।
जलधाराकुले राजन्वर्षतौं हि निराश्रयम् ॥ [5475]
ध्यायन्तमतुलं देवं वासुदेवं जनार्दनम् ।
नीलजीमूतसंकाशं पीताम्बरधरं शुभम् ॥

---

— G2 om lines 5417-5418. — (L. 5417) D1 धर्मसेतुश्च भूपतिः (for °). — (L 5421) G(ed) स तु विष्ण्वालये नित्यं (for °). — G2 om line 5422. M1 om. lines 5423-5427. — (L 5424) G(ed) नृपः (for प्रभुः). — (L. 5427) D1 भक्तिमान्, G1 बुद्धि° (for बन्धु°). G2 रङ्गेश पूजयेत्सदा (for ᵇ). — (L. 5429) G2 कावेर्यां रङ्गदर्शनम् (for ᵇ) — For line 5430, G2 subst. :
205** कृत्वा तत्रैव राजेन्द्र मुक्तिमाप सुदुर्लभाम् ॥
— G2 om. the ref — (L 5434) G1 G(ed) कलियुगे (for कलौ भक्त्या) — G2 om lines 5435-5440. — (L 5436) D1 इष्टं (for तिष्ठन्) M1 मुक्तिम् (for मोक्षम्). D1 पुनरावृत्तिवर्जितम् (for ᵇ) — (L. 5437) G1 पुण्यं यत्सुसमार्जितम्; M1 पुण्यं वै सुमहा° (for ᵇ) — D1 G1 om. lines 5438-5439. M1 om. lines 5439-5440.

COLOPHON — *Mention of the Epic* · G1. — *Subparvan* G1. 2 M1 G(ed) शेषधर्मा . — *Adhy name :* D1 श्रीरङ्गमाहात्म्यम्, G G(ed) श्रीरङ्गेशमाहात्म्यम्, M1 चन्द्रपुष्करिणीमाहात्म्यम् — *Adhy no* D1 G1. 2 M1 41, G(ed) 42

(L 5444) G(ed) महाप्राज्ञो (for °प्राज्ञ) G1. 2 विस्मयानो महाप्राज्ञो (for °). G2 भीष्मो धर्मजमब्रवीत् (for ᵇ). — G2 om the ref G2 om line 5447-5461. — (L. 5447) G(ed) पुण्या (for नाम) — D1 om lines 5448-5457. G1 M1 om. line 5453 M1 om line 5458.— (L. 5461) M1 सुलभा (for दुर्लभा). — For line 5462, G2 subst. :

चन्द्रार्कनेत्रममलं विद्युच्चञ्चललोचनम् ।
सहस्रादित्यसंकाशो वेदमूर्तिमकल्मषम् ॥
अणिमादिगुणोपेतमार्तत्राणपरायणम् । [5480]
कल्पवृक्षतरोर्मूलं स्वर्गिणामास्पदं शिवम् ॥
कामधेनोर्मूलधनं सनकादिनिषेवितम् ।
जीवभूतमशेषाणां लोकाना पाण्डुनन्दन ।
सर्वगं तु सहस्राक्षं सहस्रकिरणं प्रभुम् ॥
एवं भक्त्या प्रार्थयन्तमन्तर्यामी जगन्मयः । [5485]
आविर्बभूव धर्मात्मन्गरुडोपरि संस्थितः ॥
तमुवाच कुरुश्रेष्ठ देवगन्धर्वसेवितः ।
अत्रिनेत्रोद्भव श्रीमान्किमर्थं तप्यते त्वया ॥
तोषितस्तपसानेन तद्ददामि तवेप्सितम् ।
वरदं पश्य मां तात यत्ते मनसि रोचते ॥ [5490]
लोकनाथवचः श्रुत्वा शीतांशुस्तं प्रणम्य च ।
वरदं पुण्डरीकाक्षमस्तौषीत्कमलापतिम् ॥
नमो भगवते तुभ्यं सर्गस्थित्यन्तकारिणे ।
गुणत्रयस्वरूपाय तस्य भेदकराय च ॥
विश्वयोने जगन्नाथ सहस्रशिरसे नमः । [5495]
सहस्रचक्षुषे तुभ्यं सहस्रभुजशालिने ॥
सहस्रपादमूलाय कर्मणां फलदायिने ।
यज्ञाय यज्ञरूपाय यज्ञानां पतये नमः ॥
पाहि पाहि जगन्नाथ प्रणतार्तिप्रणाशन ।
ध्रुवं पदमसामान्यं देहि मे भक्तवत्सल ॥ [5500]
सौभाग्यमण्डलं देहि कान्तिं शीतकरीं प्रभो ।
अत्र तिष्ठ सदा देव चन्द्रपुष्करिणीतटे ।
मम नाम्ना पुष्करिण्या नामधेयं कुरु स्वयम् ॥
स्नातानामत्र देवेश भुक्तिं मुक्तिं प्रयच्छ ह ।
मां पाहि सर्वलोकेश भूयो भूयो नमोऽस्तु ते ॥ [5505]

भीष्म उवाच ।

तथास्त्विति तमामन्त्र्य पुनर्वचनमब्रवीत् ।
ग्रहाणामग्रणीः श्रीमानादित्योऽयं हुताशनः ।
भवितासि द्वितीयो मे त्वमेवाहं न संशयः ॥
चन्द्रपुष्करिणी ह्येषा लोके ख्यातिं गमिष्यति ।
स्नातानामत्र सायुज्यं भविष्यति च मेऽनघ ॥ [5510]
लोकमातुर्महालक्ष्म्या वरं दत्त्वा ततः परम् ।
अत्रैव स्थिरमेष्यामि तत्रांशेन सुधाकर ॥

सोम उवाच ।

अशेषजननी सा तु कुत्रास्ते मापते सती ।
लोकनाथ नमस्तेऽस्तु वद तत्कारणं प्रभो ॥

श्रीभगवानुवाच ।

पुराहं लोकरक्षार्थं संभवामि पुनः पुनः । [5515]
परित्राणाय साधूनामसतां निधनाय च ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥
तपश्चरति सा देवी सोढुं विरहमक्षमा ।
कुम्भघोणे महाक्षेत्रे सर्वसिद्धनिषेविते ॥
लक्ष्मीसरोवरे देवी स्वर्णपङ्कजकानने । [5520]
ध्यायन्ती मां सदा देवी सर्वगं भक्तवत्सलम् ॥
सदा सेवितुमिच्छन्ती योगिध्येयं महामते ।
युगान्तं षट्शतं सोम ध्यायन्त्या मां तपः कृतम् ॥
तत्कारणात्तु यास्यामि चन्द्र संप्रति तत्र वै ।
गच्छ त्वं लोकमतुलं ज्योतिर्गणनिषेवित ॥ [5525]
पतिस्त्वं सर्वऋक्षाणामद्यप्रभृति चन्द्रमाः ।
तरुगुल्मलतादीनामोषधीना द्विजन्मनाम् ॥

चन्द्र उवाच ।

कियद्दूरे स्थिता देवी तत्क्षेत्रस्य फलं तु किम् ।
एतद्वेदितुमिच्छामि लोकनाथ नमोऽस्तु ते ॥

श्रीभगवानुवाच ।

प्राचीभागे तपस्यन्ती योजनानां चतुष्टये । [5530]
आस्ते तत्र सरस्तीरे स्वर्णपङ्कजकानने ।
कुम्भघोणमिति ख्यातं क्षेत्राणामुत्तमं विदुः ॥
लक्ष्मीसरोवरं नाम तत्र तिष्ठति संप्रति ।
निर्मितं तपसा देव्या परिशुद्धह्रदा तया ॥
आदावपि च तत्क्षेत्रं देवर्षिगणसेवितम् । [5535]
धर्मवृद्धिकरं क्षेत्रं कुम्भघोणं विदुर्बुधाः ॥
कुम्भकोणे मूर्तिरियं तस्य लोको ममैव हि ।
ब्रह्मणा सेवितं स्थानं लोकानां सृष्टिमिच्छता ॥
गङ्गादिसर्वतीर्थानि संगृह्य च पुरा रमा ।
निर्ममे लोकरक्षार्थं पावनं तत्सरोवरम् ॥ [5540]

---

206** चन्द्रपुष्करिणीतीरे हिमांशुस्तप आस्थित ।
— After line 5470, G2 ins :
207** लोकानामीश्वरं देव स्तोत्रैः श्रुतिमनोहरैः ।
स्तुत्वा लक्ष्मीपतेरेवं तूष्णीमास महामना ।
— G2 om lines 5471–5485. — (L. 5477) G(ed.) शुभम् (for हरिम्) — (L. 5484) M1 सहस्रकिरणप्रभम् (for ᵇ), — (L 5488) G(ed.) सर्वात्मा (for धर्मात्मन्). — (L. 5489) D1 ददामि च यथेप्सितम्; G1 वरदोऽहमिहागत (for ᵇ). — (5490) D1 वरयस्व च मां तात (for ᵃ). — G2 om. lines 5491–5501. Before line 5493, D1 ins. चन्द्रमा — (5498) M1 भूतानां (for यज्ञानां). — Before line 5502, G2 ins. चन्द्र — (L 5503) G2 मम नाम्नः पुष्करिणीं (for ᵃ) — M1 om. lines 5504–5506. — Before line 5507, M1 ins. श्रीभगवान् — (L 5507) D1 अग्रतः; G1 M °ग. (for °णी.). G(ed.) सुधाकर (for हुताशनः). — G2 om. line 5509 — (L. 5512) M1 सिद्धिम्; G(ed.) स्थितिम् (for स्थिरम्). M1 निशाकर (for सुधा°). — G(ed.) चन्द्र (for सोम) — (L. 5514) G2 भगवन्वद विस्तरात् (for ᵇ) — (L 5515) G2 G(ed.) युगे युगे (for पुनः पुनः) — G2 om. lines 5521–5531. — (L. 5527)

वर्षे वर्षे समागम्य ब्रह्माद्यास्तत्र देवताः।
स्नात्वा मुनिवरा सर्वे यान्ति स्थान स्वक पुनः ॥
एकाहमपि य कुर्यात्स्नानं तत्र सुधाकर ।
प्राप्नोति सुरलोकं स पूजित सिद्धचारणै ॥
त्रिरात्रं वसता तत्र कुम्भघोणे सुरालये । [ 5545 ]
ब्रह्मलोको भवेत्तेषा यावदाभूतसंप्लवम् ॥
लक्ष्मीसरोवरे स्नात्वा पूज्य मां भक्तिसंयुतः ।
यो ददाति च यद्दानं तद्दानं पितृमुक्तिदम् ॥
पुण्यक्षेत्राणि सर्वाणि तीर्थानि सुमहान्ति च ।
वसन्ति तत्र वै सोम ह्यनिश पुण्यकाङ्क्षया ॥ [ 5550 ]
तस्यैव सदृशं नास्ति त्रिषु लोकेषु सुव्रत ।
अन्यक्षेत्रे कृतं पापं पुण्यक्षेत्रे विनश्यति ॥
पुण्यक्षेत्रे कृतं पाप वाराणस्या विनश्यति ।
वाराणस्या कृतं पाप कुम्भघोणे विनश्यति ।
कुम्भघोणे कृतं पाप कुम्भघोणे विनश्यति ॥ [ 5555 ]
तस्याः सकाशं गच्छामि सुखी भव सुधाकर ।
तत्रापि मा भजस्वेति तत्रैवान्तरधीयत ॥
इति श्रुत्वा हरेर्वाक्यं हिमांशुर्विस्मयान्वित ।
ध्यायंस्तत्रापि देवेशमास्ते चिरतरं नृप ॥
भूसुतोऽपि च तं दृष्ट्वा हिमांशुं च सुधाकरम् । [ 5560 ]
उग्रेण तपसा तत्र स तृतीयो ग्रहोऽभवत् ॥
पितुराज्ञां पुरस्कृत्य सौम्योऽपि तपसात्र च ।
अवाप रविसालोक्यं ग्रहाणा मध्यमेव च ॥
गुरु. कमलपत्राक्षीं स्वका भार्यां हिमांशुना ।
हृतां परमकल्याणीमवापात्र च सेवनात् ॥ [ 5565 ]
दैत्यमन्त्री चिरं कालं तत्र तप्त्वा तप परम् ।
अवाप्य मध्यं तेषा तु ग्रहाणां शुभदोऽभवत् ॥
शनिस्तु रविजः श्रीमान्राहुकेतू च तावुभौ ।
ते सर्वे सुचिरं तप्त्वा ग्रहसख्यामुपागताः ॥
इन्द्रो यमः प्रचेताश्च कुबेरनलकूबरौ । [ 5570 ]
कुम्भघोणे महाविष्णुमाराध्य प्रययुर्दिवम् ॥
दिशां पतित्वमापन्ना नित्यं देवै प्रपूजिता ।
आराध्य देवदेवेशं दिक्पालत्वमुपागताः ॥
हरिश्चन्द्रो नलो राजा पुरुकुत्स पुरूरवा ।
सगर. कार्तवीर्यश्च षडेते चक्रवर्तिन ॥ [ 5575 ]
ख्यातिं लोके महत्सत्त्वं धर्मश्रद्धां महद्धनम् ।
अवापुस्तस्य कृपया तपसा च शुभव्रताः ।
शृण्वता वदता चेदमेतद्भाग्यं भवेद्ध्रुवम् ॥

Colophon.

युधिष्ठिर उवाच ।

देवदेवो जगन्नाथ प्रणतार्तिप्रणाशन ।
शिवमूर्ति प्रसन्नात्मा लोके प्रत्यक्षतां गत: ॥ [ 5580 ]
कथ शंभुरिति ख्यात. पूज्यते विधिवद्द्विजै. ।
कथं ददाति भक्तानां प्रसन्नात्मा वरं परम् ॥
तस्य देवस्य पूजाया फल किं केन पूजितः ।
क. प्राप्नोति शुभाँल्लोकानेतान्सर्वान्वदस्व मे ॥
देवव्रत महाभाग कृपा मयि तवास्ति चेत् । [ 5585 ]
तस्मात्त्वां प्रार्थयाम्यद्य पातुं धर्मामृतं प्रभो ।

भीष्म उवाच ।

अहो वक्ष्यामि ते पार्थ भूतनाथस्य वैभवम् ।
यस्य श्रवणमात्रेण सर्वपापै· प्रमुच्यते ॥
आद्यन्तशून्यो देवेशः सृष्टिस्थित्यन्तकारकः ।
ब्रह्मा रुद्रस्तथा विष्णु कुबेरो देवराट् प्रभुः ॥ [ 5590 ]
इन्द्रोऽग्निर्यमधर्मेशो निरृतिर्वरुण प्रभु. ।
वायुः सूर्यः सहस्राक्षः सर्वेशो भूर्भुव.सुव ॥
कालरूपस्य धर्मस्य लोकनाथस्य धर्मज ।
नाहं वक्तुमशक्तोऽस्मि तत्स्वभावमशेषतः ॥

युधिष्ठिर उवाच ।

तेषामीश्वरभक्तानां विष्णुलोकः कथं भवेत् । [ 5595 ]

---

G(ed.) तृण- ( for तरु- ) — G2 om. lines 5534–5535. G2 om. lines 5537–5542. — ( L. 5540 ) G1 पापाना नाशकं परम् ( for $^{b}$ ). — ( L. 5543 ) D1 G2 M1 स्नानमात्र ( for स्नानं तत्र ). — ( L. 5544 ) D1 G2 M1 सर्वपापविवर्जित: ( for $^{b}$ ). — G2 om. lines 5545–5548. — ( L. 5549 ) G2 सुबहूनि ( for सुमहान्ति ). — ( L 5560 ) G2 M1 सुधामयम् ( for °करम् ). — After line 5560, G2 ins. :

208** गुरुरुग्रं च तप्त्वाथ तप· परमदारुणम् ।

— G2 om. lines 5562–5566. — ( L. 5562 ) G1 बुधो ( for सौम्यो ). — ( L. 5567 ) G2 एतेषां ( for तेषां तु ). — After line 5567, G2 ins

209** भृगु· सौम्य· शनि केतू राहुर्देवगुरुस्तथा ।
एव तप्त्वा तप क्रूर लेभिरे ग्रहदेवताम् ।
एवमन्ये महाराज अत्र तप्त्वा दिदृक्षव· ॥
इदं पवित्रं पापघ्नं शृण्वतां पठतामपि ।
य· शृणोति नरो भक्त्या सर्वपापै· प्रमुच्यते ॥

— D1 om lines 5570–5573 — ( L. 5578 ) M1 सत्यं ( for भाग्य ).

COLOPHON — *Sub parvan* D1 G1 आश्चर्यपर्वणि शेषधर्माः ; G2 M1 G(ed ) शेषधर्मा — *Adhy name* · D1 G1 M1 G(ed.) कुम्भघोणमाहात्म्यम् — *Adhy. no.* · D1 G1, 2 M1 42 ; G(ed ) 43

( L 5581 ) M1 G(ed ) विधिना ( for °वद् ). — G2 om. lines 5585–5586. —G2 देवव्रत ( for भीष्म ) — ( L 5590 ) M1 कृष्ण ( for विष्णु ) D1 G2 ब्रह्मा विष्णुस्तथा कृष्ण ( G2 रुद्र ) — G2 om lins 5591–5592 — ( L. 5591 ) D1 इन्द्रोऽग्निर्धर्मराजश्च ( for $^{a}$ ). — ( L. 5594 ) D1 अह वक्तुं न शक्तोऽस्मि ( for $^{a}$ ). — After line 5598, D1 ins. :

210** भीष्मः ।
अयं हि भगवान्पूर्वं सृष्टिस्थित्यन्तहेतवे ।

एतन्मे संशयं तात छेत्तुमर्हस्यशेषतः ॥

भीष्म उवाच ।

ब्रह्माविष्णुमहेशानां भेदः कुत्रापि न प्रभो ।
कर्तारो ह्यद्य लोकानां सृष्टिस्थितिलयेषु च ॥
त्वया दृष्ट पुरा कृष्णो लोकनाथो जगन्मयः ।
कैलासयात्रामकरोत्पुत्रार्थं भरतर्षभ ॥ [5600]
तत्राराध्य चिरं कालं भूतनाथमुमापतिम् ।
ईप्सितं प्राप्तवान्पुत्रं तस्माद्भेदो न विद्यते ॥
शंकरो विष्णुमव्यक्तं चिरमाराध्य भक्तिमान् ।
षण्मुखं लभते पुत्रं देवतार्थमरिंदमम् ॥
ब्रह्मा च जनयामास विष्णुमाराध्य भक्तितः । [5605]
लोकान्प्रजापतीन्सर्वांस्तस्माद्भेदो न विद्यते ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
शृण्वता सर्वपापघ्नमायुरारोग्यवर्धनम् ॥
पुरा कृतयुगे राजन्सुशान्तो नाम वै द्विजः ।
शान्तो जितेन्द्रियो मौनी सदा ध्यानपरायणः ॥ [5610]
वेदेषु धर्मशास्त्रेषु वेदान्तेषु विचक्षणः ।
गार्हस्थ्ये सकलान्कामाननुभूय द्विजोत्तम ।
मोक्षकामो हि राजेन्द्र विशेषेण शिवव्रतः ॥
किष्किन्धां समुपागम्य ब्रह्मदत्तेन पालिताम् ।
पम्पासरोवरे स्नानं कृत्वा तु शिवमर्चनम् । [5615]
तपस्तप्तुमना राजंस्तत्रास्ते शंकरं स्तुवन् ॥
पम्पानाथं विरूपाक्षं नीललोहितमव्ययम् ।
मृत्युंजयं कृत्तिवासं पिनाकिनमरिंदमम् ॥
सहस्राक्षं सदानन्दं नीलमेघनिभं हरम् ।
शूलपाणिं महादेवं सृष्टिस्थित्यन्तकारिणम् ॥ [5620]
ध्यायन्स्तुवन्नमस्यंश्च तत्रास्ते ब्राह्मणोत्तमः ।
त्रैयम्बकं महामन्त्रं रुद्रसूक्तादिभिः शिवम् ॥
स्नापयित्वा तु तं पूज्य त्रिकालं स्नानतत्परः ।
शाकमूलफलाहार शान्तः परमबुद्धिमान् ॥
अत्र तिष्ठति राजेन्द्र तस्मिन्नास्ते द्विजोत्तमः । [5625]
शूद्रो वै धर्मकुशलो नामतः संगतो बुधैः ।
शिवभक्तो जितक्रोध शुश्रूषुश्च द्विजन्मनाम् ॥
विरूपाक्षस्य देवस्य वन्दनार्थं ययौ च सः ।
सुशान्तस्य तदा कुर्वञ्शुश्रूषा राजसत्तम ।
तत्रास्ते सरसस्तीरे जिताहार शत समाः ॥ [5630]
तस्मिन्काले विरूपाक्षो भूतनाथो जगन्मयः ।
आविर्बभूव राजेन्द्र ततो वाचमुवाच ह ॥
सुशान्त शृणु मद्वाक्यं तपसा तोषितोऽस्म्यहम् ।
वरं वरय भद्रं ते विद्धि भूतपतिं च माम् ॥
एतद्वचस्तदा श्रुत्वा ब्राह्मणो विस्मयान्वितः । [5635]
नत्वा पुन पुनर्देवमस्तौषीज्जगतां पतिम् ॥
नमस्ते पार्वतीकान्त नमस्ते चन्द्रशेखर ।
नमश्चैतन्यरूपाय पशूनां पतये नमः ॥
विश्वेश्वर विरूपाक्ष विश्वरूप सदाशिव ।
शरणं भव भूतेश करुणाकर शंकर ॥ [5640]
नमो धर्माय देवाय विश्वरूपाय शूलिने ।
भूतनाथाय धर्मात्मन्नमस्ते नागभूषण ।
भस्मोद्धूलितसर्वाङ्ग जटाधर सदाशिव ॥
मृगनाभिसुगन्धाय मृगचर्मधराय च ।
कपालमालिने तुभ्यमक्षसूत्रधराय च । [5645]
भूयो भूयो नमस्तुभ्यं पुरान्तक जगन्मय ॥

भीष्म उवाच ।

एवं स्तुतः प्रसन्नात्मा पार्वतीवल्लभ प्रभुः ।
अष्टमूर्तिधरः श्रीमान्देवगन्धर्वसेवितः ॥
वरं ब्रूहीति तं चोक्त्वा शूद्रं भक्तिसमन्वितम् ।
अतिष्ठत्तस्य पुरतः पूर्वाद्रिरंशुमानिव ॥ [5650]
वरेण्यं वरयामास ब्राह्मणो लोकविश्रुत ।
चतुर्थोऽपि च मे श्रेयो ददस्वेति वरं तदा ॥
नीलकण्ठस्तदाकर्ण्य स्मितपूर्वमभाषत ।

---

त्रिरूपाणि चकारासौ त्रिरूपेषु व्यवस्थित ॥

—( L. 5602 ) $D_1$ च लभेत्, $G_{1,2}$ $M_1$ लभते ( for प्राप्तवान् ). $D_1$ om. ( hapl. ) lines $5602^b$–$5604^a$. —( L 5604 ) G(ed ) लब्धवान् ( for लभते ) $G_1$ अनिन्दितम् ( for अरिंदमम् ). — After line 5606, $D_1$ ins. :

211** ईश्वरो विष्णुमव्यक्तं शिवमाराध्य भक्तित ।
षण्मुखं लभते पुत्रं देवपुत्रमरिंदम ॥

—( L. 5608 ) $G_2$ G(ed.) आयुर्वर्धनकारणम् ( for $^b$ ). — $G_2$ om lines 5611–5612 —( L. 5611 ) $M_1$ विशारदः ( for विचक्षण ). $G_1$ वेदाङ्गेषु विशारद ( for $^b$ ). —( L. 5613 ) $D_1$ $G_2$ शिवप्रियः ( for °व्रतः ). —( L. 5615 ) $G_{1,2}$ G(ed.) अर्च्य च, $M_1$ अव्ययम् ( for अर्चनम् ) —( L 5616 ) $G_1$ $M_1$ चर्तुमना, G(ed.) कर्तु° ( for तप्तु° ). G(ed ) स्म शिव ( for शंकरं ). — $G_2$ $M_1$ om. lines 5619–5620. —( L. 5625 ) G(ed.) अतिष्ठत्तत्र राजेन्द्र ( for $^a$ ). $G_1$ काले ( for आस्ते ). —( L. 5626 ) $D_1$ G(ed ) रुद्रो ( for शूद्रो ). $G_2$ रुद्रो वै तत्र कुशलो ( for $^a$ ). —( L. 5627 ) $G_1$ जितवाक्कायमानसः ( for $^b$ ). —( L. 5628 ) $D_1$ $M_1$ सर ( for च सः ). —( L. 5629 ) $D_1$ सुशीलस्य ( for सुशान्तस्य ). — After line 5630, $D_1$ ins. :

212** भीष्म ।
इमां विद्या शृणुष्वाद्य लोकवन्द्योऽसि मेऽनघ ।

— $D_1$ om. lines 5631–5712. —( L. 5633 ) $G_1$ ब्रह्मञ्शृणुष्व मे वाक्यं ( for $^a$ ). —( L. 5636 ) $M_1$ दोर्भ्याम् ( for देवम् ) —( L. 5637 ) $G_1$ G(ed ) पार्वतीनाथ ( for °कान्त ). — $M_1$ om. lines 5639–5644. — After line 5640, G(ed.) ins. :

213** शिव शंभो महादेव विश्वेश्वरामरवल्लभ ।

शृणु विप्रवरश्रेष्ठ तव दास्ये तदीप्सितम् ।
अन्त्यजन्मनि शूद्रस्य दास्यामि वरमुत्तमम् ॥ [5655]
एवं शिववचः श्रुत्वा ब्राह्मणो हितकृत्सताम् ।
उवाच शंकरं नत्वा षडक्षरसमन्वितम् ॥
विश्वंभर तथैवास्तु ममापि न हि तं विना ।
कथं यास्यामि ते लोकं शुश्रूपुश्च सखा मम ॥
इत्युक्त्वा मौनमास्थाय पादौ नत्वा शिवस्य च । [5660]
शुभं पञ्चाक्षरं मन्त्रं जपन्नास्ते तपोवने ॥
नीलकण्ठ पुनश्चेदमुवाच तपतां वरम् ।
तथाहं तु करिष्यामि युवयोर्ब्राह्मणोत्तम ॥
शूद्रस्य शत्रुभावं त्वमेष्यसि त्वन्त्यजन्मनि ।
दर्शनाच्च वधाच्चैव युवयोर्मुक्तिरस्त्विति ॥ [5665]

ब्राह्मण उवाच ।

कथं शत्रुत्वप्राप्नोति शूद्रो मे ह्यन्त्यजन्मनि ।
एतद्भूतेश मे ब्रूहि मम जन्म च शंकर ॥

ईश्वर उवाच ।

मतङ्गो नाम विप्रर्षिर्भवितासि द्विजोत्तम ।
इन्द्रपुत्रो ह्ययं शूद्रो वालीति ख्यातिमेष्यति ॥

ब्राह्मण उवाच ।

किं च ते भवता रूपमीदृशं पावनं परम् । [5670]
ब्रूह्येतत्सर्वभूतेश भूयो भूयो नमोऽस्तु ते ॥

शंकर उवाच ।

रामो दाशरथिर्भूत्वा जटावल्कलवान्रणे ।
हनिष्यति शरेणाशु विदूरे दृष्टिगोचरे ।
इत्युक्त्वा सहसा देव सहसा तु तिरोदधे ॥
कस्यचित्त्वथ कालस्य द्विजशूद्रौ लयं गतौ । [5675]
तत्र भोगान्दिविस्थान्वै यथावदनुभूय च ।
भुवस्थलं प्रपन्नौ तौ तपोबलसमन्वितौ ॥
मतङ्गोऽभूत्सुशान्तोऽथ सर्वधर्मपरो नृप ।
शूद्रोऽसौ वालित्वमापन्नो ह्यसङ्ख्येयबलस्तदा ॥
कुर्वंस्तप अत्युग्रं मतङ्गस्य विरोधकृत् । [5680]
किष्किन्धां समुपागम्य हरीणामधिपोऽभवत् ॥
तप कुर्वति धर्मिष्ठे मतङ्गमुनिपुंगवे ।
शंकरः सर्वभूतानां तदा रामत्वमाप्तवान् ।
प्राप्तवान्वनमत्युग्रं पितुर्वचनगौरवात् ॥
पम्पासरोवरं गत्वा रामाख्यो भगवान्हरः । [5685]
आदित्यसूनोर्व्याजेन हत्वा वालिनमग्रत ।
स्वपदं दत्तवान्राजन्दर्शनाद्ब्राह्मणस्य च ॥
धर्मशीलसुशान्तौ च सम्प्राप्तौ च शिवालयम् ।
पूजितौ भूतपतिना ह्यनुभूय सुखान्बहून् ।
ययतुर्विष्णुलोकं तौ कोटिवंशसमन्वितौ ॥ [5690]
तस्माच्छिवार्चनं नित्यं भुवि मुक्तिफलप्रदम् ।
हरिशंकरयोर्भेदं नास्ति नास्ति जनाधिप ॥
य इदं पुण्यमाख्यानं नारदेन प्रभाषितम् ।
शृणुयात्तस्य वै नाको भेदबुद्धिर्न जायते ॥

Colophon.

युधिष्ठिर उवाच ।

पितामह नमस्तेऽस्तु साक्षात्त्वं धर्ममूर्तिमान् । [5695]
केन पुण्यप्रभावेन वाणी वदसि धर्मजाम् ॥
शृण्वन्ति सर्वे मनुजाः कथाममृतसंमिताम् ।
न क्षमस्त्वदृते वक्तुमेवमन्यो वदस्व मे ॥

भीष्म उवाच ।

व्रतदानेषु निरता ये द्विजा धर्मतत्परा ।
ते जानन्ति कथां रम्यां धर्मगर्भां बहुप्रदाम् ॥ [5700]
ऋषिङ्गर्जेतारो ब्राह्मणा गतकल्मषाः ।
पुराणधर्मशास्त्रज्ञास्ते जानन्ति नृपोत्तम ॥

युधिष्ठिर उवाच ।

केन व्रतेन वाक्सिद्धिः सर्वसपत्तथा भवेत् ।
व्रतं तत्तादृशं ब्रूहि करिष्ये वचनात्तव ॥

भीष्म उवाच ।

कृपया वासुदेवस्य सर्वं जानामि धर्मज । [5705]
यथा ह्यञ्जितनेत्रस्तु निधिं पश्यति भूगतम् ॥

---

हर शंकर विश्वात्मन्नीलकण्ठ नमोऽस्तु ते ॥
— G(ed.) om the ref. — (L 5649) G2 विप्र (for शूद्रं). — (L. 5651) G1 -वन्दितः (for -विश्रुतः). — (L. 5661) G2 जपन् (for शुभं) M1 G(ed.) तपोधन (for °वने). — (L. 5665) G1, 2 M1 उभयोर्मुक्तिरस्तु हि (for $^{b}$). — (L. 5668) M1 ब्रह्मर्षिर् (for महर्षिर्) G1 त्व (for [अ]सि). — (L. 5670) M1 G(ed) मे भविता (for ते भवता). — G2 ईश्वर (for शंकर). — After line 5672, G1 ins
214** किष्किन्धाया बहिर्देशे वालिनं हेममालिनम् ।
— (L. 5673) G1 G(ed) हनिष्यामि (for °ष्यति). — (L. 5674) M1 इत्युक्त्वा स महादेवः (for $^{a}$). M1 कुरुश्रेष्ठ; G(ed.) देवैः सह (for सहसा तु) — (L 5676) G2 दिवि भुक्त्वा (for दिविस्थान्वै). — (L. 5678) G2 M1 स(M1 स्व)-धर्मकुशलो नृप (for $^{b}$). — (L 5679) G1 सोऽपि शूद्रत्वमापन्नो (for $^{a}$) G2 M1 ह्यसह्यबलदर्पित (for $^{b}$). — (L. 5683) M1 G(ed) -भक्तानां (for -भूतानां). — (L 5689) G(ed) सुखं बहु (for सुखान्बहून्) — (G. 5690) G2 -समुद्भवौ (for -समन्वितौ) — (L 5691) G2 भक्ति- (for मुक्ति-). — (L 5694) G1 नाकं, M1 राजन् (for नाको).
Colophon om in D1 — *Sub-parvan* G1, 2 M1 G(ed) शेषधर्मा — *Adhy name*. G2 शिवरामावतारः; G(ed) हरिहराभेदप्रशंसा. — *Adhy no* G1, 2 M1 **43**; G(ed) 44
(L 5695) G2 महाप्राज्ञ (for नमस्तेऽस्तु). G2 साक्षाद्धर्म इवापरः (for $^{b}$) — (L 5698) G1, 2 एवमन्ये वदस्व तत्; G(ed) °न्ये वदाद्य तत् (for $^{b}$) — (L. 5699) G(ed) -वत्सलाः

शृणु वेदविदां श्रेष्ठ सर्वज्ञस्त्वं मतोऽसि मे ।
कृष्णस्य यादवेन्द्रस्य कृपापात्रोऽसि पार्थिव ॥
अत्रैवागन्तुमिच्छन्वै द्वारवत्यां स तिष्ठति ।
रिपूंस्तान्क्षणमात्रेण निर्जित्य युधि केशव. ॥ [5710]
सोऽब्रवील्लोकपूज्याया भारत्यास्तु शुभं व्रतम् ।
भारती सर्वदा पूज्या लोकवन्द्येति मेऽनघ ॥
तदर्थमद्य ते वच्मि सर्वसिद्धिप्रदं शुभम् ।
कृष्णप्रियकरं विद्धि लोकमातुश्च तत्प्रियम् ।
तत्प्रियं सर्वदेवानां नवरात्रिव्रतं शुभम् ॥ [5715]
गजाश्वरथशस्त्रादीनलंकृत्य शुभे दिने ।
कल्पोक्तहोमकर्मादि कृत्वा चान्ते पठेदिमम् ।
शृण्वतां सर्वपापघ्नं सर्वसंपत्करं शुभम् ॥
कोशवृद्धिर्भवेत्तेषां राज्यवृद्धिश्च भूभृताम् ।
वाक्सिद्धिर्बहुपुत्राश्च भारत्यास्तु प्रसादतः । [5720]
तस्मात्तवापि राजेन्द्र राज्यप्राप्तिर्भवेद्ध्रुवम् ॥

युधिष्ठिर उवाच ।

कस्मिन्काले महादेवी पूज्या पुस्तकधारिणी ।
विद्यामूर्तिर्वदास्माकमाख्याहि त्वं विधिं शुभम् ॥

भीष्म उवाच ।

अहो वदामि ते देव्या पूजां सर्वसमृद्धिदाम् ।
सर्वदा पूजयेद्देवीं भारतीं सर्वमातरम् ॥ [5725]
महानवम्यां प्राप्तायां पूजां कुर्वीत यत्नतः ।
प्राप्ते चाश्वयुजे मासे शुक्लपक्षे समुद्भवा ।
या तिथिर्नवमी प्रोक्ता सा महानवमी स्मृता ॥
उषस्युत्थाय संकल्पमाचरेत्तत्तिथौ सुधी ।
अर्चयिष्ये जगत्पूज्यां शारदां विशदप्रभाम् । [5730]
सितपद्मासनां देवीमक्षरां शशिभूषणाम् ॥
विद्यामूर्तिं विशालाक्षीं मौक्तिकादामभूषिताम् ।
वज्रवैडूर्यवलयां ज्योतिर्मणिविराजिताम् ॥
इति ध्यात्वा तु संकल्प्य स्नात्वा तु सुसमाहितः ।
आवाह्य पूजयेद्देवीं विद्यापुस्तकमण्डले ॥ [5735]
मेधादेव्यनुवाकेन ह्युपचारान्प्रकल्पयेत् ।
व्रते महति नैवेद्यमर्पयेत्प्रयतेन्द्रियः ॥
स्वसूत्रविधिना वेद्यां प्रतिष्ठाप्य हुताशनम् ।
होमं प्रकल्पयेद्विद्वांस्तिलपायससर्पिषा ॥
मेधादेव्यनुवाकेन प्रत्यृच जातवेदसि । [5740]
हुनेद्द्रोष्ठेऽश्वशालायां गृहमध्ये च वा बुधः ॥
पूजितायां तु भारत्यां ह्यनेन विधिना नृप ।
पूजकस्य च ये कामास्ते सर्वे वशवर्तिनः ।
सेवन्ते तं नृपश्रेष्ठ सेवका इव हि ध्रुवम् ॥
ब्राह्मणान्भोजयेद्भक्त्या प्रीणयेद्वसुदानतः । [5745]
विप्राग्निहुतशेषेण तुरगान्भोजयेद्व्रती ॥
कुञ्जरान्स्यन्दनान्वाहान्यानानि विविधानि च ।
आयुधानि विचित्राणि धनुर्बाणादिकान्यपि ।
अर्चयेदात्मरक्षार्थं शुभैर्नीराजनादिभिः ॥
अस्य व्रतस्य माहात्म्यं को वेत्ति हरिणा विना । [5750]
सोमदत्ते पुरा दृष्टं व्रतस्य सुमहत्फलम् ॥

युधिष्ठिर उवाच ।

सोमदत्तो यथा दृष्टं भवता व्रतमुत्तमम् ।
तदेतदखिलं श्रोतुं परं कौतूहलं हि मे ॥

भीष्म उवाच ।

सोमदत्तो महानासीत्पुरा सोमकुलोद्भवः ।
राजा परमधर्मज्ञो बन्धुमाननहंकृतिः ॥ [5755]
सत्यवादी सदा मौनी ह्यातिथेयो बहुप्रजः ।
सत्सु पूजां प्रकुर्वाणः सत्त्वशत्रुः पराक्रमैः ।
बुभुजे भुवमव्यग्रः सरत्नाकरमेखलाम् ॥
तेन संपीडिता राज्ञा समेताः शत्रवः परे ।
माहिष्मतीपुरं गत्वा तैर्मत्तैः पीडितो रणे ॥ [5760]
अक्षौहिणीसहस्रैश्च ह्ययुतैः करिणां व्रजैः ।
अश्वैः काश्मीरजैस्तात लक्षकोटिसमन्वितैः ॥
संग्रामस्तुमुलस्तत्र सोमदत्तस्य तैरभूत् ।
शक्तितोमरखड्गैश्च भिण्डिपालैस्तथाश्मभिः ।
यथा देवासुरं युद्धं तथाभूत्किं नु वर्ण्यते ॥ [5765]
परैर्हतबलः संख्ये निशि संगृह्य वेदिकाम् ।

---

(for -तत्पराः). — G2 om. lines 5701–5704. — G2 om. the ref — (L. 5705) M1 सर्वशानानि धर्मज (for ᵇ). — (L. 5707) G1 सर्वशानी; G2 °दा त्व (for °ज्ञस्त्वं). — (L 5708) G(ed) कृपापात्रमसीश्वर (for ᵇ) — After line 5713, G(ed) ins.:

215** राज्यलाभकर तात सर्वत्र सुखद शुभम् ।

— M1 G(ed) om. (hapl) lines 5716–5718 G1 om line 5718 — (L. 5718) D1 शृण्वतामायुरारोग्यं (for ᵃ). — (L. 5722) G1 2 G(ed) -रूपिणी (for -धारिणी) — (L. 5726) G2 पूजां कुर्यात्समाहित (for ᵇ) — (L 5728) G2 सद्भिः (for प्रोक्ता) — (L 5731) D1 श्रियं शशिनिभाननाम्; G2 G(ed) त्र्यक्षा (G2 तीक्ष्णा) शशिविभूषणाम् (for ᵇ). — (L. 5732) G2 G(ed.) मुक्तादामविभूषिताम् (for ᵇ). — (L. 5733) D1 भूषणैश्च समन्विताम् (for ᵇ). — For line 5737, D1 subst:

216** गन्धधूपादिमाल्यैश्च अर्चयेत्प्रयतेन्द्रियः ॥

— (L. 5738) D1 विद्वान् (for वेद्यां). — (L. 5741) D1 अग्निं संस्थाप्य शालायां; M1 जुहुयाद्गोष्ठशा° (for ᵃ). D1 G(ed.) पुनः (for बुधः). — (L 5745) D1 षड्रसान्नैः प्रयत्नतः (for ᵇ). — D1 G1 2 M1 om. line 5748 — (L. 5756) D1 M1 बहुप्रदः (for °प्रजः). — (L 5759) G2 तेन संपीडितो राजा (for ᵃ). — (L. 5760) D1 त्रैगर्तैः; G2 समेतैः (for तैर्मत्तैः). M1 तैर्युक्तैः पूजितो रणे (for ᵇ). — (L. 5765) G2 M1 देवासुरैर् (for °रं) G1 तथासीद्रोमहर्षणम् (for ᵇ). — (L. 5767) D1 वेदिकासहितः श्रीमान् (for ᵃ). — (L. 5768) G2 षण्मासान्; M1 मासानि (for -मासांश्च). — After

म्रियमन्तस्थसत्वां च प्रागाद्गर्गाश्रमं प्रति ॥
तत्रैव पञ्चमासांश्च स्थित्वा शोकसमन्वितः ।
पङ्गुत्वमथ मूकत्वमन्धत्वमगमन्नृप ॥
राज्यभ्रष्टं पतिं पत्नी प्राप्तुकामं पुनः श्रियम् । [5770]
प्रलपन्तं मुहुः पुत्रान्हतान्युद्धे सुदुर्लभान् ॥
श्रियं राज्यं च भोगं च समुद्दिश्य पुनः पुनः ।
आश्वासयन्ती सा देवी जगौ श्लोकचतुष्टयम् ॥

वेदिका उवाच ।

धैर्यं विपदि कर्तव्यं संपत्तौ च क्षमा परा ।
वाचालत्वं सतां मध्ये तद्धि शास्त्रपुरःसरम् ॥ [5775]
विक्रमो युधि कर्तव्यः स्थिरत्वं स्त्रीसमीपतः ।
ऐश्वर्ये च सदा क्षान्तिर्भक्तिः शश्वत्तु भूसुरे ॥
भवितव्यं भवत्येव नालिकेरफलाम्बुवत् ।
गन्तव्यं गच्छति सदा गजभुक्तकपित्थवत् ॥
यद्भावि तद्भवत्येव यदभावि न तद्भवेत् । [5780]
इति निश्चितबुद्धीनां न चिन्ता बाधते क्वचित् ॥
एवं मनीषिणः प्राहुर्नीतिशास्त्रविदो नृप ।
मुञ्च शोकं च मोहं च चिन्तां देहविनाशिनीम् ॥
गर्गाश्रममिदं राजन्प्रापयिष्ये तदन्तिकम् ।
स ते दास्यति धर्मात्मा सर्वान्कामान्सुदुर्लभान् ॥ [5785]
सान्त्वयित्वा तदा वीरं स्वपतिं राष्ट्रवर्जितम् ।
अशक्तं गमने देवी बिभ्रती निजकन्धरे ।
प्रापयामास मुदिता गर्गाश्रममकल्मषम् ॥
पतिं तत्र प्रतिष्ठाप्य मुनिं नत्वा पुनः पुनः ।
कम्पमाना तदा साध्वी पीनोन्नतपयोधरा ॥ [5790]
चन्द्रानना सुकेशी च बिम्बोष्ठी मञ्जुभाषिणी ।
कर्णान्तनयना बाला चन्द्रिकामलसुच्छविः ॥
वेदिका वेदिमध्या सा पञ्चविंशतिवार्षिकी ।
कोमलाङ्गी तु सा देवी श्यामा सा पुण्यलक्षणा ।
मुनिं प्रोवाच धर्मिष्ठा पाहि पाहीति मे पतिम् ॥ [5795]
भगवन्पतिना सार्धमागता शत्रुपीडिता ।
राज्यभ्रष्टो ह्ययं राजा त्वामेव शरणं गतः ॥
मुनिस्तत्र चिरं ध्यात्वा ध्यानमार्गेण चक्षुषा ।
दृष्टवान्सर्वमेवैतद्राज्ञस्तस्य महात्मनः ।
उवाच मुनिशार्दूलो राजानं महिषीसखम् ॥ [5800]

गर्ग उवाच ।

युवयोः कष्टमत्युग्रं सर्वाभावं सुदुःसहम् ।
येनेदमीदृशं प्राप्तं तद्ब्रवीमि हि तेऽधुना ॥
देवीनामुत्तमा देवी व्रतानां प्रवरा शुभा ।
सर्वकामप्रदा देवी भारती नैव पूजिता ।
तस्मात्त्वमीदृशीं प्राप्तो गतिं दुरवबोधनाम् ॥ [5805]
अहो मूर्खा नराः सर्वे ऐश्वर्यमदगर्विताः ।
धर्म्यं व्रतं न कुर्वन्ति पीडां गच्छन्ति दुःखिताः ॥
व्रतोपवासः कर्तव्यो ह्यात्मनः श्रेय इच्छता ।
श्रेयसा सुखमाप्नोति परत्रामुत्र च प्रभो ॥
किमत्र बहुनोक्तेन दृष्टमाश्चर्यमुत्तमम् । [5810]
शुभव्रतेन भार्यया नलो वै प्राप्तवान्पुरम् ॥
विरूपाक्षस्य कृपया पम्पातीरनिवासिनः ।
प्राप्तवानचलां लक्ष्मीं नलो राजा विचक्षणः ॥
इत्युक्ता सहसा देवी वेदिका शुभलोचना ।
नत्वा पुनः पुनः प्राह ऋषिं परमधार्मिकम् ॥ [5815]
विरूपाक्षस्य माहात्म्यं पम्पातीरनिवासिनः ।
तीर्थस्य वैभवं मेऽद्य विस्तराद्वक्तुमर्हसि ॥

गर्ग उवाच ।

शृणु देवि प्रवक्ष्यामि पम्पानाथस्य वैभवम् ।
तुङ्गभद्रा शुभं तीर्थं कोटिशकरसंभवम् ॥

भीष्म उवाच ।

एवं प्रसन्नहृदयं मुनिं नत्वा पुनः पुनः । [5820]
एकाग्रमनसौ भूत्वा दम्पती तावतिष्ठताम् ॥

गर्ग उवाच ।

अहो वक्ष्यामि माहात्म्यं विरूपाक्षस्य शूलिनः ।
यस्य श्रवणमात्रेण वाजपेयफलं भवेत् ॥
विरूपाक्षं शिवं दृष्ट्वा नरा पापवृता अपि ।
विमुक्तकिल्बिषास्ते तु रुद्रलोकाधिवासिनः ॥ [5825]
सकृच्चापि नमेद्यस्तु विरूपाक्षं नराधिप ।

---

line 5768, G1 ins. .

217** तया सह सुचार्वङ्ग्या प्रालपत्त मुहुर्मुहु ।
हतपुत्रश्च तैर्युद्धे परित्यक्तश्च बन्धुभिः ॥
राजा चिन्ताकुलो भूत्वा कालोऽयमिति विह्वल ।

— G1 om. line 5769 — (L 5769) G(ed) पञ्चत्वम् (for पङ्गु°). — G1 2 M1 धीरा; G(ed) धीर (for पत्नी). — G1 om. line 5771. — (L 5772) D1 पुत्राश्च राज्यभोगाश्च (for ᵃ). — G2 om. the ref — (L. 5776) D1 धीरत्वं (for स्थि°). — (L. 5783) G4 मुञ्च भो राजशार्दूल (for ᵃ) — Before line 5786, D1 ins. भीष्म . — (L 5787) G(ed.) कधरायां निधाय वै (for ᵇ). — (L. 5794) D1 उत्पलेक्षणा (for पुण्यल°). — Before line 5796, G2 ins. वेदिका — (L 5798) G1 G(ed) ह्यात्म-, M1 [अ]ध्यात्म- (for ध्यान-). — (L. 5800) G2 राजान च महीपतिम् (for ᵇ). — D1 G(ed) om the ref. — (L 5801) M1 राज्याभावं (for सर्वा°) — For line 5803, G2 subst :

218** देवानां मुनिनां चैव व्रतानां परमं शुभम् ।

— (L 5805) D1 G2 गतिं दुरवबोधिनीम् (for ᵇ). — (L. 5806) G2 G(ed) -मोहिताः (for -गर्विता). — Before line 5812, G2 ins देवी — G2 om lines 5813–5816. — (L. 5814) D1 वचः श्रुत्वा मुनेर्देवी (for ᵃ). — (L. 5818) D1 सर्वपापप्रणाशनम् (for ᵇ). — (L 5819) M1 नदीतीर्थं; G(ed.) -भव कोटि- (for शुभ तीर्थं). G(ed) तीर्थं (for कोटि-). — D1 G2 om the ref. — (L. 5824) D1 पापरता; G1

कोटिवंशसमायुक्तो रुद्रलोकं स गच्छति ॥
एकोऽपि यस्य वंशे वा विरूपाक्षं नमेद्यदि ।
तस्यैव वंशजाः सर्वे रुद्रलोकाधिवासिनः ॥
तस्मिन्ब्रह्मशिलामध्ये देववृन्दैरभिष्टुतम् । [ 5830 ]
तं नत्वा तु विरूपाक्षं सर्वलोकाधिपो भवेत् ॥
स्वप्नाद्वा कैतवाद्वापि विरूपाक्षेति यो वदेत् ।
गङ्गास्नानफलं तस्य भवेत्पापक्षयो नृप ॥
पित्रोर्यदि नृपास्थीनि नखकेशानि वा पुनः ।
वामभागे महानद्या देवदेवस्य चाज्ञया ॥ [ 5835 ]
प्रक्षिप्तमात्रे तद्वंश्यास्तेषां येऽपि च तत्पदम् ।
भविष्यति नृपश्रेष्ठ किमु तत्तीरवासिनाम् ॥
कृतकृत्या नरा ये तु तेषां देवस्य दर्शनम् ।
अप्रयत्नेन भविता तत्पदं च नृपोत्तम ॥
तुङ्गभद्रा महादेवी पापघ्नी पुण्यदायिनी । [ 5840 ]
मज्जन्ति ये नरा राजंस्तेषां पापं छिनत्ति हि ॥
सरयूर्नर्मदा गङ्गा गौतमी शारदा नृप ।
तुङ्गभद्रा च कावेरी लोके पुण्यतमाः स्मृताः ॥
पुरा नळो महाराज कलिना संप्रपीडित ।
स्वदेशं संपरित्यज्य प्राप्तवानत्र बन्धुमान् ॥ [ 5845 ]
स्नात्वा तत्र त्रिकालेषु निगृहीताखिलेन्द्रिय ।
शंकरं तोषयामास विरूपाक्षं महामतिः ॥
स्नानात्तु तपसा भक्त्या श्रीलाद्राज्ञो महामतेः ।
तस्य प्रसन्नो देवेशः कृपां चक्रे सुशोभनाम् ॥
अशरीरो विरूपाक्षो दिवि स्थित्वा गणैर्वृतः । [ 5850 ]
प्रोचे नळं विरूपाक्षो जगदीशो जगन्मयः ॥
कृतार्थोऽसि महाभाग तपसा तोषितोऽस्म्यहम् ।
वरं वरय भद्रं ते विद्धि मां पार्वतीपतिम् ॥

नळ उवाच ।

किमर्थं देवदेवेश प्रार्थनादानतत्परः ।
अदृष्टरूपी भगवानाकाशे वर्ततेऽधुना ॥ [ 5855 ]
अहं पापीति विदितः पूर्वस्मिन्नपि जन्मनि ।
सर्वपापहरं देवं द्रष्टुं त्वामक्षमोऽभवम् ॥
किं नु कर्म कृतं देव कर्तव्यं किं नु पापिना ।
वद भूतेश चित्तेश तत्करोमि तवाज्ञया ॥

ईश्वर उवाच ।

मरुद्भिः प्रेरितो मूर्खो दुःखपापविवर्धन. । [ 5860 ]
कलिः कलेवरे प्रीत्या देवनान्तेऽनुवर्तते ॥
तद्दोषपरिहारार्थं भारतीव्रतमुत्तमम् ।
कुरुष्व नरशार्दूल प्रत्यक्षोऽस्मि तत. परम् ॥
सहस्रमायुर्दास्यामि तव राज्यं च शाश्वतम् ।
कीर्तिं च विपुलां लोके स्वर्लोकं तेऽपि शाश्वतम् ॥ [ 5865 ]
कीर्त्या तव कलेर्नाशं यावच्चन्द्रदिवाकरम् ॥
इत्युक्त्वा पार्वतीकान्तो विरूपाक्षो जगन्मयः ।
तुङ्गभद्रातटे रम्ये भ्राजते मरुतां गणैः ॥
नळोऽपि तं नमस्कृत्य विरूपाक्षं पिनाकिनम् ।
ऋतुपर्णपुरं श्रीमान्ययौ ध्यायन्महेश्वरम् ॥ [ 5870 ]
तुङ्गभद्रासमं लोके नास्ति किंचिन्नृपोत्तम ।
सर्वपापक्षयकरी सर्वोपद्रवनाशिनी ॥
स्वर्लोकं सूर्यलोकं च चान्द्रं सत्यं पिनाकिनम् ।
एषा दास्यति लोकांस्तु स्नातानां पापनाशिनी ॥
स्नातव्यमत्र यत्नेन माघमासे विशेषतः । [ 5875 ]
स्नातानां पितर. सर्वे ब्रह्मलोकनिवासिनः ॥
इति श्रुतः पुरा गीता नारदेन महात्मना ।
श्रीशैलाशिखरे स्थित्वा तस्मादाश्रावितं मया ॥
इति देवेन संदिष्टो नळो नाम महीपतिः ।
तुङ्गभद्रां समागम्य ऋतुपर्णेन धीमता ॥ [ 5880 ]
देवस्य संनिधौ कृत्वा विधिना नवमीव्रतम् ।
स्वपुरं प्रययौ श्रीमान्दमयन्त्या च संगतः ।
सर्वान्कामानवाप्यैव स्वर्लोकेऽद्यापि वर्तते ॥
तस्मात्त्वमपि राजेन्द्र तत्र गत्वा व्रतं कुरु ।
इत्युक्तमात्रे मुनिना सर्वरोगविवर्जितः । [ 5885 ]
तुङ्गभद्रां समागम्य सस्नौ वेदिकया सह ॥
विरूपाक्षं महादेवं नत्वा संपूज्य भक्तिमान् ।
मुनिनोक्तं व्रतं कृत्वा मुदमाप बलान्वितः ॥
विरूपाक्षप्रसादेन पुण्यतीर्थनिषेवणात् ।
प्राप्तवान्स्वपुरं श्रीमाञ्शत्रुहन्ताभवत्तदा ॥ [ 5890 ]
तस्मात्त्वमपि राजेन्द्र शत्रुहन्ता भविष्यसि ।
गच्छ गच्छ विरूपाक्षमत्र त्वं किं करिष्यसि ॥
सीतामदृष्ट्वा रामोऽपि रावणेन हृतां प्रियाम् ।
पम्पासरोवरं गत्वा श्रमं शोकं जहौ तदा ॥
मतङ्गमुनिना तत्र ब्रह्मशेन जितक्रुधा । [ 5895 ]
संगतस्तत्र धर्मात्मा ववन्दे तं सलक्ष्मणः ॥
पूजाभिः सत्कृतो रामो मुनिं नत्वा पुनः पुनः ।
मुदमाप स राजेन्द्रस्तुङ्गां दृष्ट्वा सभद्रकाम् ॥

°व्रता ( for °वृता ). — $D_1$ $M_1$ om. lines 5826–5829.—( L. 5832 ) $G_1$ स स्नात्वा; $G_2$ स्वभावात् ( for स्वप्नाद्वा ). — For line 5834, G(ed ) subst. :

219** पित्रोर्यद्यस्थि राजेन्द्र नखकेशादिकेऽथ वा ।

— ( L. 5848 ) $G_1$ महीपते; $G_2$ महामते ( for °तेः ). —( L 5851 ) $D_1$ प्रोवाच त , $G_2$ उवाचैन ( for प्रोचे नळ ) $G_1$ विशालाक्षी , G(ed.) देवरूपी ( for विरूपाक्षो ). —( L. 5853 ) $M_1$ वरदोऽहमिहागत ( for °). —( L. 5859 ) $D_1$ $G_1$ वित्तेश ( for चि° ). —( L. 5860 ) $M_1$ दुष्ट ( for दुःख- ). $G_2$ दुष्ट पापो विवर्धते ( for °). —( L. 5861 ) $G_2$ कलेवरं ( for °रे ). —( L. 5866 ) $D_1$ प्रीत्या ( for कीर्त्या ). $G_1$ $M_1$ G(ed.) -द्दिवाकरौ ( for °रम् ). —( L. 5869 ) $D_1$ जगन्मयम् ( for पिनाकिनम् ). — For line 5873, $G_2$ subst. :

220** स्वर्गलोकं सूर्यलोकं चन्द्रलोक पिनाकिनम् ।

— $G_2$ om. lines 5874–5876. $M_1$ om. lines 5876–5878. —( L. 5877 ) $D_1$ देवर्षिणा ( for इति श्रुतः ). —( L. 5884 ) $M_1$ चेत्त्वं ( for गत्वा ). —( L 5887 ) $M_1$ स्नात्वा तस्यां विरूपाक्षं ( for °). —( L. 5890 ) $G_1$ गत्वा ( for श्रीमाञ् ). $G_1$

स्ववृत्तमस्मै विनिवेद्य सम्य-
क्सीतावियोगं वनवासहेतुम् । [ 5900 ]
विसृज्य चाश्रूणि मुनेर्वचोभि
संबोधितो राघवनन्दनोऽभूत् ॥
वैशंपायन उवाच ।
श्रुत्वैतदाख्यानमशेषमार्यं
धर्मात्मजः शोकविमुक्तदेहः ।
मुदं प्रपेदे सह विप्रवर्यैः [ 5905 ]
सहानुजो वै गतकल्मषोऽभूत् ॥

Colophon

वैशंपायन उवाच ।
शुद्धान्तःकरणो राजा धर्मसूनुः सहानुजैः ।
पप्रच्छ वरधर्माणि पुनरेव नदीसुतम् ॥
युधिष्ठिर उवाच ।
देवव्रत महाप्राज्ञ पाण्डूनां हितकृत्तम ।
राम किमकरोत्तत्र पम्पातीरे मनोरमे ॥ [ 5910 ]
भवान्वेत्ति हि तत्सर्वं कृपया वद सुव्रत ।
रामस्य चरितं श्रोतुं परं कौतूहलं हि मे ॥
भीष्म उवाच ।
अहो ते विमला बुद्धिर्धर्मसूनो महामते ।
आश्चर्यमतुलं वृत्तं रामचन्द्रस्य धीमत ।
यस्य श्रवणमात्रेण नरः पापैः प्रमुच्यते ॥ [ 5915 ]
तुङ्गभद्रामहानद्यामथ स्नात्वा युधिष्ठिर ।
कृतमाध्याह्निको रामो मुनिं प्रोचे सलक्ष्मणः ॥
मतङ्ग मुनिशार्दूल प्रसिद्धोऽसि जगत्त्रये ।
श्रुत्या वृत्तेन तपसा धर्मेण विनयेन च ॥
कृतकृत्यो मुनिश्रेष्ठ तुङ्गा संसेव्यते त्वया । [ 5920 ]
सर्वपापक्षयकरी सर्वोपद्रवनाशिनी ॥
तुङ्गभद्रा शुभकरी पुण्यतोया शुभावहा ।
सेवितासौ त्वया ब्रह्मन्देवानामपि दुर्लभा ॥
अत्र स्नाताः पापिनोऽपि पितृमातृकुलानि च ।
सहस्राणि समुद्धृत्य ब्रह्मलोकं व्रजन्ति हि ॥ [ 5925 ]
दुर्लभा मनुजैः क्रूरैः कृतघ्नैः पापकर्मभिः ।
त्वादृशैः पुण्यशीलैश्च सदा सेव्या महामते ॥
विरूपाक्षं महादेवं कोटिशंकरमव्ययम् ।
पुण्यशीलं सदानन्दं मुने दर्शय मे शिवम् ॥
वं नत्वा कृतकृत्योऽहं कृपया तव सुव्रत । [ 5930 ]
सीताविरहजं दुःखं त्यजामि त्वत्प्रसादतः ॥
भीष्म उवाच ।
तं नत्वा मनसा रामं विष्णुरूपिणमव्ययम् ।
ऋषिर्मतङ्गः प्रोवाच धर्मज्ञो राघवं प्रति ॥
राम राम महाबाहो जाने त्वां विष्णुमव्ययम् ।
सत्यप्रतिज्ञं देवेशमार्तत्राणपरायणम् ॥ [ 5935 ]
न त्वयाविदितं किंचित्सर्वलोकेषु शाश्वत ।
मयि कारुण्यभावेन शंकरं परिपृच्छसि ॥
कोटिशंकरविख्याते स्थानेऽस्मिन्देवसंततिः ।
शंकरं तोषयामास प्रत्येकं रघुनन्दन ॥
आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः । [ 5940 ]
गन्धर्वा लोकपालाश्च ऋषयश्च तपोधनाः ।
शंकरं तोषयामासु शाश्वतस्थानकाङ्क्षया ॥
अनेककोटिसाहस्रं लिङ्गमत्र निवेश्य च ।
युगानां त्रीणि चत्वारि पूजयामासुरव्ययम् ॥
उमापतिर्विरूपाक्षः प्रसन्नोऽभूद्दिवौकसाम् । [ 5945 ]
कोटिशो रूपमास्थाय प्रत्येकं तु पिनाकधृक् ॥
किमर्थं तप्यते देवैश्चिरं कायविशोषिभिः ।
नन्दिस्तान्परिपप्रच्छ नन्दीशश्चेत्युवाच तम् ॥
आज्ञया नीलकण्ठस्य कोटिमूर्तेः प्रतापवान् ।
वरं वृणीध्वं भो देवा इत्युवाच वृषध्वजात् ॥ [ 5950 ]
उक्तास्ते नन्दिना देवा दिवमालोक्य विस्मिताः ।
अनेकाञ्शंकरान्दृष्ट्वा भीता प्रोचुः शिवं प्रति ॥
नो वयं विद्म देवेश दिव्यरूपं भयंकरम् ।
आकाशं भूतलं व्याप्तं कथं याचामहे वरम् ॥
एकरूपधरो भूत्वा सुखासीनो महेश्वरः । [ 5955 ]
दातुमर्हसि विश्वात्मन्वरमस्मत्सुखावहम् ॥
ईश्वर उवाच ।
अष्टमूर्तिधरो भूत्वा शिलायां ब्रह्मण सुराः ।
चिरं वस्तुमिहेच्छामि वरयध्वं वरं मयि ॥
इत्युक्त्वा पार्वतीकान्तो नन्दिना भृङ्गिणा सह ।
दिव्यरूपधरो भूत्वा शिलायां ब्राह्मणोऽवसत् ॥ [ 5960 ]
तत्र देवाः सगन्धर्वा दिक्पालैः सह संगताः ।
विरूपाक्षं नमस्कृत्य वचनं चेदमब्रुवन् ॥
पाहि पाहि विरूपाक्ष प्रणतार्तिप्रणाशन ।
त्वत्पादकमलादन्यदस्माकं नैव विद्यते ॥

---

श्रमं शोकं जहौ तदा ( for ᵇ ). — ( L 5896 ) D1 च स- ; G1.2 सह ( for त स- ). — ( L. 5904 ) G2 -हेतुम् ( for -देह ). — ( L. 5905 ) G2 G(ed.) विप्रवर्यैः ( for °वर्गैः ).

COLOPHON. — *Sub-parvan* · D1 G2 M1 G(ed) शेषधर्मा, G1 आश्रयपर्वणि शेषधर्मा.. — *Adhy. name* D1 विरूपाक्षमहिमावर्णनम्; G1 G(ed) महानवमीव्रतम्, G2 महानवमीप्रशसा. — *Adhy no.* D1 G1.2 M1 44, G(ed.) 45.

( L. 5907 ) D1 धर्मशीलैः G1 °पुत्र· ( for °सूनु· ). G2 सहानुज· ( for °जैः ) — ( L. 5908 ) D1 -धर्मं च ; G2 -धर्मांश्च ( for -धर्माणि ). — ( L. 5909 ) M1 महाभाग ( for °प्राज्ञ ). — ( L. 5911 ) D1 भगवान्वेत्ति तत्सर्वं ( for ᵃ ) — ( L 5922 ) D1 G2 M1 शुभाश्रया ( for °वहा ) — D1 om. lines 5929–5932. G2 om lines 5936–5938 — ( L. 5946 ) G2 कोटिरूप समास्थाय ( for ᵃ ). — ( L. 5947 ) G1 प्रत्येकं कायकोषिभिः ( for ᵇ ). — D1 om. line 5948. — ( L 5949 ) G2 प्रभावतः ( for प्रतापवान् ). —( L. 5950 ) D1 G2 वृषध्वजः ( for

अनन्तभोगमायुष्यं चिरं वासं महेश्वर । [5965]
देहि स्वर्गे जगन्नाथ नीलकण्ठ नमोऽस्तु ते ॥
ईश्वर उवाच ।
ब्रह्मावसानपर्यन्तं युष्माकं स्वर्गवासिनाम् ।
अस्तु वास सुराः सर्वे ह्यत्र वत्स्याम्यहं चिरम् ॥
रामोऽहं तु भविष्यामि विष्णवंशेन समन्वितः ।
दशाननपुरोगांश्च हनिष्ये तानि संयुगे ॥ [5970]
ऋक्षवानररूपेण यूयमत्र जनिष्यथ ।
विहराम वने पुण्ये गोलाङ्गूलनिषेविते
तुङ्गाजलसमूहेन तृसा मूलफलेन च ॥
इत्युक्त्वा भूतनाथेन देवदेवेन राघव ।
संप्रहृष्टाः सुरगणा दिवं जग्मुर्यथासुखम् ॥ [5975]
स त्वं राम महाबाहो शंकरो लोकशंकरः ।
वधार्थं रावणादीनां जातो रघुकुले शुभे ।
ते सुरा वानरा जाता ह्यागमिष्यन्ति संप्रति ॥
तैः सार्धमङ्ग नगरीं राक्षसेन्द्रस्य दुर्मतेः ।
लङ्कां गन्तासि धर्मात्मन्हनिष्यसि निशाचरम् ॥ [5980]
इत्युक्तो मुनिना तेन मतङ्गेन महात्मना ।
रामो धर्मविदां श्रेष्ठो मुमोद च ननाम च ॥
पुनः प्रोवाच धर्मात्मा रामचन्द्रो महामनाः ।
मतङ्ग मुनिशार्दूल कृतकृत्योऽसि संप्रति ॥
केयं ब्रह्मशिला प्रोक्ता देवगन्धर्वसेविता । [5985]
ब्रूहि तां मुनिशार्दूल यत्तन्मुख्यस्थलं शुभम् ॥
मतङ्ग उवाच ।
ब्रह्मादयः सुराः सर्वे योगिनः सनकादयः ।
गन्धर्वा लोकपालाश्च स्नान्ति नद्यां शुभव्रताः ॥
शिलामारुह्य सन्तेऽहं विरूपाक्षस्य पार्श्वतः ।
जपध्यानपरा नित्यमासते ब्रह्मवित्तमाः ॥ [5990]
दक्षिणे पूर्वदिग्भागे पश्चिमे रघुनन्दन ।
या शिला सुभगा प्रोक्ता सा वै ब्रह्मशिला स्मृता ॥
तस्यां स्थित्वा जपं चक्रुर्दिव्यमन्त्रविदः सुराः ।
माघमासे विशेषेण स्नात्वा तत्रोपविष्टिताः ॥
गायत्र्यादिमहामन्त्रैर्जपं कुर्वन्ति ते सुराः ॥ [5995]
तस्माद्ब्रह्मशिला प्रोक्ता ब्रह्मानुष्ठानतो नृप ।
ये कुर्वन्ति जपं दानं तेषा लोकस्तु शाश्वतः ॥
ये नराः पुण्यकर्माणो ह्यत्र मज्जन्ति नित्यशः ।
तेषां लोकास्तु काकुत्स्थ देवगन्धर्वसेविताः ॥
विख्यातं त्रिषु लोकेषु विरूपाक्षस्य पश्चिमे । [6000]
वसिष्ठस्याश्रमं विद्धि सर्वपापप्रणाशनम् ॥
तप कुर्वन्ति मुनयो मनव ऋषयस्तथा ।
वसिष्ठस्याश्रमे पुण्ये सर्वपापविवर्जिते ॥
पुरत पूर्वदिग्भागे कोटिशंकरसंज्ञिते ।
ये मज्जन्ति नरश्रेष्ठास्तेषां लोक कपर्दिन ॥ [6005]
स्थापनात्कोटिलिङ्गानां दैवतैर्देववल्लभः ।
कोटिशंकरनाम्ना तत्प्रथितं पृथिवीतले ॥
तत्र कुर्वन्ति मुनयो जप परमपावनम् ।
अद्यापि राघवश्रेष्ठ हयद्भिरभिगूहिते ॥
तत्र देवास्त्रयस्त्रिंशत्कोटिलिङ्गप्रपूजनात् । [6010]
शाश्वतं परमं स्थान जग्मुस्ते भरतर्षभ ॥
अत्र मज्जन्ति मुनयो मानवा मनुजेश्वर ।
सिद्धयोगे पुण्यदिने माघमासे विशेषतः ॥
कोटिशंकरविख्यातं लिङ्गं परमपावनम् ।
नत्वा स्पृष्ट्वा दिवं याति पापवानपि राघव ॥ [6015]
अभिषेकादिनैवेद्यै शंकरं य प्रपूजयेत् ।
स मुक्तः सर्वपापेभ्यो यानारूढो दिवं व्रजेत् ॥
यः स्नाति दिनमेकं तु शंकरस्य च सन्निधौ ।
स कोटिकुलसंयुक्तः शिवलोके महीयते ॥
तस्माद्वै पूर्वदिग्भागे क्रोशमात्रे तु राघव । [6020]
कपिलस्याश्रमं विद्धि सर्वपापप्रणाशनम् ॥
शंकरं तु विरूपाक्षं कपिलेश्वरमव्ययम् ।
त्रिकालं पूजनं कुर्वस्तिष्ठामि रघुनन्दन ॥
तस्य पूजाप्रभावेन त्वामहं दृष्टवान्किल ।
कृतकृत्योऽस्मि भद्रं ते मा पालय रघूत्तम ॥ [6025]
संसारविषवृक्षस्तु महारूढो दुरत्यय ।
छेत्तुमर्हसि तं राम स्वस्ति स्यात्तु नमोऽस्तु ते ॥
एवमुक्त्वा मुनिवरस्तूष्णीमास्ते रघूत्तमम् ।
कृताञ्जलिपुटो धीमानानन्दाश्रुपरिप्लुतः ॥
रामोऽपि तं नमस्कृत्य वचनं चेदमब्रवीत् । [6030]
मतङ्ग मुनिशार्दूल तथास्तु तव भाषितम् ।
कृपया तव धर्मात्मन्हनिष्ये राक्षसेश्वरम् ॥
तुङ्गास्नानफलाद्विद्वन्विरूपाक्षस्य दर्शनात् ।
मनःप्रसादमगमत्पापाच्च परिमोचितः ।
स्वस्ति तेऽस्तु गमिष्यामि किष्किन्धां नगरीं शुभाम् ॥
इत्युक्त्वा तं नमस्कृत्य प्रययौ रघुनन्दनः ।
तस्मात्त्वमपि तां पम्पां गन्तुमर्हसि सुव्रत ॥
तुङ्गास्नाने विरूपाक्षे धर्मदे कोटिशंकरे ।
मतिं कुरु महाराज महापातकनाशिने ॥
सर्वत्र सुलभा तुङ्गा त्रिस्थानेषु तु दुर्लभा । [6040]

---

°ध्वजात् ) — ( L 5954 ) G1 2 G(ed.) प्राप्तं ( for व्याप्तं ). D1 यास्यामहे ( for याचा° ) — ( L 5957 ) D1 मूर्तय· कोटिश शुभाः ( for ᵇ ). — ( L. 5967 ) G(ed ) -गामिनाम् ( for -वासि° ). — After line 5968, D1 ins. ·

221** आगमिष्यति रामोऽत्र विष्णवशो लोकपालक ॥

— ( L. 5975 ) D1 हृष्टा सुरगणा· सर्वे ( for ᵃ ). G1 G(ed.) यथागतम् ( for °सुखम् ). — G1 om. the ref. — ( L. 5995 ) G2 भूसुराः ; M1 ते नरा. ( for ते सुरा ). — ( L. 6001 ) D1 -विवर्जितम् ( for -प्रणाशनम् ). — M1 om. lines 6006–6008 — ( L. 6007 ) G2 पृथिवीपते ( for °तले ). — ( L. 6008 ) G1 तपः परममास्थिता ( for ᵇ ). — ( L. 6015 ) G1 दृष्ट्वा ( for स्पृष्ट्वा ) — ( L 6019 ) M1 स्वर्ग- ( for शिव- ). — ( L. 6025 ) G1 श्रीराम करुणानिधे ( for ᵇ ). — G2 om. lines 6038–6040. D1 om. lines 6044–6045. M1 om. lines

मार्कण्डेये गुहारण्ये विरूपाक्षे विशेषतः ॥
दुर्लभं सर्वलोकानां विरूपाक्षस्य दर्शनम् ।
कथंचिद्दर्शनं लब्ध्वा सर्वपापैः प्रमुच्यते ॥
महापातकयुक्तो वा युक्तो वा सर्वपातकैः ।
सकृत्तुङ्गाम्भसि स्नात्वा नरः पापैः प्रमुच्यते ॥ [ 6045 ]
पिबेद्यः कणमात्रं तु तुङ्गाम्भः सोऽपि मानवः ।
ज्ञानाज्ञानकृतैः पापैर्मुक्तो नाकं समश्नुते ॥
य इदं पुण्यमाख्यानं शृणुयादपि मानवः ।
सोऽपि पापविनिर्मुक्तस्तुङ्गास्नानफलं लभेत् ॥

Colophon

युधिष्ठिर उवाच ।

राजाज्ञां शिरसा कृत्वा रामो धर्मभृतां वरः । [ 6050 ]
कं देशं समनुप्राप्तः पुण्यं परमपावनम् ॥
तन्मे कथय तत्त्वेन गङ्गासुत नमोऽस्तु ते ।
तस्मात्कीर्तिश्रवात्सद्यो नरः पापैः प्रमुच्यते ॥

भीष्म उवाच ।

शृणु पार्थ प्रवक्ष्यामि श्रोतॄणामघनाशनम् ॥
रामस्य चरितं पुण्यं सर्वमङ्गलदायकम् ॥ [ 6055 ]
सीतामन्वेष्टुकामोऽसौ रामो रघुकुलोत्तमः ।
यं पुण्यदेशं संप्राप्तस्तं ब्रवीमि हि तेऽधुना ॥
श्रीगलं वेङ्कटाद्रिं च श्रीशैलमथ शाश्वतम् ।
काञ्चीं तु कामदां राजंश्चचार रघुसत्तमः ॥
तत्र तत्र च राजेन्द्र दानं ब्राह्मणतर्पणम् । [ 6060 ]
गोभूतिलहिरण्यादि कन्यादानशतानि च ।
दत्त्वा तद्देशजान्विप्रान्स्थापयामास सात्त्विकान् ॥
श्रीगलं नारसिंहं च गत्वा रामः प्रतापवान् ।
नमस्कृत्वा नारसिंहमस्तौषील्कमलापतिम् ॥
गोविन्द केशव जनार्दन वासुदेव [ 6065 ]
विश्वेश विश्व मधुसूदन विश्वरूप ।
श्रीपद्मनाभ पुरुषोत्तम पुष्कराक्ष
नारायणाच्युत नृसिंह नमो नमस्ते ॥
देवाः समस्ता खलु योगिमुख्या
गन्धर्वविद्याधरकिंनराश्च । [ 6070 ]
यत्पादमूलं सततं नमन्ति
तं नारसिंहं शरणं गतोऽस्मि ॥
वेदान्समस्तान्खलु शास्त्रगर्भा-
न्विद्याबलं कीर्तिमतीं च लक्ष्मीम् ।
यस्य प्रसादात्पुरुषा लभन्ते [ 6075 ]
तं नारसिंहं शरणं गतोऽस्मि ॥
ब्रह्मा शिवस्त्वं पुरुषोत्तमश्च
नारायणोऽसौ मरुतां पतिश्च ।
चन्द्रार्कवाय्वग्निमरुद्गणाश्च
त्वमेव तं त्वा सततं नतोऽस्मि ॥ [ 6080 ]
स्रष्टा च नित्यं जगतामशेष-
स्त्राता च हन्ता विभुरप्रमेय ।
एकस्त्वमेव त्रिविधा विभिन्न-
स्तं त्वा नृसिंहं सततं नतोऽस्मि ॥
इति स्तुत्वा रघुश्रेष्ठः पूजयामास तं हरिम् । [ 6085 ]
पुष्पवृष्टिं पपाताशु तस्य देवस्य मूर्धनि ।
साधु साध्विति तं ब्रूयुर्देवा ऋषिगणैः सह ॥
राघवेण कृतं स्तोत्रं पीत्वामृतमनुत्तमम् ।
पठन्ति ये द्विजवरास्तेषां स्वर्गस्तु शाश्वतः ।
इत्युक्त्वा प्रययुः सर्वे देवा ऋषिगणैः सह ॥ [ 6090 ]
रामोऽपि तत्र वै तिष्ठन्मुनिं नत्वाथ गालवम् ।
कृताञ्जलिपुटो राजन्प्रोवाचेदं महामतिः ॥
ब्रह्मंस्त्वं मुनिशार्दूल सर्वं वेत्ति भवान्खलु ।
नारसिंहस्य देवस्य माहात्म्यं वक्तुमर्हसि ॥
यदि ते मयि चेत्प्रीतिरस्ति मे तद्वदस्व ह । [ 6095 ]
क्षेत्रस्यास्य द्विजश्रेष्ठ तीर्थस्यास्य च वैभवम् ॥

गालव उवाच ।

आश्चर्यं राघवश्रेष्ठ त्वत्कृतं पूर्वजन्मनि ।
त्वमेव वेत्सि तत्सर्वं न हि विन्दामहे वयम् ।
तथापि शृणु वक्ष्यामि ह्याज्ञया तव सुव्रत ॥

---

6047–6048.

COLOPHON. — *Sub-parvan* $D_1$ $G_1$ आश्चर्यपर्वणि शेषधर्माः ; $G_2$ $M_1$ G(ed) शेषधर्माः. — *Adhy name* $D_1$ सग्रह ; $G_1$ तुङ्गभद्राकोटिशकरमाहात्म्यम्. — *Adhy no.* $D_1$ $G_{1,2}$ $M_1$ 45 ; G(ed) 46.

$G_2$ राजा ( for युधिष्ठिर ) — ( L. 6050 ) $D_1$ तदाज्ञां ( for राजाज्ञां ). — ( L. 6052 ) $D_1$ $G_2$ $M_1$ तत्त्वज्ञ ( for तत्त्वेन ). — ( L. 6053 ) $D_1$ तत्कीर्तिश्रवणात्सद्यो ( for ᵃ ) $D_1$ $G_2$ पापात् ( for पापैः ). — ( L 6055 ) $G_2$ ( *inf lin* ) सर्वपापप्रणाशनम् ( for ᵇ ). — ( L 6058 ) $D_1$ अहोबलं पन्नगाद्रिं, $M_1$ G(ed.) अहोबि( $M_1$ °ब )लं वेङ्कटाद्रिं ( for ᵃ ). G(ed) श्रीशैलमल्लेश्वरम् ( for ᵇ ). — ( L. 6060 ) $G_2$ स्नानं ( for दानं ). — $M_1$ om. line 6063 — ( L. 6063 ) $G_2$ G(ed.) अहोबि( $G_2$ °ब )लं नारसिंह ( for ᵃ ). — Before line 6065, $D_1$ ins. श्रीरामः — ( L. 6072 ) $D_1$ $G_2$ प्रपद्ये ( for गतोऽस्मि ) — ( L. 6074 ) $G_2$ आयु स्थिरां कीर्तिमतीव लक्ष्मीम् — After line 6076, $D_1$ ins .

222** विरिञ्चिनाम्ना हि विरिञ्चिमस्थितः
शिवेति नाम्ना शिवसस्थितो हि ।
स्वयं हि विष्णुर्भुवनस्य गोप्ता
चन्द्रार्कवाय्वग्निमरुद्गणानाम् ॥

— ( L 6080 ) $G_2$ $M_1$ नान्यत् ( for तं त्वां ). — ( L. 6081 ) $G_2$ $M_1$ अधीशस् ( for अशेषस् ) G(ed.) स्वप्नेऽपि नित्यं जगतामशेष. — ( L. 6083 ) G(ed) त्राता त्वमेकस्त्रिविधो विभिन्नस्. — ( L. 6084 ) $D_1$ $M_1$ त्वा सिंहमूर्तें ; $G_1$ त्वां सिंहरूपं , G(ed.) तं त्वां नृसिंहं ( for त्वा सिंहमूर्तिं ). — $M_1$ om. ( hapl. ) lines

पुरा योगीश्वरो राम नारसिंहो जगन्मयः । [6100]
हिरण्यनिधनं कृत्वा ह्यत्र प्रत्यक्षतां गतः ॥
देवदेवो जगन्नाथः प्रणतार्तिप्रणाशनः ।
दिक्पालैर्देववृन्दैश्च सदा संसेव्यतेऽत्र वै ॥
पदा स्पृशन्ति ये राम भुवमत्र प्रयत्नतः ।
विमुक्ताः सर्वपापेभ्यः प्रयान्ति हरिमन्दिरम् ॥ [6105]
भवनाशीति विख्याता गङ्गा पापप्रणाशिनी ।
सुप्रसन्ना च लोकानां पापिनां मुक्तिदायिनी ॥
अत्र देवास्त्रयस्त्रिंशत्सदा तिष्ठन्ति राघव ।
चिन्तयन्तः सदा देवं नारसिंहं जगन्मयम् ॥
अयमेव हरिः साक्षाद्रामनत्वमुपागतः । [6110]
बलिनिग्रहणं कृत्वा दिवं प्रादाद्विडौजसे ॥
राज्ञां तु दुर्विनीतानां निधनाय सुरोत्तमः ।
जमदग्निसुतो भूत्वा कार्तवीर्यं तथाहनत् ॥
स एव त्वं हि रामोऽभूदिक्ष्वाकूणां शिरोमणिः ।
पौलस्त्यस्य वदन्ति त्वां हन्तारं लोकवैरिणः ॥ [6115]
अप्रमेयमनालोक्यमचिन्त्यं भक्तवत्सलम् ।
सर्वज्ञं त्वां विदुर्देवाः संप्रत्यत्र महावने ॥
देवान्पश्य रघुश्रेष्ठ त्वदालोकनतत्परान् ।
दिविस्थान्स्तुवतस्त्वां तु हन्तारं लोकवैरिणः ॥
त्वं तु वै द्वापरस्यान्ते यदुवंशे कृतोदयः । [6120]
कृष्णो विश्रुतकर्मा त्वं भविष्यसि न संशयः ।
एवं वदन्ति विबुधास्त्वामेकं सर्वभूतगम् ॥
त्वामाराध्य चिरं कालमत्र पर्वतमूर्धनि ।
ऋषयो ब्राह्मणाश्चैव त्वत्पादं ते प्रपेदिरे ॥
अत्र व्याघ्रा मृगगणाः पशुपक्षिद्रुमादयः । [6125]
व्याधा वनचरा राम तान्विद्धि सुरपुंगवान् ।
सेवन्ते मुक्तिकामास्ते त्वत्पादकमलं शुभम् ॥
पुरा संचितपुण्यानां सुखदं सूर्यवंशज ।
पापेप्सूनां भयकरं स्थानमस्य विभोर्हरेः ॥

भीष्म उवाच ।

इति श्रुत्वा रघुश्रेष्ठो गालवं तं प्रणम्य च । [6130]
नारसिंहं नमस्कृत्य प्रययौ च श्रियोऽचलम् ॥
धर्मराज त्वमेवाशु गत्वा विगतकल्मष ।
नारसिंहप्रसादेन सर्वान्कामानवाप्स्यसि ॥
औवलेशमहो गत्वा पतितोऽपि विमुच्यते ।
त्रिरात्रमुषितानां तु किं पुनः पुण्यवैभवम् ॥ [6135]
यस्त्वेतच्छृणुयान्नित्यं नारसिंहस्य वैभवम् ।
स मुक्तः सर्वपापेभ्यो ब्रह्मलोकं व्रजेद्ध्रुवम् ॥

युधिष्ठिर उवाच ।

श्रीशैलशिखरे रामो राजपुत्रो महामतिः ।
देवं पिनाकिनं नत्वा ततः किमकरोत्प्रभुः ।
वद देवव्रत त्वं मे भूतनाथस्य वैभवम् ॥ [6140]

भीष्म उवाच ।

देवदेवो विरूपाक्षो नीलकण्ठो महाद्युतिः ।
श्रीशैलाख्ये गिरिवरे सर्वकालं प्रवर्तते ॥
श्रीशैलेन्द्रं प्रविष्टानां नराणां पापिनामपि ।
नास्ति नास्ति पुनर्जन्म नारदेन प्रभाषितम् ॥
स्थानानि भुवि देवस्य विख्यातानि महीतले । [6145]
कैलासो हिमशैलश्च ह्युत्तरे जाह्नवीतटे ॥
विश्वेश्वरो विरूपाक्षो महाकालो महामते ।
श्रीशैलश्चैकचूतश्च मार्कण्डेयो महामते ।
एतानि बहुमुख्यानि स्थानानि स्मरवैरिणः ॥
तत्र तत्र महादेवं प्रसन्नं भक्तवत्सलम् । [6150]
नत्वा नरः पापवृतो विमुक्तो दिवमश्नुते ।
कैलासे श्रीगिरौ देवः प्रमन्न समतां गतः ॥
तत्र वै देवतानां च मनुष्याणामथात्र च ।
सदा प्रसन्नो देवेशः पार्वतीरमणः प्रभुः ।
गतानामत्र वै मुक्तिं ददाति भुवनेश्वरः ॥ [6155]
श्रीशैलशिखरे दृष्टे मनुजैः पापकर्मभिः ।
छित्त्वा सर्वाणि पापानि तेषां मुक्तिं ददाति च ॥
एकयामं द्वियामं वा त्रियामं वा वसन्ति ये ।
नास्ति नास्ति पुनर्जन्म साक्षात्कृष्णेन भाषितम् ॥
एकरात्रोषितानां तु पितृमातृकुलानि च । [6160]

---

6088–6090, — ( L. 6095 ) $M_1$ वदस्व मे ; G(ed ) वदाधुना ( for वदस्व ह ) — ( L. 6101 ) G(ed.) हिरण्यकशिपुं हत्वा ( for [a] ) —( L. 6106 ) $G_1$ G(ed.) गङ्गा सौम्यगुणा शुभा ( for [b] ).— ( L 6107 ) $D_1$ $M_1$ अत्र प्रसन्ना लोका( $M_1$ देवा)-नां ; $G_2$ अत्र स्थितानां लोकानां ( for [b] ) — G(ed ) om lines 6108–6109 — (L 6111) $G_1$ स बलेर्निग्रहं कृत्वा ( for [a] ). —(L. 6114 ) $D_1$ $M_1$ स त्वं रामाभिरामोऽभूद् ( for [a] ).—( L 6115 ) $G_1$ हन्ता युधि च रावणम् ( for [b] ). —( L 6119 ) $D_1$ दिविष्ठास्तु स्तुवन्ति त्वा ( for [a] ) — $D_1$ om line 6120. —(L 6120) $G_2$ $M_1$ यदुवंशशिरोमणिः ( for [b] ). —( L. 6122 ) $D_1$ त्वामेकं सर्वदा सुरा ( for [b] ) —( L. 6125 ) $G_1$ महासत्त्वा, G(ed.) मृगेन्द्राश्च ( for मृगगणा ). $G_2$ $M_1$ -मृगादय ( for -द्रुमा° ) —( L. 6127 ) $D_1$ दिवं संत्यज्य देवताः ( for [b] ). —( L. 6129 ) $D_1$ $G_2$ $M_1$ पापेच्छूनां ( for °प्सूनां ). $D_1$ $G_2$ $M_1$ स्थानं मुनिनिषेवितम् ( for [b] ). — ( L 6131 ) $D_1$ प्रययौ पार्वतीपतिम् ( for [b] ). —( L. 6132 ) $D_1$ तस्मात्त्वमपि राजेन्द्र ( for [a] ). — After line 6133, $G_1$ ins. :

223** सर्वपापप्रसक्तोऽपि पतितोऽपि विमुच्यते ।

—( L 6134 ) $G_2$ G(ed.) अहोबलम् ( for औवलेशम् ). $D_1$ अहोबलेशं गत्वैव ( for [a] ).—( L 6136 ) $D_1$ $G_2$ $M_1$ पुण्यं ( for नित्यं ). — After line 6136, $D_1$ ins. an add. colophon mentioning sub-parvan as आश्चर्यपर्वणि शेषधर्माः, adhy. name as अहोबलमाहात्म्यम् and adhy. no. as 46. —( L. 6143 ) $G_2$ $M_1$ श्रीशैल स- ( for °लेन्द्रं ) —( L. 6148) $D_1$ चैकरूपश्च ; चक्रचूतश्च ( for चैक° ). — ( L. 6149 ) $D_1$ G(ed.)

सिद्धा बन्धुजनाश्चैव प्राप्नुवन्ति हि तत्पदम् ॥
तत्रागतं रघुवरं ज्ञात्वा तत्र महर्षय ।
द्रष्टुकामास्तथा जग्मुर्नारायणमरिंदमम् ॥
जामदग्न्यस्तथा रामो भृगुश्च्यवनभार्गवौ ।
सत्यजित्सत्यकीर्तिश्च शतानन्दो दृढव्रत । [ 6165 ]
शङ्खो यमश्च सन्मेधा कपर्दी चाथ कङ्कणः ॥
एते चान्ये च बहवो मुनय संशितव्रता ।
रामं दृष्ट्वा मुदं जग्मुरतुला रघुनन्दनम् ॥
राम. संपूज्य तान्सर्वानर्घ्यपाद्यैररिंदम ।
नमस्कृत्य च तानाह प्राञ्जलिर्मुनिपुंगवान् ॥ [ 6170 ]
कुशलं वो मुनिगणा धन्यो व' पादसेवया ।
श्रीशैलेशो मया दृष्टः पूजितश्च विशेषत ।
अत्र किं करणीयं मे तद्वदन्तु महर्षय ॥
तेऽपि रामं पुरस्कृत्य जामदग्न्यं बहुश्रुतम् ।
चिरंजीवी भवेत्युचुर्जामदग्न्यस्ततोऽब्रवत् ॥ [ 6175 ]
रामाभिराम भगवन्हिताय जगता विभा ।
कृतावतारो भवता लोके खलु सुदुर्लभः ॥
पाहि लोकानृषिगणान्राक्षसाञ्जहि राघव ।
त्वद्दर्शनात्सुतप्तं मे तपस्तेषां महात्मनाम् ॥
दातव्यमत्र भवता ब्राह्मणेभ्यो धनं बहु । [ 6180 ]
अन्नपानीयदानानि कर्तव्यानि महामते ॥
अत्रैव दानात्पितरस्तु सर्वे
तृप्ता दिवं यान्ति सुशोभमाना' ।
गन्धर्वमुख्यैरुपसेव्यमाना-
स्तथा समस्तैर्मुनिदेवसंघैः ॥ [ 6185 ]
गीतानि देवाः सततं गृणन्ति
कदा नु शैलेशमहं व्रजामि ।
प्रत्येकमित्येवमुमापतिं तं
भजन्ति नित्य परिपूर्णचित्ता ॥
कुर्वन्ति दानानि महत्सु सेवां [ 6190 ]
तीर्थेषु मज्जन्ति शुभं वदन्ति ।
ये चापि पूर्वं कृतिनो महान्त-
स्तैरेव वन्द्य सततं गिरीश' ॥
सुरेन्द्रः पूर्वदिग्भागे स्थित्वा देवगणैः सह ।
पूजां करोति यत्नेन मुक्त्यर्थं रघुनन्दन ॥ [ 6195 ]
दक्षिणस्यां दिशि यमस्तिष्ठन्पितृगणैः सह ।
श्रीशैलेशं महाभक्त्या स्तौति प्रीतो रघूत्तम ॥
प्रचेताः पश्चिमद्वारे तिष्ठञ्श्रीशैलवासिनम् ।
पाहि मां पार्वतीकान्तेत्येव स्तौति पुन पुनः ॥
यक्षराडुत्तरे भागे सदा क्रीडति शंभुना । [ 6200 ]
तस्य दिव्यां तनुं पश्यन्स्तुवन्हृष्यञ्जपन्स्तुवन् ॥
मध्यं तेषां सुराणां तु सिद्धानां साध्यरक्षसाम् ।
कदम्बै पूरिते स्थाने स्थातुमन्यैर्न शक्यते ।
भूलोकस्य तु सेवार्थं दत्तं त्रिदिवसं किल ॥
श्रुत्वैव राघवश्रेष्ठो जामदग्न्यात्कुरूद्वह । [ 6205 ]
दत्त्वा दानानि विधिवद्दक्षिणद्वारतो ययौ ॥
श्रीशैल गच्छति पुमान्यो वा को वा नृपोत्तम ।
तस्यैव वंशजा सर्वे मुक्ता एव न संशयः ॥
य इदं पुण्यमाख्यानं नारदेन प्रभाषितम् ।
शृणोति सततं भक्त्या शिवसायुज्यमश्नुते ॥ [ 6210 ]

Colophon

युधिष्ठिर उवाच ।

देवव्रत महाबुद्धे सुरसिन्धुसुत प्रभो ।
श्रीनिवासस्य माहात्म्यं वद नो वदता वर ॥
वैकुण्ठवासी लोकेशो विष्णुः सर्वगत' प्रभुः ।
कथं प्राप्तो वृषगिरिं तन्मे त्व कृपया वद ॥

भीष्म उवाच ।

पुरा वै नारद' श्रीमान्ब्रह्मपुत्रो महाद्युतिः । [ 6215 ]
हरिं द्रष्टुमनास्तात वैकुण्ठं समुपागत' ॥
तत्र दृष्ट्वा हरिं पार्थ क्षीरोदस्योपकण्ठत ।
आयान्त ऋषयो दृष्ट्वा मुदमापुश्च नारदम् ।
अगस्त्यप्रमुखा' सर्वे पाराशर्यपदानुगा ॥
अनुज्ञातो मुनिगणै' पाराशर्यो महाद्युति' । [ 6220 ]
व्यासो वचनमक्लीब नारदं प्रत्युवाच ह ॥
कृतकृत्यो मुने ब्रह्मंस्त्वमेको जगतीतले ।
विष्णुभक्तोऽसि नान्योऽस्ति सदा कीर्तयसे यतः ॥
अहो खलु मनुष्याणां मोक्षदो विष्णुरव्ययः ।
स त्वया सेवितो नित्यं कृतकृत्यो भवानत' ॥ [ 6225 ]
स्रष्टा पालयिता हन्ता एक एव जनार्दन ।
स त्वया पूजितो नित्यं तस्मात्खलु कृती भवान् ॥
योऽनन्तः सर्वभूतानां सेतुभूतो जगन्मयः ।

---

सुवि ( for बहु- ). — ( L. 6155 ) G(ed ) नतानाम् ( for ग° ). — ( L. 6158 ) D1 G2 M1 वसतस्तत्र भूपते ( for $^b$ ) — ( L 6161 ) D1 G(ed.) स्निग्धा ( for सिद्धा ) M1 सुस्निग्धा बन्धुजाश्चैव ( for $^a$ ). — ( L. 6162 ) D1 महत्स्थलम् ( for महर्षय ). — ( L. 6165 ) D1 M1 कृतव्रत', G2 [उ]त्तमव्रत', G(ed ) च सुव्रतः ( for दृढव्रत. ). — ( L. 6168 ) G2 G(ed ) अतुला कुरुनन्दन ( for $^b$ ).— Before line 6171, M1 ins श्रीराम — ( L. 6172 ) D1 श्रीशैलोऽसौ ( for °लेशो ). — ( L. 6175 ) D1 M1 स्थिरजीवी ; G2 स्थिरवीर ( for चिरंजीवी ). D1 ऽ[illegible] ( for ऽब्रवत् ) — Before line 6176, D1 ins. जामदग्न्य'. — ( L 6189 ) G2 -चित्तम् ( for -चित्ता' ). — ( L 6190 ) D1 देवास् ( for सेवा ) — ( L. 6198 ) D1 -पालकम् ( for -वासिनम् ) — ( L. 6207 ) G2 [अ]पि मानव ( for नृपोत्तम ). — ( L 6210 ) सालोक्यम् ( for सायुज्यम् ).

Colophon — *Sub-parvan* · D1 G1 आश्चर्यपर्वणि शेषधर्मा , G2 G(ed ) शेषधर्मा. — *Adhy name* G(ed ) श्रीशैलमाहात्म्यम्. — *Adhy no* D1 G(ed ) 47 , G1. 2 46

G2 om. the ref — ( L 6211 ) G(ed.) महाभाग ( for

संसारपाशविच्छेदी स त्वया पूजितो हरिः ॥
एते वयं मुनिश्रेष्ठ द्रष्टुकामा जनार्दनम् । [6230]
तन्निवेशितचित्ता हि प्राप्ता परमधार्मिकाः ॥
ईदृशं वचनं श्रुत्वा व्यासस्य जगतीपते ।
प्रोवाच नारदो धीमान्वाग्मी वेदविदा वरः ॥
कृतकृत्योऽस्मि भद्रं वो यूयं भूतहिते रता ।
शास्त्रैर्धर्मैः सदा लोकान्भक्त्या रक्षितुमिच्छथ ॥ [6235]
वैकुण्ठलोके संभूता वार्ता परमपावना ।
अश्रावि सा मया सन्तो वक्ष्ये शृण्वन्तु तां शुभाम् ॥
मायावी परमानन्दस्त्यक्त्वा वैकुण्ठमुत्तमम् ।
स्वामिपुष्करिणी तीरे रमया सह मोदते ॥
इत्यद्भुतमिदं वाक्यं श्रुत्वा सेन्द्रा मरुद्गणाः । [6240]
तत्र सेवितुमुद्युक्ता गन्ताऽहं च जगद्गुरुम् ॥
किं करिष्यथ विप्रेन्द्रा दर्शनं ह्यत्र दुर्लभम् ।
तस्मात्तत्र गमिष्याम इत्युक्त्वा खं समारुहत् ॥
अगस्त्यप्रमुखाः सर्वे ऋषयश्च तपोधनाः ।
जग्मुस्ते व्योममार्गेण यत्र धर्मगिरौ हरिः ॥ [6245]
स्वामिपुष्करिणीतीरं गत्वा ते ऋषय सुराः ।
स्नात्वा पीत्वा शुभं तोय हरिं द्रष्टुं विचेरतु ॥
पश्चिमं भागमासाद्य मुनयो विष्णुतत्पराः ।
तत्रापश्यन्महाभूतं मेरुमन्दरसंनिभम् ॥
सहस्रादित्यसंकाशं विद्युच्चञ्चललोचनम् । [6250]
सर्वायुधधरं देवं दृष्ट्वा विस्मयमागताः ॥
दक्षिणां दिशमाजग्मुः स्वामिपुष्करिणीतटात् ।
तत्रासुरान्दानवादीन्राक्षसान्पिशिताशनान् ॥
ध्यायन्तश्च जपन्तश्च नमस्यन्तश्च तान्बहून् ।
दृष्ट्वा विस्मयमापन्नाः पूर्वां दिशमुपाययु ॥ [6255]
तत्रासीनं देवपतिं त्रिदशैरुपसेवितम् ।
यक्षकिंनरकिंपुरुषचारणाद्यैरभिष्टुतम् ॥
सिद्धगन्धर्वदेवाद्यैर्ऋषिभिश्चाप्सरोगणै ।
स्तूयमानं हरिं साक्षाच्छ्रीनिवासं जगद्गुरुम् ॥
कदा द्रक्ष्यामि तद्रूपं योगिनामपि दुर्लभम् । [6260]
कदा मे जन्मसाफल्यं भविष्यति सुरार्चितम् ॥
देहि मे दर्शनं देव प्रणतार्तिप्रणाशन ।
त्व गतिः सर्वभूतानां देवानामपि मोक्षदः ।
पाहि पाहि जगन्नाथ भूयो भूयो नमोऽस्तु ते ॥
इति स्तुवन्तं देवेश देवराजं पुरंदरम् । [6265]
वेङ्कटाद्रेः पुरोभागे स्वामिपुष्करिणीतटे ।
देवताभिः समासीनं ध्यायन्तं पुरुषोत्तमम् ॥
तं दृष्ट्वा विस्मिता सर्वे ह्यगस्त्यप्रमुखा द्विजाः ।
कौबेरीं दिशमाजग्मुर्द्रष्टुकामा जनार्दनम् ॥
तत्रापश्यन्द्विजवरान्सप्तद्वीपनिवासिनः । [6270]
राज्ञो मुनिगणांश्चैव भूसुरान्वेदवादिनः ॥
भूलोकवासिनश्चैव मनुजान्मनुजेश्वर ।
मुदमापुर्महात्मानो मुनयः शुद्धबुद्धयः ॥
स्तुवन्ति नृत्यन्ति नमन्ति केचि-
दानन्दजाश्रूणि सृजन्ति केचित् । [6275]
आप्लुत्य चाप्लुत्य वदन्ति केचि-
द्धरे मुरारे पुरुषोत्तमेति ।
लुण्ठन्ति केचित्परिरम्भयन्ति
तूष्णीं तु तिष्ठन्ति हसन्ति केचित् ॥
ध्यायन्ति केचित्कलशं वहन्ति [6280]
पूर्णं मुरारेरभिषेकहेतोः ।
पुष्पाणि सौरभ्ययुतानि गन्धं
कर्पूरकस्तूरिसमग्रवन्ति ॥
आदाय सर्वे वृषभाद्रिनाथं
ते मार्गमाणा विचरन्ति तत्र ॥ [6285]
एवं कृतेपु देवेषु ऋषिगन्धर्वकोटिषु ।
पुष्पवृष्टिः पपाताशु पर्वतोपरि सर्वतः ॥
भेरीमृदङ्गपटहैर्निःसाणाद्यैश्च डिण्डिमैः ।
शङ्खकाहळसंनादैः संकुलं समजायत ॥
तस्मिन्नवसरे विष्णुः प्रादुरासीत्सरित्तटे । [6290]
मेरुमन्दरसंकाशैर्जाम्बूनदपरिष्कृतैः ।
नानारत्नचितैर्दिव्यैर्विमानैरुपशोभितः ॥
कोटिसूर्यप्रतीकाशश्चन्द्रकोटिसुशीतलः ।
स्वर्लोकाद्भूमिपर्यन्तं प्रादुरासीच्छ्रियः पतिः ॥

°बुद्धे). — (L 6213) G(ed) देवेशो (for लोकेशो). — (L 6221) G2 वाचा (for व्यासो). — Before line 6222, D1 ins व्यासः. — G2 om. lines 6227–6228. — (L 6227) M1 सेवितो (for पूजितो). — (L. 6240) G(ed) [अ]द्भुततम (for °तमिदं). — (L. 6241) G2 तत्र स्नातुं समुद्युक्ता (for a). — (L 6242) D1 G1 M1 ह्यत्र दर्शनदुर्लभः; G(ed) ह्यत्र दुर्लभदर्शना (for b) — (L. 6251) D1 G2 अदृष्ट्वा (G2 दृष्ट्वा त) विस्मय गताः (for b). — For line 6254, G(ed) subst.:

224** नमस्यतो ध्यायनश्च जपतश्चापि तान्बहून् ॥

— (L. 6257) Hypermetric. G(ed) -गन्धर्व- (for -किंपुरुष-) — (L 6258) G(ed) सिद्धकिंपुरुषाद्यैश्च (for a). — (L. 6259) G(ed) जगत्पतिम् (for जगद्गुरुम्). — (L. 6263) G(ed.) मोक्षद (for °दः). — (L. 6271) M1 -पारगान् (for -वादिनः). — (L. 6273) G2 मुनयः शुभदर्शनाः (for b). — (L. 6276) G2 उत्प्लुत्य चोत्प्लुत्य (for आप्लुत्य चाप्लुत्य). G(ed.) नदन्ति (for व°). — After line 6276, G(ed.) ins.:

225** गायन्ति गीतं परितो महान्तः

— After the above, G(ed) reads lines 6303–6322. — (L 6282) G2 -गुणानि (for -युतानि). G(ed.) गन्धान् (for गन्धं). — After line 6285, G1 G(ed.) ins.:

226** देवा मनुष्या अपि योगिनश्च

G1 cont.:

227** गायन्ति गीतान्महतो महात्मनः ॥

स्वामिपुष्करिणीतीरे रविमण्डलसंनिभे । [ 6295 ]
विमाने सेवितो देवैः श्रीनिवासोऽवसत्प्रभुः ॥
ब्रह्मा शिवश्चन्द्रदिवाकरश्च
सेन्द्रो यम पाशधरेश वाणी ।
रक्षोधिपो वायुवसू च दस्रौ
विरिञ्चिकोटीगणदानवाश्च ॥ [ 6300 ]
पिता पितॄणां जनकः सुराणां
माता शिशूनां महता महात्मा ।
राज्या शशी देहभृतां च चक्षु-
रध्यात्मचक्षुर्दिनकृद्दिवासु ॥
एको विष्णुर्बहुधा विभिन्नः [ 6305 ]
शुद्धो जनानां दिवि देवतानाम् ।
कृपातिथिस्तत्र बभूव लक्ष्म्या
सर्वस्य लोकस्य हिताय नूनम् ॥
वन्यपुष्पफलैः केचित्स्तोत्रैश्च विविधैर्जपैः ।
वेदपारायणैः केचित्पूजयन्ति जनार्दनम् ॥ [ 6310 ]
धूपदीपैर्गन्धमाल्यैरन्यैर्नामादिकीर्तनैः ।
बहुहाटककुम्भैश्च तोरणैर्ध्वजराजिभिः ॥
विचित्रकुसुमैः केचित्पूजयन्ति जनार्दनम् ।
तुलसीमञ्जरीभिश्च करवीरैश्च जातिभिः ।
मल्लिकाकेतकैः पुष्पैश्चम्पकैः पूजयन्ति ते ॥ [ 6315 ]
भूसुरा ऋषयश्चैव कलशैः परिपूरितैः ।
पुण्योदकैर्मन्त्रपूतैः कमण्डलुगतैः शुभैः ॥
तत्र कुम्भाहृतैः केचित्पूजयन्ति जनार्दनम् ।
पत्रशाकैर्मूलफलैर्नैवेद्यं कल्पयन्ति हि ।
शुद्धोदकैरन्नपुष्पैर्ध्यानैः स्तोत्रैर्जपैः परे ॥ [ 6320 ]
एवं तेषां पूजनाभिः पूजितो मधुसूदन ।
आस्ते तत्र जगन्नाथः स्वामिपुष्करिणीतटे ॥
तस्मात्पूजयितुं राजञ्श्रीनिवासं जगद्गुरुम् ।
गच्छ सौम्य सदानन्दं भुक्तिमुक्तिफलप्रदम् ॥
महापातकयुक्तो वा युक्तो वा सर्वपातकैः । [ 6325 ]
यस्य श्रवणमात्रेण नरः पापैः प्रमुच्यते ॥
श्रीनिवासस्य सेवार्थं यो वा को वा व्रजेद्यदि ।
तस्यैव वंशजा सर्वे मुक्ता एव न संशय ॥
यानि क्षेत्राणि पुण्यानि तीर्थान्यायतनानि च ।
तानि सर्वाणि सेवन्ते श्रीनिवासं जगन्मयम् ॥ [ 6330 ]
इदं ये पुण्यमाख्यानं शृण्वन्ति श्रद्धया नराः ।
तेषां मुक्तिः करस्थैव गतानां किमु वैभवम् ॥

Colophon

युधिष्ठिर उवाच ।
देवव्रत महाभाग नम सुरनदीसुत ।
यदुनाथो भवानेको रक्षिता मम सुव्रत ॥
काञ्ची दिव्यपुरी ज्ञेया तस्यामास्ते जगन्मयः । [ 6335 ]
श्रीहस्तिशिखरे तत्र प्रादुरासीत्कथ प्रभुः ॥
एतदिच्छाम्यहं श्रोतुं महत्कौतूहलं हि मे ।
वक्तुमर्हसि सर्वज्ञ प्रादुर्भावं हरेः प्रभो ॥
भीष्म उवाच ।
पुरा सनत्कुमाराय नारदेन प्रभाषितम् ।
शृण्वतां सर्वपापघ्नमायुरारोग्यवर्धनम् ॥ [ 6340 ]
शृणुष्व नरशार्दूल ब्रह्मा लोकपितामहः ।
सृष्ट्वा लोकाश्चिरं कालमास्ते चिन्ताकुलो भृशम् ॥
तस्मिन्नवसरे वाणी समुद्भूता नृपाम्बरे ।
शृणुष्वेति जगादेदं ब्रह्माणं भुवनेश्वरम् ॥

---

—(L. 6292) G2 -मणिमयैर् (for -रत्नचितैर्) G2 चामरै-रुपसेवितः (for ᵇ). —(L 6297) D1 M2 -दिवाकरौ (for °करश्च). —(L. 6298) G1 पाशिधनेश- (for पाशधरेश-) M1 सेन्द्रो यमः पाशधनेशवह्नि ; G(ed) सेन्द्रौ यमाग्नी धनराट् च पाशी (for ᵇ). —(L 6302) G1 जगता च पाता (for महता महात्मा). — After line 6302, G(ed) ins.

228** पतिः प्रियाणां तरणिर्जनानां
निधिः कृशानामिव निर्धनानाम् ।
आविर्बभूवात्र महोज्ज्वलाङ्ग
प्रियायुतः श्रीवृषभाद्रिनाथ ॥
प्रसन्नमूर्तिर्जगदेकबन्धुः
प्रसन्नधामाथ जगन्निवासः ।

—(L. 6303) G1 राज्यां (for राज्या). —(L 6306) G2 वृष्टो (for शुद्धो).—(L. 6307) M1 कृतातिथिस् (for कृपा°) G(ed.) कृपानिधिस्तत्र बभूव लक्ष्मीः —M1 om. lines 6309-6313.—(L. 6309) D1 वनपुष्प-, G1 वन्यैः पुष्पैः, G(ed) वन्यैः पुष्प- (for वन्यपुष्प-). —(L. 6311) G(ed.) अन्ये सामादि-कीर्तनैः (for ᵇ). — G2 G(ed.) om. lines 6314-6318.

—(L 6317) M1 -परैः (for -गतैः).—(L 6318) D1 M2 पत्र- (for तत्र) —(L. 6320) G1 M1 मनः-; G(ed) मन्त्र- (for अन्न-) G2 जपैर्वरैः, G(ed) जनैः परे (for जपैः परे) —(L 6321) M1 G(ed) तु पूजाभि (for पूजनाभि). — After line 6322, D1 (marg) ins

229** समाश्रितानामापादमूरुदघ्नो भवाम्बुधिः ।
इति वै दर्शयन्नास्ते हस्ताभ्या वेङ्कटेश्वर ॥
वैकुण्ठमेतत्करपल्लवेन
सदर्शयन्सर्वसुरासुराणाम् ।
आस्ते ह लक्ष्म्या सह विश्वमूर्ति-
राद्यः पुमानञ्जलशैलशृङ्गे ॥

—(L 6326) M1 स्मरण- (for श्रवण-) —(L. 6331) D1 सतत (for श्रद्धया) G2 [अ]न्विता (for नरा)

COLOPHON — *Sub-parvan* G1 आश्चर्यपर्वणि शेषधर्मा, G2 M1 G(ed) शेषधर्मा. — *Adhy name :* D1 श्रीनिवासमाहात्म्यम्; G(ed) वेङ्कटाद्रिमाहात्म्यम् — *Adhy. no.* D1 G(ed) 48; G1, 2 M1 47

G2 om. line 6334.—(L. 6338) G1 धर्मज्ञ (for सर्वज्ञ).

अश्वमेधसहस्रं त्वं कुरु चित्तविशुद्धये । [6345]
अन्यथा निर्मला बुद्धिर्न भविष्यति पद्मज ॥
एतच्छ्रुत्वा चिन्तयानो ब्रह्मा लोकपितामहः ।
न शक्यः कर्तुमेकोऽपि कथमेतदिहाब्रवीत् ॥
पुनश्चोवाच सा वाणी धातारं व्याकुलेन्द्रियम् ।
मेघगम्भीरया वाचा शृणुष्वेति पितामह ॥ [6350]
गङ्गाया दक्षिणे भागे योजनानां शतद्वये ।
पञ्चयोजनमात्रेण पूर्वाम्भोधेस्तु पश्चिमे ॥
वेगवत्युत्तरे तीरे पुण्यकोट्या हरिः स्वयम् ।
वरदः सर्वभूतानामद्यापि परिदृश्यते ॥
कर्तव्यस्तत्र वै यज्ञस्त्वया चित्तविशुद्धये । [6355]
सहस्राणां फलं तेऽस्तु ह्येकेन स्थानवैभवात् ॥
श्रुत्वा तत्प्रीतिसंयुक्तो धाता देवगणैः सह ।
गन्तु मनो दधे ब्रह्मा यज्ञं कर्तुं च सुव्रत ॥
दिक्पालैर्देवगन्धर्वैर्वसुरुद्रादिभिः सह ।
हयमेधं महायज्ञमकरोदृषिभिः सह ॥ [6360]
हवींषि भुञ्जमानानां पश्यतां मरुतां प्रभुः ।
प्रादुरासीन्महावेद्यामुत्तरस्यां महाद्युतिः ॥
शङ्खचक्रधरः श्रीमान्नीलजीमूतसंनिभः ।
वेदैरुपनिषद्भिश्च मूर्तिमद्भिः प्रसेवितः ॥
इन्द्रादिलोकपालैश्च ब्रह्मादिभिरनेकशः । [6365]
यक्षविद्याधरगणैः किंनरैश्चारणैरपि ॥
नदीनदसहस्रैश्च गङ्गाद्यैरुपसेवितः ।
सप्तसागरपृथ्वीशैः सप्तद्वीपनिवासिभिः ॥
ऋषिदेवगणैर्देवः प्रादुरासीन्महाद्युतिः ।
पीताम्बरधरः श्रीमान्विद्युच्चञ्चललोचनः ॥ [6370]
कौस्तुभेन विराजन्तं श्रीवत्साङ्कितवक्षसम् ।
नत्वा पुनः पुनर्ब्रह्मा लोककर्ता जगन्मयः ।
अस्तौषीत्कमलाकान्तमपवर्गफलप्रदम् ॥

ब्रह्मोवाच ।

श्रीपते पुण्डरीकाक्ष सर्वलोकहितंकर ।
पाहि मां कमलाकान्त त्वत्पादकमलं गतम् ॥ [6375]
वरदं सर्वभूतानामीश्वरं पुरुषोत्तमम् ।
नमामि पुण्डरीकाक्षं गरुडासनमव्ययम् ॥
पीताम्बरधरं देवं वनमालाविभूषितम् ।
चतुर्बाहुमुदाराङ्गं नमामि कमलापतिम् ॥
येनेदं भुवनं व्याप्तं देवतिर्यङ्नरादिकम् । [6380]
तं वासुदेवममलं प्रणतोऽस्मि जनार्दनम् ॥
नित्यानन्दाय शुद्धाय शूरायानाथपालिने ।
सर्वज्ञाय नमस्तुभ्यं सर्वभूतान्तरात्मने ॥
यज्ञभोक्त्रे नमस्तुभ्यं यज्ञकर्त्रे सुरोत्तम ।
हविर्मन्त्रस्वरूपाय यजमानस्वरूपिणे ॥ [6385]
देवतिर्यङ्मनुष्याणां जनयित्रे नमोऽस्तु ते ।
पाहि मां देवदेवेश भूयो भूयो नमोऽस्तु ते ॥

भीष्म उवाच ।

इति स्तुवन्तं देवेशं पद्मयोनिमरिंदमम् ।
प्रसन्नवदनो विष्णुर्ब्रह्माणं प्रत्युवाच ह ॥
प्रीतिमानस्मि भद्रं ते स्तोत्रेणानेन पुत्रक । [6390]
हयमेधेन महता भक्त्या विश्राणनेन च ।
त्रिकालमर्चय त्वं मां कृते ह्यस्मिन्युगोत्तमे ॥
त्रेतायां तु गजेन्द्रेण प्रार्थितो मुक्तिकामिना ।
कृतकृत्येन विदुषा भक्तेन तु महात्मना ॥
द्वापरे देवगुरुणा मुनिशापाच्च भीरुणा । [6395]
भक्त्या परमया चैव पूजितो द्वापरे चिरम् ॥
वर्तयिष्ये मुनिगणैः सेन्द्रैः सुरगणैर्वृतः ।
यक्षकिंनरसंघैश्च गन्धर्वैश्चाप्सरोगणैः ॥
कलौ तु पूजितः पूजाद्रव्यैः शेषेण पूजितः ।
मनुजैः पूजनादिभिश्च भूसुरैश्च विशेषतः । [6400]
स्त्रीशूद्रैः पूजितो नित्यं वत्स्यामि कमलासन ॥
इत्युक्त्वा देवदेवोऽसौ तत्रैवान्तरधीयत ।
विस्मयं परमं जग्मुर्देवाः सर्वे दिवि स्थिताः ॥
हयमेधेन विधिना ब्रह्मा लोकपितामहः ।
इष्ट्वा विध्युक्तमार्गेण ब्राह्मणान्पर्यपूजयत् ॥ [6405]
अन्नदक्षिणवस्त्राद्यैर्वृत्तिक्षेत्रगृहादिभिः ।
देवानृषिगणांश्चैव पूजयामास भूसुरान् ॥
तस्मिन्नवसरे देवाश्चक्रुश्च विविधान्मखान् ।
वाजपेयादिभिर्यज्ञैरिष्टकाचयनादिभिः ॥
ऋषयो मनवश्चैव लोकपालाः कुरूद्वह । [6410]

—(L. 6342) G(ed.) आस्ते चिन्ताकुलेन्द्रियः (for [b]). —(L. 6348) G2 न शक्यं वक्तुमेकोऽपि (for [a]). G(ed.) सहस्रं कथमब्रवीत् (for [b]) —(L. 6352) M1 एक- (for पञ्च-). —(L. 6357) D1 G2 श्रुत्वा प्रीतिसमायुक्तो (for [a]) G(ed.) स देवर्षि- (for धाता देव-). — After line 6358, G(ed.) ins.:

230** ततः काञ्चीं समासाद्य सृष्टिकर्ता तु तत्र वै ।

—(L. 6367) D1 M1 नदीनां शतसाहस्रैर् (for [a]), G1 M1 -सेवितम् (for °तः), —(L. 6369) G1 देवैः (for देवः) — G2 om. lines 6378–6380. — After line 6379, G2 ins.:

231** आनन्दं परमं व्याप्तमवतीर्य नरादिकम् ।

—G2 om. line 6380. —(L. 6381) G(ed.) अतुलं (for अमलं). —(L. 6383) G1 M1 सर्वभूतान्तरायिने; G2 °तनिवासिने (for [b]). — G2 om. the ref. —(L. 6390) G1 सुव्रत; G2 पद्मज (for पुत्रक). —(L. 6391) D1 भवतो (for महता). —(L. 6392) G2 कृत्यो ह्यस्मिन्नगोत्तमे (for [b]) —(L. 6397) D1 मुनिवरैर् (for °गणैर्). D1 G2 M1 देवैः सेन्द्रैर्म( G2 सोमम )रुद्गणैः (for [b]). — D1 om (hapl.) lines 6398–6399. M1 om. line 6398. —(L. 6399) G1 M1 पूजितः पूजनाद्रव्यैः (for [a]). G1 कलौ (for द्रव्यैः). —(L. 6404) G(ed.) यज्ञेन (for विधिना) —(L. 6405) M1 ब्राह्मणान्परिपूजयन् (for [b]). —(L. 6406) G(ed.) दक्षिणान्नसुवस्त्राद्यैर् (for [a]). G(ed.)

वसिष्ठो जमदग्निश्च त्रिक· कण्वोऽथ गालव: ॥
विश्वामित्रो देवरात कच: काश्यपसंभव. ।
रामो बृहस्पतिर्व्यासो धौम्यो रोमश एव च ॥
कात्यायनो भरद्वाज: पुलस्त्य पुलह क्रतु ।
एते चान्ये च बहवश्चक्रुश्च विविधान्मखान् ॥ [ 6415 ]
काञ्चीभुवं प्रविष्टाना नास्ति नास्ति पुनर्भव. ।
तस्मात्त्वं सेव्यसे विप्रै संसारच्छेदलिप्सुभि ॥
जनने मरण नृणा मरणे जन्मसाधनम् ।
तन्नाशं कुरुते सद्य काञ्चीनाथोऽद्य सेवया ॥
अत्रैव वरदस्यास्य पादसेवापरा शुभा । [ 6420 ]
वेगवतीति विख्याता शारदा कलिदोषहा ॥
तस्यां तु मज्जता नृणां वाग्विभूतिर्भवेद्ध्रुवम् ।
आरोग्यं पावनं तीर्थं जन्मान्तरमलापहम् ॥
कामाक्षीति च विख्याता सर्वलोकेपु भारती ।
मूकं वा शास्त्रकर्तारं करोति भुवि विश्रुतम् ॥ [ 6425 ]
त्रिपुरारिर्महादेव. पार्वतीसहित प्रभु ।
चूतमूले वसन्नृणां सेव्यते दैवतैर्नृभि ॥
काञ्चीनाथ: प्रपन्नानां संसारभयनाशनम् ।
एकाम्रनाथसेवाभिर्विद्याबन्धुविवर्धनम् ॥
सेवया देवराजस्य नरा पापरता अपि । [ 6430 ]
ब्रह्मलोकं प्रयान्त्येव नारदेन प्रभाषितम् ॥
काञ्चीनाथं स्मरेद्यस्तु नमेद्वा तद्दिशं प्रति ।
तत्सालोक्यं समायाति नारदेन प्रभाषितम् ॥
यस्त्वेतच्छृणुयान्नित्यं काञ्चीनाथस्य वैभवम् ।
स कोटिकुलसंयुक्तो ब्रह्मलोके सुखं वसेत् ॥ [ 6435 ]

Colophon.

युधिष्ठिर उवाच ।

सिंहाद्रिनाथो देवेश: साक्षान्नरहरि: स्वयम् ।
कथं तत्र वसत्येष औबले चात्र माधव· ॥
वेत्स्येतत्तु भवानद्य वसूनां प्रवरोऽसि मे ।
कथां कथय तत्त्वज्ञ तत्स्थानस्य च वैभवम् ॥

भीष्म उवाच ।

शृणु पार्थ प्रवक्ष्यामि श्रोतृणामघनाशनम् । [ 6440]
संसारपाशविच्छेदं नारसिंहस्य कीर्तनम् ॥
सिंहाद्रिनाथस्य कथां सर्वमङ्गलदायिनीम् ।
द्विजो वा पतितो वापि श्रुत्वा पापै· प्रमुच्यते ॥
स एव भगवान्विष्णुर्यज्ञमूर्ति शिव· प्रभु ।
ब्रह्मा रुद्र शशी चार्क शचीपतिपुरोहित: ॥ [ 6445 ]
देवराजो रवे: सूनुर्वरुणो धनपालक ।
स एको बहुधा भूत्वा पालयत्यखिलं जगत् ॥
पुरा दैत्यवधं कृत्वा नारसिंहो जगत्पति ।
देवैरभिष्टुतो भीतैर्दिव्यं योगमथागमत् ॥
औबलाख्ये गिरिवरे दिव्यरूपी भयंकर: । [ 6450 ]
स वासमकरोद्धीमानेक एव जगन्मय: ॥
योगारूढं तमालोक्य जितशत्रुबलं हरिम् ।
मरुतो मरुतां नाथं तुष्टुवुर्जगतीपतिम् ॥

देवा ऊचु: ।

श्रीपते पुण्डरीकाक्ष पुराणपुरुषोत्तम ।
नारसिंह जगद्योने वेदराशे नमोऽस्तु ते ॥ [ 6455 ]
लोकनाथ नमस्तेऽस्तु मायिने जलशायिने ।
सर्वलोकस्य कर्त्रे वै पालकाय नमोऽस्तु ते ॥
संहर्त्रे मापते तुभ्यं सुयज्ञफलदायिने ।
निर्गुणाय नमस्तुभ्यं बीजरूपिन्सुरेश्वर ॥
पाह्यस्माञ्जगतीनाथ त्वत्पादकमलं गतान् । [ 6460 ]
त्वं पिता सर्वलोकानामस्माकं तु विशेषत: ॥
नानामोहसमायुक्तान्नानाशत्रुनिपीडितान् ।
पाहि नस्त्रिदशाधीश भूयो भूयो नमोऽस्तु ते॥

भीष्म उवाच ।

नारसिंह· स्तुतो देवैरिति नत्वा पुन: पुन: ।
प्राह तांस्त्रिदशाधीश: प्रसन्नो भक्तवत्सल: ॥ [ 6465 ]

भगवानुवाच ।

किमर्थं प्रार्थ्यते देवैर्महाभयसमन्वितै: ।

---

-समाधिभि: ( for -गृहादिभि: ) —( L. 6410 ) M1 मानवाश् ( for मनवश् ). —( L 6412 ) G2 शुक्र: M1 त्रित· ; G(ed) [अ]सित: ( for त्रिक· ) —( L. 6413 ) G2 रैभ्यो ( for धौम्यो ). —( L. 6416 ) G1 काञ्चीपुर ; M1 °पुर- ( for °भुवं ). G2 काञ्चीभुव: प्रतिष्ठाना ( for $^a$ ) D1 महद्भय ( for पुनर्भव: ). —( L. 6420 ) D1 अत्र वै ; G2 मूर्त्यैव ( for अत्रैव ) M1 अत्र वै वरदा ह्यस्य ( for $^a$ ) —( L 6422 ) G1 2 विजृम्भते ( for भवेद्ध्रुवम् ). —( L. 6424 ) G1 2 कमलाक्षीति विख्याता ( for $^a$ ). —( L 6427 ) G2 आम्रमूले ( for चूत° ). G(ed.) दाता ( for नृणा ). —( L 6428 ) G2 -भव- ( for -भय- ). —( L. 6429 ) G(ed.) -विवर्धन ( for °र्धनम् ). —( L. 6430 ) G1 -देवस्य ( for -राजस्य ). —( L. 6432 ) G(ed ) नमेद् ( for स्मरेद् ). G(ed.) स्तौति ( for नमेद् ). —( L. 6435 ) D1 चिर , G(ed ) सुखी ( for सुखं )

COLOPHON. —*Sub-parvan* D1 G1 आश्चर्यपर्वणि शेषधर्मा' ; G2 M1 G(ed ) शेषधर्मा — *Adhy. name* · D1 G1 काञ्चीमाहात्म्यम् , G(ed ) हस्तिगिरिमाहात्म्यम् — *Adhy. no* : D1 G(ed ) 49 , G2 40 , G2 M1 48

( L 6438 ) G(ed,) वेत्ति तत्तु महानद्य ( for $^a$ ) G(ed ) भवान् ( for ऽसि मे ) —( L 6439 ) तस्य स्थानस्य वैभवम् ( for $^b$ ) —( L 6441 ) G1 -पादप- ( for पाशवि- ). — G2 om lines 6444–6461. —( L 6445 ) शिवश् ( for शशी ). —( L 6447 ) D1 [अ]निशं बली , G1 M1 [अ]निशं महीम् ( for [अ]खिलं जगत् ) —( L 6450 ) D1 अहोबले औबलाख्ये ( for $^a$ ). —( L 6457 ) D1 M1 सर्वलोकप्रभूताय ( for $^a$ ). — M1 om lines $6459^b$–$6461^b$. D1 om lines 6461–

मया वः करणीयं किमिति तान्प्रत्युवाच ह ॥
देवा ऊचुः ।
योगमूर्तिं विसृज्यैव दिव्यभोगसमन्वितः ।
अस्मान्वै पातुमिच्छामो ह्यनिशं परमेश्वर ॥
भगवानुवाच ।
सिंहाद्रिरिति विख्यातः पुरस्तात्पर्वतोत्तमः । [6470]
तत्र वत्स्यामि जगतां हिताय त्रिदशेश्वराः ॥
ऋषिविप्रगणैः सार्धं युष्माभिः सह पुत्रकाः ।
अत्राश्चर्यसमायुक्तो वर्ते तत्र महागिरौ ॥
अत्र योगेश्वरो नित्यं तत्र भोगसमन्वितः ।
पालयिष्ये तथा लोकांस्त्रिदशान्मनुजानपि । [6475]
भवन्तस्तत्र गच्छन्तु सदा भोगेप्सवोऽमलाः ॥
इत्युक्ता हरिणा देवा विमानशतशोभितम् ।
सिंहाद्रिं प्रययुः शीघ्रं बहुजन्तुनिषेवितम् ॥
तत्र स्थित्वा जगन्नाथं चिरं देवं जनार्दनम् ।
नापश्यंस्त्रिदशा सर्वे योगिध्येयमरिंदमम् ॥ [6480]
एकविंशे युगेऽतीते तपोभिर्बहुविस्तरैः ।
नारसिंहमदृष्ट्वैव दुःखिता देवसंततिः ॥
सिंहरूपी स भगवान्विचचार नगोत्तमे ।
सहस्रादित्यसंकाशो विद्युच्चञ्चललोचनः ॥
तप्तहाटककेशान्तो विद्युद्दामतनुच्छदः । [6485]
दीप्तहाटकजिह्वाग्रो रक्तलाङ्गूलशोभितः ॥
विचित्रमणिपादैश्च दन्तपङ्क्तिमरीचिभिः ।
भासयन्सर्वककुभो दिव्यसिंहश्चचार ह ॥
कम्पमानाः सुरेन्द्रास्ते किमेतदिति शङ्किताः ।
तत्र तत्र निलीयन्ते गिरिगह्वरकोटरे ॥ [6490]
अथ तस्मिन्नवसरे दिव्ययोगिगणामला ।
शङ्खचक्रधरा वन्द्याः स्तूयमाना महर्षिभिः ॥
पद्माक्षसूत्रवलयाः प्रलम्बिवनमालिकाः ।
दिव्यायुधधरा वीरा दिव्यकुण्डलशोभिताः ॥
तप्तहाटकवस्त्रैश्च रत्नकेयूरशोभिताः । [6495]
केयूरमकुटैर्दिव्यैर्नूपुरैः कनकाङ्गदैः ॥
रशनाभिर्विचित्राभिर्दिव्यरत्नमयैः शुभैः ।
शोभमाना मुनिवरा योगीन्द्रा पर्वतोपमाः ॥
सनत्कुमारो भगवान्सनकश्च सनातनः ।
सनत्सुजातः शान्तात्मा महायोगी सनन्दनः ॥ [6500]
नारदः पर्वतश्चैव कुमुदो लोकपालकः ।
जयो विजयशेषाद्या कुम्भयोनिमुखा द्विजाः ॥
अणिमादिगुणोपेता योगीन्द्राः सचतुर्मुखा ।
एते चान्ये च बहवो वैकुण्ठपुरवासिनः ॥
विमानकोटिसाहस्रैर्जाम्बूनदपरिष्कृतैः । [6505]
कोटिसूर्यप्रतीकाशास्तं देशमुपजग्मतुः ॥
सिंहरूपधरं देवं हरिं दृष्ट्वा मुनीश्वराः ।
दिव्यैः पुष्पैः प्रकीर्याथ प्रणेमुर्देववल्लभम् ॥
ध्यायन्तः प्रमदायुक्ता सुखासीनाः सुरोत्तमाः ।
प्रसीदेति जगन्नाथमुपतस्थुर्महर्षय ॥ [6510]
अथान्तरिक्षे जगतामधीशः
सुपर्णमारुह्य सुपर्णकेतुः ।
तस्थौ गिरौ देवगणैः स्तुतोऽसौ
सिंहाद्रिनाथो नरसिंहमूर्तिः ॥
मायामृगोऽसौ मनुजेन्द्रसूनो [6515]
सिंहो महानाविरभूत्किलाग्रे ।
स एव देवो जगतां विनेता
जगद्गुरुर्दिव्यमृगेन्द्रमूर्तिः ॥
तत्राविरासीद्गिरिवर्यपृष्ठे
विमानवर्ये बहुमेरुरूपः । [6520]
तन्मध्यवर्ती हरिरव्ययात्मा
त्रस्तान्सुरान्पाति गिरौ प्रलीनान् ॥
देवैरनेकैः परिपूजितोऽसौ
चिरं वसानीति गिरौ नगेन्द्रे ।

---

6462. — (L. 6462) G2 नानाशस्त्रनिपीडिताः (for [b]) — (L. 6463) D1 पाहि नस्त्रिदशान्वीमन् (for [a]). — D1 G2 M1 om. the ref. — (L. 6467) M1 वा (for वः). — After line 6469, G(ed) ins.:

232** पालयस्व तथा लोकांस्त्रिदशान्मनुजानपि ।

— (L 6472) M1 गणाः सर्वे (for -गणैः सार्धं). G2 युष्माकं हितकाम्यया (for [b]) — (L 6473) G(ed) -समायुक्ते (for °युक्तो) D1 वर्ते तस्मिन्, G2 वर्तेमहि, M1 वर्तयेयं (for वर्ते तत्र). — (L 6476) G(ed) भोगेच्छवो (for °प्सवो). — (L. 6477) D1 M1 -शोभिन (for °तम्). — For line 6477, G1 subst.:

233** इत्युक्त्वा सर्वदेवाना देवो विश्वात्मकः प्रभु ।

— (L 6478) D1 M1 बहुजन्तु(M1 °रत्नो)पशोभितम्, G2 °जन्तूपसेवितम् (for [b]) — (L. 6482) G1 -संज्ञिताः (for -सतति) D1 M1 दुःखिते देवसघके (M1 °संततौ), G2 °ते देवतागणे (for [b]) — (L. 6483) G(ed) नृसिंहरूपी भगवान् (for [a]). G1 M1 चचार च (for विचचार). — (L. 6485) G2 -विभूषितः (for -तनुच्छदः) — (L. 6486) D1 G1 त(G1 दी)प्तपावकजिह्वाग्रो (for [a]). G(ed) -शोभनः (for -शोभितः) — (L. 6489) G2 सुरेन्द्राश्च; M1 सुराः सर्वे (for सुरेन्द्रास्ते) — (L. 6490) D1 विलीयन्ते; G(ed.) निलीनास्ते (for °यन्ते) D1 गिरेः शिखरकोटरे (for [b]). — (L. 6493) M1 प्रलम्बिहरिमालिकाः (for [b]). — D1 om. line 6495. — (L. 6496) G(ed.) उज्ज्वलैर् (for केयूर-). — (L. 6497) D1 G2 M1 -रत्नचितैः (for °मयैः) — (L 6498) G2 पर्वतोत्तमे (for °पमा) — (L 6499) D1 सनन्दनः; G1, 2 M1 सनन्दश्च (for °कश्च). — (L. 6500) D1 G2 महामतिः; G1 M1 बृहन्मतिः (for सनन्दनः). — (L. 6502) G(ed.) -शेषौ च (for -शेषाद्याः) M1 जयेशविजयेशाद्याः (for [a]). G(ed.) कुम्भयोनिर्बृहस्पति (for [b]). — (L 6506) G(ed) तं देशं जग्मुरञ्जसा (for [b]). — (L 6509) G(ed) च मुदा- (for प्रमदा-). — (L. 6515) G1, 2 -मयोऽसौ; M1 -मृगेन्द्रो (for -मृगोऽसौ).

दिव्यैश्च भोगैरुपसेव्यमानो [ 6525 ]
निवेशयामास मुनीन्द्रवर्यान् ॥
दिव्यभोगसमायुक्तो दिव्यगन्धर्वकोटिभिः ।
आराध्यमानो नृपते तत्रास्ते मुनिरव्यय ॥
तं नत्वा गरुडारूढ देवदेवमरिंदमम् ।
ध्यात्वा च त्रिदिवं याति नर पापवृतोऽपि च ॥ [ 6530 ]
तस्य देवस्य पुरतः सदा देवैरभिष्टुतः ।
मरुत्वान्स्तौति देवेशं मुक्त्यर्थं पाण्डुनन्दन ॥
सूर्यात्मज प्रचेताश्च धनदो यक्षजातिभि. ।
स्वां स्वां दिशमधिष्ठाय सेवन्ते त विदूरत ॥
विश्वसृग्वामदेवश्च नारसिंहं जगद्गुरुम् । [ 6535 ]
सिंहाद्रिनाथ चक्राते सेवा जगति शोभनाम् ॥
देवैः समस्तैरुपसेव्यमानं
नत्वा नरा यान्ति दिवं सुरेशम् ।
पापानि कृत्वा पितृभक्तिहीना
सदा दुराचाररताश्च सर्वे ॥ [ 6540 ]
श्रुत्वा कथां तस्य हरेरनीशं
सिंहाद्रिनाथस्य शुभप्रदां च ।
दिवं प्रयान्त्येव नराः सुशीलाः
पुराणमूर्तेः पुरुषोत्तमस्य ॥
तस्मात्त्वं प्रार्थयस्वेह सिंहाद्रेरीशमव्ययम् । [ 6545 ]
अथ वा गच्छ धर्मात्मन्देवदेवं प्रपूजय ।
अचिरात्प्राप्स्यसे स्थानं श्रियं चैवोज्वलां स्थिराम् ॥
यस्त्वेतच्छृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात्किंचित्सोऽमुत्रेह च मानवः ॥

Colophon.

जनमेजय उवाच ।

एवं प्रबोधितस्तेन धर्मपुत्रो महामतिः । [ 6550 ]
कृष्णेन लोकनाथेन किमपृच्छत्पुनर्द्विज ॥
व्यासप्रसादात्तत्सर्वं भवान्वेत्ति न संशय. ।
श्रोतुकामस्य मे ब्रह्मन्वैशंपायन कीर्तय ॥

वैशंपायन उवाच ।

काम्यके पर्णशालायामुपविष्टं कुशासने ।
उपदेष्टुं महद्धर्ममागतं विष्णुवल्लभम् ॥ [ 6555 ]
ईश्वरं सर्वलोकानां कृष्णं कमललोचनम् ॥
कृताञ्जलिपुटाः सर्वे पाण्डवा धर्मतत्परा ।
नमस्कृत्य जगन्नाथं पप्रच्छुर्धर्मसाहिताम् ॥
यादवेन्द्र जगन्नाथ पाण्डूनां हितकृद्धरे ।
ब्रह्मलोकप्रदं धर्मं शाश्वतं लोकविश्रुतम् ॥ [ 6560 ]
सर्वभाग्यकरं पुण्यमायुरारोग्यवर्धनम् ।
कथयस्व जगन्नाथ पाण्डूना हितकृद्धरे ॥

भगवानुवाच ।

शृणुष्व धर्मं भूपाल विचित्रं शाश्वतं महत् ।
प्रख्यातं त्रिषु लोकेषु द्विजानां स्थापनं महत् ॥
सर्वभाग्यकरं पुंसां बहुपुत्रप्रदं शुभम् । [ 6565 ]
अनाथं वा सनाथं वा ब्रह्मपुत्रमरिंदम ।
कारयेद्योपनयन स मुक्तो ब्रह्म चाश्नुते ॥
विवाहं मौञ्जिबन्धं च कारयेद्यो नरोत्तमः ।
स मुक्तः सर्वपापेभ्यो सर्वैश्वर्यं लभेन्नृप ।
अपुत्री च सुपुत्री स्यात्सुपुत्री संपदं व्रजेत् ॥ [ 6570 ]

युधिष्ठिर उवाच ।

अपुत्रिणस्तु बहवो नरा पुण्यकृतोऽपि च ।
अभवन्पापिनो मर्त्या बहुपुत्रा कथं हरे ॥
एतन्मे संशयं देव छेत्तुमर्हसि सुव्रत ।
त्वद्वचो देवदेवेश सत्यं परमपावनम् ॥

भगवानुवाच ।

मौञ्जीबन्धनमुद्वाहं कृतं येनान्यजन्मनि । [ 6575 ]
स नरः पुण्यवाँल्लोके भविष्यति न संशयः ॥
दानेन धनवान्राजन्पुत्रवान्मौञ्जिबन्धनात् ।
उद्वाहाच्छ्रुतवृत्त· स्याद्भवत्येव द्विजन्मन ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
पुत्रदं भरतश्रेष्ठ चारित्रं सोमतेजसः ॥ [ 6580 ]

---

— ( L. 6516 ) D1 G1. 2 शिलाग्रे ( for कि° ) — ( L. 6524 ) D1 तथाग्रे ( for नगेन्द्रे ).— ( L. 6530 ) G(ed.) नरा पापव्रता अपि ( for ° ). — ( L 6536 ) G1 चक्रुस्ते; G(ed.) त्वनिश ( for चक्राते ). G(ed.) सेवेते स्म शुभप्रदम् ( for ° ) — ( L 6543 ) M1 व्रजन्ति ( for प्रयान्ति ) — ( L 6546 ) G2 अथ वाह्योबलेशं वा ( for ° ). — ( L 6549 ) G2 परत्रेह ( for सोऽमु° )

COLOPHON — *Sub-parvan* . D1 आश्चर्यपर्वणि शेषधर्मा° G1 2 M1 G(ed ) शेषधर्मा . — *Adhy name* . D1 G(ed.) सिंहाद्रिमाहात्म्यम् G2 सिंहाद्रिनाथमाहात्म्यम् — *Adhy no.* , D1 G(ed ) 50, G1 2 49

G(ed.) reads lines 6540–6646 after the colophon (preceded by line 3342). — ( L. 6553 ) G1 वृत्तमेतत्प्रकीर्तय ( for ° ). — ( L. 6554 ) G(ed.) उपविष्टा· सुखासने ( for ° ) — ( L 6557 ) G(ed ) वत्सला· ( for ·तत्परा· ). — D1 om lines 6559–6561. G2 om. 6559–6560 — ( L 6561 ) G1 बहुपुत्रप्रद शुभम् ( for ° ). — ( L. 6562 ) D1 यादवेन्द्र ( for कथयस्व ) G(ed ) पाण्डूना हितकृत्तम ( for ° ) — D1 om (hapl ) line 6564. — ( L. 6565 ) G2 M1 ·भाग्यप्रदं ( for °कर ). — ( L 6566 ) D1 D1 विप्रात्मजम् , G1 वृद्धात्मजम् ( for ब्रह्मपुत्रम् ) — ( L. 6567 ) G(ed ) य कारयत्युपनय ( for ° ).— ( L 6570 ) D1 G(ed ) अपुत्रश्च सपुत्र स्यात् ( for ° ) — ( L 6571 ) G(ed.) ·व्रता अपि ( for ·कृतोऽपि च ) — M1 om line 6572. — ( L. 6573 ) D1 G1 M1 [अ]शेषत ( for सुव्रत ) — ( L 6574 ) M1 तद्वदस्व च देवेश ( for ° ) — ( L 6575 ) G(ed ) मौञ्जीबन्धं समुद्वाह ( for ° ). — ( L. 6577 ) D1 G1 धर्मवान् ( for धन° ) D1 पुत्री तु ( for पुत्रवान् ) — ( L. 6578 ) G2 द्विज·

सोमकान्तः पुरा राजा सोमवंशे महामतिः ।
सदा दानपरो नित्यं यज्ञकर्मसु निश्चित ॥
बन्धुप्रियो महातेजा गुणवान्धर्मतत्परः ।
आतिथेय सदा विष्णो· परिचर्यापरो नृप ॥
सप्तद्वीपवतीं पृथ्वीं प्रशशास महीपतिः । [ 6585 ]
धर्मेण पालिता. सर्वा. प्रजास्तेन महात्मना ॥
वाजपेयशतं तेन ह्यश्वमेधशतं तथा ।
कृतं तेनैव महता देवास्तृप्तास्तथाभवन् ॥
एकदा चिन्तयामास प्रासादे देवसंनिभः ।
बहुकालो ह्यतीतो मे पुत्रा नैवाभवन्बत ॥ [ 6590 ]
अपुत्रिणा मया लोक परोऽपि च तथा न हि ।
पितृसंततिविच्छेदमभून्मे पापकर्मिणः ।
अद्यप्रभृति ते सर्वे किं करिष्यन्ति पूर्वजा ॥
मया कृतानि धर्माणि बहूनि विविधानि च ।
तेषां प्रत्यक्षता दृष्टा न मया किं कृतं पुरा ॥ [ 6595 ]
कमहं शरणं गत्वा किं नु पृच्छामि धर्मिणम् ।
कालक्षेपो न कर्तव्यो जरया चावृता तनुः ॥
इति संचिन्त्य राजेन्द्र सोमकान्तिः प्रतापवान् ।
त्रिविष्टपं ययौ विद्वान्दीप्यमानः स्वतेजसा ॥
सुधर्मामण्डपे देव पुरंदरमरिंदमम् । [ 6600 ]
ददर्श देवताभिश्च सेव्यमानमनेकधा ॥
स्वात्मजेन जयन्तेन साधु दृष्ट्वा विशा पतिम् ।
इत एहीति राजेन्द्र स वज्री समभाषत ॥
दत्त्वा चार्धासनं राज्ञे ह्यकाले भवदागमः ।
किमर्थमागमो राजन्नहं किं करवाणि ते । [ 6605 ]
ब्रूहि सांप्रतं वीर करिष्ये वचनं तव ॥
एवं पृष्टस्तु भूपालः शक्रेण तु महात्मना ।
धर्मवित्कथयामास स्वमागमनकारणम् ॥
अपुत्रिणो मे देवेश पुत्रं त्वं दातुमर्हसि ।
नापुत्रस्य च लोकोऽस्ति त्वया वै गदित· पुरा । [ 6610 ]
तस्मात्त्वां प्रार्थयाम्यद्य कामदं सर्वदेहिनाम् ॥

इन्द्र उवाच ।

ममापि च ह्यपुत्रस्य ब्रह्मा लोकपितामहः ।
जयन्तं दत्तवान्पूर्वं प्रयत्नेन नृपोत्तम ॥
तत्सकाशं व्रज त्व हि स वै दास्यति पुत्रकम् ।
काङ्क्षन्ति च दिशापालास्ते सार्धं तु त्वया सह । [ 6615 ]
गच्छामि ब्रह्मणो लोकमद्य त्वं यातुमर्हसि ॥

भगवानुवाच ।

दिक्पालैः सह राजेन्द्र राज्ञा तेन महात्मना ।
मरुत्वानाययौ शीघ्रं ब्रह्मणो ह्यविशङ्कया ॥
नमस्कृत्वाब्रवीद्राजन्ब्रह्माणं प्रपितामहम् ।
राजायं सार्वभौमश्च देवकार्यरतः सदा । [ 6620 ]
धर्मविद्धर्मनिरतो ह्यपुत्री च इमे सुरा ॥
सर्वेषां पुत्रसंपत्तिं प्रयच्छ भुवनेश्वर ।
अस्ति चेत्तव कल्याण स्पृहा देवेषु भूमिप ॥

ब्रह्मोवाच ।

ब्रह्मप्रतिष्ठां कुरुत ततो वैवाहिकं शुभम् ।
राजा दिक्पतयः सर्वे कुर्वन्तु मम चाज्ञया । [ 6625 ]
तेन पुण्यप्रभावेन पुत्रप्राप्तिर्भवेद् ध्रुवम् ॥
अहमेव शुभं कर्म धर्माणां धर्ममुत्तमम् ।
कृत्वा वै सर्वलोकानां सृष्टिकर्ता भवामि च ॥
इत्युक्त्वान्तर्दधे देवो ब्रह्मा लोकपितामह· ।
राजा च देवता· सर्वा स्वं स्वं स्थानं ययुस्तदा ॥ [ 6630 ]
कृत्वा वै द्विजपुत्राणां मौञ्जीबन्धनिवेशनम् ।
राजा पुत्रमवाप्तुं वै पितॄणा मुक्तयेऽनघ ॥
ब्रह्मप्रतिष्ठामकरोत्काले पुण्यतमे नृप ।
उद्वाहमङ्गलैर्दिव्यै कारयामास सर्वदा ॥
धर्मव्रतो महानासीत्सुतो वै देवसंनिभः । [ 6635 ]
तेनैव पितरो मुक्तिमगमन्पुण्यकर्मणः ॥
तस्मात्त्वं भूभृतां श्रेष्ठ युष्मत्संततिपालने ।
पितॄणा मुक्तये तात कुरु वै ब्रह्मवर्धनम् ॥

---

°मता ; $M_1$ न संशयः ( for द्विजन्मन. ) —( L. 6579 ) $G_1$ $M_1$ [उ]द्वाहरिष्यामि ( for °रन्तीमम् ) —( L. 6580 ) $G_{1,2}$ चारित्रं सोमजोद्भवम् ( for $^{b}$ ). —( L. 6581 ) $G_{1,2}$ सोमवंशसमुद्भवः ( for $^{b}$ ) —( L. 6582 ) $D_1$ G(ed.) निष्ठितः ( for निश्चितः ). —( L. 6585 ) $D_1$ $G_1$ प्रशशंस महाद्यु( $G_1$ °म )तिः ( for $^{b}$ ). —( L. 6589 ) G(ed ) प्रभया ( for प्रासादे ). —( L. 6591 ) $D_1$ अपुत्रिणस्त्वयं लोक , $D_1$ G(ed ) °णामय लोकः ( for $^{a}$ ) —( L. 6594 ) $D_1$ धर्मांश्च, $G_1$ सर्वाणि, $M_1$ कर्माणि ( for ध° ). —( L. 6597 ) G(ed ) व्याहृता ( for व्यावृता ). —( L. 6600 ) $D_1$ सुमण्डपे देवदेव ( for $^{a}$ ). $G_2$ G(ed ) दृश्यमान ( $G_2$ देवराजं ) पुरदरम् ( for $^{b}$ ).—( L 6602 ) $D_1$ $M_1$ G(ed.) सार्धं ( for साधु ). $G_{1,2}$ $M_1$ G(ed.) दृष्टया ( for दृष्ट्वा ). —( L. 6603 ) $D_1$ $M_1$ वज्री तु तमभाषत , $G_1$ वज्री चेदम° ; $G_2$ वज्री नृपम° ( for $^{b}$ ) —( L. 6607 ) $G_2$ उक्तस् ( for पृष्टस् ). —( L. 6608 ) $G_1$ स्वर्गागमनकारणम् ( for $^{b}$ ).—( L. 6612 ) $G_{1,2}$ $M_1$ ब्रह्म- ( for च हि- ). — $G_2$ om. lines 6615–6617. —( L. 6621 ) $G_2$ ह्यपुत्रश्; $M_1$ अपुत्रश् ( for ह्यपुत्री ). —( L. 6622 ) G(ed.) सर्वेषां त्वं देवदेव ( for $^{a}$ ). —( L. 6623 ) G(ed.) नित्यदा ( for भूमिप ). —( L. 6627 ) G(ed.) च शुभदं ( for एव शुभ ). $G_2$ G(ed ) धर्मिणा ( for धर्माणां ). —( L 6630 ) $G_1$ $M_1$ सर्वे ( for सर्वाः ). $G_2$ समाययुः ( for ययुस्तदा ). G(ed ) स्वं स्वं धाम प्रपेदिरे ( for $^{b}$ ).—( L. 6631 ) $G_2$ मौञ्जीबन्धनमुत्तमम् ( for $^{b}$ ). —( L. 6632 ) $G_1$ समाप्नोति ( for अवाप्तुं वै ), $G_2$ राजा च पुत्रकामोऽसौ ( for $^{a}$ ). —( L. 6634 ) $D_1$ $M_1$ G(ed.) उद्वाहमङ्गलं द्रव्यैः ( for $^{a}$ ). $D_1$ $M_1$ स कारयति सर्वदा ; $G_2$ कुर्वतस्तस्य भूपतेः ( for $^{b}$ ). —( L. 6636 ) $D_1$ $G_1$ $M_1$ -कर्मणा ( for °णः ). —( L. 6639 ) $D_2$ सुधर्मत्वं , $M_1$ °र्मं च ( for °र्म्यं च ). —( L. 6641 ) $D_1$ -लोक-

आयुष्करं सुधर्म्यं च प्रजावृद्धिकरं शुभम् ।
यशस्य लोकविख्यातं सर्वलोकेषु पूजितम् ॥ [ 6640 ]
पुण्यलोकप्रदं पार्थ विवाहोपनयन परम् ।
मम लोकप्रदं धर्म सर्वमङ्गलदायकम् ॥
यः शृणोति सदा भक्त्या प्रातःकाले नृपोत्तम ।
पुत्रप्राप्तिर्भवेत्तस्य सत्य सत्यं मयोदितम् ॥
स्त्रीसंनिधौ निशायां तु पठेत्प्राप्नोति पुत्रकम् । [ 6645 ]
आरोग्यं बलवृद्धिं च कान्तिं च निरुपद्रवाम् ॥

Colophon.

द्रौपद्युवाच ।

गङ्गासुत नमस्तेऽस्तु कुरुवृद्ध महामते ।
केनोपायेन मे तात सर्वसंपद्भविष्यति ॥
स्त्रीणां तु किं व्रतं प्रोक्तं सर्वसंपत्करं परम् ।
विख्यात त्रिषु लोके तन्मे ब्रूहि पितामह ॥ [ 6650 ]
पाञ्चाल्या वचन श्रुत्वा यज्ञपत्नीजनैः सह ।
भीष्मो वेदविदां श्रेष्ठो द्रौपदी वाक्यमब्रवीत् ॥
वक्ष्ये परमकल्याणि सर्वसंपत्करं शुभम् ।
आदौ भगवता प्रोक्तं नारदाय महात्मने ।
नारदो ब्रह्मपुत्रस्तु ममावोचच्छुभं व्रतम् ॥ [ 6655 ]
चातुर्मास्यव्रतं पुण्यं सर्वमङ्गलकारणम् ।
अपवर्गप्रदं नृणां सर्वेषामघनाशनम् ।
स्त्रीणां पतिव्रतानां तु सर्वमङ्गलदं शुभम् ॥
श्रावणे मासि शुक्ले तु दशम्यां तु शुभे दिने ।
स्वगृहं लेपयेद्भक्त्या कृष्णे निर्विष्टचेतसा ॥ [ 6660 ]
स्नात्वालंकारयेद्गेहं गन्धपुष्पाक्षतादिभिः ।
पतिसेवापरा भूत्वा नत्वा नारायण प्रभुम् ॥
नत्वा पतिव्रता सम्यक्पतिं परमपावनम् ।
प्रार्थयेत्परया भक्त्या करिष्ये त्वत्प्रसादत ॥
दशम्यामेकभुक्ता तु पादसेवां करोमि ते । [ 6665 ]
यथा प्रीणाति भगवांस्तथानुज्ञां ददस्व ह ॥
प्रार्थयेत्पुण्डरीकाक्षं प्रसीदेति तत. परम् ।
प्रसन्नो भव देवेश सर्वज्ञं त्वां नमाम्यहम् ॥

त्वत्प्रसादात्तु भगवन्करिष्ये व्रतमुत्तमम् ।
अविघ्नं कुरु मे नाथ सर्वलोकनमस्कृत । [ 6670 ]
कृपया तव देवेश करिष्ये व्रतमुत्तमम् ॥
नमस्ते पुण्डरीकाक्ष नमस्ते गरुडध्वज ।
नमस्ते कमलाकान्त भूयो भूयो नमोऽस्तु ते ॥
इदं मन्त्रं समुच्चार्य प्रार्थयेत्कमलापतिम् ।
त्वत्प्रसादाद्व्रतं सम्यक्सफलं भवति ध्रुवम् ॥ [ 6675 ]
एवं गृहार्चनं सम्यक्प्रार्थयित्वा पुन पुनः ।
पतेरनुज्ञया रात्रौ भद्रदीपं प्रकल्पयेत् ॥
कृत्वैकभुक्तं पूर्वेद्युरन्येद्युरपि सुव्रते ।
कर्तव्यं यद्धरेः सम्यक् तत्प्रवक्ष्ये शृणुष्व ह ॥
एकादश्यां समुत्थाय स्नात्वा च प्रार्थयेत्पतिम् । [ 6680 ]
कृतस्वस्तिकविन्यासा गृहदेवस्य संनिधौ ॥
एकादशीव्रतं कर्तुमनुज्ञां दातुमर्हसि ।
त्वत्प्रसादादह कर्तुं यतिष्ये नाथ संप्रति ॥
त्व मे हरिर्गुरुर्बन्धुरपवर्गप्रदो विभु ।
त्वया संरक्षिता नित्यं त्वत्पादकमल गता । [ 6685 ]
भोक्ता मे शिक्षिता च त्व त्वदन्यो न गतिर्मम ॥
रात्रौ जागरणं कृत्वा उपोष्यैकादशीदिनम् ।
द्वादश्यां प्रातरुत्थाय स्नानं कुर्वीत वाग्यत. ॥
भक्तिमान्यजमानस्तु विष्णुसूक्तादिमन्त्रकैः ।
स्नापयेत्परया भक्त्या गन्धोदककुशोदकैः ॥ [ 6690 ]
पुरुषसूक्तविधिना गायत्र्या वा सुरेश्वरम् ।
अष्टाक्षरविधानेन ह्यथ वा द्वादशाक्षरैः ॥
पूजयेद्देवदेवेशं घण्टानादसमन्वितम् ।
क्षत्रियः सर्ववाद्यैश्च शङ्खदुन्दुभिकाहलैः ॥
एवं प्रपूजयेद्देवमपवर्गप्रदं प्रभुम् । [ 6695 ]
नामत्रयैर्महामन्त्रैर्योषित्कुर्वीत वन्दनम् ।
स्पर्शने नाधिकारोऽस्ति स्त्रीशूद्राणा विशेषतः ॥
एवं कृत्वा हरे पूजां बन्धुमान्भक्तिमान्गृही ।
पौरुषैस्तु महामन्त्रै संनिधौ पायसं हुनेत् ॥
परमान्न हरे. प्रीत्यै द्वादश्यां हेमपात्रतः । [ 6700 ]

---

प्रदौ ( for °प्रदं ). $D_1$ विवाहोपनयौ शुभौ; $G_2$ °ह मौञ्जिबन्धनम् ( for $^b$ ).

Colophon. — *Sub-parvan :* $D_1$ $G_1$ आश्चर्यपर्वाणि शेषधर्माः : $G_2$ G(ed ) शेषधर्मा , $M_1$ आश्चर्यपर्वणि हरिवंशे शेषधर्माः. — *Adhy. name :* $G_2$ ब्रह्मप्रतिष्ठापनम् ; G(ed.) ब्रह्मप्रतिष्ठाप्रशसा. — *Adhy. no* $D_1$ 51 , $G_{1,2}$ $M_1$ 50.

$D_1$ $G_2$ युधिष्ठिर ( for द्रौपदी ). — ( L 6647 ) $G_2$ $M_1$ पितामह ( for महामते ) — ( L 6649 ) $G_1$ तद्व्रतं संप्रचक्ष्व त्वं ( for $^a$ ). — After line 6650, $D_1$ ins. .

234** तेषां पत्नी ह्येतदर्थं द्रौपदी प्रणयान्विता ।
कौतूहलादपृच्छत्त महापुण्यप्रद शुभम् ॥

— Before line 6651, $D_1$ $M_1$ ins वैशंपायन उवाच. — ( L. 6651 ) G(ed.) सर्वधर्मार्थसाधनम् ( for $^b$ ). — Before line 6653, $G_1$ $M_1$ ins भीष्म उवाच — ( L 6656 ) $G_{1,2}$ -दायकम् ( for -कारणम् ) — ( L 6659 ) G(ed ) आषाढे ( for श्रावणे ). — ( L 6762 ) $D_1$ शुभम्, $G_1$ G(ed.) विभुम् ; $M_1$ परम् ( for प्रभुम् ) — ( L. 6670 ) $D_1$ $G_2$ देव ( for नाथ ). $D_1$ -देव- ( for -लोक- ). — ( L 6676 ) G(ed ) लोकेश्वरं ( for गृहार्चन ). — ( L 6679 ) $D_1$ भवेत् ( for हरे ) — ( L. 6680 ) $G_2$ स्तुत्वा, G(ed ) नत्वा ( for स्नात्वा ). — ( L. 6686 ) $D_1$ $G_1$ $M_1$ भोक्ता मा शिक्षकस्त्वं च ( $G_1$ °क कर्ता , $M_1$ °कर्ता च ); $G_2$ बोद्धा शिक्षाकरस्त्व हि ( for $^a$ ). — After line 6686, G(ed ) ins.

235** इति सप्रार्थ्य भर्तारं तस्यानुज्ञामवाप्य च ।

— $G_2$ om lines 6688–6691 — ( L. 6694 ) $D_1$ $G_2$ -कोणकैः ; $M_1$ -निस्वनै. ( for -काहलैः ) — ( L. 6695 ) $D_1$ $G_2$ $M_1$ देवं

यद्यद्व्रतादिकं कर्म हरिसंनिधिमात्रत· ।
सफलं याति राजेन्द्र सर्वान्कामानवाप्स्यसि ॥
पुण्याहं वाचयित्वाथ विप्रैर्बन्धुजनैः सह ।
शान्ति पौरुषसूक्तानि पठेद्देवं प्रणम्य च ॥
औपासनादिकान्कृत्वा ब्राह्मणानभिवादयेत् । [ 6705 ]
पादप्रक्षालनं कृत्वा भोजयेत्परमान्नतः ॥
हरेर्नैवेद्यशेषं तु स्वयं भुञ्जीत वाग्यत ॥
तदन्ते यजमानस्य वल्लभा मङ्गळव्रता ।
प्रणम्य विप्रान्स्वपतिं कृत्वा पादविशोधनम् ।
तीर्थभूतं पयः पीत्वा स्वयं भुञ्जीत बन्धुभि· ॥ [ 6710 ]
एवं कृते व्रते सम्यक् दंपतिभ्यां हरिः स्वयम् ।
प्रीतिं गच्छति पाञ्चालि कर्मणां फलदो विभुः ॥
यं यं कामयते कामं तं तं प्राप्नोति निश्चितम् ।
कृपया लोकनाथस्य व्रतेनानेन सुव्रते ।
एकादशीव्रतं कुर्याच्चातुर्मास्ये विशेषतः । [ 6715 ]
शुद्धश्रावणमारभ्य कार्त्तिकान्तं समर्चयेत् ॥
एवं कृते विशेषेण पुत्रपौत्रादिबन्धुभिः ।
स्त्रीभिः परिजनैः सार्धं यत्काम्यं तत्प्रपद्यते ॥
सुरलोकप्रदा ह्येषा जीवपुत्रप्रदायिनी ।
अपवर्गप्रदा ह्येषा सर्वपापप्रणाशिनी । [ 6720 ]
आरोग्यदायिनी ह्येषा सर्वभाग्यकरी शुभे ॥

द्रौपद्युवाच ।

भगवन्सर्वधर्मज्ञ सर्वलोकेश्वरस्य हि ।
भक्तप्रियो विशेषेण रक्षिता मम सुव्रत ॥
संवाह्य शिरसा भक्त्या भव राज्ञां शुभप्रद ।
करिष्ये पतिभिः सार्धं धर्मव्रतपरायणैः ॥ [ 6725 ]
श्रुतं मया विशेषेण चातुर्मास्यस्य वैभवम् ।
उद्यापनं तु कार्त्तिक्यां वद संप्रति मेऽनघ ॥

भीष्म उवाच ।

व्रतानामपि सर्वेषामुद्यापनविधिं बुधाः ।
वदन्ति च व्रतस्यास्य नैवेद्यापनकर्म च ॥
नित्या ह्येकादशी पुण्या सर्वभाग्यप्रवर्धिनी । [ 6730 ]
उपवासव्रतमिदं नित्यमेव वदन्ति हि ॥
यथा तु गुळपिण्डस्य रसभेदो न विद्यते ।
एकादश्युपवासस्य तथा सर्वस्य चानघे ॥
शृणु पाञ्चालि वक्ष्यामि चातुर्मास्यस्य वैभवम् ।
फलातिशयहेतोस्तु कारणं कलिनाशनम् ॥ [ 6735 ]
एकादश्यां शुक्लपक्षे श्रावणस्य सुरोत्तमः ।
स्वमायया पवित्राङ्गया निद्रया वर्तते विभुः ॥
तथा योगेन महता विग्रहेण सुशोभनः ।
प्रसन्नमूर्तिर्भगवान्कार्त्तिक्यां भवति प्रभुः ॥
तस्य प्रसन्नदिवसमुत्थानाख्यं विदुर्बुधाः । [ 6740 ]
उत्थिते देवदेवेशे शेषपर्यङ्कशायिनि ।
पूजयेत्तं प्रयत्नेन पूजाभिस्तत्पदं व्रजेत् ॥
योगोत्थितत्वात्स विभुर्जगद्योनिर्जगन्मयः ।
चराचरेषु लोकेषु ह्युत्थानद्वादशी स्मृता ॥
द्वादश्यां तु हरिं भक्त्या पूजां कुर्वन्ति ये नरा· । [ 6745 ]
तेषां मुक्तिर्भवेत्सम्यग्देवदेवस्य चेक्षणात् ॥
एकादशीं तथा सर्वामुपोष्य विधिवद्धरेः ।
पूजां कृत्वा प्रयत्नेन ह्युत्थानान्तं समर्चयेत् ॥
उत्थाने विधिना पूजां यः करोति विशेषवित्
स मुक्तः सर्वपापेभ्यो हरिसालोक्यतां व्रजेत् ॥ [ 6750 ]

द्रौपद्युवाच ।

कीदृशी पूजना प्रोक्ता देवदेवस्य शार्ङ्गिणः ।
तन्मे कथय तत्त्वज्ञ सर्वलोकेषु पूजित ॥

भीष्म उवाच ।

शृणु भद्रे प्रवक्ष्यामि नारदाय महात्मने ।
हरिः प्रोवाच जलधौ क्षीराख्ये संस्तुतो विभुः ॥
व्रतानामपि सर्वेषां मुख्यमेकादशीव्रतम् । [ 6755 ]
मयि सुप्ते भक्तजनाः कुर्वन्ति मयि तत्पराः ॥
तस्मात्पुण्यतमं प्रोक्तं चातुर्मास्यव्रतं परम् ।
शेषा भक्तिकरी प्रोक्ता चातुर्मासी तु मुक्तिदा ॥
भक्तिं विना ते मुक्तिश्च कथमद्य भविष्यति ।
भक्त्या मुक्तिप्रदं कर्म साधयेद्बुद्धिमान्नरः ॥ [ 6760 ]
तस्मादेकादशी पुण्या त्वया सेव्या मुनीश्वर ।
भक्त्या परमया शान्त्या चातुर्मास्ये विशेषतः ॥
इत्युक्त्वा भगवान्नूनं नारदं मुनिसत्तमम् ।
तिरोऽभूत्तत्र विश्वात्मा नारदो विस्मयं गतः ॥
तस्मात्सर्वप्रयत्नेन पूज्या नारायणात्मिका । [ 6765 ]
उत्थानद्वादशी ह्येषा सर्वपापप्रणाशिनी ॥
सुप्तोत्थितो हरिः साक्षाद्व्रतेन परितोषितः ।
व्रतेन सर्वकामान्वै संप्रयच्छति शोभने ॥

---

प्रपूजयेद्भक्त्या ( for [a] ). D1 M1 शुभम् ( for प्रभुम् ). — ( L. 6699 ) M1 सन्निधौ जुहुयात्पुन· ( for [b] ) — ( L. 6700 ) G1 विशेषेण ( for हरे प्रीत्यै ) D1 G2 M1 परमान्नैर्हरे· प्रीतिर् ( for [a] ). D1 G2 M2 द्वादश्या होममात्रत ( for [b] ). — ( L 6701 ) G2 यद्यद्व्रतानि कर्माणि, M1 कियद्व्रतानि किं कर्म ( for [a] ). — ( L 6709 ) G1 भक्त्या ( for विप्रान् ). — ( L. 6713 ) D1 M1 कर्ता ( for काम ). — ( L 6714 ) G1 कृपया वासुदेवस्य ( for [a] ). — ( L. 6716 ) G(ed ) आषाढशुद्धमारभ्य ( for [a] ). — G2 पाञ्चाली ( for द्रौपदी ). — ( L. 6722 ) M1 सर्वलोकेश्वरः सखा ( for [b] ). — ( L. 6724 ) G1 भवदाज्ञां सुख( M1 शुभ )- प्रदाम् ( for [b] ). — ( L 6730 ) G(ed.) सर्वभोग्यविवर्धनी ( for [b] ). — G(ed ) om. lines 6735-6736. — ( L. 6737 ) M1 प्रीयते ( for वर्तते ) — ( L. 6743 ) G(ed.) योगोत्थितो हि स विभु· ( for [a] ) — ( L. 6747 ) D1 एकादशी सदा सेव्या ( for [a] ). — ( L 6748 ) G2 G(ed.) ह्युत्थानं तत्समर्चये( G2 °माचरे )त् ( for [b] ). — ( L 6750 ) G1 हरिसालोक्यमश्नुते ( for [b] ). — G1, 2 M1 पाञ्चाली ( for द्रौपदी ). — ( L. 6751 ) G(ed.) पूजा तु कीदृशी प्रोक्ता ( for [a] ). — ( L. 6756 ) G(ed.)

रात्रौ जागरणं कुर्यात्पुराणश्रवणादिभिः ।
नृत्तगीतादिनैवेद्यैर्जपवेदानुकीर्तनैः ॥ [ 6770 ]
एकयामं तु यः कुर्याज्जागरं हरिसंनिधौ ।
जन्मान्तरकृतैः पापैर्मुच्यते नात्र संशयः ॥
द्वियामात्स्वर्गसंपत्तिस्त्रियामाद्ब्रह्मणः पदम् ।
मुक्तिं याति नरो भक्त्या स्थित्वा यामचतुष्टयम् ॥
जागराच्चातुर्मास्यात्तत्फलं तद्ब्रवीमि ते । [ 6775 ]
मातृतः पितृतश्चैव द्विकोटिकुलसंयुतः ।
शार्ङ्गिणो लोकमाप्नोति यद्गत्वा न निवर्तते ॥
द्वादश्यां प्रातरुत्थाय स्नात्वा पुण्यजलाशये ।
पुरुषसूक्तविधानेन हरिं सम्यक्प्रपूजयेत् ॥
शार्ङ्गिणः पुरतः स्थाप्य पावकं तु स्वशाखतः । [ 6780 ]
पुरुषसूक्तऋचा सम्यक्परमान्नं हुनेद्व्रती ॥
ध्यात्वा सर्वगतं विष्णुमपवर्गफलप्रदम् ।
इष्टप्रदं तमुद्दिश्य पावके जुहुयादिति ॥
अष्टाक्षरेण मन्त्रेण द्वादशाक्षरकेण वा ।
अथ वा राममन्त्रेण गोपालेन हुनेद्व्रती ॥ [ 6785 ]
गायत्र्या वाथ शिवया पञ्चाक्षरसुविद्यया ।
उपदिष्टं तु यन्मन्त्रमेषां मध्ये सुशोभने ।
अष्टोत्तरशतं चाग्नौ तेन मन्त्रेण होमयेत् ॥
योषिद्वैश्यस्तथा शूद्रस्त्वमन्त्रो विकलाङ्गवान् ।
कारयेद्वेदविदुषा व्रतस्य परिपूर्तये ॥ [ 6790 ]
गोभूतिलहिरण्यानि वासो दुग्धगुडानि च ।
प्रदद्याद्ब्राह्मणेभ्यश्च गुरवे तु विशेषतः ॥
ब्राह्मणान्भोजयेद्भक्त्या प्रीत्या क्रोधविवर्जितः ।
भक्ष्यभोज्यादिभिः सम्यक्स्वयं भुञ्जीत वाग्यतः ॥
एवं कृते विधानेन ह्युत्थानद्वादशीव्रते । [ 6795 ]
देवदेवो जगन्नाथः सुप्रीतो भवति ध्रुवम् ॥
भ्रष्टराज्यप्रदा ह्येषा सर्वभाग्यकरी तथा ।
अपवर्गप्रदा ह्येषा चातुर्मासी विशेषतः ॥
इन्द्राण्येतत्पुरा कृत्वा गुरोरक्लिष्टकर्मणः ।
वाक्येन स्वपतिं लेभे राज्यभ्रष्टमरिंदमम् ॥ [ 6800 ]
अदितिर्देवमाता हि बलिनेन्द्रं प्रपीडितम् ।
पुत्रं वीक्ष्य तदा साध्वी कश्यपं वाक्यमब्रवीत् ॥
अनुज्ञां देहि मे ब्रह्मंश्चरिष्ये व्रतमुत्तमम् ।
कुरुष्वेत्युक्तमात्रे तु ह्यकरोदीदृशं व्रतम् ।
एकादशीप्रभावेन सुतं लेभे सुरोत्तमम् ॥ [ 6805 ]
यस्त्वेतच्छृणुयान्नित्यं चातुर्मास्ये विशेषतः ।
सर्वान्कामानवाप्नोति सफलं तु व्रतं भवेत् ॥

Colophon.

वैशंपायन उवाच ।

इत्येवं बोधिते धर्मे धर्मपुत्रे महात्मनि ।
राज्यभ्रष्टा च पाञ्चाली दध्यौ कृष्णमभीष्टदम् ॥
शङ्खचक्रगदापाणे द्वारकानिलयाच्युत । [ 6810 ]
गोविन्द पुण्डरीकाक्ष रक्ष मा शरणागताम् ॥
इति संप्रार्थ्य पाञ्चाली गङ्गासुतमथाब्रवीत् ।
कुरुवृद्ध नमस्तेऽस्तु सर्वशास्त्रविशारद ।
यादवेन्द्रो भवानेको गोप्तारौ मम सुव्रतौ ॥
शत्रुणा हृतराज्याहं कार्पण्यं परमं गता । [ 6815 ]
स्निग्धबन्धुजना सर्वे मया त्यक्ता परिच्छदाः ॥
राज्यलाभो भवेद्येन व्रतेन तपसाधुना ।
कर्मणा केन दानेन तन्मे ब्रूहि पितामह ॥

भीष्म उवाच ।

व्रतं कृतवती नूनं पार्वती मेनकात्मजा ।
पुत्रदं पुत्रकामानां भ्रष्टराज्यप्रदं शुभम् ॥ [ 6820 ]
तत्तेऽहं संप्रवक्ष्यामि सर्वमङ्गलदायकम् ।
पार्वत्याश्चरितं पुण्यमनन्ताभीष्टदायकम् ॥
कैलासनाथं भूतेशं शंकरं लोकशंकरम् ।
पार्वती तोषयामास तपसा कृतनिश्चया ॥
परीक्षार्थं स देवोऽपि पार्वत्या तोषितो विभुः । [ 6825 ]
कन्दर्पनिधनं कृत्वा तिरोऽभूल्लोकशंकरः ॥
विनिन्द्य च स्वलावण्यमनुज्ञाप्य स्वमातरम् ।
उग्रं तपः सा तु कृत्वा तोषयामास शंकरम् ॥
तस्मिन्काले शची देवी द्रष्टुकामा च पार्वतीम् ।
अरुन्धत्यनसूयाभ्यां सेव्यमाना महर्षिभिः । [ 6830 ]
तत्सकाशं ययौ देवी मरुतां पतिना सह ॥
तामागतां तदा वीक्ष्य पार्वती मेनकात्मजा ।
प्रत्युत्थानाभिवादाभ्यां पूजयामास सत्वरम् ॥
तामुवाच ततो वाक्यं पार्वती मेनकात्मजा ।

---

कुर्वन्तीदं हि मत्परा (for [5]) — (L 6773) G2 द्वियामात्स्वर्गमाप्नोति (for [a]) — (L 6775) D1 G1 M1 जागरात्तु चतुर्मासाद् (for [a]). — (L 6777) M1 यत्र गत्वा न शोचति (for [5]). — M1 om (hapl) lines 6782–6785 — (L. 6782) G(ed.) -प्रदं शुभम् (for -फलप्रदम्) —(L 6784) D1 G1. 2 अष्टाक्षरेण अथ वा द्वादशाक्षरविद्यया. — (L. 6787) D1 तु शोभनम् (for सुशोभने).— (L 6789) D1 G2 योषिद्वैश्यास्तथा शूद्रास् (for [a]). D1 नैव होमाधिकारिण (for [5]). — (L. 6791) D1 धान्यानि सफलानि च; G1 2 धनानि विविधानि च; M1 धान्यानि वसनानि च (for [5]). — (L. 6794) D1 G2 M1 बन्धुभिः (for वाग्यत.). — G2 om. lines 6797–6798 —(L 6801) D1 G1 बलीन्द्र- (for -बलिना). G2 बलिना परिपीडित (for[5]) — (L 6804) M1 G2 -मात्रेण (for -मात्रे तु) — (L 6807) G(ed) फलदं तु व्रतं चरेत् (for [5]).

COLOPHON — *Sub-parvan*. D1 G1 M1 आश्चर्यपर्वणि शेषधर्मा.; G2 G(ed) शेषधर्मा.— *Adhy. name* · D1 उत्थानद्वादशीमाहात्म्यम्, G2 चातुर्मास्यमहिमानुवर्णनम्, G(ed.) चातुर्मास्यैकादशीव्रतमाहात्म्यम् — *Adhy no* · D1 52; G2 51.

(L. 6809) D1 G1 2 M1 गङ्गासुतमथाब्रवीत् (for [5]). — (L 6811) D1 G1 2 M1 शरणागतम् (for °गता). — D1 G1, 2 M1 om. line 6812 — (L. 6814) G2 गोप्ता काममनुव्रत (for [5]). —(L. 6834) D1 G2 M1 पार्वती कमलेक्षणा

अथ मे सफलं जन्म जीवितं च सुजीवितम् । [6835]
तपश्च सफलं चासीद्युष्माकं प्रियदर्शनात् ॥

अरुन्धत्युवाच ।

किमर्थं तप्यते वत्से त्वया पेशलगात्रया ।
त्वया वक्तुं रहस्यं चेद्वद संप्रति नान्यथा ॥
सख्या निवेदयामास तच्छ्रुत्वा शंकरं प्रति ।
सलज्जा तरुणी कामं सा वक्तुं न शशाक ह ॥ [6840]

अरुन्धत्युवाच ।

भद्रे विदितमेवाद्य त्वद्वृत्तमतिशोभने ।
व्रतेन तोषयस्वेह क्षीराब्धितनयां शुभाम् ॥

उमोवाच ।

किं व्रतं तद्विधानं मे कथयस्व नमोऽस्तु ते ।
करिष्ये वचनादद्य मातस्तव पतिव्रते ॥

अरुन्धत्युवाच ।

प्रोषिते गौतमभयाद्देवराजे शचीं तदा । [6845]
व्रतेन दुःखितां जीवो विशोकामकरोत्तदा ॥
तद्व्रतं सप्रवक्ष्यामि कृतमेतन्मयाधुना ।
व्रतेनानेन सुभगे तवेष्टार्थो भविष्यति ॥
पुरंदरवियोगार्तां शचीं चारुविलोचनाम् ।
जीवो वचनमक्लीबमुवाच वदतां वरः । [6850]

बृहस्पतिरुवाच ।

राशिं कर्कटकं भानौ गते परमपावने ।
भृगुवारे महापुण्ये स्नात्वा नद्यां शुचिस्मिते ॥
सैकतं पूर्णकुम्भं च तज्जलात्परिगृह्य च ।
धौतवस्त्रसमायुक्ता वटस्याश्वत्थपल्लवान् ॥
आदाय तान्गृहे रम्ये सैकते तु समर्पयेत् । [6855]
तत्सैकतं समादाय त्रीन्पिण्डानथ कारयेत् ॥
वटाश्वत्थैस्तु तानर्च्य तत्पार्श्वे पूर्णकुम्भकम् ।
सुवर्णपुष्पगन्धाद्यैर्वस्त्रतण्डुलराशिभिः ।
हरिद्रालवणाभ्यां च पूगताम्बूलकर्पूरैः ॥
उपस्थितं तमभ्यर्च्य लक्ष्मीनारायणात्मकम् । [6860]
माभूभ्यां सह तं विष्णुं सनकादिनिषेवितम् ॥
तं देवमर्चयेद्विद्वांस्तत्तन्मन्त्रैस्तु शार्ङ्गिणम् ।
मोदकान्गुळसंपूर्णान्मुद्गैश्च परिपूरितान् ।
नैवेद्यमर्पयेद्विद्वानेकविंशतिसंख्यया ॥
विप्राय वेदविदुषे वायनं तु समर्पयेत् । [6865]
माभूभ्यां सहितो विष्णुः श्रीमान्वै लोकनायकः ।
मोदकानां प्रदानेन वाञ्छितार्थप्रदो भवेत् ॥
विप्राय वायनं दत्त्वा मन्त्रेणानेन सुव्रत ।
एकविंशतिभिर्वापि सप्तभिर्वा प्रकल्पयेत् ॥
एवं संपूज्य विधिवत्कथां श्रुत्वा सुशोभनाम् । [6870]
भुञ्जीयाद्बन्धुभिः सार्धं स्वयं भुञ्जीत मोदकान् ॥
दक्षिणां गुरवे दद्यात्सवस्त्रफलतण्डुलाम् ।
आशिषं तु ततः प्राप्य गृह दीपैः प्रपूजयेत् ।
एवं कृते विधानेन सद्यः सिद्धिर्भविष्यति ॥
पुत्रपौत्रांस्तथा विन्देत्पतिं विन्देत्पतिव्रता । [6875]
राजा च राज्यलाभं च दरिद्रो धनसंपदम् ॥
दीर्घमङ्गलमायुष्यमारोग्यं चापि भामिनि ।
भवेद्व्रतेन कीर्तिश्च सर्वसंपच्च शाश्वती ।
यं यं कामयते कामं तं तमेति न संशयः ॥
स्त्रीणां व्रतमिदं मुख्यं पतिपुत्रविवर्धनम् । [6880]
तस्मात्पतिव्रते त्वं तु कुरु व्रतमनुत्तमम् ॥
आचार्यस्य वचः श्रुत्वा शची कमललोचना ।
तथाकरोद्व्रतमिदं ब्राह्मणान्परिपूज्य च ॥
पतिं लेभे विशालाक्षि सहस्राक्षमरिंदमम् ।
कृपया वासुदेवस्य लक्ष्म्याश्चापि नगात्मजे ॥ [6885]
अरुन्धत्या वचः श्रुत्वा गौरी कुटिलकुन्तला ।
अकरोत्प्रीतिसंयुक्ता लक्ष्मीनारायणात्मकम् ॥
व्रतं कृत्वा विधानेन व्रतानां पतिमव्ययम् ।
गौरी लेभे महादेवं पतिं परमपावनम् ॥

भीष्म उवाच ।

कार्कटे तु भृगोर्वारे व्रतेऽस्मिंस्तु मया कृते । [6890]
अन्धकारिः प्रसन्नोऽभूत्पार्वत्यास्तु तपोव्रतैः ॥
अष्टमूर्तिधरो भूत्वा कपर्दी वाक्यमब्रवीत् ।
परितुष्टोऽस्मि भद्रं ते पवित्रे मेनकात्मजे ।
तव दास्यं गतोऽहं वै तपसा च व्रतेन च ॥
देवता च व्रतस्यास्य क्षीराब्धितनया शुभा । [6895]
अथ देवो हरिः साक्षात्सर्वलोकेश्वरो विभुः ॥
अद्यप्रभृति लोकानां फलदा शुभदा रमा ।
राज्यदा भोगदा चैव पतिदा धनदा शुभा ॥
हरिं लक्ष्मीं विना नान्या व्रतदानफलप्रदा ।

---

(for b). — (L. 6836) D1 जातं (for चासीद्). — (L 6837) G2 बाले, M1 भद्रे (for वत्से) — (L 6838) G2 न शक्यं (for रहस्यं). — (L 6840) G2 कामा (for कामं). — G2 om lines 6841–6844 — D1 पार्वती (for उमा). — (L. 6854) G1 G(ed) वटाश्वत्थसु( G1 °स्य )पल्लवान् (for b). — (L 6859) G(ed.) -चन्द्रकैः (for -कर्पूरैः). — (L. 6862) D1 G2 तत्तन्मन्त्रैश्च चेतसा (for b). — (L. 6865) M1 पायस (for वायन). — (L. 6868) M1 [उ]पायन (for वा°) G1 G(ed.) विप्राय दद्याच्छुचये (for a). — (L 6871) G1 G(ed) ब्राह्मणान्भोजयित्वाथ (for a). — After line 6872, G1 G(ed) ins .

236** दक्षिणा तु यथाशक्ति दद्याद्विप्रेभ्य एव च ।

— (L. 6875) G1 पुत्रं विन्देद्विशालाक्षी (for a). — (L. 6877) D1 G2 दीर्घमायुष्यमारोग्यं (for a). G2 मङ्गलं चापि भामिनी (for b). — (L. 6879) G2 तं तं प्राप्नोत्यसंशयम् (for b). — (L. 6880) D1 G1, 2 M1 -बन्धु- (for -पुत्र-). — G2 om. line 6886. — (L. 6886) D1 गौरी कमललोचना (for b). — (L. 6890) D1 G1, 2 M1 विधिना सोमया कृते

न पश्यामीह लोकेऽस्मिंस्तस्मात्पूज्या त्वया शुभे ॥ [6900]
भीष्म उवाच ।
एवं दत्त्वा वरं तस्याः पार्वत्याः परमेश्वरः ।
उद्वाह्य विधिना गौरीं तया सार्धं मुमोद ह ॥
पाञ्चालराजतनये त्वमेवं कुरु शोभने ।
पुत्रराज्यधनादीनां संपत्तव भवेद्ध्रुवम् ॥
रुक्मिणी कृष्णमुद्दिश्य कृत्वा व्रतमनुत्तमम् । [6905]
यादवेन्द्रं पतिं लेभे संत्यक्त्वा चेदिभूपतिम् ॥
सर्वास्ताः कृष्णपत्न्यश्च सर्वा यादवयोषित ।
प्रद्युम्नप्रमुखान्पुत्राँल्लेभिरे लोकविश्रुतान् ॥
दमयन्ती पतिं लेभे राज्यभ्रष्टं नलं विभुम् ।
हरिश्चन्द्र स्वकं राज्यं लेभे चन्द्रवतीं शुभाम् ॥ [6910]
पाञ्चालि पश्य लोकेषु यत्ते मनसि रोचते ।
अचिरात्प्राप्स्यसे श्रेय सत्यं नारदभाषितम् ॥
भर्त्रा विरहिता नारी भ्रष्टराज्यश्च यो नृप ।
व्रतं कृत्वा विधानेन शाश्वतं सुखमश्नुते ॥
व्रताचरणकाले तु शृणुयाद्यो हि मानव । [6915]
तस्यैव सर्वश्रेयांसि भविष्यन्ति न संशय ॥

Colophon

युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
शिवरात्रिव्रत तात ब्रूहि मे कुरुपुंगव ।
संमतं सर्वलोकाना पवित्रं पावनं शुभम् ॥
कैर्नृपैर्द्विजमुख्यैश्च ऋषिभिर्देवतागणै. । [6920]
कृतं व्रतमिदं पुण्यं पवित्रं पापनाशनम् ।
वद विश्रुतधर्मज्ञ नमः सुरनदीसुत ॥
त्वं हि लोकगुरोर्भृत्य इति मे निश्चिता मतिः ।
तस्मात्त्वा प्रार्थयाम्यद्य पातुं धर्मामृतं प्रभो ॥
त्वत्तोऽहं श्रोतुमिच्छामि देवदेवस्य चाज्ञया । [6925]
धर्मोपदेशव्याजेन पाह्यस्मान्शत्रुपीडितान् ॥
वैशंपायन उवाच ।
इत्युक्तो धर्मराजेन कुरुवृद्ध पितामह ।
धर्मसूनुमथामन्त्र्य सस्मितं वाक्यमब्रवीत् ॥
भीष्म उवाच ।
साधु साधु महाप्राज्ञ मतिस्ते विमलोज्वला ।
त्वं वेत्ता सर्वधर्माणां मां तथा परिपृच्छसि ॥ [6930]
ऐश्वरं व्रतमुद्दिश्य कीर्तितं तेन मां प्रति ।
तदङ्ग देवदेवेशो वेत्ति नान्यो महीतले ॥
पुरा भगवता प्रोक्तं विष्णुना प्रभविष्णुना ।
नारदाय ब्रह्मविदे तस्मात्तु मया श्रुतम् ॥
भागीरथ्यास्तटे राजन्ब्रह्मर्षिगणसेविते । [6935]
स्नातुमिच्छन्महानद्यां ब्रह्मपुत्रो युधिष्ठिर ।
पर्यटंस्तु शुभाल्लोकादिदं क्षेत्रमगात्प्रभुः ॥
तीरत्वागतं व्योमवीथीं दृष्ट्वा दिनकरप्रभम् ।
ऋषयो देवता. सर्वे तं देशं जग्मुरञ्जसा ।
विश्वामित्रो भरद्वाजो जमदग्निश्च मन्त्रवित् । [6940]
कण्वो बृहस्पतिर्व्यासः सोमदत्त सहस्रवित् ॥
रामो वेदविदां श्रेष्ठः सत्यशीलश्च काश्यपः ।
सुमन्तुर्जैमिनिश्चैव पुलस्त्य पुलहः क्रतुः ॥
गौतमोऽथ शतानन्दो ह्यापस्तम्बश्च गालव ।
सवर्तो रोमशश्चैव सत्यकीर्तिस्तथा भृगु ॥ [6945]
एते चान्ये च बहवो मुनयः संशितव्रताः ।
दिक्पाला मरुतश्चैव द्वादशार्का मरुद्गणाः ।
यक्षकिंनरगन्धर्वास्तं देशं प्रादुरन्वयाः ॥
तत्र देवानृषीन्सर्वान्नमस्कृत्य च नारदम् ।
अमुं धर्मं समुद्दिश्य पर्यपृच्छमहं प्रभो । [6950]
अनुज्ञातमृषिगणैर्मा देवा. साधु चाब्रुवन् ॥
महत्संशयमागत्य वयमत्र समागताः ।
तदिदं दैवयोगेन नदीज परिपृच्छसि ॥
इति तेषूपविष्टेषु प्रीतिं कृत्वा महत्सु च ।
नारदो भगवानत्र मां चैव प्रत्यभाषत ॥ [6955]
नारद उवाच ।
साधु प्रज्ञावतां श्रेष्ठ मतिस्ते मलवर्जिता ।
नीलकण्ठस्य देवस्य व्रतं परमपावनम् ॥
आदौ भगवता प्रोक्तं देवदेवेन चक्रिणा ।

---

( G1.2 °ता ) ( for $^{b}$ ) — ( L 6903 ) G(ed) पाञ्चालतनये तस्माद ( for $^{a}$ ) — ( L. 6904 ) G2 सपदस्ते, M6 °त्तिश्च ( for °तव ) — ( L. 6910 ) D1 लेभे चन्द्रवती शुभा ( for $^{b}$ ).

COLOPHON. — *Sub-parvan*. D1 आश्चर्यपर्वणि शेषधर्माः; G1.2 M1 G(ed.) शेषधर्मा.. — *Adhy name*. D1 कर्काटकमार्गव्रतम्; G1 कर्कटकव्रतम्, G2 कर्कटभृगुवारव्रतम्, G(ed) लक्ष्मीनारायणव्रतमाहात्म्यकथनम्. — *Adhy. no* D1 53; G1.2 M1. G(ed.) 52

( L. 6917 ) G(ed.) नमस्तेऽस्तु ( for महाप्राज्ञ ). — ( L. 6921 ) G1 महाव्रतं ( for व्रतमिदं ). G(ed ) इष्टदं ( for पवित्रं ). — ( L. 6926 ) G(ed) -सूदन ( for -पीडितान् ) — ( L. 6930 ) D1 M1 तथापि मम पृच्छसि; G1 तया मामपि पृ° ( for $^{b}$ ). — ( L. 6931 ) G2 आश्चर्य- ( for ऐश्वर ) — (L. 6933 ) G1 2 M1 विष्णुना सर्वजिष्णुना ( for $^{b}$ ). — ( L. 6937 ) D1 G1 अब्जजस्य, M1 पूजनार्थं ( for पर्यटंस्तु ). — G2 om. lines 6938–6940 — ( L 6938 ) D1 M1 चरन्तं व्योमतः काश्या ( M1 °जलधि ), G1 तमङ्ग व्योमजलधौ ( for $^{a}$ ). D1 दिष्ट्या दिनकर प्रभुम् ( for $^{b}$ ). — ( L 6939 ) G1 M1 तं देशं प्रति( M1 °शमधि )जग्मतु ( for $^{b}$ ) — ( L 6943 ) D1 सुमन्तुर्देवनिधन, G2 °न्तुर्वै वेदनिधि ( for $^{a}$ ) D1 G2 M1 काश्यप. ( for पुलस्त्य ) — ( L 6948 ) D1 त देशं जग्मुरञ्जसा, G2 M1 तं देशमुपजग्मिरे ( M1 °ग्मतु ) ( for $^{b}$ ) — ( L. 6949 ) G1 2 ऋषिगणान् ( for ऋषीन्सर्वान् ) — ( L. 6951 ) G1 G(ed.) अनुज्ञाता ( for °तम् ) — ( L 6956 ) G1 मतिस्ते विमलोर्जिता ( for $^{b}$ ) — ( L 6960 ) D2 M1 शुभदं ( for सुलभं ) — After line 6960, D1 ins. ;

पावनं त्रिषु लोकेषु विश्रुतं पाण्डुनन्दन ॥
सुलभं धर्मबुद्धीनां पापिनामप्रकाशकम् । [6960]
सर्वपापक्षयकरमायुरारोग्यदायकम् ॥
शिवस्य नीलकण्ठस्य शिवरात्रिव्रतं चरन् ।
मातृतः पितृतश्चैव द्विकोटिकुलसंयुतः ।
शिवलोकमवाप्नोति नारदेन प्रभाषितम् ॥
सङ्गात्कामात्तथा स्नेहाद्भयाद्वा यो हि मानवः । [6965]
शिवरात्रिव्रतं कृत्वा शिवेन सह मोदते ॥
पुत्रमित्रकलत्राणि धनानि कुरुनन्दन ।
दासीदासाश्च पशवः शकटा धान्यसंचयाः ॥
एतान्सर्वांस्तथा चान्याननुभूय नराधिप ।
स पश्चाद्दक्षिणो लोके सर्वमङ्गलसंयुतः । [6970]
गन्धर्वैः स्तूयमानस्तु शिवलोके सुखी भवेत् ॥
शिवरात्रिप्रभावेन राजन्नेवं सुखी भवेत् ॥
दण्डाद्राजभयात्सङ्गादारोग्यादन्नसंकटात् ।
शिवरात्रिव्रते राजन्निराहारो हि मुक्तिभाक् ॥
रात्रौ जागरणं कृत्वा शिवं संपूज्य भक्तितः । [6975]
गन्धर्वैः स्तूयमानस्तु शिवलोकं स गच्छति ॥
चण्डीशस्य व्रतं कृत्वा चण्डालोऽपि नराधिप ।
भक्त्या परमया युक्तो यानारूढो दिवं व्रजेत् ॥
स्त्रीशूद्रादिजनैरन्यैर्नीचैरपि नृपोत्तम ।
कृतं यैस्तु महाराज तैरियं जगती धृता ॥ [6980]
विद्यमाने व्रते चास्मिन्सर्वकामफलप्रदे ।
गच्छन्ति निरयं मूढा मर्त्या ह्येतन्महाद्भुतम् ॥
शिवरात्रिव्रतपराः शिवकीर्तनतत्पराः ।
शिवलोकाधिपा प्रोक्ताः पूज्यमाना मरुद्गणाः ॥
शिवं गच्छति भूपाल यो नरः कर्तुमिच्छति । [6985]
शिवरात्रिव्रतमिदं स गच्छेद्ब्रह्मणः पदम् ॥
महापातकयुक्तो वा युक्तो वा सर्वपातकैः ।
व्रतेनानेन राजेन्द्र मुच्यते नात्र संशयः ॥
यस्त्वेतद्व्रतमाश्रयं कुरुते भक्तिसंयुतः ।
तद्ग्रामं तेन पूतं हि तस्माद्व्रतमनुत्तमम् ॥ [6990]
यत्रैव वर्तते राजंस्तत्तीर्थं तत्तपोवनम् ।
तत्रैव वासिनः सर्वे यान्ति सारूप्यतां शिवे ।
अस्मिञ्जन्मनि कौन्तेय व्रतं परमपावनम् ।
एक वा क्रियते येन जन्म तत्पावनं भवेत् ॥
राजसूयसहस्रेण वाजपेयशतेन च । [6995]
यत्फलं प्राप्यते सद्भिर्व्रतेनानेन तद्भवेत् ॥
क्षमाप्रदक्षिणे यत्तु सर्वतीर्थनिषेवणे ।
पुण्यक्षेत्राभिगमने कन्यादाने च यत्फलम् ।
ब्रह्माण्डकोटिदाने च शिवरात्रिव्रतेन तत् ॥

युधिष्ठिर उवाच ।

केन मार्गेण गाङ्गेय पूजनीयो महेश्वर । [7000]
तत्रानुष्ठानदानं च ब्रूहि मे निम्नगासुत ॥

भीष्म उवाच ।

नारदेन यथा प्रोक्तं तद्ब्रवीमि तवानघ ॥
प्रातःकाले समुत्थाय स्नात्वा वै वाग्यतः शुचिः ।
पुष्पाणि च विचित्राणि फलानि रसवन्ति च ।
आदाय मतिमान्मौनी जितक्रोधो जितेन्द्रियः । [7005]
गृहं कृत्वा तु कौन्तेय कारयेच्छुभमण्डलम् ।
पञ्चकुम्भसमायुक्तं नानापुष्पैरलंकृतम् ॥
इन्द्रादिलोकपालान्वै पूर्वादिषु च वाहयेत् ।
कुम्भेषु तेषु कौन्तेय पूजयेत्प्रयतो व्रती ॥
मध्यमे पूर्णकुम्भे तु देवदेवं पिनाकिनम् । [7010]
आवाह्य रुद्रसूक्तेन रुद्रं तं गिरिजापतिम् ॥
अभिमन्त्र्य च तन्मन्त्रैर्वामदेवैरथापि वा ।
तेषु मन्त्रेष्वशक्तश्चेत्तत्र पञ्चाक्षरं परम् ॥
पञ्चाक्षरमहामन्त्रविद्यया धर्मनन्दन ।
यः पूजयेन्महादेवं स रुद्रपदमश्नुते ॥ [7015]
तत्कुम्भतोयैर्भूतेशमभिषिच्य पिनाकिनम् ।
यस्मिन्मन्त्रे सदा निष्ठस्तेनैव स्नापनं वरम् ॥
गन्धपुष्पैर्धूपदीपैर्वस्त्रैर्विविधभूषणैः ।
बिल्वपत्रैर्महादेवमर्चयेत्प्रयतो व्रती ॥
नैवेद्यं परमान्नैश्च पञ्चभक्ष्यैश्च पायसैः । [7020]
दधिक्षीरैर्नालिकेरैर्नैवेद्यं तु समर्पयेत् ॥
कर्पूरचूर्णसंयुक्तं पूगीफलसमन्वितम् ।

---

237** ईदृशं व्रतमुख्य ते प्रवक्ष्यामि समासतः ॥
शिवरात्रिव्रतमिदं पवित्रं पापनाशनम् ।
सर्वभाग्यप्रदं पुण्य सर्वलोकप्रदन्त्यकम् ( ? ) ॥
— ( L 6961 ) M1 -वर्धनम् ( for दायकम् ). — ( L. 6964 ) M1 स्वर्ग- ( for शिव- ) — ( L. 6965 ) G(ed ) लोभाद्वापि च मानव' ( for $^b$ ) — ( L 6968 ) G1 दासीदासान्पशूंश्चैव शकटान्धान्यसंचयान् — After line 6969, G1 ins. :
238** भक्त्या परमया युक्तो यानारूढो दिवं व्रजेत् ।
— ( L 6971 ) M1 ब्रह्म- ( for शिव- ) D1 महीयते , G1 सुखी वसेत् ; G2 सुखं वसेत् ( for सुखी भवेत् ) — G1 M1 om. ( hapl. ) line 6972. — ( L 6973 ) G2 द्रोहादेरन्नसकटात् ; G(ed.) लोभाद्रोगभयाच्च यः ( for $^b$ ) — ( L. — ( L. 6976 ) M1 स्वर्ग- ( for शिव- ). — ( L. 6980 ) D1 ध्रुवम् ; G1. 2 युता ( for धृता ) — ( L. 6982 ) D1 ह्येतद्धि महदद्भुतम् ( for $^b$ ). G2 om ( hapl. ) line 6983. — ( L. 6990 ) G(ed.) तद्ग्रामस्तेन पूतो हि ( for $^a$ ). — ( L. 6991 ) M1 तीर्थं तत्र तपोधन ( for $^b$ ). — D1 om. (hapl.) lines 6992–6993. — ( L. 6992 ) G1 पापिन' ( for वासिन ) — ( L 6995 ) G(ed.) वाजपेयायुतेन च ( for $^b$ ). — ( L. 6996 ) G2 यत्फल प्राप्य तं सर्वं ( for $^a$ ). — ( L 6997 ) D1 क्ष्माप्रदाक्षिणतो यत्तु ( for $^a$ ). — ( L. 6999 ) M1 -दानेन ( for -दाने च ). — ( L. 7000 ) G1 M1 मन्त्रेण ( for मार्गेण ). — ( L. 7001 ) D1 व्रतानुष्ठानदानेन ; M1 पूजानुष्ठानमानं च ( for $^a$ ). — ( L 7006 ) D7 om. ( hapl. ) lines 7006$^b$–7009$^a$. G2 -मण्डपम् ( for °लम् ) — ( L. 7008 ) D1 G2 पालैश्च ( for -पालान्वै ). — ( L. 7009 ) G1 कुम्भतोयेषु राजेन्द्र ( for $^a$ ). — ( L. 7012 ) D1 वामदेवेन चापि वा ( for

ताम्बूलमर्पयेद्धीमान्देवदेवस्य धर्मज ॥
मृत्युंजयमहामन्त्रैः परमान्नं हुनेद्व्रती ।
अष्टोत्तरसहस्रं तु तदर्धमथ वानघ । [7025]
पादहीनं न कर्तव्यमक्षय्यं फलमिच्छता ॥
आज्यहोमं तथा कुर्यात्तिलहोमसहस्रकम् ।
प्रायश्चित्ताहुतीर्हुत्वा चरुतन्त्रं समापयेत् ॥
पुण्याहं ब्राह्मणैः सार्धं वाचयेत्प्रयतो व्रती ।
रुद्रसूक्तं जपेद्धीमान्नादावन्ते युधिष्ठिर । [7030]
अथ वा वामदेवं वा शान्तिसूक्तं तु घोषयेत् ॥
हाटकेन तु रौप्येण वाससा रत्नकुण्डलैः ।
आचार्यं पूजयेद्विद्वान्गोदानेन विशेषतः ॥
ब्राह्मणेभ्यो व्रती दद्याद्दक्षिणां तु विशेषतः ।
प्रदक्षिणनमस्कारैराशीर्भिः कृतमङ्गलः ॥ [7035]
उपविश्यासने धीमानेतन्माहात्म्यमुत्तमम् ।
शृण्वन्पठन्वाचयंश्च वाग्यतः शृणुयाद्व्रती ॥
पुराणधर्मशास्त्रैश्च रात्रिशेषं समापयेत् ।
नृत्तगीतादिवाद्यैश्च तथा मङ्गलवाचकैः ॥
भेरीमृदङ्गपटहैर्निःसाणाद्यैश्च डिण्डिमैः । [7040]
रात्रौ जागरणं कुर्याद्यावच्चन्द्रोदयावधि ॥
तत्पुरुषेण मन्त्रेण चन्द्रायार्घ्यं प्रदापयेत् ।
क्षीरोदार्णवसंभूतजटामण्डलवर्तिने ॥
गृहाणार्घ्यं मया दत्तं चन्द्रचूडामणे प्रभो ।
इति मन्त्रेण मतिमान्दत्त्वा चार्घ्यं पिनाकिने । [7045]
नीलग्रीवेण मन्त्रेण रुद्रायार्घ्यं निवेदयेत् ॥
एवं कुर्याद्व्रती विद्वांश्चैवं प्रतियामके ।
पारणादौ प्रकुर्वीत होमं विद्वान्पिनाकिने ।
होमान्ते बन्धुभिः सार्धं स्वयं भुञ्जीत वाग्यतः ॥
एवं कृत्वा विधानेन शिवरात्रिव्रतं शुभम् । [7050]
शिवलोकमवाप्नोति नारदेन प्रभाषितम् ॥
य इदं कारयेन्नित्यं सर्वभाग्यकरं शुभम् ।
सर्वान्कामानवाप्यैव शिवलोकं स गच्छति ॥
यस्त्वेतच्छृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात्किंचिदिह लोके परत्र च ॥ [7055]
वेदवादी भवेद्विप्रो राजा वा विजयी भवेत् ।
धर्मार्थकाममोक्षार्थी नरो यो भक्तिसंयुतः ।
यद्यदिच्छति धर्मात्मा तत्तदेति न संशयः ॥
युधिष्ठिर उवाच ।
कैः कृतं व्रतमेतद्धि के विन्दन्ति महत्फलम् ।
तन्मे कथय तत्त्वज्ञ कृपा मयि तवास्ति चेत् ॥ [7060]
भीष्म उवाच ।
पुरा सुधांशुर्धर्मात्मा सर्वानन्दकरः प्रभुः ।
रूपलावण्यपूज्योऽसौ कामी रूपमदोद्धतः ।
सौन्दर्यशेवधिं तारां गुरोर्भार्यामथाहरत् ॥
तच्छ्रुत्वा देवराजस्य पुरोधास्तपतां वरः ।
तमब्रवीत्तथागत्य शील ते रूपमीदृशम् । [7065]
आभिजात्यं नाशमीयात्तस्मादेव तु मा कृथाः ॥
तथेति प्रतिजग्राह ताराणामधिपो बली ।
पुनः कामयते कामी तज्ज्ञात्वा बृहता पतिः ।
शापं ददौ महातेजाः क्षयीति नितरां भव ॥
तद्दोषपरिहारार्थं कावेरीसरितस्तटे । [7070]
तपसा तोषयामास शंकरं लोकशंकरम् ॥
सुधांशोस्तपसा तुष्टः पार्वतीनायकः प्रभुः ।
प्रीतोऽस्मीति तमालिङ्ग्य शिवरात्रिव्रतं कुरु ।
इत्यब्रवीत्त्रिनेत्रोऽपि तत्रैवान्तरधीयत ॥
शिवाज्ञया तु तत्कृत्वा शिवसालोक्यतां गतः । [7075]
शिरसा धारितस्तेन तत्राद्यापि स मोदते ॥
इक्ष्वाकुकुलजः श्रीमांस्त्रिशङ्कुर्नाम भूपतिः ।
कृत्वा व्रतमिदं राजन्नद्यापि दिवि वर्तते ॥
उत्तानपादपुत्रस्तु कृत्वेदं व्रतमीदृशम् ।
आकल्पस्थायिविभवो ध्रुवलोकमवाप्तवान् ॥ [7080]
त्रिशङ्कुतनयो धीमान्हरिश्चन्द्रो महामतिः ।
वीरबाहुकभूत्स्वं प्राप्तवान्कुशिकात्मजात् ॥
श्मशाननिलयो राजञ्शिवरात्रिदिने शुभे ।
उपवासव्रतपरो ध्यात्वा त्र्यम्बकमिष्टदम् ॥
वाक्पुष्पेण तमभ्यर्च्य रात्रौ जागरतत्परः । [7085]
ब्रह्मविष्णुमहेशानां कृपया च दिवं गतः ॥
पुण्यश्लोको नलो राजा कलिना तु प्रपीडितः ।
व्रतं कृत्वा शिवस्याशु प्राप्तवान्स्वपुरं नृपः ॥
कश्यपस्य प्रिया भार्या कृत्वा व्रतमनुत्तमम् ।
हरिं पुत्रमवाप्नोति सुरलोकस्य गुप्तये ॥ [7090]

---

°). — (L. 7017) G2 M1 निष्ठा (for निष्ठम्). — (L. 7020) D1 -पाकैश् (for -भक्ष्यैश्). — (L. 7034) युधिष्ठिर; G(ed.) यथाविधि (for विशेषतः). D1 दक्षिणा भक्तिसंयुता (for °). — (L. 7036) G1 तन्माहात्म्यमनुत्तमम् (for °). — (L. 7037) D1 G2 बुधः; M1 वचः (for व्रती). — D1 om. lines 7040–7058. — (L. 7043) G(ed.) -शिवमस्तकभूषण (for °). — After line 7043, G(ed.) ins.:

239** गृहाणार्घ्यं मया दत्त सर्वसंपत्प्रदो भव ।
भक्ताभीष्टप्रदेशान दीनबन्धो दयानिधे ॥

—(L. 7045) G(ed.) चन्द्राय (for मतिमान्). —G1 M1 om. (hapl.) lines 7046–7048. — (L. 7047) G(ed.) -यामकम् (for °के). — After line 7056, G1 M1 ins.:

240** धनवान्रुजो नित्य चतुर्थोऽपि सुखी भवेत् ।

— (L. 7061) D1 G1.2 सर्वरूपमयः प्रभुः (for °). — (L. 7063) D1 G1.2 मरुतामधिरूपेण; M1 मारुतो मधुरूपेण (for °). — D1 om. lines 7064–7074. — (L. 7066) G1.2 M1 तपःशील (for नाशमीयात्). G1 M1 नाशमेति तु मा कृथाः; G2 नाशते च ममाकृथाः (for °). — (L. 7071) G1.2 M1 शङ्काख्ये (for तपसा). — (L. 7079) D1 उत्तानपादस्य सुतः (for °). — (L. 7080) G1 -स्थान- (for -स्थायि-). D1 G2

गौतमस्तु महातेजा धर्मिष्ठस्तपतां वरः ।
कृत्वैवाहल्यया सार्धं शतानन्दमवाप्तवान् ॥
युधिष्ठिर उवाच ।
जमदग्निस्तथा चात्रिः कृतवीर्यस्तु राघवः ।
हरेः पुत्रत्वमापन्ना एते व्रतपरायणाः ॥
शक्रो यमः प्रचेताश्च धनदो दिशिवल्लभः । [7095]
शिवरात्रिव्रतं कृत्वा ककुभामधिपाभवन् ॥
ऋषयो राजशार्दूल मुनयो ब्रह्मवित्तमा ।
राजानो वैश्यमुख्याश्च शूद्राश्चान्ये नराधमाः ।
शिवरात्रप्रभावेन शिवसारूप्यतां गताः ॥
शिवरात्रिव्रतमिदं कृतं यदि सुखप्रदम् । [7100]
मृडानीपतिमीशानं व्रतेनानेन तोषयेत् ।
स मुक्तः सर्वपापेभ्यो यानारूढो दिवं व्रजेत् ॥
भक्त्या कृते व्रते चास्मिञ्शिवरात्रौ महामते ।
विद्याबन्धुवयोवित्तं लभते नात्र संशयः ॥
मार्जारमूषिकौ राजन्पुरेशानस्य संनिधौ । [7105]
फलक्षीरादिहरणान्निहतौ तौ दिवं गतौ ॥
चोरो वै धनलाभाय जाग्रद्वै शिवसंनिधौ ।
निषूदितो राजभटैः शिवलोकमवाप्तवान् ॥
गर्दभौ देवपूजार्थं गोधूमगुडधूपकान् ।
वाहयित्वा पुरा श्रान्तौ वणिजा सह धर्मज ॥ [7110]
शिवरात्रिदिने रात्रौ संनिधौ निधनं गतौ ।
तदा शिवगणैः सार्धं पूजितौ तौ दिवं गतौ ॥
शिवरात्रिदिने राजन्माहात्म्यं य शृणोति च ।
पितृमातृकुलैर्युक्तो रुद्रलोकं स गच्छति ॥

Colophon

वैशंपायन उवाच ।
बोधयित्वा तु पाञ्चालीं याज्ञसेनीं पतिव्रताम् । [7115]
स्थितं भीष्मं महाभागं धर्मराजोऽब्रवीदिदम् ॥
युधिष्ठिर उवाच ।
गङ्गासुत नमस्तेऽस्तु पाण्डूनां हितकृत्तम ।
श्रोतव्यमस्ति किंचिन्मे सर्वधर्मात्मकं विभो ॥
सर्वेषामपि मासाना वत्सरेषु च यद्व्रतम् ।
हरेः प्रियकरं यच्च तन्मे त्वं कृपया वद ॥ [7120]
भीष्म उवाच ।
चातुर्मास्यव्रतं पुण्यं श्रुतं किं नु त्वयानघ ॥
वैशंपायन उवाच ।
बोधयित्वा तु पाञ्चालीं यज्ञपात्रीसमन्विताम् ।
प्रोक्तं मया तु पाञ्चाल्याः सर्वमङ्गलकारणम् ॥
युधिष्ठिर उवाच ।
पर्णशालासमीपे तु श्रुतमेतन्मयानघ ।
प्रसन्नमभवत्तस्मान्मानसं मे नदीसुत ॥ [7125]
वैशंपायन उवाच ।
सुखी भवेति तं चोक्त्वा भीष्मस्तु वदतां वरः ।
आददे वचनं धीमान्धर्मगर्भं यशस्करम् ॥
मासव्रतं प्रवक्ष्यामि कार्तिक्यादिषु शोभनम् ।
यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥
आश्वयुक्कृष्णपक्षस्य चतुर्दश्यां जनार्दनम् । [7130]
ब्राह्मे मुहूर्ते चोत्थाय स्मरेत्सर्वात्मकं विभुम् ॥
तैलाभ्यङ्गं प्रकुर्वीत बन्धुभिः सह धर्मज ।
अरुणोदयवेलायां कुर्यात्तात्कालिकीं क्रियाम् ॥
गायत्र्यादिजपं कृत्वा सर्वं वै स्नानपूर्वकम् ।

---

M1 -संभूतं ( for -विभवो ). —( L. 7082 ) D1 M1 -पुत्रत्वं ( for -भृत्यत्व ) —( L 7084 ) D1 G1 2 ध्यात्वा देवं त्रियम्बकम् ( for $^{b}$ ) —( L 7094 ) G1 -परेण हि; G(ed.) बलेन हि ( for -परायणा ) —( L. 7095 ) M1 -वल्लभाः ( for °भः ). G(ed.) धनदश्च महातपाः ( for $^{b}$ ) —( L. 7096 ) G(ed ) प्रभवो ( for अधिपा ) D1 ककुभामधिपोऽभवत् ( for $^{b}$ ). —( L. 7098 ) G1 नराधिपा ; G(ed.) जनाधमाः ( for नरा° ). — After line 7100, G(ed ) ins.

241** अखण्डैश्वर्यमीशानो ददात्येव न संशयः ।

—( L. 7103 ) G2 M1 शिवरात्रिमहाव्रते ( for $^{b}$ ) —( L. 7107 ). D1 M1 जाग्रतो ; G1. 2 जाग्रते ( for °द्वै ). G(ed.) देव- ( for शिव ). —( L. 7109 ) D1 M1 धूपादि- ( for गोधूम- ). G1 2 सूपादिगुळगोधुमान् ( for $^{b}$ ) —( L 7110 ) G2 परिश्रान्तौ ( for पुरा श्रान्तौ ). —( L 7112 ) G1 त्रिदिव ( for तौ दिव ).—( L. 7113 ) G2 -व्रते ( for -दिने ). M1 रात्रौ ( for राजन् ).

Colophon.— *Sub-parvan*. D1 G1 आश्चर्यपर्वणि शेषधर्माः ; G2 M1 G(ed.) शेषधर्मा.. — *Adhy. name :* D1 G1 शिवरात्रिमाहात्म्यकथनम् ; G2 शिवरात्रिमहिमानुवर्णनम् ; G(ed.) शिवरात्रिव्रतमाहात्म्यम्. — *Adhy. no.:* D1 54 ; G1. 2 M1 G(ed ) 53.

( L. 7115 ) D1 G1. 2 M1 यज्ञपत्नीं ( D1 M1 °त्नी ) समन्विताम् ( for $^{b}$ ) —( L. 7116 ) D1 G1. 2 M1 स्थितं मुहूर्तं विश्रा( G1 M1 °र्तं विश्र )भ्य ( for $^{a}$ ). D1 G1 भीष्मं धर्मसुतोऽब्रवीत् ; G2 M1 भीष्मं धर्म्यं ( M1 भीष्मं धर्मो ) वचोऽब्रवीत् ( for $^{b}$ ). — G2 M1 om. the ref. — ( L. 7118 ) D1 M1 -धर्मकरं ( for -धर्मात्मक ). G1 वचः ( for विभो ).—( L. 7119 ) G(ed.) मध्ये कस्मिन्महाव्रतम् ( for $^{b}$ ).—( L. 7120 ) G(ed ) भवेद्धरिप्रीतिकरं ( for $^{a}$ ). – ( L 7121 ) G2 मया ( for त्वया ).— G2 om. lines 7123–7128 —( L. 7123 ) M1 -कारकम् ( for °णम् ). —( L 7125 ) G1 M1 तात ( for तस्मात् ). — Before line 7128, G1 M1 ins. भीष्म उवाच. —( L. 7128 ) G1 M1 कार्तिक्यादि शुभेक्षणे ( for $^{b}$ ). — ( L. 7131 ) G1 स्मरेद्देवकिनन्दनम् ; M1 °द्देवं जनार्दनम् ( for $^{b}$ ). — ( L. 7133 ) D1 G1 M1 -काले तु ( for -वेलायां ). M1 कुर्यात्तात्कालिकाः क्रियाः ( for $^{b}$ ). —( L. 7134 ) G2 सम्यग् ( for सर्वं ). —( L.

स्नानधूपादिनैवेद्यै॰ पूजयेत्प्रयतो हरिम् ॥ [7135]
भक्ष्यभोज्यादिनैवेद्यैर्यः प्रीणयति केशवम् ।
तिलतैलप्रदीपैश्च सोऽश्वमेधफलं भवेत् ॥
कार्त्तिक्यां दीपदानं तु य करोति हरेर्गृहे ।
स मुक्तः सर्वपापेभ्यो विष्णुमालोक्यमाप्नुयात् ॥
चतुर्दश्यां तु हरिणा कृष्णेन जगतीपते । [7140]
नरको निहतो नूनमसुरो लोककण्टक ॥
महीसुतेन तेनासौ प्रार्थितो यदुपुंगवः ।
दत्तवानक्षयोऽनन्तो वरं परमपावनम् ॥
विचिन्त्य सहसा राजन्नरको लोककण्टकः ।
सर्वलोकोपकारार्थं नत्वा वाचमुवाच ह ॥ [7145]
हे कृष्ण कमलाकान्त शङ्खचक्रगदाधर ।
महता दिव्यरूपेण मुक्तोऽहं भवता भयात् ॥
ममास्मिन्मुक्तिदिवसे योऽभ्यङ्गस्नानतत्पर ।
यजति त्वां प्रयत्नेन तस्य नाक ददस्व ह ॥
इमां चतुर्दशीं नाथ नरकाख्यां वदन्ति ये । [7150]
पुत्रपौत्रादिसंयुक्ता जीविष्यन्ति कलौ युगे ॥
इत्युक्त्वा नरको धीमान्ववन्दे तं हरिं विभुम् ।
भविष्यति यथा प्रीतिस्तथा ते तमुवाच ह ॥
तस्माद्राजन्दिने तस्मिन्भक्ष्यभोज्यादिविस्तरैः ।
नैवेद्यैः पूजयेद्विष्णुं स भवेन्मुक्तपातकः ॥ [7155]
अभ्यङ्गस्नानकृत्तस्मिन्ब्राह्मणानां कुरूद्वह ।
स मुक्तः सर्वपापेभ्यो गङ्गास्नानफलं लभेत् ॥
भूसुरान्भोजयेद्यस्तु चतुर्दश्यां शुभे दिने ।
तस्य विष्णु प्रसन्नात्मा ददाति स्वपदं विभु॰ ॥
एकस्मिन्भोजिते विप्रे तद्दिने शुभदे नृप । [7160]
वाजपेयफलं विद्धि साक्षात्कृष्णेन भाषितम् ॥
कार्त्तिक्यां नृप शर्वर्यां दीपदानपरो हरे ।
एकं वा पञ्च चत्वारि तस्य पापं निकृन्तति ॥
यः कुर्याद्दीपदानं तु ह्येकमेकं दिने दिने ।
मासमेकं स्वकैर्वैशैर्विष्णुलोकं व्रजेद्ध्रुवम् ॥ [7165]
विशेषं तत्र वक्ष्यामि कार्त्तिक्यां राजसत्तम ।
पौर्णमासीति विख्याता हरे प्रियकरा तिथिः ॥
दीपदानं वृषोत्सर्गमन्नदानं करोति यः ।
सर्वान्वंश्यान्समुद्धृत्य स विष्णुपदमश्नुते ॥
निगृह्य च बलिं दैत्यं तेन संप्रार्थितो विभुः । [7170]
प्रादात्तस्मै वरं देवो मा भैषीरित्युवाच तम् ॥

बलिरुवाच ।

देवदेव जगन्नाथ प्रणतार्तिप्रणाशन ।
त्वद्भक्ति. शाश्वती मेऽस्तु पाताले निरयेऽपि वा ॥
कार्त्तिक्यां पौर्णमास्यां तु माघमासे सुरोत्तम ।
मेदिनीमेत्य कृपया त्वत्पूजां कर्तुमुत्सहे ॥ [7175]
ममागमनकाले तु यो गेहं पूजयेत्सुधी॰ ।
संनिधौ तव दीपेन स वै मुक्तिं गमिष्यति ॥
या स्त्री पतिव्रता लोके गृह दीपेन पूरयेत् ।
दीपं प्रदक्षिणं कुर्यात्सा भवेद्वै सुमङ्गला ॥
इत्युक्तो दैत्यराजेन देवदेवो जनार्दनः । [7180]
तथेत्युक्त्वा तिरोभूत सोऽपि पातालमभ्यगात् ॥
तस्मात्तं पूजयेद्विद्वान्हरिणा दत्तवैभवम् ।
हरिसायुज्यमाप्नोति हरिं संपूज्य भक्तित. ॥
कार्त्तिक्या दीपदानेन ज्ञानवृद्धिर्भविष्यति ।
ज्ञानान्मोक्षमवाप्नोति तस्मात्त पूजयेत्सुधीः ॥ [7185]
य इदं पुण्यमाख्यानं कार्त्तिक्यां शृणुयाद्यदि ।
भक्तिमाँल्लभते लोकान्देवगन्धर्वसेवितान् ॥
अत ऊर्ध्वं प्रवक्ष्यामि धन्वाख्यां राशिमागते ।
मार्ताण्डे नृपशार्दूल पूजां वक्ष्ये हरे॰ शुभाम् ॥
धनुर्मासं गते भानौ प्रातरुत्थाय यो द्विज । [7190]
हरे पूजां प्रकुर्वाणो लभते हरिमन्दिरम् ॥
धनुर्मासे हरेः प्रीतिं मुद्गान्नं गुडसंयुतम् ।
योऽर्पयेत्प्रातरुत्थाय स विष्णुपदमश्नुते ॥
पुरा देवासुरे युद्धे सुरै. संप्रार्थितो हरि ।
भुक्त्वा प्रभाते मुद्गान्नं दैत्यानद्रावयच्छरैः ॥ [7195]
तदाप्रभृति लोकेऽस्मिन्विष्णुभक्ता जनार्दनम् ।
धनुर्मासे विशेषेण पूजां कुर्वन्ति यत्नत ॥
निशीथे कार्त्तिके मासि हरेर्दीपादिपूजनम् ।
प्रभाते तु धनुर्मासे यः कुर्यात्स तु मुक्तिभाक् ॥

---

7135) G1 -पूजादि- (for -धूपादि-). — (L. 7136) D1 स्नान-भूतादिनैवेद्यैर् (for $^{a}$). — (L 7137) G2 G(ed.) तिलदान-प्रदानैश्च (for $^{a}$) — After line 7131, D1 ins.:
242** भूसुरान्भोजयेद्यस्तु चतुर्दश्या शुभे दिने ।
— M1 om. lines 7138–7139. — (L 7139) D1 G1, 2 M1 गङ्गास्नानफलं लभेत् (for $^{b}$) — (L 7143) G1 व्रतं (for वरं). — (L. 7144) G(ed) गमिष्यन् (for विचिन्त्य). D1 नरको दैत्यपुगव (for $^{b}$). — (L 7145) G(ed.) कृष्ण (for सर्व-) G(ed) स्तुत्वा (for नत्वा) — (L. 7149) D1 पूजयेत्त्वां प्रयासेन (for $^{a}$). — (L 7150) M1 कृष्ण (for नाथ) — (L 7151) G(ed) भवेयुस्ते (for जीविष्यन्ति). — (L. 7152) G1 तं ववन्दे हरिं प्रभुम् (for $^{b}$). — (L. 7153) G(ed) ते तथास्त्वित्युवाच तम् (for $^{b}$). — (L 7155) D1 G1 M1 स मुक्तो यस्तु पातकै॰, G2 विमुक्त. सर्वपातकै (for $^{b}$). — (L 7157) G(ed) दारिद्र्यान्मुच्यते नर (for $^{b}$) — (L 7162) G(ed) दीप दद्यात्तु यो हरे. (for $^{b}$) — (L. 7163) G(ed) स (for नि-). — (L 7165) G(ed) आमास तु (for मासमेकं). M1 तु स्ववश्यैर् (for स्वकैर्वैशैर्). — (L 7170) G(ed.) हरि (for विभुः) — (L 7174) D1 M1 मासे मासे, G2 G(ed.) तन्मासादौ (for माघमासे) — (L 7180) D1 जगत्पति. (for जनार्दन॰). — (L. 7183) D1 G(ed.) तस्मात्ता पूजयेत्सुधीः (for $^{b}$) — (L. 7187) G2 उत्तमाल्लँ (for भक्ति°). — (L. 7188) G(ed) चापाख्या (for धन्वाख्या) — (L 7189) G(ed) पुण्या (for वक्ष्ये). — (L 7190) G(ed) धनुर्मासे महाप्राज्ञ (for $^{a}$) G(ed) वाग्यतः (for यो द्विज.). — (L 7192)

पुष्ये मासे च राजेन्द्र स्नानध्यानजपादिभिः । [7200]
दीपनैवेद्यपूजाभिर्नरो याति सुरालयम् ॥
माघस्नानं प्रशंसन्ति तथा भूसुरतर्पणम् ।
नैवेद्यं दीपपुष्पाद्यैर्विष्णोः कुर्वीत भक्तिमान् ॥
मेषसंक्रांतिकाले तु यः कुर्याद्द्विजभोजनम् ।
हरेः पूजां च राजेन्द्र स विष्णुपदमश्नुते ॥ [7205]
चैत्रे मासि सिते पक्षे विष्णुपूजापरायणः ।
यो विप्रं सततं भक्त्या पूजयेच्च स मुक्तिभाक् ॥
वैशाखे च सिते पक्षे तृतीयाख्ये शुभे दिने ।
ब्राह्मणान्भोजयेद्भक्त्या विष्णुलोकं व्रजेद्ध्रुवम् ॥
वैशाख्यां पौर्णमास्यां तु गुडपानीयमुत्तमम् । [7210]
दध्योदनं नालिकेरं हरेर्लोकप्रदं शुभम् ॥
गुडोदनं दधिद्रव्यं छत्रचन्दनपादुकाः ।
ये प्रयच्छन्ति विप्रेभ्यो विष्णुलोकं प्रयान्ति ते ॥
य इदं धर्मचरितं शृणोति सततं नरः ।
सर्वपापविशुद्धात्मा याति विष्णोः पदं शुभम् ॥ [7215]

Colophon.

युधिष्ठिर उवाच ।

शेषमासे तु यद्धर्मं वारयोगे नदीसुत ।
श्रोतुमिच्छामि तत्त्वेन नातः परतरं हि मे ॥

भीष्म उवाच ।

ज्येष्ठमासे पौर्णमास्यां गोपूजां कुरुते तु यः ।
गोधनानि च सिध्यन्ति प्रापयन्ति दिवं हि तत् ॥
पूर्वमभ्यर्चिता गावो गोपैः कृष्णप्रचोदितैः । [7220]
ददुः पुण्यफलं तेषां येन ते त्रिदिवं गताः ॥
गोषु ब्राह्मणमुख्येषु भक्तिमान्यो भवेत्पुमान् ।
प्रयाति हरिसालोक्यं पुनरावृत्तिवर्जितम् ॥
योगनक्षत्रवारेषु यद्वृत्तं तन्निबोध मे ॥
योगेषु च व्यतीपातो नक्षत्रं विष्णुदैवतम् । [7225]
वारेषु भानुवारोऽसौ सोमवारो बहुप्रदः ॥
तानि वक्ष्ये सुमुख्यानि व्रतानि व्रतिनां वर ।
व्यतीपातो महायोगः सोमसूर्यसुतः प्रभुः ।
पापघ्नो रोगहारी च बहुभाग्यप्रदो नृणाम् ॥
व्यतीपाते पुण्ययोगे सुस्नातः कृतपूजकः । [7230]
ब्राह्मणान्वरयेद्भक्त्या त्रीन्वाथ चतुरोऽपि वा ॥
श्रोत्रियान्हरिभक्तांश्च विष्णुपूजारतान्सदा ।
पायसं कारयेद्भक्त्या सूक्ष्मगोधूमतण्डुलैः ॥
मिश्रितं शुद्धपयसा गवा चैवाज्यसंमितम् ।
श्वेतशर्करया सम्यङ्मिश्रितं जलवर्जितम् ॥ [7235]
कदुष्णं तु समानीय हरेर्नैवेद्यमर्पयेत् ।
गोधूमपरमान्नैश्च हरेर्नैवेद्यमर्पयेत् ।
नैवेद्यशेषं तत्सर्वं ब्राह्मणान्भोजयेद्व्रती ॥
ततस्तान्गन्धपुष्पाद्यैरलंकृत्य समाहितः ।
दद्याद्विशेषतस्तेषां सताम्बूलां तु दक्षिणाम् ॥ [7240]
यस्त्वेवं कुरुते राजन्प्रतिवर्षं तु भक्तितः ।
स मुक्तः सर्वदारिद्र्यात्सौभाग्यं सुखमश्नुते ॥
भोगार्थी भोगमाप्नोति स्वर्गार्थी स्वर्गमश्नुते ।
परमान्नस्य दानेन सोऽक्षयं सुखमश्नुते ॥
प्रत्यक्षमेतल्लोकेऽस्मिन्दातॄणां तु सुखप्रदम् । [7245]
मन्त्रयुक्तेन दानेन भोक्तॄणां तु दरिद्रता ॥
तस्मात्त्वमपि राजेन्द्र व्यतीपातव्रतं कुरु ।

M1 प्रीतिर्, G(ed.) प्रीत्यै (for प्रीतिं). — G1 M1 om. lines 7193-7195 —(L. 7198) D1 G2 -पूजनैः (for °नम्). — (L. 7200) D1 तैषमासे (for पुष्ये मासे). G(ed.) स्नानध्यान- (for माघस्नान-). D1 om. lines 7201-7202. —(L. 7203) D1 नैवेद्यधूपदीपाद्यैर् (for $^a$). D1 G2 विष्णोः कुर्यात्स मुक्तिभाक् (for $^b$) —(L. 7207) D1 M1 यो (M1 स) विप्रः, G2 गोविन्द (for यो विप्र) D1 G1 M1 करोति स च मुक्तिभाक्; G2 विष्णुलोकं व्रजेद्ध्रुवम् (for $^b$) — G2 om. lines 7208-7209 —(L. 7210) G1 वैशाखे शुक्लपक्षे तु; M1 °खे शुद्धपौर्णम्यां (for $^a$) —(L. 7211) G2 M1 ध्रुवम् (for शुभम्). —(L. 7212) G(ed.) गुडोदके च दध्यन्न (for $^a$) D1 छत्रं च नवपादुकाः (for $^b$) —(L. 7213) D1 G1 प्रयान्त्यपि (G1 °मी); M1 व्रजन्त्यमी (for प्रयान्ति ते). —(L. 7214) G(ed.) य इदं पुण्यमाख्यानं (for $^a$) M1 नृप (for नर). —(L. 7215) D1 परं पदम् (for पदं शुभम्).

COLOPHON. — *Sub parvan* D1 G1 आश्चर्यपर्वणि शेषधर्माः; G2 M1 G(ed.) शेषधर्माः. — *Adhy. name*: G(ed.) कार्तिक्यादिमाहात्म्यकथनम् — *Adhy no.*, D1 55, G1.2 M1 G(ed.) 54.

(L. 7216) G(ed.) ज्येष्ठ- (for शेष). D1 यद्धर्मो; G(ed.) यो धर्मो (for यद्धर्मं). G(ed.) कुतो नयति वै दिवम् (for $^b$.) — For line 7217, G(ed.) subst.:

243** तमहं श्रोतुमिच्छामि कृपया वद सुव्रत ।

—(L. 7219) D1 गोदानानि (for गोध°). — For line 7219, G(ed.) subst.:

244** गोदानफलसिद्धिः स्यात्सा प्रापयति वै द्विजम् ॥

—(L. 7220) अर्चयन्ति च गोकुलं; G1.2 M1 अर्चन्ति गोकुलं (M1 °ले) गोपा (for $^a$). D1 G1.2 M1 गोपीनाथेन चोदिताः (for $^b$). —(L. 7221) D1 G1.2 M1 वैकुण्ठभ(D1 °ण्ठं सु)-वनं गताः (for $^b$). —(L. 7222) D1 G1.2 कुरूद्वह; M1 करोति च (for भवेत्पुमान्) — For line 7224, G(ed.) subst.:

245** तत्र योगादिकं सर्वं निबोध भरतर्षभ ।

—(L. 7225) G(ed.) योगो ब्राह्मो (for योगेषु च). G2 M1 नक्षत्रे (for °त्रं). —(L. 7226) G(ed.) -सोमौ तौ (for -वारोऽसौ). G(ed.) सर्वाभीष्टफलप्रदौ (for $^b$). — G(ed.) om. lines 7227-7229 —(L. 7230) G(ed.) सुस्नातः प्रयतः शुचिः (for $^b$). — D1 G1.2 M1 om. lines 7231-7236. —(L. 7238) G(ed.) तान्विप्रान् (for ब्राह्मणान्). M1 सुधीः

अनेन ते भवेत्संपन्नात्र कार्या विचारणा ॥
यस्त्वेकवत्सरमपि ज्येष्ठे त्वेवं करोति यः ।
सोऽपि लब्ध्वा परां कीर्तिमक्षयं सुखमश्नुते ॥ [7250]
पुण्ये श्रवणनक्षत्रे ह्युपवासपरास्तु ये ।
ते यान्ति हरिसालोक्यं सत्यं नारदभाषितम् ॥
पुत्रदं कामदं विद्धि मोक्षद भरतर्षभ ।
सततं कुर्वतां भक्त्या श्रवणं हरितोषणम् ॥
एकादशीव्रत यद्वद्द्वादश्यां पूजनं हरेः । [7255]
तथा कुर्वीत मतिमाञ्श्रवणान्तमनुत्तमम् ॥
पुण्ये श्रवणनक्षत्रे द्वादशी यदि संभवेत् ।
तत्रोपवासं कुर्वीत कोटियज्ञफलं लभेत् ॥
एकादशी यथा प्रोक्ता हरिविप्रप्रपूजने ।
तथा च विष्णुनक्षत्रव्रतं कुर्वीत बुद्धिमान् ॥ [7260]
अब्दत्रयं षडब्दं वा ह्येकाब्दमथ वापि वा ।
श्रवणव्रतं प्रकुर्वाणो विष्णुसायुज्यमाप्नुयात् ॥
श्रवणव्रतस्य सादृश्यमेकादश्यास्तथा नृप ।
न पश्यामि च शास्त्रेषु कुरु तस्मात्कुरूद्वह ॥
भानुवारे द्विभुक्तं तु ये कुर्वन्ति नराधमा । [7265]
आब्रह्मकल्पपर्यन्तं वसन्ति क्षारकर्दमे ॥
एकभुक्तं तु मतिमान्यः कुर्याद्रविवासरे ।
स मुक्तः सर्वपापेभ्यो गङ्गास्नानफलं लभेत् ॥
संक्रान्तौ रविवारे च व्यतीपाते च पर्वसु ।
नरकं याति राजेन्द्र निशिभुक्पापकर्मकृत् ॥ [7270]
आदित्यस्योदयात्पूर्वं तद्वारे स्नाति यो नरः ।
तत्पूर्वसप्तवारेषु कृतं पापं विनश्यति ॥
सर्वव्याधिहरं पुण्यमायुरारोग्यवर्धनम् ।
भानुवारे व्रतमिदं तथा ब्राह्मणभोजनम् ॥
भानुवारे प्रसन्नात्मा हरि सर्वगत. प्रभुः । [7275]
व्रतानां फलदो नित्यं तस्मात्तं पूजयेत्सुधी. ॥
अथ वै संप्रवक्ष्यामि सोमवारव्रतं शुभम् ।
एकभुक्तेन नक्तेन शिव. प्रीतो भवेद्ध्रुवम् ॥
उपवासेन राजेन्द्र स्वपदं संप्रयच्छति ।
पुनाति सकलान्वंश्यानुपवासपरो नरः ॥ [7280]
उमाकान्तं प्रतिष्ठाप्य स्थण्डिले शुभदर्शने ।
रुद्रसूक्तेन मन्त्रेण ह्यभिषेकं प्रकल्पयेत् ॥
अथ वा वामदेव्याद्यैर्मन्त्रैरभ्यर्चयेच्छिवम् ।
गायत्र्यादिमहामन्त्रैस्तं प्रयत्नेन पूजयेत् ॥
उपवासव्रतपरः स स्नायात्पुण्यवारिषु । [7285]
करवीरादिकैः पुष्पैः सम्यग्देव प्रपूजयेत् ॥
नृत्तगीतादिवादित्रैः शङ्खदुन्दुभिनिस्वनैः ।
पुराणश्रवणैर्दीपैः पूजयेत्तं प्रयत्नतः ॥
वस्त्रमण्डनयुक्ताभिः पूजनाभि सुरेश्वरम् ।
भक्तिमान्पूजयेद्राजन्वित्तशाठ्य न कारयेत् ॥ [7290]
अयक्षयो ह्येकभुक्तेन नक्तेन दिवि पूजनम् ।
उपवासात्तु सायुज्यं लभते नात्र संशयः ॥
देवभूतपतौ साक्षाद्व्रतेनानेन तोषिते ।
यं यं कामयते कामं त तमाप्नोति निश्चितम् ॥
व्रतानामपि सर्वेषां दानानां तपसां तथा । [7295]

---

( for व्रती ). — D1 G1.2 M1 om lines 7239–7241 — ( L. 7242 ) G(ed) अन्ते विष्णो पद व्रजेत् ( for $^{b}$ ) — G(ed.) om. line 7246 — ( L 7247 ) G2 व्यतीपाते, G(ed) शुचावितद् ( for व्यतीपात- ) — G2 om lines 7241–7250. — After line 7248, D1 G1 M1 ins. :

246** त्रीणि पञ्च तु सप्ताष्टौ समा. कुर्वीत यो नर. ।

D1 M1 cont .

247** व्यतीपातव्रतमिदं तेऽक्षय सुखमाप्नुयु ।
[ M1 सोऽक्षयं व्रतमश्नुते ( for $^{b}$ ) ]

— After line 7255, G1 ins. :

248** श्रवणव्रतमेतद्धि कुरुते भक्तिमान्नरः ।

— ( L. 7256 ) G(ed) तद्वद्विद्धि महाप्राज्ञ ( for $^{a}$ ). D1 M1 श्रवण व्रतमुत्तमम् ; G(ed) श्रवणर्क्षमहाव्रतम् ( for $^{b}$ ). — ( L. 7257 ) G2 M1 पुण्यश्रवणनक्षत्रैर् ( for $^{a}$ ). — ( L 7259 ) G2 -प्रपूजनैः ( for °ने ) — ( L 7261 ) G2 [ए]काब्दम् ( for [ए]का-ब्दम् ). — For line 7264, G(ed.) subst :

249** व्रतमन्यन्न न पश्यामि फलप्रदमनुत्तमम् ॥

— ( L. 7270 ) G2 दिवा भुञ्जन्ति राजेन्द्र ( for $^{a}$ ). G(ed.) निशि भोक्ता न सशय ( for $^{b}$ ) — ( L 7272 ) D1 G1 M1 सर्वाष्टदिवसे ( D1 °सै. ) पापं, G2 पूर्वसप्तसु वारेषु ( for $^{a}$ ). D1 G1.2 M1 यत्कृतं ( G2 °त्पाप ) तत्प्रणश्यति ( for $^{b}$ ) — ( L. 7273 ) D1 आयुरैश्वर्यवर्धनम् ( for $^{b}$ ) — ( L. 7274 ) M1 भानुव्रतमिद ब्रह्मन् ( for $^{a}$ ) G(ed) सर्वशास्त्रविनिश्चितम् ( for $^{b}$ ) — ( L 7276 ) D1 G2 M1 विद्वांस् ( for नित्यं ). D1 व्रतम्, M1 व्रती ( for सुधी ) G2 तस्मात्त परिपूजयेत् ( for $^{b}$ ). 7277 ) D1 G2 M1 अत पर ( for अथ वै स- ). — ( L. 7278 ) M1 राजेन्द्र ( for नक्तेन ). G(ed.) एकभुक्ते कृते नक्तं ( for $^{a}$ ). M1 सोम ( for शिव ). — ( L 7279 ) D1 G1 संपदं ( for स्वपद ) — For line 7279, G(ed.) subst. :

250** तथोपोष्य दिवा सर्वं शिवसूक्तपरायण' ।

— ( L. 7280 ) D1 वशान् ( for वंश्यान् ). G1 -रतो ( for -परो ). — D1 om (hapl.) lines 7283–7284. — ( L. 7283 ) G1 M1 तन्मन्त्रेण त्रियम्बकात् ( for $^{b}$ ). — ( L 7288 ) G2 पुराणमन्त्रैः स्तोत्रैश्च ( for $^{a}$ ). — ( L 7289 ) D1 अर्चनाभि , G(ed.) पूजाभिस्तु ( for पूजनाभि ). — ( L. 7290 ) G2 भक्त्या स- ( for भक्तिमान् ) G(ed) विद्वान् ( for राजन् ). — ( L 7291 ) D1 लोको वै ; M1 नक्ते च ( for नक्तेन ). G(ed.) नक्ते पुंसस्तथा दिवा ( for $^{b}$ ). — ( L. 7295 ) G2 भूतानाम् ( for व्र° ). G1.2 तपसा ( for °सां ). — After line 7296, D1 ins. :

कृष्णे भक्तिर्यदि भवेत्तत्सर्वं सफलं भवेत् ॥
श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥
श्रीकृष्ण विष्णो नृहरे मुरारे
प्रद्युम्न संकर्षण वासुदेव । [7300]
अजानिरुद्धामलविश्वरूप
त्वं पाहि नः सर्वभयादजस्रम् ।

Colophon

जनमेजय उवाच ।

कस्य नामानि पुण्यानि कीर्तनीयानि नित्यशः ।
दैवतानां च सर्वेषां कस्य भक्तो विशिष्यते ॥
कस्यायुधानि धार्याणि कश्च नित्यं प्रपूज्यते । [7305]
नृणां भवति कैवल्यं कस्य नामप्रकीर्तनात् ॥

वैशंपायन उवाच ।

अमुमर्थं पुरस्कृत्य संपृष्टो धर्मसूनुना ।
भीष्मो भागवतश्रेष्ठश्चिरं ध्यात्वा जगौ वचः ॥

भीष्म उवाच ।

कैलासशिखरे रम्ये देवी देवं महेश्वरम् ।
प्रणम्य शिरसा शंभुं पार्वती वाक्यमब्रवीत् ॥ [7310]

पार्वत्युवाच ।

सर्वज्ञस्त्वं जगत्साक्षिश्चराचरगुरुः पिता ।
सर्वलोकेश्वर साक्षात्सृष्टिस्थित्यन्तकारणम् ॥
वैष्णवानां च माहात्म्यं श्रोतुमिच्छामि शंकर ।
प्राकृतानां च हेयत्वं यथार्थं वद शंकर ॥

ईश्वर उवाच ।

साधु साधु महादेवि साधूनां च हितैषिणि । [4315]
वैष्णवानां च माहात्म्यं तव वक्ष्यामि सुव्रते ॥
शङ्खचक्राङ्कितान्भक्तान्यः पूजयति मानवः ।
स साक्षाद्विष्णुसामीप्यं लभते नात्र संशयः ॥
विष्णुचक्राङ्कितं विप्रं यो भूमावभिवादयेत् ।
ललाटे सक्तपांसूनां संख्या यास्ति यावती । [7320]
तावत्समाः स भूपाल ब्रह्मलोके महीयते ॥
सगोत्र यद्यपि श्राद्धे चक्राङ्कितभुजं वदेत् ।
स साक्षाद्विष्णुसायुज्यं द्विज प्राप्नोत्यसंशयः ॥
शङ्खचक्राङ्कितं विप्रं दृष्ट्वा यो ह्लादितो भवेत् ।
स पुण्यलोकमाप्नोति ह्यैहिकं सुखमश्नुते ॥ [7325]
चक्राङ्कितानां नामानि यो वदेद्भक्तिमान्नरः ।
सर्वपापविनिर्मुक्तः स याति परमं पदम् ॥
चक्राङ्किताय विप्राय यो भक्त्यान्नं ददाति च ।
अन्नसंख्यानि वर्षाणि ब्रह्मलोके महीयते ॥
विष्णुभक्ताय विप्राय चक्रचिह्नाय मानवः । [7320]
गोचर्ममात्रं यो दद्याद्भूमिं स्यात्स तु राज्यभाक् ॥
विषुवायनसंक्रान्तिषूपरागे तथा रवेः ।
चक्राङ्किताय विप्राय दानान्मोक्षमवाप्नुयात् ॥
विष्णुचक्राङ्कितं विप्रं गन्धपुष्पादिभिर्नरः ।
पूजयित्वा महादेवि विष्णुलोकमवाप्नुयात् ॥ [7335]
विष्णुचक्राङ्कितं विप्रं विष्णुमूर्तिमिव स्मरेत् ।
सोऽपि विष्णुमयो भूत्वा वैष्णवीं गतिमाप्नुयात् ॥
अमितसेन चक्रेण बाहुमूले तु लाञ्छिताः ।
दहन्ति सर्वपापानि तूलराशीनिवाग्नय ॥
यस्मिंश्चक्राङ्किता विप्रा वसन्ति नरपुंगवाः । [7340]
तद्देशवासिनः सर्वे वैष्णवत्वं भजन्ति वै ॥
विष्णुचक्राङ्कितो विद्वान्यस्मिन्देशे वसेत्सुखम् ।
स देशो मत्प्रियः पुण्यो वैष्णवानामतिप्रियः ॥
विष्णुभक्तिरता मुख्याः शङ्खचक्राङ्किता द्विजाः ।

---

251** य इदं पुण्यमाख्यानं शृणोति यदि भक्तिमान् ।
तस्य विष्णुः प्रसन्नात्मा सर्वान्कामान्प्रयच्छति ॥

— M1 om. lines 7297–7298 — After line 7298, G2 ins. :

252** इति पुंसां हितं विष्णोर्भक्तिश्च नवलक्षणा ।

— (L. 7301) G(ed.) विश्वमूर्ते (for °रूप).

COLOPHON. — *Sub-parvan* : D1 आश्चर्यपर्वणि शेषधर्माः. G1, 2 M1 G(ed.) शेषधर्माः. — *Adhy name* : G2 वारव्रतम् ; G(ed) मासव्रतादिमाहात्म्यम्. — *Adhy no.* : D1 56, G1, 2 M1 G(ed.) 55

G2 om. lines 7303–7401. — (L. 7304) G1 देवतानां च सर्वेषां (for °). — (L 7308) D1 G1 M1 शुभां (for वचः). — (L. 7310) D1 G1 M1 देवी देवदेव (for रम्ये देवी देवं). — D1 महेश्वरः (for ईश्वरः). — (L. 7318) D1 मृतस्त्वाप्नोति नित्यशः (for ⁵). — D1 om. lines 7319–7325. — For lines 7319–7321, G1 M1 subst. :

253** ललाटे पांसुसंख्यानि ब्रह्मलोके महीयते ॥
विष्णुचक्राङ्कितान्दृष्ट्वा यो ह्युत्थाय कृताञ्जलिः ।
स स्वकं कुलमुद्धृत्य ब्रह्मलोके महीयते ॥
चक्राङ्कितभुजा यस्मिन्पङ्क्तिमध्ये तु भुञ्जते ।
सा पङ्क्तिः स्वर्गलोके च देवपङ्क्तिषु पूज्यते ॥ [5]
अष्टके मासि पित्रोश्च चक्राङ्कितभुजं वदेत् ।
रौरवात्कुलमुद्धृत्य ब्रह्मलोके महीयते ॥

[(L. 6) M1 अष्टके मासिके पित्रोर्हि (for °).]

— For line 7325, G1 M1 subst. :

254** परमानन्दमाप्नोति किं पुनस्त्वैहिकं फलम् ।

— (L. 7328) D1 यो भक्त्या (for विप्राय). D1 [illegible] ददाति यः (for ⁵). — For line 7331, D1 M1 G1 subst. :

255** गोचर्ममात्रभूमिं तु दत्त्वा राज्यमवाप्नुयात् ।

— (L 7332) D1 G1 M1 अयने विषुसंक्रान्त्या (for °). — (L. 7333) D1 M1 विदुषे (for विप्राय). — G1 om. lines 7334–7351. D1 om. lines 7336–7337. — (L. 7339) D1 M1 ईश्वरत्वं लभन्ति ते (for ⁵). — (L. 7341)

क्रीडार्थमपि यद्ब्रूयुः स धर्मः परमो मत ॥ [7345]
यस्मिन्देशे कृतस्नाना वैष्णवाश्चक्रलाञ्छिताः ।
तस्मिन्स्नानं प्रकुर्वीत विष्णुलोकमवाप्नुयात् ॥
यस्तु पापप्रसक्तोऽपि विष्णुभक्तस्य भक्तितः ।
पादप्रक्षालनं कुर्यादात्मशुद्धिकृदेव सः ॥
चक्राङ्किताय महते विष्णुभक्ताय धीमते । [7350]
भिक्षामात्रप्रदानेन वैष्णवीं गतिमाप्नुयात् ॥
विष्णुभक्ताय विप्राय महादेवि महात्मने ।
माषमात्रप्रदानेन मुक्तिं यान्ति हि मानवाः ॥
सर्वभूतदयायुक्तं वैष्णवं द्वेष्टि यो नरः ।
स चण्डालो महादेवि रौरवं नरकं व्रजेत् ॥ [7355]
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
चक्राङ्कितस्य निन्दा च पञ्चैते त्वतिपातकाः ॥
यः पुत्रः पितरं द्वेष्टि तं विद्यादन्यरेतसम् ।
विष्णुभक्तं तु यो द्वेष्टि तं विद्यादन्यरेतसम् ॥
किं तस्य बहुभि शास्त्रैः किं तस्य बहुभिः श्रुतैः ।[7360]
विष्णुभक्तिविहीनस्य तपसा किं प्रयोजनम् ॥
तीर्थस्नानफल नास्ति महादानफलं तथा ।
अवैष्णवस्य विप्रस्य सर्वं शश्वद्विनश्यति ॥
यथा दारुमयो हस्ती यथा चर्ममयो मृगः ।
अवैष्णवस्तथा विप्रस्तथा व्यर्थो भविष्यति ॥ [7365]
रूपलावण्यसंयुक्ता महावंशोद्भवा द्विजा ।
अवैष्णवा न शोभन्ते निर्गन्धा इव किंशुकाः ॥
शरीरशोषणं व्यर्थं कृच्छ्रचान्द्रायणादिभि ।
विष्णुपादाम्बुजध्यानहीनस्य पुरुषस्य तु ॥
विद्याविनयसपन्नो विशालकुलसंभवः । [7370]
विष्णुभक्तिविहीनो यश्चण्डालसदृशो भवेत् ॥
यस्मिन्देशे दुरात्मानः प्राकृता पापकारिणः ।
वसन्त्यज्ञानिनो मूढास्तं देशं परिवर्जयेत् ॥
शिखां यज्ञोपवीतं च चक्रचिह्नं च कुण्डले ।
ऊर्ध्वपुण्ड्राणि वस्त्राणि दण्ड चैव कमण्डलुम् ॥ [7375]
एतानि धारयेद्विप्र शुक्लदंष्ट्रो दृढव्रतः ।
सात्त्विकं भावमास्थाय स्थिरचित्तो भवेत्सदा ॥
समः शत्रौ च मित्रे च तथा मानावमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥
अनपेक्षः शुचिर्दक्ष. उदासीनो गतव्यथः । [7380]
सर्वारम्भपरित्यागी विष्णुभक्तो विधीयते ॥
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षते ।
तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येनकेनचित् ।
अनिकेतः स्थिरमतिर्विष्णुभक्तो विधीयते ॥
शङ्खचक्रधरं देवं पीताम्बरधरं हरिम् । [7385]
सर्वगं मनसा ध्यायन्यः स वैष्णव उच्यते ॥
वैष्णवः पुण्यकर्मा च लोकानां हितकामदः ।
तस्मात्सर्वेषु कालेषु पालयत्यखिलं जगत् ॥
नित्यं पवित्रः पूतात्मा वैष्णवः पापनाशनः ।
शुद्धस्वरूपी भवति सदा संस्मरणाद्धरेः ॥ [7390]
हृत्पद्मकर्णिकामध्ये वैष्णवस्य महामतेः ।
चिदानन्दमयो विष्णुः प्रसन्नो भवति ध्रुवम् ॥
वैष्णवस्य तु विप्रस्य विष्णु सर्वगतो विभु ।
चिदानन्दमयो देवि सांनिध्यं कुरुते स्वयम् ॥
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः । [7395]
अरूपी बहुरूपी च चित्स्वरूपी प्रकाशते ॥
भक्तियोगेन पापानि दह्यन्ते वैष्णवोत्तमैः ।
शातकुम्भस्य मालिन्यमग्निना दह्यते यथा ॥
श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् । [7400]

---

M1 तद्देशोत्पन्नवस्तूनि (for [a]) and लभन्ति (for भजन्ति) —(L. 7344) D1 M1 -युता विप्रा. (for -रता मुख्या). D1 नरा: (for द्विजा) —(L 7345) D1 क्रीडार्थमाचरन्यद्वै (for [a]). —(L. 7347) D1 विष्णुलोकजिगीषया (for [b]) D1 सनिधौ (for भक्तितः). —(L 7349) D1 M1 बाह्ये शुद्धिं (M1 ह्यात्मशक्तिं) करोति च (for [b]). — D1 om. lines 7350–7351. —(L 7352) M1 ह्यात्मशुद्धिं करोति च (for [b]). — G1 om lines 7356–7358 —(L. 7359) D1 M1 चक्राङ्कित (for विष्णुभक्त) —(L. 7363) D1 G1 तपसा किं प्रयोजनम् (for [b]) — G1 om line 7365 —(L. 7369) D1 -रहितस्य नरस्य च (for [b]) — After line 7372, D1 M1 ins. :

256** अवैष्णवो दुराचारः पापानामाकरः खल ।
पापाचारी दुरात्मा स तस्मात्तं परिवर्जयेत् ॥
अवैष्णवस्य ससर्गो दौर्ब्राह्मण्यं करोति च ।
तस्मात्प्राकृतसंसर्गं वर्जयेद्ब्राह्मणोत्तम ॥

— G1 om lines 7373–7376 — After line 7378, D1 ins. :

257** पश्येज्जगदिदं सर्वं विष्णुबुद्ध्या न चान्यथा ।

— M1 om lines 7382–7384 — After line 7386, G1 ins

258** तीर्थस्नानफल नास्ति महादानफल तथा ।

— G1 om lines 7387–7392. —(L. 7387) D1 M1 -कारक (for -कामद) —(L 7389) D1 भूतभूतः पवित्रात्मा (for [a]) —(L 7390) D1 गृध्र- (for शुद्ध-). D1 M1 मुख्यात्मा (for भवति) D1 लोके सकीर्त्य केशवम् ; M1 लोकेश कीर्त्य केशवम् (for [b]) —(L 7392) D1 M1 प्रत्यक्ष कुरुते मया (for [b]). — After line 7394, D1 G1 M1 ins. :

259** अनेकरन्ध्रकुम्भस्य दीपरूपो यथानघे ।
प्राकृतानि शरीराणि प्रकाशयति सर्वगः ॥
[(L 1) G2 -वस्त्रस्य (for -कुम्भस्य).]

—(L 7396) D1 विश्वरूपी (for चित्स्व°). M1 प्रजायते (for प्रकाशते). —(L 7397) D1 G1 M1 दह्यते वैष्णवोत्तमः (for [b]). —(L. 7398) D1 M1 दोषोऽयम् (for मालिन्यम्),

इति पुंसां हिता विष्णोर्भक्तिश्च नवलक्षणा ॥
युधिष्ठिर उवाच ।
श्रुतं सर्वमशेषेण नदीसुत पितामह ।
इदानीं श्रोतुमिच्छामि भगवद्भक्तलक्षणम् ॥
भीष्म उवाच ।
विष्णुपूजासु निरता विष्णुनामपरायणाः ।
विष्णुभक्तेर्भक्तिरतास्ते वै भागवतोत्तमाः ॥ [7405]
तत्कथाश्रवणे सक्ताः सत्कर्मसु सदोद्यताः ।
सत्सु सेवां प्रकुर्वाणास्ते वै भागवतोत्तमाः ॥
मानावमाने समतामतिर्येषां सदा भवेत् ।
शत्रौ मित्रे तथा चेष्टे ते वै भागवतोत्तमाः ॥
मातापित्रोर्गुरौ ये तु ग्रहार्चनपरायणाः । [7410]
यतिसेवापरा ये च ते वै भागवतोत्तमाः ॥
वैश्वानरे तथा भानौ गायत्र्यां वैष्णवे तथा ।
येषामष्टाक्षरे भक्तिस्ते वै भागवतोत्तमाः ॥
दाने जपे तथा विष्णौ तथा श्रोत्रियभोजने ।
पूजने संमतिर्येषां ते वै भागवतोत्तमाः ॥ [7415]
तीर्थे च देवयात्रायां पुण्यासु तिथिषु प्रभोः ।
श्रद्धा निरन्तरा येषां ते वै भागवतोत्तमाः ॥
सालग्रामस्य तीर्थे च तथा तीर्थाभिषेचने ।
येषां तु संतता भक्तिस्ते वै भागवतोत्तमाः ॥
सत्कथाश्रवणे सक्ताः सत्कर्मसु सदा रताः । [7420]
सत्सु सेवां प्रकुर्वाणास्ते वै भागवतोत्तमाः ॥
एकादशीव्रतपरा माघस्नानरतास्तु ये ।
प्रातःस्नानरता ये च ते वै भागवतोत्तमाः ॥
पुराणपाठका ये च पुराणश्रवणे रताः ।
तद्भक्तरि प्रिया ये च ते वै भागवतोत्तमाः ॥ [7425]
आत्मवत्सर्वभूतानि ये पश्यन्ति नरोत्तमाः ।
मानेऽवमाने च समा मतिर्येषां सुशोभना ॥
शत्रौ मित्रे तथा द्वेष्ये ते वै भागवतोत्तमाः ।
अदाम्भिका गतासूयास्ते वै भागवतोत्तमाः ॥
स्नाने जपे तथा होमे तथा श्रोत्रियभोजने । [7430]
पूजने सन्मतिर्येषां ते वै भागवतोत्तमाः ॥
तीर्थे च देवयात्रायां पुण्यासु तिथिषु प्रभो ।
श्रद्धा निरन्तरा येषां ते वै भागवतोत्तमाः ॥
सालग्रामस्य तीर्थे च तथा तीर्थाभिषेचने ।
येषां तु सततं भक्तिस्ते वै भागवतोत्तमाः ॥ [7435]
वेदाध्ययनसंपन्नाः सदा शास्त्रविशारदाः ।
पञ्चयज्ञपरा नित्यं ते वै भागवतोत्तमाः ॥
विशुद्धज्ञानसंपन्ना निर्मला कर्मभिः शुभैः ।
एकादशीव्रतपरास्ते वै भागवतोत्तमाः ॥
प्रातःस्नाने मतिर्येषां गायत्र्यां च तथा रवौ । [7440]
अग्नौ विप्रे तथा देवे ते वै भागवतोत्तमाः ॥
दुःखिताः परदुःखेभ्यः प्रहृष्टाः परसंपदा ।
दयावन्तो हि भूतेषु ते वै भागवतोत्तमाः ॥
चराचरात्मकं विश्वं विष्णुमायाविनिर्मितम् ।
विष्णुरूपेण पश्यन्ति ते वै भागवतोत्तमाः ॥ [7445]
देवद्विजगुरुप्राज्ञान्पितॄनथ दिने दिने ।
अर्चयन्ति सदा भक्त्या ते वै भागवतोत्तमाः ॥
यतीनां सङ्गहीनानां व्रतिनां ब्रह्मवादिनाम् ।
शुचीनामविषक्तानां विषयेषु निरन्तरम् ।
नारायणे जगद्धाम्नि सदा संसक्तमानसाः । [7450]
सत्कर्मनिरताः श्रान्तास्तस्याज्ञापरिवर्तिनः ।
तत्कथाश्रवणे सक्ता वेदान्तनिरताश्च ये ।
विद्यादानरता ये च शास्त्रेषु निरताश्च ये ।
पौरुषेण च सूक्तेन विष्ण्वर्चनपरायणाः ।
सालग्रामार्चनपराः सदा संकल्पवर्जिताः । [7455]
रविसूक्तपरा ये च ते वै भागवतोत्तमाः ॥
संमार्जनरता ये वै विष्णुवेश्मनि नित्यशः ।
दीपदानरताश्चैव ते वै भागवतोत्तमाः ॥
रुद्रं रुद्राभिषेकेण प्रीणयन्ति च ये द्विजाः ।
प्रयान्ति हरिसामीप्यं विष्णुभक्ता भवन्ति च ॥ [7460]

— (L. 7401) M1 हित (for हिता). M1 भक्तिश्चेन्नवलक्षणम् (for ⁶). — (L 7405) G(ed) विष्णुभक्तेषु ये भक्ता (for ᵃ). — G(ed) om (hapl.) lines 7406–7407. — (L. 7406) G2 सत्कथा- (for त°). M1 भक्ता (for सक्ता). D1 G1 M1 तत्कर्मसु (for स°). — D1 om. (hapl) lines 7408–7409. — (L. 7408) M1 सुशोभना (for सदा भवेत्) — (L. 7409) M1 द्वेषे (for चेष्टे). M1 ये पश्यन्ति नरोत्तमाः (for ⁶). — (L 7410) D1 पित्रोश्चैव (for मातापित्रोर्) G1 गृहार्चायां (for ग्रहार्चन-) — (L. 7412) D1 गायत्र्या वैष्णवे स्तुतौ; G1 °त्र्या वैष्णवस्मृतौ (for ⁶) — G2 om. lines 7413–7424 — After line 7424, D1 ins. :

260** वैश्वदेवरता ये च बालिकर्मरताश्च ये ।
ये चातिथिप्रियकरास्ते वै भागवतोत्तमाः ॥
तुलसीरोपणपरा वन्दने पूजनेऽनिशम् ।
पालने सेवने सक्तास्ते वै भागवतोत्तमाः ॥

— G2 om. lines 7427–7428. — (L. 7429) M1 ते पश्यन्ति नरोत्तमाः (for ⁶). — G(ed.) om. lines 7430–7437. — (L. 7430) D1 दाने (for स्नाने). D1 G1 विष्णौ (for होमे). — (L. 7440). G(ed) महेश्वरे (for प्रातःस्नाने). G2 M1 रतिर् (for मतिर्). — (L. 7446) G2 वृद्धान्गुरूंस्तथा प्राज्ञान् (for ᵃ). D1 तथातिथीन् (for दिने दिने). — (L. 7448) G1, 2 यतीनां (G2 °तिना) संगृहीतानां (for ᵃ). — (L. 7449) G1 शुचीना विष्णुभक्तानां (for ᵃ). — (L. 7450) G2 सदा भक्तियुता नरा (for ⁶). — (L. 7453) G1, 2 सदा (for विद्या-). D1 G2 M1 ते वै भागवतोत्तमाः (for ⁶) — (L. 7454) G2 वारुणेन (for पौरुषेण). — G2 om. lines 7455–7458. — (L 7455) D1 G1 M1 ते वै भागवतोत्तमाः (for ⁶). — After line 7455, D1 G1 M1 ins. :

गीतोपनिषत्सु रता भारते वैष्णवे रता ।
पुराणेषु तथान्येषु विष्णुभक्तियुतेषु च ।
ये च गङ्गादितीर्थेषु ते वै भागवतोत्तमाः ॥
मन्वादिषु च शास्त्रेषु रामायणकथासु च ।
राजवंशकथाभिज्ञास्ते वै भागवतोत्तमाः ॥ [7465]
कृष्णरामकथाभिज्ञा नारसिंहकथासु च ।
कूर्मवामनमत्स्यानामवतारकथासु च ॥
विष्णोः सर्वात्मनः कीर्तिं प्रवदन्ति च ये द्विजाः ।
परस्परं भावयन्तस्ते वै भागवतोत्तमाः ॥
स्नानेषु तीर्थेषु सदा मखेषु [7470]
योनौ च बीजेषु महत्सु सेवाम् ।
कुर्वन्ति ये वै नृप भास्करे च
ते वै महाभागवतप्रधानाः ॥

Colophon.

भीष्म उवाच ।

कविं पुराणमजरं विश्वरूपिणमव्ययम् ।
योगिध्येयं सदानन्दं ध्यात्वा तत्पदमश्नुते ॥ [7475]
पीताम्बरधरं विष्णुं सर्वधातारमच्युतम् ।
वनमालाविराजन्तं ध्यात्वा तत्पदमश्नुते ॥
आद्यन्तशून्यं लोकानामीश्वरं पुरुषोत्तमम् ।
वनमालाविराजन्तं ध्यात्वा तत्पदमश्नुते ॥
शुद्धस्फटिकसंकाशं सूर्यकोटिसमप्रभम् । [7480]
श्रीवत्सवक्षसं विष्णुं ध्यात्वा तत्पदमश्नुते ॥
कौस्तुभेन विराजन्तं मुक्तादामविभूषितम् ।
केयूरहारसुभगं ध्यात्वा तत्पदमश्नुते ॥
श्रिया च परया नित्यं सेव्यमानपदद्वयम् ।
मुनीन्द्रनिकरैर्वन्द्यं ध्यात्वा तत्पदमश्नुते ॥ [7485]
संसारतापविच्छेदकारणं कमलाश्रयम् ।
भक्तचिन्त्यं स्थिरं देवं ध्यात्वा तत्पदमश्नुते ॥
वन्द्यं वरेण्यं पुरुषमीश्वरं सर्वतोमुखम् ।
विष्णुं जिष्णुं जितामित्रं ध्यात्वा तत्पदमश्नुते ॥
चतुर्बाहुमुदाराङ्गं पीतकौशेयवाससम् । [7490]
नीलोत्पलदलश्यामं ध्यात्वा तत्पदमश्नुते ॥
अनादिनिधनं शान्तं निर्मलं विश्वतोमुखम् ।
सृष्टिस्थितिलये हेतुं ध्यात्वा तत्पदमश्नुते ॥
त्रायन्तं भुवि साधूनां हन्तारं चाततायिनाम् ।
धर्मसेतुं महाबाहुं ध्यात्वा तत्पदमश्नुते ॥ [7495]
अणोरणीयासमजं महतोऽपि महीयसम् ।
सर्वप्रभुमनीशानं ध्यात्वा तत्पदमश्नुते ॥
राममिन्दीवरश्यामं ज्ञानानन्दमरिंदमम् ।
उपेन्द्रमिन्द्रारिहरं ध्यात्वा तत्पदमश्नुते ॥
रावणान्तकरं देवमम्लानकुसुमान्वितम् । [7500]
सुरार्चितपदद्वन्द्वं ध्यात्वा तत्पदमश्नुते ॥
त्राहि पालय देवेश देवदेव जगत्पते ।
एवं ध्यात्वा नरो यस्तु तत्पादकमलं व्रजेत् ॥
कालात्मन्कमलानाथ कलिदोषनिवारण ।
तुभ्यं नमो हृषीकेश नमः संसृतिहारिणे ॥ [7505]
एवं ध्यात्वा सर्वकालं नर पापवृतोऽपि वा ।
हित्वाघौघं स यात्येव वैकुण्ठभवनं नृप ॥
त्व सदा चिन्तयन्देवं विष्णुं कमललोचनम् ।
अचिरात्प्राप्स्यसे भूतिं नाकं शाश्वतमेष्यसि ।
एतदुक्तं मया सर्वं किं भूयः श्रोतुमिच्छसि ॥ [7510]
कृष्णस्य कृपया वेद्मि नारदस्य वरान्नृप ।
नारदात्तु मया ज्ञातं मत्तो वै भवता श्रुतम् ॥
य शृणोति सदा भक्त्या कलिदोषैर्न लिप्यते ॥
विष्णुवामनपद्माख्यं ब्राह्मं ब्रह्माण्डपञ्चकम् ।
भारतं शुक्रवागुक्तं पुराणं भागवताह्वयम् । [7515]
श्रोतव्यं हि प्रयत्नेन संसारच्छेदलिप्सुना ॥
कृष्णं भजस्व धर्मात्मंस्तमेव शरणं व्रज ।
तत्प्रसादाद्भवेन्मुक्तिः प्रियस्ते यदुपुंगवः ॥

---

261** विष्णुगायत्रिनिरताः पुरुषसूक्तपरायणाः । — (L. 7459) G2 पुरुषसूक्ताभिषेकेण (for °) — (L. 7460) G1 विष्णु- ; M1 रुद्र- (for हरि-). D1 -सारूप्य (for -सामीप्य). — (L 7461) G2 हरे ये (for भारते). — (L 7464) G(ed.) मन्वादिशास्त्रे निरताः (for °). — (L. 7471) G2 बोधयन्तः (for भाव°). — G2 om. lines 7472–7473.

Colophon. — *Sub-parvan :* D1 G1 आश्वर्यपर्वणि शेषधर्मा°, G2 M1 G(ed.) शेषधर्मा°. — *Adhy name :* G2 भागवतलक्षणम्, G(ed) उमामहेश्वरसंवादे भागवतमाहात्म्यम्. — *Adhy. no* . D1 57 ; G1, 2 M1 G(ed) 56.

(L 7475) G2 M1 ध्यात्वा नित्यं सनातनम् (for ᵇ). — (L. 7476) G(ed) -दातारम् (for -धा°). G2 सर्वलक्षणसंयुतम् (for ᵇ). — (L 7477) G1 2 M1 शङ्खचक्रधरं देव (for °). — (L. 7481) D1 श्रीवत्सवक्षःसंयुक्तं (for °) — (L. 7483) G(ed.) धृतकेयूरकटकं (for °). — (L. 7487) D1 -चित्तस्थित ; M1 -चिन्त्य स्थितं (for -चिन्त्यं स्थिर) G(ed) भक्तहृत्स्थ महादेवं (for °) — (L 7488) D1 M1 ईशानं ; G2 विश्वेश (for पुरुषं) — D1 M1 G(ed.) ins. after line 7489 G1 after line 7487.

262** चतुर्बाहुमुदाराङ्गं पीतकौशेयवाससम् ।

— D1 om (hapl.) lines 7494–7495. — (L. 7495) M1 G(ed) महायोग (for °बाहु) — (L 7496) G(ed.) महान्त च महीयसाम् (for ᵇ) — (L 7498) G2 सारूप्यभाग्भवेदेव (for °), D1 G2 M1 इन्दिरा(M1 आनन्दि)नन्दमन्दिरम् (for ᵇ). — (L 7500) G2 नारायणं नर देवं (for °) D1 M1 मन्दारकुसुमार्चि(M1 °श्चि)तम् (for ᵇ) G(ed.) त्राहि शंकर मा नित्यं (for °). — D1 om. lines 7503–7505. — (L. 7503) G(ed.) ध्यायेन् (for ध्यात्वा). M1 ध्यात्वा तत्पदमश्नुते (for ᵇ). — (L. 7504) M1 कलात्मक कलानाथ (for °). — (L 7509) D1 राज्य (for भूतिं). — (L

स्वस्ति तेऽस्तु हरिः साक्षात्सिद्धिदो वृष्णिवल्लभः ।
सदा वसतु राजेन्द्र तव चित्ते जनार्दनः ॥ [7520]

वैशंपायन उवाच ।

इत्युक्तवन्तं धर्मं तु धर्मसूनुः प्रणम्य तम् ।
कृतार्थोऽस्मीति गाङ्गेयं पूजयामास धर्मजः ॥
मुनयो विप्रमुख्याश्च राजानश्च नदीसुतम् ।
पूजयामासुरव्यग्राः कृष्णे निश्चितबुद्धय ॥
तेनैवं सत्कृतो भीष्मस्तीर्थयात्रापरोऽभवत् । [7525]
धर्मराजोऽनुजैः सार्धमास्ते ध्यायञ्जनार्दनम् ॥
पुराणरत्नमेतद्धि हरिवंशात्समुद्धृतम् ।
नारदीयमिदं धर्म्यमितिहासं पुरातनम् ।
कृष्णेन गदितं साक्षाद्धर्मपुत्राय धीमते ॥
सकृद्वा शृणुयाद्वापि शेषधर्ममिमं नृप । [7530]
सर्वपापविनिर्मुक्तः स गच्छेद्वैष्णवं पदम् ॥
राजसूयस्य यज्ञस्य यत्फलं लभते नरः ।
तत्फलं समवाप्नोति ह्यस्य श्रवणकीर्तनात् ॥
सप्तद्वीपवतीं पृथ्वीं सशैलवनकाननाम् ।
दत्त्वा यत्फलमाप्नोति तत्फलं च प्रपद्यते । [7535]
शृणुयाच्च इमं नित्यं यश्चापि परिकीर्तयेत् ॥
प्राप्नुयान्नाशुभं किंचित्परत्रेह च मानवः ॥
सर्वविद्याधिकारी स्याद्द्विजो राष्ट्रं लभेन्नृपः ।
वैश्यः पशुधनं चैव शूद्रो वै धर्ममश्नुते ॥
पुत्रकामो लभेत्पुत्रं कन्या भर्तारमाप्नुयात् ॥ [7540]
राजा वा राजपुत्रो वा शृणोति सततं नृप ।
गोकोटीनां संप्रदानाद्यत्फलं तदवाप्नुयात् ॥
रोगार्तो बन्धनार्तो वा मुच्यते दुःखसंचयात् ॥
राज्यपुत्रधनप्राप्तिधान्यरत्नवसूनि च ।
अस्य श्रवणमात्रेण लभते नात्र संशयः ॥ [7545]
एतस्मान्न परं किंचिच्छ्रोतव्यमिह विद्यते ॥
भारताध्ययनात्पुण्याद्ब्रह्महत्यादिकान्यपि ।
महापातकजालानि विनश्यन्ति न संशयः ॥
कलिदोषविषार्तानां जन्तूनां हतचेतसाम् ।
उत्तारकं त्वेकमेव भारताध्ययनं भुवि ॥ [7550]
भारतः पञ्चमो वेदो वेदान्तार्थोपबृंहकः ।
स्त्रीशूद्रद्विजबन्धूनामपि मोक्षप्रदायकः ॥
भारताध्ययनाशक्तो हरिवंशं पठेन्नरः ।
दिने दिने प्रातरेवं संपूर्णं फलमश्नुते ॥
हरिवंशस्य पठनेऽप्यशक्त इममादरात् । [7555]
पठेद्वा पाठयेद्वापि तस्य मुक्तिः करे स्थिता ॥

सूत उवाच ।

ततः पारिक्षितो विद्वाञ्जनमेजयभूपतिः ।
श्रुत्वेदं भारताख्यानं समग्रं वेदसंमितम् ।
मध्येसभं महर्षीणां वैशंपायनमब्रवीत् ॥

जनमेजय उवाच ।

व्यासशिष्य महाप्राज्ञ त्वत्प्रसादान्मया श्रुतम् । [7560]
भारताख्यानमखिलं कृतार्थोऽस्मि महामते ।

---

7511) G(ed) सर्वे वै नारदो मुनिः (for $^b$). — (L. 7512) D1 G1, 2 M1 नारदेन (for °दात्तु). — (L. 7514) M1 °रूपाख्यं (for °पद्माख्यं). — (L. 7520) G(ed.) भवतु (for वसतु). — G2 om. the ref — (L. 7521) G(ed.) धर्मास्तु ; M1 धर्मेश (for धर्मं तु). — (L. 7524) G(ed.) निश्चय- (for निश्चित-). G2 कृष्णे संन्यस्तमानसाः (for $^b$). — (L. 7526) M1 जगद्गुरुम् (for जनार्दनम्). — (L. 7527) G1, 2 समाहितम् ; M1 समाहृतम् (for समुद्धृतम्). — (L. 7534) G2 यश्चापि परिकीर्तयेत् (for $^b$). — G2 om. lines 7535–7536. — (L 7540) G(ed.) शुवरम् (for भर्तारम्). — (L 7541) राजमात्रो ; G(ed.) °मन्त्री (for °पुत्रो). G2 यः पठेच्छृणुयादपि (for $^b$).

— G2 om. lines 7542–7543. — For line 7542, G1 M1 subst. :

263** गवां कोटिप्रदानेन गङ्गातीरे फलं लभेत् ।

— (L. 7544) G(ed) वस्त्रधान्यादिकानि च (for $^b$). — G1 ins. after line 7545 · D1 after 265** :

264** कृष्णवाक्ये मतिं कृत्वा यथा ते तु पितामहाः ।
अमुं धर्मं सदा शृण्वन्पालयस्व च मेदिनीम् ॥

— M1 om. lines 7546–7547. D1 G1, 2 om. line 7546. — (L. 7547) D1 G2 अपि पादमधीयतः (for $^b$). — M1 om. lines 7548–7584. D1 G1, 2 om. lines 7548–7577. G(ed.) om line 7578. — After line 7578, D1 G1 ins. :

265** हरिवंशकथान्ते तु श्रुत्वा प्राप्नुयाद्दौ गुरोः ।

G1 cont. :

266** कलौ युगे विशेषेण पुराणश्रवणादृते ।
नास्ति धर्मः परः पुंसां नास्ति मुक्तिफलप्रदम् ॥
सद्ग्रामे सुजनाकीर्णे सत्क्षेत्रे देवतालये ।
पुण्ये वाथ नदीतीरे वदेत्पुण्यकथां सुधीः ॥
अभक्त्या ये कथां पुण्यां शृण्वन्ति मनुजाधमाः ।
तेषां पुण्यफलं नास्ति दुःखं स्याज्जन्मजन्मनि ॥
पुराणं ये तु संपूज्य ताम्बूलाद्यैरुपायनैः ।
शृण्वन्ति च कथां भक्त्या धनाढ्याश्च भवन्ति ते ॥
कथायां वर्तमानायां ये गच्छन्त्यन्यतो नराः ।
भोगान्तरे प्रणश्यन्ति तेषां दाराश्च संपदः ॥
असंप्रणम्य शृण्वन्तो विषवृक्षा भवन्ति ते ।
ये निन्दन्ति पुराणज्ञं कथां वा पापहारिणीम् ।
ते वै जन्मशतं मर्त्याः शुनकाः संभवन्ति च ॥
कथायां कीर्त्यमानायां विघ्नं कुर्वन्ति ये नराः ।
कोट्यब्दं नरकान्भुक्त्वा भवन्ति ग्रामसूकराः ॥
ये कथामनुमोदन्ते कीर्त्यमानां नरोत्तमाः ।

नेतः परं मया किंचिच्छ्रोतव्यमिह विद्यते ॥
एवमुक्त्वा स राजर्षिर्ऋषिवर्यस्य तस्य वै ।
अनुज्ञां तु पुरस्कृत्य व्यासस्यानुमते तदा ।
भारताख्यानवर्यस्य शान्तिं चक्रे विधानतः ॥ [ 7565 ]
कारयामास विप्राणा कोटीनां भोजनं तदा ।
प्रादाद्विशेषतस्तत्र धनवस्त्रादिकं बहु ॥
सच्छ्रोत्रियाणां विप्राणां रिक्तानां तु तपस्विनाम् ।
तत' स्वर्णस्य राशिं तु सर्वरत्नोपशोभितम् ।
कारयामास मतिमानृषिमध्ये महातपा ॥ [ 7570 ]
वैशंपायनमाहूय वक्तारं भारतस्य वै ।
सर्वरत्नैरभ्यषिञ्चन्मूर्ध्नि तस्य महामनाः ।
ततस्तेनाभिषेकेण पूर्णस्तृप्तश्च सोऽभवत् ॥
ग्रामान्बहूनदात्तस्मै ऋषिवर्याय धीमते ॥
एवं निर्वर्तयित्वा तु शान्तिकर्म स भूपतिः । [ 7575 ]
बन्दिमागधमुख्यैस्तु जयघोषैर्विशेषतः ।
स्तूयमान स्वनगर प्राविशत्कृष्णमानसः ॥
श्रद्दधानस्य पूयन्ते सर्वपापान्यशेषतः ।
कलिदोषहरं नाम धर्मश्रवणपावनम् ।
शृण्वतां सर्वपापानि विलयं यान्ति भूरिशः ॥ [ 7580 ]
वरमिममितिहासं शृण्वतां लौकिकानां
सकलदुरितशान्ति सद्य एवास्तु विप्राः ।
स भवति हरिलोके भक्तिरस्मिन्मुरारौ
जगति सकलमेतद्दुर्लभं पापिनां च ॥ [ 7584 ]

Colophon

---

अशृण्वतोऽपि ते यान्ति शाश्वतं परम पदम् ॥
ये श्रावयन्ति मनुजान्पुण्या पौराणिकीं कथाम् ।
कल्पकोटिशत साग्र तिष्ठन्ति ब्रह्मण पदे ॥
—( L. 7579 ) M1 सर्वपाप- ( for कलिदोष- ). —( L. 7580 ) M1 भूरिदम ( for °श' ) —( L 7583 ) G1 व्रजति हि सुरलोकं ( for स भवति हरिलोके ) G1 मुकुन्दे ( for मुरारौ ). —( L 7584 ) G1 M सुलभम् ( for सकलम् ) ]

Colophon —*Sub-parvan* D1 G1 M1 G(ed ) आश्चर्य॰पर्वणि शेषधर्मा ; G2 शेषधर्माः — *Adhy. name* M1 युधिष्ठिर-भीष्मसंवादः, G(ed ) भारतमहिमानुवर्णनादिकथनम्. — *Adhy. no.* · D1 58 , G1, 2 M1 G(ed.) 57.

— After the last colophon, D1 reads शुभं भवतु । श्रीकृष्णार्पणमस्तु ।
यत्नेन लिखित शेषधर्माधर्मं सविस्तरम् ।
लेखकस्य श्रिय प्राप्ति पुत्रपौत्रादि प्राप्नुयात् ॥
येसवन्तस्य पुत्रेण रामचन्द्रेण नाम च ।
भक्त्या च लिखित ग्रन्थ पुस्तक तस्य निश्चयम् ॥
इति शेषधर्म समाप्तः ॥

G1 reads श्रीकृष्णाय परमगुरवे नम॰। शेषधर्मः समाप्त'। हरिः ओम् । शुभमस्तु । श्रीकृष्णार्पणमस्तु ॥
अबद्धं वा सुबद्ध वा मम दोषो न विद्यते ।
यादृश पुस्तकं दृष्टं तादृशं लिखितं मया ॥
करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ।
लिखतां हरिवश तु लभ्यते ब्रह्मण॰ पदम् ।
व्यासप्रसादादिह च समृद्धिमतिदुर्लभाम् ॥
व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे ।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥
कृष्ण कमलपत्राक्षं पुण्यश्रवणकीर्तनम् ।
वासुदेव जगद्योनिं नौमि नारायण हरिम् ॥
कृष्णाय यादवेन्द्राय ज्ञानमुद्राय योगिने ।
नाथाय रुक्मिणीशाय नमो वेदान्तवेदिने ॥
श्रीकृष्णार्पणमस्तु । श्रीरामार्पणमस्तु । ओं तत्सत् । श्रीकृष्णाय नम॰। श्रीरामाय नम' । श्रीराम शरणं मम ।

G2 reads 'श्रीकृष्णाय नमः। श्रीवासुदेवार्पणमस्तु। करकृतमपराध क्षन्तु मर्हन्ति सन्तः । ओम् ।

M1 reads . शेषधर्म समाप्त' । करकृतमपराधं क्षन्तुमर्हन्ति सन्तः। शुभमस्तु ॥
कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत्सकल परस्मै
नारायणायेति समर्पयामि ॥
यदक्षरं पदं भ्रष्ट मात्राहीनं तु यद्भवेत् ।
तत्सर्वं क्षम्यतां देव नारायण नमोऽस्तु ते ॥
श्रीशेषधर्मग्रंथ॰ समाप्तः । ओं तत्सत् । हरिः ओम् ।
श्रीकृष्णार्पणमस्तु ॥